# अभिधानराजेन्द्रः

# ABHIDHANARAJENDRAH:

## PRAKRIT MAGADHI SANSKRIT

Vijayarajendra Suri

VOL. 2

*B.R. Publishing Corp. Delhi*

**Cataloging in Publication Data—DK**

Vijayarājendra Sūri.

Abhidhānarājendrah.

7 v.

Reprint.

1. Prakrit languages—Lexicography. 2. Prakrit languages—Dictionaries—Sanskrit. 3. Prakrit languages—Etymology. 4. Prakrit languages—Grammar. 5. Prakrit literature. 6. Jainism—India. 7. Jaina saints--Biography. I. Title.

First Published 1910–1925
Reprinted in India 1985

Published in India by .

B. R. Publishing Corporation
461, Vivekanand Nagar,
Delhi-110052. (India)

Distributed by .

D. K. Publishers' Distributors
1, Ansari Road, Daryaganj,
New Delhi-110002. (India)
Phone : 27-8368

Printed at :

Goyal Offset Printer
Delhi-1100035 (India)

वृन्दारककल्पवादिवृन्दवन्दितचरणकमल—सर्वतन्त्रस्वतन्त्र—कलिकालसर्वज्ञ—जङ्गमयुगप्रधान—श्रीसौधर्मवृहत्तपागच्छीय—जैन—श्वेताम्बराचार्य—श्रीमद्भट्टारक—श्री श्री १००८ श्री
श्री—विजयराजेन्द्रसूरिविरचितः

# अभिधानराजेन्द्रः।

## तस्याकारादिशब्दसङ्कलने द्वितीयो भागः।

स च

श्री सर्वज्ञप्ररूपितगणधरनिर्वर्तिताद्यश्रीनोपलभ्यमानाशेष-सूत्र-तद्वृत्ति—भाष्य—निर्युक्ति-चूर्ण्यादिनिहितसकलदार्शनिकसिद्धान्तेतिहास-शिल्प-वेदान्त-न्याय—वैशेषिक-मीमांसादिप्रदर्शितपदार्थयुक्तायुक्तत्वनिर्णायकः।

श्रीमुनिदीपविजय—श्रीयतीन्द्रविजयाभ्यां संशोधितः।

समस्तजैनश्वेताम्बरसङ्घेन महता परिश्रमेण प्राकाश्यं नीतः।


* * * श्री जैनप्रभाकर प्रिंटिंग प्रेस रतलाम. * * *

श्रीवीरसंवत् २४३६ — श्रीराजेन्द्र संवत ४

श्रीविक्रमाब्द १९६७ — खिस्ताब्द १९१०

श्रीबृहत्सौधर्म्मतपागच्छीय-कलिकाल-सर्वज्ञ-श्रीमद्भट्टारक

श्रीश्री १००८ श्री विजय राजेन्द्रसूरीश्वरजी महाराज

जन्म संवत् १८८३ ※※※ स्वर्गवास संवत् १९६३

# प्रस्तावना

इह हि खलु भारतवर्षे संस्कृतभाषायामनेकशोऽकारादिवर्णानुक्रमेण सङ्कलिताः कोशाः समुपलभ्यन्ते देशान्तरेषु च तत्तद्देशभाषया, परन्त्वद्यापि प्राचीनसमये मातृभाषात्वेन राष्ट्रभाषात्वेन च सकलभारतभूमिलब्धास्पदायां केवलिभाषायां कोऽपि कोषः संकलितोऽस्ति। किमत्राप्रस्तुतया प्राकृतभाषाप्रशंसया स्वरूपमेवात्मस्तुतिं विधास्यति। इयमेव उत्सर्पिण्यवसर्पिणीकाले समजनि, समादृता च सर्वज्ञैर्गणधरैश्चेयमेव। कतिचिद्वर्षेषु सुप्तिङ्कृत्सु च भेदमापन्नेयमेव संस्कृतभाषात्वेन परिणता। किं बहुना सर्वज्ञकथिता मर्मग्राहिणः पदार्थाः जैनदर्शनमूलसूत्राणि चास्यामेव भाषायामित्यस्या वर्णानुक्रमणिकया सङ्कलनमत्यावश्यकमिति वाढं सानुनयं सकलसंघेन संप्रार्थितः परमकारुणिकः सर्वतन्त्रस्वतन्त्रः श्रीभट्टारकश्रीश्री १००८श्रीविजयराजेन्द्रसूरिरभिधानेषु श्रेष्ठतममिममभिधानराजेन्द्रनामकं कोषं निरमास्त। श्रेष्ठतमत्वमस्यावलोकनत एवोह्यमलमत्र काकदन्तपरीक्षया।

किञ्च-अस्यां भारतभूमौ पञ्चमारके मनुष्येषु मनःपर्यायकेवलयोः परिपूर्णश्रुतावधिज्ञानयोश्च विच्छेदेन अपूर्णज्ञानयुक्तं सकलसङ्घमवलोक्येमं कोशं संग्रहतया ग्रथितवान् यथा-सूर्यावृत्त्यादीनां वर्णनम् 'आउट्ट' शब्दे श्रोत्रादीन्द्रियविषयकं वृत्तम् 'इंदिय' शब्दे ऋतुविषयकम् 'उउ' शब्दे एवं यथायथं वर्णितमनुपदमेव स्पष्टतया दर्शयिष्यामः। अयं कोशः संस्कृतभाषासु बह्वादराणां द्रव्याभावेनासंग्रहितान्यकोशानां कामधुगेवोपकारं करोतीति नात्रार्थवादः। जैनरहस्यजिज्ञासूनां कृते स्थूलघटरूपज्ञाने चक्षुरिव विस्मृतपदार्थमार्गणे साक्षात्पदार्थप्रापकमिवेतस्ततो विकीर्णपदार्थानामेकत्रोपलम्भकमिमं संगृहीतमवलोक्य सर्वेऽपि सन्तः सन्तोषमेष्यन्तीति वाढं निश्चिनुमः।

भो भो विदेशीया जैनदर्शनजिज्ञासवो बौद्धेभ्यो भेदममन्यमाना विलोकयन्तु जैनदर्शनरहस्यम्, अवगच्छन्तु बौद्धदर्शनतस्तारतम्यम्, सर्वदर्शनमुकुटायमानमिमं जैनदर्शनमवलोक्य सूक्ष्मेक्षिकया विदांकुर्वन्तु जीवाजीवादितत्त्वम्, प्राप्नुवन्तु परमोत्साहं सर्वविषयकसमुदायस्तत्तच्छब्दे एवोपलभ्यते इति नात्र भवतां श्रमलेशसंभवः।

अपि च प्रचलिताद्यश्चीनभाषा ( हिन्दी ) शब्दपरावृत्तिजिज्ञासवोऽपि कस्माच्छब्दात्परावृत्त्य संस्कृते शब्दः प्रचलितः आधुनिककालापेक्षया संस्कृता ( हिन्दी )दत्र वा इत्येतदप्येतद्ग्रन्थानुभवनेन सुखेनैव बोधिष्यन्तीति निर्विवादम्। अत एव अभिधानराजेन्द्र इति यौगिकं नाम यथाहि राजा निष्पक्षपातं शत्रुमित्रोदासीनेषु नियमान्नियुङ्क्ते एवमयमपि पदार्थविज्ञानरूपनियमं जैन-बौद्ध-सांख्य-योगादिदर्शनश्रद्धालुषु पदार्थसंशोधकेषु संस्कृतप्राकृतभाषारसिकेषु च सममेव प्रवर्त्तयतीति।

## विषयसूचना-

पक्षपातो न मे वीरे न द्वेषः कपिलादिषु।
युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥ १ ॥

इत्यनुसन्धानेन विशेषतो दर्शनीया शब्दास्तत्रस्था विषयाश्च लेशमात्रतो विज्ञप्यन्ते, यथा-'आउ' शब्दे आयुषो भेदान्निरूप्य तस्यातिप्रियत्वं प्रतिपादितमत एव तत्पुष्टिकारणानि प्रतिपादितानि, न खलु गतमायुः पुनरावर्त्तत इति च स्वल्पतः सूचितम्। आयुषोऽनित्यत्वं निरूप्य वर्षशतस्याप्यल्पत्वमेवेति वाढं विभावितम्। निरूपितानि च तत्रैव सोदाहरणानि सर्वसिद्धान्ताविरुद्धानि सप्तायुःक्षयकारणानि अपि च सोपक्रमनिरुपक्रमादिना भेदं निरूप्य आयुषोऽल्पत्वकारणं दीर्घायुष्कारणं शुभदीर्घायुरशुभदीर्घायुष्कादिना भेदास्तेषां कारणानि च दर्शितानि। आयुष्कर्मणो जीवितहेतुत्वं जीवानामिहभवपरभविकायुस्तत्र नैरयिकादीनां परभविकायुर्बन्धश्च प्रतिपादितः। प्रत्याख्यानादिना निवर्त्तितायुष्कत्वं सप्रमाणं निरूप्य अनन्तरोपपन्नकनैरयिकादीनामायुर्बन्धश्चेति निपुणं विभावितम्। अप्रकजीवानामेकान्तबालैकान्तपण्डितबालपण्डितानां क्रियावाद्यादीनामायुर्वर्णयित्वा नैरयिकादिष्वापद्यमानानां भविकजीवानां सायुष्कत्वमायुष्करणसंवेदनादि न्यरूपि।

एवमाउकाय शब्दे-अप्कायिकानां भेदं निरूपयन् तेषां शरीरादि न्यरूपयत्। जवति चाप्कायिकस्य जीवितमिति सयुक्तिकं निरूपितमत एव सचित्ताचित्तमिश्रविवेकश्च कृतः। तीव्रोदकस्याचित्तत्वमप्कायशस्त्राणि प्रतिपाद्य सचित्ताप्कायपरिभोगविचारः प्रायुङ्क्त। तत्राप्कायपरिभोगकारणानि अप्कायसमारम्भव्यावृत्तस्यैव मुनित्वं शाक्यादिमुनयो नियमतोऽप्कायिकांस्तदाश्रितजीवांश्च विहिंसन्तीति युक्त्या प्रतिपाद्य अप्कायस्पर्शनिषेधं शीतोदकस्पर्शनिषेधं च कृतवान्।

एवमाउट्टिशब्दे सूर्यस्य कति कस्यामृतावावृत्तयो केन च नक्षत्रेण युक्ताः प्रथमादयो भवन्तीति पुनः पुनर्भावयन् सुबोधमेव निरूपितम्। अथ कस्मात्स्थानादेकेन्द्रिया आएन्जाश्च जीवाः समागच्छन्तीति पृथ्वीकायिकानां पुनरपि गत्यागती भवतो जीवानां गत्यागतिपरिज्ञानेऽनेकशो मिथ्यादृष्टीनां सिद्धान्ता निपुणं निरूपिताः।

अथ आगमशब्दे स्वशैल्या भेदप्रतिपादनपूर्वकमागमस्य परतः प्रामाण्यं तत्र च प्रामाणिकपुरुषप्रणीतत्वेन प्रामाण्यं प्रतिपाद्य दृढतरयुक्तिभिरपौरुषेयत्वं निराकृतम्। स्वीकृतं च संभवद्रूपस्यैवागमस्य मूलागमैकदेशभूतस्य आगमान्तरस्य च प्रामाण्यं न तु वेदस्यैव। प्रमाणान्तराविषय एव पदार्थो नागमेन बोध्यते किं तु प्रमाणान्तरविषयेऽपि इति निरूप्य कणादमते शब्दप्रामाण्यस्यानुमानान्तर्भावमभिधाय सर्वमतसंवादिशब्दप्रामाण्यं प्रत्यपादि। शब्दस्य बाह्यार्थे प्रामाण्यम् अपोहः शब्दार्थ इति बौद्धमतं च निरूप्य अर्थस्वरूपं वाच्यवाचकभावं शब्दस्य वाचकताविचारं चाकार्षीत्। स्फोटः शब्दः इति वैयाकरणमतं स्फोटयित्वा स्वमते शब्दस्य वाचकत्वं शब्दस्य नित्यत्वविचारः शब्दार्थयोः संबन्धश्च हेतुवादाहेतुवादभेदादागमस्य द्वैविध्यमागमस्य च सर्वव्यवहारनियामकत्वं च प्रतिपादितम्। धर्ममार्गे मोक्षमार्गे चागमस्यैव प्रामाण्यम् जिनागमस्यैव सत्यत्वम्, इत्यादयो मर्मग्राहिण आगमविषयिणो बहवो विषयाः समुपलभ्यन्ते। एवम् " आणा " शब्दे परलोके आज्ञाया एव प्रामाण्यम् आज्ञाप्रवर्तमानोऽप्यप्रवर्तमान एव तीर्थकराज्ञाऽन्यथाकरणे दोषाः प्रायश्चित्तं चेत्यादिकानपरांश्च तद्विषयकान् विषयान् वर्णयित्वा आज्ञाव्यवहारो निरूपितः। एवं आयरियशब्दे व्युत्पत्त्यादिप्रदर्शनपुरस्सरमाचार्यपदभेदमभिधाय कलाचार्यादिनाऽऽचार्यस्य त्रैविध्यं तेषां विनयकरणं च प्रदर्शितम्। निरूपितं चेहलोकोपकारिपरलोकोपकारिणोराचार्ययोः स्वरूपं तद्धेयोपादेयत्वं च। प्रव्राजनाचार्योपस्थापनाचार्याभ्यां द्वैविध्यं, लक्षणं चाचार्यस्य, आचार्यस्य गुणाः यद्विरहितो गुरुर्न भवतीति भ्रष्टाचारत्वं पराहितकारित्वं दुर्गुणमाचार्यस्य निरूप्य प्रमादिनमाचार्यं शिष्यो बोधयेत्। आचार्यस्य विनयः गुरुविनये वैद्यदृष्टान्तं च प्रदर्श्य केन कर्मविपाकेन गच्छाधिपतिर्भवतीति वर्णितम्। आचार्यस्यातिशया निर्ग्रन्थिनामप्याचार्य इति यथायथं निरूपितम्। आचार्ये कालगते अवधाविते वा आचार्यान्तरस्थापनं तत्र " सुत्तत्थे णिम्माओ " इत्यादिना लक्षणं च प्रतिपादितम्। आचार्यस्य परीक्षां गुरोराचार्यपदे स्थापनाविधिं च तत्र स्थविराः प्रष्टव्याः इति प्रतिपाद्य सपरिच्छदस्यैवाचार्यत्वमिति निरूपितम्। एवम् आणुपुव्वीशब्दे आनुपूर्वीविषयकनिरूपणम्। एवं स्वस्वविषयकसकलविषयपूर्णाः चतुरस्रतो रमणीयाः विपक्षपक्षनिरूपणपूर्वकं युक्तियुतस्वपक्षस्थापननिरूपणगर्भाः पूर्वोक्ता अपरे चेमे शब्दास्तेऽवश्यं विलोकनीयास्तानेवाह। " आता, आधाकम्म, आभिणिबोहिय, आरम्भ, आराधक, आलोयणा, आसातना, आहार, इंद, इंदभूई, इंदिय, इत्थिलिंगसिद्ध, इर्या, ईसर, उज्ज, उग्गम, उग्गह, उदय, उद्देस, उद्देसिय, उप्पत्तिया, उप्पाय, उरब्भ, उवओग, उवट्ठवणा, उववाय, उवसंपया, उवसम्म, उवहाण, उवहि, उवासगपडिमा, उसभ, उसुयार" एते शब्दा अस्मिन् ग्रन्थे विशेषतो दर्शनीयाः रमणीयविषयपरिपूर्णाश्चेति सूचनिकया निरूपिताः॥

( ग्रन्थनिर्दिष्टप्रकरणानां सङ्केतः )

| | | |
|---|---|---|
| १ | अङ्ग० | अङ्गचूलिका- |
| २ | अनु० | अनुयोगद्वार- |
| ३ | अने० | अनेकान्तजयपताका- |
| ४ | अन्त० | अन्तगडदशा- |
| ५ | अष्ट० | अष्टकयशोविजयकृत- |
| ६ | आचा० | आचाराङ्गसूत्र- |
| ७ | आ० चू० | आवश्यकचूर्णी- |
| ८ | आ० म० प्र० | आवश्यकमलयगिरिप्रथमखण्ड- |
| ९ | आ० म० द्वि० | आवश्यकमलयद्वितीयखण्ड- |
| १० | आतु० | आतुरप्रत्याख्यान- |
| ११ | आ० क० | आवश्यककथा- |
| १२ | आव० | आवश्यकबृहद्वृत्ति- |
| १३ | औ० | औपपातिकसूत्रवृत्ति- |
| १४ | उत्त० | उत्तराध्ययनसूत्र- |
| १५ | उपा० | उपासकदशाङ्ग- |
| १६ | उत्त० नि० | उत्तराध्ययननिर्युक्ति- |
| १७ | एका० | एकाक्षरीकोश- |
| १८ | ओघ० | ओघनिर्युक्ति- |
| १९ | कर्म० | कर्मग्रन्थ- |
| २० | क० प्र० | कर्मप्रकृति- |

२१ कल्प० कल्पसुबोधिका–
२२ ग० गच्छाचारपयन्ना–
२३ गा० गायत्रीव्याख्या–
२४ चं०प्र० चन्द्रप्रज्ञप्ति–
२५ जं० जम्बूद्वीपप्रज्ञप्ति–
२६ ज्ञा० ज्ञाताधर्मकथा–
२७ जीत० जीतकल्प–
२८ जी० जीवाभिगम–
२९ जीवा० जीवानुशासन–
३० जैन० जैन इतिहास–
३१ ज्यो० ज्योतिष्करण्ड–
३२ ढुं० प्राकृत ( ढुण्ढी ) टीका–
३३ तं० तन्दुलवयाली–
३४ तित्थु० तित्थुगाली–
३५ दशा० दशाश्रुतस्कन्ध–
३६ दर्श० दर्शनशुद्धि–
३७ दश० दशवैकालिकाध्ययन–
३८ द०प० दशपयन्ना–
३९ द्रव्या० द्रव्यानुयोगतर्कणा–
४० द्वा० द्वात्रिंशद्द्वात्रिंशिका ( वत्तीसवत्तीसी )–
४१ द्वी० द्वीपसागरप्रज्ञप्ति–
४२ दे०ना० देशीनाममाला–
४३ धर्म० धर्मसंग्रह–
४४ ध० र० धर्मरत्नप्रकरण–
४५ नयो० नयोपदेश–
४६ नं० नन्दीसूत्रवृत्ति–
४७ नि० निरयावलि–
४८ नि० चू० निशीथचूर्णि–
४९ पं० चू० पञ्चकल्पचूर्णि–
५० पं० भा० पञ्चकल्पभाष्य–
५१ पञ्चा० पञ्चाशकसटीक–
५२ पं० व० पञ्चवस्तुकटीका–
५३ पं० सं० पञ्चसंग्रह–
५४ पं० सू० पञ्चसूत्रमूल–
५५ प्रव० प्रवचनसारोद्धार–
५६ प्रति० प्रतिमाशतक–
५७ प्रश्न० प्रश्नव्याकरण–
५८ प्रज्ञा० प्रज्ञापनासूत्र–
५९ पिं० पिण्डनिर्युक्तिवृत्ति–
६० पिं०मू० पिण्डनिर्युक्तिमूल–
६१ पा० पाक्षिकसूत्रसटीक–
६२ प्रा० प्राकृतव्याकरण–
६३ प्रा० ना० प्राकृतनाममाला–
६४ भ० भगवतीसूत्र–
६५ महा० महानिशीथसूत्र–
६६ मण्ड० मण्डलप्रकरण–
६७ यो० वि० योगविन्दु–
६८ रत्ना० रत्नावतारिकावृत्ति–
६९ ल० ललितविस्तरावृत्ति–
७० लघु० लघुप्रवचनसार–
७१ व्य० अ० व्यवहारअक्षरार्थ–
७२ वाच० वाचस्पतिकोश–
७३ व्य० प्र० व्यवहारसूत्रवृत्तिप्रथमखण्ड–
७४ व्य० द्वि० व्यवहारसूत्रवृत्तिद्वितीयखण्ड–
७५ ती० विविधतीर्थकल्प–
७६ वृ० वृहत्कल्पवृत्ति–
७७ विशे० विशेषावश्यकवृत्ति–
७८ विपा० विपाकसूत्र–
७९ श्रा० श्रावकधर्मप्रज्ञप्ति–
८० षो० षोडशप्रकरणसटीक–
८१ स० समवायाङ्गसूत्र–
८२ संथा० संस्तारकपयन्ना–
८३ संस० नि० संसक्तनिर्युक्तिमूल–
८४ संघा० सङ्घाचारभाष्य–
८५ सत्त० सत्तरिसयठाणावृत्ति–
८६ सम्म० सम्मतितर्क–
८७ स्था० स्थानाङ्गसूत्र–
८८ स्या० स्याद्वादमञ्जरी–
८९ सू० प्र० सूर्यप्रज्ञप्तिः सटीक–
९० सूत्र० सूत्रकृताङ्गसूत्र–
९१ सेन० सेनप्रश्नसंस्कृत–
९२ हा० हारिभद्राष्टक–
९३ ही० हीरप्रश्नसंस्कृत–

अ० अध्ययन–
अधि० अधिकार–
अध्या० अध्याय–
अष्ट० अष्टक०–
द्वा० द्वार०–
पाहु० पाहुडा–
श्रु० श्रुतस्कन्ध–
वक्ष० वक्षस्कार–

| | | | |
|---|---|---|---|
| ठा० | ठाणा- | उल्ला० | उल्लास- |
| उ० | उद्देश- | प्र० | प्रश्न- |
| प्रति० | प्रतिपत्ति- | सं० | संवरद्वार- |
| विव० | विवरण- | अध० | अधर्मद्वार- |
| पद- | पद- | पुं० | पुंल्लिङ्ग- |
| परि० | परिच्छेद- | स्त्री० | स्त्रीलिङ्ग- |
| सम० | समवाय- | न० | नपुंसकलिङ्ग- |
| | | त्रि० | त्रिलिङ्ग- |

# संकेतसूचना--

सर्वत्र हि सङ्केतज्ञानमन्तरेण न कश्चिदपि सङ्केतितपरिज्ञाने प्रभवतीति सङ्केतसूचनं क्रियते यत्रास्मिन् ग्रन्थे टीकारहिता गाथा उदाहरणपठितानि प्राकृतवाक्यानि संस्कृतश्लोका वा तत्राद्यान्तयोरेव " " चिह्नम्। मूलटीकयोः स्थूलसूक्ष्माक्षरैरेव भेदः प्रदर्शितः क्वचिदनुपयुक्ता टीका न संगृहीता किं तु मूलमात्रमेव स्थूलाक्षरैः प्रकाशितम् । सप्तम्यन्तत्वेन प्रदर्शितस्यार्थस्याधोभागे एत, चिह्नं दत्तम्, यत्रैकस्यानूद्यस्य प्राकृतशब्दस्य द्वित्राः संस्कृतेऽनुवादकशब्दास्तत्र द्वितीयोऽनुवादष्टीकासमपङ्क्तिष्वेव निहितः। अनूद्याः प्राकृतशब्दा अनुवादकाश्च संस्कृतशब्दाः इति गौणमुख्यत्तावोऽपि प्रदर्शित एव । अनूद्यानुवादकयोर्मध्ये एत-चिह्नमस्ति । येभ्यो ग्रन्थेभ्यः पाठः संगृहीतस्तत्र नामैकदेशे नामग्रहणमिति न्यायमनुश्रित्य ग्रन्थस्य पुंल्लिङ्गादीनां च पूर्णं नामधेयमनुक्त्वा एकं द्वे वा अक्षराणि प्रदर्शितानि एवमध्ययनशतकोद्देशादिखण्डेषु च एक एव वर्णः प्रदर्शितस्तत्र च शून्याकाररूपमेत० चिह्नमपि निहितमस्ति ।

# विशेषसूचना—

एतत्पुस्तकसंशोधनेऽस्मत्सतीर्थ्ययोर्मुनिश्रीदीपविजय-यतीन्द्रविजययोर्महान् श्रम इति नात्र दूये किन्त्वमुद्रितपुस्तकानामतिजीर्णत्वेन प्रतिपुस्तकमेकैकप्रत्युपलब्ध्या च क्वचिद्गाथादौ टीकावलम्बनैकशरणेन प्रकरणविषयाविरोधेन च बहुतरं पर्यालोच्य निहितपदैः पूरितगाथासु कदाचिदेव क्वचिदेव पाठभेदः स्यात्स स्वयमेव सद्भिः संस्करणीयः । किञ्च यदि क्वचिद्यन्त्रदोषेण वर्णानां घर्षणेन च अनुत्थितेषु षकारादिषु दृष्टिदोषादिना वा अशुद्धिः स्यात्सा विद्वद्भिः शोधनीया इत्यादि सर्वे विज्ञपयन्ति ।

श्री श्री १०८ श्री उपाध्याय-मुनिप्रवर मोहनविजयाः ।

श्रीवर्द्धमानो जयति ।

# अभिधानराजेन्द्रः ।

सिरिवद्धमाणवाणिं पणमिअ भत्तीइ अक्खरक्कमसो ।
सद्दे तेसु य सव्वं पवयणवत्तव्वयं वोच्छं ॥ १ ॥

## आकार.

आ–आ–अव्य० आप् क्विप् पृषो० पलोपः वाक्ये, ( पूर्वमित्थं वोऽमंस्था इदानीन्त्वेवं मन्यसे इत्येवं वाक्यस्यान्यथात्वद्योतने ) स्मृतौ, ( आ एवं मन्यसे इत्येवं विस्मृतस्य स्मृतौ ) अङित्तो निपातत्वात्प्रगृह्यसंज्ञा ङित्तस्तु न " निपात एकाजनाङ् " इति सूत्रात् । अत एवोक्तम् । मर्यादायामभिविधौ, क्रियायोगेषदर्थयोः । य आकारः स ङित् प्रोक्तो, वाक्यस्मरणयोरङित् । वाच० ॥ अभिविधौ, ( व्याप्तौ ) आ० म० प्र० । विशे० । आ० । मर्यादायाम्, (सीम्नि) प्रज्ञा० ३६ पद० । (अत्राङिल्लक्षण एव तात्पर्यम् ङिदंशे मर्यादायामित्यादयस्तूदाहरणमात्रमत एवान्यत्रापि ङित्प्रयुज्यते ) तथाच समन्तादित्यर्थे, उत्त० आ० म० । प्रव० । भ० । आ० । अवागर्थे ( अधोभूमौ ) प्रज्ञा० २ पद० । वि० वाक्यालंकारे, । ईषदर्थे, । ( सच भाषाशैल्या वाक्यालंकाराय प्रयुज्यते) "आ इति भाषायाम " ज्ञा० २ अ० । अमर्षे, आभिमुख्ये, राय० । अनुकम्पायाम्, समुच्चये, अङ्गीकारे, कोपे, पीडायाम् । एका० । आः किमेतदित्येवं विस्मये, स्था० । ५ ठा० । एका० संतोषे, सुखतनौ, चिरे, लघुवस्तुनि, परितापे, विधौ, सलिले, क्षये, । एका० स्वयंभुवि, पुं० । एका० । आचार्ये च । स च नामैकदेशे नाममात्रग्रहणादोमितिपदे आशब्दः आचार्यं बोधयतीति । गा० ॥

आअ– ( आमअ ) –आगत–त्रि० आयाते, उपस्थिते, प्राप्ते च । आगमने, न० वाच० । " व्याकरणप्राकारागते कगोः " ८ । १ । ६८ । इति प्राकृतव्याकरणसूत्रेण वैकल्पिको गकारस्य सस्वरस्य लुक् । प्रा० व्या० ॥

आ ( अंस- ) अरिस–आदर्श–पुं० दर्पणे, वाच० । "शीर्षतप्तवज्रे वा " । २१ । २ । १० । इति सूत्रेणान्त्यव्यञ्जनात्पूर्व इकारो वैकल्पिक इति । प्रा० व्या० ॥

आअड्ड–व्यापृ–वि० आ० पृ—व्यापारे, तुदा० आत्म० अनिट् "व्याप्तेराअड्डः " । ८ । ४ । ८१ । इतिप्राकृतसूत्रेण वैकल्पिक आअड्ड इत्यादेशः । आअड्डेइ वावारइ– व्याप्रियत इत्यर्थः । प्रा० व्या० ॥

आअरिअ–आचार्य–पुं० गुरौ, वाच० " स्याद्भव्यचैत्यचौर्यसमेषु यात् " । ३० । १ । ८० । इति प्राकृतसूत्रेण यकारात्पूर्व इकारः । प्रा० व्या० ॥

आइ–आदि–पुं० आदीयते गृह्यते इति आ० दा० कि–प्रथमे, प्रव० । स च यस्मात्परमस्ति न पूर्वं स इति । अनु० । मूलकारणे, प्रज्ञा० ११ पद० । मूलमादिरित्यनर्थान्तरमिति । आ० चू० २ अ० । प्रथमोत्पत्तौ, सूत्र० २ श्रु० ५ अ० । प्राथम्ये, उत्त० १ अ० । प्रधाने, आचा० २ श्रु० । उत्सेधाख्ये नाभेरधस्तने देहभागे, स्था० ६ ठा० । भेदे, ( प्रकारे ) णि० चू० । सामीप्ये, व्यवस्थायाम्, अवयवे च । आह च । " सामीप्ये च व्यवस्थायां, प्रकारेऽवयवे तथा । चतुर्ष्वर्थेषु मेधावी, ह्यादिशब्दन्तु लक्षयेदिति" प्रश्न० १ द्वा० । अस्य चतुर्विधो निक्षेपः नामस्थापनाद्रव्यभावभेदात् । तद्यथा–

णामादी ठवणादी, दव्वादी चेव होंति भावादी ।
दव्वादी पुण दव्वस्स, जो सब्भावो सएट्ठाणे ॥

( णामादीत्यादि ) आदेर्नामादिकश्चतुर्धा निक्षेपः । नामस्थापने सुगमत्वादनादृत्य द्रव्यादिं दर्शयति । द्रव्यादिः पुनर्द्रव्यस्य परमाण्वादेर्यः स्वभावः परिणतिविशेषः स्वके स्थाने स्वकीये पर्याये प्रथममादौ भवति स द्रव्यादिर्द्रव्यस्य दध्यादेर्य आद्यः परिणतिविशेषः क्षीरस्य विनाशकालसमकालीन एवमन्यस्यापि परमाण्वादेर्द्रव्यस्य यो यः परिणतिविशेषः प्रथममुत्पद्यते स सर्वोऽपि द्रव्यादिरेवमेव भवति । ननु च कथं क्षीरविनाशसमये एव दध्युत्पादः । तथा हि । उत्पादविनाशौ भावाभावरूपौ वस्तुधर्मौ वर्तेते । न च धर्मो धर्मिणमन्तरेण भवितुमर्हत्यत एकस्मिन्नेव क्षणे तद्धर्मिणोर्दधिक्षीरयोः सत्तामाप्नोत्येतच्च दृष्टेष्टबाधितमिति । नैष दोषः । यस्य हि वादिनः क्षणमात्रं वस्तु तस्यायं दोषो, यस्य तु पूर्वोत्तरक्षणानुगतमन्वयि द्रव्यमस्ति अस्यायं दोष एव न भवति । तथाहि तत्परिणामि द्रव्यमेकस्मिन्नेव क्षणे एकेन स्वभावेनोत्पद्यते परेण विनश्यत्यनन्तधर्मत्वाद्वस्तुन इति । यत्किंचिदेतत् । तदेवं द्रव्यस्य विवक्षितपरिणामेन परिणमतो य आद्यः समयः स द्रव्यादिरिति स्थितं द्रव्यस्य प्राधान्येन विवक्षितत्वादिति ।

सांप्रतं भावादिमधिकृत्याह ।

आगम णोआगमओ, भावादी तं बुहा उवदिसंती ।
णोआगमओ भावो, पंचविहो होइ णायव्वो ॥
आगमओ पुण आदी, गणिपिडगं होइ बारसंगं तु ।
गच्छामि लोगोपदपाद–अक्खराइ चउत्थादी ॥

(आगम इत्यादि) भावोऽन्तः करणस्य परिणतिविशेषस्तं बुधास्तीर्थकरगणधरादयो व्यपदिशन्ति प्रतिपादयन्ति । तद्यथा । आगमतो नोआगमतश्च । तत्र नोआगमतः प्रधानपुरुषार्थतया चिन्त्यमानत्वात्पञ्चविधः पञ्चप्रकारो भवति । तद्यथा-प्राणातिपातविरमणादीनामाद्यः प्रतिपत्तिसमय इति । तथा ( आगमओ

इत्यादि ) आगममाश्रित्य पुनरादिरेवं द्रष्टव्यः । तद्यथा । यद्-तद्गणिन आचार्यस्य पिटकं सर्वस्वमाधारो वा तद् द्वादशाङ्गं भवति । तुशब्दादन्यदप्युपाङ्गादिकं द्रष्टव्यम् । तस्य प्रवचनस्यादिभूतो ग्रन्थस्तस्याप्याद्यः श्लोकस्तस्याप्याद्यं पदं तस्यापि प्रथममक्षरमेवंविधो बहुप्रकारो भावादिर्द्रष्टव्य इति । तत्र सर्वस्यापि प्रवचनत्वसामायिकमादिस्तस्यापि करोमीति पदं तस्यापि ककारः । द्वादशानां त्वङ्गानामाचाराङ्गमादिस्तस्यापि शास्त्रपरिज्ञाध्ययनमस्यापि च जीवोद्देशकस्तस्यापि सुयंति पदं तस्यापि सुकार इति पदमादिरिति । अस्य च प्रकृताङ्गस्य समयाध्ययनमादिस्तस्यापि उद्देशकश्लोकपादपदवर्णादिर्द्रष्टव्य इति । सूत्र० १ श्रु० ५ अ० ।

आजि–स्त्री० अजन्त्यस्यामिति, अज्–इण्–संग्रामे, संया०समरभूमौ मर्य्यादायाम्, वा ङीप् क्षणे, मार्गे, पुं० भावे इण् आक्षेपे च । वाच० ।

आति–पुं०-अत् इण् शरारिपक्षिणि, सततगन्तरि, त्रि० वाच०॥

आइ (दिं)–अंतियमरण–आत्यन्तिकमरण–न० अत्यन्तं भवमात्यन्तिकं तच्च तन्मरणं चेति क०–धा० । भ० १२ श० ६ उ० । मरणविशेषे, तच्च "एमेव आइअंतियमरणं नवि मरइ ताणि पुणो" आर्षत्वादित्थं निर्देशः । एवमेवावीचिमरणवदात्यन्तिकमरणमपि द्रव्यादिभेदतः पञ्चविधं विशेषःपुनरयम् (नवि मरइ ताणि पुणोत्ति) अपिशब्दस्यैवकारार्थत्वान्नैव तानि द्रव्यादीनि पुनर्म्रियन्ते। अयमर्थः यानि नारकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियन्ते. मृताश्च न पुनस्तान्यनुभूय मरिष्यन्तीत्येवं यन्मरणं तद्द्रव्यापेक्षयाऽत्यन्तभाविस्वादात्यन्तिकमिति । एवं क्षेत्रादिष्वापि वाच्यम् । प्रव० । उत्त० । सम० । तद्भेदा यथा–

आदिंतियमरणे णं पुच्छा गोयमा ! पंचविहे पसत्ते । तंजहा दव्वादिंतियमरणे खेत्तादिंतियमरणे जाव भावादिंतियमरणे । दव्वादिंतियमरणे णं भंते ! कइविह पसत्ते ? गोयमा ! चउव्विहे प० तं० णेरइयदव्वादिंतियमरणे जाव देवदव्वाइंतियमरणे । से केणट्ठे णं भंते ! एवं बुच्चइ-णेरइयदव्वाइंतियमरणे णेर० २ गोयमा ! जेणं णेरइया णेरइयदव्वे वट्टमाणा जाइं दव्वाइं सपयं मरंति ते णं णेरइया ताइं दव्वाइं अणागये काले णो पुणोवि मरिस्संति से तेणट्ठेणं जाव मरणे । एवं तिरिक्खमणुस्सदेव० । एवं खेत्तादिंतियमरणे वि एवं जाव भावादिंतियमरणे वि । भ० १३ श० ७ उ० ।

आइल्ल–आदिम–त्रि० आद्ये, अनु० १ द्वा० ।

आइं–आइं–अव्य० वाक्यालङ्कारे, प्रश्न० । आइंति निपात इति । भ० १५ श० १ उ० ।

आइकडिल्ल–आदिकडिल्ल–न० आद्यगहने, तच्चादिकाडिल्लमुद्गमोत्पादनैषणारूपं ज्ञानादिरूपम् । बृ० १ उ० । नि० चू० ॥

आइकपंकयु–आदिकमण्डलु–स्त्री०आदिनाथस्य कमण्डलौ, सा च गङ्गायमुनयोर्वेणीसङ्गमे स्थापितेति तत्तीर्थजातमिति,ती०।

आइकम्म–आदिकर्म्मन्–न० क० स० क्रियाकूटात्मकस्य कर्मणोऽवयवभूते प्रथमे कर्म्मणि, प्रथममारभ्यमाणक्रियायाम्, प्रथमजे कर्म्ममात्रे च । बहु० तया कर्म्मयुक्ते, त्रि० । वाच० ।

आइकारण–आदिकारण–न० । आद्यं कारणम् । परमेश्वरे, तदधीनत्वात् इतरकारणानाम् स हि प्रथमं स्वोपाधिभूताविद्यया सृज्यमानजीवादृष्टवशादिदमित्थं कर्त्तव्यमिति ईक्षणपूर्व्वकं स्रष्टव्यपदार्थाकारेण विवर्त्तमानः सूक्ष्मभूतानि प्रथममुत्पाद्य ततः स्थूलभूतानि भौतिकानि च ससर्जेत्यागमासिद्धम् इति वेदान्तिनः । सांख्यमते । प्रधाने, प्रधानं हि मूलकारणं तस्यैव महदाद्याकारेण परिणमनात्तथात्वम् । नैयायिकादिमते कारणशब्दस्य निमित्तार्थत्वे ईश्वरस्यैव तथात्वम् । समवायिकारणार्थत्वे परमाणूनां मूलकारणत्वमिति भेदः इति तेन तन्मते ईश्वरे, परमाणुषु च । वाच०॥

आइक्ख–आङ्ख्या–अदा. पर. सद्. सामान्येन कथने, आइक्खइ, समान्येन भाषत इत्यर्थः । औप० ।

आख्येय–त्रि० कथनीये, स्था० ४ ठा० ।

आइक्खग ( य ) आख्यायक–पुं० शुभाशुभमाख्याय जीविका कुर्वत्याजीविकविशेषे, जं० २ वक्ष० ।

आइक्खण–आख्यान–न० सामान्यतः कथने, संहिताकर्षणपूर्वककथने च । औप० " संहियकट्टणमादिक्खणं तु " इह संहिताया अस्खलितपदोच्चारणरूपाया यदाकर्षणं तदाख्यानमुच्यते तच्चेदं व्रतसमितिकषायाणां धारणरक्षणविनिग्रहाः सम्यक् दण्डेभ्यश्चोपरमो धर्मः पञ्चेन्द्रियदमश्चैवं भिक्षां गते गृहस्थानां धर्मकथनार्थं संहिताकर्षणं करोति । बृ० ३ उ० ।

आइक्खमाण–आचक्षाण–त्रि० कथयति, सूत्र० १ श्रु० १४ अ०।

आइक्खिय–आख्यायिक–न० पार्श्वश्रुतविशेषे, सा च मातङ्गविद्या यदुपदेशाद्तीतादि कथयतीति । स्था० ९ ठा० ।

आइक्खित्तए–आख्यातुम्–अव्य० कथयितुमित्यर्थे, बृ० ३ उ०।

आइगर–आदिकर–त्रि० आदि करोति अर्हत्वादावपि टः स्त्रियां ङीप्, प्रथमकारके, प्राक्सत्ताकर्त्तरि, वाच० । 'ते सव्वे पावादुया आदिगरा धम्माणं" इति । सूत्र० २ श्रु०२ अ० । आदौ प्रथमतः श्रुतधर्माचारादि ग्रन्थात्मकं कर्म करोति तदर्थप्रणायकत्वेन प्रणयतीत्येवं शीलः । भ०१ श० १ उ० । आदिश्रुतधर्मस्य प्रथमा प्रवृत्तिस्तत्करणशीलः । राज० । स्वस्वतीर्थापेक्षया धर्मस्येति । जी० ३ प्रति० । तत्करणहेतुर्वा । ध० २ अधि० । श्रुतधर्मस्य प्रथमप्रवृत्तिकारके तीर्थकरे च । आव० ५ अ० । सम० । "नमोत्थुणं अरिहंताणं भगवंताणं आदिगराणं तित्थगराणं " इति । राज० । इहादौ करणशीला आदिकरा अनादावपि भवे तदा तदा तत्तत्कर्म पवादिसम्बन्धयोग्यतया विश्वस्यात्मादिगामिनो जन्मादिप्रपञ्चापत्तेः । प्रस्तुतयोग्यताभावेऽपि प्रक्रान्तसम्बन्धाविरोधादिति परिभावनीयमेतत् । न च तत्तत्कर्मवादेरेव तत्स्वभावतयाऽऽत्मनस्तदा सम्बन्धसिद्धिः । द्विष्ठत्वेन अस्योभयोस्तथास्वभावापेक्षितत्वात् । अन्यथा कल्पनाविरोधान्न्यायानुपपत्तेर्नहि कर्म पवादिस्तथा कल्पनायामप्यलोकाकाशेन सम्बन्धस्वभावस्यायोगात् । अतत्स्वभावे वा लोकाकाशे विरुध्यते कर्म पवादेस्तत्स्वभावता कल्पनेति न्यायानुपपत्तिः । तत्स्वभावताङ्गीकरणे चास्मदभ्युपगतापत्तिः । न चैवं स्वभावमात्रवादसिद्धिस्तदन्यापेक्षित्वेन सामग्र्याः फलहेतुत्वात् । स्वभावस्य च तदन्तर्गतत्वेनेष्टत्वात् । निर्लोठितमेतदन्यत्रेत्यादिकरत्वसिद्धिः । ल० । यद्यप्येषा द्वादशाङ्गी न कदाचिन्नासीन्न कदाचिन्न भवति न कदाचिन्न भविष्यति अभूच्च भवति च भविष्यति चेति वचनान्नित्या द्वादशाङ्गी तथाप्यर्थापेक्षया नित्यत्वं शब्दापेक्षया तु स्वस्वतीर्थे श्रुतधर्मादिकरत्वमविरुद्धमिति । धर्म० २ अधि० ।

आइगुण–आदिगुण–पुं० । आदौ गुणः ७ त० सहभाविनि गुणे, आव० ४ अ० ( सिद्धानामादिगुणा एकत्रिंशत्ते च सिद्धादिगुण शब्दे वक्ष्यन्ते )

आइग्घ–आघ्रा–आङ्, घ्रा–भ्वा० पर० अनिट् गन्धोपादाने, तृप्तौ च । वाच० " आघ्रेराइग्घः ८ । ४ । १३ । " इति प्राकृतसूत्रेणाजिघ्रतेर्वैकल्पिक आइग्घादेशः । आइग्घइ–आग्घाअइ जिघ्रतीत्यर्थः । प्रा० व्या० ॥

आइग्घण–आघ्राण–त्रि० आङ् घ्रा–क्त–गृहीतगन्धे पुष्पादौ, नासिकया यस्य गन्धज्ञानं जातं तस्मिन्, तृप्ते, भावे क्तः गन्धग्रहणे, तृप्तौ च न० । वाच० ॥

आइच्च–आदित्य–पुं० । कृष्णराज्यवकाशान्तरस्थलोकान्तिकसंज्ञकार्चिर्मालिविमानस्थे लोकान्तिकदेवविशेषे, भ० ६ श० ५ उ० । ग्रैवेयकविमानविशेषे, तन्निवासिनि वैमानिकदेवविशेषे च । प्रव० । समयावलिकादीनामादौ भवे, बहुलवचनात् त्यप्रत्ययः । सूर्य० २० पाहु० । सूर्ये, आव० ४ अ० ।

सूर्यस्यादित्यसंज्ञा यथा ॥

से केणट्ठेणं भंते ! एवं वुच्चइ सूरे आइच्चे सूरे गोयमा ! सूरादियाणं समयाइ वा आवलियाइ वा जाव उस्सप्पिणीइ वा अवसप्पिणीइ वा से तेणट्ठेणं गोयमा ! जाव आइच्चे।

अथादित्यशब्दस्यान्वर्थाभिधानायाह ( सेकेणमित्यादि ) तथा हि–सूर्योदयमवधिं कृत्वा अहोरात्रारम्भकः समयो गण्यते आवलिकामुहूर्त्तादयश्च ( सेतेणमित्यादि ) अथ तेनार्थेन सूर आदित्य इत्युच्यते इति । भ० १२ श० ६ उ० । सूर० । चन्द्र० । आदित्यस्यास्तित्वं सूत्रकृताङ्गे " णाइच्चो उएइ ण अत्थमेइ" सर्वशून्यवादिनो ह्यक्रियावादिनः सर्वाध्यक्षमादित्योद्गमनादिकामेव क्रियां तावन्निरुन्धन्तीति दर्शयति । आदित्यो हि सर्वजनप्रतीतो जगत्प्रदीपकल्पो दिवसादिकालविभागकारी स एव तावन्न विद्यते कुतस्तस्योद्गमनमस्तगमनं वा । यच्च जाज्वल्यमान तेजोमण्डलं दृश्यते तद् भ्रान्तमतीनां द्विचन्द्रादिप्रतिभासं मृगतृष्णिकाकल्पं वर्त्तते । अथैतन्मतस्य निराकरणम् । तथाहि–आगोपालाङ्गनादिप्रतीतः समस्तान्धकारक्षयकारी कमलाकरोद्घाटनपटीयानादित्योद्गमः प्रत्यहं भवन्नुपलक्ष्यते । तत्क्रिया च देशाद्देशान्तरावाप्त्याऽन्यत्र देवदत्तादौ प्रतीताऽनुमीयत इति । सूत्र० १ श्रु० १२ अ० । सर्वाधिष्ठिते गगने दिवानिशं बम्भ्रम्यमाणे लोकप्रकाशकरे तेजोमण्डले, । अग्नौ प्रस्ता हुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः इति । मनुना अग्निहुतद्रव्याणां हविराज्यादीनां परमाणुमात्रतयाऽवस्थितानां दग्धशेषाणां सूर्यरश्मिकर्षणेन सूर्यलोकप्राप्त्या वृष्टिहेतुत्वमुक्तम् तच्च मण्डलार्थपरत्व एव सम्भवति । वाच० । अर्कवृक्षे, पुं० आदित्यस्यापत्यम् ण्यः यलोपः । आदित्यापत्ये, पुं० स्त्री० वाच० । आदित्यस्यायमादित्यः पत्युत्तरपदण्यमादित्यदितेरिति ण्यापवादस्त्यक् व्यञ्जनाद्यन्तमस्य सरूपे वा इति पाक्षिक एकस्य यकारस्य लोपः । आदित्यचारनिष्पन्नत्वादुपचारतो मासोऽप्यादित्यः । आदित्यसम्बन्धिनि भचारनिष्पन्ने मासादौ स चैकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधिकदिनशतप्रमाणस्य षड्भागमानः यदादित्याचारनिष्पन्नत्वादुपचारतो मासोऽप्यादित्यः । व्य० प्र० १ उ० ।

आइच्चगय–आदित्यगत–त्रि० । सूर्याक्रान्ते नक्षत्रादौ, " आइच्चगए अनिव्वाणी" रविगते नक्षत्रे शुभप्रयोजने प्रारब्धमाणेऽसुखमिति वृत्तिः । वृ० १ उ० ।

आइच्चजस–आदित्ययशस्–पुं० ऋषभदेववंशजे भरतात्मजे नृपभेदे, आ० चू० २ अ० । स च पुण्डरीकशिखरे सिद्ध इति । ती० । आदित्ययशःप्रभृतयो भगवन्नाभेयवंशजाः त्रिखण्डभरतार्द्धमनुपाल्य पर्यन्ते पारमेश्वरीं दीक्षामतिगृह्य तत्प्रभावतः सकलकर्मक्षयं कृत्वा सिद्धिमगमन्निति । नं० ॥

आइच्चपीढ–आदित्यपीठ–न० । गजपुरस्थे श्रेयांसेन कारिते आदितीर्थकरस्य रत्नमये पादपीठे, तद्वक्तव्यता यथा–सेज्जंसो वि जत्थ ठितो भयवं पडिलाभितो ताणि पयाणि पायाहि मा अक्कमीसामित्ति भत्तिए तत्थ रयणमयं पीढं करेइत्ति सन्भं च पूएइ पव्वदिवसे विसेसेण पूइऊण भुंजइ लोगो पुच्छइ किमेयं सेज्जंसो भणइ आइतित्थयरमंडलं ततो लोगेण वि जत्थ जत्थ भयवं ठितो तत्थ तत्थ पीढं कयं कालेण य आइच्चपीढं जायं ॥ गयाक्षरगमनिका क्रियाध्याहारतः कार्या । यथा गजपुरं नगरमासीत् तत्र श्रेयांसः सोमयशसो राज्ञः पुत्रः तेनेक्षुरसदानं भगवते कृतम् । तत्रार्द्धत्रयोदशहिरण्यकोटी वसुधारा निपतिता । पीठमिति यत्र भगवता पारितं तत्र तत्पादयोर्मा कश्चिदाक्रमणं कार्षीदिति श्रेयांसेन भक्त्या रत्नमयं पीठं कारितं गुरुपूजेति तदर्चनं कृतवानिति । आ० म० प्र० ।

आइच्चभत्ता आदित्यभक्ता–स्त्री० आदित्ये भक्ता । अर्कवल्लभायाम् ओषधौ, वाच० ॥

आइच्चमास–आदित्यमास–पुं० आदित्यस्यायमादित्यः आदित्यचारनिष्पन्नत्वादुपचारतो वाऽऽदित्यः स चासौ मासश्च कर्म० आदित्यचारनिष्पन्ने मासभेदे, स चैकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधिकशतदिनप्रमाणस्य षड्भागप्रमाण इति । व्य० प्र० १ उ० ।

आइच्चे णं मासे एकतीसं राइंदियाणं किंचि विसेसूणाइं राइंदियग्गेणं पाणत्ताइं ।

आदित्यमासो येन कालेनादित्यो राशिं भुङ्क्ते ( किंचिविसेसूणा इति ) अहोरात्रार्द्धेन न्यूनानीति । सम० ३१ स० । "आइच्चो खलु मासो तीसं अद्धं च" टी० आदित्यसंवत्सरसम्बन्धी खलु मासो भवति त्रिंशद्रात्रिंदिवानि एकस्य च रात्रिंदिवसस्यार्द्धम् । तथाहि–सूर्यसंवत्सरस्य परिमाणं त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिंदिवानि द्वादशभिश्च मासैः संवत्सरस्ततस्त्रयाणां शतानां षट्षष्ट्यधिकानां द्वादशभिर्भागे हृते यथोक्तं मासपरिमाणं भवति । ज्यो० २० पाहु० ।

आइच्चवन्न–आदित्यवर्ण–त्रि० । भास्वरे, षो० ॥

आइच्चसंवच्छर–आदित्यसंवत्सर–पुं० प्रमाणसंवत्सरविशेषे, स च यावता कालेन षडपि प्रावृडादय ऋतव आपूर्णा आवृत्ता भवन्ति तावत्कालविशेष आदित्यसंवत्सरः । उक्तं च " छप्पि उऊ परियट्टा, एसो संवच्छरो उ आइच्चो" तत्र यद्यपि लोके षष्ट्यहोरात्रप्रमाणः प्रावृडादिक ऋतुः प्रसिद्धः तथापि परमार्थतः स एकषष्ट्यहोरात्रप्रमाणो वेदितव्यः तथैवोत्तरकालमव्यभिचारदर्शनात् अत एवास्मिन् संवत्सरे त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिंदिवानां भवन्ति । तथा चान्यत्रापि पञ्चस्वपि संवत्सरेषु यथोक्तमेव रात्रिंदिवानां परिमाणमुक्तम् । "तिन्नि अहोरत्तसया छावट्ठी भक्खरो हवइ" ॥ तत्र सूर्यसंवत्सरस्य परिमाणं त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिंदिवानां द्वादशभिश्च मासैः संवत्सरस्तत्र त्रयाणां शतानां षट्षष्ट्यधिकानां द्वादशभिर्भागो ह्रियते । लब्धाः त्रिंशत् शेषास्तिष्ठन्ति षट् । ते अर्द्धीक्रियन्ते जाता द्वादश । ततो लब्धमेक

दिवसस्यार्द्धमेतावत् परिमाणं सूर्यमासः । चंद० १० पाहु० । ज्यो० । तत्र त्र्यशीत्यधिकशततमोऽहोरात्रः प्रथमस्य षण्मासस्य पर्यवसानम् । षट्षष्ठ्यधिकत्रिंशत्तमोऽहोरात्रो द्वितीयस्य षण्मासस्य पर्यवसानम् । एष एवम्प्रमाण आदित्यसंवत्सर इति । चंद० १ पाहु० । ( एतस्य वक्तव्यता अहोरत्तशब्दे संवच्छर शब्दे च ) अयमेव लक्षणप्रधानतया लक्षणसंवत्सरान्तर्गतोऽपि ।

तल्लक्षणं सूर्यप्रज्ञप्तौ यथा ।

पुढविदगाणं च रसं, पुप्फफलाणं च देइ आइच्चो ।

अप्पेण वि वासेण वि, सम्मं निप्फज्जए सस्सं ॥

पृथिव्या उदकस्य तथा पुष्पाणां फलानां च रसमादित्यसंवत्सरो ददाति तथा अल्पेनापि स्तोकेनापि वर्षेण वृष्ट्या शस्यं निष्पद्यते अन्तर्भूतण्यर्थत्वात् शस्यं निष्पादयति । किमुक्तं भवति । यस्मिन् संवत्सरे पृथिवी तथाविधोदकसंपर्कादतीव सरसा भवति । उदकमपि परिणामसुन्दररसोपेतं परिणमते । पुष्पाणां च मधूकादिसंबन्धिनां फलानां च चूतफलादीनां रसः प्रचुरः संभवति । स्तोकेनापि वर्षेण धान्यं सर्वत्र सम्यक् निष्पद्यते तमादित्यसंवत्सरं पूर्वर्षयः उपदिशन्ति । सूर०१ पाहु० । स्था० ।

आइच्चसूणु–आदित्यसूनु–पुं० । ६ त० १ सूर्यपुत्रे, २ सुग्रीवे, ३ कर्णे, ४ यमे, ५ शनैश्चरे च । वाच० ॥

आइजिण–आदिजिन–पुं० । ऋषभदेवे, हेम० । वाच० । प्रवचनाय "नमिऊण तमाइजिणं, जस्स स सोहए जहामझो । कप्पाकप्पवियारं, पच्चक्खाणे भणिस्सामि" । ल०प्र० ॥

आइ ( दे ) ज्ज–आदेय–त्रि० आ० दा० यत् । ग्राह्ये, उपादेये, जं० । औप० ।

आइ ( दे ) ज्जमाण–आदीयमान–त्रि० अङ्गीक्रियमाणे, आचा. १ श्रु० ५ अ० ३ उ० ।

आइ ( दे ) ज्जवक्क–आदेयवाक्य–त्रि० ग्राह्यवाक्ये, "से सुरूसुत्ते ववहाणवक्केधम्मं चजे विन्दति तत्थ तत्थ "आदेज्जवक्के" इति । एतद्गुणसम्पन्नश्चादेयवाक्यो भवतीति । सूत्र०१ श्रु०४ अ० ।

आइ ( दे ) ज्जवयण–आदेयवचन–त्रि० सकलजनग्राह्यवाक्ये, दशा०१ अ० ।

आइ ( दे ) ज्जवयणया–आदेयवचनता–स्त्री० सकलजनग्राह्यवाक्यतायां ग्राह्यवचनतारूपे वचनसम्पद्भेदे, उत्त.१ अ० । स्था० ।

आइञ्छ–कृष–तुदा० आ० प० स्वा. पर. च अनिट्–आकर्षणे, विलेखने च । वाच० । "कृषेः कड्डसाअड्डाञ्चाणच्छायञ्छाइञ्छाः" इति वा कृषेराइञ्छादेशः आइञ्छइ, पक्षे करिसइ कृषते कर्षति घोषे । प्रा० व्या० ।

कृष–पुं० भावे. घञ् आकर्षणे, विलेखने च । वाच० ।

आइञ्छग–कृषक–त्रि० । कृष्, एवुल् १ कर्षके २ फाले, न–मेदिध्वृषे पुं० हेम० । वाच० ।

कर्षक–त्रि० १ लेखके २ आकर्षके ३ क्षेत्रकर्षणकारके च । वाच० ।

आइट्ठ–आतिष्ठ–न० । अति. स्था. क. पत्वम् अतिष्ठस्तस्य भावः अ । अतिक्रम्य स्थितौ, उत्कर्षे, वाच०

आदिष्ट–न० । आ. दिश भावे. १ आज्ञायाम, २ उपदेशे च । कर्मणि क्तः । ३ उपदिष्टे, ४ व्याकरणप्रसिद्धे स्थानिजाते वर्णे च । त्रि० । यथा इकः स्थाने यण् आदिश्यते इति इको यणादिष्ट इत्युच्यते । ५ आज्ञप्ते ६ उच्छिष्टे, ७ अनुशिष्टे, त्रि० । वाच० । चोदिते, त्रि० । सूत्र० १ श्रु० ४ अ० आदेशो, भ० श० १०उ० । विशेषरूपेण निर्दिष्टे, त्रि० यथाऽयं देवदत्तोऽयं यज्ञदत्त इति । वृह० ४ उ० । आविष्टे, अधिष्ठिते, त्रि० स्था० ५ ठा० ।

आइट्ठि–आदिष्टि–स्त्री० । धारणायाम, स्था० ७ ठा० ।

आइड्ढि–आत्मर्द्धि–स्त्री० आत्मन ऋद्धिः ६ त० स्वकीयशक्तौ, आत्मलब्धौ च । भ० १० श० ३ उ० ।

आइड्ढिय–आत्मर्द्धिक–पुं० आत्मन एव ऋद्धिर्यस्य ६ व. स्वकीयशक्तिसम्पन्ने, स्वकीयलब्धिसम्पन्ने च । " आइड्ढीएण भंते ! देवे जाव चत्तारि पंच देवावासंतराइं वीइक्कते तेण परं परिड्ढीए " " हंता गोयमा । आइड्ढीए णं तं चेव जाव एव असुरकुमारेवि, णवरं असुरकुमारा वासंतराइं सेसं तं चेव, एवं एएणं कमेण जाव थणियकुमारेवि, एवं वाणमंतरजोइसिए वेमाणिए जाव परंपरिड्ढिए " भ० १० श० ३ उ० ( अधिकमिड्ढि शब्दे )

आइणाह–आदिनाथ–पुं० ऋषभदेवे, आ० म० प्र० ॥

आइणिग्गंथ–आदिनिर्ग्रन्थ–पुं० प्रथमनिर्ग्रन्थे पुलाके " हिट्ठाण विभव्वी पावपणिगणिठ्ठयाइं । अधरउकारजोगिजंणिसेवइ आइणियं वुव्वसो पुलोत्ति " आदिनिर्ग्रन्थः पुलाक इति । प्रति० ॥

आइण्ण–आकीर्ण–त्रि० । व्याप्ते (युक्ते) राज० । आकीर्णे, समाकुले, वृ० १ उ० । संकीर्णे, औप० संकुले, आचा० । "आइण्णओमाणविवज्जणाय" । आकीर्णावमानवर्जना च विहारचर्या प्रशस्तेति वृत्तिः । दश. २चूलि० आकीर्यते व्याप्यते विनयादिगुणैरिति । जात्ये अश्वविशेषे च । स च जवविनयादिगुणैर्युक्त इति स्था०४ठा० । "आइण्णवरतुरयसुसंपउत्ते" भ०७श०७उ० । जात्यवरतुरगे, जी० । "कसंव दट्ठमाइण्णे पावगं परिवज्जए " उत्त० १ अ० । पुरुषविशेषे च । स च विनयादिगुणोपेत इति । स्था० ४ ठा० जवादिगुणयुक्ते अश्वे, ज्ञा०१७अ० । विकिर्णे च । वाच० ।

आचीर्ण–त्रि० आचर्य्यते इति । कल्पनीये, नि० चू० । आसेविते, दर्श० " आइण्णं णाम जं साहूहिं आयरियं विणा वि ओनादिकारणेहिं गेण्हइ इति" नि० चू० । आचीर्णनिक्षेपो यथा आचीर्णमासेवितं तच्च नामादि षोढा तद्व्यतिरिक्तं द्रव्याचीर्णं सिंहादेस्तृणादिपरिहारेण पिशितभक्षणम् क्षेत्राचीर्णं वाल्हीकेषु सक्तवः कोंकणेषु पेयाः । कालाचीर्णं त्विदम् "सरसीचंदणपंको, अग्घइ सरसा य गंधकासादी । पाडलिसिरीसमल्लिय, पियाइं काले निदाहम्मि" भावाचीर्णं तु ज्ञानादिपञ्चकं तत्प्रतिपादकश्चाचारग्रन्थः । आइण्णं जं पुण अणुण्णायं । आचा०१ श्रु०१ अ० १उ० । अनुज्ञाते नि० चू० । ( आचीर्णलक्षणादि जीतयव्ववहार शब्दे )

आइण्णजणमणुस्स–आकीर्णजनमनुष्य–त्रि० । मनुष्यजनेनाकीर्णः संकीर्ण इति मनुष्यजनाकीर्णेति वाच्ये राजदन्तादिदर्शनात्परनिपातः । मनुष्यजनसंकुले, ज्ञा० १ अ० ॥

आइण्णट्ठाण–आकीर्णस्थान–न० हिरण्यादिवस्तुव्याप्ते स्थाने, " आयण्णादीणि वज्जेय ठाणे " भिक्षार्थं प्रविष्टः साधुः हिरण्याद्याकीर्णं स्थानं परिवर्जयेदिति । यत्र हिरण्यादि विक्षिप्तमास्ते तदाकीर्णस्थानं तच्च साधुना वर्जनीयम् । ओघ० ॥

आइण्णणायज्झयण–आकीर्णज्ञाताध्ययन–न० ज्ञाताङ्गस्य सप्तदशेऽध्ययने, आ० सू० ४ अ० । आव० । सम० ॥

आइण्णमणाइण्णकप्प–आचीर्णानाचीर्णकल्प–पुं० आसेवितेऽनासेविते आचारे, तद्वर्णनं यथा–

आइण्णमणाइण्णे, कप्पं तु गुरूवदेसेणं ।

आहारवत्थके करण, फासणे भत्तकालउवगरणे ।

आइएणे आइएणं, तव्विवरीए अणाइएणं ।
आहारच उक्कं खलु, असणादियं तु होति णायव्वं ।
करणं आयरणं तु, तस्स तु जं जत्थ आइएणं ।
पिसितं सिंधूविसए, वांति पुण उत्तरावहाइएणं ।
तंबोलंदमिलेसुं, पमादी खेत्तमाइएणं ।
काले दुब्भिक्खादिसु, व लंबमादी तु सव्वमाइएणं ।
उवगरणे आइएणं, वोच्छामि अतो समासेणं ।
सिंधू आयन्नियाइं, काला कप्पा सुरट्ठविसयम्मि ।
दुग्गुल्लादिपुंडवद्धण, महरट्ठेसु च जल्लपूरा ।
एवं जत्याइएणं, तहियं तु कप्पतीति आयरिउं ।
इतरत्थ कारणम्मि, फासुगगहणं च परिभोगो ।
आइएणं चउवग्गो, ण य पीलाकारओ पवयणस्स ।
ण य मइलणापवयणे, आइएणं आयरे कप्पं ।
आहारउवहिसेज्जा य, सहाचउवग्गहो होति ।
पवयणपीलुवघातो, पिसिया ताइ मज्जया इत्ति ।
चादेइ का मइलणा, भएणति परिसहियाण जं सव्वे
सा होति मइलणा तु, जो पुण सुपरिट्ठिओ चरणे ।
तणहो तु सलाहेती, धणति गुणेहिं एसु जुत्तोत्ति ।
सुट्ठुकरे तप्पहितं, जो पुण करणे अजुत्तो उ ।
तं दट्ठुं संदेहो, उप्पज्जति किणु एस सच्छंदो ।
आऊणं उवएसो, परिसओ देसिओ समए ।
अह जिणकप्पियाण वि, आइएणं किंचि अत्थि अह णत्थि ।
भएणत्ति णत्थि किं पुण, आयरियजिणकप्पिताइसं ।
आहार उवहिदेहे, णिरविक्खो णवरि णिज्जरापेही ।
संघयणविरियजुत्तो, आयएणं आयरति कप्पं ।
पं० भा० । पं० चू० ॥

**आइएणहय–आकीर्णहय**–पुं० । आकीर्णो गुणैर्व्याप्तः स चासौ हयश्च आकीर्णहयः क. स. । जात्येऽश्वविशेषे, स च जवविनयादिगुणोपेत इति । आइएणहय व्व निरुवलेवे । यथा जात्याश्वो मूत्रपुरीषाद्यनुपलिप्तगात्र इति । जी० ३ प्रति० ।

**आइतित्थयर–आदितीर्थकर**–पुं० । ऋषभदेवस्वामिनि, “भगवओ उसहसामिस्स आइतित्थयरस्स इति” । नं० ॥

**आइत्त–आदीप्त**–त्रि० ईषद्दीप्ते, ज्ञा० १ अ० ।

**आइत्ता–आदाता**–त्रि० । ग्रहीतरि, स्था० ७ ठा० ॥

**आइत्तूण–आदाय**–अव्य० गृहीत्वेत्यर्थे, आचा० ४ अ० १ उ० ।

**आइद्ध–आविद्ध**–त्रि० आ० व्यध् क्त–प्रेरिते, दर्श० । ताडिते, विद्धे, छिद्रिते, क्षिप्ते च । वाच० ।

**आदिग्ध**–त्रि० व्याप्ते, ज्ञा० १ अ० ।

**आइदाण–आदान**–न० ग्रहणे, प्रश्न० ॥

**आइधम्मिय–आदिध ( धा ) र्मिक**–पुं० एतत्संज्ञया प्रसिद्धे अपुनर्बन्धकापरपर्य्याये प्रथमारब्धस्थूलधर्माचारे, धर्मसंग्रहे गृहस्थधर्मानुक्त्वैतल्लक्षणादि प्रतिपादितम् । अथ पूर्वोक्तगुणवत एव संज्ञाविशेषविधिं तदवस्थाविशेषविधिं चाह ।

स आदिधार्मिकश्चित्र–स्तत्तत्तन्त्रानुसारतः ।
इह तु स्वागमापेक्षं, लक्षणं परिगृह्यते ॥

स पूर्वोक्तगुणैरुत्तरोत्तरगुणवृद्धियोग्यतावान् आदिधार्मिकः प्रथममेवारब्धं स्थूलधर्माचारत्वेनादिधार्मिकसंज्ञया प्रसिद्धः स च तानि तानि तन्त्राणि शास्त्राणि तदनुसारतश्चित्रो विचित्राचारो भवति भिन्नाचारस्थितानामप्यन्तःशुद्धिमतामपुनर्बन्धकत्वाऽविरोधात् । अपुनर्बन्धकस्य हि ना(श)स्वस्वरूपत्वात् तत्तत्तन्त्रोक्ताऽपि मोक्षार्था क्रिया घटते । तदुक्तं योगविन्दौ “अपुनर्बन्धकस्यैव. सम्यग्नीत्योपपद्यते । तत्तन्त्रोक्तमखिलमवस्थाभेदसंश्रयादिति” । इह तु प्रक्रमे स्वागमापेक्षं स्वागमानुसारिलक्षणं व्यञ्जकं प्रक्रमादादिधार्मिकस्य परिगृह्यते आश्रीयते । यो ह्यन्यैः शिष्टबोधिसत्वनिवृत्तप्रकृत्याधिकारादिशब्दैरभिधीयते स एवास्माभिरादिधार्मिकापुनर्बन्धकादिशब्दैरिति भावः । लक्षणमित्यत्रैकवचनं जात्यपेक्षं तल्लक्षणसंपादनविधिश्चायमुक्तो ललितविस्तरायां “ परिहर्त्तव्योऽकल्याणमित्रयोगः । सेवितव्यानि कल्याणमित्राणि न लङ्घनीयोचितस्थितिः । अपेक्षितव्यो लोकमार्गः । माननीया गुरुसंहतिः भवितव्यमेतत्तन्त्रेण प्रवर्तितव्यं दानादौ । कर्त्तव्योदारपूजा भगवताम् । निरूपणीयः साधुविशेषः । श्रोतव्यं विधिना धर्मशास्त्रं भावनीयम् महायत्नेन प्रवर्तितव्यम् विधानतः । अवलम्बनीयं धैर्यम । पर्यालोचनीया आयातिः । अवलोकनीयो मृत्युः । भवितव्यं परलोकप्रधानेन । सेवितव्यो गुरुजनः । कर्त्तव्यं योगपट्टदर्शनम् । स्थापनीयं तद्रूपादि । चेतसि निरूपयितव्या धारणा । परिहर्तव्यो विक्षेपमार्गः । यतितव्यं योगसिद्धौ । कारयितव्या भगवत्प्रतिमाः । लेखनीयं भुवनेश्वरवचनम् । कर्तव्यो मङ्गलजापः । प्रतिपत्तव्यं चतुःशरणम् । गर्हितव्यानि दुष्कृतानि । अनुमोदनीयं कुशलम् । पूजनीया मन्त्रदेवताः । श्रोतव्यानि सच्चेष्टितानि । भावनीयमौदार्यम् । वर्त्तितव्यमुत्तमज्ञानेन । एवंभूतस्य येह प्रवृत्तिः सा सर्वैव साध्वी ” । मार्गानुसारी ह्ययं नियमादपुनर्बन्धकादिः तदस्यैवंभूतगुणसम्पद्भावात् । अत आदित आरभ्यास्य प्रवृत्तिः सत्प्रवृत्तिरेव नैगमानुसारेण चित्रापि प्रस्थकप्रवृत्तिकल्पा । तदेवं तदधिकृत्याहुः । कुम्भारादिप्रवृत्तिरपि रूपनिर्माणप्रवृत्तिरेव तद्वदादिधार्मिकस्य धर्म्मे कार्त्स्न्येन तद्गामिनी न तद्बाधिनीति हार्दाः । तत्त्वाविरोधकं हृदयमस्य ततः समन्तभद्रता तन्मूलत्वात्सकलचेष्टितस्य । एवमतोऽपि विनिर्गतं तत्तद्दर्शनानुसारतः सर्वमिह योज्यं सुसमाहितप्रबोधदर्शनादि । न ह्येवं प्रवर्त्तमानो नेष्टसाधक इति भग्नोऽप्येतद्यन्त्रलिङ्गोऽपुनर्बन्धक इति तं प्रत्युपदेशसाफल्यम् । नानिवृत्ताधिकारायां प्रकृतावेवंभूत इति कापिलाः । नानवाप्तभवविपाक इति च सौगताः । अपुनर्बन्धकास्त्वेवंभूता इति जैना इति ॥

अथोक्तस्वरूपस्यादिधार्मिकस्य सद्धर्मदेशनायोग्यत्वं दर्शयति

स धर्मदेशनायोग्यो, मध्यस्थत्वाज्जिनैर्मतः ।
योगदृष्ट्युदयात्सार्धं, यद्गुणस्थानमादिमम् ॥ १८ ॥

स पूर्वोक्तगुणसंपत्त्या प्रसिद्ध आदिधार्मिकः धर्मदेशनायोग्यः लोकोत्तरधर्मप्रज्ञापनार्हः जिनैरर्हद्भिर्मतः उपदिष्टः । कालतश्चायं चरमावर्तवर्त्तीत्येवेत्यनुक्तमपि ज्ञेयम । यत उक्तमुपदेशपदे । “घणमिच्छत्तो कालो, एत्थ अकालो उ होइ णायव्वो । कालो उ अपुणबंधग, पभिई धीरेहिं णिहिट्ठो ॥१॥ णिच्छयओ पुण एसो, विन्नेओ गंठिभेदे अकालम्मि । एयम्मि विहिएसया पालणा आरोग्गमेयाओ ”२ एतद्वृत्तिर्यथा घनं मिथ्यात्वं यत्र स तथा कालोऽचरमावर्त्तलक्षणोऽत्र वचनौषधप्रयोगेऽकालस्त्वनवसर एव भवति । विज्ञेयश्चरमावर्त्तलक्षणस्तु तथा भव्यत्वपरिपाकतो बीजाधानबीजोद्भेदबीजपोषणादिषु स्यादपि काल इत्यत एवाह कालस्त्ववसरः पुनरपुनर्बन्धकप्रभृतिस्तत्रादिशब्दान्मार्गाभिमुखमार्गपतितौ गृह्येते । तत्र मार्गश्चेतसोऽवक्रगमनं भुजंगनलिकायामतुल्यो विशिष्टगुणस्थानावाप्तिप्रवणः स्वरसवाही क्षयोपशम-

विशेषो हेतुस्वरूपफलशुद्ध्यभिमुख इत्यर्थः । तत्र पतितो भव्यविशेषो मार्गपतित इत्युच्यते तदादिभावापन्नश्च मार्गाभिमुख इति । एतौ चरमयथाप्रवृत्तकरणभागभाजावेव ज्ञेयौ । अपुनर्बन्धकोऽपुनर्बन्धककालः प्रकृतिर्यस्य स तथा धीरैर्निर्दिष्टो व्यवहारत इति । निश्चयतस्तु कालो ग्रन्थिभेदकाल एव यस्मिन् कालेऽपूर्वकरणनिवृत्तिकरणाभ्यां ग्रन्थिर्भिन्नो भवति तस्मिन्नेवेत्यर्थः । यतोऽस्मिन् विधिनाऽवस्थोचितकृत्यकरणलक्षणेन सदा सर्वकालं या पालना वचनौषधस्य तया कृत्वाऽऽरोग्यं संसारव्याधिरोधलक्षणमतस्माद्वचनौषधप्रयोगाद्भवति अपुनर्बन्धकप्रकृतिषु वचनप्रयोगः क्रियमाणोऽपि न तथा सूक्ष्मबोधविधायकोऽनाभोगबहुलत्वात्तत्कालस्य । भिन्नग्रन्थ्यादयस्तु व्यावृत्तमोहत्वेनातिनिपुणबुद्धितया तेषु तेषु कृत्येषु वर्त्तमानास्तत्कर्मव्याधिसमुच्छेदका जायन्त इति ॥ ननु "गलमच्छभव विमोअग, विसन्नभोईण जारिसो एसो । मोहासुहो वि असुहो, तप्फलओ एवमेसोत्ति " श्रीहरिभद्रवचनानुसारेण विपर्यासयुक्तत्वान्मिथ्यादृशां शुभपरिणामोऽपि फलतोऽशुभ एवेति कथमादिधार्मिकस्य देशनायोग्यत्वमित्याशङ्कायामाह ( मध्यस्थत्वादिति ) रागद्वेषरहितत्वात् । पूर्वोक्तगुणयोगादेव माध्यस्थ्योपसंपत्तेरित्यर्थः । मध्यस्थस्यैव चागमेषु धर्मार्हत्वप्रतिपादनात् । यतः " रत्तो १ दुट्ठो २ मूढो, ३ पुव्विं वुग्गाहिओ ४ अचत्तारि । एए धम्माणरिहा, धम्मारहो उ मज्झत्थोत्ति " श्रीहरिभद्रवचनं तु कदाग्रहग्रस्ताभिग्रहिकमाश्रित्येति न विरोधः । इदमत्र हृदयम् । यः खलु मिथ्यादृशामपि केषांचित्स्वपक्षनिबद्धो दृढानुबन्धानामपि प्रबलमोहत्वे सत्यपि कारणान्तरादुपजायमानो रागद्वेषमन्दतालक्षण उपशमो भूयानपि दृश्यते स पापानुबन्धिपुण्यहेतुत्वात्पर्यन्तदारुण एव तत्फलसुखव्यामूढानां तेषां पुण्याभासकर्मोपरमे नरकादिपातावश्यंभावादित्यस्य प्रवृत्तिरेवायम् । यश्च गुणवत्पुरुषप्रज्ञापनार्हत्वेन जिज्ञासादिगुणयोगान्मोहापकर्षप्रयुक्तरागद्वेषशक्तिप्रतिघातलक्षण उपशमः स तु सत्प्रवृत्तिहेतुरसद्ग्रहनिवृत्तेः सदर्थपक्षपातसारत्वादिति । नन्वेवमपि स्वागमानुसारिण आदिधार्मिकस्योपपन्नं माध्यस्थ्यं परं तस्य विचित्राचारत्वेन भिन्नाचारस्थितानां तेषां स्वस्वमतनिष्ठानां कथं तदुपपद्यते तदभावे च कथं देशनायोग्यत्वमित्यत्राह ( योग इत्यादि ) यद्यस्मादेतोस्तस्येति शेषः । योगदृष्टयुदयात् योगदृष्टिप्रादुर्भावात् । आदिमं गुणस्थानं सार्थमन्वर्थं भवति । अयं भावः । मिथ्यादृष्टयोऽपि परमार्थगवेषणपराः सन्तः पक्षपातं परित्यज्याद्वेषादिगुणस्थाः खेदादिदोषपरिहाराद्यदा संवेगतारतम्यमाप्नुवन्ति तदा मार्गाभिमुख्यात्तयामिक्षुरसकक्कगुडकल्पा मित्रा तारा बला दीप्रा चेति चतस्रो योगदृष्टय उल्लसन्ति भगवत्पतञ्जलिभदन्तभास्करादीनां तदभ्युपगमात् ॥ मिथ्यादृष्टीनामपि माध्यस्थ्यादिगुणमूलकमैत्र्यादिदृष्टियोगेन तस्य गुणस्थानकत्वसिद्धेस्तया प्रवृत्तेरनाभिग्रहिकस्य संभवादनाभिग्रहिकत्वमेव तस्य देशनायोग्यत्वे शोभननिबन्धनमित्यापन्नम् । इत्थं चानाभोगतोऽपि मार्गगमनमेव पक्ष्यन्धन्यायेनत्यध्यात्मचिन्तका इति ललितविस्तरावचनानुसारेण यथनाभोगवान् मिथ्यादृष्टिरपि मिथ्यात्वं मन्दतोद्भूतमाध्यस्थ्यस्य जिज्ञासादिगुणयोगान्मार्गमेवानुसरति तर्हि तद्विशेषगुणयोगादनाभिग्रहिके तु सुतरां धर्मदेशनायोग्यत्वमिति भावः । ध० १ अधि० ।

**आइबंभ**-आदिब्रह्मन्-न० सकलजगदुत्पत्तिकारणे ब्रह्मणि, कल्प० ।

**आइबंभज्झाणि**-आदिब्रह्मध्वनि-स्त्री० । आदिब्रह्मणः शब्दे, 'आदिब्रह्मध्वनिः किं या धीग्वेदध्वनिर्बभौ " कल्प० ॥

**आइम**-आदिम-त्रि० आदौ भवः आदि डिमच्-आदिभवे, वाच० । पश्चादाद्यन्ताग्रादिम इति सूत्रेण इमप्रत्यये टिलोपः । प्रथमे, आव० ५ अ० । प्रव० । कर्म० ॥

**आइमगणहर**-आदिमगणधर-पुं० प्रथमगणधरे, प्रव० ।

**आइमज्झंतकल्लाण**-आदिमध्यान्तकल्याण-त्रि० आदिमध्यावसानेषु सुन्दरे, धर्मप्रशंसामुपक्रम्योक्तम " सर्वागमपरिशुद्धं, यदादिमध्यान्तकल्याणमिति । षो० ३ विव० ॥

**आइमुहुत्त**-आदिमुहूर्त्त-न० प्रथमे मुहूर्त्ते, तत्प्रमाणं यथा ।

अब्भिंतरओ आइमुहुत्ते छण्णउइअंगुलच्छाए पण्णत्ते ।

अभ्यन्तरादभ्यन्तरमण्डलमाश्रित्येत्यर्थः आदिमुहूर्त्तः षण्णवत्यङ्गुलच्छायः प्रज्ञप्तः । अयमत्र भावार्थः सर्वाभ्यन्तरमण्डले यत्र दिने सूर्यश्चरति तस्य दिनस्य प्रथमो मुहूर्त्तो द्वादशाङ्गुलमानं शङ्कुमाश्रित्य षण्णवत्यङ्गुलच्छायो भवति । तथा हि तद्दिनमष्टादशमुहूर्त्तप्रमाणं भवतीति मुहूर्त्तोऽष्टादशभागो दिनस्य भवति ततश्च छायागणितप्रक्रियया छेदनाष्टादशलक्षणेन द्वादशाङ्गुलः शङ्कुर्गुण्यत इति ततो द्वे शते षोडशोत्तरे भवतः ( २१६ ) तयोरर्द्धीकृतयोरष्टोत्तरं शतं भवति ( १०८ ) ततश्च शङ्कुप्रमाणे द्वादशापनीते षण्णवति ( ९६ ) रङ्गुलानि लभ्यन्ते इति । सम० ॥

**आइमूल**-आदिमूल-न० प्रधानकारणे भावमूलभेदे, यथा-मोक्षस्यादिमूलं विनयः संसारस्य विषय इति तत्र मोक्षस्यादिमूलं ज्ञानदर्शनचारित्रतपः । औपचारिकरूपः पञ्चधा विनयस्तन्मूलत्वान्मोक्षावाप्तेस्तथाचाह । " विणयाणाणं णाणाउ, दंशणं दंशणाहि चरणंति । चरणाहिंतो मोक्खो, मोक्खे सुक्खं अणाबाहं " विनयफलं शुश्रूषा, शुश्रूषायाः फलं श्रुतज्ञानम् ज्ञानस्य फलं विरतिः विरतेः फलं चाश्रवनिरोधः, संवरफलं तपोबलम, अथ तपसो निर्जराफलं दृष्टं, तस्मात् क्रियानिवृत्तिः, क्रियानिवृत्तेरयोगित्वम्, योगनिरोधात् भवसंततिक्षयः, संततिक्षयान्मोक्षस्तस्मात्कल्याणानां सर्वेषां भाजनं विनयः इत्यादि । संसारस्य त्वादिमूलं विषयकषाया इति । आचा० १ श्रु० २ अ० १ उ० ॥

**आइमोक्ख**-आदिमोक्ष-पुं० आदिः संसारस्तस्मान्मोक्षः आदिमोक्षः । संसारविमुक्तौ, धर्मकारणानां शरीरं तावदादिभूतं तस्य मोक्षः तद्विमुक्तिर्यावज्जीवमित्यर्थः । शरीरपरित्यागे च " वियरेणजाविज्जय आदिमोक्खं " यावज्जीवमिति वृत्तिः । सूत्र० १ श्रु० ७ अ० । आदौ प्रथमं मोक्षोऽस्येति । मोक्षोद्यते साधौ, आदि प्रधानं मोक्षोऽस्येति । मोक्षैकताने साधौ च "इत्थिओ जे ण सेवंति आइमोक्खा हि ते जणा इति " ये महासत्वाः कटुविपाकोऽयं स्त्रीप्रसङ्ग इत्येवमवधारणतया स्त्रियः सुगतिमार्गार्गलाः संसारवीथीभूताः सर्वाविनयराजधान्यः कपटजालशताकुला महामोहनशक्तयो न सेवन्ते न तत्प्रसङ्गमभिलषन्ति त एवंभूता जना इतरजनातीताः साधव आदौ प्रथमं मोक्षोऽशेषद्वन्द्वोपरमरूपो येषां ते आदिमोक्षाः । हुरवधारणे आदिमोक्षा एव तेऽवगन्तव्याः । इदमुक्तं भवति । सर्वाविनयास्पदभूतः स्त्रीप्रसङ्गो यैः परित्यक्तस्त एवादिमोक्षाः प्रधानभूतमोक्षस्य पुरुषार्थोद्यता आदिशब्दस्य प्रधानवाचित्वात् । सूत्र० १ श्रु० ५ अ० ।

**आइय**-आचित-त्रि० आ० चि० क्त० १ आप्रोते ( व्याप्ते ) ज्ञा० ८ अ० । २ गुम्फिते, ग्रथिते, "तुलापललशतं तासां विंशत्याभार आचित" इत्युक्तेर्भारात्मके ३ द्विसहस्रपलमाने, आचितं दशभाराः स्यात् शाकटो भार आचित इत्युक्ते ४ दशभारमाने, न-५ शाकटभारे, पुं-परिमाणवाचकत्वात्तन्मितेऽपि । ६ संगृहीते, ७ क्षिप्ते च ।

**आइयण**-आदान-न-ग्रहणे, प्रश्न० ३ द्वा० । वाच० ।

आइयत्तिय–आदियात्रिक–पुं० आदौ यात्राऽस्येति सार्थवाहादीनामारक्षके, तस्याष्टौ भेदा यथा "पुराणसावगसम्मद्दिट्ठि, अहाजद्दाणसड्ढे य। अणभिग्गहिए मिच्छे, अभिग्गहे अन्नतित्थी य"। वृ० १ उ०। ( एतस्याशीतिलक्षकारस्सार्थवाहवत्तं च सत्थवाह-शब्दे द्रष्टव्याः )

आइ (दि) यावण–आदापन–न० ग्रहणे, "आदियावेंति" आदापयन्ति, ग्राहयन्ति॥ सूत्र० २ श्रु० १ अ०।

आइराय–आदिराज–पुं०। ऋषभदेवे, स्था० ६ ठा०।

आइरि–आजिरि–त्रि० अङ्गणसन्निकृष्टदेशादौ, वाच०।

आइल्ल–आविल्ल–त्रि०आ-विल भेदने, क. अस्वच्छे, कालुष्ययुक्ते, सूत्र० १ श्रु० ६ अ०। अस्वच्छस्य हि जलादेः सम्यग्दृष्टिप्रसारभेदनात्तथात्वम्, भेदके, त्रि० वाच०।

आइल्लकन्द–आविल्लकन्द–पुं०। आविलो भूमेराभेदकः कन्दो मूलमस्य,। मालाकन्दे, क्षुपभेदे, तस्य मालाकारकन्दतया भूमेः सम्यग्भेदनात्तथात्वम्। वाच०।

आइल्ल–आदिम–त्रि०। आद्ये, श्रा०।

आइल्लचन्द–आदिमचन्द्र–पुं०। उत्तरोत्तरद्वीपसमुद्रचन्द्रापेक्षया पूर्वपूर्वद्वीपसमुद्रचन्द्रे, तस्य तथात्वं सूर्यप्रज्ञप्तौ यथा "धातइसंडप्पभिति उद्दिट्ठा, तिगुणिता भवे चंदा। आदिल्लचंदसहिता, अणंतराणंतरे खेत्ते" सू० प्र० १९ पाहु०।

आइल्लसूर–आदिमसूर्य–पुं०। उत्तरोत्तरद्वीपसमुद्रसूर्यापेक्षया पूर्वपूर्वद्वीपसमुद्रसूर्ये, तस्य तथात्वमत्रैव आइल्लचंद शब्दे सू० प्र० १९ पाहु०।

आई (त्ती) (दी) ण–आजिन–न० मूषकादिचर्मनिष्पन्ने वस्त्रे, आचा० २ श्रु० २ अ० ६ उ०। द्वीपविशेषे, समुद्रविशेषे च। पुं–जी० ३ प्रति०।

आदीन– न० आसमन्ताद्दीनम्। अत्यन्तदीनतायाम्, सूत्र० १ श्रु० ५ अ०।

आईणग–आजिनक–न० चर्म्ममये वस्त्रविशेषे, रा०। तच्च स्वभावादतिकोमलं भवतीति ज्ञा० १ अ०। परिकर्मितकर्मणि, कर्म्म०। ज्ञा०। आ०म० प्र०। नि०। जी०। "आईणगरुयवूरणवणीयतूलफासे" इति भ० ११ श० ११ उ०। "अजिणं चम्मं तम्मि जे कीरंति ते आईणाणित्ति" नि० चू०।

आईणभद्द–आजिनभद्र–पुं० आजिने द्वीपे, आजिनभद्राजिनमहाभद्रौ। आजिनद्वीपस्ये देवे, जी० ३ प्रति०।

आई (दी) णभोइ (न्)–आदीनभोजिन्–पुं० पतितपिण्डोपजीविनि,

आदीणभोई वि करेति पावं, मंताउ एगंतसमाहिमाहु।

आदीनभोज्यपि पापं करोतीति। उक्तं च। "पिंडोलकव्व दुःसीले णरगाओ ण मुच्चइ" स कदाचिद्भोजनमाहारमलभमानोऽल्पत्वादार्तरौद्रध्यानोपगतोऽप्यधः सप्तम्यामप्युत्पद्येत। तद्यथा–असाविव राजगृहनगरोत्सवनिर्गतजनसमूहो वैभारगिरिशिलापातनोद्यतः स दैवात्स्वयं पतितपिण्डोपजीवीति तदेवमादीनभोज्यपि पिण्डोलकादिवज्जनः पापं कर्म करोतीत्येवं मत्वा अवधार्य एकान्तेनात्यन्तेन च यो भावरूपो ज्ञानादिसमाधिस्तमाहुः संसारोत्तरणाय तीर्थकरगणधरादयः। सूत्र०१श्रु०१० अ०।

आईणमहाभद्द–आजिनमहाभद्र–पुं० आजिनद्वीपस्ये देवे, जी० ३ प्रति०।

आईणमहावर–आजिनमहावर–पुं० आजिनसमुद्रस्ये देवे, आजिनवरसमुद्रस्थे देवे च। जी० ३ प्रति०।

आईणवर–आजिनवर–पुं० द्वीपविशेषे, समुद्रविशेषे च। आजिनसमुद्रस्ये देवे, आजिनवरसमुद्रस्थे देवे च। जी०३प्रति०

आईणवरभद्द–आजिनवरभद्र–पुं० आजिनवरद्वीपस्ये देवे, जी० ३ प्रति०

आईणवरमहाभद्द–आजिनवरमहाभद्र–पुं० आजिनवरद्वीपस्ये देवे, जी० ३ प्रति०।

आईणवरोभास–आजिनवरावभास–पुं० द्वीपविशेषे, समुद्रविशेषे च। जी० ३ प्रति०।

आईणवरोभासभद्द–आजिनवरावभासभद्र–पुं० आजिनवरावभासद्वीपस्ये देवे, जी० ३ प्रति०।

आईणवरोभासमहाभद्द–आजिनवरावभासमहाभद्र–पुं० आजिनवरावभासद्वीपस्ये देवे, जी० ३ प्रति०।

आईणवरोभासमहावर–आजिनवरावभासमहावर–पुं० आजिनवरावभाससमुद्रस्ये देवे, जी० ३ प्रति०।

आईणवरोभासवर–आजिनवरावभासवर–पुं० आजिनवरावभाससमुद्रस्थे देवे, जी० ३ प्रति०।

आई (दी) णवित्ति–आदीनवृत्ति–पुं० आ समन्ताद्दीना करुणास्पदा वृत्तिरनुष्ठानं यस्य कृपणवनीपकादेरित्यर्थः। अत्यन्तदीनवृत्तिके कृपणवनीपकादौ, "आदीणवित्ती वि करेति पावं मंता उ एगंतसमाहिमाहु" (आदीणवित्तीत्यादि) आदीनवृत्तिरपि पापं कर्म करोतीत्येवं मत्वा एकान्तेन भावसमाधिमाहुः संसारोत्तरणाय तीर्थकरगणधरादय इति वृत्तिः। सूत्र० १ श्रु० १० अ०।

आई (दी) णिय–आदीनिक–पुं० आ समन्ताद्दीनमादीनं तद्विद्यते यस्मिन्सः। अत्यन्तदीनसत्वाश्रये, "आदीणियं दुक्कडियं पुरत्या" आदीनिकं दुष्कृतिकं पुरस्तात्पूर्वजन्मनि यन्नरकगमनयोग्यं चरितं कृतं तत्प्रतिपादयिष्य इति। सूत्र०१श्रु०५अ०।

आईरण–आजीरण–त्रि० आजिः संग्रामस्तमीरयति प्रेरयति क्षिपति जयतीति यावत्। राज्यावस्थायां संग्रामजेतरि, संथा०।

आईल–आचील–पुं० उदुगाले, ताम्बूलसंबन्धिनमुदुगालमाचीलं तत्र मुञ्चति चीलस्य जिनमन्दिरे परित्यागे तीर्थकृदाशातना भवतीति। प्रव०।

आईवण–आदीपन–न० आ० दीप् णि ल्युट् १ तण्डुलादिचूर्णमिश्रितजलेन गृहादौ चित्राकारलेपनभेदे, २ उद्दीपने च। वाच०॥

आईवमाण–आदीप्यत्–त्रि० प्रकाशमाने, महा०।

आईविय–आदीपित–त्रि० आ. दीप्. णिच्. क्त १ दत्तादीपने, गृहाङ्गनादौ, २ उद्दीपिते च। वाच०।

आउ–अप्–स्त्री० बहुव० आप्० क्विप्० ह्रस्वः वाच० "गोणादय" इति प्राकृतसूत्रेण निपातितः। प्रा० व्या०। द्रवलक्षणे महाभूतविशेषे, आप्व्ययोगादापस्ताश्च रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वस्वाभाविकद्रवत्वस्नेहवेगवत्यस्तासु च रूपं शुक्लमेव रसो मधुर एव स्पर्शः शीत एवेति वैशेषिकाः। रसतन्मात्रादापो रसरूपस्पर्शवत्य इति श्लेष्मासृगादिवल्लक्षणा आप इति च सांख्याः ( एतन्निराकरणं महाभूतशब्दे ) "अपां स्थानं रसनं रसनेन्द्रियमिति" सूत्र० १ श्रु० १अ०।

जोणियाउयं पकरेइ, णो मणुस्साउयं पकरेइ, णो देवाउयं पकरेइ, बेइंदिय, तेइंदिय, चउरिंदियाणं जहा पुढवीकाइया णं णवरं सम्मत्ते णाणेसु ण एकं पि आउयं पकरेंति । किरियावादी णं भंते ! पंचिंदियतिरिक्खजोणिया किं णेरइयाउयं पकरेंति, पुच्छा, गोयमा ! जहा मणपज्जवणाणी अकिरियावादी अण्णाणियवादी वेणइयवादी चउव्विहं पि पकरेंति । जहा ओहिया तहा सलेस्सा वि । कण्हलेस्सा णं भंते ! किरियावादी पंचिंदियतिरिक्खजोणिया किं णेरइयाउयं पुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति, णो तिरिक्खजोणियाउयं पकरेंति णो मणुस्साउयं पकरेंति, णो देवाउयं पकरेंति । अकिरियावादी अण्णाणियवादी वेणइयवादी चउव्विहं पि पकरेंति । जहा कण्हलेस्सा । एवं णीललेस्सा वि । काउलेस्सा वि । तेउलेस्सा । जहा सलेस्सा, णवरं अकिरियावादी अण्णाणियवादी वेणइयवादी णो णेरइयाउयं पकरेंति । तिरिक्खजोणियाउयं पि पकरेंति, मणुस्साउयं पि पकरेंति, देवाउयं पि पकरेंति । एवं पम्हलेस्सा वि । एवं सुक्कलेस्सा वि जाणियव्वा । कण्हपक्खिया समोसरणेहिं चउव्विहं पि आउयं पकरेंति । सुक्कपक्खिया जहा सलेस्सा । सम्मद्दिट्ठि जहा मणपज्जवणाणी तहेव वेमाणियाउयं पकरेंति । मिच्छद्दिट्ठि जहा कण्हपक्खिया । सम्मामिच्छादिट्ठीणं एकं पि आउयं पकरेंति जहेव णेरइया णाणी जाव ओहिणाणी जहा सम्मद्दिट्ठी अण्णाणी जाव विभंगणाणी जहा कण्हपक्खिया । सेसा जाव अणागारोवउत्ता, सव्वे जहा सलेस्सा तहा चेव जाणियव्वा । जहा पंचिंदियतिरिक्खजोणियाणं वत्तव्वया भणिया एवं मणुस्साण वि भाणियव्वा, णवरं मणपज्जवणाणी णो सण्णोवउत्ता य जहा सम्मद्दिट्ठी तिरिक्खजोणिया तहेव भाणियव्वा । अलेस्से केवलणाणी अवेदकअकसाई अजोगी य एए एकं पि आउयं ण पकरेंति जहा ओहिया जीवा । सेसं तं चेव । वाणमंतरजोइसियवेमाणिया जहा असुरकुमारा ।

पुढविकाइयेत्यादौ ( दुविहं आउयत्ति ) मनुष्यायुस्तिर्यगायुश्चेति ( तेओलेस्साए न किं पि पकरेंतित्ति ) अपर्याप्तकावस्थायामेव, पृथिवीकायिकानां तद्भावात्तद्विगम एव चायुषो बन्धादिति ( सम्मत्तनाणेसु न एकं पि आउयं पकरेंतित्ति ) द्वीन्द्रियादीनां सम्यक्त्वज्ञानकालात्यय एवायुर्बन्धो भवत्यल्पत्वात्तत्कालस्येति नैकमप्यायुर्बध्नन्ति तयोस्त इति । पञ्चेन्द्रियतिर्यग्योनिकदण्डके । कण्हलेस्साणमित्यादि यदा पञ्चेन्द्रियतिर्यञ्चः सम्यग्दृष्टयः कृष्णलेश्यात्रयपरिणता भवन्ति तदायुरेकमपि न बध्नन्ति सम्यग्दृशां वैमानिकायुर्बन्धकत्वेन तेजोलेश्यादित्रय एव बन्धनादिति ( तेओलेस्सा जहा सलेसत्ति ) अनेन च क्रियावादिनो वैमानिकायुरेव इतरे तु त्रयश्चतुर्विधमप्यायुः प्रकुर्वन्तीति प्राप्तं सलेश्यानामेवंविधस्वरूपतयोक्तत्वादिह तु यदनभिमतं तन्निषेधनायाह नवरं अकिरियावाईत्यादि ॥ शेषं तु प्रतीतार्थत्वान्न व्याख्यातमिति ॥

( १८ ) अनन्तरोपपन्नकादिक्रियावाद्यादीनामायुर्यथा ।

किरियावादी णं भंते ! अणंतरोववण्णगा णेरइया किं णेरइयाउयं पकरेंति पुच्छा, गोयमा ! णो णेरइयाउयं णो तिरि० णो मणु० णो देवाउयं पकरेंति । एवं अकिरियावादी वि । अण्णाणियवादी वि, वेणइयवादी वि । सलेस्सा णं भंते ! किरियावादी अणंतरोववण्णगा णेरइया किं णेरइयाउयं पुच्छा, गोयमा ! णो णेरइयाउयं जाव णो देवाउयं पकरेंति । एवं जाव वेमाणिया । एवं सव्वट्ठाणेसु अणंतरोववण्णगा णेरइया ण किंचि वि आउयं पकरेंति, जाव अणागारोवउत्तेत्ति । एवं जाव वेमाणिया णवरं जं जस्स अत्थि तं तस्स भाणियव्वं । भ० ३० श० १ उ० ॥

(१९)भविकजीवानां नैरयिकादिषूपपद्यमानानां सायुष्कत्वं यथा

जीवे णं भंते ! जे भविए नेरइएसु उववज्जित्तए से णं भंते ! किं साउए संकमइ निराउए संकमइ ? गोयमा ! साउए संकमइ नो निराउए संकमइ । से णं भंते ! आउए कहिं कडे कहिं समाइण्णे ? गोयमा ! पुरिमे भवे कडे, पुरिमे भवे समाइण्णे, एवं जाव वेमाणियाणं दंडओ । से णूणं भंते ! जे जं भविए जोणिं उववज्जित्तए से तमाउयं पकरेइ, तंजहा–नेरइयाउयं वा जाव देवाउयं वा ? हंता गोयमा ! जे जं भविए जोणिं उववज्जित्तए से तमाउयं पकरेइ । तंजहा–नेरइयाउयं वा तिरियमणुयदेवाउयं वा । नेरइयाउयं पकरेमाणे सत्तविहं पकरेइ तंजहा–रयणप्पभापुढवी नेरइयाउयं वा जाव अहे सत्तमा पुढवी नेरइयाउयं वा तिरिक्खजोणियाउयं पकरेमाणे पंचविहं पकरेइ । तंजहा एगिंदियतिरिक्खजोणियाउयं वा भेदो सव्वो भाणियव्वो मणुस्साउयं दुविहं पकरेइ देवाउयं चउव्विहं पकरेइ ॥

जीवेणमित्यादि ( सेणंभंतेत्ति ) अथ तद्भदन्त ! ( कहिंकडेत्ति ) क भवे बद्धम् । ( समाइण्णेत्ति ) समाचरितं तद्धेतुसमाचरणात् ( जेजंभविएजोणिंउववज्जित्तएत्ति ) विभक्तिविपरिणामाद्यो यस्यां योनावुत्पत्तुं योग्य इत्यर्थः ( मणुस्साउयं दुविहंति ) संमूर्च्छिमगर्भव्युत्क्रान्तिकभेदाद् द्विधा ( देवाउयं चउव्विहंति ) भवनपत्यादिभेदात् । भ० ५ श० ३ उ० ॥

(२०)भविकजीवानां नैरयिकादिषूपपद्यमानानामायुष्कणरप्रतिसंवेदनादि यथा–

रायगिहे जाव एवं वयासी–जीवे णं भंते ! जे भविए नेरइएसु उववज्जित्तए से णं भंते ! किं इह गए नेरइयाउयं पकरेइ, उववज्जमाणे नेरइयाउयं पकरेइ, उववन्ने नेरइयाउयं पकरेइ ? गोयमा ! इह गए नेरइयाउयं पकरेइ नो उववज्जमाणे नेरइयाउयं पकरेइ, नो उववन्ने नेरइयाउयं पकरेइ । एवं असुरकुमारेसु वि, एवं जाव वेमाणिएसु । जीवे णं भंते ! जे भविए नेरइएसु उववज्जित्तए से भंते ! किं इह गए नेरइयाउयं पडिसंवेदेइ, उववज्जमाणे नेरइयाउयं पडिसंवेदेइ, उववन्ने नेरइयाउयं पडिसंवेदेइ ? गोयमा ! नो इह गए

नेरइयाउयं पडिसंवेदेइ, उववज्जमाणे नेरइयाउयं पडिसंवेदेइ, उववन्ने वि नेरइयाउयं पडिसंवेदेइ, एवं जाव वेमाणिएसु । ज० ७ श० ६ उ० ॥

( २१ ) अनन्तरमुद्वर्त्योपपद्यमानानां नैरयिकादीनामायुष्प्रतिसंवेदनादि यथा ।

णेरइयाणं भंते ! अणंतरं उव्वट्टित्ता जे भविए पंचिंदियतिरिक्खजोणिएसु उववज्जित्तए से णं भंते ! कयरं आउयं पडिसंवेदेइ ? गोयमा ! णेरइयाउयं पडिसंवेदेइ । पंचिंदियतिरिक्खजोणियाउए से पुरओ कडे चिट्ठइ । एवं मणुस्से वि । णवरं मणुस्साउए से पुरओ कडे चिट्ठइ । असुरकुमारा णं भंते ! अणंतरं उव्वट्टित्ता जे भविए पुढवीकाइएसु उववज्जित्तए पुच्छा, गोयमा ? असुरकुमाराउयं पडिसंवेदेइ, पुढवीकाइयाउए से पुरओ कडे चिट्ठइ । एवं जो जहिं भविओ उववज्जित्तए तस्स तं पुरओ कडे चिट्ठति, तत्थ ठिओ तं पडिसंवेदेइ जाव वेमाणिया, णवरं पुढवीकाइओ पुढवीकाइएसु उववज्जति, पुढवीकाइयाउयं पडिसंवेदेइ अण्णे य से पुढवीकाइयाउए पुरओ कडे चिट्ठइ, एवं जाव मणुस्सो सट्ठाणे उववातेयव्वो परट्ठाणे तहेव ॥

प्राग् नारकादिवक्तव्यतोक्ता ते चायुष्कं प्रति संवेदनावन्त इति तेषां तन्निरूपयन्नाह नेरइएणमित्यादि ॥ भ० ॥ १८ श० ५ उ० । ( आयुषो गुणस्थानेषु बन्धोदयसत्तास्थानानां परस्परसंबन्धेन आयुषो भङ्गाः पञ्चसंग्रहे दर्शितास्ते कम्म शब्दे द्रष्टव्याः ) ॥

आहोस्वित्–अव्य० आहो च स्विच्च द्वं०विकल्पे, २ प्रश्ने च" आहोस्वित् शाश्वतं स्थानं तेषां तत्र द्विजोत्तमः " द्विपदमित्येके । "किं देवाणं वयणं गज्झं आउ जिणवराणं" उत्त० नि० । आउ त्ति आर्षत्वादाहोस्विदिति वृत्तिः ॥ उत्त० १ अ० ।

**आउंचण**–आकुञ्चन–न० संकोचात्मके क्रियाभेदे, जङ्घादेः सङ्कोचने, ध० २ अ० । गात्रसंकोचने, आव० ४ अ० । पंचा० । तच्च ऋजुद्रव्यस्य कुटिलत्वकारणं च कर्माकुञ्चनं यथा ऋजुनोऽङ्गुल्यादिद्रव्यस्य येऽग्रावयवास्तेषामाकाशादिभिः स्वसंयोगिभिर्विभागे सति मूलप्रदेशैश्च संयोगे सति येन कर्मणाङ्गुल्यादिरवयवी कुटिलः संपद्यते तदाकुञ्चनम् । सम्म० ॥

**आउंचणपट्टग**–आकुंचनपट्टक–न० पर्यस्तिकापट्टे, तच्च निर्ग्रन्थीनां धारयितुं न कल्पते ।

( सूत्रम् ) नो कप्पइ निग्गंथीणं आकुंचणपट्टगं धारित्तए वा परिहरित्तए वा कप्पइ निग्गंथाणं आकुंचणपट्टगं धारित्तए वा परिहरित्तए वा ।

एवं यावद्दारुदण्डकसूत्रम् । अथामीषां सूत्राणां सम्बन्धमाह ।

बंभवयपालणट्ठा, तहेव पट्टाययाउ समणीणं ।

विइयपदेण जईणं, पीढगफलए विवज्जित्ता ॥

यथा ब्रह्मव्रतपालनार्थमेवाऽऽदीनि न कल्पन्ते तथा ब्रह्मचर्यरक्षणार्थमेव श्रमणीनां पट्टादयोऽपि वा संदाणकान्ता न कल्पन्ते द्वितीयपदे तु यतीनां कल्पन्ते परं पीठफलकानि वर्जयित्वा तानि साधूनामपवादमन्तरेणापि कल्पन्त एवेत्यर्थः । अत एतेषां सूत्राणामारम्भः । अनेन संबन्धेनायातानाममीषां प्रथमसूत्रस्य व्याख्या ।

नो कल्पते निर्ग्रन्थीनामाकुञ्चनपट्टं पर्यस्तिकापट्टं धारयितुं वा परिहर्तुं वा कल्पते निर्ग्रन्थानामाकुञ्चनपट्टं धारयितुं वा परिहर्तुं वेति सूत्रार्थः ।

अथ भाष्यं ।

गव्वो अवाउडत्तं, अणुवधिपलिमन्थुपरिवाओ ।

पट्टमतोलियदोसा, गिलाणियाए उ जयणाए ॥

पर्यस्तिकापट्टं परिदधानामार्यिकां दृष्ट्वा लोको ब्रूयात् अहो अस्याः कियान् गर्वो यदेवं महिला भवन्ती पर्यस्तिकां करोति अपावृता वा पर्यस्तिकां वा कुर्वाणा भवेत् । ( अणुवहित्ति ) य उपकारे वर्तते स उपधिरुच्यते । स च तासामुपकारं नायातीति कृत्वा अनुपधिरुभयकालं प्रत्युपेक्ष्यमाणे च तस्मिन् सूत्रार्थपरिमन्थः । शास्तुश्च तीर्थकृतः परिवादो यथा नूनमसर्वज्ञोऽसौ येनैतः स पर्यस्तिकापट्टो न प्रतिषिद्धः । द्वितीयपदे यः संयती स्थविरो ग्लानतया यतनया अल्पसागारिकपर्यस्तिकापट्टः परिधातव्यः उपरि चान्यत्प्रावरणीयं कारणे च गृह्यमाणे योऽज्ञात्रिको आज्ञारहितः स गृहीतव्यो आलसदशेषु विरदोषः एवं निर्ग्रन्थानामप्यकारणे पर्यस्तिकां कुर्वाणानां चतुर्लघु गुर्वादयश्च त एव दोषाः ।

कारणे पुनरयं विधिः ।

थेरे व गिलाणे वा, मुत्तकाउमुवरिं तु पाउरणं ।

वक्खाणए व चेट्ठो पुव्व–कतमसारिए वाए ॥

सूत्रपौरुषीमुपलक्षणत्वादर्थपौरुषीं च कर्तुं शिष्याणां दातुमित्यर्थः । स्थविरो ग्लानो वाचनाचार्यः पर्यस्तिकां कृत्वा परिप्रावृणुयात् । उत्तरार्द्धं पश्चाद् व्याख्यास्यते । स च पर्यस्तिकापट्टः कीदृश इत्याह ।

फल्लो अचित्तो अह आविओ वा,

चउरंगुलो वित्थडओ असंधिमो ।

विस्सामहेउं तु सरीरगस्स,

दोसा अवट्टंभगया य एवं ॥

फलाज्जातः फालः सौत्रिक इत्यर्थः । अचित्रोऽकर्बुरः । अथ सौत्रिको न प्राप्यते तत आविको वा स च चतुरङ्गुलविस्तृतः । स्थूलोऽसंधिमश्चापान्तराले संधिरहितः एवंविधः पर्यस्तिकापट्टः शरीरस्य विश्रामहेतोर्गृह्यते ये वादष्टम्भगताः "अंगरक्खुद्देहिय" इत्यादिका दोषाः तथैवमाकुञ्चनपट्टे परिधीयमाने न भवन्ति ॥ वृ० १ उ० ॥

**आउंच–( ट ) ण**–आकुञ्चना–स्त्री० आकुञ्चनं गात्रसंकोचनं तदेवाकुञ्चना । सङ्कोचे, । ध० ३ अधि० ।

**आउंटण**–आकुंचन–न० आर्षेऽन्यदपि दृश्यत इति प्राकृतव्याकरणाच्चस्य टः । संकोचने, आव० ४ अ० । " आउंटणं गात्रसंखेवो" इति । आ० चू० ६ अ० । आवर्जने च । पञ्चा० ७ विव० ।

**आउंटणपसारण**–आकुञ्चनप्रसारण–न० आकुञ्चनं जङ्घादेः-संकोचनं प्रसारणं च तस्यैव जङ्घादेः सङ्कुचितस्य ऋजुकरणं आकुञ्चनप्रसारणं च । जङ्घादिसङ्कोचनाकुञ्चितजङ्घाद्यृजुकरणयोस्तदात्मके, एकासनप्रत्याख्यानस्याकारविशेषे च । " अण्णत्थ आउंटणपसारणेणं " आकुञ्चने प्रसारणे चासहिष्णुतया क्रियमाणे यत्किञ्चिदासनं चलति ततोऽन्यत्र प्रत्याख्यानं तस्मिन् हि क्रियमाणे न प्रत्याख्यानभङ्ग इति । प्रव० ४ द्वा० । ध० । " हत्थं वा पायं वा सीसं वा पसारे आउंटेज्ज वा पसारेज्ज वा ण भज्जेति इति० " । आ० चू० ६ अ०

आकुण्टनादिप्रस्तावादिदमाह ।

देवे णं भंते ! महिड्ढिए जाव महेसक्खे लोगंते ठिच्चा पभूअलोगंसि हत्थं वा जाव ऊरूं वा आउयं वेत्तए वा पसारेत्तए वा ? णो इणट्ठे समट्ठे सेकेणट्ठेणं भंते ! एवं वुच्चइ देवे णं महिड्ढिए जाव महेसक्खे लोगंते ठिच्चा णो पभूअलोगंसि हत्थं वा जाव पसारेत्तए वा ? गोयमा ! जीवाणं आहारोवचिया पोग्गला बोंदिचिया पोग्गला कडेवरचिया पोग्गला पोग्गला चेव पप्पजीवाण य अजीवाण य गइपरियाये अहिज्जइ, आलोएणं णेवत्थि जीवा णेवत्थि पोग्गला से तेणट्ठेणं जाव पसारेत्तए वा सेवं भंते भंतेत्ति ॥

देवेणमित्यादि ( जीवा णं आहारोवचिया पोग्गलत्ति ) जीवानां जीवानुगता इत्यर्थः ॥ आहारोपचिता आहाररूपतयोपचिताः । ( बोंदिचिया पोग्गलत्ति ) अव्यक्तावयवशरीररूपतया चिताः ( कडेवरचिया पोग्गलत्ति ) शरीररूपतया चिताः उपलक्षणत्वाच्चास्योच्छ्वासचिताः पुद्गला इत्याद्यपि द्रष्टव्यम् अनेन चेदमुक्तं जीवानुगामिस्वभावाः पुद्गला भवन्ति ततश्च यत्रैव क्षेत्रे जीवास्तत्रैव पुद्गलानां गतिः स्यात्तया ( पोग्गला चेव पप्पत्ति ) पुद्गलांश्च प्राप्याश्रित्य जीवानां च ( अजीवाणयत्ति ) पुद्गलानां च गतिपर्यायो गतिधर्म्मः ( अहिज्ज इति ) आख्यायते । इदमुक्तं भवति । यत्र क्षेत्रे पुद्गलास्तत्रैव जीवानां पुद्गलानां च गतिर्भवति, एवं चालोके नैव सन्ति जीवा नैव च सन्ति पुद्गला इति तत्र जीवपुद्गलानां गतिर्नास्ति तदभावाच्चालोके देवो हस्ताद्याकुण्ठयितुं प्रसारयितुं वा न प्रभुरिति । भ० । १६ श० ८ उ० ।

आउकम्म–आयुष्कर्म्मन्–न० एति याति चेत्यायुस्तन्निबन्धनं कर्मायुष्कर्म कर्मविशेषे, उत्त० १ अ० ( तद्वक्तव्यता आउ शब्दे )

आउकम्मे दुविहे पन्नत्ते तंजहा अद्धाउए चेव भवाउए चेव

इदानीं पञ्चविधमायुष्कर्म व्याचिख्यासुराह ।

सुरनरतिरिनरयाऊ, हडिसरिसं नामकम्मचित्तिसमं ।
बायालतिनवइविहं, तिसुत्तरसयं च सत्तट्ठी ॥

आयुः शब्दः प्रत्येकं योज्यते ततश्च सुष्ठु राजन्त इति सुराः ॥ यद्वा सुर ऐश्वर्यदीप्त्योः सुरन्ति विशिष्टमैश्वर्यमनुभवन्ति दिव्याभरणकान्त्या सहजशरीरकान्त्या च दीप्यन्त इतिसुराः । यदि वा सुष्ठु रान्ति ददति प्रणतानामीप्सितमर्थं लवणाधिपसुस्थित इव लवणजलधौ मार्गं जनार्दनस्येति सुरा देवास्तेषामायुः सुरायुर्येन तेष्वचस्थितिर्भवति । नृणन्ति निश्चिन्वन्ति वस्तुतत्त्वमिति नराः मनुष्यास्तेषामायुर्नरायुस्तद्भवावस्थितिहेतुः । २ । (तिरित्ति) प्राकृतत्वात्तिरोऽञ्चन्ति गच्छन्तीति तिर्यञ्चः व्युत्पत्तिनिमित्तं चैतत् । प्रवृत्तिनिमित्तं तु तिर्यग्गतिनाम एते चैकेन्द्रियादयस्तेषामायुस्तिर्यगायुर्येनैतेषु स्थीयते । नरान् उपलक्षणत्वात् तिरश्चोऽपि प्रभूतपापकारिणः कायन्तीवेति नरकाः तत्रोत्पन्ना जन्तवोऽपि नरकाः । नरका वा विद्यन्ते येषां ते भ्रमादिभ्य इत्यप्रत्यये नरकास्तेषामायुर्नरकायुर्येन ते तेषु ध्रियन्ते । एतच्चायुर्हडिसदृशं भवति । तत्र हडिः खोडकस्तेन सदृशं तत्तुल्यम् । यथाहि राजादिना हडौ क्षिप्तः कश्चिच्चौरादिस्ततो निर्गमनमनोरथं कुर्वाणोऽपि विवक्षितकालं यावत्तया ध्रियते तथा नारकादिस्ततो निष्क्रमितुमना अपि तदायुषा ध्रियते इति हडिसदृशमायुः । व्याख्यातं चतुर्विधं पञ्चमायुःकर्म । कर्म० १ क० ॥

आउकरण–आयुष्करण–न० आयुषः करणमिति जीवितविपाकवेद्यस्यायुष्कर्मविशेषस्य निर्वर्तने, "आउयकरणं तु असंखयं" इति "तम्हाओ अप्पमादो चरित्तम्मि" इति च । उत्त० नि० । "असंखयं तत्तुरियत्ति"। तत्पुनरायुष्करणमसंस्कृतं नोत्तरकरणेन त्रुटितमपि पटवत् संधातुं शक्यम् । यतः "फट्टा तुट्टा च इह, परुमादी संठवेंति नर्यानउणा । सा का वि नत्थि नीती, संधिज्जइ जीवियं जीए" एवं च स्वरूपतो हेतुतो विषयतश्च व्याख्येति । स्वरूपतो हेतुतश्चोत्तरकरणेन न कथमित्यादिना ग्रन्थेन व्याख्यातम् । अनेन त्वायुष्करणस्यासंस्कृतत्वोपदर्शनेन विषयतः ( तम्हाओत्ति ) यस्मादसंस्कृतमायुष्कर्म तस्मादप्रमाद एव प्रमादाभाव एव चरित्र इति चरित्रविषयः कर्तव्य इति गाथार्थः । उत्त० ४ अ० ॥

आउकाइय–अप्कायिक–पुं० आपो द्रवास्ता एव कायः शरीरं यस्येति । अप्काय एवाप्कायिकः स्वार्थे इकप्रत्ययः । एकेन्द्रियसंसारसमापन्नजीवविशेषे, प्रज्ञा० १ पद० ॥

आउकाय–अप्काय–पुं० आपः कायो यस्येति । एकेन्द्रियसंसारसमापन्नजीवभेदे, षट्कायभेदे च जीवा०नि, प्रज्ञा० १ पद०।सम०॥

( १ ) अप्कायिकानां द्वैविध्यम् ।
( २ ) अप्कायिकस्य शरीरादिवर्णनम् ।
( ३ ) सचित्ताचित्तमिश्रविवेकः ।
( ४ ) तीव्रोदकस्याचित्तत्वम् ।
( ५ ) अप्कायशस्त्रनिरूपणम् ।
( ६ ) सचित्ताप्कायपरिभोगविचारः ।
( ७ ) अप्कायपरिभोगकारणानि ।
( ८ ) अप्कायसमारम्भव्यावृत्तस्यैव मुनित्वम् ।
( ९ ) शाक्यादिमुनयो नियमतः अप्कायिकांस्तदाश्रितजीवांश्च विहिंसन्ति ।
( १० ) अप्कायविहंसननिषेधः ।
( ११ ) अप्कायस्पर्शनिषेधः ।
( १२ ) शीतोदकादिपरिसेवननिषेधः ।

( १ ) ते च द्विविधा

से किं तं आउका ( का ) इया ? आउकाइया दुविहा पन्नत्ता । तंजहा–सुहुमआउकाइया य बादर आउकाइया य । से किं तं सुहुमआउकाइया ? सुहुमआउकाइया दुविहा, पन्नत्ता, तंजहा–पज्जत्तसुहुमआउकाइया य अपज्जत्तसुहुम आउकाइया य । सेत्तं सुहुमआउकाइया से किं तं बादरआउकाइया ? बादरआउकाइया अणेगविहा पण्णत्ता तंजहा–ओसा हिमए महिया करए हरतणुए सुद्धोदए सीतोदए उसिणोदए खारोदये खट्टोदए अंबिलोदए लवणोदए वारुणोदए खीरोदए खोदोदए रसोदए जेयावण्णे तहप्पगारा ते समासओ दुविहा पण्णत्ता । तंजहा–पज्जत्तगा य अपज्जत्तगा य । तत्थ णं जे ते अपज्जत्तगा ते णं असंपत्ता । तत्थ णं जे ते पज्जत्ता एतेसि णं वण्णादेसे णं गंधादेसेणं रसादेसेणं फासादेसेणं सहस्सग्गसो विहाणाइंसंखेज्जाइं जोणिप्पमुहसयसहस्साइं पज्जत्तगणिस्साए अपज्जत्तगा वकमंति । जत्थ एगो तत्थ नियमा असंखेज्जा । सेत्तं बादरआउकाइया सेत्तं आउकाइया । प्रज्ञा० १ पद० ॥

आउस्स वि दाराइं, ताइं जायं हवंति पुढवीए।
नाणत्तीउ विहाणे, परिमाणुवभोगसत्थे य ॥
दुविहा य आउजीवा, सुहुमा तह बायरा य लोयम्मि।
सुहुमा य सव्वलोए, पंचेव य बायरविहाणा ॥ ७ ॥
सुद्धोदए य ओसा-हिमे य महिया य हरतणू चेव।
बायरआउविहाणा, पंचविहा वंणिया एए ॥ ८ ॥
जे बायरपज्जत्ता, पयरस्स असंखभागमेत्ता ते।
सेसा तिन्नि वि रासी, वीसुं लोगा असंखेज्जा ॥ ९ ॥

ननु च प्रज्ञापनायां बादराप्कायभेदा बहवः परिपठितास्तद्यथा, करकशीतोष्णक्षारक्षत्रकट्वम्ललवणवरुणकालोदपुष्करक्षीरघृतेक्षुरसादयः। कथं पुनस्तेषामत्र संग्रहः? उच्यते। करकस्तावत्काठिन्याद्धिमान्तःपाती शेषास्तु स्पर्शरसस्थानवर्णमात्रभिन्नत्वान्न शुद्धोदकमतिवर्तन्ते। यद्येवं प्रज्ञापनायां किमर्थोऽपरभेदानां पाठः? उच्यते स्त्रीबालमन्दबुद्ध्यादिप्रतिपत्त्यर्थमिति। इहापि कस्मान्न तदर्थं पाठः? उच्यते प्रज्ञापनाध्ययनमुपात्तत्वादार्षे तत्र युक्तः सकलभेदोपन्यासः स्त्र्याद्यनुग्रहाय निर्युक्तयस्तु सूत्रार्थं पिण्डीकुर्वन्त्यः प्रवर्तन्त इत्यदोषः। एते बादराप्कायाः समासतो द्वेधा पर्याप्तका अपर्याप्तकाश्च। तत्रापर्याप्तका वर्णादीनाम्, संप्राप्तपर्याप्तकास्तु वर्णगन्धरसस्पर्शादेशैः सहस्राग्रशो भिद्यन्ते ततश्च संख्येयानि योनिप्रमुखानि शतसहस्राणि भवन्ति भेदानामित्यवगन्तव्यम्। संवृतयोनयश्चैते सा च सचित्ताचित्तमिश्रभेदात् त्रिधा। पुनश्च शीतोष्णोभयभेदात् त्रिधैव। एवं गण्यमानाः योनीनां सप्त लक्षा भवन्ति। प्ररूपणानन्तरं परिमाणद्वारमाह (जे बायरेत्यादि) ये बादराप्कायपर्याप्तकास्ते संवृतलोकप्रतरासंख्येयभागप्रदेशराशिपरिमाणाः। शेषास्तु त्रयोऽपि विष्वक्पृथगसंख्येयलोकाकाशप्रदेशराशिपरिमाणा इति। विशेषश्चायं बादरपृथिवीकायपर्याप्तकेभ्यो बादराप्कायपर्याप्तका असंख्येयगुणाः सूक्ष्मपृथिवीकायापर्याप्तकेभ्यः सूक्ष्माप्कायापर्याप्तका विशेषाधिकाः सूक्ष्मपृथिवीकायपर्याप्तकेभ्यः सूक्ष्माप्कायपर्याप्तका विशेषाधिकाः। आचा० नि० १ अ० ३ उ० ॥

भौमान्तरिक्षभेदाद् द्विविधत्वम्। तत्रान्तरिक्षमपि द्विविधम्। "मिहिया वास पुण अंतलिक्खाओ" मिहिकारूपोऽप्कायो वर्षारूपोऽप्कायश्चेति। ओघ० ॥

( २ ) अप्कायिकस्य शरीरादि यथा ॥

तेसि णं भंते! जीवाणं कति सरीरया पण्णत्ता गोयमा? तओ सरीरया पण्णत्ता तंजहा ओरालिते तेयत्ते कम्मत्ते जहेव सुहुमपुढविकाइयाणं। नवरं थिवुगसंठिया पण्णत्ता सेसं तं चेव जाव दुगतिया दुआगतिया परित्ता असंखेज्जा पण्णत्ता। सेत्तं सुहुमआउकाइया। से किं तं बायरआउकाइया? बायरआउकाइया अणेगविहा पण्णत्ता तंजहा उसा हिमे जाव जे यावन्ने तहप्पगारा। ते समासओ दुविहा पण्णत्ता तंजहा पज्जत्ता य अपज्जत्ता य तं चेव सव्वं। नवरं थिवुगसंठिया चत्तारि लेसाओ आहारो नियमा छद्दिसिं उववाओ तिरिक्खजोणियमणुस्सदेवेहिं ठिती जहन्नेणं अंतोमुहुत्तं उक्कोसेणं सत्तवाससहस्साइं। सेसं तं चेव। जहा बायरपुढविकाइयाणं जाव दुगतिया तिआगतिया परित्ता असंखेज्जा पन्नत्ता समणाउसो। सेत्तं बायरआउकाइया सेत्तं आउकाइया ॥

ते समासत इत्यादि प्राग्वद् नवरं संख्येयानि योनिप्रमुखाणि शतसहस्राणीत्यत्रापि सप्त वेदितव्यानि "तेसि णं भंते! जीवाणं कइ सरीरगा इत्यादि" द्वारकलापचिन्तायामपि बादरपृथिवीकायिकगमोऽनुगन्तव्यो नवरं संस्थानद्वारे शरीरकाणि स्तिबुकसंस्थानसंस्थितानि वक्तव्यानि। स्थितिद्वारे जघन्यतः स्थितिरन्तर्मुहूर्त्तमुत्कर्षतः सप्तवर्षसहस्राणि शेषं तथैव। जी० १ प्रति० ॥

अप्कायिकस्य जीवत्वं यथा

जह हत्थियस्स सरीरं, कललावत्थस्स अहुणोववन्नस्स।
होइ उदगंडस्स य, तओवमा आउजीवाणं ॥

पर आक्षिपति नाप्कायो जीवस्तल्लक्षणायोगात् प्रश्रवणादिवदित्यस्य हेतोरसिद्धतोद्भावनार्थं दृष्टान्तद्वारेण लक्षणमाह (जहेत्यादि) यथा हस्तिनः शरीरं कललावस्थायामधुनोत्पन्नस्य द्रवश्चेतनश्च दृष्टमेवमप्कायोऽपीति। यथा वा उदकप्रधानमण्डकमुदकाण्डकम्। अधुनोत्पन्नमित्येतन्मध्यावस्थितं रसमात्रमसंजातावयवमनभिव्यक्तचञ्च्वादिप्रविभागश्चेतनावद् दृष्टम्। एषा एवोपमाऽजीवानामपीति। हस्तिशरीरकललग्रहणञ्च महाकायत्वात्तद्बहु भवतीत्यतः सुखेन प्रतिपाद्यते। अधुनोपपन्नग्रहणं सप्ताहपरिग्रहार्थं यतः सप्ताहमेव कललं भवति परतस्त्वर्बुदादि। अण्डकेऽप्युदकग्रहणमेवमेव। प्रयोगश्चायम्। सचेतना आपः शस्त्रानुपहतत्वे सति द्रवत्वात् हस्तिशरीरोपादानभूतकललवत् विशेषणोपादानात्प्रश्रवणादिव्युदासः। तथा सात्मकं तोयमनुपहतत्वादण्डकमध्यस्थितकललवदिति। तथा आपो जीवशरीराणि छेद्यत्वाद् भेद्यत्वादुत्क्षेप्यत्वाद्भोग्यत्वाद्घ्रेयत्वाद् ज्ञेयत्वाद्रसनीयत्वात् स्पर्शनीयत्वात् दृश्यत्वात् द्रव्यत्वादेवं सर्वेऽपि शरीरधर्माः हेतुत्वेनोपन्यसनीयाः गमनवर्जभूतधर्माः स्वरूपवत्त्वाकारवत्त्वादयः। सर्वत्रायं दृष्टान्तः सास्नाविषाणादिसंघातवदिति। ननु च रूपवत्त्वाकारवत्त्वादयो भूतधर्माः परमाणुष्वपि दृष्टा इत्यनैकान्तिकता, नैतदेवं यदत्र छेद्यत्वादिहेतुत्वेनोपन्यस्तं तत्सर्वमिन्द्रियव्यवहारानुपाति न तथा परमाणवोऽतःप्रकरणादतीन्द्रियपरमाणुव्यवच्छेदः। यदि वा नैवासौ विपक्षः सर्वस्य पुद्गलद्रव्यस्य द्रव्यशरीराभ्युपगमात्। जीवसहितासहितत्वं तु विशेषः। उक्तञ्च- "तणवो णऽभातिविगार-मुत्तजाइत्तउणिलं ताउ। सत्थासत्थहयाओ, निज्जीवसजीवरूवाओ" एवं शरीरत्वे सिद्धे सति प्रमाणम्। सचेतना हिमादयः क्वचित् अप्कायत्वादितरोदकवत् इति। तथा सचेतना आपः क्वचित् खात भूमिस्वभाविकसम्भवत्वाद्दर्दुरवत्। अथवा सचेतना अन्तरिक्षोद्भवा आपः स्वाभाविकव्योमसंभूतसंपातित्वान्मत्स्यवत् अत एते एवंविधलक्षणभाक्त्वाज्जीवा भवन्त्यप्कायाः। आचा० १ श्रु० १ अ० ३ उ० ॥

तथा च विशेषावश्यके

भूमिक्खयसाभाविय-संभवओ दद्दुरोव्व जलमुत्तं।
अहवा मच्छोव्वसभाव- वोमसंभूयपायाओ ॥

भौमं जलं सचित्तं भूमिखाते स्वाभाविकसम्भवात् दर्दुरवदिति प्रयोगः। यथा दर्दुरस्य भूमिखनने स्वाभाविकः संभवो जायते, तथा जलस्यापि भूमिखाते स्वाभाविकसंभव इति। अथवा सात्मकमन्तरिक्षोदकं स्वभावतो व्योमसंभूतस्य पातान्मत्स्यवत्, यथा मत्स्यस्य स्वभावेन व्योम्नि संभूतस्य पातो दृश्यते तथान्तरिक्षजलस्यापीति सिद्धं जीवत्वं जलस्य। धर्म० ३ अधि०। सूत्र०। चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता आऊ अन्नत्थ-

सत्थ परिणएणं, दश० ४ अ० । "कललंमरसादीया जह जीवा तहेव आउ जीवा वि" अप्कायिका जीवा अनुपहतत्वे सति द्रवत्वात् कललाण्डरसादिवदिति, । व्य० द्वि० १० उ० । " उदय जीवा वियाहिया " इति । उदकरूपा जीवा इति । आचा० ॥

उदकाश्रिताश्च जीवाः सन्ति तथाचाह-

संति पाणा उदगणिस्सिया जीवा अणेगे

संतिपाणाइत्यादि पूर्ववत् कियन्तः पुनस्त इति दर्शयति- " जीवा अणेगा " पुनर्जीवोपादानमुदकाश्रितप्रभूतजीवभेदज्ञापनार्थं तनश्चेदमुक्तं भवत्येकैकस्मिन् जीवभेदे उदकाश्रिता अनेकेऽसंख्ययाः प्राणिनो भवन्ति यद्येवमुदकमेव जीवास्ततोऽवश्यं तत्परिभोगे सति प्राणातिपातभाजः साधव इत्यत्रोच्यते नैव तदेवं यतो वयं त्रिविधमप्कायमाचक्ष्महे । आचा० १ श्रु० १ अ० ३ उ०॥

( ३ ) सचित्ताचित्तमिश्रविवेको यथा ।

आउक्काओ तिविहो, सच्चित्तो मीसओ य अच्चित्तो ।
सच्चित्तो पुण दुविहो, निच्छय ववहारओ चेव ॥

अप्कायस्त्रिविधस्तद्यथा।सचित्तो मिश्रोऽचित्तश्च । तत्र सचित्तो द्विधा निश्चयतो व्यवहारतश्च । एतदेव सचित्तस्य निश्चयव्यवहाराभ्यां द्वैविध्यमुपदर्शयति ॥

घणउदही घणवलया, करगसमुद्दद्दहाण बहुमज्झे ।
अह निच्छयसचित्तो ववहारनयस्स अवडाई ॥

घनोदधयो नरकपृथ्वीनामाधारभूताः कठिनतोयाः समुद्राः घनवलयास्तासामेव नरकपृथिवीनां पार्श्ववर्तिवृत्ताकारतोया ये च करका घनोपलास्तया समुद्रह्रदानां लवणादिसमुद्रपद्मादिह्रदानां बहुमध्यभागेऽप्कायाः (अहत्ति) एष सर्वोऽपि अप्कायो निश्चयसचित्त एकान्तसचित्तः । शेषस्तु अवटादिरवटवापीतडागादिस्थः । इह अवटादिस्थोऽवटादिशब्देन उक्तस्तात्स्थ्येन तद्व्यपदेशप्रवृत्तेर्यथा मञ्चाः क्रोशन्तीत्यादौ । तत्रावटकूपस्तदादिगतोऽप्कायो व्यवहारनयमतसचित्तः । उक्तः सचित्तोऽप्कायः ।

सम्प्रति मिश्रमाह-

उसिणोदगमणुवत्ते, दंडे वासे य पडियमत्तम्मि ।
मोत्तूणादेसतिगं, चाउल उदगं बहुपसन्नं ।

अनुद्वृत्ते दण्डे अत्र च जातावेकवचनं ततोऽयमर्थः । अनुद्वृत्तेषु त्रिषु दण्डेषु उत्कालेषु यदुष्णादकं तन्मिश्रमिति प्रस्तावादवगम्यते । तथा हि । प्रथमे दण्डे जायमाने कश्चित्परिणमति कश्चिन्नेति मिश्रः । द्वितीये प्रभूतः परिणमति स्तोकोऽवतिष्ठते । तृतीये तु सर्वोऽप्यचित्तो भवति । ततोऽनुद्वृत्तेषु त्रिषु दण्डेषु उष्णोदकं मिश्रमेव सम्भवति । तथा वर्षे वृष्टे पतितमात्रं यज्जलं ग्रामनगरादिषु प्रभूततिर्यग्मनुष्यप्रचारसंभविषु भूमौ वर्तते तद्यावन्नाद्याप्यचित्तीभवति तावन्मिश्रमवगन्तव्यम् । ग्रामनगरादिभ्योऽपि बहिस्तात्तादि स्तोकमेवजलं निपतति तदानीं तदपि पतितमात्रं मिश्रमवसेयम् । पृथिवीकायसम्पर्कतस्तस्य परिणममानत्वात्प्रादृत्प्रभृत्तं जलं मेघो वर्षति तदाऽपि प्रथमतो निपतत् पृथिवीकायसंपर्कतः परिणममानं मिश्रं शेषं तु पश्चान्निपतत्सचित्तमिति तथा मुक्त्वा परिहृत्य आदेशत्रिकं मतत्रिकं तदुक्ता मिश्रता न ग्राह्येति भावार्थः । चाउलोदकं तण्डुलोदकं अबहुप्रसन्नं नातिस्वस्थीभूतं मिश्रमिति गाथार्थः । अबहुप्रसन्नमित्यत्राकारलोप आर्षत्वात् ।

आदेशत्रिकमेव दर्शयति-

भंडगपासगलग्गा, उत्तेडावरपु या य नरसमत्ति ।
जा नावमीसगं तन्दुला य उज्झंति जावन्ने ॥

तन्दुलोदके तन्दुलप्रक्षालनभाण्डादन्यस्मिन् भाण्डे प्रक्षिप्यमाणे ये त्रुटित्वा भाण्डकस्य पार्श्वेषु उत्तेडा बिन्दवो लग्नास्ते यावन्न शाम्यन्ति विध्वंसमुपगच्छन्ति तावत्तत्तन्दुलोदकं मिश्रमित्येके । अपरे पुनराहुस्तन्दुलोदके तन्दुलप्रक्षालनभाण्डकादपरस्मिन् भाण्डके प्रक्षिप्यमाणे ये तन्दुलोदकस्योपरि समुद्भूता बुद्बुदास्ते यावदद्यापि न शाम्यन्ति न विनाशमियूति तावत्तत्तन्दुलोदकं मिश्रमिति । अन्ये पुनरेवमाहुस्तन्दुलप्रक्षालनानन्तरं तन्दुला राद्धुमारब्धास्ततस्ते यावन्न राध्यन्ति यावन्नाद्यापि सिध्यन्तीति भावस्तावत्तत्तन्दुलोदकं मिश्रमिति ।

एषां त्रयाणामप्यादेशानां दूषणान्याह ॥

एए उ अणाएसा, तिण्णि वि कालनियमस्सासंभवओ ।
रुक्खेयरभंडगपवण-संभवासंभवाईहिं ॥

एते त्रयोऽप्यनादेशा एव तु शब्द एवकारार्थो भिन्नक्रमश्च । कुतोऽनादेशा इत्याह । कालनियमस्यासंभवात् । न खलु बिन्दुपगमे बुद्बुदापगमे तन्दुलपाकनिष्पत्तौ वा सदा सर्वत्र प्रतिनियत एव कालो येन प्रतिनियतकालसंभविनो मिश्रत्वादूर्ध्वमाचित्तत्वस्याऽप्यभिधीयमानस्य न व्यभिचारसंभवः । कथं प्रतिनियतकालो न घटते इति कालनियमासंभवमाह ( रुक्खेयरेत्यादि ) रूक्षेतरभाण्डपवनसंभवासंभवादिभिः । अत्रादिशब्दाच्चिरकालसन्निलभिन्नत्वादिपरिग्रहः । इयमत्र भावना । इह यदा पाकतः प्रथममानीतं चिरानीतं वा स्नेहजलादिना न भिन्नं भाण्डं तद्रूक्षमुच्यते । स्नेहादिना तु भिन्नं स्निग्धं तत्र रूक्षे भाण्डे तन्दुलोदके प्रक्षिप्यमाणे ये बिन्दवः पार्श्वेषु लग्नास्ते भाण्डस्य रूक्षतया झटित्येव शोषमुपयान्ति । स्निग्धे तु भाण्डे भाण्डस्य स्निग्धतया चिरकालम् । ततः प्रथमादेशवादिनां मते रूक्षे भाण्डे बिन्दूनामपगमे परमार्थतो मिश्रस्याप्यचित्तत्वसंभावनया ग्रहणप्रसङ्गः । स्निग्धे तु भाण्डे परमार्थतोऽचित्तस्यापि बिन्दूनामपगमे मिश्रत्वेन संभावनया न ग्रहणमिति । तथा बुद्बुदा अपि प्रचुरखरपवनसंपर्कतो झटिति विनाशमुपगच्छन्ति । प्रचुरखरपवनसंपर्काभावे तु चिरमप्यवतिष्ठन्ते । ततो द्वितीयादेशवादिनामपि मते यदा खरप्रचुरपवनसंपर्कतो झटिति विनाशमीयुर्बुद्बुदास्तदा परमार्थतो मिश्रस्यापि तन्दुलोदकस्याचित्तत्वेन संभावनया ग्रहणप्रसङ्गः । यदा तु खरप्रचुरपवनसंपर्काभावे चिरकालमप्यवतिष्ठन्ते बुद्बुदास्तदा परमार्थतोऽचित्तभूतस्यापि तन्दुलोदकस्य बुद्बुददर्शनतो मिश्रत्वशङ्कायां न ग्रहणमिति । येऽपि तृतीयादेशवादिनस्तेऽपि न परमार्थं पर्यालोचितवन्तः तन्दुलानां चिरकालपानीयभिन्नाभिन्नत्वेन पाकस्यानियतकालत्वात्तथाहि ये चिरकालसलिलभिन्नास्तन्दुला न च नवीना इन्धनादिसामग्री च परिपूर्णा ते सत्वरमेव निष्पद्यन्ते । शेषास्तु मन्दम् । ततस्तेषामपि मतेन कदाचिन्मिश्रस्याप्यचित्तत्वसंभावनया ग्रहणप्रसङ्गः । कदाचित्पुनरचित्तीभूतस्यापि मिश्रत्वशङ्कासंभवादग्रहणमिति त्रयोऽप्यनादेशाः ।

संप्रति यः प्रवचनविरोधी आदेशः प्रागुपदिष्टस्तं विभावयिषुराह ।

जाव न बहुप्पसन्नं, ता मीसं एस इत्थ आएसो ।
होइ पमाणमचित्तं, बहुप्पसन्नं तु नायव्वं ॥ २३ ॥

यावत्तन्दुलोदकं न बहुप्रसन्नं नातिस्वच्छीभूतं तावन्मिश्रमवगन्तव्यम् । एषोऽत्र मिश्रविचारप्रक्रमे भवत्यादेशः प्रमाणं न शेषः। यत्तु बहुप्रसन्नमतिस्वच्छीभूतं तदचित्तं ज्ञातव्यं ततोऽचित्तत्वेन तस्य ग्रहणे न कश्चिद्दोषः । उक्तो मिश्रोऽप्कायः ।

अधुना तमेवाचित्तमाह ।

सीउण्हखारखेत्ते, अग्गीलोणू स अंबिले नेहे ।
वुक्कंतजोणिएणं, पओयणं तेणिमं होइ ॥ २४ ॥

इयं गाथा प्रागिव व्याख्येया । नवरं पृथिवीकायस्थाने अप्कायाभिलापः कर्त्तव्यः । इह या स्वकायपरकायशस्त्रयोजना द्रव्यक्षेत्रकालभावापेक्षया वा अचित्तत्वभावना साऽपि प्रागिव यथा योगमप्कायेऽपि भावनीया । तथा यदा दधितैलादिसक्तेषु घटेषु क्षिप्तस्य शुद्धजलादेरुपरिदध्याद्यवयवसत्कातरी जायते तदा सा यदि परिस्थूरा तर्हि एकया पौरुष्या तत्परिणमति । मध्यमभावा चेत्तर्हि द्वाभ्यां पौरुषीभ्यां, स्तोका चेत्तर्हि तिसृभिः पौरुषीभिरिति । इह तावद् व्युत्क्रान्त योनिकेनाप्कायेनेदं प्रयोजनमित्युक्तमतस्तदेव दर्शयति ।

परिसेय पाण हत्थाइ--धोवणं चीरधोवणं चेव ।
आयमणभाणधुवणय--माइओ पउयणं बहुहा ॥२५॥

परिषेको दुष्टव्रणादेरुत्थितस्योपरि सेचनम् । पानं तृडपनोदाय जलस्याभ्यवहरणम् । हस्तादिधावनं करचरणप्रभृतिशरीरावयवानां कारणमुद्दिश्य प्रक्षालनम् । चीवरधावनं वस्त्रप्रक्षालनम् । अस्य भिन्नविभक्तिनिर्देशो न सदैव साधुनोपधिप्रक्षालनं कर्तव्यमिति प्रदर्शनार्थः । आचमनं पुरीषोत्सर्गानन्तरं शौचकरणम् ( भाणधोवणंति ) पात्रकादिभाजनप्रक्षालनम् । एवमादिकमादिशब्दात् ग्लानकार्यादिपरिग्रहः । अचित्तेनाप्कायेन प्रयोजनं बहुधा बहुप्रकारं द्रष्टव्यम् । पिण्ड० । ओघ० । धर्म० ॥

( ४ ) तीव्रोदकस्याचित्तत्वं यथा ।

तिव्वोदगस्स गहणं, केइ भायणेसु असुइपडिसेहो ।
गिहिभायणेसु गहणं, ठिअवासे मीसगं छारो ॥१॥

तीव्रोदकं हि धूमधूमीकृतदिनकरकरसंपर्कसोष्मतीव्रसंपर्कादचित्तमतस्तद्ग्रहणे न काचिद्विराधना केचिदाहुः स्वभाजनेषु तद्ग्राह्यम् । अत्राचार्यः प्राह–अशुचित्वात्स्वपात्रेषु ग्रहणप्रतिषेधस्ततो गृहिभाजने कुण्डिकादौ ग्राह्यम् । वर्षति मेघे च तन्मिश्रं ततः स्थिते वर्षेऽन्तर्मुहूर्त्तादूर्ध्वं ग्राह्यम् । जलं हि केवलं प्रासुकीभूतमपि प्रहरत्रयादूर्ध्वं भूयः सचित्तं स्यादतस्तन्मध्ये क्षारः क्षेप्यः एव स्वच्छतापि स्यादिति । पिण्डनिर्युक्तिवृत्तौ तन्दुलधावनोदकानि प्रथमद्वितीयतृतीयानि अचिरकृतानि मिश्राणि चिरं तिष्ठन्ति अचित्तानि चतुर्थादिधावनानि तु चिरं स्थितान्यपि सचित्तानि प्रासुकजलादिकालमानमेवमुक्तम् । प्रवचनसारोद्धारादौ " उसिणोदगंतिदंडु-क्कलिअं फासुअजलं जई कप्पं । नवरि गिलाणाइकए, पहरतिगोवरि वि धरिअव्वं " ॥ १ ॥
" जायइ सचित्तया से, गिम्हासु पहरपंचगस्सुवरिं । चउपहरुवरिं सिसिरे, वासासु जलं तिपहरुवरिं " ॥ २ ॥ ध० २ अ० ॥
तत्र योऽचित्तोऽप्कायस्तेनोपयोगविधिः साधूनां नेतरेण्यां कथं पुनरसौ भवत्यचित्तः किं स्वभावादाहोस्विच्छस्त्रसम्बन्धात् उभयथापीति । तत्र यः स्वभावादेवाचित्तीभवति न बाह्यशस्त्रसम्बन्धात्तमचित्तं जानाना अपि केवलमनःपर्यायावधिश्रुतज्ञानिनो न परिभुञ्जते अनवस्थाप्रसङ्गभीरुतया । यतोऽनुश्रूयते । भगवता किल श्रीवर्द्धमानस्वामिना विमलसलिलसमुल्लसत्तरङ्गः शैवलपटलत्रसादिरहितो महाह्रदो व्यपगताशेषजलजन्तुकोऽचित्तवारिपूर्णः स्वशिष्याणां तृड्बाधितानामपि पानाय नानुज्ञः । तथाऽचित्ततिलशकटस्थण्डिलपरिभोगानुज्ञाऽनवस्थादोषसंरक्षणाय भगवता न कृतेति श्रुतज्ञानप्रामाण्यज्ञापनार्थञ्च । तथा हि—सामान्यश्रुतज्ञानी बाह्येन्धनसम्पर्कादुपितस्वरूपमेवाचित्तमिति व्यवहरति, जलं न पुनर्निरिन्धनमेवेति । अतो यद्वाह्यशस्त्रसम्पर्कात्परिणामान्तरापन्नं वर्णादिभिस्तदाचित्तं साधुपरिभोगाय कल्पते । आचा० ।

( ५ ) किम्पुनस्तच्छस्त्रमित्यत आह ।

उस्सिंचणगालणधो–यणे य उवकरणकोसभंडे य ।
बायर आउकाए, एवं तु समासओ सत्थं ॥ १३ ॥
किंची सकायसत्थं, किंची परकायतदुभयं किंची ।
एयं तु दव्वसत्थं, भावे य असंजमो सत्थं ॥ १४ ॥

( उस्सिंचणेत्यादि ) शस्त्रं द्रव्यभावभेदात् द्विधा । द्रव्यशस्त्रमपि समासविभागभेदात् द्विधैव । तत्र समासतो द्रव्यशस्त्रमिदमूर्ध्वसेचनम् उत्सेचनं कूपादेः कोशादिनोत्क्षेपणमित्यर्थः । गालनं घनमसृणवस्त्रवर्त्तितेन । धावनं वस्त्राद्युपकरणचर्मकोशघटादिभण्डकविषयम् । एवमादिकं बादराप्काये । एतत्पूर्वोक्तं समासतः सामान्येन शस्त्रम् । तु शब्दो विभागापेक्षया विशेषणार्थः । विभागतस्त्विदम् ( किंचीत्यादि ) किञ्चित् स्वकायशस्त्रं नादेयं तडागस्य । किञ्चित्परकायशस्त्रं मृत्तिकास्नेहक्षारादि । किञ्चिदुभयं उदकमिश्रा मृत्तिकोदकस्येति ॥

सत्थं चेत्थं अणुवीइपासा पुढो सत्थं पवेइयं ।

शस्यन्ते हिंस्यन्ते प्राणिन इति शस्त्रं तच्चोत्सेचनगालनोपकरणधावनादिस्वकायादि च वर्णाद्यापत्तयो वा पूर्वावस्थाविलक्षणाः शस्त्रम् । तथा ह्यग्निपुद्गलानुगतत्वादीषत्पिङ्गलं जलं भवत्युष्णं गन्धतोऽपि धूमगन्धि रसतो विरसं, स्पर्शत उष्णम् । तच्चोत्कृतत्रिदण्डमेवंविधावस्थं यदि ततः कल्पते नान्यथा । तथा कचवरगोकरीषस्तत्रोषादीन्धनसम्बन्धात् स्तोकं स्तोकं प्रक्षिपतीत्यादिचतुर्भङ्गिकाभावना कार्या । एवमेतत्त्रिविधं शस्त्रञ्चशब्दोऽवधारणार्थः । अन्यतमशस्त्रसम्पर्कविध्वस्तमेव ग्राह्यं नान्यथेति । ( एत्थेति ) एतस्मिन्नप्काये प्रस्तुते अनुविचिन्त्य विचार्य इदमस्य शस्त्रमित्येवं ग्राह्यम् । पश्येत्यनेन शिष्यस्य चोदनेति तदेव नानाविधं शस्त्रमप्कायस्यास्तीति प्रतिपादितमेतदेव दर्शयति । ( पुढोसत्थं पवेदितं ) पृथग्विभिन्नमुत्सेचनादिकं शस्त्रं प्रवेदितमाख्यातं भगवता । पाठान्तरं वा (पुढोपासं पवेदितं) एवं पृथग्विभिन्नं लक्षणेन शस्त्रेण परिणामितमुदकग्रहणं मया संप्रवेदितमाख्यातं भगवता पाशो बन्धनं शस्त्रपरिणामितोदकग्रहणमबन्धनमाख्यातमिति यावदेव तावत्साधूनां सचित्तमिश्राप्कायपरित्यागेनाचित्तपयसा परिभोगः प्रतिपादितः ॥ आचा० १ श्रु० १ अ० १ उ० ।

( ६ ) सचित्ताप्कायपरिभोगविचारो यथा—

इच्छिज्जइ जत्थ सया, बीय पएणावि फासुयं उदयं ।
आगमविहिणा निउणं, गोयम ! गच्छं तयं भणियं ।९७।

इष्यते वाञ्छ्यते यत्र गणे सदा नित्यम् उत्सर्गपदापेक्षया द्वितीयपदमपवादपदं तेनापि किं पुनरुत्सर्गपदेनेत्यपि शब्दार्थः । प्रगता असवः प्राणा यस्मात्तत्प्रासुकं किमुदकं जलं तच्च उत्कालत्रयात्क्वथनादिप्रकारेण प्रासुकीस्यात् न तु तप्तमात्रम् । यत उक्तं दशवैकालिके ॥

" गिहिणो वेयावडियं, जायआजीववत्तिया ।
तत्ता निवुडभोइत्तं, आउरस्सरणाणि य ॥ १ ॥

तप्तानिर्वृतभोजित्वं तप्तं च तदनिर्वृतं चात्रिदण्डोद्वृत्तं च उदकमिति । विशेषणान्यथानुपपत्त्या गम्यते ॥ तद्भोजित्वमिति असचित्तोदकभोजित्वमित्यर्थः आगमविधिना सिद्धान्तोक्तप्रकारेण यथा स्यात्तथा हे गौतम ! स गच्छो भणितः ॥ गच्छा० ॥

सचित्तस्य तु विन्दुमात्रस्यापि परिभोगो न कल्पते ।

जत्थ य बाहिरपाणिअ, विंदुम्मि गिम्हमाईसु ।
तिण्हाभोसियपाणा, मरणे वि मुणी न गिण्हंति ॥१७॥

हे गौतम ! यत्र २ गच्छे बाह्यपानीयविन्दुमात्रमपि सचित्तजललेशमात्रमपि ग्रीष्मादिषु कालेषु तृष्णया द्वितीयपरीषहेण शोषिता ग्लानिं प्रापिताः प्राणा इन्द्रियादयो येषां ते तृष्णाशोषितप्राणाः मरणान्तेऽपि मुनयः साधवो न गृह्णन्ति क्षुल्लकवत् । तथाहि—उज्जेणी नयरी । तत्थ धणमित्तो नाम वाणियओ । तस्स पुत्तो धणसम्मो नाम । सो धणमित्तो पुत्तेण सह पव्वइओ । अन्नया य ते साहू विहरंता मज्झण्हसमए एलगच्छपुरपहं पडिया । सो वि खुड्डओ तिसाए अभिभूओ सणिं २ एइ सो वि से खंतओ सिणेहाणुरागेण पच्छाओ एइ । साहुणो वि पुरओ वच्चंति । अंतरा य नई समावडिया खंतएण भणियं । एहि पुत्ता ! पियसु पाणियं निज्झरेसु आवइं पच्छा आलोइज्जासि से न इच्छति खंतो नईं उत्तिन्नो चिंतइ । अओ सरामि मणागं जाव स खुड्डगो पाणियं पियइ । मा ममासंकाए न पाही । एगंते पडिच्छइ जाव खुड्डो पत्तो नईं दढव्वयाए सत्ता सारयाए ण पीयं । अन्ने भणंति । भवाहिओ हं न पिवामि पाणियं पच्छा गुरुसले पायच्छितं पडिवज्जिस्सामित्ति उक्खित्तो जलंजली । अह से चिंता जाया । कहमण्हहलए जावे पियामि जं "एक्कम्मि उदगबिंदुम्मि, जे जीवा जिणवरेहिं पन्नत्ता ते पारेवयामित्ता, जंबूदीवे न माएज्जा ॥१॥ " जत्थ जलं तत्थ वणं, जत्थ वणं तत्थ निच्छओ तेऊ । वाऊ सहसमागओ, तसा य पच्चक्खया चेव " ॥ २ ॥ " ता हंतूण परपाणेय अप्पाणं जो करेइ सप्पाणं । अप्पाणं दिवसाणं कएण नासेइ अप्पाणं " ॥ ३ ॥ एवं भो खंतए अइसंविग्गेण न पीयं उत्तिन्नो नईं आसाए छिन्नाए नमोक्कारं झायं सुहपरिणामो कालगओ देवेसु उववन्नो ओहिपउत्तो जाव खुड्डगसरीरं पासइ तेहिमणुपविट्ठो खंतमणुगच्छइ खंतो वि एइत्ति पच्छिओ पच्छा देवेण अणुकंपाए साहूण गोकुलाणि विउव्वियाणि । साहू वि तासु वइगासु तक्काईणि गिण्हंति वइयापरंपरएण जणवयं पत्ता । पडिक्कमाए वइयाए देवेण विंटिया पम्हट्ठा साविया जाणावणनिमित्तं एगो य साहू निवत्तो तय वत्थं पेच्छइ वितियं नत्थि वइया आगंतूण समाहियं तेण पुच्छा नायं तेहिं सा दिव्वंति इत्थंतरे देवेण साहू वंदिया खंतो न वंदियाओ तेहिं पुच्छिओ । किमेयं न वंदसि । तओ सव्वं परिकहेइ नियरं भणइ य । अहं एएण परिचत्तो वयलोवेण दोग्गइजायणं कओ आसितुमेमयं पियाहिं जंपंतेण जइ तं पाणियं तो संसारं भमंतो देवो पडिगच्छोत्ति, हे गौतम ! स गच्छो ज्ञेय इति शेषः । गच्छा० २ अधि० ॥

( ७ ) अप्कायपरिभोगकारणानि यथा.

हाणे पियणे तह धो-यणे य भत्तकरणे य सेए य ।
आउस्स उ परिभोगो, गमणागमणे य जीवाणं ॥११॥

एतत्परिभोगाभिलाषिणो जीवा एतानि कारणान्युद्दिश्याप्कायवधे प्रवर्त्तन्त इति दर्शयति ॥

एएहिं कारणेहिं, हिंसंति आउकाइए जीवे ।
सायं गवेसमाणा, परस्स दुक्खं उदीरिंति ॥ १२ ॥

एभिः स्नानावगाहनादिकैः कारणैरुपस्थितैर्विषयविषमोहितात्मानो निष्करुणा अप्कायिकान् जीवान् हिंसन्ति व्यापादयन्ति किमर्थमित्याह—सातं सुखं तदात्मनोऽन्वेषयन्तः प्रार्थयन्तः हिताहितविचारशून्यमनसः कतिपयदिवसस्थायिरम्ययौवनदर्पाध्मातचेतसः सन्तः सातैकहिताभिलाषिणस्तथा विवेकिजनसंसर्गविकलाः परस्य अजादेर्जन्तुगणस्य दुःखमसातलक्षणं च उदीरयन्त्यसातवेदनीयमुत्पादयन्तीत्यर्थः ॥

( ७ ) अप्कायसमारम्भव्यावृत्तस्यैव मुनित्वं यथा ।

सेवेमि जहा अणगारे उज्जुकडे नियागपडिवण्णे अमायं कुव्वमाणे विणाहिए जाए सद्धाए निक्खंतो तमेव अणुपालिज्जा वियहित्तु विसोत्तियं ( पाठान्तरे ) पुव्वसंजोयं पणया वीरा महावीहिं लोगं च आणाए अभिसमेच्चा अकुतोभयं सेवेमि, णेव सयं लोगं अब्भाइक्खिज्जा, णेव अत्ताणं अब्भाइक्खिज्जा जे लोयं अब्भाइक्खइ से अत्ताणं अब्भाइक्खइ जे अत्ताणं अब्भाइक्खइ से लोयं अब्भाइक्खइ, लज्जमाणा पुढोपास अणगारामोत्ति एके पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं उदयकम्मसमारंभेणं उदयसत्थं समारभमाणे अणेगरूवे पाणे विहिंसइ तत्थ खलु भगवता परिण्णा पवेदिता इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाईमरणमोयणाए दुक्खपडिघायहेउं से सयमेव उदयसत्थं समारंभति अण्णेहिं वा उदयसत्थं समारंभावेति अण्णे उदयसत्थं समारंभंते समणुजाणति । तं से अहियाए तं से अबोहीए, से तं संबुज्झमाणे आयाणीयं समुट्ठाए सोच्चा भगवओ अणगाराणं अंतिए इहमेगेसिं णायं भवति । एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु णरए इत्थ सत्थं गढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं उदयकम्मसमारंभेणं उदयसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसइ ।

स यथा पृथिवीकायसमारम्भव्यावृत्त्युत्तरकालं सम्पूर्णोऽनगारव्यपदेशभाग् भवति तदहं ब्रवीमि । अपिः समुच्चये स यथा चानगारो न भवति तथा च ब्रवीमि ( अणगारामोत्तिएगेपवयमाणेत्यादि ) नाति न विद्यते अगारं गृहमेषामित्यनगारा इह च यत्यादिशब्दव्युदासेनानगारशब्दोपादानेनैतदाचष्टे । गृहपरित्यागः प्रधानं मुनित्वकारणं तदाश्रयत्वात्सावद्यानुष्ठानस्य । निरवद्यानुष्ठायी च मुनिरिति दर्शयति । ( उज्जुकडेत्ति ) ऋजुरकुटिलः संयमो दुष्प्रणिहितमनोवाक्कायनिरोधः सर्वसत्वसंरक्षणप्रवृत्तत्वाद्द्वयैकरूपः सर्वत्राकुटिलगतिरिति यावत् । यदि वा मोक्षस्थानगमनं श्रेणिप्रतिपत्तिः सर्वसंचारसंयमात् । कारणे कार्योपचारं कृत्वा संयम एव सप्तदशप्रकार ऋजुस्तं करोतीति ऋजुकृत् ऋजुकारीत्यर्थः । अनेन चेदमुक्तं भवत्यशेषसंयमानुष्ठायी सम्पूर्णानगार एवंविधश्चेदृग्भवतीति दर्शयति ( नियागपडिवन्नेत्ति ) यजनं यागः नियतो निश्चितोऽनिश्चितो वा यागो नियागो मोक्षमार्गः सङ्गताध्वर्यत्वाद्धेतोः सम्यग्ज्ञानदर्शनचारित्रात्मतया गतं सङ्गतमिति । तं नियागं सम्यग्दर्शनज्ञानचारित्रात्मकं मोक्षमार्गप्रतिपन्नो नियागप्रतिपन्नः । पाठान्तरं वा निकायप्रतिपन्नो निर्गतः काय औदारिकादिर्यस्माद्यस्मिन्वा सति स निकायो मोक्षः तं प्रतिपन्नो निकायप्रतिपन्नस्तत्कारणस्य सम्यग्दर्शनादेः स्वशक्त्यनुष्ठानात्स्वशक्त्यनुष्ठानं वा मायाविनो भवतीति दर्शयति ( अमायं कुव्वमाणत्ति ) माया सर्वत्र स्ववीर्यनिगूहनम् । न माया अमाया तां कुर्वाणोऽनिगूहितबलवीर्यः संयमानुष्ठाने पराक्रममाणोऽनगारो व्याख्यात इत्यनेन तज्जातीयोपादानादशेषकषायापगमोऽपि द्रष्टव्य इति । उक्तंच । "सोही य उज्जुपभूयस्स धम्मो सुद्धस्स चिट्ठइत्ति" तदेवमसावुच्छ्रितसकलमायावल्लीवितानः किं कुर्यादित्याह— ( जाए सद्धाए इत्यादि ) यथा

श्रद्धया प्रवर्द्धमानानुष्ठानकरणरूपया निष्क्रान्तः प्रव्रज्यां गृहीतवाँस्तामेव श्रद्धामश्रान्तो यावज्जीवमनुपालयेद्रक्षेदित्यर्थः। प्रव्रज्याकाले च प्रायशः प्रवृद्धपरिणाम एव प्रव्रजति पश्चात्तु संयमश्रेणीं प्रपन्नो वर्द्धमानपरिणामो वा हीयमानपरिणामोऽवस्थितपरिणामो वेति। तत्र वृद्धिकालो हानिकालो वा समयाद्युत्कर्षेणान्तर्मौहूर्तिकः नातःपरं संक्लेशविशुद्धी द्वे अपि भवतः। उक्तं च-"नान्तर्मुहूर्तकाल-मतिवृत्य शक्यं हि जगति संक्लेष्टुम्। नापि विशोद्धुं शक्यं, प्रत्यक्षो ह्यात्मनः सोऽर्थः॥१॥ उपयोगद्वयपरिवृ-त्तिःसा निर्हेतुकस्वभावत्वात्। आत्मप्रत्यक्षो हि स्व-भावो व्यर्थात्रहेतूक्तिः॥ २ ॥ अवस्थितिकालश्च द्वयोर्वृद्धिहानिलक्षणयोर्यवमध्यवज्रमध्ययोरष्टौ समयास्तत ऊर्ध्वमवश्यं पातात्। अयं च वृद्धिहान्यवस्थितरूपपरिणामः केवलिनां निश्चयेन गम्यो न छद्मस्थानामिति। यद्यपि च प्रव्रज्याभिगमोत्तरकालं श्रुतसागरमवगाहमानः संवेगवैराग्यभावनाभावितान्तरात्मा कश्चित् प्रवर्द्धमानमेव परिणामं भजते। तथा चोक्तम्। "जह २ सुयमवगाहइ, अइसयरसपसरसंजुयमउव्वं। तह २ पल्हाइ मुणी, नवनवसंवेगसंघाते., तथापि स्तोक एव तादृक् बहवश्च परिपतन्त्यतोऽभिधीयते तामेवानुपालयेदिति। कथं पुनः कृत्वा श्रद्धामनुपालयेदित्यत आह( विजहेत्यादि ) विहाय परित्यज्य विस्रोतसिकां शङ्काम्। सा च द्विधा-सर्वशङ्का देशशङ्का च। तत्र सर्वशङ्का किमस्त्यार्हतो मार्गो न वेति। देशशङ्का तु किं विद्यन्तेऽप्कायादयो जीवा विशेष्यप्रवचनेऽभिहितत्वात् स्पष्टचेतनात्मलिङ्गाभावान्न विद्यन्ते इति चेत्येवमादिकामारेकां विहाय संपूर्णाननगारगुणान् पालयेत्। यदि वा विस्रोतांसि द्रव्यभावभेदाद् द्विधा। तत्र द्रव्यविस्रोतांसि नद्यादिस्रोतसां प्रतीपगमनानि भावविस्रोतांसि तु मोक्षं प्रति सम्यग्दर्शनादिस्रोतसा प्रस्थितानां विरूपाणि प्रतिकूलानि गमनानि भावविस्रोतांसि तानि विहाय संपूर्णानगारगुणभाग्भवति श्रद्धावाननुपालयेदिति। पाठान्तरं वा ("विजहित्ता पुव्वसंयोगं ) पूर्वसंयोगः मातापित्रादिरस्य चोपलक्षणार्थत्वात्पश्चात्संयोगोऽपि श्वशुरादिकृतो ग्राह्यस्तं विहाय परित्यक्त्वा श्रद्धामनुपालयेदिति मीदम्। तत्र यस्यायमुपदेशो दीयते। यथा विहाय विस्रोतांसि तदनु श्रद्धानुपालनं कार्यं स एवाभिधीयते न केवलं भवानेवापूर्वमिदमनुष्ठानमेवंविधं करिष्यति किं त्वन्यैरपि महासत्त्वैः कृतपूर्वमिति दर्शयितुमाह ( "पणया वीरा महावीहिं" ) प्रणता प्रह्वा वीराः परिषहोपसर्गकषायसेनाविजयात् वीथिः पन्थाः महांश्चासौ वीथिश्च महावीथिः सम्यग्दर्शनादिरूपो मोक्षमार्गो जिनेन्द्रचन्द्रादिभिः सत्पुरुषैः प्रहतस्तं प्रति प्रह्वा वीर्यवन्तः संयमानुष्ठानं कुर्वन्ति। ततश्चोत्तमपुरुषप्रहतोऽयं मार्ग इति प्रदर्श्य तज्जनितमार्गविश्रम्भो विनेयः संयमानुष्ठाने सुखेनैव प्रवर्तयिष्यते। उपदेशान्तरमाह ( लोगं चेत्यादि ) अथ वा यद्यपि भवतो मतिर्न क्रमतेऽप्कायजीवविषयेऽसंस्कृतत्वात्तथापि भगवदाज्ञेयमिति श्रद्धातव्यमित्याह- ( लोगं च आणाए अभिसमेच्चा अकुओ भयं इति ) अत्राधिकृतत्वादप्कायलोको लोकशब्देनाभिधीयते। तमप्कायलोकं चशब्दादन्यांश्च पदार्थानाज्ञया मौनीन्द्रवचनेनाभिमुख्येन सम्यग् ज्ञात्वा यथा अप्कायादयो जीवा इत्येवमवगम्य न विद्यते कुतश्चिद्धेतोः केनापि प्रकारेण जन्तूनां भयं यस्मात्सोऽयमकुतोभयः संयमस्तमनुपालयेदिति सम्बन्धः। यद्वाऽकुतोभयोऽप्कायलोको यतोऽसौ न कुतश्चिद् भयमिच्छति मरणभीरुत्वात् तमाज्ञयाऽभिसमेत्यानुपालयेत् रक्षेदित्यर्थः। अप्कायलोकमाज्ञयाऽभिसमेत्य यत्कर्तव्यं तदाह- ( सेवेमीत्यादि ) सोऽहं ब्रवीमि सेशब्दस्य युष्मदर्थत्वाद् वा ब्रवीमि। न स्वयमात्मना लोकोऽप्कायलोकोऽभ्याख्यातव्यः। अभ्याख्यानं नामासदभियोगः। यथा चौरं चौरमित्याह। इह तु जीवा न भवन्त्यापः केवलमुपकरणमात्रं घृततैलादिवत्। एषोऽसदभियोगः हस्त्यादीनामपि जीवानामुपकरणत्वात् स्याद्वारेका। नन्वेतदेवाभ्याख्यानं यदजीवानां जीवत्वापादनं नैतदस्ति प्रसाधितमपां प्राक् सचेतनत्वम्। यथा ह्यस्य शरीरस्याहंप्रत्ययादिभिर्हेतुभिरधिष्ठातात्मा व्यतिरिक्तः प्राक् प्रसाधित एवमप्कायोऽप्यव्यक्तचेतनया सचेतन इति प्राक् प्रसाधितः। न च प्रसाधितस्याभ्याख्यानं न्याय्यम्। अथापि स्यादात्मनोऽपि शरीराधिष्ठातुरभ्याख्यानं कर्त्तव्यं न च तत्क्रियमाणं घटामियर्तीति दर्शयति ( नेव अत्ताणं अब्भाइक्खेज्जा ) नात्मानं शरीराधिष्ठातारमहंप्रत्ययसिद्धं ज्ञानाभिन्नगुणं प्रत्यक्षं प्रत्याचक्षीत अपन्हुवीत ननु चैतदेव कथमवसीयते शरीराधिष्ठातात्मास्तीत्युच्यते। विस्मरणशीलो देवानांप्रिय उक्तमपि भाणयति। तथा ह्याहृतमिदं शरीरं केनचिदभिसंधिमता कफरुधिराङ्गोपाङ्गादिपरिणतेरन्नादिवत्तथोत्सृष्टमपि केनचिदभिसम्बन्धिमदेव आहृतत्वादन्नमलवदिति। तथा न ज्ञानोपलब्धिपूर्वकपरिस्पन्दो भ्रान्तिरूपः परिस्पन्दत्वात्त्वदीयवचनपरिस्पन्दवत्। तथा विद्यमानाधिष्ठातृव्यापारभाञ्जीन्द्रियाणीतिकरणत्वाद्दात्रादिवत्। एवं कुतर्कमार्गानुसारिहेतुमालोच्छेदः स्याद्वादपरशुना कार्यः अत एवंविधोपपत्तिसमधिगतमात्मानं शुभाशुभफलभाजं न प्रत्याचक्षीत। एवं च सति यो ह्यज्ञः कुतर्कमितरोपहतज्ञानचक्षुरप्कायलोकमभ्याख्याति प्रत्याचष्टे स सर्वप्रमाणसिद्धमात्मानमभ्याख्याति। यश्चात्मानमभ्याख्याति नास्म्यहं स सामर्थ्यादप्कायमभ्याख्याति। यतो ह्यात्मनि पाण्याद्यवयवोपेतशरीराधिष्ठायिनि प्रस्पष्टलिङ्गेऽभ्याख्याते सत्यव्यक्तचेतनालिङ्गोऽप्कायलोकस्तेन सुतरामभ्याख्यातः। एवमनेकदोषोपपत्तिं विदित्वा नायमप्कायलोकोऽभ्याख्यातव्यः इत्यालोच्य साधवो नाप्कायविषयमारम्भं कुर्वन्तीति। शाक्यादयस्त्वन्यथोपस्थिता इति दर्शयितुमाह (लज्जमाणेत्यादि) लज्जमानाः स्वकीयं प्रव्रज्याभासं कुर्वाणाः यदि वा सावद्यानुष्ठानेन लज्जमानाः लज्जां कुर्वाणाः पृथग्विभक्ताः शाक्योलूककणभुक्कपिलादिशिष्याः। पश्यति शिष्यचोदना अविवक्षितकर्मका अपि अकर्मका भवन्ति। यथा पश्य मृगो धावति द्वितीयार्थे वा प्रथमा तु व्यत्ययेन द्रष्टव्या। ततश्चायमर्थः। शाक्यादीन् गृहीतप्रव्रज्यानपि सावद्यानुष्ठानरतान् पृथग्विभिन्नान् पश्य किंस्तैरसदाचरितं येनैवं प्रदर्श्य इति दर्शयति। अनगारा वयमित्येके शाक्यादयः प्रवदन्तो यदिदं तदेतत्काका दर्शयति। विरूपरूपैरुत्सेचनाग्निविध्युपनादिशस्त्रैः स्वकायपरकायभेदभिन्नैरुदककर्म समारभन्ते। उदककर्म्म समारम्भेण च उदके शस्त्रं उदकमेव वा शस्त्रं समारभन्ते। तच्च समारभमाणोऽनेकरूपान्वनस्पतिद्वीन्द्रियादीन्विविधं हिनस्ति। तत्र खलु भगवता परिज्ञा प्रवेदिता यथाऽस्यैव जीवितव्यस्य परिवन्दनमाननपूजनार्थं जातिमरणमोचनार्थं दुःखप्रतिघातहेतुं यत् करोति तद्दर्शयति। स स्वयमेवोदकशस्त्रं समारभते, अन्यैश्चोदकशस्त्रं समारम्भयति, अन्यांश्चोदकशस्त्रं समारभमाणान् समनुजानीते। तच्चोदकसमारम्भणं तस्याहिताय भवति। तथा तदबोधिलाभाय भवति। स एतत्सम्बुध्यमान आदानीयं सम्यग्दर्शनादि सम्यगुत्थायाभ्युपगम्य श्रुत्वा भगवतोऽनगाराणां चान्तिके इहैकेषां साधूनां ज्ञातं भवति तद्दर्शयति। एषोऽप्कायसमारम्भो ग्रन्थः। एष खलु मोहः एष खलु मारः, एष खलु नरक इत्येवमर्थं गृद्धो लोको यदिदं विरूपरूपैः शस्त्रैः उदककर्मसमारम्भेणोदकशस्त्रं समारभमाणोऽन्यानेनेकरूपान् प्राणिनो विविधं हिनस्तीत्येतत्प्राग्वद् व्याख्येयम्॥

उदकशस्त्रं च समारभमाणोऽन्यानप्यनेकरूपान् जन्तून् विविधं हिनस्तीति तत्कथमेतच्छक्यमभ्युपगन्तुमित्यत आह

सेबेमि संति पाणा उदयनिस्सिया जीवा अणेगे इह च खलु भो अणगाराणं उदयजीवा वियाहिया सत्थं चेत्थं अणुवीइ पासा पुढो सत्थं पवेइयं ॥

सेशब्द आत्मनिर्देशे सोऽहमेवमुपलब्धानिकाप्कायतत्त्ववृत्तान्तो ब्रवीमि (उदगणिस्सियाइति) सन्ति विद्यन्ते प्राणिन उदकनिश्रिताः पूतरकमत्स्यादयो यानुदकारम्भप्रवृत्तो हन्यादिति। अथवा परः सम्बन्धः प्रागुक्तमुदकशस्त्रं समारभमाणोऽन्यानप्यनेकरूपान् जन्तून् विविधं हिनस्तीति तत्कथमेतच्छक्यमभ्युपगन्तुमित्यत आह संतिपाणा इत्यादिपूर्ववत् कियन्तः पुनस्त इति दर्शयति। (जीवा अणेगा इति) पुनर्जीवोपादानमुदकाश्रितप्रभूतजीवभेदज्ञापनार्थम्। ततश्चेदमुक्तं भवत्येकैकस्मिन् जीवभेदे उदकाश्रिता अनेकेऽसंख्येयाः प्राणिनो भवन्ति एवं वा विषयारम्भभाजः पुरुषास्ते तन्निश्रितप्रभूतसत्त्वव्यापत्तिकारिणो द्रष्टव्याः। शाक्यादयस्तूदकाश्रितानेव द्वीन्द्रियादीन् जीवानिच्छन्ति नोदकमित्येतदेव दर्शयति खलु शब्दोऽवधारणे इहैव ज्ञातपुत्रीयप्रवचने द्वादशाङ्गगणिपिटके ऽनगाराणां साधूनामुदकजीवाश्चशब्दात्तदाश्रिताश्च पूतरकच्छेदनकलोड्डणकभ्रमरकमत्स्यादयो जीवा व्याख्याताः अवधारणफलं च नान्येषामुदकरूपा जीवाः प्रतिपादिताः ॥

(ये पुनः शाक्यादयोऽप्कायोपभोगप्रवृत्तास्ते नियमत एवाप्कायं विहिंसन्ति तदाश्रितांश्चान्यानिति। तत्र न केवलं प्राणातिपातापत्तिरेव तेषां किमन्यदित्यत आह।

अदुवा विभूसाए पुढोसत्थेहिं विउट्टंति। एत्थ वि तेसिं णो णिकरणाए एत्थ सत्थं समारंभमाणस्स इच्चेए आरंभा परिण्णाया भवंति। एत्थ सत्थं असमारंभमाणस्स इच्चेते आरंभा परिण्णाया भवंति। तं परिण्णाय मेहावी णेव सयं उदयसत्थं समारंभेज्जा, णेवण्णेहिं उदयसत्थं समारंभावेज्जा, उदयसत्थं समारंभंतं वि अण्णे ण समणुजाणेज्जा जस्सेते उदयसत्थसमारंभा परिण्णाया भवंति। से हु मुणी परिण्णातकम्मेत्ति बेमि ॥

अथवेति पक्षान्तरोपन्यासद्वारेणाभ्युच्चयोपदर्शनार्थः अशस्त्रोपहताप्कायोपभोगकारिणां न केवलं प्राणातिपातोऽपि त्वदत्तादानमपि तत्तथाम्। यतो येरप्कायजन्तुभिर्यानि शरीराणि निर्वर्त्तितानि तैरदत्तानि, ते तान्युपभुञ्जन्ते यथा कश्चित् पुमान् सचित्तशाक्यभिक्षुकशरीरकात् खण्डमुत्कृत्य गृह्णीयाददत्तं हि तस्य तत्परपरिगृहीतत्वात्। परकीयगवाद्यादानवत्। एवं तानि शरीराण्यजीवगृहीतानि गृह्णतोऽदत्तादानमवश्यम्भावि। स्वाम्यनुज्ञातं सत्त्वास्त्ययमिति। ततश्च नादत्तादानं स्वामिनाऽनुज्ञातत्वात् परानुज्ञातपश्वादिघातवत्। न चैतदपि साध्ववस्थामवोपन्यस्तं, यतः पशुरपि शरीरप्रदानविमुख एव भिन्नार्यमर्यादैरुच्चैरारटन्विशस्यते ततश्च कथमिव नादत्तादानं स्यात्। न चान्यदीयमन्यान्यः स्वामी दृष्टः परमार्थचिन्तायाम्। नन्वेवमशेषलोकप्रसिद्धगोदानादिव्यवहारस्त्रुट्यति त्रुट्यतु नामैवंविधापायसम्बन्धः नहि देयम् यद्धि दुःखितं स्वयं न भवति दासीबलीवर्दादिवत्। न चान्येषां दुःखोत्पत्तेः कारणं हलखड्गादिवत्। एतद्व्यतिरिक्तं दातृपरिगृहीत्रोरेकान्तत एवोपकारकं देयं प्रतिजानते जिनेन्द्रमतावलम्बिनः। उक्तञ्च–"यत् स्वयं न दुःखितं स्यान्न च परदुःखनिमित्तभूतमपि। केवलमुपग्रहकरं, धर्मकृते तद्भवेद्देय" मिति। तस्मादवस्थितमेतत्तेषां तददत्तादानमपीति। सांप्रतमेतद्दोषद्वयं स्वसिद्धान्ताभ्युपगमद्वारेण परः परिजिहीर्षुराह "कप्पइ णो कप्पइ णो पाउं अदुवा विभूसाए" अशस्त्रोपहतोदकारम्भिणो हि चोदिताः सन्त एवमाहुर्यथा नैतत्स्वमनीषिकातः समारम्भयामो वयं किंत्वागमे निर्जीवत्वेनानिषिद्धत्वात् कल्पते युज्यते नोऽस्माकं पातुमभ्यवहर्तुमिति वीप्सया च नानाविधप्रयोजनविषयोपभोग इहानुज्ञातो भवति। तथा ह्याजीविकभस्मस्नाय्यादयो वदन्ति। पातुमस्माकं कल्पते न स्नातुं वारिणा, शाक्यपरिव्राजकादयस्तु स्नानपानावगाहनादि सर्वं कल्पते इति प्रभाषन्ते, एतदेव स्वनामग्राहं दर्शयति। अथवोदकं विभूषार्थमनुज्ञातं न समये। विभूषा करचरणपायूपस्थमुखप्रक्षालनादिका वस्त्रभण्डकादिप्रक्षालनात्मिका वा एवं स्नानादिशौचानुष्ठायिनां नास्ति कश्चिद्दोष इति। एवं ते परिफल्गुवचसः परिव्राजकादयो निजराद्धान्तोपन्यासेन मुग्धमतीन्विमोह्य किं कुर्वन्तीत्याह "पुढोसत्थेहिं विउट्टंति" पृथग् विभिन्नलक्षणैर्नानारूपैरुत्सेचनादिशस्त्रैस्तेऽनगारायमाणाः (विउट्टंतित्ति) अप्कायजीवान् जीवनाद् व्यावर्त्तयन्ति व्यपरोपयन्तीत्यर्थः। यदि वा पृथग् विभिन्नैः शस्त्रैरप्कायिकान् विविधं कुट्टन्ति, छिन्दन्तीत्यर्थः कुट्टधातोः छेदनार्थत्वात् अधुनैषामागमानुसारिणामागमासारत्वप्रतिपादनायाह-(एत्थ वि तेसिं नो निकरणाए) एतस्मिन्नपि प्रस्तुते स्वागमानुसारेणाभ्युपगमे सति (कप्पइ णो कप्पइ णो पाउं अदुवा विभूसाएत्ति) एवंरूपस्तेषामयमागमो यद्बलादप्कायपरिभोगे ते प्रवृत्ताः स स्याद्वादयुक्तिभिरभ्याहतः सन् (नोनिकरणाएत्ति) नो निश्चयं कर्तुं समर्थो भवति न केवलं तेषां युक्तयो न निश्चयायालमपि त्वागमोऽपीत्यपिशब्दः। कथं पुनस्तेषामागमो निश्चयाय नालमित्यत्रोच्यते। त एवं प्रष्टव्याः कोऽयमागमो यदादेशः कल्पते भवतामप्कायारम्भस्तमाहुः प्रतिविशिष्टानुपूर्वीविन्यस्तवर्णपदवाक्यसंघात आप्तप्रणीत आगमः नित्योऽकर्तृको वा। ततश्चैवमभ्युपगते यो येन प्रतिपन्न आप्तः स निराकर्त्तव्यः। अनाप्तोऽसावप्कायजीवापरिज्ञानात्तद्वधानुज्ञानाद्वा भवानिव। जीवत्वं चापां प्राक् प्रसाधितमेव। ततस्तत्प्रणीतागमोऽपि सद्धर्मचोदनायामप्रमाणमनाप्तप्रणीतत्वाद्रथ्यापुरुषवाक्यवत्। अथ नित्योऽकर्तृकः समयोऽभ्युपगम्यते ततो नित्यत्वं दुष्प्रतिपादम्। यतः शाक्यानेव कुम्भवदभ्युपगतः समयः सकर्तृको वर्णपदवाक्यात्मकत्वात् विधिप्रतिषेधात्मकत्वात् उभयसम्मतसकर्तृकग्रन्थसन्दर्भवदिति। अभ्युपगम्य वा ब्रूमः अप्रमाणमसौ नित्यत्वादाकाशवत् यच्च प्रमाणं तदनित्यं दृष्टं प्रत्यक्षादिवदिति। तथा विभूषासूत्रावयवेऽ पृष्टा न प्रत्युत्तरदाने क्षमाः। यतियोग्यं स्नानं न भवति कामाङ्गत्वात् मण्डनवत्। कामाङ्गता च सर्वजनप्रसिद्धा। तथाचोक्तं "स्नानं मददर्पकरं कामाङ्गं प्रथमं स्मृतम्। तस्मात्कामं परित्यज्य नैव स्नान्ति दमे रताः। शौचार्थोऽपि न पुष्कलो वारिणा बाह्यमलापनयनमात्रत्वात् ह्यन्तर्व्यवस्थितकर्ममलक्षालनसमर्थं वारि न दृष्टं तस्माच्छरीरवाङ्मनसामकुशलप्रवृत्तिनिरोधभावशौचमेव कर्मक्षयायालम्। तच्च वारिसाध्यं न भवति कुतोऽन्वयव्यतिरेकसमधिगम्यत्वात्सर्वभावानाम्। न हि मत्स्यादयः तत्र स्थिता मत्स्यत्वादि कर्मक्षयभाजः केनाप्यभ्युपगम्यन्ते, विना च वारिणा महर्षयो विचित्रतपोभिः कर्म क्षपयन्तीत्यतः स्थितमेतत्तत्समयो नो निश्चयाय प्रभवतीति। तदेवं निःसम्पन्नमपां जीवत्वं प्रतिपाद्य तत्प्रवृत्तिनिवृत्तिविकल्पफलप्रदर्शनद्वारेणोपसंजिहीर्षुः सकलमुद्देशार्थमाह। एत्थ सत्थमित्यादि यावत् (सेहुमुणी परिण्णाय कम्मेत्ति बेमि) एतस्मि-

प्काये शस्त्रं द्रव्यभावरूपं समारभमाणस्यैते समारम्भा बन्धकारणत्वेनापरिज्ञाता भवन्ति । अत्रैवाप्काये शस्त्रमसमारभमाणस्येत्येते आरम्भा ज्ञपरिज्ञया परिज्ञाता भवन्ति । प्रत्याख्यानपरिज्ञया च परिहृता भवन्ति । तामेव प्रत्याख्यानपरिज्ञां विशेषतो ज्ञपरिज्ञापूर्विकां दर्शयति । तदुदकारम्भणं बन्धायेत्येवं परिज्ञाय मेधावी मर्यादाव्यवस्थितो नैव स्वयमुदकशस्त्रं समारभेत नैवान्यैरुदकशस्त्रं समारम्भयेत । नैवान्यानुदकशस्त्रं समारभमाणाननुजानीयात् । यस्यैते उदकशस्त्रसमारम्भा द्विधा परिज्ञाता भवन्ति स एव मुनिः परिज्ञातकर्मा भवति । आचा०१ श्रु० १ अ० ३ उ०॥

( १० ) अप्कायविहिंसननिषेधो यथा ॥

आउकायं विहिंसंति, मणसा वयसा कायसा ।
तिविहेण करणजोएण, संजया सुसमाहिया ॥ ३० ॥
आउकायं विहिंसंतो, हिंसई ओ तयस्सिए ।
तसे अ विविहपाणे, चक्खुसे य अचक्खुसे ॥ ३१ ॥
तम्हा एयं वियाणित्ता, दोसं दुग्गइवड्ढणं ।
आउकायसमारम्भं, जाव जीवाइ वज्जए ॥ ३२ ॥ दश० ६ अ० ।

( ११ ) अप्कायस्पर्शादिनिषेधो यथा ॥

से भिक्खू वा से भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा से उदगं वा ओसं वा हिमं वा महियं वा करगं वा हरितणुगं वा सुद्धोदगं वा उदउल्लं वा कायं उदउल्लं वा वत्थं ससणिद्धं वा कायं ससणिद्धं वा वत्थं न आमुसेज्जा न संफुसेज्जा न विलेज्जा न पविलेज्जा न अक्खोडेज्जा न पक्खोडेज्जा न आयाविज्जा न पयाविज्जा अन्नं न आमुसावेज्जा न संफुसावेज्जा न विलावेज्जा न पविलावेज्जा न अक्खोडावेज्जा न पक्खोडावेज्जा न आयावेज्जा न पयावेज्जा अन्नं आमुसंतं वा संफुसंतं वा आविलंतं वा पविलंतं वा अक्खोडंतं वा पक्खोडंतं वा आयावंतं वा पयावंतं वा न समणुजाणेज्जा जाव जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि । तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ॥

सेभिक्खू वा इत्यादि जावजागरमाणे वत्ति, पूर्ववदेव ( से उदगं चेत्यादि ) तद्यथा उदकं वा अवश्यायं वा हिमं वा महिकां वा करकं वा हरतनुं वा शुद्धोदकं वा । ( उदकादिपदानां व्याख्या तत्तच्छब्दे ) तथा उदकार्द्रं वा कायं उदकार्द्रं वा वस्त्रं उदकार्द्रता चेह गलद्बिन्दुतुषारानन्तरोदितोदकसम्मिश्रिता । तथा सस्निग्धं वा कायं सस्निग्धं वस्त्रम् अत्र स्नेहनं स्निग्धमिति भावे निष्ठा प्रत्ययः स्निग्धेन सह वर्त्तते इति सस्निग्धं सस्निग्धता चेह बिन्दुरहितानन्तरोदितोदकभेदसम्मिश्रिता । दश० ४ अ० ॥

( १२ ) शीतोदकादिपरिसेवणनिषेधो यथा ॥

सीओदकं न सेविज्जा, सिलावुट्ठं हिमाणि य ।
उसिणोदगं तत्तफासुयं, पडिगाहिज्ज संजए ॥ ६ ॥

शीतोदकं पृथिव्युद्भवसचित्तोदकं न सेवेत । तथा शिलावृष्टं हिमानि च न सेवेत । तत्र शिलाग्रहणेन करकाः परिगृह्यन्ते । वृष्टं वर्षणं, हिमं प्रतीतं, प्राय उत्तरापथे भवति । यद्येवं कथमयं वर्त्ततेत्याह-उष्णोदकं क्वथितोदकं तप्तप्राशुकं तप्तं सत्प्राशुकं त्रिदण्डोद्वृत्तं नोष्णोदकमात्रं प्रतिगृह्णीयाद्वृत्त्यर्थं संयतः साधुः । एतच्च सौवीराद्युपलक्षणमिति सूत्रार्थः । तथा ॥

उदउल्लं अप्पणो कायं, नेव पुंछे न संलिहे ।
समुप्पेह तहाभूयं, नो णं संघट्टए मुणी ॥ ७ ॥

नदीमुत्तीर्णो भिक्षां प्रविष्टो वा वृष्टिहतः उदकार्द्रमुदकबिन्दुचितमात्मनः कायं शरीरं स्निग्धं वा नैव पुञ्छयेत वस्त्रतृणादिभिर्न संलिखेत पाणिना, अपि तु संप्रेक्ष्य निरीक्ष्य तथाभूतमुदकार्द्रादिरूपं नैनं कायं संघट्टयेत मुनिर्मनागपि न स्पृशेदिति सूत्रार्थः । दश० ८ अ० ( उदकतीरे निवासादिनिषेध उदगतीरशब्दे ) ( अप्कायस्य बहुवक्तव्यता पानकशब्देऽपि ) ( अप्कायस्य दर्पिका कल्पिका च पडिसेवणाशब्दे ) ( वस्त्रधावनेऽप्कायप्रतिसेवनाया वक्तव्यता धोवणशब्दे ) ( उदकसन्तरणेऽप्कायप्रतिसेवनाया वक्तव्यता उदगसंथरणशब्दे )

**आउक्कायविहिंसग**–अप्कायविहिंसक– त्रि० सचित्तजलविराधके, ॥ ग० १ अधि० ॥

**आउकाल**–आयुष्काल–पुं० मृत्युकाले, आचा० १ श्रु० ८ अ० ८ उ०॥

**आउक्खय**–आयुःक्षय– पुं० आयुष्कर्मपुद्गलनिर्जरणे, स्था० ८ ठा० ॥ आयुर्दलिकनिर्जरणे, नि० । कर्मद्रव्यनिर्जरणे, विपा० ॥ कर्मणो दलिकनिर्जरे, औ० । भ० । ( आयुःक्षयनिमित्तान्यध्यवसायादीनि आउ शब्दे )

क्षीणमायुर्जिनेन्द्रैरपि न वर्द्धयितुं शक्यम्, तथा चाह–
शक्रेण स्वामी विज्ञप्तो, यत् क्षणमायुर्वर्द्धयत येन भवत्सु जीवत्सु भवज्जन्मनक्षत्रं संक्रान्तो भस्मराशिग्रहो भवच्छासनं पीडयितुं न शक्नोति ततोऽवश्यं प्रभुणोक्तम् न खलु शक्र ! कदाचिदपीदं भूतपूर्वं यत् क्षीणमायुर्जिनेन्द्रैरपि वर्द्धयितुं शक्यते इति । कल्प० ॥

आयुषःक्षये चावश्यं जीवितनाशः तथा च सूत्रकृताङ्गे–

तालं जह बंधणच्चुए, एवं आउक्खयम्मि तुट्टती ।

यथा तालफलं बन्धनात् वृन्तात् च्युतमत्राणमवश्यं पतति एवमसावपि स्वायुषःक्षये त्रुट्यति जीवितात् च्यवत इति सूत्र० २ अ० ।

डहरा बुड्ढा य पासह, गब्भत्था वि चियंति माणवा ।
सेणे जह वट्टयं हरे, एवमाउक्खयम्मि तुट्टती ॥

डहरा, बाला एव केचन जीवितं त्यजन्ति । तथा वृद्धाश्च गर्भस्था अप्येतत्पश्यत यूयं के ते मानवा मनुष्यास्तेषामेवोपदेशदानार्हत्वात् मानवग्रहणम् । बह्वपायत्वादायुषः सर्वास्वप्यवस्थासु प्राणी प्राणांस्त्यजतीत्युक्तं भवति । तथाहि–त्रिपल्योपमायुष्कस्यापि पर्याप्त्यनन्तरमन्तर्मुहूर्तेनैव कस्यचिन्मृत्युरुपतिष्ठतीति । अपिच–गर्भस्थं जायमानमित्यादि । अत्रैव दृष्टान्तमाह । यथा श्येनः पक्षिविशेषो वर्त्तकं तित्तिरजातीयं हरेत् व्यापादयेदेवं प्राणिनः प्राणान् मृत्युरुपहरेत् उपक्रमकारणमायुष्कमुपक्रमेत । तदभावे वा आयुष्यक्षये त्रुट्यति व्यवच्छिद्यते जीवानां जीवितमिति शेषः ॥ २ ॥ सूत्र० १ श्रु० २ अ० ॥

आयुषः क्षयमजानन्त आरम्भे प्रवर्त्तन्ते ॥

आउक्खयं चेव अबुज्झमाणे, ममाति से साहसकारि मंदे ।
अहो य राओ परितप्पमाणे, अट्टेसु मूढे अजरामरेव्व ॥

आयुषो जीवनलक्षणस्य क्षय आयुष्कक्षयस्तमारम्भप्रवृत्तश्छिन्दद्भिन्दन्मत्स्यवदुदकक्षये सत्यनवबुध्यमानोऽस्तीव मम इति ममत्ववानिदं मे अहमस्य स्वामीत्येवं स मन्दोऽज्ञः साहसं कर्तुं शी-

लमस्येति साहसकारीति तद्यथा । कश्चिद्वणिङ् महाक्लेशेन महार्घाणि रत्नानि समासाद्योज्जयिन्या बहिरावासितः । स च राजचौरदायादभयाद्रात्रौ रत्नान्येवमेवं च प्रवेशयिष्यामीत्येवं पर्यालोचनाकुलो रजनीक्षयं न ज्ञातवान् अहन्येव रत्नानि प्रवेशयन् राजपुरुषै रत्नेभ्यश्च्यावित इति । एवमन्योऽपि किंकर्तव्यताकुलः स्वायुषः क्षयमबुध्यमानः परिग्रहेष्वारम्भेषु च प्रवर्तमानः साहसकारी स्यादिति । तथा कामभोगतृषितोऽहि रात्रौ च परि समन्तात् द्रव्यार्थी परितप्यमानोऽम्मणवणिग्वदार्तध्यायी कायेनापि क्लिश्यते । तथा चोक्तम्-अजरामरवद्बालः क्लिश्यते धनकाम्यया । शाश्वतं जीवितं चैव, मन्यमानो धनानि च ॥ १ ॥ तदेवमार्तध्यानोपहतः "कइया वच्चइ सत्थो, किं भंडं कत्थ कित्तिया भूमी" त्यादि । तथा-उक्खणइ खणइ णिहणइ, रत्तिं न सुयइ दिया वि य ससंको" इत्यादि । चित्तसंक्लेशात्सुष्ठु मूढो अजरामरवदात्मानं मन्यमानोऽपगतशुभाध्यवसायोऽहर्निशमारम्भे प्रवर्तत इति । सूत्र० १ श्रु० १० अ० ।

अहर्निशमायुषः क्षयमवबुध्य धर्मे यतितव्यम्

पिच्छह आउस्स खयं, अहोनिसं झिज्जमाणस्स १८

राइंदिएण तीसं तु, मुहुत्ता नवसयाइ मासेणं ।
हायंति पमत्ताणं, नयणं अबुहा वियाणंति ॥ १९ ॥
तिन्नि सहस्से सगले, छच्च सए उडुवरो हरइ आउं ।
हेमंते गिम्हासु य, वासासु य होइ नायव्वं ॥ २० ॥
वाससयं परमाउं, इत्तो पन्नास हरइ निद्दाए ।
इत्तो विसइ हायइ, बालत्ते वुड्ढभावे य ॥ २१ ॥
सीउण्हपंथगमणे, खुहापिवासाभयं च सोगे य ।
नाणाविहा य रोगा, हवंति तीसाइ पच्छद्धे ॥ २२ ॥
एवं पंचासीई, नट्ठा पण्णरसमेव जीवंति ।
जे हुंति वाससइया, न य सुलहा वाससयजीवी ॥ २३ ॥
एवं निस्सारे मा-णुसत्तणे जीविए अहिवडंते ।
न करेह चरणधम्मं, पच्छा पच्छाणुतप्पिह हा हा ॥ २४ ॥

( पिच्छहत्ति- ) भो भव्याः ! यूयं पश्यत ज्ञानचक्षुषा विलोकयत आयुषः क्षयमहोरात्रं क्षीयमाणस्य समये २ आवीचीमरणेन त्रुट्यमानस्येति १८ (राइंति) अहोरात्रेण त्रिंशन्मुहूर्त्ता भवन्ति मासेन नव शतानि मुहूर्त्तानि तानि प्रमत्तानां मद्यादिप्रमादयुक्तानां सुभूमब्रह्मदत्तादीनामिव हीयन्ते न चाबुधा मूर्खा विजानन्तीति ॥ १९ ॥ (तिन्नित्ति ) त्रीणि सहस्राणि षट्शताधिकानि सकलानि संपूर्णानि मुहूर्त्तानि हेमन्ते शीतकाले भवन्ति।एतत्प्रमाणमायुर्जीवानां हेमन्ते उडुवरः सूर्यो हरति एवं ग्रीष्मे वर्षासु च ज्ञातव्यं भवति ॥२०॥(वासत्ति,) सांप्रतं जीवानां परमायुरुत्कृष्टजीवितवर्षशतं प्रवाहेण ज्ञातव्यम् । इतो वर्षशतात् निद्रया पञ्चाशद्वर्षाणि हरति गमयति जीवः इतः शेषपञ्चाशद्वर्षतः विंशतिवर्षाणि हीयन्ते यान्ति प्रमादिनाम् कथं बालत्वे दशकं वृद्धत्वे दशकं चेति ॥ २१ ॥ (सिउत्ति) शीतोष्णपथगमनानि तथा क्षुधा पिपासा भयं च शोकश्च नानाविधा रोगाश्च भवन्ति । त्रिंशतः पश्चार्द्धं त्रिंशत्पश्चार्द्धं पञ्चदशवर्षरूपं तस्मिन् को भावः शेषत्रिंशतः पञ्चदश वर्षाणि जीवानां शीतोष्णपथगमनादिभिर्मुधा यान्तीति ॥ २२ ॥ एवं पूर्वोक्तप्रकारेण पञ्चाशीतिवर्षाणि नष्टानि, धर्मं विना विकथानिद्राद्यस्यवतां मुधा गतानि कथं ? निद्रया पञ्चाशद्वर्षाणि (५०) बालत्वे दश (१०) वृद्धभावे दश (१०) शीतादिभिः पञ्चदश (१५) एवं सर्वाणि पञ्चाशीति वर्षाणि (८५) इति ये जीवा वर्षशतिकाः वर्षशतप्रमाणा भवन्ति ते जीवा पञ्चदश वर्षाणि जीवन्ति अन्यानि मृतप्रायत्वात् । न च वर्षशतजीविनो जीवाः प्राप्यन्ते । किन्तु ताः सुखेनानायासेन लभ्यन्ते इति सुलभाः सर्वथा सुखिन इत्यर्थः । उक्तं च-"आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतं, तस्यार्द्धस्थ परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः । शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते,जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ २३ ॥ एवमुक्तप्रकारेण निस्सारे असारे मानुषत्वे मनुजत्वे तथा जीविते आयुषि रत्नकोटिकोटिभिरपि अप्राप्ये अधिपतति समये २ क्षयं गच्छति सतीत्यर्थः न कुरुत यूयं चरणधर्मं ज्ञानदर्शनपूर्वकं देशसर्वचारित्रं हा इति महत् खेदे ॥ पश्चादायुः क्षयानन्तरं आयुःक्षयचरमक्षणे वा पश्चात्तापं कायवाङ्मनोभिर्महाखेदं करिष्यथ नरकस्थशशिराजवदिति ॥२४॥ तं०॥ "समस्तसत्वसंघानां क्षयत्यायुरनुक्षणम् । आममल्लकवारीव, किं तथापि प्रमाद्यसि ॥१॥ पंचा० १ विव० ॥ मरणे, प्रश्न० १ द्वा० ॥ उत्त० ॥

**आउक्खेम**--आयुःक्षेम-न० आयुषः क्षेममिति-आयुषः सम्यक् पालने, जीविते च ॥

जं किंचि वुक्कमं जाणे, आउक्खेमस्स मप्पणो ।
तस्सेव अंतरद्धाए, खिप्पं सिक्खेज्ज पंडिए ॥

एतदुक्तं भवति आत्मायुषो यत्क्षेमं प्रतिपालनोपायं जानीत तं क्षिप्रमेव शिक्षेत् व्यापारयेत । यद्वा आत्मनः आयुः क्षेमस्य जीवितस्येति । आचा० १ श्रु० ८ अ० ८ उ० ।

**आउजीव**--अब्जीव-पुं०-आप एव जीवः । स्थावरजीवविशेषे, अवाश्रितो वा जीवः । उदकाश्रिते जीवे च । सूत्र०१श्रु० ११अ०।

तद्भेदा यथा—

दुविहा आउजीवाओ, सुहुमा बायरा तहा ।
पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ ८४ ॥
बायरा जे उ पज्जत्ता, पंचहा ते पकित्तिया ।
सुद्धोदए य उस्से य, हरितणु महिया हिमे ॥ ८५ ॥
एगविहमनाणत्ता, सुहुमा तत्थ वियाहिया ।
सुहुमा सव्वलोयम्मि, लोगदेसे य बायरा ॥ ८६ ॥

तिसृणां गाथानामर्थः अब्जीवास्तु द्विविधा । सूक्ष्मास्तथा बादरा अपि । पर्याप्ता अपर्याप्ताश्च द्विविधा पुनर्वर्त्तन्ते इति शेषः ॥ ८४ ॥ अथ पुनर्बादरा ये पर्याप्ता अब्जीवास्ते पञ्चधा प्रकीर्त्तिताः । तत्र सूक्ष्मा अप्कायजीवा एकविधा अनानात्वात्तीर्थकरैर्व्याख्याताः । तत्र सूक्ष्मा अप्कायजीवाः सर्वस्मिन् चतुर्दशरज्ज्वात्मके लोके वर्त्तन्ते बादरा अप्कायजीवा लोकस्यैकदेशे वर्त्तन्ते ॥ ८७ ॥

संतइं पप्पणाईया, अपज्जवसिया वि य ।
ठिइं पडुच्च साईया, सपज्जवसिया वि य ॥ ८८ ॥

सन्ततिं प्रवाहमार्गमाश्रित्य अप्कायजीवा अनादिकाः पुनरपर्यवसिता अपि स्थितिं भवस्थितिं कायस्थितिं चाश्रित्य सादिकास्तथा सपर्यवसिताः अवसानसहिता अपि वर्त्तन्ते ॥ ८८ ॥

सत्तेव सहस्साइं, वासाणुक्कोसिया भवे ।
आउठिई आऊणं, अंतोमुहुत्तं जहन्नियं ॥ ८९ ॥

अपामप्कायजीवानां सप्तैव सहस्राणि वर्षाण्युत्कृष्टा आयुषः स्थितिर्भवेत् जघन्यतः अन्तर्मुहूर्त्तं भवेत् ॥ ८९ ॥

असंखकालमुक्कोसं, अंतोमुहुत्तं जहन्निया ।
कायठिई आऊणं, तं कायं तु अमुंचओ ॥ ९० ॥

अपामप्कायिजीवानां तं स्वकायमर्थात् अप्कायममुञ्चतामुत्कृष्टा कायस्थितिः असंख्यकालं भवति जघन्या कायस्थितिरन्तर्मुहूर्त्तं भवति ॥ ९० ॥

अणंतकालमुक्कोसं, अंतो मुहुत्तं जहन्नयं ।
विजढम्मि सए काए, आउजीवाण अंतरं ॥ ९१ ॥

अब्जीवानां स्वकीये काये त्यक्ते सति अपरस्मिन् काये उत्पद्य पुनः स्वकीये काये उत्पत्तिः स्यात्तदा उत्कृष्टमन्तरमनन्तकालं भवति । जघन्यकमन्तरमन्तर्मुहूर्त्तं भवति । वनस्पतिकाये जीवो ऽनन्तकालं तिष्ठति तदा अनन्तकालमन्तरं भवति इति भावः ॥९२॥

एएसिं वन्नओ चेव, गंधओ रसफासओ ।
संठाणादेसओ वा वि, विहाणाइं सहस्ससो ॥ ९२ ॥

एतेषामाप्कायजीवानां वर्णतो गन्धतः रसतः स्पर्शतः संस्थानादेशतश्चापि संस्थाननामतश्चापि सहस्रशो बहवो भेदा भवन्ति ॥ ९२ ॥ उत्त० ३६अ०॥ अब्जीवानाञ्च प्रत्येकशरीरित्वा । "पुढो सत्ता आउजीवा" प्रत्येकशरीरत्वात्पृथक् प्रत्येकं सत्वाः प्रत्येकशरीरिणोऽवगन्तव्या इति । सूत्र० १ श्रु० ११ अ० ।

आउज्ज–आतोद्य–न०आ०समन्तात् तुद्यते।आ०तुद०एयत्।वीणादिवाद्ये, आचा० १ श्रु० १ अ० ५ उ० । स्था० । अनु० । आव० । जीवा० । तच्च द्विविधम्–ततविततं अपि द्विविध–घनशुषिरभेदात् इति। स्था० । बृहत्कल्पे तु चतुर्विधम् ततविततघनशुषिरभेदात्।बृ० १ उ० । स्थानाङ्गटीकायामपि चतुः स्थानके पुनरिदमेव भणिष्यते। ततं वीणादिकं ज्ञेयं, विततं पटहादिकम् । घनं तु कांस्यतालादि वंशादिशुषिरम्मतमिति ॥ १ ॥ विवक्षाप्राधान्याच्च न विरोधो मन्तव्य इति॥स्था०२ ठा० ।आचा०॥

राजप्रश्नीयेऽस्यैकोनपञ्चाशद्भेदाः प्रदर्शितास्तद्यथा ।

तएणं से सूरियाभे देवे अट्ठसयं संखाणं विउव्वति । अट्ठसयं संगाणं विउव्वइ। अट्ठसयं संखियाणं विउव्वइ । अट्ठसयं खरमुहीणं विउव्वइ । अट्ठसयं पेयाणं विउव्वइ । अट्ठसयं पिरिपिरियाणं विउव्वति । एवमाहियाणं एगोणवणं आउज्ज विहाणाइं विउव्वति ।

आदिशब्देन तट्टीकायाम् । पणव ६ पटह ७ भम्भा ८ होरम्भा ९ भेरी १० झल्लरी ११ दुन्दुभी १२ मुरुज १३ मृदङ्ग १४ नन्दीमृदङ्ग १५ आलिङ्ग १६ कुस्तुम्ब १७ गोमुखी १८ मर्द्दल १९ विपञ्ची २० वल्लकी २१ भ्रमरी २२ भ्रामरी २३ परिवादिनी २४ बर्चसा २५ सुघोषा २६ नन्दीघोषा २७ महती २८ कच्छपी २९ चित्रवीणा ३० आमोद ३१ झञ्झा ३२ नकुल ३३ तूणा ३४ तुम्बवीणा ३५ मुकुन्द ३६ हुडुक ३७ विचिकी ३८ करटी ३९ डिण्डिम ४० किणित ४१ कडम्बा ४२ दर्दरक ४३ दर्दरिका ४४ कुस्तुम्बर ४५ कलशिका ४६ तल ४७ ताल ४८ कांस्यताल ४९ रिंगिसिका ५० मङ्गरिका ५१ शुशुमारिका ५२ वंश ५३ वाली ५४ वेणु ५५ परिली ५६ बद्धकाः ५७ प्रदर्शिताः । अव्याख्यातास्तु भेदाः लोकतः प्रतीतव्याः एवमादीनि बहून्यातोद्यानि विकुर्वन्ति । सर्वसंख्यया तु मूलभेदापेक्षया ऽऽतोद्यभेदा एकोनपञ्चाशत् । शेषास्तु भेदास्तेष्वेवान्तर्भवन्ति यथा वंशातोद्यविधाने वालीवेणुपिरिलीबद्धका इति ॥ राज० ॥

आवज्ज–पुं० आवर्जनमावर्जः । अभिमुखीकरणे, आवर्ज्यतेऽभिमुखीक्रियते मोक्षोऽनेनेति–शुभमनोवाक्कायव्यापारविशेषे च । उक्तञ्च–" आवज्जणमुवओगो वावारो वा " इति आवर्ज्यतेऽभिमुखीक्रियत, इति घञ् । अभिमुखी कर्त्तव्ये, त्रि० । प्रज्ञा० ३६ पद ॥

आवर्ज्य–त्रि० । आवर्ज्यत इति ण्यत् अभिमुखीकर्त्तव्ये, ॥ आ० म० द्वि० ॥

आउज्जण–आवर्जन–न० अभिमुखीकरणे, शुभमनोवाक्कायव्यापारे च । प्रज्ञा० ३६ पद । विशे० ॥

आउज्जसद्द–आतोद्यशब्द–पुं० नोभाषाशब्दविशेषे, स्था० २ ठा० ॥ स च वेणुवीणामृदङ्गादीनां यो शब्द इति । जीवा० ३ प्रति० ॥ तद्भेदादि यथा ।

आउज्जसद्दे दुविहे पण्णत्ते तंजहा–तते चेव वितते चेव। तते दुविहे पण्णत्ते–तंजहा-घणे चेव सुसिरे चेव । एवं वितते वि ।

ततविततादिकमातोद्यभेद आउज्जशब्दे प्रदर्शितः तज्जनितः शब्दस्ततो विततो घनः शुषिरश्च व्यपदिश्यते इति । अस्य चतुर्विधत्वम् चतुर्विधातोद्यजनितत्वात् । स्था०२ ठा०।(आतोद्यस्य चतुर्विधत्वम् आउज्ज शब्दे )

आउज्जिय–आयोगिक– पुं० उपयोगवति ज्ञानिनि, । भ० । २ श० ५ उ० ।

आवर्जित–त्रि० आ० वृज् णिच् क्त० अभिमुखीकृते, तथा च लोके वक्तार आवर्जितो ऽयं मया सम्मुखीकृत इत्यर्थ इति । प्रज्ञा० ३६ पद । पं० सं० ॥ दत्त,त्यक्ते, निम्नीकृते च ॥ वाच० ।

आउज्जियकरण–आवर्जितकरण– न० आवर्जितस्य करणमिति केवलिसमुद्घातात्पूर्वं क्रियमाणे शुभयोगव्यापारणे, तथा भव्यत्वेनावर्जितस्य मोक्षगमनं प्रत्यभिमुखीकृतस्य शुभयोगव्यापारणमिति ॥ प्रज्ञा० ३६ पद । पं० सं० ( अत्रत्या वक्तव्यता आउज्जीकरण शब्दे )

आउज्जिया–आयोजिका–स्त्री०भावे युज् व्यापारणे,आ०म०द्वि० ।

आउज्जियाकरण–आयोजिकाकरण– न० आङ् मर्यादया केवलिदृष्टया योजनं शुभानां योगानां व्यापारणम्–भावे युज् तस्य करणमिति । केवलिसमुद्घातात्पूर्वं क्रियमाणे शुभव्यापारात्मके क्रियाविशेषे, ॥ प्रज्ञा० ३६ पद । आ० म० द्वि० । पं० सं० ।

आउज्जीकरण–आवर्ज्जीकरण– न० आवर्जनमावर्जः तस्य करणमिति विवक्षायां च्विप्रत्ययः । केवलिसमुद्घातात्पूर्वं क्रियमाणं आत्मानं प्रति मोक्षस्याभिमुखीकरणेनात्मनो मोक्षं प्रत्युपयोजनकरणे, आवर्ज्यतेऽभिमुखीक्रियते मोक्षोऽनेनेति आवर्जस्तस्य करणमिति विवक्षायां च्विप्रत्ययः । केवलिसमुद्घातात्पूर्वं क्रियमाणे शुभमनोवाक्कायव्यापारविशेषकरणे, प्रज्ञा० ३६ पद । आवर्ज्यते इत्यावर्जः घञ्-तस्य करणमिति च्विः । केवलिसमुद्घातात्पूर्वं क्रियमाणे मोक्षं प्रत्यभिमुखीकर्त्तव्यस्य करणं, तथान्तर्मौहूर्त्तिक उदयावलिकायां कर्म्मपुद्गलप्रक्षेपव्यापाररूप उदीरणाविशेष इति ॥ आ० म० द्वि० । औप० । स्था० । कर्म्म० ।

तथाच प्रज्ञापनायाम् ।

कइसमइए णं भंते ! आउज्जीकरणे पण्णत्ते गोयमा !
असंखिज्जसमइए अंतोमुहुत्तिए आउज्जीकरणे पण्णत्ते ॥

आवर्जीकरणञ्च सर्वोऽपि केवली केवलिसमुद्घातं गच्छन् प्रथमत उपगच्छति । तथा च केवलिसमुद्घातप्रक्रियां विभाणिषुः समुद्घातशब्दव्याख्यानपुरस्सरमाह भाष्यकारः । "तत्थाउ य संसाहि य, कम्मसमुग्घायणं समुग्घाओ। तं गंतुमणा पुव्वं, आ

उज्जीकरणमभ्येइ " प्रज्ञा० ३६ पद । पं० सं० ॥

आवज्जणमुवओगो, वावारो वा तदत्थमाईए ।
अंतोमुहुत्तं मेत्तं, काउ कुरुए समुग्घायं ॥

तत्रायुःशेषाणामधिकस्थितिकानां वेदनीयादिकर्म्मणां समुद्घातं समुद्घातः तं च गन्तुमनाः प्रारिप्सुः पूर्वमावर्ज्जीकरणमभ्येति विदधाति । कर्मभूतं तदित्युच्यते तदर्थं समुद्घातकरणार्थमादौ केवलिना उपयोगा मया अधुनेदं कर्त्तव्यमित्येवंरूप उदयावलिकायां कर्म्मप्रक्षेपरूपो व्यापारो वा आवर्जनमुच्यते तस्यैवं भूतस्य करणमावर्ज्जीकरण तदन्तर्मुहूर्त्तमात्रं कालं कृत्वा ततः समुद्घातं कुरुत इति ॥ विशे० ॥

आउज्जोवण—अबयोजन—न०--अप्कायपन्त्रयोजने,

आउज्जोवण वणिए, अगणि कुरुंबीकुकम्मकुसरीए ।
तेणे मालागारे, उब्भामगपंथि गजंते ॥ २ ॥

तेषां हि सशङ्कं व्रजतामेते दोषाः (आउज्जोवणत्ति) अप्काययन्त्राणि योज्यन्ते वहनाय सज्जीक्रियन्ते इति ॥ ओघ० ॥ असंजए हिंसरू वसंताणं आउज्जोवणवणियादिदोसा भवंतीति । नि०-चू० २ उ० ॥

आउट्ट—आउट्ट—पुं०-- करणे, अयमेतादृश एव सैद्धान्तिको धातुरिति ॥ कल्प० ॥ आउट्टन्ति णाम करेति । नि०चू० ३ उ० ॥

आकुट्ट—पु०--आकुट्टनमाकुट्टः आ० कुट्ट० घञ्-छेदने, हिंसायां च। सा चात्र प्राण्यवयवानां छेदनभेदनादिरूपो व्यापार इति॥ सूत्र० १ श्रु० १ अ० ॥

आतुट्ठ—त्रि०—सन्तुष्टे, नि०चू० १ उ० ॥

आवृत्त—त्रि०--आ--समन्तात् वृत्त इति । समन्ताद् व्यवस्थिते, आचा० १ श्रु०७अ०४उ० । परावृत्ते, प्रतिनिवृत्ते, च । वाच० ॥

पाणातिवायप्पभितिसु, संकप्पकएसु चरणविगमम्मि ।
आउट्टे परिहारा,पुण वयउवणं तु मूलंति ॥

आवृत्ते आवृत्तपरिणामे साधावीति । पंचा० १६ विव० ॥ समन्तात् हिंसायां प्रवृत्ते, आउट्टामो प्रवर्तामहे हिंसायाम्, आचा० १ श्रु० ८ अ० १ उ० । पुनः पुनरभ्यासे, आवर्त्यमाने च । वाच० ॥

आउट्टंत—आउट्टत्—त्रि० । कुर्वति, कल्प० । नि० चू० ॥

आउट्टण—आउट्टन--न० । करणे,कल्प० ॥ नि० चू० ॥

आकुट्टन—न० । हिंसायाम्, सूत्र० १ श्रु० १ अ० । आ० म०। द्वि० ।

आवर्त्तन—न०--अभिलाषायाम, आचा० २ श्रु०७ अ० १ उ० ॥ आराधनायाम, कहणाउट्टण आगमपुच्छणं दीवणा य कज्जस्स, व्य० म० । आवर्तनमाकम्पनं राज्ञो भक्तिभजनामिति वृत्तिः व्य० प्र० ८ उ० ॥ नि० चू० । आवर्जने, व्य० द्वि० १० उ० आभिमुखीभूय वर्त्तने, नं० । निवर्त्तने, सूत्र० १ श्रु० १० अ० । आवर्तनं पूर्वभावतो निवृत्त्यान्यभावप्रतिपत्त्याभिमुखो वर्तते येन बोधपरिणामेन स आवर्तः पु० तथावर्त्तनं. ॥ ईहातो निवृत्यापायभावप्रतिपत्त्यभिमुखीभूय वर्त्तनस्य हेतौ, बोधपरिणामे च । नं०

आउट्टणया—आवर्त्तनता--स्त्री० आवर्त्ततेऽभिमुखीभूय वर्त्तते येन स तथा तद्भावस्तत्ता । आभिनिबोधिकज्ञानावशेषस्यापायस्य नामधेयविशेषे, सा ईहातो निवृत्यापायभावप्रतिपत्त्याभिमुखीभूय वर्त्तन हेतुभूता बोधपरिणामेतीति ॥ नं० ॥

आउट्टणा—आवृत्तना—स्त्री० आराधनायाम, नि० चू० २ उ० ॥

आकम्पने, व्य० । आवर्जने, "आउट्टऊण अत्तीकरेइ" आवर्त्यावर्ज्यात्मीकरोतीति तदर्थः ॥ व्य० द्वि० १० उ० ॥

आउट्टावण—आवर्त्तन—न० अभिमुखीकरणे, आचा० २ श्रु० ॥

आउट्टि—आउट्टि--स्त्री० करणे, "आउट्टत्ति णाम करोति" आउट्टि धातुः करणार्थे सैद्धान्तिकः । कल्प० । नि० चू० ॥

आकुट्टि—स्त्री० हिंसायाम्, सा च प्राणिनां छेदनभेदनव्यापार इति । आचा० १ श्रु० १ अ० ॥ इदं करोमीत्येवं बुध्वोपेत्य करणे, जीत० ॥ सम० ॥ ध० ॥ प्रव० ॥ पं० व० । आव० ॥ आउट्टिया नामआभोगे जानान इत्यर्थः । बृ० ३ उ० ॥ ( आकुट्ट्यां धर्मरुचेरुदाहरणम्- आता शब्दे )

आवृत्ति—स्त्री० आ० वृत्० क्तिन्० समन्तात्प्रवर्त्तने, । आचा०२श्रु. अभिलाषायाम, । आचा० २ श्रु० । आराधनायाम, राज्ञो भक्तीभजनम् । व्य० प्र० १ उ० । नि० चू० । आवर्जने, । व्य० द्वि० १० उ० । अभिमुखीभूय वर्तने, । नं ॥ निवर्त्तने, सूत्र० १ श्रु १ अ० । पुनः पुनरभ्यासे, भूय एकजातीयक्रियाकरणे, आवृत्तिः सर्वशास्त्राणां बोधादपि गरीयसी । प्रत्यावृत्तौ, पुनरागतौ, वाच० । सूर्यस्य चन्द्रस्य च भूयो भूयो दक्षिणोत्तरगमने च । तद्वक्तव्यता सूर्यप्रज्ञप्ति-चन्द्रप्रज्ञप्ति ज्योतिष्करण्डके चद्वादशे प्राभृते । यथा आवृत्तयो द्विधा । तद्यथा-एका सूर्यस्यावृत्तयोऽपराश्चन्द्रमसस्तत्र युगे सूर्यस्यावृत्तयो दश भवन्ति चतुस्त्रिंशच्छतमावृत्तीनां चन्द्रमसः । सूर्य० १२ पाहु० । चन्द्र० । तत्र सूर्यस्य दशावृत्तयो यथा—

तत्थ खलु इमातो पंच वासिकीओ पंच हेमन्तीओ आउट्टीओ पण्णत्ताओ ॥

( तत्थ खलु इत्यादि ) तत्र युगे खलु इमा वक्ष्यमाणस्वरूपाः पञ्च वार्षिक्यः पञ्च हैमन्त्यः शीतकालभाविन्यः सर्वसंख्यया दश आवृत्तयः सूर्यस्य प्रज्ञप्ताः । चन्द्र० १२ पाहु० । एतस्योपपत्तिं वक्तुकाम आह—

एत्तो आउट्टीओ, वोच्छं जह कमेण सूरस्स ।
चंदस्स य लहुकरणं, जह दिट्ठं पुव्वसूरीहिं ॥

इतोऽयनविभागप्रतिपादनानन्तरं सूर्यस्य चन्द्रस्य च आवृत्तीर्भूयो भूयो दक्षिणोत्तरगमनरूपा यथाक्रमेण परिपाट्या वक्ष्यामि तासां चावृत्तीनां प्रतिनियतप्रथमदिवसपरिज्ञानाय यथादृष्टं सर्वदर्शिभिः सर्वज्ञैस्तथाकरणं लघूपायं वक्ष्ये ॥

प्रतिज्ञातमर्थं निर्वाहयितुकामः प्रथमत आवृत्तीः प्रतिपादयति

सूरस्स य अयणसमा, आउट्टीओ जुगम्मि दस होंति ।
चंदस्स य आउट्टी, सयं च चोत्तीसयं चेव ॥

सूर्यस्यादित्यस्य युगे च चान्द्रं चन्द्राभिवर्धितं संवत्सरपञ्चकपरिमाणे आवृत्त्ते यथोदितस्वरूपा अयनसमा भवन्ति । अयनप्रथमप्रवृत्ते वा वृत्तिशब्दवाच्यत्वात् । ताश्च कति संख्या इत्याह दश । तथा चन्द्रस्यावृत्तीनां शतं चतुस्त्रिंशदधिकम अयनानां हि प्रथमाः प्रवृत्तय आवृत्तिशब्दवाच्याश्चन्द्रस्य वा अयनान्येतावन्ति तत आवृत्तयोऽप्येतावत्य एव ( ज्यो० १२ पाहु० ) अथ कथमवसीयते सूर्यस्यावृत्तयो युगे दश भवन्ति चन्द्रमसश्चावृत्तीनां चतुस्त्रिंशच्छतमिति उच्यते । उक्तं नाम—आवृत्तयो भूयो२ दक्षिणोत्तरगमनरूपाः ततः सूर्यस्य चन्द्रमसो वा यावन्त्ययनानि तावन्त्य आवृत्तयः सूर्यस्य चायनानि दश एतच्चावसीयते त्रैराशिकबलात् । तथाहि—यदि त्र्यशीत्यधिकेन शतेन दिवसानामेकमयनं भवति ततोऽष्टादशभिः शतैः त्रिंशदधिकैः कति अयनानि लभ्यन्ते राशित्रयस्थापना । (१८३)(१) ( १८३० ) अत्रा-

न्येन राशिना मध्यमस्य राशेर्गुणनम् एकस्य च गुणने तदेव भवतीति जातान्यष्टादश शतानि त्रिंशदधिकानि (१८३०) तेषामाद्येन राशिना त्र्यशीत्यधिकेन शतेन भागहरणं लब्धा दश। आगतं युगमध्ये सूर्यस्य दश अयनानि भवन्तीत्यावृत्तयोऽपि दश। तथा यदि त्रयोदशभिर्दिवसैश्चतुश्चत्वारिंशता च सप्तषष्टिभागैरेकं चन्द्रस्यायनं भवति ततोऽष्टादशभिर्दिवसशतैस्त्रिंशदधिकैः कति चन्द्रायनानि भवन्ति राशित्रयस्थापना (१३) (४४) (१८३०)। तत्राद्ये राशौ सवर्णनाकरणार्थं त्रयोदशाऽपि सप्तषष्ट्या गुण्यन्ते। गुणयित्वा चोपरितनाः चतुश्चत्वारिंशत् सप्तषष्टिभागाः प्रक्षिप्यन्ते जातानि नव शतानि पञ्चदशोत्तराणि (९१५) यानि चाष्टादशशतानि त्रिंशदधिकानि तान्यपि सवर्णनाकरणार्थं सप्तषष्ट्या गुण्यन्ते जातानि द्वादश लक्षाणि द्वे सहस्रे षट् शतानि दशोत्तराणि (१२०२६१०) तत्रैवंरूपेणान्त्येन राशिना मध्यमस्य राशेरेकैकरूपस्य गुणनमेककस्य च गुणने तदेव भवतीत्येतावानेव राशिर्जातस्तस्य नवभिः शतैः पञ्चदशोत्तरैर्भागो ह्रियते लब्धं चतुस्त्रिंशच्छतं (१३४) एतावन्ति चन्द्रायनानि युगमध्ये भवन्तीत्येतावत्यश्चन्द्रमस आवृत्तयः।

सांप्रतिका सूर्यस्यावृत्तिः कस्यां तिथौ भवतीति चिन्तायां यत्पूर्वाचार्यैरुपदर्शितं करणन्तदुपदर्श्यते।

> आउट्टीहिं एगूणियाहिं, गुणियं सयं तु तेसीयं।
> जेण गुणियं तं तिगुणं, रूवाहियं पक्खिव तत्थ ॥ १ ॥
> पन्नरसभाइयम्मि उ, जं लद्धं तं तेसु होइ पव्वेसु।
> जे अंसा ते दिवसा, आउट्टी एत्थ बोधव्वा ॥ २ ॥

अनयोर्व्याख्या। आवृत्तिभिरेकोनिकाभिर्गुणितं शतं त्र्यशीत्यधिकम्। किमुक्तं भवति या आवृत्तिर्विशिष्टतिथियुक्ता ज्ञातुमिष्टा तत्संख्या एकोनिका क्रियते। ततस्तया त्र्यशीत्यधिकं शतं गुण्यते गुणयित्वा च येनाङ्केन गुणितं त्र्यशीत्यधिकं शतं तदङ्कस्थानं त्रिगुणं कृत्वा रूपाधिकं स तत्र पूर्वराशौ प्रक्षिप्यते ततः पञ्चदशभिर्भागो ह्रियते हृते च भागे यल्लब्धं तत्तेषु तावत्संख्याकेषु पर्वस्वतिक्रान्तेषु सा विवक्षिता आवृत्तिर्भवति ये त्वंशाः पश्चादुद्धरितास्ते दिवसाः। तत्र तेषु दिवसेषु मध्ये चरमदिवसे आवृत्तिर्भवतीति भावः। इहावृत्तीनामेवं क्रमो युगे प्रथमा आवृत्तिः श्रावणे मासे, द्वितीया माघे मासे, तृतीया भूयः श्रावणे मासे, चतुर्थी माघमासे, पुनरपि पञ्चमी श्रावणे, षष्ठी माघमासे, भूयः सप्तमी श्रावणे,ऽष्टमी माघमासे, नवमी श्रावणमासे, दशमी माघमासे इति। तत्र प्रथमा किल आवृत्तिः कस्यां तिथौ भवतीति यदि जिज्ञासा तदा प्रथमावृत्तिस्थाने एकको ध्रियते सरूपोनः क्रियते ... न किमपि पश्चाद्रूपं प्राप्यते ततः पाश्चात्ययुगभाविनी या दशमी आवृत्तिस्तत्संख्या दशकरूपा ध्रियते तया त्र्यशीत्यधिकं शतं गुण्यते जातान्यष्टादश शतानि त्रिंशदधिकानि (१८३०) दशकेन किल गुणितं त्र्यशीत्यधिकं शतमिति। ते दशभिर्गुण्यन्ते जातास्त्रिंशत्। सा रूपाधिका विधेया जाता एकत्रिंशत्। सा पूर्वराशौ प्रक्षिप्यते जातान्यष्टादशशतान्येकषष्ट्यधिकानि (१८६१) तेषां पञ्चदशभिर्भागो ह्रियते लब्धं चतुर्विंशतिशतं शेषं तिष्ठति एकं रूपमागतम्। चतुर्विंशत्यधिकपर्वशतात्मके पाश्चात्ये युगे अतिक्रान्ते अभिनवे युगे प्रवर्त्तमाने प्रथमावृत्तिः प्रथमायां तिथौ प्रतिपदि भवतीति। तथा कस्यां तिथौ द्वितीया माघमासभाविनी आवृत्तिर्भवतीति यदि जिज्ञासा ततो द्विको ध्रियते सरूपोनः कृत इति जातः एककस्तेन त्र्यशीत्यधिकं शतं गुण्यते एकेन च गुणितं तदेव भवति जातं त्र्यशीत्यधिकमेव शतम् एकेन गुणितं किल त्र्यशीत्यधिकं शतमिति। एकं त्रिगुणीक्रियते जातास्त्रिकः सरूपाधिकः क्रियते जाताश्चत्वारस्ते पूर्वराशौ प्रक्षिप्यन्ते जातं सप्ताशीत्यधिकं शतं (१८७) तस्याः पञ्चदशभिर्भागो ह्रियते लब्धा द्वादशसु पर्वस्वतिक्रान्तेषु माघमासे बहुलपक्षे सप्तम्यां तिथौ द्वितीया माघमासे माघमासभाविनीनां तु मध्ये प्रथमा आवृत्तिरिति। तथा तृतीया आवृत्तिः कस्यां तिथौ भवतीति जिज्ञासायां त्रिको ध्रियते सरूपोनः क्रियते इति जातो द्विकस्तेन त्र्यशीत्यधिकं शतं गुण्यते जातानि त्रीणि शतानि षट्षष्ट्यधिकानि (३६६) द्विकेन किल गुणितं त्र्यशीत्यधिकशतमिति। द्विकस्त्रिगुणीक्रियते जाताः षट् ते रूपाधिकाः क्रियन्ते जाताः सप्त, ते पूर्वराशौ प्रक्षिप्यन्ते जातानि त्रीणि शतानि त्रिसप्तत्यधिकानि (३७३) तेषां पञ्चदशभिर्भागो ह्रियते लब्धाश्चतुर्विंशतिः(२४) शेषास्तिष्ठन्ति त्रयोदशांशाः आगतं युगे तृतीयावृत्तिः श्रावणमासभाविनीनां तु मध्ये द्वितीया चतुर्विंशतिपर्वात्मके प्रथमे संवत्सरेऽतिक्रान्ते श्रावणमासे बहुलपक्षे त्रयोदश्यां तिथौ भवतीत्येवमन्यास्वप्यावृत्तिषु करणवशाद्विवक्षितास्तिथयः आनेतव्यास्ताश्चेमा युगे चतुर्थी माघमासभाविनीनां तु मध्ये द्वितीया शुक्लपक्षे चतुर्थ्यां पञ्चमी। श्रावणमासभाविनीनां तु मध्ये तृतीया, श्रावणमासे शुक्लपक्षे दशम्यां षष्ठी, माघमासभाविनीनां तु मध्ये तृतीया माघमासे बहुलपक्षे प्रतिपदि सप्तमी। श्रावणमासभाविनीनां तु मध्ये चतुर्थी, श्रावणमासे बहुलपक्षे सप्तम्यामष्टमी। माघमासभाविनीनां तु मध्ये चतुर्थी, माघमासे बहुलपक्षे त्रयोदश्यां नवमी। श्रावणमासभाविनीनां तु मध्ये पञ्चमी, श्रावणमासे शुक्लपक्षे चतुर्थ्यां दशमी। माघमासभाविनीनां तु मध्ये पञ्चमी, माघमासे शुक्लपक्षे दशम्यामेकादशी तथा चैता एव पञ्चानां श्रावणमासभाविनीनां पञ्चमीनां तु माघमासभाविनीनां तु तिथयोऽन्यत्राऽप्युक्ताः। "पढमा बहुलपडिवए, विइया बहुलस्स तेरसी दिवसे। सुद्धस्स य दसमीए, बहुलस्स य सत्तमीए उ ॥१॥ सुद्धस्स चउत्थीए, पवत्तए पंचमी उ आउट्टी। एया आउट्टीओ, सव्वाओ सावणे मासे ॥२॥ बहुलस्स सत्तमीए, पढमा सुद्धस्स तो चउत्थीए। बहुलस्स य पाडिवए, बहुलस्स य तेरसी दिवसे ॥ ३ ॥ सुद्धस्स य दसमीए, पवत्तए पंचमी उ आउट्टी। एया आउट्टीओ, सव्वाओ माहमासम्मि ॥४॥" चन्द्र० १२ पाहु०। सूर्य०। इह सूर्यस्य दशावृत्तयो भवन्ति। एतच्चानन्तरमेव भावितं तत्र पञ्चावृत्तयः श्रावणे मासे, पञ्च माघमासे। तत्र याः श्रवणमासे भवन्ति तासां मध्ये प्रथमा बहुलपक्षप्रतिपदि, द्वितीया बहुलस्य बहुलपक्षस्य सम्बन्धिनि त्रयोदशीरूपे दिवसे, तृतीया शुक्लस्य शुक्लपक्षस्य दशम्यां, चतुर्थी बहुलपक्षस्य सप्तम्यां, शुक्लस्य शुक्लपक्षस्य चतुर्थ्यां प्रवर्त्तते पञ्चमी आवृत्तिः। एताः सर्वा अपि आवृत्तयः श्रावणे मासे वेदितव्याः ॥ माघमासे प्रथमा आवृत्तिर्बहुलस्य कृष्णपक्षस्य सप्तम्यां भवति, द्वितीया शुक्लस्य शुक्लपक्षस्य चतुर्थ्यां, तृतीया बहुलपक्षप्रतिपदि चतुर्थी बहुलपक्षस्य त्रयोदशीदिवसे, पञ्चमी शुक्लपक्षस्य दशम्यां प्रवर्त्तते। एताः सर्वा अप्यावृत्तयो माघमासे भवन्ति। ज्यो० १२ पाहु०। एतासु सूर्यावृत्तिषु चन्द्रनक्षत्रयोगपरिज्ञानार्थं करणमभिधित्सुस्तद्विषयं ध्रुवराशिमाह ॥

> पंचसया पडिपुण्णा, तिसुत्तरा नियमसो मुहुत्ताणं।
> छत्तसवेसट्ठिभागा, छच्चेव य चुण्णिया भागा ॥

पञ्चशतानि त्रिसप्तानि त्रिसप्तत्यधिकानि परिपूर्णानि मुहूर्त्तानां भवन्ति षट्त्रिंशच्च द्वाषष्टिभागाः। षट् चैव चूर्णिका भागाः एकस्य द्वाषष्टिभागस्य सत्काः षट्सप्तषष्टिभागाः। एतावान् विवक्षितकरणे ध्रुवराशिः! कथमस्योत्पत्तिरिति चेदुच्यते। इह यदि

दशभिः सूर्यायनैः सप्तषष्टिश्चन्द्रनक्षत्रपर्याया लभ्यन्ते तत एकेन सूर्यायनेन किं लभामहे राशित्रयस्थापना ( १० ) ( ६७ ) ( १ ) अत्रान्त्येन राशिना मध्यराशेः सप्तषष्टिलक्षणेन गुणिता एकेन च गुणितं तदेव लब्धं भवतीति जाता सप्तषष्टिः ( ६७ ) तस्य दशभिर्भागहारे लब्धाः षट् पर्यायाः एकस्य च पर्यायस्य सप्तदशभागास्तद्गतमुहूर्त्तपरिमाणमधिकृत्य गाथायामुपन्यस्तम् । कथमेतदवसीयते यथैतावांस्तत्र मुहूर्त्त इति चेदुच्यते–त्रैराशिककर्म्मचिन्ताबलात्तथा हि–यदि दशभिर्भागैः सप्तविंशतिदिनानि एकस्य च दिनस्य एकविंशतिसप्तषष्टिभागा लभ्यन्ते तदा सप्तभिर्भागैः किं लभामहे राशित्रयस्थापना (१०) (२७) ( २१ ) (७) अत्रान्त्येन राशिना सप्तकलक्षणेन मध्यस्य राशेर्मध्ये सप्तविंशतिदिनानि गुण्यन्ते जातं नवाशीत्याधिकं शतं ( १८९ ) तस्याद्येन राशिना दशकलक्षणेन भागे हृते लब्धा अष्टादश (१८) दिवसास्ते च मुहूर्त्तानयनाय त्रिंशता गुण्यन्ते जातानि पञ्चशतानि चत्वारिंशदधिकानि मुहूर्त्तानां ( ५४० ) शेषा उपरि तिष्ठन्ति । नव ते मुहूर्त्तकरणार्थं त्रिंशता गुण्यन्ते जाते द्विशते सप्तत्यधिके ( २७० ) ततो दशभिर्भागे हृते लब्धाः सप्तविंशतिमुहूर्त्ताः ते पूर्वस्मिन् मुहूर्त्तराशौ प्रक्षिप्यन्ते जातानि पञ्चशतानि सप्तषष्ट्यधिकानि ( ५६७ ) येऽपि च एकविंशतिः सप्तषष्टिभागा दिनस्य तेऽपि मुहूर्त्तभागकरणार्थं त्रिंशता गुण्यन्ते जातानि षट्शतानि त्रिंशदधिकानि ( ६३० ) तानि सप्तभिर्गुण्यन्ते जातानि दशोत्तराणि चतुश्चत्वारिंशच्छतानि ( ४४१० ) तेषां दशभिर्भागे हृते लब्धानि चत्वारि शतानि एकचत्वारिंशदधिकानि ( ४४१ ) तेषां सप्तषष्ट्या भागे हृते लब्धाः षट् मुहूर्त्ताः ते पूर्वमुहूर्त्तराशौ प्रक्षिप्यन्ते जातानि मुहूर्त्तानां पञ्च शतानि त्रिसप्तत्यधिकानि ( ५७३ ) शेषाश्चोद्धरिता एकोनचत्वारिंशत् सा द्वाषष्ट्या गुण्यन्ते जातानि चतुर्विंशतिशतानि अष्टादशाधिकानि ( २४१८ ) तेषां सप्तषष्ट्या भागे हृते लब्धाः षट्त्रिंशत् द्वाषष्टिभागाः शेषास्तिष्ठन्ति षट् चेति । ते च एकस्य च द्वाषष्टिभागस्य सत्काः सप्तषष्टिभागा ये ते चातिश्लक्ष्णरूपा भागा इति चूर्णिका भागा इति व्यपदिश्यन्ते तदेवमुक्तो ध्रुवराशिः ॥ चन्द्र० १२ पाहु० । सूर्य० ॥ ज्यो० ॥

सम्प्रति करणमाह ॥

आउट्टीहिं एगूणियाहिं, गुणिओ हविज्ज धुवरासी ।
एयं मुहुत्तगणियं, एत्तो वोच्छामि सोहणगं ॥ २ ॥
अभिइस्स नव मुहुत्ता, विसट्ठिभागा उ होंति चउवीसं ।
छावट्ठी य समभागा, भागा सत्तट्ठिछेयकया ॥ ३ ॥
उगुणट्ठं पोट्ठवया, तिसु चेव नवोत्तरेसु रोहिणिया ।
तिसु नवनउएसु भवे, पुणव्वसू उत्तराफग्गू ॥ ४ ॥
पंचेव अउणपन्ना, सयाइँ एगुणत्तराइँ छच्चेव ।
सोज्झाहि विसाहासु, मूले सत्तेव चोयाला ॥ ५ ॥
अट्ठसयमगुणवीसा, सोहणगं उत्तराणसाढाणं ।
चउवीसं खलु भागा, छावट्ठी चुण्णिया भागा ॥ ६ ॥
एयाइँ सोहइत्ता, जं सेसं तं हवेज्ज नक्खत्तं ।
चंदेण समाउत्तं, आउट्टीए उ बोधव्वं ॥ ७ ॥

( आउट्टीहिं इत्यादि ) यस्यामावृत्तौ नक्षत्रयोगो ज्ञातुमिष्यते तया आवृत्त्या एकोनिकया एकरूपहीनया गुणितोऽनन्तरोक्तस्वरूपो ध्रुवराशिर्भवेत् यावान् एतन्मुहूर्त्तपरिमाणमत ऊर्ध्वं वक्ष्यामि शोधनकम् । तत्र प्रथमतोऽभिजितो नक्षत्रस्य शोधनकमाह ( अभिइस्सेत्यादि ) अभिजितोऽभिजिन्नक्षत्रस्य शोधनकं नव मुहूर्त्ताः एकस्य च मुहूर्त्तस्य चतुर्विंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य सत्काः सप्तषष्टिच्छेदकृताः समग्राः परिपूर्णाः षट्षष्टिभागाः । कथमेतस्योत्पत्तिरिति चेदुच्यते-इहाभिजितोऽहोरात्रसत्काः एकविंशतिसप्तषष्टिभागाश्चन्द्रमसो योगाः । तत्राहोरात्रस्त्रिंशन्मुहूर्त्त इति मुहूर्त्तभागकरणार्थमेकविंशतिः त्रिंशता गुण्यते जातानि षट्शतानि त्रिंशदधिकानि ( ६३० ) तेषां सप्तषष्ट्या भागो ह्रियते लब्धा नव मुहूर्त्ताः शेषास्तिष्ठन्ति सप्तविंशतिः । ते द्वाषष्टिभागकरणार्थं द्वाषष्ट्या गुण्यन्ते जातानि षोडशशतानि चतुःसप्तत्यधिकानि ( १६७४ ) तेषां सप्तषष्ट्या भागो ह्रियते लब्धाश्चतुर्विंशतिर्द्वाषष्टिभागाः शेषास्तिष्ठन्ति षट्षष्टिः । ते च एकस्य च द्वाषष्टिभागस्य सत्काः सप्तषष्टिभागाः । सम्प्रति शेषनक्षत्राणां शोधनकानि उच्यन्ते उगुणट्ठमित्यादिगाथात्रयम् एकोनषष्टिमेकोनषष्ट्यधिकं शतं प्रोष्ठपदा उत्तरभाद्रपदा किमुक्तं भवत्येकोनषष्ट्यधिकेन शतेनाभिजिदादीन्युत्तरभाद्रपदान्तानि नक्षत्राणि शुध्यन्ति । तथाहि-नव मुहूर्त्ता अभिजितस्त्रिंशच्छ्रवणस्य, त्रिंशद्धनिष्ठायाः, पञ्चदश शतभिषजः, त्रिंशत्पूर्वभाद्रपदायाः, पञ्चचत्वारिंशदुत्तरभाद्रपदाया इति शुध्यन्ति । एकोनषष्ट्यधिकेन शतेनोत्तरभाद्रपदान्तानि नक्षत्राणि त्र्यादिषु नवोत्तरेषु शतेषु रोहिणिकान्तानि शुध्यन्ति । तथाह्येकोनषष्ट्याधिकेन शतेनोत्तरभाद्रपदापर्यन्तानि शुध्यन्ति । ततस्त्रिंशन्मुहूर्त्ते रेवती, त्रिंशता अश्विनी, पञ्चदशभिर्भरणी त्रिंशता कृत्तिका, पञ्चचत्वारिंशता रोहिणिकेति तथा त्रिषु नवनवत्यधिकेषु शतेषु पुनर्वस्वन्तानि शुध्यन्ति । तत्र त्रिभिः शतैर्नवोत्तरै रोहिणिकाः शुध्यन्ति ततस्त्रिंशता मुहूर्त्तैः मृगशिरः, पञ्चदशभिरार्द्रा, पञ्चचत्वारिंशता पुनर्वसू इति । तथा पञ्चशतान्येकोनपञ्चाशदधिकानि उत्तरफाल्गुनीपर्यन्तानि । किमुक्तं भवति पञ्चभिः शतैरेकोनपञ्चाशदधिकैरुत्तरफाल्गुन्यन्तानि नक्षत्राणि शुध्यन्ति । तथाहि त्रिभिः शतैर्नवत्यधिकैः पुनर्वस्वन्तानि शुध्यन्ति । ततस्त्रिंशता मुहूर्त्तैः पुष्यः, पञ्चदशभिरश्लेषा, त्रिंशता मघा, त्रिंशता पूर्वफाल्गुनी, पञ्चचत्वारिंशता उत्तरफाल्गुनीति, षट्शतानि एकोनसप्तत्यधिकानि विशाखानां विशाखापर्यन्तानां नक्षत्राणां शोध्यानि । तथा उत्तरफाल्गुन्यन्तानां पञ्चशतान्येकोनपञ्चाशदधिकानि शोध्यानि । ततः त्रिंशन्मुहूर्त्ता हस्तस्य, त्रिंशच्चित्रायाः, पञ्चदश स्वातेः, पञ्चचत्वारिंशद्विशाखाया, इति । तथा मूले मूलनक्षत्रशोध्यानि सप्तशतानि चतुश्चत्वारिंशदधिकानि (७४४) तत्र षट् शतानि एकोनसप्तत्यधिकानि (६६९) विशाखान्तानां नक्षत्राणां शोध्यानि ततः त्रिंशन्मुहूर्त्ताः अनुराधायाः पञ्चदश ज्येष्ठायाः त्रिंशत् मूलस्येति, तथा अष्टौ शतानि समाहृतानि अष्टशतमेकोनविंशत्यधिकम् । किमुक्तं भवत्यष्टौ शतान्येकोनविंशत्यधिकानि उत्तराषाढानामुत्तराषाढान्तानां नक्षत्राणां शोधनकम् । तथाहि मूलान्तानां नक्षत्राणां शोध्यानि सप्तशतानि चतुश्चत्वारिंशदधिकानि ( ७४४ ) तत्र त्रिंशन्मुहूर्त्ताः पूर्वाषाढानक्षत्रस्य पञ्चचत्वारिंशदुत्तराषाढानामिति । तथा सर्वेषामपि चामीषां शोधनकानामुपरि अभिजितः संबन्धिनः चतुर्विंशतिर्द्वाषष्टिभागाः शोध्याः एकस्य च द्वाषष्टिभागस्य सत्काः षट्षष्टिश्चूर्णिका भागाः ( एयाइं इत्यादि ) एतानि अनन्तरोदितानि शोधनकानि यथासंभवं शोधयित्वा यत् शेषमुद्धरति तत्र, यथायोगमपान्तरालवर्त्तिषु नक्षत्रेषु शोधितेषु यन्नक्षत्रं न शुध्यति तन्नक्षत्रं

चन्द्रेण समायुक्तं विवक्षितायामावृत्तौ वेदितव्यम्। तत्र प्रथमायामावृत्तौ प्रथमतः प्रवर्त्तमानायां केन नक्षत्रेण युक्तश्चन्द्र इति यदि जिज्ञासा तत्प्रथमावृत्तिस्थाने एकको ध्रियते सरूपानः क्रियत इति न किमपि पश्चात् रूपमवतिष्ठते । ततः पाश्चात्ययुगभाविनीनामावृत्तीनां मध्ये या दशमी आवृत्तिस्तत्संख्या दशकरूपा ध्रियते तया प्राचीनः समस्तोऽपि ध्रुवराशिः पञ्चशतानि त्रिसप्तत्यधिकानि ( ५७३ ) मुहूर्त्तानामेकस्य च मुहूर्त्तस्य षट्त्रिंशत् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षट्सप्तषष्टिभागाः ( ३६-६२ ) इत्येवं प्रमाणो गुण्यते । तत्र मुहूर्त्तराशौ दशभिर्गुणिते जातानि सप्तपञ्चाशत् शतानि त्रिंशदधिकानि ( ५७३० ) येऽपि च षट्त्रिंशद्द्वाषष्टिभागास्तेऽपि दशभिर्गुणिते जातानि त्रीणि शतानि षष्ट्यधिकानि ( ३६० ) एतेषां द्वाषष्ट्या भागे हृते लब्धाः पञ्च मुहूर्त्तास्ते पूर्वराशौ प्रक्षिप्यन्ते जातः पूर्वराशिः, सप्तपञ्चाशत् शतानि पञ्चत्रिंशदधिकानि ( ५७३५ ) शेषास्तिष्ठन्ति द्वाषष्टिभागाः पञ्चाशत् ( ५० ) येऽपि च षट् चूर्णिकाभागास्तेऽपि दशभिर्गुणिता जाता षष्टिः तत एतस्मात् शोधनकानि शोध्यन्ते । तत्रोत्तराषाढान्तानां नक्षत्राणां शोधनकमष्टौ शतान्येकोनविंशत्यधिकानि ( ८१९ ) एतानि किल यथोदितराशेः सप्तकृत्वः शुद्धिमाप्नुवन्तीति सप्तभिर्गुण्यन्ते जातानि सप्तपञ्चाशच्छतानि त्रयस्त्रिंशदधिकानि ( ५७३३ ) तानि पञ्चाशच्छतेभ्यः पञ्चत्रिंशदधिकेभ्यः पात्यन्ते स्थितौ पश्चात् द्वौ मुहूर्त्तौ द्वाषष्टिभागकरणार्थं द्वाषष्ट्या गुण्येते जातं चतुर्विंशतिशतं द्वाषष्टिभागानाम् ( १२४ ) ततः प्राक्तने पञ्चाशल्लक्षणे द्वाषष्टिभागे राशौ प्रक्षिप्यते जातं चतुःसप्तत्यधिकं शतम् ( १७४ ) द्वाषष्टिभागानां तथापि अभिजितः संबन्धिनश्चतुर्विंशद्द्वाद्वषष्टिभागाः शोध्यास्ते सप्तभिर्गुण्यन्ते जातमष्टषष्ट्यधिकं शतम् ( १६८ ) तत् चतुःसप्तत्यधिकात् शतात् शोध्यते स्थिताः शेषाः षड्द्वाषष्टिभागाः । ते च चूर्णिकाभागकरणार्थं सप्तषष्ट्या गुण्यन्ते गुणयित्वा च ये प्राक्तनाः ते तत्र प्रक्षिप्यन्ते जातानि चत्वारि शतानि द्वाषष्ट्यधिकानि ( ४६२ ) ततो ये अभिजितः संबन्धिनः षट् षष्टिचूर्णिकाभागाः शोध्यास्ते सप्तभिर्गुण्यन्ते जातानि चत्वारि शतानि द्वाषष्ट्यधिकानि ( ४६२ ) तान्यनन्तरोदितराशेः शोध्यन्ते स्थितं पश्चात् शून्यम्। तत आगतं साकल्येनोत्तराषाढानक्षत्रे चन्द्रेण भुक्ते सति तदनन्तरस्याभिजितो नक्षत्रस्य प्रथमसमये युगे प्रथमा आवृत्तिः प्रवर्त्तते॥ चन्द्र० १२ पाहु०। सूर्य०। ज्यो०।

अथ श्रावणमासभाविनीनामावृत्तीनां चन्द्रनक्षत्रस्य संग्रहणीं गाथामाह ।

पढमा होइ अभिइआ, सट्ठाणाहि य तहा विसाहाहि ।
रेवतीए उ चउत्थी, पुव्वाहि फग्गुणीहि तहा ॥

श्रावणमासभाविनीनामनन्तरोदितस्वरूपाणां पञ्चानामावृत्तीनां मध्ये प्रथमा आवृत्तिरभिजिता नक्षत्रेण युता भवति, द्वितीया ( सट्ठाणाहिं ति ) मृगसिरसा, तृतीया विशाखाभिः, चतुर्थी रेवत्या, पञ्चमी पूर्वफाल्गुनीभिः, ॥ ज्यो० १२ पाहु० ॥

सम्प्रति वार्षिकीणामेवावृत्तीनां नक्षत्रयोगं प्रश्नरीत्या प्रतिपादयति ।

ता एएसि णं पंचण्हं संवच्छराणं पढमं वासिक्किं आउट्टिं चंदे केणं णक्खत्तेणं जोगं जोएत्ति ता अभिजिस्स पढमसमए तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएत्ति ता पूसेणं पुस्सस्स एगूणवीसं मुहुत्ता तेतालीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता तेतालीसं चुण्णिया भागा सेसा ॥

( एएसि णमित्यादि ) एतेषामनन्तरोदितानां पञ्चानां चन्द्रादीनां संवत्सराणां मध्ये प्रथमां वार्षिकीं वर्षाकालसंबन्धिनीं श्रावणमासभाविनीमित्यर्थः । आवृत्तिं चन्द्रः केन नक्षत्रेण सह योगमुपागतः सन् प्रवर्त्तयति एवं गौतमेन प्रश्ने कृते भगवानाह ( ता अभिजिस्स इत्यादि ) अभिजिता नक्षत्रेण युनक्ति । एतदेव विशेषत आचष्टे अभिजितो नक्षत्रस्य प्रथमसमये युनक्ति तदेवं चन्द्रनक्षत्रमवबुध्य सूर्यनक्षत्रविषयं प्रश्नमाह ( तं समयं च णमित्यादि ) तस्मिंश्च समये णमिति वाक्यालङ्कारे सूर्यः केन नक्षत्रेण युनक्ति केन नक्षत्रेण सह सूर्यो योगमुपागतः सन् तां प्रथमामावृत्तिं प्रवर्त्तयतीति । भगवानाह ( ता पूसेणमित्यादि ) ता इति पूर्ववत् पुष्येण युक्तस्तां प्रथमामावृत्तिं युनक्ति एतदेव सविशेषमाचष्टे तदानीं पुष्यस्य एकोनविंशतिमुहूर्त्तास्त्रिचत्वारिंशच्च द्वाषष्टिभागा मुहूर्त्तस्य एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्वा तस्य सत्कास्त्रयस्त्रिंशत् चूर्णिकाभागाः शेषाः । कथमेतदवसीयत इति उच्यते-त्रैराशिकबलात् तथाहि—यदि दशभिरयनैः पञ्चसूर्यकृतान्नक्षत्रपर्यायान् लभामहे तत एकेनायनेन किं लभामहे राशित्रयस्थापना । १० । ५ । १ । अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य राशेः पञ्चकरूपस्य गुणने जाताः पञ्चैव तेषां दशभिर्भागो ह्रियते लब्धमर्धं पर्यायस्य तत्र नक्षत्रपर्यायः सप्तषष्टिभागरूपोऽष्टादशशतानि त्रिंशदधिकानि ( १८३० ) तथाहि-षट् नक्षत्राणि शतभिषक्प्रभृतीनि अर्द्धक्षेत्राणि ततस्तेषां प्रत्येकं सार्द्धत्रयस्त्रिंशत् सप्तषष्टिभागास्ते सार्द्धास्त्रयस्त्रिंशत् षड्भिर्गुण्यन्ते जाते द्वे शते एकोत्तरे ( २१० ) षट् नक्षत्राण्युत्तरभाद्रपदादीनि द्व्यर्द्धक्षेत्राणि ततस्तेषां प्रत्येकमेकं शतं सप्तषष्टिभागानामेकस्य च सप्तषष्टिभागस्यार्द्धं एतत् षड्भिर्गुण्यते जातानि षट्शतानि त्र्युत्तराणि ( ६०३ ) शेषाणि पञ्चदश नक्षत्राणि समक्षेत्राणि प्रत्येकं सप्तषष्टिभागाः ततः पञ्चदशभिर्गुण्यन्ते जातं पञ्चोत्तरं सहस्रं ( १००५ ) एकविंशतिश्चाभिजितः सप्तषष्टिभागाः सर्वसंख्यायाः सप्तषष्टिभागानामष्टादशशतानि त्रिंशदधिकानि ( १८३० ) एष परिपूर्णः सप्तषष्टिभागात्मको नक्षत्रपर्यायः एतस्यार्द्धं नव शतानि पञ्चदशोत्तराणि ( ९१५ ) तेभ्य एकविंशतिरभिजितः संबन्धिनी शुद्धा शेषाणि तिष्ठन्त्यष्टौ शतानि चतुर्नवत्यधिकानि ( ८९४ ) तेषां सप्तषष्ट्या भागो ह्रियते लब्धास्त्रयोदश ( १३ ) शेषास्तिष्ठन्ति त्रयोविंशतिस्त्रयोदशभिश्च पुनर्वस्वन्तानि नक्षत्राणि शुद्धानि ये च शेषास्तिष्ठन्ति त्रयोविंशतिः सप्तषष्टिभागाः ते मुहूर्त्तकरणार्थं त्रिंशता गुण्यन्ते जातानि षट् शतानि नवत्यधिकानि ( ६९० ) तेषां सप्तषष्ट्या भागो ह्रियते लब्धा दश मुहूर्त्ताः ( १० ) शेषास्तिष्ठन्ति विंशतिः सा द्वाषष्टिभागकरणार्थं द्वाषष्ट्या गुण्यते जातानि द्वादशशतानि चत्वारिंशदधिकानि ( १२४० ) तेषां सप्तषष्ट्या भागो ह्रियते लब्धा अष्टादश द्वाषष्टिभागाः शेषास्तिष्ठन्ति चतुस्त्रिंशत् द्वाषष्टिभागस्य सप्तषष्टिभागास्ततः आगतं पुष्यस्य दशसु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्याष्टादशसु द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य चतुस्त्रिंशत्सप्तषष्टिभागेषु गतेषु एकोनविंशतौ च मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य त्रिचत्वारिंशत् द्वाषष्टिभागस्य त्रयस्त्रिंशत् सप्तषष्टिभागेषु

प्रथमा श्रावणमासभाविन्यावृत्तिः प्रवर्त्तते ॥

श्रावणमासभाविद्वितीयावृत्तिविषयं प्रश्नसूत्रमाह–

**ता एएसिणं पंचण्हं संवच्छराणं दोच्चं वासिकिं आउट्टिं चंदे केणं॰ पुच्छा ता संठाणाहिं संठाणाणं सो चेव अभिलावो एक्कारस मुहुत्ता ऊतालीं तेवढ्ढं चेव पुसित्ता तं समं तं च णं सूरे केणं णक्खत्तेणं जोएंति पुच्छा ता पूसेणं पूसस्स णं तं चेव जं पढमाए ॥**

ता एएसिणमित्यादि । ता इति पूर्ववत् एषामनन्तरोदितानां पञ्चानां संवत्सराणां मध्ये द्वितीयां वार्षिकीं श्रावणमासभाविनीमावृत्तिं चन्द्रः केन नक्षत्रेण युनक्ति केन नक्षत्रेण युक्तः सन् चन्द्रो द्वितीयामावृत्तिं प्रारम्भयति एवं प्रश्ने कृते सति भगवानाह ( ता संठाणाहिं इत्यादि ) ता इति पूर्ववत् संस्थानानि संस्थानाशब्देन मृगशिरोनक्षत्रमभिधीयते । तथा च प्रवचने प्रसिद्धेः ततो मृगशिरसा नक्षत्रेण युक्तश्चन्द्रमा द्वितीयां श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति तदानीं च मृगशिरोनक्षत्रस्य एकादश मुहूर्त्ता एकस्य च मुहूर्त्तस्य एकोनचत्वारिंशद् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षट्सप्तषष्टिभागाः शेषास्तथा हि–इह या श्रावणमासभाविन्यावृत्तिः सा प्राक् दर्शितक्रमापेक्षया तृतीया ततस्तत्स्थाने त्रिको ध्रियते सरूपोनः क्रियते इति जातो द्विकस्तेन प्राक्तनो ध्रुवराशिः पञ्च शतानि त्रिसप्तत्यधिकानि (५७३) मुहूर्त्तानाम् । एकस्य च मुहूर्त्तस्य षट्त्रिंशत् (३६) द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षट्सप्तषष्टि (६-६७) भागाः इत्येवंप्रमाणो गुण्यते जातानि एकादश शतानि षट्चत्वारिंशदधिकानि [ ११४६ ] द्वासप्ततिरेकस्य मुहूर्त्तस्य सत्का द्वाषष्टिभागाः [ ७२ ] एकस्य च द्वाषष्टिभागस्य [ ६२ ] द्वादश [ १२ ] सप्तषष्टिभागाः [ ६७ ] तत एतेभ्यो मुहूर्त्तानामष्टभिः शतैरेकोनविंशत्यधिकैरेकस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरेकः परिपूर्णो नक्षत्रपर्यायः शुद्धः । स्थितानि पश्चात् मुहूर्त्तानां त्रीणि शतानि सप्तविंशत्यधिकानि [ ३२७ ] एकस्य च मुहूर्त्तस्य सप्तचत्वारिंशद् [ ४७ ] द्वाषष्टिभागा एकस्य द्वाषष्टिभागस्य त्रयोदश सप्तषष्टिभागाः [ १३ ] तत एतेभ्यस्त्रिभिर्मुहूर्त्तशतैर्नवोत्तरैरेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागै [ ६२ ] रेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागै [ ६७ ] रभिजिदादीनि रोहणीकापर्यन्तानि नक्षत्राणि शुद्धानि तेषु चैव नवोत्तरेषु " रोहिणीया इत्यादि " प्रागुक्तवचनात् । ततः स्थिताः पश्चादष्टादश मुहूर्त्ता एकस्य च मुहूर्त्तस्य द्वाविंशतिद्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य चतुर्दश सप्तषष्टिभागाः [१८] [२२] [ १४ ] एतावता च मृगशिरो न शुद्ध्यति तत आगतं मृगशिरोनक्षत्रमेकादशमुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य एकोनचत्वारिंशद् द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य [ ६२ ] त्रिपञ्चाशत् सप्तषष्टिभागेषु [ ६७ ] शेषेषु द्वितीयां श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति [ तं समयं च णमित्यादि ] तस्मिंश्च समये सूर्यः केन नक्षत्रेण सह योगमुपागतस्तां द्वितीयां वार्षिकीमावृत्तिं युनक्ति भगवानाह [ ता पूसेणमित्यादि ] ता इति पूर्ववत् पुष्येण युक्तः "तं चेव" इति वचनसामर्थ्यादिदं द्रष्टव्यम् । " पुस्सस्स एगूणवीसं मुहुत्ता तेयालीसं च बावट्ठीभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता तेत्तीसं चुण्णिया भागा सेसाइंति " इह सूर्यस्य दशभिरयनैः पञ्च सूर्यनक्षत्रपर्याया लभ्यन्ते द्वाभ्यां चायनाभ्यामेकं तत्रोत्तरायणं कुर्वन् सर्वदैवाभिजिता नक्षत्रेण सह योगमुपागच्छति दक्षिणायनं कुर्वन् पुष्येण तस्य च पुष्यस्य एकोनविंशतौ मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य द्विचत्वारिंशद् द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशत् सप्तषष्टिभागेषु शेषेषु तथा चोक्तम् " अब्भितराहिं निंतो, आइच्चो पुस्सजोगमुवगयस्स । सव्वा आउट्टीओ, करेइ सो सावणे मासं " [ चन्द्र॰ १२पाहु॰ । सूर्य॰ ] श्रावणे मासे सर्वाभ्यन्तरान्मण्डलानतिक्रामन् सूर्यः सर्वा अप्यावृत्तीः करोति पुष्येण सह योगमुपागम्य नान्यथा तत्रापि पुष्यस्य त्रयोविंशति षष्टिभागान् भुक्त्वा [ ते किल जं रिउआवइ एव पच्चवइ चंदेण भागसत्तट्ठी तं पण ] ततस्त्रयोविंशतिसप्तषष्टिभागास्ते किल भागे " राइंदियस्स सूरेण तावइए " इति वचनप्रामाण्यात् सूर्यमधिकृत्य रात्रिंदिवस्य पञ्च भागा द्रष्टव्याः ततस्त्रयोविंशतिः पञ्चभिर्भागा ह्रियन्ते लब्धाश्चत्वारो दिवसास्त्रयश्च पञ्च भागा रात्रिंदिवस्य तत्रैकैकस्मिन् पञ्चभागे षट्मुहूर्ता लभ्यन्ते अहोरात्रो हि त्रिंशन्मुहूर्त्तप्रमाणस्तस्य पञ्चमो भागः षण्मुहूर्त्तप्रमाणो भवतीति त्रिभिश्च पञ्चभागैरष्टादश मुहूर्ताः त्रयाणां षण्णामष्टादशप्रमाणत्वात् तत आगतं चतुर्षु दिवसेषु अष्टादशमुहूर्तेषु पुष्यनक्षत्रस्य भुक्तेषु सर्वाभ्यन्तरितमण्डलाद्बहिः सूर्यो निष्क्रामति तदेवाह–" अट्ठारस य मुहुत्ते, चत्तारि य केवले अहोरत्ते । पुस्सस्स विसयमइगतो, बहिया, अभिनिक्खमइ सूरो " अष्टादशमुहूर्तान् चतुरश्च केवलान् परिपूर्णान् अहोरात्रान् पुष्यनक्षत्रस्य विषयमतिगतः प्राप्तः सन् सूर्यः सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामति ॥ ज्यो॰ १२ पाहु॰ ॥

सम्प्रति श्रावणमासभावितृतीयावृत्तिविषयं प्रश्नसूत्रमाह ।

**ता एएसिणं पंचण्हं संवच्छराणं तच्चं वासिकिं आउट्टिं चंदे केणं णक्खत्तेणं जोएति ता विसाहाहिं विसाहाणं तेणं चेव अभिलावेणं तेरस मुहुत्ता चउप्पन्नं बावट्ठिभागा मुहुत्तस्स चत्तालीसं च चुण्णिया भागा सेसा तं समत्तं च णं सूरे केणं णक्खत्तेणं ता पूसेणं पूसस्स णं तं चेव ॥**

[ ता एएसिणमित्यादि ] सुगमं भगवानाह [ ता विसाहाहिं इत्यादि ] ता इति पूर्ववत् विशाखाभिः विशाखानक्षत्रेण युक्तः सन् चन्द्रमास्तृतीयां श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति तृतीयावृत्तिप्रवर्त्तनसमये विशाखानां विशाखानक्षत्रस्य त्रयोदश मुहूर्त्ताः एकस्य च मुहूर्त्तस्य चतुःपञ्चाशत्सप्तषष्टिभागा एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्वा तस्य सत्काश्चत्वारिंशच्चूर्णिकाभागाः शेषाः । तथा हि–तृतीया श्रावणमासभाविन्यावृत्तिः पूर्वप्रदर्शितक्रमापेक्षया पञ्चमी ततस्तत्स्थाने पञ्चको ध्रियते सरूपोनः कार्य इति जातश्चतुष्कः तेन प्राक्तनो ध्रुवराशिः गुण्यते जातानि द्वाविंशतिशतानि द्विनवत्यधिकानि मुहूर्त्तानां चतुश्चत्वारिंशच्छतं मुहूर्त्तगतानां द्वाषष्टिभागानामेकस्य च द्वाषष्टिभागस्य चतुर्विंशतिसप्तषष्टिभागाः तत एतेभ्य षोडशभिर्मुहूर्त्तशतैरष्टात्रिंशदधिकैरष्टाचत्वारिंशता च द्वाषष्टिभागैर्मुहूर्तस्य द्वाषष्टिभागगतानां च सप्तषष्टिभागानां द्वात्रिंशेन शतेन द्वौ पूर्णौ नक्षत्रपर्यायौ शुद्धौ स्थितानि पश्चात् षट् शतानि चतुःपञ्चाशदधिकानि मुहूर्त्तानां मुहूर्त्तगतानां च द्वाषष्टिभागानां चतुर्नवतिरेकस्य च द्वाषष्टिभागस्य सप्तविंशतिः सप्तषष्टिभागाः तत एतेभ्यः पञ्चभिः शतैरेकोनपञ्चाशदधिकैर्मुहूर्त्तानामेकस्य च मुहूर्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीन्युत्तरफाल्गुनीपर्यन्तानि नक्षत्राणि शुद्धाणि स्थितम् पश्चात् पञ्चोत्तरं मुहूर्त्तशतं मुहूर्त्तगतानां च द्वाषष्टिभागानामेकोनसप्ततिरेकस्य

च द्वाषष्टिभागस्य सप्तविंशतिः सप्तषष्टिभागाः । तत्र द्वाषष्ट्या द्वाषष्टिभागैरेको मुहूर्त्तो लब्धः स्थिताः पश्चात् सप्तद्वाषष्टिभागाः लब्धश्च मुहूर्त्तो मुहूर्तराशौ प्रक्षिप्यते जातं षडुत्तरं मुहूर्त्तशतं ततः पञ्चसप्तत्या मुहूर्त्तैः हस्तादीनि स्वातिपर्यन्तानि नक्षत्राणि शुद्धानि स्थिताः शेषाः एकत्रिंशन्मुहूर्त्ताः आगतं विशाखानक्षत्रस्य त्रयोदशसु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य चतुःपञ्चाशद् द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य चत्वारिंशद्भागेषु शेषेषु चन्द्रस्तृतीयां श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति । सम्प्रति सूर्यनक्षत्रविषयं प्रश्नसूत्रं निर्वचनसूत्रं चाह ' तंसमयं च णमित्यादि ' सुगमम् । चन्द्र० १२ पाहु० । सूर्य० ॥

सम्प्रति श्रावणमासभाविचतुर्थावृत्तिविषयं प्रश्नसूत्रमाह–

ता एएसिणं पंचएहं संवच्छराणं चउत्थिं वासिक्किं आउट्टिं चंदे केणं णक्खत्तेणं जोएति ता रेवतीहिं रेवतीणं पणवीसं मुहुत्ता दुवत्तीसं वावट्ठिमुहुत्तस्स वावट्ठिभागं च सत्तट्ठिहा छेत्ता छ दुवीसं चुण्णिया भागा सेसा तं समत्तं च णं सूरे केणं णक्खत्तेणं जोएति ता पूसेणं पूसस्स णं तं चेव ॥

( ता एएसिणमित्यादि ) सुगमं भगवानाह ( ता रेवईहिं इत्यादि ) रेवत्या युक्तश्चन्द्रः चतुर्थीं श्रावणमासभाविनीमावृत्तिं प्रवर्तयति तदानीं च रेवतीनक्षत्रस्य पञ्चविंशतिमुहूर्त्ता एकस्य च मुहूर्त्तस्य षट्त्रिंशद् द्वाषष्टिभागा एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्त्वा तस्य सत्काः षड्विंशतिचूर्णिकाभागाः शेषास्तथाहि–प्रागुपदर्शितक्रमापेक्षया चतुर्थी श्रावणमासभाविन्यावृत्तिः सप्तमी सप्तको ध्रियते सरूपोनः कार्य इति जातः षट्कः तेन प्राक्तनो ध्रुवराशिः गुण्यते, जातानि चतुस्त्रिंशच्छतानि अष्टात्रिंशदधिकानि ( ३४३८ ) मुहूर्त्तानां मुहूर्त्तगतानां च द्वाषष्टिभागानां द्विशते षोडशोत्तरे ( २१६ ) एकस्य च द्वाषष्टि ६२ ) भागस्य षट्त्रिंश ( ३६ ) त्सप्तषष्टिभागाः ( ६७ ) तत एतेभ्यो द्वात्रिंशता शतैः षट्सप्तत्यधिकैर्मुहूर्त्तानां च द्वाषष्टिभागानां षण्णवत्या द्वाषष्टिभागसत्कानां च सप्तषष्टिभागानां द्वाभ्यां शताभ्यां चतुःषष्टिसहिताभ्यां चत्वारो नक्षत्रपर्यायाः शुद्धाः पश्चादेकं द्वाषष्ट्यधिकं मुहूर्त्तशतं ( १६२ ) मुहूर्त्तगतानां च द्वाषष्टिभागानां षोडशोत्तरं शतम् ( ११६ ) एकस्य च द्वाषष्टिभागस्य चत्वारिंशत् सप्तषष्टिभागाः तत्र एकोनषष्ट्यधिकेन मुहूर्त्तशतेन ( १५९ ) एकस्य च मुहूर्त्तस्य चतुर्विंशतिद्वाषष्टिभागै ( २४–६२ ) रेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागै ( ६६–६७ ) रभिजिदादीन्युत्तरभद्रपदापर्यन्तानि नक्षत्राणि भूयः शुद्धानि । स्थिता पश्चात् त्रयोदशमुहूर्त्तगतानां च द्वाषष्टिभागानामेकनवतिरेकस्य च द्वाषष्टिभागस्य एकचत्वारिंशत्सप्तषष्टिभागाः द्वाषष्ट्या च द्वाषष्टिभागैरेको मुहूर्त्तो लब्धः स मुहूर्त्तराशौ प्रक्षिप्यते एकस्य मुहूर्त्तस्य एकोनचत्वारिंशद् द्वाषष्टिभागाः तत आगतं रेवतीनक्षत्रं पञ्चविंशतौ मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य द्वाविंशतिद्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य षड्विंशतौ सप्तषष्टिभागेषु चतुर्थीं श्राव[ण]भाविनीमावृत्तिं प्रवर्त्तयति ( तंसमयंचणमित्यादि ) सूर्यनक्षत्रविषयं प्रश्नसूत्रं निर्वचनसूत्रं च प्राग्वद्भावनीयम् ।

साम्प्रतं श्रावणमासभाविपञ्चमावृत्तिविषयं प्रश्नसूत्रमाह

ता एएसिणं पंचएहं संवच्छराणं पंचमीं वासिक्किं आउट्टिं चंदे केणं णक्खत्तेणं जोएत्ति ता पुव्वाहिं फग्गुणीहिं पुव्वाणं फग्गुणीणं वारस मुहुत्ता सत्तालीसं च वावट्ठिभागा मुहुत्तस्स वावट्ठिभागं च सत्तट्ठिहा छेत्ता तेरस चुण्णिया भागा सेसा तं समयं च णं सूरे केणं णक्खत्तेणं ता पूसेणं पूसस्स णं एगूणवीसा तेताला तेतीसं चेव चुण्णिता

( ता एएसिणमित्यादि ) सुगमं भगवानाह ( ता पुव्वाहि फग्गुणीहिं इत्यादि ) ता इति पूर्ववत् पूर्वाभ्यां फाल्गुनीभ्यां युक्तश्चन्द्रः पञ्चमीं श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति । तदानीं च तस्य पूर्वफाल्गुनीनक्षत्रस्य द्वादश मुहूर्त्ताः एकस्य च मुहूर्त्तस्य सप्तचत्वारिंशद् द्वाषष्टिभागा एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्त्वा तस्य सत्कास्त्रयोदश चूर्णिकाभागाः शेषाः । तथा हि–पञ्चमी श्रावणमासभाविन्यावृत्तिः प्राक्प्रदर्शितक्रमापेक्षया नवमी ततः तत्स्थाने नवको ध्रियते सरूपोनः कार्य इति , जाता अष्टौ । तैः प्रागुक्तो ध्रुवराशिः गुण्यते जातानि पञ्चचत्वारिंशच्छतानि चतुरशीत्यधिकानि मुहूर्त्तानां मुहूर्त्तगतानां च द्वाषष्टिभागानां द्वे शते अष्टाशीत्यधिके एकस्य च द्वाषष्टिभागस्याष्टाचत्वारिंशत् सप्तषष्टिभागाः तत एतेभ्यश्चत्वारिंशन्मुहूर्त्तशतैः पञ्चनवत्यधिकैर्मुहूर्त्तगतानां च द्वाषष्टिभागानां विंशत्यधिकेन शतेन एकस्य च द्वाषष्टिभागस्य सत्कानां सप्तषष्टिभागानां त्रिंशदधिकैस्त्रिभिः शतैः पञ्चनक्षत्रपर्यायाः शुद्धाः स्थितानि पश्चान्मुहूर्त्तानां चत्वारि शतानि एकोननवत्यधिकानि मुहूर्त्तगतानां च द्वाषष्टिभागानां शतं त्रिषष्ट्यधिकम् एकस्य च द्वाषष्टिभागस्य त्रिपञ्चाशत् सप्तषष्टिभागाः तत एतेभ्यो भूयः त्रिभिः शतैर्नवत्यधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीनि पुनर्वसुपर्यन्तानि नक्षत्राणि शुद्धानि । स्थिता पश्चान्मुहूर्त्तानां नवतिः । मुहूर्त्तगतानां द्वाषष्टिभागानामष्टात्रिंशदधिकं शतम् एकस्य च द्वाषष्टिभागस्य चतुःपञ्चाशत् सप्तषष्टिभागाः तत्र चतुर्विंशत्यधिकेन द्वाषष्टिभागशतेन द्वौ मुहूर्त्तौ लब्धौ, पश्चात् स्थिता द्वाषष्टिभागाश्चतुर्दश लब्धौ च मुहूर्त्तौ मुहूर्त्तराशौ प्रक्षिप्येते जाता मुहूर्त्तानां द्वानवतिः तत्र पञ्चसप्तत्या मुहूर्त्तैः पुष्यादीनि मघापर्यन्तानि त्रीणि नक्षत्राणि शुद्धानि । स्थिताः पश्चात् सप्तदश मुहूर्त्ताः न चैतावता पूर्वफाल्गुनी शुध्यति तत आगतं पूर्वफाल्गुनीनक्षत्रस्य द्वादशमुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य सप्तचत्वारिंशद् द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य त्रयोदशसु सप्तषष्टिभागेषु पञ्चमी श्रावणमासभाविनी आवृत्तिः प्रवर्त्तते । सूर्यनक्षत्रविषयं प्रश्नसूत्रं निर्वचनसूत्रं च प्राग्वद्भावनीयम् ॥ चन्द्र० १२ पाहु० ॥ सूर्य० ॥ ( तदेवं चन्द्रनक्षत्रयोगविषये सूर्यनक्षत्रयोगविषये च पञ्चापि वार्षिकीरावृत्तीः प्रतिपाद्य संप्रति हैमन्तीः प्रतिपिपादयिषुरादौ चन्द्रनक्षत्रविषयकसंग्रहणीं गाथामाह ॥

हत्थेण होइ पढमा, सयभिसयाहि य ततो य पुस्सेण ।
मूलेण कत्तियाहि य, आउट्टीओ य हेमंतो ॥

हेमन्ते माघमासे प्रथमा आवृत्तिर्भवति हस्तेन हस्तनक्षत्रेण युता द्वितीया शतभिषजा तृतीया पुष्येण चतुर्थी मूलेन पञ्चमी कृत्तिकाभिः ॥ ज्यो० १२ पाहु० (विस्तरतो हेमन्तविषयिण्यः प्रथमादिचतस्र आवृत्तयो हेमंतशब्दे प्रतिपादयिष्यन्ते )

इह तावद् माघमासभाविपञ्चम्यावृत्तिविषयं प्रश्नसूत्रमाह ।

ता एएसिणं पंचएहं संवच्छराणं पंचमं हेमंतिआउट्टिं चंदे केणं णक्खत्तेणं जोएति ता कत्तियाहिं कत्तियाणं अट्ठारस मुहुत्ते छत्तीसं च वावट्ठिभागा मुहुत्तस्स वावट्ठिभागं च सत्तट्ठिहा छेत्ता छ चुण्णिया भागा सेसा तं समत्तं च णं सूरे केणं णक्खत्तेणं जोएति ता उत्तराहिं

**आसाढाहिं उत्तराणं आसाढाणं चरिमसमए ॥**

( ता एएसिणमित्यादि ) सुगमं भगवानाह-ता कत्तियाहिं इत्यादि । ता इति पूर्ववत् कृत्तिकानियुक्तश्चन्द्रः पञ्चमीं हैमन्तीमावृत्तिं प्रवर्त्तयति तदानीं च कृत्तिकानक्षत्रस्याष्टादश मुहूर्त्ता एकस्य च मुहूर्त्तस्य षट्त्रिंशतिद्वाषष्टिभागा एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्वा तस्य सत्काः षट् चूर्णिका भागाः शेषास्तथा हि-पञ्चमी माघमासभाविन्यावृत्तिः प्रागुपदर्शितक्रमापेक्षया दशमी ततस्तस्याः स्थाने दशको ध्रियते सरूपोनः कार्य इति जातो नवकः तेन प्राक्तनो ध्रुवराशिः गुण्यते जातान्येकपञ्चाशच्छतानि सप्तपञ्चाशदधिकानि मुहूर्त्तानां मुहूर्त्तगतानां च द्वाषष्टिभागानां त्रीणि शतानि चतुर्विंशत्यधिकानि एकस्य च द्वाषष्टिभागस्य चतुःपञ्चाशत् सप्तषष्टिभागाः तत एतेभ्य एकोनपञ्चाशन्मुहूर्त्तशतैः चतुर्दशाधिकैः मुहूर्त्तगतानां च द्वाषष्टिभागानां चतुःपञ्चचत्वारिंशदधिकेन शतेन द्वाषष्टिभागगतानां च सप्तषष्टिभागानां त्रिभिः शतैः षण्णवत्यधिकैः षट् नक्षत्रपर्यायाः शुद्धाः स्थिते पश्चान्मुहूर्त्तानां द्वे शते त्रिचत्वारिंशदधिके मुहूर्त्तगतानां च द्वाषष्टिभागानां शतमेकोनपञ्चाशदधिकमेकस्य च द्वाषष्टिभागस्य षष्टिः सप्तषष्टिभागा; तत एकोनषष्ट्यधिकेन मुहूर्त्तशतेन एकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीन्युत्तरभद्रपदापर्यन्तानि नक्षत्राणि शुद्धानि । पश्चान्मुहूर्त्तानां चतुरशीतिमुहूर्त्तगतानां च द्वाषष्टिभागानां शतमेकोनपञ्चाशदधिकमेकस्य च द्वाषष्टिभागस्य एकषष्टिः सप्तषष्टिभागाः ततो द्वाषष्टिभागानां चतुर्विंशत्यधिकेन शतेन द्वौ मुहूर्त्तौ लब्धौ पश्चात् स्थिताः पञ्चाशद् द्वाषष्टिभागाः लब्धौ च मुहूर्त्तौ मुहूर्त्तराशौ प्रक्षिप्येते जाता षडशीतिर्मुहूर्त्तानां ततः पञ्चसप्तत्या मुहूर्त्तानां रेवत्यश्विनीभरण्यः शुद्धाः स्थिताः पश्चादेकादश मुहूर्त्ताः शेषं तथैव तत आगतं कृत्तिकानक्षत्रस्याष्टादशसु मुहूर्त्तेष्वेकस्य मुहूर्त्तस्य षट्त्रिंशति द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य षट्सु सप्तषष्टिभागेषु शेषेषु पञ्चमी हैमन्ती आवृत्तिः प्रवर्त्तते । सूर्यनक्षत्रयोगविषये प्रश्ननिर्वचनसूत्रे सुगमे तदेवमुक्ता दशापि नक्षत्रयोगमधिकृत्य सूर्यस्यावृत्तयः । सम्प्रति चन्द्रस्य वक्तव्याः । तत्र यस्मिन्नेव नक्षत्रे प्रवर्त्तमानः सूर्यो दक्षिणामुत्तरां वा आवृत्तिं करोति तस्मिन्नेव नक्षत्रे प्रवर्त्तमानश्चन्द्रोऽपि दक्षिणामुत्तरां वा आवृत्तिं कुरुते ततो या उत्तराभिमुख्य आवृत्तयो युगे चन्द्रस्य दृष्टास्ताः सर्वा अपि नियतमभिजिता नक्षत्रेण सह योगे द्रष्टव्याः याश्च दक्षिणाभिमुखाः ताः पुष्येण चन्द्रयोगे उक्तं च-" चंदस्स वि नायव्वा, आउट्टीओ जुगम्मि जा दिट्ठा। अभिईए पुस्सेण य. निययं नक्खत्तमासेणं" अत्र नक्खत्तमासेणंति । नक्षत्रार्द्धमासेन शेषं सुगमम् । तत्राभिजित्युत्तराभिमुखा आवृत्तयो भाव्यन्ते यदि चतुस्त्रिंशदधिकेनायनशतेन चन्द्रस्य सप्तषष्टिनक्षत्रपर्याया लभ्यन्ते ततः प्रथमे अयने किं लभ्यते राशित्रयस्थापना । १३४ । ६७ । १ । अत्रान्त्येन राशिना एकैकलक्षणेन मध्यमस्य राशेः सप्तषष्टिरूपस्य गुणनं जाता सप्तषष्टिरेव एकेन गुणने तदेव भवतीति वचनात् । तस्याश्च सप्तषष्टिश्चतुस्त्रिंशदधिकेन शतेन भागे हृते लब्धमर्द्धमेकं पर्यायस्य तस्मिंश्चार्द्धे नव शतानि पञ्चदशोत्तराणि सप्तषष्टिभागानां भवन्ति तत्र त्रयोविंशतौ सप्तषष्टिभागेषु पुष्यस्य नक्षत्रस्य भुक्तेषु दक्षिणायनं चन्द्रः कृतवान् ततः शेषाश्चतुश्चत्वारिंशत् सप्तषष्टिभागा अनन्तरोदितराशेः शोध्यन्ते स्थितानि शेषाणि अष्टौ शतान्येकसप्तत्यधिकानि (८७१) तेषां सप्तषष्ट्या भागो ह्रियते इह कानिचित् नक्षत्राण्यर्द्धक्षेत्राणि तानि सार्द्धत्रयस्त्रिंशत्सप्तषष्टिभागप्रमाणानि कानिचित् समक्षेत्राणि तानि परिपूर्णसप्तषष्टिभागप्रमाणानि कानिचित् द्व्यर्द्धक्षेत्राणि तान्यर्द्धक्षेत्राधिकशतसंख्यसप्तषष्टिभागप्रमाणानि गात्रं त्वधिकृत्य सप्तषष्ट्या शुद्ध्यति ततः सप्तषष्ट्या भागहरणं लब्धास्त्रयोदश राशिश्चोपरितनो निर्लेपतः शुद्धस्तैश्च त्रयोदशभिरश्लेषादीनि उत्तराषाढापर्यन्तानि शुद्धानि तत आगतमभिजितो नक्षत्रस्य प्रथमसमये चन्द्र उत्तरायणं करोति एवं सर्वाण्यपि चन्द्रस्योत्तरायणानि वेदितव्यानि उक्तं च-" पन्नरसेसु मुहुत्ते, जोइत्ता उत्तरासाढा उ । एकं च अहोरत्तं, पविसइ अब्भितरे चंदो " अधुना पुष्ये दक्षिणा आवृत्तयो भाव्यन्ते यदि चतुस्त्रिंशदधिकेनायनशतेन सप्तषष्टिश्चन्द्रस्य पर्याया लभ्यन्ते तत एकेनायनेन किं लभामहे । राशित्रयस्थापना १३४।६७।१ अत्रान्त्येन राशिना एकैकलक्षणेन मध्यराशिः सप्तषष्टिरूपस्य गुणनं जाता सप्तषष्टिरेव तस्याश्चतुस्त्रिंशेन शतेन भागहरणं लब्धमेकमर्द्धं पर्यायस्य भागरूपाणि नव शतानि पञ्चदशोत्तराणि ९१५ ततः एकविंशतिरभिजितः संबन्धिनः सप्तषष्टिभागाः शोध्यन्ते स्थितानि पश्चादष्टौ शतानि चतुर्नवत्यधिकानि ८९४ तेषां सप्तसप्तष्ट्या भागो ह्रियते लब्धास्त्रयोदश तैश्च त्रयोदशभिः पुनर्वस्वन्तानि नक्षत्राणि शुद्धानि शेषास्तिष्ठन्ति त्रयोविंशतिः एते च किल सप्तषष्टिभागा अहोरात्रस्य ततो मुहूर्तभागकरणार्थं त्रिंशता गुण्यन्ते जातानि षट् शतानि नवत्यधिकानि ६९०। तेषां सप्तषष्ट्या भागे हृते लब्धा दश मुहूर्त्ताः शेषास्तिष्ठन्ति विंशतिः सप्तषष्टिभागास्तत इदमागतं पुनर्वसुनक्षत्रे सर्वात्मना भुक्ते पुष्यस्य च दशसु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य विंशतौ सप्तषष्टिभागेषु भुक्तेषु सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामति चन्द्रः । एवं सर्वाण्यपि दक्षिणायनानि भावनीयानि उक्तं च-" दस य मुहुत्ते सगले, मुहुत्तभागे य वीसई चेव । पुस्सविसयमइगओ, बहिया अभिनिक्खमइ चंदो " ( चंद० १३ पाहु० ) साम्प्रतं येन नक्षत्रेण युक्तश्चन्द्रमा अभ्यन्तरं प्रविशन् बहिर्वा निष्क्रामन् आवृत्तीः करोति तत्प्रतिपादनार्थमाह ॥

**चंदस्स वि नायव्वा, आउट्टीओ जुगम्मि जा दिट्ठा ।**
**अभिईए पुस्सेण य, नियय नक्खत्तसमासेणं ॥**

यस्मिन्नेव नक्षत्रे वर्त्तमानश्चन्द्रोऽपि ततो नक्षत्रेण नक्षत्रार्द्धमासतया उत्तराभिमुखा आवृत्तयो युगे दृष्टास्ता नियतमभिजिता नक्षत्रेण युगे द्रष्टव्या याश्च युगे दृष्टा दक्षिणाभिमुखा आवृत्तयस्ताः पुष्येण योगे तत्राभिजित्युत्तरावृत्तयो भाव्यन्ते । यदि चतुस्त्रिंशदधिकेनायनं तेन चन्द्रस्य सप्तषष्टिनक्षत्रपर्याया लभ्यन्ते ततः प्रथमे अयने किं लभ्यते । राशित्रयस्थापना । १३४। ६७।१ अत्रान्त्येन राशिना एकैकलक्षणेन मध्यमहरणं लब्धमर्द्धमेकमर्द्धं पर्यायस्य तच्च सप्तषष्टिभागरूपाणि नव शतानि पञ्चदशोत्तराणि (९१५) तत एकविंशतिरभिजितः संबन्धिनःसप्तषष्टिभागाः शोध्यन्ते स्थितानि पश्चादष्टौ शतानि चतुर्नवत्यधिकानि (८९४) तेषां सप्तषष्ट्या भागो ह्रियते लब्धास्त्रयोदश तैश्च त्रयोदशभिः पुनर्वस्वन्तानि नक्षत्राणि शुद्धानि शेषास्तिष्ठन्ति त्रयोविंशतिः एते च किल सप्तषष्टिभागा अहोरात्रस्य ततो मुहूर्त्तभागकरणार्थं ते त्रिंशता गुण्यन्ते जातानि षट् शतानि नवत्यधिकानि । ६९० तेषां सप्तषष्ट्या भागे हृते लब्धा दश मुहूर्त्ताः शेषास्तिष्ठन्ति विंशतिरागतं पुनर्वसुनक्षत्रे सर्वात्मना भुक्ते पुष्यस्य दशमुहूर्त्तेषु विंशतौ च मुहूर्त्तस्य सप्तषष्टिभागेषु भुक्तेषु सर्वाभ्यन्तरान्मण्ड-

लाद्वहिर्निष्कामति चंद्रः तथाचाह–"दस य मुहुत्ते सगले मुहुत्त-भागे य वीसई चेव । पुस्स विसयमभिगओ वहियां अंभिनि-क्खमईचंदो,, ॥ चंद्र० ॥

चंद्रो दश सकलान् परिपूर्णान् मुहूर्त्तान् मुहूर्त्तभागांश्च सप्तषष्टिरूपान् विंशतिपुष्यविषयमभिगतः सन् सर्वाभ्यंतरान्मंडलाद्वहिर्निष्कामति चंद्रः ॥ ज्यो० ॥ सूर्य० ॥

आउट्टि (न्)–आकुट्टिन्–त्रि०–यो हि जानन्नवगच्छन् प्राणिनो हिनस्ति स आकुट्टी-कुट्ट छेदने-आकुट्टनमाकुट्टः स विद्यते यस्येति।छेदनभेदनादिव्यापारवति,सूत्र.।जाणं कायेण णाउट्टी, सूत्र० । ज्ञानपूर्वकव्यापारवति, ॥ अनापद्यप्यकार्य्यकारके च "आउट्टियाए पाणाइवायं करेमाणे सवले"दशा० सूत्र०॥ (आउट्टीति)यो जानन् करोत्यापद्रहितो वा करोतीति वृत्तिः । दशा० ॥

आवर्तिन्–त्रि० आ+वृत्-णिनि, पुनः पुनर्वर्त्तनशीले, वाच०॥

आउट्टिऊण–आवर्त्य–अ० आवर्ज्येत्यर्थे, व्य० ॥

आउट्टिज्जमाण–आकोट्यमान–त्रि० संकोच्यमाने, सूत्र० ॥

आउट्टिणी–आवर्तिनी–स्त्री० आवर्त्तः मेषशृङ्गाकारवेष्टनमस्त्यस्याः इति ङीप् अजशृङ्गीवृत्ते,राजनि० ॥वाच०॥

आउट्टित्तए–आउट्टितुम्–अव्य० कारयितुमित्यर्थे,एतादृश एवायं धातुस्सैद्धांतिकः करणार्थ इति ॥ कल्प० ॥

आउट्टिम–आकोट्टिम–न० उत्कीर्णे, "आकोट्टिमं जधारूवं ओहेट्ठावि उवरि वि मुहं काऊण आउट्टिज्जति,, दशा० ॥

आउट्टिय–आउट्टित–त्रि० कृते,कल्प० ॥

आकुट्टित–त्रि०छिन्ने, सूत्र० ॥ ज्ञानपूर्वककृते, ॥ दशा० ॥

आउट्टिया–आउट्टिका–स्त्री० करणे, ॥ कल्प० ॥

आकुट्टिका-स्त्री० छेदनभेदनादिव्यापारे, ॥ सूत्र० ॥ ज्ञानपूर्वकव्यापारे, ॥ दशा० ॥ जीत० ॥ सम० ॥ प्रव० ॥ आभोगे, नि० चू० ॥

आवृत्तिका–स्त्री० समन्तात्प्रवर्त्तने, अभिलाषायां च, । आचा० आराधनायाम्, व्य० ॥ नि० चू० ॥

आवर्जने ॥ व्य० ॥ अभिमुखीभूय वर्तने, ॥ नं० ॥ निवर्तने, ॥ सूत्र० ॥

आउट्टीकम्म–आकुट्टीकर्म्मन्–न० आकुट्या कृतं कर्म्म आगमोक्तकारणमंतरेणोपेत्य प्राण्युपमर्द्दनेन विहिते कर्म्मणि, ॥ ( जं आउट्टीकम्मं तं परिण्णाय विवेगमेंति ) । आचा० ।

आकुट्टीकृतकर्म्मणि तु यद्विधेयं तदाह–( जं आउट्टी इत्यादि ) यत्तु पुनः कर्म्माकुट्या कृतमागमोक्तकारणमंतरेणोपेत्य प्राण्युपमर्द्दनेन विहितं तत्परिज्ञाय ज्ञपरिज्ञया विवेकमेति विविच्यतेऽनेनेति विवेकः प्रायश्चित्तं दशविधं तस्यान्यतरभेदमुपैति तद्विवेकं वा भावाख्यमुपैति तत्करोति येन कर्म्मणोऽभावो भवति ॥ टी० आचा० ॥

आउड–आवृत्–स्त्री० आ+वृत्–सम्प० क्विप् । १ आवर्त्तने २ भ्रमणे ३ पुनः पुनश्चालने, ४पुनःपुनरेकजातीयक्रियाकरणे, आधारे क्विप् ५ परिपाट्याम्, अनुक्रमे ६ इति कर्त्तव्यताप्रकारे ७ संस्कारे च ८तूष्णीम्भावे च कर्तरि क्विप् ९ आवर्तमाने, त्रि० । वाच० ।

आवृत–त्रि० आ+वृ क्त १ कृतावरणे, अप्रकाशावृते, आच्छादिते, ॥ स्था० ॥ २ संकीर्णवर्णभेदे, पुं० स्त्री० स्त्रियां जातित्वात् ङीप् ॥ वाच० ॥

आउडावेइत्ता–आखोट्य–अ० प्रवेशयित्वेत्यर्थे, ॥ वि० ॥

आउडिज्जमाण–आजोड्यमान–त्रि० सम्बध्यमाने, जुड बन्धने इति वचनात् ॥ भ० ॥ (आकुट्यमान–त्रि०)परस्परेणाभिहन्यमाने, । भ० । "छउमत्थेणं भंते ! मणूसे आउडिज्जमाणाइं सद्दाइं सुणेइ" ॥ भ० । सूत्र० ॥ आउडिज्जमाणा इति ॥ जुड-बंधने इति वचनात् आजोड्यमानेभ्यः सम्बध्यमानेभ्यो मुखहस्तदंडादिना सह शंखपटहझल्लर्यादिभ्यो वाद्यविशेषेभ्य आकुट्यमानेभ्यो वा,एभ्य एव ये जाताः शब्दास्त आजोड्यमाना एव आकुट्यमाना एव वा उच्यन्ते, अतस्तानाजोड्यमानानाकुट्यमानान्वा, शब्दान् शृणोति । इह च प्राकृतत्वेन शब्दशब्दस्य नपुंसकनिर्देशः, अथवा,(आउडिज्जमाणा इति) आकुट्यमानानि परस्परेणाभिहन्यमानानि ॥ टी० भ० ॥

आउडिय–आकुट्टित–त्रि० अंकिते; ॥ अनु० ॥

आउडेमाण–आकुट्टयत्–त्रि० ताडयति; ॥ भ० ॥

आउड्ड–मस्ज–धा०स्नाने,–तुदा०पर०अक० अनिट्–"मस्जेराउड्ड णिउड्ड बुड्ड थुट्ट खुप्प"इति सूत्रेण मस्जेराउड्ड इत्यादेशः आउड्डइ–मज्जइ–मज्जतीत्यर्थः ॥ प्रा० व्या० ॥

आउत्त–आगुप्त–त्रि० संरक्षिते, स्था० । संयते, पुं० संयतसम्बन्धिनि गमनादौ च । त्रि० ॥ भ०. ॥ "आउत्तं गमणं' भ० सू०॥ आगुप्तस्य संयतस्य सम्बन्धि यत्तदागुप्तमेवेति वृत्तिः॥ भ० ॥

आयुक्त–न० आ युज् क्त उपयोगे, ॥ भ० ॥ "आउत्तं वत्थपडिग्गहकंवलपायपुंछणं गेण्हमाणस्स,, ॥ भ० सू०॥ उपयोगपूर्वकमित्यर्थ इति वृत्तिः ॥ भ० ॥ उपयोगवति, संस्ता० ॥ उपयुक्ते, ॥ स्था० ॥ ध० ॥ सूत्र० ॥

तथाच प्रशस्तकायविनयभेदानुद्दिश्योक्तम्

"आउत्तं गमणं आउत्तं ठाणं आउत्तं णिसीयणं आउत्तं तुयट्टणं आउत्तं उल्लंघणं आउत्तं पल्लंघणं आउत्तं सव्विंदियजोगजुंजणया० ॥ भ०सू० ॥ स्था०सू० ॥

आयुक्तं गमनं आयुक्तस्योपयुक्तस्य संलीनयोगस्य यदिति वृत्तिः॥ स्था० ॥ समन्तादुपयुक्ते, ॥ आ०म० ॥ प्रयत्नपरे, ओ० ॥ शिक्षिते च, त्रि० ॥ "असिकंटकविसमादिसु गच्छंतो सिक्खिओ विजत्तेणं । चुक्केइ एमेव मुणी छलिज्जती अप्पमत्तोवि,, सिक्खिओवि आउत्तो विलंछिज्जतीति । नि०चू० संयमार्थिनि च "संजमट्ठाएत्ति वा आउत्तेति वा अविधिपरिहारित्ति वा एगट्ठा इति" आ०चू० ॥ आ युज् कर्म्मणि क्त ॥ सम्यग्व्यापारिते, भावे क्त । सम्यग्नियोजने, न० आयुक्तमनेन इष्टा० इनिः आयुक्ती सम्यग्नियोजनकर्त्तरि, त्रि० स्त्रियां ङीप् ॥ वाच० ॥

आउदव्व–आयुर्द्रव्य–न० आयुःसाधनं द्रव्यम् शा० त० ॥ औषधे, रत्नमालायाम् । आयुःसाधने घृते, च । आयुर्वै घृतमित्युक्तेः घृतस्यायुर्जनकत्वात्तथात्वम् ॥ वाच० ॥

आउपरिणाम–आयुष्परिणाम–पुं० आयुषः कर्मप्रकृतिविशेषस्य परिणामः स्वभाव इति–आयुषः स्वभावे, ॥ स्था० ॥ तस्य भेदाः स्थानाङ्गे यथा–

विहे आउपरिणामे प० तंजहा गइपरिणामे, गइबन्धणपरिणामे, ठिइपरिणामे, ठिइबन्धणपरिणामे, उड्ढगौरवपरिणामे, अहेगौरवपरिणामे, तिरियंगौरवपरिणामे, दीहंगौरवपरिणामे, हरस्संगौरवपरिणामे, ।। स्था० मू०।।

(परिणामेत्यादि)–आयुषः कर्मप्रकृतिविशेषस्य परिणामः स्वभावः शक्तिर्द्धर्म्म इत्यायुःपरिणामः । तत्र गति र्देवादिका तां नियतां येन स्वभावेनायुर्जीवं प्रापयति स आयुषां गतिपरिणामस्तथा येनायुःस्वभावेन प्रतिनियतगतिकर्मबन्धो भवति । यथा नारकायुः स्वभावेन मनुष्यतिर्यग्गतिनामकर्म बध्नाति तदेव नारकगतिनामकर्मेति स गतिबंधनपरिणामस्तथा आयुषो याऽन्तर्मुहूर्त्तादि त्रयस्त्रिंशत्सागरोपमान्ता स्थितिर्भवति स स्थितिपरिणामस्तथा येन पूर्वभवायुःपरिणामेन परभवायुषो नियतां स्थितिम्बध्नाति स स्थितिबंधनपरिणामः । यथा–तिर्यगायुः परिणामेन देवायुष उत्कृष्टतोऽप्यष्टादशसागरोपमाणीति । तथा येन आयुःस्वभावेन जीवस्योर्ध्वादिशि गमनशक्तिलक्षणपरिणामो भवति स ऊर्ध्वगौरवपरिणामः। इह गौरवशब्दो गमनपर्याय एवमितरौ द्वाविति । तथा यत आयुःस्वभावात् जीवस्य दीर्घं दीर्घगमनतया लोकान्तात् लोकांतं यावद्गमनशक्तिर्भवति स दीर्घगौरवपरिणामःएवं च यस्मात् ह्रस्वं गमनं स ह्रस्वगौरवपरिणामः सर्वत्र प्राकृतत्वादनुस्वार इत्यन्यथाऽप्यूह्यमेतदिति ॥ टी० स्था० ॥

आउबहुल–अब्बहुल–त्रि० । प्रचुरजलोपेते, ॥ सम० ॥ "नो चेवणं आउबहुले भविस्सइ" बह्वप्कार्यमित्यर्थः ॥ भ० ॥

आउबहुलकंड–अब्बहुलकाण्ड–न० । प्रचुरजलोपेते रत्नप्रभायास्तृतीये काण्डे, तत्प्रमाणादि–

आउबहुलेकंडे असीइजोयणसहस्साइं वाहल्लेणं प०।।सम० ।।

रत्नप्रभाया अशीत्युत्तरयोजनलक्षबाहल्यायास्त्रीणि कांडानि भवन्ति । तत्र प्रथमं रत्नकांडं षोडशविधरत्नमयं षोडशसहस्रबाहल्यम् । द्वितीयं पंककांडं चतुरशीतिसहस्रमानम् । तृतीयमब्बहुलकांडमशीतिर्योजनसहस्राणीति ॥ टी० सम०॥

आउब्भेय–आयुर्भेद–पुं० आयुषो जीवितस्य भेद उपक्रमः आयुर्भेदः । स्था० । आयुष उपघाते, ॥ आ०चू० ॥ आ० म० ॥ (तन्निमित्तान्यायुःशब्दे ) स च सप्तविधनिमित्तत्वात्सप्तविधः सत्त विहे आउभेदे प० तंजहा "अज्झवसाणनिमित्ते आहारे वेयणा पराघाए । फासे आणा पाणू सत्तविधं भिज्जए आऊ" ।। स्था० मू० ।।

अध्यवसानं रागस्नेहभयात्मकोऽध्यवसायो निमित्तं दंडकशाशस्त्रादीति समाहार द्वंद्वस्तत्र सति आयुर्भिद्यत इति संबंधः तथा आहारे भोजनेऽधिके सति तथा वेदना नयनादिपीडा पराघातो गर्त्तपातादिसमुत्थः।इहापि समाहारद्वंद्व एव तत्र सति तथा स्पर्शे तथाविधभुजङ्गादिसंबंधिनि सति तथा (आणापाणुत्ति) उच्छ्वासनिःश्वासौ निरुद्धावाश्रित्येति एवं च सप्तविधं यथा भवति तथा भिद्यते आयुरिति । अथवा अध्यवसानमायुःउपक्रमकारणमिति शेषः । एवं निमित्तमित्यादि यावदाणापाणुत्ति व्याख्येयं प्रथमैकवचनान्तत्वाद ध्यवसानादिपदानामेवं सप्तविधत्त्वादायुर्भेदहेतूनां सप्तविधं यथा भवति तथा भिद्यते आयुरिति ॥ टी० स्था० ॥

आउय–आयुष्क–न० । जीविते, ॥ उत्त०॥ संस्ता०॥आ० म० ॥ भवस्थितिहेतौ, कर्म्मपुद्गले च ॥ आचा० ॥ स्था० ॥ आयुषा कायति कै-क आयुषा प्रकाशमाने प्रशस्तायुष्के, ॥ वाच० ॥

आवुक-पु०अवति रक्षति अव् धा० उण् संज्ञायां कन् नाट्योक्तौ जनके, ॥ वाच० ॥ स्था० ॥

आउयपरिहाणि–आयुष्कपरिहानि–स्त्री० । प्रतिक्षणायुष्कक्षये, पंचा० ॥

आउयबंध–आयुष्कबन्ध–पु० । आयुषो बन्ध इति ॥ स्था० ॥ आयुषो निषेके, स च प्रतिसमयम्बहुहीनहीनतरस्य दलिकस्यानुभवनार्थं रचनेति ॥ सम० ॥

( तद्भेदा भगवत्यां यथा ) कइविहेणं भंते ! आउयबंधे पण्णत्ते ? गोयमा ! छव्विहे आउयबंधे पण्णत्ते, तंजहा–जाइनामनिहत्ताउए, गइनामनिहत्ताउए, ठिइनामहित्ताउए, ओगाहणानामनिहत्ताउए, पएसनामनिहत्ताउए, अणुभागनामनिहत्ताउए, दंडओ जाव ।। भ० ६ ।। श० ।। ८ उद्दे० ।। प्रज्ञा० ।। स्था० ।। सम० ।।

टी० ( जाइनामनिहत्ताउयत्ति )जातिरेकेन्द्रियजात्यादिः पञ्चधा सैव नाम इति नामकर्मणा उत्तरप्रकृतिविशेषो जीवपरिणामो वा तेन सह निधत्तं निषिक्तं ॥ टी०भ० ॥ अनुभवनार्थं बहल्पाल्पतरक्रमेण व्यवस्थापितं यदायुस्तज्जातिनामनिधत्तायुः । निषेकस्त्व कर्मपुद्गलानां प्रतिसमयमनुभवनार्थं रचनेति. ॥ भ० ॥ ६ । ८ । उक्तं च–"मोत्तूण सगमवाहं पढमाए ठिईए बहुतरं दव्वं । सेसे वि सेसहीणं जावुक्कोस्संति सव्वासिं"ति ॥ स्था०॥ ( गइनामनिहत्ताउएत्ति. ) गतिर्नारकगत्यादिभेदाच्चतुर्धा तल्लक्षणं नाम कर्म्म तेन सह निधत्तं निषिक्तमायुर्गतिनामनिधत्तायुः ॥ सम० ॥ ( ठिइनामनिधत्ताउएत्ति ) स्थितिरिति यत्स्थातव्यं क्वचिद्विवक्षितभवे जीवेनायुः कर्म्मणा वा सैव नाम परिणामो धर्म्मः स्थितिनामस्तेन विशिष्टं निधत्तं यदायुर्दलिकरूपं तत्स्थितिनामनिधत्तायुः । अथवेह सूत्रे जातिनामगतिनामावगाहनानामग्रहणाज्जातिगत्यवगाहनानां प्रकृतिमात्रमुक्तं स्थितिप्रदेशानुभागनामग्रहणात्तु तासामेव स्थित्यादय उक्तास्ते च जात्यादिनामसम्बन्धित्वान्नामकर्म्मरूपा एवेति, नामशब्दः सर्वत्र कर्म्मार्थो घटत इति, स्थितिरूपं नामकर्म्मस्थितिनामस्तेन निधत्तं यदायुस्तत्स्थितिनामनिधत्तायुरिति । यत् यस्मिन् भवे उदयमागमनमवतिष्ठते तद्गतिजातिशरीरपञ्चकादिव्यतिरिक्तं स्थितिनामावसेयमितिभावः । गत्यादीनां वर्जनं तेषां स्वपदैः ( गइनामनिहत्ताउए ) इत्यादिभिरुपात्तत्वात्, ॥ प्रज्ञा० ॥ ( ओगाहणानामनिधत्ताउएत्ति ) । अवगाहते यस्यां जीवः सा अवगाहना शरीरमौदारिकादि तस्या नाम औदारिकादिशरीरनामकर्मेत्यवगाहना नाम अवगाहनारूपो वा, नामः परिणामोऽवगाहनानामस्तेन सह यन्निधत्तमायुस्तदवगाहनानामनिधत्तायुः ( पएसनामनिहत्ताउएत्ति ) प्रदेशानामायुःकर्म्मद्रव्याणां नामस्तथाविधा परिणतिः प्रदेशनामः प्रदेशरूपं वा, नामकर्मविशेष इत्यर्थः, प्रदेशनामः ॥ भ० ॥ प्रदेशाः कर्मपरमाणवस्ते च प्रदेशाः सक्रमतोऽप्यनुभूयमानाः परिगृह्यन्ते, तत्प्रधानं नाम प्रदेशनाम किमुक्तं भवति–यत् यस्मिन् भवे प्रदेशतोऽनुभूयते तत्प्रदेशनामेति

अनेन विपाकोदयमप्राप्तमपि नामपरिगृहीतम् ॥ प्रज्ञा० ॥ प्रदेशानाम्प्रमितपरिणामानामायुः कर्मदलिकानां नामः परिणामोदयः तथात्मप्रदेशेषु सम्बन्धनं स प्रदेशनामो जातिगत्यवगाहना कर्म्मणांवा यत्प्रदेशरूपं नाम कर्म्म तत्प्रदेशनाम ॥ सम० ॥ तेन सह यन्निधत्तमायुस्तत्प्रदेशनामनिधत्तायुरिति॥ ( अणुभागनामनिधत्ताउयत्ति ) । अनुभाग आयुर्द्रव्याणामेव विपाकः॥भ०॥ तीव्रादिभेदो रसः ॥ सम० ॥ तल्लक्षण एव नाम परिणामोऽनुभागनामोऽनुभागरूपं वा नामकर्म्मानुभागनाम ॥भ०॥ स चेह प्रकर्षप्राप्तः परिगृह्यते। तत्प्रधानं नाम अनुभावनाम यत् यस्मिन् भवे तीव्रविपाकं नामकर्मानुभूयते यथा नारकायुषि अशुभवर्णगन्धरसस्पर्शोपघातानादेयदुःस्वरायशोकीर्त्यादिनामानि तदनुभावनाम ॥ प्रज्ञा० ॥ अथवा गत्यादीनां नामकर्म्मणामनुभागबन्धरूपो भेदोऽनुभागनाम ॥ सम० ॥ तेन सह निधत्तं यदायुस्तदनुभागनामनिधत्तायुरिति । अथ किमर्थं जात्यादिनामकर्म्मभिरायुर्निशिष्यते ? उच्यते- आयुष्कस्य प्राधान्योपदर्शनार्थं यस्मान्नारकाद्यायुरुदये सति जात्यादिनामकर्म्मणामुदयो भवति ( भ० ) नान्यथेति भवत्यायुषः प्रधानता ॥ प्रज्ञा० ॥

नारकादिभवोपग्राहकं चायुरेव । यस्मादुक्तमिहैव ।

"नेरइएणं भंते ! नेरइएसु उववज्जइ अनेरइए नेरइएसु उववज्जइ ? गोयमा ! नेरइए नेरइएसु उववज्जइ नो अनेरइए नेरइएसु उववज्जइत्ति" ॥

एतदुक्तम्भवति नारकायुः प्रथमसमयसंवेदन एव नारक उच्यते तत्सहचारिणाश्च पञ्चेन्द्रियजात्यादिनामकर्म्मणामप्युदय इति । इह चायुर्बन्धस्य षड्विधत्वे उपक्षिप्ते यदायुषः षड्विधत्वमुक्तं तदायुषोबन्धाव्यतिरेकाद्बन्धस्यैव चायुर्व्यपदेशविषयत्वादिति । दंडओत्ति नेरइयाणं भंते ! कइविहे आउयबंधे पन्नत्ते इत्यादि । वैमानिकान्तश्चतुर्विंशतिदण्डको वाच्योऽत एवाह--जाव वेमाणियाणंति ॥ भ० ॥ प्रज्ञा० ॥ सम० ॥ स्था० ॥

अथ कर्मविशेषाधिकारात्तद्विशेषितानां जीवादिपदानां द्वादश दण्डकानाह–जीवा णं भंते ! किं जाइनामानिहत्ता जाव अणुभागनामनिहत्ता ? गोयमा ! जाइनामनिहत्तावि जाव अणुभागनामनिहत्तावि दंडओ जाव वेमाणियाणं जीवाणं भंते ! किं जाइनामानिहत्ताउया जाव अणुभागनामनिहत्ताउया? गोयमा ! जाइनामनिहत्ताउयावि जाव अणुभागनामानिहत्ताउयावि दंडओ जाव वेमाणियाणं एवं एए दुवालस दंडगो भाणियव्वा। जीवा णं भंते ! किं जाइनामनिहत्ता ? जाइनामानिहत्तउया २ जाइनामनिउत्ता ३ जाइनामनिउत्ताउया ४ जाइगोयनिहत्ता ५ जाइगोयनिहत्ताउया ६ जाइगोयनिउत्ता ७ जाइगोयनिउत्ताउया ८ जाइनामगोयनिहत्ता ९ जाइनामगोयनिहत्ताउया १० जाइनामगोयनिउत्ता ११ जाइनामगोयनिउत्ताउया १२ जाव अणुभागनामगोयनिउत्ताउया ? गोयमा ! जाइनामगोयनिउत्ताउयावि जाव अणुभागनामगोयनिउत्ताउयावि दंडओ जाव वेमाणियाणं ॥भ० ॥ श० ॥ ६ ॥ उ० ॥ ८॥ ( जाइनामनिहत्तत्ति ) जातिनाम निधत्तं निषिक्तं विशिष्टबन्धं वा कृतं यैस्ते जातिनामनिधत्ताः। एवं गतिनामनिधत्ताः । यावत्करणात् ठिइनामनिहत्ता, ओगाहणानाम निहत्ता, पएसनामनिहत्ता, अनुभागनाम निहत्ता, इति दृश्यम् । व्याख्या तथैव नवरं जात्यादिनाम्ना या स्थितिर्ये च प्रदेशा यश्चानुभागस्तत्स्थित्यादिनाम अवगाहनानाम शरीरनामेति । अयमेको दंडको वैमानिकान्तः तथा (जाइनामनिहत्ताउयत्ति )। जातिनाम्ना सह निधत्तमायुर्यैस्ते जातिनामनिधत्तायुष एवमन्यान्यपि पदानि अयमन्यो दण्डकः २ एवमेते (दुवालसदंडगत्ति ) अमुना प्रकारेण द्वादश दण्डका भवन्ति,तत्र द्वावाद्यौ दर्शितावपि संख्यापूरणार्थं पुनर्दर्शयति जातिनामनिधत्ता इत्यादिरेकः, जाइनामनिहत्ताउया इत्यादिर्द्वितीयः, जीवा णं भंते ! किं जाइनामनिउत्ता इत्यादिस्तृतीयः, तत्र जातिनामनियुक्तं नितरां युक्तं सम्बद्धं निकाचितं वेदने वा नियुक्तं यैस्ते जातिनामनियुक्ता एवमन्यान्यपि,५ जाइनामनिउत्ताउया इत्यादिश्चतुर्थः । तत्र जातिनाम्ना सह नियुक्तं निकाचितं वेदयितुमारब्धं वायुर्यैस्ते । तथा एवमन्यान्यपि ५ जाइगोयनिहत्ता इत्यादिः पञ्चमः । तत्र जातेरेकेन्द्रियादिकाया यदुचितं गोत्रं नीचैर्गोत्रादि तज्जातिगोत्रं तन्निधत्तं यैस्ते जातिगोत्रनिधत्तायुष एवमन्यान्यपि ५ जाइगोयनिउत्ताउया इत्यादिरष्टमः, तत्र जातिनामगोत्रं च निधत्तं यैस्ते तथा एवमन्यान्यपि ५ (जाइगोयनिहत्ताउया) इत्यादि दशमः। तत्र जातिनाम्ना गोत्रेण च सह निधत्तमायुर्यैस्ते तथा एवमन्यान्यपि ५ ॥ जाइनामगोयनिउत्ता इत्यादिरेकादशः । तत्र जातिनामगोत्रञ्च नियुक्तं यैस्ते तथा एवमन्यान्यपि ५ जीवा णं भंते ! किं जाइनामगोयनिउत्ताउया इत्यादिर्द्वादशः। तत्र जातिनाम्ना गोत्रेण च सह नियुक्तमायुर्यैस्ते तथा एवमन्यान्यपि ५ इह च जात्यादिनामगोत्रयोरायुषश्च भवोपग्रहे प्राधान्यख्यापनार्थं यथायोगं जीवा विशेषिता वाचनान्तरे चाद्या एवाष्टौ दण्डका दृश्यंत इति, ॥ टी० ॥ भ० ॥

अथ जात्यादिनामविशिष्टमायुः कियद्भिराकर्षैर्बध्नातीति जिज्ञासुर्जीवादिदण्डकक्रमेण पृच्छति ॥ प्रज्ञा० ॥

जीवा णं भंते ! जातिनामनिहत्ताउयं कतिहिं आगरिसेहिं पकरंति ? गोयमा ! जहन्नेणं एक्केण वा दोहिं वा तिहिं वा उक्कोसेणं अट्ठहिं नेरइयाणं भंते ! जातिनामनिहत्ताउयं कतिहिं आगरिसेहिं पकरंति ? गोयमा ! ॥ प्रज्ञा० ॥ सिय १ सिय २ । ३ । ४ । ५ । ६ । ७ । सियअट्ठहिं नो चेव णं नवहिं ॥सम०॥ जहन्नेणं एक्केण वा दोहिं वा तिहिं वा उक्कोसेणं अट्ठहिं ॥प्रज्ञा०।स०॥ एवं जाव वेमाणिया। एवं गतिनामनिहत्ताउए वि । ठितीनामनिहत्ताउए वि । ओगाहणानामनिहत्ताउएवि । पदेसनामनिहत्ताउए वि । अणुभावनामनिहत्ताउए वि । एतेसि णं भंते ! जीवाणं जातिनामनिहत्ताउयं जहन्नेणं एक्को वा दोहिं वा तिहिं वा उक्कोसेणं अट्ठहिं आगरिसेहिं पकरेमाणा णं कयरे कयरेहिंतो अप्पा वा वहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा ! सव्वत्थो वा जीवा जातिनामनिहत्ताउयं अट्ठहिं आगरिसेहिं पकरेमाणा, सत्तहिं आगरिसेहिं पकरेमाणा संखेज्जगुणा, एहिं आगरिसेहिं पकरेमाणा संखेज्जगुणा, एवं पंचहिं संखेज्जगुणा, तिहिं संखेज्जगुणा, चउहिं संखेज्जगुणा, दोहिं संखेज्ज-

गुणा, एगेणं आगरिसेणं पकरेमाणा संखेज्जगुणा । एवं एतेणं अभिलावेणं जाव अगुभावनिहत्ताउयं । एवं एते छप्पि अप्पा बहुदण्डगा जीवादिया भाणियव्वा ॥ प्रज्ञा० ॥ सम० ॥

( आगरिसेहिं पगरंतीत्यादि ) आकर्षो नाम तथाविधेन प्रयत्नेन कर्मपुद्गलोपादानं यथा गौः पानीयं पिबन्ती भयेन पुनः पुनराघोटयति एवं जीवोऽपि यदा तीव्रेणायुर्बन्धाध्यवसायेन जातिनामनिधत्तायुरन्यद्वा बध्नाति तदा एकेन ॥ प्रज्ञा० ॥ मन्देनद्वाभ्यामाकर्षाभ्याम्मन्दतरेण त्रिभिर्मन्दतमेन चतुर्भिः पञ्चभिः षड्भिः सप्तभिरष्टाभिर्वा न पुनर्नवभिरेवं शेषाण्यपि(आउगाणित्ति)गतिनामनिधत्तायुरादीनि वाच्यानि यावद्वैमानिका इति अयञ्चैकाद्याकर्षनियमो जात्यादीनां कर्मणामायुर्बन्धकाल एव ॥ सम० ॥ आयुषा सह बध्यमानानामवसातव्यो न शेषकालं कासांचित्प्रकृतीनां ध्रुवबंधनीत्वात्परासां परावर्त्तमानत्वात् । प्रभूतकालमपि बंधसम्भवेनाकर्षानियमात् ॥ प्रज्ञा० ॥ आयुर्बन्ध परिसमाप्तेरुत्तरकालमपि बन्धोऽस्त्येवैषां ध्रुवबन्धिनीनाञ्च ज्ञानावरणादिप्रकृतीनाम्प्रतिसमयमेव बन्धनिवृत्तिर्भवत्येतास्तु परावृत्याबध्यन्त इति ॥ टी० सम० ॥

सम्प्रति चतुर्विधस्यायुषो बन्धकारणान्याह—

"बंधइ नरयाउ महारंभ परिग्गहरओ रुद्दो,, कर्म्म० "तिरियाउ गूढहियओ सढो ससल्लो तहा मणुस्साउ । पयइ तणुकसाओ दाणरुई मज्झिमगुणो अ,, १ "अविरयमाइसुराउ बालतवो कामनिज्जरो जयइ । सरलो अगारविल्लो सुहनामं अन्नहा असुहं,, ॥ २ ॥ कर्म्म० ॥

( बंधइ नरयाउ इत्यादि ) बध्नात्यर्जयति नरकायुर्नारकायुष्कं जीवः किंविशिष्ट इत्याह–महारंभपरिग्रहरतो महारंभरतो महापरिग्रहरतश्चेत्यर्थः । रौद्रो रौद्रपरिणामो गिरिभेदसमानः कषायरौद्रध्यानारूपितचेतोवृत्तिरित्यर्थः । उपलक्षणत्वात्पंचेंद्रियवधादिपरिग्रहः । यत्त्यागादि । "पंचेन्द्रियप्राणिवधो बहारंभपरिग्रहाःनिरनुग्रहता मांसभोजनं स्थिरवैरता॥१॥रौद्रध्यान मिथ्यात्वानंतानुबंधिकषायता। कृष्णनीलकापोताश्च लेश्या अनृतभाषणम् ॥ २ ॥ परद्रव्यापहरणं मुहुर्मैथुनसेवनम् अवशेंद्रियता चेति नरकायुष आश्रवाः, ॥ ३ ॥ उक्ता नरकायुषो बंधहेतवः ॥ कर्म० ॥

तिर्यगायुर्बध्नाति जीवः किं विशिष्ट इत्याह—गूढहृदय उदायिनृपमारकादिवत्तथात्माभिप्रायं सर्वथैव निग्रहति यथा नापरः कश्चिद्वेत्ति शठो वचसा मधुरः, परिणामे तु दारुणः, सशल्यो भ्रमादिवशाच्चीर्णानेकव्रतनियमातिचारस्फुरदंतःशल्यो नालोचिताप्रतिक्रांतस्तथा शब्दादुन्मार्गदेशनादिपरिग्रहः। उक्तं च-

उन्मार्गदेशनामार्गप्रणाशो गूढचित्तता । आर्तध्यानं सशल्यत्वं मायारंभपरिग्रहः ॥ १ ॥ शीलव्रते सातिचारो नीलकापोतलेश्यता। अप्रत्याख्यान कषायास्तिर्यगायुष आश्रवाः॥२॥उक्तास्तिर्यगायुर्बंधहेतवः ॥

अथ मनुष्यायुषस्तानाह–( मणुस्साउमित्यादि ) मनुष्यायुर्जीवो बध्नाति किं विशिष्ट इत्याह–प्रकृत्या स्वभावेनैव तनुकषायो रेणुराजिसमानकषायो दानरुचिर्यत्र तत्र वा दानशीलः मध्यमास्तदुचिताः केचिद् गुणाः क्षमामार्दवार्जवादयो यस्य स मध्यमगुणः अधमगुणस्य हि नरकायुःसंभवादुत्तमगुणस्य तु सिद्धेःसुरलोकायुषो वा संभवादिति भावः।चशब्दादल्पपरिग्रहारंभादिपरिग्रहः । आह च–

अल्पौ परिग्रहारंभौ सहजौ मार्दवार्जवौ । कापोतपीतलेश्यत्वं धर्म्मध्यानानुरागिता ॥ १ ॥ प्रत्याख्यानकषायत्वं परिणामश्च मध्यमः । संविभागविधायित्वं देवतागुरुपूजनम् ॥ २ ॥ पूर्वालापप्रियालापौ सुखप्रज्ञापनीयता । लोकयात्रासु माध्यस्थ्यं मानुषायुष आश्रवाः ॥ ३ ॥ उक्ता मनुष्यायुषो बंध हेतवः ॥ कर्म० ॥

सम्प्रति देवायुषस्तानाह–अविरतो विरतः सम्यग् दृष्टिः सुरायुर्देवायुष्कं जयति बध्नाति आदिशब्दाद्देशविरतसरागसंयतपरिग्रहः वीतरागसंयतस्त्वतिविशुद्धत्वादायुर्न बध्नाति। घोलनापरिणाम एव तस्य बध्यमानत्वात् । बालं तपो यस्य स बालतपा अनधिगतपरमार्थस्वभावो दुःखगर्भमोहगर्भवैराग्योऽज्ञानपूर्वकनिर्वर्तिततपःप्रभृतिकष्टविशेषो मिथ्यादृष्टिः सोऽप्यात्मगुणानुरूपं किंचिदसुरादिकायुर्बध्नाति यदाह भगवान् भाष्यकारः—

बालतवे पडिवद्धा उक्कडरोसा तवेण गारविया । वेरेण य पडिवद्धा मरिउं असुरेसु उववाओ ॥

अकामस्यानिच्छतो निर्जरा कर्मविघटनलक्षणा यस्यासावकामनिर्जरः । इदमुक्तं भवति । "अकामतण्हाए अकामछुहाए अकामबंभचेरवासेणं अकामसीयायवदंसमसगअण्हाणगसेयजल्लमलपंकपरिग्गहेणं दीहरोगचारगतिनिरोहबंधणयाए गिरितरुसिहणनिवडणयाए जलजणपवणअणसणाईहिं,, उदकराजिसमानकषायस्तदुचितशुभपरिणामः किंचिद्व्यंतरादिकायुर्बध्नाति । उपलक्षणत्वात्कल्याणमित्रसंपर्कमानसः धर्मश्रवणशील इत्यादिपरिग्रहः । यदाहुः–

सरागसंयमो देशसंयमोऽकामनिर्जरा । कल्याणमित्रसंपर्को धर्मश्रवणशीलता ॥ १ ॥ पात्रे दानं तपः श्रद्धा रत्नत्रयविराधना । मृत्युकाले परिणामो लेश्ययोः पद्मपीतयोः ॥ २ ॥ बालं तपोऽग्नितोयादि साधनोल्लंघनानि च । अव्यक्तसामायिकता देवस्यायुष आश्रवाः ॥ ३ ॥ उक्ता देवायुषो बंधहेतवः ॥ कर्म० ॥

तथा देवनैरयिकैरपि यदि षण्मासे शेषे आयुर्न बद्धं तत आत्मीयस्यायुषः षण्मासशेषं तावत्संक्षिपंति यावत्सर्व्वजघन्य आयुर्बंध उत्तरकालश्चावशेषोऽवतिष्ठते इह परभवायुर्देवनैरयिका बध्नंतीत्ययमसंक्षेपकाल इति श्रीस्थानांगषष्ठाध्ययनवृत्त्युपांते प्रोक्तमस्तीति "परं बंधंति देवनारयअसंखतिरिनरछमाससेसाउ"इत्यादिवचसां कथं संवाद इति प्रश्नेऽत्रोत्तरम् बंधंति देवनारयेत्यादिवचनं प्रायिकं तेन केषांचिद्देवनारकाणां शेषेऽन्तर्मुहूर्तेप्यायुर्बंधो भवतीति मतांतरमवसीयते इति न कोपि विसंवाद इति प्रोक्तंश्येनप्रश्ने ॥ ३९ ॥

आयुषो बन्धकाः प्रज्ञापनायां दर्शिताः कर्मशब्दे ) ( आयुर्बन्धकानां कर्म्मप्रकृतिबन्धः कर्म्मप्रकृतिशब्दे ) ॥ प्रज्ञा० ॥

( आयुर्बन्धस्थितिरायुर्बन्धकानां कर्म्मवेदना आयुर्वेदकानां कर्मप्रकृतिबन्धश्च कर्मशब्दे ) ॥ प्रज्ञा० ॥

आउयसंवट्टय–आयुष्कसंवर्त्तक–पु० संवर्त्तनमपवर्त्तनं सर्वत्तः स एष संवर्त्तक उपक्रम इत्यर्थः । आयुषः संवर्त्तक आयुः

संवर्त्तक इति। आयुष उपक्रमे० स्था०॥ "दोएहं आउयसंवट्टए प० तं० मणुस्साणं चेव पंचिंदियतिरिक्खजोणियाणं चेव,, ॥ स्था० ॥

आउयसंवेदण–आयुःसंवेदन–न० आयुःकर्मोदयविपाकानुभवने ॥ भ० ॥

आउयसदव्वया–आयुस्सद्रव्यता–स्त्री० आयुः प्रदेशकर्म तस्य द्रव्यैस्सहमानताऽऽयुस्सद्रव्यता ॥ जीवस्यायुष्कर्मद्रव्यसहचारितायाम्,। "आउयसदव्वयभवे ओघो,, । आयुस्सद्रव्यता ओघजीवितं सामान्यजीवितमिदं च सकलसंसारिणामविशेषेण सर्वदाभावीति ॥ आ० म० ॥

आउयाय–अप्काय–पु० एकेन्द्रियसंसारसमापन्नजीवविशेषे, ॥ प्रज्ञा० ॥ भ० ॥ ( एतस्य वक्तव्यताप्कायिकशब्दे )

आउर–आतुर–त्रि० ईषदर्थे, आ० अत्० उरच्॥ वाच० ॥ ग्लाने, ( रोगिणि ) ॥ स्था० ॥ वृ० ॥ विविधदुःखोपद्रुते, ( रोगादिपीडिते ) ॥ वृ० ॥ उत्त० ॥ बुभुक्षादिभिः पीडिते ॥ ज्ञा० ॥ अस्वस्थमनसि, "तत्थ तत्थ पुढो पास आतुरा परितावंति,, ॥ आचा० ॥

( तत्थतत्थेत्यादि ) तत्र तत्र तेषु २ कारणेषूत्पन्नेषु वक्ष्यमाणेषु शरीरचर्मशोणितादिषु च पृथग्विभिन्नेषु प्रयोजनेषु पश्येति शिष्यचोदना किं तत्पश्येति दर्शयति–मांसभक्षणादिगृद्धा आतुराः अस्वस्थमनसः परि समंतात्तापयंति पीडयंति ॥ टी० आचा० ॥ किंकर्त्तव्यतामूढे, "पासिय आतुरिए पाणे अप्पमत्तो परिव्वए,, आचा०सू० ॥ ( पासिय इत्यादि ) स हि भावजागरस्तैर्भावः जागरस्वापजनितैः शारीरमानसैर्दुःखैरातुरान् किंकर्त्तव्यतामूढान् दुःखसागरावगाढान् प्राणान् भेदोपचारात् प्राणिनो दृष्ट्वा ज्ञात्वा अप्रमत्तः परिव्रजेदुद्युक्तः सन् संयमानुष्ठानं विदध्यात् ॥ टी० आचा० ॥ आकुलतनौ,॥ उत्त० ॥ क्वचिदपि स्वास्थ्यमलभमाने सत्याकुले,॥जी०॥उत्सुके, ॥ वृ० ॥ व्याकुले, ॥ ज्ञा० ॥ " आउरं लोयमायाए,, ॥ आचा० सू० ॥ (आउरं इत्यादि) लोकं मातापितृपुत्रकलत्रादिकं तमातुरं स्नेहानुषङ्गतया वियोगात्कार्यावसादेन वा यदि वा जंतुलोकं कामरोगातुरमादाय ज्ञानेन परिगृहीत्वा परिच्छिद्य॥ आचा० टी०॥ क्लिष्टे, "केषाञ्चिद्विषयज्वराकुलमहो" केषाञ्चिज्जीवानां चित्तं मनः विषया इन्द्रियाभिलाषा एव ज्वरस्तेनातुरं क्लिष्टं मनोऽस्तीति ।अष्ट०। दुःस्थे, ॥ भ० ॥ प्रथमद्वितीयपरीषहाभ्यां जिते, ( क्षुत्पिपासापीडिते ) चिकित्साक्रियाव्यपेते, मरणचिह्नान्युपलभ्याकुले, च ॥ नं० । व्य० । पा० ॥ "आउराण य अप्पेगइयाणं मच्छमंसाइं उवदिसइ,, ॥ विपा० सू० ॥ टी० ( आउराणंति ) चिकित्साग्रामविषयभूतानामिति वृत्तिः ॥ विपा० ॥ (एतस्य बहु वक्तव्यता ग्लानशब्दे ) आतुरत्वे, च ( क्षुत्पिपासाव्याधिभिरभिभूतत्वे ) "संकिए सहसागारे उभयाउरे आवतीसु य"भावप्रधानश्चायं निर्देशस्ततोऽयमर्थः ॥ व्य० ॥ संभमभयाउरावइ ( आउरत्ति ) भावप्रधानत्वान्निर्देशस्यातुरपीडितत्वं क्षुत्पिपासाद्यैरिति ॥ जीत० ॥ लुप्तभावप्रत्ययत्वाद्वा ॥ स्था० ॥ कार्य्याक्षमे, वाच० ॥ अशक्नुवति, ॥ व्य० ॥

आउरचिन्न–आतुरचीर्ण–त्रि० आतुरश्चिकित्साया अविषयभूतो रोगी तस्य मर्त्तुकामस्य पथ्यापथ्याविवेकेन दीयमाने मनोज्ञाहारे ( उरस्रशब्दे भावयिष्यते ) ॥

आउरपच्चक्खाण–आतुरप्रत्याख्यान–न० आतुरः क्रियातीतो ग्लानस्तस्य प्रत्याख्यानमातुरप्रत्याख्यानम् । चिकित्सकक्रियाव्यपेतस्य ग्लानस्य प्रत्याख्याने, आतुरश्चिकित्स्यक्रियाव्यपेतस्तस्य प्रत्याख्यानं यत्राध्ययने विधिपूर्वकमुपवर्ण्यते तदातुरप्रत्याख्यानम्। उत्कालिकश्रुतविशेषे च ।विधिश्चातुरप्रत्याख्यानदानविषये चूर्णिकृतैवमुपदर्शितः "गिलाणं किरियातीयं नाउं गीयत्था पच्चक्खावेंति दिणे दिणे दव्वहासं करेत्ता अंते य सव्वदव्वदायणाए भत्तवेरग्गं जाणि (णे) त्ता भत्त वि (नि) त्तिराहस्स भवचरिमपच्चक्खाणंकारवेंति" नं०। पा०

आउरपडिसेवणा–आतुरप्रतिसेवना–स्त्री० प्रतिसेवनाविशेषे, "दप्पपमायणाभोगे आउरे आवईसु य" ॥ स्था० सू० ॥ आतुरे ग्लाने सति तत्प्रतिजागरणार्थमिति भावोऽथवा आत्मन एवातुरत्वे सति लुप्तभावप्रत्ययत्वादयमर्थः क्षुत्पिपासाव्याधिभिरभिभूतः सन् याङ्करोति । उक्तंच"पढमबीहदुहवाहिओ वजसेव आउराएसत्ति" ॥ टी० ॥ स्था० ॥

आउरभेसज्जीय–आतुरभैषज्यीय–न० अवितर्कितसम्भवितुल्ये याहच्छिकन्याये, (यथाऽऽतुरभवनम्भैषज्योपकारश्चाबुद्धिपूर्विकैव नातुरस्य बुद्धिरस्ति मह्यम्भैषज्यमुपकरिष्यति नापि भैषज्यस्यैतादृशी बुद्धिरस्ति आतुरायोपकरिष्यामीति अथ तत्तथैव भवत्येवं सर्वं जातिजरामरणादिकं लोके याहच्छिकमिति यदृच्छावादिनः) ॥ आचा० ॥

आउरसरण–आतुरस्मरण–न० दोषातुरस्याश्रयदाने, दश०

आतुरस्मरण–न० क्षुधाद्यातुराणां पूर्वोपभुक्तस्मरणे, "तत्ता निव्वुडभोइत्तं आउरस्सरणाणि य" दश० ॥ तथातुरस्मरणानि च क्षुधाद्यातुराणां पूर्वोपभुक्तस्मरणानि च अनाचरितानि आतुरशरणानि वा दोषातुराश्रयदानानीति। रोगादिपीडितस्य हा तात हा मातरित्यादिरूपे स्मरणे च (आउरे सरणं तिगिच्छि यं च तं परिण्णाय परिव्वए स भिक्खू ( आउरे सरणंति)सुव्यत्ययादातुरस्य रोगादिपीडितस्य शरणं स्मरणं हा तात हा मातरित्यादिरूपं चिकित्सितं चात्मनो रोगप्रतीकाररूपं तदिति यदनंतरमुक्तं(परिन्नायत्ति)ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया प्रत्याख्याय परिव्रजेत्सर्वप्रकारं संयमाध्वनि व्यापाद्यः स भिक्षुरिति ॥ उत्त० ॥

आउल–आकुल–त्रि० व्याप्ते, औप० ॥ ज्ञा० ॥ "कलुसाउलं चित्तं" कलुषयंति आत्मानमिति कलुषाः कषायास्तैराकुलं व्याप्तं यत्तथोच्यते इति ॥आव०॥ जनाकीर्णे,॥वृ०॥ प्रचुरे,भ० क्षुब्धे, "जत्थत्थमिए अणाउले" भिक्षुर्यत्रैवास्तमुपैति सविता तत्रैव कायोत्सर्गादिना तिष्ठतीति । यत्रास्तमितस्तथानाकुलः समुद्रवन्नक्रादिभिः परीषहोपसर्गैरक्षुभ्यन् इति ॥ सूत्र० ॥ अभिभूते, "तह तिव्वकोहलोहाउलस्स" तीव्रावुत्कटौ च तौ क्रोधलोभौ च ताभ्यामाकुलोऽभिभूतस्तस्येति।आव०। व्याकुले"(विह्वले) आ० म० । व्यग्रे, आव० ॥ व्याप्ते,॥ सूत्र० ॥ संकीर्णे च "किमिजालाउलसंसत्ते" कृमिजालैराकुलैर्व्याकुलैराकुलं वा संकीर्णं यथा भवतीत्येवं संसक्तं यत्तथा इति । ज्ञा० ।"अट्ठारसवं जणाउलं" ॥ चंद्र० ॥राजगृहांगणजनाकुलवदाकुलः भावस्कंधविशेषे च ॥ अनु० ॥

आउलतर–आकुलतर–त्रि० अतिशयेनाकुले, तथा च षष्ठपृथिवीनरकापेक्षया सप्तमपृथिवीनरकाणांवर्णनमुपक्रम्योक्तम भगवत्याम् । "णो आउलतरा चेव,, ॥ भ० सू० ॥

( आउलतराचेवन्ति ) अतिकर्कव्यतया ये आकुला नारकलो-कास्तेषामतिशयेन योगादाकुलतरा ॥ टी० भ० ॥

आउलमण–आकुलमनस्–त्रि० आकुलं व्यग्रं मनोऽन्तःकरणं यस्य स तथा । व्यग्रान्तःकरणं, "तप्पडियाराउलमणस्स" तत्प्रतीकारे वेदनाप्रतीकारे चिकित्सायामाकुलं व्यग्र-मनो यस्य स तथेति ॥ आव० ॥

आउलमाउला–आकुलाकुला–स्त्री० निद्राप्रमादाभिभूतस्य मूल-गुणानामुत्तरगुणानां वा या नानाविधोपरोधक्रिया तदात्मिका-याम्, अथवा आकुलं नानाविधरूपं विवाहसंगमादिषु दृष्ट-माचरितं वा पुनरपि आकुलास्तादृशा बहवो दृष्टा व्यापारा स्तदात्मिकायां स्वप्नांतिकक्रियायाम्, तथा चावश्यकं सु-प्तस्य दैवसिकमतिचारमधिकृत्योक्तम् ।

"आउलमाउलाए सोयणवत्तियाए,, इत्थीविप्परियासि-ए दिट्ठिविप्परियासियाए मणविप्परियासियाए पाणभोयण विप्परियासियाए जो मे देवसिओ अइयारो कओ तस्स मि-च्छामि दुक्कडं,, ॥ आव० मू० ॥

( आउलमाउलाएत्ति ) आकुलाकुलया स्त्र्यादिपरिभोगवि-वाहयुद्धादिसंस्पर्शननानाप्रकारया स्वप्नप्रत्ययया स्वप्ननि-मित्तया विराधनया योऽतिचारः ॥ टी० आव० ॥

"आउलमाउलत्ताए सोवणंतिए निंदप्पमादाभिभूतस्स मूलगुणाण उत्तरगुणाण वा उवरोधकिरिया जा णाणाविधा सोवणंतिया सा आउलमाउला ऽहवा आउलं णाणाविहरूवं विवाहसंगमादिसु दिट्ठं आयरितं वा पुणो वि आउला तारि-सा वहवो वारादिट्ठा एसा आउलमाउला । केई पुण आउल-माउलाए सोयणवत्तियाए एतं आलावगं एत्थ पढंति तत्थ जा-तो सेसा उ आउलमाउलाओ सोमणंतियाओ दिट्ठाओ नि-दापमादाभिभूतेण तस्स मिच्छामि दुक्कडंति ॥ आ०चू० ॥

आउलवाय—आकुलवाद–पुं०परस्परसंकीर्णवादे, आकुलवादे इति सदसत्वयोः परस्परसंकीर्णवादे, इति ॥ अने० ॥

आउलि–आतुलि–स्त्री०पीतपुष्पके, ( तडउडा ) नामके वनस्पतिजातिविशेषे, "तडउडाकुसुमेइ वा,, ( तडउडा आउलीति) आ०म० ॥ एतत्काष्ठनिष्पादिते दंते दोषा भवन्ति तथा च सेनप्रश्ने–आउलिमत्कदंतकाष्ठे केचिद्बहु दोषं वदंति तत्सत्यमसत्यं वा तथा बहरीबव्बूलदंतकाष्ठेष्वाउलिदंतका-ष्ठे जीवाः किमल्पा बहवस्तुल्या वेति प्रज्ञापनायां प्रथमपादे गुच्छाधिकारे आउलिसत्कमूलकंदस्कंधत्वक्शाखाप्रवालेषु प्रत्येकमसंख्येयजीवात्मकता प्रोक्तास्ति तदनुसारेण वदरी-वव्बूलयोरपि पट्स्वपि स्थानेष्वसंख्याता जीवाः संभाव्यंते ननु न्यूनाधिकजीवाः ॥४१ ॥ इति ॥

आकुलि०–पु० आ० कुल० इन० व्याकुलत्वे ॥ वाच० ॥

आउलिय–आकुलित–त्रि० आकुल–क्त । व्याकुलीभूते, आकुली-कृत्यर्थे णिच कर्म्मणि क्त आकुलीकृते, "मार्गाचलव्यतिकरा-कुलितेव सिन्धुः,, कुमा० ॥ वाच० ॥

आउलीकरण–आकुलीकरण–न० प्रचुरीकरणे,–भ०

जीवानां संसाराकुलीकरणकारणम् लघुत्वकारणप्रतिपा-द्योक्तं भगवत्याम् । कह णं भंते ! जीवा लहुयत्तं हव्वमागच्छं-ति ? गोयमा ! पाणाइवाए वेरमणेणं जाव मिच्छादंसणसल्ल-वेरमणेणं एवं खलु गोयमा ! जीवा लहुयत्तं हव्वमागच्छंति एवं संसारआउलीकरेंति ॥ भ० श० १ उ० ९ ॥

(एवं आउली करेंतित्ति ) इहैवं शब्दः पूर्वोक्ताभिलापसंसूच-नार्थः, स चैवं कह णं भंते ! जीवा संसारं आउलीकरेंति ? गोयमा ! पाणाइवाएणमित्यादि ॥ एवं उत्तरत्रापि, ( तत्र आउलीकरेंतित्ति ) प्रचुरीकुर्वन्ति कर्मभिरित्यर्थः ॥टी०भ०॥

आउलीभूय–आकुलीभूत–त्रि० आकुल च्वि भूते क्त० । स्वयं तथाभूते, वाच० ॥ आ० म० ॥

आउवज्जिय–आयुर्वर्जित–त्रि० आयुष्कर्मविरहिते, ॥ पंचा० ॥

आउविज्जा–आयुर्विद्या–स्त्री० वैद्यके, पापश्रुतविशेषे, आव० ॥

आउविवागदसा–आयुर्विपाकदशा–स्त्री० प्रतिसमयभोगत्वेना-यातीत्यायुः, विपचनं विपाकः आयुषोऽपरिहाणिरित्यर्थः।अ-नुभागेन युक्तो विभागो दशा इत्युच्यते आयुर्विपाकस्य द-शाऽऽयुर्विपाकदशा । आयुर्विपाकविभागे, "जं जम्मि काले आउयं उक्कोसं दसधा विभत्तं दस आउविभागदसा भवं-ति" ततो य दसाओ दसवरिसपमाणातो वरिससयाउसो भवन्ति, ॥ (दसाभेदादिकं दशाशब्दे) नि० चू० ॥

आउव्वेय–आयुर्वेद–पु० आयुर्जीवितं तद्विदन्ति रक्षितुमनु-भवन्ति चोपक्रमरक्षणेन विदन्ति वा लभन्ते यथाकालं तेन तस्मात्तस्मिन्वेत्यायुर्वेदः । चिकित्साशास्त्रे, ॥ स्था० ॥ वैद्यक-शास्त्रे, ॥ विपा० ॥

तच्चाष्टविधम्–"अट्ठविहे आउव्वेए पण्णत्ते तं जहा कुमारभि-च्चे कायतिगिच्छा सालाइ · सल्लहत्ता जंगोली भूयविज्जा खारतंते रसायणे" ॥ स्था० मू० ॥

( कुमारभिच्चेति ) कुमाराणां बालकानां भृतौ पोषणे साधुः कुमारभृत्यं तद्धि तंत्रं कुमारभरणक्षीरदोषसंशोधनार्थं दुष्टस्तन्य-निमित्तानां व्याधीनामुपशमनार्थं चेति ॥ १ ॥ कायस्य ज्वरादि-रोगग्रस्तस्य चिकित्साप्रतिपादकं तंत्रं कायचिकित्सातंत्रं तद्धि मध्यांगसमाश्रितानां ज्वरातीसाररक्तशोषोन्मादप्रमेहकुष्ठादी-नां शमनार्थमिति ॥ २ ॥ शलाकायाः कर्म शालाक्यं तत्प्रतिपाद-कं तंत्रं शालाक्यं तद्धि ऊर्ध्वमनुगतानां रोगाणां श्रवणवदननय-नघ्राणादिसमाश्रितानामुपशमनार्थमिति ॥ ३ ॥ शल्यस्य हत्या हननमुद्धारः शल्यहत्या तत्प्रतिपादकं तंत्रमपि शल्यहत्येत्युच्य-ते तद्धि तृणकाष्ठपाषाणपांसुलोहलोष्ठास्थिनखप्रायोगान्तर्गत-शल्योद्धरणार्थमिति ॥ ४ ॥ (जागौलीति) विषविघाततंत्रमगद-तंत्रमित्यर्थः । तद्धि सर्पकीटलूतादष्टविषविनाशार्थं विविध-विषसंप्रयोगोपशमनार्थं चेति ॥ ५ ॥ भूतादीनां निग्रहार्थं विद्या-तंत्रं भूतविद्या सा हि देवासुरगन्धर्व्वयक्षराक्षसपितृपिशाचना-गग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिकरणादिग्रहोपशमना-र्थमिति ॥ ६ ॥ क्षारतंत्रमिति क्षरणं क्षारः शुक्रस्य तद्विषयं तं-त्रं यत् तत्तथा इदं हि सुश्रुतादिषु वाजीकरणतंत्रमुच्यते ॥ टी० स्था० ॥ तथा च विपाकश्रुते धन्वंतरिवर्णने, "अट्ठंगा उ वेदपाढए तंजहा–कोमारभिच्चं १ सालागे २ सल्लगहत्ते ३ कायतिगिच्छा ४ जंगोले ५ भूयवेज्जे ६ रसायणं ७ वाजीकरणे ८ इति । विपा० ॥ अवाजिना वाजीकरणं रेतोवृद्ध्या अश्व स्येव

करणमित्यनयोः शब्दार्थः सम एवेति तत्तंत्रं हि अल्पक्षीणविशुष्करेतसामाप्यायनप्रसादोपजनननिमित्तं प्रहर्षजननार्थमिति ॥ ७॥ रसोऽमृतरसस्तस्यायनं प्राप्ती रसायनं तद्धिधाय स्थापनमायुर्मेधाकरणं रोगापहरणसमर्थं च तत्प्रतिपादकं शास्त्रं रसायनतंत्रमिति ॥ टी० स्था० ॥

आउस ( स्स )–आक्रोश–पुं० मृतोऽसि त्वमित्यादिभिरसभ्यवचनरूपैः शापैरभिशापे, "अप्पेगइए आउसिहिंति,, आक्रोशान्दास्यतीति वृत्तिः ॥ भ०॥ "तएणं भंते! अहं पुरिसं आउसेज्जा,, उपा० सू० ॥ ( आउसेज्जवत्ति ) आक्रोशयामि वा मृतोऽसि त्वमित्यादिभिः शापैरभिशपामीति वृत्तिः ॥ टी० उपा० ॥ दण्डमुष्टयादिभिर्हननव्यापारे च। तथा च सूत्रकृताङ्गे, परतीर्थिकानुद्दिश्योक्तम्–

"रोगदोसाभिभूयप्पा, मिच्छत्तेण अभिद्दुता ॥ आउस्स सरणं जंति टंकणा इव पव्वयं,, ॥ सूत्र० मू० ॥

( रायद्दोस्सा इत्यादि ) रागश्च प्रीतिलक्षणो द्वेषश्च तद्विपरीतलक्षणस्ताभ्यामभिभूत आत्मा येषां परतीर्थिकानां ते तथा मिथ्यात्वेन विपर्यस्तावबोधेनातत्वाध्यवसायरूपेणाभिद्रुता व्याप्ताः सद्युक्तिभिर्वादं कर्त्तुमसमर्थाः क्रोधानुगा आक्रोशानसभ्यवचनरूपांस्तथा दंडमुष्टयादिभिश्च हननव्यापारं यांत्याश्रयंते।अस्मिन्नेवार्थे प्रतिपाद्य दृष्टांतमाह-यथा टंकणा म्लेच्छविशेषा दुर्जया यदा परेण बलिना स्वानीकादिनाभिद्रूयंते तदा ते नानाविधैरप्यायुधैर्योद्धुमसमर्थाः संतः पर्वतं शरणमाश्रयंत्येवं तेऽपि कुतीर्थिका वादपराजिताः क्रोधाद्युपहतदृष्टय आक्रोशादिकं शरणमाश्रयंते। न च ते इदमाकलप्य प्रत्याक्रोष्टव्याः तद्यथा-"अक्कोसहणणमारणधम्मब्भंसाण वालसुलभाणं। लाभं मन्नइ धीरो जहुत्तराणं अभावंमि,, ॥ टी० सूत्र० ॥

आउसंत–आजुषमाण–त्रि० प्राकृतत्वेन तिङ्व्यत्ययः प्रीतिप्रवणमनसि, ॥ सम० ॥ "सुयं मे आउसं तेणं,, श्रवणविधिमर्यादया गुरूनासेवमानेनेति ॥ स्था० ॥ उत्त० ॥ दशा० ॥

आयुष्मत्–त्रि० आयुरस्यास्तीति० ॥ दशा० ॥ दश० ॥ जीवति, ( प्राणधारणधर्मवति ) ॥ स्था० ॥ चिरजीविनि, ॥ उत्त० ॥ आयुर्जीवितं तत्संयमप्रधानतया प्रशस्तप्रभूतं वा विद्यते यस्यासावायुष्मान् ॥ स्था० ॥ चिरप्रशस्तजीविते, ॥ भ० ॥ चिरायुः ( दीर्घायुः ) ॥ आचा० ॥ लक्षणगुणवति च शिष्यादौ, ॥ स्था० ॥ सकलगुणाधारभूतत्वेनायुश्च प्रधानो गुणः सति तस्मिन्नव्यवच्छित्तिभावात् ॥ दशा० ॥ दश० ॥ एतच्च शिष्यामंत्रणे पुत्रादेरामंत्रणे च प्रयुज्यते ॥ उत्त० ॥ दश० ॥ दशा० "अयमाउसो,, ॥ आयुष्मान्निति पुत्रादेरामंत्रणम् ॥भ०॥ दशा० ॥ परार्थप्रवृत्यादिना प्रशस्तमायुर्द्धारयति न तु मुक्तिमवाप्यापि तीर्थनिकारादिदर्शनात्पुनरिहायातेनाभिमानादिभावतोऽप्रशस्तमिति तीर्थकरे,पु० उत्त०॥ दशा० स्था० ॥ यथोच्यते कैश्चित्–ज्ञानिनो धर्म्मतीर्थस्य कर्त्तारः परमं पदम्। गत्वा गच्छंति भूयोपि भवन्तीर्थनिकारतः ॥१॥ एवं ह्यनुमूलितरागादिदोषत्वात्तद्वचसोऽप्रमाण्यमेव स्यान्निःशेषोन्मूलने हि रागादीनां कुतः पुनरिहागमनसम्भवः॥ स्था०॥ "सुयं मे आउसं तेणं भगवया एवमक्खायं,, ॥ आचा० ॥ सम० ॥ दश० ॥ दशा० ॥ विष्कुम्भावधिके तृतीये योगे, पुं० विष्कुम्भः प्रीतिरायुष्मान् इति ॥ ज्यो० ॥ वाच० ॥

आउसुह–आयुःशुभ–न० तीर्थङ्करादिसर्म्वान्धनि शुभे आयुष्कर्मणि, ॥ दश० ॥

आउसोय–अप्शौच–न०अद्भिः शौचमप्शौचम्–प्रक्षालनात्मके २ शौचभेदे, "जलशौचं तु पञ्चमम्" इति ॥ स्था० ॥

आउस्सिय–आवश्यक–न० अवश्यं भावः मनोज्ञा० वुञ् अवश्यंभावे, ॥ प्रज्ञा० ॥ आ० म० ॥

आउस्सियकरण–आवश्यककरण–न० आवश्यकेनावश्यंभावेन करणमावश्यककरणम् केवलिसमुद्घातात्पूर्वं केवलिनामवश्यकर्त्तव्ये व्यापारविशेषे, तथाहि–समुद्घातकेऽपि कुर्वंति केचिच्च न कुर्वन्ति इदश्चावश्यककरणं सर्वेऽपि केवलिनः कुर्वन्तीति ( एतस्य वक्तव्यताऽऽवर्जीकरणशब्दे ) ॥प्रज्ञा०॥ आ० म० ॥ वाच० ॥

आउह–आयुध–न० आयुध्यतेऽनेन ॥राय० ॥ जी० । आयुध् करणे घञर्थे कः ॥वाच०॥ अक्षेप्येऽस्त्रे च ॥औप०।ज्ञा०॥ प्रहरणे, विशे० ॥ "गहियाउहप्पहरणाणंति,, गृहीतान्यायुधानि खड्गादीनि प्रहरणाय यैस्ते तथा तेषाम्। अथवा-आयुधान्यक्षेप्याणि प्रहरणानि तु क्षेप्याणीति विशेषः ॥ औप० ॥ ज्ञा० ॥ शस्त्रमात्रे, । तस्य भेदाः समासतस्त्रिधा प्रहरणहस्तमुक्तयन्त्रमुक्तभेदात् । तत्र हस्तस्थितैर्यैः प्रह्रियते तानि प्रहरणानि यथा खड्गादीनि,हस्तमुक्तानि चक्रादीनि,यन्त्रमुक्तानि शरादीनि, तेषां सर्वेषां युद्धसाधनत्वादायुधत्वम् ॥ वाच० ॥

आउहघर–आयुधगृह–न० प्रहरणशालायाम्, ॥ जं० ॥

आउहघरशाला-आयुधगृहशाला–स्त्री० प्रहरणगृहशालायाम्, जं० ॥

आउहघरिय–आयुधगृहिक–पु० आयुधाध्यक्षे, । "तएणसे आउहघरिए,, ॥ जं० सू०॥ ततश्चक्ररत्नोत्पत्तेरनन्तरं स आयुधगृहिको यो नरस्तेन राज्ञाऽऽयुधाध्यक्षः कृतोऽस्तीति गम्यम् ॥ इति ॥ जं० टी० ॥

अउहधम्मिणी–आयुधधर्मिणी–स्त्री०आयुधस्येव धर्मोऽस्त्यस्या इति ङीप् । जयन्तीवृक्षे, सा हि रोगनाशने आयुधसमा० ॥ वाच० ॥

आउहागार–आयुधागार–न० ६ त० प्रहरणशालायाम्, ॥ औप० ॥ ज्ञा० ॥ (प्रहरणकोशे) ॥ स्था० ॥ तच्च राज्ञां प्रहरणस्थापनार्थं गृहम् ॥ वाच० ॥

आउहि(न्)–आयुधिन्–त्रि० आयुधं प्रहरणमस्त्यस्य इति। शस्त्रधारके, ॥ वाच० ॥ विशे० ॥

आऊसिय–आयूपित–त्रि० आ यूप् क्त ॥ वाच० ॥ प्रविष्टे, "आयूसिय वयणगंडदेसं" ॥ज्ञा० ॥ ( आऊसियत्ति आयूसियत्ति वा) प्रविष्टौ वदने गंडदेशौ कपोलभागौ यस्य तत्तथेति वृत्तिः संकुटिते. ॥ ज्ञा० ॥ "आऊसिय अक्खचम्मओट्ठगंडदेसं" ॥ ज्ञा० सू० ॥ (आऊसियत्ति) संकोटितं यदक्षचर्म्म जलापकर्षणकोशस्तद्वत् (उड्डत्ति) अपकृष्टावपकर्षवंतौ संकुटितौ गंडदेशौ यस्य स तथा तं ॥ टी० ज्ञा० ॥ आभूषित–त्रि० संकुटिते। "आऊसिय अक्खचम्मओट्ठगंडदेसं" ॥ ज्ञा० सू० ॥ अन्येत्त्वाहुः । आभूषितानि संकुटितानि अक्षाणींद्रियाणि चर्म्म ओष्टौ च गंडदेशौ च यस्य स तथा तं॥ टी० ॥ "रक्खाभूमणहेउं भक्खणहेउं च मट्टियागहणं। दीहा दिवसदमाए

जतणापरणायव्वं, ॥ १७० ॥ गाहा ॥ दीहादिणा खइपमंतेणा-भिमंतिऊण कडगबंधेण रक्खाकज्जति मट्टियं वा सुहे घोट्टं-डंकोम्राऊासिज्जाति आलिप्पति वा ॥ नि०चू० ॥

आए(दे) ज्ज–आदेय–त्रि० आ० दा० यत् आकाङ्क्षणीये, ॥ जं ॥ उपादेये, ॥ जी० ॥ ग्राह्ये, ॥ सूत्र० ॥ "आएज्जलढ-हसुविभत्तज्जायसोयसोभत्तरुइलरोमराई" ॥ आदेया द-र्शनपथप्राप्ता सती उपादेया सुभगेतिवृत्तिः ॥ जी० ॥ आदेया दर्शनपथमनुपगता सती पुनः पुनराकाङ्क्षणीयेति ॥ जं० ॥

आए ( दे ) ज्जवक्क–आदेयवाक्य-पुं०ग्राह्यवाक्ये, "से सुद्धसुत्ते उवहाणवं च धम्मं च जे विंदति तत्थ२आदेज्जवक्केकुसले वि यत्ते स अरिहइ भासिउं तं समाहिं,, सूत्र०मू० ॥ स सम्यग्-दर्शनस्यालूपको यथावस्थितागमस्य प्रणेताऽविचिन्त्य भाष-कः शुद्धमवदातं यथावस्थितवस्तुप्ररूपणातोऽध्ययनतश्च सूत्रं प्रवचनं यस्यासौ शुद्धसूत्रः । तथोपधानं तपश्चरणं यद्यस्य सूत्रस्याभिहितमागमे तद्विद्यते यस्यासावुपधानवान् तथा धर्मं श्रुतचारित्राख्यं यः सम्यक् वेत्ति विंदते वा सम्य-क्लभते तत्र तत्रेति य आज्ञाग्राह्योऽर्थः स आज्ञयैव प्रतिपत्त-व्यो हेतुतस्तु सम्यग्घेतुना । यदि वा स्वसमयसिद्धोऽर्थः स्वसमये व्यवस्थापनीयः परसिद्धश्च परस्मिन्नथवोत्सर्गाप-वादयोर्व्यवस्थितोऽर्थस्ताभ्यामेव यथास्वं प्रतिपादयितव्य एत द्गुणसंपन्नश्चादेयवाक्यो ग्राह्यवाक्यो भवति ॥ टी० ॥

आए (दे) ज्जणाम–आदेयनाम–न० नामकर्मभेदे ॥ प्रव० ॥ तद्य–"आएज्जा सव्वलोयगिज्झवओ,, आदेयादादेयनामोद येन सर्वलोकेन समस्तजनेन ग्राह्यमादेयं वचो वचनं यस्य स तथेति. ॥ कर्म० ॥ यथा यदुदयवशात् यच्चेष्टते भाषते वा तत्सर्वं लोकः प्रमाणीकरोति दर्शनसमनंतरमेव च जनोऽ भ्युत्थानादि समाचरति तदादेयनाम॥पं०सं०॥आ० ॥ कर्म०॥

आए ( दे )ज्जवयण–आदेयवचन–त्रि०ग्राह्यवचने ॥ दशा० ॥ उत्त० ॥

आए ( दे ) ज्जवयणया–आदेयवचनता–स्त्री०सकलजन-ग्राह्यवाक्यतारूपे, वचनसम्पद्भेदे,दशा० ॥ स्था० ॥

आए ( दे ) स–आदेश–पुं.आ.दिश्.भावे घञ्.उपदेशे, आज्ञा-याम्, ॥ वाच० ॥ आदिश्यते आज्ञाप्यते संभ्रमेण परिजनो यस्मिन्नागते तदातिथेयाय तदाशनदानादिव्यापारे, स आ देशः ॥ सूत्र० ॥ आचा० ॥ उत्त० ॥ आदिशतीत्यादेशः आवासकरे, ॥व्य०॥अभ्यर्हिते,॥ उत्त०॥ नायकादौ प्राघूर्णके, ॥ उत्त० ॥ आए सो पाहुणग इति ॥ आगत आदेशङ्करो-तीत्यादेशः ॥ नि० चू० ॥ ध० ॥ आचा० ॥ आ० म० ॥ "सागारियस्स आएसे,, सागारिकपिंडस्य प्रतिपादकं यत् आदिमं सूत्रं तस्य संबंधःअनेनसंबंधेनायातस्यास्य व्याख्या सागारिको नाम शय्यातरस्तस्यादेश आयासकर आदेशो यदि वा आदेशित आदेशः अथवा आदेशत इति शब्दसंस्कार-स्तस्य व्युत्पत्तिमग्रे वक्ष्यामः । स च नायको मित्रं प्रभुः परतीर्थिको वा द्रष्टव्यः ॥ व्य० ॥

( आदेशमनापृच्छ्य त्रिरात्रात्परं यतः प्रायश्चित्तं संवासव-क्तव्यता यथा) "जे भिक्खू वहियावासियं आएसं परं तिरा-याउ अवकालेत्ता संवसंवइ संवसावंतं वा साइज्जइ ।१४। आगतो आदेसं करोतीति । आएसः प्राघूर्णकमित्यर्थः सो य अराणगच्छवासी वहियावासी भराणति । तमागतं परतो तिरायातो परतो तियहदिणाणंति अविफालियविप्फलणा णाम वियडणा किं णिमित्तं आगता अणवज्जंतो वा भदंत! कतो आगया कहिं वा बच्चह एवं अविफालेंतस्स चउत्थदि-णे चउगुरुं भवति आणादिणो य दोसा ।

गाहा ॥ सू० ॥ वहिवासगच्छवासी आदेसं आगयं तु जो संतं । तिण्ह दिवसाण परतो ण पुच्छती संवसाणादी,, । १५७ ।

गतार्था गता आरतो अविफालेंतस्स दोसा गाहा–

पढमदिण विचिय ततिए लहुगुरुलहुगा य सुत्त तेण परं।सं-विग्गमणुणितरे वहोंतदपुट्ठे इमे दोसा,, । १५८ ।

पढमदिणे अविफालेंतस्स मासलहुं वितियदिणे मासगुरुं त-तियदिणे चउलहुं तेण परंति चउत्थदिणे सुत्तणिवातो चउगु-रुमित्यर्थः ।संविग्गो उज्जमंतो मणुण्णासंभोतितो पासत्थदि-णो वा एए जइ आपुच्छिते संवासेति तो ता इमे दोसा भवंति ।

गाहा उवचरगअहिमरेवाछेवतितो तेण मेहुणट्ठी वा रायादव-कारी वा पउत्ताउत्ता व तेणो वा,, । १५९ ।

कत्ताइ सो तेण वेसगाहणेणं उचरो भंडित्तो गच्छति अवि-मरोवदि गच्छति छवति असविग्गे हितो भणति संपक्ख परिक्खातेणितुमागतोतेणगो वा गच्छति मेहुणं सेवेतु मागतो मेहुणट्ठी वा गच्छति रएणो वा अवकारं काउमागतो रएणो वा अवकारकारणाए गच्छति वा विकप्पो आयरियस्स वा उदाइ-मारकवत् । भावे तेणो सिद्धं तावहरणट्ठताए केणति पउत्तो आगतो अप्पणा वा गोविंदवाचकवत् । एवमादिदोसा भवं-ति अपुट्ठे पुच्छितो वा इमं भणे–

गाहा–"उवसंपयावण्हे कज्जे कारणिय अट्ठजाते वा । ढहि-ताउ गच्छवासिस्सादीवणा एवमादीहिं,, ॥ " कज्जे भत्त-परिण्णा गिलाणरायाय धम्मकहिंवादी । छम्मासा उक्कोसा तेसिं तु वइक्कमे गुरुगा,, । १६१ ।

तुब्भं चेव उवसंपज्जणियव्वा आगतो अवराहा लोयणं वा दायणं वा दाहामित्ति आगत्तो कुलगणसंघकज्जेण वा असि-वादीहिं वा कारणेहिं आगतो अट्ठजायणिमित्तेण वा आगतो हं सो वहिया गच्छवासी विप्फालितो एवमादीकारणे दीवि-ज्जा आयरिओ चिविप्फालितो एवमाइकारणे सुहं जाणति कारणे तिराह दिणाणं परतो न विप्फाले आलोयणं वा न पडिच्छे कुलगणसंघकज्जेण आयरिओ वा वडो न विप्फा लेति भत्तपरिभत्तो अणसणो य चिट्ठो त्तत्थ वा वाउलो गि-लाणकज्जेण वा वडो दिणं वा सव्वं रण्णो धम्ममाइक्खति परवादिण बासद्धिं वादं करेति एवमादिकारणेहिं तिराहदिणा णं परतो अविफालंतो विशुद्धो उक्कोसेण जाव छम्मासा छम्मासातिक्कमपढमदिणे अविफालंतस्स च गुरुगा ॥

गाहा–अणेण पडिच्छावे तस्स सति संतं पडिच्छते रत्तिं उत्तरवीमंसासु खिण्णोवणिसिं पि ण पडिच्छो । १६२ ।

तिरातिक्कमे भरणेण विआलोयणपडिच्छावेति अणस्स वा आलोयणा रहियस्सासति सयमेव गतो पडिच्छति अह एवो वि परवातुत्तरवीमंसाए वा वडो दिवा वादकारणेण खिणोवीमंसंतो एतो वि ण पडिच्छन्ति एवं छम्मासा यत्ता

छम्मासं ते वि भरणे पडिच्छावेति एसेव भावेत्यर्थः।

गाहा–दोहिं तिहिं वा दिणेहिं जतिच्छितितो न होति पच्छित्तं। तेण परमगुणणत्रणा कुलाइँ रणणो व दीवेंति॥१६३॥

छरहं मासाणं परतो दोहिं तिहिं कज्जं ण समप्पेति तो कुलगणसंघस्स रणणो वा णिवेदेति जेहिं वा वडो भविस्सामि तेण णागमिस्सं कारणेण विप्फालेज्जा।

गाहा। वितियपदमणप्पज्झे अंतगणादागयं ण विप्फाले। अप्पज्झं च गिलाणं अच्छितुकामं च वच्चंत॥१६४॥

अणवज्झो ण विफालेति ण विफालिज्जति वा अवज्झो गिलाणेण पुच्छिति गिलाण वा वडो वासो वा आदेसो गिलाणो ण पुच्छिज्जति गिलाण वा वडो वा आएसो न पुच्छिज्जति अहवा तेण अपुच्छिएण चेव कहियं जहा तुब्भ सगासे अच्छिउकामो आगतो अहवा अपुच्छिएण चेव कहियं इहाहं वसितुं इमिणा कारणेण गच्छामि चेव एवं अविफालंतो सुद्धो।

सूत्रम्। जे भिक्खू साहिगरणं अविउसवियं पाहुणडं अकडपायच्छित्तं परं तिरायाउ विप्फालियं आविप्फालियं संभुंजइ संभुंजंतं वा साइज्जइ॥१५॥

जति णिद्देसे भिक्खू पुव्वावणितो सह अधिकरणे कषायभावशुभभावाधिकरणसहितेत्यर्थः। विविधं विविधेहिं वा पगारेहिं उसवियं उवसामियं किं तं पाहुडं कलहमित्यर्थः। ण विओसवियं अविओसवियं पाहुडंतंमि पाहुडकरणे जं पच्छित्तं भंडं जेण सो कडपच्छित्तो अ,मा, नो, ना, प्रतिषेधे। तत्कृतं प्रायश्चित्तमकृतप्रायश्चित्तं जो तं संभुजणसंभोएण संभुंजति। एगमंडलीए संभुंजत्ति वुत्तं भवति। अहवा दाणग्गहेणं संभोएणं भुंजति तस्स चउगुरुगा आणादिणो य दोसा॥ नि०चू०॥ आज्ञापने,॥ वृ०॥ स्था०॥ आज्ञायाम्, ॥ ज्ञा०॥ आदेशिते, आदिश्यते सत्कारपुरस्सरमाकार्य्यत इत्यादेश इति व्युत्पत्तेः॥ व्य०॥ आदेशनमादेशः उपचारे, (व्यवहारे)॥ स्था०॥ विशे०॥ आ० म०॥ उपचारेऽर्थे (आदेशवक्तव्यताऽऽदेशसर्वशब्दे) उद्गमदोषविशेषस्यौद्देशिकस्य तृतीये भेदे च। स च निर्ग्रन्थशाक्यतापसगैरिकाजीविकानां श्रमणानां कृते चादेशाख्यमिति। आदिश्यते आज्यते इत्यादेशः (कर्म्मकरादिके) यः कस्यांचित् क्रियायां नियोज्यते कर्म्मकरादिरिति। आचा०॥ प्रकारे,॥ नि०चू०॥

गहिया गहियंति आदेसे,,

गृहीतागृहीतविषये आदेशप्रकारश्चतुर्भंग्यात्मक इति॥ व्य०॥ दव्वओ १ खेत्तओ २ कालओ ३ भावओ ४ दव्वओ णं आभिणिबोहियनाणी आएसेणं सव्वदव्वाइं जाणइ पासइ। खेत्तओणं आभिणिबोहियनाणी आएसेणं सव्वखेत्तं जाणइ पासइ, एवं कालओ भावओ वि। भ०श०८। उ०२॥ आदेशः प्रकारः सामान्यविशेषरूपस्तत्रादेशेनोघतो द्रव्यमात्रतया नतु तद्गतसर्वविशेषापेक्षयेति भावः। अथवा देशेन श्रुतपरिकर्म्मिततया सर्वद्रव्याणि धर्मास्तिकायादीनि जानात्यवायधारणापेक्षयाऽवबुध्यते ज्ञानस्यावायधारणारूपत्वात्॥ टी० भ०॥ आदेशः प्रकारः स च द्विधा सामान्यरूपो विशेषरूपश्चेति॥ नं०॥ (तथा च विशेषावैश्यके) कोऽयमादेश इत्याह—

"आयसोत्ति पगारो ओहादेसेण सव्वदव्वाइं। धम्मात्थिआइयाइं जाणइ न उ सव्वभेदेणं"॥विशे०॥

इहादेशो नाम ज्ञातवस्तुप्रकारः स च द्विविधः सामान्यप्रकारो विशेषप्रकारश्च तत्रोद्देशेन सामान्यप्रकारेण द्रव्यं जातिसामान्येनेत्यर्थः। सर्वद्रव्याणि धर्मास्तिकायादीनि जानात्यसंख्येयप्रदेशात्मको लोकव्यापकोऽमूर्त्तः प्राणिनां पुद्गलानां च गत्युपष्टंभहेतुर्द्धर्म्मास्तिकाय इत्यादिरूपेण कियत्पर्यायविशिष्टानि षडपि द्रव्याणि सामान्येन मतिज्ञानी जानातीत्यर्थः॥विशे०॥ "अन्नो वि य आएसो" अन्योवाऽऽदेशः प्रकार इति॥ वृ०। व्य०॥ आदिश्यत इत्यादेश आचार्य्यपरम्पराश्रुत्याऽऽयातो वृद्धवादोऽयमैतिह्यमाचक्षते स आदेशः वृद्धवादायाते दृष्टान्ते,॥ आचा०॥ आदिश्यत इत्यादेशः निर्देशे,॥ नि०चू०॥ आदिश्यत इत्यादेशः। व्यापारनियोजने,॥ आचा०॥ प्रतिपादने, "धुयमादिसंति" धूतम्मोच्चमादिशंति प्रतिपादयन्ति॥ सूत्र०॥ प्रतिवचने,॥ विशे०॥ मते, "मोत्तूणादेसतिगं,, मुक्ता परिहृत्यादेशत्रिकं मतत्रिकमिति॥पिं०॥ विकल्पे, "आदेसा इमे होंति" आदेशा विकल्पा इति॥ नि० चू०॥ आङिति मर्य्यादया विशेषरूपानतिक्रमात्मिकयाऽऽदिश्यते कथ्यत इत्यादेशः। विशेषे,।

आएसे चेव णाएसे। आदिट्ठो आएसंमि बहुविहे सरिसणाणचरणगते। सामित्तपव्वयाइंमि चेव किंचित्तओ वोच्छं॥ उदइय उवसमिए खइए य तहा खयोवसमिए य। परिणामसण्णिवाए य छव्विहो होंत णाएसो॥ आएसो पुण दुविहो अप्पियववहारणप्पितो चेव। एक्केको पुण तिविहो अप्पाणपरे तदुभए य॥ उत्त०नि०॥

आङिति मर्यादया विशेषरूपानतिक्रमात्मिकयादिश्यते कथ्यत इति आदेशो विशेषस्तस्मिन् तदन्यस्त्वनादेशः सामान्यं पूर्वत्र चैवशब्दयोः समुच्चयावधारणार्थयोर्भिन्नक्रमत्वात्तस्मिंश्चैव तत्र क्षेत्रविषयोऽनादेशो यथा जंबूद्वीपजोऽयमादेशे तु यथा भारतोऽयं कालविषयोऽनादेशो यथा दौष्यमिकोऽयमादेशे तु वासंतिकोऽयं भावविषयोऽनादेशो भाववानयमादेशे त्वौदयिकादिभाववानिति सामान्यावगमपूर्वकत्वाद्विशेषावगमस्यैवमुदाह्रियते। निर्युक्तौ तु विपर्ययाभिधानं जंबूद्वीप इति। सामान्यमपि लोकापेक्षया विशेषो भरतमिति विशेषोऽपि मगधाद्यपेक्षया सामान्यमित्यादिरूपेण सर्वत्र सामान्यविशेषयोरनियतत्वख्यापनार्थम्॥उत्त०॥ नि० आदेशोऽभिहितरूपः पुनःशब्दो विशेषणे द्विविधो भेदः कथमित्याह–"अप्पिअववहाराणप्पिओ चेवत्ति" व्यवहारशब्दोऽत्र डमरुकमणिन्यायेनोभयत्र संबद्ध्यते ततश्चार्पितो व्यवहारो यस्मिन्सोयमर्पितव्यवहारः मयूरव्यंसकादित्वात्समासः अनर्पितव्यवहारस्तु तद्विपरीतस्तत्रार्पितो नामक्षायिकादिभावैः स्वाधारे भाववति क्षातीयमित्यादिरूपेण ज्ञानमस्तीत्यादिरूपेण वा वचनव्यापारेण वक्त्रा स्थापितोऽनर्पितस्तु वस्तुतः साधरत्वेपि निराधारप्ररूपणार्थं विवक्षितो यथा सर्वभावप्रधानः क्षायिको भावोऽनयोरपि भेदानाह–एक्केक इति अर्पितव्यवहारोऽनर्पितव्यवहारश्च पुनस्त्रिविधः कथमित्याह–(अप्पाणत्ति) आकर्षत्वादात्मनि परस्मिन् तयोरात्मपरयोरुभयं तदुभयं तस्मिंश्च विषयसप्तम्यश्चैतास्ततो विषयत्रैविध्येनानयोस्त्रैविध्यम्॥ उत्त०॥

( आदेशानादेशयोर्बहु वक्तव्यता संयोगशब्दे ) व्यपदेशे, । "एओवमा आएसो वाएसंते विरूवंमि" ।। एतदुपमानो वायावपि आदेशो व्यपदेश इति । आचा० सू० । "केसिंचिय आएसो दंसण णाणेहि वट्टए तित्थं"

केषांचिद् दुर्विदग्धबुद्धीनां ज्ञानलवाध्मातचेतसां कदाग्रहग्रस्तमनसां आदेशो व्यपदेशः गूरणोति यावत् दर्शनज्ञानाभ्यां वर्त्तत इति ॥ दर्श० ॥ श्रुतपरिकर्मिततायाम्, ॥ भ० ॥ श्रुतपरिकर्मणायाम्, ॥ भ० ॥ सूत्रे च "आदेसो ण उववज्जतीति अणवद्ढो होंति" नवतिआदेशः सूत्रादित्यर्थ इति ॥ नि०चू० ॥

तत्थ दव्वओ णं आभिणिवोहियनाणी आएसेण सव्वदव्वाइं जाणाइ न पासइत्ति ।। नं०मू० ।।

अथवा आदेश इति न सूत्रादेशस्तस्मात्सूत्रादेशात्सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति नतु साक्षात्सर्वाणि पश्यति ॥नं०टी०॥ तथा च विशेषावश्यके-"आएसोत्ति व सुत्तं सुवउलद्धे सुतस्स मइनाणं । पसरइ तब्भावणया विसुत्ताणुसारेणं" ॥ अथवा आदेशः सूत्रमुच्यते तेन सूत्रादेशेन सूत्रोपलब्धेष्वर्थेषु तस्य मतिज्ञानिनः सर्वद्रव्यादिविषयं मतिज्ञानं प्रसरति ॥ विशे० ॥ अङ्गोपाङ्गादिसूत्रेष्वबद्धा ये भावाः पदार्था ज्ञानिभिः प्रकाशिताश्च ते कस्य तीर्थकरस्य समये कियन्त आदेशा उच्यन्ते ॥ आ०म० ॥

एवं बद्धमबद्धं आएसाणं हवंति पंच सया । जह एगा मरुदेवा अच्चंतं थावरा सिद्धा ।।

( एवमनंतरोक्तप्रकारं सर्वं लोकोत्तरं श्रुतं । लौकिकं त्वारण्यकादि द्रष्टव्यम् । अबद्धं पुनरादेशानां भवंति पंच शतानि, किंभूतानीत्यत आह-यथैका तस्मिन् समये अद्वितीया मरुदेवी ऋषभजननी अत्यंतस्थावरा अनादिवनस्पतिरारोरुह्य सिद्धा निष्ठितार्था संजाता । उपलक्षणमेतत् । अन्येषामपि स्वयंभूजलधिमत्स्यपद्मपत्राणां वलयव्यतिरिक्तसकलसंस्थानसंभवादीनामिति लौकिकमप्यनिबद्धं वेदितव्यम् अङ्गिकप्रत्यङ्गिकादिग्रंथानिबद्धत्वात् । अत्र वृद्धसंप्रदायः । अरिहए पवयाण पंच आदेससयाणि अणिबद्धाणि । तत्तो मरुदेवा नंदिअंगे उवंगे वा पाढो अत्थि जहा अच्चंतथावरा होऊण सिद्धा इति । विइयं सयंभुरमणसमुद्दे मत्थणां पउमपत्ताण य सव्वसंठाणाणि संति वलयसंठाणं मोत्तुं तइयं वि राहुसाइरेगजायणसयसहस्सविउव्वणं । चउत्थं करडउकुरडा दोसहिए रुवज्जाया कुणालायरीए निद्धमणमूले वसही । वरिसयाले देवयाए डकं पणं । न वरिसइ नगरपरिसरे अणत्थसव्वत्थ वरिसइ लोगो अद्दओ नेमित्तियं पुच्छइ । केण वि कहियं एएसिं गुणेण न वरसइ । तत्तो नागरगेहिं निच्छुभणं करेउ माढत्ते ते पुच्छंति । कीस निच्छुंभहा । लोगो भणइ जाव तुब्भे एत्थ नगरे ताव न वरिसइ । तो गच्छह । करडेन रुसिएण भणियं । वरिस देव कुणालाए । उक्कुरडेण भणियं । दस दिवसाणि चेव । पुणरवि करडेण भणियं । तुट्ठिमेत्ताहिं धाराहिं । उकुरडेणं भणियं । जहा रत्तिं तहा दिवा । एवं वोत्तूण अवकंता कुणाला वि पन्नरसदिवसं अणुबंधवरिसणेणं सजणनयोजलेणं उकंता । ततो ते तइए वरिसे साकेए नगरे दोवि कालं काऊण अहेसत्तमीए पुढवीए कालेरगे बावीससागरोवमट्ठिइया नेरइया संवुत्ता कुलाणा नगरी विणासकाला तो तेरसमे वरिसे वीरस्स केवलुप्पत्तीए यं । अणिबद्धं एवमादियं चादेससयाणि अबद्धाणि एवं लोइयं करणं वत्तीसं अडियातो सोलसकरणाणि लोगपवाए पंच ट्ठाणाणि तं जहा-आलाढं पंचालीढं वइसाहं मंडलं समयादं । तत्थ आलीढं नामदाहिणं पायं अग्गत्तो हुत्तं । काऊण वामपायं पच्छतो हुत्तं उसारेइ । अंतरा दोएहइं वि पासाणं पंचसत्ता वइसायं पएहातो अब्भितरहुत्तीओ समासढीए करे । अग्गिमतला बाहिरहुत्ता मंडलं न गम दोवि पदाहि ण वा महुत्ताओ सारित्ता ऊरूणा अप्फोडेइ । जहा अंतरा चत्तारि पया समपायं नाम दोवि पादे समं निरंतरं ठवेइ एयाणि पंचट्ठाणाणि लोयप्पवादेन सयणकरणछट्ठाणमित्यलम्बिस्तरेण ॥ आ० म० ॥

( सूत्रस्यादेशत्वे वहुवक्तव्यताऽऽभिनिबोधिक ज्ञानशब्दे ) नं० ॥ विशे० ॥

एष्य—त्रि० आगमिष्यति, "आएसा वि भवंति सुव्वया,, आगमिष्यांश्च भविष्यंतीति ॥ सूत्र० ॥

आवेश—पुं० आविशतीत्यावेशः यस्मिन् स्थाने प्रविष्टे सागारिकस्यायासो जन्यते स आवेशः । ज्ञातिके, स्वजने, सुहृदि, प्रभौ, परतीर्थिके च । तथा च व्यवहारकल्पे भाष्यकृदादेशशब्दव्याख्यानमाह—

आयासकरो आएसितो उ आवेसणं च आविसइ । सो नायगो सुही वा पभू व परातित्थितो वा वि। आयासकर आदेशः

आदिशतीत्यादेश इति व्युत्पत्तेः । आदेशितो वा आदेशः । आदेशात्सत्कारपुरस्सरमाकार्यत इत्यादेशव्युत्पत्तेः अथवा आवेश इति संस्कारसूत्रव्युत्पत्तिमाह—आवेशनं वा शब्दः शब्दसंस्कारापेक्षया विकल्पने, आविशतीत्यावेशः आवेशनं नाम यस्मिन् स्थाने प्रविष्टेन सागारिकस्यायासो जन्यते स आदेश आवेशो वा नाम ज्ञातिकः स्वजनः सुहृद्वा मित्रं प्रभुर्वा नायकः परतीर्थिको वापि ॥ व्य० ॥ आ+विश-घञ्-१ अहङ्कारभेदे, २ संरम्भे, ३ अभिनिवेशे, ४ आसङ्गे ५ अनुप्रवेशे, यथा भूतावेशः ६ ग्रहभये, ७ भूताद्यावेशरोगे च ॥ वाच० ॥

आएसकारिन्—आदेशकारिन्—पुं० आज्ञाकारिणि, कौटुम्बिकादौ, "कोडुंवियपुरिसे सद्दावेंति,, कौटुंविकपुरुषानादेशकारिण इति ॥ ज्ञा० ॥

आएसग ( य ) आदेशक—त्रि० आदिशति आ+दिश् धा०+ण्वुल् १ आदेशकारके, २ आज्ञाकारके, ॥ वाच० ॥ आदिश्यते यस्मिन्नागते संभ्रमेण परिजनस्तदासनदानादिव्यापारे स आदेशकः । प्राघूर्णके, ॥ सूत्र० ॥

आएसग्ग—आदेशाग्र—न० आदिश्यत इत्यादेशः व्यापारनियोजनम् । अग्रशब्दोऽत्र परिमाणवाची तत्र च यत्र परिमितानामादेशो दीयते तदादेशाग्रम् ॥ आचा० ॥ आदिश्यते इत्यादेशो निर्देश इत्यर्थः आदेशेनाग्रं आदेशाग्रम इति नि० चू० ॥ परिमितानामादेशो, तद्यथा-त्रिभिः पुरुषैः कर्म्म कारयंति तान्वा भोजयन्तीति ॥ आचा० ॥

आदेसग्गं पंचंगुलादि जं पच्छिमं तु आदिसति । पुरिसाण वजोयंते भोयणकम्मादिकज्जेसु ।। ५३ ।। गाहा ।

आदिश्यते इति आदेशो निर्देश इत्यर्थः । तेण आदेसेण अग्गं

आदेशगं तत्थुदाहरणं पंचंगुलादि पंचण्हं अंगुलीदव्वाण कम्मट्ठिताण जदि पच्छिमं आदिस्सति तं आदेसग्गं भवति आदेसकारणं इमं भोयणकाले जहा सत्तट्ठाणे बहुआण कम्मट्ठिताण इमं बहुयं भोजयसुत्ति (आदिसति) एवं कम्मादिकज्जेसु वि नेयं गयं आदेसग्गं ॥ नि० चू० ॥

आवेशन–न० आ० विश आधारे ल्युट् ॥ वाच० ॥ लोहकारादिशालायाम् ॥ आचा० ॥ तानि चायस्कारकुंभकारादिस्थानानि येषु लोका आविशंतीति ॥ औ० ॥ शिल्पशालायाम्-तत्र हि मनोऽभिनिवेशेन च कार्य्यकरणात्तस्यास्तथात्वम् ॥ भूतावेशादिरोगे, कोपादौ, ॥ वाच० ॥

आएसपर–आदेशपर–त्रि० आदिश्यते आज्ञाप्यते इत्यादेशः यः कस्यांचित्क्रियायां नियोज्यते कर्म्मकरादिः स चासौ परश्चादेशपरः कस्यांचित्क्रियायां नियुक्ते कर्म्मकरादौ, ॥ आचा० ॥

भोअणपिंसणमादीसु एगखेत्ताट्ठियं तु जं पच्छा । आदिसइ भुंजऊणसु व आएसपरो हवइ तत्थ ॥ वृ० ॥

एतद्भोजनं प्रतीतं पेषणं व्यापारणं तदादिषु कारणेषु यं कंचनपुरुषमेकस्मिन् क्षेत्रे स्थितमपि पश्चात्पर्यंते आदिशति यथा मुंक्ष्व भोजनं विधेहि कुरु वा कृष्यादिकर्म्म एष आदेशपरो भवति आदेश आज्ञपनं तदाश्रित्य परः पाश्चात्य आदेशपर इतिव्युत्पत्तेः ॥ वृ० ॥

आएसभत्त–आदेशभक्त–न० आएसो पाहुणगो आगतो तस्स भत्तं आदेशभक्तम् । प्राघूर्णकभक्ते; ( एतद्वक्तव्यता भक्तशब्दे ) ॥ नि०चू० ॥

आएससव्वय–आदेशसर्व–पु० आदेशनमादेश उपचारो व्यवहारः स च बहुतरे प्रधाने वादिश्यते देशेऽपि यथा विवक्षितं घृतमभिसमीक्ष्य बहुतरे भुक्ते स्तोके च शेषे उपचारः क्रियते सर्वं घृतं भुक्तं प्रधानेऽप्युपचारः क्रियते यथा ग्रामप्रधानेषु गतेषु पुरुषेषु सर्वो ग्रामो गत इति व्यपदिश्यत इति आदेशतः सर्वमादेशसर्वमुपचारसर्वमित्यर्थः ॥ स्था० ॥ उपचारेण सर्वस्मिन्, ॥ स्था० ॥ आ०म० ॥ आदेशसर्वस्य स्वरूपं यथा ।

आएसो उवयारो सो बहुतरए पहाणतरपव्वदेसे वि जहा सव्वे भत्तं गउगामो ॥

आदेश उपचारः स च बहुतरे प्रधानतरे वादेशेऽपि सर्वतया प्रवर्त्तते तद्यथा परिगृहीतं भक्तमध्याद्बहुतरे भुक्ते सत्यादिश्यते सर्वमनेन भुक्तमिति प्रधानेतरेषु च कतिपयपुरुषेषु सेषेष्ववतिष्ठमानेष्वित्थमादिश्यते लोके।यथा गतः सर्वो ग्राम इति ॥ विशे० ॥

आएसिन्–आदेशिन्–त्रि० । आदिशति आ–दिश् णिनि । आदेशकारके, ॥ वाच० ॥ अभिलाषिणि, " वएणादेसी णारभे कंचणं,, वर्णः साधुकारस्तदादेशी वर्णाभिलाषी सन्नारभते कञ्चनेति ॥ आचा० ॥

आएसिय–आदेशिक–त्रि० । उपदेष्टरि, । ( सूत्रकृताङ्गे सम्यग्ज्ञानवतामुपदेष्टॄणां गुणानाविर्भावयन्नाह )—

लोयं विजाणंति ह केवलेणं पुन्नेण णाणेण समाहिजुत्ता ॥ धम्मं समत्तं च कहंति जे उ तारंति अप्पाण परं च तिन्ना॥ सूत्र० मू० ॥

लोकं चतुर्दशरज्वात्मकं केवलालोकं न केवलिनो विविधमनेकप्रकारं जानन्ति विदन्तीहास्मिन् जगति प्रकर्षेण जानाति प्रज्ञः पुण्यहेतुत्वात् । पुण्यं तेन तथाभूतेन ज्ञानेन समाधिना च युक्ताः समस्तं धर्म्मं श्रुतचारित्ररूपं ये तु परहितैषिणः कथयन्ति प्रतिपादयन्ति ते महापुरुषास्ततः संसारसागरं तीर्णाः परांश्च तारयन्ति सदुपदेशदानत इति केवलिनो लोकं जानन्तीत्युक्ते यत्पुनर्ज्ञानेनेत्युक्तं तद्बौद्धमतोच्छेदेन ज्ञानाधार आत्मा अस्तीति प्रतिपादनार्थमिति । एतदुक्तम्भवति यथादेशिकः सम्यग्मार्गज्ञ आत्मानं परञ्च तदुपदेशवर्तिनं महाकान्ताराद्विवक्षितदेशप्रापणेन निस्तारयत्येवं केवलिनोऽप्यात्मानं परञ्च संसारकान्तारान्निस्तारयन्तीति ॥ टी०सूत्र० ॥ आदेशितां वा आदेशः आदेशात्सत्कारपुरस्सरमाकार्यत इत्यादेश इति व्युत्पत्तेः । आदेशे, ( नायकादौ प्राघूर्णके ) ॥ व्य० ॥

आओग–आयोग–पुं०आ युज घञ् । गन्धमाल्योपहारे, व्यापारे, रोधे, सम्यक् सम्बन्धे, च ॥ वाच० ॥ द्विगुणादिलाभे, ॥ स्था० ॥ द्विगुणादिवृद्ध्यार्थप्रदाने च ॥ भ० ॥ परिकरे, "भीमसंगामि आओगं,, भीमः सांग्रामिक आयोगः परिकरो यस्येति ॥ ज्ञा० ॥

आओगपओग–आयोगप्रयोग–पुं० । आयोगस्यार्थलाभस्य प्रयोगा उपायाः ॥ औप० ॥ आयोगेन द्विगुणादिलाभेन द्रव्यस्य प्रयोगोऽधमर्णानां दानमिति ॥स्था०॥ द्रव्योपार्जनोपायविशेषे, ॥ स्था० ॥ द्विगुणादिवृद्ध्यार्थप्रदाने, सा कालान्तरे। प्रयोगे च ॥ भ० ॥

आओगपओगसंपउत्त–आयोगप्रयोगसम्प्रयुक्त–त्रि० । आवाहनविसर्जनकुशले, राज० ॥ आयोगो द्विगुणादिवृद्ध्यार्थप्रदानं प्रयोगश्च कलान्तरितौ सम्प्रयुक्तौ व्यापारितौ यैस्ते तथेति ॥ भ० ॥

आयोगप्रयोगा द्रव्योपार्जनोपायविशेषाःसम्प्रयुक्ताः प्रवर्त्तिता येन स तथेति,स्था०आयोगस्यार्थलाभस्य प्रयोगा उपायाः संप्रयुक्ता व्यापारिता येन तेषु वा सम्प्रयुक्तो व्यावृक्तो यः स तथेति- ॥ ज्ञा० ॥ औप० ॥ प्रवर्त्तितद्रव्योपार्जनोपायविशेषे, स्था० ॥ द्रव्योपार्जनोपायविशेषेषु प्रवृत्ते च ॥ ज्ञा० ॥ आयोगेन द्विगुणादिलाभेन द्रव्यस्य प्रयोगोऽधमर्णानां दानम् तत्र संप्रयुक्तानि व्यापृतानि तेन वा संप्रयुक्तानि संगतानीति ॥ स्था० ॥ द्विगुणादिलाभेन द्रव्यप्रयोगेषु व्यापृते, द्विगुणादिलाभार्थम् द्रव्यप्रयोगेण संगते च ॥ स्था० ॥

आओगव आयोगव–पु० स्त्री० अयोगव एव स्वार्थे अण् वैश्यकन्यायां शूद्रेणोत्पादिते जातिभेदे, "शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमो नृणाम्, ॥ वाच०, ॥

आओय–आयोद्–पु० आयोदस्यापत्यम् वा अण् । धौम्ये मुनौ ॥ वाच० ॥

आंबुरिग्गाम–आंबुरिग्राम–पुं० अशीतितीर्थजिनान्तर्गतश्रीमतिदेवजिनाधिष्ठिते ग्रामविशेषे, आंबुरिग्रामे श्रीमतिदेव इति ॥ ती० ॥

आकंखा–आकाङ्क्षा–स्त्री० आ+काङ्क्ष अङ् । अभिलाषे, १ न्यायमते, २वाक्यार्थज्ञानहेतौ, यत्पदं विना यत्पदस्यानन्वयस्तत्पदे तत्पदवक्तृरूपे संबन्धे ३ पदान्तरव्यतिरेकेणान्वयाभावे च ॥वाच०॥वाञ्छायाम् ॥षो० ॥ (अभिलाषायाम्)

॥आचा०॥ "तत्तत्वं यद्दृष्ट्वा निवर्त्तते दर्शनाकाङ्क्षा"दर्शनाकाङ्क्षा दर्शनवाञ्छेति ॥ षो० ॥

आकंदमाण–आक्रंदत्–त्रि० आक्रंदशब्दं कुर्वति, ॥ वि० ॥

आकंप–आकम्प–पु० आवर्जने, ॥ स्था०॥ व्य० ध०॥ आराधने, ॥ व्य० ॥ आ+ईषदर्थे कपि–घञ् । ईषत्कम्पे ॥ वाच० ॥

आकंपइत्ता–आकम्प्य–अ० आराध्येत्यर्थ, ॥व्य०॥ आवर्ज्येत्यर्थे, ॥ ध० ॥ स्था० ॥ आकंप्पा लोचनो हि आलोचकस्य दशसु दोषेषु प्रथमो दोष आलोचनाशब्दे ॥ ध० ॥ स्था० ॥

आकंपइत्तु–आकम्प्य–अ० आवर्ज्येत्यर्थे, ॥ स्था० ॥

आकंपण–आकम्पन–न० आराधने, आवर्जने,च ॥ व्य० ॥ ध० ॥ आकम्पते, आ+कपि–युच् । ईषत्कम्पनशीले, त्रि० भावे ल्युट् । ईषत्कम्पे, न० । आ+कपि–णिच्–ल्यु० । ईषच्चालके, त्रि० तत एव भावे ल्युट् । ईषच्चालने, न० ॥ वाच० ॥

आकड्ड–आकर्ष–पु० अभिमुखमाकर्षणे, ॥ प्रश्न० ॥ नि० चू० ॥

आकड्डण–आकर्षण–न० अभिमुखं कर्षणमाकर्षणम् । अभिमुखकर्षणे ॥ प्रश्न० ॥"आकड्ढणमाकसणं अप्पणोत्तेण आगड्ढणमागसणं" इति ॥ नि०चू० ॥

आकड्ढविकड्ढ–आकर्षविकर्ष–पुं० द्वि० अभिमुखकर्षणविपरीतकर्षणयोः, "आकड्ढविकड्ढ" आकृष अभिमुखं कर्षणं कुरु विकृष विपरीतं कर्षणं कुरु इति ॥ प्रश्न० ॥

आकड्ढविकड्डिया–आकर्षविकर्षिका–स्त्री० अभिमुखमाकृष्टस्य विपरीतकर्षणे, ॥ प्रश्न०॥"आकड्ढविकड्ढिं करेमाणे" इति ॥ भ० ॥ नि०चू० ॥

आकण्णन–आकर्णन–न० श्रवणे, ॥ आचा० ॥ ध०र० ॥ (एतद्वक्तव्यता श्रवणशब्दे– ) आ+कर्णि–ल्युट् । श्रवणे, मुदा तदाकर्णनतत्पराभूत् ॥ नैष० ॥ वाच० ॥

आकण्णिय–आकर्णित–त्रि० श्रुते, ॥ आचा० ॥

आकत्त–आकृत्य–न० न कतः स्वच्छताकारी अकतस्तस्य भावः ष्यञ् अस्वच्छत्वकारित्वे, ॥ वाच० ॥

आकप्प–आकल्प–पु० आ+कृप–णिच् घञ् । १ वेशरचनायाम्, २ भूषणे च ॥ वाच० ॥

आकम्हिय–आकस्मिक–त्रि० अकस्मादित्यव्ययं कारणाभावे, कारणं विना भवः विनया० ष्ठक् टिलोपः । अकस्माद्भवे, स्त्रियां ङीप् ॥वाच०॥ अकस्मादेव यद्भवति तदाकस्मिकम् ॥ विशे० ॥ निर्युक्तिके, ॥ आचा० ॥ अहेतुके, ॥ विशे० ॥

"वज्झनिमित्ताभावा जं भवमाकम्हियं तंति" ॥

यत्तु वाह्यनिमित्ताभावादकस्मादेव भवति तदाकस्मिकमिति ॥ विशे० (एतद्वक्तव्यता स्वभावशब्दे )।

आकलण–आकलन–न० । १ आ+कल. ल्युट् । आकाङ्क्षायाम्, २ ग्रहणे, ३ संग्रहे, ४ गणने, ५ अनुसन्धाने, च ॥ वाच० ॥

आकलिय–आकलित–त्रि० आ+कल क । अनुसृते, ग्रथिते, च ॥ वाच० ॥

आकस–आकष–पु० । आकष्यते यत्र कष–अच–स्वर्णादिकषणसाधने, ( कोष्टि ) प्रस्तरभेदे, आकषे नियुक्तः सन् आकषकः तत्र नियुक्तं–त्रि० तेन चरति ठक् आकषिकः । तेन चारिणि, स्त्रियां ङीप् ॥ वाच० ॥

आकि(ग)ई आकृति–आ. कृञ्. क्तिन्. "इत्कृपादौ" प्रा० ११ इति सूत्रेणेत्वम् प्राकृतत्वात्तकारलोपः ॥ प्रा०व्या० ॥ आक्रियते व्यज्यते जातिरनया करणे क्तिन् । जातिव्यञ्जके ऽवयवसंस्थानभेदे, "आकृतिग्रहणा जातिः" महाभा० ॥ जात्याकृतिव्यक्तयस्तु पदार्थाः।गौ०सू०॥ वाच० आकारे,आ.म.।श्रा०। संस्थाने,न०।'आगारत्ति वा आगत्तिवासंठ्ठाणंति वा एगट्ठा'आचू आकृतिशब्देन प्राण्यवयवानां पाण्यादीनां तदवयवानां चांगुल्यादीनां संयोगोऽभिधीयते तथा च सूत्रम् । आकृतिर्जातिलिंगाख्येति। अस्य भाष्यं यया जातिर्जातिलिंगानि चाख्यायंते तामाकृतिं विद्यात्सर्वसत्त्वावयवानां तदवयवानां च नियतो व्यूहोव्यूहशब्देन संयोगविशेष उच्यते नियतग्रहणेन कृत्रिमसंयोगनिरासः । तत्र जातिलिंगानि प्राण्यवयवाः शीर्षपाण्यादयस्तैर्हि गोत्वादिलक्षणा जातिर्लिंग्यते आकृत्या तु कदाचित्साक्षाज्जातिर्व्यङ्ग्यते ॥ सम्म० ॥ यदा शिरःपाण्यादीनां लिङ्गानां प्रख्यायिका भवत्याकृतिः जातिशब्देनाभिन्नाभिधानप्रत्ययप्रसवनिमित्तं समान्याख्यं वस्तूच्यते । यथा च सूत्रं समानप्रत्ययप्रभावात्मिका जातिरिति समानप्रत्ययोत्पत्तिकारणं जातिरित्यर्थः ॥ सम्म० ॥ ( अस्याः शब्दार्थत्वविचार आगमशब्दे ) सम्म० ॥ रूपे, यत्राकृतिस्तत्र गुणा वसंतीति ॥ आचा० ॥

आकिइमंत–आकृतिमत्–त्रि० प्रशस्तस्वरूपोपेते, "जो वि अगीतो वि आगईमंतो'अगीतार्थोऽपि आकृतिमान् रूपेण मकरवज्रतुल्यः स गणधरपदे निवेश्यत इति. ॥ व्य० ॥

आकिंचणिय–आकिंचन्य–न० अकिञ्चनस्य भावः ष्यञ् दरिद्रतायाम् ॥ वाच० ॥ नास्य किञ्चन द्रव्यमस्तीत्यकिञ्चनस्तस्य भाव आकिञ्चन्यम् ॥ प्रव० ॥ षो० ॥ ध० ॥ कनकादिरहिततायाम् ॥ पंचा० ॥ अकिंचणीयं नत्थि जस्स किंचण सो अकिंचणो तस्स भावो आकिंचणियं कंमनिज्जरट्ठं सदेहादेसु विणस्समेण भवितव्वं ॥ आ० चू० ॥

आकिंचणियव्वय–आकिञ्चन्यव्रत–न० पञ्चमे महाव्रते, ॥ ध० ॥ श्लोकः ॥ परिग्रहस्य सर्वस्य सर्वथा परिवर्जनम् । आकिंचन्यं व्रतं प्रोक्तमर्हद्भिर्हितकांक्षिभिः ॥४४॥ सर्वस्य सचित्ताचित्तादिविषयस्य द्रव्यक्षेत्रकालभावस्य वा परिग्रहस्य मूर्च्छाभावस्य सर्वथा त्रिविधे परिवर्जनं त्यागःतत् आकिंचन्यव्रतं न विद्यते किंचन द्रव्यं यस्यासावकिंचनस्तस्य भाव आकिंचन्यं तच्च तं चेति समासः अपरिग्रहव्रतमित्यर्थः । प्रोक्तं प्रज्ञप्तं कैरर्हद्भिर्जिनैः किंविशिष्टैस्तैर्हितकांक्षिभिर्हितेच्छुभिरिति शब्दार्थः ॥ ध० ॥

आकिट्ठ–अकृष्ट–त्रि० आ×कृष––क्त । कृताकर्षणे, । वाच० ॥

आकिट्ठि––आकृष्टि––स्त्री० आ+कृष–क्तिन् आकर्षणे, वाच०

आकीलवास–आक्रीडावास–पुं० गौतमद्वीपस्थसुस्थितलवणाधिपतेरत्यर्थक्रीडावासे भौमेयविहारे, ( तद्वक्तव्यता गौतमद्वीपशब्दे ) ॥ जी० ॥

आकुट्ठ–आकुष्ट–त्रि० आ+कुश–क्त १ कृताक्रोशे, यं प्रति आक्रोशः कृतस्तस्मिन् । २ शब्दिते ३ निन्दिते च भावे क्त । ४ परुषभाषणे, न० "मार्ज्जारमूषिकास्पर्शे आकुष्टे क्रोधसम्भवे"।कात्या०। आकुष्टे, परुषभाषणे, ॥ वाच० ॥ वाग्भिराकुष्ट इति ॥ आचा० ॥ श्लोकः ॥ आकुष्टेन मतिमता तत्वा-

र्थविचारणे मतिः कार्या ॥ यदि सत्यं कः कोपः स्यादनृतं किंनु कोपेन ॥ १ ॥ सूत्र० ॥

**आकूइ**–आकूति–स्त्री० आ+कू–भावे क्तिन् । अभिप्राये, ॥वाच०॥

**आकूय**–आकूत–न० आ.कू.भावे.क्त.आशये,अभिप्राये, ॥ वाच०॥ अभिप्रेते वस्तुनि, भावे च ॥ विशे० ॥

**आकूणिय**–आकूणित–त्रि०आ+कूण–क्त०।ईषत्संकुचिते,।वाच०।

**अकेवलिय**–आकेवलिक–पुं० न केवलमकेवलं तत्र भवा आकेवलिकाः । सद्वन्द्वे, ( सप्रतिपक्षे ) असम्पूर्णे च ॥ आचा० ॥

**आकोसल**–आकौशल–न० आकुशलस्य भावः अण् । द्विपद्-वृद्धिः पूर्वस्य वा । अपाटवे, ॥ वाच० ॥

**आकोसायंत**–आकोशायमान–त्रि० । आकोशायते इत्याकोशायमानम् । विकचीभवति कमलादौ, "आकोसायंतपउमगंभीर-वियडा" आकोशायते इत्याकोशायमानं विकचीभवदित्यर्थः । पद्मं तद्वद्गंभीरा विकटा च नाभिर्येषां ते इति ॥ जी० ॥

**आख**–आख–पु०आखनत्यनेन आ+खन–ड खनित्रे, अत्र स्वार्थे कन् गौरादिपाठाद् ङीष् आखकी । क्षुद्रखनित्रे, स्त्री० ॥ वाच० ॥

**आखंडल**–आखण्डल–पु० आखण्डयति भेदयति पर्व्वतान् आ खडि–डलच् डस्य नेत्वम् । इन्द्रे, ॥ वाच० ॥ प्रा०को० ॥

**आखोड**–आखोट–पु० आखः खनित्रमिव उटानि पर्णान्यस्य । (अखरोट) इतिख्याते शैलपीलौ, ॥ वाच० ॥

**आग**–आगस्–न० इण्*आग अपराधे, उणा० इण्–असुन् आगादेशः । अपराधे, पापे, दण्डे, च ॥ वाच० ॥

**आगइ**–आगति–स्त्री० आगमनमागतिः नारकत्वादेरेव प्रज्ञापक-प्रत्यासन्नस्थाने,प्रतिनिवृत्तौ (आगमने) स्था०।कल्प०॥ "गइं च जो जाणइ णागइं च" यश्च जीवानामागमतिमागमनं कुतः समागता नारकास्तिर्य्यञ्चो मनुष्या देवा इति॥सूत्र०॥ "एगस्स जंतो गतिरागती य" आगतिरागमनं भवान्तरादुपजायते कर्मसहायस्यैवेति. ॥ सूत्र० ॥ उत्पत्तौ ॥ स्था० ॥ "एगा आगती" आगनमागतिर्नारकत्वादेरेव प्रतिनिवृत्तिस्तदेकत्वं गतेरिवेति ॥ स्था० ॥ नैरयिकाणां दण्डकक्रमेण गत्यागती स्थानाङ्गे यथा–

नेरइया दु गइया दु यागइया पन्नत्ता तंजहा–नेरइए नेरइएसु उववज्जमाणे मणुस्सेहिंतो वा पंचिंदियतिरिक्खजोणिएहिंतो वा उववज्जेज्जा । से चेव णं से नेरइयत्तं विप्पजहमाणे मणुस्सत्ताए वा पंचिंदियतिरिक्खजोणियत्ताए वा गच्छेज्जा । एवमसुरकुमाराणं वि णवरं से चेव णं से असुरकुमारत्तं विप्पजहमाणे मणुस्सत्ताए वा तिरिक्खजोणियत्ताए वा गच्छेज्जा । एवं सव्वदेवा पुढविकाइया दु गइया दु यागइया पन्नत्ता तंजहा–पुढविकाइए पुढविकाइएसु उववज्जमाणे पुढविकाइएहिंतो वा णो पुढविकाइएहिंतो उववज्जेज्जा । से चेव णं से पुढविकाइयत्तं विप्पजहमाणे पुढविकाइयत्ताए वा णो पुढविकाइयत्ताए वा गच्छेज्जा एवं जाव मणुस्सा।स्था०।

( नेरइएत्यादि ) दण्डकः कण्ठ्यो नवरं नैरयिका नारका द्वयोर्मनुष्यगतितिर्यग्गतिलक्षणयोर्गत्योरधिकरणभूतयोर्गतिर्येषां ते तथा द्वाभ्यामेताभ्यामेवावधिभूताभ्यामागतिरागमनं येषां ते तथा उदितनारकायुर्नारक एव व्यपदिश्यते अत उच्यते । ( नेरइएनेरइएसुत्ति ) नारकेषु मध्ये इत्यर्थः । इह चोद्देशक्रमव्यत्ययात् प्रथमवाक्येनागतिरुक्ता । ( से चेव णं सेत्ति । ) यो मानुषत्वादितो नरकं गतः स एवासौ नारको नान्यो ऽनेनैकांतानित्यत्वं निरस्तमिति । (विप्पजहमाणेत्ति) विप्रजहन् परित्यजन् इह च भूतभावतया नारकव्यपदेशः अनेन वाक्येन गतिरुक्ता इत्थञ्च व्याख्यातं तेजस्कायिकाद्या गतयस्तिर्यङ्मनुष्यापेक्षया एकगतयस्तिर्यगपेक्षयेति वाक्यमुपजीव्येति । (एवं असुरकुमाराविति) नारकवद्वक्तव्या इत्यर्थः । नवरं केवलमयं विशेषः।तिर्यक्षु न पंचेन्द्रियेष्वेवोत्पद्यंते । पृथिव्यादिष्वपि तदुत्पत्तेरित्यतः सामान्यत आह ( से चेव णं से इत्यादि । जाव तिरिक्खजोणियत्ताए वा गच्छेज्जत्ति) एवं (सव्वदेवत्ति) असुरवद् द्वादशापि दण्डकपदानि वाच्यानि तेषामप्येकेंद्रियेषूत्पत्तेरिति । (नो पुढविकाएहिंतोत्ति) अनेन पृथ्वीकायिकनिषेधद्वारेणाप्कायिकादयः सर्वे गृहीता द्विस्थानकानुरोधादिति तेभ्यो वा नारकवर्जेभ्यः समुत्पद्येत । ( नोपुढविकाइयत्ताएत्ति ) । देवनारकवर्जाप्कायादितया गच्छेदिति ( एवं जाव मणुस्सेत्ति) । यथा पृथ्वीकायिका (दुगइया) इत्यादिभिरभिलापैरुक्ताः । एवमेभिरेवाप्कायादयो मनुष्यावसानाः पृथ्वीकायिकशब्दस्थाने ऽप्कायादिव्यपदेशं कुर्वद्भिरभिधातव्या इति । व्यन्तरादयस्तु पूर्वमतिदिष्टा एवेति ॥टी०स्था०॥ उपपातशब्दे आगतिः कुत उत्पद्यत इत्यादि वक्ष्ये । एकेन्द्रियादीनां गत्यागती यथा–

एगिंदिया पंचगइया पंचागइया पं० तं० एगिंदिए एगिंदिएसु उववज्जमाणे एगेंदिएहिंतो वा जाव पंचेंदिएहिंतो वा उववज्जेज्जा । से चेव णं से एगेंदिए एगेंदियत्तं विप्पजहमाणे एगेंदियत्ताए वा जाव पंचेंदियत्ताए वा गच्छेज्जा । बेइंदिया पंचगइया पंचागइया एवं चेव । एवं जाव पंचेंदिया पंच गइया पंचागइया पण्णत्ता तंजहा पंचेंदिया जाव गच्छेज्जा ।।स्था०।।

पृथ्वीकायिकादीनां गत्यागती यथा—

पुढविकाइया छ गइया छ आगइया पन्नत्ता तंजहा पुढविकाइए पुढविकाइएसु पुढविकाइएहिंतो वा जाव तसकाइएहिंतो वा गच्छेज्जा सो चेव णं से पुढविकाइए पुढविकाइयत्तं विप्पजहमाणे पुढविकाइयत्ताए वा जाव तसकाइयत्ताए वा गच्छेज्जा ।। स्था० ।।

अण्डजादीनां गत्यागती प्रतिपादनाय सूत्रं यथा—

अंडगा सत्त गइया सत्तागइया पण्णत्ता तंजहा–अंडगे अंडगेसु उववज्जमाणे अंडएहिंतो वा पोयएहिं वा जाव उब्भिएहिंतो वा उववज्जेज्जा । से चेव णं से अंडए अंडगत्तं विप्पजहमाणे अंडयत्ताए वा पोययत्ताए वा जाव उब्भियत्ताए वा गच्छेज्जा । पोयया सत्त गइया सत्तागइया एवं चेव सत्तण्हवि गइरागई भाणिव्वा जाव उब्भियत्ति ।। स्था० ।।

( अंडयेत्यादि ) सप्त सूत्रकम् तत्र सूतानां सप्तगतयोऽण्डजा-

दियोनिलक्षणा येषां ते सप्त गतयः सप्तभ्य एवांडजादियोनिभ्यः आगतिरुत्पत्तिर्येषां ते सप्तागतयः ॥ ( एवं चेवत्ति।) यथाण्डजानां सप्तविधे गत्यागती भणिते तथा पोतजादिभिः सह सप्तानामप्यंडजादिजीवभेदानां गतिरागतिश्च भणितव्या। (जाव उब्भियत्ति-)। सप्तमसूत्रं यावदिति शेषं सुगमम् ॥ टी० स्था० ॥

अंडया अट्ठगइया अट्ठागइया पं० तंजहा अंडए अंडएसु उववज्जमाणे अंडएहिंतो वा पोयएहिंतो वा जाव उववाइएहिंतो वा उववज्जिज्जा से चेव णमडए अंडगत्तं विप्पजहमाणे अंडगत्ताए वा पोयगत्ताए वा जाव उववाइयत्ताए वा गच्छेज्जा । एवं पोययावि । जराउयावि । सेसाणं गइरागई नत्थि ॥ स्था० ॥

(अट्ठविहेत्यादि) सूत्रचतुष्टयं सुगमं नवरमौपपातिकादेव नारकाः (सत्ताणंति) अंडजपोतजजरायुजवर्ज्जितानां रसजादीनां गतिरागतिश्च नास्तीत्यष्टप्रकारेति शेषः। यतो रसजादयो नौपपातिकेषु सर्वेषूत्पद्यंते पंचेन्द्रियाणामेव तत्रोत्पत्तेः।नाप्यौपपातिका रसजादिषु सर्वेष्वप्युपपद्यन्ते पंचेंद्रियैकेंद्रियेष्वेव तेषामुपपत्तेरिति अंडजपोतजजरायुजसूत्राणि त्रीण्येव भवन्तीति ॥ टी० स्था० ॥

पृथ्वीकायिकादीनाम्पुनरपि गत्यागती यथा—

पुढविकाइया नव गइया नव आगइया पं० तंजहा—पुढविकाइए पुढविकाइएसु उववज्जमाणे पुढविकाइएहिंतो जाव पंचिंदिएहिंतो वा उववज्जेज्जा से चेव णं से पुढविकाइए पुढविकाइयत्तं विप्पजहयमाणे पुढविकाइयत्ताए जाव पंचिंदियत्ताए वा एवं आउकाइया वि जाव पंचिंदियत्ति ॥स्था०॥

( गत्यागतिपरिज्ञानेन कर्मक्षयमाहाचाराङ्गे—

आगतिं गतिं परिण्णाए दोहिवि अंतेहिं अदिस्समाणेहिं से ण च्छिज्जति ण भिज्जति ण डज्झति ण हणणति कंचणं सव्वलोए अवरेण पुव्वं ण समरंति एगे किमस्स तीतं किं वा गमिस्सं भासंति एगे इह माणवाओ जमस्सतीतं तं वा गमिस्सं णाइयमट्ठं ण य आगमिस्सं अट्ठं णिच्छंति तहागताओ विधूतकप्पे एयाणुपस्सी णिज्झोसइत्ता का अरती के आणंदे एत्थंपि अग्गहे चरे ॥ आचा० मू० ॥

आगमनमागतिः सा च तिर्यग्मनुष्ययोश्चतुर्द्धा चतुर्विधनरकादिगमनसद्भावाद्देवनारकयोर्द्विधातिर्यङ्मानुष्यगतिभ्यामेवागमनसद्भावादेवं गतिरपि मनुष्येषु तु पञ्चधा तत्र मोक्षगतिसद्भावादतस्तामागतिं गतिं वा परिज्ञाय संसारचक्रवालेऽरघट्टघटीयंत्रन्यायं वेत्त्य मनुष्यत्वे मोक्षगतिसद्भावमाकलय्य हेतुत्वादन्तौ रागद्वेषौ ताभ्यां द्वाभ्यामन्ताभ्यामदृश्यमानाभ्यामनपदिश्यमानाभ्यां च क्वाप्रत्ययस्योत्तरक्रियामाह—( सेइत्यादि)से—आगतिगतिपरिज्ञाता रागद्वेषाभ्यामनपदिश्यमानो न छिद्यते असयादिना, न भिद्यते कुंतादिना न दह्यते पावकादिना न हन्यते नरकगत्यानुपूर्व्यादिना भूयसोऽथवा रागद्वेषाभावात्सिध्यत्येव तदवस्थस्य चैतानि छेदनादीनि विशेषणानि (कंचणमिति) विभक्तिविपरिणामात् कंनचित्सर्वस्मिन्नपि लोके न छिद्यते नापि भिद्यते रागद्वेषोपशमादिति। तदेवमागतिगतिपरिज्ञानाद्रागद्वेषपरित्यागस्तदभावाच्च छेदनादिसंसारदुःखाभावोऽपरे च सांप्रतेक्षिणः कुतो वयमागताः क यास्यामः किं वा तत्र न संपत्स्यते, नैवं भावयंत्यतः संसारभ्रमणपात्रतामनुभवन्तीति दर्शयितुमाह-( अवरेण ) इत्यादि रूपकम् ॥ अपरेण पश्चात्कालभाविना सह पूर्वमतिक्रान्तं न स्मरन्त्यन्ये मोहाज्ञानावृतबुद्धयो यथा किमस्य जन्तोर्नरकादिभवोद्भूतं बालकुमारादिवयोपचितं वा दुःखाद्यतीतं किं वागामिष्यत्यागामिनि काले किमस्य सुखाभिलाषिणो दुःखद्विषो भावीति। यदि पुनरतीतागामिपर्यालोचनं स्यान्न तर्हि संसारे रतिः स्यादित्युक्तं च "केण ममेत्थुप्पत्ती कहं इओ तह पुणो वि गंतव्वं। जोएत्ति यं पि चिंतेइ एत्थ सो को न निव्विएणो" एके पुनर्महामिथ्याज्ञानिनो भाषंते इहास्मिन्संसारे मनुष्यलोके वा नानवा मनुष्या यथा मदस्य जंतोरतीतं स्त्रीपुंनपुंसकसुभगदुर्भगश्वगोमायुब्राह्मणक्षत्रियविट्शूद्रादिभेदावेशात्पुनरप्यन्यजन्मानुभूतां तदेवागामीति। यदि वा न विद्यते परः प्रधानोऽस्मादित्यपरः संयमस्तेन वासितचित्ताः सन्तः पूर्वं पूर्वानुभूतं विषयसुखोपभोगादि न स्मरन्ति न तदनुस्मृतिं कुर्वते। एके रागद्वेषविप्रमुक्ताः तथा नागतादिव्याङ्गनाभोगमपि नो कांक्षन्ति किं वास्य जन्तोरतीतं सुखदुःखादि किं वागामीत्येतदपि न स्मरन्ति यदि वा कियान् कालोऽतिक्रान्तः कियानेष्यति लोकोत्तरास्तु भाषन्ते। एके रागद्वेषरहिताः केवलिनश्चतुर्दशपूर्वविदो वा यदस्य जंतोरनादिनिधनत्वात्कालशरीरसुखाद्यतीतमागामिन्यपि तदेवेति ॥

अपरे तु पठन्ति। "अवरेण पुव्वं कहं से तीतं आगमिस्सं न समरंति एगे भासंति एगे इह माणवाओ जह से अईयं तह आगमिस्सं"। अपरेण जन्मादिना सार्द्धं पूर्वमतिक्रान्तं जन्मादि न स्मरन्ति कथं वा केन प्रकारेणातीतं सुखदुःखादि कथं वेष्यामित्येतदपि न स्मरन्ति। एके भाषन्ते किमत्र श्रेयम् यथैकस्य रागद्वेषमोहसमुत्थैः कर्मभिर्बध्यमानस्य जन्तोस्तद्विपाकांश्चानुभवतः संसारस्य यदतिक्रांतमागाम्यपि तत्प्रकारमेवेति। यदि वा प्रमादविषयकषायादिना कर्माण्युपदिष्टानिष्टविषयाननुभवतः सर्वज्ञवाक्सुधास्वादासंविदो यथा संसारोऽतिक्रान्तस्तथाऽऽगाम्यपि यास्यति। ये तु पुनः संसारार्णवतीरभाजस्ते पूर्वोत्तरवेदिन इत्येतद्दर्शयितुमाह— ( नाईयमित्यादि ) तथैवापुनरावृत्यागतं गमनं येषां ते तथा गताः सिद्धा यदि वा यथैव ज्ञेयं तथैव गतं ज्ञानं येषां ते तथागताः सर्वज्ञास्तेऽमुनातीतमर्थमनागतरूपतयैव नियच्छंत्यवधारयंति नाप्यनागतमतिक्रान्तरूपतयैव विचित्रत्वात्परिणतेः। पुनरर्थग्रहणं पर्यायरूपार्थाय द्रव्यार्थतया त्वेकत्वमेवेति। यदि वा नातीतमर्थं विषयभोगादिकं नाप्यनागतं दिव्यांगनासंगादिकं स्मरंत्यभिलषन्ति वा के तथागता द्वेषाभावात्पुनरावृत्तिरहिताः तुशब्दो विशेषमाहयथा मोहोदयादेके पूर्वमागामि चाभिलषन्ति सर्वज्ञास्तु नैवमिति तन्मार्गानुयाय्यप्येवंभूत एवेति दर्शयितुमाह-(विहूयकप्प इत्यादि )। विविधमनेकधा धूतमपनीतमष्टप्रकारं कर्म्म येन स विधूतः । कोऽसौ कल्प आचारः। विधूतःकल्पो यस्य साधोः स विधूतकल्पः । एतदनुदर्शी भवति अतीतानागतसुखाभिलाषी न भवतीति यावत् ।एतद

नुदर्शी च किं गुणो भवतीत्याह–(निज्झोस इत्यादि) पूर्वोपचितकर्म्मणां निज्झोपयिता क्षपकः क्षपयिष्यति वा तृजंतमेतल्लुडन्तं वा कर्म्मक्षपणायोद्यतस्य च धर्म्मध्यायिनः शुक्लध्यायिनो वा महायोगीश्वरस्य निरस्तसंसारसुखदुःखविकल्पाभासस्य यत्स्यात्तद्दर्शयति ( का अरई के आणंदे ) इष्टाप्राप्तिविनाशोत्थो मानसो विकारो रतिरभिलषितार्थावाप्तावानंदः योगिचित्तस्य तु धर्म्मशुक्लध्यानावेशावष्टब्धं ध्येयांतरावकाशस्यारत्यानंदयोरुपादानकारणा भावादनुत्थानमेवेत्यतोऽपदिश्यते । केयमरतिर्नाम को वानंद इति नास्त्येवेतरजनक्षुण्णोयं विकल्प इति।एवं तर्ह्यरतिरसंयमे संयमे चानंद इत्येतदन्यत्रानुमतमनेनाभिप्रायेण विधेयमित्येतदनिच्छतोप्यापन्नमिति चेन्नाभिप्रायापरिज्ञानाद्यतोऽत्रारतिरतिविकल्पाध्यवसायो निषिषित्सितो न प्रसंगायते ( अप्परतिरती)तदाह–एत्थं पीत्यादि । अत्राप्यरतावानंदे वोपसर्ज्जनप्राये न विद्यते ग्रहो गार्द्ध्यं तात्पर्यं यस्य सो ग्रहः स एवंभूतश्चरेदवतिष्ठेतेदमुक्तं भवति । शुक्लध्यानादरतौ रत्यानंदौ कुतश्चिन्निमित्तादायातौ तदाग्रहग्रहरहितस्तावप्यनुचरेदिति ॥ ॥ टी० आचा० ॥ परस्परं द्वयोर्द्वयोः पदयोर्यत्र विशेषणविशेष्यतया प्रत्यावृत्त्या प्रातिकूल्येन गमनमागतिः लक्षणविशेषे यथा देवो जीव इत्यत्र देवत्वमनूद्यजीवत्वं पृच्छयत इतीह प्रत्यावृत्त्या देवपदाज्जीवपदे आगतिरिति । अस्या भेदादिकं गत्यागतिलक्षणशब्दे । विशे० ॥ आ०म० ॥

**आगइगइविण्णाण**—आगतिगतिविज्ञान—न० शुभाशुभपूर्वजन्मानागतजन्मनां निर्णये, आगत्यागमनेनास्खलितेतरादियुक्तेन गतिविज्ञानमागामिभवविज्ञानमागतिविज्ञानम् । स्खलितास्खलितागमनेनागामिभवविज्ञाने च । "आगइ गइ विण्णाणं इमस्स तह पुप्फपाएण" आगतिगतिविज्ञानं शुभाशुभपूर्वजन्मानागतजन्मनां निर्णयनं कार्यं अथवागत्यागमनेनास्खलितेतरादियुक्तेन गतिविज्ञानमागामिभवज्ञानमागतिविज्ञानमिह व्याख्याने समासितमपि गातिविज्ञानमित्येतत्पदं प्राकृतत्वेनोत्तरत्र संबंधनीयमिति ॥पंचा०॥

**आगंतगार**—आगंतागार—पुं० न० आगंतुकानां कार्पटिकादीनामावासार्थे गृहे,"आगंतगारे आरामगारे समणे उ भीते ण उ वेंति वासं"आगंतुकानां कार्पटिकादीनामगारमागंतागारमिति वृत्तिः ॥ सूत्र० ॥

**आगंता**—आगन्तृ—त्रि० । आ समंताद्गंता आगंता ॥ सूत्र० ॥ आगमनशीले, ॥ स्था० ॥ "आगंतारो महब्भयं" महाभयं पौनःपुन्येन संसारपर्य्यटनतया नारकादिस्वभावं दुःखमागंतार आगमनशीला भवन्तीति ॥ सूत्र० ॥

**आगंतार**—आगंतागार—पुं० न० ग्रामबाह्यावासे ( आगंतारो जत्थ ) आगत्य विहरंतीति आगंतारो जत्थ आगारा आगंतुं विहरंति तं आगंतागारं गामपरिसट्ठाणंति वुत्तंभवति आगंतुगाण वा कयं अगारं आगंतागारं बाहियावासोत्ति॥नि०चू०॥ आगमे हि कतमागारं आगंतं जत्थ चिट्ठति आगाए परिगमणं पच्चाओ सो वरगादी तु णेगविधो ॥३॥ आगमा रुक्खातेहिं कतं अगारं आगंतुं जत्थ चिट्ठंति अगारा तं आगंतागारं परिसमंतागारणं गिहभावगतेत्यर्थः । पज्जायोपवज्जा सो य चरगपरिव्वायसक्कआजीवागमादिणेगविधा ॥ नि० चू० ॥

**आगंतार**—पु० । न० । यत्र ग्रामादेर्बहिरागत्यागत्य पथिकादयस्तिष्ठंति तान्यागंतागाराणि पत्तनाद्बहिर्गृहे, ॥ आचा० ॥ प्रसंगायाता आगत्य वा यत्र तिष्ठंति तदागंतारं तत्पुनर्ग्रामान्तर्नगराद्बहिः स्थानम् ॥ आचा० ॥ औ० ॥ ( तत्र अन्ययूथिकगृहस्थेभ्योऽशनादिदाननिषेधः अन्ययूथिकशब्दे )

**आगंतारट्ठिय**—आगंतुकागारस्थित—त्रि० । आगंतुकागारोषिते प्राघूर्णकादौ, आगंतारट्ठियाणं कज्जे आदेसमाइणा केइ वसिउं बिस्समिउं वा छड्डिउं गया अणाभोगा, ॥ वृ० ॥ इह यत्रागारिण आगत्यागत्य तिष्ठंति । तदागंतुकागारं तत्र कार्ये कारणविशेषतः स्थितानां प्रकृतस्तत्र अवतरति कथमित्याह—आदेशप्राघूर्णकस्तथा केचित्पथिका आगंतुकागारे रजन्यां वा समुपगता यावद्भोजनार्थं विश्रामं कृतवंतः तत उषित्वा विश्रम्य वा किंचित् द्रव्यजातमनाभोगात्परित्यज्य गता इति. ॥ तत्र कर्तव्यता वसतिशब्दे ॥ वृ० ॥

**आगंतु**—आगंतु—पु० आ+ग–तुन् ॥ १ ॥ अनियतस्थायिनि अतिथौ ॥ २ ॥ हठादुपस्थिते च ॥ ३ ॥ आगमनशीले त्रि० स्वार्थे कन् । आगन्तुकोऽप्यत्र ॥ वाच० ॥

**आगंतु ( ग ) य**—आगंतुक—त्रि० । अन्यत आगते ॥ वृ० ॥ कार्पटिकादौ ॥ सूत्र० ॥ ( तथा सूत्रकृताङ्गे उपसर्गमधिकृत्य. ) "आगंतुगो य पीलाकरो य जो सो उवसग्गो" अपरस्माद्दिव्यादेरागच्छतीत्यागंतुको योऽसावुपसर्गो भवति स च देहस्य संयमस्य वा पीडाकारीति. ॥ सूत्र० ॥ आवश्यकेऽपि व्रणभेदमधिकृत्य ( आगंतुको य नायव्वो ) आगन्तुकः कण्टकादिप्रभव इति ॥ आव० ॥

**आगच्छमाण**—आगच्छत्—त्रि० । प्रतिनिवर्तिनि, ॥ भ० ॥

**आगम**—आगम—पु० । आ गम्–घञ्–आगतौ, प्राप्तौ, ॥ वाच० ॥ दश० ॥ उत्पत्तौ. सामाद्युपाये च आगम्यते स्वत्वमनेन । स्वत्वप्रापके, क्रयप्रतिग्रहादौ, ॥ वाच० ॥ ज्ञाने, ( आगमेत्ता आणवेज्जा ) ज्ञात्वाऽऽज्ञापयेदिति ॥ आचा० ॥ "लाघवं आगममाणा" लाघवं आगमयन्नवबुध्यमान इति ॥ आचा० ॥ (तथाच व्यवहारकल्पे) ( नायं आगमियं य पेट्टं जस्स सो परायातो सो पारोक्खो वुच्चइ तस्स पएसा इमे हुंति" ज्ञानमागमितमित्येकार्थमितश्च ज्ञानमागम इत्येकार्थमेवं च ज्ञानमागम इत्येकार्थमापतितं । तत्र यस्य स आगमोऽपराधीनः स प्रत्यक्ष उच्यते सचावध्यादिरूपः । यस्य तु परायत्तः स परोक्ष उच्यते स च चतुर्दशपूर्वादि समुत्थस्तस्य परोक्षस्यागमस्य प्रदेशाः प्रतिभागा भेदा इत्यर्थः ॥ व्य० ॥ तेचागमव्यवहारशब्दे॥व्य०॥ आप्तवचनादाविर्भूतमर्थे संवेदनमागम उपचारादाप्तवचनंचेति ॥ स्या० ॥ इति आप्तः प्रतिपादयिष्यमाणस्वरूपः तद्वचनाज्जातमर्थज्ञानमागमः आगम्यंते मर्यादयावबुध्यंतेऽर्थाः अनेनेत्यागमः ॥ रत्ना० ॥ ( शब्दार्थपरिज्ञाने ) नयो० ॥ आ अभिविधिना सकलश्रुतिविषयव्याप्तिरूपेण मर्य्यादया वा यथावस्थितप्ररूपणारूपया गम्यन्ते परिच्छिद्यन्ते अर्था येन स आगमः पुन्नाम्नीति करणे घञ् प्रत्ययः ॥ आ० म० ॥ ( आणज्जंति अत्था जेण सो आगमोत्ति ) आचू० ॥ केवलमनःपर्य्यायावधिज्ञाने, ॥ स्था० ॥पंचा०॥आ०म०॥नं०॥व्य०॥ध०॥ टी०॥आसमंताद्गम्यते वस्तुतत्वमनेनेत्यागमः । श्रुतज्ञाने,आ० म० ॥ आ०चू० ॥ सर्वज्ञप्रणीतोपदेशे, आचा० ॥ व्य० ॥ प्रतिविशिष्टवर्णानुपूर्वीविन्यस्तवर्णपदवाक्यसंघातात्मके आ-

प्रणीते ॥ आचा० ॥ गणधरादिविरचिते. द्वादशाङ्गादिरूपे, सिद्धान्ते, ॥ आ० म० ॥ ध० र० ॥ पंचा० ॥ सूत्र० ॥ दर्श० ॥ प्रश्न०॥ इहापारसंसारान्तर्गतेनाऽसुमताऽवाप्याऽतिदुर्लभं मनुजत्वं सुकुलोत्पत्तिसमग्रेंद्रियसामग्र्याद्युपेतेनाऽर्हद्दर्शनमशेषकर्मोच्छित्तये यतितव्यम् ॥ कर्मोच्छेदश्च सम्यग्विवेकसव्यपेक्षोऽसावप्याप्तोपदेशमंतरेण न भवति आप्तश्चात्यंतिकाद्दोषक्षयात्स चार्हान्नेवातस्तत्प्रणीतागमपरिज्ञाने यत्नो विधेयः आगमश्च द्वादशांगादिरूपः सोऽप्यार्यरक्षितमिश्रैरैदंयुगीनपुरुषानुग्रहबुद्ध्या चरणकरणद्रव्यधर्मकथागणितानुयोगभेदाच्चतुर्धा अवस्थापितः ॥ सूत्र० ॥ आप्तवचनादाविर्भूतमर्थसम्वेदनमागमः । उपचारादाप्तवचने । ननु यद्यर्थसंवेदनमागमः तर्हि कथमाप्तवचनात्मकोऽसौ सिद्धांतविदां सिद्ध इत्याशंक्याहुः । उपचारादाप्तवचनं चेति । प्रतिपाद्य ज्ञानस्य ह्याप्तवचनं कारणमिति कारणे कार्योपचारात्तदप्यागम इत्युच्यते ॥ रत्ना० ॥ स्या० ॥ अनु० ॥ दर्श० ॥ दश० ॥ आ०चू० ॥ वचने, यो० विं० ॥ सूत्रे आगमश्च वन्दनकसूत्रादिकमिति । आव० ॥ श्रुतिस्मृत्यादिके,उत्त०। आ मर्य्यादाभिविधिभ्याम् परिच्छिद्यन्ते अर्था अनेनेत्यागमः चतुर्दशकदशकनवमपूर्वे च ॥ पंचा०॥ शेषं श्रुतमाचारप्रकल्पादिकं श्रुतं नवादिपूर्वाणां श्रुतत्वेऽप्यतीन्द्रियार्थज्ञानहेतुत्वेन सातिशयत्वादागमव्यपदेशः केवलवदिति ॥स्था०॥ तथा च व्यवहारकल्पे. आगमव्यवहारिणमधिकृत्योक्तम्. "केवलमणो हि चोदइस दस नव पुव्वी उ नायव्वो,, ॥ व्य० ॥ ( चतुर्दशक दशक नवमपूर्वस्यागमत्वं तदितरस्य श्रुतत्वं जीतकल्पे यथा. ) श्रुतव्यवहाराश्चाचारांगादीनामष्टपूर्वांतानामेव'यदुक्तं आयारप्पकप्पाई । सेसं सव्वं सुयं विणिद्दिट्ठमिति" अत्राह कश्चित् किमष्टपूर्वांतमेव श्रुतं नवमपूर्वादीनां न श्रुतत्वं उच्यते आगम्यंते परिच्छिद्यंते अर्तींद्रियाः पदार्था येन स आगम इति व्युत्पत्तेः नवमपूर्वादीनां श्रुतत्वाविशेषे केवलज्ञानादिवदतींद्रियार्थेषु विशिष्टज्ञानहेतुत्वेन सातिशयत्वादागमत्वेनैव व्यपदेशः शेषश्रुतस्य तु नातींद्रियार्थेषु तथाविधोऽवबोधस्ततोऽस्मिन्श्रुतव्यवहारः ॥ जीत० ॥ व्य० ॥ आगम्यन्ते परिच्छिद्यन्ते अर्थाअनेनेत्यागमः प्रमाणभेदे. स च. आप्तवचनसम्पाद्यो विप्रकृष्टार्थप्रत्ययः उक्तश्च-दृष्टेष्टाव्याहताद्वाक्यात्परमार्थाभिधायिनः ॥ तत्वग्राहितयोत्पन्नं मानं शाब्दं प्रकीर्त्तितं ॥ १ ॥ आप्तोपज्ञमनुल्लंघ्यमदृष्टेष्टविरोधकं तत्वोपदेशकृत्सार्थं शास्त्रं कापथघट्टनमिति ॥ २ ॥ स्था० ॥

इतः परमागमभेदादयउच्यन्ते ते च इमे ।

( १ ) आगमभेदाः । लौकिको, लोकोत्तरश्च,
( २ ) आगमस्य परतःप्रामाण्यम्
( ३ ) आगमस्य । पौरुषेयत्वम्
( ४ ) आगमश्चाप्तप्रणीत एव प्रमाणम्
( ५ ) सम्भवद्रूपस्यैवागमस्य प्रामाण्यं न वेदस्यैव ।
( ६ ) मूलागमप्रामाण्यं नेतरागमप्रामाण्यम्
( ७ ) प्रमाणान्तराविषयएवागमः विषयः ।
( ८ ) आगमप्रमाणस्यानुमानप्रमाणेन्तर्भावः ।
( ९ ) आगमप्रामाण्यं संवादित्वम् ।
( १० ) शब्दस्य वाह्यार्थप्रामाण्यम् ।
( ११ ) अपोहः शब्दार्थ इति वौद्धाः ।
( १२ ) अर्थः किंस्वरूपः ।
( १३ ) वाच्यवाचकभावः ।
( १४ ) वाचकरूपस्य शब्दस्य विचारः ।
( १५ ) स्फोटः शब्दः ।
( १६ ) जैनानां वाचकः शब्दः ।
( १७ ) शब्दनित्यत्वविचारः ।
( १८ ) शब्दार्थयोः सम्बन्धः ।
( १९ ) शब्दार्थयोर्वाच्यवाचकभावसम्बन्धः ।
( २० ) हेतुवादाहेतुवादभेदादागमद्वैविध्यम् ।
( २१ ) आगमस्य सर्वव्यवहारनियामकत्वम् ।
( २२ ) धर्ममार्गे मोक्षमार्गे चागमस्यैव प्रामाण्यम् ।
( २३ ) जिनागमस्यैव सत्यत्वम् ।
( २४ ) जिनागमजासत्कारः ।
( २५ ) आगमशब्दस्य अर्थान्तराणि, इति ॥

तथाहि—आगमनिक्षेपः श्रुतवत्स च श्रुतशब्दे शास्त्रशब्दे च द्रष्टव्यः ॥ अनु० ॥ अष्ट० ॥ एतस्य भेदास्तद्यथा॥

से किं तं आगमे ? आगमे दुविहे पण्णत्ते तंजहा—लोइए अलोउत्तरिए अ से किं तं लोइएलोइए?जण्णं इमं अण्णणिएहिं मिच्छादिट्ठीएहिं सच्छंदवुद्धिमइविगप्पियं । तंजहा भारहं एमायणं जाव चत्तारि वेआ सांगोवंगा से तं लोइए। सेकिंतं-लोउत्तरिए ? लोउत्तरिए जण्णं इमं अरिहंतेहिं भगवंतेहिं उप्पण्णणाणदंसणधरेहिंतो य पच्चुप्पण्णमणागयजाणएहिं तिलुक्कचहिअमहि अपूइएहिं सव्वण्णूहिं सव्वदरसीहिं पंणी अदुवालसंगं गणिपिडिगं तंजहा आयारो जाव दिट्ठिवाओ ॥ अनु० ॥

( से किं तं आगमे इत्यादि ) गुरुपारंपर्येणागच्छतीत्यागमः आसमन्ताद्गम्यन्ते ज्ञायन्ते जीवादयः पदार्था अनेनेति वा आगमः अयं च द्विधा प्रज्ञप्तस्तद्यथा ॥ अनु० ॥ भ० ॥ ज्ञा०॥

अहवा आगमे तिविहे पण्णत्ते तं जहा सुत्तागमे अत्थागमे तदुभयागमे ॥ अनु० ॥

( अहवाआगमेतिविहेइत्यादि ) तत्र सूत्रमेव सूत्रागमस्तदभिधेयश्चार्थ एवार्थागमः सूत्रार्थोभयरूपस्तु तदुभयागमः ॥ टी०अनु० ॥

अहवा आगमे तिविहे पण्णत्ते तंजहा अत्थागमे १ अणंतरागमे २। परंपरागमे ३ तित्थगराणं अत्थस्स अत्तागमे गणहराणं सुत्तस्स अत्तागमे अत्थस्स अणंतरागमे, गणहरसीसाणं सुत्तस्स अणंतरागमे अत्थस्स परंपरागमे तेण परं सुत्तस्स वि अत्थस्स वि णो अत्तागमे णो अंतरागमे परंपरागमे ॥ अनु० ॥

अथवा अनेन प्रकारेणागमस्त्रिविधः प्रज्ञप्तस्तद्यथा ( आत्मागमइत्यादि ) तत्र गुरूपदेशमंतरेणात्मन एव आगम आत्मागमो यथा तीर्थकराणामर्थस्यात्मागमः स्वयमेव केवलोपलब्धो गणधराणां तु सूत्रस्यात्मागमः स्वयमेवग्रथितत्वादर्थस्यानंतरागमोऽनंतरमेव तीर्थकरादागतत्वादुक्तं च 'अत्थं भासइ अरहा सुत्तं गुत्थंति गणहरा निउणमित्त्यादि' । गणधरशिष्याणां जंबूस्वामिप्रभृतीनां सूत्रस्यानंतरागमोऽ

व्यवधानेन गणधरादेव श्रुतेरर्थस्य परंपरागमः गणध-
रेणैव व्यवधानात् । तत ऊर्ध्वप्रभवादीनां सूत्रस्यार्थस्य च
नात्मागमो नानंतरागमस्तल्लक्षणायोगादपि तु परंपरागम
एव । अनेन आगमस्य तीर्थकरादिप्रभवत्वभणनेनैकान्ता-
पौरुषेयत्वं निवारयति । पौरुषताल्वादिव्यापारमंतरेण नभ-
सीव विशिष्टशब्दानुपलब्धेस्ताल्वादिभिरभिव्यज्यत एव
शब्दो न तु क्रियते इति चेन्न यद्येवं तर्हि सर्ववचसामपौ-
रुषेयत्वप्रसंगस्तेषां भाषापुद्गलनिष्पन्नत्वाद् भाषापुद्गलानां
च लोके सर्वदैवावस्थानतो पूर्वक्रियमाणता अयोगेन ताल्वा-
दिरभिव्यक्तिमात्रस्यैव निर्वर्त्तनात् । न च वक्तव्यं वचनस्य
पौद्गलिकत्वमसिद्धं महाध्वनिपटलपूरितश्रवणबाधिर्यकुड्य-
स्खलनाद्यन्यथानुपपत्तेस्तस्मान्नैकान्तेनापौरुषेयमागमवच-
स्ताल्वादिव्यापाराभिव्यंग्यत्वाद्देवदत्तादिवाक्यवदित्याद्यत्र
बहुवक्तव्यं तत्तु नोच्यते स्थानांतरनिर्णीतत्वादिति । सेत्तं
लोगुत्तरिए इत्यादि निगमनत्रयम् ॥ अनु० टी० ॥ भ० ॥
अंग० ॥ नि०चू० ॥ सूत्र० ॥ आवश्यकचूर्णौ तु–

आगमो दुविहो लोइतो लोउत्तरिओ य । लोइतो चोद्दस-
विज्जाट्ठाणाणि ॥

अंगानि चतुरो वेदा मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुरा-
णं च विद्याश्चैताश्चतुर्दश ॥ १ ॥

तत्रांगानि षट् तद्यथा–शिक्षा,कल्पो,व्याकरणं, छंदो, निरुक्तं,
ज्योतिषं,चेति ।"लोउत्तरो दुवालस अंगा चोद्दस पुव्वाणि ते
य" ॥ आ०चू० ॥ आ०म० ॥ श्रुतशब्दे प्रकारान्तरेण निक्षेपः

( २ ) आगमस्य च स्वतः प्रामाण्यम् सम्मतितर्के दर्शितम्
यथा–

सिद्धं सिद्धट्ठाणं ठाणमणोवमसुहं उवगयाणं। कुसमयविसा-
सणं जिणाणं भवजिणाणं । १ ।

अस्याश्च समुदायार्थ एतत्पातनिकयैव प्रकाशितोऽवयवार्थ-
स्तु प्रकाश्यते । शास्यंते जीवादयः पदार्था यथावस्थित-
त्वेनानेनेति शासनं द्वादशांगं ततश्च सिद्धं प्रतिष्ठितं नि-
श्चितं प्रामाण्यमिति यावत् । स्वमहिम्नैव नाऽतः प्रकरणा-
त्प्रतिष्ठाप्यम् ॥ सम्म० ॥

शब्दसमुत्थस्य त्वभिधेयविषयज्ञानस्य यदि प्रामाण्यमभ्यु-
पगम्यते तदाऽपौरुषेयत्वस्यासंभवाद्गुणवत्पुरुषप्रणीतस्त-
दुत्पादकः शब्दोऽभ्युपगंतव्योऽथ तत्प्रणीतत्वं नाभ्युपगम्य-
ते तदा तत्समुत्पन्नज्ञानस्य प्रामाण्यमपि न स्यादित्यभिप्राय-
वानाचार्यः प्राह–जिनानां रागद्वेषमोहलक्षणान् शत्रून् जित-
वंत इति जिनास्तेषां शासनं तदभ्युपगंतव्यमिति प्रसंगसा-
धनम् । तत्रात्रेदं प्रेर्यं यदि शासनं जिनप्रणीतत्वेन सिद्धं
निश्चितं प्रमाण्यमभ्युपगमनीयमन्यथा प्रमाण्यस्याप्यनभ्यु
पगमनीयत्वादिति प्रसंगसाधनमत्र प्रतिपाद्यत्वेनाभिप्रेतं
तत्किमिति बौद्धयुक्त्याहतेन त्वया स्वतः प्रामाण्यनिरा-
सोऽभिहितो यतः सर्वसमयसमूहात्मकत्वमेवाचार्येण प्रति-
पादयितुमभिप्रेतं यद्वक्ष्यत्यस्यैवं प्रकरणस्य परिसमाप्तौ
( भद्दमित्थदंसणसमूहमइयस्स अमयसारस्स जिणवयण-
स्स भवओ संविग्गमुहाहिगम्मस्सेत्यादि ) अयमेवार्थो
बौद्धयुक्त्युपन्यासेन समर्थितोऽपि प्रक्षेपेणान्यमतनिरासेऽ
यमेवाभिप्रायो द्रष्टव्यः सर्वनयानां परस्परसापेक्षाणां सम्यग्
मतत्वेन विपरीतानां विपर्ययत्वेनाचार्यस्येष्टत्वादत एवोक्त-
मनेनैव द्वात्रिंशिकायाम्।उदधाविव सर्वसिन्धवः समुदीरणा
स्त्वयि नाथ!दृष्टयः । न च तासु भवान् प्रदृश्यते प्रविभक्तासु
सरित्स्विवोदधिः ॥ १ ॥ सम्म० ॥

( ३ ) आगमस्यापौरुषेयत्वं स्याद्वादमञ्जर्याम् । स हि पौरुषे-
यो वा स्यादपौरुषेयो वा । पौरुषेयश्चेत्सर्वज्ञकृतस्तदितरकृ-
तो वा । आद्यपक्षे युष्मन्मतव्याहतिस्तथा च भवत्सिद्धान्तः ।
अतीन्द्रियाणामर्थानां सक्षाद्द्रष्टा न विद्यते । नित्येभ्यो वेद-
वाक्येभ्यो यथार्थत्वविनिश्चयः ॥ द्वितीयपक्षे तु तत्र दोष-
वत्कर्तृकत्वेनाऽनाश्वासप्रसंगः । अपौरुषेयश्चेन्न सम्भव-
त्येव स्वरूपनिराकरणात् तुरङ्गशृङ्गवत् । तथाह्युक्तिर्वचन-
मुच्यते इति चेति पुरुषक्रियानुगतं रूपमस्य एतत्क्रिया-
भावे कथम्भवितुमर्हति । नचैतत्केवलं क्वचिद्ध्वनदुपलभ्य-
ते उपलब्धावप्यदृश्यवक्त्राशङ्कासम्भवात् । तस्माद्यद्वचनं
तत्पौरुषेयमेव वर्णात्मकत्वात् कुमारसम्भवादिवचनवत् ।
वचनात्मकश्च वेदस्तथाचाहुः–ताल्वादिजन्मा न तु वर्ण-
वर्गो वर्णात्मको वेद इति स्फुटञ्च । पुंसश्च ताल्वादि ततः
कथं स्यादपौरुषेयोऽयमिति प्रतीतिरिति । श्रुतेरपौरुषेयत्वमु-
ररीकृत्यापि तावद्भवद्भिरपि तदर्थव्याख्यानं पौरुषेयमेवा-
ङ्गीक्रियते । अन्यथा अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यस्य
स्वमांसं भक्षयेदिति किं नार्थो नियामकाभावात्ततोऽवरं
सूत्रमपि पौरुषेयमभ्युपगतम् । अस्तु वा अपौरुषेयस्तथापि
तस्य न प्रामाण्यं आप्तपुरुषाधीना हि वाचां प्रमाण-
तेति ॥ स्या० ॥

तथा च नन्द्यध्ययने–

"जयइ सुयाणं पभवो" इति ॥नं०॥ श्रुतानां स्वदर्शनपरदर्श-
नानुगतसकलशास्त्राणां प्रभवन्ति सर्वाणि शास्त्राणि अस्मा-
दिति प्रभवः । प्रथममुत्पत्तिकारणं तदुपदिष्टमर्थमुपजीव्य
सर्वेषां शास्त्राणां प्रवर्त्तनात्परदर्शनशास्त्रेष्वपि हि यः क-
श्चित्समीचीनोऽर्थः संसारासारतास्वर्गापवर्गादिहेतुः प्राण्य-
हिंसादिरूपः स भगवत्प्रणीतशास्त्रे भव एव समुद्धृतो वेदि-
तव्यो न खल्वतीन्द्रियार्थपरिज्ञानमन्तरेणातीन्द्रियः प्रमाणा-
बाधितोऽर्थः पुरुषमात्रेणोपदेष्टुं शक्यते अविषयत्वात् । नचा-
तीन्द्रियार्थपरिज्ञानं परतीर्थिकानामस्तीत्येतदग्रे वक्ष्यामः ।
ततस्ते भगवत्प्रणीतशास्त्रेभ्यो मौलं समीचीनमर्थलेशमुपादा-
य पश्चादभिनिवेशवशतः स्वमत्यनुसारेण तास्ताः स्वप्रक्रि-
याः प्रपञ्चितवन्तः । उक्तंच स्तुतिकारेण–सुनिश्चितं नः
परतन्त्रयुक्तिषु स्फुरन्ति याः काश्चन सूक्तिसम्पदः । तवैव
ताः पूर्वमहार्णवोत्थिताः जगत्प्रमाणं जिनवाक्यविप्लुषः ॥१॥
शाकटायनोऽपि यापनीययतिग्रामणीः स्वोपज्ञशब्दानुशास-
नवृत्त्यावादौ भगवतः स्तुतिमेवमाह—

"श्रीवीरममृतं ज्योतिर्नत्वादौ सर्व्ववेदसां" अत्र च न्यास-
कृतो व्याख्या सर्व्ववेदसां सर्व्वज्ञानानां स्वपरदर्शनसंबं-
धिसकलशास्त्रानुगतपरिज्ञानानामादिं प्रभवं प्रथममुत्पत्ति-
कारणमिति । अत एव चेह श्रुतानामित्यत्र बहुवचनमन्य-
थैकवचनमेव प्रयुज्यते प्रायः श्रुतशब्दस्य केवलद्वादशांग-
मात्रवाचिनः सर्वत्रापि सिद्धान्ते एकवचनान्ततया प्रयोग-
दर्शनात् । सर्व्वश्रुतकारणत्वेन च भगवतः स्तुतिप्रतिपादने
इदमप्यावेदितं द्रष्टव्यम् । सर्वाण्यपि श्रुतानि पौरुषेयाण्येव
न किमप्यपौरुषेयमस्ति असंभवात्।तथाहि शास्त्रं वचनात्म-
कं । वचनं च ताल्वोष्ठपुटपरिस्पंदादिरूपपुरुषव्यापारान्वय-

व्यतिरेकानुविधायि ततस्तदभावे कथं भवति। न खलु पुरुषव्यापारमंतरेण वचनमाकाशे ध्वनदुपलभ्यते। अपि च तदपौरुषेयं वचनमकारणत्वान्नित्यमभ्युपगम्यते सदकारणवन्नित्यमिति वचनप्रामाण्यात्। ततश्चात्र विकल्पयुगलमवतीर्यते। तदपौरुषेयं वचः किमुपलभ्यस्वभावमनुपलभ्यस्वभावं वा। तत्र यद्यनुपलभ्यस्वभावं तर्हि तस्य नित्यत्वेनाभ्युपगमात्कदाचिदपि स्वभावादप्रच्युते सर्व्वदैवोपलंभाभावप्रसंगः। अथोपलभ्यस्वभावं तर्हि सर्वदानुपरमेणोपलभ्येत अन्यथा तत्स्वभावताहानिप्रसंगात्। अथोपलभ्यस्वभावमपि सहकारिप्रत्ययमपेक्ष्योपलंभमुपजनयति तेन न सर्वदोपलंभप्रसंगः। तदयुक्तमेकांतनित्यस्य सहकार्य्यपेक्षया अयोगात् ततो विशेषप्रतिलंभलक्षणा हि तस्य तत्रापेक्षा। यदाह-धर्म्मकीर्तिरपेक्षाविशेषप्रातिलंभलक्षणत्वादिति। न च नित्यस्य विशेषप्रतिलंभोऽस्ति अनित्यत्वापत्तेः। तथाहि-स विशेषप्रतिलंभः तस्यात्मभूतस्ततो विशेषे जायमाने स एव पदार्थस्तेन रूपेण जातो भवति प्राक्तनं च विशिष्टावस्थालक्षणं रूपं विनष्टमित्यनित्यत्वापत्तिः। अथोच्येत स विशेषप्रतिलंभो न तस्यात्मभूतः किं तु व्यतिरिक्तः तत्कथमनित्यत्वापत्तिः यद्येवं तर्हि कथं स तस्य सहकारी न हि तेन सहकारिणा तस्य वचनस्य किमप्युपक्रियते भिन्नविशेषकरणात्। अथ भिन्नोऽपि विशेषतस्तस्य संबंधी तेन तत्संबंधिविशेषकरणात् तस्याप्युपकारी द्रष्टव्य इति सहकारी व्यपदिश्यते। ननु विशेषेणापि सह तस्य वचनस्य कः संबंधो न तावत्तादात्म्यं भिन्नत्वेनाभ्युपगमात् नापि तदुत्पत्तिर्विकल्पद्वयानतिक्रमात्। तथाहि किं वचनेन विशेषो जन्यते उत विशेषेण वचनं? तत्र न तावदाद्यः पक्षो विशेषस्य सहकारिणोऽभावात्। नापि द्वितीयो वचनस्य नित्यतया कर्त्तुमशक्यत्वात्। अथ माभूद्द्विवचनविशेषयोर्जन्यजनकभाव आधाराधेयभावो भविष्यति तदप्यसमीचीनमाधाराधेयभावस्यापि परस्परोपकार्योपकारकभावापेक्षत्वात्। तथाहि-बदरं पतनधर्म्मकं सत्कुण्डेन स्वानंतरदेशस्थायितया परिणामि जन्यते ततस्तयोराधाराधेयभाव उपपद्यते वचनेन तु विशेषो जन्यते तस्यान्यतो भावात्ततः कथमनयोराधाराधेयभावः। अथ तेन विशेषेण वचनस्योपकारः कश्चित् क्रियते ततः स तस्य संबंधी न तु स उपकारस्ततो भिन्नो वेत्यादि तदेवावर्तते इत्यनवस्था। अपि च [illegible] प्रमाणाद्वचनस्यापौरुषेयत्वाभ्युपगमः कर्त्तुरस्मरणादिति चेन्न तस्यासिद्धत्वात्तथाहि-स्मरंति—

जिनप्रणीतागमतत्ववेदिनो वेदस्य कर्तॄन् पिप्पलादप्रभृतीन् सकर्तृस्मरणवादस्तेषां मिथ्यारूप इति चेत् क इदानीमेवं सति पौरुषेयः सर्व्वस्याप्यपौरुषेयत्वप्रसक्तेः। तथाहि-कालिदासादयोऽपि कुमारसंभवादिष्वात्मानमन्यं वा प्रणेतारमुपदिशंत एवं प्रतिक्षेप्तुं शक्यंते मिथ्यात्वमात्मानमन्यं वा कुमारसंभवादिषु प्रणेतारमुपदिशंतीति। ततः कुमारसंभवादयोऽपि ग्रंथाः सर्व्वेऽप्यपौरुषेया भवेयुः। तथाच-कः प्रतिविशेषो वेदे येन स एव प्रमाणतयाभ्युपगम्यते न शेषागमाः। अपि च यौष्माकीणैरपि पूर्वमहर्षिभिः सकर्तृकत्वं वेदस्याभ्युपगतमेव। तथाच-तद्ग्रंथः। ऋग्गिरोऽजयश्चकुः सामानि सामगिरावितिा अथ तत्र करोतिः स्मरणे वर्त्तते न निष्पादने दृष्टश्च करोतिरर्थांतरेऽपि। यथा संस्कारे तथा च लोके वक्तारः पृष्ठं मे कुरु पादौ मे कुर्विति। अत्र हि संस्कारे एव करोतिर्वर्तते नापूर्वनिर्वर्त्तनं संभवत्यशक्यक्रियत्वात् ततोऽन्यथानुपपत्त्यासंस्कारे एव करोतिर्वर्त्तते। वेदविषये तु नान्यथानुपपन्नत्वं किमपि निबंधनमस्ति। ततः कथं तत्र स्मरणे वर्तयितुं शक्यते। स्यादेतद्यदि वेदविषये करोतिः स्मरणे न वर्त्तेत तर्हि वेदस्याप्रमाण्यं न स्यादथ च प्रामाण्यमभ्युपगम्यते तच्चापौरुषेयत्वादेवान्यथा सर्वागमानामपि प्रामाण्यप्रसक्तेः। ततोऽत्रापि करोतिः प्रामाण्यान्यथानुपपत्त्या स्मरणे वर्त्तत इति। तदेतदसत् इतरेतराश्रयदोषप्रसंगात्। तथाहि-प्रामाण्ये सिद्धे सति तदन्यथानुपपत्या करोतेः स्मरणे वर्त्तनं, करोतेः स्मरणे वृत्तौ चापौरुषेयत्वसिद्धितः प्रामाण्यमित्येकासिद्धावन्यतरासिद्धिः। अनैकांतिकं च कर्त्तुरस्मरणं वटे वटे वै श्रमण इत्यादिशब्दानां पौरुषेयाणामपि कर्त्तुः स्मृतेः यत्नवान् तत्कर्त्तारमुपलभत एवेति चेत् नावश्यं तदुपलंभे संभवोऽनियमाभावात्। किं वा पौरुषेयत्वेनाभ्युपगतस्य वेदस्य कर्त्ता नैवास्ति कश्चित् पौरुषेयत्वेनाभ्युपगतस्य वटे वटे वै श्रमण इत्यादिरस्तीति न प्रमाणात् कुतश्चिद्विनिश्चयः किं तु परोपदेशात् स च भवतो न प्रमाणं परस्य रागादिपरीतत्वेन यथावस्तुतत्वापरिज्ञानात्। ततः कर्त्रभावसंदेह इति संदिग्धासिद्धोऽप्ययं हेतुः। एतेन यदन्यदपि साधनमवादीत् वेदवादी वेदाध्ययनं सर्वगुर्व्वध्ययनपूर्वकं वेदाध्ययनत्वादधुनातनवेदाध्ययनवदिति। तदपि निरस्तमवसेयम्॥

एवमपौरुषेयत्वसाधने सर्व्वस्याप्यपौरुषेयत्वप्रसक्तेः। तथाहि—कुमारसंभवाध्ययनं सर्व्वं गुर्व्वध्ययनपूर्वकं कुमारसंभवाध्ययनत्वात् इदानींतनकुमारसंभवाध्ययनवदिति कुमारसंभवादीनामध्ययनादिताऽसिद्धेरपौरुषेयत्वं दुर्निवारम्। न च तेषामपौरुषेयत्वं स्वयं करणपूर्वकत्वेनापि तदध्ययनस्य भावादेव वेदाध्ययनमपि किंचित् स्वयं करणपूर्वकमपि भविष्यतीति वेदाध्ययनत्वादिति व्यभिचारिहेतुः स्यादेतान्नवेदाध्ययनमपि किंचित् स्वयं करणपूर्वकं न भवति-वेदानां स्वयं कर्त्तुमशक्तेः। तथा चात्र प्रयोगः। पूर्वेषां वेदरचनायामशक्तिः पुरुषत्वादिदानींतनपुरुषवदिति तदप्ययुक्तमत्रापि हेतोर्व्यभिचारात्। तथाहि-भारतादिष्विदानींतनपुरुषाणामशक्तावपि कस्यचित्पुरुषस्य व्यासादेः शक्तिः श्रूयते, एवं वेदविषयेऽपि संप्रति पुरुषाणां कर्तुमशक्तावपि कस्यचित्प्राक्तनस्य पुरुषविशेषस्य शक्तिर्भविष्यतीति। अपि च-यथाग्निसामान्यस्य ज्वालाप्रभवत्वमरणिनिर्मथनप्रभवत्वं च परस्परमबाध्यबाधकत्वान्न विरुध्यति को ह्यत्र विरोध्योऽग्निः स्यात् कदाचिदरणिनिर्मथनपूर्वकः कदाचित् ज्वालांतरपूर्वकश्च। ततो यथाद्योऽपि पथिककृतोऽग्निर्ज्वालांतरपूवको नारणिनिर्मथनपूर्वकः पथिकाग्नित्वादाद्यानंतराग्निवदित्ययं हेतुर्व्यभिचारी विपक्षे वृत्तिसंभवात्। तथा वेदाध्ययनम्। अपि च पक्षे वृत्तिसंभवाद्व्यभिचार्येव तथाहि-वेदाध्ययने स्वयं करणपूर्वकत्वमध्ययनांतरपूर्वकत्वं च परस्परमबाध्यबाधकत्वादविरुद्धं ततश्च वेदाध्ययनमपि स्यात्किंचित् स्वयं करणपूर्वकमपीति, यदा त्वेवं विशिष्यते यस्तु तथाविधः स्वयं कृत्वाध्येतुमसमर्थः तस्य वेदा-

ध्ययनमध्ययनांतरपूर्वकमिति तदा न कश्चिद्दोषः यथा या-
दृशोग्निर्ज्वालाप्रभवो दृष्टः तादृशःसर्वोपि ज्वालाप्रभव इति।
अस्तु वा सर्ववेदाऽध्ययनमध्ययनांतरपूर्वकं तथाप्येवमना-
दिता सिद्धेद्वेदस्य नापौरुषेयत्वम्। अथात एवानादिताभावा-
दपौरुषेयत्वसिद्धिरिष्यते तर्हि डिंभकपांशुक्रीडादेरपि पुरुष-
व्यवहारस्यापौरुषेयतापत्तिस्तस्यापि पूर्वपूर्वदर्शनप्रवृत्ते
नानादित्वात् ॥

अपि च स्युरपौरुषेया वेदा यदि पुरुषाणामादिःस्याद्वेदाध्ययनं
चानादि तदप्याद्यपुरुषस्याध्ययनमध्ययनांतरपूर्वकं न सि-
द्ध्यति अध्यापयितुरभावात् । न च पुरुषस्य ताल्वादिक-
रणग्रामव्यापारभावात् स्वयं शब्दा ध्वनंति ततो वेदस्य
प्रथमोऽध्येता कर्त्तेव वेदितव्यः । अपि च यद्वस्तु यद्धेतुकम-
न्वयव्यतिरेकाभ्यां प्रसिद्धं तज्जातीयमन्यदप्यदृष्टहेतुकं ततो
हेतोर्भवतीति संप्रतीयते यथेन्धनादेको वह्निर्दृष्टस्ततस्तत्स-
माने तत्समानहेतुकः भावोऽपरोप्यदृष्टहेतुकश्च संप्रतीयते
लौकिकेन च शब्देन समानधर्मः सर्वोपि वैदिकः शब्द-
राशिः । ततो लौकिकवद्वैदिकोपि शब्दराशिः पौरुषेयः
सम्प्रतीयताम्। स्यादेतद्वैदिकेषु यद्यपि न पुरुषो हेतुस्तथापि
पौरुषेयाभिमतशब्दा समाना विशिष्टपदवाक्यरचना
भविष्यति ततः कथं तत्समानधर्म्मतामवलोक्य पुरुष-
हेतुकता तेषामनुमीयते तदेतद्बालजल्पितं पदवाक्यरचना
हि यदि हेतुमंतरेणापीष्यते तत आकस्मिकी सा भवेत्ततश्चा-
काशादावपि सा सर्वत्र संभवेत्। अहेतुकस्य देशादिनियमा-
योगात्। न च सा सर्वत्रापि संभवति तस्मात् पुरुष एव
तस्या हेतुरित्यवश्यं प्रतिपत्तव्यं अन्यच्च पुरुषस्य रागादिपरी-
तत्वेन यथावस्तुपरिज्ञानाभावात् प्रणीतवाक्यमयथार्थमपि
संभाव्यत इति ॥ संशयहेतुः पुरुषोऽपक्षीर्णः स च संशयो-
ऽपौरुषेयत्वाभ्युपगमेपि वेदवाक्यानां तदवस्थ एव, तथाहि-
स्वयं तावत्पुरुषो वेदस्यार्थं नावबुध्यते रागादिपरीतत्वात्
नाप्यन्यतः पुरुषांतरात्तस्यापि रागादिपरीतत्वेन यथातत्व-
मपरिज्ञानादथ जैमिनिश्चिरतरकालभावी पटुप्रज्ञः सम्यग्वे-
दार्थस्य परिज्ञातासीत् ततः परिज्ञानमभूदिति न हि सर्वेऽपि
पुरुषाः समाना प्रज्ञामेधादिगुणैरिति वक्तुं शक्यं संप्रत्यपि
प्रतिपुरुषं प्रज्ञादेस्तारतम्यस्य दर्शनात्। न तु स जैमिनिः
पुरुषो वेदस्यार्थं यथावस्थितमवगच्छति स्मेति कुतो निश्च-
यः प्रमाणेन संवादादिति चेत् नन्वतींद्रियेष्वर्थेषु न प्रमाण-
स्यावतारो यथाग्निहोत्रवचनस्य स्वर्गसाधनत्वे येहवश्चा-
तींद्रियार्था वेदे व्यावर्ण्यते तत्कथं तत्र संवादः अथ येष्वर्थे-
ष्वस्मादृशां प्रमाणासंभवः तद्विषये प्रमाणासंवाददर्शनाद-
तींद्रियाणामप्यर्थानां स सम्यक् परिज्ञाताभ्युपगम्यते तद-
युक्तं रागादिकलुषिततया तस्यातींद्रियार्थपरिज्ञानासंभ-
वादन्यथा सर्वेषामतींद्रियार्थदर्शित्वप्रसक्तिः ततस्तत्कृतातीं-
द्रियार्थव्याख्या मिथ्यैव ॥

अपिच-आगमोऽर्थतः परिज्ञातः सन् प्रेक्षावतामुपयोगविष-
यो भवति नापरिज्ञातार्थं शब्दगडुमात्रं ततोऽर्थः प्रधानं स
चेत्पुरुषप्रणीतः किं शब्दमात्रस्यापौरुषेयत्वपरिकल्पनेन नि-
रर्थकत्वात्तदन्यतोपि वेदार्थस्य सम्यगवगमः।नापि वेदः स्व-
कीयमर्थमुपदेशमंतरेण स्वयमेव साक्षादुपदर्शयति। ततो
वेदस्येष्टार्थप्रतिपत्त्युपयोगाभावादग्निहोत्रं जुहुयात् स्वर्ग-
काम इत्यत्र श्रुतौ यथा वेदप्रामाणिकैरयमर्थः कल्प्यते घृ-
ताद्याहुतिं प्रक्षिपेत् स्वर्गकाम इति तथाऽयमप्यर्थः तैः किं
न कल्प्यते खादेत् स्वमांसं स्वर्गकामः इति नियामकाभावा-
त्। उक्तंच—

स्वयं रागादिमान्नार्थं वेत्ति वेदस्य नान्यतः। न वेदयति वे-
दोऽपि वेदार्थस्य कुतो गतिः।१। ततोग्निहोत्रं जुहुयात् स्वर्ग-
काम इति श्रुतौ। खादेत्स्वमांसमित्येष नार्थ इत्यत्र का प्रमा
।२। अथ य एव शाब्दो व्यवहारो लोके प्रसिद्धः स एव
वेदवाक्यार्थनिश्चयनिबंधनं च लोकेग्निहोत्रशब्दस्य स्वमां-
सं वाच्यम्। नापि जुहुयादित्यस्य भक्षणं तत्कथमयमर्थः
परिकल्प्यते तदयुक्तं नानार्था हि लोके शब्दा रूढा यथा
गोशब्दः।

अपि च सर्वे शब्दाः प्रायः सर्वार्थानां वाचका देशादिभेद-
तो द्रुतविलंबितादिभेदेन तथा प्रतीतिदर्शनात्तथाहि द्रवि-
डस्यार्यदेशमुपागतस्य मारिशब्दात् झगिति वर्षविषया
प्रतीतिरुपजायते विलंबिता चोपसर्गविषया। यद्वा आर्यदे-
शोत्पन्नस्य द्रविडदेशमधिगतशीघ्रमुपसर्गविषया प्रतीति-
र्विलंबिता च वर्षविषया एवमनया दिशा सर्वेषामपि शब्दा-
नां सर्वार्थवाचकत्वं परिभावनीयम्।

न च वाच्यमेवं सति घटशब्दमात्रश्रवणादखिलार्थप्रतीति-
प्रसंगो यथा क्षयोपशममेव बोधप्रवृत्तेः क्षयोपशमश्च संके-
ताद्यपेक्ष इति तदभावे न भवति ततोऽग्निहोत्रादिशब्दस्य
स्वमांसादिवाचकत्वेऽप्यवरोध इति लौकिकशाब्दव्यवहा-
रानुसरणेऽपि न वैदिकवाच्यानामभिलषितनियतार्थप्रतिप-
त्तिः। किं च लोकप्रसिद्धेनैव शाब्दव्यवहारेण वयं वेदवा-
क्यानां प्रतिनियतमर्थं निश्चेतुमुद्युक्ताः लौकिकश्च शाब्दव्यवहा-
रोऽनेकधा परिप्लवमानो दृष्टः संकेतवशतः प्रायः सर्वेषामपि
शब्दानां सर्वार्थप्रतिपादनशक्तिसंभवात् । ततो लौकिकेनैव
शाब्देन व्यवहारेणास्माकमाशंकोत्पादकोऽत्रार्थःस्यात् किं
घृताद्याहुतिं प्रक्षिपेत् स्वर्गकाम इति उताहो स्वमांसं खादेदिति
तत्कथं तत एव निश्चयः कर्त्तुं बुध्यते। न हि योऽत्र संशय-
हेतुः स तत्र निश्चयमुत्पादयितुं शक्त इति। अपि च नैकां-
तेन वेदे लौकिकशब्दस्य व्यवहारानुसरणं स्वर्गोर्वश्यादि-
शब्दानामरूढार्थानामपि तत्र व्याख्यानाद्यथा स्वर्गः सुखवि-
शेषः। उर्वशीत्वरणिरिति। तथा शब्दांतरेष्वप्यरूढार्थकल्पना
किं न संभविता उक्तं च-स्वर्गोर्वश्यादिशब्दश्च दृष्टो रूढार्थ-
वाचकः।शब्दांतरेषु तादृक्तु तादृश्येवास्तु कल्पना। स्यादेतत्
अग्निहोत्रादेर्वाक्यस्य स्वमांसभक्षणप्रसङ्गो न युक्तो वेदे नै-
वान्यत्र तस्यान्यथा व्याख्यानात्तदयुक्तम्। तत्राऽपि वाक्या-
र्थस्य निर्णयाभावाद्यथोक्तं प्राक्। न हि अप्रसिद्धार्थस्य
वाक्यस्याऽप्रसिद्धार्थमेव वाक्यान्तरं नियतार्थप्रसाधना-
यालं तुल्यदोषत्वात्। अथेत्थमाचक्षीथाः यत्रार्थे न काचि-
त्प्रमाणबाधा सोऽर्थो ग्राह्यो न चाग्निहोत्रादिवाक्यस्य घृता-
द्याहुतिप्रक्षेपरूपेऽर्थे प्रमाणबाधामुत्पश्यामः। तत्कथं तमर्थन्न
गृह्णीमः । तदेतत्स्वमांसभक्षणलक्षणेऽप्यर्थे समानं न हि
तत्रापि कांचित् प्रमाणबाधामीक्षामहे।

अपि च—यदि प्रमाबलात्प्रवृत्तिमीहसे तर्हि पौरुषेयमेव व-
चस्त्वयोपादेयं तस्य लोकप्रतीत्यनुसारतया संप्रदायतोऽ
धिगतार्थतया च प्रायो युक्तिविषयत्वान्नापौरुषेयम्। विपरी-
ततया तत्र युक्तेरसंभवात् । तथा हि—काऽत्र युक्तिर्यया
स्वमांसभक्षणात्स्वर्गप्राप्तिर्बाध्यते न घृताद्याहुतिप्रक्षेपादिति.

•घृताद्याहुतिप्रक्षेपादीनां स्वर्गप्रापणादिशक्तेरतीन्द्रियत्वेन प्रत्यक्षाद्यगोचरत्वात्संप्रदायस्य चार्थनैयत्यकारिणोऽसंभवादेतच्चानन्तरमेव वक्ष्यामः ।
अथागमार्थाश्रया युक्तिः स्वमांसभक्षणतः स्वर्गप्राप्तेर्बाधिका भविष्यति तदयुक्तम् आगमार्थस्याद्याप्यनिश्चयात् । अनिश्चितार्थस्य बाधकत्वायोगात् । अथ सम्प्रदायादर्थनिश्चयो भविष्यति तथा हि—प्रथमतो वेदेन जैमिनये स्वार्थ उपदर्शितः पश्चात्तेनास्मभ्यमुपदिष्ट इति । तदप्यसत् वेदस्य हि यदि स्वार्थोपदर्शनशक्तिस्ततोऽस्मभ्यमपि स्वार्थं किं नोपदर्शयति तस्माज्जैमिनयेऽपि न तेन स्वार्थो दर्शितः । किन्तु सवेदमुखेनात्मानमेवार्थनियमस्त्रष्टारमुपदर्शितवान् यथा कश्चित्केनचित्पृष्टः को मार्गः पाटलिपुत्रस्य स प्राह एष स्थाणुर्दृश्यमानो वक्त्ययं मार्गः पाटलिपुत्रस्य तत्र न स्थाणोर्वचनशक्तिः केवलं स्थाणुमुखेन स एवात्मानं मार्गोपदेष्टारं कथयति । एवं वेदस्यापि न स्वर्थोपदर्शनशक्तिस्ततस्तन्मुखेन जैमिनिरात्मानमेवार्थनियमद्रष्टारं दर्शयति तत्र लौकिकशब्दव्यवहारानुसरणान्नापि युक्तेनापि संप्रदायाद्वेदस्यार्थनिश्चयो नापि तस्याऽपौरुषेयत्वसाधकं किमपि प्रमाणमित्यसंभाव्यपौरुषेयम् । उक्तं च–वान्ध्येय खरविषाणतुल्यमपौरुषेयमिति । ननु यदि वांध्येयखरविषाणतुल्यम पौरुषेयं भवेत्तर्हि न वेदवचोपौरुषेयतया शिष्टाः प्रतिगृह्णीयुः ॥
अथ च—सर्वेष्वपि देशेषु शिष्टाः प्रतिगृह्णन्तो दृश्यन्ते तस्मान्नासंभाव्यपौरुषेयं तदत्र पृच्छामः के शिष्टाः । ननु किमत्र प्रष्टव्यं ये ब्राह्मणीयोनिसंभविनो वेदोक्तविधिसंस्कृताः वेदप्रणीताचारपरिपालनैकनिपुणचेतसस्ते शिष्टास्तदेतदयुक्तं विचाराक्षमत्वात् । तथा हि—किमिदं नाम ब्राह्मणत्वं यद्योनिसंभवाच्छिष्टत्वं भवेत् ब्रह्मणोऽपत्यत्वमिति चेत्तथा ब्रह्मणोऽपत्यं ब्राह्मण इति व्यपदिशन्ति पूर्वर्षयः नैवं सति चण्डालस्यापि ब्राह्मणत्वप्रशक्त्याऽपि ब्रह्मतनोः समुत्पन्नत्वात् । उक्तं च—ब्रह्मणोऽपत्यतासात्राद्ब्राह्मण्ये ऽतिसज्यते, न कश्चिदब्रह्मतनोरुत्पन्नः क्वचिदिष्यते ॥ यदप्युक्तम् । वेदोक्तविधिसंस्कृता वेदप्रणीताचारपरिपालनैकनिपुणचेतस इति । तदप्ययुक्तम् । इतरेतराश्रयदोषप्रसङ्गात् । तथा हि—वेदस्य प्रामाण्ये सिद्धे सति तदुक्तविधिसंस्कृतास्तदर्थसमाचरणाच्छिष्टा भवेयुः शिष्टत्वे च तेषां सिद्धे सति तत्परिग्रहाद्वेदप्रामाण्यमित्येकाभावेऽन्यतरस्याऽप्यभावः ॥
आह च–शिष्टैः परिगृहीतत्वाद्वेदेऽन्योऽन्यसमाश्रयः । वेदार्थाचरणाच्छिष्टास्तदाचाराच्च स प्रमा ॥ १ ॥ स्यादेतद्भवतोऽपि तत्वतोऽपौरुषेयवचनमिष्टमेव । तथाहि–सर्वोऽपि सर्वज्ञो वचनपूर्वको भवतीत्येवेष्यते । " तप्पुव्विया अरिहया" इति वचनप्रामाण्यात् । ततोऽनादित्वात्सिद्धं वचनस्यापौरुषेयत्वमिति तदयुक्तमनादितायामप्यपौरुषेयत्वायोगात् । तथाहि—सर्वज्ञपरम्पराप्येषाऽनादिरिष्यते ततः पूर्वः पूर्वः सर्वज्ञः प्राक्तनसर्वज्ञप्रणीतवचनपूर्वकोऽभवन्न विरुध्यते । किं वचनं द्विधा शब्दरूपमर्थरूपं च । तत्र शब्दरूपवचनापेक्षया नायमस्माकं सङ्गरो यदुत सर्वोऽपि सर्वज्ञो वचनपूर्वक इति मरुदेव्यादीनां तदन्तरेणाऽपि सर्वज्ञत्वश्रुतेः किं त्वर्थरूपापेक्षया ततः कथं शब्दाऽपौरुषेयत्वाभ्युपगमप्रसङ्गः । नन्वर्थपरिज्ञानमपि शब्दमन्तरेण नोपपद्यते तत्कथं न शब्दरूपापेक्षयाऽपि सङ्गरः तदसच्छब्दमन्तरेणापि विशिष्टक्षयोपशमादिभावतोऽर्थपरिज्ञानस्य सम्भवात् तथा हि—दृश्यते तथाविधक्षयोपशमभावतो मार्गानुसारिबुद्धेर्वचनमन्तरेणापि तदर्थप्रतिपत्तिरिति कृतं प्रसङ्गेनान०। रत्नावतारिकायामपि । ये तु श्रोत्रियाः श्रुतेः पौरुषेयत्वेऽपौरुषीं स्फोटयांचक्रुस्ते कीदृशीं श्रुतिममूमास्थाय किं वर्णारूपामानुपूर्वीरूपां वा ? यदि प्राचिकीं तदस्पस्पष्टमुपरिष्टादकारादिः पौद्गलिको वर्ण इत्यभिधास्यमानत्वात्तस्याः । अथोदीचीनां तर्हि तत्र तत्प्रतीतौ प्रत्यक्षमनुमानमर्थापत्तिरागमो वा प्रमाणं प्रणिगद्येत । न प्रत्यक्षमस्य तादात्विकभावस्वभावावभासमात्रचरित्रपवित्रत्वात्संबद्धं वर्तमानं च गृह्यते चक्षुरादिनेति वचनात् । ये च श्रुतिर्मया प्रागभ्यधायि सैवेदानीमपीति प्रत्यभिज्ञाप्रत्यक्षमक्षुण्णं लक्ष्यत एवास्याः सदात्वमद्योतयदिति चेन्नन्वसौ समुदयमात्रमिदं कलेवरमित्यादिलोकायतागमेष्वप्येकरसैवास्तीति तेऽपि तथा स्युस्तथा च तत्पठितानुष्ठाननिष्ठापटिष्ठतां विप्राणामपि प्राप्नोत्यन्यथा प्रत्यवायसंभवात् । अथात्रेयमभिधानान्तरानुपलंभेन बाध्यते किं न श्रुतावपि अभिव्यक्त्यभावसंभवी तदानीमनुपलम्भः श्रुतौ नाभावनिबन्धन इति चेत्किं न नास्तिकसिद्धान्तेऽप्येवमिति सकलं समानम् ।

किं च-अनुभवानुचरणचतुरं प्रत्यभिज्ञानमनुभवश्चप्रायेण प्रत्यभिज्ञानाद्धर्विकीं जातिस्मृत्यादिमतःकस्यापि कतिपयभवविषयां च प्रभावयितुं प्रभुरिति कथमनादौ काले केनापि नेयं श्रुतिःसूत्रितेतिप्रकटयितुं पटीयसीयत्स्यात्तन्न तत्रप्रत्यक्षं क्षमते नाप्यनुमानं तद्धि कर्त्रस्मरणवेदाध्ययनवाच्यत्वंकालत्वं वा तत्रैतेषु सर्वेष्वपि प्रत्यक्षानुमानागमबाधितत्वं तावत्पक्षदोषः । तत्र प्रत्यक्षबाधस्तावत्तथाविधमठपीठिकाप्रतिष्ठशठवठराध्वर्यूद्गातृहोतृप्रायप्राचुरखंडिकेषु यजुःसामर्च उच्चैस्तरां युगपत्पूत्कुर्वत्सु कोलाहलमभी कुर्वन्तीति । प्रत्यक्षं प्रादुरस्ति तेन चापौरुषेयत्वपक्षो बाध्यते । अभिव्यक्तिसद्भावादेव चेयं प्रतीतिरिति चेत्तर्हि हंसपक्षादिहस्तकेष्वपि किं नेयं तथेति तेऽपि नित्याः स्युः वर्णायिष्यमाणवर्णव्यक्तिव्यपाकरणं चेहाप्यनुसंधानीयम् । श्रुतिः पौरुषेयी वर्णाद्यात्मकत्वात्कुमारसंभवादिवदित्यनुमानबाधः । पुरुषो हि परिभाव्याभिधेयभावस्वभावं तदनुगुणां ग्रन्थवीथीं ग्रथ्नाति तदभावे कौतस्कुतीयं संभवेद्यदि हि शंखसमुद्रमेघादिभ्यो ऽपौरुषेयेभ्योऽपि कदाचित्तदात्मकं वाक्यमुपलभ्येत तदात्रापि संभाव्येत । न चैवम् । अथ वर्णाद्यात्मकत्वमात्रं हेतुचिकीर्षितं चेत्तदानीमप्रयोजनकं वल्मीकस्य कुलालपूर्वकत्वे साध्ये मृद्विकारत्ववदथ लौकिकश्लोकादि विलक्षणं तत्तर्हि विरुद्धं साधनशून्यं च कुमारसंभवादिनिदर्शनं तत्रैव साध्ये विशिष्टमृद्विकारत्ववत्कुटदृष्टान्तवच्चेति चेन्नैतच्चतुरस्रं यतस्तन्मात्रमेवहेतुर्न चाप्रयोजकं विशिष्टवर्णाद्यात्मकत्वस्यैव क्वाप्यसंभवाद् दुःश्रवणदुर्भणत्वादिस्तु श्रुतिर्विशेषस्य । "नाष्ट्रास्त्वष्टारिराष्ट्रेण भ्राष्ट्रेणादंष्ट्रिणो जनाः । धार्तराष्ट्रः सुराष्ट्रेण महाराष्ट्रे तु नोष्ट्रिणः„ ॥ १ ॥ इत्यादौ लौकिक श्लोके सविशेषस्य सद्भावादभ्यर्थिष्महि च । "यत्कौमार कुमासंभवभवाद्वाक्यान्न किंचिद्भवे द्वैशिष्ट्यं श्रुतिषु स्थितं तत इमाः स्युः कर्तृशून्याः कथमिति,, प्रजापतिर्वेदमेक

मासीन्नाहरासीन्न रात्रिरासीत्स तपोऽतप्यत तस्मात्तप-
स्तपनाच्चत्वारो वेदा अजायन्तेति स्वकर्तृप्रतिपादकागमबाधः
ननु नायमागमः प्रमाणं भूतार्थाभिधायकत्वात्कार्ये एव ह्य-
र्थे वाचां प्रामाण्यमन्वयव्यतिरेकाभ्यां लोके कार्यान्वितेषु
पदार्थेषु पदानां शक्त्यवगमादिति चेत्तदश्लीलं कुशलोद-
र्कसंपर्ककर्कशः साधूपास्यप्रसङ्ग इत्यादेर्भूतार्थस्यापि शब्द-
स्य लोके प्रयोगोपलम्भात्। अथात्रापि कार्यार्थतैव तस्मादत्र
प्रवर्त्तितव्यमित्यवगमादिति चेत्स तर्ह्यवगम औपदेशिक आप-
देशिकार्थकृतो वा भवेत्। न तावदाद्यस्तथाविधोपदेशाश्रव-
णात्। द्वितीयस्तु स्यान्न पुनस्तत्रोपदेशस्य प्रामाण्यमस्य
स्वार्थप्रथामात्रचरितार्थत्वाद्यतः प्रतिपादकत्वेनैव प्रमाणानां
प्रामाण्यादन्यथा प्रवृत्ताविव तत्साध्यार्थेऽपि प्रामाण्यप्रसङ्गा-
त् प्रत्यक्षस्येव विवक्षितार्थवत्तत्साध्यार्थक्रियापि प्रमेया भ-
वेत्तस्मात्पुरुषेच्छाप्रतिबद्धवृत्तिप्रवृत्तिरस्तु मा वाभूत्प्रमाणेन
पदार्थपरिच्छेदश्चेच्चकारास्तावतैव प्रेक्षावतोऽपेक्षाबुद्धेः प-
र्यवसानात्पुण्यं प्रामाण्यमस्यावसेयं यद्वाऽस्तु तस्मादत्र प्र-
वर्त्तितव्यमित्यवगमात्कुशलोदर्केत्यादिवाक्यानां प्रामाण्यं किं
तु तद्वदेव वेदकर्तृप्रतिपादकागमस्यापि प्रामाण्यं प्राप्तं-
क्षीदेवेति सिद्ध आगमबाधोऽपि ।

यत्तु कर्त्रस्मरणं साधनं तद्विशेषणं सविशेषणं
वा वर्ण्येत प्राक्तनं तावत्पुराणकूपप्रासादारामवि-
हारादिभिर्व्यभिचारि तेषां कर्त्रस्मरणेऽपि पौरुषेयत्वात्। द्वि-
तीयन्तु संप्रदायाव्यवच्छेदे सति कर्तृस्मरणादिति व्यधिक-
रणासिद्धः कर्तृस्मरणस्य श्रुतेरन्यत्राश्रये पुंसि वर्तमानात् ।
अथापौरुषेयी श्रुतिः संप्रादायाव्यवच्छेदे सत्यस्मर्यमाणकर्तृ-
कत्वादाकाशवदित्यनुमानरचनायामनवकाशाव्यधिकरणा-
सिद्धिर्मैवमेवमपि विशेषणे संदिग्धासिद्धतापत्तेः । तथा
ह्यादिमतामपि प्रासादादीनां संप्रदायो व्यवच्छिद्यमानो वि-
लोक्यते ऽनादेयस्तु श्रुतेरव्यवच्छेदी संप्रदायोऽद्यापि विद्यत
इति मृतकमुष्टिबन्धमन्वकार्षीत्तथा च–कथं न संदिग्धासि-
द्धं विशेषणं विशेष्यमप्युभयासिद्धं वादिप्रतिवादिभ्यां तत्र
कर्तुः स्मरणात् । न तु श्रोत्रियाः श्रुतौ कर्तारं स्मरन्तीति
मृषोद्यं श्रोत्रियापसदाः खल्वमी इति चेन्न तु यूपमाम्नाय-
माम्नासिष्टतावत्ततो यो वै वेदांश्च प्रहिणोतीति प्रजापतिः
सोमं राजानमन्वसृजत्ततस्त्रयो वेदा अन्वसृजन्तेति च स्व-
यमेव स्वस्य कर्तारं स्मारयन्तीं श्रुतिं विश्रुतामिव गणयन्तो
यूयमेव श्रोत्रियापसदाः किन्न स्यात्किं च क एव माध्यंदि-
नितित्तिरिप्रभृतिमुनिनामाङ्किताः काश्चन शाखास्तत्कृतत्वा-
देव मन्वादिस्मृत्यादिवदुत्सन्नानां तासां कल्पादौ तैर्दृष्ट-
त्वात् प्रकाशितत्वाद्वा तन्नामचिन्हेऽनादौ कालेऽनन्तमुनि-
नामाङ्कितत्वं तासां स्यात्। जैनाश्च कालासुरमेतत्कर्तारम्
स्मरन्ति कर्तृविशेषविप्रतिपत्तेरप्रमाणमेवैतत्स्मरणमिति चे-
न्नैवम्। यतो यत्रैव विप्रतिपत्तिस्तदेवाप्रमाणमस्तु न पुनः
कर्तृमात्रस्मरणमपि। वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्
वेदाध्ययनवाच्यत्वादधुनाऽध्ययनं यथा ॥ अतीता-
नागतौ कालौ वेदकार विवर्जितौ। कालत्वात्तद्यथाकालो
वर्तमानः समीक्ष्यते ॥ इति कारिकोक्तेः वेदाध्ययनवाच्य-
त्वकालत्वेऽपि हेतुः कुरङ्गशृंगभंगुरं कुरंगाक्षीणां चेत इति
वाक्याध्ययनं गुर्वध्यनपूर्वकमेतद्वाक्याध्ययनवाच्यत्वाद-
धुनातनाध्ययनवदतीतानागतौ कालौ प्रक्रांतवाक्यकर्तृव-
र्जितौ कालत्वाद्वर्तमानकालवदिति वेदप्रयोजकत्वादनाकर्ण-
नीयौ सकर्णानाम् अथार्थापत्तेरपौरुषेयत्वनिर्णयो वेदस्य तथा
हि–संवादविसंवाददर्शनादर्शनाभ्यां तावदेष निःशेषपुरुषैः
प्रामाण्येन निरणायि तन्निर्णयश्चास्यपौरुषेयत्वे दुरापोयतःशब्दे
दोषोद्भवस्तावद्वक्त्रधीन इति स्थितिः। तदभावः क्वचित्ता-
वद् गुणवद्वक्तृकत्वतः ॥ १ ॥ तद्गुणैरपकृष्टानां शब्दे सं-
क्रान्त्यसंभवात्। वेदे तु गुणवान् वक्ता निर्णेतुं नैव शक्यते
॥ २ ॥ ततश्च दोषाभावोऽपि निर्णेतुं शक्यतां कथम्। वक्त्र
भावे तु सुज्ञानो दोषाभावो विभाव्यते ॥ ३ ॥ यस्माद्वक्तुर-
भावेन न स्युर्दोषा निराश्रयाः। ततः प्रामाण्यनिर्णयान्यथा-
ऽनुपपत्तेरपौरुषेयोऽयमिति । अस्तु तावदत्र कृपणपंशुपरं-
पराप्रामाण्यपरोपणप्रगुणप्रत्तुरोपदेशापवित्रवादप्रमाणमेवैष
इत्यनुत्तरोत्तरप्रकारः प्रामाण्यनिर्णयोऽव्यस्य न सा-
ध्यसिद्धिर्विरुद्धत्वाद् गुणवद्वकृतायामेव वाक्येषु प्रामाण्य-
निर्णयोपपत्तेः पुरुषो हि यथा रागादिमान्मृषावादी तथा
सत्यशौचादिमानवितथवचनः समुपलब्धः श्रुतौ तु तदु-
भयाभावेनैरर्थक्यमेव भवेत्। कथं वक्तुर्गुणित्वनिश्चयश्छ-
न्दसीति चेत्कथं पितृपितामहप्रपितामहादेरप्यसौ तस्मा-
द्येन तद्वस्तन्यस्तात्तरश्रेणेः पारंपर्योपदेशस्य चानुसारेण
आह्लदेयनिधानादौ निःशंकः प्रवर्तथाः क्वचित्संवादाच्चेदत
एवान्यत्रापि प्रतीहि कारीर्यादौ संवाददर्शनात्। कदाचित्-
क्वचित्संवादस्तु सामग्रीवैगुण्यात्त्वयाऽपि प्रतीयत एवं प्र-
तीतास्तमन्त्रोपदिष्टमंत्रवत्। प्रतिपादितश्च प्राक् रागद्वेषा-
ज्ञानशून्यपुरुषविशेषनिर्णयः किं चास्य व्याख्यानं तावत्पौ-
रुषेयमेवापौरुषेयत्वे भावनां नियोगादिविरुद्धव्याख्याने भे-
दाभावप्रसङ्गात्तथा च को नामात्र विश्रंभो भवेत्। कथं
चैतद्ध्वनीनामर्थनिर्णीतिर्लौकिकध्वन्यनुसारेणेति चेत्किं
न पौरुषेयत्वनिर्णीतिरपि तत्रोभयस्यापि विभावनादन्यथा
त्वर्द्धजरतीयम्। न च लौकिकार्थानुसारेण मदीयोऽर्थः
स्थापनीय इति श्रुतिरेव स्वयं वक्ति। न च जैमिन्यादावपि
तथा कथयति प्रत्यय इत्यपौरुषेयवचसामर्थोऽप्यन्य एव
कोऽपि संभाव्येत पौरुषेयीणामपि म्लेच्छार्यवाचामैकार्थ्यं
नास्ति किं पुनरपौरुषेयवाचां ततः परमकृपापीयूषप्लाविता-
न्तःकरणः कोऽपि पुमान् निर्दोषः प्रसिद्धार्थैः ध्वनिभिः
स्वाध्यायं विधाय व्याख्यातीदानींतनग्रन्थकारवदिति
युक्तं पश्यामः । अवोचाम च छन्दः स्वीकुरुते प्रमाणमथ
चेत्तद्वाच्यनिश्चायकं कंचिद्विश्वविदं न जल्पसि ततो
ज्ञातोऽस्य मूल्यक्रयीति ॥

आगमोऽपि नापौरुषेयत्वमाख्याति । पौरुषेयत्वाविष्कारिण
एवास्योक्तवत्सद्भावात्। अपि चेयमानुपूर्वी पिपीलिकादीना-
मिव देशकृतांकुरपत्रकहलकांडादीनामिव कालकृता चा-
वर्णानां वेदे न संभवति तेषां नित्यव्यापकत्वात्। क्रमेणाऽ-
भिव्यक्तेः सा संभवतीति चेत्तर्हि कथमियमपौरुषेयी भवेद-
भिव्यक्तिः पौरुषेयत्वादिति सिद्धा पौरुषेयी श्रुतिः ॥
॥ रत्ना० ॥

( ४ आगमस्य चाप्तप्रणीतस्यैव प्रामाण्यं ननु विरुद्धार्थस्य
तथा च स्याद्वादमंजर्य्याम् ) आगमानां च येषां पूर्वापर-
विरुद्धार्थत्वं तेषामप्रामाण्यमेव यस्त्वाप्तप्रणीत आगमः
स प्रमाणमेव कषाच्छेदतापलक्षणोपाधित्रयविशुद्धत्वात्।
कषादीनां च स्वरूपं पुरस्ताद्वक्ष्यामः। न च वाच्यमाप्तः

क्षीणसर्वदोषस्तथाविधं चाप्तत्वं कस्यापि नास्तीति यतो रागादयः कस्यचिदत्यंतं क्षियन्ते अस्मदादिषु छेदप्रकर्षापकर्षोपलंभात् सूर्याद्यावारकजलदपटलवत् । तथा चाहुः-"देशतो नाशिनो भावा दृष्टा निखिलनश्वराः । मेघपंक्त्यादयो यद्वदेवं रागादयो मता" इति यस्य च निरवयवतयैते विलीनाः स एवाप्तो भगवान् सर्वज्ञः ॥

अथानादित्वाद्रागादीनां कथं प्रक्षय इति चेन्न उपायतस्तद्भावात् । अनादेरपि सुवर्णमलस्य क्षारमृत्पुटपाकादिना विलयोपलंभात् । तद्वदेवानादीनामपि रागादिदोषाणां प्रतिपक्षभूतस्तत्राभ्यासेन विलयोपपत्तेः । क्षीणदोषस्य च केवलज्ञानाव्यभिचारात् सर्वज्ञत्वम् । तत्सिद्धिस्तु ज्ञानतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वात् आकाशपरिमाणतारतम्यवत् । तथा सूक्ष्मान्तरितदूरार्थाः कस्यचित्प्रत्यक्षानुमेयत्वात् क्षितिधरकंधराधिकरणधूमध्वजवत् । एवं चन्द्रसूर्योपरागादिसूचकज्योतिर्ज्ञानाविसंवादार्थानुपपत्तिप्रभृतयोऽपि हेतवो वाच्यास्तदेवमाप्तेन सर्वविदा प्रणीत आगमः प्रमाणमेव तदप्रामाण्यं हि प्रणायकदोषनिबन्धनं रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम् । यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यादिति ॥ स्या० ॥

न चागमानां परस्परविरुद्धार्थतया सर्वेषामप्यप्रामाण्यमभ्युपेयं सर्वज्ञमूलस्यावश्यं प्रमाणत्वेनाभ्युपगमार्हत्वादन्यथा सम्यक् प्रमाणाप्रमाणविभागापरिणतेः प्रेक्षावत्ताक्षितिप्रसंगात् । अथ कथमेतत्प्रत्येयं यथायमागमः सर्वज्ञमूल इति ? उच्यते-यदुक्तोऽर्थः प्रत्यक्षेणानुमानेन वा न व्याघातेनापि पूर्वापरव्याहतः सोऽवसीयते । सर्वज्ञप्रणीतोऽन्यस्य तथारूपत्वासंभवात् । ततस्तस्मादात्सिद्धम् तत्सर्वं सुसिद्धं उक्तं च—"दिट्ठेणं इट्ठेण य जंमि विरोहो न जुज्जइ कहिं वि । सो आगमतत्तो जं नाणं तं सम्मनाणंति ॥ आ०म० ॥

( जैनागमस्य च सर्वज्ञप्रणीतत्वं नंद्यध्ययने यथा ) सव्वन्नू विहाणम्मि विनिद्दिट्ठेहावाहिया उ वयणाओ । सव्वण्णू होइ जिणो सेसा सव्वे असव्वन्नू ॥ १ ॥ एतेन यदुक्तं भवतु वा वर्द्धमानस्वामी सर्वज्ञस्तथाऽपि तस्य सक्तोऽयमाचारादिक उपदेश इति कथं प्रतीयते इति तदपि दूरापास्तम् । अन्यस्येत्थंभूतदृष्टेष्टावाधितवचनप्रवृत्तेरसंभवात् । यदप्युक्तं भवत्वेषोऽपि निश्चयो यथाऽयमाचारादिक उपदेशो वर्द्धमानस्वामिन इति तथाऽपि तस्योपदेशस्यायमर्थो नान्य इति न शक्यं प्रत्येतुमित्यादि तदप्ययुक्तं भगवान् हि वीतरागस्ततो न विप्रतारयति विप्रतारणहेतुरागादिदोषगणासंभवात् । तथा सर्वज्ञस्तेन विपरीतं सम्यग्वार्थमवबुध्यमानं शिष्यं जानाति ततो यदि विपरीतमर्थमवबुध्यते श्रोता तर्हि निवारयेत् । न च निवारयति न विप्रतारयति करोति च देशनां कृतकृत्योऽपि तीर्थकरनामकर्मोदयात् ततो ज्ञायते एष एवास्योपदेशस्यार्थ इति । उक्तं च—

"नाए वि तदुपएसे एसे वत्थो मओत्ति से एवं । नच्चइ पवत्तमाणं जं न निवारइ तहा चेव ॥१॥ अन्नहयपवत्तं तं निवारेइ न य तओ पवत्तइ । जह्मा सवीयरागो कहणिपुणकारणं कम्मं ॥ २ ॥

एवं च भगवद्विवक्षायाः परोक्षत्वेन सम्यगुपदेशस्यार्थनिश्चये जाते । यदुक्तम्—गौतमादिरपि छद्मस्थ इत्यादि तदप्यसारमवसेयं छद्मस्थस्याप्युक्तप्रकारेण भगवदुपदेशार्थनिश्चयोपपत्तेः । तथा चित्रार्था अपि शब्दाः भगवतैव समर्थितास्ते च प्रकरणाद्यनुरोधेन तत्तदर्थप्रतिपादकाः प्रतिपादितास्ततो न कश्चिद्दोषः तत्तत्प्रकरणाद्यनुरोधेन तत्तदर्थनिश्चयोपपत्तेः । भगवतापि च तथा तदर्थावगमे प्रतिषेधाकारणादिति एवं च तदानीं गौतमादिना सम्यगुपदेशार्थावगतावाचार्यपरंपरात इदानीमपि तदर्थावगमो भवति । न चाचार्यपरम्परा न प्रमाणाम् अविपरीतार्थव्याख्यातृत्वेन तस्याः प्रामाण्यस्यापाकर्तुमशक्यत्वात् । अपिच भवद्दर्शनमपि किमागममूलमनागममूलं वा यद्यागममूलं तर्हि कथमाचार्यपरंपरा न प्रमाणमाचार्यपरंपरामंतरेणागमार्थस्यावबोद्धुमशक्यत्वात् । अथानागममूलं तर्हि न प्रमाणमुन्मत्तकविरचितदर्शनवत् ॥ नं० ॥

(५)संभवद्रूपस्यैव च वचनस्य प्रामाण्यं न त्वसंभवद्रूपस्येति प्रतिमाशतके यथा ॥

एयं पि ण जुत्तिखमं ण वयणमित्ताणहोइ एवमियं । संसारमोअगाणवि धम्मो दोसप्पसंगाओ ॥ २३ ॥

एतदपि न युक्तिक्षमं यदुक्तं परेण कुत इत्याह—न वचनमात्रादनुपपत्तिकाद्भवत्येवमेतत्सर्वं कुत इत्याह—संसारमोचकानामपि वचनाद्धिंसाकारिणां धर्मस्य दुःखिनो हन्तव्या इत्यस्यादोषप्रसङ्गाददुष्टतापत्तेरित्यर्थः ॥ २३ ॥

सिय तं ण सम्मवयणं इयरं सम्मवयणंति किं माणं । अह लोयचियणेयं तहा अ पावा विगाणाओ ॥ २४ ॥

स्यात्तत्संसारमोचकवचनं न सम्यग्वचनमित्याशंक्याह-इतरद्वैदिकं सम्यग् वचनमिति किं मानमथ लोक एवमानमित्याशंक्याह—नैतत्तथालोकस्य प्रमाणतया पाठात् । अन्यथा प्रमाणस्य षट् संख्याविरोधात् । तथा विगानाच्च । नहि वेदं वचनं प्रमाणमित्येकवाक्यमनालोकतामिति ॥ २४॥

"अह पाठोभिमओ चिय विगाणमवि एत्थ थोवगाणं तु । एत्थं पि णम्ममाणं सव्वेसिं तदंसणाओ उ" ॥ २५ ॥

अथ पाठोऽभिमत एव लोकस्य प्रमाणमध्ये पण्णामुपलक्षणत्वात् विगानमप्यत्र वचनाप्रामाण्ये स्तोकानामेव लोकानामित्येतदाशंक्याह-अत्रापि कल्पनायां न प्रमाणं सर्वेषां लोकानामदर्शनादल्पबहुत्वान्निश्चयाभावादित्यर्थः । २५ ।

"किं तेसिं दंसणेणं अल्पवहुत्तं जहित्थ तह चेव । समवत्थ समवसेयं णेवं वभिचारभावाओ" ॥ २६ ॥

किं तेषां सर्वेषां लोकानां दर्शनेन अल्पवहुत्वं यथेत्थं मध्यदेशादौ वेदवचनप्रामाण्यं प्रति तथैव सर्वत्र क्षेत्रान्तरेष्वपि समवसेयं लोकत्वादिति हेतुभ्य इत्यत्राह—नैवं व्यभिचार भावात्कारणात् ॥ २६ ॥ एतदेवाह—

"अप्पाहारे वहुगा दीसंति दिया तहा ण सुद्धत्ति । ण य तदंसणओ चिय सव्वत्थ एयं हवइ एवं,, ॥ २७ ॥

अल्पाहारा वहवो दृश्यन्ते द्विजा ब्राह्मणास्तथा न शूद्रा इति ब्राह्मणवहुत्वं दृश्यते । न च तद्दर्शनादेवाहरे वहुद्विजदर्शनादेव सर्वत्र भिल्लपल्ल्यादावप्येतद्भवत्येव द्विजवहुत्वमिति गाथार्थः ॥ २७ ॥ उपपत्यन्तरमाह—

ण य वहुआण वि इत्थं अविगाणं सोहणं ति णियमोयं ।

नयणं थेवाणं पि हु मूढे परभावजोएण,, ॥ २८ ॥

न च वहूनामप्यत्र लोके विगानमेकवाक्यतारूपं शोभनमिति नियमवचनस्तोकानामपि न शोभनं मूढेतरभावयोगेन मूढानां वहूनामपि न शोभनममूढस्य त्वेकस्यैवेति भावः ॥ २८ ॥

ण य रागाइविरहिओ को वि मायाविसेसकारित्ति ।
जं सव्वे च्चियपुरिसा रागाइजुआ उ परपक्खे ॥ २९ ॥

न च रागादिरहितः कोऽपि माता प्रमाता विशेषकारी विशेषकृत् यतः सर्वेऽपि पुरुषा रागादियुताः परपक्षे परनये मीमांसकस्य सर्वज्ञानभ्युपगंतृत्वात् । दोषान्तरमाह-

एवं वयणमित्ता धम्मदोसाइमित्थगाणं पि । घाणं ताणं दियवरतुरओ नणु चंडिगाईणं ॥ ३० ॥

एवं च प्रमाणविशेषापरिकादीनां देवताविशेषाणाम् ।

ण य तेसिं पियवयणं एत्थ णिमित्तं निजं न सच्चे उ । तह घायंति सया असुअत्तं चोअणावक्का ॥ ३१ ॥

न च तेषामपि म्लेच्छानां न वचनमत्र निमित्तमिह द्विजघाते किंतु वचनमेवं कुत इत्याह यत्र सर्वत एव म्लेच्छास्ते द्विजवरान् घातयंति अश्रुतं तच्चोदनावाक्यं द्विजवरघातविधिरयं चैते तथा ॥ ३२ ॥

अह तं ण तत्थ रूढं एयं विणद्धतुल्लमेवेयं । अह तं थोवमणुयइयं इमं पि एयारिसं तेसिं ॥ ३२ ॥

अथ तन्म्लेच्छप्रवर्त्तकवचनं नात्र रूढं लोके इत्याशंक्याह-तदपि वैदिकं न तत्र भिल्लमते रूढमिति तुल्यमल्पतरारूढत्वमथ तन्म्लेच्छप्रवर्त्तकं वचनं तेषां काममनुचितमसंस्कृतमित्याशंक्याह तदपि वैदिकं न तत्तु इदमप्येतादृशं तेषां म्लेच्छप्रवर्त्तकमेववचनं वेदेऽस्ति न द्विजप्रवर्त्तकं श्रवणमात्रस्यानंतत्वात् अश्रवणस्योच्छिन्नशाखत्वेनोपपत्तेरिति तैरपि वक्तुं शक्यत्वादिति ॥ ३३ ॥ अन्यापि कल्पना ब्राह्मणपरिग्राहित्वरूपा भिल्लपरिगृहीतत्वादि तुल्यत्वेन दुष्टेत्याह ।

अह तं ण चेइ अखलुततंपि एमेव इत्थविणमाणं । अह तत्था सवणमिदं हविज्ज उच्छिसीहित्ता ॥ ३४ ॥

ण य तव्विवज्जणाओ चियदुभयता वोच्छतुल्लभणिईओ ।
आणा विकप्पणाइ साहम्मविहम्मओ दुट्ठ ॥ ३५ ॥

यस्मादेवम् ।

तम्हाण वयणमित्तं सव्वत्थ विसेसओ वूहजणेण । एत्थ पवित्तिणिमित्तं एवं दट्ठव्वयं होइ ॥ ३६ ॥

तस्मान्न वचनमात्रमुपपत्तिशून्यं सर्वत्राविशेषतः कारणात् बुधजनेन विद्वज्जनेनात्र लोके प्रवृत्तिनिमित्तमेवं द्रष्टव्यम् ॥ ३६ ॥

किं पुण विसिट्ठगं चिय जं दिट्ठिट्ठाहिं णो खलु विरुद्धं । तह संभवं सरूवं वियारिउं सुद्धवुद्धीए ॥ ३७ ॥

किं पुनर्विशिष्टमेव वचनं प्रवृत्तिनिमित्तमिह द्रष्टव्यं किंभूतं यत् दृष्टेष्टाभ्यां न खलु विरुद्धं तृतीयसंस्थानसंक्रान्तमित्यर्थः । तथा संभवत्स्वरूपं यन्न पुनरत्यंतासंभवि विचार्य शुद्धबुद्ध्या मध्यस्थतयेति गाथार्थः ॥ प्रति० ।

जिनागमस्यैव च सम्भवद्रूपत्वन्तादितरस्य चासम्भवद्रूपत्वम्प्रतिमाशतके यथा ।

तह संभवंतरूवं सव्वसव्वन्नूवयणओ एयं । तं णिच्छियं हि आगमपउत्तगुरुसंपदाएहिं ॥ ६६ ॥

तथा संभवद्रूपं सर्वं सर्वज्ञवचनत एतत् तन्निश्चितं हि आगमप्रयुक्तगुरुसंप्रदायेभ्यः ॥ ६६ ॥

वेयवयणं तु णेवं अपोरुसेयं तु तंमजेण । इणमंवंतविरुद्धं वयणं वा पोरिसेयं च ॥ ६७ ॥

वेदवचनं तु नैवं संभवत्स्वरूपं अपौरुषेयमेव तन्मतं इदमत्यंतविरुद्धं वर्त्तते यदुत वचनं वा पौरुषेयं चेति गाथार्थः ॥ ६७ ॥ एतद्भावनामाह ॥

जंबू चइत्ति वयणं पुरिसाभावे उ णेवमयंति । तातस्सेवा भावो णियमेण अपोरुसेयत्ते ॥ ६८ ॥ तव्वावारविरहियं ण कत्थइ सुव्वइ इह वयणं । सवणे वि य णासंका अदिस्स कत्तुब्भवा होइ ॥ ६९ ॥

तद्व्यापारविरहितं न च कचित् श्रूयते इह लोके श्रवणेऽपि च नाशंका दृश्यकर्त्तृद्भवायेति प्रमाणाभावादिति गाथार्थः ६९

"अदिस्सकत्तिगणो अण्णं सुव्वइ कहं णु आसंका । सुव्वइ पिसायवयणं कयाइ एयत्तु ण सदेव" ॥ ७० ॥

अदृश्यकर्तृकमेवान्यत् श्रूयते कथं चाशंकेति विपक्षाद्दृष्टेरित्यर्थः । अत्राह श्रूयते पिशाचवचनं कथं न लौकिकमेतत्तु वैदिकमपौरुषेयं न सदैव श्रूयते यथाभ्युपगमदूषणमाह-

"वण्णादपोरुसेयं लोइअवयणाणवीह सव्वेसिं । वेयंमि को विसेसो जेण तहिए स सग्गहो" ॥ ७१ ॥

वर्णाद्यपौरुषेयं लौकिकवचनानामपीह सर्वेषां वर्णत्वादिवाचकत्वादेः पुरुषैरकरणात् वेदे को विशेषो येन तत्रैषोऽसद्ग्राहोऽपौरुषेयत्वासंग्रह इति ॥ ७१ ॥

ण य णिच्छयओ विहू तओ जुज्जइ पायं कहं विसण्णाया ।
जं तस्सत्थ पगासण विसण्ह अइंदियासत्ति ॥ ७२ ॥

न च निश्चयोऽपि ततो वेदवाक्यात् युज्यते प्रायः कचिदवस्तुनि सन्न्यायात् यद् यस्मात्तस्य वेदवचनस्यार्थप्रकाशनविषये प्रक्रमेऽतींद्रिया शक्तिरिति गाथार्थः ॥ ७२ ॥

णो पुरिसमित्तगम्मा तदतिसओ वि ण वहुमओ तुह्मं । लोइयवयणेहिंतो दिट्ठं च कहं चि वेहम्मं ॥ ७३ ॥

न पुरुषमात्रगम्या एषा तदतिशयोऽपि न बहुमतो युष्माकं अतींद्रियशीलो लौकिकवचनेभ्यः सकाशाद्दृष्टं च कथंचिद्वैधर्म्यं वेदवचनानामिति गाथार्थः ॥ ७३ ॥

ताणीह पोरुसेयापोरुसेयाणि वेयवयणाणि । सग्गुव्वसिपमुहाणं दिट्ठो तह अत्थभेउत्ति ॥ ७४ ॥

तानीह पौरुषेयाणि लौकिकानि अपौरुषेयाणि वेदवचनानीति वैधर्म्यं स्वर्गोर्वशीप्रमुखानां शब्दानां दृष्टस्तथार्थभेदोऽपि एवं च य एव लौकिकास्त एव वैदिकाः स एवैषामर्थ इति यत् किंचिदेतत् ॥ ७४ ॥

"ण य तं सहावउच्चिय सत्थप्पगासणपरंपईवोव । समयविभेयाजोगा मिच्छत्तपगासजोगा य" ७५ ॥

न च तद्वेदवचनं स्वभावत एव स्वार्थप्रकाशनपरं प्रदीपवत् कुत इत्याह समयविभेदायोगात् संकेतभेदाभावात् मिथ्यात्वप्रकाशयोगाच्च क्वचिदेतदापत्तेरिति भावः ॥ ७५॥

तदाह—

इंदीवरंमि दीवो पगासई रत्तयं असंतं पि। चंदो वि पीयवत्थं धवलंति न णिच्छओ तत्तो ॥ ७६ ॥

इंदीवरे दीपः प्रकाशयति रक्ततामसतीमपि चंद्रोऽपि पीतवस्त्रं धवलमिति प्रकाशयति न निश्चयस्ततो वेदवचनाद्यभिचारिण इति गाथार्थः ॥ ७६ ॥

"एवं णो कहियागमपओगगुरुसंपयायभावो वि । जुज्जइ सुहोइअं खलु ता एणं छिन्नमूलत्ता ॥ ७७ ॥"

एवं न कथितागमप्रयोगगुरुसंप्रदायभावोऽपि प्रवृत्यंगभूतो युज्यते यत इह खलु वेदवचने न्यायच्छिन्नमूलत्वात्तथाविधवचनासंभवादिति गाथार्थः ॥ ७७ ॥

ण कयाइ कस्सइ इह णिच्छायमो कहं वि वत्थुमि। जाउत्त केइ एत्रं जं सो तत्तं स वामोहो ॥ ७८ ॥

न कदाचिदतो वेदवचनात् कस्यचिदिह निश्चय एव कचिद्वस्तुनि जात इति कथयति सति यदसौ वैदिकस्तत्वं स व्यामोहः स्वतोऽप्यज्ञात्वा कथनात् ॥ ७८ ॥

तत्तो अ आगमो जो विणेयसत्ताणसो वि एमेव । तस्स पउपेत्र अणिवारणगं च वामोहो ॥ ७९ ॥

ततश्च वैदिकादर्थादागमो यो व्याख्यातः विनेयसत्वानां संबंधी सोऽप्येवमेव व्यामोह एव तस्यागमार्थस्य प्रयोगोऽप्येवमेव व्यामोह एव अनिवारणं च नियमेन व्यामोह एवेति गाथार्थः ॥ ७९ ॥

णेयं परंपराए माणं एत्थ गुरुसंपयाओ वि । रूवविसेसठ्ठवणे जह सव्वंधाण सव्वेसिं ॥ ८० ॥

नैवं परंपरायां मानं अत्र व्यतिकरे गुरुसंप्रदायोऽपि निदर्शनमाह–सितेतरादिरूपविशेषस्थाने यथा जात्यंधानां सर्वेषामनादिमताम् ॥ ८० ॥ पराभिप्रायमाह—

भवतो वि य सव्वन्नू सव्वो आगम पुरस्सरो जेणं । तासो अपोरुसेओ इअरो वाणागमो जोओ ॥ ८१ ॥

भवतोऽपि च सर्वज्ञः सर्व आगमपुरस्सरं येन कारणेन स्वर्गकेवलार्थिना तपोध्यानादिकर्तव्यमित्यागमः अतः प्रवृत्तेरिति तदसावपौरुषेयः इतरः अनादिमत् सर्वज्ञोऽनागमादेव कस्यचित्तमंतरेणापि भावादितिगाथार्थः ॥ ८१ ॥

णो भयमवि जमणाई वीयंकुरजीवकम्मजोगसमं। अह वत्थतो उ एवं ण वयणओ वत्तहीणं तं ॥ ८२ ॥

अत्रोत्तरं न तदेवमुभयमप्यागमः सर्वज्ञश्च यद्यस्मादनादिबीजांकुरकर्मयोगसमं न ह्येवेदं पूर्वमिदं नेति व्यवस्था ततश्च यथोक्तदोषाभावः अथवा अर्थत एव बीजांकुरादिन्यासः सर्व एव कथंचिदागममासाद्य सर्वज्ञो जातः तदर्थतश्च तत्साधक इति वचनतो न वचनमेवाश्रित्य मरुदेव्यादीनामेकांतरेणापि भावात् । तद्वचनात्कथनं तन्वनाद्यपि वक्तारमंतरेण वचनप्रवृत्तेरयोगात् । तदर्थप्रतिपत्तिस्तु क्षयोपशमोदरविरुद्धा तथा दर्शनादेतत्सूक्ष्मधिया भावनीयम् ॥ ८२ ॥

वेयवयणंमि सव्वं णाएण संभवंतरूवं जं। ताइ परवयणसिद्धं वत्थु कहं सिज्झइ तत्तो ॥ ८३ ॥

वेदवचने सर्वमागमादिन्यायेनासंभवद्रूपं यद्यस्मात् तत्तस्मादितरवचनात्सिद्धं सद्भूतवचनसिद्धं वस्तु हिंसयैवादि कथं सिध्यति ततो वेदवचनादिति गाथार्थः ॥ ८३ ॥ प्रति० ॥ पं० व० ॥

( आगमस्य च स्वरूपप्रतिपादकस्यापि प्रामाण्यम् ) नच स्वरूपप्रतिपादकानामप्रामाण्यम् प्रमाजनकत्वस्य सद्भावात् । तथाहि–प्रमाजनकत्वेन प्रमाणस्य प्रामाण्यं न प्रवृत्तिनिवृत्तिजनकत्वेन तच्चेहास्त्येव प्रवृत्तिनिवृत्ती तु पुरुषस्य सुखदुःखसाधनत्वाध्यवसाये समर्थस्यार्थित्वाद्भवत इति । अथ विधावंगत्वादमीषां प्रामाण्यं न स्वरूपार्थत्वादिति चेत्तदसत्स्वार्थप्रतिपादकत्वेन विध्यंगत्वात्तथाहि–श्रुतेः स्वार्थप्रतिपादकत्वेन प्रवर्त्तकत्वं निंदायास्तु निवर्त्तकत्वमिति । अन्यथा हि तदर्थपरिज्ञाने विहितप्रतिषिद्धेष्वविशेषेण प्रवृत्तिर्निवृत्तिर्वा स्यात्तथाविधिवाक्यस्यापि स्वार्थप्रतिपादनद्वारेणैव पुरुषप्रेरकत्वं दृष्टमेवं स्वरूपपरेष्वपि वाक्येषु स्याद्वाक्यस्वरूपतारया अविशेषहेतोश्चाभावादिति तथाहि स्वरूपार्थानामप्रामाण्ये मेध्या आपोऽभ्राः पवित्रं मेध्यमशुचीत्येवंरूपापरिज्ञाने विध्यंगतायामप्याविशेषेण प्रवृत्तिनिवृत्तिप्रसंगः न चैतदस्ति मेध्येष्वेव प्रवर्त्तते अमेध्येषु च निवर्त्तते इत्युपलंभात्तदेव स्वरूपार्थेभ्यो वाक्येभ्योऽर्थस्वरूपावबोधे सति इष्टे प्रवृत्तिदर्शनादनिष्टे च निवृत्तेरिति ज्ञायते स्वरूपार्थानां प्रमाजनकत्वेन प्रवृत्तौ निवृत्तौ वा विधिसहकारित्वमिति अपरिज्ञानानुप्रसंगः । अथ स्वरूपार्थानां प्रामाण्ये ग्रावाणः प्लवंत इत्येवमादीनामपि यथार्थता स्यान्न मुख्ये बाधकोपपत्तेर्यत्र हि मुख्ये बाधकं प्रमाणमस्ति तत्रोपचारकल्पना तदभावे तु प्रमाणमेव न चेश्वरसद्भावप्रतिपादनेषु किंचिदस्ति बाधकमिति स्वरूपे प्रामाण्यमभ्युपगंतव्यम् ॥ ॥ सम्म० ॥

( मूलागमैकदेशभूतस्य चागमान्तरस्यापि प्रामाण्यम् ) "ऐदंपर्यं शुध्यति यत्रासावागमः सुपरिशुद्धः । तदभावे तद्देशः कश्चित्स्यादन्यथा ग्रहणात्" ॥ षो० ॥ मू० ॥

ऐदंपर्यं तात्पर्यं पूर्वोक्तं शुध्यति स्फुटीभवति यत्रागमे असावागमः सुपरिशुद्धः प्रमाणभूतस्तदभावे ऐदंपर्यं शुध्यभावे तद्देशः परिशुद्धागमैकदेशः कश्चिदन्य आगमः स्यान्नतु मूलागम एव अन्यथा ग्रहणात् मूलागमैकदेशस्य समता विषयस्यान्यथा प्रतिपत्तेर्यतः समतामवलंबमानास्तेपि तथेच्छंति ॥ टी० षो०

मूलागमव्यतिरिक्ते तदेकदेशभूत आगमेऽन्यथा परिगृहीते द्वेषो विधेयो न वेति प्रतिपादनायाह। "तत्रापि च न द्वेषः कार्यो विषयस्तु यत्नतो मृग्यः । तस्यापि न सद्वचनं सर्वं यत्प्रवचनादन्यत्" ॥ षो० ॥ मू० ॥

तत्रापि च तदेकदेशभूत आगमान्तरे न द्वेषः कार्यो न द्वेषो विधेयो विषयस्त्वभिधेयरूपो यत्नेन मृग्योऽन्वेषणीयो यद्येवं सर्वमेव तद्वचनं किं न प्रमाणीक्रियत इत्याह तस्याप्यागमांतरस्य न सन्न शोभनं वचनं सर्वमखिलं यत्प्रवचनान्मूलागमादन्यत् यत्तु तदनुपाति तत्सदेवेति ॥ षो० टी० ॥ कस्मात्पुनस्तत्राद्वेषः क्रियत इत्याह ॥

अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसाः। परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टांगिकी तत्त्वे ॥ १४ ॥ षो० मू० ॥

अद्वेषोऽप्रीतिपरिहारस्तत्वविषयस्तत्पूर्विका ज्ञातुमिच्छा जिज्ञासा तत्वविषया ज्ञानेच्छा तत्वजिज्ञासापूर्विका बोधांभःश्रोतसः शिराकल्पा श्रोतुमिच्छा शुश्रूषा तत्वविषयैव तत्वशुश्रूषानिबंधनं श्रवणमाकर्णनं तत्वविषयमेव बोधोऽवगमः परिच्छेदो विवक्षितार्थस्य श्रवणनिबंधनस्तत्वविषय एव मीमांसा सद्विचाररूपा बोधानंतरभाविनी तत्वविषयैव । श्रवणं च बोधश्च मीमांसा च श्रवणबोधमीमांसाः । परिशुद्धा सर्वतो भावविशुद्धा प्रतिपत्तिर्मीमांसोत्तरकालभाविनी निश्चयाकारा परिच्छित्तिरिदमिदमेवेति तत्वविषयैव प्रवर्त्तनं प्रवृत्तिरनुष्ठानरूपा परिशुद्धा प्रतिपत्त्यनंतरभाविनी तत्वविषयैव प्रवृत्तिशब्दो द्विरावर्त्यते तेनायमर्थो भवति तत्त्वप्रवृत्तिरष्टभिरंगैर्निर्वृत्ताष्टांगिकी एभिरद्वेषादिभिरष्टभिरंगैस्तत्त्वप्रवृत्तिः संपद्यते नागमान्तरे मूलागमैकदेशभूते न द्वेषः कार्य इति ॥ १४ ॥॥ टी० षो० ॥

( ७ प्रमाणान्तरसविषय एव पदार्थो नागमेन बोध्यते किन्तु प्रमाणान्तरविषयोऽपि ) न ह्यागमसिद्धाः पदार्था इति प्रत्यक्षस्यापि प्रतिक्षेपो युक्तः यदपि प्रत्यक्षानुमानाविषये चार्थे आगमप्रामाण्यवादिभिस्तस्य प्रामाण्यमभ्युपगम्यते तदुक्तमाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति । तदप्ययुक्तं । यतो यथाप्रत्यक्षप्रतीतेप्यर्थे विप्रतिपत्तिविषयानुमानमपि प्रवृत्तिमासादयतीति प्रतिपादितं । तथा प्रत्यक्षानुमानप्रतिपन्नेऽप्यात्मलक्षणेऽर्थे तस्य वा प्रतिनियतकर्मफलसंबंधलक्षणे किमित्यागमस्य प्रवृत्तिर्नाभ्युपगमस्य विषयः । नचागमस्य तत्राप्रामाण्यमिति वक्तुं युक्तं सर्वज्ञप्रणीतत्वेन तत्प्रामाण्यस्य व्यवस्थापितत्वात् ॥ सम्म० ॥
आगमप्रमाणश्च प्रमाणान्तरे नान्तर्भवति तथा चात्र शङ्कितम् विशेषावश्यके आगमोऽप्यनुमानान्न भिद्यते परमार्थतस्तस्याप्यनुमानत्वात्तथाहि—शाब्दप्रमाणमागम उच्यते शब्दश्च द्विविधो दृष्टार्थविषयोऽदृष्टार्थविषयश्च। तत्र दृष्टार्थ विषया शब्दाद्या प्रतीतिः सा वस्तुतोऽनुमानसमुत्थैव यतः क्वचित्प्रथमं पृथुबुध्नोदरोर्ध्वकुंडलोष्ठायतवृत्तग्रीवादिमति घटपदार्थे घटशब्दं प्रयुज्यमानं दृष्ट्वा तदुत्तरकालं क्वापि घटमानयेत्यादिशब्दं श्रुत्वा पृथुबुध्नोदरादिमदर्थ एव घट उच्यते तथाभूत एव पदार्थे घटशब्दप्रयोगप्रवृत्तेर्यथा पूर्वकुंभकारापणादौ घटशब्दश्चायमिदानीमपि श्रूयते तस्मात्तथाभूतस्यैव पृथुबुध्नोदरादिमतः पदार्थस्य मया आनयनादिक्रिया कर्त्तव्येत्यनुमानं विधाय प्रमाता घटानयनादिक्रियां करोतीत्येवं दृष्टार्थविषयं शाब्दं प्रमाणं वस्तुतो नानुमानाद्भिद्यते ॥ विशे० ॥

(८) काणादाश्च शब्दोऽनुमानं व्याप्तिग्रहणबलेनार्थप्रतिपादकत्वाद्धूमवदिति । तत्र हेतोरामुखे कूटाकूटकार्षापणनिरूपणप्रवणप्रत्यक्षेण व्यभिचारस्तथाभूतस्यापि तत्प्रत्यक्षस्यानुमानरूपतापायात्। आः कथं प्रत्यक्षं नाम भूत्वा व्याप्तिग्रहणपुरस्सरं पदार्थं परिच्छिद्यादुन्मीलितं हि चेल्लोचनं जातमेव परीक्षकाणां कूटाकूटविवेकेन प्रत्यक्षमिति क्व व्याप्तिग्रहणावसर इति चेत्तदेषान्यत्रापि प्रतीहि ॥ तथाहि—
समुच्चारितश्चेद् ध्वनिर्ज्जातमेव जस्नय शब्दार्थसंवेदनमिति क्व व्याप्तिग्रहणावकाश इति। एवं तर्हि नालिकेरद्वीपवासिनोऽपि पनसशब्दात्तदर्थसंवित्तिः स्यादिति चेत्किं नापरीक्षकस्यापि कार्षापणे कूटाकूटविवेकेन प्रत्यक्षोत्पत्तिः । अथ यावानेतादृशविशेषसमाकलितकलेवरः कार्षापणस्तावानशेषः कूटोऽकूटोवाऽनिष्टं कनीयस्त्वयेत्युपदेशसहायकापेक्षं चक्षुरादि तद्विविके कौशलं कलयति नचापरीक्षकस्यार्थः प्राक्मा वर्त्तिष्टेति चेत्तर्हि शब्दोऽपि यावानेव सशब्दस्तावानेव सोर्थवाचक इति संवित्तिसहायस्तत्प्रतिपादने पटीयान्न च नालिकेरद्वीपवासिनः प्रागियं प्रादुरासीदिति कथं तत्प्रतीतिः स्यात् । अथैतादृशसंवेदनं व्याप्तिसंवेदनरूपमेव तदपेक्षायां च शब्दार्थज्ञानमनुमानमेव भवेदिति चेत्कूटाकूटकार्षापणविवेकप्रत्यक्षमपि किं न तथा तत्रापि तथाविधोपदेशस्य व्याप्त्युल्लेखस्वरूपत्वात् । अथ व्याप्तेः प्राक् प्रवृत्तावपि तदानीमभ्यासदशापन्नत्वेनानपेक्षणात्प्रत्यक्षमेवैतत्तदपेक्षायां तु भवत्येवैतदनुमानं कूटोऽयं कार्षापणस्तथाविधविशेषसमन्वितत्वात्प्राक्प्रेक्षितकार्षापणवदिति चेदेतदेव समस्तमन्यत्रापि तुल्यं विदांकरोतु भवान्न खल्वभ्यासदशायां कोपि व्याप्तिं शब्देऽप्यपेक्षते सहसैव तज्ज्ञानोत्पत्तेरनभ्यासे तु को नाम नानुमानतां मन्यते यथा कस्यचिद्विस्मृतसंकेतस्य कालांतरे पनसशब्दश्रवणे यः पनसशब्दः स आमूलफले ग्रहिविटपिविशेषवाचको यथा यज्ञदत्तोक्तः प्राक्तनस्तथा चायमपि देवदत्तोक्त इति । एवं च पक्षैकदेशे सिध्यसाध्यताशब्दोऽनुमानमित्यत्र सकलवाचकानां पक्षीकृतानामेकदेशस्यानुमानरूपतया स्वीकृतत्वात्।यत्त्वागमरूपतयास्वीकृतः शब्दस्तत्राभ्यासदशापन्नत्वेन व्याप्तिग्रहणापेक्षैव नास्त्यन्यथा कूटाकूटकार्षापणप्रत्यक्षेण व्यभिचारापत्तेस्तथा च हेतोरसिद्धिः । एवं च विवादास्पदं शब्दो नानुमानं तद्विभिन्नसामग्रीकत्वात्कूटाकूटकार्षापणविवेकप्रत्यक्षवदिति सिद्धम् ॥

किं च वाचामनुमानमानतामातन्वानोऽसौ कथं पक्षधर्मतादिकमादर्शयेत् चैत्रः ककुदादिमदर्थविवक्षावान् गोशब्दोच्चारणकर्तृत्वादहमिवेतीत्थमिति चेन्नन्वत्वतो विवक्षामात्रस्यैव प्रतीतिः स्यात्तथा च कथमर्थे प्रवृत्तिर्भवेत् विवक्षातोऽर्थसिद्धिरिति चेन्मैवमस्य तद्व्यभिचारादनाप्तानामन्यथापि तदुपलब्धेः अथ यथाप्तोक्ताच्छब्दात्तथाप्तविवक्षातोऽक्षुण्णैवार्थसिद्धिर्भविष्यतीति चेत्सत्यं किं प्रतीतिपराहतैवेयं परम्परा शब्दश्रुतौ सत्यां प्रतीत्यन्तराव्यवहितस्यैवार्थस्य संवेदनाद्यथा लोचनव्यापारे सति रूपस्य अपि चाप्रतीतिक्येतादृक्कल्पना महापातकं क्रियतां नाम यदि नान्या गतिः स्यादस्ति चेयं शब्दस्य स्वाभाविकवाच्यवाचकभावसंबंधद्वारेणार्थप्रत्यायकत्वोपपत्तेः एतच्च स्वाभाविकसामर्थ्यसमयाभ्यामित्यादिसूत्रे निर्णायिष्यते ॥ उदाहरंति समस्त्यत्र प्रदेशे रत्ननिधानं संति रत्नसानुप्रभृतय इति वक्ष्यमाण लौकिकजनकादिलोकोत्तरतीर्थकराद्यपेक्षया क्रमेणोदाहरणोभयी ॥ रत्ना० ॥

अत्राह मीमांसकः शब्दज्ञानादसन्निकृष्टेर्थे शुद्धिः शाब्द मिति वचनात् "शब्दादुदेति यद् ज्ञानमप्रत्यक्षेऽपि वस्तुनि । शाब्दं तदिति मन्यंते प्रमाणांतरवादिन" इति लक्षणलक्षितस्य प्रमाणांतरस्य सद्भावात् कथं द्वे एव प्रमाणे । न चास्य प्रत्यक्षप्रमाणता सविकल्पकत्वात् नाप्यनुमानता त्रिरूपलिंगाप्रभव-

त्वात् अनुमानगोचराविषयत्वाच्च । तदुक्तं "तस्माद-
स्यानुमानत्वं शाब्दे प्रत्यक्षवद्भवेत् । त्रैरूप्यरहितत्वेन ता-
दृग्विषयवर्जनात्"। तथाहि न शब्दस्य पक्षधर्मित्वं धर्मिणो-
ऽयोगात् । नचार्थस्य धर्मित्वं तेन तस्य संबंधासिद्धेः । नचा-
प्रतीतेऽर्थे तद्धर्मतया शब्दस्य प्रतीतिः संभविनी प्रतीते चार्थे
न तद्धर्मताप्रतिपत्तिः शब्दस्योपयोगिनी तामन्तरेणाप्यर्थस्य
प्रागेव प्रतीतेरन्यथा तस्य तद्धर्मतया प्रतीत्ययोगात् भवतु
वार्थो धर्मी तथापि किं तत्र साध्यमिति वक्तव्यं सामान्य-
मितिचेन्न तस्य धर्मिपरिच्छेदकाल एव सिद्धत्वात् ।

तदपरिच्छेदे धर्मिपरिच्छेदायोगाद् न गृहीते विशेषणावि-
शेष्ये बुद्धिरिति न्यायात् । न च सामान्यं धर्मि अर्थविशे-
षस्तत्र साध्यधर्म उक्तदोषानतिक्रमात् । विशेषस्य चान-
न्वयादथ शब्दो धर्मी अर्थवानिति साध्यो धर्मः शब्द एव
च हेतुः न प्रतिज्ञार्थैकदेशत्वप्राप्तेरथ शब्दत्वं हेतुरिति न
प्रतिज्ञार्थैकदेशत्वं दोषः न शब्दत्वस्यागमत्वात् गोशब्दत्व-
स्य निषेत्स्यमानत्वेनासिद्धत्वात् । अत एवानुमानतुल्यविषय-
तापि न शाब्दे संभवति । तदुक्तं "सामान्यविषयत्वं हि
यदस्य स्थापयिष्यते । धर्मी धर्मविशिष्टश्च लिंगीत्येतच्च
साधितं" न तावदनुमानं हि यावत्तद्विषयं न तत् । अथ शब्दो-
ऽर्थवत्वेन पक्षः कस्मान्न कल्प्यते ।प्रतिज्ञार्थैकदेशो हि हेतुस्त-
त्र प्रसज्यते। पक्षे धूमविशेषे हि सामान्यंहेतुरिष्यते। शब्दत्वं
गमकं नात्र गोशब्दत्वं निषेत्स्यते। विशेष्यतो व्यक्तिरेव हेतो-
श्चैका प्रसज्यत" इति शब्दस्य चार्थेन संबंधाभावतो यथा
न पक्षधर्मत्वं तथान्वयोऽपि प्रमेयेण व्यापाराभावतोऽ-
संगत एव "तदुक्तं अन्वयो न च प्रमेयेण निरूप्यते ।
व्यापारेण हि सर्वेषामन्वेतृत्वं प्रतीयते । यत्रधूमोऽस्ति तत्रा-
ग्नेरास्तित्वेनान्वयः स्फुटः । नत्वेवं यत्र शब्दोऽस्ति तत्रार्थो-
ऽस्तीति निश्चयः। न तावत् यत्र देशोस्ति न तत्कालेऽवगम्य-
ते । भिवेन्नित्यविभुत्वाच्चेत् सर्वार्थेष्वपि तत्समम । तत्र
सर्वत्र दृष्टत्वाद्व्यतिरेकस्य चागतेः" । सर्वशब्दैरशेषार्थ-
प्रतिपत्तिः प्रसज्यते" । अन्वयाभावे व्यतिरेकस्याप्यभावः
उक्तं च "अन्वयेन विना तस्माद्व्यतिरेकः कथं भवेदिति"
तदेषमनुमानलक्षणाभावात् शाब्दं प्रमाणांतरमेव ॥ सम्म०
अत्र प्रतिविधीयते यत्तावच्छब्दस्य त्रैरूप्यरहितत्वेन तादृग् वि-
षयाभावाच्चानुमानानंतर्भावप्रतिपादनमभ्यधायि तदयुक्तमेव न
ह्यप्रमाणस्यानुमानानन्तर्भावो युक्तः पुनः शब्दोद्भवस्य ज्ञान-
स्याप्रामाण्यं शब्दस्यार्थप्रतिबंधाभावात् । न हि शब्दोऽ-
र्थस्य स्वभावोऽत्यंतभेदान्नापि कार्यं तेन विनाऽपि भावात् ।
न च तादात्म्यतदुत्पत्तिव्यतिरिक्तः संबंधो गमकत्वनिबंधन-
मस्ति न च स इति प्रतीतिबलाद्वास्तवप्रतिपत्तिशक्तियुक्तानां
प्रदीपानामिवार्थप्रकाशकत्वं संभवति न च व्यवस्थितैवा-
र्थप्रतिपादनयोग्यता संकेतेन शब्दस्याभिव्यज्यत इति
वक्तव्यं पुरुषेच्छावशादन्यत्रार्थे शब्दस्य समयान्तप्रवृत्तिप्र-
सक्तेः । दृश्यते च पुरुषेच्छावशादन्यत्रापि विषये शब्दा-
नां प्रवृत्तिः न च पुरुषेच्छावृत्तिः समयो वस्तुप्रतिबद्धः तद-
भावेऽपि तस्य प्रवृत्तेः । न च संकेतभेरेण शब्दवस्तुप्रत्या-
यकत्वं संकेताभावप्रसक्तेः । आप्तप्रणीतशब्दानां पुनरर्थ-
व्यभिचारेऽप्याप्तप्रणीतत्वानिश्चयादेवाप्रामाण्यं न पुनराप्त-
स्यैवासंभवात् । न च बाधकप्रमाणाभावात् ततो बाह्ये
विषये शब्दानां प्रतिबंधाभावतः प्रामाण्यमेव संभवति
प्रत्यक्षधर्मत्वाद्यसंभवबाधकप्रमाणाभावात् । ततो बाह्यविष-
ये शब्दानां प्रतिबंधाभावतः प्रामाण्यमेव न संभवति पक्षध-
र्मताद्यनुमानत्वाभावप्रतिपादनं युक्तमेवेति स्थितम् । यत्र
चाभिप्रायसूचने प्रामाण्यमस्य तत्रानुमानलक्षणयुक्तस्यैव
नान्यादृग्भूतस्यैव प्रमाणांतरत्वम् ॥ सम्म० ॥

( ६ सम्मतितर्के आगममधिकृत्योक्तम् ) तस्य च जीवाजीवा-
दिलक्षणे दृष्टिविषये वस्तुतत्वे सर्वदा विसंवादाददृष्टविषये
ऽप्येकवाक्यतया प्रवर्तमानस्य च प्रामाण्यं प्रतिपत्तव्यम् ।
न च वक्त्रधीनत्वात् तस्याप्रामाण्यं वक्त्रधीनत्वप्रमाण्य-
त्वयोर्विरोधाभावाद्वक्त्रधीनस्यापि प्रत्यक्षप्रामाण्योपलब्धेः ।
न चाक्षजत्वाद्वस्तुप्रतिबद्धेन तत्प्रामाण्यं तच्छब्दस्य विप-
र्ययादिति वक्तव्यं शब्दस्यात एव प्रमाणांतरत्वोपपत्तेरन्य-
थानुमानादविशेषप्रसंगात् । तथाहि-गुणवद्वक्त्रप्रयुक्तश-
ब्दप्रभवादेव शाब्दमनुमानज्ञानाद्विशिष्यते अन्यथा बाह्यार्थ-
प्रतिबंधस्यात्रापि सद्भावान्नानुमानादस्य विशेषः स्यात् ।
यदा च परोक्षेऽपि विषयेऽस्य प्रामाण्यमुक्तन्यायात् तद् गुण-
वद्वक्त्रप्रयुक्तत्वेनास्य प्रामाण्यमतश्च गुणवद्वक्त्रप्रयुक्तत्व-
मितीतरेतराश्रयदोषोऽपि नात्रावकाशं लभते ॥

यथोक्तं संवादादस्य प्रामाण्यनिश्चये कुतोऽयमस्यात्र संवा-
द इत्यपेक्षायामाप्तप्रणीतत्वादित्यवगमो न पुनः प्रथममेव
तत्प्रतीतत्वनिश्चयादस्यार्थप्रतिपादकत्वं प्रतिबंधनिश्चयादनु-
मानस्य विषयतापि दृष्टविषयाविसंवादिवाक्यैकवाक्यतां
विरहय्य दृष्टार्थवाक्यैकदेशस्यान्यतः कुतश्चित्प्राक् संवादि-
त्वनिबंधनस्य प्रामाण्यस्य निश्चयोऽन्यावस्थायाश्चाप्तप्रणी-
तत्वनिश्चयात् प्रवृत्तिरदृष्टार्थवाक्यान्न वार्यत इति कुत
इतरेतराश्रयावकाश एकांतवादिवाक्यात्तु दृष्टार्थेऽपि वि-
संवादिन : सर्वथा प्रवृत्तिरेव निश्चितविसंवादांगुल्यग्रहस्ति-
यूथशतप्रतिपादकवाक्यादिवन्न ह्येकांतवादिवचनानां वाच्यं
संभवतीत्युक्तं यतः सामान्यं वा तद्वाच्यं भवेद्विशेषो वा ।
उभयमनुभयं वेति विकल्पाः न तावत्सामान्यं तस्येतरव्यावृ-
त्तप्रतिनियतैकस्वरूपत्वायोगात् । शब्दवाच्यत्वे घटाद्यान-
यनाय प्रेरितः सर्वत्र प्रवर्त्तेत न वा क्वचिद् भेदनिबंधनत्वा-
त् प्रवर्तत्ते सामान्यस्यार्थक्रियाकारितया च बंधनत्वायोगात्।
अथापि स्याद्यदायं प्रतिपत्तौ वाक्यमश्रुतपूर्वं शृणोति तदा
पदानां संकेतकालानुभूतानामर्थं सामान्यलक्षणमेव प्रतिपद्य-
ते या तु वाक्यार्थप्रतिपत्तिः सापेक्षासन्निधानाभ्यां विशे-
षणविशेष्यभावात्पदार्थप्रतिपत्तिनिबंधना न पुनस्ततो वाक्या-
त् तथाविधस्य तस्य स्वार्थेन सह संबंधाप्रतिपत्तेः वाक्यमेव
प्रवृत्तिनिवृत्तिव्यवहारक्षमं न पदं तस्यानर्थक्रियाकारिसा-
मान्यप्रतिपादकत्वेनाप्रवृत्तिमत्वादत एव न विवक्षाप्रतिभा-
सनमप्यर्थप्रतिपादयंतः शब्दानुमानतामासादयंति अगृही-
तप्रतिबंधादपि वाक्यविशेषात् यथोक्तन्यायतो वाक्यार्थप्रति-
पत्तेरनेनैवाभिप्रायेण सौगता वाक्यगतां विना त्वदृशपदमेवा-
नुमानं अंतर्भावितवंतः । उक्तं च मीमांसकैः-

वाक्यार्थे तु पदार्थेभ्यः संबंधानुगमादृते । बुद्धिरुत्पद्यते
तस्माद्भिन्ना साप्यक्षबुद्धिवत् ॥ १ ॥ वाक्येष्वदृष्टेष्वपिसार्थ-
केषु पदार्थचिन्मात्रतया प्रतीतिम् । दृष्ट्वानुमानव्यतिरेक-
भीताः । क्लिष्टाः पदाभेदविचारणायामिति ॥ २ ॥
मसदेतदेवं कल्पनायां पदार्थानामपि वाक्यार्थप्रतिपत्तिहेतु-

त्वासंभवात् तथा हि घटः पटः कुंभ इत्यादिपदेभ्यो यथाऽन्योन्याननुषक्तस्वतंत्रसामान्यात्मकार्थप्रतिपत्तिस्तथा संबद्धपदसमूहश्रवणादपि किं न तथाभूतसामन्यप्रतिपत्तिर्भवेन्न हि ततः सामान्यमात्राधिगमे तत्परित्यागतो विशिष्टार्थप्रतिपत्तौ निमित्तमस्ति न चापेक्षासन्निधानात्तत्प्रवृत्तौ निमित्तं पदार्थस्य पदार्थांतरं प्रत्युत्पत्तौ प्रतिपत्तौ वाऽपेक्षादेरयोगात् तस्य सामान्यात्मकत्वेनोत्पत्तेरसंभवात् स्वपदेभ्यः परप्रतिपत्तेस्तत्रापि पदार्थांतरापेक्षाद्यनुपपत्तेरर्थशक्तित एव ततो विशेषप्रतिपत्तिरितिचेत् तर्हि पदार्थानामेकार्थसंभवाप्रतिपत्तिर्यस्यापि ततस्तत्प्रतिपत्तिर्भवेत् । न च सामान्यत्यागे किंचिन्निबंधनं बाधकाभावात् सत्यर्थित्वे उभयत्र प्रतिपत्तिप्रवृत्ती स्यातां न च वाक्यार्थप्रत्यय एव बाधकस्तेनास्य विरोधाभावात् सामान्यविशेषयोः साहचर्यात् सामान्यप्रत्ययस्य च विशेषप्रतिपत्तिप्रतिनिमित्तत्वाभ्युपगमान्निमित्तस्य च निमित्तेनाऽबोध्यत्वादन्यथा तस्य तन्निमित्तत्वायोगादथ प्रागप्येवमयं व्युत्पादितः यत्र च नैत्र भवति–तथाहि यः कश्चित् एकद्रव्यार्थनिवेशः पदसमूहः स संकेतसमयात्पदार्थानामेकद्रव्यसंभवस्तत्र पदार्थसामान्यत्यागाद्विशेषः प्रतिपत्तव्यो यथा नीलोत्पलादौ नन्वेवं सर्ववाक्यान्यस्य व्युत्पादितान्येव भवंति तथाहि–यः कश्चित् संभवादेकद्रव्यार्थनिवेशः पदसमूहः स संकेतसमयावगतसामान्यात्मकावयवार्थपरित्यागतस्तेषामेव विशेषणविशेष्यभावेन विशिष्टोऽर्थगोचरप्रतिपत्तव्यो यथा नीलोत्पलं पश्येत्यादिपदसंघातः तथा चायमपूर्ववाक्यात्मकः पदसमुदाय इति संकेतमनुस्मृत्य यदा ततस्तथाभूतमर्थं प्रत्येति तदा कथं न विशिष्टार्थवाचकं वाक्यमनेनैव क्रमेण शब्दविदा समयव्यवहार उपलभ्यते । यथा धात्वादिः क्रियादिवचनः कर्त्रादिवचनश्च लडादिरिति । समयपूर्वकं प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति व्युत्पादितोऽनर्थक्रियाकारित्वेन सामान्यमात्रस्य विशेषनिरपेक्षस्य प्रतिपादयितुमनिष्टः तत्परित्यागेन व्यवहारकाले विशेषमवगच्छति व्यवहारी । न च प्रकृतिप्रत्ययार्थावेवात्र पदार्थं प्रतिपादयतो न पदमिति मंतव्यम् ॥

अशाब्दे चापि वाक्यार्थे न पदार्थेषु शब्दतो वाक्यार्थस्यैव नैतेषां निमित्तांतरसंभव इत्यस्य विरोधप्रसक्तेः । न च वाक्यस्य वाक्यार्थसंकेतकरणेऽनुमानात् शाब्दस्यापि विशेषप्रतिपत्तिविशेषस्य प्राक् प्रतिपादितत्वात् । केवलस्य च पदस्य प्रयोगानर्हत्वाद्वाक्यस्य तु प्रयोगार्हस्य सामान्यानभिधायकत्वात् कथं सामान्ये शब्दार्थः स्यात् यत्तु पूर्वपदाऽनुरंजितं पदमेव वाक्यं पदार्थ एव पदार्थांतरविशेषितो वाक्यार्थोऽभ्युपगतस्तथाहि दंडी छत्रीत्यादिव्यपदेशो यथा पुरुष एव समासादयति नान्यस्तद्व्यतिरिक्तः तथाऽपाक्षीत् पचतीत्याद्यतीतकालाद्यवच्छिन्नः क्रियाविशिष्टश्च देवदत्त एव प्रतीयतेऽपाक्षीदित्यादिशब्दानां देवदत्तशब्देन सामानाधिकरण्यात् नेतु तद्व्यतिरिक्तोऽर्थः । अथ यत्र कालाद्यवच्छिन्नपुरुष एव प्रतीयते तदाग्निहोत्रं जुहुयात् ग्रामं गच्छ स्वाध्यायः कर्त्तव्य इति लिङ्लोट्कृत्ययोगेषु कस्यार्थस्य प्रतीतिरत्रापि कर्मणि नियुक्तः क्रियाविशिष्टोऽध्येषणादिविशिष्टश्च देवदत्त एव प्रतीयते केवलं वर्त्तमानादिकालो न विशेषणत्वेनात्रावतिष्ठते ॥

अथ यदि नात्रार्थातिरेकावगतिर्भावसंपादने कथं पुरुषः प्रवर्त्तते यथा हि देवदत्तः पचतीति वाक्यान्न प्रवर्त्तते तथा जुहुयादित्यस्मादपि नैव प्रवर्त्तते प्रवृत्तिनिमित्तस्यानवबोधात् । असदेतत् जुहुयादित्यादिवाक्यजनितविज्ञानस्यैव प्रवर्त्तकत्वात् प्रवृत्तेस्तद्भावभावित्वेनोपलंभादेतद्वाक्यसमुत्थं ज्ञानं पुरुषं स्वर्गादिसाधने नियोजयदुपलभ्यते न पचतीत्याद्यादिवाक्यसमुत्थं तथाहि विध्यादिवाक्यजनितं ज्ञानंतदनन्तरमिच्छा तदनंतरं प्रयत्नःतदनंतरं च पुरुषस्य स्वर्गादिफलार्थःपरिस्पंदस्ततोऽपि फलपर्यंता स्वर्गफलावाप्तिरित्यभिधानात् । तेऽपि युक्तकारणा एकांतपक्षे विशेष्ययोरत्यंतभेदेऽभेदे वा विशेषणानुरागस्य पदपदार्थेषु संभवाद्वाक्यार्थकल्पनादेरनुपपत्तित एवापाक्षीद्देवदत्त इत्यादौ न कालक्रियाविशिष्टपुरुषप्रतिपत्तिः क्रियादेः पुरुषाद्भेदे संबंधासिद्धितो व्यवच्छेदकत्वानुपपत्तेरभेदेऽप्येकस्य तात्विकविशेषणविशेष्यरूपतासंगतेरन्यथातिप्रसंगात् । कल्पनारचितस्य तद्रूपत्वस्य सर्वत्राविशेषात् विशिष्टप्रत्ययोत्पत्तेश्चान्यनिमित्तत्वाद्विरोधादिदोषस्य च तत्र प्रागेव प्रतिविहितत्वादेतेन लिङादियुक्तवाक्यजनितविज्ञानस्य प्रवर्त्तकत्वमेकांतवादिप्रकल्पितं प्रतिक्षिप्तं तद्भावभावित्वस्यान्यथासिद्धत्वप्रतिपादनात् ॥ सम्म० ॥

(१०) ( शब्दस्य बाह्यार्थे प्रामाण्यं सम्मतितर्के शास्त्रप्रयोजनमधिकृत्योक्तम् ) यदि प्रेक्षावतां प्रवृत्त्यर्थं प्रयोजनप्रतिपादनायादिवाक्यमुपादीयते तदा ते प्रेक्षापूर्वकारित्वादेवाप्रमाणके नैव प्रवृत्तिं विदधति। नच प्रयोजनप्रतिपादकमादिवाक्यं तत्प्रभवं च ज्ञानं प्रमाणमनक्षजत्वेनाध्यक्षत्वायोगान्नाप्यनुमानं स्वभावकार्यलिंगसमुत्थं तद्भावत्वेन तत्कारणत्वेन वा तत्प्रतिपाद्यप्रयोजनस्य प्रमाणतोऽप्रतिपत्तिः तदुत्थापकस्य लिंगस्य तत्कार्यत्वानवगमादन्यस्य च स्वसाध्यप्रतिबंधादप्रतिबद्धस्य च स्वसाध्यव्यभिचारेणागमकत्वात्तत्वेचातिप्रसंगात् तत्प्रतिबद्धत्वेऽप्यनिश्चितप्रतिबंधस्यातिप्रसंगत एवागमकत्वात् ॥

न च वाक्यमिदं प्रवर्त्तमानं स्वमहिम्नैव स्वार्थमप्रत्याययतीति शब्दप्रमाणरूपत्वात्स्वाभिधेयप्रयोजनप्रतिपादने प्रमाणं शब्दस्य बाह्यार्थे प्रतिबंधासंभवेनाप्रामाण्याद्विवक्षायां प्रामाण्येऽपि तस्या बाह्यार्थाविनाभावित्वायोगान्नापि ये यमर्थं विवक्षंति ते तथैव तं प्रतिपादयंत्यन्यविवक्षायामप्यन्यशब्दोच्चारणदर्शनाद्विवक्षायां तु बाह्यार्थप्रतिबद्धत्वानुपपत्तेरेकांततस्तत्र शब्दादपि प्रमाणादादिवाक्यरूपात्प्रयोजनविशेषोपायप्रतिपत्तिस्तदप्रतिपत्तौ च तेषां ततः प्रवृत्तौ प्रेक्षावत्पूर्वकारितान्यावृत्तिप्रसंगात्प्रयोजनविशेषोपायसंशयोत्पादकत्वेन प्रत्यंगत्वादादिवाक्यस्य सार्थकत्वं तथाह्यर्थसंशयादपि प्रवृत्तिरुपलभ्यते यथा कृषीवलादीनां कृष्याद्याधनाधिगतशस्यावाप्तिफलतामथ बीजादिविवेकेनावधृतबीजादिभावतया निश्चितोपायास्तदुपाये शस्यावाप्त्यनिश्चयेऽपि तत्र तेषां प्रवृत्तिर्युक्ता न पुनः शास्त्रश्रवणादावुपेयप्रयोजनविशेषानिश्चयवत्तदुपायाभिमतादिवाक्यस्यप्रत्याद्यापायनिश्चयस्याप्यसंभवादयुक्तमेतद्यतो यथा शस्यसंपत्त्यादौ फले कृषीवलादेः संदेहः तथा तदुपायाभिमतबीजादावप्यानिर्व्वर्त्तितकार्यस्य कारणस्य तथाभावनिश्चयायोगात्तत्र यत्कृष्यादिकं संशय्यमानोपायभावं प्रवृत्तिकारणं तथा शास्त्रमप्यादिवाक्यादनिश्चितोपायभाव किं न प्रतिपत्तिकारणमभ्युपगम्यत इति चेद्–

सदेतत्।आदिवाक्योपन्यासः शास्त्रप्रयोजनविषयसंशयप्रयो-
जनविषयसंशयोत्पादनार्थं संशयोऽपि च निश्चयविरुद्धो-
ऽनुत्पत्तौ च निश्चये तत्राप्रतिबद्धप्रवृत्तिहेतुतया प्रादुर्भावः
केन वार्येत आदिवाक्योपन्यासमंतरेणाप्यथाश्रुतप्रयोजन-
वाक्यानां प्रयोजनसामान्ये तत्सत्त्वे नराणां संशयो जायते।
किमिदं चिकित्साशास्त्रवत्सप्रयोजनमुत काकदंतपरीक्षा
वन्निष्प्रयोजनं ततश्च संशयादनुपन्यस्ते प्रयोजनवाक्ये
प्रयोजनसामान्यार्थिनः प्रवर्त्ततां प्रयोजनविशेषे तु कथम-
श्रुतप्रयोजनवाक्यानां संशयोत्पत्तिः प्रायेण च प्रयोजनवि-
शेषविषयस्यैव संशयस्य प्रवृत्तिकारणत्वात् । तदुत्पादना-
यादिवाक्यमुपादेयं अतश्च प्रयोजनसामान्यविशेषेषु संश-
याना: किमिदं सप्रयोजनमुत निष्प्रयोजनं सप्रयोजनत्वेऽपि
किमभिलषितेनैव प्रयोजनेन तद्वदिति ।पक्षपरामर्शं कुर्वा-
णाः प्रवर्त्तंते असदेतत् । कुत्रचिच्छास्त्रादनुभूतप्रयोजन-
विशेषं श्रोतारं प्रति प्रयोजनवाक्यस्यानुपयोगात् । स हि
किंचिच्छास्त्रमुपलभ्य प्रागनुभूतप्रयोजनविशेषेण शास्त्रेणा-
स्य वाक्यात्मकत्वेन साधर्म्यमवधार्येदमपि निष्प्रयोजन-
मुतानभिमतप्रयोजनवद्भुताभीष्टप्रयोजनवद्वा इत्याशंकमानः
प्रयोजनवाक्यमंतरेणापि प्रवर्त्तत एवाननुभूतप्रयोजनविशे-
षस्तु प्रयोजनवाक्यादपि नैव प्रवर्त्तते । तं प्रति तस्यापि
तदुत्पादकत्त्वायोगान्नहि प्रागननुभूतशास्त्रप्रयोजनप्रतिपाद-
कम् वाक्यमेतदर्थमित्यपि प्रतिपत्तुं समर्थोऽपरयत्नमंतरेण
नाप्यनुभूतविस्मृतप्रयोजनविशेषः प्रयोजनवाक्यात्संस्मृ-
त्य तद्विशेषं संशयो नः प्रवर्त्तते । तद्रहितशास्त्रादपि तद्वि-
शेषे स्मृतिसंभवान्नियमेन तु नो ताभ्यामपि तदनुस्मरणं
भवति तथापि प्रयोजनवाक्यस्य ततः स्मृतिहेतुत उपन्या-
सेऽन्यस्यापि तद्धेतोः किं नोपन्यासः सामान्यविशेषयोश्च
दर्शनादर्शनाभ्यां विशेषस्मरणसहकारिभ्यां संशयो न च
प्रयोजनवाक्यं प्रयोजनविशेषस्य भावाभावयोः सामान्यमथ
विवक्षापरतंत्रत्वात्स्वार्थं तथाभावापारेऽपि प्रयोगसंभवात्सा-
मान्यमेव वाक्यशास्त्रमपि तर्हि शास्त्रांतरसादृश्यात्प्रयोज-
नानिर्वृत्त्युपायत्वानुपायत्वयोःसामान्यमन्यतरनिश्चयनिमित्ता-
भावात्ततः संशयानः प्रवर्त्ततां किमकिंचित्करप्रयोजनवा-
क्येन नच सामान्यविशेषस्य च दर्शनादर्शनाभ्यामेव यथो-
क्ताभ्यां संशयः किं तु साधकबाधकप्रमाणावृत्तावपि सा च
प्रयोजनवाक्योपन्यासयोरपि संभवत्येव मा भूत्संशयोत्पादने
वाक्यस्य शास्त्रश्रवणादिप्रवृत्तौ सामर्थ्यं किं तु प्रकरणारंभ-
प्रतिषेधाय नारब्धव्यमिदं प्रकरणमप्रयोजनत्वात् काकदंत-
परीक्षावदिति व्यापकानुपलब्धेरसिद्धतोद्भावनायतदुपन्यास
इति चेत् एतदप्यसद्यतः शास्त्रप्रयोजनं वाक्येनाप्रदर्शयता
तदसिद्धिरुद्भावयितुमशक्या वाक्याद्यस्य प्रमाणतया
प्रयोजनविशेषसद्भावप्रकाशनसामर्थ्याभावात् । न च सप्र-
योजनत्वेतरयोः परस्परपरिहारस्थितयोः कुतश्चित्प्रमाणादे-
काभावप्रतिपत्तावितराभावप्रतिपत्तिरतिप्रसंगात् येन वा-
क्यमात्रस्योपक्षेपेण हेतोरसिद्धिः स्यात् । नापि कुतश्चित्प्र-
योजनविशेषमुपलभ्यमानेन स्वयमुपलब्धप्रयोजनविशेषोप-
लंभोपायमप्रदर्श्यवाक्यार्थोसिद्धतोद्भावना वाक्यस्याप्रमाणस्य
हेतुप्रतिपक्षभूतार्थोपस्थानाशक्तस्योपन्यासमात्रेणासिद्धेर-
योगात् । नाप्यनिबंधनाय प्रतिपत्तिरतिप्रसंगात् । अथ यद्यर्थं
प्रमाणत्वाद्विपरीतार्थोपस्थापनमुखेनासिद्धतामिदं नोद्भा-
वयति । तथापि शास्त्रस्य निष्प्रयोजनता संदिग्धतः संदिग्ध-
निष्प्रयोजनत्वस्य शास्त्रस्य प्रयोजनाभावं निश्चितं प्रेक्षाव-
दारंभप्रतिषेधहेतुं प्रयुंजानोऽनेन वाक्येन प्रतिक्षेप्तुमिष्टः
न पुनः प्रयोजनविषयनिश्चय एवोत्पादयितुमिष्टः तर्हि प्रति-
पक्षोपक्षेपेणैव साधनधर्म्माणामसिद्धिरपि तु स्वग्राहिज्ञानवि-
कलतया संदिग्धधर्म्मिसंबंधत्वमप्यसिद्धत्त्वमेव तस्मात्संदि-
ग्धसिद्धतोद्भावनाय वाक्यप्रयोग इति तदप्यनुपपन्नं । यथाहि
सप्रयोजनत्वे संदेहोत्पादने वाक्यस्यानुपयोगित्वं शास्त्रमात्रा-
दपि भावात् । तथा निष्प्रयोजनत्वेऽप्येवं ह्यनेन वाक्येन हेतो-
रसिद्धतोद्भाविता भवति यदि तत्सत्वासंदेहनिबंधनानि
कानि कारणान्यपि तदेवं प्रकाशितानि भवंति न च वि-
पर्यस्तपुरुषसंदेहोत्पादने तद्वाक्यं प्रभवति अदर्शनात् ॥
नच प्रस्तुतशास्त्रस्य प्रयोजनं शास्त्रांतरेण कथंचित्सा-
म्यात्साधकप्रमाणाप्रवृत्तितश्चान्यानि संदेहकारणानि भवंति
वाक्यमप्येतावन्मात्रप्रकाशनपरं हेतोः संदिग्धासिद्धतामुद्भा-
वये तच्च तथाप्रकाशनमनुपन्यस्तेऽपि वाक्ये शास्त्रमात्रादपि
दर्शनात् प्रमाणद्वयावृत्तेश्च भवतीति कस्तस्योपयोगः । अनु-
पन्यस्ते कथं तदिति चेत् उपन्यस्तेऽपि कथं नहि तदुपन्या-
साऽनुपन्यासत्वस्थयोः संदिग्धत्त्वात्प्रस्तुत्कथंचन विशेषं
पश्यामः। असिद्धतोद्भावनमनेन न्यायेन रुचामवासं गतमिति
चेन्नैतत् नह्यनेन प्रकारेणासिद्धतोद्भावनमेव प्रतिक्षिप्यते किं-
तु प्रमाणरहिताद्वाङ्मात्रादसिद्धता नोद्भावयितुं शक्येति प्रद-
र्श्यते । तत्र प्रयोजनवाक्यं हेतुसिद्धतोद्भावनार्थमपि युक्तं ।
नच परोपन्यस्ते साधने प्रयोजनवाक्येनासिद्धतामुद्भाव्य
कथमसिद्धिः साधनस्येति प्रत्यवस्थानवंतं शास्त्रपरिसमाप्तेः
प्रयोजनमवगमयन् शास्त्रं श्रावयति । ततः समधिगते प्रयो-
जने तदुपन्यस्तस्य साधनसिद्धिरिति वक्तुं शक्यं शास्त्रश्र-
वणतः प्रयोजनावगमे शास्त्रस्यादौ तद्वाक्योपन्यासस्य वैय-
र्थ्यप्रसक्तेः । अत एव शास्त्रार्थप्रतिज्ञाप्रतिपादनपरः आदि-
वाक्योपन्यास इत्याद्यपि प्रतिक्षिप्तम् अप्रमाणं तदादिवाक्या-
त्तदसिद्धेः । तथा संबंद्धाभिधेयप्रत्यायनपराण्यपि वाक्या-
नि शास्त्रादौ वाङ्मात्रेण निश्चयायोगान्निष्प्रयोजनानि प्र-
तिक्षिप्तान्येवोक्तन्यायस्य समानत्वात् ।

तदयुक्तं समयेत्याद्यभिधेयप्रयोजनप्रतिपादकं गाथासूत्रमत्र
प्रतिविधीयते। यदुक्तं न प्रत्यक्षमनुमानं वा शब्दस्तत्र सिद्ध-
साध्यताप्रत्यक्षानुमानलक्षणयोगात्तत्र यच्च नापि शब्दः प्रमा-
णं बहिरर्थे तस्य प्रतिबंधवैकल्येन विवक्षायामप्रतिबंधेऽपि
यथाविवक्षामर्थासंभवात् तदप्यसारं बाह्यार्थेन शब्दप्रति-
बंधस्य प्रसाधयिष्यमाणत्वात्तत्रैव च प्रतिपत्तिप्रवृत्त्यादिव्य-
वहारस्योपलभ्यमानत्वाद्बाह्यार्थ एव शब्दस्य प्रामाण्यमभ्यु-
पगंतव्यम् । प्रत्यक्षवच्च चार्थव्यभिचारित्वप्रामाण्यनिश्चयवतां
ततः प्रवर्त्तमानानां प्रेक्षापूर्वकारिता क्षतिर्न वा नाप्तप्रणीतसरि-
त्तटपर्यस्तगुहशक्यपटुवाक्यविशिष्टतानवगमान्नातः प्रवृत्तिः
प्रत्यक्षाभासात्प्रत्यक्षस्येवानाप्तप्रणीतवाक्यादस्य विशिष्ट-
तावसेया यस्य तु न तद्विशिष्टतावसेया नासावतः प्रवर्त्तते
अनवधृतहेत्वाभासविवेकाद्धेतोरिवानुमेयार्थक्रियार्थी न चा-
प्तानां परहितप्रतिबद्धप्रयासानां प्रमाणभूतत्वात्स्ववाङ्मात्रेण
प्रवर्त्तयितुं प्रभवता प्रयोजनवाक्योपन्यासवैयर्थ्यं सुनिश्चिता-
प्तप्रणीतवाक्यादपि प्रतिनिधनप्रयोजनार्थिनां तदुपायानि-
श्चये तत्र प्रवृत्त्ययोगान्नच प्रयोजनविशेषप्रतिपादकवाक्यम-

न्तरेणाप्तप्रणीतशास्त्रस्यापि तद्विशेषप्रतिपादकत्वनिश्चयो येन त एव तदर्थिनां तत्र प्रवृत्तिः स्यात्तदनभिमतप्रयोजनप्रतिपादकानामपि तेषां संभवादतो यत्र खल्वाप्तैरिदं कर्त्तव्यमिति पुरुषाः प्रतीताः तदाप्तभावान्नियुज्यंते तत्रावरिततत्प्रेरणा तथाभावविषयविचारास्तदभिहितं वाक्यमेव बहु मन्यमाना अनादृतप्रयोजनपरिपृश्नाः प्रवर्त्तंते विनिश्चिततदाप्तभावानां प्रत्यवस्थानासंभवादिति निरस्तम् ॥

आप्तप्रवर्त्तितप्रतिनियतप्रयोजनार्थिजनप्रेरणावाक्यस्यैव प्रयोजनवाक्यत्वनिश्चयादन्यथाभिमतफलार्थिजनप्रेरकवाक्यस्याप्तप्रयुक्तत्वमेवानिश्चितं स्यादनभिमतार्थप्रेरकस्यावगताप्तवाक्यत्वे चातिप्रसंगो न चाप्तवाक्यादपि प्रतिनियतप्रयोजनार्थिनस्तदवगमे तत्र प्रवर्त्तितमुत्सहंतेऽतिप्रसंगादेवेति सुप्रसिद्धं । अर्थसंशयोत्पादकत्वेन चास्य प्रवर्त्तकत्वप्रतिक्षेपे सिद्धसाधनं व्यापकानुपलब्धस्वसिद्धतोद्भावनमादिवाक्यनिश्चितबाह्यार्थप्रामाण्याद्युक्तमेव यथा चात्र तस्याप्रामाण्यं तथा प्रतिपादयिष्यामोऽत एवाप्ताभिहितत्वासिद्धेरविसंवादकत्वायोगादप्रमाणत्वाभावनिश्चयनिमित्ताभावादप्रवर्त्तकत्वं प्रयोजनवाक्यस्य प्रेक्षापूर्वकारिणः प्रतीतिर्यदुच्यते तदपि प्रतिव्यूढं द्रष्टव्यम् ॥ सम्म० ॥

(११) ननु च समयपरमार्थविस्तरत इत्यमेनागमस्याकल्पितो बाह्योऽर्थः प्रतिपाद्यत्वेन शब्दार्थयोश्च वास्तवः संबंधो निर्दिष्टः द्वितयमप्येतदयुक्तं प्रमाणबाधितत्वादिति बौद्धाः। तथाहि- शब्दानां न परमार्थतः किंचिद्वाच्यं वस्तुस्वरूपमस्ति । सर्व एव हि शाब्दप्रत्ययो भ्रांतो भिन्नेष्वेव भेदाकाराध्यवसायेन प्रवृत्तेः यत्र तु पारंपर्येण वस्तुप्रतिबंधस्तत्रार्थसंवादो भ्रांतत्वेऽपि तत्र यत्तदारोपितं विकल्पबुद्ध्यार्थे भिन्नं रूपं तदन्यव्यावृत्तपदार्थानुभवबलायातत्वात्स्वयं चान्यव्यावृत्ततया प्रतिभासनाद्भाने स्वान्यव्यावृत्त्यार्थेन सहैक्येनाध्यवसितत्वात् अन्यापोढपदार्थाधिगतिफलत्वाच्चापोह इत्युच्यते। अतोऽपोहः शब्दार्थ इति प्रसिद्धं । अत्र विधिवादिनः प्रेरयंति यदि भवतां द्रव्यगुणकर्मसामान्यादिलक्षणानि विशेषणानि शब्दप्रवृत्तिनिमित्तानि परमार्थतो न संति कथं लोके दंडीत्याद्यभिधानप्रत्ययाः प्रवृत्तास्तद्द्रव्याद्युपाधिनिमित्तास्तथा हि-दंडी विषाणीत्यादिवाध्वना लोके द्रव्योपाधिकौ प्रसिद्धौ शुक्लः कृष्ण इति गुणोपाधिकौ चलति भ्रमतीति कर्म्मनिमित्तौ अस्ति विद्यत इति सत्तानिमित्तकौ गौरश्व इति सामान्यविशेषोपाधी इह तंतुषु पट इति समवायनिमित्तः ॥

तत्रैषां द्रव्यादीनामभावे दंडीत्यादिप्रत्ययशब्दौ निर्विषयौ स्यातां न चानिमित्तावेतौ युक्तौ सर्वत्र सर्वदा तयोरविशेषेण वृत्तिप्रसंगात् । नचाविभागेन तयोः प्रवृत्तिरास्ति तस्मात्संति द्रव्यादयः पारमार्थिकाः प्रस्तुतप्रत्ययशब्दविषयाः प्रमाणयंति चात्रापेक्षापरंपरासंकीर्णप्रवृत्तयस्ते सनिमित्ता यथा श्रोत्रादिप्रत्ययाःअसंकीर्णप्रवृत्तयश्च दंडीत्यादिशब्दप्रत्यया इति स्वभावहेतुः अनिमित्तत्वे सर्वत्राविशेषेण प्रवृत्तिप्रसंगो बाधकं प्रमाणं । अत्र यदि पारमार्थिकबाह्यविषयभूतेन निमित्तेन सन्निमित्तेन सन्नित्यत्वमिष्यते तदा सिद्धिसाध्यता तथा ह्यस्माभिरपीष्यते एवैषामंतर्जल्पवासनाप्रबोधो निमित्तं नतु विषयभूतं भ्रांतत्वेन सर्वस्य शाब्दप्रत्ययस्य निर्विषयत्वात् तदुक्तं । "येन येन हि नाम्ना चोपायो धर्म्मोऽभिलप्यते। न स संविद्यते तत्र धर्म्माणां सा हि धर्मतेति" नच शाब्दप्रत्ययस्य भ्रांतत्वाविषयत्वयोः किं प्रमाणमिति वक्तव्यं भिन्ने एव भेदाध्यवसायेन प्रवर्त्तमानस्य प्रत्ययस्य भ्रांतत्वात्तथाहि यत्तस्मिंस्तदिति प्रत्ययः स भ्रांतो यथा मरीचिकायां जलप्रत्ययः तथा चायं भिन्नेष्वर्थेष्वभेदाद्ध्यवसायी शाब्दः प्रत्यय इति स्वभावहेतुः न च सामान्यं वस्तुभूतं ग्राह्यमस्ति येनासिद्धतास्य हेतुः स्यात् । तस्य निषिद्धत्वात् भवतु वा सामान्यं तथापि तस्य भेदेऽन्योऽर्थांतरत्वेष्वभेदाध्यवसायो भ्रांतिरेव न ह्यन्येनान्ये समानाःधीयमानं विकल्पनिर्मित्तत्वेनास्वलक्षमेवेति न स्वलक्षणत्वस्य समयः तस्मादव्यपदेश्यं स्वलक्षणमिति सिद्धमितश्च स्वलक्षणव्यपदेश्यं शब्दबुद्धौ तस्याः प्रतिभासनाद्यथाहि उष्णाद्यर्थविषयेंद्रियबुद्धिः स्फुटप्रतिभासानुभूयते नचोष्णादिशब्दप्रभा नह्युपहतनयनादयो मातुलिंगादिशब्दश्रवणात्तद्रूपाद्यनुभाविनो भवंति यथानुपहतनयनादयः अक्षबुद्ध्यानुभवंतः । यथोक्तं "अन्यथैवाग्निसंबाधाद्दाहं दग्धोऽभिमन्यते । अन्यथा दाहशब्देन दाहार्थः संप्रतीयते" न च यो यत्र न प्रतिभाति स तद्विषयोऽभ्युपगंतुं युक्तोऽतिप्रसंगात् । प्रयोगो यो यत् कृतप्रत्यये न प्रतिभासते न स तस्यार्थो यथा रूपशब्दजनिते प्रत्यये रसो न प्रतिभासते प्रतिभासते च शाब्दप्रत्यये स्वलक्षणमिति व्यापकानुपलब्धिः । अत्र चाति प्रसंगो बाधकं प्रमाणं तथाहि-शाब्दस्य तद्विषयं ज्ञानं यदाकारशून्यं तत्तद्विषयं युक्तमतिप्रसंगात् । न चैकस्य वस्तुनो रूपद्वयमस्ति स्पष्टमस्पष्टं येनास्पष्टं वस्तुगतमेव रूपं शब्दैरभिधीयते एकस्य द्वित्वविरोधात् । भिन्नसमयस्थायिनां च परस्परविरुद्धस्वभावप्रतिपादनात् न शब्दगोचरः स्वलक्षणम् ॥ सम्म० ॥

(१२)शब्दार्थविचारो विशेषावश्यके यथा।अत्थो किं हुज्जई घिणाणं वत्थुभेओवा । जाई दव्वं किरिया गुणोहवा संसउतवा जुत्तो "अयमेवित्ति न वा यं न वत्थुधम्मो जओ जुत्तो सव्वं चिय सव्वमयं सपरप्पजायजउनिपयं" सव्वमसव्वमयं पिय विचित्तरूवं विवक्खा उ। सामाणविसेसमओ तेण पयत्थो विवक्खया जुत्तो वत्थुस्स विस्सरूवो पक्खाया वेक्खया सव्वो" ॥ विशे० ॥

अर्थः श्रुतिः शब्दो भवेत् यथा भेरिपटहढक्कादीनां शब्दस्य शब्द एवार्थः अथवा यद्घटादिशब्दे समुच्चारिते तदभिधेयार्थविषयं विज्ञानभानं दृश्यते तत्तेषामर्थः किं वा घटशब्दे समुत्कीर्त्तिते पृथुबुध्नोदराद्याकारवान् घटलक्षणोऽर्थोऽनेनोक्तो नतु पटादिरित्येवं यो वस्तुभेदः प्रतीयते स एषामर्थः यदि वा किं जातिरमीषामर्थो यथा गोशब्दे समुच्चारिते गोजातिरवसीयते यदि वा किं द्रव्यमेषामर्थो यथा दंडीत्यादिषु दंडादिमद् द्रव्यं किं धावतीत्यादीनामिव धावनादिक्रिया अमीषामर्थः । अथवा किं शुक्लादीनामिव शुक्लादिगुण एतेषामर्थ इति । अयं च संशयस्तवायुक्तो यस्मादयमेष नैव वाऽयमित्येवं कस्यापि वस्तुनो धर्म्मोऽवधारयितुं न युक्तः शब्दोऽपि वस्तुविशेष एव तत एवंभूतस्यैवार्थस्यायमभिधायको नैव वा इत्थंभूतस्यार्थस्यायं प्रतिपादक इत्येषमेत द्धर्म्मस्याप्यवधारणमयुक्तमेव कुत इत्याह(सव्वंचियेत्यादि) यस्मात्सर्वमपि वाच्यबाधकादिकं वस्तु नियतं निश्चितं स्वपरपर्यायैः सर्वात्मकमेव सामान्यविवक्षयेत्यर्थः । तथा सर्वमप्येतदस्ति विचित्ररूपं सर्वतो व्यावृत्तं कयेत्याह

विवक्षया केवलस्वपर्यायापेक्षयेत्यर्थः विशेषविषयेति तात्पर्यार्थः तस्मात्सर्वेषामपि पदानां विवक्षावशतः सामान्यमयो विशेषमयश्च पदार्थो युक्तः न पुनरेकांतेनेत्थंभूत एवेति कुत इत्याह ( वत्थुस्सेत्यादि ) यस्मात्सर्वोऽपि वाच्यस्य वाचकस्य वा वस्तुनः स्वभावः पर्यायापेक्षया विश्वरूपो नानाविधो वर्त्तते ततश्च सामान्यविवक्षायां घटशब्दः सर्वात्मकत्वात्सर्वेषामपि द्रव्यगुणक्रियाद्यर्थानां वाचकः विशेषविवक्षायां तु प्रतिनियतरूपत्वात् य एवास्येह पृथुबुध्नोदराद्याकारवानर्थो वाच्यतया रूढस्तस्यैव वाचकः एवमन्योऽपि शब्दो विशेषविवक्षया यो यत्र देशादौ यस्यार्थस्य वाचकतया रूढः स तस्य वाचको द्रष्टव्यः सामान्यविवक्षया तु सर्वः सर्ववाचकः सर्वं सर्वस्य वाच्यमित्यनया दिशा सकलं स्वधिया भावनीयमिति ॥ विशे० ॥

( १३ ) तथा च स्याद्वादमञ्जर्याम् अथ स्वाभिमतसामान्यविशेषोभयात्मकवाच्यवाचकभावसमर्थनपुरस्सरं तीर्थांतरीयप्रकल्पित तदेकांतगोचरवाच्यवाचकभावनिरासद्वारेण तेषां प्रतिभा वैभवाभावमाह "अनेकमेकात्मकमेव वाच्यं द्वयात्मकं वाचकमप्यवश्यं अतोऽन्यथा वाचकवाच्यक्लृप्तावतावकानां प्रतिभाप्रमादः १४ व्याख्या वाच्यमभिधेयं चेतनमचेतनं च वस्तु एवकारस्याप्यर्थत्वात् सामान्यरूपतया एकात्मकमपि व्यक्तिभेदेनानेकं अनेकरूपं अथवा अनेकरूपमपि एकात्मकं अन्योन्यसंवलितत्वादित्थमपि व्याख्याने न दोषः । तथा वाचकमभिधायकं शब्दरूपं तदप्यवश्यं निश्चितं द्वयात्मकं सामान्यविशेषोभयात्मकत्वादेकानेकात्मकमित्यर्थः उभयत्र वाच्यलिंगत्वेऽप्यव्यक्तत्वान्नपुंसकत्वं अवश्यमिति पदं वाच्यवाचकयोरुभयोरप्यनेकात्मकत्वं निश्चिन्वत्तदेकांतव्यवच्छिनत्तिअत उपदर्शितप्रकारादन्यथासामान्यविशेषैकांतरूपेण प्रकारेण वाचकवाच्यक्लृप्तौ वाच्यवाचकभावकल्पनायां अतावकानामत्वदीयानामान्ययूथ्यानां प्रतिभाप्रमादः प्रज्ञास्खलितमित्यक्षरार्थः अत्र चाल्पस्वरत्वेन वाच्यपदस्य प्राग्निपाते प्राप्तेऽपि यदादौ वाचकग्रहणं तत्प्रायोऽर्थप्रतिपादनस्य शब्दाधीनत्वेन वाचकस्याऽभ्यर्हितत्वज्ञापनार्थं । तथा च शाब्दिकाः "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासत इति" भावार्थस्त्वेवं एके तीर्थिकाः सामान्यरूपमेव वाच्यतया शब्दार्थमभ्युपगच्छंति ते च द्रव्यास्तिकनयानुपातिनो मीमांसकभेदा अद्वैतवादिनः सांख्याश्च केचिच्च विशेषरूपमेव वाच्यं निब्रुवंति ते च पर्यायास्तिकनयानुसारिणः सौगताः अपरे च परस्परनिरपेक्षपदार्थपृथग्भूतसामान्यविशेषयुक्तं वस्तु वाच्यत्वेन निश्चिन्वते ते च नैगमनयानुरोधिनः काणादा आक्षपादाश्च ॥ स्या० ॥

एवं वाचकमपि शब्दाख्यं द्वयात्मकं सामान्यविशेषात्मकं सर्वशब्दव्यक्तिष्वनुयायिशब्दत्वमेकं शंखशार्ङ्गतीव्रमंदोदात्तानुदात्तस्वरितादिविशेषभेदादनेकं । शब्दस्य हि सामान्यविशेषात्मकत्वं पौद्गलिकत्वाद्व्यक्तमेव तथाहि । पौद्गलिकः शब्द इंद्रियार्थत्वाद्रूपादिवत् यच्चास्य पौद्गलिकत्वनिषेधाय स्पर्शशून्याश्रयत्वादतिनिविडप्रदेशे प्रवेशनिर्गमयोरप्रतिघातात्पूर्वं पश्चाच्चावयवानुपलब्धेः सूक्ष्ममूर्त्तद्रव्यांतराप्रेरकत्वाद्गगनगुणत्वाच्चेति पंच हेतवो योगैरुपन्यस्तास्ते हेत्वाभासास्तथाहि—

शब्दपर्यायस्याश्रयो भाषावर्गणा न पुनराकाशं तत्र च स्पर्शो निर्णीयत एव । यथा शब्दाश्रयः स्पर्शवाननुवातप्रतिवातयोर्विप्रकृष्टनिकटशरीरिणोपलभ्यमानानुपलभ्यमानेंद्रियार्थत्वात्तथाविधगंधाधारद्रव्यपरमाणुवत् इत्यसिद्धः प्रथमः । द्वितीयस्तु गंधद्रव्येण व्यभिचारादनैकांतिकःवर्त्तमानजात्यकस्तूरिकादिगंधद्रव्यं हि पिहितद्वारापवरकस्यांतर्विशति बहिश्च निर्याति नचापौद्गलिकं अथ तत्र सूक्ष्मरंध्रसंभवान्नातिनिविडत्वमतस्तत्र तत्प्रवेशनिष्कासौ कथमन्यथोद्घाटितद्वारावस्थायामिव न तदेकार्णवत्वं सर्वथा नीरंध्रे तु प्रदेशे न तयोः संभव इति चेत्तर्हि शब्देप्येतत्समानमित्यसिद्धो हेतुः । तृतीयस्तु तडिल्लतोल्कादिभिरनैकांतिकः । चतुर्थोऽपि तथैव गंधद्रव्यविशेषसूक्ष्मरजोधूमादिभिर्व्यभिचारान्नहि गंधद्रव्यादिकमपि नासायां निविशमानं तद्विवरद्वारदेशोद्भिन्नश्मश्रुप्रेरकं दृश्यते ।

पंचमः पुनरसिद्धः तथाहि न गगनगुणः शब्दोऽस्मदादिप्रत्यक्षत्वाद्रूपादिवदिति सिद्धः पौद्गलिकत्वात्सामान्यविशेषात्मकः शब्द इति। नच वाच्यं आत्मन्यपौद्गलिकेऽपि कथं सामान्यविशेषात्मकत्वं निर्विवादमनुभूयत इति यतः संसार्यात्मनः प्रतिप्रदेशमनंतानंतकर्मपरमाणुभिः सह वह्नितापितघनकुट्टितनिर्विभागपिंडीभूतसूचीकलापवल्लोलीभावमापन्नस्य कथंचित्पौद्गलिकत्वाभ्यनुज्ञानादिति । यद्यपि स्याद्वादवादिनां पौद्गलिकमपौद्गलिकं च सर्वं वस्तु सामान्यविशेषात्मकं तथाप्यपौद्गलिकेषु धर्माधर्माकाशकालेषु तदात्मकत्वमर्वाग्दृशां न तथा प्रतीतिविषयमायाति पौद्गलिकेषु पुनस्तत्साध्यमानं तेषां सुश्रद्धानमित्यप्रस्तुतमपि शब्दस्य पौद्गलिकत्वं समान्यविशेषात्मकत्वं साधनायोपन्यस्तमिति ।

अत्रापि नित्यशब्दवादिसंमतः शब्दैकत्वैकांतोऽनित्यशब्दवाद्यभिमतः शब्दानेकत्वैकांतश्च प्राग्दर्शितादिशा प्रतिक्षेप्यः अथवा वाच्यस्य घटादेरर्थस्य सामान्यविशेषात्मकत्वे तद्वाचकस्य ध्वनेरपि तत्त्वं शब्दार्थयोः कथंचित्तादात्म्याभ्युपगमात्।यथाहुर्भद्रबाहुपादाः"अभिहाणं अभिहेओ होइ भिन्नं अभिन्नं च खुर अग्गिमोयगुच्चारणंमि जम्हा उ वयणसवणाणं" "न विच्छेओ न विदाहो न पूरणं तेण भिन्नं तु।जम्हायमोयगुच्चारणंमि तत्थेव पच्चओ होइ"नयन्नत्थ तेण अभिन्नं तदत्थओ)एतेन "विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः कार्यकारणता तेषां नार्थं शब्दाः स्पृशंत्यपि" इति प्रत्युक्तं अर्थाभिधानप्रत्ययास्तुल्यनामधेया इति वचनात् शब्दस्य ह्येतदेव तत्वं यदभिधेयं याथात्म्येनासौ प्रतिपादयति स च तत्तथा प्रतिपादयन् वाच्यस्वरूपपरिणामपरिणत एव वक्तुं शक्तो नान्यथातिप्रसंगात् । घटाभिधानकाले पटाद्यभिधानस्यापि प्राप्तेरिति अथवा संम्यंतरेण सकलं काव्यमिदं व्याख्यायते । वाच्यं वस्तु घटादिकमेकात्मकमेवैकस्वरूपमपि सदनेकमनेकस्वरूपं। अयमर्थः प्रमाता तावत् प्रमेयस्वरूपं लक्षणेन निश्चिनोति तच्च सजातीयविजातीयव्यवच्छेदादात्मलाभं लभते यथा घटस्य सजातीया मृन्मयपदार्था विजातीयाश्च पटादयस्तेषां व्यवच्छेदस्तल्लक्षणं पृथुबुध्नोदराद्याकारः कंबुग्रीवो जलधारणाहरणादिसमर्थः पदार्थविशेषो घट इत्युच्यते तेषां चसजातीयविजातीयानां स्वरूपं तत्र बुद्ध्यारोप्य व्यवच्छिद्यते अन्यथा प्रतिनियततत्स्वरूपपरिच्छेदानुपपत्तेः सर्वभावानां हि भावाऽभावात्मकं स्वरूपं एकांतभावात्मकत्वे वस्तुनो वैरूप्यं

स्यादेकांताऽभावात्मकत्वे च निःस्वभावता स्यात् तस्मात्स्वरूपेण सत्त्वात्पररूपेण चाऽसत्त्वाद्भावाभावात्मकं वस्तु यदाह- "सर्वमस्ति स्वरूपेण पररूपेण नास्ति च। अन्यथा सर्वसत्त्वं स्यात् स्वरूपस्याप्यसंभवः" ॥ १ ॥ ततश्चैकस्मिन् घटे सर्वेषां घटव्यतिरिक्तपदार्थानामभावरूपेण वृत्तेरनेकात्मकत्वं घटस्य सूपपादकं एवं चैकस्मिन्नर्थे ज्ञाते सर्वेषामर्थानां ज्ञानं सर्वपदार्थपरिच्छेदमंतरेण तन्निषेधात्मन एकस्य वस्तुनो विविक्ततया परिच्छेदासंभवात् आगमोऽप्येवमेव। व्यवस्थितः "जे एगं जाणइ से सव्वं जाणइ जे सव्वं जाणइ से एगं जाणइ"तथा"एको भावः सर्वथा येन दृष्टः सर्वे भावाः सर्वथा तेन दृष्टाः। सर्वे भावाः सर्वथा येन दृष्टा एको-भावः सर्वथा तेन दृष्टः" ॥१॥ ये तु सौगताः परासत्वं नाङ्गीकुर्वते तेषां घटादेः सर्वात्मकत्वप्रसंगः तथाहि—यथा घटस्य स्वरूपादिना सत्त्वं तथा पररूपादिनापि स्यात्तथा च सति स्वरूपादिसत्त्ववत्पररूपादिसत्त्वप्रसक्तेः कथं न सर्वात्मकत्वं भवेत् परासत्त्वेन तु प्रतिनियतोऽसौ सिद्ध्यति ॥

अथ न नाम नास्ति परासत्त्वं किं तु स्वसत्त्वमेव तदितिचेदहो वैदग्धी न खलु यदेव सत्त्वं तदेवासत्त्वं भवितुमर्हति विधिप्रतिषेधरूपतया विरुद्धधर्माध्यासेनानयोरैक्यायोगात्। अथ युष्मत्पक्षेऽप्येवं विरोधस्तदवस्थ एवेति चेदहो वाचाटता देवानांप्रियस्य न हि वयं येनैव प्रकारेण सत्त्वं तेनैवासत्त्वं येनैवासत्त्वं तेनैव सत्त्वमभ्युपेमः किंतु स्वरूपद्रव्यक्षेत्रकालभावैः सत्त्वं पररूपद्रव्यक्षेत्रकालभावैस्त्वसत्त्वं तदा क्व विरोधावकाशः यौगास्तु प्रगल्भंते सर्वथा पृथग्भूतपरस्पराभावाभ्युपगममात्रेणैव पदार्थप्रतिनियमसिद्धेः किं तेषामसत्त्वात्मकत्वकल्पनयेति तदसत् यदाहि पटाद्यभावरूपो घटो न भवति तदा घटः पटादिरेव स्यात् यथा च घटाभावाद्भिन्नत्वाद् घटस्य घटरूपता तथा पटादेरपि स्याद् घटाभावाद्भिन्नत्वादेवेत्यलं विस्तरेण ॥

एवं वाचकमपि शब्दरूपं द्वयात्मकं एकात्मकमपि सदनेकमित्यर्थः । यथोक्तन्यायेन शब्दस्यापि भावात्मकत्वात् अथवा एकविषयस्यापि वाचकस्याऽनेकविषयत्वोपपत्तेः यथा किल घटशब्दः संकेतवशात्पृथुबुध्नोदराद्याकारवति पदार्थे प्रवर्त्तते वाचकतया तथा देशकालाद्यपेक्षया तद्वशादेव पदार्थांतरेष्वपि तथा च वर्त्तमानः केन वार्यते भवंति हि वक्तारो योगिनः शरीरं प्रति घट इति संकेतानां पुरुषेच्छाधीनतयाऽनियतत्वात्। यथा चौरशब्दोऽन्यत्र तस्करे रूढोऽपि दाक्षिणात्यानामोदने प्रसिद्धो यथा च कुमारशब्दः पूर्वदेशे आश्विनमासे रूढः एवं कर्कटीशब्दादयोऽपि तत्तद्देशापेक्षया योन्यादिवाचका ज्ञेयाः कालापेक्षया पुनर्यथा जैनानां प्रायश्चित्तविधौ धृतिश्रद्धासंहननादिमति प्राचीनकाले षड्गुरुशब्देन शतमशीत्यधिकमुपवासानामुच्यते स्म। सांप्रतकाले तु तद्विपरीते तेनैव षड्गुरुशब्देनोपवासशतत्रयमेव संकेत्यते जीतकल्पव्यवहारानुसारात् ॥

शास्त्रापेक्षया तु यथा पुराणेषु द्वादशीशब्देनैकादशी त्रिपुरार्णवे च अलिशब्देन मदिराभिषक्तंत्रे च मैथुनशब्देन मधुसर्पिषोर्ग्रहणमित्यादि। न चैवं संकेतस्यैवार्थ प्रत्यायने प्राधान्यं स्वाभाविकसामर्थ्यसाचिव्यादेव तत्र तस्य प्रवृत्तेः सर्वशब्दानां सर्वार्थप्रत्यायनशक्तियुक्तत्वा-

द्यत्र च देशकालादौ यदर्थप्रतिपादनशक्तिसहकारिसंकेतस्तत्र तमर्थं प्रतिपादयति। तथा च निर्जितदुर्जयपरप्रवादाः श्रीदेवसूरिपादाः स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबंधनं शब्दः। अत्र शक्तिपदार्थसमर्थनं ग्रंथांतरादवसेयं अतोऽन्यथेत्यादि उत्तरार्द्धं पूर्ववत् प्रतिभाप्रमादस्तु तेषां सदसदेकांते वाच्यस्य प्रतिनियतार्थविषयत्वे च वाचकस्योक्तयुक्त्या दोषसद्भावाद्व्यहारानुपपत्तेः। तदयं समुदायार्थः सामान्यविशेषात्मकस्य च वस्तुनः सामान्यविशेषात्मको भावाभावात्मकश्च ध्वनिर्वाचक इत्यन्यथा प्रकारांतरैः पुनर्वाच्यवाचकभावव्यवस्थामातिष्ठमानानामन्धवादिनां प्रतिभैव प्रमाद्यति न तु तद्भणितयो युक्तिस्पर्शमात्रमपि सहंते। कानि तानि वाच्यवाचकभावप्रकारांतराणि परवादिनामिति चेदेते ब्रूमः। अपोह एव शब्दर्थ इत्येके "अपोहशब्दलिंगाभ्यां न वस्तुविधिनोच्यते" इति वचनात्। अपरे च सामान्यमात्रमेव शब्दानां गोचरस्तस्य क्वचित् प्रतिपन्नस्यैकरूपतया सर्वत्र संकेतविषयतोपपत्तेर्न पुनर्विशेषास्तेषामानंत्यतः कार्त्स्न्येनोपलब्धुमशक्यतया तद्विषयतानुपपत्तेः विधिवादिनस्तु विधिरेव वाक्यार्थोऽप्रवृत्तप्रवर्त्तनस्वभावत्वात्तस्येत्याचक्षते विधिरपि तत्तद्वादिविप्रतिपत्त्याऽनेकप्रकारस्तथाहि—वाक्यरूपः शब्द एव प्रवर्त्तकत्वाद्विधिरित्येके तद्व्यापारो भावनापर्यायो विधिरित्यन्ये नियोग इत्यपरे प्रैषादय इत्येके तिरस्कृततदुपाधिप्रवर्त्तनामात्रमित्यन्ये एवं फलतदभिलाषकर्मादयोऽपि वाच्याः एतेषां निराकरणं सपूर्वोत्तरपक्षं न्यायकुमुदचन्द्रादवसेयमिति काव्यार्थः ॥ स्या० ॥

( १४ ) ( शब्दस्य वाचकताविचारः सम्मतितर्के यथा ) अत्र वैयाकरणाःप्राहुः यस्मादुच्चरितात् ककुदादिमदर्थप्रतिपत्तिः स शब्दः नन्वत्र किं गकारौकारविसर्जनीयाः ककुदादिमदर्थप्रतिपादकत्वेन शब्दव्यपदेशं लभंते। आहोस्वित्तद्व्यतिरिक्तः पदस्फोटादिस्तत्र न तावद्वर्णा अर्थप्रत्यायका यतस्ते किं समुदिता अर्थप्रतिपादका उत व्यस्ता-यदि व्यस्तास्तदैकेनैव वर्णेन गवाद्यर्थप्रतिपत्तिरुत्पादितेति द्वितीयादिवर्णोच्चारणमनर्थकं भवेत्। अथ समुदिता अर्थप्रत्यायकास्तदपि न संगतं। क्रमोत्पन्नानामनंतरविशिष्टत्वेन समुदायासंभवान्न च युगपदुत्पन्नानां समुदायप्रकल्पना। एकपुरुषापेक्षया युगपदुत्पत्त्यसंभवात्। प्रतिनियतस्थानकरणप्रयत्नप्रभवत्वात्तेषां न च भिन्नपुरुषप्रयुक्तगकारौकारविसर्जनीयानां समुदायार्थप्रतिपादकत्वं दृष्टं प्रतिनियतक्रमवर्णप्रतिपत्त्युत्तरकालभावित्वेन शाब्धाः प्रतिपत्तेः संवेदनात् न चान्तो वर्णः पूर्ववर्णानुगृहीतो वर्णानां क्रमोत्पादे सत्यर्थप्रत्यायकः। पूर्ववर्णानामंत्यवर्णं प्रत्यनुग्राहकत्वायोगात्। यतो नांत्यवर्णं प्रति जनकत्वं पूर्ववर्णानां तदुपकारित्वं वर्णाद्वर्णोत्पत्तेरभावात्। प्रतिनियतस्थानकारणादि संपाद्यत्वाद्वर्णानां। वर्णाभावेऽपि च वर्णोत्पत्तिदर्शनान्न वर्णजन्यत्वं। अथार्थज्ञानोत्पत्तौ सहकारित्वं पूर्ववर्णानामंत्यवर्णप्रत्युपकारत्वं। एतदप्ययुक्तमविद्यमानानां सहकारित्वानुपपत्तेः अत एव प्राक्तन वर्णवित्तीनामपि सहकारित्वमयुक्तं न च पूर्ववर्णसंवेदनप्रभवसंस्काराः तत्सहायतां प्रतिपद्यंते। यतः संस्काराः स्वोत्पादकविषयस्मृतिहेतुहेतवो नार्था-

तरज्ञानमुत्पादयितुं समर्थाः । नहि पटज्ञानप्रभवः संस्कारः अपस्मृतिं विदधत् दृष्टः ॥

न च तत्संस्कारप्रभवाः स्मृतयः सहायतां प्रतिपद्यंते । युगपद्विकल्पानुपपत्तेः नहि स्मृतीनां युगपदुत्पत्तिः अयुगपदुत्पन्नानां वाऽवस्थितिरस्ति । न च समस्तसंस्कारप्रभवैका स्मृतिस्तत्सहकारिणी परस्परविरुद्धानेकपदार्थानुभवप्रभूतसंस्काराणामप्येकस्मृतिजनकत्वाप्रसक्तेः । न ह्यनेक वर्णसंस्कारजन्यत्वं स्मृतेरसंभवतीति कुतोऽस्या अंत्यवर्णसहकारित्वं । न चान्यविषया स्मृतिरन्यत्र प्रतिपत्तिं जनयति स्वशिरश्छेदक्रियाजनकत्वप्रसक्तेः । नचान्यवर्णनिरपेक्ष एव गौरित्यत्रांत्यो वर्णः ककुदादिमदर्थप्रत्यायकः पूर्ववर्णोच्चारणवैयर्थ्यप्रसक्तेः । घटशब्दांतव्यवस्थितस्यापि तत्प्रत्यायकत्वप्रसक्तेश्च तस्मान्न वर्णाः समस्ता व्यस्ता वा अर्थाभिधायकाः संभवंति । अस्ति च गवादिशब्देभ्यः ककुदादिमदर्थप्रतिपत्तिरिति तदन्यथानुपपत्त्या वर्णव्यतिरिक्तोऽर्थप्रतिपत्तिहेतुः स्फोटाख्यः शब्दो ज्ञायते श्रोत्रविज्ञाने च वर्णव्यतिरिक्तः स्फोटात्मा निरवयवोऽक्रमः स्फुटमवभातीति तस्याध्यक्षतोऽपि सिद्धिः तथाहि श्रवणव्यापारानन्तरभाविन्यनित्यार्थावभासा संविदुत्पद्यते न चासौ वर्णविषया वर्णानां परस्परव्यावृत्तरूपत्वादेकावभासजनकत्वविरोधात् तदजनकस्यातिप्रसंगतस्तद्विषयत्वादुपपत्तेः । न चेयं सामान्यविषया वर्णत्वव्यतिरेकेणापरसामान्यस्य गकारौकारविसर्जनीयेष्वसंभवाद्वर्णत्वस्य च प्रतिनियतार्थप्रत्यायकत्वायोगात् । न चेयं भ्रांताऽ बाध्यमानत्वान्नचाबाध्यमानप्रत्ययगोचरस्यापि स्फोटाख्यस्य वस्तुतोऽसत्वम् । अवयविद्रव्यस्याप्यप्रसक्तेः । एवमप्यवयव्यभ्युपगमे स्फोटाभ्युपगमोऽवश्यंभावी तत्तुल्ययोगक्षेमत्वात् । स च वर्णेभ्यो व्यतिरिक्तो नित्यः अनित्यत्वे संकेतकालानुभूतस्य तदैव ध्वस्तत्वात् कालांतरे देशांतरे च गोशब्दश्रवणात् ककुदादिमदर्थप्रतिपत्तिर्न स्यादसंकेतिताच्छब्दादर्थप्रतिपत्तेरसंभवात् । संभवे वा द्वीपांतरादागतस्य गोशब्दाद्र-वार्थप्रतिपत्तिर्भवेत् । संकेतकरणवैयर्थ्यं च प्रसज्येत तस्मान्नित्यः स्फोटाख्यः शब्दो व्यापकश्च सर्वत्रैकरूपतया प्रतिपत्तेः ॥

असदेतदिति वैशेषिकास्ते ह्याहुः—एकदा प्रादुर्भूता वर्णाः स्वार्थप्रतिपादका न भवंतीत्यत्राविप्रतिपत्तिरेव क्रमप्रादुर्भूतानां न समुदाय इत्यत्राप्यविप्रतिपत्तिरेवार्थप्रतिपत्तिस्तूपलभ्यमानात् पूर्ववर्णध्वंसविशिष्टादंत्यवर्णान्न चाभावस्य सहकारित्वं विरुद्धं वृत्तफलसंयोगाभावस्यैवाप्रतिपत्तिगुरुत्वफलप्रपातक्रियाजनने दृष्टं चोत्तरसंयोगं विदधत् प्राक्तनसंयोगाभावविशिष्टं कर्म, परमाण्वग्निसंयोगश्च परमाणौ तद्गतपूर्वरूपप्रध्वंसविशिष्टो रक्ततामुत्पादयन्, यद्वोपलभ्यमानोऽत्यो वर्णः पूर्ववर्णविज्ञानाभावविशिष्टः पदरूपतामासादयत् पदार्थे प्रतिपत्तिं जनयति । प्राक्तनवर्णसंवित्प्रभवसंस्कारसव्यपेक्षो वा । न च संस्कारस्य विषयान्तरे कथंचिद् ज्ञानजनकत्वमिति प्रेर्य्यम् । तद्भावभावितत्तयार्थप्रतिपत्तेरुपलब्धेः । पूर्ववर्णविज्ञानप्रभवसंस्कारश्चांत्यवर्णसहायतां पूर्वसंस्कारप्रभवतया प्रणालिकया विशिष्टः समुत्पन्नः सन् प्रतिपाद्यते । तथाहि प्रथमवर्णे तावद्विज्ञानं तेन च संस्कारो जन्यते ततो द्वितीयवर्णविज्ञानं तेन पूर्ववर्णविज्ञानाहितसंस्कारसहितेन विशिष्टसंस्कारो जन्यते । ततस्तृतीयवर्णे ज्ञानं तेन पूर्वसंस्कारविशिष्टेनापरो विशिष्टतरः संस्कारो निर्वर्त्यत इति यावदंत्यसंस्कारोऽर्थप्रतिपत्तिजनकांत्यवर्णसहायः । तथाभूतसंस्कारप्रभवस्मृतिसव्यपेक्षो वांत्यो वर्णः पदरूपः पदार्थप्रतिपत्तिहेतुः । अथवा शब्दार्थोपलब्धिनिमित्तादृष्टनियमादविनष्टा एव पूर्ववर्णसंवित्प्रभवाः संस्कारा अंत्यसंस्कारं विदधति इतरस्मात्पूर्ववर्णेषु स्मृतिरुपजाता अंत्यवर्णेनोपलभ्यमानेन सहार्थप्रतिपत्तिमुत्पादयति वाक्यार्थप्रतिपत्तौ वाक्यस्याप्ययमेव न्यायोऽगीकर्त्तव्यो वर्णाद्वर्णोत्पत्त्यभावप्रतिपादनं च सिद्धसाधनमेव तदेव यथोक्तं सहकारिकारणसव्यपेक्षादंत्याद्वर्णादर्थप्रतिपत्तिरन्वयव्यतिरेकाभ्यामुपजायमानत्वेन निश्चीयमाना स्फोटपरिकल्पनां निरस्यति । तदभावेऽप्यर्थप्रतिपत्तेरुक्तप्रकारेण संभवेऽन्यथानुपपत्तेः प्रक्षयात् । न हि दृष्टादेवकारणात् कार्योत्पत्तावदृष्टतदंतरकल्पना युक्तिसंगतातिप्रसंगात्

( १५ ) किं च यद्युपलभ्यमाना वर्णा व्यस्ताः समस्ता नार्थप्रतिपत्तिजननसमर्थाः स्फोटास्तित्वव्यक्तावपि न समर्था भवेयुः तथाहि—न समस्तास्ते स्फोटमभिव्यंजयंति सामस्त्यासंभवात्तत्रापि प्रत्येकं वर्णांतरवैफल्यप्रसंगादेकेनैव वर्णांतरस्फोटाभिव्यक्तेर्जननत्वात् न च पूर्ववर्णैः स्फोटस्य संस्कारेऽत्यो वर्णस्तस्याभिव्यंजक इति च वर्णांतरवैफल्यसंगादेकेनैव स्फोटाभिव्यक्तेर्जननत्वात् पूर्ववर्णैः स्फोटस्य संस्कारे वैयर्थ्यं अभिव्यक्तिव्यतिरिक्तसंस्कारस्वरूपानवधारणात्तथा हि—न तावत्तत्र तैर्वेगाख्यसंस्कारो निर्वर्त्यते तत्र मूर्त्तेष्वेव भावादत्रापि वासनारूपोऽचेतनत्वात् स्फोटस्य तु चैतन्याभ्युपगमे वा स्वशास्त्रविरोधः नापि स्थितिस्थापकस्तस्यापि मूर्त्तद्रव्यवृत्तित्वात् स्फोटस्य वा मूर्त्तत्वाभ्युपगमात् किं चासौ संस्कारः स्फोटरूपस्तद्धर्मो वा न तावदाद्यः कल्पः स्फोटस्य वर्णोत्पाद्यत्वप्रसक्तेनापि द्वितीयव्यतिरिक्ताव्यतिरिक्तविकल्पानुपपत्तेस्तथाह्यसौ धर्मः स्फोटाद् व्यतिरिक्तोऽव्यतिरिक्तो वा यद्यव्यतिरिक्तस्तदा तत्करणे स्फोट एव कृतो भवेदिति तस्यानित्यत्वप्रसक्तेः स्वाभ्युपगमविरोधः । अथव्यतिरिक्तस्तदा तत्संबंधानुपपत्तिस्तदनुपकारकत्वात् । तस्योपकाराभ्युपगमे व्यतिरिक्ताव्यतिरिक्तविकल्पस्तत्रापि पूर्वोक्त एव दोषोऽनवस्थाकारी ।

न च व्यतिरिक्तधर्मसद्भावे स्फोटस्यानभिव्यक्तस्वरूपव्यवस्थितस्य पूर्ववदर्थप्रतिपत्तिहेतुत्वं तत्स्वरूपत्यागे चाऽनित्यत्वप्रसक्तिःअथ न व्यतिरिक्तसंस्काररूपव्यवस्थितस्य कृतसंस्कारकृतमुपकारमपेक्ष्य पूर्वरूपपरित्यागादसावर्थप्रतिपत्तिं जनयति किंतु संस्कारसहायोऽविचलितरूप एवैककार्यकारित्वस्यैव सहकारित्वाभ्युपगमात् । नन्वेवं वर्णानामप्यन्यकृतोपकारनिरपेक्षाणामेककार्यनिर्वर्त्तनलक्षणसहकारित्ववरसहकारिसहितानामर्थप्रतिपत्तिजनने किमपरस्फोटकल्पतयाऽप्रमाणिकया कार्यं किं च पूर्ववर्णैः संस्कारः स्फोटस्य क्रियमाणः किमेकदेशैः क्रियते सर्वात्मना वा यद्येकदेशैस्तदा तेऽर्थांतरभूता अनर्थांतरभूता वा यद्यर्थांतरभूतास्तदा तेषां तदनुपकारे संबंधासिद्धिरुपकारे व्यतिरिक्ताव्यतिरिक्तविकल्पोक्तदोषानुषंगः ।

न च समवायादनुपकारेऽपि तेषां तत्संबंधिता तस्याभ्युप-

गमात् परैरभ्युपगमे च स्वकृतांतविरोधोऽर्थांतरभूतत्वे चैकदेशानां तेभ्य एवार्थप्रतिपत्तेः न स्फोटस्यार्थप्रत्यायकतापि चैकदेशानामर्थप्रतिपत्तिहेतुत्वाभ्युपगमे च वरं वर्णानामेव तदभ्युपगतं एवं लोकप्रतीतिरनुसृता भवेत्। अथाव्यतिरिक्तास्तदेकदेशास्तदास्फोटस्यैकेनैव संस्कृतत्वादपरवर्णोच्चारणवैयर्थ्यं। न च पूर्ववर्णसंवित्प्रभवसंस्कारसहितस्तत्स्मृति सहितोऽत्यवर्णः स्फोटसंस्कार एवंभूतस्यास्यार्थप्रतिपत्तिजननेऽपि शक्तिप्रतिघाताभावात्स्फोटपरिकल्पना निरवसरैव। अपि वा स्फोटसंस्कारः स्फोटविषयसंवेदनोत्पादनमुतावरणापनयनकृदेकत्रैकदेशावरणापगमे सर्वदेशावस्थितैः सर्वदा व्यापिनित्यरूपतयोपलभ्यते । तस्य नित्यत्वव्यापित्वाभ्यामपगतावरणस्य सर्वत्र सर्वदोपलभ्यस्वभावत्वादनुपलभ्यस्वभावत्वे वा न केनचित्कदाचित् कुत्रचिदुपलभ्येतार्थैकदेशावरणापगमः क्रियते । नत्वेवमावृतावृतत्वेन सावयवत्वमस्यानुसज्येताऽथ निर्विभागत्वादेकत्रानावृतः सर्वत्रावृतोऽभ्युपगम्यते । तदा तदवस्थाशेषदेशावस्थितैरुपलब्धिप्रसक्तिर्यथा च—निरवयवत्वादेकत्रानावृतः सर्वत्रानावृतस्तथा तत एवैकत्राप्यावृतः सर्वत्रावृत इति मनागपि नोपलभ्यते। किं चैकदेशाः स्फोटादर्थांतरमनर्थांतरं वार्थांतरत्वेऽपि शब्दस्वभावा अशब्दात्मका वा यद्यशब्दात्मका नार्थप्रतिपत्तिहेतवोऽथ शब्दस्वभावास्तत्राऽपि यदि गोशब्दस्वभावास्तदा चास्ति गोशब्दानेकत्वप्रसक्तिरथागोशब्दस्वरूपा न तर्हि यथार्थप्रत्यायका भवेयुरथाव्यतिरिक्तास्तदा स्फोट एव संस्कृत इति ॥

नच देशावस्थितैर्व्यापिनस्तस्य प्रतिप्रसक्तिरिति पूर्वोक्तमेव दूषणं । किं चैकदेशावरणापाये स्फोटस्य खंडशः प्रतिपत्तिः प्रसज्येताथ स्फोटविषयसंविदुत्पादस्तत्संस्कारः सोऽपि न युक्तो वर्णानामर्थप्रतिपत्तिजनन इव स्फोटप्रतिपत्तिजननेऽपि सामर्थ्याभावादपास्यमानत्वाद्यदि च स्फोटोनुपलभ्यस्वभावः सर्वदोपलभ्येतानुपलभ्यस्वभावत्वे आवरणापगमेऽपि तत्स्वभावानतिक्रमान्मनागपि नोपलभ्येत इत्यर्थाप्रतिपत्तितः शब्दव्यवहारविलोपोऽनेनैव न्यायेन वायूनामपि तद्व्यंजकत्वमयुक्तं वायूनां च व्यंजकत्वपरिकल्पने वर्णविकल्पप्रसक्तिः। स्फोटाभिव्यक्तावर्थातिपादने वा तेषामनुपयोगात् स्थिते च स्फोटस्य वर्णोच्चारणात् प्राक्सद्भावे वर्णानां वायूनां व्यंजकत्वं परिकल्पेत न च तत् सद्भावः कुतश्चित्प्रमाणादवगत इति न तत्परिकल्पना ज्यायसी यदपि प्रत्यभिज्ञाज्ञानं स्फोटस्य नित्यत्वप्रसाधकं वर्णोच्चारणात् प्रागप्यस्तित्वमवबोधयतीत्यभ्युपगतं तदपि प्रत्यभिज्ञाज्ञानस्य सादृश्यनिबंधनत्वेनात्र विषये प्रतिपादितत्वादसंगतमेकगोव्यक्तौ संकेतात् गोशब्दात् गोव्यक्त्यंतरे अन्यत्रान्यदा नित्यत्वमंतरेणापि प्रतिपत्तिर्यथा संभवति तथा प्रतिपादितं प्रतिपादयिष्यते च नातोऽपि स्फोटस्य प्राग्व्यंजकात् सत्वसिद्धिरिति ॥ "नादेनाहितबीजायमंत्येन ध्वनिना सह । आवृत्तपरिपाकायां बुद्धौ शब्दोऽवभासत" ॥ १ ॥ इति भर्तृहरिवचो निरस्तं द्रष्टव्यं । यदपि विभिन्नतंतुषु वर्णेष्वभिन्नाकारं श्रोत्रान्वयव्यतिरेकानुविधाय्यध्यक्षं स्फोटसद्भावमवबोधयतीत्युक्तं । तदप्यसारं घटादिशब्देषु परस्परव्यावृत्तानेकवर्णव्यतिरिक्तस्य स्फोटात्मनोऽर्थप्रत्यायकस्यैकस्याध्यक्षप्रतिपत्तिविषयत्वेनाप्रतिभासनात्नार्थाभिन्नावभासमात्रादभिन्नार्थव्यवस्थान्यथा दूरादविरलानेकतरुष्वेकतरुबुद्धेरेकत्वव्यवस्थाप्रसक्तेर्नैवाविरलानेकता तरुष्वेकत्वबुद्धेर्बाध्यमानत्वात् नैकत्वव्यवस्थापकत्वं । स्फोटप्रतिभासबुद्धेरपि बाध्यत्वस्य दर्शितत्वात् ॥

न चैकत्वावभासः स्फोटसद्भावमन्तरेणानुपपन्नः । वर्णत्वांत्यवर्णविषयत्वेनाप्येकत्वावभासस्योपपद्यमानत्वान्निरवयवस्याक्रमस्य नित्यत्वादिधर्मापेतस्य । स्फोटस्यैकावभासज्ञाने ज्ञानानुभवादन्यथावभासस्य चान्यथाभूतार्थस्य व्यवस्थापकत्वाद्व्यवस्थापनेतिप्रसंगादवयविद्रव्यं त्ववयवजन्यत्वेन तत्वे वाध्यक्षप्रत्यये प्रतिभासत इति न तन्न्यायः स्फोटे उत्पादयितुं शक्यः। तत्र स्फोटात्मा शब्दो वर्णाभ्यां व्यतिरिक्तोऽसावभ्युपगम्यते। तदा वर्णनानात्वे तन्नानात्वं तन्नानात्वाप्रसक्तिस्तदेकत्वं वा वर्णानामर्थैकत्वप्रसक्तिः अथ गकाराद्यानुपूर्वीविशिष्टोऽत्यो वर्णो विशिष्टानुपूर्विका वा गकारौकारविसर्ज्जनीयाः शब्दाः तथा च मीमांसकाः प्राहुः "यांवंतो यादृशा ये च यदर्थप्रतिपादकाः । वर्णाःप्रज्ञातसामार्थ्यास्ते तथैवाववोधकाः" ॥ १ ॥ इति एतदपि न सम्यग्यत आनुपूर्वी यद्यनर्थांतरभूतास्तदा वर्णा एव नानुपूर्वी । ते च व्यस्ताः समस्ता वा अर्थप्रत्यावेदितमथार्थांतरभूतास्तंदा वक्तव्यं। सा नित्याऽनित्या वा न तावदनित्या स्वसिद्धांतविरोधात् । वैदिकानुपूर्व्या नित्यत्वेनाभ्युपगमाद्युक्ता न हि क्रमं कश्चित् स्वातंत्रेण प्रपद्यत इत्याद्यभिधानान्नापि नित्यास्फोटपक्षोदितसमस्तदोषप्रसक्तेः नच वैदिकवर्णाद्यानुपूर्वी नित्या लौकिकतदानुपूर्व्यविशेषात् तथा हि वैदिकवर्णाद्यानुपूर्वी नित्या तदानुपूर्वीशब्दवाच्यत्वात् । लौकिकवर्णाद्यानुपूर्वीवत् ।

न च लौकिकानुपूर्व्या विलक्षणेयं वैलक्षण्यासिद्धेः।तथाहि किमपौरुषेयत्वमस्या वैलक्षण्यमाहोस्विद्विचित्ररूपता न तावदाद्यः पक्षोऽपौरुषेयत्वस्य निरस्तत्वात् । नापि वैचित्र्यं तस्यानित्यत्वेनाविरोधात्तत्सद्भावेऽपि नित्यत्वाप्रसाधकत्वाल्लौकिकवाक्येष्वपि वैचित्र्यस्योपलब्धेश्च । नच वर्णानां नित्यव्यापिनामानुपूर्वी संभवति । देशकालकृतक्रमानुपपत्तेर्नचातिव्यक्तानुपूर्वी तेषां संभविनी।अभिव्यक्तेः प्राग्निरस्तत्वात् पूर्ववर्णसंवित्प्रभवसंस्कारस्मरणादेरनुपलभ्यमानस्य तदा सहकारित्वकल्पनायां प्रमाणाभावात् ॥

नचार्थप्रतिपत्तेरन्यथानुपपत्तिस्तत्कल्पनायां प्रमाणं तत्प्रतिपत्तेरन्यथासिद्धत्वात् । न चानुपूर्वीसंभवेऽपि परपक्षे वर्णा अर्थप्रतीतिहेतुतया संभवंति। तेषां तत्प्रतिपत्तिजननस्वभावत्वे सर्वदा प्रतिपत्तिप्रसक्तेस्तज्जननस्वभावस्य सर्वदा भावात् । अतज्जननस्वभावत्वेन सर्वदा कदाचिदप्यर्थप्रतिपत्तिं जनयेयुरनपगतातज्जननस्वभावत्वाच्च च सहकारिसन्निधानेऽपि तेषामतज्जननस्वभावता व्यपगच्छत्यनित्यताप्रसक्तिदोषापत्तेः। नित्याश्च परैस्ते अभ्युपगता इत्यभ्युपगमविरोधश्च ॥

नच नित्यसंबंधवादिनस्तदपेक्षा वर्णा अर्थप्रत्यायकाः संभवंति । नित्यस्यानुपकारत्वेनापेक्षणीयत्वायोगाच्च नित्यः संबंधः शब्दार्थयोः प्रमाणेनावसीयते । प्रत्यक्षेण तस्याननुभवात्तदभावेनानुमानेनापि तस्याः तत्पूर्वकत्वाभ्युपगमाच्च च शब्दार्थयोः स्वाभाविकसंबंधमंतरेण गोशब्दश्रवणानंतरं ककुदादिमदर्थप्रतिपत्तिर्नभवेदस्ति च सेति

शब्दस्य वाचिका शक्तिरवगम्यत इति वाच्यं । अनवगतसंबंधस्यापि ततस्तदर्थप्रतिपत्तिप्रसक्तेः ॥
न च संकेताभिव्यक्तः स्वाभाविकः संबंधोऽर्थप्रतिपत्तिं जनयतीति नायं दोषः । संकेतादेवार्थप्रतिपत्तेः स्वाभाविकसंबंधपरिकल्पनावैयर्थ्यप्रसक्तेः । तथाहि–संकेताद्व्युत्पाद्या अनेन शब्देनेत्थंभूतमर्थं व्यवहारिणः प्रतिपादयंतीत्यवगत्य व्यवहारकाले पुनस्तथाभूतशब्दाश्रवणात् । संकेतस्मरणे तत्सदृशं तं चार्थं प्रतिपद्यंते न पुनः स्वाभाविकं संबंधमवगत्य पुनस्तत्स्मरणे अनवगच्छंति ।

न च वाच्यवाचकसंबंधकरणे स्वाभाविकसंबंधमंतरेणानवस्था प्रसक्तिः वृद्धव्यवहारात् प्रभूतशब्दानां वाच्यवाचकस्वरूपावधारणात् । तथा ह्येको व्युत्पन्नव्यवहारः तथा भूताय गामभ्याज शुक्लां देवदत्त दंडेनेति यदा व्यपदिशति द्वितीयस्तु तद्व्यपदेशानंतरं तथैव विदधाति । तदा अव्युत्पन्नसंकेतः शिशुस्तं तथा कुर्वाणमुपलभ्यैवमवधारयत्यनेन गोशब्दाद्गवार्थः प्रतिपन्नोऽभ्याजादिशब्दादभ्याजिक्रियादिकोऽन्यथा कथमपरनिमित्ताभावेऽपि गोपिंडानयनादिकं वाक्यश्रवणानंतरं विदध्यादेवमपोद्धारकल्पनयाऽव्युत्पन्नानां संकेतग्रहणसंभवान्नानवस्थादोषः ।
न च प्रथमसंकेतविधायिनः स्वाभाविकसंबंधव्यतिरेकेण वाच्यवाचकयोः कुतो वाच्यवाचकरूपावगतिरिति वक्तव्यं । अनादित्वादस्य व्यवहारस्यापरापरसंकेतविधायिपूर्वकत्वेन निर्दोषत्वात् ।

न च वाच्यवाचकसंबंधस्य पुरुषकृतत्वे शब्दवदर्थस्यापि वाचकत्वमर्थवच्छब्दस्यापि वाच्यत्वं प्रसक्तमिति वक्तव्यम् योग्यतानतिक्रमेण संकेतकरणात् न च स्वभाविकसंबंधव्यतिरिक्तनियतयोग्यताया अभावः । कृतकत्वेऽपि प्रतिनियतयोग्यतावतां भावानामुपलब्धेः । तथाहि–यत्र लोहत्वकच्छेदिका शक्तिस्तत्रैव क्रियमाणा दृष्टा न जलादौ यत्रैव तंतुत्वमस्ति तत्रैव निष्पाद्यते पटोत्पादनशक्तिर्न तु वीरणादौ तत्र तंतुत्वमभावादेवं च यद्यथोपलभ्यते तत्तथैवाभ्युपगंतव्यम् । दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तेस्ततो यत्रैव वर्णत्वादिकं निमित्तं तत्रैव वाचिका शक्तिः संकेतेनोत्पाद्यते यत्र तु तन्नियतं निमित्तं नास्ति तत्र न वाचिका शक्तिरिति न नित्यत्वाद्वाच्यवाचकसंबंधपरिकल्पनया प्रयोजनम् । एकांतनित्यत्वस्य ज्ञानजनकत्वे सर्वदा ज्ञानोत्पत्तिस्तदजनस्वभावत्वेन कदाचिद्विज्ञानोत्पत्तिरिति प्राक् प्रतिपादितं समयबलेन तु शब्दादर्थप्रतिपत्तौ यथासंकेतं विशिष्टसामग्रीतः कार्योत्पत्तौ न कश्चिद्दोषः । अत एवानुमानात् प्रमाणांतरं शाब्दं । अनुमानं हि पक्षधर्मत्वान्वयव्यतिरेकवल्लिंगबलादुदयमासादयति । शाब्दं तु संकेतसव्यपेक्षशब्दोपलंभात् प्रत्यक्षानुमानागोचरेऽर्थे प्रवर्त्तते । स्वसाध्यव्यभिचारित्वमप्यनुमानस्य त्रिरूपलिङ्गोद्भूतत्वेनैव निश्चीयते। शाब्दस्य त्वाप्तोक्तत्वनिश्चये सति शब्दस्योत्तरकालमिति । किं च शब्दो यत्रार्थे प्रतिपादकत्वेन पुरुषेण प्रयुज्यते तं तमर्थं यथासंकेतं प्रतिपादयति । नत्वेवं धूमादिकं लिंगं पुरुषेच्छावशेन जलादिकं प्रतिपादयतीत्यनुमानात् प्रमाणांतरं सिद्धः शब्दः ।
न च शब्दादर्थप्रतिपत्तौ शब्दस्य त्रैरूप्यमस्ति ।यतो न तस्य पक्षधर्मता यत्रार्थास्तत्र धर्मिणि शब्दस्यावृत्तेर्गोपिंडाधारेण प्रदेशेन शब्दस्याश्रयाश्रयिभावस्य जन्यजनकभावनिबंधनस्याभावादतो गोपिंडवानयं देशो गोशब्दवत्त्वादिति नाभिधातुं शक्यं न पिंडे गोशब्दो वर्त्तते । आधाराधेयवृत्त्या जन्यजनकभावेन वा गोपिंडाभावेऽपि गोशब्दस्य दर्शनान्नच गम्यगमकभावेन चात्रासौ वर्त्तते पक्षधर्मत्वाभावे तस्यैवानुपपत्तेर्वाच्यवाचकभावेन वृत्तावनुमानात् प्रमाणांतरत्वं तेन गोपिंडो गोत्ववान् गोशब्दवत्त्वादयमपि प्रयोगोऽनुपपन्न एव नापि गोत्वं गोपिंडविशेषणे वर्त्तते । तत्सामान्येनाश्रयाश्रयिभावस्य जन्यजनकभावस्य वाऽस्याभावादतो गोत्वं गोपिंडवत् गोशब्दवत्त्वादित्यपि वक्तुमशक्यं विशेषे च साध्येऽनन्वयश्चात्र पक्षे दोषो नच गोशब्दत्वादिप्रयोगो युक्तः तथा प्रतीत्यभावान्नहि गौर्गच्छतीत्युक्ते गमनक्रियाविशिष्टगवार्थप्रतीतिमंतरेण गोपिंडं न तद्वान् शब्दो लोकेनावगम्यते ॥

न च गोशब्दो गवार्थवाचकत्वेन गोशब्दत्वादिनुमीयते किंतु गवार्थप्रतिपत्तिरन्यथानुपपत्त्या गवार्थवाचकत्वं तस्य गम्यते । प्रतिनियतपदार्थनिवेशिनां तु देवदत्तादिशब्दानां नापि पक्षधर्मता दृष्टांतदार्ष्टांतिकभेदे चानुमानप्रवृत्तेर्नच शाब्दं स्वभावत्वाच्च तस्य नापि कार्यलिंगजमनुमानं शब्दस्यार्थस्वभावत्वासिद्धेराकारभेदात् प्रतिनियतकरणग्राह्यत्वाद्वाचकस्वभावत्वाच्च तस्य नापि कार्यलिंगजमर्थाभावेऽपीच्छातः शब्दस्योत्पत्तेर्नच बाह्यार्थविषयत्वेन शब्दस्यानुमानता सौगतैरभ्युपगम्यते अपि सविवक्षाविषयत्वेनेति वक्तव्यं । यतो यथा न तदर्थे विवक्षा तथा शब्दप्रामाण्यप्रतिपादनेऽभिहितं न पुनरुच्यते । न च मीमांसकाभिप्राये वर्णानां वाचकत्वमभिव्यक्तानभिव्यक्तपक्षद्वयेऽपि दोषादनभिव्यक्तानां ज्ञानजनकत्वे सर्वपुरुषान् प्रति सर्वे सर्वदा ज्ञानजनकाः स्युः केनचित् प्रत्यासत्तिविप्रकर्षाभावादभिव्यक्तानां ज्ञानजनकत्वे एकवर्णावरणापाये सर्वेषां समानदेशत्वेनाभिव्यक्तत्वाद्युगपत् सर्वस्तुतिप्रसक्तिरित्युक्तं प्रागिंद्रियसंस्कारपक्षेऽपि पूर्वप्रतिपादितमेव दूषणमनुसर्त्तव्यम् ॥

किं च यद्यनवगतसंबंधा वर्णा अर्थप्रत्यायकास्तदा नारिकेरद्वीपवासिनोऽप्युपलभ्यमाना अर्थावगतिं विदध्युरथावगतसंबंधास्तथा सति पदस्य स्मारकत्वमेव स्यान्नच वाचकत्वं तथा चानधिगतार्थाधिगमहेतुत्वाभावान्न प्रमाणता भवेत्तदुक्तं । "पदं त्वत्यधिकाभावात् स्मारकान्न विशिष्यते । अथाधिक्यं भवेत्किंचित् स पदस्य न गोचरः ॥ १ ॥ इति तत्र मीमांसकमतेनापि वर्णानां शब्दत्वं कथं तर्हि वर्णाः शब्दरूपतां प्रतिपद्यंते उक्तमत्र परिमितसंख्यानां पुद्गलद्रव्योपादानपरित्यागेनैव परिणतानामश्रावणस्वभावपरित्यागव्याप्तश्रवणस्वभावानां विशिष्टानुक्रमयुक्तानां वर्णानां वाचकत्वात् शब्दत्वमन्यथोक्तदोषानतिवृत्तेः वैशेषिकपरिकल्पितपदादिप्रक्रियात्वनुभवबाधितत्वादयुक्ता ।
न च निरन्वयविनाशिनां विज्ञानहेतुता संभवतीत्यसकृत्प्रतिपादितम् । षट्क्षणावस्थायित्वलक्षणमप्यनित्यत्वं तत्परिकल्पितं निरन्वयविनाशपक्षे अर्थक्रियानिवर्त्तनानुपयोगि तेषां नच षट्क्षणावस्थानमपि संभवति प्रथमक्षणसत्ताया अनुप्रवेशो तत्क्षणसत्ताया अप्युत्तरक्षणसत्तानुप्रवेशपरि-

कल्पनायां क्षणिकत्वमेव । ननु प्रवेशेऽपि परस्परविविक्तत्वात् । क्षणस्थितीनां तदेव क्षणिकत्वमिति कुतः षट्क्षणावस्थानमेकस्याऽक्षणिकत्वे चार्थक्रियाविरोधः प्रतिपादित एवेति। न पदादिपरिकल्पना वैशेषिकपक्षे युक्तियुक्तेति स्थितं ननु भवत्पक्षेऽपि क्रमस्य वर्णेभ्यो व्यतिरेकेण वर्णविशेषणत्वमव्यतिरेके वर्णा एव केवलास्ते च न व्यस्तसमस्ता अर्थप्रतिपादका इति पूर्वमेव प्रतिपादितमिति न शब्दः कश्चिदर्थप्रत्यायकोऽसदेतत् वर्णव्यतिरिक्तस्य क्रमस्य प्रतिपत्तेः। तथाहि- न वर्णेभ्योऽर्थांतरमेव क्रमः वर्णानुविद्धत्वस्य प्रतीतेः नापि वर्णा एव क्रमस्तद्विशिष्टतया तेषां प्रतिपत्तेः । नच तद्विशेषणत्वेन प्रतीयमानस्य क्रमस्यापह्नवो युक्तिसंगतो वर्णेष्वपि तत्प्रसक्तेः ।

नच भ्रांतिरूपा प्रतिपत्तिरियं वर्णानां तद्विशिष्टतया बाधिताध्यक्षगोचरतया प्रसाधितत्वादर्थप्रतिपत्तिकारणतोऽनुमितत्वाच्च न चाभावः कस्यचिद्भावाध्यवसायितया विशेषणं नाऽप्यर्थप्रतिपत्तिहेतुर्नच क्रमोऽप्यहेतुस्तथाव्यक्तवर्णेभ्योऽर्थप्रतीतेः । ततो भिन्नाभिन्नानुपूर्वीविशिष्टा वर्णा विशिष्टपरिणतिमंतः शब्दः स च पदवाक्यादिरूपतया व्यवस्थितः न च विशिष्टानुक्रमवंति तथाभूतपरिणतिमापन्नानि पदान्येव वाक्यमभ्युपगंतव्यं तद्व्यतिरिक्तस्य तस्य पदानुपपद्यमानत्वात् ॥ सम्म० ॥

( १६ ) रत्नावतारिकायां शब्दस्य नित्यत्वानित्यत्वविचारः शब्दार्थतत्सम्बन्धविचारश्च यथा ) अकारादिः पौद्गलिको वर्ण इति पुद्गलैर्भाषावर्गणापरमाणुभिरारब्धः पौद्गलिकः। अत्र याज्ञिकाः प्रज्ञापयंति । वर्णस्यानित्यत्वमेव तावद्दुरुपपादं कुतस्तरां पुद्गलारब्धत्वमस्य स्यात्तथाहि स एवायं गकार इति प्रत्यभिज्ञा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववदित्यनुमानं शब्दो नित्यःपरार्थं तदुच्चारणार्थानुपपत्तेरित्यर्थापत्तिश्चेति प्रमाणानि दिनकरकरनिकरनिरन्तरप्रसरपरामर्शोपजातजृम्भारंभांभोजानीव मनःप्रसादमस्य नित्यत्वमेव द्योतयंति । तदवद्यं यतः । प्रत्यभिज्ञानं तावत्कथंचिदनित्यत्वेनैवाविनाभावमाभेजानमेकांतैकरूपतायां ध्वनेः स एवायमित्याकारोभयगोचरत्वविरोधात् । कथमात्मनि तद्रूपेऽपि स एवाहमिति प्रत्यभिज्ञेति चेत्तदंशस्य तस्यापि कथंचिदनित्यस्यैव स्वीकारात् प्रत्यभिज्ञा सचायं प्रत्यक्षानुमानाभ्यां बाध्यमानत्वात्प्रदीपप्रत्यभिज्ञावत् । प्रत्यक्षं हि तावदुत्पेदे विपेदे च वागियमिति प्रवर्त्तते ॥

नच प्रत्यभिज्ञानेनैवेदं प्रत्यक्षं बाधिष्यत इत्यभिधानीयमस्या नान्यथा सिद्धत्वात् । अभिव्यक्तिभावाभावाभ्यामेवेयं प्रतीतिरितिचेत्कुटकटकटाहकटाक्षादावपि किं नेयं तथा कुंभकारमुद्गरादिकारणकलापव्यापारोपलंभात्तदुत्पत्ति विपत्ति स्वीकृतौ तालुवातादिहेतुव्यापारप्रेक्षणादत्रेऽप्यपि तत्स्वीकारोस्तु तालुवातादेरभिव्यक्तव्यनभिव्यक्तिमात्रहेतुत्वे कुलालादेरपि तदस्तु नचाभिव्यक्तिभावाभावाभ्यां तथा प्रतीतिरुपापादि। दिनकरमरीचिराजिव्यज्यमाने घनतरतिमिरनिकरकीर्यमाणे च कुंभादावुदपादि चायमिति प्रतीत्यनुत्पत्तेः। तिमिरावरणवेलायामपि स्पर्शेन प्रत्यक्षेणास्योपलंभान्न तथेयमिति चेद्यदा तर्हि नोपलंभस्तदा किं वक्ष्यसि। अथ क्वापि तिमिरादेस्तत्सत्वावधारणात्सर्वत्रानभिव्यक्तिदशायां तत्सत्त्वं निश्चीयेत इति चेत्तत्किमावृतावस्थायां शब्दस्य सत्वनिर्णायकं न किंचित्प्रमाणमस्ति अोमिति चेत्तर्हि साधकप्रमाणाभावादसत्वमस्तु अस्त्येव प्रत्यभिज्ञादिकं तदिति चेन्नास्य प्रत्यक्षबोधितत्वेनोन्मङ्क्तुमशक्तेः। उन्मज्जनेऽपि व्यक्तिभावाभावयोः कुंभादाविवात्राप्युदयव्ययाध्यवसायो न स्यादस्ति चायं तस्मादनन्यथासिद्धप्रत्यक्षप्रतिबद्ध एवेति निश्चीयते । अनित्यः शब्दस्तीव्रमन्दतादिधर्म्मोपेतत्वात्सुखदुःखादिवदित्यनुमानबाधः। व्यंजकाश्रितास्तीव्रतादयस्तत्राभांतीति चेत् किं तत्र व्यंजकं। काष्ठावायुविशेषा ध्वनय इति चेत्कथं तर्हि तद्धर्म्माणां तेषां श्रावणप्रत्यक्षे प्रतिभासः स्यात् । ध्वनीनामश्रावणत्वेन तद्धर्म्माणामप्यश्रावणत्वात् । न खलु मृदुसमीरलहरीतरंग्यमाणनिष्कंपपयोभाजनादौ प्रतिबिंबितमुखादिगतत्वेन तरलत्वमिव माधुर्यमप्यचाक्षुषं चक्षुःप्रत्यक्षेण प्रेद्यते॥ श्रोत्रग्राह्य एव कश्चिदर्थः शब्दस्य व्यंजकस्तीव्रत्वादिधर्म्मवानऽनित्यश्चेष्यत इतिचेन्न तस्येव शब्दत्वात् श्रोत्रग्राह्यत्वं हि शब्दलक्षणं तल्लक्षणयुक्तस्य च तस्य ततोऽर्थांतरत्वमयुक्तं ॥

किं च-कस्य किं कुर्वतोऽमी व्यंजका ध्वनयो भवेयुः शब्दस्य श्रोत्रस्योभयस्य वा । संस्कारमिति चेत् कोऽयं संस्कारोऽत्र रूपांतरोत्पत्तिरावरणविपत्तिर्वा । आद्यश्चेत् कथं न शब्दश्रोत्रयोरनित्यत्वं स्यात्स्वभावान्यत्वरूपत्वात्तस्य। अथ रूपं धर्म्मो धर्म्मधर्म्मिणोश्च भेदात्तदुत्पत्तावपि न भावस्वभावान्यत्वमिति चेन्नतु धर्म्मांतरोत्पादेऽपि भावस्वभावोऽजनयद्रूपस्वरूपस्ताद्दगेव चेत्तदा पटादिनेव श्रोत्रेण घटादेरिव ध्वनेर्नोपलंभः संभवेत् तत्संबन्धिनस्तस्य करणाददोष इति चेत्स तावत्संबंधो न संयोगस्तस्याद्रव्यत्वात् । समवायस्तु कथंचिदविष्वग्भावान्नान्यो भवितुमर्हतीति तदात्मकधर्म्मोत्पत्तौ धर्म्मिणोऽपि कथंचिदुत्पत्तिरनिवार्या आवरणागमः संस्कारः क्षेमकार इति चेत्स तर्हि शब्दस्यैव संभाव्यते । ततश्चैकत्रावरणविगमे समग्रवर्णाकर्णनं स्यात् । प्रतिवर्णं पृथगावरणमिति यस्यैवावरणविरमणं तस्यैवोपलब्धिरिति चेत्तन्नावितथमपृथग्देशवर्त्तमानैकेंद्रियग्राह्याणां प्रतिनियतावरणावार्यत्वविरोधात् यत् खलु प्रतिनियतावरणावार्यं तत्पृथग्देशे वर्त्तमानमनेकेंद्रियग्राह्यं च दृष्टं यथा घटपटौ यथा वा रूपरसाविति अपृथग्देशवर्त्तमानैकेन्द्रियगाह्यत्वादेव च नास्य प्रतिनियतव्यंजकव्यंग्यत्वमपि अस्तु चैतत्तथाप्ययमभिव्यज्यमानः सामस्त्येन प्रदेशतो वा व्यज्येत । नाद्यः पक्षः क्षेमंकरः सकलशरीरिणां युगपत्तदुपलंभापत्तेः । द्वितीयविकल्पे तु कथं सकर्णस्यापि संपूर्णवर्णाकर्णनं भवेन्न खलु निखिलावृतांगराजांगनामपटुपवनापनीयमानवसनांचलत्वेन चलनांगुलिकोटिप्रकटनायां विकस्वरशिरीषकुसुमसुकुमारसमग्रविग्रहयष्टिनिष्टंकनं विशिष्टेक्षणानामर्पाद्यते। प्रदेशाभिव्यक्तौ चास्य देशत्वं प्रसज्येत ततो व्यंजकस्य कस्यचिच्छब्दे संभवाभावात्तद्गता एव तीव्रतादय इति नासिद्धो हेतुः यदपि श्रावणत्वादित्यनुमानं तदपि"कान्तकीर्त्तिप्रथाकामः कामयेत स्वमातरं। ब्रह्महत्यां च कुर्वीत स्वर्गकामः सुरां पिबेत्" इत्याद्यानुपूर्व्या सव्यभिचारं नित्यैवे-

यमितिचेत्तर्हि प्रेरणावत्प्रामाण्यप्रसंगस्तदर्थानुष्ठानाश्रद्धाने
च प्रत्यवायापत्तिः उदात्तस्वरिततीव्रमंदसुस्वरविस्वरत्वादि-
धर्म्मैश्च व्यभिचारस्तेषां नित्यत्वे सदाप्येकाकारप्रत्ययप्रस-
क्तेः नित्यत्वेऽप्यमीषामभिव्यक्तिः कादाचित्कीतिचेत्तदचारु
परस्परविरुद्धानामेकत्र समावेशासंभवात्। प्रभाकरेण श-
ब्दत्वास्वीकारादुभयविकल्पश्च तं प्रत्यत्र दृष्टान्तः।

अथ भट्ट एवेत्थमनुमानयति। प्राभाकरास्तु देशकालभिन्ना
गोशब्दव्यक्तिबुद्धय एकगोशब्दगोचरा गौरित्युत्पद्यमान-
त्वादाद्योच्चारितगोशब्दव्यक्तिबुद्धिवदिति वदंतीति चेत्त-
दप्यनवद्यातमत्र प्रतिबंधाभावात्तडित्संतुनित्यत्वसिद्धावप्येवं-
विधानुमानस्य कर्तुं शक्यत्वात्। याप्यर्थापत्तिः प्रत्यपादि
तत्रायमर्थोऽनित्यत्वे यो गृहीतसंबंधः शब्दः स तदैव ध्वंसे
इति व्यवहारकालेऽन्य एवागृहीतसंबंधः कथमुच्चार्येत।
उच्चार्यते च तस्मान्नित्य एवेति तदयुक्तमनेन न्यायेनार्थस्या-
पि नित्यतैकतापत्तेरन्यथा बाहुलेये गृहीतसंबंधोऽपि गोश-
ब्दः शावलेयादिष्वगृहीतसंबंधः कथं प्रतिपत्तिं कुर्यात्।
सामान्यस्यैव शब्दार्थत्वाददोष इति चेन्न लंबकंबलः ककु-
द्मान् वृत्तशृंगश्चायं गौरिति सामानाधिकरण्याभावप्रसक्ते-
स्ततः सामान्यं विशेषात्मैव शब्दार्थः। स च नैकांतेनान्वे-
तीति न नित्यैकरूपोऽभ्युपेयः स्यात्। कथं च धूमव्यक्तिः
पर्वते पावकं गमयेत्। धूमत्वसामान्यमेव गमकमितिचेद्वा-
चकमपि सामान्यमेवास्तु अथ शब्दत्वं गोशब्दत्वं क्रमाभि-
व्यज्यमानगोत्वादिकं वा तद्भवेत् आद्यपक्षे प्रतिनियतार्थ
प्रतिपत्तिर्न स्यात्सर्वत्र शब्दत्वस्याविशेषात्। गोशब्दत्वं
तु नास्त्येव गोशब्दव्यक्तेरेकस्याः कस्याश्चित्तदाधारभूताया
असंभवात्क्रमेण व्यज्यमानं हि वर्णद्वयमेवैतत् क्रमाभिव्य-
ज्यमानेत्यादिपक्षेऽप्यसंभवी गोत्वादिसामान्यस्याविद्यमान-
त्वात्। सर्वत्र गकारादेरेकत्वात्। अत्रोच्यते। अस्तु तार्तीयी-
कः कल्पो नच गकारादेरैक्यं गर्गभर्गस्वर्गमार्गादिषु भूयां-
सोऽमी गकारा इति तद्भेदोपलंभात्। व्यंजकभेदादयमिति
चेदकाराद्यशेषवर्णेष्वप्येषो ऽस्त्वित्येक एव वर्णः स्यात्
अथ यथा अयमपि गकारोऽयमपि गकार इत्येकाकारा
प्रतीतिस्तथा नाकाराद्यशेषवर्णेषु अपीति चेन्नैवं अयमपि व-
र्णोऽयमपि वर्ण इत्येकप्रत्यवमर्शोत्पत्तेः सामान्यनिमित्तक
एवायमितिचेत्तर्हि गकारादावपि तथास्तु अथाकारेकारादौ
विशेषोऽनुभूयते नतु गर्गादिगकारेषु तेषां तुल्यस्थानास्य प्रय-
त्नादिति चेदत्र तर्हि सहर्षं ह्रेषंते हरिहम्मीरहरय इत्यादि-
हकारात्कंठ्याद्ब्रह्मजिह्मादिहकारस्यउरस्यो वह्निजिह्मादौ
वर्गपंचमसंयुत इति वचनादुरस्यत्वेन स्थानभेदप्रतीतेस्त-
तो भिन्नोऽयं वर्णो भवेत्।

नच गकारे नास्ति विशेषावभासस्तीव्रोऽयं मन्दोयं गकार इति
तीव्रतादिविशेषस्फुरणात्। व्यंजकगतास्तीव्रतादयस्तत्र स्फु-
रंतीति चेत् कृतोत्तरमेतत्। अकारेकारादावप्यनुभूयमानः स
विशेषस्तद्गत एवास्तु तथा चैक एव वर्णः किन्न भवेत्
मा भूद्वा विशेषावभासो गकारेषु भेदावभासस्तु विद्यत एव
बहवोऽमी गकारा इति प्रतीतेः। भवति च विशेषावभासं
विनापि भेदस्फूर्त्तिः सर्षपराशौ गुरुलाघवादिविशेषावभासं
विनापि तद्भेदप्रतिभासवदिति सिद्धो गकारभेदस्तथाच त-
द्वादिवर्णवर्त्तिसामान्यानामेव वाचकत्वमस्तु तत्वतस्तु-
गोशब्दत्वमेव सदृशपरिणामात्मकं वाचकं क्रमाभि-
व्यज्यमानं वर्णद्वयमेवैतन्नैका गोशब्दव्यक्तिरिति च न वा-
च्यं नित्यत्वाप्रसिद्धावद्याप्यस्योत्तरस्य कूर्परकोटिसंघट्ट-
कितगुडायमानत्वात्तस्मात्क्रमोत्पदिष्णुतत्सद्गकारादिपर्या-
योपहितभाषाद्रव्यात्मको गोशब्द एव सदृशपरिणामात्म-
वाचकोऽस्तु तथा च क्षीणार्थापत्तिः॥

अस्तु नित्यो ध्वनिः किंतु नायं पौद्गलिकः संगच्छत इ-
ति यौगाः संगिरमाणाः सप्रणयप्रणयिनीनामेव गौरवार्हाः
यतः कोऽत्र हेतुः स्पर्शशून्याश्रयत्वमिति निविडप्रदेशे प्रवेश-
निर्गमयोरप्रतिघातः पूर्वं पश्चाच्चावयवानुपलब्धिः सूक्ष्ममूर्त्तद्र-
व्यांतराप्रेरकत्वं गगनगुणत्वं वा। नाद्यः पक्षो यतः शब्दपर्या-
यस्याश्रये भाषावर्गणारूपे स्पर्शाभावोन तावदनुपलब्धिमा-
त्रात्प्रसिध्यति तस्य सव्यभिचारत्वात् योग्योपलब्धिस्त्व-
सिद्धा। तत्र स्पर्शस्यानुभूतत्वेनोपलब्धिलक्षणप्राप्त-
त्वाभावादुपलभ्यमानगंधाधारद्रव्यवत्। अथ घनसा-
रगंधसारादौ गंधस्य स्पर्शाव्यभिचारनिश्चयादत्रापि तन्निर्ण-
येऽप्यपनुलंभादनुद्भूतत्वं युक्तं नेतरत्र तन्निर्णायकाभावादि-
ति चेन्माभूत्तावत्तन्निर्णायकं किंचित्किंतु पुद्गलानामुद्भूता-
नुद्भूतस्पर्शानामुपलब्धेः शब्देऽपि पौद्गलिकत्वेन परैः प्र-
णिगद्यमाने बाधकाभावे च सति संदेह एव स्यान्नत्वभावं
निश्चयस्तथाच संदिग्धासिद्धो हेतुः। नच नास्ति तन्निर्णायकं
तथा शब्दाश्रयः स्पर्शवाननुवातप्रतिवातयोर्विप्रकृष्टनिकट-
शरीरिणोपलभ्यमानानुपलभ्यमानेंद्रियार्थत्वात्तथाविधगंधा-
धारद्रव्यवदिति द्वितीयकल्पेऽपि गंधद्रव्येण व्यभिचारः।
वर्त्तमानजात्यकस्तूरिकाकर्पूरकश्मीरजादिगंधद्रव्यं हि पि-
हितकपाटसंपुटापवरकस्यांतर्विशति बहिश्च निस्सरति न-
चापौद्गलिकं। अथ तत्र सूक्ष्मरंध्रसंभवेनातिनिविडत्वा-
भावात्तत्प्रवेशनिष्काशावत एव तदल्पीयस्ता नत्वपावृत-
द्वारदशायामिव तदेकार्णवत्वं सर्वथा नीरंध्रे तु प्रदेशे नैतौ
संभवत इति चेदेवं तर्हि शब्देऽपि सर्वस्य तुल्ययोगक्षेमत्वा-
दसिद्धताहेतुरस्तु पूर्वं पश्चाच्चावयवानुपलब्धिः सौदामिनी-
दामोल्कादिभिरनैकांतिकी। सूक्ष्ममूर्त्तद्रव्यान्तराप्रेरकत्वमपि
गंधद्रव्यविशेषसूक्ष्मरजोधूमादिभिर्व्यभिचारि न हि गंध-
द्रव्यादिकमपि न निविशमानं तद्विवरद्वारयादेशोद्भिन्न-
स्मश्रुप्रेरकं प्रेक्ष्यते गगनगुणत्वं त्वसिद्धं तथाहि। न गगन-
गुणः शब्दोऽस्मदादिप्रत्यक्षत्वाद्रूपादिवदिति पौद्गलिकत्व-
सिद्धिः पुनरस्य शब्दः पौद्गलिक इंद्रियार्थत्वाद्रूपादि-
वदेवेति॥

अथ संकेतमात्रेणैव शब्दोऽर्थं प्रतिपादयति नतु स्वाभाविक-
संबंधवशादिति गदतो नैयायिकान् समयादपि नायं वस्तु
वदतीति वदतः सौगतांश्च पराकुर्वंति। स्वाभाविकसामर्थ्य-
समयाभ्यामर्थबोधनिबंधनं शब्द इति स्वाभाविकं सहजं
सामर्थ्यं च शब्दस्यार्थप्रतिपादनशक्तियोग्यतानाम्नी सम-
यश्च संकेतस्ताभ्यामर्थप्रतिपत्तिकारणं शब्द इति। तत्र
नैयायिकान्प्रत्येवं विधेयानुवाद्यभावो योऽयमर्थबोधनिबंधनं
शब्दोऽभ्युपगतोऽस्ति स स्वाभाविकसामर्थ्यसमयाभ्यां
द्वाभ्यामपि न पुनः समयादेव केवलात्समयो हि पुरुषायत्त-
वृत्तिर्न च पुरुषेच्छया वस्तु नियमो युज्यतेऽन्यथा तदिच्छाया
अव्याहतप्रसरत्वादर्थोपि वाचकः शब्दोऽपि वाच्यः स्यात्।
अथ गत्वौत्वादिसामान्यसंबंधो यस्य भवति स वाचक-
त्वयोग्य इतरस्तु वाच्यत्वे यथा द्रव्यत्वाविशेषेऽप्य-

ग्नित्वादिसामान्यविशेषवत् एव दाहजनकत्वं न जलत्वादिसामान्यविशेषवत् इति चेत्तदयुक्तमतींद्रियशक्तिं विनाऽग्नित्वादेरपि कार्यकारणभावनियामकत्वानुपपत्तेः । अग्नित्वं हि दाहवद्विजातीयकारणजन्यकार्येष्वपि तुल्यरूपं नहि दाहं प्रत्येवाऽग्नेरग्नित्वं यथा पुत्रापेक्षं पितुः पितृत्वं । ततश्चाग्निर्दाहवत्पिपासापनोदमपि विदध्यादिति नातींद्रियां शक्तिमंतरेणाग्नित्वादीनां कार्यकारणभावव्यवस्थाहेतुत्वं तद्वदेव च गत्त्वौत्वादिसामान्यानामपि न वाच्यवाचकभावनियमहेतुत्वमिति नियामिका शक्तिः स्वीकर्त्तव्यैव ॥ अथ किमनेनातींद्रियशक्तिकल्पनाक्लेशेन करतलानलसंयोगादिसहकारिकारणनिकरपरिकरितं कृपीटयोनिस्वरूपं हि स्फोटघटनपाटवं प्रकटयिष्यति किमवशिष्टं यदनया करिष्यते तथा च जयंतः । "स्वरूपादुद्भवत्कार्यं सहकार्युपबृंहितात् । नहि कल्पयितुं शक्तं शक्तिमन्यामतींद्रियाम्॥१॥ यत्तूक्तमग्निर्दाहवत्पिपासापनोदमपि विदध्यादिति तन्न हि वयमद्य कंचिदभिनवं भावानां कार्यकारणभावमुत्थापयितुं शक्नुमः किंतु यथा प्रवृत्तमनुसरंतो व्यवहरामः । नह्यस्मदिच्छया आपः शीतं शमयंति कृशानुर्वा पिपासां किंतुतत्र दाहादावन्वयव्यतिरेकाभ्यां वा वृद्धव्यवहाराद्वा ज्वलनादेरेव कारणत्वमवगच्छाम इति तदेव तदर्थिन उपादद्महे न जलादि तदेतदतथ्यं।यतो यथाभूतादेव विभावसोर्दाहोत्पत्तिः प्रतीयते तथाभूतादेव मणिमंत्रयंत्रतंत्रौषधादिसन्निधाने सति न प्रतीयते । यदि हि दृष्टमेव रूपं स्फुटं स्फोटं घटयेत्तदा तदानींतनस्य समस्तस्य सद्भावात्तदनुत्पादो न स्यादस्ति चासौ ततो दृष्टरूपस्य व्यभिचारं प्रपंचयन्नतींद्रियायाः शक्तेः सत्त्वं समर्थयति । तथा च "स्वरूपात्क्वाप्यनुद्यत्तत्सहकार्युपबृंहितात् । किं न कल्पयितुं शक्तं शक्तिमन्यामतींद्रियां,,॥ १ ॥यत्तूक्तं "दाहादावन्वयव्यतिरेकाभ्यां वृद्धव्यवहाराद्वा ज्वलनादेरेव कारणत्वमवगच्छाम इति तदुक्तिमात्रमेव यत एव हि दाहदहनयोः कार्यकारणभावनियमः प्रसिद्धिपद्धतिप्रतिबद्ध एव तत एव प्रसंगः प्रवर्त्यते यदि कृशानुः स्वरूपमात्रादेव दाहमुत्पादयेत्तर्हि तदविशेषादुदन्यापनोदमपि विदध्यादिति॥

अथ न मणिमंत्रादिप्रतिबंधकनैकट्ये सति स्फोटानुत्पत्तिरदृष्टं रूपमाक्षिपति यथा ह्यन्वयव्यतिरेकाभ्यामवधृतसामर्थ्यो दहनो दाहहेतुस्तथा प्रतिबंधकाभावोऽपि स च प्रतिबंधकयोगे विनिवृत्त इति सामग्रीवैगुण्यादेव दाहस्यानुत्पत्तिर्नतु शक्तिवैकल्यादिति चेत्तदयुक्तं यतः प्रतिबंधकाभावो भावादेकांतव्यतिरिक्तः कथं किंचित्कार्यं कुर्यात् कूर्मरोमराजीवत् । ननु नित्यानां कर्मणामकरणात्प्रागभावस्वभावात्प्रत्यवाय उत्पद्यतेऽन्यथा नित्याकरणे प्रायश्चित्तानुष्ठानं न स्याद्वैयर्थ्यात्तन्न तथ्यं नित्याकरणस्वभावात्क्रियान्तरकरणादेव प्रत्यवायोत्पत्तेरभ्युपगमात् त्वन्मतस्य तद्धेतुत्वासिद्धेः यदप्युच्यते "सुखदुःखसमुत्पत्तिरभावे शत्रुमित्रयोः॥ कंटकाभावमालक्ष्य पादः पथि निर्वीयते" ॥ १ ॥ तत्राऽप्यमित्रमित्रकंटकाभावज्ञानानामेव सुखदुःखादिनिधानकार्यकारित्वं नत्वभावानां तज्ज्ञानमप्यमित्रमित्रकंटकविविक्तप्रतियोगिवस्त्वंतरसंपादितमेव नतु त्वदभिमताभावकृतं अथ भाववदभावोऽपि भावजननसमर्थोऽस्तु को दोषो न हि निःशेषसामर्थ्यरहितत्वमभावलक्षणमपि तु नास्तीति ज्ञानगम्यत्वं सत्प्रत्ययगम्यो हि भाव उच्यतेऽसत्प्रत्ययगम्यस्त्वभाव इति चेत्तदयुक्तं त्वदभ्युपगताभावस्य भावात्सर्वथा पार्थक्येन स्थितस्य भावोत्पादकत्वविरोधात् तथाहि । विवादास्पदीभूतोऽभावोत्पादको न भवति भावादेकांतव्यतिरिक्तत्वाद्यदेवं तदेवं यथा तुरंगशृंगं तथा चायं तस्मात्तथा प्रागभावप्रध्वंसाभावपरस्पराभावस्वभावो ह्यभावो वस्तुनो व्यतिरिक्तमूर्तिर्भावोत्पादकः परैरिष्टः। सोऽत्र विवादपदशब्दितः अन्यथा जैनस्य भावाविष्वग्भूताभावैर्भावोत्पादकत्वेनांगीकृतैर्बाधा स्यात् । यौगस्य चात्यंताभावेन भावानुत्पादकेन सिद्धसाध्यता भवेत् नन्वयं धर्मित्वेनोपात्तोऽभावो भवद्भिः प्रतिपन्नो न वा यदि प्रतिपन्नः किं प्रत्यक्षादनुमानाद्विकल्पाद्वा उपमानादेरत्रान्वितत्वात् यदि प्रत्यक्षात्तदा कथमभावस्य भावोत्पादनाप्रवादस्सूपपादःस्यात्प्रत्यक्षस्यैवोत्पादितत्वात् अथानुमानात्तत्प्रतिपत्तौ तत्राप्यभावधर्मिणः प्रतीतिरनुमानांतरादेवेत्यत्राऽनवस्थादौःस्थ्यस्थेमाविकल्पादपि तत्प्रतीतिः प्रमाणमूलातन्मात्रादेव वा न प्रथमात्प्रमाणप्रवृत्तेस्तत्र तिरस्कृतत्वात् विकल्पमात्रात्तु तत्प्रतिपत्तिरसत्कल्पा ततः कस्यापि प्रतिपत्तेरनुपपत्तेः । अन्यथा प्रामाणिकानां प्रमाणपर्येषेण मरणीयं स्यात्तथा चाश्रयासिद्धो हेतुः अथाप्रतिपन्नस्तर्हि कथं धर्मितयोपादायि । उपात्ते चास्मिन्न हेतुराश्रयासिद्ध एव अत्रोच्यते विकल्पमात्रादेव तत्प्रतिपत्तिं ब्रूमहे नचाश्रयासिद्धिरवस्तुनि विकल्पात्प्रसिद्धेरवश्याश्रयणीयत्वादन्यथा वंध्यास्तनंधयादिशब्दानुच्चारणप्रसंगात् ॥

नच नोच्चार्यत एवायं मयेति वाच्यं वांध्येयोऽस्ति नास्ति वेति । पर्यनुयोगे पृथ्वीपतिपरिषद्यवश्यं विधिनिषेधान्यतराभिधायिवचनस्यावकाशात् । तूष्णीं पुष्णतोऽस्याप्रतिपित्सितं किंचिदुच्चारयतो वा पिशाचकित्वप्रसंगात् तथा विधवचनोच्चारणे च कथमेतदिति प्रमाणगवेषणेनुमानमुच्चार्यमाणमाश्रयासिद्धिग्रस्तं समस्तं निष्प्रमाणकं च वचनमात्रं प्रेक्षावता प्रश्नकृताऽनपेक्षितमेव न चोभयाभावोऽभिधातुं शक्यो विधिनिषेधयोर्भावाभावस्वभावत्वादेकनिषेधेनापरविधानात् । विधिप्रतिषेधो हि निषेधः निषेधप्रतिषेधश्च विधिः ॥ अस्तु चोभयप्रतिषेधप्रतिज्ञाहेतोस्तु तत्रोपादीयमानस्य नाश्रयासिद्धिपरिहारः । तदुक्तं ॥ "धर्मस्य कस्यचिद वस्तुनि मानसिद्धावाधाविधिव्यवहृतिः किमिहास्तिनो वा अस्यैव चेत्कथमियंति न दूषणानि नास्त्येव चेत् स्ववचन प्रतिरोधसिद्धिः । अवस्तुनि वाधाविधिव्यवहारो नास्तीत्येतदनेनैव स्ववचनेन प्रतिरुध्यते नास्तीति प्रतिषेधस्यस्वयं कृतत्वादित्यंत्यपादस्यार्थः ॥

तुरंगशृंगदृष्टांतोऽपि विकल्पादेव प्रसिद्धः स्वीकर्त्तव्यस्तत्र च वस्त्वेकांतव्यतिरेके सति भावानुत्पादकत्वमपि प्रतीतमिति नास्य साध्यसाधनोभयवैकल्यं । ननु जैनैर्भावादभिन्नस्याभावस्याभ्युपगमाद्वाद्यसिद्धो हेतुरिति चेत्तदसत्पराभ्युपगताभावस्य धर्म्मीकृतत्वात्तस्य च भावादेकांतेन पृथग्भूततया जैनैरपि स्वीकारात् न खल्ववस्तु वस्तुभूताद्भावादभिन्नमिति मन्यंते जैनाः । ततो नाभावो भावोत्पादकस्तवास्तीति सिद्धं ॥ किंच ॥ यदाप्रतिबंधकाभावो विभावस्तत्स्वरूपादेकांतभिन्नोऽभ्युपागामि । तदा

विभावसुः प्रतिबंधकस्वभावस्स्वीकृतः स्यात्प्रतिबंधका-
भावाद्व्यावर्त्तमानत्वान्मणिमन्त्रादिप्रतिबंधकस्वरूपवत्तथा
च कथं कदाचिद्दाहादिकार्योत्पादो भवेद्विभावसोरेव प्र-
तिबंधकत्वात् ॥ अथ कथं विभावसुः प्रतिबंधकः स्यात्तत्र
प्रतिबंधकप्रागभावस्य विद्यमानत्वात्तदनवदातमेतावता हि
तत्र वर्त्तमानः प्रतिबंधकप्रागभाव एव प्रतिबंधकस्वभा-
वो मा भूद्विभावसुः स्वरूपं तु तदभावाद्व्यावर्त्तमानं प्रतिबं-
धकतां कथं न कलयेत् यथाहि प्रतिबंधकः स्वभावा-
द्व्यावर्त्तमानः प्रतिबंधकतां दधाति तथा तत्तनूनपादपि
प्रतिबंधकाभावाद्व्यावर्त्तमानमूर्तिः कथं न प्रतिबंधरूपतां
प्रतिपद्येत स्याद्वादिनां तु भावाभावोभयात्मकं वस्त्विति
प्रतिबंधकाभावात्मनः कृष्णवर्त्मनो न प्रतिबंधकरूपता किं
च प्रतिबंधकाभावस्य कारणत्वे प्रतिबंधकस्य कस्यचि-
न्निकटत्वेपि प्रतिबंधकाभावांतराणामनेकेषां भावात्कथं न
कार्योत्पादः नहि कुंभकारकारणः कुंभः कुंभकारस्यैक-
स्याभावेऽपि कुंभकारांतरव्यापारान्न भवति नचैक एव
कश्चित्प्रतिबंधकाभावः कारणं यदभावात्तदानीं न कार्यं
जायते तद्वदेव तन्मतेन सर्वेषामवधृतसामर्थ्यत्वात् ।

अथ सर्वे प्रतिबंधकाभावाः समुदिता एव कारणं न पु-
नरेकैकशः कुंभकारवत्तर्हि कदाचिदपि दाहादिकार्योत्प-
त्तिर्न स्यात्तेषां सर्वेषां कदाचिदभावाद्यतो भुवने मणि-
मंत्रतंत्रादिप्रतिबंधकानां भूयसां संभवात् । अथ ये प्रतिबं-
धकास्तं तनूनपातं प्रतिबद्धुं प्रसिद्धसामर्थ्यास्तेषामेवाभावाः
सर्वे कारणं ननु सर्वेषां सर्वशब्दस्य प्रकारकार्त्स्न्ये वर्त्त-
मानस्य स्वीकारादिति चेन्ननु प्रसिद्धसामर्थ्या इति ।
सामर्थ्यं शब्दस्यातींद्रिया शक्तिः स्वरूपं वा प्रतिबंध-
कानां वाच्यं स्यात् । प्राच्यपक्षकक्षीकारे क्षीणक्षणेना-
वयोः कंठशोषोऽतींद्रियशक्तिस्वीकारात् । द्वितीयपक्षे तु त
एव तं प्रति प्रतिबंधका नापरे इति कौतस्कुती नीतिः स्वरूप-
स्योभयेषामपि भावात् । न खलुमणिमंत्रादेः कंचिदेव जातवे-
दसमाश्रित्य तत्स्वरूपं न पुनर्जातवेदोत्तरमिति तथा न प्रति
बंधकस्यात्यंताभावस्तत्कारणतया वक्तुं युक्तस्तस्यासत्वा-
दन्यथा जगति प्रतिबंधककथां प्रत्यस्तमयप्रसंगात् ॥

अपरे पुनः प्रतिबंधकाभावा एकैकशः सहकारितां दधी-
रन् द्वित्रा वा प्रथमपक्षे प्रागभावः प्रध्वंसाभावः परस्प-
राभावो यः कश्चिद्वा सहकारी स्यात् न प्रथमः । प्रति-
बंधकप्रध्वंसेऽपि पावकस्य स्फोटकार्योपलंभात् । न द्विती-
यः प्रतिबंधकप्रागभावेऽपि दहनस्य दाहोत्पादकत्वात् न
तृतीयः प्रतिबंधकसंबंधबंधोऽपि धनंजयस्य स्फोटघटनप्र-
संगात्तस्य तदानीमपि भावात् न चतुर्थः प्ररूपयिष्य-
माणानियतहेतुकत्वदोषानुषंगात् । द्वित्रप्रतिबंधकाभाव-
भेदे तु किं प्रागभावप्रध्वंसाभावौ प्रागभावपरस्पराभावौ
प्रध्वंसाभावपरस्पराभावौ त्रयोऽपि वा हेतवो भवे-
युः । नाद्यः पक्ष उत्तेजकनैकट्ये तावंतरेणापि पाव-
कस्य स्फोटकार्यार्जनदर्शनात् न द्वितीयतृतीयतुरीयाः ।
प्रतिबंधकपरस्पराभावस्य प्राक्तदकारणत्वेन वर्णितत्वाद्भे-
दत्रयस्यापि चास्य परस्पराभावसंवलितत्वात् । अथ
प्रागभावप्रध्वंसाभावोत्तंभकमणिमंत्रतंत्रादयो यथायोगं
कारणमिति चेत्तदस्फुटं स्फोटादिकार्यस्यैवमनियतहेतुकत्व-
प्रसंगादनियतहेतुकं वाहेतुकमेव तथाह्यन्वयव्यतिरेकाव-

धार्यः कार्यकारणभावो भावानां धूमधूमध्वजयोरिव प्र-
स्तुते तुल्यादि । यद्वे कस्मादुत्पद्यमानमीक्षामासे तदन्यदा
यद्यन्यतोऽपि स्यात्तर्हि तत्कारणकमेव तन्न भवेदिति
कथं नाहेतुकं स्यात् ॥

अथ गोमयात् वृश्चिकाच्च वृश्चिकोत्पादः प्रेक्ष्यते न च तत्रा-
नियतहेतुकत्वं स्वीकृतं त्वयापीति चेत्तदपि त्रपापात्रं सर्वत्र
हि शालूकगोमयादौ वृश्चिकडिंभारंभशक्तिरेकास्तीति यानि
तच्छक्तियुक्तानि तानि तत्कार्योत्पादकानीति नायं नः
कलंकः संक्रामति भवतां पुनरत्राप्ययं प्रादुर्भवन् दुष्प्रति-
षेधो येषां वृश्चिकगोमयसाधारणमेकं किंचिन्नास्तीति नच
प्रागभावप्रध्वंसाभावोत्तंभकादीनामप्येकं किंचित्तुल्यं रूपं
वर्त्तत इति नानियतहेतुकत्वेन दुर्विधदैवेनेवामी मुच्यंते ।
एतेन भावस्वभावोऽप्यभाव एवास्तु हेतुर्नत्वतींद्रियशक्ति-
स्वीकारःसुन्दर इत्यप्युच्यमानमपास्तम् उक्ताभावविकल्पा-
नामत्राप्यविशेषात् । अथ शक्तिपक्षप्रतिपक्षदीक्षिता आद्य-
पादा एवं साक्षेपमावक्ष्यते न तु भवत्पक्षे प्रतिबंधकोऽकिं-
चित्करः किंचित्करो वा भवेत् । अकिंचित्करप्रकारेऽति
प्रसंगः शृंगभृंगभृंगारादेरप्यकिंचित्करस्य प्रतिबंधकत्वप्र-
संगात् । किंचित्करस्तु किंचिदुपचिन्वन्नपचिन्वन्वा स्यात्
प्राचि पक्षे किं दाहकशक्तिप्रतिकूलां शक्तिं जनयेत्तस्या
एव धर्म्मांतरं वा न प्रथमं प्रमाणाभावात् दाहाभाव-
स्तु प्रतिबंधकसान्निधिमात्रेणैव चरितार्थ इति न तामुप-
पादयितुमीश्वरः । धर्म्मांतरजनने तदभावे सत्येव दाहो-
त्पाद इत्यभावस्य कारणत्वस्वीकारस्तदवस्थ एवोक्ताशेषप्रागभा-
वादिविकल्पानवकाशश्च ॥

अपचयपक्षे तु प्रतिबंधकस्तां शक्तिं विकुट्टयेत्तद्धर्म्मं वा प्र-
थमप्रकारे कुतस्त्यं कृपीटयोनेः पुनः स्फोटघटनपाटवं तदा-
नीमन्यैव शक्तिः संजातेति चेन्ननु सा संजायमाना किमुत्तं-
भकात्प्रतिबंधकाभावाद्देशकालादिकारकचक्राददतींद्रियादर्था-
तराद्वा जायते । आद्यभिदायामुत्तंभकाभावेऽपि प्रतिबंधका-
भावमात्रात्कौतस्कुतं कार्यार्जनं जातवेदसः ।

द्वितीये भेदे तत एव स्फोटोत्पत्तिसिद्धेः शक्तिकल्पनावैय-
र्थ्यं तृतीये देशकालादिकारकचक्रस्य प्रतिबंधकालेऽपि स-
द्भावेन शक्यं तत्प्रादुर्भावप्रसंगः । चतुर्थेंद्रियार्थांतरनिमित्त-
कल्पने तत एव स्फोटः स्फुटं भविष्यति किमनया कार्यं त-
न्न शक्तिनाशः श्रेयसः । तद्वदेव तद्धर्म्मनाशपक्षोऽपि प्रति-
क्षेपणीयः । अत्राभिदध्महे एतेषु शक्तिनाशपक्ष एव कक्षी-
क्रियत इत्यपरविकल्पशिल्पकल्पनाजल्पाकता कंठशोषायैव
च संबभूव यत्तूक्तं कुतः पुनरसावुत्पद्येतेति तत्र शक्त्यंतर-
सहकृता कृपीटयोनेरेवेति ब्रूमः । ननु प्रतिबंधकदशायां सा
शक्तिरस्ति न वा नास्ति चेत्कुतः पुनरुत्पद्येत शक्त्यंतरसंह-
कृतादग्नेरेवेति चेत्तर्हि साऽपि शक्त्यंतरसध्रीचस्तस्मादेवोन्म-
ज्जेदित्यनवस्था अथास्ते तदानीमपि स्फोटोत्पादिकां शक्तिं
संपादयेत्ततोऽपि स्फोटः स्फुटःस्यादेवेति । अत्रोच्यते प्रतिबंध-
कावस्थायामप्यस्त्येव शक्त्यंतरं घटयति च स्फोटघटनलंपटां
शक्तिं तदापि यस्तु तदा स्फोटानुत्पादः स प्रतिबंधकेनोत्पन्नो-
त्पन्नायास्तस्याः प्रध्वंसात् । प्रतिबंधकापगमे तु स्फोटः
स्फुटीभवत्येवेत्यतींद्रियशक्तिसिद्धिः । अत्राशंकान्तरपरि-
हारप्रकारमौक्तिकक्कणप्रचयावचायःस्याद्वादरत्नाकरात्तार्किकैः
कर्त्तव्यः । एवं च स्वाभाविकशक्तिमान् शब्दोऽर्थं बोध-

यतीति सिद्धं अथ तदंगीकारे तत एवार्थः सिद्धः संकेतकल्पनाऽनर्थिकैव स्याद्दिति चेन्मैवमस्य सहकारितया स्वीकारादंकुरोत्पत्तौ पयःपृथिव्यादिवत् । अथ स्वाभाविकसंबंधाभ्युपगमे देशभेदेन शब्दानामर्थभेदो न भवेद्भवति चायं चौरशब्दस्य दाक्षिणात्यैरोदने प्रयोगादिति चेत्तदंशस्य सर्वशब्दानां सर्वार्थप्रत्यायनाशक्तियुक्तत्वात् यत्र च देशे यदर्थप्रतिपादनशक्तिसहकारी संकेतः स तमर्थं तत्र प्रतिपादयतीति सर्वमवदातं ॥ सौगतास्तु प्रत्येवंविधयानुवाद्यभावो योऽयं शब्दो वर्णात्मावयोः प्रसिद्धः स स्वाभाविकसामर्थ्यसमयाभ्यां कृत्वा अर्थबोधनिबंधनमेवेति ॥

अथ स्वाभाविकसामर्थ्यसमयाभ्यां शब्दस्यार्थे सामान्यरूपे विशेषलक्षणे तदुभयस्वभावे वा वाचकत्वं व्याक्रियेत न प्रथमे सामान्यस्यार्थक्रियाकारित्वाभावेन नभोऽभोजसन्निभत्वात् । न द्वैतीयीके विशेषस्य स्वलक्षणलक्षणस्य वैकल्पिकविज्ञानागोचरत्वेन संकेतास्पदत्वाऽसंभवात् । तत्संभवेऽपि विशेषस्य व्यवहारकालाननुयायित्वेन संकेतनैरर्थक्यात्तार्त्तीयीके तु स्वतंत्रयोस्तादात्म्यापन्नयोर्वा सामान्यविशेषयोस्तद्गोचरता संगीर्येत नाद्यः पक्षः प्राचिकविकल्पोपदर्शितदोषानुषङ्गात् । न द्वितीयः सामान्यविशेषयोर्विरुद्धधर्माध्यासितत्वेन तादात्म्यायोगादिति नार्थो वाच्यो वाचामपि तु परमार्थतः सर्वतो व्यावृत्तस्वरूपेषु स्वलक्षणेष्वेकार्थकारित्वेनैककारणत्वेन चोपजायमानैकप्रत्यवमर्शरूपविकल्पस्याकारो बाह्यत्वेनाभिमन्यमानो बुद्धिप्रतिबिंबव्यपदेशभागपोहः शब्दश्रुतौ सत्यां तादृशोल्लिखशेखरस्येव वदनस्योत्पादात् । अपोहत्वं चास्य स्वाकारविपरीताकारोन्मूलकत्वेनावसेयं । अपोह्यते स्वाकाराद्विपरीत आकारोऽनेनेत्यपोह इति व्युत्पत्तेः । तत्वतस्तु न किंचिद्वाच्यं वाचकं वा विद्यते शब्दार्थतया कथ्यते बुद्धिप्रतिबिम्बात्मन्यपोहे कार्यकारणभावस्यैव वाच्यवाचकतया व्यवस्थापितत्वात् ।

"अथ श्रीमदनेकांतसमुद्रघोषपिपासितः । अपोहमापिबामि प्रागवीक्षंतां भिक्षवः क्षणं"॥१॥ इह तावद्विकल्पानां तथाप्रतीतिपरिहृतविरुद्धधर्माध्यासकथंचित्तादात्म्यापन्नसामान्यविशेषस्वरूपवस्तुलक्षणाक्षणदीक्षितत्वं प्राक्प्राकस्य ततस्तत्वतः शब्दानामपि तत्प्रसिद्धमेव यतोऽजल्पि युष्मदीयैः स एव शब्दानां विषयो यो विकल्पानामिति कथमपोहः शब्दार्थः स्यात् । अस्तु वा तथाप्यनुमानवर्तिक न शब्दः प्रमाणमुच्यते। अपोहगोचरत्वेपि परंपरया पदार्थे प्रतिबंधात्प्रमाणमनुमानमिति चेत्तत एव शब्दोऽपि प्रमाणमस्तु अतीतानागतांयरसरोजादिष्वसत्स्वपि शब्दोपलंभान्नात्रार्थप्रतिबंध इति चेत्तर्ह्यभूद्वृष्टिर्गिरिनदीवेगोपलंभाद्भावी भरण्युदयोरेवेत्युदयान्नास्ति रासभशृंगं समग्रप्रमाणैरनुपलंभादित्यादेरर्थाभावेऽपि प्रवृत्तेरनुमानेऽपि नार्थप्रतिबंधः स्यात् । यदि वचोवाच्योऽपोहोऽपि पारंपर्येण पदार्थप्रतिष्ठः स्यात्तदानीमलाबूनि मज्जंतीत्यादिविप्रतारकत्ववाक्यापोहोऽपि तथा भवेदिति चेदनुमेयापोहेऽपि तुल्यमेतत्प्रमेयत्वादिहेत्वनुमेयापोहेऽपि पदार्थप्रतिष्ठताप्रसक्तेः । प्रमेयत्वं हेतुरेव न भवति त्रिपक्षासत्वतल्लक्षणाभावादिति कुतस्त्या तदपोहस्य तन्निष्ठतेति चेत्तर्हि विप्रतारकवाक्यमप्यागम एव न भवत्याप्तोक्तत्वतल्लक्षणाभावादित्यादि समस्तं समानं यस्तु नाप्तोक्तत्वं वचसि विवेचयितुं शक्यमिति शाक्यो वक्ति स पर्यनुयोज्यः किमाप्तस्यैव कस्याप्यभावादेवमभिधीयते भावेऽप्यस्य निश्चयाभान्निश्चयेऽपि मौनव्रतिकत्वाद्वक्तृत्वेऽप्यनाप्तवचनात्तद्वचसो विवेकावधारणाभावाद्वा । सर्वमप्येतच्चार्वाकादिवाचां प्रपंचान्मातापितृपुत्रभ्रातृगुरुसुगतादिवचसां विशेषमातिष्ठमानैरप्रकटनीयमेव ।

नच नास्ति विशेषस्वीकारस्तत्पतितानुष्ठानघटनायामेव प्रवृत्तेर्निर्निबंधनत्वापत्तेः । अथानुमानिक्येवाप्तशब्दादर्थप्रतीतिः कथं । "पादपार्थविवक्षावान् पुरुषोऽयं प्रतीयते । वृक्षशब्दप्रयोक्तृत्वात्पूर्वावस्थास्वहं यथा" । १ । इति विवक्षामनुमाय सत्या विवक्षेयमाप्तविवक्षात्वान्मद्विवक्षावदिति वस्तुनो निर्णयाद्दिति चेत्तदचतुरस्रमभूदृशव्यवस्थाया अनंतरोक्तवैशेषिकपक्षप्रतिक्षेपेण कृतनिर्वचनत्वात् । किंच शाखादिमति पदार्थे वृक्षशब्दसंकेते सत्येतद्विवक्षानुमानमातन्येतान्यथा वा ? ते तावदन्यथा केनचित्कक्षे वृक्षशब्दं संकेत्य तदुच्चारणादुन्मत्तसुप्तशुकसारिकादिना गोत्रस्खलनवता वान्यथापि तत्प्रतिपादनाच्च हेतोर्व्यभिचारापत्तेः। संकेतपक्षे तु यद्येष तपस्वी शब्दस्तद्वशाद्वस्त्वेव वदेत्तदा किंनाम क्षुण्णं स्यान्न खल्वेवोऽर्थाद्विभेति । विशेषलाभश्चैवं सति यदेवंविधानुभूयमानपारंपर्यपरित्याग इति यदकथि परमार्थतः सर्वतो व्यावृत्तस्वरूपेषु स्वलक्षणेष्वेकार्थकारित्वेनेत्यादि तदपथ्यं यतोऽर्थस्य वाहदोहादेरेकत्वमद्विरूपत्वं समानत्वं वा विवक्षितं न तावदाद्यः षंडमुंडादौ कुंडकांडभांडादिवाहादेरर्थस्य भिन्नस्यैव संदर्शनात् ।

द्वितीयपक्षेऽपि सदृशपरिणामास्पदत्वमन्यव्यावृत्त्यधिष्ठितत्वं वा समानत्वं स्यात् न प्राच्यः प्रकारः सदृशपरिणामस्य सौगतैरस्वीकृतत्वात् । न द्वितीयः अन्यव्यावृत्तेरतात्विकत्वेन वांध्येयस्येव स्वलक्षणेऽधिष्ठानासंभवात् । किं चान्यतः सामान्येन विजातीयाद्वा व्यावृत्तिरन्यव्यावृत्तिर्भवेत् प्रथमपक्षे न किंचिदसमानं स्यात्सर्वस्यापि सर्वतो व्यावृत्तत्वात् द्वितीये तु विजातीयत्वं वाजिकुंजरादिकार्याणां वाहादिसजातीयत्वे सिद्धे सति स्यात्तच्चान्यव्यावृत्तिरूपमन्येषां विजातीयत्वे सिद्धे सतीति स्पष्टं परस्पराश्रयत्वमिति एवं चकारेणैक्यं प्रत्यवमर्शैक्यं च विकल्प्य दूषणीयं । अपि च यदि बुद्धिप्रतिबिंबात्मा शब्दार्थः स्यात्तदा कथमतो बहिरर्थे प्रवृत्तिः स्यात् । स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायाच्चेत् । ननु कोऽयमर्थाध्यवसायो नाम अर्थसमारोप इति चेत् तर्हि सोयमर्थानर्थयोरग्निमाणवकयोरिव तद्विकल्पविषयभावे सत्येव समुत्पत्तुमर्हति नच समारोपविकल्पस्य स्वलक्षणं कदाचन गोचरतामंचति ॥

यदि वानर्थेऽर्थसमारोपः स्यात्तदा वाहदोहार्थक्रियार्थिनः सुतरां प्रवृत्तिर्न स्यात् नहि दाहपाकाद्यर्थी समारोपितपाचकत्वे माणवके कदाचित्प्रवर्त्तते रजतरूपतावभासमानशुक्तिकायामिव रजतार्थिनोऽर्थक्रियार्थिनो विकल्पात्तत्र प्रवृत्तिरितिचेत् । भ्रांतिरूपस्तर्ह्ययं समारोपस्तथा च कथं ततः प्रवृत्तोऽर्थक्रियार्थी कृतार्थः स्यात् । यथा शुक्तिकायां प्रवृत्तो रजतार्थक्रियार्थीति । यदपि प्रोक्तं कार्यकारणभावस्यैव वाच्यवाचकतया व्यवस्थापितत्वादिति । तदप्ययुक्तं । यतो यदि कार्यकारणभाव एव वा-

च्यवाचकभावः स्यात्तदा श्रोत्रज्ञाने प्रतिभासमानः शब्दः स्वप्रतिभासस्य भवत्येव कारणमिति तस्याप्यसौ वाचकः स्यात् ॥

यथा च विकल्पशब्दः कारणमेव परंपरया स्वलक्षणमप्यतस्तदपि वाचकं भवेदिति प्रतिनियतवाच्यवाचकभावव्यवस्थानं प्रलयपद्धतिमनुधावेत्ततः शब्दः सामान्यविशेषात्मकार्थावबोधनिबंधनमेवेति स्थितं स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबंधनं शब्द इत्युक्तम् अथ किमस्य शब्दस्य स्वाभाविकं रूपं किंच परापेक्षमिति विवेचयंति । अर्थ प्रकाशकत्वमस्य स्वाभाविकं प्रदीपवद्यथार्थत्वायथार्थत्वे पुनः पुरुषगुणदोषावनुसरत इति अर्थप्रकाशकत्वमर्थावबोधसामर्थ्यमस्य शब्दस्य स्वाभाविकं परानपेक्षं प्रदीपवत् यथा प्रदीपः प्रकाशमानः शुभमशुभं वा यथा सन्निहितभावमवभासयति तथा शब्दोपि वक्त्रा प्रयुज्यमानः श्रुतिवर्त्तनीमवतीर्णः सत्येऽनृते वा समन्वितेऽसमन्विते वा सफले निष्फले वा सिद्धे साध्ये वा वस्तुनि प्रतिपत्तिमुत्पादयतीति तावदेवास्य स्वाभाविकरूपं । अयं पुनः प्रदीपाच्छब्दस्य विशेषो यदसौ संकेतव्युत्पत्तिमपेक्षमाणः पदार्थे प्रतीतिमुपजनयति प्रदीपस्तुतन्निरपेक्षः यथार्थत्वायथार्थत्वे सत्यार्थत्वासत्यार्थत्वे पुनः प्रतिपादकनराणांशुद्धत्वाशुद्धत्वे अनुसरता पुरुषगुणदोषापेक्षे इत्यर्थः । तथाहि सम्यग्दर्शिनि शुचौ पुरुषे वक्तरि यथार्था शाब्दी प्रतीतिरन्यथा तु मिथ्यार्थेति स्वाभाविके तु याथार्थ्ये मिथ्यार्थत्वे चास्याः स्वीक्रियमाणे विप्रतारकेतरपुरुषप्रयुक्तवाक्येषु व्यभिचाराव्यभिचारनियमो न भवेत् । पुरुषस्य च करुणादयो गुणा द्वेषादयो दोषाः प्रतीता एव । तत्र च यदि पुरुषगुणानां प्रामाण्यहेतुत्वं नाभिमन्यते जैमिनीयैस्तर्हि दोषाणामप्यप्रामाण्यनिमित्तता मा भूत् । दोषप्रशमनचरितार्था एव पुरुषगुणाः ॥ प्रामाण्यहेतवस्तु न भवंतीत्यत्र चाकाशयानमेव शरणं श्रोत्रियाणामिति ॥ रत्ना० ॥

(१८) (शब्दार्थयोर्वाच्यवाचक एव सम्बन्धः) बाह्यो घटादिरर्थः शब्दस्य कथं निमित्तं संबंधाभावात्तदयुक्तं शब्दार्थयोर्वाच्यवाचकसंबंधस्य विद्यमानत्वाद्यथार्थस्य शब्दो वाचकस्तर्ह्यग्रहीतसंकेतस्यापि म्लेच्छादेरसावर्थं प्रतिपादयेदिति चेन्नैव कर्म्मक्षयोपशमसव्यपेक्षस्यैव तस्य तत्प्रतिपादकत्वात् क्षयोपशमस्य च संकेतादिसापेक्षत्वान्न प्रदीपः प्रकाशक इत्येतावन्मात्रेणैवांधादीनामप्यर्थं प्रकाशयति । ननु यदि क्षयोपशमापेक्षः शब्दोऽर्थं प्रकाशयति तर्हि संकेतकरणेऽपि तदप्रकाशनप्रसंगो न चैतदस्ति गृहीतसंकेतानामविमानेनार्थप्रतिपत्तिदर्शनात्तत्किमंतर्गडुकल्पक्षयोपशमकल्पनेन । तदयुक्तं । तथाहि केषांचिज्जडमतीनां शास्त्रव्याख्यानादौ विषमपदवाक्येषु विशिष्टक्षयोपशमाभावात्संकेतोऽपि कर्तुं न शक्यते अन्ये तु तत्करणेऽपि नार्थं प्रतिपद्यंते तदपि केषांचिदपूर्वम्लेच्छभाषादिश्रवणे क्षतसंकेतानामपि झटित्येव कथमप्यर्थप्रतिपत्तिर्दृश्यते तत्रापि क्षयोपशमस्यैवातिपटुत्वं हेतुः तस्मात्कर्मक्षयोपशमादिसामग्रीसव्यपेक्षः शब्दो वाचकः अर्थस्तु वाच्य इति शब्दार्थयोर्वाच्यवाचकभावलक्षणः संबंध इति । विशे० ॥

( सम्मतितर्कस्याद्वादरत्नावतारिकादिग्रन्थेभ्यो विशेषोऽवगन्तव्यः ) ।

( १९ ) शब्दस्य पौद्गलिकत्वमाकाशगुणत्वमिति शब्दशब्दे) आ. म. । नं. ॥ अने. ॥ ( आगमस्य हेतुवादाहेतुवादभेदेन वैचित्र्यं सम्मतितर्के यथा ॥

दुविहो धम्मावाओ हेउवाओ अहेउवाओ य । तत्थ उ अहेउवाओ भवियाभवियादओ वाओ ॥

वस्तुधर्म्माणामस्तित्वादीनामा समंताद्वाद स्तद्विरीतस्त्वसौ हेत्वहेतुवादभेदेन द्वैविध्यं प्रतिपद्यते प्रमाणांतरानवगतवस्तुप्रतिपादक आगमो हेतुवादस्तद्विपरीतस्त्वहेतुवादः हिनोति गमयत्यर्थमिति हेतुस्तत्परिच्छिन्नेऽर्थोऽपि हेतुस्तं वदति य आगमः स हेतुवादो यस्तु वस्तुस्वरूपप्रतिपादकत्वेऽपि तद्विपरीतोऽसावहेतुवादः दृष्टिवादात् प्रायेणान्यस्तत्र त्वहेतुवादः भव्याभव्यस्वरूपप्रतिपादक आगमस्तद्विभागप्रतिपादने अध्यक्षादेः प्रमाणांतरस्याप्रवृत्तेर्नह्ययं भव्योऽयं त्वभव्य इत्यत्रागमेन प्रमाणांतरप्रवृत्तिसंभवः अस्मदाद्यपेक्षया, ननु तद्विभागप्रतिपादकं वचो यथार्थमर्हद्वचनत्वादनेकांतात्मकवस्तुप्रतिपादकवचोवदित्यनुमानात् । तद्विभागप्रतिपत्तौ कथं न तस्यानुमानविषयता नैवमप्यागमादेव तद्विभागप्रतिपत्तेस्तद्व्यतिरेकेण प्रमाणांतरस्य तत्प्रतिपत्तिनिबंधनस्याभावात् अर्हदागमस्य च प्राधान्यार्थसंवादनिबंधनतत्प्रणीतत्वनिश्चयेऽनुमानतोऽतींद्रियार्थविषये प्रामाण्यं निश्चीयत इत्यभ्युपगम्यत एवागमनिरपेक्षस्य तु प्रमाणांतरस्यास्मदादेस्तत्र प्रवृत्तिर्न विद्यत इत्येतावता अहेतुवादत्वमेतद्विषयागमस्योच्यत इति वचनव्यापारं केवलमपेक्षतेऽयं क्रमः । यदा तु ज्ञानदर्शनचारित्रत्रितये तथा तदनुष्ठानप्रवणस्तद्विकलश्च पुरुषः प्रतीयते तदानुमानगम्योऽपि तद्विभागो भवति यथा भव्योऽभव्यो वाऽयं पुरुषः सम्यग्ज्ञानादिपरिपूर्णत्वाभ्यां लोकप्रसिद्धभव्याभव्यपुरुषवत् ॥ अहेतुवादागमावगते धर्मिणि भव्याभव्यस्वरूपे तद्विपरीतनिर्णयफलो हेतुवादः प्रवृत्तो योऽयमागमे भव्यादिरभिहितः स तथैव यथोक्तहेतुसद्भावादित्याह—

नवि सम्म दंसणणाणचरित्तपडिवत्तिसंपन्नो । णियमा दुक्खं कडोत्ति लक्खणं हेउवाउस्स ॥

भव्योऽयं सम्यग्दर्शनचारित्रप्रतिपत्तिसंपूर्णत्वायुक्तपुरुषवत् तत्परिपूर्णत्वादेव नियमात्संसारदुःखांतं करिष्यति कर्मव्याधेरात्यंतिकविनाशमनुभविष्यति तन्निबंधनमिथ्यात्वादिप्रतिपक्षाभ्याससात्मीभावात् व्याधिनिदानप्रतिकूलाचरणप्रवृत्तस्तथाविधातुरवत् यः पुनर्न तत्प्रतिपक्षाभ्याससात्म्यवान्नासौ दुःखांतकृद् भविष्यति तन्निदानानुष्ठानप्रवृत्तस्तथाविधातुरवत् इति हेतुवादस्य लक्षणं हेतुवादप्रायो दृष्टिवादस्तस्य द्रव्यानुयोगत्वात् सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इत्यादेरनुमानादिगम्यस्यार्थस्य तत्र प्रतिपादनात् । यथात्रानुमानादिगम्यता तथा गंधहस्तिप्रभृतिभिर्विक्रांतमिति नेह प्रदर्श्यते ग्रंथविस्तरभव्याज्जीवाजीवाश्रवसंवरनिर्जरामोक्षास्तत्वमित्युभयवादागमप्रतिपाद्यान् भावांस्तथैवासंकीर्णरूपान् प्रतिपादयन् सैद्धान्तिकः पुरुष इतरस्तु तद्विराधक इत्याह—

जो हेउवायपक्खम्मि हेउओ आगमे य आगमिओ

सो समयपण्णवओ सिद्धंतविराहओ अन्नो ।

ये हेतुवादागमविषयमर्थंहेतुवादागमेन तद्विपरीतागमविषयं चार्थमागममात्रेण दर्शयति वक्ता स स्वसिद्धांतस्य द्वादशांगस्य प्रतिपादनकुशलः अन्यथा प्रतिपाद्यँश्च तदर्थश्च प्रतिपादयितुमशक्यत्वात् तत्प्रतिपादके वचसि अनवस्थादिदोषमुत्पादयन् सिद्धांतविराधको भवति सर्वज्ञप्रणीतागमस्य निःसारतादर्शनात् तत्प्रत्यनीको भवतीति यावत् तथाहि पृथिव्यादेर्मनुष्यपर्यंतस्य षड्विधजीवनिकायस्य जीवत्वमागमेनानुमानादिना च प्रमाणेन सिद्धं तथैव प्रतिपादयन् स्वसमयप्रज्ञापकोऽन्यथा तद्विराधको यतः प्रव्यक्तचेतने त्रसनिकाये चैतन्यलक्षणं जीवत्वं स्वसंवेदनाध्यक्षतः स्वात्मनि प्रतीयते परत्र त्वपरेणानुमानतो वनस्पतिपर्यंतेषु पृथिव्यादिषु स्थावरेषु त्वनुमानं ततश्चैतन्यप्रतिपत्तिस्तथाहि वनस्पतयश्चेतना वृक्षायुर्वेदाभिहितप्रतिनियतकालायुष्कविशिष्टौषधयोगसंपादात्तवृद्धिहानिक्षतभग्नसंरोहणप्रतिनियतवृद्धिषड्भावविकारोत्पादानसावस्थानियतविशिष्टशरीरस्निग्धत्वरुक्षत्वविशिष्टदौहदसुकुमारवृद्धावस्थाप्रतिनियतविशिष्टरसवीर्यविपाकप्रतिनियतप्रदेशाहारग्रहणादिमत्वान्यथानुपपत्तेर्विशिष्टस्त्रीशरीरवदित्याद्यनुमानं भाष्यकृत्प्रभृतिभिर्विस्तरतः प्रतिपादितं तच्चैतन्यप्रसाधकमित्यनुमानतस्तेषां चैतन्यमात्रं सिद्ध्यति साधारणप्रत्येकशरीरत्वादिकस्तु भेदः

गूढशिरसंधिपव्वं समभंगमहीरुहं च छिन्नरुहं । साहारणं सरीरं तव्विवरीयं च पत्तेयं ॥

इत्याद्यागमप्रतिपाद्य एव जीवलक्षणव्यतिरिक्तलक्षणास्त्वजीवा धर्माधर्माकाशपुद्गलभेदेन पंचविधास्तत्रपुद्गलास्तिकायव्यतिरिक्तानां ततो मूर्तिमद्द्रव्यसंबंधमंतरेणात्मद्रव्यवदमूर्त्तत्वादनुमानप्रत्ययावसेयता तथाहि गतिस्थित्यवगाहलक्षणं पुद्गलास्तिकायादिकार्यं विशिष्टकारणप्रभवं विशिष्टकार्यत्वात् शाल्यंकुरादिकार्यवद्यश्चासौ कार्यविशेषः स धर्माधर्माकाशलक्षणो यथासंख्यमवसेयः कालस्तु विशिष्टपरापरप्रत्ययादिलिंगानुमेयः पुद्गलास्तिकायस्तु प्रत्यक्षानुमानलक्षणप्रमाणद्वयगम्यो यस्तेषां धर्मादीनां संख्येयप्रदेशात्मकत्वादिको विशेषस्तत्प्रदेशानां च सूक्ष्मतरत्वादिको विभागः "सकालो य होइ सुहुमो" इत्याद्यागमप्रतिपाद्यानागमनिरपेक्षयुक्त्यवसेय एवमाश्रवादिष्वपि तत्त्वेषु युक्त्या गम्येषु युक्तिगम्यं तु केवलागमत एव प्रदर्श्यते स्वसमयप्रज्ञापक इतरस्तु तद्विराधक इति प्रज्ञापकलक्षणमवगंतव्यम् ॥ सम्म० ॥

(२०) आगमस्य च सर्वव्यवहारनियामकत्वम् तथा च योगबिन्दौ—

"आगमात्सर्व एवायं व्यवहारःस्थितो यतः । तत्रापि हाठिको यस्तु हंताज्ञानां स शेखरः" ॥ १ ॥

आगमाद्गुरुवचनप्रत्ययरूपात्सर्व एव निखिलोऽप्ययं योगमार्गोपयोगी व्यवहारो हेयोपादेययोर्हानोपादानरूपः स्थितः प्रतिष्ठितो यतो यस्मादतींद्रियफलत्वात्तस्यातींद्रियफलेषु चानुष्ठानेषु शास्त्रस्यैव प्रतीतिहेतुत्वात् ततस्तत्राप्यागमाधीने व्यवहारे किं पुनरितररूपे इत्यपि शब्दार्थः । हाठिकः स्वविकल्पप्रवृत्त्यागमनिरपेक्षत्वेन बलात्कारचारी यस्तु यः पुनर्योगी हंतेति सन्निहितसभ्यामंत्रणमज्ञानामबुद्धिमतां स शेखरः शिरोमणिर्वर्त्ततेऽनुपायप्रवृत्तत्वात्तस्य । किं च तत्कारस्यात्मनियमात्तद्द्वेषी चेति यो जडः आगमार्थे तमुल्लंघ्य तत एव प्रवर्त्तते तत्कारी तत्करणशीलः स्याद्भवेत्स नियमादवश्यंभावेन तद्द्वेषी च स्वयमेव क्रियमाणवस्तुद्वेषवांश्चेत्येतत्तद्रूपः संपद्यते यः कश्चिज्जडो मंद आगमार्थे आगमविहिते चैत्यवन्दनादौ विधातुमिष्टे तमागममुल्लंघ्यातिक्रम्य तत एवागमादेव प्रवर्त्तते आगमनिरूपितविधिनिरपेक्षितया आगमार्थमनुतिष्ठत्यपि न तद्भक्तः किंतु तद्द्विष एव द्वेषमंतरेण तदुल्लंघनाभावादिति भावः ॥ यो० विं० ॥

( अतीन्द्रियार्थप्रत्यायकस्त्वागम एव )

"आगमश्चोपपत्तिश्च संपूर्णं दृष्टिलक्षणं ॥ अतींद्रियाणामर्थानां सद्भावप्रतिपत्तये ॥ १ ॥ आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः वीतरागोऽनृतं वाक्यं न ब्रूयाद्धेत्वसंभवात्" ॥ २ ॥ दश० । अनु० ॥

( तथाच द्वात्रिंशिकायाम् )

"शास्त्रस्यैवावकाशो च कुतर्काग्रहतस्ततः ॥ शीलवान् योगवानत्र श्रद्धावाँस्तत्वविद्भवेत् ॥ १३ ॥ तत्वतः शास्त्रभेदश्च न शास्तृणामभेदतः मोहस्तदधिमुक्तीनां तद्भेदाश्रयणं ततः" ॥ १४ ॥ द्वा० ॥

अत्रातींद्रियार्थसिद्धौ शास्त्रस्यैवावकाशस्तस्यातींद्रियार्थसाधनसमर्थत्वाच्छुष्कतर्कस्यातथात्वात्तदुक्तं "गोचरस्त्वागमस्यैव ततस्तदुपलब्धितः । चंद्रसूर्योपरागादिसंवाद्यागमदर्शनात् ॥ १ ॥ ततस्तस्मात् कुतर्काग्रहतोऽत्र शास्त्रे श्रद्धावान् शीलवान् परद्रोहविरतिः योगवान् सदा तत्परः तत्वविद्धर्मायतींद्रियार्थदर्शी भवेत् ॥ १३ ॥ ननु शास्त्राणामपि भिन्नत्वात्कथं शास्त्रश्रद्धापि स्यादित्यत आह तत्वत इति तत्वतो धर्मवादापेक्षतात्पर्यग्रहच्छास्त्रभेदश्च नास्ति- शास्तृणां धर्मप्रणेतृणामभेदतस्तत्तन्नयापेक्षदेशनाभेदेनैव स्थूलबुद्धीनां तद्भेदाभिमानादत एवाह ततस्तस्मात्तदधिमुक्तीनां शास्तृश्रद्धावतां तद्भेदाश्रयणं शास्तृभेदांगीकारणं मोहोऽज्ञानं निर्दोषत्वेन सर्वेषामैकरूप्यात् तदुक्तं "न तत्वतो भिन्नमताः सर्वज्ञा बहवो यतः । मोहस्तदधिमुक्तीनां तद्भेदाश्रयणं ततः ॥ १४ ॥ द्वा० टी० ॥

अस्थानं रूपमंधस्य यथा सन्निश्चयं प्रति । तथैवातींद्रियं वस्तु छद्मस्थस्यापि तत्वतः" ॥ २५ ॥ हस्तस्पर्शसमं शास्त्रं तत एव कथंचन । अत्र तन्निश्चयोऽपि स्यात्तथाचंद्रोपरागवत् ॥ २६ ॥ द्वा० ॥

अस्थानमिति अस्थानमविषयो रूपं नीलकृष्णादिलक्षणमंधस्य लोचनव्यापारविकलस्य यथा सन्निश्चयं विशदावलोकनं प्रत्याश्रित्य तथैवोक्तन्यायेनैवातींद्रियं वस्त्वात्मादिविशेषरूपं छद्मस्थस्यार्वाग्दृशः परमार्थेष्वपि तत्वतः परमार्थनीत्या ॥ २५ ॥ हस्तेति हस्तस्पर्शसमं तद्वस्तूपलब्धिहेतुहस्तस्पर्शसदृशं शास्त्रमतींद्रियार्थगोचरं तत एव शास्त्रादेव कथंचन

केनापि प्रकारेणात्र छद्मस्थे प्रमातरि तन्निश्चयोऽप्यतींद्रियवस्तुनिर्णयोऽपि स्यात्तथा वर्द्धमानत्वादिविशेषेण चंद्रोपरागवच्चंद्रराहुस्पर्शवत् यथा शास्त्रात् सर्वविशेषानिश्चयेऽपि चंद्रोपरागः केनापि विशेषेण निश्चीयत एव तथान्यदप्यतींद्रियं वस्तु ततश्छद्मस्थेन निश्चीयत इति भावः ॥ ॥ २६ ॥ द्वा० टी० ॥

( आगमस्य परलोकादिसाधकत्वम् यथा ) आगमप्रमाणबलाद्धि सकलमपि परलोकादिपरस्वरूपं यथावदनुगम्यंते नान्यतस्तेन यदुच्यते प्रज्ञाकरगुप्तेन "दीर्घकालसुखादृष्टाविच्छा तत्र कथं भवेदिति" तदपास्तमवसेयं आगतौ दीर्घकालसुखस्य दर्शनात् । न चागमस्य न प्रामाण्यं तदप्रामाण्ये सकलपरलोकानुष्ठानप्रवृत्त्यनुपपत्तेः उपायांतराभावात् ।नं०।

शास्त्रमासन्नभव्यस्य मानमामुष्मिके विधौ । सेव्यं यद्विचिकित्सायां समाधिप्रतिकूलता ॥ ३० ॥ द्वा० ॥

शास्त्रमिति आसन्नभव्यस्यादूरवर्त्तिमोक्षलाभस्य प्राणिन आमुष्मिके विधौ पारलौकिके कर्मणि शास्त्रं मानं धर्माधर्मयोरतींद्रियत्वेन तदुपायत्वबोधने प्रमाणांतरासामर्थ्यादतः सेव्यं सर्वत्र प्रवृत्तौ पुरस्करणीयं नतु क्वचिदप्यंशेनादरणीयं यद् यस्माद्विचिकित्साया युक्त्या समुपपन्नेऽपि मतिव्यामोहोत्पन्नचित्तविप्लुतिरूपायाः समाधेश्चित्तस्वास्थ्यरूपस्य ज्ञानदर्शनचारित्रात्मकस्य वा प्रतिकूलता विरोधितास्ति अर्थो हि त्रिविधः सुखाधिगमो दुरधिगमोऽनधिगमश्चेति श्रोतारं प्रतिभिद्यते आद्यो यथा चक्षुष्मतश्चित्रकर्मनिपुणस्य रूपसिद्धिर्द्वितीयस्यैवानिपुणस्य तृतीयस्त्वंधस्येति तत्र प्रथमचरमयोर्नास्त्येव विचिकित्सा निश्चयादसिद्धेश्च द्वितीये तु देशकालस्वभावविप्रकृष्टे धर्माधर्मादौ भवंती सा महानर्थकारिणी ॥ यदागमः "वितिगिंछसमावन्नेणं अप्पाणेणं णो लहति समाहिं" अतश्चित्तशुद्ध्यर्थं शास्त्रमेवादरणीयमिति भावः यत उक्तं । "मलिनस्य यथात्यंतं जलं वस्त्रस्य शोधनं । अंतःकरणरत्नस्य तथा शास्त्रं विदुर्बुधाः ॥ २० ॥ टी० ॥

( २१ ) धर्ममार्गे चागमस्यैव प्रामाण्यम्–कुशीलानामागमाप्रमाण्यम् )

जम्हा न धम्ममग्गे मोत्तूणं आगमं इह पमाणं। विज्जइ छउमत्थेणं तम्हा एत्थेव जइअव्वं ॥ ७ ॥

व्या० । यस्मान्न धर्ममार्गे परलोकगामिनि मुक्त्वा आगममेकं परमार्थत इह प्रमाणं प्रत्याख्यादि विद्यते छद्मस्थानां प्राणिनां तस्मादत्रैवागमे कुग्रहान्विहाय यतितव्यं । जिज्ञासाश्रवणानुष्ठाने यत्नः कार्यो नागीतार्थजनाचरणपरेण भवितव्यमिति गाथार्थः ।

प्रत्यपायप्रदर्शनद्वारेणैतदेवाह—

सुअवज्झायरणया पमाणयंता तहाविहं लोअं । भुअणगुरुणोवरागा पमाणयं नावगच्छंति ॥ ८ ॥

व्या० । श्रुतबाह्याचरणरताः आगमबाह्यानुष्ठानसक्ताः प्रमाणयंतः संतः कर्नाचिच्चोदनायां क्रियमाणायां तथाविधं लोकं श्रुतबाह्यमेवागीतादिकं किमित्याह भुवनगुरोर्भगवतस्तीर्थकरस्य वराकास्तेऽप्रमाणतामर्थापत्तिसिद्धा नावगच्छंति । तथाहि यदि ते सूत्रबाह्यस्य कर्त्तारः प्रमाणं भगवाँस्तर्हि तद्विरुद्धसूत्रार्थवक्ता अप्रमाणमिति महामिथ्यात्वं बलादापद्यत इति गाथार्थः ।

अत एव प्रक्रमाद्धर्म्मानधिकारिणमाह—

सुत्तेण चोइओ जो अप्पं उद्दिसिअं तण्णपडिवज्जे । सोतत्तायत्तभो न होइ धम्मंमि अहिगारी ॥ ९ ॥

व्या० ॥ सूत्रेण चोदित इदमित्थमुक्तमेवं यः सत्वः अन्यं प्राणिनं मुदियात्मतुल्यमुदाहरणतया तन्न प्रतिपद्यते। सौत्रमुक्तं स एवंभूतस्तत्त्ववादबाह्यः परलोकमंगीकृत्य परमार्थवादबाह्येन भवति । धर्म्मे सकलपुरुषार्थहेतावधिकारी सम्यग्विवेकाभावादिति गाथार्थः ॥ ९ ॥

अत्रैव प्रक्रमे किमित्याह–

अतीअबहुसायणाणं तक्किरिआदरिसणा कह पमाणं । वोच्छिज्जंती अइमा सुद्धा इह दीसई चेव ॥ १० ॥

व्या० ॥ अतीता बहुश्रुतज्ञानमतीताअप्याचार्या बहुश्रुता एव तैः कस्मादिदं वंदनकायोत्सर्गादि नानुष्ठितमित्येवंभूतं किमित्याह—तत्क्रियादर्शनादतीतबहुश्रुतसंबंधिक्रियादर्शनात्कारणात्कथं प्रमाणं नैव प्रमाणं न ज्ञायते । ते कथं वंदनादिक्रियां कृतवंत इति । नचेदानीं तेन साधुमात्रगतक्रियानुसारतः तत्तथा तदवगम इत्याह । व्यवच्छिद्यमाना चेयं क्रिया शुद्धा आगमानुसारिणी इह लोके सांप्रतमपि दृश्यत एव कालदोषादिति गाथार्थः ॥ १० ॥

उपसंहरन्नाह—

आगमपरतंतेहिं तम्हा णिच्छंति सिद्धिकंखीहिं । सव्वगुट्ठाणं खलु कायव्वं अप्पमत्तेहिं ॥ ११ ॥

व्या० । यस्मादेवमागमपरतंत्रैः सिद्धांतापत्तेः तस्मान्नित्यं हि सर्वकालमपि सिद्धिकांक्षिभिर्भव्यसत्त्वैः सर्वमनुष्ठानं खलु वंदनादि कर्त्तव्यमप्रमत्तैः प्रमादरहितैरिति गाथार्थः ॥ ११ ॥ पं. व. ॥

मोक्षमार्गे चागमस्यैव प्रामाण्यम्—

" जम्हा न मोक्खमग्गे मोत्तूणं आगम इह पमाणं । विज्जइ छउमत्थाणं तम्हा तत्थेव जइयव्वं ॥

यस्मान्न नैव मोक्षमार्गे मोक्षे साध्ये मोक्षागमशास्त्रे परित्यज्येत्यर्थ इहेति धर्मविचारे प्रमाणमालंबनमित्यर्थः । विद्यते छद्मस्थानामतिशयवतां हि कथं चेत्सेवातिशयवशात्प्रवर्त्तमानानामपि निर्जरालाभ एवावसीयते तद्रहितैः पुनः सर्वथा शास्त्रमेव प्रमाणीकर्त्तव्यं । तस्मात्तत्रैव यतितव्यमुद्यमः कार्य इति गाथार्थः ॥ दर्श० ॥

धर्म्माधर्मव्यवस्थायां शास्त्रमेवनियामकम् । तदुक्तासेवनाद्धर्मस्त्वधर्मस्तद्विपर्ययात् ॥ १ ॥ पो० ॥

( आगमावलंबनस्यैवैहिकामुष्मिकफलसिद्धिहेतुत्वम्. ) धर्मार्थिना धर्ममार्गे प्रवर्त्तमानेन आगमावलंबनेनैव प्रवर्त्तितव्यं तस्यैवैकस्यैहिकामुष्मिकफलसिद्धिहेतुतयोपादेयत्वात् अन्यस्य पुरुषमात्रस्यावलंबने तदुच्छेदः स्यादित्येतद्दर्शयन्निदमाह ॥

किं वा देइ वराओ मणुओ सुट्ठुवित्तणी विभत्तो वि । आणाअइक्कमं पुण तयं पि अणंतदुहहेऊ ॥ १ ॥

व्या० ॥ किं वा न किंचिद्ददाति प्रयच्छति वराकोऽत्यंतशक्तिरहितो मनुजो नरः सुष्ठ्वपि अतिशये भवतीतरधान्यादिसंपदुपेतः भक्तोऽपि भक्तपानवस्त्रपात्रादिदानमर्थ एव स्यान्न पुनः सुगतेः आज्ञातिक्रमणं भगवदाज्ञोल्लंघनं पुनः परापेक्षयापि तनुकमपि स्वल्पमपि आस्तां तावद्बह्वीत्यपि शब्दार्थः अनंतदुःखहेतुरनंतसंसारनिबंधनमित्यर्थः" अयपेक्षया सर्वविदाज्ञोल्लंघनं क्रियते स हि हारादिदानमात्र एव समर्थः न पुनः कुगतिरक्षाक्षमः अतः किं तदपेक्षया भगवदाज्ञोल्लंघनेनानंतसंसारनिवर्त्तनेनेति गाथार्थः ॥ दर्श० ॥

( युक्त्युपपन्नस्यैव सदागमत्वम् तथा च पञ्चाशके ) नागममात्रमेवार्थप्रतिपत्तिहेतुर्भवतीति दर्शयन्नाह ॥

जुत्तीए अविरुद्धो सदागमा सावि तय विरुद्धात्ति । इय अण्णोण्णाणुगयं उभयं पडिवत्तिहेउत्ति ॥ ४५ ॥

व्या० ॥ युक्त्या उपपत्त्याऽविरुद्धो बाधितः सदागमः सत्सिद्धांतो भवति । सापि युक्तिरपि तदविरुद्धा सिद्धांताविरुद्धा स्यात्तदन्या त्वयुक्तिरेव इति वाक्यार्थसमाप्तौ इति । एवमन्योऽन्यानुगतं परस्परानुयायि उभयं युक्तिसदागमरूपं द्वयं प्रतिपत्तिहेतुरर्थप्रतीतिकारणमिति शब्दः समाप्ताविति गाथार्थः ॥ पंचा० ॥

( षोडशप्रकरणेऽपि )

वचनाराधनया खलु धर्म्मस्तद्बाधया त्वधर्म्म इति । इदमत्र धर्म्मगुह्यं सर्वस्वं चैतदेवास्य ॥ षो० ॥

वचनेत्यादि वचनाराधनया आगमाराधनयैव खलुशब्द एवकारार्थः । धर्म्मश्रुतचारित्ररूपः संपद्यते तद्बाधयानुवचनबाधया तु धर्म्ममहाकष्टकारिणोऽपि इति इदमत्र विधिप्रतिषेधरूपं वचनमागमाख्यं धर्म्मगुह्यं धर्म्मरहस्यं सर्वस्वं चैतदेवमस्य धर्मस्य एतद्धवचनमेव सर्वस्वं सर्वसारो वर्त्तते ॥ षो० टी० ॥

एकेति एकापि जिनेशगीः अर्हद्वाणी अर्हन्मुखान्निर्गच्छमाना अद्वितीया यथाभाषितं तथा श्रूयमाणा तथा अनाद्या आदिरहिता एकेन तीर्थकृता यदुपदिष्टं तदनेकेषां पूर्वतरतीर्थकृतामपि तथैव निरूप्यमाणत्वात् आदिरहिता पुनः कीदृशी समस्ततत्त्वमवितर्कैः विचारैर्विस्तरं बहुभेदतां प्राप्य बहुप्रकारैर्बहुधा विस्तृतं दिग्वाससां मतमपि जिनमतं धृत्वा एतादृशनयानां अनेकाकारतां प्रवर्त्तयति अतस्तन्मतेऽपि यद्विमृश्यमानं सत्यं जायते तदेवांगीकुरु यच्चासत्यं तत्सर्वमपि त्यज स्वयं आत्मना हे स्वीयहिताभिलाषिन् निजहितकांक्षिन् शब्दांतरत्वेन तन्मतमपि न द्वेषविषयीकर्त्तव्यं सर्वमपि अर्थैकत्वविवक्षयासमंजसमेवेति ॥ द्रव्या० टी० ॥

( २२ ) अंगचूलिकायामपि )

सेवं भंते सेवं भंते ! तमेव सच्चं णिसंकं जं जिणेहिं पवेइयं ॥ १ ॥ हंता जंबू ! तमेव सच्चं निस्संकं । जं जिणेहिं पवेइयं । कहं आगासमंडलाओ निवडिआइ वभासह । अम्मापिऊणं संजो असंताणे भवति । किं अन्नहा वि भवति हि पवेइयं हंता जंबू ! तमेव सच्चं निस्संकं जं जिणेहिं पवेइयं ॥ अंग० ॥

( भगवत्यामपि )

से णूणं भंते ! तमेव सच्चं नीसंकं जं जिणेहिं पवेइयं । हंता गोयमा ! तमेव सच्चं नीसंकं एवं जाव पुरिसक्कार परक्कमेइ वा ॥ भ० ॥

( जिनागमस्य सिद्धत्वम् दशवैकालिके यथा )

जिणवयणं सिद्धं चेव भन्नई कत्थई उदाहरणं । आसज्ज उ सोयारं हेऊ वि कहिं विभन्नेज्जा ॥ ४९ ॥

जिनाः प्राग्निरूपितस्वरूपाः तेषां वचनं जिनवचनं तदाज्ञया सिद्धमेव सत्यमेव प्रतिष्ठितमेव अविचार्यमेवेत्यर्थः । कुतः जिनानां रागादिरहितत्वाद्रागादिमतश्च सत्यवचनासंभवादुक्तंच—

"रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतं । यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यादित्यादि" दश० ॥

(परप्रवादानां मत्सरित्वम् जिनागमस्यामत्सरित्वम् तथा च स्याद्वादमञ्जर्याम्. ) अधुना परदर्शनानां परस्परविरुद्धार्थसमर्थकतया मत्सरित्वं प्रकाशयन् सर्वज्ञोपज्ञसिद्धांतस्यान्योन्यानुगतसर्वनयमयतया मात्सर्याभावमाविर्भावयति ॥

"अन्योन्यपक्षप्रतिपक्षभावात् यथा परे मत्सरिणः प्रवादाः नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथा ते" ।३०।

व्याख्या० ॥ प्रकर्षेणोद्यते प्रतिपाद्यते स्वाभ्युपगतोऽर्थो यैरिति प्रवादाः यथा येन प्रकारेण परे भगवच्छासनादन्ये प्रवादाः परदर्शनानि मत्सरिणः अतिशायिनि मत्वर्थीयविधानात्सातिशयाः सहमत्सरशालिनः क्रोधकषायकलुषितांतःकरुणाः संतः पक्षपातिनः इतरपक्षतिरस्कारेण स्वकक्षीकृतपक्षव्यवस्थापनप्रवणा वर्त्तते कस्माद्धेतोर्मत्सरिण इत्याह-अन्योन्यपक्षप्रतिपक्षभावात् । पक्ष्यते व्यक्तीक्रियते साध्यधर्मवैशिष्ट्येन हेत्वादिभिरिति पक्षःकक्षीकृतधर्मप्रतिष्ठापनाय साधनोपन्यासस्तस्य प्रतिकूलः पक्षः प्रतिपक्षः पक्षस्य प्रतिपक्षो विरोधी, पक्षप्रतिपक्षस्तस्य भावः पक्षप्रतिपक्षभावः अन्योन्यं परस्परं यः पक्षप्रतिपक्षभावः । पक्षप्रतिपक्षत्वं अन्योन्यपक्षप्रतिपक्षभावस्तस्मात् तथाहि य एव मीमांसकानां नित्यः शब्दः इति पक्षः स एव सौगतानां प्रतिपक्षस्तन्मते शब्दस्यानित्यत्वात् य एव सौगतानां अनित्यः शब्द इति पक्षः स एव मीमांसकानां प्रतिपक्ष एवं सर्वयोगेषु योज्यं । तथा तेन प्रकारेण ते तव सम्यगेति गच्छति शब्दोऽर्थमनेनेति पुन्नाम्नि घे। समयः संकेतो यद्वा सम्यगवैपरीत्येनाय्यंते ज्ञायंते जीवाजीवादयोऽर्था अनेन समयः सिद्धांतोऽथवा सम्यगयंते गच्छंति जीवादयः पदार्थाः स्वस्मिन् रूपे प्रतिष्ठां प्राप्नुवंति अस्मिन्निति समय आगमः न पक्षपाती नैकपक्षानुरागी पक्षपातित्वस्य कारणं मत्सरित्वं परप्रवादेपूक्तं त्वत्समयस्य च मत्सरित्वाभावाच्च पक्षपातित्वं पक्षपातित्वं हि मत्सरित्वेन व्याप्तं व्यापकं च निवर्त्तमानं व्याप्यमपि निवर्त्तयतीति मत्सरित्वे निवर्त्तमाने पक्षपातित्वमपि निवर्त्तत इति भावः । तव समय इति वाच्यवाचकभावलक्षणे संबंधे षष्ठी सूत्रापेक्षया गणधरकर्तृत्वेऽपि समयस्यार्थापेक्षया भगवत्कर्तृकत्वाद्वाच्यवाचकभावो न वि-

रुध्यते। "अत्थं भासइ अरहा सुत्तं गत्थंति गणहरा निउणं" इति वचनात् अथवा उत्पादव्ययध्रौव्यप्रपंचः समयस्तस्य च भगवता साक्षान्मातृकापदरूपतयाभिधानात्। तथा चार्षे "उप्पन्ने वा विगमे वा धुवेति वा"इत्यदोषः। मत्सरित्वाभावमेव विशेषणद्वारेण समर्थयति "नयानशेषानविशेषमिच्छन्" इति अशेषान् समस्तान्नयान् नैगमादीन् अविशेषं निर्विशेषं यथा भवत्येवमिच्छन्नाकांक्षन् सर्वनयात्मकत्वादनेकांतवादस्य यथा विशकलितानां मुक्तामणीनामेकसूत्रानुस्यूतानां हारव्यपदेश एवं पृथगभिसंधीनां अभिप्रायाणां नयानां स्याद्वादलक्षणैकसूत्रप्रोतानां श्रुताख्यप्रमाणव्यपदेश इति।

ननु प्रत्येकं नयानां विरुद्धत्वे कथं समुदितानां निर्विरोधिता? उच्यते यथाहि समीचीनं मध्यस्थं न्यायनिर्णेतारमासाद्य परस्परं विवदमाना विवादाद्विरमंति एवं नया अन्योन्यं वैरायमाणा अपि सार्वज्ञं शासनमुपेत्य स्याच्छब्दप्रयोगोपशमितविप्रतिपत्तयः संतः परस्परमत्यंतसुहृद्भूयावतिष्ठंते एवं च सर्वनयात्मकत्वे भगवत्समयस्य सर्वदर्शनमयत्वमविरुद्धमेव नयरूपत्वाद्दर्शनानां। नच वाच्यं तर्हि भगवत्समयस्तेषु कथं नोपलभ्यत इति समुद्रस्य सर्वसरिन्मयत्वेऽपि विभक्तासु तास्वनुपलंभात्तथा च वक्तृवचनयोरैक्यमध्यवसाय श्रीसिद्धसेनदिवाकरपादाः। "उदधाविव सर्वसिंधवः समुदीर्णास्त्वयि नाथ ! दृष्टयः। नच तासु भवान् प्रदृश्यते प्रविभक्तासु सरित्स्विवोदधिः"। अन्ये त्वेवमाचक्षते यथान्योन्यपक्षप्रतिपक्षभावात्परे प्रवादा मत्सरिणस्तथा तव समयः सर्वनयान्मध्यस्थतयांगीकुर्वाणो न मत्सरी। यतः कथंभूतः पक्षपाती पक्षमेकपक्षाभिनिवेशं पातयति तिरस्करोतीति पक्षपाती रागस्य जेता संनष्टत्वादिति अत्र च व्याख्याने न मत्सरीति विधेयपदं पूर्वस्मिन्पक्षपातीति विशेषः। अत्र च क्लिष्टाक्लिष्टव्याख्यानविवेको विवेकिभिः स्वयं कार्य इति काव्यार्थः॥ स्या०॥

(२३) ( जिनागमप्रशंसा धर्मसंग्रहे यथा ) जिनागमो हि कुशास्त्रजनितसंस्कारविषसमुच्छेदनमंत्रायमाणो धर्माधर्मकृत्याकृत्यभक्ष्याभक्ष्यपेयापेयगम्यागम्यसारासारादिविवेचनाहेतुः संतमसे दीप इव समुद्रे द्वीपमिव मेरौ कल्पतरुरिव संसारे दुरापः जिनादयोऽप्येतत्प्रामाण्यादेव निश्चीयंते यदूचुः स्तुतिषु श्रीहेमसूरयः॥

यदीयसम्यक्त्वबलात्प्रतीमो भवादृशानां परमाप्तभावं। कुवासनापाशविनाशनाय नमोऽस्तु तस्मै जिनशासनाय ॥ १ ॥

जिनागमबहुमानिनां च देवगुरुधर्मादयोऽपि बहुमता भवंति। किंच केवलज्ञानादपि जिनागम एव प्रामाण्येनातिरिच्यते यदाहुः॥

ओहेसु उवउत्तो सुअनाणी जइ हु गिण्हइ असुद्धं। तं केवली वि भुंजइ अपमाणसुअं भवे इहरा ॥ १ ॥

एकमपि च जिनागमवचनं भ विनां भ वनाशहेतुः यदाहुः। एकमपि च जिनवचनाद्यस्मान्निर्वाहकं पदं भवति श्रूयंते चानंताः सामायिकमात्रपदसिद्धाः यद्यपि च मिथ्यादृष्टिभ्य आतुरेभ्य इव पथ्यान्नं न रोचते जिनवचनं तथापि नान्यत्स्वर्गापवर्गमार्गप्रकाशनसमर्थमिति सम्यग्दृष्टिभिस्तदादरेण श्रद्धातव्यं यतः कल्याणभागिन एव जिनवचनं भावतो भावयंति इतरेषां तु कर्णशूलकारितेनामृतमपि विषायते यदि चेदं जिनवचनं नाभविष्यत्तदा धर्माधर्मव्यवस्थाशून्यं भवांधकारे भुवनमपतिष्यत् यथाच "हरीतकीं भक्षयेद्विरेककाम" इति वचनाद्धरीतकीभक्षणप्रभवविरेकलक्षणेन प्रत्ययेन सकलस्याप्यायुर्वेदस्य प्रामाण्यमवसीयते तथाष्टांगनिमित्तकेवलिकाचंद्रार्कग्रहचारधातुवादरससरसायनादिभिरप्याप्तोपदिष्टैर्दृष्टार्थवाक्यानां प्रामाण्यनिश्चयेनाऽदृष्टार्थानामपि वाक्यानां प्रामाण्यं मंदधीभिर्निश्चेतव्यं जिनवचनं दुःषमाकालवशादुच्छिन्नप्रायमिति मत्वा भगवद्भिर्नागार्जुनस्कंदिलाचार्यप्रभृतिभिः पुस्तकेषु न्यस्तं ततो जिनवचनबहुमानिना तल्लेखनीयं वस्त्रादिभिरभ्यर्चनीयं च यदाह॥

न ते नरा दुर्गतिमाप्नुवन्ति न मूकतां नैव जडस्वभावम्।नचांधतां बुद्धिविहीनतां च ये लेखयंतीह जिनस्य वाक्यम्॥१॥

जिनागमपाठकानां भक्तितः सन्माननं च यदाह।

पठति पाठयते पठतामसौ वसनभोजनपुस्तकवस्तुभिः। प्रतिदिनं कुरुते य उपग्रहं स इह सर्वविदेव भवेन्नरः ॥ १ ॥

लिखितानां च पुस्तकानां संविग्नगीतार्थेभ्यो बहुमानपूर्वकं व्याख्यापनं व्याख्यापनार्थं दानं व्याख्यायमानानां च प्रतिदिनं पूजापूर्वकं श्रवणं चेति॥ ध०॥

( २४ ) आगम्यते परिच्छिद्यतेऽर्थोऽनेनेत्यागमः केवलमनःपर्यायावधिपूर्वचतुर्दशकदशकनवकरूपे व्यवहारभेदे, ॥ स्था०॥ व्यवहारता चास्य व्यवहारहेतुत्वादिति. ॥ पंचा. तन्निबन्धनत्वात् ज्ञानविशेषोऽपि व्यवहार इति ॥ स्था.। विस्तरत एतस्य वक्तव्यताऽऽगमव्यवहारशब्दे० प्राप्तौ ॥ ॥ दश०॥ ( लाभे ) स्था०॥ आतोत्ति आगमोत्ति य लाभोत्ति य होंति एगट्ठा,, उत्त० नि०॥

( आय इति ) आगम इति च लाभ इति च भवन्त्येकार्थिका इति० उत्त० ( कुणइ वयं धणहेओ धणस्स धणिणो उ आगमं णाउं ) यथा धनिको वाणिज्यं कुर्वन्नागमं लाभं ज्ञात्वा धनहेतोर्द्रव्योपार्जनार्थं शुल्ककर्मकरवृत्तिभाटकादिप्रदानेन धनस्य व्ययं करोतीति॥बृह०॥ आगम्यते प्राप्यतेऽनेन करणे घञ्।सामाद्युपाये,"आगमैः सदृशारम्भ आरम्भसदृशोदयः। रघुः। आगम्यते स्वत्वमनेन स्वत्वप्रापके क्रयप्रतिग्रहादौ, पुरुषद्वासप्ततिकलान्तर्गते कलाभेदे, ॥ कल्प०॥ आगच्छति प्रकृतिप्रत्ययावनुपहत्य उत्पद्यते कर्त्तरि संज्ञायां घः। व्याकरणोक्ते प्रकृतिप्रत्यायाद्युपघातके अट् इट् इत्यादौ शब्दे, "आगमादेशयोर्मध्ये बलीयानागमो विधिः,,व्याकरणान्तरपरिभाषा. यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते आगमशास्त्रमनित्यम् इति च. परिभा० आगमा आद्युदात्ताः आगमा अविद्यामानवद्भवन्तीति. च. का. वा. ॥ वाच०॥

( आगमनिष्पन्नं नामाधिकृत्यानुयोगद्वारे )

से किं तं आगमेणं २ पद्मानि पयांसि कुंडानि. सेत्तं आगमेणं,, अनु०॥

आगच्छतीत्यागमोऽन्वागमादिस्तेन निष्पन्नं नाम यथा पद्मानीत्यादि धुदस्वरादीसुरित्यनेनात्र त्वागमस्य विधानादुपलक्षणमात्रं चेदं संस्कार उपस्कार इत्यादेरपि सुडाद्यागमनिष्पन्नत्वादिति॥ अनु०॥ टी०॥

आगमकुसल-आगमकुशल-त्रि० आगमनिपुणे, ॥ आतु० ॥ "आगमकुसला सदाररया,, आगमः श्रुतिस्मृत्यादिरूपस्तस्मिन् कुशलावागमकुशलाविति ॥ उत्त० ॥

आगमण-आगमन-न० आ+गम् भावे ल्युट् । १ किञ्चिद्देशावधिकविभाजनक्रियायामागतौ, ॥ वाच० ॥ गमनं स्वस्थानादन्यत्र यानमागमनञ्च तद्व्यत्यय इति० ध० ॥ अन्यतः स्थानात् प्रज्ञापकसम्मुखं यदागम्यते तदागमनमिति ॥ वृ० ॥ व्य० उत्पत्तौ, ॥ वाच० ॥ ज्ञाने, "आगमेत्ता आणवेज्जा" आगम्य ज्ञात्वेति ॥ आचा० ॥ प्राप्तौ, वाच० ॥

आगमणगहियविणिच्छय-आगमनगृहीतविनिश्चय-त्रि. आगमने गृहीतः कृतो विनिश्चयो निर्णयो येन स तथा । आगमनाय कृतनिश्चये, ॥ भ० ॥

आगमणगिह—आगमनगृह—न० पथिकादीनामागमनेनोपेतं तदर्थं वा गृहमागमनगृहम् ॥ वृ० ॥ सभाप्रपादौ ॥ स्था० ॥ "आगमणगिहंसि वा" ॥ स्था० ॥ आगमनगृहमागंतुकागारं यत्र कार्पटिकादय आगत्य वसंतीति ॥ पंचा० ॥ ( तथा च वृहत्कल्पे आगमनगृहं व्याचष्टे ) "आगंतुगारत्थजणो जहिं तु संठाइ जंवागमणंमि तेसिं । तं आगमो किं तु विदूवयंति सभापवादे कुलमाइयं वत्ति" ॥ १ ॥ स्था० ॥

आगंतुका पथिका अगारस्थजना यत्रागत्य संतिष्ठंते यच्च तेषां पथिकादीनां आगमने वर्त्तते तदागमौक आगमनगृहं विद्वांसः श्रुतधरा वदंति तच्च सभा वा प्रणवादो वा कुलादिकं वा मंतव्यं ( अत्र च निवासे दोषा वसहिशब्दे ) ॥ वृ० ॥

आगमणपह—आगमनपथ-पुं० आगमनमार्गे "आगमणपहंसिजेणं पहेण पक्खियादिसु आगच्छंति तंमि पहे इति ॥ नि० चू० ॥ ( निर्ग्रन्थीनामागमनपथे दण्डादिस्थापने दोषा उवहिशब्दे ) ॥ नि० चू० ॥

आगमणागमणपविभत्ति—आगमनागमनप्रविभक्ति-न०नाट्यविधिविशेषे ॥ राज० ॥ "आगमणागमणपविभत्तिं णामं दिव्वं णट्टविहिं उवदंसेति" ॥ राज० ॥ चन्द्रागमनप्रविभक्तियुक्तमागमनप्रविभक्तिनाम सप्तमं नाट्यविधिमुपदर्शयन्तीति ॥ राज० ॥

आगमणीइ—आगमनीति-स्त्री० आगमन्याये, ॥ पंचा० ॥ "एसा पवयणणीई" एषाऽनन्तरोक्ता प्रवचननीतिरागमन्यायो वर्त्तत इति ॥ पंचा० ॥ सिद्धांतभणिताचारे,"मग्गो आगमणीई" आगमनीतिः सिद्धांतभणिताचारः तस्य च मार्गत्वं मार्गशब्दे ॥ ध० र० ॥ ध० ॥

आगमतंत—आगमतंत्र-त्रि० आगमपरतन्त्रे, आगमानुसारिणि, "आगमतंत्रः सततं तद्वद्भक्त्यादिलिंगसंसिद्धः । चेष्टायां तत्स्मृतिमान् शस्तः खल्वाशयविशिष्टः ॥ १३ ॥ षो० ॥

आगमतंत्र आगमपरमतंत्रः आगमानुसारी सततमनवरतं स आगमो विद्यते येषां ते तद्वन्तस्तेषु भक्त्यादीनि भक्तिबहुमानविनयपूजनादीनि यानि लिंगानि तैः संसिद्धो निश्चितस्तद्वद्भक्त्यादिलिंगसंसिद्धः चेष्टायां व्यापारकरणे तत्स्मृतिमानागमस्मृतियुक्तः शस्तः खलु प्रशस्तो भवत्याशयविशेषः परिणामभेदः १३ ॥ षो० ॥

आगमतत्त—आगमतत्व-न० आगमपरमार्थे षो०।

वालः पश्यति लिंगं मध्यमबुद्धिर्विचारयति वृत्तं । आगमतत्वं तु बुधः परीक्षते सर्वयत्नेन ॥ २ ॥ बालो ह्यसदारंभो मध्यमबुद्धिस्तु मध्यमाचारः । ज्ञेय इह तत्वमार्गे बुधस्तु मार्गानुसारी यः ॥ ३ ॥ षो० ॥

वालो विशिष्टविवेकविकलो लिंगवेषमाकारं बाह्यं पश्यति प्रधान्येन धर्मार्थिनोऽपि तस्य तत्रैव भूयसा रुचिप्रवृत्तेः मध्यमबुद्धिस्तु मध्यमविवेकसंपन्नो विचारयति मीमांसते वृत्तं वक्ष्यमाणस्वरूपं प्राधान्येन समाश्रयति तत्रैवाभिलाषत्वात् आगमतत्वं त्वागमपरमार्थमिदंपर्यवरूपं बुधो विशिष्टविवेकसंपन्नः परीक्षते समीचीनमवलोकयति सर्वयत्नेन सर्वादरेण धर्म्माधर्म्मव्यवस्थाया आगमनिबंधनत्वात् यत उक्तं धर्म्माधर्म्मव्यवस्थायां शास्त्रमेव नियामकं। तदुक्तासेवनाद्धर्म्मस्त्वधर्म्मस्ताद्विपर्यात् ॥ १ ॥

इदानीं पूर्वोक्तानामेव वालादीनामेव लक्षणमाह (बालोहीत्यादि ) वालो हि पूर्वोक्तः असन्नसुंदरमारंभोऽस्येत्यसदारंभोऽविद्यमानं वा यदागमे व्यवच्छिन्नं तदारंभत इत्यसदारंभः न सदा सर्वदा स्वस्तिकालाद्यपेक्ष आरंभोऽस्येति वा मध्यमबुद्धिस्तु पूर्वोक्तो मध्यमाचार आगमैदंपर्यविकलत्वात् प्रावचनिककार्याप्रवृत्तेः । ज्ञेय इह प्रक्रमे तत्वमार्गे प्रवचनोक्ततिनिमित्ते बुधस्तूक्तलक्षण एव मार्गानुसारी ज्ञानादित्रयानुसारी स्वपरयोस्तद्वृद्धिहेतुत्वेन यः स विज्ञेय इति ३ ॥ षो०

आगमदिट्ठि—आगमदृष्टि-स्त्री० आगम आप्तवचनं स एव दृष्टिर्हिताहितपदार्थप्रकाशकत्वादागमदृष्टिः । आप्तवचनात्मिकायां दृष्टौ, ॥ दर्श० ॥

आगमदिट्ठिदिट्ठसुन्नायमग्ग—आगमदृष्टिदृष्टसुज्ञातमार्ग-पु० आगम आप्तवचनं स एव दृष्टिर्हिताहितप्रकाशकत्वात् आगमदृष्टिस्तया दृष्टमवलोकितमागमदृष्टिदृष्टं तेन शोभनप्रकारेण ज्ञातो मार्गो ज्ञानादिको यैस्त आगमदृष्टिदृष्टसुज्ञातमार्गाः। आगमदृष्ट्या सम्यगवलोकितदर्शनादिके, ॥ दर्श० ॥

आगमपरतंत—आगमपरतन्त्र-त्रि० सिद्धांतपरतन्त्रे,॥ पं०व० ॥

एत्थ वि मूलं णेअं एगंतेणेव भव्वसत्तेहिं । सिद्धाय भावओ खलु आगमपरतंतया, णवरं ॥ ६ ॥

व्या०अत्राप्याराधनापक्षे मूलं कारणं ज्ञेयमेकांतेनैव भव्यसत्वैर्भव्यप्राणिभिः किमित्यत्राह । श्रद्धादिभावतः खलु श्रद्धादिभावादेव कारणादागमपरतंत्रता सिद्धांतपारतंत्र्यं नवरं नान्यन्मूलमिति गाथार्थः ॥ पं०व० ॥

आगमपह—आगमपथ-पुं० लाभमार्गे, ॥ स्था० ॥

आगमवलिय-आगमबलिक-पुं० आगमज्ञानविशेषवति केवल्यादिके, "आगमवलिया समणा णिग्गंथा" आगमवलिका उक्तज्ञानविशेषवलवन्तः श्रमणा निर्ग्रन्थाः केवलिप्रभृतय इति ॥ भ० ॥

आगमवुड्ढ-आगमवृद्ध-त्रि० आगमेन तज्ज्ञानेन वृद्धः । शास्त्रालोचनाजनितपरिणतज्ञाने, ॥ वाच० ॥

आगममलारहियय-आगममलारहृदय-पुं० आगमार्थप्रतिपत्त्यसमर्थहृदये ( आगमार्थकुण्ठितबुद्धौ )

समयपरमत्थवित्थरविहाडजणपज्जुवासणसयण्हो । आगममलारहियओ जह होति तमत्थमन्नेसु ॥ सम्म० ॥

अत्र चागममलारहृदय इत्यनुवादेन समयपरमार्थविहार-

जनपर्युपासनसकर्णो यथा भवातितमर्थमुन्नेष्य इति विधिपरा पदघटना कर्त्तव्या । पदार्थस्तु मलामिवारा प्राजनकविभागो यस्यासौ मलारो गौगली आगमे तद्वत्कुंठं हृदयं यस्य तदर्थप्रतिपत्त्यसामर्थ्यादसौ तथा मंदधीः सम्यगीयंते परिच्छिद्यंतेऽनेनार्था इति समय आगमस्तस्य परमः कल्पितश्चासावर्थः समयपरमार्थस्तस्य विस्तरो रचनाविशेषः शब्दार्थयोश्च भेदेऽपि पारमार्थिकसंबंधप्रतिपादनाया भेदविवक्षया प्रथने वात्रशब्द इति यत्नकृतस्तस्य विहाट इति दीप्यमानार्थान् बुद्धौ प्रकाशमानानर्थान् दीपयति प्रकाशयति विहाटश्चासौ जनश्चतुर्दशपूर्वविदादिलोकः । तस्य पर्युपासनं कारणे कार्योपचारात् सेवाजनिततदव्याख्यानं । तत्र सह कर्णाभ्यां वर्त्तत इति सकर्णः तद्व्याख्यातार्थावधारणसमर्थः । यथेति येन प्रकारेण भवति तं तथाभूतमर्थमुन्नेष्ये लेशतः प्रतिपादयिष्ये । यथाभूतेनार्थेन प्रतिपादितेनातिकुंठधीरपि श्रोतृजनो विशिष्टागमव्याख्यातृप्रतिपादितार्थावधारणपटुः संपद्यते । तमर्थमनेन प्रतिपादयिष्यामीति यावत् ॥ सम्म० ॥

आगममाण–आगमयत्–त्रि० आपादयति, "लाघवियं आगममाणे" लाघविकमात्मानमात्मानमागमयन्नापादयन्निति वृत्तिः ॥ आचा० ॥ अवगमयति, ( अवबुध्यमाने ) "लाघवं आगममाणा,, लाघवं आगमयन्नवगमयन्नवबुध्यमान इति ॥ ॥ आचा० ॥

आगमलोयणीइ–आगमलोकनीति–स्त्री० जिनप्रवचनन्यायलौकिकन्याययोः। "जिणबिंबपइट्ठाए विहिमागमलोयणीतीए" जिनबिंबप्रतिष्ठायाः प्रतीताया विधिं विधानमागमलोकनीत्या जिनप्रवचनन्यायेन लौकिकन्यायेन चेत्यर्थः। लोकग्रहणेन चेदं दर्शयति लोकनीतिरपि कचिज्जिनमतविरुद्धाश्रयणीयाऽत एव प्रासादादिलक्षणं तदुक्तमप्याश्रीयत इति गाथार्थः ॥ पंचा० ॥ टी० ॥

आगमवयण–आगमवचन–न० आर्षवचने, षो० ॥

सर्वज्ञवचनमागमवचनं यत् परिणते ततः स्वस्मिन् ।
नासुलभमिदं सर्वं ह्युभयमलपरिक्षयात् पुंसाम् ?? षो०

सर्वज्ञवचनमागमवचनं यद्यस्मात् परिणते ततस्तस्मिन्नागमवचने नासुलभमिदं न दुर्लभमिदं किंतु सुलभमेव भवति सर्वं हि पूर्वोक्तमुभयमलपरिक्षयात् क्रियामलभावमलपरिक्षयात् पुंसां पुरुषाणां ॥ षो० टी० ॥

आगमवयणपरिणइ–आगमवचनपरिणति–स्त्री० आगमवचनस्य विषयविभागेन चेतसि व्यवस्थितौ, ॥ षो० ॥ तस्याः प्राशस्त्यं षोडशप्रकरणे यथा– "आगमवचनपरिणतिर्भवरोगसदौषधं । यदनपायं तदिह परः स द्धेष्टा तस्य हेतुः कारणमिति कृत्वा ॥ ६ ॥

किमित्यागमवचनपरिणामः प्रशस्यत इत्याह आगमेत्यादि॥ आगमवचनपरिणतिर्यथावत् तत्प्रकाशरूपा भवरोगसदौषधं भवरोगस्य संसारामयस्य सदौषधं तदुच्छेदकारित्वेन यद्यस्मात् अनपायमपायरहितं निर्दोषं वर्त्तते तदिह परसंबोधस्तच्च भवरोगसदौषधमागमवचनपरिणत्याख्यं परः प्रधानः सद्बोधः सम्यग्ज्ञानं वर्त्तते सदनुष्ठानस्य सुन्दरानुष्ठानस्य हेतुः कारणमिति कृत्वा ६ ॥टी०॥

आगमववहार–आगमव्यवहर–पुं० आ मर्य्यादाभिविधिभ्यां गम्यंते परिच्छिद्यंतेऽर्था येनासावागमः केवलमनःपर्यायावधिचतुर्दशदशनवपूर्वलक्षणे व्यवहारभेदे, व्यवहारता चास्य व्यवहारहेतुत्वादिति ॥ पंचा० ॥ स्था० ॥ ध० ॥ ( एतेषां च यथाऽऽगमत्वं तथाऽऽगमशब्दे ) तद्भेदा व्यवहारकल्पे यथा—

आगमतो ववहारो सुणह जहा धीर पुरिसपन्नत्तो । पच्चक्खो य परोक्खो सोवि य दुविहो मुणेयव्वो ॥ १ ॥

तत्रागमतो व्यवहारो यथा धीरपुरुषैःप्रज्ञप्तस्तथा श्रृणुत स आगमतो व्यवहारो द्विविधो ज्ञातव्यस्तद्यथा प्रत्यक्षः परोक्षश्च ॥ व्य० ॥

पच्चक्खो वि य दुविहो इंदियजो चेव नो य इंदियजो ।
इंदियपच्चक्खो वि य पंचसु विसएसु नेयव्वो ॥ १ ॥

प्रत्यक्षोऽपि द्विविधस्तद्यथा इंद्रियजो नो इंद्रियजश्च तत्र इंद्रियजःप्रत्यक्षः पंचसु रूपादिषु विषयेषु ज्ञातव्यः ॥

नो इंदियपच्चक्खो ववहारो सो समासतो तिविहो । ओहिमणपज्जवयकेवलनाणे य पच्चक्खो ॥ १ ॥

यस्तु नो इंद्रियजः प्रत्यक्षो व्यवहारः स समासतस्त्रिविधस्तद्यथा अवधिप्रत्यक्षं मनःपर्यवप्रत्यक्षं केवलज्ञानप्रत्यक्षं तत्रावधिप्रत्यक्षमाह ॥

ओहीगुणपच्चइए जं वट्टंती सुयंगवीधीए । ओहिविसयनाणत्थे जणेसु ववहारसोहिकरे ॥ १ ॥

अवधिर्द्धिधा भवप्रत्ययजो गुणप्रत्ययजश्च । तत्र संयतानां गुणप्रत्ययजस्तत आह । अवधौ गुणप्रत्यये ये वर्त्तते श्रुतांगविदो धीरास्तान् अवधिविषयज्ञानस्थान् जानीत व्यवहारशोधिकरान् शुद्धव्यवहारकारिणः ॥

उज्जुमती विउलमती जे वट्टंती सुयंगवी धीरा । मणपज्जवणाणत्थे जणेसु ववहारसोहिकरे ॥ १ ॥

य ऋजुमतौ विपुलमतौ वा मनःपर्यवज्ञाने श्रुतांगविदो धीरा वर्त्तन्ते तान् जानीत व्यवहारशोधिकरान् शुद्धव्यवहार कारिणः ॥

आदिगरा धम्माणं चरित्तवरनाणदंसणसमग्गा । सव्वत्तगनाणेणं ववहारं ववहरंति जिणा ॥ १ ॥

ये धर्म्मयोः श्रुतधर्म्मस्य चारित्रधर्म्मस्य चादिकरास्तत्प्रथमतया प्रवर्त्तनशीलाश्चारित्रवरज्ञानदर्शनसमग्रास्ते जिनाः सर्वत्रज्ञानेन व्यवहारं व्यवहरंति उक्तःप्रत्यक्षः॥व्य०॥ संप्रति परोक्षमाह ।

पच्चक्खागमसरिसो होति परोक्खोवि आगमो जस्स । चंदमुही विव सो विहु आगमो ववहारं व होइ ॥ १ ॥

यद्यपि पूर्वादिकं श्रुतं तथापि यस्यागमश्चतुर्दशपूर्वादिकः परोक्षोऽपि प्रत्यक्षागमसदृशः। प्रत्यक्षावध्यादितुल्यरूपो भवति सोऽप्यागमव्यवहारवान् वक्तव्यो भवति । यथा चंद्रसदृशमुखी कन्या चंद्रमुखीति एतदुक्तं भवति। यद्यपि पूर्वाणि श्रुतं नागमतुल्यानि तैर्व्यवहरन् आगमव्यवहारवानुच्यते इति ।

संप्रत्यागमस्य व्याख्यानमाह ॥

नायं आगमयं य पगडं जस्स सो परायाता। सो पारोक्खो वु-च्चइ तस्स पएसा इमे हुंति ॥ १ ॥

ज्ञातमागमितमित्येकार्थमेवं च ज्ञानमागम इत्येकार्थमापतितं। तत्र यस्य स आगमोऽपराधीनः स प्रत्यक्ष उच्यते स चावध्यादिरूपो यस्य तु परायत्तः स परोक्ष उच्यते। स च चतुर्दशपूर्वादिसमुत्थस्तस्यपरोक्षस्यागमस्य प्रदेशाः प्रवि-भागा भेदा इत्यर्थः। इमे वक्ष्यमाणा भवंति तानेवाह ॥

परोक्खं ववहारं आगमतो सुयधरा हरंति। चोद्दसदसपुव्वधरा नवपुव्वियगंधहत्थी य ॥ १ ॥

ये श्रुतधराश्चतुर्दशपूर्वधरा दशपूर्वधरा नवपूर्विणो वा गं-धहस्तिनो गंधहस्तिसमानाः ते आगमतः परोक्षं व्यवहारं व्यवहरंति ॥ व्य० ॥

अत्राक्षेपव्यवहारोभिधित्सुराह ॥

"किह आगमववहारी जम्हा जीवादयो पयत्था उ। उवल-द्धा तेहिं ते सव्वेहिं नयविगप्पेहिं ॥

कथं केन प्रकारेण साक्षात् श्रुतेन व्यवहरंतः आगमव्यवहा-रिणः प्रोच्यंते सूरिराह। यस्मात् जीवादयः पदार्थास्तैः चतुर्दशपूर्वधरादिभिः सर्वनयविकल्पैर्नैगमादिनयभेदैरुप-लब्धाः एतदेव सविशेषमाह—

जह केवली वि जाणइ दव्वं खेत्तं च कालभावं वा। तह चउ-लक्खणमेव सुयनाणी सेव जाणाति ॥

यथा केवली केवलज्ञानेन सर्वद्रव्यं सर्वक्षेत्रं सर्वकालं सर्व-भावं च सर्वात्मना स्वपरपर्यायभेदभिन्नं जानाति। एवं श्रुतज्ञान्यपि चतुर्लक्षणं द्रव्यक्षेत्रकालभावरूपं श्रुतबलेन जानाति तत एतेप्यागमव्यवहारिण उच्यंते तदेवं प्रस्तु-तं प्रायश्चित्तशुद्ध्यधिकारमधिकृत्य योजयति ॥

पणगं मासविवड्ढी मासगहाणी य पणगहाणी य। एगाराह-पंचाहं पंचाहे चेव एगाहं ॥ रागदोसविवड्ढिहाणिं वा न उवेंति पच्चक्खी। चोद्दसपुव्वादी वि हु तह ना उवेंति हीणहियं ॥

यथा प्रत्यक्षिणः प्रत्यक्षागमज्ञानिनस्तुल्येऽप्यपराधे पंचक-योग्ये एकस्य पंचकं ददति अपरस्य रागद्वेषविवृद्धिमुपल-भ्य मासेन मासाभ्यां मासैर्वा वृद्धिं प्रयच्छंति उपलक्षण-मेतत् मूलमनवस्थाप्यं पारांचितं वा यच्छंति तथा तुल्येऽ-पि पारांचितयोग्येऽपराधे एकस्य पारांचितमपरस्यानव-स्थाप्यं मूलं छेदं मासेन मासाभ्यां मासैर्वा हान्या तपो वा चशब्दात्पंचकं यावदंते नमस्कारसहितं हा दुष्टु कारितं हा दुष्टु अनुमोदितमित्येवं वैराग्यभावनातो रागद्वेषहानिं भूय-सीमतिभूयसीमतिभूयस्तरामुपलभ्य प्रयच्छंति तथा कस्य-चित् मासिकप्रतिसेवनायामल्पां रागद्वेषहानिमुपलभ्य पंचकहान्या मासिकं ददति पंचविंशतिदिनानि ददतीत्य-र्थः। तथा एकाहं नाम अनुक्तार्थं प्रतिसेविते पंचाहं ददति-पंचाहे वा प्रतिसेविते एकाहमुपलक्षणत्वाद्दशाचाम्लमेका-सनकं पूर्वार्द्धं निर्विकृतं पौरुषीं नमस्कारसहितं वा प्रयच्छं-

ति। एवं चतुर्दशपूर्वादयोऽपि हु निश्चितं रागद्वेषहानिवृद्धी उपलभ्य हीनमधिकं वा प्रायश्चित्तं ददति। अत्र परस्य प्रश्नमुदीरयति ॥

चोयग पुच्छा पच्चक्ख नाणिणो थोवे कह बहुं देंति। दि-ट्ठंतो वाणियए जिणभेदे सपुव्विए धमयं ॥

चोदकस्यात्र पृच्छा प्रत्यक्षज्ञानिनो जिनादयः स्तोके अपराधे कथं बहु प्रयच्छन्ति। प्रायश्चित्तमुपलक्षणमेतद्-भूयसि चापराधे स्तोकमत्र सूरिराह दृष्टांतोऽत्र वणिजो द्रष्टव्यः तथा भूयः परस्य पृच्छा जिनादयः केवलज्ञाना-दिबलेन परस्य भावं जानते चतुर्दशपूर्विणस्तु कथं येन स्तोकेऽपि बहु बह्वपि स्तोकं ददति। सूरिराहात्र धम-कोदृष्टांतः। तत्र प्रथमतो वणिग्दृष्टांतं भावयति ॥

जं जह मोल्लं रयणं तं जाणइ रयणवाणितो निउणो। थोवं तु महल्लस्स वि कासइ अप्पस्स वि बहुं तु ॥

यथा निपुणो रत्नवणिक् यत् रत्नं यथामूल्यं तत्तथा सम्य-क् जानाति ज्ञात्वा च कस्यचित् महतोऽपि रत्नस्य स्तोकं मूल्यं ददाति कस्यचिदल्पस्याद्भुतगुणोपेतस्य बहु इमामेव तद्दृष्टांतभावनां प्रकारांतरेणाह ॥

अहवा कायमणिस्स उ सुमहल्लस्स वि उ कागणी मोल्लं। वइरस्स उ अप्पस्स वि मोल्लं होती सयसहस्सं ॥

अथवेति प्रकारांतरे रत्नपरीक्षको वणिक् काचमणेः सुमहतो-ऽपि मूल्यं एकां काकिनीं करोति वज्रस्य तु रत्नस्याल्पस्या-पि मूल्यं तेन क्रियमाणं शतसहस्रं भवति। अत्रोपनयमाह—

इय मासाण बहूण वि रागद्दोसप्पया थोवं तु। रागद्दोसव्व-या पणगे वि उ तो बहु देंति ॥

इति अमुना दृष्टांतप्रकारेण बहूनामपि मासानां योग्ये अप-राधे वैराग्यभावनाबलतो रागद्वेषाल्पतया स्तोकं प्रायश्चित्तं ददति सिंहव्यापादकस्येव रागद्वेषोपचयात् पंचकेऽप्यपरा-धे बहु प्रायश्चित्तं ददति।अधुना ( जिनचोद्दसपुव्विए धमए ) इत्यस्य व्याख्यानमाह ॥

पच्चक्खी पच्चक्खं पासइ पडिसेवगस्स सो भावं। किह जा-णइ पारोक्खी यमिणं तत्थ धमएणं ॥

प्रत्यक्षी जिनादिः प्रत्यक्षं प्रतिसेवकस्य भावं जानाति परो-क्षी चतुर्दशपूर्वादिः कथं जानाति। येनास्यापि तथैव व्य-वहरति सूरिराह तत्र तस्मिन्विषयो ज्ञातमुदाहरणमिदं वक्ष्य-माणं धर्मकेन शंखध्मात्र। तदेव दर्शयति ॥

नालीधमएण जिणा उवसंहारं करेंति पारोक्खं। जह सो कालं जाणइ सुएण सोहिं तहा सोउ ॥

जिनास्तीर्थकृतः परोक्षे आगमे उपसंहारं नालीधमनकेन कुर्वंति इयमत्र भावना। नाडिकायां गलंत्यामुदकगलनपरि-माणतो जानाति एकेत्युदके गलितयामो दिवसस्य रात्रेर्वा-गत इति ततोऽन्यस्य परिज्ञानाय शंखं धमति तत्र यथा-सोऽन्यो जनः शंखस्य शब्देन श्रुतेन कालं यामलक्षणं जाना-ति तथा परोक्षागमज्ञानिनोऽपि शोधिमालोचनां श्रुत्वा तस्य यथावस्थितं भावं जानंति ज्ञात्वा च तदनुसारेण प्रायश्चित्तं ददति ॥ व्य० ॥

आगमतो ववहारं परसोच्चा संकियंमि उ चरित्ते। आलोइयंमि आराहणा अणालोइए भयणा ॥

आगमतः प्रत्यक्षज्ञानी वा परे परस्मिन् व्यवहारं करोति। परस्यालोचनां श्रुत्वा नान्यथा तत्र यदि कलुषितचारित्रतया न सम्यगालोचयति किंत्वालोचनामर्यादामतिक्रम्य वर्त्तते तदा शंकितमिति वा भिन्नमिति वा कलुषितमिति वा एकार्थं चारित्रे सति न सम्यगनेनालोचितमिति ज्ञात्वा तं ब्रूते अन्यत्र गत्वा शोधिं कुरु यदि पुनः सम्यगालोचयति तदा ददाति प्रायश्चित्तं।अथ यदि प्रत्यक्षागमज्ञानिनो वा सर्वभावविषयपरिज्ञानं ततः कस्मात्तस्य पुरत आलोच्यते । किंतु तस्य समीपमुपगम्य वक्तव्यमपराधं मे भवंतो जानंतस्तस्य शोधिं प्रयच्छत तत आह (आलोईत्यादि) आलोचिते बहुगुणसंभववतः सम्यगाराधना भवति अनालोचिते आराधनाया भजना विकल्पना कदाचिन्नेति एतच्चाग्रे भावयिष्यते।व्य०ः ( तत्रागमतो ववहारं परसोच्चेति व्याख्यानयति )

आगमे ववहारी छव्विहो वि आलोयणं निसामेत्ता । देतितो पच्छित्तं पडिवज्जइ सुमारिओ जइ य ॥ १ ॥

आगमव्यवहारी षड्विधोऽपि परस्यालोचनां निशम्य ततः प्रायश्चित्तं ददाति यदि च कमप्यपराधं विस्मृतं स्मारितः सन् सम्यक् प्रतिपद्यते तदा स्मारयति च। अन्यथा तस्यालोचनामेव न ददाति।सांप्रतमुत्तरार्द्धं व्याख्यानयति।

आलोइयं पडिक्कतस्स होइ आराहणा अनियमेणं । अणलोइयंमि भयणा किह पुण भयणा हवइ तस्स ॥ १ ॥

एवमपराधजातमालोचितं ततस्तस्मात्प्रतिक्रांतस्य पुनः कारणतया प्रतिनिवृत्तस्यानियमेन पर्यंते सम्यगाराधना भवति अनालोचिते पुनर्भजना ॥ आह कथं पुनरनालोचिते तस्याराधनाविषये भाजना भवति अत्राह ॥

कालं कुवेज्ज सयं अमुहो वा हुज्ज अहव आयरियो। अप्पत्ते वा आराहणा तह वि भयणेवं ॥ १ ॥

कोऽपि आलोचनां ग्रहीष्यामीत्यालोचनापरिणामपरिणत आलोचनाग्रहणाय संप्रस्थित आलोचनार्हसमीपं स च तमप्राप्त एवापांतराले स्वयं कालं कुर्वते यदि वा प्राप्तोऽपि रोगवशादसुखो जातोऽथवा तस्याप्राप्तवत एव स आलोचनार्ह आचार्यः कालतो यदि वा प्राप्तवतोऽप्यमुखो जातः ततः स एवमालोचनापरिणतः आलोचनायाः असंभवेऽपि कालं कुर्वन्नाराधको यदि पुन र्न सम्यगालोचनापरिणामपरिणतस्तदा सोऽनाराधकः स च तथाकालगतो दीर्घसंसारी भवति। एवमाराधनालोचना हि प्राप्ते वा भाजनया भवति ॥ व्य० ॥

संप्रत्यागमव्यवहारिणामपि पुरत आलोचनायां गुणानुपदर्शयति ॥

अवगहं वियाणंति तम्स सोहिं च जदवि । तहावि आलोयणावुत्ता आलोयंत बहुगुणा ॥ १ ॥

यद्यप्यागमव्यवहारिणस्तथाप्यालोचकस्यापराधं विजानंति शोधिं च तथापि तेषामपि पुरत आलोचना दातव्या उक्ता तीर्थकरगणधरैर्यत आलोचयति बहवो गुणास्तथा चालोचनाचार्येण स आलोचकः प्रोत्साह्यते यथावत्स!त्वं धन्यस्त्वं सभाग्यः । यदेवं मानं निहत्यात्महितार्थतया स्वरहस्यानि प्रकटयसि महादुष्करमेतत् एवं स प्रोत्साहितः सन् प्रवर्द्धमानपरिणामशल्यो भूत्वा यथावस्थितमालोचयति । शोधिं च सम्यक् प्रतिपद्यते ततः पर्यंते आराधनास्तोककालेन च मोक्षगमनमिति ॥ व्य० ॥

अथ कथमागमिनो व्यवहारं प्रयुंजते तत आह ।

दव्वेहि पज्जवेहि य कमखेत्ते कालभावपरिसुद्धं।आलोयणं सुणेत्ता तो ववहारं पउंजंति ।

द्रव्यैः सचित्तादिभिः पर्यायैस्तेषामेव सचित्तादिद्रव्याणामेव स्थानविशेषैः परिणामविशेषैस्तथा क्रमतः क्षेत्रतः कालतो भावतश्च परिशुद्धामालोचनां श्रुत्वा ततस्तदनंतरं व्यवहारं शोधिव्यवहारं प्रयुंजते नान्यथा तत्र यदि सचित्तं वित्वा सचित्तमेवालोचयति तदा द्रव्यशुद्धा सा आलोचना यदा तु सचित्तं प्रतिसेव्याचित्तमालोचयति तदा द्रव्याशुद्धा। तथा यामवस्थामुपगतं सचित्तं प्रतिसेव्य तामेवावस्थां यदालोचयति तदा सा आलोचना पर्यायशुद्धा यदा त्वन्यामवस्थामुपगतं प्रतिसेव्यान्यामवस्थामालोचयति तदापर्यायाशुद्धा। तथा यदा प्रतिसेवनानुलोममालोचयति तदा सा क्रमशुद्धा उत्क्रमेणालोचयतः क्रमाशुद्धा । तथा यत्र जनपदे अध्वनि वा प्रतिसेवितं तत्तथैवालोचयतः क्षेत्रशुद्धा आलोचना जनपदे प्रतिसेवितमध्वनि कथयतः क्षेत्राशुद्धा । तथायत्तनानाभोगादिना सेवितं तं भावं कथयतो भावशुद्धा उपेत्यप्रतिसेव्यानां भोगादिना कथयतो भावाशुद्धा।संप्रति भावमेवोपदर्शयति।

सहसा अन्नाणेण व भीएणव पेल्लिएण परेण वा । वसणेण पमादेण मूढेण व रागदोसेहिं ।

तेन प्रतिसेवकेन सहसाज्ञानेन वा परेण वा प्रेरितेन वा व्यसनेन वा द्यूतादिना प्रमादेन वा मूढेन वा रागद्वेषाभ्यां वा प्रतिसेव्य यदि तथैवालोच्यते प्रायश्चित्ताय मे ददाति नान्यथेति वाक्यशेषः । संप्रति सहसेत्यस्य व्याख्यानमाह ।

पुव्वं अपासिऊण उच्छित्ते पायंमि जं पुणो पोसे। न य तरइ नियत्तेऊं पायं सहसाकरणमेयं ।

पूर्वमग्रतने प्रदेशे कुलिंगिनमदृष्ट्वोत्क्षिप्ते उत्पाटिते पादे यत्पुनः पश्यति कुलिंगिनं समापतितं न पादं निवर्त्तयितुं शक्नोति । तत एवं यस्तस्य व्यापादनमेतत्सहसाकरणं । सांप्रतमज्ञानमाह ।

अन्नयरपमाएणं असंपउत्तस्स नो चउत्तस्स। इरियाइसुभूयत्थे अवट्टतो एयमण्णाणं ।

पंचानां प्रमादानामन्यतरेणापि प्रमादेनासंप्रयुक्तस्याक्रोडीकृतःस्यात् एवं ईर्यादिषु समितिषु भूतार्थेन तत्वतो वर्त्तमानस्य यद्व्रतनमेतदज्ञानं अधुना ( भीएण वा पेल्लिएण व परेण ) इत्यस्य व्याख्यानमाह ।

भीतो पलायमाणो अभियोगभएण वावि जं कुज्जा। पडितो अपडितो वा पल्लिज्जउ पल्लिओ पाणे ।

अभियोगभयेन भीतः पलायमानो यः कुर्यात्प्राणव्यपरोपणादि तत् भीतेनेति द्रष्टव्यं तथा परेण प्रेरितःसन्पतितोऽपतितो वा प्राणान् द्वींद्रियान्वा प्रेरयेत। संप्रतिव्यसनादिपदानि व्याचष्टे।

जूयादि होइ वसणं पंचविहो खलु भावपमादो उ। मिच्छत्तभावणा उ मोहो तह रागदोसा य।

द्यूतादि भवति व्यसनं प्रमादी खलु मद्यादिभेदाद्भवति पंचविधः मिथ्यात्वभावना मोह रागद्वेषाः सुप्रतीताः।

एएसिं ठाणाणं अन्नयरे कारणे समुप्पन्ने। तो आगमवीमंसं करेंति अत्ता तदुभयेण।

एतेषामनंतरोदितानां सहसा प्रभृतीनां स्थानानामन्यतरस्मिन्कारणे समुत्पन्ने सति आलोचनायां प्रदत्तायामागमविमर्शमात्मा उभयेन सूत्रार्थलक्षणेन कुर्वंति यथाऽयं सहोऽयमसहः अयमेतावता शोत्स्यति अयं नेति। अथवा किमनेन सम्यगालोचितं किं वा नेति।सांप्रतमागमविमर्शमेव व्याख्यानयति

जइ आगमो य आलोयणा य दोण्णि वि समं तु निवयंति।एसा खलु वीमंसा जो व सहो जेण वा सुज्झे।

यद्यागमश्चालोचना एते द्वे अपि समकं परस्परमविसंवादितया निपतिते। यथैव तस्यालोचना तथैव तस्यागमः। तथैवेतरस्यालोचना यथैवागमिन आगमः। एष खलु आगमविमर्श उच्यते अस्मिन् सति शोधिं ददति नान्यथा यदि धा यः सहोऽसहो वा येन वा यः शुद्ध्यति एतत् परिभावनमागमविमर्शः। संप्रत्याप्तशब्दव्याख्यामाह।

नाणमादीणि अन्नाणि जेण अंतो उ सो भवे। रागदोसप्पहीणो वा जे व इट्ठा व सोधिए।

ज्ञानादीनि ज्ञानदर्शनचारित्राणि येनाप्तानि स भवत्याप्तः।ज्ञानादिभिराप्यते स्म आप्त इति व्युत्पत्तेः यो वा रागद्वेषप्रहीणः स आप्तः यदि वा ये इष्टाः शोधौ शोधिविषय आप्ताः। संप्रत्युभयशब्दव्याख्यानार्थमाह।

सुत्तं अत्थो उभयं आलोयण आगमो वयति उभयं। जं तदुभयंति वुत्तं तत्थ इमा होति परिभासा।

सूत्रमर्थ इत्युभयं तेनागमविमर्शं कुर्वंति किमयं सह इत्यादि अथवा आलोचनमागमविमर्शं विदधति। यथा किं यथावस्थितास्यालोचना किं वा नेति। तत्र यत्तदुभयमित्युक्तं तत्र इयं वक्ष्यमाणा परिभाषा भवति तामेवाह॥

पडिसेवणाइयारे जइ नाउट्टइ जहक्कमं सव्वे। न हु देंती पच्छित्तं आगमववहारिणो तस्स॥ १॥

यदि प्रतिसेवनातिचारान् यथाक्रमं सर्वान् यदि नाकुट्टयति नालोचयति तदा तस्यागमव्यवहारिणः प्रायश्चित्तं न ददति। यदि पुनः प्रतिसेवनातिचारान् यथाक्रमं सर्वान् आकुट्टयति आलोचयति तदा तस्यागमव्यवहारिणः प्रायश्चित्तं ददति॥

कहेसु सव्वं जो वुत्तो जाणमाणो वि गूहति। न तस्स दिंति पच्छित्तं बिंति अन्नत्थ सोहय॥

यान् सर्वानालोचयन् कथय सर्वं मा निगूहयेति यत उक्तः सन् जानानोऽपि गूहयति तस्य प्रायश्चित्तमागमव्यवहारिणो न ददति किंतु ब्रुवते अन्यस्य समीपे गत्वा शोधय शोधिं गृहाण॥

न संभरति जो दोसे सब्भावा न य मायया। पच्चक्खा साहए ते उ माइणो उ न साहए॥

यो दोषान् सद्भावतो न स्मरति न मायया तस्य प्रत्यक्षी प्रत्यक्षागमज्ञानी कथयति॥

जइ आगमतो आलोयणा य दोवि विसमं निवइयाइं। न हु होंती पच्छित्तं आगमववहारिणो तस्स॥ १॥

यद्यागम आलोचना च एते द्वे अपि विषमं निपतिते यथा तेनालोचितं तथागमज्ञानी तस्यातीचारं न प्रेक्षते किंत्वन्यादृशमूनमधिकं वा इत्यर्थः। तदा तस्यागमव्यवहारिणः प्रायश्चित्तं न ददति॥

जइ आगमो य आलोयणा य दोन्नि वि समं निवइयाइं। देंति ततो पच्छित्तं आगमववहारिणो तस्स॥ १॥

यद्यागम आलोचना च एते द्वे अपि समं निपतिते यथापराधमालोचनामागमज्ञानी पश्यतीत्यर्थः। ततस्तस्यागमव्यवहारिणः प्रायश्चित्तं ददति॥ व्य०॥

तथा च व्यवहारकल्पे आलोचनार्हस्याष्टादश स्थानानि षट्त्रिंशत्स्थानान्युक्त्वा प्रतिपादितम्॥

छत्तीसे याणि ठाणाणि भणियाणणुपुव्वसो। जो कुसलो एहिं ववहारामो समक्खातो॥

एतान्यनंतरोदितानि स्थानानि षट्त्रिंशत् आनुपूर्व्या क्रमशः क्रमेण भणितानि यस्तेषु कुशलः स व्यवहारी आगमव्यवहारी समाख्यातः पुनरपि यादृशा आगमव्यवहारिणस्तादृशानाह। (अट्ठहिं अट्ठारसहिं दसहि य ठाणेहि जे अप्परोक्खे। आलोयणदोसेहिं छहियं ठाणेहिं जे अपरोक्खा। पंचहिं नियंठेहिं पंचहि य चरित्तमंतेहिं अट्ठसु) आचारवस्तुप्रभृतिषु स्थानेषु अष्टादशसु व्रतषट्कप्रमुखेषु दश च प्रायश्चित्तस्थानेषु ये अपरोक्षाः प्रत्यक्षज्ञानिनः तथा दशसु आलोचनादोषेषु वा ये अपरोक्षविज्ञानिनः तथा दशस्वालोचनागुणेषु षट्सु च स्थानेषु अनंतरभाविषु ये अपरोक्षाः साक्षाज्ज्ञानिनस्तथा पंचसु निर्ग्रंथेषु पुलाकादिषु पंचसु चारित्रवत्सु ये प्रत्यक्षज्ञानिनस्ते आगमव्यवहारिणः॥ व्य०॥ आगमव्यवहारिणश्च यावदार्यरक्षितमेवाभूवन् तथाच व्यवहारकल्पे॥

तत्तो जाव अज्जरक्खियये आगमववहारिणो वियाणत्ता। न भविस्सति दोसोत्ति तो वायंती उ छेदसुयं॥

यावदार्यरक्षितास्तावदागमव्यवहारिणोऽभूवन् ते चागमव्यवहारबलेन विज्ञाय यथा एतस्याश्छेदश्रुतवाचनायां। दोषो न भविष्यतीति संयतीमपि छेदश्रुतं वाचयंति स्म॥

आरेणागमरहिया मा विद्दाहिंति तो न वाएंति। तेण कहं कुव्वंतु सोहिं अयाणमाणी तो॥

आर्यरक्षितादारत आगमरहितास्ततस्ते मा छेदश्रुताध्ययनतः संयत्यो विद्रास्यंति विनक्ष्यंतीति हेतोश्छेदश्रुतानि संयतीर्न वाचयंतीति अत्राह तेन छेदश्रुताध्ययनाभावेन कथं ताः संयत्योऽजानानाः शोधिं कुर्वंतु अत्राचार्य आह।

तो जाव अज्जरक्खिय सट्टाणे सगासई सुवइणीतो। असतीए विवक्खंमि वियमेव य होंति समणा वि॥

यतः पूर्वमागमव्यवहारिणः स्युश्छेदश्रुतं च संयत्यो धीयेरन् ततो यावदार्यरक्षितास्तावद्व्रतिन्यः स्वस्थाने सपक्षे संयतीनां प्रकाशने प्रकाशनामकार्षुः स्वपक्षाभावेऽपि पक्षेऽप्यालोचितवत्यः श्रमणय एवमेव श्रमणा अपि भवंति ज्ञातव्याः । किमुक्तं भवति श्रमणा अपि सपक्षे आलोचितवंतस्तदलाभे विपक्षेऽपि श्रमणीनां पार्श्वे इत्यर्थः । दोषाभावात् आगमव्यवहारिभिर्हि दोषाभावमवबुध्य छेदश्रुतवाचना संयतीनां दत्ता नान्यथेति । आर्यरक्षितादारतः पुनः श्रमणानामेव समीपे आलोचयंति श्रमणयोऽपि श्रमणानामागमव्यवहारव्च्छेदात् ॥ व्य० ॥

आगमववहारि ( न् ) आगमव्यवहारिन्–पुं० प्रत्यक्षज्ञानिनि, आगमतोछव्विहो उ ववहारी । केवलिमणोहि चोदस दस नंव पुव्वी उ नायव्वो ॥

तत्रागमतो व्यवहारी षड्विधस्तद्यथा केवली केवलज्ञानी (मणोहित्ति) पदैकदेशे पदसमुदायोपचारात् मनः पर्यायज्ञानी अवधिज्ञानी (चोद्दसदसनवपुव्वीति) पूर्विशब्दः प्रत्येकमभिसम्बध्यते चतुर्दशपूर्वी दशपूर्वी नमपूर्वी च ज्ञातव्याः एते चागमव्यवहारिणः प्रत्यक्षज्ञानिन उच्यन्ते चतुर्दशादि पूर्ववलसमुत्थस्यापि ज्ञानस्य प्रत्यक्षतुल्यत्वादिति ॥ व्य० ।जी० ॥

आगमविहि–आगमविधि–पुं०आगमो गणधरादिविराचितशास्त्रपद्धतिस्तस्य विधिः । आगमन्याये, "जावज्जीवं आगमविहिणा चरित्तपालणं पढमो,, ॥ दर्श० ॥ तत्र यावज्जीवं यावत्प्राणधारणं नतु परपरिकल्पितन्यायेनेत्यर्थः । आगमो गणधरादिविरचितशास्त्रपद्धतिस्तस्य विधिस्तेन आगमन्यायेनेत्यर्थः । वयोरिक्तिकरणं चारित्रं तस्य पालनं यत्तत्सकलसमितिगुप्तिप्रत्युपेक्षणाद्यनुष्ठानकरणं तत्किमित्याह । प्रथम आयस्तस्य मुख्यवृत्त्यैव समस्तसमीहितप्रापकत्वेन प्रधानत्वात् ॥ दर्श० ॥

आगमवीमंस–आगमविमर्श–पुं० आगमपरिभावने, ( एतस्य विस्तरतो वक्तव्यताऽऽगमववहारशब्दे ) ॥ व्य० ॥

आगमसंपण्ण–आगमसम्पन्न–पुं० विशिष्टश्रुतधरे, ॥ दश०॥

आगमसज्जोग–आगमसद्योग–पुं० आगमनमागमः सम्यक्परिच्छेदस्तेन सद्योगः सद्व्यापार आगमसहितो वा यः सद्योगः सत्क्रिया । सम्यक्परिच्छेदात्मके सद्व्यापरे, आगमसहितायां सत्क्रियायाञ्च । "रागादयो मलाः खल्वागमसद्योगतो विगम एषां । तदयं क्रियत एव हि पुष्टिः शुद्धिश्च चित्तस्य" ॥ षो० ॥

इह मलाः प्रक्रमाश्चित्तस्यैव संबंधिनः परिगृह्यंते ते च रागादयो रागद्वेषमोहा जातिसंग्रहीता व्यक्तिभेदेन तु भूयांसः खलुशब्दावधारणाद्रागादय एव नान्ये आगमनमागमः सम्यक्परिच्छेदस्तेन सद्योगः सद्व्यापार आगमसहितो वा यः सद्योगः सत्क्रियारूपः ततः सकाशाद्विगम एषां रागादीनां मलापगमः संजायते तत् तस्मादयं आगमः सद्योगः क्रिया वर्त्तते सर्वापि शास्त्रोक्ता विधिप्रतिषेधात्मिका अत एव ह्यागमसद्योगात् क्रियारूपात् पुष्टिर्वक्ष्यमाणस्वरूपा शुद्धिश्चित्तस्य संभवति ॥ ३ ॥ टी० षो० ॥

आगमसत्थ—आगमशास्त्र–न० आ अभिविधिना सकलश्रुतिविषयव्याप्तिरूपेण मर्य्यादया वा यथावस्थितप्ररूपणारूपया गम्यन्ते परिच्छिद्यन्तेऽर्था येन स आगमः ॥ नं० ॥ शिष्यते शिक्ष्यते बोध्यतेऽनेनेति शास्त्रम् आगमरूपं शास्त्रं आगमशास्त्रम्. श्रुतज्ञाने, । विशे० । ( तथा च विशेषावश्यके भाष्यम् )

"सासिज्जइ जेण तयं सत्थं तं वा विसेसियं नाणं । आगमए व य सत्थं आगमसत्थं तु सुयनाणं,, ॥ विशे० ॥

"आगमसत्थग्गहणं जं बुद्धिगुणेहिं अट्ठेहिं विदिट्ठं । विंति सुयनाणलंभं तं पुव्वविसारदा धीरा,, ॥ नं० ॥

आ अभिविधिना सकलश्रुतिविषयव्याप्तिरूपेण मर्यादया वा यथावस्थितप्ररूपणारूपया गम्यंते परिच्छिद्यंते अर्थाःयेन स आगमः स चैवंव्युत्पत्त्या अवधिकेवलादिलक्षणोऽपि भवति ततस्तद्व्यवच्छेदार्थं विशेषणांतरमाह–शास्त्रेति शिष्यतेऽनेनेति शास्त्रं आगमः शास्त्रं आगमशास्त्रं आगमग्रहणेन षष्टितंत्रादिकुशास्त्रव्यवच्छेदः तेषां यथावस्थितार्थे प्रकाशनाभावतो नागमत्वात् । आगमशास्त्रस्य ग्रहणमागमशास्त्रग्रहणं यद्बुद्धिगुणैर्वक्ष्यमाणैः कारणभूतैरष्टभिर्दृष्टं तदेव ग्रहणं श्रुतज्ञानस्य लाभं ब्रुवते पूर्वेषु विशारदाः विपश्चिता धीरा व्रतपालने स्थिराः किमुक्तं भवति यदेव जिनप्रणीतप्रवचनार्थपरिज्ञानं तदेव परमार्थतः श्रुतज्ञानं न शेषमिति ॥ नं० टी० ॥ विशे० ॥ आ० म० ॥ आ० चू० ॥

आगमसिद्ध—आगमसिद्ध–पुं०आगमो द्वादशाङ्गप्रवचनम् तत्रासाधारणार्थावगमात् सिद्ध आगमसिद्धः । सिद्धभेदे, । ध० । तथाचावश्यके–"आगमसिद्धो सव्वंगपारगओ गोयमोव्व गुणरासी" आगमसिद्धः सर्वाङ्गपारगो द्वादशाङ्गवित् अयं च महातिशयवानेव यत उक्तं "संखाता तेवि भवे साहइ, इत्यादि इयं च गौतम ! अवगुणराशिरवगंतव्यः अत्र भूयांसः सातिशयवेष्टिता उदाहरणं ॥ आ० म० ॥

भावार्थः कथानकादवसेयस्तच्चेदम् "तत्थागमसिद्धो किरसयंभुरमणे वि मगादीया । जं चिट्ठंति स भयवं उवउत्तो जाणइ" ॥ आ० म० ॥

आगमसुद्ध—आगमशुद्ध –त्रि० आगम आप्तवचनं तेन शुद्धस्तदुक्तार्थानुवादेन निर्दोष आगमशुद्धः । आगमानुवादेन निर्दोषे, पञ्चाशके स्तवविधिमधिकृत्य "थवविहिमागमसुद्धं सपरेसिमणुग्गहट्ठाए" ॥ पंचा० सू० ॥ आगमः स्तवपरिज्ञानादिकमाप्तवचनं तेन शुद्धस्तदुक्तानुवादेन निर्दोष आगमशुद्धस्तं किमर्थमित्याह–स्वपरयोरात्मतदन्ययोरनुग्रह उपकारस्तल्लक्षणो योऽर्थः पदार्थः प्रयोजनं वा सोऽनुग्रहार्थस्तस्मै अनुग्रहार्थाय तत्र स्वानुग्रहः प्रावचनिकार्थानुवादे निर्मलबोधभावात् परोपकारद्वारा वोनकर्मक्षयाश्चेश्च परानुग्रहस्तु परेषां निर्मलबोधः तत्पूर्वकक्रियासंपादनात्परंपरया निर्वाणसंपादनाच्चेति गाथार्थः ॥ पंचा० ॥

आगमाभास—आगमाभास–पुं० अनाप्तवचनसमुत्थे ज्ञाने, अनाप्तवचनप्रत्यक्षं ज्ञानमागमाभासमिति । अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानं चाभिधत्ते स आप्त उक्तस्तद्विपरीतोऽनाप्तस्तद्वचनसमुत्थं ज्ञानमागमाभासं ज्ञेयं । अत्रोदाहरंति यथा मेकलकन्यकायाः कूले तालहितालयोर्मूले सुलभाः पिंडखर्जूराः संति त्वरितं गच्छत २ शावका इति समाक्रांतो ह्यनाप्तपुरुषक्रीडापरवशः सन्नात्मनो विनोदार्थं कि-

चावस्थान्तरमलभमानः शावकैरपि समं क्रीडाभिलाषेणेदं वाक्यमुच्चारयति ॥ रत्ना० ॥

आगमावाइ(न्)—आगमापायिन्-त्रि० आगमश्च अपायश्च तौ विद्येते अस्य इति स्त्रियां ङीप्। उत्पत्तिविनाशशीले ॥वाच०॥

आग ( गा ) मि ( न् )—आग ( गा ) मिन्-त्रि० आ-गम-भविष्यति णिनि। गम्यादीनामुपसंख्यानमित्युक्तेः वा ह्रस्वः भविष्यदागमने, ॥ वाच० ॥

आगमिय—आगमिक—त्रि० आगमादागतः ठञ्। आगमप्राप्ते, ॥ वाच०॥आगमगम्ये च "आगमिअमागमेणं जुत्तीगम्मं तु जुत्तीए" आगमिकं वस्त्वागमेन यथा स्वर्गेऽप्सरस उत्तराः कुरव इति ॥ पं० व० ॥

आगमित—त्रि० अधीते ॥ वाच० ॥ गृहीते, "उववारोत्ति वा अहीतंति वा आगमियंति वा गृहीतंति वा पगट्ठा" इति ॥ नि० चू० ॥ ज्ञाते, ॥ वाच० ॥ "नायं आगमियं य पगट्ठं" ज्ञातमागमितमित्येकार्थमिति ॥ व्य० ॥पठिते, प्रेरणे, णिच् क्त यापिते, प्रापिते च ॥ वाच० ॥

आगमिस्स (त्)—आगमिष्यत्—त्रि० आगामिनि, "जे य आगमिस्सा अरहंता भगवंतो" ये चागामिन इति ॥ आचा० ॥ आगामिनि काले, " किंमस्सतीतं किंवाऽऽगमिस्सं" किंवाऽऽगमिष्यत्यागामिनि काले सुखाभिलाषिणो दुःखद्विषो भावीति ॥ आचा० ॥ "सिज्झिस्सइ आगमिस्सेणं" आगमिष्यति काले सेत्स्यति ॥ स्था० ॥ "सो आगमिस्साए जिणो भविस्सइ""आगमिस्साए"आयत्यामागामिनि काले इति ॥ आव० ॥ "आगमिस्सा वि सुव्वया" आगामिनि चानन्ते काले तथाभूताः सत्संयमानुष्ठायिनो भविष्यन्तीति ॥ सूत्र० ॥ "आगमिस्सं च पावगं" आगामिनि काले यत्कारिष्यते तत्सर्वमिति ॥ सूत्र० ॥ "हवइ पुणो आगमिस्साणं" (आगमिस्साणंति) एष्यत्काले इत्यर्थः प्राकृतत्वादत्रापि विभक्तिव्यत्यय इति ॥ आतु० ॥ "आगमिस्सेण होक्खइ" आगामिष्यता कालेन हेतुना भविष्यतीत्यर्थ इति ॥ स्था० ॥ उत्तरकालभाविनि च "पडिकमे आगमिस्साणं" आगमिष्याणामुत्तरकालभाविनामिति ॥ आतु० ॥

आगमेत्ता-( म्म )-आगत्य ( म्य )—अव्य० आ-गम- ल्यप् वामो लोपे तुक्। आगमनं कृत्वेत्यर्थे ॥ वाच० ॥ ज्ञात्वेत्यर्थे, "आगमेत्ता आणविज्जा" ज्ञात्वाऽऽज्ञापयेदिति ॥ आचा० ॥ "आगम्मुक्कुडुओ संतो" आगत्योत्कुटुकः त्यक्तासन इति ॥ उत्त० ॥

आगमेयव्व—आगमयितव्य—त्रि० आगमनं आगमनपरिज्ञानं तद्गोचरत्वमानयितव्ये ॥ बृ० ॥

आगमेसि (त्)—आगमिष्यत् त्रि० आगामिनि, ॥ स्था० ॥ कल्प० ॥ आगमिष्यति काले, ॥ प्रश्न० ॥

आगमेसिभद्द—आगमिष्यद्भद्र-न० आगमिष्यति काले भद्रं कल्याणं यत्तदागमिष्यद्भद्रम् । आगमिष्यत्कालभाविनि कल्याणे, प्रश्न० ॥ आगमिष्यद्भद्रं यस्येति। आगमिष्यत्कालभाविकल्याणवति, "समणस्स णं भगवओ महावीरस्स अट्ठसयाणुत्तरोववाइयाणं गइकल्लाणाणं जाव आगमेसिभद्दाणं उक्कोसिया अणुत्तरोववाइसंपया होत्था"॥ स्था० ॥ आगमिष्यत् भद्रं निर्वाणलक्षणं येषां ते तथेति वृत्तिः। स्था० ॥ आगामिभवे सेत्स्यमानत्वादिति ॥ कल्प० ॥ आगमिष्यद्भद्रकर्म्मकारणान्याह स्थानाङ्गे यथा ॥

दसहिं ठाणेहिं जीवा आगमेसिभद्दत्ताए कम्मं पगरेंति तं० अनिदाणयाए दिट्ठिसंपन्नयाए जोगवाहियाए खंतिखमणयाए जीइंदियाए अमाइल्लयाए अपासत्थयाए सुसामण्णयाए पवयणवच्छल्लयाए पवयणउज्जावणयाए ॥ ॥ स्था० ॥

आगमिष्यदागामिभवान्तरभावि भद्रं कल्याणं सुदेवत्वलक्षणमनन्तरं सुमानुषत्वप्राप्त्या मोक्षप्राप्तिलक्षणं च येषां ते आगमिष्यद्भद्रास्तेषाम्भाव आगमिष्यद्भद्रता तस्यै आगमिष्यद्भद्रतायै तदर्थमित्यर्थः आगमिष्यद्भद्रतया वा कर्म शुभप्रकृतिरूपं प्रकुर्वन्ति बध्नन्ति तद्यथा निदायते लूयते ज्ञानाद्याराधना लता आनन्दरसोपेत मोक्षफला येन परशुनेव देवेन्द्रादिगुणर्द्धिप्रार्थनाध्यवसानेन तन्निदानमविद्यमानं तद्यस्य सोऽनिदानस्तद्भावस्तत्ता तया हेतुभूतया निरुत्सुकतयेत्यर्थः ॥१॥ दृष्टिसम्पन्नतया सम्यग्दृष्टितया ॥ २ ॥ योगवाहितया श्रुतोपधानकारितया योगेन वा समाधिना सर्वत्रानुत्सुकत्वलक्षणेन वहतीत्येवंशीलो योगवाही तद्भावस्तत्ता तया ॥ ३ ॥ क्षान्त्या क्षमत इति क्षान्तिक्षमणः क्षांतिग्रहणमसमर्थताव्यवच्छेदार्थं यतोऽसमर्थोऽपि क्षमत इति क्षान्तिक्षमणस्य भावस्तत्ता तया ॥ ४ ॥ जितेन्द्रियतया करणनिग्रहेण ॥ ५ ॥ अमाइल्लयाएत्ति ॥ माइल्लो मायावांस्तत्प्रतिषेधेनामायावांस्तद्भावस्तत्ता तया ॥ ६ ॥ तथा पार्श्वे बहिर्ज्ञानादीनान्देशतः सर्वतो वा तिष्ठतीति पार्श्वस्थः ॥ पार्श्वस्थस्य भावः पार्श्वस्थता तया ७ तथा शोभनः पार्श्वस्थादिदोषवर्जिततया मूलोत्तरगुणसम्पन्नतया च स चासौ श्रमणश्च साधुश्रमणस्तद्भावस्तत्ता तया ८ तथा प्रकृष्टं प्रशस्तं प्रगतं वा वचनमागमः प्रवचनं द्वादशांगं तदाधारो वा संघस्तस्य वत्सलता हितकारिता प्रत्यनीकत्वादिनिरासेनेति प्रवचनवत्सलता तया ९ तथा प्रवचनस्यद्वादशाङ्गस्योद्भावनं प्रभावनं प्रावचनिकत्वधर्मकथावादादिलब्धिभिर्वर्णवादजननं प्रवचनोद्भावनं तदेव प्रवचनोद्भावनता तयेति ॥ टी० ॥

आगय—आगत-त्रि० आ० गम्०क्त आयाते,। विशे०।भ०।वाच०। जाते, ॥ ज्ञा० ॥ उत्पन्ने, ॥ सूत्र० ॥

आगयमिवागयं तं तत्तो जत्तो समुब्भवो जस्स । सपरंपरओपजओ तमागयमिउ तदुवयारो जत्तो त्ति ॥

यतो यस्माद्रूपकादेर्घटादेर्वा सकाशाद्यस्य भोजनादेः रूपादिविज्ञानस्य वा समुद्भव उत्पत्तिः ( तंति ) तद्भोजनादिकं रूपादिज्ञानं वा वस्तु ( तत्तोत्ति ) ततो रूपकादेर्घटादेर्वा सकाशादागतमिवागतमुच्यते हिमवतः समागतगंगाप्रवाहस्येव तस्य तद्धेतुकत्वादित्यर्थः ॥ विशे० ॥

आगतशब्दश्चेहोत्पत्तिवचनाबोधवचनो मंतव्यः इदमत्र हृदयं यस्य वस्तुनो यस्माद्वस्तुनः सकाशात्समुद्भवस्तद्वस्तुन आगतमिवावगतं व्यपदिश्यते यथा कार्षापणरूपकादिभ्यः समुद्भूतं धान्यभोजनादि घटादेः समुद्भूतं रूपादिज्ञानं वा ततः समागतमित्युच्यते ॥ विशे० ॥

उपस्थिते, ॥ वाच० ॥ "आगयसमए" आसन्नीभूतोऽवसरो यस्य स इत्यर्थः ॥ ज्ञा० ॥ ज्ञाते, ॥ आचा० ॥ प्राप्ते, ॥ वाच० ॥ "सिरी अतुलमागया" श्रीर्लक्ष्मीरतुलाऽसाधारणाऽऽगता प्राप्तेति ॥ सम० ॥ भावे क्त० आगमने, न० ॥ ॥ वाच० ॥

आगयगंध—आगतगन्ध–त्रि०जातसुरभिगंधे, ॥ ज्ञा० ॥

आगयपण्ण—आगतप्रज्ञ–त्रि०आगतोत्पन्ना प्रज्ञा यस्यासावागतप्रज्ञः संजातकर्त्तव्याकर्त्तव्यविवेके, "समितीसु गुत्तीसु य आगयपण्णे" ॥ सूत्र० ॥

आगयपण्णाण—आगतप्रज्ञान–त्रि० आगतं स्वीकृतं प्रज्ञानं सदसद्विवेको यस्य स तथा। स्वीकृतसदसद्विवेके, "सया आगयपण्णाणे"।आचा०। "आगयपण्णाणाणं किसा वाहा भवंति" आचा० ॥ आगतं प्रज्ञानं पदार्थाविर्भावकं येषां ते तथा तेषामागतप्रज्ञानानां तपसा परिषहातिसहनेन च कृशा बाहवो भुजा भवंति यदि वा सत्यपि महोपसर्गपरिषहादावागतप्रज्ञानत्वाद्वाधाः पीडाः कृशा भवन्तीति. ॥ आचा० ॥

आगयपण्हया–आगतप्रश्नवा–स्त्री० आयातप्रश्रवायाम्, "तएणं सा देवाणंदा माहणी आगयपण्हया,, आयातप्रश्नवा पुत्रस्नेहादागतस्तनमुखस्तन्येत्यर्थः ॥ भ० ॥ अन्त० ॥

आगयभम–आगतभ्रम–त्रि० उत्पन्नभ्रमणे, ॥ कल्प० ॥

आगयसमय–आगतसमय–त्रि० आसन्नीभूतोऽवसरो यस्य सः । आसन्नीभूतावसरे, ॥ ज्ञा० ॥

आगर–आकर–पुं० आकुर्वन्त्यस्मिन्नित्याकरः॥उत्त०॥ आगत्य तस्मिन् कुर्वन्तीत्याकरः॥आचा०॥ खनौ, " धाउमणिसिलप्पवालरयणागरे य साहिंति,, धातुमणिशिलाप्रवालरत्नानामाकराः खनयस्तान् साधयतीति " गुणआगरं,, गुणानां ज्ञानदर्शनचारित्राणामाकरं खनिमिति. ॥ उत्त० वृ० ॥ प्रश्न० ॥ निधाने,"गुणसयागरो संघो,, "गुणशतानामनेकेषां गुणानामाकरो निधानम् गुणशताकरः संघ इति ॥ व्य० ॥ वृ०॥ मर्य्यादयाऽभिविधिनाऽऽक्रियंते वज्रादीनि तेष्विति ॥ ओघ०। हिरण्याकरादौ, ॥व्य०॥जी०॥ प्रज्ञा०॥ आ जा०। राज०॥ स च हिरण्याद्युत्पत्तिभूमिरिति ॥ ज्ञा० ॥ हिरण्याद्युत्पत्तिस्थानमिति ॥ ज्ञा०॥ ओघ० ॥ उत्त० ॥ ताम्रादेरुत्पत्तिस्थानमिति ॥ ॥ आचा० ॥ लौहाद्युत्पत्तिभूमिरिति ॥स्था०॥ लौहाद्युत्पत्तिस्थानंति ॥अनु०।प्रश्न०।भ०। लौहादिधातुजन्मभूमिरिति।ग०॥ लवणाद्युत्पत्तिभूमिरिति ।ज्ञा०। औप० ॥ लवणाद्युत्पत्तिस्थानमिति ॥ प्रश्न० ॥ यत्र सन्निवेशे लवणाद्युत्पद्यत इति ॥ स्था० ॥ रूप्यसुवर्णाद्युत्पत्तिस्थानमिति ॥ नं० ॥ भ० ॥ आकीर्य्यन्ते धातवोऽत्र कृ० अप रत्नाद्युत्पत्तिस्थाने, ॥ ॥ वाच० ॥ "अयमाइ आगरा खलु" ॥ बृह० ॥ "अयो लोहं तदादय आकरा उच्यंते" यत्र पाषाणं धातुधमनादिना लोहमुत्पाद्यते स अयआकरः आदिशब्दात्ताम्ररूप्याद्याकरपरिग्रह इति ॥ बृह० ॥ "वइरे कणगे य रययलोहे य चत्तारि आगरा खलु,, ॥ ओघ० ॥ वज्राणि रत्नानि तेषामाकरः खनिर्वज्राकरः "चिंतालोहागारिपत्ती"त्यत्र सिंहावलोकितन्यायेनाकरग्रहणं संबध्यते एतेन कारणे होइ हुंत्तीत्यस्माद्भवति क्रिया सर्व्वत्र मीलनीयेति कनकं सुवर्णं तस्याकरो भवति तस्माद्वितीयः रजतं रूपं तद्विषयश्च तृतीयः आकरो भवति च शब्दः समुच्चये अनेकभेदभिन्नरूपप्राकारं समुच्चिनोति (लोहे तत्ति)लोहमयस्तस्मिन् लोहे लोहविषयश्चतुर्थ आकरो भवति चशब्दो मृदुकठिनमध्यलोहसमुच्चायकः। चत्वार इति संख्या आक्रियंत एतेष्वित्याकरास्तथा च मर्यादया अभिविधिना यानि क्रियंते वज्रादीनि तेष्विति खलुशब्दो विशेषणे ॥ ओघ० ॥

( एतेषां प्राधान्याप्राधान्यविवेकः चरणकरणाणुओगशब्दे ) ॥ ओघ० ॥

आकरशब्दस्य चतुर्धा निक्षेप आचाराङ्गे।नामादिस्तत्र व्यतिरिक्तो रजतादिर्भावाकरोऽयमेव ज्ञानादिस्तत्प्रतिपादकश्चायमेव ग्रन्थो निर्जरादिरत्नानामत्र लाभात् उत्पत्तिभूमौ, "कमलागरनलिणीसंडवोहए" कमलानामाकरा उत्पत्तिभूमयो ह्रदादिजलाशयविशेषास्तेषु यानि नलिनीखण्डानि तेषां बोधको यः स तथेति ॥ अनु० ॥

"आयागरेइ वा तंवागरेइ वा तउआगरेइ वा सीसागरेइ वा रुप्पागरेइ वा सुवण्णागरेइ वा" ॥ स्था० ॥

अयआकरो लोहाकरो यत्र लोहं ध्मायत इति वृत्तिः ॥ स्था० ॥ टी० ॥

"तत्थ णं वहवे हिरण्णागरा य सुवण्णागरा य रयणागरा य वइरागरा य" ॥ ज्ञा० ॥

टी०—हिरण्याकराँश्च सुवर्णाकराँश्च रत्नाकराँश्च वैराकराँश्च तत्तदुत्पत्तिभूमीरित्यर्थ इति ॥

स्थानमात्रे च ॥

"तत्थ न कप्पइ वासो गुणागरा जत्थ न किं पंच इमे । आयरियउवज्झए पवत्तिथेरे य गीयत्थे" ॥

वणिज इव राजाद्यभावेऽसाधोरपि तत्र गच्छे वासो न कल्पते यत्र इमे वक्ष्यमाणानामाकराः स्थानानि गुणाकराः पंच न संति के ते इत्याह। आचार्यः उपाध्यायः प्रवृत्तिः स्थविरो गीतार्थश्च ॥ व्य० ॥

आकुर्वन्ति संभूय कुर्वन्ति व्यवहारमत्र आ+कृ–घः ।१। समूहे, २ श्रेष्ठे च ॥ वाच० ॥

अरघट्टादिसमीपस्थे प्रदेशे, । अरघट्टादिसमीपे । प्रभूता यत्र तुषा भवंति स आकर उच्यत इति ॥ बृह० ॥ को पुण आगरो भण्णति। जत्थ घरट्टादिसमीवे सुवहं जवभुसुट्टं सो आगरो भण्णति॥ नि० चू०॥भिल्लपल्ल्यादौ, यत्रालावूनि भवंति। "आगरपल्लीमाई" आकरो नाम भिल्लपल्ली भिल्लकोटं वा तत्र प्रायोऽलावूनि प्राप्यंत इति ॥ वृ० ॥

आगर—पु० आगीर्य्यते उद्गमितुमारभ्यते चंद्रमा अत्र आ+गृ आधारे अप्। अमावास्यायाम्, । वाच० ॥

आगरणिवेस—आकरनिवेश—पु० आकरस्थाने, "आगरनिवेसेसुत्ति" ॥ प्रज्ञा० ॥

आगरणी—आकरणी—स्त्री० लोहकारांवरीषायाम्, ।स्था०

आगरपल्ली—आकरपल्ली—स्त्री० स्वर्णाद्युत्पत्तिस्थानस्थिते वृक्षवंशादिगहनाश्रिते प्रान्तजनस्थाने, "निगमे आगरपल्ली य" आकरः स्वर्णाद्युत्पत्तिस्थानं तस्मिन् आकरे पल्ली वृक्षवंशादिगहनाश्रिता प्रान्तजनस्थानं।तस्याम् पल्ल्याम्, ॥ उ०॥

आगरमुत्ति—आकरमुक्ति—स्त्री०चिक्कणिकायाम्,–सा च नो कर्म्मद्रव्यलोभ इति ॥ आव० ॥ आ० म० द्वि० ॥ "अएणे

भणंति णो कम्मे आकरमोत्ती एवमादि आकरमोत्ति चिक्कणिकेति ॥ आ० चू० ॥ ( एतद्वक्तव्यता लोभशब्दे० ) ॥

आगरि(न्)—आकरिन्—त्रि०आकर उत्पत्तिस्थानं प्राशस्त्येनास्त्यस्येति इनि स्त्रियां ङीप् । "प्रशस्ताकरजाते, । दधतमाकरिभिः करिभिः क्षतैः ॥ किरा० ॥ वाच० ॥ आकरवति ॥ प्रश्न० ॥

आगरिय—आकरिक—त्रि०आकरे नियुक्तः ठञ् । स्वर्णाद्युत्पत्तिस्थानेषु राज्ञा नियुक्ते,। तत्र हि नियुक्तस्य लोभाधिक्येनापायसम्भवात् तत्राधिकारस्य मनुना उपपातकमध्ये परिगणना कृता । सर्व्वाकरेष्वधिकार इति, ॥ वाच ॥

आगरिस—आकर्ष—पुं० आकर्षणमाकर्षः आ—कृष् घञ्"र्शर्षतप्तवज्रे वा" इति प्राकृतसूत्रेणेकारः ॥ प्रा०॥ उपादाने,। आकर्षो नाम कर्मपुद्गलोपादानमिति ॥ सम० ॥ आकर्षो नाम तथाविधेन प्रयत्नेन कर्मपुद्गलोपादानमिति ॥ प्रज्ञा० ॥ आयुष्कर्माकर्षो आउबंधशब्दे ग्रहणे, आ० म० ॥ विशे० ॥ प्रथमतया ग्रहणे मुक्तस्य ग्रहणे च ॥ आ० म० द्वि० ॥ विशे० ॥ ग्रहणमोचनयोः, आकर्षणमाकर्षः । ग्रहणमोचनमित्यर्थ इति ॥ आ० चू० ॥ स च द्विविध एकभविको नानाभविकश्चेति ॥ प्रव० ॥ आ० चू० ॥ विशे० ॥ ॥ अनु० ॥ आ० म० प्र० ॥ ( सामायिकस्याकर्षाः सामायियशब्दे) । प्राप्तौ, । पुलागस्स णं भंते ! रागभवग्गहणिया केवइया आगरिसा पण्णत्ता । आकर्षणमाकर्षश्चारित्रस्य प्राप्तिरिति ॥ भ० ॥ ( पुलाकादीनामाकर्षा निग्गंथशब्दे )

आगरिसग—आकर्षक—पुं० आकर्षति सन्निकृष्टस्थं लौहं आ-कृष्—ण्वुल् । ( चुम्बक ) इतिख्याते अयस्कान्ते, ॥ आकर्षेण कर्त्तरि त्रि० आकर्षे नियुक्तः आकर्षादि० कन् । आकर्षनियुक्ते, "आकषः निकषोपल इति रेफरहितः पाठो युक्तः" सि०कौ० ॥ वाच० ॥ आ० म० प्र० ॥

आगरिसण—आकर्षण—त्रि० आ+कृष् ल्युट् अन्यत्र स्थितस्य वस्तुनः बलेन अन्यत्र नयने, "योषिदाकर्षणे चैत्रविनियोगः प्रकीर्त्तितः" । आकृष्यतेऽनेन करणे ल्युट्। आकर्षणसाधने तन्त्रोक्ते षट्कर्म्मान्तर्गते विधानभेदे च ॥ वाच० ॥ आकृष्यत इति आकर्षणाम द्रविणे आकृष्यत इति । आगसणं तं च दविणं इति । नि० चू० । प्रेरणे, "आकट्टणमाकसणं अप्पणोत्तेण । आगट्टणमागसणं उदगगतेन प्रेरणमिति" ॥ नि०चू० ॥

आगलण—आकलन—न० अध्यवसाये, "धणुबलं वा आगलंति" (आगलेंतित्ति) आकलयंति जेप्याम इत्यध्यवस्यन्तीति ॥भ०॥

आगलिय—आगलित—त्रि० निवारिते, ॥ ज्ञा० ॥

आगल्ल—आगल्ल—त्रि०ग्लाने, "तेण एस आगल्ले" तेनायमागल्लो ग्लानः संजात इति ॥ वृह० ॥

आगाढ—आगाढ—त्रि० अत्यन्तदुर्भेदे, "आगाढपण्हेसु य संथवेसु" आगाढप्रश्नेषु चाऽत्यंतदुर्भेदप्रश्नेषु परिचयेषु सत्स्विति ॥ व्य० ॥ कर्कशे, "आगाढे अहिगरणे" आगाढे कर्कशेऽधिकरणे उत्पन्ने इति ॥ वृह० ॥ कारणे, "अद्धाणविवित्ताणं आगाढं से सिणागाढं । अद्धाणे विवित्ताणं आगाढं कारणं सेसं "अद्धाणं तंमि उवगरणाभावे" आगाढं ण भण्णइ" "आगाढेहिं वा कारणेहिं बोलेंति ॥ नि० चू० ॥

"आगाढकारणेहिं" आगाढैः कुलादिभिः कारणैरिति ॥ वृह० ॥ आगाढं प्रत्यनीकस्तेनादिरूपं यत्कारणमिति ॥ वृ०॥ अशिवादिके कारणे, ।

असिवे ओमोदरिए रायदुट्ठे भए अ आगाढे । गेलन्नउत्तिमट्ठे णाणे तह दंसणचरित्ते ।

आगाढशब्दः प्रत्येकमभिसंबध्यते आगाढे अशिवे अवमौदर्ये राज्यद्विष्टे बोधिकस्तेनादिभये च यथा आगाढं नाम शैक्षसागारिकादिमन्यतमकारणं तदा ग्लान उत्तमार्थप्रतिपन्नो वा क्वचिद्देशांतरे श्रुतः अपांतराले च तत्र छिन्नः पंथा अतस्तत्परिचरणार्थं गंतव्यं उत्तमार्थं वा प्रतिपित्सुः संविग्नगीतार्थसमीपच्छिन्नेनापि पथा गच्छति । ज्ञानमाचारादिदर्शनं दर्शनविशुद्धिकारकाणि शास्त्राणि । तदर्थमध्वानं गच्छेत् चारित्रार्थं नाम यत्र देशे स्त्रीदोषा वा भवंति तं परित्यज्य देशांतरं गंतव्यम् ।

एएहिं कारणेहिं आगाढेहिं तु गम्ममाणेहिं । उवगरणपुव्वं गहिऊण पडिलेहिएण गंतव्वं ।

एतैरशिवादिभिः कारणैरागाढैरेव गम्यमानैः प्राप्यमाणैः उपकरणमध्वप्रायोग्यं गृहीत्वा पूर्वं गमनात् प्राक् प्रत्युपेक्षितः सम्यक्शुद्धाशुद्धतया निरूपितो यः स सार्थस्तेन सह गंतव्यं ॥ वृ० ॥

( तथा च वृहत्कल्पे ग्लानवैयावृत्यमधिकृत्योक्तम् ) आगाढे कारणजाते सति वैयावृत्त्यं कुर्यादपि परित्यजेद्वा ग्लानं किं पुनस्तत्कारणजातमित्युच्यते ।

असिवे ओमोयरिए रायदुट्ठे भए व गेलन्ने । एएहिं कारणेहिं अहवा वि कुले गणे संघे ।

अशिवे अवमौदर्ये राजद्विष्टे भये वा शरीरस्तेन समुत्थे (गेलन्नेति ) सर्वो वा गच्छो ग्लानीभूतः कस्य कः प्रतिचरणं करोतु एतैः कारणैरिति ॥ वृ० ॥

"आणुवसमंते निग्गमो लिंगविवेगेण होइ आगाढे । देसंतरसंकमणं भिक्खुगमादी कुलिंगेणं" ।

अनुपशमयति उपशमनमकुर्वति राज्ञि निर्गमो भवति । कथमित्याह । लिंगविवेकेन लिंगपरित्यागेन गृहस्थलिंगेनेत्यर्थः । अथ तथापि न मुंचति गाढकोपावेशात् तह आगाढे अत्यंतप्रकोपतो गाढममोक्षणे भिक्षुकादिलिंगेन देशांतरसंक्रमणं कर्त्तव्यं । अशिवादौ वा कारणे समुपस्थिते देशांतरगमनं किल कर्त्तव्यं ॥ व्य० ॥

पंचकल्पभाष्येऽपि ।

असिवे ओमोदरिए रायदुट्ठे पवादिदुट्ठे वा । आगाढे अण्णलिंगं कालक्खेवो व गमणं च ॥ असिवे जदि जतिपंता लिंगविवेगेण तक्खणं गच्छे । सव्वथं वा वि असिवे कालक्खेवो विवेगेणं ॥ ओमे चेवं कुज्जा पवादिदुट्ठेण बुद्धिलोयाणं । तत्थंवि य अन्नलिंगे गिहिलिंगे वा विभासेज्जा । एयं चिय आगाढं ॥ पं० कं० भा० ॥ पं० क० चू० ॥

"आगाढे अन्नलिंगं कालक्खेवो य होंति गमणं वा"

आगाढं राजद्विष्टे इति ॥ व्य० ॥
( निशीथचूर्णावाहारमधिकृत्यागाढस्य भेदा यथा ) किं पुण आगाढं अणागाढं वा तत्थिमं आगाढं समासतो चउव्विहं ॥ गाहा—

अद्धाणे ओमे वा गेलण्णपरिण्णदुल्लभे दव्वे । आगाढं नायव्वं मुत्तुं ण होंति णागाढा ॥ १९० ॥

इमं खेत्तागाढं अद्धाणपडिवएणगाढं सव्वं जाहं असंथरणं तं गाढं । इमं कालागाढं ओमकाले जं असंथरणं तं गाढं इमे गिलाणपरिन्ना दो वि भावागाढं गिलाणस्स तद्दिवसं पायोग्गं जति न लब्भंति तो गिलाणो गाढं परिएणस्स असमाधाएे उप्पएणे दिया रातो वा परिएणागाढं गिलाणस्स तद्दिवसं पायोग्गं इह राती अहिगारो । इमं दव्वागाढदुल्लभदव्वेति सतपागसहस्सपागं धयं तेल्लं तेण साहुणो कज्जं तंमि अलभंते दुल्लभदव्वागाढं । एवंविधं आगाढं नायव्वं पडिपक्खे अणागाढं ॥ नि० चू० ॥
( विस्तरेणागाढस्य भेदा यथा. )

दव्वे खेत्ते काले भावे पुरिसे तिगच्छे असहाए । एतेहिं कारणेहिं सत्तविहं होइ आगाढं ॥ पं० क० भा० ॥ नि० चू० ॥

दव्वे ताव वेज्जो पुच्छियव्वो । जाव इयाणि दव्वाणि उवइस्सइ ताव इयाणिं न पडिसेविज्जंति जहा एयं अम्हे न कप्पइ जाहे उवइट्ठाणि ताहे ओमंथइ परिहाणीए भण्णइ ॥ पं० क० चू० ॥

एगादीयावड्ढी एगुत्तरिया य होंति दव्वाणं । ओमत्थगपरिहाणी दव्वागाढं वियाणाहिं ॥ जंयेति पुणो वेज्जो सच्चित्तं दुल्लभं च दव्वं वा । अप्पडिहण्णंतो अच्छति उद्दिसिउं जाव सो ठाति ॥ जाहे उद्दिट्ठाणी ताहे ओमत्थहाणिए भण्णति । अम्हे करेमो जोग्गं अलंभे एयस्स किं कुणिमो ॥ एवं तु हावयंता खेत्तं कालं च भावमासज्ज । ता जूहंती जाव उ लंभे जिसिं तु दव्वाणं ॥ अह पुण भणेज्ज एवं अवस्समेत्तेहि कज्जदव्वेहिं । एतं दव्वागाढं ताहिं जए पणगहाणीए । पं० क० भा० ॥

एगाइयवड्ढीए अम्हे करेसु जोगं मग्गसुं तं चेव जाव कलमसालीखेत्तकालगाहा तहेव य जहिं लाभो तहिं ठायंति अहवा भणेज्जा अवस्सिमाणि दव्वाणि जाणि दव्वाणि दुल्लहाणि परित्ताणह स तेल्लमाईणि वा ताहे तं दव्वागाढं पणपरिहाणीए जयंति जाव चउगुरुएण विगेएहंति ॥ पं० क० चू० ॥
खेत्तागाढं स्मियाणिं गाहा–

खेत्तागाढं इणमो असती खेत्ताण मासजोग्गाणं । असिवं वा अद्धन्थ णदी व य वा होज्ज सद्धा तु ॥ आयरियादि अहारग अहवा अन्नत्थ सावता होज्ज । अंतर जहिं च गम्मति वाला तहेण खुत्तियं वा ॥ एतेहिं कारणेहिं खेत्तागाढंमि ए पुरिसे य । तो अत्थंति असढभावा एगखेत्ते वि जयणाए ॥ पं० क० भा० ॥

खेत्तस्स वा अलंभे असइ मासयाउग्गाणं खेत्ताणं एगत्थ अत्थेति असिवं वा अन्नत्थ नई वा तीरंति पूतूण अकाग्गं वा आयरियाणं अन्नत्थ सावया वा तत्थ अंतरा वा दिग्घा जाइया वा अन्नंमि देसे अंतरा वा ताहे एगत्थ अत्थंति अहवाखेत्तागाढं ॥ पं० क० चू० ॥

कालस्स वावि असती वासावासे दियारणा णत्थि । एतेहिं कारणेहिं कालागाढं वियाणाहि ॥ वासाजोगं खेत्तं पडिलेहें तं तु कालेण । बहुसो वच्चंताण य अंतरवासं तु णिवडितुं पवत्तं ॥ डहरं वंतरखेत्तं ताहे तं चेव पुव्वखत्त तु । गंतू वसती वासं समतीते वीतिदसरातं ॥ पं० क० भा० ॥

कालओ कालेण बहुसो वासावासपाउग्गं खेत्तं वच्चंताणं अंतरावासं पडियं तं च अंतराखेत्तं । संनिसद्धगं ताह तं चेव पुव्वपडिलेहियं खेत्तं । जं तिउल्लंता वि अइत्थिरा वा वासावासे जइ वासइ मग्गिसिरे दस राया तिरिएण होंति उक्कोसेण ओमोयरियाए वा जा जइणा आहाराइसु एयं कालागाढं ॥ पं० क० चू० ॥
( इयाणिं भावागाढं )

अतिउक्कडं च दुक्खं अप्पा वा वेदणाभये आसुं । एतेहिं कारणेहिं भावागाढं वियाणाहि ॥ अब्भुक्कडमूलादी अहिडक्काइ तु वेदणा अप्पा । तत्थगितावणादी दाहवच्छेदोवगाढादी ॥ पं० क० भा० ॥

अइउक्कडं च अइउक्कडंति विसूइयाइ अहिदट्ठविस अप्पा वा वेयणा हियसूलाइ तत्थ अग्गी कंदाइं वा परित्ताणं ताइ दायव्वं एयं भावागाढं ॥ पं० क० चू० ॥

जंमि विणट्ठे गच्छस्स विणासो तह य णाणचरणाणं । एतेहिं कारणेहिं पुरिसागाढं वियाणाहि ॥ तस्स तु सुद्धालंभे जावज्जीवं पि होत सुद्धेणं । कायव्वं तू णियमा पुरिसागाढं भवे एतं ॥ जेण कुलं आयत्तं तं पुरिसं आदरेण रक्खाहि । ण हु तुंबंमि विणट्ठे अरया साहारगा होंति ॥ पं० क० भा० ॥

पुरिसागाढे जंमि विणट्ठे गच्छस्स विणासो नाणदरिसणचरित्ताइणं विणासो न हु तुंबंमि विणट्ठे गाहा ताहे तस्स असुद्धेणावि कीरइ जाव जीवइ एयं पुरिसागाढं ॥ पं० क० चू० ॥

संजोगदिट्ठपाढी फासुगउवदेसणासु जो कुसलो । एतारिसस्स असती णायव्वं तिगिच्छमागाढं ॥ मज्जणतूलिविभासा अरणे पाउरणए य पाणेय ॥ केवडियाण पहाणे अन्नभत्तो गिलाणो तु ॥ पं० क० भा० ॥

संयोगदिट्ठपाढीवेज्जस्स वा संयोगदिट्ठपाढिस्स असइ गीयत्थसंविग्गस्स । ताहे गियत्थवेज्जस्स जा पाकुडिया कीरइ पहाणभोयणचोयणाइ तं सद्दहइ एयंति तिगिच्छागाढं पं० क० चू० ॥

उज्जव सहाणरहितो अव्वत्ता वावि अहव असमत्था ।

एय सहायागाढं तम्हाणु मुणी ण विहरेज्जा ॥ पं० क० भा० ॥

होज्जवसहायसहाया वासे नत्थि अवत्तव्वया सुत्तेण वा दोसा य हिंडमाणस्स वा एगाणियस्स ताहे एगत्थ अत्थइ एग अत्थंतो अपायच्छित्तो जाव सहाए न लभइ पाउग्गे एयं सहायागाढं ॥ पं० क० चू० ॥

आशुघातिनि अहिदंशनादिके कारणे च । "अहिढक्कविसविसूइ य सज्जक्खयमूलमागाढं,, अहिना सर्प्पेण दष्टः कश्चित्साधुः विषं वा केनचिद्भक्तादिमिश्रं दत्तं विसूचिका वा कस्यापि जाता सद्यः क्षयकारि वा कस्यापि शूलमुत्पन्नं एवमादिमाशुघाति सर्वमप्यागाढं एतद्विपरीतं तु चिरघाति कुष्ठादिरोगात्मकमनागाढं । वृ० ॥ नि०चू० ॥ग० ॥

अवश्यकर्त्तव्ये कार्य्ये, "अणगाढे आगाढं करंति अगाढि अणगाढं,, आगाढमवश्यकर्त्तव्यं ग्लानप्रतिजागरणादिकं न आगाढं अनागाढं तस्मिन् अनागाढे कार्यं इति शेषः। आगाढमवश्यकर्त्तव्यमिति कृत्वा कुर्वंतीत्यर्थः। तथा आगाढे अवश्य कर्त्तव्ये कार्ये । अनागाढं कार्यं येन कृतेन विनापि सरति तत्कार्यं कुर्व्वतीत्यर्थः। अथवा अनागाढयोगानुष्ठाने वर्त्तमाने आगाढयोगानुष्ठानं कुर्वंति तथा आगाढयोगानुष्ठाने अनागाढयोगानुष्ठानं कुर्वंति । स्वच्छंदाः ॥ ग० ॥

औत्पत्तिके कार्य्ये च । आगाढं तु किंचिदौत्पत्तिकं कार्य्यमिति ॥ वृ० ॥ "आगाढमुसावाई,, आगाढे कुलकार्य्ये संघकार्य्ये वेति ॥ व्य० ॥ "करणे य विवच्चा संकरेइ आगाढणागाढा,, ॥ वृ० ॥ आगाढे ग्लानादिकार्य्ये अनागाढं त्रिः कृत्वा परिभ्रमणादि लक्षणं अनागाढे वाऽऽगाढं सद्यः प्रतिसेवनात्मकं करोतीति ॥ वृह० ॥ आगाढे राजद्विष्टादिके कार्य्ये इति ॥ वृह० ॥ अभिगृहीतमिथ्यादर्शने,-पुं० आगाढोऽभिगृहीतमिथ्यादर्शन इति ॥ वृह० ॥

**आगाढजोग**—आगाढयोग—पुं० योगभेदे, "आगाढमणागाढे दुविहे जोगे समासतो होंति,, ॥ नि०चू० ॥ जोगो दुविहो आगाढो य अणागाढो य । आगाढं तु राजंमि जोगे जतणा सो आगाढो यथा भगवतीत्यादि ॥ नि०चू० ॥ वृह० ॥

**आगाढपण्ण**—आगाढप्रज्ञ—न० शास्त्रे, "आगाढपण्णेसु य भावियप्पा" आगाढप्रज्ञानि शास्त्राणि तेषु भावितात्मा तात्पर्य्यग्राहितया तत्रातीव निष्पन्नमतिरिति ॥ व्य० ॥

**आगाढपण्ह**—आगाढप्रश्न—पु० अत्यंतदुर्भेदप्रश्ने, "आगाढपण्हेसु य संथवेसु" आगाढप्रश्नेषु वाऽत्यंतदुर्भेदप्रश्नेषु परिचयेषु सत्स्विति ॥ व्य० ॥

**आगाढपरियावण**—आगाढपरितापन—न० बहुतमपीडोत्पादनात्मके परितापे, । "आगाढपरियावणद्वणे" बहुतमपीडोत्पादनं चागाढमिति ॥ जीत० ॥

**आगाढमुसावाइ ( न् )**—आगाढमृषावादिन्—त्रि० आगाढे कुलकार्य्ये संघकार्य्ये वा अनाभाव्यस्य वा ज्ञानतया रागद्वेषाभ्यां वा भणनात् मृषावदतीत्येवंशील आगाढमृषावादी। कार्य्ये सति मृषावादिनि, । "आगाढमुसावादी वितियतइए उ लोवेति वए उ" आगाढं मृषावादी द्वितीयमृषावादादत्तादानविरतिरूपे व्रते लोपयतीति ॥ १ व्य० ॥

**आगाढवयण**—आगाढवचन—न० अत्यर्थं गाढमागाढम् "गाढुत्तगूहणकरं गाहेउं व तेण आगाढं" गाढं उक्तं गाढुत्तं तं केरिसं गूहणकरं अन्यस्याख्यातुं न शक्यते अथवा शरीरस्योष्मा येनोक्तेन जायते तमागाढमित्युक्तलक्षणे वचने, । ॥ नि०चू० ॥ "जे भिक्खू भदंतं आगाढं वयइ वदंतं वा साइज्जइ" । ( आगाढवचनपरुषवचनागाढपरुषवचननिषेधो निशीथचूर्णौ दशमे उद्देशके यथा )—

मा भुंज रायपिंडंति चोदितो तत्थ मुच्छितो गिद्धो ।
खुज्जाती मा वच्चह आगाढं च उप्पती दशमो ॥ १ ॥

गुरुणावेतितो मुच्छियो गिद्धो एकार्थवचने अहवा तं भुंजतो संजमासंजमे ण जाणइ मूर्च्छितवत् मूर्च्छितो अभिलाषमात्रगृद्धः अहवा खुज्जादिया ण मालयं वचेति चोदितो आगाढवयणं भणेज्ज । एस उप्पत्ती आगाढवयणस्स दसमुद्देसगस्स एस संबंधो । जे इति णिद्देसे भिक्खू पुव्ववण्णिओ भदि कल्याणे सुखे च दीप्तिस्तुतिसौख्येषु वा मोहात्मस्य सिलोकः भदंतो आचार्या अत्यर्थं गाढं वद् व्यक्तायां वाचि अएणं वा वदंति अणुमोदति णिज्जुत्ती । गाहा—

आगाढं पि य दुविधं होइ असूआए तह य सूयाए ।
एएसिं पत्तेयं दोण्हं पि पद्भवणं वोच्छं ॥ २ ॥

आगाढं द्विविधं असूताये सूताए वा आगाढफरुसोभयसुत्ताण त्तिण्ह वि इमं सइं वा । गाहा—

गाढुत्तगूहणकरं गाहे उम्हतेण आगाढं ।
णेहरहितं तु फरुसं उभए संजोयणा णवरं ॥ ३ ॥

गाढं उक्तं गाढुत्तं तं केरिसं गूहणकरं अन्यस्याख्यातुं न शक्यते अहवा शरीरस्योष्मा येनोक्तेन जायते तमागाढं नेहरहियं णिप्पिवासं फरुसं भणंति ॥ गाढफरुसं उभयं ततियसुत्ते जोगो दोण्ह वि सूयासूयवण्णाणं इमेहिं दारेहिं सरूवं जाणियव्वं । गाहा—

जातिकुलरूवभासा धणबलपरियागजससत्तवेलाभे ।
सत्तत्ययुधिधारणउग्गहसीले समायारी ॥ ४ ॥
अम्हे मो जातिहीणा जातीमंतेहि को विरोहेण ।
एस असूया सूया तु णवरं परवत्थुणिद्देसो ॥ ५ ॥

लोकप्रसिद्धं उल्लिङ्गितवचनं तव अत्र तादृशं न गृहीतव्यं । इह तु परं दोषेण सूचयति । स्पष्टमेव दोषं भाषतीत्यर्थः । परवत्थुणिद्देसो णामं भइं तं चेव भणंति, तुमं जातिहीणोत्ति । गाहा—

अम्हे मो कुलहीणा को कुलपुत्तेहि सह विरोहेण ।
एस असूया सूया तु णवरं परवत्थुणिद्देसो ॥ ६ ॥
अम्हे मो रूवहीणा सरूवदेहेसु को विरोहेण ।
एस असूया सूया तु णवरं परवत्थुणिद्देसो ॥ ७ ॥
अम्हे मो अकत्तमुहा अलं विवाएण णेकत्तमुहेहिं ।
एस असूया सूया तु णवरं परवत्थुणिद्देसो ॥ ८ ॥

वाग्मीकृतमुखभासाए द्वितीयव्याख्यानं । गाहा—

खरफरुसणिट्ठुरं णे वक्कं तुज्झंपि महुरगंभीरं ।
एस असूया सूया तु णवरं परवत्थुणिद्देसो ॥ ९ ॥

सरोसवणियमिश्रकंतं खरं प्रणयने हाणि तरहं फरुसं अगा-गादियं अणुवयारं णिट्ठुरं । मो इत्यात्मनिर्देशे अक्खरेहिं मितं अत्थमभिधाणेहिं मधुरं सरेण गंभीरं । गाहा–

अम्हे मो धणहीणा आसि अगारंमि इड्डिमं तुज्झे ।
एस असूया सूया तु णवरं परवत्थुणिद्देसो ॥ १० ॥
एमेव सेसएसु वि जोएयव्वा असूयसूयाओ ।
आत्तगता तु असूया सूया पुण पागडं भणिया ॥११॥

अप्पणो दोसं भासति ण परस्स एसा असूया । ण अप्पणो परस्स फुडमेव दोसं भासति एसा सूया । सूयतीव सूया । औरसवलयुक्तो वलवान् । परिओ प्रव्रज्याकालः । सक्तो वा सक्तःप्रथमे वयसि वर्त्तमानः त्रिदशवत् वयोवर्जो वा जंमि वए ठितो तस्स तदा गुणवासंति उप्पत्तियादिबुद्धि-जुत्तो बुद्धिमं धारणा दढस्मृतिः बहुबहुविधक्षिप्रानि श्रिताः संदिग्धं ध्रुवाणा उग्गहं करेंति अक्कोहादिणा सालंवं चक्क-वालसामायारीपजुत्तो कुसलो वा एते अत्था सव्वे सूया-सूयाहिं भाणियव्वा । गाहा–

एक्केक्का सा दुविधा संतमसंता य अत्ताणि परे य ।
पच्चक्खपरोक्खावि य असंतपच्चक्खदोसयरा ॥ १२ ॥

अत्मगता असूया । परगता सूया । असूया संतासंता य । सू-या वि संतासंता य । जहत्थेअट्ठियं संतं अभूतार्थं अनृतं असंतं परस्स जं पभासति पच्चक्खं महंतदोसतरं भवति अहवा इमेहिं अप्पाणं परं वा पसंसति णिंदति वा । गाहा—

गणि वायते बहुस्सुते मेहावायरियधंमकहिवादी ॥
अप्पवासाए सूले तणुए दीहे य महडे य ॥ १३ ॥
अम्हे खमणाण गणी को गणत्तसवे वि सह विरोहेण ।
एस असूया सूया तु अगणिं वगणिं पूयागणिं च ॥१४॥
अगणिं तु हासमादीहिं ००००००० ।
एवं सेस पएसुवि सप्पडिपक्खं तु नेयव्वं ॥ १५ ॥

सेसा पादा बहुसुत्तादीया निवित्तं बहुयं च सुयं बहुस्सुतो तिविधो मेहावी गहणधारणमेधावी य आयरियो गच्छा-हिवती तत्थेवं भासति अम्हे के आयरियत्तस्स जे सामाया-रिं पि ण याणामो अहवा भणति तुमं को आयरियत्तस्स जो सामायारिं पि ण याणसि चतुव्विहाए अक्खेवणियमा-दियाए धम्मकहाए लद्धीए जुत्तो ससमयपरसमए सुगता-गमो उप्पणपइतो वादी बहु अल्पकषायं क्रियासु दत्तः स्थूरः तनुर्दर्लःशमापूरदेहाको तणुदेहे हीणे सह विरोधो घट्टमो णिच्चं उवरिं मडहसरीरेहिं को विरोहेण णिंदं च करेंति थुती य परमप्पणो कहतरं णाउं परवयणपयोग-वसा पुव्वुत्तरमप्पणो देति एते सामन्नतरं आगाढं जो वदेति तस्सिमा सोही गाहा–

छेदादी आरोवण नेयव्वा जाव मासियं लहुगं ।
आयरिए वसभंमि य भिक्खुंमि य खुड्डुए चेव ॥ १६ ॥
आयारया आयरियं आगाढं वयति याव इच्छेयं ।
वसभे छग्गुरु भिक्खुमि छल्लहु खुड्डए गुरुगा ॥ १७ ॥

"आयरिओ आयरियं आगाढं वदति छिंदो आयरिओ वस-भं वा आयरिओ भिक्खुर्वा आयरिओ खुत्तं वा । गाहा ॥

वसभे छग्गुरुगाई छल्लहुगा भिक्खुखुड्डे गुरुगाई ।
अंता पुण सिं चउलहु मासगुरु मासलहुओ य ॥ १८ ॥

वसभो आयरियं आगाढं वदति वा खुत्तो वसभं वा खुत्तो खुत्तं अहवा अन्यथा प्रायश्चित्तक्रमः । गाहा—

पंच ण्हायरियारइ छेया एक्केक्कहासणा अहवा ।
राइंदियवीसंतं चउण्ह चत्तारि वि विसिद्धा ॥ १९ ॥

आयरियवसभभिक्खुथेरो खुत्तो यच्छेदादीवीसए रातिंदि-याइं अंतेणं चेव वारणियप्पउगेणं वारेयव्वं जत्थ जत्थ चउगुरुगं तत्थ तत्थ सुत्तणिवाओ दट्ठव्वो अहवा पुव्वुत्ताण चउण्हं चउगुरुगं तव कालविसेसिय अहवा सव्वेसिं अविसिट्ठं च उ । गाहा–

जं चेव परट्ठाणे आसायंताण पावए ओमंतं ।
तं चेव य ओमो वि य आसाइंतो वि राइणियं ॥२०॥

परट्ठाणं परप्रधानं ज्येष्ठमित्यर्थः । जं सो ओमं आसादंतो पावति ओमे वि तं चेव जेट्ठं आसादेंतो पावति ॥ गाहा ॥

एएसामन्नयरं आगाढं जो वदे भयंतारं ।
सो आणाअणवत्थं मिच्छत्तविराधणं पावे ॥ २१ ॥

असंखेडादयो दोसा पक्खापक्खगहणे य गच्छभेदाकारणे भणेज्जा वि ॥ नि० चू० ॥

ण णिच्छयमावसिया छहं बल्ली फला वि संबद्धा ।
इति हरिसगमणचोदणआगाढं चोदितो भणति ॥ १ ॥

कारणे वासावासे भायं णाणं कसेणं कतेणं वसित्ता पासति । तं वीओ जायपुत्तं भंडाओ ताहे सो हरिसितो भणति । ण णित्थयामो वसिता मम वादिसु अतीव बल्ली-ओ पसारिता ण केवलं पसरिता तो पभूता फला वि संब-द्धा न केवलं संबद्धा प्रायशो निष्पन्ना । अभिस्समो पादे तं एवं भणंतं कोवि साधू पडिचोएज्जा । मा अज्ज ! एवं भणाहि ण वट्टति । ततो सो पडिचोदणाए रुट्ठो फरुसं वदेज्ज । तत्प्रतिषेधार्थमिदं सूत्रमारभ्यते ॥

जे भिक्खू भिक्खूणं आगाढं वदइ वदंतं वा साइज्जइ ॥१॥
जे भिक्खू भिक्खूणं फरुसं वदइ वदंतं वा साइज्जइ ॥ २ ॥
जे भिक्खूणं ण आगाढं फरुसं वदइ वदंतं वा साइज्जइ ॥ नि० चू० ॥

"आगाढफरुसमीसगदसमुद्देसंमि वण्णियं पुव्वं । तं चेव-वज्जवत्थो पावति आणमादीणि,, ॥ नि० चू० ॥

जे भिक्खू अण्णउत्थियं वा गारत्थियं वा आगाढं वदइ व-दतं वा साइज्जइ वा ॥ ९ ॥ आगाढ इत्यादि जे भिक्खू अ-ण्णउत्थियं वा गारत्थियं वा फरुसं वदइ वदंतं वा साइ-ज्जइ ॥ १० ॥ जे भिक्खू अण्णउत्थियं वा गारत्थियं वा आगाढं फरुसं वदइ वदंतं वा साइज्जइ ॥ नि० चू० ॥

आगाढफरुसमीसगदसमुद्देसंमि वण्णितं पुव्वं ।
गिहिअण्णतित्थिए हि व ते चेव य होति तेरसमे ॥ २५ ॥

जहा दस मुद्देसे भदंतं प्रति आगाढफरुसमीसगसुत्ता भणि ता तहा इहं गिहत्थ अण्णउत्थियं प्रति वक्तव्या इमेहिं जा-

तिमच्चिएहिं गिहत्थि अण्णतित्थियं वा ऊणतरं परिभवंतो आगाढं फरुसं वा भणति ॥ नि० चू० ॥

आगाढसुय—आगाढश्रुत-न० श्रुतभेदे, "आगाढसुयं भगवतीमाइ अणागाढं आयारमातित्ति" ॥ नि० चू० ॥ "आगाढे एवमत्थे वि" आगाढे तूत्तराध्ययनभगवत्यादिके श्रुते इति ॥ ॥ जीत० ॥

आगाढागाढकारण-आगाढागाढकारण-न० तथाविधे प्रयोजने "णएणत्थ आगाढागाढेहिं" अन्यत्र तथाविधप्रयोजनादिति ॥ आचा० ॥

भिक्खू य बहुस्सुयबद्धागमे बहु आगाढागढेसु कारणेसु माई मुसावाईत्ति ॥ व्य० सू० ॥

कुलप्राप्तं गणप्राप्तं यत् सचित्तादिकं व्यवहारेणाच्छेतव्यं कार्य्यं वा आगाढागाढं कारणं तेषु आगाढागाढेष्विति॥व्य० सू० ॥ आगाढागाढकारणादीनि पदानि व्यचिख्यासुराह व्यवहारभाष्यकृत् ।

कुलगणसंघप्पत्तं सचित्तादी तु कारणागाढं ॥ व्य० ॥

सचित्तनिमित्तोऽचित्तनिमित्तो वा यो व्यवहारः कुले क्षिप्तो यथेदं सचित्तादिकं विवादास्पदीभूतं कुलेन छेत्तव्यमिति तत्कुलप्राप्तमेवं गणप्राप्तं संघप्राप्तं भावनीयं यत्र यत्सचित्तादिकं विवादास्पदीभूतं व्यवहारेण छेद्यतया कुलप्राप्तं वा तत्कारणागाढं कारणं ॥ व्य० ॥

आगामि (न्)—आगामिन्-त्रि० आगन्तुके, भविष्यत्कालवृत्तौ च ॥ वाच० ॥ लब्धव्ये ॥ स्था० ॥

आगामिपह—आगामिपथ—पुं० आगामिनो लब्धव्यस्य वस्तुनः पन्था आगामिपथः । लब्धव्यवस्तुमार्गे ॥ स्था० ॥

आगामिय—आकामिक—त्रि० अनभिलषणीये, ।

अग्रामिक-त्रि० ग्रामरहिते "अत्थे गइया णिग्गंथा य णिग्गंथीओ य एगमहं आगामियं छिन्नावायं दीहमद्धमविमणुप्पविट्ठा ॥ स्था० ॥

आगार—आकार-पुं० आ-कृ-घञ् । आकृतौ, आ०म० प्र० ॥ कल्प० ॥ ज्ञा० ॥ स्था० ॥ भ० ॥ राज० ॥ संस्थाने, । औप "सिंगारागारचारुवेसाए" शृङ्गारो मण्डनभूषणाटोपस्तत्प्रधान आकार आकृतिर्यस्याः सा तथा । तथा चारु वेशो नेपथ्यो यस्याः सा तथा ततः कर्मधारय इति ॥ राज० ॥ औप० ॥ सन्निवेशविशेषे शृंगारः शृंगाररसपोषकः आकारः सन्निवेशविशेषो यस्येति ॥ चंद्र० ॥

"आगारविगारं तह पयासंति" आकारं मुखनयनस्तनाद्याकृतिः विकारं च मुखनयनादिविकृतिः यद्वा आकारस्य स्वाभाविकाकृतेर्विकारो विकृतिस्तं तथा प्रकाशयंति ॥ ग० ॥

"आगारो णाम आगारोत्ति वा आगतित्ति वा संठाणंति वा एगट्ठा इति" ॥ आ० चू० ॥

स्वरूपे, ॥ ध० ॥ कइवागेयस्स आगारा, आकारा आकृतयः स्वरूपाणीत्यर्थ इति ॥ स्था० ॥ रूपमाकारश्चस्तुर्विषय इति ॥ स्था० ॥ प्रतिवस्तुनियते ग्रहणपरिणामे च । "आगारेउ विसेसो, इति वचनादिति ॥ जी० ॥ सह आकारेण वर्त्तत इति साकारं विशेषग्रहणप्रवणमिति ॥ दर्श० ॥ ( सर्वस्य च वस्तुन आकारवत्वं विशेषावश्यके यथा )

आगारो व्विय मइसद्दवत्थुकिरिया फलाभिहाणाइं ।
आगारमयं सव्वं जमणागारं तयं नत्थि ॥

आकार एव आकारमात्ररूपाण्येव कानीत्याह मतीत्यादि मतिश्च शब्दश्चेत्यादि द्वंद्वः तत्र मतिस्तावत्क्षेपाकारग्रहणपरिणतत्वादाकारवती तदनाकारवत्वे तु नीलस्येदं संवेदनं न पीतादेरिति नैयत्यं न स्यान्नियामकाभावान्नीलाद्याकारो हि नियामको यदा स नेष्यते तदा नीलग्राहिणीयं मति र्न पीतादिग्राहिणीति कथं व्यवस्थाप्येत विशेषाभावात्तस्मादाकारवत्येव मतिरभ्युपगंतव्या । शब्दोऽपि पौद्गलिकत्वादाकारवानेव । घटादिकं तु वस्त्वाकारवत्वेन प्रत्यक्षसिद्धमेव । क्रियाप्युत्क्षेपणावक्षेपणादिका क्रियावतोऽनन्यत्वादाकारवत्येव । फलमपि कुंभकारादिक्रियासाध्यं घटादिकं मृत्पिंडादिवस्तुपर्यायरूपत्वादाकारवदेव अभिधानमपि शब्दः स च पौद्गलिकत्वादाकारवानित्युक्तमेव तस्माद्यदस्ति तत्सर्वमाकारमयमेव यत्त्वनाकारं तन्नास्त्येव वंध्यापुत्रादिरूपत्वात्तस्येति गाथार्थः ॥

अथ प्रयोगद्वारेणाऽनाकारं वस्तु निराचिकीर्षुराह ।

न पराणुमयं वत्थुं आगाराभावओ खपुप्फं च ।
उवलंभववहारा भावाओ नाणागारं च ॥

परस्याकारवद्वस्तुनिषेधकस्यानुमतमभिप्रेतं सामर्थ्यादनाकारवद्वस्तु तन्नास्त्याकाराभावात्खपुष्पवत् । अपरमपि हेतुद्वयमाह-उवलंभेत्यादिना णागारमिति नास्त्यनाकारं वस्तु सर्वथैवानुपलभ्यमानत्वात्तेनाणीयसोऽपि व्यवहारस्याभावाच्चेति पर्यंतवर्त्ती चकारोऽत्र योजनीयः खपुष्पवदिति दृष्टांतो हेतुद्वयेऽपि स एवेति गाथार्थः ॥ विशे० ॥

आक्रियते आकल्प्यतेऽभिप्रेतं मनोविकल्पितं वस्त्वनेनेत्याकारः आ०कृ० करणे घञ्० बाह्यचेष्टायाम् ॥ विशे० ॥ आ० म० द्वि० ॥ आकारः स्थूलधीसंवेद्यः प्रस्थानादिभावाभिव्यंजको दिगवलोकनादिः आह च-

"अवलोयणं दिसाणं वियंभणं साडयस्स संठवणं ।
आसणसिढिलीकरणं पट्ठियलिंगाइं एयाइं ॥ उत्त० ॥

यदुक्तं अवलोकनं दिशानां विजृम्भणं शाटकस्य सम्वरणं । आसनशिथिलीकरणं प्रस्थितलिङ्गानि चैतानि, ॥ १ ॥ उ० द्व० ॥

"आगारेहिं सरेहिंय, आकाराङ्शरीरगता भावविशेषा इति ॥ ॥ १ ॥ व्य० ॥ विस्तरोऽस्यागारलक्खणशब्दे । भावे घञ् हृद्गतभावावेदने, । इङ्गिते च । वाच० ॥

आक्रियंत इत्याकारा आगृह्यंत इति भावना । सर्वथा कायोत्सर्गापवादे, । आव ॥१०॥ ल० ॥ कायोत्सर्गाकारानभिधायोक्तम् । एवमादिएहिं आगारेहिं अभग्गो अविराहिओ होज्ज मे काउस्सग्गोत्ति० ल० । आव०॥ ते च काउस्सग्गशब्दे ॥ आ मर्य्यादया मर्य्यादाख्यापनार्थम् आक्रियन्ते विधीयन्ते प्रत्याख्यानभङ्गपरिहारार्थमित्याकाराः । प्रत्याख्यानापवादहेतावनाभोगादिके, ॥ स्था० ॥ प्रव ॥ पंचा० ॥ आव० ॥ कस्य प्रत्याख्यानस्य कत्याकारा इति पच्चक्खाणशब्दे । पं०व० ॥ पंचा० ध० ॥॥ आव० ॥ प्रव० ॥

प्रश्न० । राज० । आगाराओ अणगारियं पव्वइत्तए ॥ भ० ॥ ज्ञा० द्रव्यतो गेहात् भावतः संसाराभिनंदिनां देहिनामा

वासभूताद् विवेकगेहाद्वा निष्क्रम्येति गम्यत इति ॥ स्था० ॥ "आगमेहि कतमागारं,, आगमा रुक्खातेहिं कतं आगारंति ॥ नि० चू० ॥

अगा वृक्षास्तैः कृतत्वादा समंतात् राजते इति आगारं गृहं क्वचिदिति डप्रत्ययः, तदस्यास्तीति अभ्रादिभ्य इति मत्वार्थीयोऽकारप्रत्ययः ॥ आगारो गृही ॥ आ० म०द्वि० ॥ गहस्थे, ॥ विशे० ॥

आगारगुत्ति—आकारगुप्ति—स्त्री० गुप् क्तिन् आकारस्य हृद्गतभावस्य गुप्तिर्गोपनम् । रत्यादिजनितसुखप्रसादस्य भयजनितविषादादेश्च अन्यहेतुकत्वप्रख्यापनेन वास्तविकत्वापह्नवे गोपने, ॥ वाच० ॥

आगारगोवणा—आकारगोपना—स्त्री० स्त्रीणां द्वासप्ततिकलान्तर्गते कलाभेदे, ॥ कल्प० ॥

आगारगोहिया—आकारगोधिका—स्त्री० ७ त० गृहगोधिकायाम् ॥ वाच० ॥

आगारचरित्तधम्म—आगारचरित्रधर्म्म—पुं० अगारं गृहं तद्योगादागारा गृहिणस्तेषां यश्चारित्रधर्म्मः सम्यक्त्वमूलाणुव्रतादिपालनरूपः स तथा । चारित्रधर्म्मभेदे, ॥ स्था० ॥

आगारण—आकारण—न० आ+कृ-णिच् ल्युट् १ आह्वाने युच् स्त्रीत्वात् टाप् । आकारणाप्यत्र ॥ वाच० ॥

आगारभाव—आकारभाव—पुं० आकारस्याकृतेर्भावाः पर्य्यायाः॥भ०॥ आकृतिलक्षणपर्य्याये,। भ०। आकारभावः स्वरूपविशेष इति ॥ जी० ॥

आगारभावपडोयार—आकारभावप्रत्यवतार—पुं० आकारस्याकृतेर्भावाः पर्य्यायाः अथवाऽऽकाराश्च भावाश्चाकारभावास्तेषामप्रत्यवतारोऽवपरणमाविर्भाव आकारभावप्रत्यवतारः। आकारभावस्याकृतिलक्षणपर्य्यायस्य प्रत्यवतारोऽवतरणमाकारभावप्रत्यवतारः । भ० । आकृतिलक्षणपर्य्यायस्याविर्भावे,। "किमागारभावपडोयारा णं भंते! दीवसमुद्दा पण्णत्ता" ॥ जी० ॥

आकारभावः स्वरूपविशेषः कस्याकारभावस्य प्रत्यवतारो येषां ते किमाकारभावप्रत्यवतारा बहुलग्रहणाद्वैयधिकरण्येऽपि समासः । णमिति पूर्ववत् द्वीपसमुद्राः किंस्वरूपं द्वीपसमुद्राणामिति भावोऽनेन स्वरूपविशेषविषयः प्रश्नः कृतः । ॥ जी० टी० ॥

आगारलक्खण—आकारलक्षण—न० आक्रियतेऽभिप्रेतं ज्ञायतेऽनेनेत्याकारो बाह्यचेष्टारूपः स एवान्तरोक्तगमकत्वाल्लक्षणमाकारलक्षणम् । लक्षणविशेषे, आन्तरोक्तगमकता चाकारस्य सुप्रसिद्धा ॥ आ० म० द्वि० ॥ आकारलक्षणं व्याचिख्यासुराह–"वाहिरचिट्ठागारो लक्खिज्जइ तेण माणसाकूतं आहारादिच्छाहत्थवयणनेत्ताइसण्णाहिं" आक्रियते आकल्प्यते ज्ञायतेऽभिप्रेतं मनोविकल्पितं वस्त्वनेनेत्याकारो बाह्यचेष्टारूपः तेन च मानसमाकूतमभिप्रेतं वस्तु लक्ष्यत इति लक्षणमसावुच्यते । तथाहि राजादीनामाहारादीच्छाहस्तवदननेत्रादिसंज्ञाभिलक्षणत एव विचक्षणैरुक्तं च "आकारैरिंगितैर्गत्या चेष्टया भाषणेन च। नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः" ॥ १ ॥ इति ॥ विशे० ॥

तच्चानेकविधमावश्यकचूर्णौ दर्शितं यथा )"आगारलक्खणं अणेगविहं गंतुमागारे देंति भोत्तुमागारं देंति सोतुमागारं देति एवं वक्तुं द्रष्टुमित्यादि कहं गंतुं० । "अवलोयणादिसाएणं वियंभणं साडगस्स सट्ठवणा । आसणसिढिलीकरणपाडित्तलिंगाणि चत्तारि, भोत्तुं मिच्छातिभोयणविधि वद्दणं पस्सदते य से वहुसो दिट्ठी य भमति । तत्थेव पडति छायस्स लिंगाणि । तएणं वा विक्रियत । ततो हुत्तं वा पुलोएति । सोतुं जहा उदीरते य णिद्दाति तस्स वि य सद्दयकागयतस्स दुहियस्स उ मिलाइवमसत्थवीयरागस्स गाथा । "द्रष्टुं जह अगारेहिं सुणे मोणी ण वत्तेहिं । चक्खुरागेहिं जणमणुरत्तविरत्तं पहट्ठचित्तं च पदुट्ठं । आकारैरिंगितैर्भावैः क्रियाभिर्भाषितेन च। नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः"॥ अत्थीणि चेव जाणंति रुट्ठस्स खरा दिट्ठीओ । उप्पलधवलापसन्नचित्तस्स दुहियस्स उ गिलायंति गंतुमणुस्ससुया होति ॥ आ०चू० ॥

आगारविगार—आकारविकार—पुं० आकृतेर्विकृतौ, "गइविब्भमाइएहिं आगारविगारतहपयासंति" । स्वच्छंदः श्रमणो गतिभ्रमादिः । अगारविगारात्ति । अत्र विभक्तिलोपः प्राकृतत्वात् । तत आकारं मुखनयनस्तनाद्याकृतिः विकारं च मुखनयनादिविकृतिः ! यद्वा आकारस्य स्वाभाविकाकृतेर्विकारो विकृतिस्तं तथा प्रकाशयंति ॥ ग० ॥

आगारसुद्धि–आकारशुद्धि–स्त्री० आकारशुद्धिस्तु राजाभियोगादिप्रत्याख्यानापवादमुत्कलीकरणात्मिकेति । शुद्धिभेदे, ॥ ध० ॥

आगारिय—आकारिक–त्रि०आकारे कुशलः ठञ् आकारिकः तत्र नियुक्ते, ॥ वाच० ॥

आकारित–त्रि० उत्सारिते, "आरिओ आगारि आस्सारिओ वा एगट्ठंति,, ॥ आव० ॥

आगारिक–न० अगा वृक्षास्तैः कृतमागारं गृहं तदस्यास्तीति मतुब्लोपादागारो गृहस्थस्तस्येदमागारिकम् ॥ विशे० ॥ अगा वृक्षास्तैः कृतत्वादा समन्तात् राजते इति आगारं गृहं क्वचिदिति डप्रत्ययः । तदस्यास्तीति अभ्रादिभ्य इति मत्वर्थीयोऽकारप्रत्ययः आगारो गृही तस्मिन् भवमागारिकमध्यात्मादिभ्य इति कण् प्रत्ययः ॥ आ० म० द्वि० ॥ चारित्रसामायिकभेदे,। "दुविहं चेव चरित्तं आगारमणगारियं चेव,, आ०म०द्वि० ॥ विशे० ॥

आगारेऊण—आकार्य्य–अव्य० रे क यास्यसीदानीमित्येवमाहूयेत्यर्थे, "आगारेऊण परं राणिव्व जइ तो करिज्ज उस्सग्गं" (आगारेऊणत्ति) आकार्य्य रे क यास्यसीदानीमेवं परं अन्यं कंचन राणिव्व इव संग्राम इव यदि स कुर्य्यात्कायोत्सर्गमिति ॥ आव० ॥

आगाल—आगाल—पुं० आगालनमागालः समप्रदेशावस्थाने,। सोऽपि चतुर्द्धा व्यतिरिक्त उदकादेर्निम्नप्रदेशावस्थानम् भावागालो ज्ञानादिक एकस्यात्मनि रागादिरहितेऽवस्थानमिति कृत्वा ॥ आचा० ॥

उदीरणाविशेषे च । प्रथमस्थितौ च । वर्त्तमान उदीरणाप्रयोगेण यत्पुनर्द्वितीयस्थितेः सकाशादुदीरणाप्रयोगेणैव दलिकं समाकृष्योदये प्रक्षिपति सा उदीरणापि पूर्वसूरिभि-

विशेषप्रतिपत्त्यर्थमागाल इत्युच्यते। कर्म्म० । अधिकमुवसमसेणिशब्दे ।

**आगास—आकाश**—पुं० न० आकाशंते दीप्यंते स्वधर्मोपेता आत्मादयो यत्र ।। दश० ॥ आ समन्तात् सर्वाण्यपि द्रव्याणि काशंते दीप्यंते अत्र व्यवस्थितानीति ॥ जी० ॥ आ मर्य्यादयाऽभिविधिना वा सर्वेऽर्थाः काशंते प्रकाशन्ते स्वस्वभावं लभन्ते यत्र तदाकाशम् ॥ भ० ॥ आङिति मर्य्यादया स्वस्वभावापरित्यागरूपया काशन्ते स्वरूपेण प्रतिभासन्तेऽस्मिन् व्यवस्थिताः पदार्था इत्याकाशम् । यदा त्वभिविधावाङ् तदा आङिति सर्वभावाभिव्याप्त्या काशते इत्याकाशम् ॥ प्रज्ञा० ॥ उत्त० ॥ सर्वभावावकाशनादाकाशम् । आ मर्य्यादया तत्संयोगेऽपि स्वकीय २ रूपेऽवस्थानतः सर्वथा तत्स्वरूपत्वाप्रातिलक्षणया काशंते स्वभावलाभेनावस्थितिकरणेन च दीप्यंते पदार्थसार्था यत्र तदाकाशमिति । अथवा अभिविधिना सर्वात्मना तत्संयोगानुभवलक्षणेन काशंते दीप्यंते पदार्था यत्र तदाकाशमिति ॥ अनु० ॥

सर्वद्रव्यस्वभावानाकाशयत्यादीपयाति तेषां स्वभावलाभेऽवस्थानदानादित्याकशम् । आङ् मर्य्यादाभिविधिवाची तत्र मर्य्यादायामाकाशे भवन्तोऽपि भावाः स्वात्मन्येवासते नाकाशतां यान्तीत्येवं तेषामात्मसात्करणादभिविधौ तु सर्वभावव्यापनादाकाशमिति ॥ स्था० ॥ आ समन्तात् काशतेऽवगाहदानतया प्रतिभासत इत्याकाशम् ॥ कर्म० ॥ लोकालोकव्याप्यनंतप्रदेशात्मकामूर्तद्रव्यविशेषे, ॥ अनु० ॥ आकाशसत्ताऽनुयोगद्वारे यथाऽऽकाशं तु जीवादिपदार्थानामाधारान्यथानुपपत्तेरस्तीति श्रद्धेयं । न च धर्म्माधर्म्मास्तिकायावेव तदाधारौ भविष्यत इति वक्तव्यं । तयोस्तद्गतिस्थितिसाधकत्वेनोक्तत्वान्न चान्यसाध्यं कार्यमन्यः प्रसाधयत्यतिप्रसंगादिति ॥ अनु० ॥

( एतस्य लक्षणं यथा ) "जीवानां पुद्गलानां च धर्माधर्मास्तिकाययोः । वादराणां घटादीनामाकाशमवकाशदम्" ॥ इति ॥ आव० ॥

जीवानां पुद्गलानां धर्माधर्मास्तिकाययोर्बादरघटादीनां चोपग्रहवदवकाशदमिति ॥ दर्श० ॥ ( तथा च द्रव्यानुयोगतर्कणायाम् ) अथाकाशद्रव्यस्य लक्षणमाविष्करोति ।

यो दत्ते सर्वद्रव्याणां साधारणावगाहनं ।
लोकालोकप्रकारेण द्रव्याकाशः स उच्यते ।। द्रव्या०मू० ।।

य आकाशास्तिकायः सर्वद्रव्याणां साधारणावगाहनं सामान्यावकाशं दत्ते स द्रव्याकाशो लोकालोकप्रकारेण उच्यते इति । यतः सर्वद्रव्याणां यः सर्वदा साधारणावकाशदाता स अनुगत एक आकाशास्तिकायः कथितः सर्वाधार इति॥ यथा पक्षिणां गगनमिवेति व्यवहरन् प्रदेशभेदेन भवेत् तद्देशीयानुगत आकाश एव पर्यवसन्नः स्यात् तथा च तत्तद्देशोर्ध्वभागावस्थितमूर्त्ताभावादिना तद्व्यवहारोपपत्तिरिति वर्द्धमानायुक्तं नानवद्यं । तस्याभावादिनिष्ठत्वेनानुभूयमानद्रव्याधारांशापलापप्रसंगात्तावद् गतिसंधानेऽपि लोकवादरेणाकाशे प्रतिषेधतयोक्तव्यवहाराच्च ॥ टी० द्रव्या० ॥

( तथा चोत्तराध्ययने ) "भायणं सव्वदव्वाणं नहं ओगाहलक्खणं" ॥ उत्त० ळ० ॥ यत्पुनः सर्वद्रव्याणां जीवादीनां भाजनं आधाररूपं नभः आकाशं उच्यते तच्च नभः अवगाहलक्षणं अवगाढुं प्रवृत्तानां जीवानां पुद्गलानां आलंबो भवति इति । अवगाहः अवकाशः स एव लक्षणं यस्य तत् अवगाहलक्षणं नभ उच्यते ॥ उत्त० ळ० ॥

( आकाशस्य नित्यत्वं द्रव्यत्वञ्च सम्मतितर्के यथा ) आकाशाख्यैकं नित्यद्रव्यप्रसिद्धये शब्दांगत्वाल्लिंगत्वेन प्रतिपादयंति । तथा च परेषां प्रयोगो ये विनाशित्वोत्पत्तिमत्वादिधर्माध्यासितास्ते क्वचिदाश्रिता यथा घटादयस्तथाकाशशब्दास्तस्मादेभिराश्रितैः क्वचिद् भवितव्यं यश्चैषामाश्रयः स पारिशेष्यादाकाशस्तथाहि ।नायं शब्दः पृथिव्यादीनां वायुपर्यंतानां गुणोऽध्यक्षवाह्यत्वे सत्यकारणगुणपूर्वकत्वाद्ये तु पृथिव्यादीनां चतुर्णां गुणास्ते बाह्येंद्रियाऽध्यक्षत्वे सत्यकारणगुणपूर्वका न भवंति ।

यथा रूपादयो न च तथा शब्द एवं यावद्द्रव्यभावित्वादाश्रयाद्धेदैरन्यत्रोपलब्धेश्चेत्यादयो हेतवो द्रष्टव्याः । स्पर्शवतां यथोक्तव्यपरीता गुणा उपलब्धाः प्रत्यक्षत्वे सतीति च विशेषणं परमाणुगतः पाकजैरनैकांतिकत्वं मा भूदित्युपात्तं न चात्मगुणोऽहंकारःविभक्तग्रहणाद्बाह्येंद्रियाकाशस्य लिंगमाकाशं । चशब्दलिंगविशेषाद्विशेषलिंगाभावादेकं । विभु च सर्वत्रोपलभ्यमानगुणत्वात् गुणवत्वादसमवायित्वे सत्यनाश्रितत्वात् । द्रव्यमकृतकत्वान्नित्यम् ॥ सम्म० ॥

( आकाशस्य सावयवत्वम् ) न च सावयवत्वमसिद्धं प्रदेशव्यवहारस्य कोशे दर्शनात् । न चाकाशस्य प्रदेशा इति व्यवहारो मिथ्या मिथ्यात्वनिमित्ताभावात् । न च संयोगस्याव्याप्यवृत्तिनिमित्तः सावयवत्वाध्यारोपो मिथ्यात्वकारणं निरवयवे अव्याप्यवृत्तिसंयोगाधारत्वस्याध्यारोपनिमित्तस्यैवानुपपत्तेः । यदि च सावयवं नभो न भवेत् तदा श्रोत्राकाशसमवेतस्येव शब्दस्य ब्रह्मभाषितस्याप्युपलंभोऽस्मदादिभिर्भवेत् निरवयवैकाकाशश्रोत्रसमवेतत्वात्। अथ धर्माधर्माभिसंस्कृतकर्णशष्कुल्यवरुद्धाकाशदेश एव श्रोत्रं तत् न च ब्रह्मभाषितस्यासमवायान्नास्मदादिभिः श्रवणं । नचैवं सैव सावयवत्वप्रशक्तिः श्रोत्राकाशप्रदेशात् ब्रह्मशब्दाधाराकाशदेशस्यान्यत्वात् । यदि च सावयवमाकाशं न भवेत् शब्दस्य नित्यत्वं सर्वगतत्वं च स्यादाकाशैकगुणत्वात्तन्महत्ववत् । अथ क्षणिकैकदेशवृत्तिविशेषगुणत्वस्य शब्दे प्रमाणतः प्रतिसिद्धेर्नायं दोषः । नन्वेवमेकदेशवृत्तिविशेषगुणत्वाभ्युपगमे कथं न शब्दाधारस्याकाशस्य सावयवत्वप्रसिद्धिः न हि निरवयवत्वे तस्यैकदेश एव शब्दो वर्त्तते न सर्व नेति व्यपदेशः संगच्छते । न च संयोगस्याव्याप्यवृत्तित्वनिबंधनोऽयं । यत आकाशं व्याप्य संयोगा न वर्त्तत इति तदेकदेशे वर्त्तत इत्यभ्युपगमप्रसक्तिः । व्याप्यवृत्तित्वं हि सामान्यान्यवृत्तित्वं । तत्प्रतिषेधश्च पर्युदासपक्षे एकदेशवृत्तित्वमेव । प्रसज्यपक्षे तु वृत्तिप्रतिषेध एव । नचासौ युक्तः संयोगस्य गुणत्वेन द्रव्याश्रितत्वात् । तदभावे च तदभावात् । न च निरवयवत्वेन आकाशस्य संतानवृत्त्या आगमस्य शब्दस्य श्रोत्रेणाप्युपलब्धिः संभवति अन्योन्याकाशदेशोत्पत्तिद्वारेण तस्य श्रोत्रसमवेतत्वानुपपत्तेः । जलतरंगन्यायेनापरापराकाशदेशादावपरापरशब्दोत्पत्तिप्रकल्पनायां कथं नाकाशस्य सावयवत्वं । किं चाकाशं शब्दोत्पत्तौ समवायिकारणमभ्युपगम्यते यच्च स-

मवायिकारणं तत्सावयवं यथा तंत्वादिसमवायिकारणं । परेण शब्दोत्पत्तावाकाशमभ्युपगतं । न च परमाण्वात्मादिना व्यभिचारः तस्यापि सावयवत्वात् । अन्यथा द्व्यणुकबुद्ध्यादेस्तत्कार्यस्य सावयवत्वं न स्यान्न च बुद्ध्यादेः सावयवत्वमसिद्धं आत्मनः सावयवत्वेन बुद्ध्यादेः कथंचित्तादात्म्यासिद्धेन सावयवत्वोपपत्तेः ॥

न च यत एव प्रमाणादणवः सिद्धास्तेषां निरवयवत्वमपि तत एव सिद्धमिति तद्ग्राहकप्रमाणबाधितत्वात् । सावयवत्वानुमानस्याप्रामाण्यं प्रमाणतः परमाणूनामसिद्धावाश्रयासिद्धितः सावयवत्वानुमानस्याप्रवृत्तिरिति वाच्यं यतः सावयवकार्यस्य सावयवकारणपूर्वकत्वे साध्ये न पूर्वोक्तदोषावकाशः । न च कार्यकारणयोरात्यंतिको भेदः समवनिषेधे हिमवद्विंध्ययोरिव भेदे विशिष्टकार्यकारणरूपतानुपपत्तेः ततो द्व्यणुकादेः परमाणुकार्यस्य सावयवत्वात् तदात्मभूताः परमाणवः कथं न सावयवा इति न परमाणवादिभिर्व्यभिचारः ।

अपि च सावयवमाकाशं तद्विनान्यथोपपत्तेः तथाकाशस्य विनाशित्वं सिद्धं । तथा ह्यनित्यमाकाशं तद्विशेषगुणाभिमतशब्दविनाशान्यथानुपपत्तेः । यतो न तावदाश्रयविनाशोऽभ्युपगतस्तन्नित्यत्वाभ्युपगमविरोधात् न विरोधिगुणप्रादुर्भावात् । तन्महत्वादेरेकार्थसमवायित्वेन रूपरसयोरिव विरोधितासिद्धेर्विरोधित्वाश्रयणसमयेऽपि तद्भावप्रसङ्गः तदापि तन्महत्वस्य सद्भावात् । नापि संयोगादिविरोधिगुणास्तस्य तत्कारणत्वात् । नापि संस्कारस्तस्य गुणत्वेन शब्देऽसंभवात्संभवे वा शब्दस्य द्रव्यत्वप्रसक्तिराकाशस्य द्रव्यत्वेन तत्संभवेऽपि तस्याभावे आकाशस्याप्यभावप्रसक्तिस्तस्य तदव्यतिरेकात् व्यतिरेके वा तस्येति संबंधायोगात् । नापि शब्दोपलब्धिः प्रापकधर्माद्यभावात् तद्भावस्तस्य विभिन्नाश्रयस्यानेन विनाशयितुमशक्यत्वात् । शक्यत्वे वा तदाधारस्यापि विनाशप्रसंगस्तस्य तदव्यतिरेकात् । ततोंबरविशेषगुणत्वे शब्दस्य तद्विनाशान्यथानुपपत्त्या तस्यापि विनाशितत्वं ततोऽपि सावयवत्वं । न च बुद्ध्यादिभिर्व्यभिचार उक्तोत्तरत्वात् ।

किंचाश्रितविनाशे आश्रयत्वस्यापि विनाश आश्रितत्वनिबंधनत्वात् तस्य धर्मस्य च धर्मिणः कथंचिदव्यतिरेकात् । आकाशस्य विनाशित्वात्सावयवत्वं घटादेरिवोपपन्नं । किं च सावयवमाकाशं हिमवद्विंध्यावरुद्धविभिन्नदेशत्वात् तदवयवपृष्ठदेशभूभागादन्यथानयोरिवैकदेशाकाशस्थितिप्रसक्तिः न चैतद् दृष्टमितिसर्ववस्तूत्पादविनाशस्थित्यात्मकत्वात्कथंचित्सावयवं सिद्धम ॥ सम्म० ॥

सर्वद्रव्यस्वभावानाकाशयत्यादीपयति तेषां स्वभावलाभे अवस्थानदानादित्याकाशमाङ् मर्यादाभिविधिवाची । तत्र मर्यादायामाकाशे भवंतोऽपि भावाः स्वात्मन्येवासते नाकाशतां यान्तीत्येवं तेषामात्मस्वादकरणादभिविधौ तु सर्वभावव्यापनादाकाशमिति ॥ स्था० ॥

( आकाशस्य निरालम्बनत्वम् ) "आगासं चेव निरालंबे" आकाशमिव निरालम्बो यथाऽऽकाशमनालम्बनं तथा साधुर्न किंचिदालम्बत इति ॥ प्रश्न० ॥

( आकाशं द्विविधम् )

दुविहे आगासे पं० तं० लोगागासे चेव अलोगागासे चेव ॥ स्था० ॥ तत्र लोको यत्राकाशदेशे धर्म्मास्तिकायादिद्रव्याणां वृत्तिरस्ति स एवाकाशं लोकाकाशमिति ॥ टी० स्था० ॥

( तथा च द्रव्यानुयोगतर्कणायाम् एनमेवार्थं मीमांसयन्नाह ) धर्माधिसंयुतो लोकोऽलोकस्तेषां वियोगतो । निरवधिः स्वयं तस्यावधित्वं तु निरर्थकं ९ ॥ द्रव्या० ॥

धर्मास्तिकायादिसंयुक्त आकाशो लोकस्तदितरस्त्वलोकः स च पुनर्निरवधिरपारोऽलोकः तस्यालोकस्य वयमात्मनाऽवधित्वमंतर्गडु इति कश्चिदाहात्र यथा लोकस्य पार्श्वे अलोकस्यापि परोऽस्ति तथैवाग्रेऽपि द्वितीयतटे पारो भविष्यतीति ब्रुवाणमुत्तरयंति । लोकस्तु भावरूपोऽस्ति तस्यावधित्वं घटते, परं तु अग्रे अलोकस्य केवलं अभावात्मकस्यावधित्वं कथं कल्पते शशशृंगवत् । यथा असद्विद्यमानं शशशृंगं न कुत्रापि निरीक्ष्यमाणं विद्यमानवदाभाति तथैवैतस्याप्यलोकस्याविद्यमानस्यावधित्वं न घटामाटीकते । अथ भावरूपात्मवस्त्वमङ्गीक्रियते तदा तु षडतिरिक्तमन्यद् द्रव्यं नास्तीति व्यवहारात् । आकाशदेशस्वरूपस्य तु तदंततत्वं कथय तावद्व्याघातो जायते । तस्मादलोकाकाशस्तु अनंत एव मंतव्य इति । आकाशो यथा सांतः शंसितो धर्माधर्मानुभावात् तस्य भावस्तदभावः अलोकाकाशोऽपि सातौ धर्माधर्मानुभावी भवन् अतिरिक्तद्रव्यत्वमापत्स्यते तस्माद्यथोक्तमेव न्याय्यं यावता आकाशे तद्धर्माधर्मौ व्याप्य स्थितौ तावता तत्परिमाणशालिना आकाशेनापि भवितव्यं तयोरभावात्तस्याप्यभावः सुपरिशीलनीयः इति ९ ॥ टी० द्रव्या० ॥

( लोकालोकाकाशौ विस्तरेण भगवत्यां यथा )

कइविहे णं भंते ? आगासे पण्णत्ते ? गोयमा ! दुविहे आगासे प० तं०—लोयागासे य अलोयागासे य ॥ भ० ॥

कतिविहे णं भंते ! इत्यादीनि । तत्र लोकालोकाकाशयोर्लक्षणमिदं—"धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रं । तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यमिति" ॥ १ ॥ टी० भ० ॥

लोयागासे णं भंते ! किं जीवा, जीवदेसा, जीवपएसा, अजीवा, अजीवदेसा, अजीवपएसा ? गोयमा ! जीवा वि जीवदेसा वि जीवपदेसा वि, अजीवा वि अजीवदेसा वि अजीवपदेसा वि । जे जीवा ते नियमा एगिंदिया बेइंदिया तेइंदिया चउरिंदिया पंचिंदिया अणिंदिया, जे जीवदेसा ते नियमा एगिंदियदेसा जाव अणिंदियपदेसा । जे अजीवा ते दुविहा पण्णत्ता, तं जहा—रूवी य अरूवी य, जे रूवी ते चउव्विहा पण्णत्ता, तं जहा—खंधा खंधदेसा खंधपदेसा परमाणुपोग्गला । जे अरूवी ते पंचविहा पण्णत्ता, तंजहा—धम्मत्थिकाए नो धम्मत्थिकायस्स देसे धम्मत्थिकायस्स पदेसा । अधम्मत्थिकाए नो अधम्मत्थिकायस्स देसे अधम्मत्थिकायस्स पदेसा । अद्धासमए ॥ भ०मू० ॥

लोगागासेणमित्यादि, षट् प्रश्नास्तत्र लोकाकाशेऽधिकरणे

जीवति सम्पूर्णानि जीवद्रव्याणि (जीवदेसत्ति)जीवस्यैव बु-
द्धिपरिकल्पिता द्व्यादयो विभागाः ।( जीवप्पएसत्ति ) त-
स्यैव बुद्धिकृता एव प्रकृष्टा देशाः प्रदेशा निर्विभागा भागा
इत्यर्थः । ( अजीवत्ति ) धर्म्मास्तिकायादयः ननु लोकाका-
शे जीवा अजीवाश्चेत्युक्ते तद्देशप्रदेशास्तत्रोक्ता एव भवन्ति,
जीवाद्यव्यतिरिक्तत्वाद्देशादीनां, ततो जीवाजीवग्रहणे किं
देशादिग्रहणेनेति ? नैवं निरवयवा जीवादय इति मतव्यव-
च्छेदार्थत्वादस्येति । अत्रोत्तरं ( गोयमा ! जीवावीत्यादि । )
अनेन चाद्यप्रश्नत्रयस्य निर्वचनमुक्तं ।अथांत्यस्य प्रश्नत्रयस्य
निर्वचनमाह । ( जे अजीवेत्यादि रूवीयत्ति ) मूर्त्ताः पुद्गला
इत्यर्थः । ( अरूवीयत्ति ) अमूर्त्ता धर्म्मास्तिकायादय इत्यर्थः
( खंधात्ति ) परमाणुप्रचयात्मकाः स्कंधाः स्कंधदेशा द्व्या-
दयो विभागाः स्कंधप्रदेशास्तस्यैव निरंशा अंशाः परमाणु-
पुद्गलाः स्कंधभावमनापन्नाः परमाणव इति, ततो लोकाका-
शे रूपिद्रव्यापेक्षया अजीवा वि अजीवदेसावि अजीवप्पए-
सावि, इत्येतदर्थतः स्यादणूनां स्कंधानाश्चाजीवग्रहणेन ग्र-
हणात् । ( जे अरूवी ते पंचविहेत्यादि ) अन्यत्राप्यरूपिणो
दशविधा उक्तास्तद्यथा आकाशास्तिकायस्तद्देशस्तत्प्रदेश-
श्चेत्येवं धर्म्माधर्म्मास्तिकायौ समयश्चेति दश इह तु सभेद-
स्याकाशस्याधारत्वेन विवक्षितत्वात्तदाधेयाः सप्त वक्तव्या
भवन्ति, न च तेऽत्र विवक्षिता वक्ष्यमाणकारणा, ये तु विव-
क्षितास्तानाह-पञ्चेति, कथमित्याह । (धम्मत्थिकायेत्यादि )
इह जीवानां पुद्गलानां च बहुत्वादेकस्यापि जीवस्य पुद्गल-
स्य वा, स्थानसङ्कोचादि तथाविधपरिणामवशाद् बहवो जी-
वाः पुद्गलाश्च तथा तद्देशास्तत्प्रदेशाश्च सम्भवन्तीति कृत्वा
जीवाश्च जीवदेशाश्च जीवप्रदेशाश्च, तथा रूपिद्रव्यापेक्षया
अजीवाश्चाजीवदेशाश्चाजीवप्रदेशाश्चेति सङ्गतमेकत्राप्या-
श्रये भेदवतो वस्तुत्रयस्य सद्भावात् । धर्म्मास्तिकायादौ तु
द्वितयमेव युक्तं, यतो यदा सम्पूर्णं वस्तु विवक्ष्यते तदा ध-
र्म्मास्तिकायादीत्युच्यते, तदंशविवक्षायान्तु तत्प्रदेशा इति
तेषामवस्थितरूपत्वात् । तद्देशकल्पना त्वयुक्ता तेषामवस्थित-
तरूपत्वादिति ।

यद्यपि चानवस्थितरूपत्वं जीवादिदेशानामप्यस्ति तथा-
पि तेषामेकत्राश्रये भेदेन सम्भवः प्ररूपणाकारणमिह तु
तन्नास्ति, धर्म्मास्तिकायादेरेकत्वादसङ्कोचादिधर्मकत्वाच्चे-
ति । अत एव धर्म्मास्तिकायादिदेशानिषेधायाह । "नो धम्म-
त्थिकायस्स देसे" ॥तथा॥ "नो अधम्मत्थिकायस्स देसेत्ति"
चूर्णिकारोऽप्याह ( अरूविणो दव्वा समुदयसद्देणं भणं-
ति । निसेसा पएसेहिं वा नीसेसा भणेज्जा नो देसेण त-
स्स अणवट्ठियपमाणत्तणओ तेण न देसेण निद्देसो । जो
पुण देससद्दो एएसु कओ सो सविसयगयववहारत्थं
परदव्वफुसणादिगयववहारत्थं चेति ॥ तत्र स्वविषये ध-
र्म्मास्तिकायादिविषयो यो देशस्य व्यवहारो यथा-धर्मा-
स्तिकायः स्वदेशेनोर्ध्वलोकाकाशं व्याप्नोतीत्यादि तद-
र्थं, तथा परद्रव्येण ऊर्ध्वलोकाकाशादिना यः स्वस्य स्प-
र्शनादिगतो व्यवहारो यथा उर्ध्वलोकाकाशेन धर्मास्तिका-
यस्य देशः स्पृश्यते इत्यादि तदर्थमिति ( अद्धासमएत्ति )
अद्धा कालस्तल्लक्षणः समयः क्षणोऽद्धासमयः स चैक ए-
व वर्त्तमानक्षणलक्षणः, अतीतानागतयोरसत्त्वादिति, कृतं
लोकाकाशगतप्रश्नषट्कस्य निर्वचनम् ॥ टी. भ.श.२ उ.१०॥

अलोयाकासे णं भंते ! किं जीवा ? पुच्छा तह चेव, गो-
यमा ! नो जीवा जाव नो अजीवप्पदेसा । एगे अजीव-
दव्वदेसे अगुरुयलहुए अणंतेहिं अगरुयलहुयगुणेहिं संजु-
त्ते सव्वागासे अणंतभागूणे॥ भ०मू० ॥

अथालोकाकाशं प्रति प्रश्नयन्नाह-( पुच्छा तह चेवत्ति )
यथा लोकाकाशप्रश्ने तथाहि-( अलोकाकासे णं भंते ! किं
जीवा जीवदेसा जीवप्पएसा अजीवा अजीवदेसा अजीवप्प-
एसत्ति ) निर्वचनं त्वेषां षण्णामपि निषेधस्तथा
( एगे अजीवदव्वदेसेत्ति ) अलोकाकाशस्य देशत्वं लो-
कालोकरूपाकाशद्रव्यस्य भागरूपत्वात् ( अगरुअलहुय-
त्ति ) गुरुलघुत्वाव्यपदेशत्यात् ( अणंतेहिं अगुरुयलहुय-
गुणेहिं ) अनन्तैः स्वपर्यायपरपर्यायरूपैर्गुणैरगुरुलघुस्वभा-
वैरित्यर्थः । ( सव्वागासे अणंतभागूणेत्ति ) लोकाकाश-
स्यालोकाकाशापेक्षयाऽनन्तभागरूपत्वादिति ॥ भ० टी०
॥ श० २ उ० १० ॥ एकैकस्याकाशप्रदेशस्यागुरुलघुपर्याया
अनन्ता इति अगुरु लहुशब्दे । वृ० ।

आकाशस्य पर्य्याया नभोव्योमान्तरिक्षाकाशादय इति ॥
विशे० ॥ आकाशं नभस्तारापथो व्योमांवरमित्यादीति ॥
अनु० ॥ स्था० ॥ अस्य बहवः पर्य्याया आगासत्थिकायश-
ब्देऽपि । भ० ।

अवगाहदानलक्षणे सर्वद्रव्याधारभूते महाभूतविशेषे च।सूत्र.।
शब्दतन्मात्रादाकाशं सुषिरलक्षणमिति ॥ सूत्र० ॥ शब्दत-
न्मात्रादाकाशं गंधरसरूपस्पर्शवर्जितमुत्पद्यत इति च सां-
ख्याः ॥ सूत्र० ॥

आकाशमिति पारिभाषिकी संज्ञा एकत्वात्तस्य । तच्च सं-
ख्यापरिमाणपृथक्त्वसंयोगविभागशब्दाख्यैः षड्भिर्गुणैर्गु-
णवत् शब्दलिङ्गश्चेति वैशेषिकाः सूत्र० ॥ ( शब्दस्या-
काशगुणत्वनिराकरणमागमशब्दे ) ( आकाशस्य वर्ण-
गंधादि अत्थिकायशब्दे ) अनावृते स्थाने च आकाशमना-
वृतं स्थानमिति ॥ प्रश्न० ॥ छिद्रे, ॥ गणितादिप्रसिद्धे सूत्राङ्के-
च ॥ वाच० ॥

**आगासग**—आकाशग–त्रि० आकाशगामिनि,॥ वाच० ॥ स्व-
नामख्याते भूतविशेषे ॥ प्रज्ञा० ॥

**आगासगमा**—आकाशगमा–स्त्री० गमनं गमः आकाशेन गमो
यस्या साऽऽकाशगमा। विद्याविशेषे, ॥ आ० म० द्वि ॥ ( त-
था चार्य्यवज्रस्वामिकथायाम् ) पदानुसारिणा तेन स्वा-
मिना प्रस्मृता सती ॥ महापरिज्ञाध्ययनाद्विद्योद्दध्रे नभो-
गमा ॥ आ० क० ॥ तेण भगवया पयाणुसारित्तणओ प-
हुट्ठा महापरिन्नतो अज्झयणा तो आगासगामिणी विज्जा
उद्धरिया तीए गमणलद्धिसंपन्नो भयवंति ॥ आ० म० द्वि ॥
उक्तमर्थं सम्यगाथायाह–

जेणुद्धरिया विज्जा आगासगमा महापरिण्णातो ।
वंदामि अज्जवइरं अपच्छिमो जो सुयधराणं ॥

येनोद्धृता विद्या आगासगमा गमनं गमः आकाशेन गमो य-
स्यां साकाशगमा महापरिज्ञातो महापरिज्ञानामकादध्यय-
नात्तमार्यवज्रमाराात् सर्वहेयधर्म्मेभ्यो जातः प्राप्तः सर्वो-
पादेयगुणैरित्यर्थः स चासौ वज्रश्चेति आर्यवज्रस्तं वंदे
अपश्चिमो यः श्रुतधराणां दशपूर्वविदां सांप्रतमन्येभ्योऽपि-

कृतयावन्निषेधख्यापनाय प्रदाननिराचिकीर्षस्तदनुवादतस्तत्रेदमाह-

भणइ य आहिंडिज्जा जंबुद्दीवं इमाइविज्जाए ।
गंतूण माणुसनगं विज्जाए एसामविसओ ॥

भणति च वर्त्तमाननिर्देशप्रयोजनं प्राग्वत् । आहिंडिन । पाठांतरं वा अभणिंसु य हिंडिज्जा इति बभाण, हिंडेत पर्यटेत जंबूद्वीपमनया विद्यया तथा गत्वा च मानुपनगं मानुषोत्तरपर्वतं तिष्ठेयमिति वाक्यशेषः । विद्याया एप योगो वरः ॥

भणइ य धारेयव्वा न हु दायव्वा इमा मए विज्जा ।
अप्पड्ढिया उ मणुया होहिंति अतो परं अन्ने ॥

भणति चेति पूर्ववत्। धारयितव्या प्रवचनोपकाराय न पुनर्दातव्या इयं मया विद्या । हुशब्दः पुनःशब्दार्थः । किमित्यत आह । अल्पर्द्धय एव तुशब्द एवकारार्थः भविष्यंत्येतत्परमन्ये भविष्यत्कालभाविनः । आ० म० द्वि० ।

आगासगय-आकाशक-त्रि० प्रकाशके, ॥ सम० ॥

आकाशगत-त्रि० व्योमवर्त्तिनि,॥ सम०॥ औप० ॥ "आगासगएणं चक्केणं आगासगएणं छत्तेणं" आकाशवर्त्तिना चक्रेणेति औप० । समवायाङ्गे वृद्धातिशेषानधिकृत्येत्याह-

आगासगयं चक्कं आगासगयं छत्तं आगासगयं ओसे य चामराओ ॥ सम०

आकाशके चक्रं षष्ठं तथा आगासगतं व्योमवर्ति आकाशकं वा प्रकाशमित्यर्थः । चक्रं धर्मचक्रमिति षष्ठः ॥ ६ ॥ आकाशके छत्रमिति सप्तमः । एवमाकाशगं छत्रं छत्त्रत्रयमित्यर्थः ॥ ७ ॥ आकाशके प्रकाशे श्वेतवरचामरे प्रकीर्णके इत्यष्टमः ॥ टी० सम० ॥ अत्यर्थन्तुङ्गे, च ।

आगासगओ कुडभीसहस्सपरिमंडियाभिरामो ।
इंदज्झओ पुरओ गच्छइ ॥ सम० ॥

( आगासगओत्ति ) आकाशगतोऽत्यर्थन्तुङ्गमित्यर्थः इति वृत्तिः ॥ सम० ॥

आगासगामि ( न् )-आकाशगामिन्-त्रि० आकाशगे पक्ष्यादौ, । "आगासगामिणो पाणापाणे किलेसंति"॥ आचा० मू० अपरे त्वाकाशगामिनः पक्षिण इत्येवं सर्वेऽपि प्राणाः प्राणिनोऽपरान् प्राणिन आहारार्थं मत्सरादिना वा क्लेशयंत्युपतापयंतीति ॥ आचा० ॥

सम्प्राप्ताकाशगमनलब्धिषु, चतुर्विधदेवनिकायविद्याधरवायुपु च "आगासगामी य पुढोसिया जे" ॥ सूत्र० ॥ ये केचनाकाशगामिनः संप्राप्तगमनलब्धयश्चतुर्विधदेवनिकायविद्याधरपक्षिवायव इति ॥ सूत्र० ॥

आगासजाण—आकाशयान-न० आकाशे यायतेऽनेन या--करणे ल्युट् ७ त० आकाशगमनसाधने विमाने, । वाच० ।

आगासतल—आकाशतल-न० कटाद्यच्छन्नकुट्टिमे । वाच० ।

आगासत्थिकाय-आकाशास्तिकाय-पुं० अस्तयश्चेह प्रदेशास्तेषां कायः संघातः "गणकायनिकाए खंधे वग्गे तहेव रासी य" इति वचनात् अस्तिकायः प्रदेशसंघात इत्यर्थः । प्रश्ना० ॥ सम० ॥ कर्म० ॥ उत्त० ॥ आकाशश्च तदस्तिकायश्चेत्याकाशास्तिकायः । प्रश्ना० । जी० लोकालोकव्याप्यनंतप्रदेशात्मकामूर्त्तद्रव्यविशेषे, ।अनु० । "आगासे तस्स देसे य तप्पएसे य आहिए" आकाशमाकाशास्तिकायः जीवपुद्गलयोरवकाशदाय्याकाशमिति सप्तमो भेदोऽरूप्यजीवस्येति ॥ उत्त० ॥

( आकाशास्तिकायस्य पर्याया भगवत्याम् ) यथा—

आगासत्थिकायस्स णं पुच्छा, गोयमा ! आणेगा अभिवयणा पं०, तंजहा—आगासेइ वा आगासत्थिकाएति वा गगणत्ति वा नभेइ वा समेति वा विसमेति वा खहेति वा विहेति वा वीमूत्ति वा विवरेति वा अंबरेति वा अंवरसेति वा छिड्डेति वा झुसिरेति वा मग्गेति वा विमुहेसि वा अट्टेति वा वियट्टेति वा आधरेति वा वोमेति वा भायणेति वा अंतरिक्खेति वा सामेति वा उवासंतरेति वा आगमेति वा फलिहेति वा अणंतेति वा जेयावण्णे तहप्पगारा सव्वे ते आगासत्थिकायस्स अभिवयणा पं० ॥ मू० भ० ॥ २० श० २ उत्त० ॥

( आगासेत्ति ) आ मर्यादयाऽभिविधिना वा; सर्वेऽर्थाः काशन्ते प्रकाशन्ते स्वस्वभावं लभन्ते यत्र तदाकाशं । ( गगणंत्ति ) अतिशयगमनविषयत्वाद्गगनं निरुक्तिवशात् ॥ ( नभोत्ति ) ॥ न भाति न दीप्यत इति नभः ( समेत्ति ) निम्नोन्नतत्वाभावात्समं । ( विसमेत्ति ) दुर्गमत्वाद्विषमं ( खहेत्ति ) खनने भुवो हाने च त्यागे यद्भवति तत्खहमिति निरुक्तिवशात् ( विहेत्ति ) विशेषेण हीयते त्यज्यते तदिति विहायः, अथवा विधीयते क्रियते कार्यजातमस्मिन्निति विघं ( वीइत्ति ) वेचनाद्विविक्तस्वभावत्वाद्वीचिः ( विवरेत्ति ) विगतवरणतया विवरं ( अंबरेत्ति ) अंबेव मातेव जननसाधर्म्यादम्बा जलं तस्य राणाद्दानादम्बरं निरुक्तितोऽम्बरं । ( अंबरसेत्ति ) अम्बा पूर्वोक्तयुक्त्या जलं तद्रूपो रसो यस्मान्निरुक्तितोऽम्बरसं । ( छिड्डेत्ति ) छिद्रच्छेदनस्यास्तित्वाच्छिद्रं । ( झुसिरेत्ति ) शुषेः शोषस्य दानाच्छुषिरं ॥ ( मग्गेत्ति ) पथिरूपत्वान्मार्गः ( विमुहेत्ति ) मुखस्यादेरभावाद्विमुखं । ( अद्देत्ति ) अद्यते गम्यते अट्यते वा अतिक्रम्यतेऽनेनेति अर्दः अट्टो वा ( वियद्देत्ति ) स एव विशिष्टो व्यर्द्दो व्यदो वा ॥ ( आहारेत्ति ) आधारणादाधारः ( वोमेत्ति ) विशेषेणावनात् व्योम । ( भायणेत्ति ) भाजनाद्विश्वस्याश्रयणाद्भाजनं ॥ ( अंतलिक्खेत्ति ) अन्तर्मध्ये ईक्षा दर्शनं यस्य तदन्तरीक्षं । ( सामेति ) श्यामवर्णत्वाच्छ्यामं । ( उवासंतरेत्ति ) अवकाशरूपमन्तरं न विशेषादिरूपमित्यवकाशान्तरम् । ( अगमेत्ति ) गमनक्रियारहितत्वेनागमं ( फलिहेत्ति ) स्फटिकमिव स्वच्छत्वात्स्फटिकम् । ( अणंतेत्ति ) अन्तवर्जितत्वात् । टी० ॥ भ० श० ॥ २० ॥ उ० । २ ॥

वर्णगन्धादिकमत्थिकाय शब्दे ।

आकाशास्तिकायस्य जीवाजीवद्रव्याधारत्वं भगवत्यां यथा—

अगासत्थिकाएणं भंते ! जीवाणं अजीवाणं य किं पवत्तइ ? गोयमा ! आगासत्थिकाएणं जीवदव्वाण य अजीवदव्वाण य भायणभूए एगेण वि से पुण्णे सयं पि माएज्जा

कोड़िसएण वि पुणे कोड़िसहस्सं पि माएज्जा, अवगाहणालक्खणेणं आगासत्थिकाए ॥ भ० १२ श०। ४ उ० ॥

आगासत्थिकाएणमित्यादि ॥ जीवद्रव्याणां चाजीवद्रव्याणां च भाजनभूतोऽनेन चेदमुक्तं भवति-एतस्मिन्सति जीवानामवगाहः प्रवर्तते एतस्यैव प्रश्नितत्वादिति, भाजनभावमेवास्य दर्शयन्नाह-( एगेण वीत्यादि ) एकेन परमाणवादिना । ( सेत्ति ) असौ आकाशास्तिकायप्रदेश इति गम्यते, पूर्णो भृतस्तथा द्वाभ्यामपि ताभ्यामसौ पूर्णः कथमेतदुच्यते-परिणामभेदात्, यथा अपवरकाकाशमेकप्रदीपप्रभापटलेनापि पूर्यते, द्वितीयमपि तत्तत्र माति यावच्छतपि तेषां तत्र माति तथौषधिविशेषापादितपरिणामादेकत्र पारदकर्षे सुवर्णकर्षशतं प्रविशति, पारदकर्षीभूतं च सदौषधिसामर्थ्यात्पुनः पारदस्य कर्षः सुवर्णस्य च कर्षशतं भवति विचित्रत्वात्पुद्गलपरिणामस्येति ॥ ( अवगाहणालक्खणेणंति ) ॥ इहावगाहनाश्रयभावो जीवतयेत्यर्थः ॥ भ० टी० १२ श०। उ० ४।

**आगासत्थिकायदेस**—आकाशास्तिकायदेश–पुं० आकाशास्तिकायस्य बुद्धिकल्पिते द्व्यादिप्रदेशात्मके विभागे, । प्रज्ञा० ॥ जी०। अस्यारूप्यजीवत्वम्॥ "आगासे तस्स देसे य तप्पएसे य आहिए,, आकाशस्य देशः कतमो विभागः आकाशास्तिकायदेश इत्यष्टमो भेदोऽरूप्यजीवस्येति ॥ उत्त० ॥

**आगासत्थिकायप्पएस**—आकाशास्तिकायप्रदेश–पुं० । आकाशास्तिकायस्य निर्विभागे भागे, । प्रज्ञा०। जी०॥ अस्यारूप्यजीवत्वम् । "आगासे तस्स देसे य तप्पएसे य आहिए" तस्याकाशास्तिकायस्य निरंशो देशस्तत्प्रदेश आकाशास्तिकायप्रदेश इति नवमो भेदोऽरूप्यजीवस्येति । उत्त० ।

**आगासथिग्गल**—आकाशथिग्गल—न० शरत्कालिके मेघविनिर्मुक्ते आकाशखण्डे, । जम्बूद्वीपप्रज्ञप्तौ कृष्णमणिवर्णनमधिकृत्य । "आगासथिग्गलेइ वा,, आकाशथिग्गलं शरदि मेघविनिर्मुक्तमाकाशखण्डं तद्धि कृष्णमतीव प्रतिभातीति । तदुपादानम्। जं० । जी० ॥ आ० म० प्र० ॥

( तच्च केन स्पृष्टमित्याह-प्रज्ञापनायाम् )

आगासथिग्गले णं भंते ! किण्णा फुडे कइहिं वा काएहिं फुडे। किं धम्मत्थिकाएणं फुडे धम्मत्थिकायस्स देसेणं फुडे धम्मत्थिकायस्स पदेसेहिं फुडे एवं अधम्मत्थिकाएणं। आगासत्थिकाएणं एएणं भेदेणं । जाव किं पुढविकाएणं फुडे जाव तसकाएणं फुडे अद्धा समएणं फुडे ? हंता गोयमा ! धम्मत्थिकाएणं फुडे नो धम्मत्थिकायस्स देसेहिं फुडे धम्मत्थिकायस्स पदेसेहिं फुडे । एवं अधम्मत्थिकाएण वि नो आगासत्थिकाएणं फुडे आगासत्थिकायस्स देसेणं फुडे आगासत्थिकायस्स पदेसेहिं फुडे जाव वणस्सइकाएणं फुडे एवं तसकाइएणं सिय फुडे । सिय नो फुडे अद्धा समएणं देसेणं फुडे प्रज्ञा० १५ पद ॥

( आगासथिग्गलेणं भन्ते इत्यादि ) आकाशथिग्गलं लोकः स हि महतो वहिराकाशस्य विततपटस्य थिग्गलमिव प्रतिभाति, भदन्त केन स्पृष्टो व्याप्त एतत् सामान्येन स्पृष्टमेतदेव विशेषतःप्रश्नयति कतिभिः कियत्संख्याकैः कायैः स्पृष्टः वाशब्दः पक्षान्तरद्योतनार्थः ककारान्तरं च सामान्याद्विशेषतः तान् कायान् ! प्रत्येकं पृच्छन्ति ( किं धम्मत्थिकाएणं फुडे इत्यादि ) सुगमं भगवानाह-हे गोतम ! धर्मास्तिकायेन स्पृष्टः धर्मास्तिकायस्य सर्वात्मना तत्रावगाढत्वात्, अत एव नोधर्मास्तिकायस्य देशेन स्पृष्टो यो हि येन सर्वात्मना व्याप्तो नासौ तस्यैव देशेन व्याप्तो भवति- विरोधात्, प्रदेशैस्तु व्याप्तः। सर्वेषामपि धर्मास्तिप्रदेशानां तत्रावगाढत्वात्, एवमधर्मास्तिकायविषयेऽपि, निर्वचनं वाच्यम् । तथा नो आकाशास्तिकायेन । सकलेन द्रव्येण स्पृष्टः आकाशास्तिकायप्रदेशमात्रत्वाल्लोकस्य किन्तु देशेन व्याप्तः। प्रदेशैश्च पृथिव्यादयोऽपि सूक्ष्माः सकललोकापन्ना वर्त्तन्ते ततस्तैरपि सर्वात्मना व्याप्तः ( तसकाइएणं सिय फुडे इति ) यदा केवली समुद्घातगतः सन् चतुर्थे समये वर्त्तते तदा तेन स्वप्रदेशैः सकललोकपूरणात् त्रसकायेन स्पृष्टः केवलिनस्त्रसकायत्वात्, शेषकालं तु न स्पृष्टः सर्वत्र त्रसकायनामभावात् ॥ प्रज्ञा० टी० पद १५ ॥

**आगासपइट्ठिय**—आकाशप्रतिष्ठित–त्रि० आकाशं व्योम तत्र प्रतिष्ठितो व्यवस्थित आकाशप्रतिष्ठितः । आकाशव्यवस्थिते, । "आगासपइट्ठिए वाए" ॥ स्था० ॥ भ० ॥ "तप्पइट्ठिओ लोगो"तत्प्रतिष्ठितो लोकस्तदित्यनेनाकाशपरामर्शस्तस्मिन्नाकाशे प्रतिष्ठितस्तत्प्रतिष्ठितः प्रकर्षेण स्थितवानित्यर्थ इति ॥ दश० ॥

**आगासपंचम**—आकाशपंचम–पुं० आकाशं सुषिरलक्षणम्। तत्पंचमं येषां तानि। पृथिव्यादिके पञ्चमहाभूते,।सूत्र०।"पुढवी आउ तेऊ वाउ आगासपंचमा" इति ॥ सूत्र० ॥

**आगासपय**—आकाशपद–न० । सिद्धश्रेणिकपरिकर्मश्रुतभेदे, ॥ सम० ॥

**आगासप्पएस**—आकाशप्रदेश–पुं० आकाशस्य निर्विभागे भागे, । प्रज्ञा० ॥ षोडशाकाशप्रदेशा इति ॥ सूत्र० ॥

**आगासफलिह** ( फालिय )—आकाशस्फटिक—पुं० आकाशमिव यदत्यंतमच्छं स्फटिकमाकाशस्फटिकम् । सम०। अतिस्वच्छे स्फटिकविशेषे, । "आगासफलिहा मएणं सपायपीढेणं सीहासणेणं, । आकाशस्फटिकमतिस्वच्छं स्फटिकविशेषस्तन्मयेनोपलक्ष्यत इति गम्यम् ॥ भ० ॥ जं० ॥ राज० ॥ आकाशे भवः स्फटिक इव वर्षोपले कर्कारूये संहतजलखण्डे तदुत्पादविलयौ श्रीपतिराह ॥ उद्धूतैः पांसुभिर्भूमेः प्रचण्डपवनोच्चयात्। मेघमण्डलमानीतैर्मालिन्यपरिवर्जितैः॥ मिश्रणाज्जलविन्दूनां पिण्डभावो भवेदिह। दृषद्भिपतन्त्यंते द्रवन्ते च पुनः क्षितौ ॥ वाच० ॥

**आगास** ( फलिह ) फालियसरिसप्पह—आकाशस्फटिकसदृशप्रभ—त्रि० आकाशस्फटिकयोराकाशरूपस्फटिकस्य वा सदृशी प्रभा येषां तानि तथा । आकाशस्फटिकतुल्ये,।औप०॥

**आगास** ( फलिहा ) फालियामय–आकाशस्फटिकमय–त्रि० अतिस्वच्छस्फटिकविशेषमये ॥ भ० ॥ "आगासफालियामयं सपायपीढं सीहासणं" आकाशमिव यदत्यंतमच्छं स्फटिकं तन्मयं सिंहासनं सहपादपीठमिति ॥ सम० ॥ राज० ॥ आ-

काशतुल्यं स्वच्छतया यत् स्फटिकं तन्मयेन सपादपीठेन सिंहासनेनेति ॥ औप० ॥

आगासभासिय—आकाशभाषित-न० आकाशे भाषितम् । अलक्ष्यशरीराणां कथने, ॥ वाच० ॥

आगासमंडल—आकाशमण्डल-न० आकाशो मण्डलमिव नभोमण्डले, आकाशस्य निरवयवत्वेन अनवच्छिन्नत्वेन च वेष्टनाकारमण्डलाभावेऽपि भूगोलवृत्तोपाधिकृतं तदीयं मण्डलमिव भवति यो हि नभो भागो भूगोलेनानावृतःसन् दृष्टिप्रचारपथवर्त्यालोकवान् तस्यैव भूगोलोपाधिना गोलाकारत्वं कल्प्यते एतेनापि प्रमाणेन भूमेर्गोलाकारत्वानुमानम् । यदि भूमिर्गोलाकारा न स्यात् कथं तदाऽनन्तानवच्छिन्नस्याकाशस्य गोलाकारत्वमुपलक्ष्येत कस्य चिदुपाधेरेव चास्य भावात् तस्य गोलाकारत्वमुपलक्ष्यते इति कल्प्यम् अन्यस्य च परिधेरदर्शनात् परिशेषात् भूमेरेव तथात्वसिद्धिरिति । तस्यागोलोकारता तद्वशाच्चाकाशस्य तथात्वकल्पनमिति। "आकाशमण्डलमध्यमध्यास्ते" । काद० । नभोमण्डलादयोऽप्यत्र नैतन्नभोमण्डलमम्बुराशिः ॥ सा० द० ॥ वाच० ॥

आगासमग्ग—आकाशमार्ग-पुं० द्रव्यमार्गभेदे, ॥ सूत्र० ॥ आकाशमार्गो विद्याधरादीनामिति ॥ सूत्र० ॥

आगासवयण—आकाशवचन-न० आकाशे वचनम् । यात्राप्रदेशेऽपि तदीयवाक्यं प्रविष्टपात्रेण श्रुत्वा आकाशवाक्यत्वेन कलिते नाटकाङ्गे १ वाक्यभेदे, "नेपथ्योक्तम् श्रुतं तत्र आकाशवचनं तथा । समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु" । सा० द० । अलक्षितशरीरतया देवादिभिरुच्चार्यमाणे २ वाक्ये च ॥ वाच० ॥

आगासातिवाइ ( न् )—आकाशातिपातिन्-पुं० आकाशं व्योमातिपततीति । आकाशगामिविद्याप्रभावात् पादलेपादिप्रभावाद्वाऽऽकाशमतिक्रामति आकाशाद्वा हिरण्यवृष्ट्यादिकमिष्टमनिष्टं वातिशयेन पातयतीत्येवंशीले च ॥ औप० । आशादिवादिन्-पुं० अमूर्त्तानामपि पदार्थानां साधनसमर्थवादिनि, "अप्पेगइयाविउलमइविउविवणिड्ढिपत्ताचारणा विज्जाहरा आगासातिवाइणो" ॥ औप० । ( आगासातिवाइत्ति ) आकाशं व्योमातिपतंत्यतिक्रामंति । आकाशगामिविद्याप्रभावात् पादलेपादिप्रभावाद्वा आकाशाद्वा हिरण्यवृष्ट्यादिकमिष्टमनिष्टं वातिशयेन पातयंतीत्येवंशीला आकाशातिपातिन आकाशादिवादिनो वा अमूर्त्तानामपि पदार्थानां साधनसमर्थवादिन इति भावः । औप० ॥

आगासिउं—आक्रष्टुम्-अव्य० । हठात्समाकृष्यात्मनः समीपमानेतुमित्यर्थे, ॥ विशे० ॥

आगासिय—आकर्षित-त्रि० आकृष्टे, उत्पाटिते, ॥ औप० ॥

आकाशित—त्रि० आकाशमम्बरमितः प्राप्तः । आकाशं गते, "आगासियाहिं से अचामराहिं,, आकाशमम्बरमिताभ्यां प्राप्ताभ्यां आकर्षिताभ्यां वा आकृष्टाभ्यामुत्पाटिताभ्यामित्यर्थ इति ॥ औप० ॥

आगासे—आकाशे-अव्य० । आ+काश-के, । द्वारस्थाभाषणं यत् स्यादशरीरनिवेदनम् । परोक्षान्तरितं वाक्यं तदाकाशे निगद्यते ॥ भरतोक्ते नाटकाङ्गे वाक्यभेदे, ॥ वाच० ॥

आगिइत्तिग—आकृतित्रिक-न० आकृतयः संस्थानानि षट् संहननानि षट् आतयः पञ्चैवेतं सप्तदशाके आकृत्युपलक्षिते त्रिके, ॥ कर्म० ॥

आगु—आकु—आगु-पुं० । अक अग कुटिलायां गतौ, उण् अभिलाषायाम्, । "सक्कोवं सट्ठवणाइक्खु अगू तेण हुंति इक्खागा" अक अग कुटिलायां गतौ अनेकार्थत्वाद्धातूनाम् अक धातोरौणादिके उणप्रत्यये आगुशब्दोऽभिलाषार्थः ततःस्वामी इन्द्रोः आकुनाभिलाषेण करं प्रासारयत् शक्र आर्प्पयत् तेन कारणेन भवंति इक्ष्वाकुवंशभवा ऐक्ष्वाका इति ॥ आ० क० ॥

आग्घाण—आघ्राण-त्रि० आ० घ्रा० क० १ ग्रहीतगन्धे पुष्पादौ, नासिकया यस्य गन्धज्ञानं जातं तस्मिन् २ तृप्ते च भावे क्त ३ गन्धग्रहणे, ध० तृप्तौ च न० वाच० । आग्घा इति- ॥ प्र० व्या० ॥

आग्घाय—आघ्रात-त्रि० आ-घ्रा-क्त । वा तस्य नत्वाभावः १ । गृहीतगन्धे पुष्पादौ, २ तृप्ते, ३ अस्पष्टे च ॥ वाच० ॥

आघं—आख्यातवत्-त्रि० कथयितरि, "भाघं मईमं अणुवीय धम्मं" ॥ सूत्र० ॥ (आघंति) आख्यातवानिति ॥ सूत्र० ॥

आघंअज्झयण—आख्यातवदध्यन—न० सूत्रकृताङ्गप्रथमश्रुतस्कन्धस्य समाध्यध्ययनापरनामधेये दशमेऽध्ययने, तथा च सूत्रकृताङ्गनिर्युक्तिकृदाह "आयाणपदेणाघं गोणं णामं पुणं समाहित्ति" ॥ सूत्र० ॥ आदीयते गृह्यते प्रथममादौ यत्तदादानमादानं च तत्पदं च सुबन्तं तिङन्तं वा तदादानपदं तेनाघंति नामास्याध्ययनस्य यस्मादध्ययनादाविदं सूत्रं । ( आघं मईममणुवीइधम्मामित्यादि ) यथोत्तराध्ययनेषु चतुर्थमध्ययनं प्रमादाप्रमादाभिधायकमप्यादानपदेनासंखयमित्युच्यते गुणनिष्पन्नं पुनरस्याध्ययनस्य नाम समाधिरिति ॥ सूत्र० ॥

आघंसण—आघर्षण—भावे ल्युट् । मर्द्दने, ॥ वाच० ॥ ईषत् घर्षणे, "आघसेज्ज वा" ईषत्पुनः पुनर्वा घर्षयेदिति ॥ आचा० ॥ "जे भिक्खू अप्पणो दंते आघंसेज्ज वा पघंसेज्ज वा आघसंतं वा पघसंतं वा साइज्जइ । एक्कदिणं आघंसणं दिणे २ पघंसणंति" ॥ नि० चू० ॥

आघट्ग—आघट्टक—पुं० आघट्टयति रोगान् ण्वुल् । रक्तापामार्गे, ॥ राजनि० । चालके, त्रि० ॥ वाच० ॥

आघवत्ता—आख्यातृ-त्रि० आख्यायके, ( प्रज्ञापके ) ॥ स्था० ॥

आघवण—आख्यान-न० सामान्यविशेषाभ्यां कथने, "आघविज्जंति" । प्राकृतशैल्याऽऽख्यायंते सामान्यविशेषाभ्यां कथ्यंत इत्यर्थ इति ॥ सम० ॥ आव० ॥ आख्यापने, । सामान्यविशेषरूपेण कथने,-"दुवासलसगं गणिपिडगं आघवेइ" सामान्यविशेषरूपत आख्यापयतीति ॥ स्था० ॥

आग्रहण—न० आदाने, ॥ अनु० ॥

आग्राहण—न० आदापने, ॥ भ० ॥

अर्थापन—न० प्रतिपादनतः पूजाप्रापणे, । "केवलिपण्णत्तं धम्मं आघवेज्ज वा" आग्राहयेच्छिष्यानर्थापयेद्वा प्रतिपादनतः पूजांप्रापयेदिति ) ॥ भ० ॥

आघवणा—आख्यापना—स्त्री० आख्याने, "बहुहिं आघवणाहिंय" (आघवणाहियत्ति) आख्यानैरिति । उपा० । तत्र सामान्यतः

प्रतिपादनम्—"आघवणाहि य" आख्यापनाभिश्च सामान्यतः प्रतिपादनैरिति । ज्ञा० । निर० । भ० ।

आघवित्तए—आख्यातुम्—अ० भणितुमित्यर्थे । अंत० । भ० ।

आघविय—आख्यात—त्रि० आ० ख्या० कर्मणि क्त० कथिते, ॥ वाच० ॥ "भगवया महावीरेणं आघविए" (आघविएत्ति) आर्षत्वादाख्यात इति । उत्त० ।

आगृहीत—त्रि० आदत्ते, "आवस्स एत्ति पयं आघवियं पन्नवियं परूवियं" ॥ ग० ॥

आघवियंति प्राकृतशैल्या छांदसत्वाच्च गुरोः सकाशादागृहीतम् । अनु० ।

आग्राहित—त्रि० आदापिते, ॥ भ० ॥

अर्थापित—त्रि० प्रतिपादनेन पूजां प्रापिते, "केवलिपरणत्तं धम्मं आघवेज्ज वा" आग्राहयेच्छिष्यानर्थापयेद्वा प्रतिपादनतः पूजां प्रापयेदिति ॥ भ० ॥

आघवेमाण—आख्यात्—त्रि० कथयति, । आव० ।

आघसंत—आघर्षण—त्रि० ईषद्घर्षणं कुर्वति, । नि०चू० ।

आघसावण—आघर्षण—न० ईषद्घर्षणे, [ जे भिक्खू णिग्गंथे णिग्गंथस्स दंते अणउ० गारत्थी० आघसावेज्ज वा पघसावेज्ज- वा आघसंतं वा पघसंतं वा साइज्जइ ] नि०चू० ॥

आघाण—आख्यान—न० कथने,—"आघाइणाणी" ज्ञानी आख्यात्याचष्टे ॥ आचा० ॥

आघाय—आख्यात—त्रि० आ ख्या० कर्मणि क्त० कथिते, ॥ ॥ वाच० ॥ " आघायंतु सोच्चा" आख्यातमेवैतत् कुशीलविपाकादिकं श्रुत्वा निशम्येति ॥आचा०॥ भावे क्त० आशये च न० "आघायं पुण एगेसिं" । सूत्र० ।

नियतिवादिनां पुनरेकेषामेतदाख्यातं अत्र चाविवक्षितकर्मका अपि अकर्मका भवंतीति ख्यातेर्धातोर्भावे निष्ठाप्रत्ययस्तद्योगे कर्त्तरि षष्ठी ततश्चायमर्थस्तैर्नियतवादिभिः पुनरिदमाख्यातं तेषामयमाशय इत्यर्थ इति । सूत्र० ।

आघात—पुं०आ+हन्—घञ् । १ वधे, २ आहनने, ३ ताडने च आधारे घञ् । ४ वधस्थाने, ॥ वाच० ॥

आहन्यंते अपनयंति विनाश्यंते प्राणिनां दशप्रकारा अपि प्राणा यस्मिन् स आघातः । मरणे । सूत्र० ॥

आघायकिच्च—आघातकृत्य—न० अग्निसंस्कारजलांजलिप्रदानपितृपिण्डादिके मरणकृत्ये, "आघायकिच्चमाहेउं नाइओ विसएसिणो । अन्ने हरंति तं वित्तं" सूत्र० । आहन्यंतेऽपनयंति विनाश्यंते प्राणिनां दशप्रकारा अपि प्राणा यस्मिन् स आघातो मरणं तस्मै तत्र वा कृतमग्निसंस्कारजलांजलिप्रदानपितृपिण्डादिकमाघातं कृत्यं तदाधातुमादाय कृत्वा पश्चात् ज्ञातयः स्वजनाः पुत्रकलत्रभ्रातृव्यादयः । किम्भूता विषयानन्वेष्टुं शीलं येषान्तेऽन्येऽपि विषयैषिणः सन्तस्तस्य दुःखार्जितं वित्तं द्रव्यजातमपहरंति स्वीकुर्वन्ति ॥ सूत्र० ॥

आ ( घ ) घायण—आघातन—न० वधस्थाने, ॥ वाच० ॥ "तत्थ णं महं एगं आघायणं पासंति" आघयणंति वधस्थानमिति ॥ ज्ञा० ॥ "आघायणपडिदुवारसंपाविया" आघातनस्य वध्यभूमिमण्डलस्य प्रतिद्वारं संप्रापिता इति ॥ प्रश्न० ॥

"आघयणंति जत्थ वा महासंगाममयावहूए" ॥ आव० । आ० चू० ॥ भावे ल्युट् । हनने ॥ वाच० ॥

आघुम्मिय—आघुलिय—आघोलिय—आपहल्लिय—आघूर्णित—त्रि० आ—घूर्ण० क्त० "घूर्णेर्घुलघोलघुम्मपहल्लाः" इति प्रा० सूत्रेणैते चत्वार आदेशाः ॥ प्रा० ॥ चलिते, भ्रान्ते च । वाच० । घुलइ, घोलइ, घुम्मइ पहल्लइ, इति ॥ प्रा० व्या० ॥

आचंदसूरिय—आचन्द्रसूर्य्य—न० यावच्चन्द्रसूर्य्यौ तावदित्यर्थे,—"आचंदसूरियं तह होउ इमा सुप्पतिट्ठति" आचंद्रसूर्य्यं चन्द्रसूर्य्यौ यावत्तावद् भवतु अस्तु इयमधिकृता सुप्रतिष्ठा शोभनावस्थानमिति ॥ पंचा० ॥

आचक्खु—आचक्षुस्—त्रि० आ×चक्ष्—वा० उसि । आख्यानकर्त्तरि, ॥ वाच० ॥

आचेलक—अचेलक्य—त्रि० न विद्यते चेलं वस्त्रं यस्य सः-

अचेलकस्तस्य भाव आचेलक्यम्—विगतवस्त्रत्वे, ॥ कल्प० ॥ तदात्मके कल्पभेदे च । आचेलक्यधर्म्मोपेतत्वादाचेलक्यः । चारित्रलक्षणे धर्म्मे च पुं०—"आचेलक्को धम्मो पुरिमस्स य पच्छिमस्स य जिणस्सं" ॥ पंचा० ॥ भेदादिबहुवक्तव्यताऽचेलशब्दे ॥ कल्प० ॥ वृ० ॥ जी० ॥ पं० चू० ॥ पं० भा० ॥ पंचा० ॥

आचोक्ख—आचोक्ष—पुं० अष्टमे पिशाचनिकाये ॥ प्रज्ञा०॥

आज ( य )ग—आजक—न० अजानां समूहः वुञ् छाग समूहे, । वाच० ।

आजम्म—आजन्मन्—अव्य० यावज्जीवमित्यर्थे, । "वसिज्ज तत्थ आजम्मं गोयमा ! संजए मुणी" आजन्म जीवितकालमभिव्याप्य यावज्जीवमित्यर्थः । ग० ।

आज ( य ) म्मसुरहिपत्त—आजन्मसुरभिपत्र—पुं० आजन्म सुरभिपत्रमस्य । मरुवकवृक्षे । राजनि० ॥ वाच० ॥

आज ( य ) वंजवीभाव—आजवंजवीभाव—पु० पुनः पुनर्गमनागमने, "आरंभसत्ता पकरंति संगं" संगाच्च पुनरपि संसार आजवं जवीभावरूपः इति ॥ आचा० ॥ "एस मरणा पमुच्चई" मरणादायुःक्षयलक्षणान्मुच्यते आयुषो बन्धनाभावात् यदि वा आजवं जवीभावादावीचिमरणाद्वा सर्व एव संसारो मरणं तस्मात्प्रमुच्यते इति ॥ आचा० ॥

आजा ( या ) इ—आजाति—स्त्री० आ० जन् क्तिन् आजननमाजातिः ॥ स्था० ॥ आजायन्ते तस्यामित्याजातिः।आचा०। आजनने जन्मनि, । "ताडयित्वा तृणेनापि संवादान्मतिपूर्वकम् ॥ एकविंशतिमाजातीः पापयोनिषु जायते" ॥ "साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशं । विवशः शतमा जातीस्तस्मात साक्ष्ये वदेहृतम्" ॥ इति च मनुः ॥ वाच० ॥

आजननमाजातिः सम्मूर्छनगर्भोपपाततो जन्मेति ॥ स्था० ॥ आजातिस्ततश्च्युतस्य मनुष्यजन्मेति ॥ स्था० ॥ आजायन्ते तस्यामित्याजातिः अपि चतुर्द्धा व्यतिरिक्ता मनुष्यादिजातिः भावाजातिस्तु ज्ञानाद्याचारप्रसूतिरयमेव ग्रन्थ इति ॥ ॥ आचा० ॥

आयाति—स्त्री० आगतौ, आजातिर्जन्म आयातिरागतिरिति ॥ स्था० ॥ आयातिर्गर्भान्निष्क्रम इति ॥ स्था० ॥

आजीव—आजीव—पुं० आजीवनमाजीवः । भावे घञ् जीविका-

याम् ॥ प्रव० ॥ आजीवनार्थमालम्बने, ॥ वाच० ॥ आ समन्ताज्जीवन्त्यनेनेत्याजीवः । अर्थनिचये, ॥ सूत्र० ॥ आजीविकायाम्, ॥ व्य० ॥ आत्मवर्त्तनोपाये, ॥ सूत्र० ॥ वाच० ॥ "आजीवमेयन्तु अवुज्झमाणो पुणो २ विप्परियासु वेंति" ॥ ॥ सूत्र० ॥ आजीमाजीविकामात्मवर्त्तनोपायं कुर्वाणः पुनः पुनः संसारकान्तारे विपर्य्यासं जन्मजरामरणरोगशोकोपद्रवमुपैति गच्छति तदुत्तरणायाभ्युद्यतो वा तत्रैव निमज्जतीत्ययं विपर्य्यास इति ॥ सूत्र० ॥

आजीवनं जातिकुलगणकर्मशिल्पानां गृहस्थसमानाभिधानत उपजीवनमाजीवः । उत्पादनादोषविशेषे, ॥ पंचा० ॥ जात्यादिकथनादुपजीवनमाजीव इति ॥ ग० ॥

आजीवस्य भेदादिकमाजीवपिण्डदोषस्य स्वरूपादिकञ्च यथा पिण्डनिर्युक्तौ ॥

जाईकुलगणकम्मे सिप्पे आजीवणा उ पंचविहा ।
सूयाए असूयाए व अप्पाणं कहेहि एक्केके ॥

आजीवना पंचविधा तद्यथा- जातिमाजीवनीं करोतीत्यर्थः । एवं कुलविषया गणविषया कर्मविषया शिल्पविषया च। सा चाजीवना एकैकस्मिन् भेदे द्विधा तद्यथा-सूचया आत्मानं कथयति । असूचया च । तत्र सूचा वचनभंगिविशेषेण कथनं। असूचा स्फुटवचनेन ॥ पिण्ड० ॥ तत्र जात्यादीनां लक्षणमाह ॥

जाई कुले विभासा गणो उ मल्लाइ कम्म किसिमाई ।
तूणादि सिप्प णावज्जगं च कम्मे य आवज्जं ॥

जातिकुले विभाषा विविधं भाषणं कार्य्यं तच्चैवं जातिर्ब्राह्मणादिका कुलमुग्रादि । अथवा मातृसमुत्था जातिः। पितृसमुत्थं कुलं। गणो, मल्लादि वृंदं,। कर्म, कृष्यादि, शिल्पं तूणादि तूणनसीवनप्रभृति । अथवा अनावर्जकमप्रीत्युत्पादकं कर्म। इतरत्तु आवर्जकं प्रीत्युत्पादकं शिल्पं। अन्ये त्वाहुरनाचार्य्योपदिष्टं कर्म । आचार्य्योपदिष्टं तु शिल्पमिति ॥ पिण्ड० ॥ तत्र यथा साधुः सूचया स्वजातिप्रकटनाज्जातिमुपजीवति तथा दर्शयति ॥

होमायवितहकरणेन जाइ जह सोत्तियस्स पुत्तोत्ति ।
वसिओ वसे गुरुकुले आयरियगुणे व सूएइ ॥

साधुर्भिक्षार्थमटन् ब्राह्मणगृहे प्रविष्टः सन् तस्य पुत्रं होमादिक्रियाः कुर्वाणं दृष्ट्वा तदभिमुखं प्रति स्वजातिप्रकटनाय जल्पति । होमादिक्रियाणामवितथकरणेन एष तव पुत्रो ज्ञायते यथा श्रोत्रियस्य पुत्र इति । यदि वा उषित एष सम्यग् गुरुकुले इति ज्ञायते ॥ अथवा सूचयत्येष तव पुत्र आत्मन आचार्य्यगुणान् ततो नियमादेष महानाचार्य्यो भविष्यति। तत एवमुक्ते स ब्राह्मणो वदति साधो ! त्वमवश्यं ब्राह्मणो येनेत्थं होमादीनामवितथत्वं जानासि साधुश्च मौनेनाऽत्र तिष्ठते एवञ्च सूचया स्वजातिप्रकटकं अत्र चानेके दोषाः तथाहि यदि स ब्राह्मणो भद्रकस्तर्हि तज्जातिपक्षपातात्प्रभूतमाहारादिकं दापयति । तदपि च जात्युपजीवननिमित्तमिति भगवता प्रतिषिद्धमथ प्रांतस्तर्हि भ्रष्टोऽयं पापात्मा ब्रह्मण्यं परित्यक्तमिति विचिन्त्य स्वगृहनिष्काशनादि करोति असूचया तु जात्या जीवनं पृष्टोऽपृष्टो वा आहाराद्यर्थं स्वजातिं प्रकटयति यथाहं ब्राह्मण इति । तत्राप्यनन्तरोक्ता एव दोषाः एवं क्षत्रियादि जातिं प्रविष्टोऽपि एवं कुलादिष्वपि भावनीयम् ॥ पिंड० ॥ प्रव० ॥

एतदेव किंचिद्व्यक्तीकुर्वन्नाह—

सम्ममसम्मा किरिया णेण कुणाहिया च विवरीया ।
समिहा मंताहुयट्ठाण जागकाले य घोसाई ॥

साधुर्भिक्षार्थमटन् कचित् ब्राह्मणगृहे प्रविष्टः सन् तस्य पुत्रं होमादिक्रियाः कुर्वाणं दृष्ट्वा पितरं स्वजातिप्रकटनाय जल्पति अनेन तव पुत्रेण सम्यक् असम्यग्वा होमादिका क्रिया कृता । तत्रासम्यक् त्रिधा तद्यथा न्यूना अधिका विपरीतावा । सम्यक् समिदादीन् घोषादींश्च यथावस्थितानाश्रित्य तत्र समिध इध्मखंडानि, मंत्राः प्रणवप्रभृत्तिका अक्षरपद्धतयः। आहुतिरग्नौ घृतादेः प्रक्षेपः । स्थानमुत्कुटादि यागोऽश्वमेधादिः । कालः प्रभातादिः । घोषा उदात्तादय आदिशब्दात् ह्रस्वदीर्घादिधर्मपरिग्रहः । एवं चोक्ते स साधुं ब्राह्मणं जानाति । तथा च सति भद्रे प्रांते पूर्ववत् दोषा वक्तव्याः । उक्तं जातेरुपजीवनम् ॥ पिंड० ॥

अथ कुलाद्युपजीवनमाह—

उग्गाइकुलेसु वि एवमेव गणिमण्डलप्पवेसाइ ।
देउलदरिसणभासाउवणयणे दंडमाईया ॥

एवमेव जात्यादिवत्कुलादिष्वपि उग्रादिषूपजीवनमवगंतव्यम् । यथा कोऽपि साधुरुग्रकुले भिक्षार्थं प्रविष्टस्तत्र च तत्पुत्रं पदातीन् यथावदारक्षककर्मनियुंजानं दृष्ट्वा तत्पितरमाह-योऽयं ते तव पुत्रोऽप्रवेदितोऽपि यथायोगं पदातीनां नियोजनेनोग्रकुले सम्भूत इति । ततः स जानात्येषोऽपि साधुरुग्रकुलसमुत्पन्न इति, इदं तु सूचया स्वकुलप्रकाशनं । यदा तु स्फुटं वा चैष स्वकुलमावेदयति यथाहमुग्रकुलो भोगकुल इत्यादि । तदा असूचया प्रकटनं तेषां भद्रप्रांतत्वे पूर्वोक्तानुसारेण दोषा वक्तव्याः तथा गणविषये मंडलप्रवेशादि इहांकखलके प्रविष्टस्यैकस्य मल्लस्य यल्लभ्यं भूखंडं तन्मंडलं तत्र वर्तमानस्य प्रतिद्वंद्विनो मल्लस्य विबोधाय यः प्रवेशस्तदादिशब्दात् ग्रीवाग्रहादिपरिग्रहः । तथा देवकुलदर्शनं युद्धप्रदेशे चामुण्डाप्रतिमाप्रणामनं। भाषोपनयनं प्रतिमल्लाह्वानाय तथा तथा वचनढौकनं दंडादिका धरणिपात उभांकयुद्धप्रभृयः । एतान् गुणान् गृहे प्रविष्टः सन् तत्पुत्रस्य प्रशंसति । तथा च सति तेन ज्ञायते यथैषोऽपि साधुर्मल्ल इत्यादि प्राग्वत् ॥ पिंड० ॥

कर्म शिल्पयोराजीवनमाह—

कत्तरि पओयणावेक्खवत्थुबहुवित्थरेसु एमेव ।
कम्मेसु य सिप्पेसु य सम्ममसम्मेसु सूएइ ॥

कर्मसु शिल्पेषु च एवमेव कुलादाविवोपजीवनं वक्तव्यम् कथमित्याह-कर्त्तरि कर्म्मणां शिल्पानां च विधायके उपलक्षणमेतद्विधायके च वणिजादौ। सप्तमी चात्र षष्ठ्यर्थे ततोऽयमर्थः । कर्तुः कारापकस्य च प्रयोजनापेक्षेषु भूमिविलेखनादिप्रयोजननिमित्तं ध्रियमाणेषु हलादिषु वस्त्रसूत्रे चात्र विभक्तिलोप आर्षत्वात् । बहुविस्तारेषु प्रभूतेषु नानाविधेषु च सम्यक् असम्यगिति वा प्रोच्यमानेषु शोभनानि अशोभनानीति वा कथ्यमानेषु यदात्मनि कर्माणि शिल्पे वा कौशलज्ञापनं तत्तयोरुपजीवनं इयमत्र भावना । भिक्षार्थं प्रविष्टः सन् साधुः

कृष्यादेः कर्तुः कारापकस्य वा तत्प्रयोजनापेक्षीणि यानि नानारूपाणि हलादीनि बहूनि वस्तूनि तानि दृष्ट्वा आत्मनः कर्माणि शिल्पे वा कौशलज्ञापनाय शोभनान्यशोभनानीति वा यत् वक्ति तत्कर्मशिल्पयोराजीवनं। अनेन च प्रकारेण कौशलज्ञापनं सूचा । स्फुटवचनकौशलकथनमसूचा ॥ पिंड० ॥ नि०चू० ॥

आजीविकपिंडग्रहणे दोषा यथा-

जे भिक्खू अजीवियं पिंडं भुंजइ भुजंतं वा साइज्जइ ६२ जातिमातिभावं उवजीवतित्ति आजीवणपिंडो गाहा--जे-भिक्खू जीवपिंडं गेण्हेज्ज सयं तु अहवा सातिज्जे सो आणा अणवत्थं मिच्छत्तविराहणं पावे ॥ १४८ ॥ स्वयं गेण्हति अण्णं वा गेण्हावेति अणुजाणाति वा तस्स आणादिया य दोषा चउलहुं च पच्छित्तं ॥ नि०चू० ॥

आजीवति, कर्त्तरि अच् । आजीवनकारिणि, कर्माजीवनृपाजीव इत्यादौ तु आजीव अण् उप० स० इति भेदः ॥ ॥ वाच० ॥ कुशीलभेदे, ॥ प्रव० । व्य०॥ आजीवनमुपजीवनं जातिकुलगणशिल्पादिना करातीति ॥ दर्श० ॥ स च पंचविधः—

पंचविहे आजीवे प० तंजहा जाइआजीवे कुलाजीवे कम्माजीवे सिप्पाजीवे लिंगाजीवे ॥ स्था० मू० ॥

( व्यवहारकल्पेऽस्य सप्तभेदाः ) यथा—

जातीकुले गणे या कम्मे सिप्पे तवे सुए चेव ।
सत्तविहं आजीवं उवजीवइ जो कुसीलो उ ॥

जातिर्मातृकी कुलं पैतृकं, गणो मल्लगणादि, कर्म्म अनाचार्यकमाचार्योपदेशजं शिल्पं । तपःश्रुते प्रतीते एवं सप्तविधमाजीवं य उपजीवति जीवनार्थमाश्रयते तद्यथा जातिं कुलं चात्मीयं लोकेभ्यः कथयति । येन जातिपूज्यतया वा भक्तपानादिकं प्रभूतं लभेयमिति । अनयैव बुध्या मल्लगणादिभ्यो गणेभ्यो गणविद्याकुशलत्वं कर्म्मशल्यकुशलेभ्यः कर्म्मशल्यकौशलं कथयति । तपसः उपजीवना तपः कृत्वा क्षपकोऽहमिति जनेभ्यः कथयति विश्रुतोऽयमिति ॥ व्य०प्र० ॥

श्रमणभेदे च । ये गोशालकमतमनुसरंति भण्यंते ते तु आजीवका इति। एते ऽपि लोके श्रमणा इति व्यपदिश्यंत इति ॥ प्रव० ॥

आजीवग–आजीवक–पुं० आ०जीव्-कर्त्तरि ण्वुल्।आजीवनकर्त्तरि, ॥ वाच० ॥ श्रमणभेदे, । प्रव० । आचा० ।

आजीवग–पुं०।आ समन्ताज्जीवंत्यनेनेत्याजीवोऽर्थनिचयस्तं गच्छत्याश्रयत्यासावाजीवगः। अर्थमदे, । "आजीवगं चेव चउत्थमाहु से पंडिए उत्तमपोग्गले से" ॥ सूत्र० ॥ आ समंताज्जीवंत्यनेनेत्याजीवोऽर्थनिचयस्तं गच्छत्याश्रयत्य सावाजीगोऽर्थमदस्तं च चतुर्थनामयेश्वशब्दाच्छेषानपि मदाश्चामयेस्तन्नामनाश्चासौ पंडितस्तत्त्ववेत्ता भवतीति ॥ सूत्र० ॥

आजीवण—आजीवन—न० आजीवत्यनेन करणे ल्युट्। वृत्त्युपाये, । भावे ल्युट् । वृत्त्यर्थमुपायग्रहणे, ॥ वाच० ॥ जात्याद्याजीवनेनोत्पादिते आहारशय्यादिके, । आजीवनं यदाहारशय्यादिकं जात्याद्याजीवनेनोत्पादितमिति ॥ व्य० ॥

आजीवणा—आजीवना—स्त्री० । परोपजीवने, ॥ दर्श० ॥

आजीवणापिंड—आजीवनापिंड—पुं० । उत्पादनादोषविशेषस्पृष्टे, जातिकुलगणकर्मशिल्पैरात्मनो गृहस्थस्य च तुल्यरूपताख्यापनेन लब्धजीवनापिंडे, ॥ जीत० ॥

आजीवणाभय—आजीवनाभय—न० । आजीवना परोपजीवनं सैव भयं आजीवनाभयं । भयभेदे, । यथा राजामात्यादिपदाति आजीवनाभयात्संग्रामादौ मरणमध्यवस्यतीति ॥ दर्श० ॥

आजीवदिट्टंत—आजीवदृष्टान्त—पुं० । आ सकलजगदभिव्याप्य जीवानां यो दृष्टान्तः परिच्छेदः स आजीवदृष्टान्तः। सकलजीवनिदर्शने, ॥ आह च । मूलटीकाकारः । आजीवदृष्टान्तेन सकलजीवनिदर्शनेनेति ॥ जी० ॥

( आजीवदृष्टान्तेन तिर्य्यग्योनिकानां जातिकुलकोटिविचारस्तिरियजोणियशब्दे )

आजीवपिंड—आजीवपिण्ड—पुं० । जातिकुलगणकर्मशिल्पादिप्रधानेभ्य आत्मनस्तद्गुणत्वारोपणं भिक्षार्थमाजीवपिण्ड इत्युक्तलक्षणे उत्पादनादोषभेदे, ॥ ध० ॥ आचा० ॥ ॥ पंचा० ॥

"जआइनाजीवे"—जात्यादिना जातिकुलगणकर्मशिल्पादिकमाजीवेदुपजीवति यस्तस्य तत्कथनमुपजीवनञ्चोत्पादनादोष इति ॥ पंचा० ॥ ( अस्य वक्तव्यताऽऽजीवशब्दे ) नि०चू० ॥

आजीववित्तिया—आजीववृत्तिता—स्त्री० । जातिकुलगणकर्मशिल्पानामाजीवनमाजीवस्तेन वृत्तिस्तद्भाव आजीववृत्तिता। जात्याद्याजीवनेनात्मपालनायाम् "जाइआजीववित्तिया" इयं चानाचरितेति।दश०।

आजीवि(न्)—आजीविन्—पुं० । गोशालकशिष्ये, उपा० ॥

आजीविय—आजीविक—पुं० । नाग्न्यधारिणि पाखण्डविशेषे, अविवेकिलोकतो लब्धिपूजाख्यात्यादिभिस्तपश्चरणादीन्याजीवति ॥ भ० ॥ श्रमणभेदे, ॥ आचा० ॥ स्था० ॥ ते च गोशालकशिष्याः ॥ स्था० ॥ उपा० ॥ गोशालकप्रवर्त्तिता आजीविकाः पाखण्डिन इति॥ नं० ॥ "आजीवियाणं" पाखण्डिविशेषाणां नाग्न्यधारिणां, गोसालकशिष्याणामित्यन्ये ॥ आजीवंति वा॥ ये अविवेकिलोकतो लब्धिपूजाख्यात्यादिभिस्तपश्चरणादीनि ते आजिविकास्तित्वेनाजीविका अतस्तेषां तथा ॥ भ० ॥

तेषामुपपत्तिगतिस्थितयो यथा—

से जे इमे गामागर जाव सन्निवेसेसु आजीवका भवंति । तं जहा—दुघरंतरिया । तिघरंतरिया सत्तघरंतरिया उप्पलबेंटिया घरसमुदाणिया विज्जुअंतरिया उट्टिया समणा । तेणं एयारूवेणं विहारेणं विहरमाणे बहूइं वासाइं परियायं पाउणित्ता कालमासे कालं किच्चा उक्कोसेणं अच्चुए कप्पे देवत्ताए उववत्तारो भवंति । तेहिं तेसिं गती बावीसं सागरोवमाइं ठिती अणाराहका सेसं तं चे व ॥ १७ ॥ औप०मू० ॥

आजीविका गोशालकमतानुवर्त्तिनः ( दुघरंतरियत्ति ) एकत्र गृहे भिक्षां गृहीत्वा येऽभिग्रहविशेषाद् गृहद्वयमतिक्रम्य पुनर्भिक्षां गृह्णंति न निरन्तरमेकान्तरं वा ते द्विगृहान्तरिकाः द्वे गृहे अन्तरं भिक्षाग्रहणे येषामस्ति ते द्विगृहान्तरिकाः इति निर्वचनम् । एवं त्रिगृहान्तरिकाः सप्तगृहान्तरिकाश्च ( उप्पलवेंट्टियत्ति ) उत्पलवृन्तानि नियमाविशेषात् गृह्यतया भैक्षत्वेन येषां सन्ति ते उत्पलवृन्तिकाः ( घरसमुदाणियत्ति ) गृहसमुदायं प्रतिगृहं भिक्षाया येषां ग्राह्यतयाऽस्ति ते गृहसमुदानिकाः ( विज्जुयंतरियत्ति ) विद्युति सत्यां अन्तरं भिक्षाग्रहणस्य येषामस्ति ते विद्युदन्तरिका विद्युत्सम्पाते भिक्षां नाटन्तीति भावार्थः ( उट्टियासमणत्ति ) उष्ट्रिका महान्मृण्मयो भाजनविशेषस्तत्र प्रविष्टा ये श्राम्यन्ति तपस्यन्तीत्युष्ट्रिकाश्रमणाः । एषां च पदानामुत्प्रेक्षया व्याख्या कृतेति ॥ औप० टी० ॥

कुशीलभेदे, च ॥ आव० ॥ ( तस्य भेदाद्याजीवशब्दे ) । सामायिककृतः श्रावकस्य कोऽपि भाण्डमपहरेत्तत्कस्येति आजीविकपृच्छा सामाइयकयशब्दे, )

आजीवियभय—आजीविकाभय—न० निर्द्धनः कथं दुर्भिक्षादावात्मानं धारयिष्यामीत्येवंरूपे भयभेदे, ॥ आव० ॥ "आजीवियभयगत्था मूढाणो साहुणो णेया" ॥ पंचा० ॥ आजीवनमाजीविका निर्वाहस्तद्भावनया यद् भयं भीतिस्तदाजीविकाभयं तेन ग्रस्ता अभिभूता ये तथा गृहस्थैर्विज्ञातनिर्गुणत्वावनादिविरहिता वा कथं निर्वक्ष्याम इत्यभिप्रायवन्त इत्यर्थः । मूढाः परलोकसाधनवैमुख्येनेहलोकप्रतिबद्धत्वात्ते नैव साधवो ज्ञेया ज्ञातव्या इति गाथार्थः ॥ पंचा० ॥

आजीवियसमय—आजीविकसमय—पुं० गोशालकसिद्धान्ते, आजीवियसमयस्स णं अयमट्ठे पण्णत्ते अक्खीणपडिभोइणो सव्वसत्ता से हंता छेत्ता भेत्ता लुंपित्ता विलुंपित्ता उद्दवइत्ता आहारमाहारेति ॥ भ० सू० श० ८ उ० ५ ॥

आजीविकसमयस्य गोशालकसिद्धान्तस्य ( अयमट्ठेति ) इदमभिधेयं ( अक्खीणपरिभोइणो सव्वसत्तत्ति ) अक्षीणमक्षीणायुष्कमप्रासुकं परिभुज्यत इत्येवंशीला अक्षीणपरिभोगिनो ऽथवेन्प्रत्ययस्य स्वार्थिकत्वादक्षीणपरिभोगा अनपगताहारभोगशक्तय इत्यर्थः । सर्वसत्वा असंयतसर्वप्राणिनो यद्येवं ततः किमित्याह ( से हंतेत्यादिसेत्ति ) ततः । ( हंतत्ति ) हत्वा लगुडादिनाऽभ्यवहार्यं प्राणिजातं छित्वा ऽसिपुत्रिकादिना द्विधा कृत्वा भित्वा शूलादिना भिन्नं कृत्वा लुप्त्वा पक्ष्मादिलोपनेन विलुप्य त्वचो विलोपनेमाऽपद्राव्य विनाश्याहारमाहारयन्ति ॥ भ० ॥ टी० ॥

आजीवियसुत्त—आजीविकसूत्र—न० गोशालकप्रवर्त्तितपाखण्डसूत्रे, । "आजीवियसुत्तपरिवाडीए" गोशालकप्रवर्त्तितपाखण्डसूत्रपरिपाट्येति ( एतद्वक्तव्यता सुत्तशब्देपि ) ॥ सम० ॥

आजीविया—आजीविका—स्त्री० । आजीवयति आ-जीव-णिच्-ण्वुल् । जीविकायाम्, वृत्तौ, जीवनार्थे व्यापारे, ॥ वाच. ॥ आजीवनमाजीविका निर्वाहे, ॥ पंचा० ॥ आजीविका च सप्तभिरुपायैः स्याद्वाणिज्येन १ विद्यया २ कृष्या ३ शिल्पेन ४ पाशुपाल्येन ५ सेवया ६ भिक्षया ७ च तत्र वाणिज्येन वणिजां १ विद्यया वैद्यादीनां २ कृष्या कौटुंबिकादीनां ३ पाशुपाल्येन गोपालादीनां ४ शिल्पेन चित्रकारादीनां ५ सेवया सेवकानां ६ भिक्षया भिक्षाचराणां ७ ॥ध०॥

आजीवियादोस—आजीविकादोष—पुं० । चतुर्थे उत्पादनादोषे, यदा गृहस्थस्य ज्ञातिं कुलं ज्ञात्वा ऽऽत्मीयमपि साधुस्तमेव ज्ञातिं तदेव कुलं स्वकीयं प्रकाश्याहारं गृह्णाति तदाऽऽजीविकादोषश्चतुर्थ इति ॥ उत्त० ॥

आजीवियोपासग—आजीविकोपासक—पुं० । आजीविका गोशालकशिष्यास्तेषामुपासक आजीवोपासकः ॥ उपा० ॥ गोशालकशिष्यश्रावके, ॥ भ० ॥ ते च भगवत्याम्—आजीविकसमयमधिकृत्य दर्शिता यथा ॥

तत्थ खलु इमे दुवालस आजीवियोवासगा भवंति, तंजहा ताले १ तालपलंबे २ उव्विहे ३ संविहे ४ अवविहे ५ उदए ६ नामुदए ७ नमुदए ८ अणुवालए ९ संखवालए १० अयंपले ११ कायरिए १२ इच्चेए दुवालस आजीवियोवासगा अरहंतदेवयागा अम्मापिउसुस्सूसगा पंचफलपडिकंता तं० उउंवरेहिं बडेहिं बोरेहिं सतरेहिं पिलक्खूहिं पलंडुलहसुणकंदमूलविवज्जगा अणिल्लंछिएहिं अणकभिण्णेहिं गोणेहिं तसपाणविवज्जिएहिं वित्तेहिं वित्तिं कप्पेमाणा विहरंति । एए वि ताव एवं इच्छंति किमंग पुण जे इमे समणोवासगा भवंति तेसिं णो कप्पंति इमाइं पण्णरसकम्मादाणाइं सयं करेत्तए वा कारवेत्तए वा करंतं वा अण्णं समणुजाणेत्तए तं०—इंगालकम्मे वणकम्मे साडीकम्मे भाडीकम्मे फोडीकम्मे दंतवाणिज्जे लक्खवाणिज्जे केसवाणिज्जे रसवाणिज्जे विसवाणिज्जे जंतपीलणकम्मे निल्लंछणकम्मे दवग्गिदावणया सरदहतलावपरिसोसणया असईपोसणया इच्चेए समणोवासगा सुक्का सुक्काभिजाइया भविया भवित्ता कालमासे कालं किच्चा अण्णयरेसु देवलोएसु देवत्ताए उववत्तारो भवंति । कइविहा णं भंते ! देवलोगा प० ? गोयमा ! चउव्विहा देवलोगा प०, तंजहा—भवणवासी जाव वेमाणिया देवा सेवं भंते भंतेत्ति । भ० ॥ ८ ॥ श० ५ उ० ॥

( अरहंत देवयागत्ति ) गोशालकस्य तत्कल्पनमाऽर्हत्वात् ( पंचफलपडिकंतत्ति ) फलपंचकान्निवृत्ता उदुम्बरादीनि च पंच पदानि पंचमी बहुवचनान्तानि प्रतिक्रान्तशब्दानुस्मरणादिति । ( अनिल्लंछिएहिंति ) अवर्धितकैः ॥ ( अणकभिन्नेहिंति ) अनस्तितैः ( एए वि ताव एवं इच्छंतित्ति ) एतेऽपि तावद्विशिष्टयोग्यताविकला इत्यर्थः ॥ एवं इच्छंति ॥ अमुना प्रकारेण वांछन्ति धर्ममिति गम्यं ( किमंग पुण इत्यादि ) किं पुनर्य इमे श्रमणोपासका भवंति ते नेच्छंती-

ति गम्यम इच्छंत्येवेति विशिष्टतरदेवगुरुप्रवचनसमाश्रितत्वात्तेषां ॥ तत्थत्ति ॥ तत्र एवं स्थिते असंयतसत्त्ववर्गे हननादिदोषपरायण इत्यर्थः । आजीविकसमये वाधिकरणभूते द्वादशेति विशेषानुष्ठानवत्वात्परिगणिता आनन्दादिश्रमणोपासकवदन्यथा बहवस्ते ॥ ( तालेत्ति ) तालाभिधान एक एवं तालप्रलंबादयोऽपि॥ टी० ॥ भ० ॥

आजुत्त—आयुक्त—त्रि० । अप्रमत्ते, "अबत्थं जुत्तो आजुत्तो वा" अप्रमत्त इत्यर्थ इति ॥ नि०चू० ॥

आडंबर—आडंबर—पुं० । आड+वि-क्षेपे, अरन् १ हर्षे, २ दर्पे, ३ तूर्य्यस्वने, ४ आरम्भे, ५ संरम्भे, ६ अक्षिलोम्नि, घनगर्जिते, ७ आयोजने च, मत्वर्थे इनि । आडम्बरिन् । तद्युक्ते, । त्रि० ॥ वाच० ॥ पटहे, "आडम्बरो धेवइयं" स्था० ॥ अनु० ॥ यक्ते, "पाणाडंबरे अरुद्दे पाणत्ति मायगा तेसिं आडम्बरो जक्खो हरिमिक्को वि भणंतीति ॥ आव० ॥ आ०चू० ॥ यक्षायतने, ॥ व्य० ॥

आडविय—आटविक—त्रि० । अटव्यां चरति भवो वा ठक् । अरण्यचारिणि, ॥ वाच० ॥

आडहण—आदहन—न० । आ-दह भावे ल्युट् । आ समन्तादहने, "शूलं वियासं मुहे आडहंति,, मुखे विकाशं कृत्वा स्थूलं वृहत्तप्तायोगोलादिकं प्रक्षिपंत आ समन्तादहंतीति ॥ सूत्र०॥ दाहे, २ हिंसायां, ३ कुत्सने च । आदह्यतेऽत्र आधारे ल्युट् ४ श्मशाने, ॥ वाच० ॥

आडिं—आडि—आ—अड्-इण । १ शरारिपक्षिणि २ मत्स्यभेदे च । जातित्वेन स्त्रियां वा ङीप् ॥ वाच० ॥

आडि—पुं० । अड् उद्यमे इण । स्वनामख्याते मत्स्यभेदे । शरारिविहगे च ।पुं० स्त्री० स्त्रीत्वे वा ङीप् स्वार्थे कन् आडिकाऽप्यत्र ॥ वाच० ॥

आडोव—आटोप—पुं० आ तुप् घञ्—पृषो० टत्वम । दर्पे, संरम्भे, ॥ वाच० ॥ आडम्बरे च ॥ उपा० ॥ स्फारतायाम, ॥ ज्ञा० ॥ वातजन्ये उदरशब्दभेदे, ॥ वाच० ॥

आढई—आढकी—स्त्री० आढौकते अच पृषो गौ० ङीप् गुच्छात्मके वनस्पतिभेदे, ॥ प्रज्ञा० ॥ "आढकी तुवरी रूक्षा मधुरा शीतला लघुः । ग्राहिणी वातजननी वर्ण्या पित्तकफास्रजित्" ॥ भावप्र० ॥ फले,अस्य पुंस्त्वमपि "आढकांश्च मसूरांश्च कोद्रवान् लवणं त्यजेत् ॥ काशी० स्त० वैश्वदेवे, वर्जने, ॥ वाच० ॥

आढग(य)—आढक—पुं० आढौकते आ-ढौक्-घञ्-पृ.।चतुष्प्रस्थात्मके धान्यप्रमाणविशेषे, ॥ अनु० ॥ "चउपत्थमाढयं" ॥ औप० ज्यो० ॥ आ० म० ॥ ज्ञा० ॥ उत्त० ॥ चतुर्भिः प्रस्थैराढक इति ॥ तं० ॥ " आढकं तंडुलाणं सिद्धंति"॥ आ० चू० ॥ आ० म० ॥ "अष्टमुष्टि भवेत् कुंचिः कुञ्चयोऽष्टौ तु पुष्कलम । पुष्कलानि च चत्वारि आढकः परिकीर्तितः" इति ॥ वाच० ॥

आढत्त—(आरद्ध)—आरब्ध—त्रि० आ रभ क० मलिनोभय शुक्तिछुमारब्धपदातेर्मइलावहासिप्पिछिकाढत्तपाइकं" इति प्राकृतसूत्रेणाढत्त इत्यादेशो वा पक्षे आरद्ध इति । प्रा० । कृतारम्भणे, भावे क्त० आरम्भे, न० । वाच० । अवरुद्धे, सा दाउं आढत्ता" सा संथारं दातुं प्रवृत्ता परावर्तयितुं व्याख्यातुं च प्रवृत्तेत्यर्थ इति ॥ व्य० ॥

आढप्प—आरभ्य—"आरभेराढप्पः" इति सूत्रेणाङ्पूर्वस्य रभेः कर्मभावे आढप्प इत्यादेशो वा यक्लुक् च आढप्पइ । पक्षे आढवीअइ ॥ प्रा० ॥

आढव—आरंभ—पुं० । आ-रभ० भावे घञ् "आङो रभे रम्भढवौ" इति प्राकृतसूत्रेण रभे रम्भढव इत्यादेशो वा ॥ प्रा० ॥ आरंभणे, ॥ वाच० ॥ आरम्भइ आढवइ आरभइ ॥ प्रा० ॥

आढाइत्ता—आदृत्य—अव्य० । आ० दृ० ल्यप् । सम्मान्येत्यर्थे, ॥ वाच० ॥ "एयमट्ठं णो आढाइ" नाद्रियते तत्रार्थेऽनादरवान् भवतीति ॥ भ० ॥ स्था० ॥

आढायमाण—आद्रियमाण—त्रि० । आदरक्रियाविषयीक्रियमाणे, ॥ जी० ॥ "परं आढायमाणे" परमत्यर्थमाद्रियमाण इति अत्यर्थमादरवान् भवतीति ॥ आचा० ॥

आढिच—आदृत्य—त्रि० । आ० दृ० कर्मणि क्यप् । आदरणीये आदर्त्तव्ये, ॥ वाच० ॥

आढिय—आदृत—त्रि० आ० दृ० कर्त्तरि क्त "आदृतेर्ढिः" इति प्राकृतसूत्रेण ढिरादेशः ॥ प्रा० ॥ सादरे, कृतादरे, कर्मणि क्त । यस्यादरः कृतस्तस्मिन्, ॥ वाच० ॥ आदरक्रियाविषयीकृते, ॥ जी० ॥ सम्मानिते, पूजिते च ॥ वाच० ॥ आदरे, न० ॥ आव० ॥

आण—आण(न)—पुं० । उच्छ्वासक्रियायाम, ॥ प्रज्ञा० ॥ स च प्रज्ञापनायान्नैरयिकादिदण्डकक्रमेण दर्शितो यथा—

णेरइया णं भंते ! केवइकालस्स आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा ? गोयमा ! सततं संतयामेव आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा ॥ प्रज्ञा० ॥

( नेरइया णं भंते ! इत्यादि ) नैरयिका णामिति वाक्यालंकारे ( भदन्त? केवइकालस्स इति ) प्राकृतशैलया पंचम्यर्थे तृतीयार्थे षष्ठी, ततोऽयमर्थः कियतः कालात् कियता कालेन आणमंति ॥ आनंति ॥ "अन प्राणने इति धातुपाठात्" मकारो लाक्षणिक एवमन्यत्रापि यथायोगं परिभावनीयं ( पाणमंति ) प्राणंति वाशब्दौ समुच्चयार्थौ एतदेव पदद्वयं क्रमेणार्थतः स्पष्टयति ( ऊससंति वा नीससंति वा ) यदेवोक्तं-आनंति तदेवोक्तमुच्छ्वासन्ति तथा यदेवोक्तं प्राणंति तदेवोक्तं निःश्वसन्ति अथवा आनमंति प्राणमंति णम् प्रह्वत्वे शब्दे इत्यस्य द्रष्टव्यं धातूनामनेकार्थतया श्वसनार्थत्वस्याप्यविरोधः । अपरे व्याचक्षते । आनंति प्राणंतीत्यनेनान्तः स्फुरन्ति उच्छ्वासनिःश्वासक्रिया परिगृह्यते उच्छ्वसन्ति निःश्वसंतीत्यनेन तु बाह्याः एवं गौतमेन प्रश्ने कृते भगवानाह—गौतम ! सततमविरहितं अतिदुःखिता हि नैरयिका दुःखितानां च निरन्तरमुच्छ्वास

नोदढधर्मेत्यादि । तथा प्रमीयते ज्ञेयमेभिरिति प्रमाणानि द्रव्यादीनि यथानुयोगद्वारेषु गमाश्चतुर्विंशतिदंडकादयः कारणवशतो वा किंचिद्भिसहशाः सूत्रमार्गो यथा षट्जीवनिकायादाविति कृतं विस्तरणेति गाथार्थः ॥४७॥ टी० आव०। ननु या एवं विशेषणविशिष्टा सा वोढुमपि न शक्यते मन्दधीभिरास्तां तावद्व्यातुं ततश्च यदि किंचिन्नावबुध्यते तत्र का वार्त्ता इत्यत आह-

तत्थ य मइदुव्वलेण नव्विहायरिअविहरओ आवि। नोअगहणनेत्तणेण य नाणावरणोदएणं च ॥ ४८ ॥

तत्र तस्यामाज्ञायां चशब्दः प्रस्तुतप्रकरणानुकर्षणार्थः । किं जडतया चलत्वेन वा मतिदौर्बल्येन बुद्धिसम्यगर्थानवधारणेनेत्यर्थः । तथा तद्विधाचार्यविरहतो वाऽपि तत्तद्विधः सम्यगविपरीततत्वप्रतिपादनकुशलः आचार्यते असावित्याचार्यः । सूत्रार्थावगमार्थं मुमुक्षुभिरासेव्यत इत्यर्थः । तद्विधश्चासावाचार्यश्च २ तद्विरहतस्तदभावतश्च चशब्दो बोधे द्वितीयकारणसमुच्चयार्थः । अपिशब्दः क्वचिदुभयवस्तूपपत्तिसंभावनार्थः । तथा ज्ञेयगहनत्वेन च तत्र ज्ञायत इति ज्ञेयं धर्मास्तिकायादि तद्गहनत्वेन चशब्दोऽबोध एव तृतीयकारणे समुच्चयार्थः । तथा ज्ञानावरणोदयेन च तत्र ज्ञानावरणं प्रसिद्धं तदुदयेन तत्काले तद्विपाकेन च चशब्दश्चतुर्थकारणसमुच्चयार्थः । अत्राह ननु ज्ञानावरणोदयादेव मतिदौर्बल्यवेत्ता तद्विधाचार्यविरहो ज्ञेयगहनाप्रतिपत्तिश्च । ततश्च तदभिधानेन युक्तममीषामभिधानमिति। न तत्कार्यस्यैव संक्षेपविस्तरत उपाधिभेदेनाभिधानादिति गाथार्थः ॥ ४८ टी० आव० ॥

हेऊदाहरणासंभवे असइ सुट्ठु जं न बुज्झिज्जा। सव्वन्नु मयमवितहं तहावि तं चिंतए मइमं ॥ ४९ ॥ आव० ॥ मू० ॥

तत्र हिनोतीति गमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुः कारको व्यंजकश्च । उदाहरणं कल्पितं भेदं हेतुश्चोदाहरणं च हेतूदाहरणे तयोरसंभवः कंचन पदार्थं प्रति हेतूदाहरणासंभवः। तस्मिंश्च शब्दः पंचमषष्ठकारणसमुच्चयार्थः। सति विद्यमाने किं यद्वस्तुजातं न सुष्ठु बुध्येत नातीवावगच्छेत सर्वज्ञमतमवितथं तथापि तच्चिंतयेन्मतिमानिति । तत्र सर्वज्ञास्तीर्थकरास्तेषां मतं सर्वज्ञमतं वचनं किं वितथं अनृतं न वितथमवितथं सत्यमित्यर्थः । तथापि तद्बोधकारणे सत्यनवगच्छन्नपि तन्मतं वस्तु वा चिंतयेत्पर्यालोचयेन्मतिमान्बुद्धिमानिति गाथार्थः ॥ टी० ॥ आव० ॥

किमित्येतदेवमित्याह—

अणुवकयपराणुग्गह परायणा जम जिणा जगप्पवरा । जियरागदोसमोहा य नन्नहा वाइणो ते णं ॥ ५० ॥ आव० ॥

अनुपकृते परैरवर्जिते सति परानुग्रहपरायणाः धर्मोपदेशादिना परानुग्रहोद्युक्ता इति समासः । यद्यस्मात्कारणात्के जिनाः प्राग्निरूपितशब्दार्थाः । ते एव विशेष्यंते जगत्प्रवराः चराचरश्रेष्ठा इत्यर्थः । एवंविधा अपि कदाचिद्रागादिभावाद्वितथवादिनो भवंत्यत आह । जिता निरस्ता रागद्वेषमोहा यैस्ते तथाविधाः तत्राभिष्वंगलक्षणो रागः अप्रीतिलक्षणो द्वेषः अज्ञानलक्षणश्च मोहः चशब्दः एतद्भावगुणसमुच्चयार्थः । नान्यथावादिनस्तेनेति तेन कारणेन तेनान्यथावादिन इति । उक्तं च—

"रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतं । यस्यतु नैते दोषास्तस्याऽनृतकारणं किं स्यादिति" गाथार्थः ॥५०॥ ॥ टी० आव० ॥ दर्श० ॥ आज्ञाग्राहकेण च सदैव भवितव्यम् । तथा च पंचसूत्रे "सयाणागाहगे सिया सयाणा भावगे सिया । सयाणापरितंते सिया । आणा हि मोहविसपरमंतो जलं रोसाइ जलणस्स । कम्मवाहितिगिच्छा सत्थं कप्पपायवो सव्वफलस्स" ॥ पं० सू० ॥

सदाज्ञाग्राहकः स्यात् अध्ययनश्रवणाभ्यां आज्ञा आगम उच्यते । सदाज्ञाभावकः स्यात् अनुप्रेक्षाद्वारेण सदाज्ञापरतंत्रः स्यादनुष्ठानं प्रति किमेवमित्याह—आज्ञा हि मोहविषपरममंत्रं तदपनयनेन जलं द्वेषादिज्वलनस्य तद्विध्यापनेन कर्मव्याधिचिकित्साशास्त्रं तत्क्षयकारणत्वेन कल्पपादपः सर्वफलस्य तदवंध्यसाधकत्वेन ॥ पं० ॥ सू०॥

( आज्ञाग्राह्यार्थस्याज्ञयैव व्याख्यानमिति वक्खाणशब्दे ) ॥ स्था० ॥ आव० ॥ धर्म० ॥

( यत्राज्ञानं स्खलति स एव गच्छः । तथा च महानिशीथे ) "जत्थ य उसभादीणं तित्थयराणं सुरिंदमहियाणं । कम्मट्ठविप्पमुक्काणं आणं न खलिज्जइ स गच्छो" इति ॥ महा० ॥

( मोक्षार्थिनाऽऽज्ञयैव सर्वत्र यतितव्यम् तथाच पंचाशके )

मोक्खत्थिणा तओ इह आणा एव सव्वजत्तेण । सव्वत्थ वि जइयव्वं सम्मंतिकयं पसंगेण ॥ ५१ ॥

व्याख्या मोक्षार्थिना सिद्धकामेन ( तउत्ति ) यतः स्वमतिप्रवृत्तिर्भवफला ततो हेतोः इह प्रक्रमे आज्ञयैवाप्तोपदेशेनैव सर्वयत्नेन सर्वादरेण सर्वत्रापि समस्तेऽपि परलोकसाधनविधौ आस्तामेकत्र यतितव्यं चेष्टितव्यं सम्यग्भाव श्रुद्धया इति शब्दः परिसमाप्तौ कृतमलं प्रसंगेन प्रसंगापन्नभणितेनेति गाथार्थः ॥ पंचा० ॥

( आज्ञास्थितानामेव साधुत्वम् । तथा च पंचाशके तीर्थकराज्ञास्थितानेव स्वरूपत आह )—

ते पुण समिया गुत्ता पियदढधम्मा जिइंदियकसाया । गंभीरा धीमंता पण्णवणिज्जामहासत्ता ॥ ४ ॥

व्याख्या तीर्थकराज्ञास्थिताः साधवः पुनरिति वि शेषणार्थः । समिताः समितिपंचकेन गुप्ता गुप्तित्रयेण प्रियःप्रीतिस्थानं दृढश्च स्थिरो विपत्स्वप्यविमोचनाद्धर्मः श्रुतचारित्राऽऽत्मको येषां ते प्रियदृढधर्माः। जितेंद्रियकषायाः न्यक्कृतकरणकोपादिभावाः गंभीरा अलक्ष्यमाणहर्षदैन्यादिभावाः । गांभीर्यलक्षणं चेदं "यस्य प्रभावादाकाराः क्रोधहर्षभयादिषु । भावेषु नोपलभ्यंते तद् गांभीर्यमुदाहृतमिति" ॥

धीमंतो बुद्धिमंतः प्रज्ञापनीया सुखावबोध्या महासत्वा अवैक्लव्याध्यवसायवंतः । आपत्स्ववैक्लव्यकरमध्यवसानकरं सत्वमित्युक्तेरिति गाथार्थः ॥ "उस्सग्गववायाणं वियाणगा सेवगा जहासत्ति ॥ भावविसुद्धिसमेता आणारुतिणो य सम्मंति" ॥ ४१ ॥ व्याख्या उत्सर्गापवादयोः सामान्योक्तविशेषोक्तविध्योर्विज्ञायका विज्ञास्तथा सेवका अनुष्ठानरतास्तयोरेव यथाशक्तिशक्त्यनिगूहनेन भावविशु-

द्धिसमेताः परिणामविशुद्धितान्विता आज्ञारुचयः आगमबहुमानिनश्चशब्दः समुच्चये सम्यगविपरीततया न पुनः स्वाग्रहानुसारेण इतिशब्दः समाप्ताविति गाथार्थः ॥पंचा०॥

( आज्ञासारमेव सम्यगनुष्ठानं साधुधर्म्मस्तथा च पंचाशके "धम्मो पुण एसस्सिह संमाणुट्ठाणपालणारूवो । विहिपडिसेहजुयंतं आणासारं मुणेयव्वं ९ व्या० एष तावत्साधुरुक्तो धर्म्मः पुनर्दुर्गतिगमनधारणस्वभावः एतस्य साधोरिह साधुधर्मविचारे सम्यक् समीचीनं यदनुष्ठानं प्रत्युपेक्षादिक्रिया तस्य या अनुपालना सेवा सम्यग् वा यानुष्ठानपालना सैव रूपं स्वभावो यस्यासौ सम्यगनुष्ठानपालनारूपः सम्यगनुष्ठानमेव किमुच्यते । इत्याह-विधिप्रतिषेधयुक्तं धानादिहिंसादिष्वासेवा परिहारान्वितं तत्सम्यगनुष्ठानं आज्ञासारमाप्तवचनप्रधानं (मुणेयव्वंति) ज्ञेयमिति गाथार्थः।पंचा०।

अथ कस्मादाज्ञासारमेव सम्यगनुष्ठानं साधुधर्म्म इत्युक्तमित्याशंक्याह ।

अण्णो रुइणो चरणं आणाए च्चिय इमंति वयणाओ ।
एत्तो णाभोगम्मि वि पण्णवणिज्जो इमो होइ ॥१२॥

व्याख्या आज्ञारुचेराप्तोपदेशाभिलाषयुक्तस्य न त्वन्यस्य चरणं चारित्रं भवतीति गम्यं कुत एवं सिद्धमित्याह ( आणाए च्चियत्ति ) आज्ञयैवाप्तोपदेशेनैव नान्यथा इदं चरणं भवतीति वचनात् । आगमवाक्यात्तथाहि "आणाए च्चिय चरणं तब्भंगे जाण किं न भग्गंति । आणं च अइक्कंतो कस्स एसा कुणइ सेसं" । अथाज्ञारुचेरप्यनाभोगाचरणविघातो भविष्यतीत्याशंक्याह ( एत्तोत्ति ) इतोऽस्मादाज्ञारुचित्वात्प्रज्ञापनीयो भवतीति योगः अनाभोगेऽपि अनाभोगजनिते सदसत्प्रवृत्तावपीत्यर्थः । अनाभोगस्तस्य प्रायो न संभवतीति ख्यापनार्थोऽपिशब्दः । प्रज्ञापनीयः सुखसंबोध्योऽयमाज्ञारुचिर्भवति स्यात्ततश्चाज्ञारुचित्वात्प्रज्ञापनीयत्वं नास्य चरणं भवतीत्याज्ञासारं तदुक्तमिति गाथार्थः ॥ ॥ पंचा० ॥

( ४ ) परलोके चाज्ञाया एव प्रामाण्यम् तथा च पंचवस्तुके

आणाइत्थपमाणं विण्णेआ सव्वहाउ परलोए ॥
आराहणाए तीए धम्मो वज्झं तु ण निमित्तं ॥८४॥

व्याख्या आज्ञात्र प्रमाणं विज्ञेया सर्वथैव परलोके न त्वन्यत्किंचिदाराधनेन तस्याधर्मः आज्ञाबाह्यं पुनर्निमित्तमिति गाथार्थः ॥ ॥ पं० ॥ व० ॥

धर्मम्मूलं चाज्ञैव "आणाभंगा उ च्चिय धम्मो आणाए पडिबद्धो" दर्श०॥ आज्ञोल्लंघनेऽपि कथं धर्म्माभाव इत्याह" तित्थगराणामूलं नियमा धम्मस्सतीए वा पाए । किं धम्मो किमहम्मो मूढा नेयंति यारिंति" तीर्थकराज्ञैव सर्वविदुपदेश एव मूलं प्रथमारोहणरूपं नियमो निश्चयो न धर्मस्य । महामहीसहस्याविकलसकलसुखफलसंसाधकस्य तस्य तीर्थकरस्याज्ञाया विघाते विनाशे किं धर्म्मः शुभस्वभावः सुखसंदोहसंपादको वा किमथवा धर्म्मः पुण्याभावस्वभावः सदा देहिसंदोहदुःखदानदुर्ललितः ।मूढा मिथ्यात्वमहामोहमोहितांतःकरणा हिताहितविवेकविकला नेदं विचारयंति नेदं पर्यालोचयंति यदुत सर्वविदुपदेशोल्लंघनेन स्वबुध्या सुंदरमप्यनुष्ठानं विधीयमानं किं कर्माभावाय कर्मबंधाय भविष्यतीति गाथार्थः । तर्हि तत्त्वपर्यालोचनेऽपि किं वृत्तमित्याह"

अराहणाए तीए पुण्णं पावं विराहणाए उ ।
एयं धम्मरहस्सं विण्णेयं बुद्धिमंतेहिं ॥

आराधनया तस्या आज्ञायाः सर्वविदुपदेशस्य पुण्यं शुभं । सर्वज्ञाज्ञापक्षपातजनितशुभभावकुशलानुष्ठायिनो हि शुभभावादेवाशुभानुबंधिपुण्यबंधो भवत्येव पापमशुभवेद्यं विराधनया सर्वविदाज्ञोल्लंघनेन तुशब्दः पुनरर्थस्ततोऽयमर्थः स यद्यपि स्वाग्रहवशाद् गतानुगतप्रवाहदर्शनाद्बोधकुशलबुध्या धर्मादन्येषु प्रवर्तते तथापि जिनागमोक्तमार्गोल्लंघनेजनितं पापमेव भवति यतो "धर्मार्थी खलु शुद्धबुद्धिविभवः सर्वत्र कृत्येषु वा। प्राणित्राणविधावपीह सततं जैनेषु पूजादिषु ॥ स्वाभिप्रायवशो गतानुगतिकप्रायप्रवाही सदा । दत्ते धर्म्मधियापि पापमतुलं तीर्थाधिपाज्ञां विना"॥अन्यैरप्युक्तं । "जिणाणाए कुणं ताणं नूणं निव्वाणसाहणं ।सुदरंपि सुबुद्धीए सव्वं भवनिबंधणं" । एतद्धर्म्मरहस्यं धर्म्मसर्वस्वं विज्ञेयमवबोद्धव्यं बुद्धिमद्भिर्हिताहितविवेकाविकलैरिति गाथार्थः ॥ दर्श० ॥

( ५ ) ( आज्ञयाऽप्रवर्त्तमानस्याप्रवर्त्तमानत्वम् सर्वज्ञवचन एवाज्ञायाः सर्वहितकारकत्वं च यथा )

आणा परतंतो सो सा पुण सव्वण्णुवयउ चेव ।
एगंतहिया वेज्जगणा तेणं सव्वजीवाणं ॥ १६ ॥

व्याख्या आज्ञापरतंत्रः आप्तवचनाधीनः स प्रस्तुतसाधुः सा पुनराज्ञा पुनः सर्वज्ञवचनत्वादेव आप्तप्रणीतत्वादेव इह भावप्रत्ययो लुप्तो द्रष्टव्यः । एकांतहिता सर्वथोपकारिणी वैद्यकज्ञातेनायुर्वेदोदाहरणेन सर्वजीवानां विवक्षया समस्तांगिनां यथा हि वैद्यशास्त्रं नैकस्य कस्यचिदेवातुरस्य स्वस्थस्य वा वैद्यस्य तत्पुत्रस्य तदन्यस्य चोपकारकमेवमाज्ञापि न केषांचिदेवोपकारिणीति गाथार्थः ॥ पंचा० ॥ ॥ पं० व० ॥

( ६ ) ( आज्ञा वा पुनर्बन्धकातिरिक्तेभ्यो न प्रदेया तथा च पंचसूत्रे ) एसा आणा इह भगवओ समंतभद्दातिकोडिपरिसुद्धीए।अपुणबंधगाइगम्मा एअप्पिअत्तं खलु इत्थ लिंगंओचित्तपवित्तिविन्नेयं संवेगसाहगं निअमा न एसा अण्णेसिं देया लिंगयिवज्जयाओ तप्परिण्णातयणुगाहट्ठयाए अमछुंभोदगनासनाएणं एसा करुणात्ति वुच्चइ एगंतपरिसुद्धा अविराहणाफला तिलोगनाहा बहुमाणेणं निस्सेअससमाहिगत्ति ॥ पं० सू० ॥

एषा आज्ञेह भगवत उभयगर्भा अथवा सर्वैव पंचसूत्रोक्ता किंविशिष्टेत्याह समंतभद्रा सर्वतो निर्दोषा कथमित्याह त्रिकोटिपरिशुद्ध्या कषच्छेदतापपरिशुद्ध्या इयं च भागवती सदाज्ञा सर्वैव अपुनर्बंधकादिगम्या अपुनर्बंधकादयो ये सत्वाः उत्कृष्टकर्मस्थितिं तथा अपुनर्बंधकत्वेन ये क्षपयंति ते खलु अपुनर्बंधकाः । आदिशब्दात् मार्गाभिमुखमार्गपतितादयः परिगृह्यंते दृढप्रतिज्ञालोचकादिलिंगाः एतद्गम्येयं न संसाराभिनंदिगम्या तेषां यतो विषयप्रतिभासमात्रं ज्ञानमुक्तेति न तद्वेषत्वादिवेदकमित्युक्तं च "न यथावस्थितं शास्त्रं खलु को वेत्ति जातुचित् । ध्यामतादपि बिंबास्तु निर्मलः स्यात्स्वहेतुतः" । अपुनर्बंधकत्वादि-

लिंगमाह—एतत्प्रियत्वं अत्र लिंगं आज्ञाप्रियत्वमपुनर्बंधकादिलिंगं प्रियत्वमुपलक्षणं श्रवणाभ्यासादेः एतदप्यौचित्यप्रवृत्तिविज्ञेयं तदाराधनेन बहुमानात् औचित्यबाधया तु प्रवृत्तौ न तत्प्रियत्वं मोह एवासाविति एतत्प्रियत्वमेव विशेष्यते संवेगसाधकं नियमात् यस्य भागवती सदाज्ञा प्रिया तस्य नियमतः संवेग इति यत एवमतो नैषा अन्येभ्यो देया सैषा भागवती सदाज्ञा अन्येभ्योऽपुनर्बंधकादिव्यतिरिक्तेभ्यः संसाराभिनंदिभ्यो देया कथं ते ज्ञायंत इत्याह लिंगविपर्ययात्तत्परिज्ञाप्रक्रमादपुनर्बंधकादिलिंगविपर्ययात् । संज्ञा न द्वेषादिलक्षणा-तत्परिज्ञा संसाराभिनंदिपरिज्ञा । उक्तंच—

"क्षुद्रो लोभरतिर्दीनो मत्सरी भयवान् शठः ॥ अज्ञो भवाभिनंदी स्यान्निष्फलारंभसंगतः" ॥ किमिति न तेभ्यो देयेत्याह तदनुग्रहार्थं संसाराभिनंदिसत्वानुग्रहार्थं । उक्तंच—"अप्रशांतमनःशश्वत्सद्भावप्रतिपादनं॥ दोषायाभिनवोदीर्णे-शमनीयमिवाज्वरे" ॥ इहैव निदर्शनमाह आमकुंभोदकन्यासज्ञातेन । उक्तंच—

आमे घडे निहित्तं जहा जलं तं घडं विणासेइ ।
इयसिद्धंतरहस्सं अप्पाहारं विणासेइ ॥

एषा करुणोच्यते अयोगेभ्यः सदाज्ञाप्रदानरूपा किंविशिष्टेत्याह एकांतपरिशुद्धा सदा पापपरिहारेण अत एवेयमाविराधनाफला सम्यगालोचनेन न पुनर्ग्लानापथ्यप्रदानेन निबंधनकरुणावत्तदाभासेति इयं चैवंभूता त्रिलोकनाथा बहुमानेन हेतुना निश्रेयाःसमाधिकेति किमुक्तं भवति नानागमिकस्यैवं भवति किं तु परिणतागमिकस्य अस्य च भगवत्येवं बहुमानः एवं चेयं मोक्षसाधिकैव सानुबंधसुप्रवृत्तिभावेन ॥ पं० सू० ॥ आज्ञायां च प्रमादो न विधेयः ।

लद्धूण माणुसत्तं संजमसारं च दुल्लभं जीवा ।
आणाईपमाएणं दुग्गइभयवड्ढणा होंति ॥

लब्ध्वा प्राप्य मानुषत्वं तथा संयम एव सारः प्रधानं मोक्षांगं तं च दुर्लभं महावारिधिनिमग्नानर्घ्यरत्नमिव दुष्प्रापं लब्ध्वा ये जीवा भागवत्या आज्ञाया विधिप्रतिषेधरूपाया प्रमादेन कालं गमयंति । ते दुर्गतिभयावर्धना भवंति। आत्मनो देवादिदुर्गतिपरिभ्रमणजनितं भयं वर्द्धयंतीति भावः ॥ वृ० ॥

( ७ ) ( तीर्थकराज्ञाया अन्यथाकरणे दोषो यथा )

तित्थगराणं आणा सम्मं विहिणा उ होइ कायव्वा ।
तस्सण्णहा उ करणे मोहादतिसंकिलेसोत्ति ॥ ६ ॥
बंधो य संकिलेसो तत्तो ण सो वेति तिव्वतरगाओ ।
ईसि मलिणं ण वत्थं सुज्झइ नीलीरसादीहिं ॥ ७ ॥

व्याख्या तीर्थकराणां जिनानामाज्ञोपदेशः सम्यगभावतः विधिना तु वक्ष्यमाणविधानेनैव भवति स्यात् कर्त्तव्या विधिविपर्ययदोषमाह तस्या जिनाज्ञाया अन्यथा तु करणे अविधिविधाने पुनः कुत इत्याह मोहादज्ञानात् किमित्याह अतिसंक्लेशं आत्यंतिकं चित्तमालिन्यं भवति ॥पंचा० ॥

( ८ ) जिनाज्ञारहितस्य सुन्दरस्यापि स्वबुद्धिकल्पितस्य भवकारणत्वम यत उक्तं "जिणाणाए कुणंताणं नूणं निव्वाणकारणं । सुन्दरं पि सबुद्धीए सव्वं भवनिबंधणं ॥ दर्श० ॥

आज्ञाराधनविराधनयोर्दोषगुणौ यथा ।

जह चेव उ मोक्खफला आणा आराहिआ जिणिंदाणं ।
संसारदुक्खफलया तह चेव विराहिया होइ ॥१९॥

व्याख्या यथैवं तु मोक्षफला भवतीति योगः । आज्ञा आराधिता अखंडिता सती जिनेंद्राणां संबंधिनीति संसारदुःखफलदा तथैव च विरोधिता खंडिता भवतीति गाथार्थः ॥ पं० व० ॥

( आज्ञाराधकानाराधकौ तयोर्दोषदोषौ वासार्हमवासार्हगच्छमधिकृत्योक्तम महानिशीथे )

से भयवं ? किमेस वासेज्जा ? गोयमा ! अत्थेगे जेणं वासेज्जा अत्थेगे जिणं नो वासेज्जा । से भयवं ? केणं अट्ठेणं एवं वुच्चइ ? । जहा णं गोयमा ! अत्थेगे जेणं वासेज्जा अत्थेगे जेणं नो वासेज्जा गोयमा ! अत्थेगे जेणं आणापडिए । अत्थेगे जेणं आणाविराहगे । जेणं अणाठिए । सेणं सम्मदंसणनाणचरित्ताराहगे जेणं सम्मदंसणनाणचरित्ताराहगे सेणं गोयमा ! अच्चंतविउसुपवरकडुउज्जए। मोक्खमग्गे जे य उणं आणाविराहगे से णं अणंताणुबंधी कोहेमणं अणंताणुबंधी माणे से णं अणंताणुवंधी कइयावसेणं अणंताणुवंधी लोभे । जेणं अणंताणुवंधी कोहाइकसायचउक्के सेणं घणरागदोसमोहमिच्छत्तपुंजे जेणं घणरागदोसमोहमिच्छत्तपुंजे सेणं अणुत्तरघोरसंसारसमुद्दे । जेणं अणुत्तरघोरसंसारसमुद्दे सेणं पुणो २ जंमे पुणो २ जरा पुणो २ मच्चू । जेणं पुणो २ जम्मजरामरणे सेणं पुणो २ बहुभवंतरपरावत्ते । सेणं पुणो २चुलसीइजोणिलक्खमाहिंडणं। जेणं पुणो २ चुलसीइलक्खजोणिमाहिंडणं सेणं पुणो पुणो सुदूसहे घोरतिमिसंधयारे रुहिरविलिव्विले वसवसपूयवंतपित्तसिंभचिक्खिल्लदुग्गंधा सुइविलीणजंघालकेयाकिट्ठिसक्खरनपडिपुन्ने ।अणिट्ठउव्वियणिज्जअइघोरचंडमहरोद्ददुक्खदारुणगब्भपरंपरापवेसो। जेणं पुणो २दारुणो गब्भपरम्परापवेसेणं दुब्भसेणं कसेणं रोगाणं केसेयं सेयं सेणं सोगसंतावुव्वेगे सेणं अण्णे त्रुत्ती जेणं अण्णे त्रुत्ती सेणं जहट्ठिमणोरहाणं असंपत्ती । सेणं नोवपंचप्पयारअणंतरायकंमोदए जत्थ णं पंचोपयारअंतराकंमोदए तत्थ णं सव्वदुक्खाणं । अग्गणीभूए पढमे ताव दरिद्दे जेणं दारिद्दे जेणं दरिद्देणं अयसभक्खाणं अकित्तीकलंकरासीणं मेलावगामे । जेणं भयसभक्खाणं अकित्तीकलंकरासीणं मेलावगामे सेणं सयलजणलज्जणिज्जनिंदणिज्जे गरहणिज्जे । खिंसणिज्जे दुगुंछणिज्जे सव्वपरिभूए जीविए जेणं सव्वपरिभूए जीवियासेणं सम्मदंसणनाणचारित्ताइगुणेहिं सुदूरयरेणं विप्पमुक्के चेव मणुयजंमे । अन्नहा वा सव्वपरिभूए चेव णं भवेज्जा ॥ जेणं सम्मदंसणनाणचारित्ताइगुणेहिं सुदूरयरेणं विप्पमुक्के चेव णिभवो सेणं अणिरुद्धा सवचारित्ते चेव जेणं अणिरुद्धा सव्वचारित्ते । चेव सेणं बहलणत्तणं पावकम्मायणे

जेणेव इह लघूलपावगं कम्मागमे सेणं बंधी सेणं वंदी सेणं गुत्ती सेणं चारगे सेणं सव्वमकल्लाणममंगलजाले । दुव्विमोक्खे कम्मक्खडवणबद्धपुट्ठनिग्गइयकंमगंठी जेणं कक्खडवणबद्धं पुट्ठनिग्गइयकंमगंठी सेणं एगेंदियत्ताए बेइंदियत्ताए तेइंदियत्ताए चउरिंदियत्ताए पंचिंदियत्ताए नारयतिरिच्छकुमाणुसेसुं अणेगविहं सारीरमाणसं दुक्खमणुभावमाणं वेइयव्वे । एए णं अट्ठेणं गोयमा ! एवं वुच्चइ । जहा अत्थेगे जेणं वासेज्जा से भयवं किमित्थ तेणं उच्छाइए केइ गच्छे भवेज्जा गोयमा ! जेणं से आणाविराहगे गच्छे भवेज्जा सेणं निच्छयओ चेव मिच्छत्तेणं उच्छाइगच्छे भवेज्जा से भयवं ? कयराओ णं सा आणाजीविए गच्छे आराहगे भवेज्जा ? गो० ! संखाइएहिं ठाणंतरेहिं गच्छे से णं आणापन्नवीए ठिए गच्छे आराहगे भवेज्जा । से भयवं ? किं तेसिं संखातीताणं गच्छमेरा आणंतराणं । अत्थि केई अन्नयरे थाणंतरे णं जेणं उस्सग्गेणं वा अववाएणं वा कहं वि पमायदोसेणं असई अइक्कमेज्जा अइक्कंतेण वा आराहगो भवेज्जा ? । गोयमा ! णिच्छयओ नत्थि । से भयवं ? केणं अट्ठेणं एवं वुच्चइ जहाणं निच्छयओ नत्थि । गो० ! तित्थयरेणं ताव तित्थय रे तित्थं पुण चाउवन्ने समणसंघे से णं गच्छे सुपइट्ठिए गच्छेसु पुणं सम्मदंसणनाणचरित्तपइट्ठिए ते य सम्मदंसणनाणचारित्ते परमपुज्जेणं परपुज्जयरे । परमसरन्नाणं सरन्ने परमसच्चाणं सच्चयरे ताइं च जत्थ णं गच्छे अन्नयरे ठाणे केई विराहिज्जति सेणं गच्छे सम्मग्गपणासए उम्मग्गदेसए जेणं गच्छे सम्मग्गणासगे उम्मग्गदेसए सेणं निच्छओ चेव अणाराहगे एएणं अट्ठेणं गोयमा ! एवं वुच्चइ । जहाणं संखादीयाणं गच्छमेरा ठाणंतराणं जेणं गच्छे एगण्णयरट्ठाणं अइक्कमेज्जा सेणं एगंतेणं चेव अणाराहगे ॥ महा० ॥

( आज्ञाराधनविराधनयोः फलं सुयणाणशब्दे ) नं० ॥

( भगवदाज्ञाराधनकृतसेवादोषं भगवदाज्ञाखंडनकृतमेव दोषं च इत्याहाकम्मशब्दे व्याख्यास्यते ) ॥ पिं० ॥

एगंते मिच्छत्तं जिणाण आणा य होइ णेगंता ।
एगं पि असद्दहाउ मिच्छद्दिट्ठी जमालिव्व ॥ २ ॥ तीर्थ० ॥

( सावद्याचार्य्यकथां सावज्जायरियशब्दे )

तित्थयरसमो सूरी दुज्जयकम्मट्ठमल्लपडिमल्ले । आणं अइक्कमंते ते कापुरिसेन सप्पुरिसे ॥ भट्ठायारो सूरी भट्ठायाराणुविक्खओ सूरी । उम्मग्गट्ठियो सूरी तिण्णि वि मग्गं पणासंति ॥

उम्मग्गठिए सूरिंमि निच्छयं भव्वसत्तसंघाए । जम्हा तं मग्गमणुस्सरंति तम्हा ण तं जुत्तं ॥ एक्कं पि जो दुहत्तं सत्तं पडिबोहिउं ठवे मग्गे । ससुरासुरंमि वि जगे तेण हं घोसियं आणाघोसं ॥ भूए अत्थि भविस्संति केइ जगवंदणीयकमजुयले । जेसिं परहियकरणे कवद्धलक्खाण वोलिही कालं ॥ भूए अणागए कालेणं के इई होहिंति गोयमा ! सूरी । णामग्गहणेण वि जेसिं होज्ज नियमेण पच्छित्तं ॥ एयं गच्छववत्थं दुप्पसहाणंतरं तु जो खंडे । तं गोयमा ! जाण गणिं निच्छयओ अणंतसंसारी ॥ जं सयलजीवजगमंगलेक्ककल्लाणपरमकल्लाणं । सिद्धिपए वा वोच्छिन्ने पच्छित्तं होइ तं गणिणो ॥ तम्हा गणिणसमसत्तुमित्तपक्खेण परहियरएणं । कल्लाणकंखुणा अप्पणो वि य आणा ण लंघेया ॥ एवं मेरा ण लंघयव्वत्ति ॥ एयं गच्छववत्तं लंघित्तूण गारवेहिं पडिबद्धे । संखाईए गणिणो अज्ज वि बोहिं न पावंति ॥ ण लभेहिंति य अन्ने अणंतमुहुत्तो वि परिभमं तित्थं । चउगइभवसंसारो चेट्ठिज्ज चिरसुदुक्खत्ते ॥ महा० ।

( जिनस्याचार्य्यादेश्चाज्ञाया अतिक्रमे आराधकानाराधकत्वं दृष्टान्तश्च महानिशीथे यथा ) से भयवं जइणं गणिणो अच्चंतविसुद्धपरिणामस्स वि कइ दुस्सीले सच्छंदत्ताए जइ गारवत्ताएइ वा जायाइमयत्ताए वा आणं अइक्कमेज्जा सेणं किमाराहगे भवेज्जा ? गोयमा ! जेणं गुरुसमसत्तुमित्तपक्खो गुरुणेसु ठिए सयं सुत्ताणुसारेणं चेव विसुद्धासए विहरेज्जा तस्साणमइक्कंतेहिं णवणउएहिं चउहिं सएहिं साहूणं जहा तहा चेव अणाराहगे भवेज्जा । से भयवं ! कयरे णं ते पंच सएक्कविवज्जिए साहूणं जेहिं च णं तारिसगणोववेयस्स महाणुभागस्स गुरुणो आणं अइक्कमिय णाराहियं गोयमा ! णं इमाए चेव उसभं चउव्वीसगाए अतीताए तेवीसइमाए चउवीसगाए जाव णं परिनिव्वुडे चउवीसं इमे अरहा ताव णं अइक्कंतेणं केवइणं कालेणं गुणनिप्फन्ने कम्मसेलमुसुरणे महायसे महासत्ते महाणुभागे सुग्गहियनामधिज्जे वइरे णाम गच्छाहिवई भूए तस्स णं पंच सयं गच्छं निग्गंथाइं विणा निग्गंथीहिं समं दो सहस्से अहेसि ता गोयमा ! ताओ निग्गंथीओ अच्चंतपरलोगभीरुयाओ सुविसुद्धनिम्मलंतकरणाओ खंताओ दंताओ मुत्ताओ जिइंदियाओ अच्चंतभणिरीओ नियसरीरस्सा वि य छक्कायवच्छलाओ जहोवइट्ठअच्चंतघोरवीरतवचरणसोसियसरीराओ जहा णं तित्थयरेणं पन्नवियं तहा चेव अदीणमणसाओ मायामयमहंकारममकारइतिहासखेडकंदप्पणादवायविप्पमुक्काओ तस्सायरियस्स सगासामन्नमणुचरंति । ते य साहुणा सव्वे वि गोयमा ! न तारिसे मणागं अहन्नया गोयमा ! ते साहुणो तं आयरियं भणंति जहा णं जइ भणियं च तुमं आणावेहित्ताणं अम्हेहिं तित्थयत्तं करिया चंदप्पहसामियं वंदिया धम्मचक्कं गंतूण मा गच्छामो ताहे गोयमा ! अदीणमणसा अणुत्तालगंभीरमहुराए भारतीए भणियं तेणायरिएणं जहा इच्छायारेणं न कप्पइ तित्थयत्तं गंतुं सुविहियाणं ता जाव णं वोलेइ जत्तं ताव णं अहं तुम्हे चंदप्पहं वंदावेहामि अन्नं च जत्ताए गएहिं असंजमे पडिज्जइ एएणं कारणेणं तित्थयत्ता पडिसेहिज्जइ । तओ तेहिं भणियं । जहा भयवं ! केरिसो णं तित्थयत्ताए गच्छमाणाणं असंजमो भवइ सो पुण इच्छा-

यरेणं विइज्जधारपरिसंडलावेज्जा बहुजणेणं वा उलगो भणिहिसि ताहे गोयमा ! तेणं तेणं आयरिएणं जहा णं मम वइक्कमिय निच्छयओ एए गच्छिहिंति तेणं तुमए समयं च उत्तरेहिं चयंति अह अन्नया सुवहुं मणासा संधीरेउ णं चेव भणियं तेणं आयरिएणं जहा णं तुब्भे किंचि वि सुत्तत्थं वियाणह णाणियाणं तारिस तित्थयत्ताए गच्छमाणाणं असंजमं भवइ । तारिसं सयमेव वा विजाणेइ किंचि एत्थ बहुविलंविएणं अन्नं च चिंदियं तुम्हेहिं पि संसारसहावजीवाइ पयत्थं तत्थं वा अहणं या बहु उवाएहिं णं विणिवारितस्स वि तस्सायरियस्स मन्नए चेव । तं साहुणो णं कुट्ठेणं कयं तेणं परिए तित्थयत्ताए तेसिं च गच्छमाणाणं कत्थइ णेसणं कत्थइ हरियकायसंघट्टणं कत्थइ बीयक्कमणं कत्थइ पिविलियादीणं तसाणं संघट्टएणं परितावणोद्दवणाइं संभवं कत्थइ वि इट्ठपडिक्कमणं कत्थइ ण कीरिए चेव वाउक्का नियं सज्झायं कत्थइ ण संपडिलेहेज्जा मत्तभंडोवगरणस्स विहीए उभयकालं पेहपक्खेज्जा ण पडिलेहणपडणं किं वहुणा गोयमा ! कित्तियं भणिहियं । अट्ठारसण्हं सीलंगसहस्साणं सत्तरस्स वि सहस्साणं संजमस्स दुवालसविहस्स ण मब्भितर वाहिरस्स तवस्स जाव णं खंताइ अहिंसालक्खणस्सेवय दसविहसहस्साणगारधम्मस्स जत्थेक्केक्कपयं चेव सुबहुएणं पि कालेणं थिरपडिविएणं दुवालसंगमहासुयक्खंधेणं बहुभंगसयं संघत्तणाए दुक्खनिरइयारं परिवालिऊणं । जे एयं च सव्वं जहा भणियं निरइयारमणुट्ठयंति एवं संसारिऊण चिंतियं तेण गच्छाहिवइणा जहा णं मे विप्परुक्खेणं ते दुट्ठसीसे मज्झं अणाभोगमविणएणं सुबहुं असंजमं काहेंति । तं च सव्वमपच्छंतियं होही।जओ णं हं तेसिं गुरु ताहं तेसिं पट्ठिए गंतूणं पाडिजागरामि जहा लमित्थ-एए पायच्छित्तेणं णो संबज्जेज्ज त्ति वियप्पिऊणं गओ सो आयरिओ तेसिं पट्ठीए जाव ण दिट्ठे तेणं असमंजसेणं गच्छमाणं ताहे गोयमा ! सुमहुरमंजुलालावेणं भणियं तेणं गच्छाहिवइणा जह भो भो उत्तमकुलनिम्मलवंससमिद्धसणा ! अणुगयसुग्गइमहासत्ता!साहूउपडिवन्नाणं पंचमहव्वयाहिया! तं णूणं महाभागाणं साहूणं साहूणीणं सत्तावीसं सहस्साइं थंडिलाणं सव्वदंसीहिं पन्नत्ताइं ते य सुउवउत्तेहिं विसोहिज्जंति ण उ णं अणोवउत्तेहिं ता किमेयं सुन्नासुन्नीए अणोवउत्तेहिं,गम्मइ इच्छायारेणं उवओगं देहिअत्थंइणमो सुत्तत्थं । किं तुम्हाणं विसमरिओ भवेज्जा जं सारं सव्वपरमतत्ताणं जहा एगो वेदिये पाणी एगं सयमेव । हत्थेण वा पाएण वा अन्नयरेण वा सलागाइअहिगरणभूओ चरणाजाएणं जेणं केइं संघट्टावेज्जा पासघाट्टियं वा अपरं समणुजाणेज्जा से णं तक्कम्मजया उदिण्णं भवेज्जा तया जहा उच्छुखंडाइं जं ते तहा निपिडिज्जमाणे छम्मासेणं खवेज्जा एवं गाढं दुवालसेहिं संवच्छरेहिं तं कम्मं वेदेज्जा एवं अगाढपरियावणे वाससहस्सं गाढपरियावणे दसवाससहस्सं एवं आगाढकिलावणे वासलक्खं गाढकिलावणे दसवासलक्खाइं उद्दवणे वासकोडी एवं तेइंदियाइसुं पि णेयं ता एवं च वियाणमाणो मा तुम्हे मुज्झहत्ति । एवं च गोयमा सुत्ताणुसारेणं सारयं तस्साव तस्सायरियस्स ते महापावकम्मे गमगमहल्लफलेणं हल्लोहलीभूएणं तं आयरियाणं । असेसपावकम्मट्ठदुक्खविमोयगे णो बहुमन्नंति ताहे गोयमा ! मुणियं तेणायरिएणं जहा निच्छयओ उम्मग्गपट्ठिए सव्वपगारेहिं चेव इमे पावमई दुट्ठसीसे ता किमट्ठमहमिमेसिं पट्ठीए लल्लीवागरणं करेमाणो णुगच्छमाणो य सुक्खाए गयजलाए णदीए उवुज्झए गच्छइ स तुवारेहिं । अहयं तु ता वायहियमेवाणुचिट्ठेमो किमज्ज पक्खएणं सुगूहं तेणावि पुत्तपब्भरेणं घेयमवि किं वि परित्ताणं भवेज्जा अदरक्कमेणं चेव आगजुत्त-तवसंजमाणुट्ठाणेणं भवोयही तरेयव्वो एस उण तित्थयराएसो जहा–

"अप्पहियं कायव्वं जइ सक्कायहियं च पयरेज्जा ।
अत्तहियपरहियाणं अत्तट्ठियं चेव कायव्वं" अन्नं च "जइ एते तवसंजमकिरियं अणुपालियं होंति । तओ एएसिं ववसेयं होइ जेहिहि ण करेहिंति"। तओ एएसिं चेव दुग्गइगमणमणुत्तारं हविज्जा । नवरं तहा वि मम गच्छो समप्पिओ गच्छाहिवई । अह यं भणामि । अन्नं च जे तित्थयरेहिं भगवंतेहिं छत्तीसं आयरियगुणे समाइट्ठे । तेसिं तु अहयं एक्कमवि णाइक्कमामि जइ वि पाणोवरमं भवेज्जा जं वागमे इहपरलोगविरुद्धं तं णायरामि ण कारयामि न कज्जमाणं समणुजाणामि । तमेरिसगुणजुतस्सावि जइ भणियं ण करेंति ताहमिमेसिं वेसग्गहणं उद्दालेमि एवं समए पन्नत्ती जहा जे केई साहु साहुणी वा वायामित्ते णो वि असंजममणुचिट्ठेज्जा। सेणं सारेज्जा सेणं सारिज्जंते वा वारिज्जंते वा चोइज्जंते वा पडिचोडिज्जंते।जएणं तं वयणमवमन्निय अलसाइमाणे वाअभिनिविट्ठेइ वा तहत्ति पडिवज्ज इत्थं पउंजित्ताणं तत्थ आणापडिक्कमेज्जा सेणं तस्स वेसग्गहणं उद्दालेज्जा। एवं तु आगमुत्तणाएणं गोयमा ! जाव तेणायरिए एगस्स सेहस्स वेसग्गहणं उद्दालियं ताव णं अवसेसे विदिसो दिसिं पणट्ठे ताहे गोयमा ! सो आयरिओ । सणियं २ तेसिं पट्ठिए जाउमारद्धो णो णं तुरियं तुरियं से भयवं किमट्ठे तुरियं २ णो पयाइ गोयमा ! खाराए भूमीए जा महुरं संकमेज्जा महुराए खारं किण्हाए पीयं पीयाओ किण्हं जलाउ थलं थलाओ जलं संकमेज्जा । तेणं विहीए पाए पमज्जिसंकामियव्वं । णो पमज्जेज्जा तओ दुवालससंवच्छरियपच्छित्तं भवेज्जा एएणमट्ठेणं । गोयमा ! सो आयरिओ ण तुरियं २ गच्छं अहमयासुयाउत्तविहीए थंडिलजलसंकमणं करेमाणस्स णं गोयमा ! तस्सायरियस्स आगओ बहुवासरखुहापरिगयसरीरे वियडदाढविकरालयं तं भासुरेपलयकालमिथथोररूवो केसरी । भणियं च तेण महाणुभागेणं गच्छाहिवइणा जहा जेयं दुग्गं गच्छेज्जा इमस्स णावरं दुग्गं गच्छमाणेणं असंजमं ताव सरीरवोच्छेयं ण असंजमपवत्तणं त्ति चिंतिऊण विहीए उवाट्ठियस्स सहस्सा जमुद्दालियं वेसगहणं तं दाऊण ठिओ णिप्पडिकम्मपायपोवगमणाणं से एण सोवि सोहा तहेव महभया अच्चंतविसुद्धंतकरणो पंचमंगलायरे सुहज्झवसायत्ताए दुविय गोयमवाईए तेण सीहेणं अंतगडे केवली जाए । अट्ठप्पयारमलकलंकविप्पमुक्के सिद्धे य ते पुण गोयमा ! एकूणे पंचसए साहूणं तक्कम्मदोसेणं जं दुक्खमणुभवमाणे चिट्ठंति जं वाणुभूयं जं वाणुभविहिंति अणंतसंसारसागरं परिभमंते तं कालं केवलिणं अणंतेणं भणिउं समत्थो । एते गोयमा ! एगूणे पंचसए साहूणं जहिं च णं तारिसगुणोववेयस्स णं महाणुभागस्स गुरुणो आणं अइक्कमिय णो आराहियं अणंत-

संसारियं जाएसे भयवं किं तित्थयरसंतियं आणं णाइक्कमेज्जा-उयाहुआयरियंसंतियं गोयमा ! चउव्विहा आयारिया भवंति तंजहा-नामायरिया ठवणायरिया दव्वायरिया भावायरिया तत्थ णं जे ते भावायरिया ते तित्थंयरसमा चेव दट्ठव्वा तेसिं संतियाणं णाइक्कमेज्जा । महा० ॥

( आज्ञाभङ्गे दंडो निशीथचूर्णौ यथा )

तित्थकरआणा य एसा अगुप्पालियव्वात्ति जहा रण्णो अप्पणो रज्जे जं माणं प्रतिष्ठापितं जा ततो माणतो अतिरेगभूयाणं वा करेति सो अवराही डंडिज्जत्ति एवं जो तित्थकराणं आणं कोवेत्ति सो दीहसंसारी ॥ नि०चू० ॥

आज्ञाभङ्गे च दण्डश्चतुर्गुरुकम्प्रायश्चित्तम् ॥ वृ० ॥ "तंमि यआणाभंगे चउगुरुयं पच्छित्तंति" नि० चू० ॥

१० (तथाच बृहत्कल्पे प्रलम्बग्रहणमधिकृत्य) भगवता प्रतिषिद्धं यत्प्रलंबं न कल्पते तद्ग्रहणं कुर्वता भगवतामाज्ञाभंगः कृतो भवति तस्मिंश्चाज्ञाभंगे चतुर्गुरुकाः। अत्र परः प्राह

अवराहे लहुगतरो आणाभंगंमि गुरुतरो किह णु ।
आणाए च्चिय चरणं तब्भंगे किं न भंगं तु ॥

अपराधे चारित्रातिचारे लघुतरो दंडो भवद्भिः पूर्वं भणितः तथाहि अचित्ते प्रलंबे मासलघु इह पुनराज्ञाभंगे चतुर्गुरुकमिति गुरुतरो दंडः कथं कस्मात् तुरिति वितर्को अपि च अपराधे जीवोपघातो दृश्यते तेन तत्र गुरुतरो दंडो युक्तियुक्तः आज्ञायां पुनर्नास्ति जीवोपघात इति लघुतर एवात्र भणितुमुचित इति आचार्यः आह । आज्ञायामेव भगवत्यां चरणं चारित्रं व्यवस्थितं अतस्तद्भंगे तस्या आज्ञाया भंगे किं तन्मूले उत्तरगुणादिकं वस्तु न भग्नं अपि तु सर्वमपि भग्नमिति अनाज्ञायां गुरुतरो दंड उच्यते अस्यैवाचार्यस्य प्रसाधनार्थं दृष्टांतमाह ॥

सोऊण य घोसणयं अपरिहरंता विणासं जह पत्ता ।
एवं अपरिहरंता हियसव्वस्साउ संसारे ॥

राज्ञा कारितां घोषणां श्रुत्वा घोषणयां च निवारितमर्थमपरिहरंतो यथा द्रव्यापहारलक्षणं विनाशं प्राप्ता एवं तीर्थकरनिषिद्धं प्रलंबग्रहणमपरिहरंतो हृतसर्वस्वा अपहृतसंयमरूपसर्वसाराः संसारे दुःखमवाप्नुवंति एषा भद्रबाहुस्वामिविरचिता गाथा ॥

अथास्या एवं भाष्यकारो व्याख्यानं करोति ॥

छप्पुरिसा मज्झपुरे जो आसादेज्जा ते आजातो तं दंडेमि अकखंडे सुणे तु पुरओ जणवयाय आगामिय परिहरंता निद्दोसा सेसगा न निद्दोसा । जिण आणागमचारी अ दोस इयरे भवे दंडो कुह केइ नरवई सो बहिं पुरिसेहिं अन्नतरे कज्जे तेसितो इमेणत्थेण घोसणं करेइ इमे छप्पुरिसा । मज्झपुरिअप्पणो इच्छाए विहरमाणा महाजणेणं अदिट्ठपुव्वा अणुवलद्धविभवने वत्था अच्छंति जो ते छिवइ वा पीडइ वा मारेइ वा तस्स उग्गं दंडं करेमि एअ घोसणत्थं सोऊण ते पउरजणवयायदंडं भीता ते पुरिसे पयत्तेण वन्नरूवाईहिं विधेहिं आगमिऊण पीडापरिहारकयबुद्धी तेसिं छण्णं पुरिसाणं पीडं परिहरंति ते निद्दोसा।जे पुण अणायारमंता न परिहरंति ओसव्वस्सावहारदंडेण दंडिया एस दिट्ठंतो अयमत्थो वणओ रायत्थाणीया तित्थयरा पुरत्थाणीओ लोगो छप्परिसत्थाणीया छक्काया घोसणत्थाणीया छक्कायरूवणपरूवणपरा छज्जीवणियादओ आगमा विवणाइत्थाणी या संघट्टणादी पउरजणवयत्थाणीया साहू दंडत्थाणीओ संसारो तत्थ जे पयत्थेण छण्हं कायाणं सरूवं रक्खणे वायं च.आगमेऊण जहुत्तविहीए पीडं परिहरंति ते कम्मबंधदंडेणं न दंडिज्जंति इयरे पुण संसारे पुणो २ सारीरमाणसेहिं दुक्खसयसहस्सेहिं दंडिज्जंतित्ति ॥

अथाक्षरगमनिका। षट्पुरुषा मम पुरे वर्त्तते यस्तानजानन्नपि आशातयेत तमहं दंडयाम्यकांडे अकाले शृण्वंतु एतत्पौराः पुरवासिनो जनपदाश्च ग्रामवासिनो लोका इति राज्ञा कारितां घोसणां श्रुत्वा तान् पुरूषानागम्योपलक्ष्य परिहरंतः संतो र्निदोषाः शेषाः पुनर्ये पीडां न परिहरंति ते न र्निदोषा इति दंडिताः । एवमत्रापि जिनाज्ञया यः षट्कायानामागमः परिज्ञानं तत्पूर्वकचारिणः संयमाध्वगामिनः संतोऽदोषाः इतरेषां भवे संसारे शारीरमानसिकदुःखलक्षणो दंडः । गतमाज्ञाद्वारं ॥ वृ० ॥ नि० चू० ॥

( अपराधपदमधिकृत्यापि बृहत्कल्पे उक्तम् )

अपराधपदे वर्त्तमानस्तीर्थकृतामाज्ञाभङ्गं करोति तत्र चतुर्गुरुरिति ॥ वृ० ॥

अत्र नोदकः प्राह ।

अवराहे लहु गयरो किं लहु आणाए गुरुतरो दंडो ।
आणाए चिय चरणं तब्भंगे किं न भग्गं तु ॥

जघन्यके अपरिगृहीते वा तिष्ठति प्राजापत्यपरिगृहीतं जघन्यमसंनिहितमदृष्टं प्रतिसेवते उभयत्रापि चतुर्लघु एवं स्थानतः प्रतिसेवनेन यश्चापराधे लघुकतरो दंड उक्त आज्ञाभंगे चतुर्गुरुकामित्यतः किमिति परिप्रश्ने तुरिति वितर्के हुरिति गुर्वामंत्रणे किमेवं भगवदाज्ञायां भग्नायां गुरुतरो दंडो दीयते । सूरिराह । आज्ञयैव चरणं व्यवस्थितं तस्य भंगे कृते सति किं न भग्नं चरणस्य सर्वमपि भग्नमेवेति भावः । अपि च लौकिका अप्याज्ञाभंगे गुरुतरं दंडंप्रवर्त्तयंति तथा चात्र पूर्वोद्दिष्टं मौर्यदृष्टांतमाह ।

भग्गमदाणमडंते आणवट्ठाणवं अंबच्छेत्तु वंसवती ।
गविसाणपत्तचारिसीए पुरिसवइबालडहणं च ॥

पाडलिपुत्ते नयरे चंदगुत्तो राया सो य मोरपोसणपुत्तोत्ति जे खत्तिया अभिजाणंति ते तस्स आणं परिभवंति । चाणक्कस्स चिंता जाया आणाहीणे केरिसो राया तम्हा जम्हा एयस्स आणाभिक्खा भवइ तहा करेमित्ति तस्स य चाणक्कस्स कप्पडियत्ते भिक्खं अडंतस्स एगंमि गामे भंत्तं न लद्धं तत्थ य गामे वहुअं वायं सा य अत्थि तेउं तस्स गामस्स पडिनिविट्ठेणं आणाहवणानिमित्तं इमेरिसा लोहो पेसओ अत्तोनि छित्वा वंशानां वृत्तिः शीघ्रं कार्यते ताहिं आगामे अगेहिं दुल्लिहियंति काउं वंसे छेत्तुं अंबाण वई कया गवेसावियं चाणक्केणक्कयं तओ तत्थागंत्तूण उवालद्धा से गामयगा एते वंसगा रोहगादिसु उवउज्जंति की सभे छिन्नात्ति दंसियं लेहवीरियं अन्नं संदिट्ठं अन्नं चेव करेहात्ति तओ पुरिसेहिं अधोसिरेहिं वयं काउं सो गामो सव्वो दड्ढो । अथ गाथाक्षरगमनिका । चाणक्यस्य भिक्षामटतः क्वापि ग्रामे भक्तस्यादानंभिक्षा न लब्धेत्यर्थः। तत आज्ञास्थापनानिमित्तमयं लेखः प्रे-

रितःअंतत्वे तु वंसवइत्ति ग्रामान् छित्वा वंशानां वृत्तिः कर्त्तव्या ततो गवेषणे कृते ग्रामेण च पथि दर्शिते अन्यदादिष्टं मया अन्यदेव च भवद्भिः कृतमित्युपालभ्य तैः पुरुषैः वृत्तिं कारयित्वा सबालवृद्धस्य ग्रामस्य दहनं कृतं एष दृष्टांतः। अर्थोपनयस्त्वेवं "एगमरणं तु नाए आणाइ आरुत्त अणंताइं।अवराहरक्खणट्ठा ते णाणाउत्तरे बलिया" लोके आज्ञाया अतिचारे अतिक्रमे एवमेव मरणमवाप्यते लोकोत्तरे पुनराज्ञाया अतिचारे अनंतानि जन्ममरणानि प्राप्यंते तेन कारणेन अपराधरक्षणार्थं लोकोत्तरे आज्ञा बलीयसी ॥ वृ०॥ आज्ञाभङ्गे सति दण्डे दृष्टान्तोऽसज्झायशब्देऽपि ॥व्य०॥ नि० चू०॥

( आज्ञाभङ्गस्य दुःखकारणत्वं महानिशीथे यथा )

"ता जत्थदुक्खविक्खिण्णं एगंतसुहपावणं। स आणा नो खंडेज्जा आणाभंगकओ सुहो" ॥ महा० ॥

( ११ ) ( आज्ञारहितस्य चारित्रमपि न भवति )

दुप्पसहंतं चरणं जं भणियं भगवया इहं खेत्ते ।
अणा हुत्ताण मिणं न होइ अहुणोत्ति वा मोहो ॥

व्या०—दुप्पसहन्तमिति तत्र दुःखेन प्रकर्षप्राप्तवशत्वतया सह्यते दुःप्रसहः तद्गुणयोगादाचार्यो दुःप्रसहः यथा दंडयोगाद्दंडः पुरुष इति स एवांते पर्यंते यस्य तत्तथा चरणं चारित्रं भणितं प्रतिपादितं भगवता श्रीमन्महावीरेण इहास्मिन् क्षेत्रे भरताभिधाने यद्यस्मात्कारणात्तस्मात्कारणादाज्ञायुक्तानामपि न केवलमाज्ञाबाह्यानामिदं प्रस्तुतं चारित्रं न भवति न जायतेऽधुनेति सांप्रतं तत्साध्यातिशयदर्शनाच्च इति तेषामसद्ग्राहगृहीतचेतसां व्यामोहो मूढतेति यावत् मूढता च तेषामागमवचनान्यथाकरणादिति गाथार्थः ॥ दर्श० ॥

( तीर्थकराज्ञानिन्दकस्य निन्दा स्याद्वादमञ्जर्य्याम् यथा)

प्रतिक्षणोत्पादविनाशयोगिं स्थिरैकमध्यक्षमापीक्षमाणः ।
जिन त्वदाज्ञामवमन्यते यः स वातकी नाथ पिशाचकी वा ॥

व्या०--प्रतिक्षणं प्रतिसमयं उत्पादेनोत्तराकारस्वीकाररूपेण विनाशेन च पूर्वाकारपरिहाणलक्षणेन युज्यते इत्येवं शीलं प्रतिक्षणोत्पादविनाशयोगि किं तत् स्थिरैकं कर्मतापन्नं स्थिरमुत्पादविनाशयोरनुयायित्वात् त्रिकालवर्त्ति यदेकं द्रव्यं स्थिरैकं एकशब्दोऽत्र साधारणवाची उत्पादे विनाशे च तत्साधारणमन्वयिद्रव्यत्वात् । यथा चैत्रमैत्रयोरेका जननी साधारणेत्यर्थः इत्थमेव हि तयोरेकाधिकरणतापर्यायाणां कथंचिदनेकत्वेऽपि तस्य कथंचिदेकत्वात् एवं त्रयात्मकं वस्तु अध्यक्षमपीक्षमाणः प्रत्यक्षमवलोकयन्नपि हेजिन ? रागादिजेतः त्वदाज्ञा आ सामस्त्येनानंतधर्माविशिष्टतया ज्ञायंते च बुद्धयंते जीवादयः पदार्था यया सा आज्ञा आगमः शासनं तवाज्ञा त्वदाज्ञा तां त्वदाज्ञां भवत्प्रणीतस्याद्वादमुद्रां यः कश्चिदविवेकी अवमन्यतेऽवजानाति जात्यपेक्षमेकवचनमवज्ञया वा स पुरुषपशुःवातकी पिशाचकी वा वातो रोगविशेषोऽस्यास्तीति वातकी च वातकी वातुल इत्यर्थः एवं पिशाचकी च पिशाचकी भूताविष्ट इत्यर्थः अत्र वाशब्दःसमुच्चयार्थ उपमानार्थो वा स पुरुषोपसदो वातकिपिशाचकीभ्यामधिरोहति तुलामित्यर्थः वातातीसारपिशाचात्कश्चांत इत्यनेन मत्वर्थीयः कश्चांतः एवं पिशाचकीत्यपि यथा किल वातेन पिशाचेन वाक्रांतवपुर्वस्तुतत्वं साक्षात्कुर्वन्नपि तदावेशवशादन्यथा प्रतिपद्यते एवमयमपि एकांतवादापस्मारपरवश इति ॥ स्या० ॥

( तीर्थकराज्ञारहितधर्मस्य फलाफलत्वविचार आणाखण्डनशब्दे ) ही० ॥

( जिनाज्ञास्थित्यवधिश्च महानिशीथे यथा ) से भयवं !केवइयं कालं जाव एस आणा पवेइया गो० ? जाव णं महायसे महासत्ते महाणुभागे सिरिप्पभे अणगारे से भयवं ! केवणं काले णं से सिरिप्पभे अणगारे भवेज्जा। गो० ? होही दुरंतपंतलक्खणे अदव्वे रोद्दे चंडे उग्गे पयंडदंडे निम्मिरे निक्किवे निग्घिणे नित्तिसे कूरयरपावमई अणारिए मिच्छद्दिट्ठी कक्की नाम रायाणे सेणं पावे पाहुडियं भमाडिउ कामे सिरिसमणसंघं कयत्थेज्जा जाव णं कयत्थे ताव णं गो० ? जे केइ तत्थ सलिद्धो महाणुभागो अवलियसत्ते तवोवहाण अणगारे। तेसिं च पाडिहेरियं कुज्जा सोहम्मे कुलिसपाणी एरावणगामी सुरवरिंदे एवं च गो० ? देविंदवंदिए दिट्ठपव्वएणं सिरिसमणसंघेज्जा णिट्ठिज्जा कुणए पासंडधम्मे जाव णं गोयमा ! एगे अविइज्जे । अहिंसालक्खणं खंतादिदसविहधम्मे । एगे अरहादेवाहिदेवे एगे जिणालये एगे वंदे पूए दक्खे सक्कारे संमाणे महाजसे महासत्ते महाणुभागे दढसीलयनियमधारए तवोवहाणे साहु तत्थ णं चंदमिव सोमलेसे सूरिए इव तवतेयरासी पुढवी इव परिसहोवसग्गासंहे मेरुमंदरधरे इव निप्पकंपे विए अहिंसालक्खणखंतादिदसविहे धम्मे । सेणं सुसमणगणपरिवुडे । निरब्भगयणामलकोमुइजोगजुत्ते इव गहरिक्खपरिवारिए गहवई वंदे अहिययरं विराहेज्जा गोयमा ! सेणं सिरिप्पभे । अणगारे भोगो एवंतियं कालं जाव एसा आणा पवेइया से भयवं उड्ढं मुच्छा गो० तओ परेणं उड्ढं हायमाणे कालसमए तत्थ णं जे केई छक्कायसमारंभविवज्जए । सेणं धन्ने पुन्ने वंदे पूए न संसणिज्जे । जीवियं सुजीवियं तेसिं ॥महा०

आज्ञायते आदिश्यत इत्याज्ञा । व्यवहारभेदे, ॥ स्था० ॥ भ० ॥ व्य० ॥ पंचा० ॥

देशांतरस्थितयोर्द्वयोर्गीतार्थयोर्गूढपदैरालोचनानि जातिचारनिवेदनमाज्ञाव्यवहारः एतदुक्तं भवति यदा द्वावप्याचार्यौ वासेवितसूत्रार्थतयाऽतिगीतार्थौ क्षीणजंघाबलौ विहारक्रमानुरोधतो दूरतरदेशांतरव्यवस्थितावत एव परस्परसमीपं गंतुमसमर्थावभूतां तदाऽन्यतरप्रायश्चित्ते समापत्ते सति तथाविधयोग्यगीतार्थशिष्याभावे मतिधारणाकुशलमगीतार्थमपि शिष्यं समयभाषया गूढार्थान्यतिचारासेवनपदानि कथयित्वा प्रेषयति तेन च गत्वा गूढपदेषु कथितेषु स आचार्यो द्रव्यक्षेत्रकालभावसंहननधृतिबलादिकं परिभाव्य स्वयं च तत्रागमनं करोति शिष्यं वा तथाविधयोग्यं गीतार्थं प्रज्ञाप्य प्रेषयति । तदभावे तस्यैव प्रेषितस्य गूढार्थामतिचारशुद्धिं कथयतीति ॥ प्रव० ॥ प्र० व्य० ॥

( तथाच व्यवहारकल्पे )

पढमस्स य कज्जस्स य पढमेण पएण सेवियं जं तु ।
पढमे छक्के अब्भितरं उ पढमं भवे ठाणं ॥

अत्र प्रथमं कार्यं दर्प्पः । तत्र प्रथमं पदं दर्शननिमित्तं प्रथमषट्कं व्रतषट्कं तत्राभ्यंतरमंतर्गतं प्रथमं स्थानं प्राणातिपा

पढमस्स य कज्जस्स य पढमेण पएण सेवियं जंतु ।
पढमे छक्के अब्भिंतरं तु वियं भवे ठाणं ॥

अत्र द्वितीयं स्थानं मृषावादः एवमदत्तादानादिष्वपि भावनीयं ॥

पढमस्स य कज्जस्स य पढमेण पएण सेवियं जं तु ।
विइए छक्के अब्भिंतरं तु पढमं भवे ठाणं ॥

अत्र द्वितीयं पट्कं कायषट्कमित्यादि । एवं तेन कथितेन आचार्यो द्रव्यक्षेत्रकालभावसंहननधृतिबलादिकं परिभाव्य स्वयं वा गमनं करोति शिष्यं वा तथाविधं योग्यं गीतीर्थं प्रज्ञाप्य प्रेषयति । तदभावे तस्यैव प्रेषितस्य गूढार्थमतिचारविशुद्धिं कथयति ॥ व्य० प्र० ॥

"आणाए ववहारं सुण वच्छ जहक्कमं वुच्छं" । एष श्रुतव्यहारो यथोपदेशं यथाक्रमं कथितः अत ऊर्ध्वमाज्ञाया व्यवहारं यथाक्रमं यथा वक्ष्ये तं च वक्ष्यमाणं वत्स ! शृणु

समणस्स उत्तमट्ठे सल्लुद्धरणकरणे अभिमुहस्स ।
दूरत्था जत्थ भवे छत्तीसं गुणा उ आयरिया ॥

श्रमणस्य उत्तमार्थे भक्त इत्याख्याते व्यवसितस्य यत्किमपि सत्यमनुधृतमस्ति तदुद्धरणकरणे "अभिमुहस्स । दूरत्था जत्थ भावे छत्तीसगुणत्ति" यत्र प्रायश्चित्तव्यवहारे षट्त्रिंशद्गुणा आचार्या दूरस्था भवेयुस्तत्राज्ञया व्यवहारः कथमित्याह—

अपरक्कमो सिज्जाउ गंतु जे कारणं च उप्पन्नं ।
अट्ठारसमन्नयरे वसुणगतो इच्छिमो आणं ॥

स आलोचयितुकामश्चिंतयति । सांप्रतमहमपराक्रमो जातोऽस्मि ततस्तेषां समीपे गंतुं न शक्नोमि । कारणं च मम तत्पार्श्वगमननिमित्तं समुत्पन्नं । ततोऽष्टादशानां व्रतषट्कादीनां अन्यतरस्मिन्नतीचारे व्यसनगतः पतितस्तस्मादिच्छाम्याज्ञामाज्ञाव्यवहारमिति एतदेव सविशेषं भावयति ॥

अपरक्कमो तवस्सी गंतुं जो सोहिकारगसमीवं ।
आगंतुं न वाएइसो सोहिकरो वि देसाउ ॥

स आलोचयितुकामस्तपस्वी शोधिकारकसमीपे गंतुं अपराक्रमो यस्य शोधिः कर्त्तव्या सोऽपि देशादालोचयितुं समीपमागंतुं न शक्नोति ।

अह पट्ठवेइ सीसं देसं देसंतरं गमणनट्ठचेट्ठागे ।
इच्छामज्जो काउं सोहिं तुब्भं सगासम्मि ॥

अथानंतरमालोचयितुकामे देशान्तरगमननष्टचेष्टके आलोचनमाचार्यस्य समीपे शिष्यं आर्य ! युष्माकं सकाशे शोधिं कर्तुमिच्छामीत्येतत्कथयित्वा प्रेषयति ।

सोवि अपरक्कमतीसं सो पासइ धारणाकुसलं ।
एयस्स दाणि पुरओ करेहि सोहिं जहावत्तं ॥

सोऽपि आलोचनाचार्योऽपराक्रमगतिर्न विद्यते पराक्रमागतौ यस्येति विग्रहः । शिष्यं धारणाकुशलं प्रेषयति । यस्त्वालोचयितुकामेन प्रेषितस्तस्य संदेशं कथयति त्वमिदानीमेतस्य पुरतो यथावृत्तं शोधिं कुरु ।

परक्कमो अ सीसं आणा परिणामगं परिच्छेज्जा ।
परिक्खेय वीयकाए सुत्ते वा मोहणाधारी ।

स आलोचनाचार्योऽपराक्रमः शिष्यमाज्ञापरिणामकं परीक्षेत किमेष आज्ञापरिणामकः किं वा नेति? आज्ञापरीणामको नाम यत् आज्ञाप्यते तत्कारणं न पृच्छति किमर्थमेतदिति किंत्वाज्ञां एव कर्त्तव्यतया श्रद्दधाति । यदत्र कारणं तत्पूज्या एव जानन्ति एवं यः परिणामयति स आज्ञापरिणामकस्तत्परीक्षा च वृक्षे बीजका ये च वक्ष्यमाणरीत्या कर्त्तव्या । आज्ञापरिणामित्वं परीक्ष्य पुनरिदं परीक्षणीयं यथा किमेषोऽवग्रहणे समर्थो धारणासमर्थश्च किं वा नेति ! तत्राध्ययनादिपरीक्षया सूत्रे च शब्दादर्थे वा मोहनं मोहरहितं समस्तंमासमंताद्धारयतीत्येवं शीलो मोहधारी तं परीक्षेत ।

तत्र वृक्षेणाज्ञापरिणामित्वपरीक्षामाह ।

दट्ठुमहं ते भक्खो गणिओ रुक्खो विलज्जउं डेव ।
अपरिणयं वेंति तिहिं न वट्टइ रुक्खे वि आरोढुं ॥
किं वा मारेयव्वो अहियेतो वेह रुक्खओडेप ।
अति परिणामो भणति इय हेऊ अम्ह वेसिच्छा ॥

दृष्ट्वा महतो महीरुहान् गणिक आचार्यो ब्रूते अस्मिन्नुच्चैस्तेन तालप्रमाणे वृक्षे विलग्य तत आत्मानं क्षिप्रप्रपातं कुर्वित्यर्थः एवमुक्ते तत्रापरिणामको ब्रूते न वर्त्तते वृक्षे विलगितुं साधोः सचित्तत्वाद्वृक्षस्य प्रपातं च कुर्वन् आत्मविराधना भवति । सा च भगवता निषिद्धा किंत्वमुनोपायेन मारयितव्योऽभिप्रेतो ब्रूथ वृक्षादात्मानं डेपेति । अतिपरिणामकः पुनरिदं भणति इत्येवं भवतु करोमि प्रपातमिति भावोऽस्माकमप्येषा इच्छा वर्त्तते ॥

चेइ गुरू अह तंतू अपरिच्छियत्थे पभाससे एवं ।
किं च मए तं भणितो आरुहरुक्खे सचित्ते ॥

अथानंतरं तमतिपरिणामकं शिष्यं ब्रूते । अपरीक्षिते अपराभाविते मद्वचनस्यार्थे त्वमेवमुक्तप्रकारेण प्रभाषसे यथा करोमि प्रपातमस्माकमप्येषेच्छा वर्त्तते । अपरिणामकमधिकृत्य ब्रूते तं त्वं मया किमेवं भणितो यथा सचित्ते वृक्षे आरोहाय नोद्यतेन वर्त्तते साधोः वृक्षे विलगितुमिति किं त्वेतन्मयोक्तं तदेवाह ।

तवनियमनाणरुक्खं आरुहिउं भवमहण्णवापण्णं ।
संसारगराकूलं डेवेहंती मए भणितो ॥

तपोनियमज्ञानमहार्णवापन्नं भवसमुद्रमध्यप्राप्तमारुह्य संसारगर्त्ताकूलं पडिउल्लंघ्येति मया भणितः ॥

जो पुण परिणामो खलु आरुहभणितो वि सो वि चिंतेइ ।
नेच्छंति पावमेते जीवाणं थावरादीणंपि ॥
किं पुण पंचेंदीणं तं भणियव्वेत्थ कारणेणं तु ।
आरुहणववसियं तू वारेइ गुरुववत्थंतो ॥

यः पुनः खलु परिणाम आज्ञापरिणामः स आरोहति भणितश्चिंतयति । नेच्छंति पापमेते मदीया गुरवो जीवानां स्थावराणामपि किं पुनः पंचेंद्रियाणां तस्मादत्र कारणेन भवितव्यमेवं विचिंत्य आरोहणे व्यवसितः । तमारोहणव्यवसितं गुरुरवष्टभ्य बाहौ वा वारयति । यदेवमुक्तं वृक्षे परीक्षणमधुना जीवेष तदाह ॥

एवं णाहय वीयाई भणितो पडिसेहे अपरिणामो ।
अइपरिणामो पोट्टल बधूणं आगतो तहियं ॥

एवममुना प्रकारेण बीजानि आनयत ततोऽपरिणामः प्रतिषेधति न कल्पते बीजानि गृहीतुमिति यस्त्वतिपरिणामकः स बीजानां पोट्टलं बध्वा तत्र गुरुसमीपे समागतः ॥

ते वि भणिया गुरूणं भणिया नेह अक्खलवियाइं ।
न विरोहसमत्थाइं सचित्ताइं व भणियाइं ॥

तौ वद्धौ परिणामकौ गुरुणा भणितौ मया भणितमानय अम्लिकाबीजानि कांजिकिनीबीजानि यदि वा सचित्तानि च ध्वस्तयोनिभयानि यानि विरोहसमर्थानि तान्यानयेति भणितानि ॥

तत्थवि परिणामो तू भणती आणेसि केरिसायं तु ।
कतियमित्ताइं वा विरोहमविरोहजोग्गाइं ॥

तत्रापि यः परिणामकः स भणति कीदृशानि बीजान्यानयामि विरोहयोग्यान्यविरोहयोग्यानि वा कियन्मात्राणि वा ॥

सोवि गुरूहिं भणितो न ताव कज्जं पुणो भणीहामि ।
हसितो व मए तासिं वीमं सव्वत्थ भणितोसि ॥

सोऽप्याज्ञापरिणामको गुरुभिर्भणितो न तावदिदानीं कार्यं यदा तु कार्यं भविष्यति तदा पुनर्भणिष्यामः अथ वा हसितोऽसि मया तावदिदानीं न पुनर्बीजैः प्रयोजनं यदि वा विमर्शार्थं तव धिमर्शपरीक्षणार्थत्वमेवं भणितोऽसि । संप्रति मोहिताधारिपरीक्षामाह ।

पयमक्खरमुद्देसं संधीसु तत्थ तदुभयं चेव ।
अक्खरवंजणसुद्धं जहा भणितमो परिकहेइ ॥

पदमक्षरमुद्देशं संधिमधिकारविशेषं सूत्रमर्थं तदुभयं च अक्षरव्यंजनशुद्धं पूर्वमवग्राहयति किमेष ग्रहणधारणायोग्यः किं वा नेति अवग्राह्य ततो ब्रूते उच्चारय प्रेक्षे किमपि गृहीतं न च किं त्वगृहीतमपि किं स्मृतं किं वा नेति तत्र यदि यथा भणितं तथा सर्वं परिकथयति तदा ज्ञातव्य एष ग्रहणधारणे कुशल इति ॥

एवं पेच्छिऊणं जोग्गं नाऊणं पेसवे तं तु ।
वच्चाहि तस्सगासं सेहिं सोऊण आगच्छ ॥

एवंपरीक्षयायोग्यं ज्ञात्वा तं प्रेषयेत् संदिशति च व्रज तस्य साधोरालोचयितुकामस्य शोधिमालोचनां श्रुत्वा पुनरागच्छ ॥

अह सो गतो उ तेहिय तस्ससगासंमि सो करेमोहि ।
दुगतिचउविसुद्धंति वेहे काले विगटभावो ॥

अथ प्रेषणानंतरं यत्रालोचयितुकामो विद्यते। तत्र गतस्तस्यागतस्य समीपे आलोचयितुकामः प्रशस्तेषु द्रव्यादिशोधिमालोचनां करोति । कथमित्याह द्विकदर्शनातिचारं चारित्राचारमालोचयतीत्यर्थः । दर्शनग्रहणं ज्ञानग्रहणमपीति ज्ञानातिचारं चेत्यपि द्रष्टव्यं । चारित्रातिचारालोचनेऽपि च द्विभेदा मूलगुणातिचारविषया यावता करोति । पुनस्त्रिका माहारोपधिशय्यां भेदत एकैकां त्रिप्रकारां चतुर्विशुद्धां प्रश स्तद्रव्यक्षेत्रकालभावोपेतांस्त्रिविधे काले अतीते प्रत्युत्पन्ने यान्यचित्तमनागते च यत्सेविष्ये इत्यध्यवसितविकटभावः प्रकटभावोऽप्रतिकुंचन इत्यर्थः ॥ व्य० द्वि० ॥

( आज्ञाव्यवहारस्याराधको यथा )

दव्वे भावे आणा खलु सुयं जिणवराणं
सम्मं ववहारमाणो उ तीये आराहणा होंति ॥

आज्ञा द्विविधा द्रव्ये भावे च तत्र द्रव्याज्ञा राजादीनामाज्ञा भावाज्ञा खलु श्रुतं जिनवराणां। तत्र सम्यक् पंचविधान्यतमेन व्यवहारेण प्रागुक्तनीत्या व्यवहारेण तस्या आज्ञाया आराधको भवति ॥ व्य० द्वि० ॥

**आणाअविराहग**—आज्ञाऽविराधक—पुं० आज्ञाया आराधके, ॥ पं० सू० ॥

**आणाआराहण**—आज्ञाराधन—न० आप्तोपदेशानुपालने,।"आणा आराहणाओ रागो वि" आज्ञाराधनादाप्तोपदेशानुपालनान्निर्निदानतामेव हि जिना मन्यन्ते इति ॥ पंचा० ॥

**आणाआराहणजोग**—आज्ञाराधनयोग—पुं० आप्तोपदेशानुपालनसम्बन्धे, ॥ पंचा० ॥

**आणाइत्त**—आज्ञावत्—त्रि० आप्तोपदेशवर्तिनि, ॥ पंचा० ॥

**आणाईसर**—आज्ञेश्वर—पुं० आज्ञया आज्ञाया वा ईश्वर आज्ञेश्वरः ॥ जी० ॥ आ० म० प्र० ॥ आज्ञाप्रधाने ईश्वरे, ॥ जं० ॥ औप० ॥

**आणाईसरसेणावच्च**—आज्ञेश्वरसेनापत्य—न० आज्ञाया ईश्वर आज्ञेश्वरः ॥ जी० ॥ आ० म० प्र० ॥ आज्ञाया ईश्वर आज्ञेश्वरः सेनायाः पतिः सेनापतिः आज्ञेश्वरश्चासौ सेनापतिश्च आज्ञेश्वरसेनापतिस्तस्य कर्माज्ञेश्वरसेनापत्यम् ॥जी०॥ आज्ञाप्रधानो यः सेनापतिः सैन्यनायकः तस्य भावः कर्म वा आज्ञेश्वरसेनापत्यम् ॥ औप० ॥ स्वसैन्यं प्रत्यद्भुते आज्ञाप्राधान्ये, ॥ जी० ॥ "आणाईसरसेणावच्चं कारेमाणो पालेमाणे" ॥ ज्ञा० ॥ विपा० ॥ सम० ॥ प्रज्ञा० ॥

**आणाकंखिन्**—आज्ञाकांक्षिन्—पुं० आज्ञामाकांक्षितुं शीलमस्येत्याज्ञाकांक्षी । सर्वज्ञोपदेशानुष्ठायिनि, ॥ आचा० ॥ "इह आणाकंखी पंडिए" इहास्मिन् मौनीन्द्रे प्रवचने व्यवस्थितः सन् आज्ञां तीर्थकृतोपदेशमाकांक्षितुं शीलमस्येत्याज्ञाकांक्षी आगमानुसारप्रवृत्तिकः कश्चैवंभूतः पंडितः सदसद्विवेकज्ञ इति ॥ आचा० ॥

**आणाकरण**—आज्ञाकरण—न० आगमज्ञवचनासेवने, ॥ पंचा० ॥ सौत्रविधिसम्पादने,—

ताए अमित्ति काले आणाकरणे अमूढलक्खेहिं ।
सत्तीए जइयव्वं एत्थ विही हंदि एसो अ ॥

यस्मादेवं तस्मादेतस्मिन्नपि काले दुःखमारूपे आज्ञाकरणे सौत्रविधिसम्पादने अमूढलक्षैः सद्भिः शक्त्या यतितव्यमुपसम्पदादौ अत्र विधिरेष व्याख्यानकरणे हंदीत्युपप्रदर्शने एष च वक्ष्यमाणलक्षण इति ॥ पं० व० ॥

**आणाका (गा) रि ( न् )** आज्ञाकारिन्—पुं० आप्तोपदेशवर्त्तिनि, ॥ पंचा० ॥ "आप्तोपदेशविधायिनि, तथा च पंचाशके । एयस्स फलं भणियं इय आणाकारिणो उ सड्ढस्स" ॥ पंचा० ॥ एतस्स समस्तजिनभवनविधानस्य फलं प्रयोजनं भणितमुक्तमिति एवमुक्तरीत्या आज्ञाकारिणस्तु

श्रमोपदेशविधायिन एव श्राद्धस्य श्रद्धावतः श्रावकस्ये-त्यर्थ इति ॥ पंचा० ॥

आणाखंडण—आज्ञाखण्डन—न० आज्ञाभङ्गे, "आणा नो खंडे ज्जा आणाभंगे कओ सुहो,, ॥ महा० ॥ ( आज्ञाखण्डनक-रधर्मस्य विचारे पण्डितश्रीकल्याणकुशलगणिकृतप्रश्ना यथा )

आणाखंडणकरी य सव्वं पि निरत्थयं तस्स ।
आणारहिओ धम्मो पलालपूलुव्व पडिहाइ ॥

"कलं नगर सोलसिमित्यादि" वचनालंबनेन सांख्यादिद-र्शनांतरेषु यद्बालतपः कष्टानुष्ठानं समाचरंति तत्सर्वं स-र्वथा निष्फलमेव न कापि कर्मनिर्जरा भवति । केषांचि-त्संमतं केषांचित्तु तेषामपि तारतम्येन स्वल्पमपि फलं स्वीकार्यं न तु निष्फलता । अत्रागमः-

जं अन्नाणी कम्मं खवेइ बहुयाइं वासकोडीहिं ।
तं नाणी तिहिं गुत्तो खवेइ ऊसासमित्तेण ॥ १ ॥

"कलं नगर सोलसिपलालपूलुव्व, इत्यादावपीदमेव तात्प-र्यं "अविरयमाइसुराउं बालतवोकामनिर्ज्जरो जय इत्ति सराग-संजमेणं बालतवेणंति चरगपरिव्वायबंभलोगोजा । इत्य-पि अत एव बालतपस्विनामपि कोडिन्नदिन्नसेवालिनाम्नां स्वीयस्वीयतपोऽनुसारेणैव सोपानप्राप्तिः सर्वथा विफल-तायां तु सर्वेषामप्राप्तिः प्रसज्यते कथं च कर्मलाघवमंतरे-ण मिथ्यात्वेन एव ग्रंथिदेशं यावदागच्छंति न वा काम-निर्जरामात्रमेव तत्र हेतुः कारणांतराणामपि विवाधप्रज्ञप्ति-वृत्तावुक्तत्वात्तथाहि-"अणुकंपकामनिज्जरा बालतवे दाण-विणयविसंगे। संजोगविप्पओगे वसणूसवइड्डिसक्कारे"।१। इ-इयते वै तदर्थसंवादः साक्षादेवं महानिशीथे नागिलाधि कारे तद्यथा-"अकामनिज्जरा एवि किंचि कम्मक्खयं भवइ । किं पुण जं बालतवेणं एवंसति निरत्थयं तस्स ॥ इत्यादी-नां का गतिरिति चेत्सत्यं सर्वाणि चैतानि उत्सर्गसूत्राणि ततोऽत्र उत्सर्गादपवादो बलीयानयमेव न्यायोऽनुसर्त्तव्यस्त-तः सिद्धं तेषामपि तारतम्येन किंचित् २ फलमिति स-मादधते ३ तथा केचित् महानिशीथगतं "जेया वि निन्ह-गाणं अनुकूलं भासिज्जा" इत्यादि प्रसिद्धालापकमुपष्टभ्य वक्तारो भवंति । तथाहि ये पक्षांतरीयविहितं पतज्जिनप्रा-सादादिपरित्राणमाचार्योपाध्यायादीनामापन्निवारणं साधु-मुद्दिश्य दानसत्कारादिकं चानुमन्यंते तेषां महत्पातकं जायते सम्यक्त्वमपि प्रतिहन्यते तेन मतांतरायत्तं तं यु-गप्रधानाचार्यभक्त्यादिकमपि सर्वथा नानुमोदनीयमेवेति केचित्तु तानपि प्रतिवदंति। यथा-नयसाधनश्रेष्ठिसंगमादी-नां मिथ्यात्वभाजामपि दानं बहुषु ग्रंथेषु परंपरया चानु-मोद्यमानं दृश्यते एषां सर्वतीर्थतत्सातिशयसाधुपारणानु-पंचदिव्यावसरे अहो दानमहो दानमित्युद्घोषोऽपि यद-नुमोदनीयं न तत्कार्यते कथं दृश्यते च । भवदादयः सर्वे-ऽपि मार्गं प्रतिपन्नाः । कारयंतो यथा देहि भोः किंचिदस्म-भ्यं तव भूयात् । लाभो भावीति यदि च प्रदत्ते तदा संतु-ष्टिरपि जायते इति स्वयमनुभूयमानस्यार्थस्य विलोपः कर्तुं सतां नोचित इत्याशयतयैव सूत्रकारेणाभ्यधायि । "महवा सव्वं चिय विअरायेत्यादि,, अत्र सम्यग्दृष्टिपर्यंता-नां पूर्वमुक्तत्वान्मिथ्यात्विनामपि किंचित्करणीयमनुमोदनी-यमित्यापतितं तच्च विचार्यमाणं जिनजिनबिंबजिनालयाचार्यो-पाध्यायसाधुश्राद्धादीनां वास्तवाराध्यानामशनपानप्रदाना-दि भक्तिवर्णनसंज्वलनापत्परित्राणादिकं दृश्यते चानु-मोदितं साक्षादप्याचारांगादौ साधुना साग्निशकटीपुर-स्करणे मम न कल्पते भवता।पुनः पुण्यप्राग्भारार्जनमकरीत्या-दि कथं च जिनशासनप्रभावनाकारिणो म्लेच्छा अप्य-नुमोद्यंत इत्याद्यनाग्रहबुद्ध्या पर्यालोचनीयमिति ४ ॥ ही० ॥ तथा तृतीये चतुर्थप्रश्नप्रतिवचनं तु द्वादशजल्पपट्टकादवसे यं किंच "सव्वं पि निरत्थयं तस्सेत्यादि" वचनस्यापेक्षिक-त्वान्नैकांतवादः । अपेक्षा च मोक्षफलाभावलक्षणेति भावः। अन्यच्च महानिशीथप्रसिद्धालापकमुपष्टभ्य एकांतेन परपा-क्षिकप्रशंसानिषेधः। सोऽपि न संगच्छते यतस्तस्मिन्नेवाला-पके "अविमुहमुद्धपरिसामज्झगए सलाहेज्जा" इतिवचनेना-भिमुखमुग्धपरिषद्विशेषमध्य एव तत् श्लाघाया निषेधः प्र-तिपादितोऽस्ति न तु सामान्यपर्षदिति किंचात्र ऊहः प्रत्यू-हादिबहुवक्तव्यमस्ति तत्तु साक्षान्मिलने एव समीचीनतामं-चतीति ३ ॥ ही० ॥

आणागाहग—आज्ञाग्राहक—पुं० आगमग्राहके, "सयाणांगा-हगे सिया" सदाज्ञाग्राहकः स्यादध्ययनश्रवणाभ्याम्-इति ॥ पं०सू० ॥

आणागिज्झ—आज्ञाग्राह्य—त्रि० आगमविनिश्चेये, "आणागि-ज्झो अत्थो आणाए चेव सो कहेयव्वो" आज्ञा आगमस्तद्-ग्राह्यस्तद्विनिश्चेयोऽर्थोऽनागतातिक्रान्तप्रत्याख्यानादिराज्ञयैवा गमेनैवासौ कथयितव्य इति । यद्वा सामान्येनैवाज्ञाग्राह्योऽर्थः सौधर्मादिराज्ञयैवासौ कथयितव्यो न दृष्टान्तेन तस्य तत्र वस्तुतोऽसम्भवादित्यादिबहुवक्तव्यता वक्खाणशब्दे॥आव० ॥ पं० व० ॥ नि० चू० ॥

आणाजुत्त—आज्ञायुक्त—त्रि० आगमोपेते, चारित्रमुद्दिश्य द-र्शनशुद्धौ "आणाजुत्ताणमिणं न होइ अहुणोत्ति वा मोहो" आज्ञायुक्तानामपि न केवलमाज्ञाबाह्यानामिदं प्रस्तुतं चारि-त्रं न भवति न जायते इति ॥ दर्श० ॥

आणाजोग—( य ) आज्ञायोग—पुं० आज्ञा नियोगः शासनं यथा राजाज्ञा राजशासनम् तस्यां योग उत्साहः तया वाऽऽ ज्ञया योगः सम्बन्धः । दत्ताया अविफलीकरणे, ॥षो० ॥ आ-प्तवचनसम्बन्धे च ॥ पंचा० ॥ सूत्रव्यापारे, "पावं विसाइ-तुल्लं आणाजोगो अ मंतसमो" सर्वमपि पापं विषादितुल्यं विपाकदारुणत्वादाज्ञायोगश्च सूत्रव्यापारश्चात्र मंत्रसमस्त-द्दोषापनयनादिति ॥ पं० व० ॥

आणाणिद्देस—आज्ञानिर्देश—पुं० भगवदभिहितागमस्योत्स-र्गापवादाभ्यामिदमित्थं विधेयमिदमित्थं चेत्येवमात्मके प्र-तिपादने, ॥ उत्त० ॥

आणाणिद्देसयर—आज्ञानिर्देशकर—त्रि० भगवदभिहितागमप्र-तिपादनकरणशीले, भगवदभिहितागमानुलोमानुष्ठायिनि च ॥ उत्त० ॥

आज्ञानिर्देशतर—त्रि० गुरुवचनस्येदमित्थमेवं करोमीति निश्चयाभिधानेन भवाम्भोधेस्तरणशीले, ॥ उत्त० ॥ तथा चोत्तराध्ययने विनीतशिष्यमधिकृत्य "आणाणिद्दे-

सकरे" आज्ञेति स्वस्वभावावस्थानात्मिकया मर्यादयाभिव्याप्त्या वा ज्ञायतेऽर्थो अनयेत्याज्ञा भवदर्भिहितागमरूपा तस्यानिर्देश उत्सर्गापवादाभ्यां प्रतिपादनं आज्ञानिर्देश इदमित्थं विधेयमिदमित्थं वेत्येवमात्मकं तत्करणशीलस्तदनुलोमानुष्ठानो वा आज्ञानिर्देशकरः । यद्वाज्ञा सौम्ये इदं कुरु इदं च माकार्षीरिति गुरुवचनमेव तस्या निर्देश इदमित्थमेव करोमीति निश्चयाभिधानं तत्करोति भवांभोधिमित्याज्ञानिर्देशकर इति ॥ उत्त० ॥

आज्ञानिर्देशकर । पुं० । आज्ञाविराधके, । उत्तराध्ययनेऽविनीतशिष्यमधिकृत्य "आणानिद्देसकरे" स शिष्योऽविनीत इत्युच्यते य आज्ञायास्तीर्थकरवाक्यस्य गुरोर्वाक्यस्य चानिर्देशकरः अप्रमाणकर्त्ता आज्ञाविराधक इति ॥ उत्त० ॥

आणाणिप्फादय—आज्ञानिष्पादक—पुं० आज्ञासाधके, ॥ पं० सू० ॥

आणाणुग—आज्ञानुग—त्रि० । आज्ञामनुगच्छति, ॥ अनु० ॥ गम—ड ६ त० । आदेशानुसारेण गन्तरि दासादौ, क्त आज्ञानुगतोऽप्यत्र त्रि० ॥ वाच० ॥

आज्ञानुसारिणि, ॥ दर्श० ॥ आगमानुसारिणि, "सुहभावा तव्विगमो सो वि य आणाणुगो निओगेण" शुभभावात्प्रशस्ताध्यवसायात्तद्विगमोऽशुभकर्मविगमो भवति ( सोवियत्ति ) स पुनः शुभभावः आज्ञानुगः आगमानुसारी भवति नियोगेन नियमेन अनाज्ञानुगम्य शुभ एवेति भावः ॥ पंचा० ॥

आणाणुगामि—(न्) आज्ञानुगामिन्—त्रि० आज्ञामनुगच्छति, ॥ अनु० ॥ गम—णिनि ६ त० स० आज्ञानुगते, स्त्रियां ङीप् ॥ वाच० ॥

आणापडिच्छय—आज्ञाप्रतीच्छक—पुं० आज्ञाप्रतीच्छाकारके, ॥ पं० सू० ॥

आणापत्त—आज्ञापत्र—न० आज्ञाज्ञापकं पत्रम् शाक० त० । आदेशज्ञापके पत्रे, ( हुकुमनामा ) ॥ वाच० ॥

आणापरतंत—आज्ञापरतन्त्र—पुं० आप्तवचनाधीने, ( आज्ञापरतन्त्रा प्रवृत्तिरप्रवृत्तिश्चेति आणा शब्दे ) ॥ पंचा० ॥

आणापरिणामग—आज्ञापरिणामक—पुं० यदाज्ञाप्यते तत्करोति तत्कारणम्न पृच्छति किमर्थमेतदिति किंत्वाज्ञयैव कर्त्तव्यतया श्रद्दधातीत्येवंलक्षणे परिणामकभेदे, ॥ व्य० द्वि० ॥ ( एतस्य लक्षणादि बहुवक्तव्यता परिणामकशब्दे ) ॥ व्य० ॥ ( एतस्य परीक्षाप्रकार आज्ञाव्यवहारनिरूपणावसरे आणाशब्दे द्रष्टव्यः ) ॥ व्य० ॥

आणापवित्ति—आज्ञाप्रवृत्ति—स्त्री० आप्तोपदेशपरतन्त्रप्रवर्त्तने, आज्ञाप्रवृत्तिकश्च शुद्ध एव । तथाच धिम्बविधिमाधिकृत्य पंचाशके ।

आणापवित्तिउचिय सुद्धो एसो ण अण्णहा णियमा ।
तित्थगरे बहुमाणो तदभावाओ य णायव्वो ॥ १२ ॥

व्या०—आज्ञा प्रवृत्तित एवाप्तोपदेशपरतंत्रप्रवर्त्तनादेव शुद्धो विशुद्धः एष परिणामो बिंबविधायको वा ज्ञेय इति योगः । न नैवान्यथा अनन्यथा आज्ञाया अपारतंत्र्याऽप्रवृत्तेरित्यर्थो नियमादवश्यतया शुद्धो ज्ञेयो भवतीति प्रकृतं एष । अथ कुत एतदपि इयमित्यादितीर्थकरे जिने बहुमानात्पक्षपाता- दाज्ञाप्रवृत्तिकः शुद्धः तदभावात्तीर्थकरे बहुमानाभावादनाज्ञाप्रवृत्तिकस्त्वशुद्धश्चशब्दः समुच्चयार्थो ज्ञातव्यो ज्ञेय इति संबंधितमेवेति गाथार्थः ॥ पंचा० ॥

आणापवित्तिय—आज्ञाप्रवृत्तिक—पुं०— आप्तोपदेशपरतन्त्र प्रवृत्तिमति, ॥ पंचा० ॥

आणापहाण—आज्ञाप्रधान—पुं०—आगमपरतन्त्रे, ॥ ध० ॥

आणापाण—आनप्राण—पुं० कालविशेषे, ॥ जी० ॥ अनु० ॥ स्था० । ज्ञा० ॥ कर्म० ॥

( सूर्यप्रज्ञप्तावानप्राणकालपरिमाणं यथा ) असंख्येया आवलिका एक आनप्राणद्विकं द्विपंचाशदधिकत्रिचत्वारिंशच्छतसंख्यावलिकाप्रमाण एक आनप्राण इति वृद्धसंप्रदायस्तथा चोक्तं "एगो आणापाणु तेयालीसं सयालीसं सया उ वाचना आवलियपमाणेणं अणंतनाणीहिं निद्दिट्ठो" ॥ सूर० ॥

आणापाणपज्जत्ति—आनप्राणपर्याप्ति—स्त्री० पर्याप्तिभेदे, मया पुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुंचति सा प्राणापानपर्याप्तिरिति ॥ ॥ प्रव० ॥

आणापाणवग्गणा—आनप्राणवर्गणा—स्त्री० उच्छ्वासनिश्वासयोग्यायाम् पुद्गलवर्गणायाम्, ( वक्तव्यता वग्गणा शब्दे ) ॥ कर्म० ॥

आणावज्झ—आज्ञाबाह्य—त्रि० । आप्तोपदेशशून्ये, आज्ञाबाह्यायाश्च स्वमतिप्रवृत्तेर्भवनिर्वन्धनत्वम् पंचाशके यथा ।

समितिपवित्ती सव्वा आणावज्झत्ति भवफला चेव ।
तित्थगरुद्देसेण वि ण तत्तओ सा तदुद्देसा, ॥ १३ ॥

टी०—स्वमतिप्रवृत्तिः आत्मबुद्धिपूर्विकाचेष्टा सर्वा समस्ता द्रव्यस्तवभावस्तवविषया आज्ञाबाह्या आप्तोपदेशशून्या इति हेतोर्भवफलैव संसारनिबंधनमेव आज्ञाया एव भवोत्तारहेतुषु प्रमाणत्वादिति । ननु या तीर्थकरानुद्देशवती सा भवफला युक्ता नत्वितरा जैनपक्षपातस्य महाफलत्वादित्याशंक्याह—तीर्थकरोद्देशेनापि जिनालंबनेऽप्यास्तां ततोऽन्यत्र स्वमतिप्रवृत्तिर्भवफलैवेति प्रकृतं कुत एवं यतो न तत्वतो न परमार्थेन सा तीर्थकरोद्देशवती स्वमतिप्रवृत्तिः स्वस्मिं तीर्थकर उद्देशः प्रणिधानं यस्यां सा तदुद्देशा य एव ह्याज्ञायां प्रवर्त्तते स एव हि जिनमुद्दिश्य प्रवर्त्तत इत्यभिधेयत्वेनापर इति गाथार्थः ॥ पंचा० ॥

आप्तवचनवहिष्कृते च । "आणावज्झत्तणओ न होइ मोक्खंगाया णवरं" आज्ञाबाह्यत्वादाप्तवचनवहिष्कृतत्वाद्यदाज्ञाबाह्यं तन्मोक्षांगं न भवतीति ॥ पंचा० ॥

आणावलाभिओग—आज्ञावलाभियोग—पुं० । आज्ञापनमाज्ञा भवतेदं कार्य्यमेव तदकुर्वतो वलात्कारणं वलाभियोगस्ततश्चाज्ञया सह वलाभियोग आज्ञावलाभियोगः आज्ञावलयोरभियोगो व्यापारणमिति समासः । आज्ञावलयोर्व्यापारणे, "आणावलाभियोगो णिग्गंथाणं ण कप्पते काउं" । आज्ञावलाभियोगो निर्ग्रंथानां साधूनां न कल्पते न युज्यते कर्त्तुं विधातुं परपीडोत्पादकत्वादात्मनश्चाभियोगिककर्मबन्धहेतुत्वात्तस्येत्यादि ( बहुवक्तव्यता इच्छाकारशब्दे ) पंचा० ॥

आणाभंग—आज्ञाभंग—पुं० आज्ञाया आदेशस्य भंगः स्वविषये-

षु प्रसाराभावः, आदेशस्याकरणेन आदिष्टविषयेषु प्रचाराभावे, ॥ वाच० ॥ आप्तोपदेशाननुपालने, ॥ पंचा० ॥ सर्वविदागमोल्लंघने च ॥ दर्श० ॥ ( एतद्वक्तव्यता आणा शब्दे )

आणाभावग-आज्ञाभावक-पुं० आज्ञाया भावयितरि, "सयाणाभावगे सिया" सदाज्ञाभावकः स्यादनुप्रेक्षाद्वारेणेति ॥ ॥ पं०सू० ॥

आणामिय-आनामित-त्रि० ईषन्नामिते, ॥ उपा० ॥ तं० ॥ ॥ प्रश्न० ॥ जी० ॥

" आणामियचावरुइलकिण्हचिउरराइसुसंठियसंगयआययसुजायभूमया,, आनामितचापरुचिरकृष्णचिकुरराजिसुसंस्थितसंगतायतसुजातभ्रूकाः आनामितमीषन्नामितं यच्चापं धनुस्तद्वद्रुचिरे शोभने कृष्णचिकुरराजिसुसंस्थिते कुत्रापि कृष्णाभ्रराजिसंस्थिते संगते आयते दीर्घे सुजाते सुनिष्पन्ने भ्रुवौ येषान्ते तथा ॥ तं० ॥ प्रश्न० ॥

"आणामियचावरुइलतणुकसिणनिद्धभूमया" आनामितचापरुचिरतनुकृष्णस्निग्धभ्रूकाः आनामितमीषन्नामितमारोपितमिति भावः यच्चापं धनुस्तद्वत् रुचिरे संस्थानविशेषभावतो रमणीये तनू तनुश्लक्ष्णपरिमितबालपंक्त्यात्मकत्वात् कृष्णे परमकालिमोपेते स्निग्धे स्निग्धच्छाये भ्रुवौ येषान्ते आनामितचापरुचिरतनुकृष्णस्निग्धभ्रूकाः ॥ जी० ॥

( उपासकदशायां हस्तिवर्णकमधिकृत्य ) "आणामियचावललितसंवेल्लितं अग्गसोंडं,, ॥ उपा० ॥ आनामितमीषन्नामितं यच्चापं धनुस्तद्वद्ललिता च विलासवती संवेल्लिता च वेल्लंती संकोचिता वा अग्रशुण्डा शुण्डाग्रं यस्य तत्तथेति ॥ उपा० ॥

आणामेत्त-आज्ञामात्र-न० आप्तवचनमात्रे, "आणामेत्तंमि सव्वहाउत्तो" आज्ञामात्रे, आप्तवचन एव सर्वथा सर्वप्रकारैर्युक्त उद्यत इति ॥ पंचा० ॥

आणारुइ-आज्ञारुचि-स्त्री० आज्ञासूत्रव्याख्यानं निर्युक्त्यादि तत्र तया वा रुचिः श्रद्धानम् साज्ञारुचिः ॥ स्था० ॥ भ० ॥ निर्युक्त्यादेस्तत्वश्रद्धाने, । ग० । औप० ॥ "आणारुई तित्थगराणं आणं पसंसन्ति" ॥ आ० चू० ॥ ( आज्ञारुचेर्धर्मध्यानलक्षणत्वं धम्मज्झाणशब्दे ) रागद्वेषरहितस्य पुंस आज्ञयैव धर्मानुष्ठानगता रुचिराज्ञारुचिः । तृतीये सम्यग्दर्शनभेदे, ॥ ध० ॥ आज्ञा सर्वज्ञवचनात्मिका तया रुचिर्यस्य सः ॥ स्था० ॥ उत्त० ॥ आप्तोपदेशाभिलाषयुक्ते, ॥ पंचा० ॥ "आणारुइणोचरणं" आज्ञारुचेराप्तोपदेशाभिलाषयुक्तस्य चरणं चारित्र मिति ॥ पंचा० ॥ आगमबहुमानिनि च ॥

"आणारुइणो य सम्मंति" आज्ञारुचय आगमबहुमानिन इति ॥ पंचा० ॥ तदात्मके तृतीये सरागसम्यग्दर्शिनि च ॥ स्था० ॥उत्त०॥ यो हि प्रतनुरागद्वेषमिथ्याज्ञानतयाचार्य्यादीनामाज्ञैव कुग्रहाभावाज्जीवादितथेति रोचयते माषतुषादिवत्स आज्ञारुचिरिति ॥ स्था० ॥

( तल्लक्षणमुत्तराध्ययने यथा )

रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ ।
आणाए रोयंतो सो खलु आणारुई नाम ॥ २० ॥

स खलु निश्चयेन आज्ञारुचिर्नाम इति प्रसिद्धो भवति स इति को यस्य रागः स्नेहो द्वेषोऽप्रीतिर्मोहः शेषमोहनीयप्रकृतयोऽज्ञानं मिथ्यात्वरूपं एतत्सर्वं नष्टं भवति यस्य देशतोऽपगतं गम्यते न सर्वतोऽपगतशब्दस्य प्रत्येकं संबंधः यस्य रागो द्वेषोऽपगतः यस्य द्वेषोऽपि देशतोऽपगतः यस्य मोहोऽपि देशतोऽपगतः यस्य अज्ञानं देशतोऽपगतं एतेषां अपगमात् आज्ञया आचार्याद्युपदेशेन रोचमानजीवादितत्वं तथैवेति प्रतिपद्यमानो यो भवति स आज्ञारुचिरित्यर्थः। अत्र माषतुषदृष्टान्तो मा रूसमा तूस इति स्थाने माषतुष इति दृष्टांतोऽस्ति ॥ २० ॥ टी० उत्त० ॥ प्रव० ॥ स्था० ॥ आज्ञा सर्वज्ञवचनात्मिका तस्यां रुचिरभिलाषो यस्य स आज्ञारुचिः सरागसम्यग्दर्शनार्यभेदे, जिनाज्ञैवमेतत्वं न शेषं युक्तिजातमिति योऽभिमन्यते स आज्ञारुचिरिति ॥ प्रज्ञा० ॥

( आज्ञारुचिमाह प्रज्ञापनायाम् )

जो हेउमयाणंतो आणाए रोयए पवयणं तु ।
एमेव णण्णहत्तिय एसो आणारुई नाम ॥ प्रज्ञा० ॥

यो हेतुविवक्षितार्थगमकमजानानः प्रवचनमाज्ञयैव तुशब्द एव कारार्थः । केवलारोचते कथमित्याह एवमेतत्। प्रवचनोक्तमर्थजातं नान्यथेति एष आज्ञारुचिर्नाम ॥ टी० प्रज्ञा० ॥

आणाल—आलान—न० आ लीयतेऽत्र आ ली-ल्युट् "आलाने नलोः" इति प्रा० व्या० सूत्रेण लनोर्व्यत्ययः ॥ प्रा० ॥ १ गजबन्धनस्तम्भे, करणे ल्युट् २ तद्बन्धनरज्ज्वाम्, भावे ल्युट् ३ बन्धनमात्रे च ॥ वाच० ॥

आणालक्खंभ—आलानस्तंभ—पुं० गजबन्धनस्तंभे, ॥ प्रा० व्या० ॥ वाच० ॥

आणावं—आज्ञावत्—त्रि० आप्तोपदेशवर्त्तिनि, ॥ ध० ॥

आणावग-आज्ञापक-त्रि० आज्ञापयति आदिशति आ+ज्ञा-णिच् ण्वुल् । आज्ञाकारके स्वामिप्रभृतौ, ॥ वाच० ॥

आणावट्टि(न्)-आज्ञावर्त्तिन्-त्रि० भगवत्प्रणीतवचनानुसारिणि, ॥ आचा० ॥

आणाववहार-आज्ञाव्यवहार-पुं० व्यवहारभेदे, तद्वक्तव्यताऽऽणाशब्दे ॥ ध० ॥ व्य० प्र० ॥ प्रव० ॥ पंचा० ॥

आणावह-आज्ञावह-पुं० आज्ञां वहति, वह—अच् आदेशवाहके आज्ञानुकूले दासादौ, ॥ वाच० ॥

आणाविजय-आज्ञाविच ( ज ) य-पुं० आ अभिविधिना ज्ञायंतेऽर्था यया सा आज्ञा प्रवचनं सा विचीयते निर्णीयते पर्य्यालोच्यते वा यस्मिंस्तदाज्ञाविचयं धर्म्मध्यानमिति प्राकृतत्वेन विजयमिति ॥ स्था० ॥ आज्ञा जिनप्रवचनं तस्या विचयो निर्णयो यत्र तदाज्ञाविचयम् प्राकृतत्वादाणाविजयमिति ॥ औप० ॥ग०॥ आज्ञा वा विजीयते अधिगमद्वारेण परिचितीक्रियते यस्मिन्नित्याज्ञाविजयम् ॥ स्था० ॥ आज्ञागुणानुचिन्तनात्मके धर्मध्यानभेदे, ॥औप० ॥ग०॥भ०॥ ग्द च आज्ञाया अनन्तत्वपूर्वापराविरोधित्वादिस्वरूपे चमत्कारपूर्वकचित्तविश्राम आज्ञाविचय इति ॥ अष्ट० ॥ अतीन्द्रियत्वाद्धेतूदाहरणादिसद्भावेऽपि बुध्यतिशयशक्तिविकलैः परलोकबन्धमोक्षधर्माधर्मादिभावेष्वत्यन्तदुःखावबोधेष्वाप्तप्रणयनात्संदिग्धविषयं तद्वचनं तथैवेत्याज्ञाविचय इति ॥ सम्म० ॥

धर्म्यमपि ज्ञानदर्शनचारित्रवैराग्यभावनाभिः कृताभ्यासस्य नयादिभिरतिगहनं न बुध्यते तुच्छमतिना परं सर्वज्ञमतं सत्यमेवेति चिन्तनमाज्ञाविचय इति ॥ ध० ॥

( एतत्स्वरूपमावश्यकचूर्णौ यथा ) "तत्थ आणाविजये। आणं विधेएति । जधा पंचत्थिकाए छज्जीवनिकाए अट्ठ पवयणमाता अण्णे य सुत्तनिबद्धे य पेच्छकहं आणाए परियाणिज्जंति । एवं चिंतेति । भासति य । तधा पुरिसादिकारणं पडुच्च किंचा मज्झेसु हेतुविसया तातेसु विवच्छउ । मुसव्वएणादिट्ठेसु एवमेतंति चिंतंतो भासंतो य आणं विधेयेति" ॥ आ० चू० ॥

आणाविराहणा—आज्ञाविराधना–स्त्री० आप्तोपदेशाननुपालने, ॥ पंचा० ॥

आणाविराहणाणुग—आज्ञाविराधनानुग–त्रि० आप्तोपदेशाननुपालनानुसारिणि, तथा च पंचाशकेऽशुभाध्यवसानमधिकृत्य "आणाविराहणाणुगमे य पिय होंति दट्ठव्वं" ॥ पंचा० ॥ इदं पुनरशुभाध्यवसानमाज्ञाविराधनामाप्तोपदेशाननुपालनामनुगच्छत्यनुसरतीत्याज्ञाविराधनानुगं भवतिस्याद्द्रष्टव्यं ज्ञेयमिति ॥ पंचा० ॥

आणाविवरीय—आज्ञाविपरीत–त्रि० आप्तवचनविपर्ययस्ते, "आणाविवरीयमेव य किंचि" आज्ञाविपरीतमेवाप्तवचनविपर्ययस्तमपीति ॥ पंचा० ॥

आणावेतव्व—आज्ञापयितव्य–त्रि० आदेशनीये, ॥ आचा० ॥

आणासार—आज्ञासार–त्रि० आप्तवचनप्रधाने, "आणासारं मुणेयव्वं" आज्ञासारमाप्तवचनप्रधानमिति ॥ पंचा० ॥

आणासिद्ध—आज्ञासिद्ध–त्रि० आप्तवचनसिद्धे, पुराणं मानवोधर्मः सांगो वेदश्चिकित्सितम् ॥ आज्ञासिद्धानि चत्वारि न हंतव्यानि हेतुभिः । इति परतीर्थिकाः ॥ सूत्र० ॥

आणाह—आनाह–पु० आ* नह–घञ् १ बन्धे, २ दैर्घ्ये, आनह्यते अपसरणप्रतिरोधेन बध्यते विण्मूत्रादि अनेन आ*नह करणे घञ् । ३ विण्मूत्ररोधसाधने वैद्यकोक्ते रोगभेदे, ॥ ॥ वाच० ॥

आणिज्जंत—आनीयमान–त्रि० प्राप्यमाणे, "णिज्जंता णिज्जंतो आणिज्जंतोत्ति" गृहपतिः गृहादानीयमानो वा ॥ वृ० ॥

आणि ( णी ) य—आनीत—त्रि० आ–नी—कर्मणि क्त"पानीयादिष्वत्" इति प्राकृतसूत्रेणेत्वम् ॥ प्रा० ॥ देशादेशान्तरं नीते, ॥ वाच० ॥ आहृते, ॥ प्रव० ॥

आणिसंस—आनृशंस्य–न० अनृशंसस्य भावः कर्म वा ष्यञ् १ अनिष्ठुरतायाम्, अनुकम्पायां च स्वार्थे ष्यञ् कारुण्ययुक्ते, ॥ वाच० ॥

आणील—आनील–पुं० ईषदर्थे आङ्! प्रा० स० । ईषन्नीलवर्णे, सामस्त्येन नीलवर्णे च "आणीलं च वत्थं रयावेहि" वस्त्रमम्बरं परिधानार्थं गुलिकादिना रंजय आनीलमीषन्नीलं सामस्त्येन वा नीलं भवतीति ॥ सूत्र० ॥ तद्वति, त्रि० । नीलघोटके, पु० ॥ हेम० ॥ तज्जातिस्त्रियां, स्त्री ङीप ॥ वाच० ॥

आणीवेय—आणीवेय–पुं० स्त्री० अणिरस्त्यस्य वा दीर्घः अणीव आरंभदस्तस्यापत्यम् शुभ्रा० ढक । अणीवर्धेरपत्ये, ॥ वाच० ॥

आणु—आनु—त्रि० अन् उण् प्राणिनि, ॥ वाच० ॥

आणुकंपिय–आनुकम्पिक–त्रि० अनुकम्पया चरतीत्यानुकम्पिकः ॥ भ० ॥ कृपावति, ॥ भ० ॥ प्रति० ॥

आणुगइय—आनुगतिक—त्रि० अनुगतमनुगमनं भावे क्त तेन निर्वृत्तः अक्षद्यूता० ठक् । अनुगमेन निर्वृत्ते सन्तोषादौ, ॥ वाच० ॥

आणुगामिय–आनुगामिक—त्रि० गच्छन्तं पुरुषमासमन्तादनुगच्छत्येवंशील आनुगामिअनुगाम्येवानुगामिकं स्वार्थे कप्रत्ययः । अथवा अनुगमः प्रयोजनं यस्य तदानुगामिकम् अनुशातिकादिपाठादुभयपदवृद्धिः॥आ०म० प्र०॥नं०॥स्था०॥ अनुगन्तरि, ( अनुगमनशीले ) ॥ ध० ॥ "आणुगामियं ति बेमि" आनुगामिकं तदार्जितपुण्यानुगमनादिति ॥ आचा० ॥ सहगन्तरि, "से एगईओ आणुगामियभावं पडिसंधाय" आनुगामुकभावं प्रतिसंधाय सहगन्तृभावेनानुकूल्यमप्रतिपद्येति ॥ सूत्र० ॥ अवधिज्ञानविशेषे, देशांतरगतमपि ज्ञानिनमनुगच्छति लोचनवत्तदवधिज्ञानमानुगामीति भावः ॥ कर्म० ॥

"आणुगामिओ णुगच्छइ गच्छंतं" । नं० ॥ स्था० ॥

( आनुगामिकानानुगामिकमिश्रावधिज्ञानस्वरूपं यथा )

अणुगामिओ य ओहि नेरइयाणं तहेव देवाणं ।
अणुगामि अणाणुगामी सो य मणुस्सतेरिच्छे ॥

अनुगमनशील आनुगामुकः यः समुत्पन्नोऽवधिः स स्वामिनं देशांतरमभिव्रजंतमनुगच्छति लोचनवदसौ आनुगामुक इत्यर्थः । ईदृश एवावधिर्भवति केषामित्याह–नारकाणां तथा देवानां चेति तथा आनुगामुक उक्तस्वरूपः अनानुगामुकस्त्ववस्थितशृंखलानि यंत्रितप्रदीपवद्विपरीतः यस्य तूत्पन्नस्यावधेर्देशो व्रजति स्वामिना सहान्यत्र देशस्तु प्रदेशांतरचलितपुरुषस्योपहतैकलोचनवदन्यत्र न व्रजति असौ मिश्र उच्यते एष त्रिविधोऽप्यवधिर्मनुष्येषु तिर्यक्षु च भवतीति निर्युक्तिगाथार्थः ॥ विशे० ॥ तत्रेहांतगतो न ग्राह्यो देवनारकाणामभ्यन्तरावधित्वात् किन्तु मध्यगतः सोऽप्यभव्याख्यानविशिष्टो, देवनारकाणां स्वावधिद्योतितक्षेत्रमध्यवर्त्तित्वात् तुशब्द एवकारार्थः । सचावधारणे । आनुगामिक एव यथोक्तरूपो नान्य इति केषामित्याह–नरान् कायंति स्वयोग्यानाह्वयंतीति नरकाः तेषु भवा नारकास्तेषां तथा दीव्यंति यथेच्छं क्रीडन्तीति देवाः तेषां मनुष्याश्च तिर्यक्च मनुष्यतिर्यक् तस्मिन्मनुष्यतिरश्चि। जातावेकवचनं ततोऽयमर्थः मनुष्येषु तिर्यक्षु आनुगामिक उक्त शब्दार्थः अनानुगामिकः अवस्थितः शृंखलादिनियंत्रितप्रदीप इव यो गच्छंतं पुरुषं नानुगच्छति आह च भाष्यकृत् । "अणुगामिकोणुगच्छइ गच्छंतं लोयणं जहा पुरिसं । इयरो उ णाणुगच्छइ धियप्पदीवोव्वगच्छंतं" । यस्य तूत्पन्नस्यावधेर्देशो व्रजति स्वामिना सहापरश्च देशः प्रदेशांतरचलितपुरुषस्योपहतैकलोचनवदन्यत्र न व्रजति स मिश्र उच्यते । उक्तं च-"उभयसहावो मीसो देसो जस्साणुजाइनो अन्नो । कस्सइ गयस्स कत्थइ एगं उवहम्मइ जहच्छि" । एष च भवति गाथासंक्षेपार्थः । देवनारकाणां सर्वात्मदेशजाभ्यंतरावधिरूपमध्यगत आनुगामिकाऽवधिः तिर्यङ्मनुष्याणां सर्वप्रभेद आनुगा-

मिकोऽनानुगामिको मिश्रश्चेति । आ० म० प्र० ॥
एतस्य भेदा नन्द्यध्ययने यथा ।

से किं तं आणुगामियं ओहिनाणं ? आणुगामियं ओहिनाणं दुविहं पएणत्तं तंजहा अंतगयं मज्झगयं च ॥

( से किं तमित्यादि ) अथ किं तदानुगामिकमवधिज्ञानम् । आनुगामिकमवधिज्ञानं द्विविधं प्रज्ञप्तं तद्यथा–अन्तगतं च मध्यगतं च । नं० ॥

अंतगयस्स मज्झगयस्स को पइविसेसो पुरओ अंतगएणं ओहिनाणेणं पुरओ चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ मग्गओ अंतगएणं ओहिनाणेणं मग्गओ चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ पासओ अंतगएणं ओहिनाणेणं पासओ चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ मज्झगएणं ओहिनाणेणं सव्वओ समंता संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ ॥

अन्तगतस्य मध्यगतस्य च परस्परं कः प्रतिविशेषः प्रतिनियतो विशेषः सूरिराह । पुरतोऽन्तगतमित्यादि पुरतोऽन्तगतेनावधिज्ञानेन पुरत एवाग्रत एव संख्येयानि एकादीनि शीर्षप्रहेलिकापर्यन्तान्यसंख्येयानि वा योजनानि एतावत्सु योजनेष्ववगाढं द्रव्यमित्यर्थः । जानाति पश्यति ज्ञानं विशेषग्रहणात्मकं, दर्शनं सामान्यग्रहणात्मकम् । तदेवं पुरतोऽन्तगतस्य शेषावधिज्ञानेभ्यो भेदः । एवं शेषाणामपि परस्परं भावनीयः । " नवरं सव्वओ समंता " इति सर्वतः सर्वासु दिग्विदिक्षु समन्तात्सर्वैरेवात्मप्रदेशैः सर्वैर्वा विशुद्धस्पर्द्धकैः । उक्तं च चूर्णौ । " सव्वउत्ति सव्वासु दिसि विदिसासु समंता इति सव्वायप्पएसेसु सव्वेसु वा विसुद्धफड्डगेसु इति " । अत्र सव्वायप्पएसेसु इत्यादौ तृतीयार्थे सप्तमी भवति च तृतीयार्थे सप्तमी यदाह पाणिनिः स्वप्राकृतलक्षणे व्यत्ययोऽप्यासामित्यत्र सूत्रे तृतीयार्थे सप्तमी यथा " तिसु तेसु अलंकिया पुहवी " इति । अथवा समंता इत्यत्र अवधिज्ञानी परामृश्यते समन्ता इति ज्ञाताशेषं तथैव ( नं० ) साध्यमसाध्यमभ्यादिकमनुगच्छति साध्याभावेन भवति यो धूमादिहेतुः सोऽनुगामी ततो जातमानुगामिकम् अनुमानं तद्रूपो व्यवसायोऽपि आनुगामिक एव । अनुमाने, तदात्मके व्यवसायविशेषे च । स्था० ४ ठा० ॥

आणुगामियत्ता-आनुगामिकता-स्त्री० परम्पराशुभानुबन्धे, "आणुगामियत्ताए भविस्सइ " आनुगामिकत्वाय शुभानुबन्धायेत्यर्थ इति ॥ भ० १ श० ३३ उ० ॥ "आणुगामियत्ताए अब्भुट्ठेत्ता भवति " आनुगामिकतायै परम्पराशुभानुबन्धायेति । दशा० ५ अ० । स्था० ॥ भवपरम्परासु, सानुबन्धसुखे च "आणुगामियत्ताए भविस्सइ " आनुगामिकत्वाय भवपरम्परासु सानुबन्धसुखाय भविष्यतीति ॥ दशा० १० अ० । निर० ॥

आणुधम्मिय-आनुधार्मिक-त्रि० अन्यैरपि तद्धार्मिकैस्समाचीर्णे, तथाचाचाराङ्गे भगवतो महावीरस्य विहारसमये इन्द्रप्रक्षिप्तवस्त्रधारणमधिकृत्य "एवं खु आणुधम्मियं तस्स" एतद्वस्त्रावधारणं तस्य भगवतोऽनु पश्चाद्धार्मिकमनुधार्मिकमेवेत्यपरैरपि तीर्थकृद्भिः समाचीर्णमित्यर्थ इति ॥ आचा० १ श्रु० ५ अ० १ उ० ॥

आणुपुव्व-आनुपूर्व्य-न० । पूर्वस्य पश्चादनुपूर्वं तस्य भाव इत्यर्थे गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ष्यञ् ॥ उत्त० १ अ० ॥ अनु० ॥ क्रमे, औप० ॥ परिपाट्याम्, ज्ञा० १ अ० ॥ विशिष्टरचनायाम्, सूत्र० २ श्रु० २ अ० ॥

आणुपुव्वट्ठिय-आनुपूर्व्यस्थित-त्रि० । विशिष्टरचनया स्थिते, सूत्र० २ श्रु० २ अ० ॥

आणुपुव्व ( व्वि ) सुजाय—आनुपूर्व्य ( र्वी ) सुजात—त्रि० । परिपाट्या सुष्ठुजाते, । तथा च वृत्तवर्णनमुपक्रम्य " आणुपुव्वसुजायरुइलवट्टभावपरिणया " आनुपूर्व्येण मूलादिपरिपाट्या सुष्ठु जाता रुचिरा वृत्तभावं च परिणता ये ते तथेति ॥ ज्ञा० १ अ० ॥ आनुपूर्व्या मूलादिपरिपाट्या जन्मदोषरहितं यथा भवति एवं जात आनुपूर्वीसुजात इति ॥ राज० ॥ जं० ॥ तथा च हृदवर्णनमुपक्रम्य " आणुपुव्वसुजायवप्पगंभीरसीयजले " आनुपूर्व्येण परिपाट्या सुष्ठु जाता वप्रास्तटा यत्र स तथा गम्भीरमगाधं शीतलं जलं यत्र स तथा ततः पदद्वयस्य कर्मधारयः ॥ ज्ञा० ४ अ० ॥ "आणुपुव्वसुसंहयंगुलीए" आनुपूर्व्येण क्रमेण वर्द्धमाना हीयमाना वा इति गम्यम् सुसंहता अविरला अङ्गुल्यः पादाग्रावयवा यस्य स तथेति ॥ औप० ॥

आणुपुव्विग-आनुपूर्वीग-त्रि० आनुपूर्वी क्रमस्तं गच्छतीत्यानुपूर्वीगः क्रमवति, ॥ आचा० १ श्रु० ६ अ० १ उ० । आणुपुव्विगमा एसो पव्वज्जासुत्तअत्थकरणं च " आचा० १ श्रु० ८ अ० ॥

आणुपुव्विगंठिय-आनुपूर्वीग्रन्थित—त्रि० परिपाट्या गुम्फिते, अन्ययूथिकानधिकृत्य " आणुपुव्विगंठिया " आनुपूर्व्या परिपाट्या ग्रन्थिता गुम्फिता आगुम्फितग्रन्थीनामादौ विधानादन्तोद्घितानां च क्रमेणान्त एव करणादिति ॥ भ० ५ श० ३ उ० ।

आणुपुव्विणाम-आनुपूर्वीनामन्—न० वृषभनासिकान्यस्तरज्जुसंस्थानीयाः कर्मसंहत्या विशिष्टं स्थानं प्राप्यतेऽसौ यया चोर्द्धोत्तमाङ्गाधश्चरणादिरूपो नियमतः शरीरविशेषो भवति सा आनुपूर्वीति । कर्म० । कूर्परलाङ्गलगोमूत्रिकाकाररूपेण यथाक्रमं द्वित्रिचतुः समय प्रमाणेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाटी आनुपूर्वी तद्विपाकवेद्या कर्मप्रकृतिरपि कारणे कार्योपचारादानुपूर्वी पंचा० ७ विव. कूर्परलाङ्गलगोमूत्रिकाकाररूपेण यथाक्रमं द्वित्रिचतुःसमयप्रमाणेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिगमनमानुपूर्वी तन्निबन्धनं नामानुपूर्वीनाम । कर्म० । नामकर्मभेदे, यदुदयादन्तराले गतो जीवो याति तदानुपूर्वी नामेति ॥ सम० ॥ तच्चतुर्विधम् नारकानुपूर्वीनाम १ तिर्यगानुपूर्वीनाम २ मनुष्यानुपूर्वीनाम ३ देवानुपूर्वीनामेति ४ कर्म० ॥ " आणुपुव्वी चउभेया " आनुपूर्वी चतुर्द्धा नारकतिर्यग्मनुष्यदेवानुपूर्वीभेदादिति ॥ प्रव० २१६ द्वा० । कर्म० । चतुर्द्धा गतिरिवानुपूर्वी प्रागुक्तरूपा भवति कोऽर्थो गत्यभिधानव्यपदेश्यमानुपूर्वीनाम ततो निरयानुपूर्वीतिर्यगानुपूर्वीमनुष्यानुपूर्वीदेवानुपूर्वीभेदत आनुपूर्वी नाम चतुर्द्धेति तात्पर्यम् । तत्र नरकगत्या नाम प्रकृत्या सहचरितानुपूर्वी नरकगत्यानुपूर्वी तत्समकालं चास्या वेद्यमानत्वात्सहचरितत्वम् । एवं तिर्यग्मनुष्यदेवानुपूर्व्योऽपि वाच्याः । कर्म० । ननु आनुपूर्व्या उदयो नरकादिषु किमृजुगत्या गच्छत आहोस्विद्वक्रगत्येत्याशङ्क्याह ( पुव्वीउदओ वक्के ) पूर्व्या आनुपूर्व्या वृषभस्य नासिकारज्जुकल्पाया उदयो विपाको

वक्र एव भवति । अयमर्थः नरके द्विसमयादिवक्रेण गच्छतो जीवस्य नरकानुपूर्व्या उदयः, तिर्यक्षु द्विसमयादिवक्रेण जीवस्य गच्छतस्तिर्यगानुपूर्व्या उदयः, मनुष्येषु द्विसमयादिवक्रेण गच्छतो जीवस्य मनुष्यानुपूर्व्या उदयः, देवेषु द्विसमयादिवक्रेण गच्छतो जीवस्य देवानुपूर्व्या उदयः । उक्तं च बृहत्कर्मविपाके- " नरयाउयस्स उदए, नरए वक्केण गच्छमाणस्स । नरयाणुपुव्विश्राए, तहिं उदओ अन्नहिं नत्थि । १ । एवं तिरिमणुदेवे, तेसु वि वक्केण गच्छमाणस्स । तासिमणुपुव्वियाणं, तहिं उदओ अन्नहिं नत्थि ॥ २ ॥ कर्म० ॥

आणुपुव्विविहारि-( न ) आनुपूर्वीविहारिन्-पुं० प्रव्रज्यादिक्रमेण विहारिणि, आचाराङ्गेऽष्टमाध्ययनस्याष्टमोद्देशार्थाधिकारमधिकृत्य ।

आणुपुव्विविहारीणं, भत्तपरिण्णायंगिनीमरणं ।

पायवगमणं च तहा,अहियारो होइ अट्ठमए। आचा०नि०।

अष्टमके त्वयमर्थाधिकारस्तद्यथा आनुपूर्वीविहारिणां प्रतिपालितदीर्घसंयमानां शास्त्रार्थग्रहणप्रतिपादनोत्तरकालमवसीदत्संयमाध्ययवाध्यापनक्रियाणां निष्पादितशिष्याणामुत्सर्गेता द्वादशसंवत्सरसंलेखनाक्रमसंलिखितदेहानां भक्तपरिज्ञेङ्गितमरणं पादपोपगमनं वा यथा भवति तथोच्यत इति ॥ आचा०१ श्रु०७ अ० १ उ० ।

तत्रैवानुपूर्वीविहारिणां मरणमधिकृत्य ।

आणुपुव्वेण विमोहाई, जाई धीरा समासज्ज ।

आनुपूर्वीक्रमस्तद्यथा प्रव्रज्याशिक्षासूत्रार्थग्रहणपरिनिष्ठितस्यैककालिकविहारित्वमित्यादि यदि वा आनुपूर्वो संलेखनाक्रमश्चत्वारि विकृष्टानीत्यादि तया आनुपूर्व्या यान्यभिहितानीति आचा०१ श्रु०८अ०७उ०"आणुपुव्वियसंखाए कम्मणाओत्ति उट्टत्ति" । आनुपूर्व्या प्रव्रज्यादिक्रमेण संयममनुपाल्य मम जीवतः कश्चिद्गुणो नास्तीत्यतः शरीरमोक्षावसरः प्राप्तस्तथा कस्मै मरणाय समर्थोऽहमित्येवं संख्याय ज्ञात्वा कर्माष्टभेदं तस्मात् त्रुटिष्यतीति त्रुट्यति वर्तमानसामीप्ये वर्तमानवद्वेत्यनेन भविष्यत्कालस्य वर्तमानतेति । आचा० १ श्रु०८ अ०।

आणुपुव्वी-आनुपूर्वी-स्त्री० पूर्वस्य पश्चादनुपूर्वं तस्य भाव इत्यर्थे गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ष्यञ् तस्य च षित्करणसामर्थ्यात् स्त्रीत्वे षिद्गौरादिभ्यश्चेति ङीष्यानुपूर्वी । क्रमे, परिपाट्याम, उत्त० १ अ० । आचा० ॥ राज० ॥ विशे०॥ पं० सं० ॥ जं० ॥ आनुपूर्वी अनुक्रमः अनुपरिपाटीति पर्यायाः क्र्यादिवस्तुसंघा इत्यर्थ इति ॥ अनु० ॥ " आणुपुव्वं पाणेहिं संजए " आनुपूर्व्या श्रमणधर्मप्रतिपत्त्यादिलक्षणया प्राणिषु यथाशक्त्या सम्यक् यतः संयत इति ॥ सूत्र० १ श्रु० २ अ० ३ उ० ॥ " आणुपुव्वियसंखाए " आनुपूर्व्या प्रव्रज्यादिक्रमेणेति ॥ आचा०१ श्रु०८ अ०८ उ०॥ विशिष्टरचनायाम,॥सूत्र० २ श्रु० १ अ० । तदात्मके शास्त्रीयोपक्रमभेदे, प्रकारान्तरेण शास्त्रनावोपक्रमभेदे च । अनु० ।

( १ ) आनुपूर्व्याः सामान्यतो भेदाः ।
( २ ) आनुपूर्व्याः द्रव्यादिना भेदाः ।
( ३ ) नैगमव्यवहारसम्मताया द्रव्यादिपूर्व्या निरूपणम ।
( ४ ) प्रसङ्गप्राप्तस्यानुगमस्य निरूपणम ।
( ५ ) संग्रहनयमतेन आनुपूर्व्या निरूपणम ।
( ६ ) प्रागुद्दिष्टाया औपनिधिक्या द्रव्यानुपूर्व्या निरूपणम ।
( ७ ) प्रागुद्दिष्टक्षेत्रानुपूर्व्या निरूपणम ।
( ८ ) क्रमप्राप्तकालानुपूर्व्या निरूपणम ।
( ९ ) उत्कीर्त्तनानुपूर्व्या निरूपणम ।
( १० ) गणनानुपूर्व्या निरूपणम ।
( ११ ) प्रागुद्दिष्टसंस्थानानुपूर्व्या निरूपणम ।
( १२ ) भावानुपूर्व्या निरूपणम ।

( १ ) आनुपूर्वीस्वरूपनिरूपणगर्भं भेदमाह ॥

से किं तं आणुपुव्वी आणुपुव्वी दसविहा पण्णत्ता तं-जहा नामाणुपुव्वी १ ठवणाणुपुव्वी २ दव्वाणुपुव्वी ३ खेत्ताणुपुव्वी ४ कालाणुपुव्वी ५ उक्कित्तणाणुपुव्वी ६ गणणाणुपुव्वी७ संठाणाणुपुव्वी८ सामाआरियाणुपुव्वी ९ भावाणुपुव्वी १० नामठवणाओ गयाओ ॥

(से किं तमित्यादि ) अथ किं तदानुपूर्वी वस्त्विति प्रश्नः । अत्र निर्वचनम (आणुपुव्वी दसविहेत्यादि) इह हि पूर्वं प्रथममादिरिति पर्यायाः पूर्वस्य अनु पश्चादनुपूर्वं तस्य भाव इति यत्प्रत्यये स्त्रियामीकारे चानुपूर्वी अनुक्रमो अनुपरिपाटीति पर्यायाः अदिवस्तुसंहा इत्यर्थः । इयमानुपूर्वी गणनानुपूर्वी संस्थानानुपूर्वी सामाचार्यानुपूर्वी भावानुपूर्वीति । अत्र नामस्थापनानुपूर्वी सूत्रं नामस्थापनावश्यकसूत्रव्याख्यानुसारेण व्याख्येया ॥

( २ ) द्रव्यादिना आनुपूर्वीभेदमाह ॥

से किं तं दव्वाणुपुव्वी दव्वाणुपुव्वी दुविहा पण्णत्ता ? तं जहा-आगमतो अ नो आगमतो अ । से किं तं आगमाओ दव्वाणुपुव्वी जस्स णं आणुपुव्वित्ति पदं सिक्खितं ठितं जितं मितं परिजितं जाव नो अणुपेहाए कम्हा अणुवओगो दव्वम्मि तिकट्टु णेगमस्स णं एगो अणुवउत्तो आगमतो एगा दव्वाणुपुव्वी जाव कम्हा जति जाणए अणुवउत्ते न भवति सेत्तं आगमओ दव्वाणुपुव्वी । से किं तं नो आगमतो दव्वाणुपुव्वी नो आगमतो दव्वाणुपुव्वी तिविहा पण्णत्ता ? तंजहा-जाणगसरीरदव्वाणुपुव्वी भवियसरीरदव्वाणुपुव्वी जाणगसरीरभविअसरीरव्वतिरित्ता दव्वाणुपुव्वी । से किं तं जाणगसरीरदव्वाणुपुव्वी जाणगसरीरदव्वाणुपुव्वी पदत्थाहिगारजाणयस्स जं सरीरयं ववगतचुतचावितं चत्तदेहं सेसं जहा दव्वावस्सए तहा भाणिअव्वं जाव सेत्तं जाणगसरीरदव्वाणुपुव्वी । से किं तं भविअसरीरदव्वाणुपुव्वी भविअसरीरदव्वाणुपुव्वी जे जीवे जोणीजम्मणनिक्खंते सेसं जहा दव्वावस्सए जाव सेत्तं भविअसरीरदव्वाणुपुव्वी । से किं तं जाणयसरीरभविअसरीरव्वतिरित्ता दव्वाणुपुव्वी जाणयसरीरभविअसरीरवतिरित्ता दव्वाणुपुव्वी दुविहा पण्णत्ता ? तं जहा उवणिहिआ य अणोवणिहिआ य । तत्थ णं जा सा उवणिहिआ सा ठप्पा ॥

अत्र नामस्थापनानुपूर्वीसूत्रे नामस्थापनावश्यकसूत्रव्याख्या-

नुसारेण व्याख्येये । द्रव्यानुपूर्वीसूत्रमपि द्रव्यावश्यकवदेव भावनीयं यावत्, " जाणगसरीरभवियसरीरवइरित्ता दव्वाणुपुव्वी दुविहेत्यादि " अत्र निधानं निधिर्निक्षेपो न्यासो विरचना प्रस्तारः स्थापनेति पर्यायास्तथा च लौकिके निधेहीदं निहितमिदमित्यत्र निपूर्वस्य धाञो निक्षेपोऽर्थः प्रतीत एव । उप सामीप्येन निधिरुपनिधिः एकस्मिन्विवक्षितेऽर्थः पूर्वं व्यवस्थितेऽपि ते तत्समीप एवापरापरस्य वक्ष्यमाणपूर्वानुपूर्व्यादिक्रमेण यन्निक्षेपणं स उपनिधिरित्यर्थः । उपनिधिः प्रयोजनं यस्या आनुपूर्व्याः सा औपनिधिकीति प्रयोजनार्थे इकण् प्रत्ययः । सामायिकाध्ययनादिवस्तूनां वक्ष्यमाणपूर्वानुपूर्व्यादिविस्तारप्रयोजनानुपूर्वी औपनिधिकीत्युच्यते इति तात्पर्यम । अनौपनिधिकी तु वक्ष्यमाणपूर्वानुपूर्व्यादिक्रमेण विरचनं प्रयोजनं यस्या इत्यनौपनिधिकी यस्यां वक्ष्यमाणपूर्वानुपूर्व्यादिक्रमेण विरचना न क्रियते सा त्र्यादि परमाणुनिष्पन्नस्कन्धविषया आनुपूर्वीति अनौपनिधिकीत्युच्यते इति भावः । आह नन्वानुपूर्वी परिपाटिरुच्यते भवतां च त्र्यणुकादिकोऽनन्ताणुकावसान एकैकस्कन्धो नौपनिधिक्यानुपूर्वीत्वेनाभिप्रेतो न च स्कन्धगतत्र्यादिपरमाणूनां नियता काचित्परिपाटिरस्ति विशिष्टैकपरिणामपरिणतत्वात्तेषां तत्कथमिहानुपूर्वीत्वं, सत्यं किंतु त्र्यादिपरमाणूनामादिमध्यावसानभावेन नियतपरिपाट्या व्यवस्थापनयोग्यताऽस्तीति योग्यतामाश्रित्यात्राप्यानुपूर्वीत्वं न विरुध्यते ( तत्थ णमित्यादि ) तत्र या सा चौपनिधिकी द्रव्यानुपूर्वी सा स्थाप्या सा न्यासिकी तिष्ठतु तावदल्पतरवक्तव्यत्वेन तस्या उपरि वक्ष्यमाणत्वादिति भावः । अनौपनिधिकी तु पश्चान्निर्दिष्टाऽपि बहुतरवक्तव्यत्वेन प्रथमं व्याख्यायते । बहुतरवक्तव्यत्वं हि वस्तुनि प्रथममुच्यमानेऽल्पतरवक्तव्यवस्तुगतः कश्चिदर्थस्तन्मध्येऽप्युक्त एव लभ्यते इति गुणाधिक्यं पर्यालोच्य सूत्रकारोऽनौपनिधिक्याः स्वरूपं विवरीषुराह ॥

तत्थ णं जा सा अणोवनिहिआ सा दुविहा पन्नत्ता तं जहा नेगमववहाराणं संगहस्स य ॥

(तत्थ णमित्यादि) तत्र याऽसावनौपनिधिकी द्रव्यानुपूर्वी सा नयवक्तव्यताश्रयणात् द्रव्यास्तिकनयमतेन द्विविधा प्रज्ञप्ता तद्यथा-नैगमव्यवहारयोः संग्रहस्य च नैगमव्यवहारसंमता संग्रहसंमता चेत्यर्थः । अयमत्र भावार्थः । इहाद्यतः सप्त नया भवन्ति नैगमादयः उक्तं च-नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढा एवंभूता नया एते च द्रव्यास्तिकपर्यायास्तिकलक्षणनयद्वयेऽन्तर्भाव्यन्ते द्रव्यमेव परमार्थतोऽस्मिन् पर्याया इत्यभ्युपगमपरः द्रव्यास्तिकः पर्याया एव वस्तुतः सन्ति न द्रव्यमित्यभ्युपगमपरः पर्यायास्तिकस्तत्राद्यास्त्रयो द्रव्यास्तिकाः शेषास्तु पर्यायास्तिकाः । पुनर्द्रव्यास्तिकोऽपि सामान्यतो द्विविधो विशुद्धोऽविशुद्धश्च । तत्र नैगमव्यवहाररूपो विशुद्धः संग्रहरूपस्त्वविशुद्धः कथं यतो नैगमव्यवहारावनन्तपरमाणू अनन्तद्व्यणुकाद्यनेकव्यक्त्यात्मकं कृष्णाद्यनेकगुणाधारं त्रिकालविषयं वा विशुद्धं द्रव्यमिच्छतः संग्रहश्च परमाण्वादिकं परमाण्वादिसाम्यादिकं तिरोभूतगुणकलापमविद्यमानपूर्वापरविभागं नित्यं सामान्यमेव द्रव्यमिच्छत्येतच्च किलानेकताद्यभ्युपगमकलङ्कनाकलङ्कितत्वादशुद्धं ततः शुद्धद्रव्याभ्युपगमपरत्वादयमेव शुद्धः । अत्र च द्रव्यानुपूर्वी विचारयितुं प्रक्रान्ता अतः शुद्धाशुद्धस्वरूपद्रव्यास्तिकमतेनैवासौ दर्शयिष्यते न पर्यायास्तिकमतेन पर्यायविचारस्यानुपक्रान्तत्वादित्यलं विस्तरेण ।

( ३ ) अथ नैगमव्यवहारसम्मतामिमां दर्शयितुमाह—

से किं तं नेगमववहाराणं अणोवनिहिआ दव्वाणुपुव्वी २ पंचविहा पन्नत्ता ! तं जहा-अट्ठपयपरूवणया १ भंगसमुक्कित्तणया २ भंगोवदंसणया ३ समोआरे ४ अणुगमे ५

अत्र निर्वचनम । [ नैगमववहाराणं अणोवणिहिया दव्वाणुपुव्वी पंचविहेत्यादि] अर्थपदप्ररूपणतादिभिः पञ्चभिः प्रकारैर्विचार्यमाणत्वात्पञ्चविधा पञ्चप्रकारा प्रज्ञप्ता तद्यथा-अर्थपदप्ररूपणता भङ्गसमुत्कीर्त्तनता भङ्गोपदर्शनता समवतारोऽनुगमः । एभिः पञ्चभिः प्रकारैर्नैगमव्यवहारनयमते न अनौपनिधिक्या द्रव्यानुपूर्व्याः स्वरूपं निरूप्यत इतीह तात्पर्यमित्यर्थः । त्र्यणुकस्कन्धादिस्तद्युक्तं तद्विषयं वा पदमानुपूर्व्यादिकं तस्य प्ररूपणं कथनं तद्भावोऽर्थपदप्ररूपणता इयमानुपूर्व्यादिका संज्ञा पञ्चधा तदभिधेयस्त्र्यणुकादिरर्थः । संज्ञीत्येवं संज्ञासंज्ञिसंबन्धकथनमात्रं प्रथमं कर्तव्यमिति भावार्थः । तेषामेवानुपूर्व्यादिपदानां समुदितानां वक्ष्यमाणन्यायेन संभविनो विकल्पा भङ्गा उच्यन्ते विभज्यन्ते विकल्प्यन्ते इति कृत्वा तेषां समुत्कीर्त्तनं समुच्चारणं भङ्गसमुत्कीर्त्तनं तद्भावो भङ्गसमुत्कीर्त्तनता आनुपूर्व्यादिपदनिष्पन्नानां प्रत्येकभङ्गानां द्व्यादिसंयोगभङ्गानां च समुच्चारणमित्यर्थस्तेषामेव सूत्रमात्रतया अनन्तरसमुत्कीर्त्तितभङ्गानां प्रत्येकं स्वाभिधेयेन त्र्यणुकाद्यर्थेन सहोपदर्शनं भङ्गोपदर्शनं तद्भावो भङ्गोपदर्शनता भङ्गसमुत्कीर्त्तने भङ्गविषयं सूत्रमेव केवलमुच्चारणीयं भङ्गोपदर्शने तु तदेव स्वविषयभूतेनार्थेन सहोच्चारयितव्यमिति विशेषः तथा तेषामेवानुपूर्व्यादिद्रव्याणां सत्पदप्ररूपणादिभिरनुयोगद्वारैरनुगमनं विचारणमनुगमः ॥

तत्राद्यभेदं विवरीषुराह ।

से किं तं नेगमववहाराणं अट्ठपयपरूवणया नेगमववहाराणं अट्ठपयपरूवणया तिपएसिआए आणुपुव्वी चउप्पएसिए आणुपुव्वी जाव दसपएसिए आणुपुव्वी संखेज्जपएसिए आणुपुव्वी असंखिज्जपएसिए आणुपुव्वी अणंतपएसिए आणुपुव्वी परमाणुपोग्गले अणाणुपुव्वी दुपएसिए अवत्तव्वए तिपएसिए आणुपुव्वी उ जाव अणंतपएसिआओ आणुपुव्वीओ परमाणुपोग्गला अणाणुपुव्वीओ दुपएसिओ अवत्तव्वयाइ सेत्तं अट्ठपयपरूवणया

अथ केयं नैगमव्यवहारयोः सम्मता अर्थपदप्ररूपणतेत्यत्रोत्तरमाह-"नेगमववहराणमित्यादि" त्रयः प्रदेशाः परमाणुत्रयलक्षणा यत्र स्कन्धे त्र्यणुकानुपूर्वीत्युच्यते एवं यावदनन्ता अणवो यत्र ते अनन्ताणुकाः सोऽप्यानुपुर्वीत्युच्यते । [ परमाणुपोग्गलेत्ति ] एकः परमाणुः परमाण्वन्तरासक्तोऽनानुपूर्वीत्यभिधीयते । द्वौ प्रदेशौ यत्र स द्विप्रदेशिकः स्कन्धो वक्तव्यः इत्याख्यायते बहवस्त्रिप्रदेशिकादयः स्कन्धाः आनुपूर्व्यो बहवश्चैकाकिपरमाणवोऽनानुपूर्व्यो बहूनि च त्र्यणुकस्कन्धद्रव्याण्यवक्तव्यकानि । आनुपूर्व्यां प्रक्रान्तायामनानुपूर्व्यवक्तव्यकयोः प्ररूपणमसंगतमिति

चेन्न तत्प्रतिपक्षत्वात्त्रयाणामपि प्ररूपणीयत्वात् प्रतिपक्षपरिज्ञाने च प्रस्तुते वस्तुनः सुखावसेयत्वादिति भावार्थः। इहानुपूर्वी अनुपरिपाटिरिति पूर्वमुक्तं सा च यत्रैवादिमध्यान्तलक्षणसंपूर्णा गणनानुक्रमोऽस्ति तत्रैवोपपद्यते नान्यत्र एतच्च त्रिप्रदेशिकादिस्कन्धेष्वेव । तथा हि यस्मात्परमस्ति न पूर्वं स आदिः यस्मात् पूर्वमस्ति न परं सोऽन्तस्तयोश्चान्तरं मध्यमुच्यते अयं च संपूर्णा गणनानुक्रमस्त्रिप्रदेशादिस्कन्ध एव न परमाणुः तस्यैकद्रव्यत्वेनादिमध्यान्तव्यवहाराभावात् एवायमनानुपूर्वीत्वेनोक्तः। नापि द्व्यणुकः स्कन्धः तत्रापि मध्याभावेन संपूर्णगणनानुक्रमाभावादत्राह–ननु पूर्वस्यानु पश्चादनुपूर्वं तस्य भाव आनुपूर्वीति पूर्वं व्याख्यातम् एतच्च द्व्यणुकस्कन्धेऽपि घटत एव परमाणुद्वयस्यापि परस्परापेक्षया पूर्वपश्चाद्भावस्य विद्यमानत्वात्ततः संपूर्णगणनानुक्रमाभावेऽपि कस्मादयमप्यानुपूर्वी न भवति नैतदेवं यतो यथा मेर्वादिके क्वचित्पदार्थमध्यावधिभूतस्य कस्यचिद्भावस्य मध्ये व्यवस्थापितोऽप्रसिद्धस्तथा यदात्रापि स्यात्तदा स्यादप्येवं न चैवमत्रास्ति मध्येऽवधिभूतस्य कस्यचिदभावतोऽसांकर्येण पूर्वपश्चाद्भावस्यासिद्धत्वाद्यद्येवं परमाणुवत् द्व्यणुकस्कन्धोऽप्यनानुपूर्वीत्वेन कस्मान्नोच्यते सत्यं किंतु परस्परापेक्षया पूर्वपश्चाद्भावमात्रस्य सद्भावादेवमप्यभिधातुमशक्योऽसौ तस्मादानुपूर्व्यनानुपूर्वीप्रकाराभ्यां वक्तुमशक्यत्वादवक्तव्यकमेव द्व्यणुकस्कन्धस्तस्माद्व्यवस्थितमिदम् । मध्यान्तभावेऽवधिभूतमध्यवर्त्तिनमपेक्ष्यासांकर्येण मुख्यस्य पूर्वपश्चाद्भावस्य सद्भावात् त्रिप्रदेशादिस्कन्ध एवानुपूर्वीपरमाणुस्तूक्तयुक्त्या नानुपूर्वी द्व्यणुकोऽवक्तव्यकः इत्येवं रूपा अर्थपदप्ररूपणा कृता भवति । यद्येवं त्रिप्रदेशिक आनुपूर्वी इत्यादि बहुवचननिर्देशः किमर्थः ? एकत्वमात्रेणैव संज्ञासंज्ञिसंबन्धकस्य तस्यासिद्धत्वात्सत्यं किंत्वानुपूर्व्यादिद्रव्याणां प्रतिभेदमनन्तव्यक्तेः ख्यापनार्थो नैगमव्यवहारयोरित्थंभूताभ्युपगमप्रदर्शनार्थश्च बहुत्वनिर्देश इत्यदोषः । अत्राह–नन्वनानुपूर्वीद्रव्यमेकेन परमाणुना निष्पद्यते अवक्तव्यद्रव्यं परमाणुद्वयेन आनुपूर्वीद्रव्यं तु जघन्यतोऽपि परमाणुत्रयेण इत्थं द्रव्यवृद्ध्या पूर्वानुपूर्वीक्रममाश्रित्य प्रथममनानुपूर्वी ततो वक्तव्यकम् ततश्चानुपूर्वीत्येवं निर्देशो युज्यते पश्चानुपूर्वीक्रमाश्रयणे तु व्यत्ययेन युक्तस्तत्कथं क्रमद्वयमुल्लङ्घ्यान्यथा निर्देशः कृतः सत्यमेतत्किंत्वनानुपूर्व्यपि व्याख्याङ्गमिति स्थापनार्थः । यदि वा त्र्यणुकचतुरणुकादीन्यानुपूर्वीद्रव्याण्यनानुपूर्व्यवक्तव्यकद्रव्यं तेभ्योऽनानुपूर्वी द्रव्याण्यल्पानि तेभ्योऽप्यवक्तव्यकद्रव्याण्यल्पतराणीत्यत्रैव वक्ष्यते ततश्चेत्थं द्रव्यहान्याऽऽनुपूर्व्यनुपूर्वीक्रमनिर्देश एवमित्यलं विस्तरेण सेत्तमित्यादि निगमनम् ॥

एआए णं नेगमववहाराणं अट्ठपयपरूवणयाए किं पओअणं ? एआए णं नेगमववहाराणं अट्ठपयपरूवणयाए नेगमववहाराणं भंगसमुक्कित्तणया कज्जइ ॥

( एताएणमित्यादि ) एतदर्थपदप्ररूपणतया संज्ञासंज्ञिव्यवहारो निरूपितस्तस्मिंश्च सत्येव भङ्गकाः समुत्कीर्त्तयितुं शक्यन्ते नान्यथा संज्ञामन्तरेण निर्विषयाणां भङ्गानां प्ररूपयितुमशक्यत्वात्तस्मादुक्तमुक्तमेतदर्थपदप्ररूपणतया भङ्गसमुत्कीर्त्तना क्रियत इति ॥

तामेव भङ्गसमुत्कीर्त्तनां निरूपयितुमाह ॥

से किं तं नेगमववहाराणं भंगसमुक्कित्तणया ? अत्थि आणुपुव्वी १ अत्थि अणाणुपुव्वी २ अत्थि अवत्तव्वए ३ अत्थि आणुपुव्वीओ १ अत्थि अणाणुपुव्वीओ २ अत्थि अव्वत्तव्वयाइं ६ इकसंयोगी ६ भंगा । अहवा अत्थि आणुपुव्वी अणाणुपुव्वी अ १ अहवा अत्थि आणुपुव्वी अ अणाणुपुव्वीओ अ २ अहवा अत्थि आणुपुव्वीओ अ अणाणुपुव्वी अ ३ अहवा अत्थि आणुपुव्वीओ अ अणाणुपुव्वीओ अ ४ अहवा अत्थि आणुपुव्वी अ अव्वत्तव्वए अ ५ अहवा अत्थि आणुपुव्वी अ अवत्तव्वयाइं च ६ अहवा अत्थि आणुपुव्वीओ अ अव्वत्तव्वए अ ७ अहवा अत्थि आणुपुव्वीओ अ अवत्तव्वयाइं च ८ अहवा अत्थि अणाणुपुव्वी अवत्तए अ ९ अहवा अत्थि अणाणुपुव्वी अ अवत्तव्वयाइं च १० अहवा अत्थि अणाणुपुव्वीओ अवत्तव्वए अ ११ अहवा अत्थि अणाणुपुव्वीओ अ अवत्तव्वयाइं च ॥ १२ ॥ द्विकसंयोगी भङ्गा अहवा अत्थि अणाणुपुव्वी अ आणुपुव्वी अ अवत्तव्वए अ १ अहवा अत्थि आणुपुव्वी अ अणाणुपुव्वी अ अवत्तव्वयाइं च २ अहवा अत्थि आणुपुव्वीओ अ अणाणुपुव्वीओ अ अवत्तव्वए अ ३ अहवा अत्थि आणुपुव्वीओ अणाणुपुव्वीओ अवत्तव्वयाइं च ४ अहवा अत्थि आणुपुव्वीओ अ अणाणुपुव्वी अ अवत्तव्वए अ ५ अहवा अत्थि आणुपुव्वीओ अ अणाणुपुव्वी अ अवत्तव्वयाइं च ६ अहवा अत्थि आणुपुव्वीओ अ अणाणुपुव्वी-अ अवत्तव्वए अ ७ अहवा अत्थि आणुपुव्वीओ अ अणाणुपुव्वी अ अवत्तव्वयाइं च ८ त्रिकसंयोगीभंगा अट्ठभंगा एए सव्वे छव्वीसं भंगा सेत्तं नेगमववहाराणं भंगसमुक्कित्तणयाए ॥

प्रश्नोत्तरानुपूर्व्यादिपदत्रयेणैकवचनान्तेन त्रयो भङ्गा भवन्ति बहुवचनान्तेनापि तेन त्रय एव भङ्गा एवमेते संयोगतः प्रत्येकं भङ्गाः षट् भवन्ति संयोगपक्षे तु पदत्रयस्यास्य त्रयो द्विकसंयोगा एकैकस्मिंस्तु द्विकसंयोगे एकवचनबहुवचनाभ्यां चतुर्भङ्गी सद्भावतः त्रिष्वपि द्विकसंयोगेषु द्वादशभङ्गाः संपद्यन्ते त्रिकसंयोगस्त्वत्रैक एव तत्र च इति एकवचनान्तास्त्रयः एते बहुवचनान्तास्त्रयः एकवचनबहुवचनाभ्यामष्टौ भङ्गाः सर्वेऽप्यमी षड्विंशतिरत्र स्थापना चेयम् ।

आनुपूर्वी १ अवक्तव्यक १ योगे चतुर्भङ्गी इति द्वितीयद्रव्यानुपूर्वी १ अवक्तव्यक १ योगे चतुर्भङ्गी सा आनुपूर्वी १ इति प्रथमद्वितीयानुपूर्वी ३ आनुपूर्वी १ अवक्तव्यक ३ चतुर्भङ्गी आनुपूर्वी अनानुपूर्वी नानुपूर्वी अवक्तव्यक ३ इति त्रिकयोग इति अनानुपूर्वी १ त्रिकयोगाः अनानुपूर्वी ३ आनुपूर्वी ३ अवक्तव्यक १ भवन्ति । आनुपूर्वी १ अनानुपूर्वी ३ नानुपूर्वी अवक्तव्यक १ अवक्तव्य १ अष्टभङ्गा अवक्तव्य ४ आनुपूर्वी ३ अवक्तव्यक ३ व्युत्क्रमेण आनुपूर्वी ३ आनुपूर्वी ३ नानुपूर्वी ३ अवक्तव्यक ३ सर्वेऽपि षड्विंशतिरेवैते चोत्तरं प्रयच्छता अनेन सूत्रेऽपि लिखिताः सन्तीति भावनीयाः । अथ किमर्थं भङ्गकसमुत्कीर्त्तनं क्रियत इति चेदुच्यते इहानुपूर्वी

द्विभिस्त्रिभिःपदैरेकवचनबहुवचनांतैः प्रत्येकचिंतया संयोगचिंतया च षड्विंशतिभंगाः जायंते तेषु च मध्येयेन केन चिद्भंगेन वक्ता द्रव्यं वक्तु मिच्छति तेन प्रतिपादयितुः सर्वानपि प्रतिपादनप्रकारानेनकरूपत्वान्नैगमव्यवहारनयाविच्छन्न इति प्रदर्शनार्थं भंगकसमुत्कीर्त्तनमिति सेत्तमित्यादि निगमनं उक्ता भंगसमुत्कीर्त्तनता ॥ टी० ॥ अनु० ॥

| | | |
|---|---|---|
| अवक्तव्यक १ | आनुपूर्वी १ | अनानुपूर्वी १ |
| अवक्तव्यक ३ | आनुपूर्वी १ | अनानुपूर्वी १ |
| अवक्तव्यक १ | आनुपूर्वी १ | अनानुपूर्वी ३ |
| अवक्तव्यक ३ | आनुपूर्वी १ | अनानुपूर्वी ३ |
| अवक्तव्यक १ | आनुपूर्वी ३ | अनानुपूर्वी १ |
| अवक्तव्यक ३ | आनुपूर्वी ३ | अनानुपुर्वी १ |
| अवक्तव्यक १ | आनुपूर्वी ३ | अनानुपूर्वी ३ |
| अवक्तव्यक ३ | आनुपूर्वी ३ | अनानुपूर्वी ३ |

अथ भंगोपदर्शनतां प्रतिपिपादयिषुराह ।

एआएणं नेगमववहाराणं भंगसमुक्कित्तणयाए किं पओअणं एआएणं नेगमववहाराणं भंगसमुक्कित्तणयाए नेगमववहाराणं भंगोवदंसणया कीरइ ॥ अनु० मू० ॥

एतापणमित्यादि। एतया भंगसमुत्कीर्त्तनया किं प्रयोजनमित्यत्रोत्तरमाह। एतापणमित्यादि। एतया भंगसमुत्कीर्त्तनया भंगोपदर्शनता क्रियते इदमुक्तं भवति भंगसमुत्कीर्त्तनतया भंगकसूत्रमुक्तं भंगोपदर्शनतायां तस्यैव वाच्यं त्र्यणुकस्कंधादिकं कथयिष्यते ततश्चात्र समुत्कीर्त्तिते एव कथयितुं शक्यते वाचकमंतरेण वाच्यस्य कथयितुमशक्यत्वादतो युक्तं भंगकसमुत्कीर्त्तनतायां भंगोपदर्शनताप्रयोजनमत्राह-ननु भंगोपदर्शनतया वाच्यस्य त्र्यणुकस्कंधादेः कथनकाले आनुपूर्व्यादिसूत्रं पुनरप्युत्कीर्त्तयिष्यति तत् किं भंगसमुत्कीर्त्तनया प्रयोजनमिति । सत्यं किंतु भंगसमुत्कीर्तनतासिद्धस्यैव सूत्रस्य भंगोपदर्शनतायां वाच्यवाचकभावसुखप्रतिपत्त्यर्थं प्रसंगतः पुनरपि समुत्कीर्त्तनं करिष्यते न मुख्यतयेत्यदोषः। यथाहि संहिता च पदं चैवेत्यादि व्याख्याक्रमसूत्रं संहिताकाले समुच्चारितमपि पदार्थकथनकाले पुनरप्यर्थकथनार्थमुच्चार्यते तद्वदत्रापीति भावः ॥ टी० अनु० ॥

अथ केयं पुनर्भंगोपदर्शनतेति प्रश्नपूर्वकन्तामेव निरूपयितुमाह ॥

से किं तं नेगमववहाराणं भंगोवदंसणया ? तिपएसिए आणुपुव्वी १ परमाणुपोग्गले अणाणुपुव्वी १ दुपएसिए अवत्तव्वए ३ अहवा तिपएसियानुपुव्वीओ परमाणुपोग्गला अणाणुपुव्वीओ दुपएसिया अव्वत्तव्वयाइं ३ अहवा तिपएसिया परमाणुपोग्गले अ आणुपुव्वी अ अणाणुपुव्वी अ १ चउभंगो अहवा दुपएसिय तिपएसिए अ आणुपुव्वी अ अव्वत्तव्वए य २ चउभंगो अहवा दुपएसिआ य परमाणुपोग्गले अ अवत्तव्वए- य आणुपुव्वी अ ३ अहवा तिपएसिआ य परमाणुपोग्गला य आणुपुव्वीओ अ अणाणुपुव्वीओ अ ४ अहवा तिपएसिए अ दुपएसिए अ आणुपुव्वी अ अवत्तव्वए अ ५ अहवा तिपएसिए अ दुपएसिआ य आणुपुव्वी अ अवत्तव्वयाइं च ६ अहवा तिपएसिआ य आणुपुव्वी अ अवत्तव्वयाइं च ७ अहवा तिपएसिआय दुपएसिए अ आणुपुव्वीओ अ अवत्तव्वए अ अहवा तिपएसिआ य दुपएसिए अ आणु० अवत्तव्वए अ अहवा तिपएसिआ य दुपएसिआ य आणु० अवत्तव्वयाइं च ८ अहवा परमाणुपोग्गले अ दुपएसिए अणाणु० अवत्तव्वए अ ९ अहवा परमाणुपोग्गले अ दुपएसिआ य अणाणु० अवत्तव्वयाइं च १० अहवा परमाणुपोग्गला य दुपएसिए अ अणाणु० अवत्तव्वए अ ११ अहवा परमाणुपोग्गला य दुपएसिआ य अणाणु० अवत्तव्वयाइं च १२ अहवा तिपएसिए अ परमाणुपोग्गले अ दुपएसिए अ आणुपुव्वी अ अणाणु० अवत्तव्वए अ १ अहवा तिपएसिए अ परमाणुपोग्गले य दुपएसिआ य आणुपुव्वी अ अणाणुपुव्वा अ अवत्तव्वयाइं च २ अहवा तिपएसिए अ परमाणुपुग्गले अ दुपएसिआ य आणुपुव्वी अ अणाणुपुव्वीओ अ अवत्तव्वए अ ३ अहवा तिपएसिए अ परमाणुपोग्गला य दुपएसिए अ आणुपुव्वी अ अणाणुपुव्वीओ अ अवत्तव्वए अ ४ अहवा तिपएसिए अ परमाणुपोग्गला य दुपएसिआ य आणुपुव्वी अ अणाणुपुव्वीओ अ अवत्तव्वए अ ५ अहवा तिपएसिआ य परमाणुपोग्गले अ दुपएसिए अ आणुपुव्वीओ अ अणाणुपुव्वीओ अ अवत्तव्वयाइं च ६ अहवा तिपएसिआ य परमाणुपोग्गले अ दुपएसिआ य आणुपुव्वीओ अ अणाणुपुव्वी अवत्तव्वआ ७ अहवा तिपएसिआ य परमाणुपोग्गले अ दुपएसिआ य आणुपुव्वीओ अ अणाणुपुव्वीओ अवत्तव्वयाइं च ८ सेत्तं नेगमववहाराणं भंगोवदंसणया ॥ अनु० मू० ॥

से किं तमित्यादि तिपएसिए आणुपुव्वित्ति त्रिप्रदेशिकोऽर्थः आनुपूर्वीत्युच्यते ? त्रिप्रदेशिकस्कंधलक्षणेनार्थेनानुपूर्वीति भंगको निष्पद्यत इत्यर्थः । एवं परमाणुपुद्गललक्षणोऽर्थोनानुपूर्वीत्युच्यते द्विप्रदेशिकस्कंधलक्षणोऽर्थोऽव्यक्तमुच्यते एवं बहवस्त्रिप्रदेशिका आनुपूर्व्यः बहवःपरमाणुपुद्गला अनानुपूर्व्यःबहवो द्विप्रदेशिकस्कंधा अयुक्तव्यकानीति षण्णांप्रत्येकभगानामर्थकथनम। एवं द्विकसंयोगेऽपि त्रिप्रदेशिकस्कंधः परमाणुपुद्गलश्चानुपूर्व्यनानुपूर्व्यिवेनोच्यते यदा त्रिप्रदेशिकस्कंधः परमाणुपुद्गलश्च प्रतिपादयितुमभीष्टो भवति। तदा अत्थि आणुपुव्वी अणाणुपुव्वी इत्येवं भंगोनिष्पद्यत इत्यर्थः एवमर्थकथनपुरस्सराः शेषभंगा अपि भावनीयाः। अत्राह। नन्वर्थोऽप्यानुपूर्व्यादिपदानां त्र्यणुकस्कंधादिकोर्थः पदप्ररूपणतालक्षणे प्रथमद्वारे कथितएव तत्किमनेन- सत्यं किंतु तत्र पदार्थमात्रमुक्तमत्रतु तेषामेवानुपूर्व्यादिपदानां भंगकरचनासमाविष्टायामर्थः कथ्यत इत्यदोषः

नयमतवैचित्र्यप्रदर्शनार्थं वा पुनरित्थमर्थोपदर्शनमित्यलं विस्तरेण। सेत्तमित्यादि निगमनमुक्ता भङ्गोपदर्शनता॥टी०॥ अनु० ॥ अथ समवतारं विभणिषुराह—

से किं तं समोआरे ? नेगमववहाराणं आणुपुव्वीदव्वाइं कहिं समोअरंति किं आणुपुव्विदव्वेहिं समोअरंति अणाणुपुव्विदव्वेहिं समोअरंति अवत्तव्वयदव्वेहिं समोअरंति आणुपुव्वीदव्वेहिं समोअरंति नो अणाणुपुव्वीदव्वेहिं समोअरंति नो अवत्तव्वयदव्वेहिं समोअरंति नेगमववहाराणं अणाणुपुव्विदव्वाइं कहिं समोअरंति किं आणुपुव्विदव्वेहिं समोअरंति अणाणुपुव्विदव्वेहिं समोअरंति अवत्तव्वयदव्वेहिं समोअरंति नो आणुपुव्विदव्वेहिं समोअरंति अणाणुपुव्विदव्वेहिं समोअरंति नो अवत्तव्वयदव्वेहिं समोअरंति । नेगमववहाराणं अवत्तव्वयदव्वाइं कहिं समोअरंति किं आणुपुव्विदव्वेहिं समोअरंति अणाणुपुव्विदव्वेहिं समोअरंति अवत्तव्वयदव्वेहिं समोअरंति नो आणुपुव्विदव्वेहिं समोअरंति नो अणाणुपुव्विदव्वेहिं समोअरंति अवत्तव्वयदव्वेहिं समोअरंति सेत्तं समोआरे ।। अनु० ।।

अथ कोयं समवतार इति प्रश्ने सत्याहसमोआरेत्तिअयंसमवतार उच्यत इतिशेषः । कःसमवतार इत्याह नेगमववहाराणं आणुपुव्वी दव्वाइं कहिं । समोयरंतीत्यादि प्रश्नः सानैगमव्यवहाराणां आनुपुर्वी इत्यादि आणुपूर्वीद्रव्यानुपूर्वी द्रव्यलक्षणायां स्वजातावेव वर्त्तते न स्वजात्यतिक्रमेणेत्यर्थः इदमुक्तं भवति । सम्यगविरोधेनावतरणं वर्त्तनं समवतारो ऽविरोधवृत्तिता प्रोच्यते सा च स्वजातिवृत्तमिव स्यात् परजातिवृत्तेर्विरुद्धत्वात्ततो नानादेशादिवृत्तीनपि सर्वानुपूर्वीद्रव्येष्वेव वर्त्तत इति स्थितम् एवमनानुपूर्व्यादीनामपि स्वस्थानावतारो भावनीयः । सेत्तमित्यादि निगमनमुक्तः समवतारः ॥ टी० अनु० ॥

( ४ ) अथानुगमं विभणिषुरुपक्रम्यते

से किं तं अणुगमे ? नवविहे पण्णत्ते तं जहा संतपयपरूवणया १ दव्वपमाणं च २ खित्त ३ फुसणा य ४ कालो य ५ अंतरं ६ भाग ७ भाव ८ अप्पाबहुं चेव ९ ।। अनु० ।।

अत्रोत्तरम्। अणुगमे नवविहे इत्यादि तत्र सूत्रार्थस्यानुकूलमनुरूपं वा गमनं व्याख्यानमनुगमः । अथवा सूत्रपठनादनुपश्चाद्गमनं व्याख्यानमनुगमः । यदि वा अनुसूत्रमर्थोगम्यते ज्ञायते अनेनेत्यनुगमो व्याख्यानमेवेत्याद्यन्यदपि वस्त्वपि विरोधेन स्वधिया वाच्यमिति स च नवविधो नवप्रकारो भवति । तदेव नवविधत्वं दर्शयति तद्यथेत्युपदर्शनार्थः । संतपयगाहा सदर्थविषयं पदं सत्पदं तस्य प्ररूपणं प्रज्ञापनं सत्पदप्ररूपणं तस्य भावः सत्पदप्ररूपणता सा प्रथमं कर्त्तव्या । इदमुक्तं भवति । इह स्तम्भकुंभादीनि पदानि सदर्थविषयाणि खरशृंगव्योमकुसुमादीनि त्वसदर्थविषयाणि दृश्यन्ते तत्रानुपूर्व्यादि पदानि किंस्तंभादिपदानीव सदर्थविषयाण्याहु उत खरविषाणादिपदवत् असदर्थगोचराणि एतत्प्रथमं पर्यालोचयितव्यं तथा आनुपूर्व्यादिपदाभिधेयद्रव्याणां प्रमाणं संख्यास्वरूपं प्ररूपणीयम् च समुच्चये एवमन्यत्रापि तेषामेव क्षेत्रं तदाधारस्वरूपं प्ररूपणीयं कियति क्षेत्रे तानि भवंतीति चिंतनीयमित्यर्थः । तथा स्पर्शना च वक्तव्या कियत्क्षेत्रं तानि स्पृशंतीति चिंतनीयमित्यर्थः । कालश्च तत्स्थितिलक्षण उच्यते तथा अंतरं विवक्षितस्वभावपरित्यागे सति पुनस्तद्भावाप्राप्तिविरहलक्षणं प्ररूपणीयं तथा आनुपूर्वीद्रव्याणि शेषद्रव्याणां कतिभागेवर्त्तते इत्यादिलक्षणो भागः प्ररूपणीयः तथा आनुपूर्व्यादिद्रव्याणि कस्मिन् भावे वर्त्तते इत्येवंरूपो भावः । प्ररूपणीयस्तथा अल्पबहुत्वं चानुपूर्व्यादिद्रव्याणां द्रव्यार्थप्रदेशार्थ उभयार्थताश्रयणेन परस्परं स्तोकबहुत्वचिंतालक्षणं प्ररूपणीयं एवकारोऽवधारणे एतावत्प्रकार एवानुगम इति गाथासमासार्थः ॥ टी० अनु० ॥

विस्तरार्थन्तु ग्रन्थकारः स्वयमेव विभणिषुराद्यावयवमधिकृत्याह ॥

नेगमववहाराणं आणुपुव्विदव्वाइं किं अत्थि णत्थि णियमा अत्थि नेगमववहाराणं अणाणुपुव्वीदव्वाइं किं अत्थि णत्थि नियमा अत्थि नेगमववहाराणं अवत्तव्वगदव्वाइं किं अत्थि णत्थि नियमा अत्थि ।। अनु० ।।

नैगमव्यवहारयोरानुपूर्वीशब्दाभिधेयानि द्रव्याणि त्र्यणुकस्कंधादीनि किं संति इति प्रश्नोत्तरं नियमा अत्थि इति। एतदुक्तं भवति । नेदं खरशृंगादिवदानुपूर्वीपदमसदर्थगोचरमतो नियमात्संति तदभिधेयानि द्रव्याणि तानि च त्र्यणुकस्कंधादीनि पूर्वं दर्शितान्येव एवमनानुपूर्व्यवक्तव्यकपक्षे द्वावपि वाच्यौ कृता सत्पदप्ररूपणा ॥ टी० ॥ अनु०॥

अथ द्रव्यप्रमाणमभिधित्सुराह–

नेगमववहाराणं आणुपुव्विदव्वाइं किं संखिज्जाइं असंखिज्जाइं अणंताइं नो संखिज्जाइं नो असंखिज्जाइं अणंताइं एवं अणाणुपुव्विदव्वाइं अवत्तव्वगदव्वाइं च अणंताइं भाणिअव्वाइं ।। अनु० ।।

अयमत्र भावार्थः इहानुपूर्व्यवक्तव्यकद्रव्याणि प्रत्येकमनन्तान्येकैकस्मिन्नप्याकाशप्रदेशे प्राप्यंते किं पुनः सर्वलोकतः संख्येयासंख्येयप्रकारद्वयनिषेधेन त्रिष्वपि स्थानेष्वानेतव्यं । न च वक्तव्यं कथमसंख्येये लोके अनंतानि द्रव्याणि तिष्ठंति अचिंत्यत्वात् पुद्गलपरिणामस्य शक्तिर्दृश्यते चैकगृहांतर्वर्त्याकाशप्रदेशेष्वेकप्रदीपप्रभापरमाणुव्याप्तेष्वप्यनेकापरदीपप्रभापरमाणूनां तत्रैवावस्थानं न च दृष्टेऽप्यर्थेऽनुपपत्तिरित्यलं प्रपंचेन ॥ अनु० ॥

इदानीं क्षेत्रद्वारमुच्यते–

नेगमववहाराणं आणुपुव्वीदव्वाइं लोअस्स किं संखिज्जइभागे होज्जा असंखिज्जइभागे होज्जा संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा सव्वलोए होज्जा एगं दव्वं पडुच्च संखेज्जइ भागे वा होज्जा असंखिज्जइ भागे वा होज्जा संखेज्जेसु भागेसु वा होज्जा असंखिज्जेसु भागेसु वा होज्जा सव्वलोए होज्जा णाणादव्वाइं पडुच्च निअमा सव्वलोए होज्जा नेगमववहाराणं अणाणुपुव्विदव्वाइं लो-

**अस्स किं संखिज्जइभागे होज्जा जाव सव्वलोए होज्जा एगं दव्वं पडुच्च नो संखेज्जइभागे होज्जा असंखिज्जइभागे होज्जा नो संखेज्जेसु भागेसु होज्जा नो असंखेज्जेसु भागेसु होज्जा नो सव्वलोए होज्जा णाणादव्वाइं पडुच्च निअमा सव्वलोए होज्जा एवं अवत्तव्वगदव्वाइं भाणिअव्वाइं ॥ अनु० मू० ॥**

आनुपूर्वीद्रव्याणि किं लोकस्यैकस्मिन् संख्याततमे भागे होज्जेत्ति। आर्षत्वाद्भवंति अवगाहंत इति यावत् । यदि वा एकस्मिन्नसंख्याततमे भागे भवंति बहुषु संख्येयेषु भागेषु भवन्ति कश्चिद्बहुष्वसंखेयेषु भागेषु भवंत्यथ सर्वलोके भवन्तीति पंच प्रश्नस्थानान्यत्र निर्वचनसूत्रस्येयं भावना । इहानुपूर्वीद्रव्याणि त्र्यणुकस्कन्धादीन्यनन्ताणुस्कंधपर्यवसनान्युक्तानि तत्र च सामान्यत एकद्रव्यमाश्रित्य तथाविधपरिणामवैचित्र्यात् किंचिल्लोकस्यैकस्मिन् संख्याततमे भागे भवत्येकं तत्संख्यातभागमवगाह्य तिष्ठतीत्यर्थः अन्यत्तु तदसंख्येयभागमवगाहते अपरस्तु बहूंस्तद संख्येयभागानवगाह्य वर्त्तते अन्यच्च तदसंख्येयभागानवगाह्य तिष्ठतीति "सव्वलोए वा होज्जत्ति" इहानंतानंतपरमाणुप्रचयनिष्पन्नं प्रज्ञापनादिप्रसिद्धचित्तमहास्कंधलक्षणमानुपूर्वीद्रव्यं समयमेकं सकललोकावगाहि प्रतिपत्तव्यमिति कथं पुनरयमचित्तमहास्कंधः सकललोकावगाही स्यादुच्यते समुद्घातवर्त्तिकेवलिवत् । तथाहि लोकमध्यव्यवस्थितोऽसौ प्रथमसमये तिर्यगसंख्यातयोजनविस्तारं वा उर्ध्वमधस्तु चतुर्दशरज्ज्वायतं विश्रसापरिणामेन वृत्तं दंडं करोति द्वितीये कपाटम् तृतीये मन्थानं चतुर्थे लोकव्याप्तिं प्रतिपद्यते। पंचमे अन्तराणि संहरति षष्ठे मंथानं सप्तमे कपाटमष्टमे तु दंडं संहृत्य पंडशोभिघात इत्येके अन्ये त्वन्यत्रापि व्याचक्षते तत्तु विशेषावश्यकादवसेयमिति वा शब्दः समुच्चये एवं यथासंभवमन्यत्रापि । नाणा दव्वाइं पडुच्चेत्यादिनानाद्रव्याण्यानुपूर्वीपरिणाम इत्येवं प्रतीत्य प्रकृत्य वा अधिकृत्येत्यर्थः । नियमान्नियमेन सर्वलोके भवंति नसंख्येयादिभागेषु यतः सर्वलोकाकाशस्य स प्रदेशोऽपि नास्ति यत्र सूक्ष्मपरिणामवंत्यनंतान्यानुपूर्वीद्रव्याणि न भवंतीति अनानुपूर्व्यवक्तव्यकद्रव्येषु त्वेकं द्रव्यमाश्रित्य लोकस्यासंख्येयभाग एव वृत्तिर्न संख्येयभागादिषु यतोऽनानुपूर्वीतावत्परमाणुरुच्यते स चैकाकाशप्रदेशावगाढ एवस्यादिति यथोक्तभागवृत्तितैवेति नानाद्रव्यभावनापूर्ववदित्युक्तं क्षेत्रद्वारम ॥ टी० अनु० ॥

**साम्प्रतं स्पर्शनाद्वारमुच्यते–**

**नेगमववहाराणं आणुपुव्विदव्वाइं लोगस्स किं संखेज्जइभागं फुसंति असंखेज्जइभागं फुसंति संखेज्जे भागे फुसंति असंखेज्जे भागे फुसंति सव्वलोअं फुसंति एगं दव्वं पडुच्च लोगस्स संखेज्जइभागं वा फुसंति जाव सव्वलोगं वा फुसंति णाणादव्वाइं पडुच्च निअमा सव्वलोगं फुसंति णेगमववहाराणं अणाणुपुव्विदव्वाइं लोअस्स किं संखेज्जइभागं फुसंति जाव सव्वलोगं फुसंति एगं दव्वं पडुच्च नो संखिज्जइभागं फुसंति असंखिज्जइभागं फुसंति नो संखिज्जे भागे फुसंति नो असंखेज्जे भागे फुसंति नो सव्वलोअं फुसंति नाणादव्वाइं पडुच्च निअमा सव्वलोअं फुसंति एवं अवत्तव्वगदव्वाइं भाणिअव्वाइं ॥ अनु० मू० ॥**

भावना तु क्षेत्रद्वारवत्कर्त्तव्या नवरं क्षेत्रस्पर्शनयोरयं विशेषः क्षेत्रमवगाहाक्रांतप्रदेशमात्रं स्पर्शना तु प्रदेशास्तद्बहिरपि भवति तथा च परमाणुद्रव्यमाश्रित्य तावदवगाहनास्पर्शनयोरन्यत्रोक्तो भेदः । ( एगपएसोगाढं सत्तपएसा य से फुसणत्ति ) अस्यार्थः परमाणुद्रव्यमवगाढं तावदेकस्मिन्नेवाकाशप्रदेशे स्पर्शना तु एतस्य सप्तप्रदेशा भवंति षड्दिग्व्यवस्थितान् प्रदेशान् यत्र सोवगाहस्तं च स्पृशतीत्यर्थः एवमन्यत्रापि क्षेत्रस्पर्शनयोर्भेदो भावनीयः । अत्र सुगताः प्रेरयंति यदि परमाणोः षड्दिग्स्पर्शना तूपगम्यते तदैकत्वमस्य हीयते तथा हि । प्रष्टव्यमत्र किं येनैव स्वरूपेणासौ पूर्वाद्यन्यतरादिशा सम्बद्धं तेनैवान्यदिग्भिरुत स्वरूपान्तरेण यदि तेनैव तदाऽयं पूर्वादिक्संबंधोऽयं चापरदिक्संबंध इत्यादिविभागेन अस्यानेकस्वरूपत्वाद्विभागाभावे च षड्दिक्संबंधवचनमुपरिप्लवत् एव अथाऽपरो विकल्पः कल्प्यते तर्हि षट्स्वरूपापत्त्या एकत्वं विशीर्य्यते । उक्तं च–दिग्भागभेदोस्याऽस्ति तस्यैकत्वे युज्यत इति। अत्र प्रतिविधीयते इह परमाणुद्रव्यमादिमध्यान्त्यादिविभागरहितं निरंशमेकस्वरूपमिष्यतेऽतः सांशवस्तु भावित्वात्परोक्तं विकल्पद्वयं निरास्पदमेव अथाभ्युपगम्यमानापि परमाणोःसांशतानंतरोक्तविकल्पबलेनापद्यते न तु भवतीति तर्हि प्रष्टव्या कश्चिद्विज्ञानसंतानवीक्षितः कश्चिद्विज्ञानलक्षणक्षणः स्वजनकपूर्वलक्षणस्य कार्यं स्वजन्योत्तरलक्षणस्य कारणमित्यत्र सौगतानां तावद्विप्रतिपत्तिस्तत्रेहापि विचार्यते किमसौ येन स्वरूपेण पूर्वक्षणस्य कार्यं तेनैवोत्तरक्षणस्य कारणमुत स्वरूपान्तरेण यद्याद्यः पक्षस्तर्हि यथा पूर्वापेक्षयासौ कार्यं तथोत्तरापेक्षया कारणं तथा पूर्वापेक्षयापि स्यादथवा उत्तरापेक्षया कारणं तथा पूर्वापेक्षयापि स्यादेकस्वरूपत्वात्तस्येति । अथ द्वितीयः पक्षस्तर्हि तस्य सांशित्वप्रसंगोत्राऽपि दुर्वारः स्यादथ निरंश एवासौ ज्ञानक्षणोऽकार्य्याकारणरूपः तत्तद्वस्तुव्यावृत्तत्वात् । तथा २ व्यपदिश्यते ऽतस्तस्यानेकस्वरूपत्वमस्ति तत्परमाणोरपि भेदमुत्तरमतिदुर्लभं स्यात् यतो द्रव्यतया निरंश एव परमाणुस्तथाविध अचिंत्यपरिणामत्वादिकषट्केन सह नैरंतर्येणावस्थितत्वात्तस्य स्पर्शकमुच्यते न पुनस्तत्रांशो काचित् स्पर्शना समस्तीत्यत्र बहुवक्तव्यं तत्तु नोच्यते स्थानांतरेषु चर्चितत्वादित्यलं विस्तरेणोक्तं स्पर्शनाद्वारम ॥ टी० अनु० ॥

इदानीं कालद्वारं विभणिषुराह ।

**णेगमववहाराणं आणुपुव्विदव्वाइं कालओ केवच्चिरं होइ एगं दव्वं पडुच्च जहण्णेणं एगं समयं उक्कोसेणं असंखेज्जं कालं णाणादव्वाइं पडुच्च णिअमा सव्वद्धिं अणाणुपुव्विदव्वाइं अवत्तव्वगदव्वाइं च एवं चेव भाणिअव्वाइं ॥ अनु० ॥**

नैगमव्यवहारयोरानुपूर्वीद्रव्याणि कालतः कालमाश्रित्य कियच्चिरं नियतं कालं भवंत्यानुपूर्वीत्वपर्यायेणावतिष्ठंते अत्रोत्तरं एगदव्वमित्यादि। इयमत्र भावना।परमाणुद्वयोरन्तरैकपरमाणुमीलने एवं किंचिदानुपूर्वीद्रव्यं समुत्पन्नं। ततः समयादूर्ध्व

पुनरप्यंकाद्यणौ वियुक्तेऽपगतस्तद्भाव इत्येकमानुपूर्वीद्रव्यमधिकृत्य जघन्यतः समयोऽवस्थितिकालं यदा तु तदेवासंख्यातं कालं तद्भावेन स्थित्वाऽनंतरोक्तरूपेण वियुज्यते तदा उत्कृष्टतोऽसंख्येयोऽवस्थितिकालः प्राप्यते अनन्तं कालं पुनर्न वितिष्ठते उत्कृष्टाया अपि पुद्गलसंयोगस्थितेरसंख्येयकालत्वादिति। नानाद्रव्याणि वहूनि पुनरानुपूर्वीद्रव्याण्यधिकृत्य सर्वाद्धास्थितिर्भवति नास्ति स कश्चित्कालो यत्रानुपूर्वीद्रव्यविरहितोऽयं लोकः स्यादिति भावः । अनानुपूर्वीअवक्तव्यकद्रव्येष्वपि जघन्यादिभेदभिन्न एतावानेवावस्थितिकालस्तथाहि कश्चित्परमाणुरेकं समयमेकाकी भूत्वा ततः परमाण्वादीनि अन्येन सह संयुज्यंत इत्थमेकमनानुपूर्वीद्रव्यमधिकृत्य जघन्यतः समयोऽवस्थितिकालः यदा तु स एवासंख्यातं कालं तद्भावेन स्थित्वा अन्येन परमाण्वादिना सह संयुज्यते तत उत्कृष्टतोऽसंख्येयोऽवस्थिकालः संप्राप्यते नानाद्रव्यपक्षस्तु पूर्ववदेव भावनीयः । अवक्तव्यकद्रव्यमपि परमाणुद्वयलक्षणं यदा समयमेकं स्थित्वा ततो वियुज्यते तदवस्थमेव वान्येन परमाण्वादिना संयुज्यते तदा तस्यावक्तव्यकद्रव्यतया जघन्यतः समयोऽवस्थानं लभ्यते यदा तु तदेवासंख्यातं कालं तद्भावेन स्थित्वा विघटते तदवस्थमेव चान्येन परमाण्वादिना संयुज्यते तदोत्कृष्टः अवक्तव्यकद्रव्यतया असंख्यातं कालमवस्थानं प्राप्यते नानाद्रव्यपक्षस्तु तथैव भावनीय उक्तं कालद्वारम् ॥ टी० अनु० ॥

अथान्तरद्वारम्प्रतिपिपादयिषुराह—

णेगमववहाराणं आणुपुव्विदव्वाणं अंतरं कालओ केवच्चिरं होइ एगं दव्वं पडुच्च जहण्णेणं एगं समयं उक्कोसेणं अणंतं कालं नाणादव्वाइं पडुच्च णत्थि अंतरं णेगमववहाराणं अणाणुपुव्वीदव्वाणं अन्तरं कालओ केवच्चिरं होइ एगं दव्वं पडुच्च जहण्णेणं एगं समयं उक्कोसेणं असंखेज्जं कालं नाणादव्वाइं पडुच्च णत्थि अन्तरं णेगमववहाराणं अवत्तव्वगदव्वाणं अन्तरं कालओ केवच्चिरं होइ एगं दव्वं पडुच्च जहण्णेणं एगं समयं उक्कोसेणं अणंतकालं नाणादव्वाइं पडुच्च णत्थि अन्तरं ॥अनु० मू० ॥

नैगमव्यवहारयोरानुपूर्वीद्रव्याणामंतरं कालतः कियच्चिरं भवतीति प्रश्नः अन्तरं व्यवधानं तच्च क्षेत्रतोऽपि भवति अथवा भूतलसूर्ययोरष्टौ योजनशतान्यंतरमित्यतस्तद्व्यवच्छेदार्थमुक्तं कालतः कालमाश्रित्य तदयमत्रार्थः । आनुपूर्वीद्रव्यं विश्रसापरिणामात्प्रयोगपरिणामाद्वा खण्डशो वियुज्य परित्यक्तानुपूर्वीभावं संजातं एकस्मात् समयादूर्द्धं विश्रसादि परिणामात्पुनस्ते परमाणुभिस्तथैव तन्निष्पन्नमित्येवं जघन्यतः सर्वस्तोकतया एकंद्रव्यमाश्रित्यानुपूर्वीत्वपरित्यागः पुनः कालयोरंतरं समयः प्राप्यते उत्कृष्टतः सर्ववहुतया । पुनरंतरमनंतं कालं भवति तथाहि तदेव विवक्षितं किमप्यानुपूर्वीद्रव्यं तथैव भिन्नं भिन्नत्वाच्च ते परमाणवोऽन्येषु परमाणुद्व्यणुकत्र्यणुकादिषु अनन्ताणुकस्कंधपर्यंतेषु अन्तरस्थानेषूत्कृष्टांतराधिकाराद्सकृत्प्रतिस्थानमुत्कृष्टां स्थितिमनुभवंतः । पर्यटंति कृत्वा चेत्थं पर्यटनं कालस्थानं तत्वाद्विश्रसादिपरिणामतो यदा तैरेव परमाणुभिस्तदेव विवक्षितमानुपूर्वीद्रव्यं निष्पद्यते ततोऽनंत उत्कृष्टांतरकालः प्राप्यते । नानाद्रव्याण्यधिकृत्य पुनर्नास्त्यंतरं । नहि स कश्चित्कालोऽस्ति यत्र सर्वाण्यप्यानुपूर्वीद्रव्याणि युगपदानुपूर्वीभावं परित्यजन्ति । अनंतानंतरैरानुपूर्वीद्रव्यैः सर्वदैव लोकस्याशून्यत्वादितिभावः । अनानुपूर्वीद्रव्यांतरकालचिंतायां "एगं दव्वंपडुच्च जहन्नेणं एक्कं समयंति" इह यदा किंचिदनानुपूर्वीद्रव्यं परमाणुलक्षणमन्येन परमाणुद्व्यणुकत्र्यणुकादिना केनचित् द्रव्येण सह संयुज्य समयानुपूर्वी वियुज्य पुनरपि तथा स्वरूपमेव भवति तदा समयग्रहणो जघन्यांतरकालः प्राप्यते "उक्कोसेणं असंखेज्जं कालंति" तदेवानानुपूर्वीद्रव्यं यदा अन्येन परमाणुद्व्यणुकत्र्यणुकादिना केनचिद्द्रव्येण सह संयुज्यते तत् संयुक्तं वा संख्येयं कालं स्थित्वा वियुज्य पुनस्तथा स्वरूपमेव भवति तदा संख्यात उत्कृष्टांतर कालो लभ्यते । अत्राह—ननु अनानुपूर्वीद्रव्यं यदा अनंतानंतपरमाणुप्रचितस्कन्धेन सह संयुज्यते तत्संयुक्तं चासंख्येयं कालमवतिष्ठते ततोऽसौ स्कंधाद्भिद्यते भिन्नं च तस्माल्लघुस्कन्धो भवति तेनापि सह संयुक्तमसंख्यातंकालमवतिष्ठते पुनस्तस्मिन्नपि भिद्यमाने च तस्माल्लघुतमः स्कंधो भवति तेनापि संयुक्तमसंखेयं कालमवतिष्ठत इत्येवं तत्र भिद्यमाने क्रमेण कदाचिदनंता अपि स्कन्धाः संभाव्यंते तत्र च प्रतिस्कन्धं संयुक्तमनानुपूर्वीद्रव्यं यदा यथोक्तस्थितिमनुभूय तत एकाक्येव भवति तदा तस्य यथोक्तानंतस्कन्धस्थित्यपेक्षया अनंतोऽपि कालोऽन्तरे प्राप्यते किमित्यसंख्येय एवोक्तोऽत्रोच्यते स्यादेवं यदि संयुक्तोऽणुरेतावंतं कालं तिष्ठेदेतच्च नास्ति पुद्गलसंयोगस्थितेरुत्कृष्टतोऽप्यसंख्येयकालत्वादित्युक्तमेव अथवा यस्मिन् स्कंधे संयुज्यते असौ परमाणुः स च स्कंधे असंख्येयकालाद्भिद्यते तर्ह्येतावतैव चरितार्थः पुद्गलसंयोगासंख्येयकालनियमोविवक्षितपरमाणुद्रव्याणां तु वियोगो माभूदपीति नैतदेवं यस्या अन्येन संयोगो जातस्तस्यासंख्येयकालाद्वियोगश्चित्यते यदि च परमाण्वाश्रयः स्कंधो वियुज्यते तर्हि परमाणोः किमायातं तस्यान्यसंयोगस्य तदवस्थत्वात्तस्मादणुत्वेनासौ संयुक्तोऽसंख्येयकालत्वेनैव वियोजनीय इति यथोक्त एवांतरकालो नत्वनंत इति । कथं पुनरणुत्वेनैव तस्य वियोगश्चिंतनीय इति चेत् सूत्रप्रामाण्यात् प्रस्तुतसूत्रे व्याख्याप्रज्ञप्त्यादिषु परमाणोः पुनः परमाणुभवने संख्येयरूपस्य चांतरकालस्योक्तत्वादित्यलं विस्तरेण । नाणादव्वाइं पडुच्चेत्यादि । पूर्ववद्भावनीयम् । अवक्तव्यकद्रव्याणामंतरचिंतायां एगं दव्वं पडुच्चेत्यादि । तत्र भावना इह कश्चिद्द्विप्रदेशिकस्कन्धोऽपि अघटितस्वतन्त्रं परमाणुद्वयं जातं समये चैकं तथा स्थित्वा पुनस्ताभ्यामेव परमाणुभ्यां द्विप्रदेशिकस्कंन्धो निष्पन्नोथ विघटित एव द्विप्रदेशिकस्कंधोऽन्येन परमाण्वादिना संयुज्य समयादूर्ध्वं पुनस्तथैव वियुक्त इत्यवक्तव्यकस्य पुनरप्यवक्तव्यभवने उभयोरपि समयोऽतरं लभ्यते "उक्कोसेणं अणंतं कालं" इति कथमत्रोच्यते अवक्तव्यद्रव्यं किमपि विघटितं विशकलितं परमाणुद्वयं जातं तच्चानन्तैः परमाणुभिरनंतैस्त्र्यणुकस्कंधैर्यावदनन्तैरनंताणुकस्कंधैःसह क्रमेण संयोगमासाद्य उत्कृष्टांतराधिकारादत्र प्रतिस्थानमसकृदुत्कृष्टां संयोगस्थितिमनुभूय कालस्यानन्तत्वात्तदा

पुनरपि तथैव द्व्यणुकस्कन्धतया संयुज्यते अवक्तव्यकैकद्रव्यस्य पुनस्तथा भवने अनन्तोऽन्तरकालः प्राप्यते नानाद्रव्यपक्षभावनालोके सर्वदैव तद्भावात् पूर्ववद्वक्तव्यमुक्तमंतरद्वारम् ॥ अनु० टी० ॥

साम्प्रतं भागद्वारं निर्दिदिक्षुराह—

णेगमववहाराणं आणुपुव्विदव्वाइं सेसदव्वाणं कति भागे होज्जा किं संखिज्जइ भागे होज्जा असंखिज्जइ भागे होज्जा संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा नो संखिज्जइ भागे होज्जा नो असंखिज्जइ भागे होज्जा नो संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा। णेगमववहाराणं अणाणुपुव्विदव्वाइं सेसदव्वाणं कति भागे होज्जा किं संखिज्जइ भागे होज्जा असंखिज्जइ भागे होज्जा संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा नो संखेज्जइ भागे होज्जा असंखिज्जइ भागे होज्जा नो संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागे होज्जा एवं अवत्तव्वगदव्वाणि वि भाणिअव्वाणि ॥ अनु० ॥

नैगमव्यवहारयोस्त्र्यणुकस्कन्धादीन्यनंताणुकस्कंधपर्यंतानि सर्वाण्यप्यानुपूर्वीद्रव्याणि शेषद्रव्याणां समस्तानानुपूर्व्यवक्तव्यकद्रव्यलक्षणानां कति भागे होज्जत्ति कति भागे भवंतीत्यर्थः किं संख्याततमभागे भवंति यथा सत्कल्पनया शतस्य विंशतिमिता किं संख्याततमे भागे भवंति यथा शतस्यैव दश संख्यातेषु भागेषु भवंति यथा शतस्यैव चत्वारिंशत्षष्टिर्वा किं असंख्यातेषु भागेषु भवंति यथा शतस्यैवाशीतिरिति प्रश्नः। अत्र नो संखेज्जइभागे होज्जा इत्यादि। "नियमा संअखेज्जेसु भागेसु होज्जत्ति" इह तृतीयार्थे सप्तमी। ततश्चानुपूर्वीद्रव्याणि शेषेभ्योऽनानुपूर्वीवक्तव्यकद्रव्येभ्योऽसंख्येयैर्भागैरधिकानि संभवंतीति वाक्यशेषो द्रष्टव्यस्ततश्चायमर्थः प्रतिपत्तव्यः। आनुपूर्वीद्रव्याणि शेषद्रव्येभ्योऽसंख्येयगुणानि शेषद्रव्याणि तु तदसंख्येयभागे वर्त्तते न पुनः शतस्याशीतिरिवानुपूर्वीद्रव्याणि शेषेभ्यः स्तोकानीति कस्मादेवं व्याख्यायते स्तोकान्यपि तानि भवंत्विति चेत्तदेवमघटमानकत्वात्तथा ह्यनानुपूर्व्यवक्तव्यकद्रव्ये एकाकिनः परमाणुपुद्गला द्व्यणुकाश्च स्कंधा इत्येतावंत्येव द्रव्याणि लभ्यंते शेषाणि तु त्र्यणुकस्कंधादीन्यनन्ताणुकस्कंधपर्यंतानि द्रव्याणि समस्तान्यनानुपूर्वीद्रव्याण्येव तानि च पूर्वेभ्योऽसंख्येयगुणानि यदुक्तं एएसिणं भंते! परमाणुपोग्गलाणं संखिज्जपएसियाणं असंखेज्जपएसियाणं अणंतपएसियाणं य खंधाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा गोयमा! सव्वत्थो वा अणंतपएसिया खंधा परमाणुपोग्गला अणंतगुणा संखिज्जपएसिया खंधा संखिज्जगुणा असंखेज्जपएसिया खंधा असंखेज्जगुणा "तदत्र तत्रैव पुद्गलजातेः सर्वस्यापि सकाशादसंख्यातप्रदेशिकाः स्कंधा असंख्यातगुणा उक्तास्ते चानुपूर्वीमंतर्भवंति। तदपेक्षया आनुपूर्वीद्रव्याणि शेषात्समस्तादपिद्रव्यादसंख्यातगुणानि किं पुनरनानुपूर्व्यवक्तव्यकद्रव्यमात्रात्ततो यथोक्तमेव व्याख्यानं कर्त्तव्यमित्यलं विस्तरेण। अणाणुपुव्विदव्वाइमित्यादि। इहानुपूर्वीद्रव्याण्यवक्तव्यकद्रव्याणि च शेषद्रव्याणां संख्यातम एव भागे भवंति न शेषभागेषु तथाऽनंतरोक्तन्यायादेव भावनीयमित्युक्तं भागद्वारम् ॥ टी० अनु० ॥

साम्प्रतं भावद्वारमाह—

णेगमववहाराणं आणुपुव्वीदव्वाइं कतरंमि भावे होत्था किं उदइए भावे होज्जा उवसमिए भावे होज्जा खइए भावे होज्जा खओवसमिए भावे होज्जा पारिणामिए भावे होज्जा संनिवाइए भावे होज्जा णिअमा सादिपारिणामिए भावे होज्जा अणाणुपुव्विदव्वाणि अवत्तव्वगदव्वाणि अ एवं चेव भाणिअव्वाणि ॥ अनु० ॥

नैगमव्यवहाराणामित्यादि प्रश्नोऽत्र चौदायिकादिभावानां शब्दार्थो भावार्थश्च विस्तरेणोपरिष्टात् स्वस्थान एव वक्ष्यते अत्र निर्वचनसूत्रे नियमा साईपरिणामिए भावे होज्जत्ति परिणमनं द्रव्यस्य तेन तेन रूपेण वर्त्तनं भवनं परिणामः स एव पारिणामिकस्तत्र भवस्तेन वा निर्वृत्त इति पारिणामिकः स च द्विविधः सादिरनादिश्च तत्र धर्म्मास्तिकायाद्यरूपी द्रव्याणामनादिपरिणामोऽनादिकालात्तद्द्रव्यत्वेन तेषां परिणतत्वादपिद्रव्याणां तु सादिपरिणामोऽभ्रेन्द्रधनुरादीनां तथा परिणतेरनादित्वाभावादेवं च स्थिते नियमादवश्यतया आनुपूर्वीद्रव्याणि सादिपारिणामिक एव भावे भवंत्यानुपूर्वीत्वपरिणतेरनादित्वासंभवाद्विशिष्टैकपरिणामेन पुद्गलानामसंख्येयकालमेवावस्थानादिति भावः। अनानुपूर्व्यवक्तव्यकद्रव्येष्वपीत्थमेव भावना कार्या इत्युक्तं भावद्वारम ॥ टी० ॥ अनु० ॥

इदानीमल्पबहुत्वद्वारं विभणिषुराह—

एएसिं णेगमववहाराणं अणाणुपुव्विदव्वाणं अवत्तव्वगदव्वाणं य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कतरे कतरेहिंतो अप्पा वा बहुआ वा तुल्ला वा विसेसाहिआ वा सवत्थोवाइं णेगमववहाराणं अवत्तव्वगदव्वाइं दव्वट्ठयाए अणाणुपुव्विदव्वाइं दव्वट्ठयाए विसेसाहिआइं आणुपुव्विदव्वाइं दव्वट्ठयाए असंखेज्जगुणाइं पएसट्ठयाए सव्वत्थोवाइं णेगमववहाराणं आणाणुपुव्विदव्वाइं अपएसट्ठयाए अवत्तव्वगदव्वाइं पएसट्ठयाए विसेसाहिआइं आणुपुव्विदव्वाइं पएसट्ठयाए अणंतगुणाइं दव्वट्ठपएसट्ठयाए सव्वत्थोवाइं णेगमवहारणं अत्तव्वगदव्वाइं दव्वट्ठया अणाणुपुव्विदव्वाइं दव्वट्ठयाए अपएसट्ठयाए विसेसाहिआइं अवत्तव्वगदव्वाइं पएसट्ठयाए विसेसाहिआइं आणुपुव्विदव्वाइं दव्वट्ठयाए असंखेज्जगुणाइं ताइं चेव पएसट्ठयाए अनंतगुणाइं सेत्तं अणुगमे सेत्तं णेगमववहाराणं अणोवणिहिआ दव्वाणुपुव्वी ॥ अनु० ॥

द्रव्यमेवार्थो द्रव्यार्थस्तस्य भावो द्रव्यार्थता तया द्रव्यत्वेन इत्यर्थः। प्रकृष्टो निरंशो देशः प्रदेशः स चासावर्थश्च प्रदेशार्थस्तस्य भावः प्रदेशार्थता तया परमाणुत्वेनेति भावः। द्रव्यार्थप्रदेशार्थतया यथोक्तोभयरूपतयेति भावः। तदयमर्थः एतेषां आनुपूर्व्यादिद्रव्याणां मध्ये ( कयरे कयरेहिंतोत्ति ) कतराणि कान्याश्रित्य द्रव्यापेक्षया प्रदेशापेक्षया

बाल्यानि विशेषहीनत्वादिना बहून्यपि संख्येयगुणत्वादिना तुल्यानि समसंख्यात्वेन विशेषाधिकानि किंचिदाधिक्येनेति वाशब्दाः पक्षांतरवृत्तिद्योतका इति पृष्टे वाचःक्रमवर्त्तित्वाद् द्रव्यार्थतापेक्षया तावदुत्तरमुच्यते तत्र । ( सव्वत्थोवाइं नेगमववहारेणं अवत्तव्वगदव्वाइं दव्वट्ठयाएत्ति ) नैगमव्यवहारयोः द्रव्यार्थतामपेक्ष्य तावदवक्तव्यकद्रव्याणि सर्वेभ्योऽन्येभ्यः स्तोकानि सर्वस्तोकानि अनानुपूर्वीद्रव्याणि तु द्रव्यार्थतामेवापेक्ष्य विशेषाधिकानि कथं वस्तुस्थितिस्वभावात् उक्तं च । ( एएसिणं भंते परमाणुपोग्गलाणं दुपएसियाणं खंधाणं कयरे कयरेहिंतो बहुया वा गोयमा ! दुपएसिएहिंतो खंधेहिंतो परमाणुपोग्गला बहुगत्ति ) तेभ्य आनुपूर्वीद्रव्याणि द्रव्यार्थतयैवासंख्येयगुणानि अतोऽनानुपूर्वीद्रव्येष्वेववक्तव्यकद्रव्येषु च परमाणुलक्षणं द्व्यणुकस्कंधलक्षणं चैकैकमेव स्थानं लभ्यते आनुपूर्वीद्रव्येषु त्र्यणुकस्कन्धादीन्येकोत्तरवृद्ध्यानंताणुकस्कन्धपर्यन्तान्यनंतानि स्थानानि प्राप्यंते । तत्स्थानबहुत्वादानुपूर्वीद्रव्याणि पूर्वेभ्योऽसंख्यातगुणानि । ननु यदि तेषु स्थानान्यनंतानि तर्ह्यनंतगुणानि पूर्वेभ्यस्तानि कस्मान्न भवंतीति चेन्नेयं यतोऽनन्ताणुकस्कंधाः केवलानानुपूर्वीद्रव्येभ्योऽप्यनंतभागवर्तित्वात् स्वभावादेव स्तोका इति न किंचित्तैरिह वर्द्धते ततो वस्तुवृत्त्या किलासंख्यातान्येव तेषु स्थानानि प्राप्यंते तदपेक्षया त्वसंख्यातगुणान्येव तच्च पूर्वं भागद्वारे लिखितप्रज्ञापनासूत्रात्सर्वं भावनीयमित्यलं विस्तरेण। उक्तं द्रव्यार्थतया अल्पबहुत्वमिदानी प्रदेशार्थतया तदेवाह ( पएसट्ठयाए नेगमववहाराणमित्यादि ) नैगमव्यवहारयोः प्रदेशार्थतया अल्पबहुत्वे चिंत्यमाने अनानुपूर्वीद्रव्याणि सर्वेभ्यः स्तोकानि कुत इत्याह ( अपएसट्ठयाएत्ति ) प्रदेशलक्षणस्यार्थस्य तेष्वभावमित्यर्थः यदि हि तेषु प्रदेशाः स्युस्तदा द्रव्यार्थतायामिव प्रदेशार्थतायामप्यवक्तव्यकापेक्षयाधिकत्वं स्यान्नच तदस्ति परमाणुरप्रदेश इति वचनादतः सर्वस्तोकान्येतानि । ननु यदि प्रदेशार्थता तु नास्ति तर्हि तया विचारोऽपि तेषां न युक्त इति चेन्नैतदेवं तेषु प्रकृष्टः सर्वसूक्ष्मः पुद्गलास्तिकायस्या देशो निरंशो भागः प्रदेश इत्युक्तोऽतः प्रतिपरमाणुप्रदेशार्थताभ्युपगम्यत एव आत्मव्यतिरिक्तप्रदेशान्तरापेक्षयात्वप्रदेशार्थतेत्यदोषः अवक्तव्यकद्रव्याणि प्रदेशार्थतयाऽनानुपूर्वीद्रव्येभ्यो विशेषाधिकानि यतः किलाशत्कल्पनया अवक्तव्यकद्रव्याणां षष्टिः अनानुपूर्वीद्रव्याणां तु शतं ततो द्रव्यार्थविचारे एतानीतरापेक्षया विशेषाधिकान्युक्तान्यत्र तु प्रदेशार्थताविचारे नानुपूर्वीद्रव्याणां निष्प्रदेशत्वात्तदेव शतमवस्थितं अवक्तव्यद्रव्याणां त्विह प्रत्येकं द्विप्रदेशत्वाद्द्विगुणितानां विंशत्युत्तरं प्रदेशशतं जायंत इति तेषामितरेभ्यः प्रदेशार्थतया विशेषाधिकत्वं भावनीयं आनुपूर्वीद्रव्याणि प्रदेशार्थतया अवक्तव्यकद्रव्येभ्योऽनन्तगुणानि भवन्ति । कथं ? यतो द्रव्यार्थतयापि तावदेतानि पूर्वेभ्योऽसंख्यातगुणान्युक्तानि यदा तु सख्यातप्रदेशिकस्कंधानामसंख्यातप्रदेशिकस्कंधानामनन्ताणुकस्कंधानां च सम्बन्धिनः सर्वेऽपि प्रदेशा विवक्ष्यंते तदा महानसौ राशिर्भवतीति प्रदेशार्थतायामपूर्वेभ्योऽनंतगुणत्वं भावनीयं। उक्तं प्रदेशार्थतयाप्यल्पबहुत्वमिदानीमुभयार्थतामाश्रित्य तदाह ( दव्वट्ठपएसट्ठयाए ) इत्यादि इहोभयार्थताधिकारेऽपि यदेवाल्पं तदेवादौ दर्श्यते अवक्तव्यकद्रव्याणि च सर्वाण्यल्पानि इति प्रथममेवोक्तं ( सव्वत्थोवाइं नेगमववहाराणं अवत्तव्वगदव्वाइं दव्वट्ठयाएत्ति ) अपरं चोभयार्थताधिकारेपि "अणाणुपुव्विदव्वाइं दव्वट्ठयाए" इत्यादि यदुक्तं (अपएसट्ठयाएत्ति ) तदात्मव्यतिरिक्तप्रदेशान्तराभावतोऽनानुपूर्वीद्रव्याणामप्रदेशिकत्वादिति मन्तव्यम् । ततश्चेदमुक्तं भवति द्रव्यार्थतया अप्रदेशार्थतया च विशिष्टान्यनानुपुर्वीद्रव्याण्यवक्तव्यकद्रव्येभ्यो विशेषाधिकानि शेषभावना तु प्रत्येकाचिंतावत्सर्वा कार्या । आह-यद्येवं प्रत्येकाचिंतायामेव प्रस्तुतोऽर्थसिद्धेः किमनयोभयार्थताचिंतयेति नैवं यत आनुपूर्वीद्रव्येभ्यस्तत्प्रदेशाः कियताप्याधिका इति प्रत्येकचिंतायां न निश्चितं अत्र तु "ताइं चेव पएसट्ठयाए अणंतगुणाइं" द्रव्यत्वेन तन्निर्णीतमेव गतार्थप्रतिपादनार्थत्वात्प्रत्येकावस्थातो भिन्ने चोभयावस्थावस्तूनामिति दर्शनार्थत्वाच्च युक्तमेवोभयार्थताचिंतनमित्यदोषस्तदेवमुक्तो नवविधोऽप्यनुगम इति सेत्तं अणुगमेत्ति । तद्भणने च समर्थिता नैगमव्यवहारयोरनौपनिधिकी द्रव्यानुपूर्वी इति निगमयति ( सेत्तं नेगमेत्यादि ) व्याख्याता नैगमव्यवहारनयमतेन अनौपनिधिकी द्रव्यानुपूर्वी ॥ टी० अनु० ॥

( ५ ) साम्प्रतं संग्रहनयमतेन तामेव व्याचिख्यासुराह ।

से किं तं संगहस्स अणोवणिहिआ दव्वाणुपुव्वी से किं तं संगहस्स अणोवणिहिआ दव्वाणुव्वी २ पंचविहा पणत्ता तं जहा--अट्ठपयपरूवणया १ भंगसमुक्कित्तणया २ भंगोवदंसणया ३ समोआरे ४ अणुगमे ५ ॥ अनु० मू० ॥

सामान्यमात्रसंग्रहणशीलः संग्रहो नयः अथ तस्य संग्रहनयस्य किं तद्वस्त्वनौपनिधिकीद्रव्यानुपूर्वीति प्रश्ने आह ननु नैगमसंग्रहववहारेत्यादि सूत्रक्रमप्रामाण्यान्नैगमानंतरं संग्रहस्योपन्यासो युक्तस्तत्किमिति व्यवहारमपि निर्दिश्यते ततोऽयमुच्यत इति सत्यं किं तु नैगमव्यवहारयोरत्र तुल्यमतत्वाल्लाघवार्थं युगपत्तन्निर्देशं कृत्वा पश्चात्संग्रहो निर्दिष्ट इत्यदोषोत्र निर्वचनमाह-(संगहस्स अणोवणिहिया दव्वाणुपुव्वी पंचविहा पणत्तत्ति) संग्रहनयमतेनाप्यनौपनिधिकी द्रव्यानुपूर्वी प्राक्प्ररूपितशब्दार्था पंचाभिरर्थपदप्ररूपणतादिप्रकारैर्विचार्यमाणत्वात्पंचप्रकारा प्रज्ञप्ता तदेव दर्शयति तं जहेत्यादि ॥ टी० अनु० ॥

से किं तं संगहस्स अट्ठपयपरूवणया २ तिपएसिए आणुपुव्वी चउप्पएसिए आणुपुव्वी जाव दसपएसिए आणुपुव्वी संखिज्जपएसिए आणुपुव्वी असंखिज्जपएसिए आणुपुव्वी असंतपएसिए आणुपु० परमाणुपुग्गले अणाणुपु० दुपएसिए अवत्तव्वए सेत्तं संगहस्स अट्ठपयपरूवणया ॥ अनु० मू० ॥

अत्र व्याख्या पूर्ववदेव यावत्तिपएसिए आणुपुव्वी इत्यादि इह पूर्वमेकस्त्रिप्रदेशिक आनुपूर्वी अनेकत्रिप्रदेशिक आनुपूर्वी इत्याद्युक्तम् । अत्र तु संग्रहस्य सामान्यवादित्वात्सर्वेऽपि त्रिप्रदेशिका एकैवानुपूर्वी इमां चात्र युक्तिमयमभिधत्ते त्रिप्रदेशिकाः स्कंधास्त्रिप्रदेशिकत्वसामान्याद्व्यतिरेकिणोऽव्यतिरेकिणो वा यद्याद्यः पक्षस्तर्हि त्रिप्रदेशिका एव

न भवंति तत्सामान्यव्यतिरिक्तत्वाद्विप्रदेशिकवदिति । अथ चरमः पक्षस्तर्हि सामान्यमेव तदव्यतिरेकात्तत्स्वरूपवत्सामान्यं चैकस्वरूपमेवेति सर्वेऽपि त्रिप्रदेशिका एकैवानुपूर्वी एवं चतुःप्रदेशिकत्वसामान्याव्यतिरेकात्सर्वेऽपि चतुःप्रदेशिका एकैवानुपूर्वी एवं यावदनन्तप्रदेशिकत्वसामान्याव्यतिरेकात्सर्वेऽप्यनंतप्रदेशिका एकैवानुपूर्वीत्वविशुद्धसंग्रहनयमतं विशुद्धसंग्रहनयमतेन सर्वेषां त्रिप्रदेशिकादीनामनंताणुकपर्यंतानां स्कंधानामानुपुर्वीत्वसामान्याव्यतिरेकाद्व्यतिरेकैवानुपूर्वीत्वाभावप्रसंगात्सर्वाप्येकैवानुपूर्वीति। एवमनानुपूर्वीत्वसामान्याव्यतिरेकात्सर्वेपि परमाणुपुद्गला एकैवानानुपूर्वी तथा अवक्तव्यक सामान्यव्यतिरेकात्सर्वेऽपि द्विप्रदेशिकस्कंधा एकमेवावक्तव्यकमिति सामान्यादित्वेन सर्वत्र वहुवचनाभावः । सेत्तमित्यादि निगमनं ॥टी० अनु०॥

भंगसमुत्कीर्त्तनतां निर्दिदिक्षुराह एया एय णमित्यादि—

एआए णं संगहस्स अट्ठपयपरूवणयाए किं पओअणं एआएणं संगहस्स अट्ठपयपरूवणयाए संगहस्स भंगसमुक्कित्तणया कज्जइ से किं तं संगहस्स भंगसमुक्कित्तणया २ अत्थि आणुपुव्वी अत्थि अणाणुपुव्वी अत्थि अवत्तव्वए अहवा अत्थि आणुपुव्वी अणाणुपुव्वी १ अहवा अत्थि आणुपुव्वी अवत्तव्वआ २ अहवा अत्थि अणाणुपुव्वी अवत्तव्वआ ३ अहवा अत्थि आणुपुव्वी अणाणुपुव्वी अवत्तव्वआ एवं सत्तभंगा संत्तं संगहस्स भंगसमुक्कित्तणयाए ॥ अनु० मू०॥

अत्रापि व्याख्या कृतैव द्रष्टव्या यावत् अत्थि अणाणुपुव्वीत्यादि । इहैकवचनांतास्त्रय एव प्रत्येकभंगाः समान्यवादित्वेन व्यक्तिबहुत्वाभावतो बहुवचनाभावादानुपूर्वीपदत्रयस्य च त्रयोऽधिकयोगा भवंत्येकैकस्मिंश्च द्विकयोगे एकवचनांत एक एव भंगस्त्रिकयोगेऽपि एक एवैकवचनांत इति सर्वेपि सप्तभंगाः संपद्यंते शेषास्त्वेकोनविंशतिर्बहुवचनसंभवत्वान्न भवंत्यत्र स्थापना आनुपूर्वी १ । अनानुपूर्वी १ अवक्तव्यक १ इति त्रयं प्रत्येकं भंगा आनुपूर्वी १ अनानुपूर्वी १ इति प्रथमो द्विकयोगः आनुपूर्वी १ अवक्तव्यक १ इति द्वितीयो द्विकयोगः। अनानुपूर्वी अवक्तव्यक इति तृतीयो द्विकयोगः । आनुपूर्वी १ । अनानुपूर्वी १ । अवक्तव्यक १ इति त्रिकयोग एवमेते सप्त भंगाः सेत्तमित्यादि निगमनम् ॥ ॥ टी० ॥ अनु० ॥

भंगोपदर्शनतांविभणिषुराह—

एआएणं संगहस्स भङ्गसमुक्कित्तणयाए किं पओअणं एआएणं संगहस्स भंगसमुक्कित्तणयाए संगहस्स भंगोवदंसणया कज्जवि। से किं तं संगहस्स भंगोवदंसणया २ तिपएसिए आणुपुव्वी परमाणुपोग्गले अणाणुपुव्वी दुपएसिए अवत्तव्वए अहवा तिपएसिए अ परमाणुपोग्गले य आणुपुव्वी य अहवा तिपएसिए य दुपएसिए अ आणुपुव्वी य अवतव्वए य अहवा परमाणुपोग्गले अ दुपएसिए य अणाणुपुव्वी य अवतव्वए य अहवा तिपएसिए अ परमाणुपोग्गले अ दुपएसिए य आणु० अणाणु० अवतव्वए य सेत्तं संगहस्स भंगोवदंसणया ॥ अनु० मू० ॥

एयाएणमित्यादि । अत्रापि सप्त भङ्गास्त एवार्थकथनपुरस्सरा भावनीयाः भावार्थस्तु सर्वः पूर्ववत्सेत्तमित्यादि निगमनम् ॥ टी० अनु० ॥

अथ समवताराभिधित्सया प्राह—

से किं तं समोआरे २ संगहस्स आणुपुव्विदव्वाइं कहिं समोयरंति किं आणुपुव्विदव्वेहिं समोयरंति अणाणुपुव्विदव्वेहिं समोयरंति अवत्तव्वगदव्वेहिं समोयरंति तिण्णि वि सट्ठाणे समोयरंति सेत्तं समोयारे ॥ अनु० मू० ॥

से किं तं समोयारेत्यादि । इदं च द्वारं पूर्ववन्निखिलं भावनीयम् ॥ टी० अनु० ॥

अथानुगमनं व्याचिख्यासुराह—

से किं तं अणुगमे २ अट्ठविहे पण्णते तं जहा संतपयपरूवणया १ दव्वपमाणं च २ खित्त ३ फुसणा य ४ कालो य ५ अंतरं ६ भाग ७ भावे ८ अप्पावहुं णत्थि ॥ अनु० मू० ॥

से किं तं अणुगमेत्ति । अत्रोत्तरं अणुगमे अट्ठविहे पन्नत्तेति पूर्वं नवविध उक्तोऽत्र त्वष्टविध एवाल्पबहुत्वद्वाराभावात्तदेवाष्टविधत्वं दर्शयति तद्यथेत्युपदर्शनार्थः संतपयगाहा इयं पूर्वं व्याख्यातैव नवरं अप्पावहुं नत्थि संग्रहस्य सामान्यवादित्वात्सामान्यस्य च सर्वत्रैकत्वादल्पबहुत्वविचारोऽत्र न संभवतीत्यर्थः ॥ टी० ॥ अनु० ॥

तत्र सत्पदप्ररूपणताभिधानार्थमाह—

संगहस्स आणुपुव्विदव्वाइं किं अत्थि नत्थि नियमा अत्थि एवं दोण्णि वि ॥ अनु० मू० ॥

संगहस्सेत्यादि ननु संग्रहविचारे प्रक्रांते आनुपूर्वीद्रव्याणि संतीत्युनुपपन्नं आनुपूर्वीसामान्यस्य विकल्पितेनास्तित्वाभ्युपगमात्सत्यं मुख्यरूपतया सामान्यमेवास्ति गुणभूतं तु व्यवहारमात्रनिबंधनं द्रव्यबाहुल्यमप्यसौ वदतीत्यदोषः शेषभावना पूर्ववदिति ॥ टी० ॥ अनु० ॥

संगहस्स आणुपुव्विदव्वाइं किं संखेज्जाइं असंखेज्जाइं अणंताइं २ नो संखिज्जाइं नो असंखिज्जाइं नो अणंताइं निअमा एगो रासी एवं दोण्णिवि ॥अनु० मू० ॥

द्रव्यप्रमाणद्वारे यदुक्तं नियमा ( एगो रासित्ति ) अत्राह ननु यदि संख्यातस्वरूपाण्येतानि न भवंति तर्ह्येको राशिरित्यपि नोपपद्यते द्रव्यबाहुल्ये सति तस्योपपद्यमानत्वाद्व्रीह्यादिराशिषु तथैव दर्शनात्सत्यं किंत्वेको राशिरितिवदितः कोऽभिप्रायो बहूनामपि तेषां अनुपूर्वी च सामान्यत्वे एकीकृतत्वादेकत्वमेव किं चावशिष्टैकपरिणामपरिणते स्कन्धे तदारंभा वावयवानां बाहुल्येऽप्येकयैव मुख्याः तद्वदत्रानुपूर्वीद्रव्यबाहुल्येऽपि तत्सामान्यस्यैकरूपत्वादेकत्वमेव मुख्यमसौ नयः प्रतिपद्यते तद्दर्शनैव तेषामानुपूर्वीत्वसिद्धेरन्यथा तदभावप्रसंगात्तस्मान्मुख्यस्यैकत्वस्य अनेन कक्षीकृतत्वात्संख्येयरूपादिनिषेधो गुणभूतानि तु द्रव्याण्याश्रित्य राशिभावोऽपि न विरुध्यते एवमन्यत्रापि भावनीयमित्यलं प्रपंचेन ॥ टी० अनु० ॥

संगहस्स आणुपुव्विदव्वाइं लोगस्स किं संखेज्जइभागे होज्जा असंखेज्जइभागे होज्जा संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा सव्वलोए होज्जा नो संखिज्जइभागे होज्जा नो असंखेज्जइभागे होज्जा नो संखेज्जेसु भागेसु होज्जा णो असंखेज्जेसु भागेसु होज्जा णिअमा सव्वेलोए होज्जा एवं दोण्णि वि संगहस्स आणुपुव्विदव्वाइं लोगस्स किं संखेज्जइभागं फुसंति असंखेज्जइभागं फुसंति संखेज्जे भागे फुसंति असंखेज्जे भागे फुसंति सव्वलोअं फुसंति नो संखेज्जइभागं फुसंति नो असंखेज्जइभागं फुसंति नो संखेज्जे भागे फुसंति नो असंखेज्ज भागे फुसंति णिअमा सव्वलोगं फुसंति एवं दोण्णि वि ॥ अनु० मू० ॥

क्षेत्रद्वारे। नियमा सव्वलोए होज्जत्ति।आनुपूर्वीसामान्यस्यैकरूपत्वादेकत्वमेव मुख्यमसौ नयः प्रतिपद्यते तद्वशेनैव तेषामानुपूर्वीद्वारारयेव इतरद्वयेऽप्यभ्यूह्यमिति स्पर्शनद्वारमप्येवमेव चिंतनीयमिति ॥ टी० अनु० ॥

संगहस्स आणुपुव्विदव्वाइं कालओ केवच्चिरं होइ णिअमा सव्वद्धा एवं दोण्णिवि संगहस्स आणुपुव्विदव्वाणं अंतरं कालओ केवच्चिरं होइ नत्थि अंतरं एवं अणा० अवत्तव्वगदव्वाणवि ॥ अनु० मू० ॥

कालद्वारेऽपि तत्सामान्यस्य सर्वदा अव्यवच्छिन्नत्वात् त्रयाणामपि सर्वाद्धावस्थानं भावनीयमिति अत एवांतरद्वारे नाऽस्त्यंतरमित्युक्तं तद्भावव्यवच्छेदस्य कदाचिदप्यभावादिति ॥ टी० अनु० ॥

संगहस्स आणुपुव्विदव्वाइं सेसदव्वाणं कति भागे होज्जा किं संखेज्जइ भागे होज्जा जाव नो असंखेज्जेसु भागेसु होज्जा णियमा तिभागे होज्जा एवं दोण्णिवि ॥ अनु० मू० ॥

भागद्वारे नियमा। तिभागे होज्जत्ति। त्रयाणां राशीनामेको राशिस्त्रिभाग एव वर्त्तत इति भावः । यत्तु राशिगतद्रव्याणां पूर्वोक्तमल्पबहुत्वं तदत्र न गरयते द्रव्याणां प्रस्तुतनयमतं व्यवहारसंवृत्तिमात्रेणैव सत्त्वादिति ॥ टी० अनु० ॥

संगहस्स आणुपुव्विदव्वाइं कतरंमि भावे होज्जा णिअमा साइपारिणामिए भावे होज्जा एवं दोण्णि वि ॥ ॥ अनु० मू० ॥

भावद्वारे ( सादिपरिणामिए भावे होज्जत्ति ) यथा आनुपूर्व्यादिद्रव्याणामितद्भाववर्त्तित्वं पूर्वभावितं तथात्रापि भावनीयं नेयं यथा सामान्याद्व्यतिरिक्तत्वादिति ॥ ॥ टी० अनु० ॥

संगहस्स अप्पाबहुं नत्थि सेत्तं अणुगमे सेत्तं संगहस्स अणोवणिहिया दव्वाणुपुव्वी सेत्तं आणोवणिहिया दव्वाणुपुव्वी ॥ अनु० मू० ॥

अल्पबहुत्वद्वारासंभवस्तु उक्तमेवेति समर्थितोऽनुगमस्तत्समर्थने च समर्थिना संग्रहनयमतेनानौपनिधिकी द्रव्यानुपूर्वी तत्समर्थने च व्याख्यातं सर्वथार्पायमतः ( सेत्तमित्यादि ) निगमनत्रयं गता अनौपनिधिकी द्रव्यानुपूर्वी ॥ टी० अनु० ॥

( ६ ) साम्प्रतं प्रागुद्दिष्टामेवौपनिधिकीं द्रव्यानुपूर्वीं व्याचिख्यासुराह—

से किं तं उवनिहिया दव्वाणुपुव्वी २ तिविहा पण्णत्ता तं जहा पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी ॥ अनु० मू० ॥

से किंतमित्यादि। अथ प्राग्निरूपितशब्दार्थमात्रा औपनिधिकी द्रव्यानुपूर्वीति प्रश्नोऽत्र निर्वचनं औपनिधिकी द्रव्यानुपूर्वी त्रिविधा प्रज्ञप्ता तद्यथा पूर्वानुपूर्वीत्यादि उपनिधिर्निक्षेपोऽविरचनं प्रयोजनमस्य इत्यौपनिधिकी द्रव्यविषया आनुपूर्वीपरिपाटिर्द्रव्यानुपूर्वी सा त्रिप्रकारा तत्र विवक्षितधर्मास्तिकायादिद्रव्यविशेषस्तत्समुदाये यः पूर्वः प्रथमः तस्मादानुपूर्वी अनुक्रमः परिपाटिर्निक्षिप्यते विरच्यते यस्यां सा पूर्वानुपूर्वी तत्रैव यः पाश्चात्यचरमस्तस्मादारभ्य व्यत्ययेनैवानुपूर्वीपरिपाटिर्विरच्यते यस्यां सा निरुक्तविधिना पश्चादानुपूर्वी न आनुपूर्वी अनानुपूर्वी । यथोक्तप्रकारद्वयातिरिक्तस्वरूपेत्यर्थः ॥ टी० अनु० ॥

तत्राद्यभेदं तावन्निरूपयितुं प्रश्नमाह ।

से किं तं पुव्वाणुपुव्वी २ धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवत्थिकाए पोग्गलत्थिकाए अद्धा समए सेत्तं पुव्वाणुपुव्वी ॥ अनु० मू० ॥

अत्र च जीवपुद्गलानां गत्यन्यथानुपपत्तेर्धर्मास्तिकायस्य तेषामेव स्थित्यन्यथानुपपत्तेरधर्मास्तिकायस्य सत्त्वं प्रतिपत्तव्यं न च वक्तव्यं तद्गतस्थिती च भविष्यतो धर्माधर्मास्तिकाये च न भविष्यत इति प्रतिबंधाभावादनैकांतिकतेति तावदंतरेणापि तद्वशाने अलोकेऽपि तत्प्रसंगाद्यदित्वलोकेऽपि तद्गतिस्थिती स्यातां तदा लोकस्यानंतत्वाल्लोकान्निर्गत्य जीवपुद्गलानां तत्र प्रवेशादेकद्वित्र्यादिजीवपुद्गलयुक्तः सर्वथा तच्छून्यो वा कदाचिल्लोकः स्यान्नचैतदृष्टमिष्टं चेत्याद्यन्यदपि दूषणजालम् अस्ति नोच्यते ग्रंथविस्तरभयादिति। आकाशं तु जीवादिपदार्थानामाधारान्यथानुपपत्तेरस्तीति श्रद्धेयं न च धर्माधर्मास्तिकायावेव तदाधारौ भविष्यत इति वक्तव्यं तयोस्तद्गतिस्थितिसाधकत्वेनोक्तत्वात् न चान्यसाध्यं कार्यमन्यः प्रसाधयत्यतिप्रसंगाद् घटादिज्ञानगुणस्य प्रतिप्राणिस्वसंवेदनसिद्धत्वात्क्वचिदस्यास्तित्वमवगंतव्यं न च गुणिनमन्तरेण गुणसत्ता युक्तातिप्रसंगान्न च देह एवास्य गुणी युज्यते यतो ज्ञानममूर्त्तं चिद्रूपं सदेंद्रियगोचरातीतत्वादिधर्मोपेतमतस्तस्यानुरूप एव कश्चिद्गुणी समन्वेषणीयः स च जीव एव न तु देहो विपरीतत्वाद्यदि पुनरननुरूपोऽपि गुणानां गुणी कल्पते तर्ह्यनवस्थारूपादिगुणानामप्याकाशादेर्गुणित्वकल्पनाप्रसंगादिति। पुद्गलास्तिकायस्य तु घटादिकार्यान्यथानुपपत्तेः प्रत्यक्षत्वाच्च सत्त्वं प्रति तामेवेति कालोऽप्यस्ति वकुलाशोकचंपकादिषु पुष्पफलप्रदानस्यानियमेनादर्शनाद्यस्तु तत्र नियामकः स काल इति स्वभावादेव तु तद्भवने नित्यं सत्त्वमसत्त्वं चेत्यादि दूषणप्रसंगोऽत्र बहु वक्तव्यं तत्तु नोच्यते ग्रंथदुर्गमताभयादिति । आह धर्मास्तिकायस्य प्राथम्यं अधर्मास्तिकायादीनां तु तदनंतरं क्रमेणेत्थं निर्देशः कुतः सिद्धो येनात्र स पूर्वानुपूर्वीरूपः स्यादित्यत्रोच्यते आगमे-

इत्थमेव पठितत्वात्तत्रापि कथमित्थमेव पाठ इति चेदुच्यते धर्म्मास्तिकाय इत्यत्र यदाद्यं धर्म्मेति पदं तस्य मांगलिकत्वाद्धर्मास्तिकायस्य प्रथममुपन्यासस्ततस्तत्प्रतिपक्षत्वाद्धर्मास्तिकायस्य ततस्तदाधारत्वादाकाशास्तिकायस्य ततः स्वाभाविकामूर्तत्वसाम्याज्जीवास्तिकायस्य ततस्तदुपयोगित्वात्पुद्गलास्तिकायस्य ततो जीवाजीवपर्यायत्वात्तदनन्तरमद्धासमयस्योपन्यास इति पूर्वानुपूर्वीसिद्धिरिति ॥ टी० अनु० ॥

अथ पश्चानुपूर्वीं निरूपयितुमाह—

से किं तं पच्छाणुपुव्वी २ अद्धा समए पोग्गलत्थिकाए जीव-धम्मत्थिकाए सेत्तं पच्छाणुपुव्वी ॥ अनु० मू० ॥

पश्चानुपूर्वीत्यादि पाश्चात्यादारभ्य प्रतिलोमं व्यत्ययेन वा ऽऽनुपूर्वी परिपाटिः क्रियते यस्यां सा पश्चानुपूर्वी अत्रोदाहरणमुत्क्रमेणेदमप्याह—अद्धासमयेत्यादि गतार्थमेव ॥ टी० अनु० ॥

अथानानुपूर्वीं पूर्वं निरूपयति—

से किं तं अणाणुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए छगच्छगयाए सेढीए अन्नमन्नब्भासो दूरूवूणो सेत्तं अणाणुपुव्वी ॥ अनु० मू० ॥

से किंतमित्यादि । अत्र निर्वचनं अणाणुपुव्वी एताए चेवेत्यादि । न विद्यते आनुपूर्वी यथोक्तपरिपाटिद्वयरूपा यस्यां सा अनानुपूर्वी विवक्षितपदानामनंतरोक्तक्रमद्वयमुल्लंघ्य परस्परासदृशैः सांतवद्भिर्भंगकैर्यस्यां विरचना क्रियते सानानुपूर्वीत्यर्थः । का पुनरियमित्याह—अन्नमण्णब्भासोत्ति । अन्योन्यं परस्परमभ्यासो गुणनमन्योन्याभ्यासः ( दूरूवोणोत्ति ) द्विरूपन्यूनाद्यंतरूपरहितोऽनानुपूर्वीति संटंकः । कस्यां विषये योऽसावभ्यास इत्याह–श्रेण्यां पंक्तौ कस्यां पुनः श्रेण्यामित्याह-(एता एवेत्ति) अस्यामेवानंतराधिकृतधर्म्मास्तिकायादिसंबंधिन्यां कथंभूतायामित्याह—एक आदिर्यस्यां सा एकादिका एकैक उत्तरः प्रवर्द्धमानो यस्यां । पुनः कथंभूतायामित्याह–( छगच्छगताएत्ति ) षण्णां गच्छः समुदायः षड्गच्छस्तत्र संगता प्राप्ता षड्गच्छगता तस्यां धर्म्मास्तिकायादिवस्तुषड्विषयामित्यर्थः । आदौ व्यवस्थापितैककायपर्यंते न्यस्तषट्काया धर्मास्तिकायादिवस्तुषट्कविषयायाः पंक्तेर्या परस्परगुणनानां भंगकसंख्या भवति सा आद्यंतभंगद्वयरहिता अनानुपूर्वीति भावार्थस्तत्रोर्ध्वाधः किलैकैकादयः षट्पर्यंता अंकाः स्थापितास्तत्र चैकैकेन द्विके गुणिते जातौ द्वावेव ताभ्यां त्रिको गुणितो जाताः षट् तैरपि चतुष्का गुणिता जाताश्चतुर्विंशतिः पंचकस्य तु तद्गुणने जातं विंशतिशतं षट्कस्य तद्गुणने जातं विंशत्यधिकं सप्तशतं । स्थापना ६-५-४-३-२-१ आगतं ७२० अत्राद्यो भंगः पूर्वानुपूर्वी अंत्यश्च पश्चानुपूर्वीति तदपगमे शेषाण्यष्टादशोत्तराणि सप्तभंगकशतान्यनानुपूर्वीति मंतव्यानि अत्र च भंगकस्वरूपानयनार्थं करणगाथा—

"पुव्वाणुपुव्विहिट्ठा समयाभेएण कुरु जहा जेट्ठं । उवरिमतुल्लं पुरओ निसेज्ज पुव्वक्कमो सेससत्ति"॥ व्याख्या–इह विवक्षितपदानां क्रमे स्थापना पूर्व्वानुपूर्व्वीत्युच्यते तस्मात ( हेट्ठत्ति ) अधस्तात् द्वितीयादिभंगकान् जिज्ञासुः ( कुरुत्ति ) स्थापय एकादीनि पदानीति शेषः कथमित्याह ज्येष्ठस्यानतिक्रमेण यथाज्येष्ठं यो यस्यादौ स तस्य ज्येष्ठः । यथा द्विकस्यैको ज्येष्ठः त्रिकस्य त्वेककोऽनुज्येष्ठश्चतुष्कादीनां तु स एव ज्येष्ठानुज्येष्ठ एवं त्रिकस्य द्विको ज्येष्ठः स एव चतुष्कस्यानुज्येष्ठः पंचकादीनां तु स एव ज्येष्ठानुज्येष्ठ इत्यादि एवं च सति उपरितनांकस्य अधस्ताज्ज्येष्ठो निक्षिप्यते तत्रालभ्यमानो अनुज्येष्ठस्तत्राप्युपलभ्यमानज्येष्ठानुज्येष्ठ इति यथाज्येष्ठं निक्षेपं कुर्यात् कथमित्याह समयो भेदेनेति समयः संकेतः प्रस्तुतभंगकरचनव्यवस्था तस्य अभेदोऽनतिक्रम्य तस्य च भेदस्तदा भवति यदा तस्मिन्नेव भंगके निक्षिप्तांकसदृशोऽपरांकः पतति ततो यथोक्तं समयभेदं वर्ज्जयन्नेव ज्येष्ठाद्यंकनिक्षेपं कुर्यात् उक्तं च"जहियमि उ निक्खित्ते पुनरवि सो चेव होइ काइव्वो। सो होइ सपयभेओ वज्जेयव्वो पयत्तेणं १" निक्षिप्तस्य चैकस्य यथासंभवं ( पुरउत्ति ) अग्रतः उपरितनांके तुल्यं सदृशं यथा भवत्येवं तस्योपरितनांकसदृशानि वांकान्निक्षिपेदित्यर्थः । ( पुव्वक्कमो सेसेत्ति ) स्थापितशेषानंकान्निक्षिप्तांकस्य यथासंभवं पृष्ठतः पूर्वक्रमेण स्थापयेदित्यर्थः यः संख्यया लघुरेककादिः प्रथमं स्थाप्यते वस्तुतया महान् द्विकादिः स पश्चादिति पूर्वक्रमः पूर्व्वानुपूर्व्वलक्षणे प्रथमभंगके इत्थमेव दृष्टत्वादिति भावः । भावार्थस्तु दिङ्मात्रदर्शनार्थः सुखाधिगमाय च त्रीणि पदान्याश्रित्य तावत् पश्यति तेषां च परस्पराभ्यासे षड् भंगका भवंति ते चैवमानीयंते पूर्वानुपूर्वीलक्षणस्तावत्प्रथमो भंगस्तद्यथा १-२-३ अस्याश्च पूर्वानुपूर्वी अधस्ताद्भङ्गकरचने क्रियमाणे एकैकस्य तावज्ज्येष्ठ एव नास्ति द्विकस्यानुविद्यते एकस्तदधोनिक्षिप्यते तस्य चाग्रतस्त्रिको दीयते 'उवरिमतुल्लमित्यादि' वचनात्। पृष्ठतस्तु स्थापितशेषो द्विको दीयते ततोऽयम द्वितीयो भंगः२-१-३अत्र च द्विकस्य विद्यते एकको ज्येष्ठः परं नासौ तदधस्तान्निक्षिप्यतेऽग्रतः सदृशांकपातेन समयभंगप्रसंगादेकैकस्य तु ज्येष्ठ एव नास्ति त्रिकस्य तु विद्यते द्विको ज्येष्ठः स तदधस्तान्निक्षिप्यते अत्र चाग्रभागस्य तावत्संभव एव पृष्ठतस्त्वस्थापितशेषावेकैकत्रिकौ क्रमेण स्थाप्यते "पुव्वक्कमो सेसेत्ति" वचनात्ततस्तृतीयोऽयं भंगः १-३-२ अत्राप्येकस्य जेष्ठ एव नास्ति त्रिकस्य तु ज्येष्ठो ऽस्ति द्विको न च क्षिप्यते यः सदृशांकपातेन समयभेदोपात्तस्ततोऽस्यैवानुज्येष्ठ एककः स्थाप्यते अग्रतस्तु द्विक "उवरिमतुल्लमित्यादिवचनात् । पृष्ठतस्तु स्थापितशेषस्त्रिको दीयते इति चतुर्थो भंगः ३-१-२ एवमनया दिशा पंचमषष्ठावप्यभ्यूह्यौ सर्वेषां चामीषामियं स्थापना १-२-३ अत्राप्याद्यभंगस्य पूर्वानुपूर्वीत्वादंत्यस्य च पश्चानुपूर्वीत्वान्मध्यमा एव चत्वारो नानुपूर्वीत्वेन मंतव्याः एवमनया दिशा चतुरादिपदसंभाविनोऽपि भंगाः१-२-३भावनीयाः भूयांसश्चोत्तराध्ययनटीकादिनिर्दिष्टाः प्रस्तुतभंगानयनोपायाः संति नचोच्यंत इति विस्तरभयात्तदर्थिना तु तत एवावधारणीयाः १-३-२ तदिदमत्र तात्पर्यं पूर्वानुपूर्व्यां तावद्धर्म्मास्तिकायस्य प्रथमत्वमेव तदनुक्रमेणाधर्म्मास्तिकायादीनां द्वितीयादित्वं पश्चानुपूर्व्यां त्वद्धासमयस्य प्रथमत्वं ३-१-२ पुद्गलास्तिकायादीनां तु प्रतिलोमतया द्वितीयादित्वं अनानुपूर्व्यां त्वनियमेन कश्चिद्भंगके कस्यचित्प्रथमादित्वमलं विस्तरेण ( सेत्तमित्यादि ) २-३-१ निगमनं तदेवमत्र पक्षे धर्म्मास्तिकायादीनि षडपि द्रव्याणि पूर्वानुपूर्व्यादित्वेनोदाहृतानि ॥ टी० अनु० ॥

साम्प्रतं त्वेकमेव पुद्गलास्तिकायमुदाहर्तुमाह—

अहवा उवनिहिआ दव्वाणुपुव्वी तिविहा प०तं० पुव्वानुपुव्वी पच्छानुपुव्वी अणाणुपुव्वी । से किं तं पुव्वानुपुव्वी ? परमाणुपोग्गले दुपएसिए तिपएसिए जाव दसपएसिए संखिज्जपएसिए असंखिज्जपएसिए अणंतपएसिए सेत्तं पुव्वानुपुव्वी । से किं तं पच्छानुपुव्वी २ अणंतपएसिए असंखिज्जपएसिए संखिज्जपएसिए जाव दसपएसिए जाव तिपएसिए दुपएसिए परमाणुपोग्गले सेत्तं पच्छानुपुव्वी ॥ अनु० मू० ॥

अहवेत्यादि ३-२-१ अत्र चौपनिधिक्या द्रव्यानुपूर्व्या ज्ञातमपि त्रैविध्यं यत्पुनरुपन्यस्तं तत्प्रकारान्तरभणनप्रस्तावादेवेति मंतव्यं ॥ टी० अनु० ॥

से किं तं अणाणुपुव्वी ? एआए चेव एगाइआए एगुत्तरिआए अणंतगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो सेत्तं अणाणुपुव्वी सेत्तं उवणिहिआ दव्वाणुपुव्वी सेत्तं जाणव्यतिरित्ता दव्वाणुपुव्वी सेत्तं नोंआगमतो दव्वाणुपुव्वी ॥ अनु० मू० ॥

अणंतगच्छगताएत्ति । अत्रैकोत्तरवृद्धिमत्स्कंधानामनंतत्वादनन्तानां गच्छः समुदायोऽनन्तगच्छस्तं गता अनन्तगच्छगना तस्यां अत एव भङ्गा अत्रानन्ता अवसेया इति शेषः भावना च सर्वा पूर्वोक्तानुसारतः स्वयमप्यवसेयेति आह ननु यथैकः पुद्गलास्तिकायो निर्द्धार्य्यः पुनरपि पूर्वानुपूर्व्यादित्वेनोदाहृत एवं शेषा अपि प्रत्येकं किमिति नोदाहियन्ते अत्रोच्यते द्रव्याणां क्रमः परिपाट्यादिलक्षणः पूर्वानुपूर्व्यादिविचार इह प्रक्रान्तः स च द्रव्यबाहुल्ये सति सम्भवति धर्म्माधर्म्माकाशास्तिकायेषु च पुद्गलास्तिकायवन्नास्ति प्रत्येकं द्रव्यबाहुल्यमेकैकद्रव्यत्वात्तेषां जीवास्तिकाये त्वनन्तजीवद्रव्यात्मकत्वादस्ति द्रव्यबाहुल्यं केवलं परमाणुद्विप्रदेशिकादिद्रव्याणामिव जीवद्रव्याणां पूर्वानुपूर्व्यादित्वनिबन्धनः प्रथमपाश्चात्यादिभावो नास्ति प्रत्येकमसंख्येयप्रदेशत्वेन सर्वेषां तुल्यप्रदेशत्वात्परमाणुद्विप्रदेशिकादिद्रव्याणां तु विषमप्रदेशिकत्वादिति अद्धासमयस्यैकत्वादेव तदसम्भव इत्यलमतिवर्णितेन तदेवं समर्थिता औपनिधिकी द्रव्यानुपूर्वी तत्समर्थने च समार्थिता प्रागुद्दिष्टा द्विःप्रकारापि द्रव्यानुपूर्वी ततः सेत्तमित्यादि निगमनमिति द्रव्यानुपूर्वी समाप्ता ॥ ॥ टी० अनु० ॥

(७) अथ प्रागुद्दिष्टामेव क्षेत्रानुपूर्वी व्याचिख्यासुराह—

से किं तं खेत्ताणुपुव्वी २ दुविहा पण्णत्ता तं जहा उवणिहिआ य अणोवणिहिआ य तत्थ णं जा सा उवणिहिआ सा ठप्पा ॥ अनु० मू० ॥

से किं तं खेत्ताणुपुव्वित्ति । इह क्षेत्रविषयानुपूर्वी क्षेत्रानुपूर्वी का पुनरियमित्यत्र निर्वचनं क्षेत्रानुपूर्वी द्विविधा प्रज्ञप्ता तद्यथा औपनिधिकी अनौपनिधिकी च ॥ टी० अनु० ॥

तत्थ णं जा अणोवणिहिया सा दुविहा पण्णता तं जहा—णेगमववहाराणं संगहस्स य ॥ अनु० मू० ॥

सा नयवक्तव्यताश्रवणाद् द्विविधा प्रज्ञप्ता तद्यथा नैगमव्यवहारयोः संग्रहस्य च सम्मतेति शेषः ॥ टी० ॥ अनु० ॥

तत्रैव नैगमव्यवहारसम्मतां तावद्दर्शयितुमाह—

से किं तं णेगमववहाराणं अणोवानिहिआ खेत्ताणुपुव्वी २ पंचविहा पण्णत्ता अट्ठपयपरूवणया भंगसमुक्कित्तणया भंगोवदंसणया समोआरे अणुगमे । से किं तं णेगमववहाराणं अट्ठपयपरूवणया २ तिपएसोगाढे आनुपुव्वी जाव दसपएसोगाढे आनुपुव्वी संखिज्जपएसोगाढे आनुपुव्वी असंखिज्जपएसोगाढे आनुपुव्वी एगपएसोगाढे अणानुपुव्वी दुपएसोगाढे अवत्तव्वए तिपएसोगाढा आनुपुव्वीओ जाव दसपएसोगाढा आनुपुव्वीओ संखिज्जपएसोगाढा आनुपुव्वीओ एगपएसोगाढा अणानुपुव्वीओ दुपएसोगाढा अवत्तव्वगाई सेत्तं णेगमववहाराणं अट्ठपयपरूवणया एआणं णेगमववहाराणं अट्ठपयपरूवणयाए किं पओअणं णेगमववहाराणं भंगसमुक्कित्तणया कज्जइ । से किं तं णेगमववहाराणं भंगसमुक्कित्तणया २ अत्थि आनुपुव्वी अत्थि अणानुपुव्वी अत्थि अवत्तव्वए एवं दव्वानुपुव्विगमेणं खेत्तानुपुव्वीए वि ते चेव च्छव्वीसं भंगा भाणिअव्वा जाव सेत्तं णेगमववहाराणं भंगसमुक्कित्तणया एआणं णेगमववहाराणं भंगसमुक्कित्तणया किं पओअणं एआए णं णेगमववहाराणं भंगसमुक्कित्तणया णेगमववहाराणं भंगोवदंसणया कज्जइ । से किं तं णेगमववहाराणं भंगोवदंसणया २ तिपएसोगाढे आनुपुव्वी एगपएसोगाढे आणानुपुव्वी दुपएसोगाढे अवत्तव्वए तिपएसोगाढा आणुपुव्वीओ एगपएसोगाढा आणानुपुव्वीओ दुपएसोगाढा अवत्तव्वगाई अहवा तिपएसोगाढे अ एगपएसोगाढे अ आणुपुव्वी अ आणाणुपुव्वी अ एवं तहा चेव दव्वाणुपुव्विगमेणं छव्वीसं भंगा भाणिअव्वा जाव सेत्तं णेगमववहाराणं भंगोवदंसणया । से किं तं समोआरे २ णेगमववहाराणं आणुपुव्विदव्वाइं कहिं समोतरंति किं आणुपुव्विदव्वेहिं समोतरंति आणाणुपुव्विदव्वेहिं समोतरंति अवत्तव्वगदव्वेहिं समोतरंति आणुपुव्विदव्वेहिं समोतरंति सेत्तं समोतारे । से किं तं अनुगमे २ नवविहे पण्णत्ते तं जहा संतपयपरूवणया जाव अप्पा बहुं चेव १ णेगमववहाराणं आणुपुव्विदव्वाइं किं अत्थि नत्थि णिअमा अत्थि एवं तिण्णि वि ॥ अनु० मू० ॥

से किं तमित्यादि । इह व्याख्या यथा द्रव्यानुपूर्वी तथैव कर्त्तव्या विशेषं तु वक्ष्यामस्तत्र ( तिपएसोगाढे आणुपुव्वित्ति) त्रिषु नभःप्रदेशेष्ववगाढः स्थितः त्रिप्रदेशावगाढस्त्र्यणुकादिकोऽनन्ताणुकपर्यन्तो द्रव्यस्कन्ध एवानुपूर्वी । ननु यदि द्रव्यस्कन्ध एवानुपूर्वी कथं तर्हि तस्य क्षेत्रानुपूर्वीत्वं सत्यं किन्तु क्षेत्रप्रदेशत्रयावगाहपर्यायविशिष्टोऽसौ द्र-

व्यस्कन्धो गृहीतो नाविशिष्टस्ततोऽत्र क्षेत्रानुपूर्व्याधिकारात् क्षेत्रावगाहपर्यायस्य प्राधान्यात्सोऽपि क्षेत्रानुपूर्वीति न-दोषः प्रदेशत्रयलक्षणस्य क्षेत्रस्यैवात्र मुख्यक्षेत्रानुपूर्वीत्वं तदधिकारादेव किन्तु तदवगाढं द्रव्यमपि तत्पर्यायस्य प्राधान्येन विवक्षितत्वात् क्षेत्रानुपूर्वीत्वेन न विरुध्यत इति भावः । यद्येवं तर्हि मुख्यं क्षेत्रं परित्यज्य किमिति तदवगाढद्रव्यस्यानुपूर्व्यादिभावश्चिन्त्यते उच्यते ( सन्तपयपरूवणयेत्यादि । वक्ष्यमाणबहुतरविचारविषयत्वेन द्रव्यस्य शिष्यमतिव्युत्पादनार्थत्वात् क्षेत्रस्य तु नित्यत्वेन सदावस्थितमात्रत्वादचलत्वाच्च प्रायो वक्ष्यमाणविचारस्य सुप्रतीतत्वेन तथाविधशिष्यमतिव्युत्पत्तिविषयत्वादेवमन्यदपि कारणमभ्यूह्यमित्यलं विस्तरेण । एवं चतुःप्रदेशावगाढादिष्वपि भावना कार्या संख्यातप्रदेशावगाढादिष्वपि भावना कार्या यावदसङ्ख्यातप्रदेशावगाढादिष्वपि भावना कार्या यावदसंख्यातप्रदेशावगाढोऽसंख्याताणुकोऽनन्ताणुको वा द्रव्यस्कन्धो मंतव्यो यतः पुद्गलद्रव्याणामवगाहमित्थं जगद्गुरवः प्रतिपादयन्ति परमाणुरेकस्यैकस्मिन्नेव प्रदेशेऽवगाहते द्विप्रदेशिकादयोऽसंख्यातप्रदेशिकांतास्तु स्कन्धाः प्रत्येकं जघन्यत एकस्मिन्नाकाशप्रदेशेऽवगाहन्ते उत्कृष्टतस्तु यावत्स्कन्धे यावन्तः परमाणवो भवन्ति स तावत् तस्यैव नभःप्रदेशेष्ववगाहते अनन्ताणुकस्कन्धस्तु जघन्यतस्तथैव उत्कृष्टतस्त्वसंख्येयेष्ववगाहते नानन्तेषु लोकाकाशस्यैवासंख्येयप्रदेशत्वात् । लोकाकाशे च द्रव्यस्यावगाहादित्यलं प्रसङ्गेन । प्रकृतमुच्यते तत्रानुपूर्वीप्रतिपक्षत्वादनानुपूर्व्यादिस्वरूपमाह-(एगपएसोगाढे अणाणुपुव्वित्ति ) एकस्मिन्नभःप्रदेशेऽवगाढः स्थित एकप्रदेशाऽवगाढः परमाणुसंघातस्कंधसङ्घातश्च क्षेत्रतोऽनानुपूर्वीति मन्तव्यः ( दुप्पएसावगाढे अवत्तव्वएति ) प्रदेशद्वयेऽवगाढो द्विप्रदेशिकादिस्कन्धः क्षेत्रतोऽवक्तव्यकं शेषो बहुवचननिर्देशादिको ग्रंथो यथाधस्ताद्द्रव्यानुपूर्व्यां व्याख्यातस्तथेहापि तदुक्तानुसारतो व्याख्येयः ॥ टी० अनु० ॥

नेगमववहाराणं आनुपुव्विदव्वाइं किं संखिज्जाइं असंखिज्जाइं अणंताइं नो संखिज्जाइं असंखिज्जाइं दोण्णि वि नेगमववहाराणं आनुपुव्विदव्वाइं अणंताइं नो संखिज्जाइं असंखिज्जाइं नो अणंताइं एवं तिण्णि वि ॥ अनु० सू० ॥

द्रव्यप्रमाणद्वारे "णेगमववहाराणं आणुपुव्विदव्वाइं किं संखेज्जाइं" इत्यादिप्रश्नः अत्रोत्तरं नो संखेज्जाइमित्यादि त्र्यादिप्रदेशात्रिभागावगाढानि द्रव्याणि क्षेत्रत आनुपूर्वीत्वेन निर्दिष्टानि त्र्यादिप्रदेशविभागाश्च सङ्ख्यातप्रदेशात्मके लोकेऽसङ्ख्याता भवन्ति अतो द्रव्यतया बहूनामपि क्षेत्रावगाहमपेक्ष्य तुल्यप्रदेशावगाढानामेकत्वात् क्षेत्रानुपूर्व्यासङ्ख्यातान्येवानुपूर्वीद्रव्याणि भवन्तीति भावः । एकमेकप्रदेशावगाढं बह्वपि द्रव्यं क्षेत्रत एकैवाऽनानुपूर्वीत्युक्तं । लोके च प्रदेशा असंख्याता भवन्त्यतस्तुल्यसङ्ख्यत्वादनानुपूर्वीद्रव्याण्यप्यसङ्ख्येयानीति एवं प्रदेशद्वयेऽवगाढं बह्वपि द्रव्यं क्षेत्रत एकमेवावक्तव्यकमुक्तं द्विप्रदेशात्मकाश्च विभागा लोकेऽसङ्ख्याता भवन्त्यतस्तान्यप्यसंख्येयानीति ॥ टी० अनु० ॥

नेगमववहाराणं आनुपुव्विदव्वाइं लोगस्स किं संखिज्जइभागे होज्जा असंखिज्जइभागे होज्जा जाव सव्वलोए होज्जा एगं दव्वं पडुच्च संखिज्जइभागे वा होज्जा असंखिज्जइभागे वा होज्जा संखेज्जेसु असंखेज्जेसु भागेसु वा होज्जा देसूणालोए वा होज्जा नाणादव्वाइं पडुच्च निअमा सव्वलोए होज्जा नेगमववहाराणं अणाणुपुव्विदव्वाइं पुच्छा एगं दव्वं पडुच्च नो संखिज्जइभागे होज्जा असंखिज्जइभागे होज्जा नो संखेज्जेसु नो असंखेज्जेसु नो सव्वलोगे होज्जा नाणादव्वाइं पडुच्च निअमा सव्वलोए होज्जा एवं अवत्तगदव्वाणि वि भाणिअव्वाणि ॥ अनु० मू० ॥

क्षेत्रद्वारे निर्वचनसूत्रे ( एगं दव्वं पडुच्च लोगस्स संखेज्जइभागे वा होज्जेत्यादि ) इह स्कन्धद्रव्याणां विचित्ररूपत्वात् कश्चित् स्कन्धो लोकस्य संख्येयं भागमवगाह्य तिष्ठत्यन्यस्त्वसंख्येयं अन्यस्तु संख्येयांस्तद्भागानवगाह्य वर्त्तते अन्यस्त्वसंख्येयान् इत्यतस्तत्स्कन्धद्रव्यापेक्षया सङ्ख्येयादिभागवर्त्तित्वं भावनीयं विशिष्टक्षेत्रावगाहो २००० पलक्षितानां स्कन्धद्रव्याणामेव क्षेत्रानुपुर्वीत्वेनोक्तत्वादिति भावः ( देसूणो वा लोए होज्जात्ति ) देशो नो वा लोके आनुपूर्वीद्रव्यं भवेदित्यत्राह--नन्वचित्तमहास्कन्धस्य सर्वलोकव्यापकत्वं पूर्वमुक्तं तस्य च समस्तलोकप्रवर्त्त्यसंख्येयप्रदेशलक्षणायां क्षेत्रानुपूर्व्यामवगाढत्वात्परिपूर्णस्यापि क्षेत्रानुपूर्वीत्वं न किंचिद्विरुध्यते तदपेक्षं क्षेत्रतोप्यानुपूर्वीद्रव्यं सर्वलोकव्यापि प्राप्यते किमिति देशोनलोकव्यापिता प्रोच्यते सत्यं किन्तु लोकोऽयमानुपूर्व्यानानुपूर्व्यवक्तव्यकद्रव्यः सर्वदेवा शून्यो द्रष्टव्य इति समयस्थितिः । यदि चात्रानुपूर्व्याः सर्वलोकव्यापिता निर्दिश्येत तदाऽनानुपूर्व्यवक्तव्यकद्रव्याणां निरवकाशतया भावप्रतीतत्वेन ततो महास्कंधपूरितेऽपि लोके जघन्यतोप्येकः प्रदेशोऽनानुपूर्वीविषयत्वेन प्रदेशद्वयं चाऽवक्तव्यकविषयत्वेन विवक्ष्यते आनुपूर्वीद्रव्यस्य तत्र सत्वेप्यप्राधान्यविवक्षणादनानुपूर्व्यवक्तव्यकयोः प्राधान्यविवक्षणादिति भावः ततोऽनेन प्रदेशत्रयलक्षणेन देशेन हीनोत्रलोकः प्रतिपादित इत्यदोषः । उक्तं च पूर्वमुनिभिः । महक्खंधा पुण्णेवि वत्तव्वगणाणुपुव्विदव्वाइं । जद्देसोगाढाइं तद्देसेणं स लोगूणो,, ॥ ननु यद्येवं तर्हि द्रव्यानुपूर्व्यामपि सर्वलोकव्यापित्वमानुपूर्वीद्रव्यस्य यदुक्तं तदसङ्गतं प्राप्नोत्यनानुपूर्व्यवक्तव्यकद्रव्याणामनवकाशत्वेन तत्राप्यभावप्रतीतिप्रसंगात् सर्वकालं तेषामप्यवस्थिति प्रतिपादनान्नैतदेवं यतो द्रव्यानुपूर्व्यां द्रव्याणामेवानुपूर्व्यादिभाव उक्तो न क्षेत्रस्य तस्य तत्रानधिकृतत्वाद् द्रव्याणां चानुपूर्व्यादीनां परस्परभिन्नानामप्येकत्रापि क्षेत्रेऽवस्थानं न किंचिद्विरुध्यते । एकापवरकांतर्गतानेकप्रदीपप्रभावस्थानदृष्टान्तादिसिद्धत्वादतो न तत्र कस्याप्यनवकाशोऽत्र तु द्रव्याणामौपचारिक एवानुपूर्व्यादिभावो मुख्यस्तु क्षेत्रस्यैव क्षेत्रानुपूर्व्याधिकारात्ततो यदि लोकप्रदेशाः सामस्त्येनैवानुपूर्व्या क्रोडीकृताः स्युस्तदा किमन्यदनानुपूर्व्यवक्तव्यकतया प्रतिपद्यते यास्त्विहैवाकाशप्रदेशेष्वानुपूर्व्यास्तेष्वेवेतरयोरपि सद्भावः कथयिष्यते स द्रव्यावगाहभेदेन क्षेत्रभेदस्य विवक्षणादिति । तस्मादनानुपूर्व्यवक्तव्यकविषयप्रदेशत्रयलक्षणेन देशेन

लोकस्योन्नता विवक्षितेति । अथवा आनुपूर्वीद्रव्यस्य स्वावयवरूपदेशाः कल्प्यंते यथा पुरुषस्यांगुल्यादयस्ततश्च विवक्षिते कस्मिंश्चिद्देशे देशितः स उद्भवो विवक्ष्यते तथा पुरुषस्यैवांगुलोद्देशे देशस्यैव तत्र प्राधान्येन विवक्षितत्वादिति भावः । न च वक्तव्यं देशिनो देशोनः कश्चिद्भिन्नो दृश्यते एकान्ताभेदे देशमात्रस्य चाभावप्रसंगात् ततश्च समस्तलोकक्षेत्रावगाहपर्यायस्य प्राधान्याश्रयणादत्राचित्तमहास्कंधस्यानुपूर्वीत्वेऽपि देशोन एव लोकः स्वकीयैकस्मिन्देशे न तस्याभावविवक्षणात्तस्मिंश्चानुपूर्व्यव्याप्तदेशे इतरयोरवकाशः सिद्धो भवतीति भावः । न च देशदेशिभावः कल्पनामात्रं सम्मत्यादिन्यायान्निर्दिष्टयुक्तिसिद्धत्वादित्यलं प्रसंगेन । ( नाणा दव्वाइमित्यादि ) त्र्यादिप्रदेशावगाढद्रव्यभेदतो अत्रानुपूर्वीणां नानात्वं तैश्च त्र्यादिप्रदेशावगाढे द्रव्यभेदे सर्वोऽपि लोको व्याप्त इति भावः । अत्रानानुपूर्वीचिन्तायामेकद्रव्यं प्रतीत्य लोकस्यासंख्येयभागवर्त्तित्वमेव एकप्रदेशावगाढस्यैवानानुपूर्वीत्वेन प्रतिपादनादेकप्रदेशस्य च लोकासंख्येयभागवर्त्तित्वादिति । ( नाणादव्वाइ पडुच्च नियमा सव्वलोए होज्जत्ति ) एकैकप्रदेशावगाढैरपि द्रव्यभेदैः समस्तलोकव्याप्तेरिति एवं ( अव्वत्तव्वगदव्वाणिवित्ति ) अवक्तव्यकद्रव्यमप्येकं लोकासंख्येयभाग एव वर्त्तते द्विप्रदेशावगाढा वा वक्तव्यकत्वेनाभिधानात् प्रदेशद्वयस्य वा लोकासंख्येयभागवर्त्तित्वादिति तथा प्रत्येकं द्विप्रदेशावगाढैरपि द्रव्यभेदैः समस्तलोकव्याप्तेन नानाद्रव्याणामत्रापि सर्वलोकव्यापित्वमवसेयमिति । अत्राह नन्वानुपूर्व्यादिद्रव्याणि त्रीण्यपि सर्वलोकव्यापीनीत्युक्तानि ततश्च येष्वेवाकाशप्रदेशेष्वानुपूर्वी तेष्वेवेतरयोरपि सद्भावः प्रतिपादितो भवति कथंचित्परस्परविरुद्धं भिन्नविषयं व्यपदेशत्रयमेकस्यात्रोच्यते इह त्र्यादिदेशावगाढात् द्रव्याद्भिन्नमेतावदेकप्रदेशावगाढं ताभ्यां च भिन्नं द्विप्रदेशावगाढं ततश्चाधेयस्यावगाहकद्रव्यस्य भेदादाधारस्याप्यवगाहस्य भेदः स्यादेव तथा च व्यपदेशाभेदो युक्त एव अनन्तधर्माध्यासिते च वस्तुनि तत्तत्सहकारिसन्निधानातद्धर्माभिव्यक्तेर्दृश्यत एव समकालव्यपदेशे भेदो यथा खड्गकुन्तकवचादियुक्ते देवदत्ते खड्गी कुन्ती कवचीत्यादिरिति । इह क्वचिद्वचनान्तरे ( अणाणुपुव्विदव्वाइं अव्वत्तव्वगदव्वाणि य जहेव हिट्ठात्ति ) देशवद् दृश्यते तत्र हेठ्ठत्ति यथाऽधस्तात् द्रव्यानुपूर्व्यामनयोः क्षेत्रमुक्तं तथात्रापि ज्ञातव्यमित्यर्थस्तच्च व्याख्यातमेवत्येवमन्यत्रापि यथासंभवं वचनान्तरमवगन्तव्यमिति । गतं क्षेत्रद्वारं ॥ टी० अनु० ॥

णेगमववहाराणं आणुपुव्विदव्वाइं लोगस्स किं संखेज्जइभागं फुसइ असंखिज्जतिभागं फुसंति संखिज्जे भागे फुसंति जाव सव्वलोगं फुसंति एगं दव्वं पडुच्च संखिज्जइभागं वा फुसइ संखिज्जइ भागे असंखिज्जइ भागे संखेज्जे भागे वा असंखेज्जे भागे देसूणं वा लोगं फुसइ नाणादव्वाइं पडुच्च णिअमा सव्वलोगं फुसंति अणाणुपुव्वीदव्वाइं अवत्तव्वगदव्वाइं च जहाखेत्तं नवरं फुसणा भाणिअव्वा ॥ अनु० मू० ॥

स्पर्शनाद्वारमपि चेत्थमेव निखिलं भावनीयं नवरमत्र कस्यांचिद्वाचनायामभिप्रायेणानुपूर्व्यामेकद्रव्यस्य संख्येयभागादारभ्य यावद्देशोनलोकस्पर्शना भवतीति ज्ञायते अन्यस्यास्त्वभिप्रायेण असंख्येयभागादारभ्य यावत्सम्पूर्णलोकस्पर्शनास्यादित्यवसीयते एतच्च द्वयमपि युध्यत एव यतो यदि मुख्यतया क्षेत्रप्रदेशानामानुपूर्वीत्वमंगीक्रियते तदा अनानुपूर्व्यवक्तव्यकयोर्निरवकाशताप्रसंगात्पूर्ववद्देशोनलोकस्य वाच्योऽप्यानुपूर्वीरूपे क्षेत्रे अवगाढत्वादचित्तमहास्कन्धस्यैवानुपूर्वीत्वम् तर्हि द्रव्यानुपूर्व्यामिवात्रापि संपूर्णता लोकस्यावाच्येति नचात्रानुपूर्व्यासकलस्यापि लोकस्य स्पृष्टत्वादितरयोरवकाशाभाव इति वक्तव्यम् । एकैकप्रदेशरूपे द्विद्विप्रदेशरूपे च क्षेत्रेऽवगाढानां प्रत्येकमसंख्येयानां द्रव्यभेदानां सद्भावतस्तयोरपि प्रत्येकमसंख्येयभेदे यो लोके सद्भावाद् द्रव्यावगाहभेदेन च क्षेत्रभेदस्येह विवक्षितत्वादिति भावः वृद्धबहुश्रुतश्चायमपि पक्षोलक्ष्यते तत्त्वं तु केवलिनो विदन्ति क्षेत्रस्पर्शनयोस्तु विशेषः प्राग्निदर्शित एवेति । गतं स्पर्शनाद्वारम् ॥ टी० अनु० ॥

णेगमववहाराणं आणुपुव्वीदव्वाइं कालओ केवचिरं होइ एवं तिण्णि वि एगं दव्वं पडुच्च जहन्नेणं एगं समयं उक्कोसेणं असंखेज्जं कालं नाणादव्वाइं पडुच्च निअमा सव्वद्धा ॥ अनु० मू० ॥

अथ कालद्वारं तत्रावगाहपर्यायस्य प्राधान्यविवक्षाया त्र्यादिप्रदेशावगाढद्रव्याणामेवानुपूर्व्यादिभावः पूर्वमुक्तोऽतस्तेषामेवावगाहस्थितिकालं चिंतयन्नाह-एगं दव्वं पडुच्चेत्यादि । अत्र भावना इह प्रदेशावगाढस्य वा एकप्रदेशावगाढस्य वा द्रव्यस्य परिणामवैचित्र्यात्प्रदेशत्रयाद्यवगाहभवने आनुपूर्वीव्यपदेशः संजातः समयं चैकं तद्भावमनुभूय पुनस्तथैव द्विप्रदेशावगाढमेकप्रदेशावगाढं वा तद् द्रव्यं संजातमित्यानुपूर्व्या समयो जघन्याऽवगाहस्थितिः यदा तु तदेव द्रव्यमसंख्येयं कालं तद्भावमनुभूय पुनस्तथैव द्विप्रदेशावगाढमेकप्रदेशावगाढं वा जायते तदा उत्कृष्टतया असंख्येयोऽवगाहस्थितिकालः सिध्यति अनन्तस्तु न भवति विवक्षितैकद्रव्यस्यैकावगाहनोत्कृष्टताप्यसंख्यातकालमेवास्थानादिति नानाद्रव्याणि तु सर्वाद्धा सर्वकालमेवावस्थानादिति सर्वकालमेव भवन्ति त्र्यादिप्रदेशावगाढद्रव्यभेदानां सदैवाऽस्थानादिति एवं यदा समयमेकं किंचिद् द्रव्यमेकस्मिन् प्रदेशावगाढे स्थित्वा ततो द्व्यादिप्रदेशावगाढं भवति तदा नानुपूर्व्याः समयो जघन्यावगाहस्थितिः यदा तु तदेवासंख्यातं कालं तद्रूपेण स्थित्वा ततो द्व्यादिप्रदेशावगाढं भवति तदोत्कृष्टतोऽसंख्येयावगाहस्थितिकालः नानाद्रव्याणि तु सर्वकालमेकैकप्रदेशावगाढद्रव्यभेदानां सर्वदाभावात् स्थितिः । अवक्तव्यकस्य तु द्विप्रदेशावगाढस्य समयादूर्ध्वमेकस्मिंस्त्र्यादिषु वा प्रदेशेष्ववगाहप्रतिपत्तौ जघन्यासमयोऽवगाहस्थितिः असंख्येयकालादूर्ध्वं द्विप्रदेशावगाहं परित्यजत उत्कृष्टतोऽसंख्येयोऽवगाहस्थितिकालः सिध्यति नानाद्रव्याणि तु सर्वकालं द्विप्रदेशावगाढद्रव्यभेदानां सदैव भावादित्येवं समानवक्तव्यत्वादातिदिशति एवं दोण्ण वित्ति ॥ टी० अनु० ॥

इदानीमन्तरद्वारम्—

णेगमववहाराणं आणुपुव्वीदव्वाणं अंतरं कालओ केवचिरं होइ तिण्हं पि एगं दव्वं पडुच्च जहण्णेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं नाणादव्वाइं पडुच्च नत्थि अंतरं ॥ ॥ अनु० मू० ॥

जहएणेणं एगं समयोत्ति । अत्र भावना इह यदा त्र्यादिप्रदेशावगाढं किमप्यानुपूर्वीद्रव्यं समयमेकं तस्माद्विवक्षितक्षेत्रादन्यत्रावगाहं प्रतिपद्य पुनरपि केवलमन्यद् द्रव्यसंयुक्तं वा तेष्वेव विवक्षितत्र्याद्याकाशप्रदेशेष्ववगाहते । तदैकानुपूर्वीद्रव्यस्य समये ज्ञघन्यान्तरकालः प्राप्यते ॥

(उक्कोसेणं असंखेज्जं कालंति ) तदेव यदाऽन्येषु क्षेत्रप्रदेशश्च संख्येयं कालं परिभ्रम्य केवलमन्यद्रव्यसंयुक्तं समागत्य पुनरपि तेष्वेव विवक्षितत्र्याद्याकाशप्रदेशेष्ववगाहते तदोत्कृष्टतोऽसंख्येयोत्तरकालः प्राप्यते न पुनर्द्रव्यानुपूर्व्यामिवानन्तो यतो द्रव्यानुपूर्व्यां विवक्षितादन्ये द्रव्यविशेषा अनन्ता प्राप्यंते तैश्च सह क्रमेण संयोगे उक्तोऽनन्तः कालः । अत्र तु विवक्षितावगाहक्षेत्रादन्यत्क्षेत्रमसंख्येयमेव प्रतिस्थानं चावगाहनामाश्रित्य संयोगस्थितिरत्राप्यसंख्येयकालैव । ततश्चासंख्येये क्षेत्रे कालपरिभ्रमता द्रव्येण पुनरपि केवलेनान्यसंयुक्तेन वाऽसंख्येयकालान्तेष्वेव नभःप्रदेशेष्वागत्यावगाहनीयं न च वक्तव्यमसंख्येयेऽपि क्षेत्रे पुनः पुनः तत्रैव परिभ्रमणे कस्मादनन्तोऽपि कालो नोक्यत इति यत इहासंख्येयक्षेत्रे असंख्येयकालमेवान्यत्र तेन पर्यटितव्यम् तत ऊर्ध्वं पुनस्तस्मिन्नेव विवक्षितक्षेत्रे नियमादवगाहनीयं वस्तुस्थितिस्वभावादिति तावदेकीयं व्याख्यानमादर्शितं अन्ये तु व्याचक्षते यस्मात् त्र्यादिप्रदेशलक्षणाद्विवक्षितक्षेत्रात्तदानुपूर्वीद्रव्यमन्यत्र गतं तस्य क्षेत्रस्य स्वभावादेवासंख्येयकालादूर्ध्वं तेनैवानुपूर्वीद्रव्येण वर्णगन्धरसस्पर्शसंख्यादिधर्मैः सर्वथा तुल्येनान्येन वा तथाविधेन संयोगे सति नियमात्तथाभूताधारतोपपत्तेरसंख्येय एवांतरकाल इति तत्त्वं तु केवलिनो विदंति गम्भीरत्वात् सूत्रप्रवृत्तेरिति ( नाणादव्वाईत्यादि ) त्र्यादिप्रदेशावगाढानुपूर्वीद्रव्याणि युगपत्सर्वाण्यपि तद्भावं विहाय पुनस्तत्रैव जायन्त इति कदाचिदपि संभवत्यसंख्येयानां तेषां सर्वदैवोक्तत्वादिति भावः । अनानुपूर्व्यवक्तव्यकद्रव्येष्वप्यसाविकानेकद्रव्याश्रया अन्तरकालवक्तव्यता केवलमनानुपूर्वीद्रव्यस्यैकप्रदेशावगाढस्यावक्तव्यकद्रव्यस्य तु द्विप्रदेशावगाढस्य पुनस्तथाभवने उत्तरकालश्चिन्तनीयः शेषा तु व्याख्याद्वयभावना सर्वापि तथैवेति। उक्तमन्तरद्वारम् ॥ टी० अनु० ॥

साम्प्रतं भागद्वारमुच्यते

णेगमववहाराणं आणुपुव्विदव्वाइं सेसदव्वाणं कति भागे होज्जा तिण्णि वि जहा दव्वाणुपुव्वीए ॥ अनु० मू० ॥

तत्र च यथा द्रव्यानुपूर्व्यां तथा चाप्यानुपूर्वीद्रव्याणि अनानुपूर्व्यवक्तव्यकलक्षणेभ्यः शेषद्रव्येभ्योऽसंख्येयैर्भागैरधिकानि शेषद्रव्याणि तु तेषामसंख्येयभागे वर्त्तन्त इति । अत्राह- ननु त्र्यादिप्रदेशावगाढानि द्रव्याण्यानुपूर्व्यानि एकैकप्रदेशावगाढान्यनानुपूर्व्यानि द्व्यादिप्रदेशावगाढान्यवक्तव्यकानीति प्राक् प्रतिज्ञातं एतानि चानुपूर्व्यादीनि सर्वस्मिन्नपि लोके सन्त्यतो युक्त्या विचार्यमाणान्यानुपूर्वीद्रव्याण्येव स्तोकानि ज्ञायंते तथाह्यसत्कल्पनया किल लोके त्रिंशत्प्रदेशास्तत्र चानानुपूर्वीद्रव्याणि त्रिंशदेव अवक्तव्यकानि तु पंचदश आनुपूर्वीद्रव्याणि तु यदि सर्वस्तोकतया त्रिप्रदेशनिष्पन्नानि गण्यंते तथापि दशैव भवन्तीति शेषेभ्यःस्तोकान्येव प्राप्नुवंति कथमसंख्येयगुणानि स्युरिति ? अत्रोच्यते- एकस्मिन्नानुपूर्वीद्रव्ये ये नभःप्रदेशाः उपयुज्यन्ते ते यद्यन्यस्मिन्नपि नो युज्यंते तदा स्यादेवं च नास्ति यत एकस्मिन्नपि प्रदेशत्रयनिष्पन्ने आनुपूर्वीद्रव्ये यत्र ये प्रदेशास्त एवान्यारूपतयावगाढेनाधेया द्रव्येणाक्रान्ताः सन्तः प्रत्येकमनेकेषु त्रिकसंयोगेषु गण्यंते प्रतिसंयोगमाधेयद्रव्यस्य भेदात्तद्भेदे चाधारभेदादिति भावः । एवमन्यान्यपि चतुःप्रदेशावगाढाद्याधेयानाध्यासितत्वात्त एवानेकेषु चतुष्कसंयोगेष्वनेकेषु पंचकसंयोगेषु यावदनेकेष्वसंख्येयकसंयोगेषु प्रत्येकमुपयुज्यन्ते एवं चतुरादिप्रदेशनिष्पन्नेष्वप्यानुपूर्वीद्रव्येषु ये चतुरादयः प्रदेशास्तेषामप्यन्यान्यसंयोगिता भावनीया । तस्मादसंख्येयप्रदेशात्मकेष्ववस्थित्या व्यवहिते लोके यावन्तस्त्रिकसंयोगादयोऽसंख्येयकसंयोगपर्यंताः संयोगा जायन्ते तावन्त्यानुपूर्वीद्रव्याणि भवन्ति प्रतिसंयोगमाधेयद्रव्यस्य भेदेनावस्थितिसद्भावादाधेयभेदे चाधारभेदान्नभःप्रदेशा येनैव स्वरूपेणैकस्मिन्नाधेय उपयुज्यंते तेनैव स्वरूपेणाधेयान्तरेऽपि आधेयैकताप्रसंगादेकस्मिन्नाधारस्वरूपे तदवगाहाभ्युपगमाद्य एतत्स्वरूपवत्तस्मात् त्र्यादिसंयोगानां लोके बहुत्वादानुपूर्वीणां बहुत्वं भावनीयम् । अवक्तव्यकानि तु स्तोकानि द्विकसंयोगानां तत्रस्तोकत्वादनानुपूर्व्यापि स्तोक एव लोकाप्रदेशसंख्यामात्रत्वादत्र सुखप्रतिपत्त्यर्थं लोके किल पंचाकाशप्रदेशाः कल्प्यन्ते तद्यथा अत्रानानुपूर्व्यस्तावत्पंचैव प्रतीताः अवक्तव्यकानि त्वष्टौ द्विकसंयोगानामिहाष्टानामेव संभवादानुपूर्व्यास्तु षोडश भवन्ति दशानां त्रिकयोगानां पंचानां चतुष्कयोगानामेकस्य तु पंचकयोगस्येह लाभाद्दश त्रिकयोगाः कथमिह लभ्यंत इति चेदुच्यते षड्भाववत् मध्यव्यवस्थापितेन सह लभ्यन्ते चत्वारस्तु त्रिकयोगादिव्यवस्थापितैश्चतुर्भिरेव केवलैरिति चतुष्कयोगास्तु चत्वारो मध्यव्यवस्थितेन सह लभ्यन्ते एकस्तु तन्निरपेक्षैर्दिग्व्यवस्थितैरेवेति सर्वे पंचपंचकयोगस्तु प्रतीत एवेति तदेवं प्रदेशपंचकप्रस्तारेऽप्यानुपूर्वीणां बाहुल्यं दृश्यते अत एतदनुसारेण सद्भावतोऽसंख्येयप्रदेशात्मके लोकेऽत्रानुपूर्वीद्रव्याणां शेषेभ्योऽसंख्यातगुणत्वं भावनीयमित्यलं विस्तरेण। उक्तं भागद्वारम् ॥ टी० अनु०

साम्प्रतं भावद्वारमाह-

णेगमववहाराणं आणुपुव्वीदव्वाइं कतरंमि भावे होज्जा तिण्णि वि णिअमा सादिपारिणामिए भावे होज्जा ॥ ॥ अनु० मू० ॥

तत्र च द्रव्याणां त्र्यादिप्रदेशावगाहपरिणामस्य एकप्रदेशावगाहपरिणामस्य द्विप्रदेशावगाहपरिणामस्य च सादिपारिणामिकत्वात् त्रयाणामपि सादिपारिणामिकभाववर्त्तित्वं भावनीयमिति ॥ टी० अनु० ॥

एएसिणं णेगमववहाराणं आणुपुव्विदव्वाणं अणाणुपुव्वि-

दव्वाणं अवत्तगदव्वाण य दव्वट्ठयाए पएसट्ठयाए कतरे २ हिंतो अप्पा वा तुल्ला वा विसेसाहिआ वा जहा दव्वानुपुव्वीए तहा भाणिअव्वं नवरं अणंतगं णत्थि सेत्तं अनुगमो सेत्तं णेगमववहाराणं अणोवणिहिआ खेत्ताणुपुव्वी ॥ ॥ अनु० मू० ॥

अल्पबहुत्वद्वारे इह द्रव्यगणनं द्रव्यार्थता प्रदेशगणनं प्रदेशार्थता उभयगणनं तूभयार्थता तत्रानुपूर्व्यां विशिष्टद्रव्यावगाहोपलक्षिता त्र्यादिनभःप्रदेशसमुदायास्तावद् द्रव्याणि ।समुदायारंभकास्तु प्रदेशाः अनानुपूर्व्यां त्वेकैकप्रदेशावगाहिद्रव्योपलक्षिताः सकलनभःप्रदेशाः प्रत्येकं द्रव्याणि प्रदेशास्तु न संभवति एकैकप्रदेशद्रव्ये प्रदेशान्तरयोगादवक्तव्यकेषु तु यावन्तो लोके द्विकयोगा भवन्ति तावन्तस्ते प्रत्येकं द्रव्याणि तदारंभकास्तु प्रदेशा इति । शेषा त्वत्र व्याख्या द्रव्यानुपूर्वीवत्कर्त्तव्येति (नवरं सव्वत्थो वा नेगमववहाराणं अव्वत्तव्वगदव्वाइमित्यादि ) अत्राह ननु यदा पूर्वोक्तयुक्त्या एकैको नभःप्रदेशोऽनेकेषु द्विसंयोगेषूपयुज्यते तदा अनानुपूर्वीद्रव्येभ्यो वक्तव्यकद्रव्याणामेव बाहुल्यमवगम्यते यतः पूर्वोक्तायामपि पंचप्रदेशनभःकल्पनायामवक्तव्यकद्रव्याणामेवाष्टसंख्योपेतानां पंचसंख्येभ्योऽनानुपूर्वीद्रव्येभ्यो बाहुल्यं दृष्टं तत्कथमत्र व्यत्ययः प्रतिपाद्यते। सत्यमस्त्वेतत् केवलं लोकमध्ये लोकपर्यंतवर्त्ति निष्कुटगतास्तु ये कंटकाकृतयो विश्रेण्या निर्गता एकाकिनः प्रदेशास्ते विश्रेणिव्यवस्थितत्वादवक्तव्यकत्वायोग्या इत्यनानुपूर्वीसंख्यायामेवान्तर्भवन्त्यतो लोकमध्यगतां निष्कुटगतां च प्रस्तुतद्रव्यसंख्यां मीलयित्वा यदा केवली चिन्तयति तदा वक्तव्यकद्रव्याण्येव स्तोकान्यनानुपूर्वीद्रव्याणि तु तेभ्यो विशेषाधिकतां प्रतिपद्यन्ते अत्र निष्कुटस्थापना अत्र विश्रेणिलक्षितौ द्वौ अवक्तव्यकायोग्यौ दृष्टव्यावित्येवंभूताश्च किलामी सर्वलोकपर्यन्तेषु बहवः सन्त्यनानुपूर्वीणां बाहुल्यमित्यलं विस्तरेण । आनुपूर्वीद्रव्याणां तु तेभ्योऽसंख्यातगुणत्वं भावितमेव शेषं द्रव्यानुपूर्व्यनुसारेण भावनीयं नवरमुभयार्थताविचारे आनुपूर्वीद्रव्याणि स्वद्रव्येभ्यः प्रदेशार्थतयाऽसंख्येयगुणानि कथमेकैकस्य त्र्यादिभिरसंख्येयांतैर्नभःप्रदेशैरारभ्यत्वान्नभःप्रदेशानां च समुदितानामप्यसंख्येयत्वादिति सेत्तमित्यादि निगमनद्वय उक्ता नैगमव्यवहारनयमतेन अनौपानिधिकी क्षेत्रानुपूर्वी ॥ टी० अनु० ॥

अथ तामेव संग्रहमतेन विभणिषुराह—

से किं तं संगहस्स अणोवणिहिआ खेत्ताणुपुव्वी पंचविहा पण्णत्ता तं जहा—अट्ठपयपरूवणया भंगसमुक्कित्तणया भंगोवदंसणया समोतारे अणुगमे । से किं तं संगहस्स अट्ठपयपरूवणया २ तिपएसोगाढे आणुपुव्वी चतुप्पएसोगाढे आणुपुव्वी जाव दसपएसोगाढे आणुपुव्वीए संखिज्जपएसोगाढे अणुपुव्वी असंखिज्जपएसोगाढे आणुपुव्वी एगपएसोगाढे अणाणुपुव्वी दुपएसोगाढे अवत्तव्वए सेत्तं संगहस्स अट्ठपयपरूवणया एआएणं संगहस्स अट्ठपयपरूवणयाए किं पओअणं संगहस्स अट्ठपयपरूवणयाए संगहस्स भंगसमुक्कित्तणया कज्जइ से किं तं संगहस्स भंगसमुक्कित्तणया २ अत्थि आनुपूव्वी अत्थि अणानुपुव्वी अत्थि अवत्तव्वए अहवा अत्थि आनुपुव्वी अ अणाणुपुव्वी अ एवं जहा दव्वानुपुव्वीए संगहस्स तहा भाणिअव्वं जाव सेत्तं संगहस्स भंगसमुक्कित्तणया एआएणं संगहस्स भंगसमुक्कित्तणयाए किं पओअणं एआए णं संगहस्स भंगसमुक्कित्तणयाए संगहस्स भंगोवदंसणया कज्जइ । से किं तं संगहस्स भंगोवदंसणया २ तिपएसोगाढे आनुपुव्वी एगपएसोगाढे अणानुपुव्वी दुपएसोगाढे अवत्तव्वए अहवा तिपएसोगाढे अ एगपएसोगाढे अ आनुपुव्वी अ अणानुपुव्वी अ एवं जहा दव्वानुपुव्वीए संगहस्स तहा खेत्तानुपुव्वीए वि भाणिअव्वं जाव सेत्तं संगहस्स भंगोवदंसणया । से किं तं समोआरे २ संगहस्स आनुपुव्विदव्वाइं कहिं समोतरंति किं आनुपुव्विदव्वेहिं समोतरंति अणानुपुव्विदव्वेहिं अवत्तव्वगदव्वेहिं तिण्णि वि अट्ठाणे समोतरंति सेत्तं समोआरे । से किं तं अनुगमे २ अट्ठविहे पण्णत्ते तं जहा—संतपयपरूवणया जाव अप्पा बहु नत्थि २ संगहस्स आनुपुव्विदव्वाइं किं अत्थि नत्थि निअमा अत्थि एवं तिण्णि वि सेसगदाराइं संगहस्स तहा खेत्तानुपुव्वीए वि भाणिअव्वाइं जाव सेत्तं अनुगमे सेत्तं संगहस्स अणोवणिहिआ खेत्तानुपुव्वी सेत्तं अणोवनिहिआ खेत्तानुपुव्वी ॥ अनु० मू० ॥

से किंतमित्यादि । इह संग्रहाभिमतेन द्रव्यानुपूर्व्यानुसारेण निखिलं भावनीयं । नवरं क्षेत्रप्राधान्यादयः । तिपएसोगाढा आणुपुव्वी जाव असंखेज्जपएसोगाढा आणुपुव्वी एगपएसोगाढा अणाणुपुव्वी । दुपएसोगाढा अवत्तव्वए इत्यादि वक्तव्यं शेषं तथैवेति । उक्ता अनौपनिधिकी क्षेत्रानुपूर्वी ॥ टी० अनु० ॥

अथौपनिधिकीं तां निर्दिक्षुराह—

से किं तं उवनिहिआ खेत्तानुपुव्वी २ तिविहा पण्णत्ता तं जहा—पुव्वाणुपुव्वी पच्छानुपुव्वी अणानुपुव्वी । से किं तं पुव्वाणुपुव्वी २ अहोलोए तिरिअलोए उड्ढलोए सेत्तं पुव्वानुपुव्वी। से किं तं पच्छानुपुव्वी २ उड्ढलोए तिरिअलोए अहोलोए सेत्तं पच्छानुपुव्वी । से किं तं अणानुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए तिगिच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो । सेत्तं अणाणुपुव्वी अहोलोअखेत्तानुपुव्वी तिविहा पण्णत्ता तं जहा पुव्वानुपुव्वी पच्छानुपुव्वी अणानुपुव्वी ॥ अनु० मू० ॥

से किं तं उवणिहियेत्यादि । अत्र व्याख्या पूर्ववत्कर्त्तव्या नवरं तत्र द्रव्यानुपूर्व्यधिकाराद्धर्म्मास्तिकायादिषु द्रव्याणि पूर्वानुपूर्व्यादित्वेनोदाहृतान्यत्र तु क्षेत्रानुपूर्व्यधिकारादधोलोकादिक्षेत्रविशेषा इति अत्र च जघन्यपरिणामवद् द्रव्ययोगतो जघन्यतया गुणस्थानकेषु मिथ्यादृष्टेरिवाधोलोकस्योपन्यासः । तदुपरि मध्यमद्रव्ययत्वान्मध्यमतया तिर्य-

ग्लोकस्य तदुपरिष्टादुत्कृष्टद्रव्यवत्त्वादूर्ध्वलोकस्योपन्यास इति पूर्वानुपूर्वीत्वसिद्धिः पश्चानुपूर्वी तु व्यत्ययेन प्रतीतैव- अनानुपूर्व्यां पदत्रयस्य षड् भंगा भवन्ति ते च पूर्वदर्शिता एव शेषभावना त्विह प्राग्वदेवेति अत्र च क्वचिद्वाचनांतरे एकप्रदेशावगाढादीनामसंख्यातप्रदेशावगाढान्तानां प्रथमं पूर्वानुपूर्व्यादिभाव उक्तो दृश्यते सोऽपि क्षेत्रानुपूर्व्यधिकारादविरुद्ध एव सुगमत्वाच्चोक्तानुसारेण भावनीय इति ॥ टी० अनु० ॥

साम्प्रतं वस्त्वन्तरविषयत्वानुपूर्व्यादिभावं दिदर्शयिषुरधोलोकादीनां च भेदज्ञाने शिष्यव्युत्पत्तिं पश्यन्नाह-

अहोलोअखेत्तानुपुव्वी तिविहा पण्णत्ता तं जहा-पुव्वानुपुव्वी पच्छानुपुव्वी अणानुपुव्वी । से किं तं पुव्वानुपुव्वी २ रयणप्पभा सक्करप्पभा वालुअप्पभा पंकप्पभा धूमप्पभा तमप्पभा तमतमप्पभा सेत्तं पुव्वानुपुव्वी । से किं तं पच्छानुपुव्वी २ तमतमा जाव रयणप्पभा सेत्तं पच्छानुपुव्वी । से किं तं अणानुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए सेत्थगच्छगयाए सेढीए अण्णमण्णब्भासो सेत्तं अणानुपुव्वी ॥ अनु० मू० ॥

अहोलोए खेत्ताणुपुव्वी तिविहेत्यादि । अधोलोकक्षेत्रविषया आनुपूर्वी २ औपनिधिकीति प्रक्रमाल्लभ्यते सा त्रिविधा प्रज्ञप्ता तद्यथेत्यादि शेषं पूर्ववद्भावनीयम् । यावद्रत्नप्रभेत्यादि । अत्र प्रज्ञापकप्रत्यासन्नं रत्नप्रभाया आदावुपन्यासः कृतस्ततः परमधिकारविस्तरादित्वात् क्रमेण शर्कराप्रभादीनामिति पूर्वानुपूर्वीत्वं व्यत्ययेन पश्चानुपूर्वीत्वं अमीषां च सप्तानां पदानां परस्पराभ्यासे पंचसहस्राणि चत्वारिंशदधिकानि भंगानां भवन्ति तानि चाद्यन्तभङ्गकथनरहितान्यनानुपूर्व्यां द्रष्टव्यानि शेषभावना पूर्ववदिति ॥ टी० अनु० ॥

तिरिअलोअखेत्ताणुपुव्वी तिविहा पण्णत्ता तं जहा-पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी । से किं तं पुव्वाणुपुव्वी २ जंबूद्दीवे लवणे धायइकालो अ पुक्खरे वरुणे । खीरघयखोअनंदीअरुणवरे कुंडले रुअगे ॥ १ ॥ आभरणवत्थगंधे उप्पलतिलए अ पुढविनिहिरयणे । वासहरदहनईओ विजया वक्खारकप्पिंदा ॥२॥ कुरुमंदरआवासाकूडा नक्खत्तचंदसूरा य । देवे नागे जक्खे भूए अ सयंभूरमणे अ ॥३॥ सेत्तं पुव्वाणुपुव्वी । से किं तं पच्छाणुपुव्वी २ सयंभूरमणे अ जाव जंबूद्दीवे सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए असंखेज्जगच्छगयाए सेढीए अन्नमण्णब्भासो दुरूवूणो सेत्तं अणाणुपुव्वी ॥ ॥ अनु० मू० ॥

तिर्यग्लोकक्षेत्रानुपूर्व्यां जंबूद्दीवे इत्यादि गाथाव्याख्या-द्वाभ्यां प्रकाराभ्यां स्थानदातृत्वाहाराद्युपष्टंभहेतुत्वलक्षणाभ्यां प्राणिनः पान्तीति द्वीपा जम्बाबासभूतविशेषक्षेत्रविशेषाः सह मुद्रया मर्यादया वर्त्तन्त इति समुद्राः प्रचुरजलोपलक्षिताः क्षेत्रविशेषा एव एते च तिर्यग्लोके प्रत्येकमसंख्येया भवन्ति तत्र समस्तद्वीपसमुद्राभ्यन्तरभूतत्वेनादौ तावज्जंबूवृक्षेणोपलक्षितो द्वीपो जंबूद्वीपस्ततस्तं परिक्षिप्य स्थितो लवणरसास्वादनीरपूरितः समुद्रो लवणसमुद्रः एकदेशेन समुदायस्य गम्यमानत्वादेवं पुरस्तादपि यथासम्भवं द्रष्टव्यं ( धायइकालोयत्ति ) ततो लवणसमुद्रं परिक्षिप्य स्थितो धातकीवृक्षखण्डोपलक्षितो द्वीपो धातकीखण्डस्तत्परितोऽपि शुद्धोदकरसास्वादः कालोदधिसमुद्रस्तं च परिक्षिप्य स्थितः पुष्करैःपद्मवरैरुपलक्षितो द्वीपः पुष्करवरद्वीपः । तत्परितोऽपि शुद्धोदकरसास्वाद एव पुष्करोदः अनयोश्च द्वयोरप्येकेनैव पदेनात्र संग्रहो द्रष्टव्यः(पुक्खरेत्ति)एवमुत्तरत्रापि । ततो ( वरुणेत्ति) वरुणावरो द्वीपस्ततो वारुणीरसास्वादो वारुणोदः समुद्रः ( खीरत्ति ) क्षीरवरो द्वीपः क्षीररसास्वादः क्षीरोदः समुद्रः ( घयत्ति ) घृतवरो द्वीपः घृतरसास्वादो घृतोदः समुद्रः ( खोयत्ति ) इक्षुरसास्वाद एवेक्षुरसः समुद्रः इत ऊर्ध्वं सर्वेऽपि द्वीपसमुद्राः । सदृशनामानो मन्तव्याः अपरं च स्वयंभूरमणवर्जाः सर्वेपीक्षुरसास्वादास्तत्र द्वीपनामान्यमूनि तद्यथा नन्दी समृद्धिस्तस्या ईश्वरो द्वीपो नन्दीश्वरः एवं अरुणवरः अरुणावासः कुण्डलवरः शङ्खवरः रुचकवर इत्येवं षड् द्वीपनामानि चूर्णौ लिखितानि दृश्यन्ते सूत्रे तु नन्दीवरुणवरे कुण्डलरुयग इत्येतस्मिन् गाथाद्वये च तान्युपलभ्यन्ते अतश्चूर्णिलिखितानुसारेण रुचकस्त्रयोदशः सूत्रलिखितानुसारतस्तु स एवैकादशो भवति तत्त्वं तु केवलिनो विदन्तीति गाथार्थः । इदानीमनन्तरोक्तद्वीपसमुद्राणामवस्थितिस्वरूपप्रतिपादनार्थं शेषाणां तु नामाभिधानार्थमाह "जंबूदीवाओ खलु निरंतरा सेसया असंखइणा भुयगवरकुसवरा वि य कोंचवरा भरणमाईयत्ति,, व्याख्या एते पूर्वोक्ताः सर्वेऽपि जंबूद्वीपादारभ्य निरंतरा नैरन्तर्येण व्यवस्थिता न पुनरमीषामन्तरपरो द्वीपः कश्चनापि समस्तीतिभावः । ये तु शेषा भुजगवरादय इत ऊर्ध्वं वक्ष्यन्ते ते प्रत्येकमसंख्याततमा द्रष्टव्यास्तथा हि ( भुयगवरेत्ति ) पूर्वोक्ता द्रुचकवराद् द्वीपादसंख्येयान् द्वीपसमुद्रान् गत्वा भुजगवरो नाम द्वीपः समस्ति (कुशवरत्ति)ततोऽप्यसंख्येयांस्तान् गत्वा कुशवरनामा द्वीपः समास्ति । अपिचेति समुच्चये (कोंचवरत्ति) ततोऽप्यसंख्येयांस्तानतिक्रम्य क्रौंचवरो नाम द्वीपः समस्ति (आभरणमाइयत्ति )एवमसंख्येयान् द्वीपसमुद्रानुल्लंघ्याभरणादयश्चाभरणादिनामसदृशद्वीपा वक्तव्याःसमुद्रास्तु तत्सदृशनामान एव भवन्तीत्युक्तमेवेति गाथार्थः । इयं च गाथा कस्याञ्चिद्वाचनायां न दृश्यत एव केवलं क्वापि वाचनाविशेषे दृश्यते टीकाचूर्ण्योस्तु तद्व्याख्यानमुपलभ्यत इत्यस्माभिरपि व्याख्यातेति तान्येवाभरणादीनाह । "अ.भरणवत्थेत्यादि" गाथाद्वयं असंख्येयनाम संख्येयानां द्वीपानामन्ते आभरणवस्त्रगन्धोत्पलतिलकादिपर्यायसदृशनामा एकैकोऽपि द्वीपस्तावद्वक्तव्यो यावदन्ते स्वयंभूरमणो द्वीपः शुद्धोदकरसः स्वयंभूरमण एव समुद्र इति गाथाद्वयभावार्थः । ननु यद्येवं तर्ह्यसंख्येयान् द्वीपानतिक्रम्य ये वर्त्तन्ते तेषामेव द्वीपानामेतानि नामान्याख्यातानि ये त्वंतरालेषु द्वीपास्ते किंनामका इति वक्तव्यम् सत्यं लोके पदार्थानां शंखध्वजकलशश्रीवत्सादीनि यावन्ति शुभनामानि तैः सर्वैरप्युपल-

त्रितास्ते द्वीपाः प्राप्यन्त इति स्वयमेव दृष्टव्यं । यत उक्तं "दीवसमुद्दाणं भंते ! केवइया नामाधिज्जेहिं पण्णत्तेत्ति" गोयमा जावइया लोए सुभा नामा सुभा रूवा सुभा गंधा सुभा रसा सुभा फासा एवइयाणं दीवसमुद्दा नामधिज्जेहिं पण्णत्ता" संख्या तु सर्वेषामसंख्येयस्वरूपा उद्धारसागराणां अड्ढाईज्जाण जत्तिया समया दुगुणपवित्थरदीवोदहिरज्जु एवइया इति गाथा प्रतिपादिता द्रष्टव्या । तदेवमत्र क्रमोपन्यासे पूर्वानुपूर्वीव्यत्ययेन पश्चानुपूर्वी अनानुपूर्वीत्वेममीषामसंख्येयानां पदानां परस्पराभ्यासे येऽसंख्येया भंगा भवन्ति भङ्गकद्वयेन तत्स्वरूपा द्रष्टव्येइति ॥ टी० अनु० ॥

उड्ढलोअखेत्ताणुपुव्वी तिविहा पण्णत्ता तं जहा–पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी से किं तं पुव्वाणुपुव्वी २ सोहम्मे ईसाणे सणंकुमारे माहिंदे बंभलोए लंतए महासुक्के सहस्सारे आणए पाणए आरणे अच्चुते गेवेज्जविमाणे अणुत्तरविमाणे इसिपब्भारा सेत्तं पुव्वानुपुव्वी । से किं तं पच्छाणुपुव्वी २ इसिप्पब्भारा जाव सोहम्मे सेत्तं पच्छाणु० से किं तं अणाणु० २ एआए चेव एगाइआए एगुत्तरिआए पण्णरसगच्छगयाए सेढीए अण्णमण्णब्भासो दुरूवूणो सेत्तं अणाणुपुव्वी ॥ अनु० मू० ॥

ऊर्ध्वलोकक्षेत्रानुपूर्व्यां सोहम्मेत्यादि । सकलविमानप्रधानसौधर्म्मावतंसकाभिधानविमानविशेषोपलक्षितत्वात्सौधर्म्म एवं सकलैर्विमानप्रधानेशानावतंसकविमानविशेषोपलक्षित ईशानः, एवं तद्विमानावतंसकप्राधान्येन तत्तन्नामवाच्यं यावत्सकलविमानप्रधानाच्युतावतंसकाभिधानविमानविशेषोपलक्षितोऽच्युतः लोकपुरुषस्य ग्रीवाविभागे भवानि विमानानि ग्रैवेयकानि नैषांमन्यान्युत्तरतराणि विमानानि सन्तीत्यनुत्तरविमानानि ईषद्भाराक्रान्तपुरुषावनता अन्तेष्वितीषत्प्राग्भारेति । अत्र प्रज्ञापकप्रत्यासन्ने आदौ सौधर्म्मस्योपन्यासस्ततो व्यवहितादिरूपत्वात् क्रमेणेशानादीनामिति पूर्वानुपूर्वीत्वं शेषा भावना तु पूर्वोक्तानुसारतः कर्त्तव्येति क्षेत्रानुपूर्वी समाप्ता ॥अनु० टी०॥

अहवा उवनिहिआ खेत्ताणु० तिविहा पण्णत्ता तंजहा पुव्वाणु० पच्छाणु० । अणाणु० से किं तं पुव्वाणु० २ एगपएसोगाढे दुपएसोगाढे दसपएसोगाढे संखिज्जपएसोगाढे जाव असंखिज्जपएसोगाढे सेत्तं पुव्वाणु० । से किं तं पच्छाणु० २ असंखिज्जपएसोगाढे संखिज्जपएसोगाढे जाव एगपएसोगाढे सेत्तं पच्छाणु० । से किं तं अणाणु० २ एआए चेव एगाइआए एगुत्तरिआए असंखिज्जगच्छगयाए सेढीए अण्णमण्णब्भासो दुरूवूणो सेत्तं अणाणुपुव्वी सेत्तं उवनिहिआ खेत्ताणु० सेत्तं खेत्ताणु० ॥ अनु० मू० ॥

( ८ ) साम्प्रतं प्रागुद्दिष्टामेव क्रमप्राप्तां कालानुपूर्वीं व्याचिख्यासुराह–

से किं तं कालाणु० दुविहा पण्णत्ता तं जहा-उवनिहिआ य अणोवणिहिआ य । तत्थ णं जा सा उवनिहिआ सा ठप्पा । तत्थ णं जा सा अणोवणिहिआ सा दुविहा पण्णत्ता तं जहा-णेगमववहाराणं संगहस्स य । से किं तं नेगमववहाराणं अणोवनिहिआ कालाणु० २ पंचविहा पण्णत्ता तं जहा–अट्ठपयपरूवणया भंगसमुक्कित्तणया भंगोवदंसणया समोआर अणुगमे । से किं तं णेगमववहाराणं अट्ठपयपरूवणया २ तिसमयट्ठिइए आणु० जाव दससमयट्ठिइए आणु० संखिज्जसमयट्ठिइए आणु० असंखिज्जसयट्ठिइए आणु० एगसमयट्ठिइए अणाणु० दुसमयट्ठिइए अवत्तव्वए तिसमयट्ठिइया आणुपुव्वीओ एगसमयट्ठिइआओ अणाणु० उदुसमयट्ठिइआ अवत्तव्वगाइं सेत्तं नेगमववहाराणं अट्ठपयपरूवणया । एआए णं णेगमववहाराणं अट्ठपयपरूवणयाए किं पओयणं एयाए णं णेगमववहाराणं अट्ठपयपरूवणया नेगमववहाराणं भंगसमुक्कित्तणया कज्जइ । से किं तं णेगमववहाराणं भंगसमुक्कित्तणया २ अत्थि आणु० अत्थि अणाणु० अत्थि अवत्तव्वए एवं दव्वाणु० गमेणं कालाणुपुव्वीए वि ते चेव छव्वीसं भंगा भाणिअव्वा जाव सेत्तं णेगमववहाराणं भंगसमुक्कित्तणया एआएणं णेगमववहाराणं भंगसमुक्कित्तणयाए किं पओअणं एआएणं णेगमववहाराणं भंगसमुक्कित्तणया णेगमववहाराणं भंगोवदंसणया कज्जइ । से किं तं णेगमववहाराणं भंगोवदंसणया २ तिसमयट्ठिइए आणु० एगसमयट्ठिइए अणाणु० दुसमयट्ठिइए अवत्तव्वए तिसमयट्ठिइआ आणु० अ अणाणु० अ एवं तहा चेव दव्वा० गमेणं छव्वीसं भंगा एगसमयट्ठिइआए अणाणु० उ दुसमयट्ठिइआ अवत्तव्वगाई अहवा तिसमयट्ठिइए अ एगसमयट्ठिइए अ आणु० अणाणु० अ एवं तहा चेव दव्वाणु० गमेणं छव्वीसं भंगा भाणिअव्वा जाव सेत्तं नेगमववहाराणं भंगोवदंसणया । से किं तं समोतारे २ णेगमववहाराणं आणु० दव्वाइं कहिं समोतरंति किं आणु० दव्वेहिं समोतरंति अणाणु० दव्वेहिं एवं तिण्णि वि सट्ठाणे समोतरंति इति भाणिअव्वं सेत्तं समोतारे ॥ अनु० मू० ॥

से किं तं कालानुपुव्वीत्यादि । अत्रान्तरगमनिका यथा द्रव्यानुपूर्व्यां तथा कर्त्तव्या यावत् समयट्ठिइए आणुपुव्वीत्यादि त्रयः समयाः स्थितिर्यस्य परमाणुद्व्यणुकत्र्यणुकाद्यनन्ताणुस्कंधपर्यन्तस्य द्रव्यविशेषस्य स त्रिसमयस्थितिद्रव्यविशेष आनुपूर्वीति । आह ननु यदि द्रव्यविशेष एवात्राप्यानुपूर्वी कथं तर्हि तस्य कालानुपूर्वीत्वं नैतदेवमभिप्रायापरिज्ञानाद्यतः समयत्रयलक्षणकालपर्यायविशिष्टमेव द्रव्यं गृहीतं ततश्च पर्यायपर्यायिणोः कथंचिदभेदात्कालपर्यायस्य चेह प्राधान्येन विवक्षितत्वाद् द्रव्यस्यापि विशिष्टकस्य कालानुपूर्वीत्वं न दुष्यति मुख्यं समयत्रयस्यैवात्रानुपूर्वीत्वं किन्तु तद्विशिष्टद्रव्यस्यापि तदभेदोपचारात्तदुच्यत इति भावः । एवं चतुःसमयस्थित्यादिष्वपि वाच्यं यावद्दशसमया स्थितिर्यस्य परमाणवादिद्रव्यसंघातस्य स तथा । संख्येयाः समयाः स्थितिर्यस्य परमाणवादेः स तथा । असंख्येयाः समयाः

स्थितिर्यस्य परमाणवादेः स तथा अनन्तास्तु समया द्रव्यस्य स्थितिरेव न भवति स्वभावादित्युक्तमेवेति शेषा बहुवचननिर्देशादिभावना पूर्ववदेव एकसमयस्थितिकं परमाणवाद्यनन्ताणुस्कंधपर्यन्तं द्रव्यमनानुपूर्वीद्विसमयस्थितिकं तु तदेवावक्तव्यकमेवेति शेषं पूर्वोक्तानुसारेण सर्वं भावनीयम् ॥ टी० अनु० ॥

**नेगमववहाराणं आणु० दव्वाइं किं संखेज्जाइं असंखेज्जाइं अणंताइं ॥ अनु० मू० ॥**

द्रव्यप्रमाणद्वारे नो संखेज्जाइं असंखेज्जाइं नो अणंताइं इति । अस्य भावना–इह त्र्यादिसमयस्थितिकानि परमाणवादिद्रव्याणि लोके यद्यपि प्रत्येकमनंतानि प्राप्यंते तथापि समयत्रयलक्षणायाः स्थितेरेकस्वरूपात् कालस्यैवेह प्राधान्येन द्रव्यबहुत्वस्य गुणीभूतत्वात् त्रिसमयस्थितिकैरनंतैरप्येकमेवानुपूर्वीद्रव्यं एवं चतुःसमयलक्षणायाः स्थितेरेकत्वादनंतैरपि चतुःसमयस्थितिकद्रव्यैरेकमेवानुपूर्वीद्रव्यं एवं समयवृद्ध्या तावन्नेयं यावदसंख्येयसमयलक्षणायाः स्थितेरेकत्वादनन्तैरप्यसंख्येयसमयस्थितिकैर्द्रव्यैरेकमेवानुपूर्वीद्रव्यमित्येवमसंख्येयान्येवात्रानुपूर्वीद्रव्याणि भवन्ति एवमनानुपूर्व्यवक्तव्यकद्रव्याण्यपि प्रत्येकमसंख्येयानि वाच्यानि अत्राह—नन्वेकसमयस्थितिकद्रव्यस्यानानुपूर्वीत्वं द्विसमयस्थितिकस्य त्ववक्तव्यकत्वमुक्तम् तत्र यद्यप्येकद्विसमयस्थितिपरमाणवादिद्रव्याणि लोके प्रत्येकानि लभ्यंते तथाप्यनन्तरोक्तत्वादुक्तं युक्तचैव समयलक्षणाया द्विसमयलक्षणायाश्च स्थितेरेकैकरूपत्वाद् द्रव्यबाहुल्यस्य गुणीभूतत्वादेकमेवानानुपूर्वीद्रव्यमेकमेव चावक्तव्यकद्रव्यं वक्तुं युज्यते । ननु प्रत्येकमसंख्येयत्वं अथ द्रव्यभेदेन भेदोऽङ्गीक्रियते तर्हि प्रत्येकमानन्त्यप्रसक्तिः एकसमयस्थितीनां द्विसमयस्थितीनां द्रव्याणां प्रत्येकमनन्तानां लोके सद्भावादिति सत्यमेतत्किन्त्वेकसमयस्थितिकमपि यदवगाहते न वर्त्तते तदिह भिन्नं विवक्ष्यते एवं द्विसमयस्थितिकमप्यवगाहभेदेन भिन्नं चिन्त्यते लोके वा असंख्येया अवगाहभेदाः सन्ति । प्रत्यवगाहं चैकद्विसमयस्थितिकानेकद्रव्यसम्भवादनानुपूर्व्यवक्तव्यद्रव्याणामाधारक्षेत्रभेदात् प्रत्येकमसंख्येयत्वं न विहन्यत इत्यलयादिशातिगहनमिदं सूक्ष्मधिया पर्यालोचनीयमिति ॥ टी० अनु० ॥

**नेगमववहाराणं आणुपुव्वी दव्वाइं लोगस्स किं संखिज्जइभागे होज्जा असंखिज्जइभागे होज्जा संखेज्जेसु भागेसु वा होज्जा असंखेज्जेसु भागेसु वा होज्जा देसूणे वा लोए होज्जा नाणादव्वाइं पडुच्च नियमा सव्वलोए होज्जा एवं अणाणुपुव्वीदव्वं आएसंतरेण वा सव्वपुव्वासु होज्जा एवं अवत्तव्वगदव्वाणि वि भाणिअव्वाणि जहा खेत्ताणुपुव्वीए फुसणा कालाणुपुव्वीए वि तहा चेव भाणिअव्वा ॥ अनु० मू० ॥**

क्षेत्रद्वारे "एगं दव्वं पडुच्च लोगस्स संखेज्जइभागे होज्जा जाव देसूणे वा लोगे होज्जत्ति,, । इह त्र्यादिसमयस्थितिकद्रव्यस्य तत्तदवगाढसंभवतः संख्येयादिभागवर्त्तित्वं भावनीयं यदा त्र्यादिसमयस्थितिकः सूक्ष्मपरिणामः स्कंधो देशोनलोकेऽवगाहते तदैकस्यानुपूर्वीद्रव्यस्य देशोनलोकवर्त्तित्वं भावनीयं अन्ये तु देसूणो वा लोगे होज्जत्ति पाठं मन्यंते तत्राप्ययमेवार्थः । प्रदेशस्यापि विवक्षया देशत्वादिति संपूर्णोऽपि लोके कस्मादिदं न प्राप्यत इति चेदुच्यते सर्वलोकव्यापी अचित्तमहास्कंध एव प्राप्यते स च तद्व्यापितया एकमेव समयमवतिष्ठते तत ऊर्ध्वमुपसंहारस्योक्तत्वात् नचैकसमयस्थितिकमानुपूर्वीद्रव्यं भवितुमर्हति त्र्यादिसमयस्थितिकत्वेन तस्योक्तत्वात्तस्मात् त्र्यादिस्थितिकमन्यद् द्रव्यं नियमादेकेनाऽपि प्रदेशेनोभयस्मिन्नेव लोकेऽवगाहत इति प्रतिपत्तव्यं । अत्राह नन्वचित्तमहास्कंधोऽप्येकसमयस्थितिको न भवति दण्डाद्यवस्थासमयगणनेनास्याप्यष्टसमयस्थितिकत्वादेवं च सति तस्याप्यानुपूर्वीत्वात् संपूर्णलोकव्यापित्वं युज्यतेऽत्र वक्तुमिति नैतदेवमवस्थाभेदेन वस्तुभेदाद्यविवक्षितत्वाद्भिन्नाश्च परस्परं दण्डकपाठाद्यवस्थाः स्कन्धभेदेन वस्तुनोऽपि भेदादन्यदेव दंडकपाठाद्यवस्थाद्रव्येभ्यः सकललोकव्याप्यचित्तमहास्कंधद्रव्यं तच्चैकसमयस्थितिकमिति न तस्यानुपूर्वीत्वमेतच्चानन्तरमेव पुनर्वक्ष्यत इत्यलं प्रसङ्गेन । अथवा यथा क्षेत्रानुपूर्व्यां तथाऽत्रापि सर्वलोकव्यापिनोऽप्यचित्तमहास्कंधस्य विवक्षामात्रमाश्रित्य एकस्मिन्नभःप्रदेशत्वप्रधान्याद्देशोनलोकवर्त्तित्वं वाच्यं एकसमयस्थितिकस्यानानुपूर्वीद्रव्यस्य द्विसमयस्थितिकावक्तव्यकस्य च तत्र प्रदेशे प्राधान्याश्रयणादिति भावः । एवमन्यदपि आगमाविरोधतो वक्तव्यमिति । ( नाणादव्वाइं पडुच्च नियमा सव्वलोए होज्जत्ति ) त्र्यादिसमयस्थितिकद्रव्याणां सर्वलोकेऽपि भावादिति भावनीयं अनानुपूर्वीद्रव्यचिन्तायां यथा क्षेत्रानुपूर्व्यां तथा अत्राप्येकद्रव्यं लोकस्यासंख्येयभाग एव वर्त्तते कथमिदमुच्यते यत्कालत एकसमयस्थितिकं ततः क्षेत्रतोऽप्येकप्रदेशावगाढमेवेहानानुपूर्वीत्वेन विवक्ष्यते तच्च लोकासंख्येयभाग एव भवति ( आएसंतरेण वा सव्वपुच्छासु होज्जत्ति ) अस्य भावना इहाचित्तमहास्कंधस्य दण्डाद्यवस्थाः परस्परं भिन्नाः आकारादिभेदाद् द्वित्रिचतुःप्रदेशकस्कंधवर्त्तिनश्च ता. एकैकसमयवृत्तित्वात् पृथगनानुपूर्वीद्रव्याणि तेषु च मध्ये किमपि कियत्यपि क्षेत्रे वर्त्तत इत्यनया विवक्षया किलैकमनानुपूर्वीद्रव्यं मतान्तरेण संख्येयभागादिकासु पंचस्वपि पृच्छासु लभ्यते एतच्च सूत्रेषु प्रायो न दृश्यते टीकाचूर्ण्योस्त्वेवं व्याख्यातमुपलभ्यत इति नानाद्रव्याणि तु सर्वस्मिन्नपि लोके भवन्त्येकसमयस्थिकद्रव्याणां सर्वत्र भावादिति । अवक्तव्यकद्रव्यचिंतायां क्षेत्रानुपूर्व्यामिवैकद्रव्यं लोकस्यासंख्येयभाग एवं वर्त्तते कथमित्युच्यते यत्कालतो द्विसमयस्थितिकं तत् क्षेत्रतो द्विप्रदेशावगाढमेवेहावक्तव्यकत्वेन गृह्यते । तच्च लोकासंख्येयभाग एव स्यादथवा द्विसमयस्थितिकं द्रव्यं स्वभावादेव लोकस्यासंख्येयभाग एवावगाहते न परतः आदेशान्तरेण वा ( महक्खंधवज्जमन्नदव्वेसु आयल्ल चउपुच्छासु होज्जत्ति ) अस्य हृदयं मतान्तरेण किल द्विसमयस्थितिकमपि द्रव्यं किंचिल्लोकस्य संख्येयभागेऽवगाहते किंचित्त्वसंख्येये अन्यत्तु संख्येयेषु तद्भागेऽप्यवगाहते परं त्वसंख्येयेष्विति महास्कंधं व-

र्जयित्वा शेषद्रव्याण्याश्रित्य यथोक्तस्वरूपास्वाधासु चतसृषु पृच्छास्वेकमवक्तव्यकद्रव्यं लभ्यते महास्कंधस्य त्वष्टसमयस्थितित्वेनोक्तत्वान्न द्विसमयस्थितिकत्वसंभव इति तद्वर्जनम् अत एव सर्वलोकव्याप्तिलक्षणायाःपंचमपृच्छाया अत्रासंभवो महास्कंधस्यैव सर्वलोकव्यापकत्वात्तस्य चावक्तव्यकत्वायोगादिति । एतदपि सूत्रं वाचनांतरे क्वचिदेव दृश्यते नानाद्रव्याणि तु सर्वलोके भवन्ति द्विसमयस्थितीनां सर्वत्र भावादिति गतं क्षेत्रद्वारं स्पर्शनाद्वारमप्येवमेव भावनीयम् ॥ टी० अनु० ॥

णेगमववहाराणं आणुपुव्विदव्वाइं कालओ केवचिरं होइ एगं दव्वं पडुच्च जहण्णेणं तिण्णि समयाओ उक्कोसेणं असंखेज्जकालं नाणादव्वाइं पडुच्च सा निअमा सव्वदा णेगमववहाराणं अणाणुपुव्विदव्वाइं कालओ केवचिरं होइ एगं दव्वं पडुच्च अजहन्नमणुक्कोसेणेगं समयं नाणादव्वाइं पडुच्च निअमा सव्वदा णेगमववहाराणं अवत्तव्वगदव्वाइं कालओ केवचिरं होति एगं दव्वं पडुच्च अजहण्णमणुक्कोसेणं दो समया नाणादव्वाइं पडुच्च निअमा सव्वदा ॥ अनु० मू० ॥

कालद्वारे ( एगं दव्वं पडुच्च जहण्णेणं तिण्णि समयत्ति ) जघन्यतोऽपि त्रिसमयस्थितिकस्यैवानुपूर्वीत्वेनोक्तत्वादिति भावः ( उक्कोसेणं असंखेयं कालंति ) असंख्येयकालात्परत एकेन परिणामेन द्रव्यावस्थानस्यैवाभावादिति द्वदयं नानाद्रव्याणि तु सर्वकालं भवन्ति, प्रतिदेशान्तरेऽपि सर्वदा लोकस्याशून्यत्वादिति अनानुपूर्व्यवक्तव्यकचिन्तायां ( अजहन्नमणुक्कोसेणंति ) जघन्योत्कृष्टचिन्तामुत्सृज्येत्यर्थः । न न्वेकसमयस्थितिकस्यैवानानुपूर्वीत्वे द्विसमयस्थितिकस्यैव चावक्तव्यकत्वेऽभ्युपगम्यमाने जघन्योत्कृष्टचिन्ता सम्भवतीति भावः । नानाद्रव्याणि तूभयत्रापि सर्वकालं भवन्ति प्रतिप्रदेशं तैरपि सर्वदा लोकस्याशून्यत्वादिति ॥ ॥ अनु० टी० ॥

णेगमववहाराणं आणुपुव्विदव्वाणमंतरं कालओ केवचिरं होइ एगं दव्वं पडुच्च जहण्णेणं एगं समयं उक्कोसेणं दो समया नाणादव्वाइं पडुच्च नत्थि अंतरं णेगमववहाराणं अणाणुपुव्विदव्वाणमंतरं कालओ केवचिरं होइ एगं दव्वं पडुच्च जहण्णेणं दो समया उक्कोसेणं असंखेज्जं कालं णाणादव्वाइं पडुच्च णत्थि अंतरं नेगमववहाराणं अवत्तव्वगदव्वाणु० पुच्छा एगं दव्वं पडुच्च जहण्णेणं एगं समअं उक्कोसेणं असंखेज्जं कालं णाणादव्वाइं पडुच्च नत्थि अंतरं ॥ अनु० मू० ॥

अन्तरद्वारे (एगं दव्वं पडुच्च जहण्णेणं एकं समयं ति ) अत्र भावना इह त्र्यादिसमयस्थितिकं विवक्षितं किञ्चिदेकमानुपूर्वीद्रव्यं तं परिणामं परित्यज्य यदा परिणामान्तरेण समयमेकं स्थित्वा पुनस्तेनैव परिणामेन त्र्यादिसमयस्थितिकं जायते तदा जघन्यतया समयोऽन्तरे लभ्यते ( उक्कोसेणं दो समयत्ति ) तदेव यदा परिणामान्तरेण द्वौ समयौ स्थित्वा पुनस्तमेव त्र्यादिसमयस्थितियुक्तम् प्राक्तनपरिणाममासादयति तदा द्वौ समयावुत्कृष्टतोऽन्तरे भवतः यदि पुनः परिणामान्तरेण क्षेत्रादिभेदतः समयद्वयात् परतोऽपि तिष्ठेत्तदा तत्राप्यानुपूर्वीत्वमनुभवेत्ततोऽन्तरमेव न स्यादिति भावः नानाद्रव्याणां तु नास्त्यन्तरं सर्वदा लोकस्य तदशून्यत्वादिति अनानुपूर्वीचिन्तायां ( एगं दव्वं पडुच्च जहण्णेणं दो समय त्ति ) एकसमयस्थितिकं द्रव्यं यदा परिणामांतरेणाप्येकमेव समयं तिष्ठेत्तदा अन्तरमेव न स्यात्तत्राप्यनानुपूर्वीत्वादथ समयद्वयात्परतस्तिष्ठेत्तदा जघन्यत्वं न स्यादिति भावः ( उक्कोसेणं असंखेज्जं कालं ति ) तदेव यदा परिणामान्तरेणासंख्येयकालमनुभूय पुनरेकसमयस्थितिकं परिणाममनुभवति तदोत्कृष्टतोऽसंख्येयोत्तरकालः प्राप्यते । आह-ननु अन्यान्यद्रव्यक्षेत्रसम्बधे तस्यानन्तोऽपि कालान्तरे लभ्यते किमित्यसंख्येय एवोक्तः सत्यं । किन्तु कालानुपूर्वीप्रक्रमात्कालस्यैवेह प्राधान्यं कर्त्तव्यम् । यदि त्वन्यान्यद्रव्यक्षेत्रसम्बन्धतोऽन्तरकालबाहुल्यं क्रियते तदा तद्द्वारेणैवान्तरकालस्य बहुत्वकरणात्तयोर्द्वयोरेव प्राधान्यमाश्रित्य स्यान्न कालस्य तस्मादेकस्मिन्नेव परिणामान्तरे यावत् कश्चिदुत्कृष्टकालो लभ्यते स एवान्तरे चिन्त्यते सचासंख्येय एव ततः परमेकेन परिणामेन वस्तुनोऽवस्थानस्यैव निषिद्धत्वादित्येवं भगवतः सूत्रस्य विवक्षावैचित्र्यात्सर्वं पूर्वमुत्तरत्र चागमविरोधेन भावनीयमिति । नानाद्रव्याणां तु नास्त्यन्तरं प्रतिदेशं लोके सर्वदा तल्लाभादिति अवक्तव्यकद्रव्यचिन्तायां (जहण्णेणं एगं समयं ति) द्विसमयस्थितिकं किञ्चिदवक्तव्यकद्रव्यं परिणामांतरेण समयमेकं स्थित्वा यदा पूर्वानुभूतमेव द्विसमयस्थितिकपरिणाममासादयति तदा समयो जघन्यान्तरकालः ( उक्कोसेणं असंखेज्जं कालं ति ) तदेव यदा परिणामान्तरेणासंख्येयं कालं स्थित्वा पुनस्तमेव पूर्वानुभूतं परिणाममासादयति तदाऽसंख्यात उत्कृष्टान्तरकालो भवति आक्षेपपरिहारावत्राप्यनानुपूर्वीवत् द्रष्टव्याविति । नानाद्रव्यांतरं तु नास्ति सर्वदा लोके तद्भावादिति । उक्तमन्तरद्वारम् ॥ टी० अनु० ॥

भागभावअप्पा बहु चेव जहा खेत्ताणुपुव्वीए तहा भाणिअव्वाइं जाव सेत्तं अणुगमे सेत्तं नेगमववहाराणं अणोवनिहिआ कालाणुपुव्वी ॥ अनु० मू० ॥

भागद्वारे तु यथा द्रव्यक्षेत्रानुपूर्व्यास्तथैवानुपूर्वीद्रव्याणि शेषद्रव्येभ्योऽसंख्येयैर्भागैरधिकानि व्याख्येयानि शेषद्रव्याणि त्वानुपूर्वीद्रव्याणामसंख्येयभाग एव वर्त्तन्ते इति भावना त्वित्थं कर्त्तव्या इहानानुपूर्व्यामेकसमयस्थितिलक्षणमेकमेव स्थानं लभ्यते अवक्तव्यकेष्वपि द्विसमयस्थितिलक्षणमेव लभ्यते आनुपूर्व्यां तु त्रिसमयचतुःसमयपञ्चसमयस्थित्यादीन्येकोत्तरवृद्ध्याऽसंख्येयसमयस्थित्यन्तान्यसंख्येयानि स्थानानि लभ्यन्ते इत्यानुपूर्वीद्रव्याणामसंख्येयगुणत्वमितरयोस्तु तदा संख्येयभागवर्त्तित्वमिति। भावद्वारे सादिपारिणामिकभाववर्त्तित्वं त्रयाणामपि पूर्ववद्भावनीयं । अल्पबहुत्वद्वारे सर्वस्तोकान्यवक्तव्यकद्रव्याणि द्विसमयस्थितिकद्रव्याणां स्वभावत एव स्तोकत्वात् अनानुपूर्वीद्रव्याणि तु तेभ्यो विशेषाधिकानि एकसमयस्थितिकद्रव्याणां निसर्गत एव पूर्वेभ्यो विशेषाधिकत्वादानुपूर्वीद्रव्याणां तु पूर्वे

र्योऽसंख्यातगुणत्वं भागद्वारे भावितमेव शेषं तु क्षेत्रानुपूर्व्युक्तानुसारतः सर्वत्रवाच्यमित्यत एव केषुचिद्भावनान्तरेषु भागादिद्वारत्रयं क्षेत्रानुपूर्व्यतिदेशेनैव निर्दिष्टं दृश्यते नतु विशेषतो लिखितमिति सेत्तमित्यादि निगमनं उक्तम नैगमव्यवहारनयमतेनानौपनिधिकी कालानुपूर्वी ॥टी० अनु०॥

अथ संग्रहनयमतेन तामेव व्याचिख्यासुराह—

से किं तं संगहस्स अणोवनिहिआ कालानुपुव्वी २ पंचविहा पण्णता तं जहा-अट्ठपयपरूवणया भंगसमुक्तित्तणया भंगोवदंसणया समोतारे अणुगमे । से किं तं संगहस्स अट्ठपयपरूवणया २ एआइं पंच वि दाराइं जहा खेत्ताणुपुव्वी संगहस्स तहा कालाणु० ए वि भाणिअव्वाइं णवरं ठिइअभिलावो जाव सेत्तं । अणुगमे सेत्तं संगहस्स अणोवनिहिआ कालाणु० सेत्तं अणोवनिहिआ कालाणु० ॥ अनु० मू० ॥

से किंतमित्यादि।यथा क्षेत्रानुपूर्व्यामियं संग्रहमतेन प्राग्निर्दिष्टा तथाऽत्रापि वाच्या ( नवरं तिसमयठिइया आनुपुव्वी जाव असंखेज्जसमयठिइया आणुपुव्वीत्यादि ) अभिलापः कार्यः शेषन्तु तथैवेति उक्ता संग्रहमतेनाप्यनौपनिधिकी कालानुपूर्वी ॥ टी० अनु० ॥

इदानीं प्रागुद्दिष्टामेवौपानिधिकीं तां निर्दिदिक्षुराह—

से किं तं उवनिहिआ कालाणुपुव्वी २ तिविहा पण्णत्ता तं जहा–पुव्वाणु० पच्छाणु० अणाणु० ॥ अनु० मू० ॥

से किं तं पुव्वानुपुव्वी एगसमयट्ठिइए दुसमयट्ठिइए तिसमयट्ठिइए जाव दससमयट्ठिइए संखिज्जसमयट्ठिइए असंखिज्जसमयट्ठिइए सेत्तं पुव्वानुपुव्वी । से किं तं पच्छानुपुव्वी २ असंखिज्जसमयट्ठिइए जाव एगसमयट्ठिइए सेत्तं पच्छानुपुव्वी । से किं तं अणानुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए असंखिज्जगच्छगयाए सेढीए अण्णमण्णब्भासो दुरूवूणो सेत्तं अणानुपुव्वी ॥ अनु०मू० ॥

से किंतमित्यादि । एकः समयः स्थितिर्यस्य द्रव्यविषयस्य स तथा एवं यावदसंख्येयाः समयाः स्थितिर्यस्य स तथेति पूर्वानुपूर्वी शेषभावना त्वत्र पूर्वोक्तानुसारेणसुकरैव ॥ टी० अनु० ॥

अथ कालविचारस्य प्रस्तुतत्वात्समयादेश्च कालत्वेन प्रसिद्धत्वादनुषङ्गतो विनेयानां समयादिकालपरिज्ञानदर्शनाच्च तद्विषयत्वेनैव प्रकारान्तरेण नामाह ॥ अनु० ॥

अहवा उवनिहिआ कालानुपुव्वी तिविहा पण्णत्ता तं जहा–पुव्वानुपुव्वी पच्छानुपुव्वी अणानुपुव्वी । अनु०मू० । सेत्तं उवनिहिआ कालानुपुव्वी सेत्तं कालानुपुव्वी ॥ अनु० मू० ॥

अहवेत्यादि तत्र समयो वक्ष्यमाणस्वरूपः सर्व्वसूक्ष्मकालांशः स च सर्वप्रमाणानां प्रभवत्वात्प्रथमं निर्दिष्टः १ तैरसंख्येयैर्निष्पन्ना आवलिका २ संख्येया आवलिकाः ( आणत्ति आणः ) एक उच्छ्वास इत्यर्थः ३ ता एव संख्येया निश्वासः अयं च सूत्रेऽनुक्तोऽपि द्रष्टव्यः स्थानांतरप्रसिद्धत्वादिति ४ द्वयोरपि कालः ५ ( पाणुत्ति ) एकः प्राणुरित्यर्थः सप्तभिः प्राणुभिः स्तोकः । ६ । सप्तभिः स्तोकैर्लवः । ७ । सप्तलवानां मुहूर्त्तः । ८ । त्रिंशन्मुहूर्त्तैरहोरात्रं । ९ । तैः पंचदशभिः पक्षः । १० । ताभ्यां द्वाभ्यां मासः । ११ । मासद्वयेन ऋतुः । १२ । ऋतुत्रयमानमयनं । १३ । अयनद्वयेन संवत्सरः । १४ । पंचभिस्तैर्युगं । १५ । विंशत्या युगैर्वर्षशतं । १६ । तैर्दशभिर्वर्षसहस्रं । १७ । तेषां शतेन वर्षशतसहस्रं लक्षमित्यर्थः चतुरशीत्या च लक्षैः पूर्वांगं भवति । १९ । तदपि चतुरशीतिलक्षैर्गुणितं पूर्वं भवति । २० । तच्च सप्ततिकोटिलक्षाणि षट्पंचाशच्च कोटिसहस्राणि वर्षाणाम् उक्तं च, “ पुव्वस्स उ परिमाणं सयरि खलु हुंति कोटिलक्खा उ । छप्पण्णं च सहस्सा बोधव्वा वासकोडीणं” स्थापना ७०५६०००००००००० इदमपि चतुरशीत्या लक्षैर्गुणितं त्रुटितांगं भवति २१ एतदपि चतुरशीत्या लक्षैर्गुणितं त्रुटितं भवति २२ तदपि चतुरशीत्या लक्षैर्गुणितमटटांगं २३ एतदपि तेनैव गुणकारेण गुणितमटटांगं २४ एवं सर्वत्र पूर्वः पूर्वो राशिश्चतुरशीतिलक्षस्वरूपेण गुणकारेण गुणित उत्तरोत्तरराशिरूपतां प्रतिपद्यत इति प्रतिपत्तव्यं ततश्च अववांगं २५ अववं २६ हूहूकांगं २७ हूहूकं २८ उत्पलांगं २९ उत्पलं ३० पद्मांगं ३१ पद्मं ३२ नलिनांगं ३३ नलिनं ३४ अर्थनिपूरांगं ३५ अर्थनिपूरं ३६ अयुतांगं ३७ अयुतं ३८ नयुतांगं ३९ नयुतं ४० प्रयुतांगं ४१ प्रयुतं ४२ चूलिकांगं ४३ चूलिका ४४ शीर्षप्रहेलिकांगं ४५ एवमेते राशयश्चतुरशीतिलक्षस्वरूपेण गुणकारेण यथोत्तरं वृद्धाश्च द्रष्टव्यास्तावद्यावदिदमेव शीर्षप्रहेलिकांगं चतुरशीत्या लक्षैर्गुणितं शीर्षप्रहेलिका भवति ४६ । अस्याः स्वरूपमंकतोऽपि दर्श्यते ७५८२६३२५३०७३०१०२४११५७९७३५६९५७५६९६४०६२१८९६६८४८०८०१८३२९६ अग्रे चत्वारिंशदधिकं शतं १४० तदेवं शीर्षप्रहेलिकायां सर्वाण्यमूनि चतुर्णवत्यधिकशतसंख्यान्यंकस्थानानि भवंति अनेनैवैतावता कालमानेन केषांचिद्रत्नप्रभानारकाणां भवनपतिव्यंतरसुराणां सुषमदुःषमारकसंभविनां नरतिरश्चां च यथासंभवमायुर्मीयते एतस्माच्च परतोऽपि संख्येयकालोऽस्ति किंत्वनतिशयिनां असंव्यवहार्यत्वात्सर्षपाद्युपमयात्रैव वक्ष्यमाणत्वाच्च नेहोक्तः किं तर्ह्युपमामात्रप्रतिपादितानि पल्योपमादीन्येव तत्र पल्योपमसागरोपमेऽत्रैव वक्ष्यमाणस्वरूपे दशसागरोपमकोटाकोटिमाना त्ववसर्पिणी तावन्मानैवोत्सर्पिणी अनन्ता उत्सर्पिण्यः पुद्गलपरावर्त्ताः अनन्तास्ते अतीताद्धा तावन्मानैवानागताद्धा अतीतानागतवर्त्तमानकालस्वरूपाः सर्वाद्धेत्येषा पूर्वानुपूर्वी शेषभावना तु पूर्वोक्तानुसारतःसुकरैव यावत्कालानुपूर्वी समाप्ता ॥ टी० अनु० ॥

(९) सांप्रतं प्रागुद्दिष्टामेवोत्कीर्त्तनानुपूर्वीं विभणिषुराह–

से किं तं उक्कितणाणुपुव्वी २ तिविहो पण्णत्ता तं जहा–पुव्वानुपुव्वी पच्छानुपुव्वी अणानुपुव्वी । से किं तं पुव्वानुपुव्वी २ उसभे अजिए संभवे अभिणंदणे सुमती पउमप्पहे सुपासे चंदप्पहे सुविहो सीतले सेज्जंसे वासुपुज्जे विमले अणंते धम्मे संति कुंथु अरमल्लि मुणिसुव्वते नमी अरिट्ठनेमि पासे वद्धमाणे सेत्तं पुव्वानुपुव्वी । से किं तं पच्छानुपु

व्वी २ वद्धमाणे जाव उसभे सेतं पच्छाणुपुव्वी । २ से किं तं अणाणुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए च उवीसगच्छगयाए सेढीए अण्णमण्णब्भासो दुरूवूणो सेत्तं अणाणुपुव्वी सेत्तं उक्कित्तणाणुपुव्वी ॥ अनु० मू० ॥

से किं तमित्यादि । उत्कीर्त्तनं संशब्दनमभिधानमुच्चारणम तस्यानुपूर्वी अनुपरिपाटिः सा पूर्वानुपूर्व्यादिभेदेन त्रिविधा ! तत्र ऋषभः प्रथममुत्पन्नत्वात्पूर्वमुत्कीर्त्यते अनन्तरक्रमेण अजितादय इति पूर्वानुपूर्वी शेषभावना पूर्ववदत्राह—ननु-औपनिधिक्या द्रव्यानुपूर्व्या अस्याश्च को भेद उच्यते । तत्र द्रव्यानां विन्यासमात्रमेव पूर्व्यादिभावेन चिंतितमत्र तु तेषामेव तथैवोत्कीर्त्तनं क्रियत इत्येतावन्मात्रेण भेद इति भवत्वेवं किंत्वावश्यकस्य प्रस्तुतत्वादुत्कीर्तनमपि सामायिकाद्यध्ययनानामेव युक्तं किमित्यप्रक्रांतानां ऋषभादीनां तद्विहितमिति सत्यं किंतु सर्वव्यापकं प्रस्तुतशास्त्रमित्यादावेवोक्तं तद्दर्शनार्थमृषभादिसूत्रान्तरोपादानं भगवतां च तीर्थप्रणीतत्वात्तत्स्मरणस्य समस्तश्रेयःफलकल्पपादपत्वायुक्तं तन्नामोत्कीर्तनं तद्विषयत्वेनैवोक्तमुपलक्षणत्वादन्यत्रापि द्रष्टव्यमिति शेषभावितार्थं यावत्सेत्तमित्यादि निगमनम् ॥ अनु० टी० ॥

इदानीं पूर्वोद्दिष्टामेव गणनानुपूर्वीमाह—

से किं तं गणणाणुपुव्वी २ तिविहा पण्णत्ता तं जहा-पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी १ एगो दससतं सहस्सं दससहस्साइं सतसहस्सं सतसहस्साइं कोडी दसकोडिओ कोडिसयं दसकोडिसयाइं सेत्तं पुव्वाणुपुव्वी से किं तं पच्छाणुपुव्वी २ दसकोडिसहस्साइं जाव एक्को-सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए दसकोडिसतगच्छगयाए सेढीए अन्नमन्नभासो दुरूवूणो सेत्तं अणानुपुव्वी सेत्तं गणनानुपुव्वी ॥ अनु० मू० ॥

से किं तमित्यादि गणनं परिसंख्यानं एकद्वित्रीणि चत्वारि इत्यादि तस्य आनुपूर्वी परिपाटिर्गणनानुपूर्वी । अत्रोपलक्षणमात्रमुदाहर्तुमाह एगेत्यादि सुगमं । उपलक्षणमात्रं चेदमतोऽन्येपि संभविनः संख्याप्रकारा अत्र द्रष्टव्याः । उत्कीर्तनानुपूर्वी नाममात्रोत्कीर्तनमेव कृतं अत्र त्वेकादिसंख्याभिधानमिति भेदः सेत्तमित्यादि निगमनं।टी०अनु०।

अथ प्रागुद्दिष्टामेव संस्थानानुपूर्वीमाह—

से किं तं संठाणानुपुव्वी २ तिविहा पण्णत्ता तं जहा पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी । से किं तं पुव्वाणुपुव्वी २ समचोरंसे निग्गोहमंडले सादी खुज्जे वामणे हुंडे सेत्तं पुव्वाणुपुव्वी। से किं तं पच्छाणुपुव्वी २ हुंडे जाव समचउरंसे सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए छगच्छगयाए सेढीए अन्नमन्नभासो दुरूवूणो सेत्तं अणाणुपुव्वी सेत्तं संठाणाणुपुव्वी ॥ अनु० मू० ॥

(११)से किं तमित्यादि।आकृतिविशेषाः संस्थानानि तानि च जीवाजीवसंबंधित्वेन द्विधा भवंति तत्रेह जीवसंबंधिनी तत्रापि पंचेंद्रियसंबंधिनी वक्तुमिष्टत्तैतदाह(समचउरंसेत्यादि)तत्र समाः शास्त्रोक्तलक्षणाविसंवादिन्यश्चतुर्दिग्वर्तिन्यः अवयवरूपाश्चतस्रोऽस्रयो यत्र तत्समासांतप्रत्यये समचतुरस्रं संस्थानं तुल्यारोहे परिणाहः संपूर्णलक्षणोऽपि सांगोपांगावयवः स्वांगुलाष्टाधिकशतोच्छ्रयः सर्वसंस्थानप्रधानः पंचेंद्रियजीवशरीराकारविशेष इत्यर्थः । १ । नाभेरुपरि न्यग्रोधवन्मंडलं आद्यसंस्थानलक्षणयुक्तत्वेन विशिष्टाकारं न्यग्रोधमंडलं न्यग्रोधो वटवृक्षः यथा चायमुपरिवृत्ताकारतादिगुणोपेतत्वेन विशिष्टाकारो भवत्यधस्तु न तथा एवमेतदपीति भावः २ सह आदिना नाभेरधस्तनकायलक्षणेन वर्त्तते इति सादिनस्तु सर्वमपि संस्थानं आदिना सहैव वर्त्तते ततो निरर्थकं सादित्वविशेषणं सत्यं किं त्वत एव विशेषणवैकल्पप्रसंगादाद्यसंस्थानलक्षणयुक्त आदिरिह गृह्यते ततस्तथाभूतेन आदिना सह यद्वर्त्तते नाभेस्तूपरितनकाये आद्यसंस्थानलक्षणविकलं तत्सादीति तात्पर्यं ३ यत्र पाणिपादशिरोग्रीवं समग्रलक्षणपरिपूर्णं शेषं तु हृदयोदरपृष्ठलक्षणं कोष्ठलक्षणहीनं तत् कुब्जं ४ यत्र तु हृदयोदरपृष्ठं सर्वलक्षणोपेतं शेषं तु हीनलक्षणं तद्वामनं कुब्जविपरीतमित्यर्थः । यत्र सर्वेप्यवयवाः प्रायो लक्षणविसंवादिन एव भवंति तत्संस्थानं हुंडमिति ६ अत्र च सर्वप्राधान्यत्वात्समचतुरस्रस्य च प्रथमत्वं शेषाणां तु यथाक्रमं हीनत्वाद्द्वितीयादित्वमिति पूर्वानुपूर्वीत्वं शेषभावना पूर्ववदिति आह यदीत्थं संस्थानानुपूर्वी प्रोच्यते तर्हि संहननवर्णरसस्पर्शानुपूर्व्योऽपि वक्तव्याः स्युस्तथा च संस्थानुपूर्वीणामत्रैव विशीर्यते ततो निष्फल एव प्रागुपन्यस्तो दशविधत्वसंख्यानियम इति सत्यं किन्तु सर्वासामपि तासां वक्तुमशक्यत्वादुपलक्षणमात्रमेवायं सङ्ख्यानियम एतदनुसारेणाऽन्यान्या अप्येता अनुसर्त्तव्या इति तावल्लक्षयामः सुधिया त्वन्यथापि वाच्यं गम्भीरत्वात् परममुनिप्रणीतसूत्रविवक्षाया एवमुत्तरत्रापि वाच्यमित्यलं विस्तरेण ॥ अनु० ॥

( ७ ) सामाचार्य्यापूर्वीविवक्षुराह—

से किं तं सामायारी आणुपुव्वी २तिविहा पण्णत्ता तं जहा पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी। से किं तं पुव्वाणुपुव्वी २ इच्छा मिच्छा तहक्कारो आवस्सिआ य निसीहिआ आपुच्छणा य पडिपुच्छा छंदणा य निमंतणा उवसंपया य काले सामायारी भवे दसविहा सेत्ते पुव्वाणुपुव्वी, से किं तं पच्छाणुपुव्वी २ उवसंपया जाव इच्छागारो सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी २ एआए चेव एगाइआए एगुत्तरिआए दसगच्छगयाए सेढीए अन्नमन्नभासो दुरूवूणो सेत्तं अणाणुपुव्वी सेत्तं सामायारी आणुपुव्वी ॥ अनु० मू० ॥

( सामाचारीव्याख्यानं तु स्वस्थान एव करिष्यते ) इह धर्म्मस्यापरोपतापमूलत्वादिच्छाकारस्याज्ञा बलाभियोगे

लक्षणपरोपतापवर्त्तकत्वात्प्राधान्यात्प्रथममुपन्यासः अपरोपतापकेनापि कथंचित् स्खलने मिथ्यादुष्कृतं दातव्यमिति तदनन्तरं मिथ्याकारस्य एतौ च गुरुवचनप्रतिपत्तावेव ज्ञातुं शक्यौ गुरुवचनं तथाकारकरणेनैव सम्यक् प्रतिपन्नं भवतीति तदनन्तरं तथाकारस्य प्रतिपन्नगुरुवचनेन चोपाश्रयाद्बहिर्निर्गच्छता गुरुपृच्छापूर्वकं निर्गतव्यमिति । तथाकारानन्तरं तत्पृच्छारूपा आवश्यकबहिर्निर्गतेन च नैषेधिकीपूर्वकं पुनः प्रवेष्टव्यमिति तदन्तरं नैषेधिक्या उपाश्रयप्रविष्टेन च गुरुमापृच्छ्य सकलमनुष्ठेयमिति तदनन्तरमापृच्छनायाः आपृष्टे च निषिद्धेन पुनः प्रष्टव्यमिति तदनन्तरं प्रतिपृच्छनायाः प्रतिप्रश्ने चानुज्ञातेनाशनाद्यानीयं तत्परिभोगाय साधव उत्साहनीया इति तदनन्तरं छन्दनायाः एषा च गृहीत एवाशनादौ स्यादगृहीते तु निमन्त्रणैवेति तदनन्तरं निमंत्रणायाः इयं च सर्वाऽपि निमन्त्रणापर्यंता सामाचारी गुरूपसंपदमन्तरेण न ज्ञायते इति तदनन्तरमुपसम्पद उपन्यास इति पूर्वानुपूर्वीत्वसिद्धिरिति शेषं पूर्ववदिति ॥ ॥ अनु० टी० ॥

( १२ ) अथ भावानुपूर्वीमाह—

**से किं तं भावाणुपुव्वी २ तिविहा पण्णता तं जहा पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी । से किं तं पुव्वाणुपुव्वी २ उदइए उवसमिए खइए खओवसमिए पारिणामिए सन्निवाइए सेत्तं पुव्वाणुपुव्वी । से किं तं पच्छाणुपुव्वी २ संनिवाइए जाव उदइए सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी २ एआए चेव एगाइआए एगुतरिआए छगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो सेत्तं अणाणुपुव्वी सेत्तं भावाणुपुव्वी सेत्तं आणुपुव्वी आणुपुव्वित्ति पदं समत्तं अनु० मू० ॥**

से किं तमित्यादि इह तेन रूपेण भवनानि भावाः वस्तुपरिणामविशेषाः औदयिकादयः अथवा तेन २ रूपेण भवन्तीति भावास्त एव, यद्वा भवन्ति तैस्तेभ्यस्तेषु वा सत्सु प्राणिनस्तेन २ रूपेणेति भावा, यथोक्ता एव तेषामानुपूर्वी परिपाटिर्भावानुपूर्वी औदयिकादीनां तु स्वरूपं पुरस्तात्प्रत्यक्षेण वक्ष्यते अत्र च नारकादिगतिरौदयिका भावा इति वक्ष्यते तस्यां च सत्यां शेषा भावाः सर्वेऽपि यथासम्भवं प्रादुर्भवन्तीति शेषभावाधारत्वेन प्रधानत्वादौदयिकस्य प्रथममुपन्यासस्ततश्च शेषभावपञ्चकस्य मध्ये औपशमिकः स्तोकविषयत्वात् स्तोकतया प्रतिपादयिष्यत इति तदनन्तरमौपशमिकस्य ततो बहुविषयत्वात् क्षायिकस्य ततो बहुतरविषयत्वात् क्षायोपशमिकस्य ततो बहुतरविषयत्वात्पारिणामिकस्य ततोऽप्येषामेव भावानां द्विकादिसंयोगसमुत्थत्वात्सान्निपातिकस्योपन्यास इति पूर्वानुपूर्वीक्रमसिद्धिरिति। शेषं पूर्वोक्तानुसारेण भावनीयं तदेवमुक्ताः प्रागुद्दिष्टा दशाप्यानुपूर्वीभेदाः तद्भणने चोपक्रमप्रथमभेदलक्षणा आनुपूर्वी समाप्ता ॥ अनु० टी० ॥

आणुमाणिय—आनुमानिक–त्रि० अनुमानादागतः ठक् स्त्रियां ङीप्। अनुमानप्राप्ते, १ युक्तिसिद्धे २ व्याप्तिविशिष्टलिङ्गज्ञानादवगते अनुमिते पदार्थे। यथा धूमदर्शनात् वह्निरनुमीयते स च वह्निः स्वव्याप्यविशिष्टधूमज्ञानेनावगत इति तस्य तथात्वम् । अनुमानमात्रेणावगम्ये वेदे वाचकशब्दशून्ये सांख्यमतसिद्धे ३ प्रधाने ॥न०॥

आणुमासिय—आनुमाष्य–त्रि० अनुमाषं भवः परिमुखा० ञ्य० माषस्य पश्चाद्भवादौ, वाच० ॥

आणुलोम्म-आनुलोम्य-न०–अनुलोमस्य भावः कर्म वा ब्राह्मणादित्वात् ष्यञ् अनुक्रमे, वाच० ॥

आणुवंस–आनुवंश्य–त्रि०–अनुवंशं भवः परिमुखा० ञ्य० वंशवृत्तस्य पश्चाद्भवादौ वाच० ॥ ७३० ॥

आणेज्ज—आनेय–त्रि आ+नी–कर्मणि यत्। देशाद्देशान्तरमानेतव्ये १ घटादौ, वैश्यकुलात् विप्रतो भ्राष्ट्राद्वा आनेतुं योग्ये दक्षिणाऽग्नौ पुं० । आनेयो घटादिर्वैश्यकुलादेरानीतो दक्षिणाग्निश्च सि० कौ० वाच० ॥

आणोह—आज्ञौघ–पुं० सम्यग्दर्शनविकले आज्ञामात्रे, आणोहे णाणंता मुक्का गेवेज्ज गेसु उ सरीरा ॥ आज्ञाया आप्तोपदेशस्यौघः सामान्यमाज्ञौघः सम्यग्दर्शनविकलमाज्ञामात्रमित्यर्थः । तेन सताऽपीति गम्यमनन्तानि अनन्तसंख्यानि मुक्तानि त्यक्तानीति ॥ पंचा० ॥

आतं ( यं ) क—आतंक—पुं० तकि कृच्छ्रजीवने आतंकनमातंकः आ—तकि-घञ्–कृच्छ्रजीवने, ( दुःखे ) आचा० नरकादिदुःखे च । आचा० ॥ तच्च द्विविधं। शारीरं मानसं च तत्राद्यं कटुकक्षारशस्त्रगण्डलूतादिसमुत्थं । मानसं प्रियविप्रयोगाप्रियसंप्रयोगेप्सितालाभदारिद्र्यदौर्मनस्यादिकृतम् ॥ आचा० ॥ यदिवाऽऽतंको द्वेधा द्रव्यभावभेदात् स चातंकदर्शिशब्दे। रोगे,॥ स्था० ॥ उत्त० ॥ को०। अनु० ॥ आङिति सर्वात्मप्रदेशाऽभिव्याप्त्या तंकयंति कृच्छ्रजीवितमात्मानं कुर्वन्तीत्यातंकाः सद्योघातिनि रोगविशेषे, ॥ उत्त० ॥ "आयङ्को जरमाइ" आतंको ज्वरादिः सद्योघाती रोगः ॥ पं० व० ॥ उत्त० ॥ आसुघाई० आतंकः,, ॥ आव० ॥ स्था० ॥ पं० सू० ॥ आ० चू० ॥ जी० ॥ उत्त० ॥ ॥ प्रव० ॥ राज० ॥ आ० म० प्र० ॥ दश० ॥ " आतंका विविहा फुसंति" आतंका रोगपरीषहाः स्पृशंतीति ॥ उत्त०॥ आतंकः कृच्छ्रजीवितकारी ज्वरादिक इति ॥ भ० ॥ "उयाहुते आतंका फुसंति" आतंका आशुजीवितापहारिणः शूलादयो व्याधिविशेषाः स्पृशान्त्यभिभवंति पीडयंतीति ॥ आचा० ॥ उत्त० ॥ भ० ॥ ज्ञा० ॥ सूत्र० ॥ स्था० ॥ "दीहकालियणं रोगातंकेण" आतंकः कृच्छ्रजीवितकारी सद्योघाती शूलादिरिति ॥ स्था० ॥ ज्ञा० ॥ प्रश्न० ॥ आतङ्कः सद्योघातिनः शूलादिका रोगा इति ॥ संथा० ॥ भ०॥ "आयंके से वहाय होइ" आतङ्कः सद्योघाती विशूचिकादिको रोगस्तस्य गृहिणो धर्मबन्धुरहितस्य वधाय विनाशाय भवतीति ॥ दश० ॥

ते चोत्तराध्ययने दर्शिता यथा—

**अरइ गंडं विसूइया आयंका विविहा फुसंति ते विवडई विद्धंसइ ते सरीरयं समयं गोयम मा पमायए ॥ उत्त० मू० ॥**

हे गौतम ! ते तव विविधाः नानाप्रकारा आतङ्का रोगाः शरीरं स्पृशंति ते केचन आतङ्का अरतिश्चतुरशीतिविधिवातोद्भूतचित्तोद्वेगो वातप्रकोप इत्यर्थः । गण्डं रुधिरप्रकोपोद्भूतस्फोटकः । विशूचिका अजीर्णोद्भूतवमना-

ध्मानविरेचादि सद्योमृत्युकृत् रुक् इत्यादयो रोगा आत-
ङ्का देहं पीडयन्ति तैः रोगैः पीडिते शरीरे सति ध-
र्माराधनं दुष्करन्ते शरीरं रोगातिभूतं सत् विपतति-
विशेषेण वलापचयात् नश्यति पुनः शरीरं ते तव वि-
ध्वंसते जीवमुक्तं सत् विशेषेण अधः पतति अत्र सर्वत्र
यद्यपि ते तव इत्युक्तं गौतमे च केशपाण्डुरत्वादि इ-
न्द्रियाणां हानिश्च न संभवति तथापि तन्निश्रया अपर-
शिष्यादिवर्गप्रतिबोधार्थं उक्तं दोषाय न भवति तथा च
प्रमादो न विधेयः ॥ उत्त० ॥ टी० ॥ रोगा अकालमहा-
व्याधय आतङ्कास्त एव सद्योघातिन इति ॥ औप० ॥
आतङ्करोगयोर्विशेषो निशीथचूर्णौ यथा—स्यात् केरिसो
रोगो केरसो वा आतङ्कस्तत उच्यते ॥ गाहा ॥

गंडी कोढं खइयादीरोगा कासादीतो तु आतंको ।
दीहरुया वा रोगा आतङ्को आसुघाती य ॥१९५॥

गण्डमस्यास्तीति गंडी गंडमालादि । आदिसद्दातो सि-
ली एतासु णियं गिलाणिमादी रोगो कासो आदिस-
द्दातो सासो मूलं स अतिरक्तपमादी आतंको अहवा
सव्वो जो दीहकालितो सो रोगो जो पुण आसुघाती
वि सिग्घं मारेति सो आतंको ॥ नि० चू० ॥ आतंको ज्व-
रादिस्तद्योगादातंकिनोऽप्यातंका । आतंकिनि, ॥ पिंड० ॥ सं-
तापे; सन्देहे, मुरजशब्दे, भये च ॥ वाच० ॥

आतं ( यं ) कदंसि ( न् )—आतंकदर्शिन्—पुं०तकि कृच्छ्र-
जीवने आतङ्कनमातङ्कः कृच्छ्रजीवनं दुःखं तच्च द्विवि-
धम् शारीरं मानसं च । तत्राद्यं कटुकक्षारशस्त्रगण्डलू-
तादिसमुत्थं। मानसं प्रियसंप्रयोगेप्सितालाभदारिद्र्यदौर्म-
नस्यादिकृतं । एतदुभयमातंकं पश्यति तच्छीलश्चेत्या-
तङ्कदर्शी । अवश्यमेतदुभयमपि दुःखमप्यापततीत्येवं ज्ञा-
तार, । ( तथा चाचाराङ्गे वायुकायसमारम्भमधिकृत्य )

आयंकदंसी अहियंतिणच्चा,, ॥ आचा० ॥

अवश्यमेतदुभयमपि दुःखमापतति मय्यनिवृत्तवायुकायस-
मारंभे ततश्च तद्वायुकायसमारंभणमातङ्कहेतुभूतमहितमि-
ति ज्ञात्वैतस्मान्निवर्तते प्रभुर्भवतीति यदि वातङ्को द्वेधा
द्रव्यभावभेदात्तत्र द्रव्यातंके इदमुदाहरणं जंबूदीवे दीवे
भारहे वासंमि अत्थि सुपसिद्ध बहुणयरगुणसमिद्धं रा-
यगिहं णाम णयरंति तत्थासिगरुयदरियारिमद्दणो भुय-
णनिग्गयपयावो अभिगयजीवाजीवो रायाणाभेणजियस-
त्तू अणवरयसंवेगभाविओ धम्मघोसयामूले सो अन्नया-
कयाई पमाइणं पासए सेहं चोइज्जं तमभिक्खं अवरा-
हंतं पुणो विकुणमाणं तस्स हि पट्टं राया सेसाणए र-
क्खणट्ठाए आयरियाणुण्णाए आणावइ सोउणिय य पुरि-
सेहिं तिव्वुक्कडदव्वेहिं संधिय पुव्वं ताहिं खारं पक्खित्तो ज-
त्थ णरो णवरं दोगोहमेत्तकालेण णिज्जस्सयं ससोणियं अ-
ट्ठि य सेसत्तण मुवेइ दो ताहे पुव्वकए पुरिसे आणावाए
नहिं एया एगं गिहत्थवेसं वीयं पासंडिणेवत्थं पुव्वं
वि य सिक्खवियते पुरिसे पुच्छए तओ राया को वव-
हारं एसि भणंति आणं अइक्कमइ पासंडिओ जहुत्तेण
वट्टइ अत्तणो य आयारे पक्खिवह खारमज्झे खित्ता
गोदोहमेत्तस्स दट्ठूण ट्ठिव संसे ते पुरिसे अलियरोस-
रत्ततच्छो सेहं अलोयंतो रायाता भणइ आयरियं तुम्ह
वि कोवि पमादी सासेमि य तं पि णत्थि भणइ गुरू जइ
होहि तो साहे तुम्हे वि य तस्स जाणिहिह सेहो गए
णिवंमि भणइ ते साहुणो उण पुण तिहा हं पमायसीलो-
तुम्हं सरणागओ धणियं जइ पुण होज्ज पमाओ पुणो
ममं सब्भावरहियस्स तुम्हं गुणेहिं सुविहियतो सावगर-
क्खसामुच्चो आयंकभओ विग्गो ताहे सो णिच्चओ जुओ
जाओ कोवियमतीए समए रएणा सरिसाविओ पच्छा
दव्वायंकादंसी अत्ताणं सव्वहा णिपत्तेइ अहियारंभा उ
सया जह सीसे धम्मघोसस्स । भावातंकादर्शी तु नर-
कतिर्यग्मनुष्यामरभवेषु प्रियविप्रयोगादिशारीरमानसातंक-
भीत्या न प्रवर्तते वायुसमारंभे । अपि त्वहितमेतद्वायुसमारं-
भणमिति मत्वा परिहरति ॥ आचा० ॥

आयंकदंसी न करेइ पावं ॥ आचा० ॥

आतंको नरकादिदुःखं तद्द्रष्टुं शीलमस्येत्यातंकदर्शी
स पापं पापानुबन्धि कर्म न करोति उपलक्षणार्थत्वान्न का-
रयति नानुमन्यत इति ॥ आचा० ॥ टी० ॥

आतं ( यं ) कविवच्चास—आतंकविपर्यास—पुं० आगाढे अ-
नागाढकरणे, । आयंकविवच्चासो नाम आगाढे अहिद्दट्ठाइ
अणागाढं करेइत्ति ॥ पं० चू० ॥

आतं ( यं ) कसंपओगसंपउत्त—आतंकसंप्रयोगसंप्रयुक्त—त्रि०
आतंको रोगस्तस्य सम्प्रयोगः संबन्धस्तेन संप्रयुक्तः
संबन्धो यः स तथा आतंकसंबन्धे, आतंकसंपओग-
संपउत्ते तस्स विप्पओगसतिसमण्णागए यावि भवइ
( अयं चार्तध्यानस्य तृतीयो भेदस्तद्वक्तयताऽऽर्त्तध्यान-
शब्दे ) ॥ स्था० ॥ ग० ॥ औप० ॥

आतं ( यं ) कि ( न् ) आतंकिन्—पुं० रोगिणि,॥ स्था० ॥

आतं ( यं ) चणिया—आतंचनिका—स्त्री० कुंभकारभाजने,
"आयंचणिओदएणं गताइं परिसिंचमाणे विहरइ आयंचणि-
ओदएणंति—इह टीका व्याख्या । आतंचनिकोदकं कुंभ-
कारस्य भाजने स्थितं तेमनाय मृन्मिश्रं जलं । तेनेति
॥ भ० ॥

आतं ( यं ) तकर—आत्मान्तकर—पुं० आत्मनोऽन्तमवसानं
भवस्य करोतीत्यात्मान्तकरः । प्रत्येकबुद्धादिके, ॥ स्था० ॥
आत्मनोऽन्तं मरणं करोतीत्यात्मान्तकर। आत्मवधके ॥ स्था.॥
आयंतकरे णाममेगे णो परंतकरे ॥ स्था० ॥

आतं ( यं ) तम—आत्मतम—पुं० आत्मानं तमयति खेदय-
तीत्यात्मतमः। आचार्यादिके आत्मखेदयितरि, आत्मैव तमो-
ऽज्ञानं क्रोधो वा यस्य स आत्मतमाः । अज्ञानात्मनि, क्रो-
धात्मनि च ॥ स्था० टी० ॥ आयंतमे नाममेगे णो
परंतमे ॥ स्था० ॥ मू० ॥

आतं ( यं ) दम—आत्मदम—पुं० आत्मानं दमयति शम-
वन्तं करोति शिक्षयति, वेत्यात्मदमः। आचार्य्ये, अश्वद-
मकादौ च ॥ "आयंदमे णाममेगे णो परंदमे" ॥ स्था० ॥

आतं ( यं ) व—आताम्र—त्रि० ईषद्रक्ते, ॥जं ॥ औप०॥"आ-
यंवतलिणसुइरुइल निद्धनक्खा । आताम्रा ईषद्रक्तास्तलि-
नाः प्रतलाः शुचयः पवित्रा रुचिरा दीप्ताः स्निग्धा अ-

रुहा नखाः कररुहा येषान्ते आताम्रतलिनशुचिरु-रचिरस्निग्धनखाः ॥ जी० ॥

आतं ( यं ) बज्झयण—आताम्राध्ययन—न० सूर्य्यस्याग्रमहिष्या आताम्राया वक्तव्यताप्रसिद्धे ज्ञाताधर्मकथाया द्वितीयश्रुतस्कंधसप्तमवर्गस्य द्वितीयेऽध्ययने, ॥ ज्ञा०॥

आतं ( यं ) भरि—आत्मम्भरि—त्रि० आत्मानं विभर्त्ति भृ० खि-मुम्-च उप० स० स्वोदरमात्रपूरके,।देवतातिथ्यानादरेणात्मपोषकत्वात्तस्य तथात्वम् "आत्मम्भरिस्त्वं पिशितैर्नराणाम्—भट्टिः ॥ वाच० ॥ आत्मानं विभर्ति पुष्णातीति आत्मम्भरिः। स्वार्थकारके,॥ स्था० ॥ "आयंभरे णाममेगे णो परंभरे" ॥ स्था० ॥ टी० ॥ आत्मम्भरिः प्राकृतत्वादायंभरे इति ॥ स्था० ॥

आत ( य ) कम्म-(न्)-आत्मकर्मन्—त्रि० ६ त०। आत्मनः स्वस्य कर्त्तव्ये कार्य्ये, आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः रघुः ॥ वाच० ॥ ज्ञानावरणादिके आत्मकृतकर्मणि ॥ भ० ॥ किं आयकम्मणा उववज्जंति परकम्मणा उववज्जंतीति ॥ भ० ॥

आत ( य ) गवेसय—आत्मगवेषक—त्रि० आत्मानं कर्म्ममलापहारेण शुद्धं गवेषयतीत्यात्मगवेषकः ॥ उत्त०॥ आत्मानं कर्म्मविगमाच्छुद्धस्वरूपं गवेषयति कथमयमित्थंभूतो भवेदित्यन्वेषयते यः स आत्मगवेषकः । कर्म्मविगमाच्छुद्धस्वरूपस्यात्मनोऽन्वेषके, ॥ उत्त० ॥ "सहिए आयगवेसए स भिक्खू" ॥उत्त०॥

आत ( य ) गय—आत्मगत—त्रि० आत्मनि गतमात्मगतम्। आत्मगे, सूत्र० ॥

संलोकणिज्जमणगारं आयगयं निमंतणे णाहंसु ॥

॥ सूत्र० ॥

संलोकनीयं संदर्शनीयमाकृतिमन्तं कंचनानगारं साधुमात्मनि गतमात्मगतमात्मज्ञमित्यर्थ इति ॥ टी० सूत्र० ॥

आत ( य ) गुत्त—आत्मगुप्त—त्रि० आत्मा शरीरं आत्मशब्दस्य शरीरवचनस्यापि दर्शनात् उक्तं हि "धर्मधृत्यग्निधीन्द्वर्कस्त्वक् तत्त्वसूर्य्यदेहेषु।शीलानिलमनोयत्नकवीर्येष्वात्मनः स्मृतिरिति ॥ तेन गुप्त आत्मगुप्तो यतस्ततः करचरणादिविक्षेपकृत् इतस्ततः करचरणादिविक्षेपके यद्वा गुप्तो रक्षितोऽसंयमस्थानेभ्य आत्मा येन स तथा ॥ उत्त० ॥ असंयमस्थानेभ्यो रक्षितात्मनि,मनोवाक्कायैरात्मा गुप्तो यस्य स आत्मगुप्तः मनोवाक्कायगुप्ते, ॥ सूत्र० ॥ इन्द्रियेण इन्द्रियात्मना गुप्त आत्मगुप्तः ॥ आचा० ॥ आत्मना मनोवाक्कायरूपेण गुप्त आत्मगुप्तः॥मनोवाक्कायात्मना गुप्ते, "आयगुत्ते सयावीरे" ॥ सूत्र० ॥ आयगुत्ते सयादंते, ॥ सूत्र० ॥

( आत्मगुप्तस्य फलमाह सूत्रकृताङ्गे )

कडं च कज्जमाणं च आगमिस्सं च पावगं।

सव्वं तं णाणुजाणंति आयगुत्ता जिइंदिया ॥ सूत्र० ॥

साधूद्देशेन यदपरैरनार्यकल्पैः कृतमनुष्ठितं पापकं कर्म तथा वर्त्तमाने च काले क्रियमाणं तथा ऽऽगामिनि च काले यत्करिष्यते तत्सर्वं मनोवाक्कायकर्मभिर्नानुजानन्ति नानुमोदन्ति तदुपभोगपरिहारेणेति भावः। यद्यप्यात्मार्थं पापकं कर्म परैः कृतं क्रियते करिष्यते च तद्यथा शत्रोः शिरश्छिन्नं छिद्यते छेत्स्यते वा तथा चौरो हतो हन्यते हनिष्यते वा इत्यादिकं परानुष्ठानं नाऽनुजानंति न च बहु मन्यंते। तथाहि । यदि परः कश्चिदशुद्धेनाहारेणोपनिमंत्रयेत्तमपि नानुमन्यंत इति । क एवंभूता भवंतीति दर्शयति । आत्माऽकुशलमनोवाक्कायनिरोधेन गुप्तो येषां ते तथा जितानि वशीकृतानि इंद्रियाणि श्रोत्रादीनि यैस्ते तथा एवंभूताः पापकर्म नाऽनुजानंतीति स्थितं ॥ सूत्र० टी० ॥

गुप्तात्मन्—त्रि०—गुप्तोऽसंयमस्थानेभ्यो रक्षित आत्मा येन स गुप्तात्मा प्राकृतत्वाद्विपर्य्ययः असंयमस्थानेभ्यो रक्षितात्मनि,॥उत्त०॥ आत्मना गुप्तः स्वशक्त्यैव रक्षिते लताभेदे स्त्री० तस्याः स्पर्शने हि अतिकण्डूयनं दुःखं भवति तद्भयाच्चान्यैर्न सा स्पृश्यत इति तस्या आत्मगुप्तत्वम्॥ वाच० ॥

आत ( य ) च्चाइ ( न् )—आत्मत्यागिन्—त्रि०—आत्मानं देहं त्यजति—त्यज्—घिनुण्—आत्मघातिनि, ॥ ॥ वाच० ॥

आत ( य ) छट्ठवाइ ( न् )—आत्मषष्ठवादिन्—पुं०—आत्मा षष्ठो येषान्तान्यात्मषष्ठानि भूतानि विद्यन्त इत्येवं वादिनि सांख्यादौ, सांप्रतमात्मषष्ठवादिमतं पूर्वपक्षयितुमाह—सूत्रकृताङ्गे—

संति पंचमहाभूया इह मेगेसि आहिया ॥

आयच्छट्ठो पुणो आहु आया लोगे य सासए ॥ सूत्र मू० ॥

संति विद्यंते पंचमहाभूतानि पृथिव्यादीनि इहास्मिन् संसारे एकेषां वेदवादिनां सांख्यानां शैवाधिकारिणां च एतदाख्यातमाख्यातानि च भूतानि ते च वादिन एवमाहुरेवमाख्यातवंतः। यथा। आत्मषष्ठानि आत्मा षष्ठो येषां तानि आत्मषष्ठानि भूतानि विद्यंत इति । एतानि चात्मषष्ठानि भूतानि यथान्येषां वादिनामनित्यानि तथा नामीषामिति दर्शयति। आत्मा लोकश्च पृथिव्यादिरूपः शाश्वतोऽविनाशी । तत्रात्मनः सर्वव्यापित्वादमूर्तत्वाच्चाकाशस्येव शाश्वतत्वं पृथिव्यादीनां च तद्रूपाप्रच्युतेरविनश्वरत्वमिति ॥ सूत्र० टी० ॥स्कं०-१ अ०-१॥

शाश्वतत्वमेव भूयः प्रतिपादयितुमाह—

दुहओ ण विणस्संति नो य उप्पज्जए असं।

सव्वे वि सव्वहा भावा नियतो भावमागया ॥ सूत्र०॥

ते आत्मषष्ठाः पृथिव्यादयः पदार्था उभयत इति निर्हेतुकसहेतुकविनाशद्वयेन न विनश्यंति । यथा बौद्धानां स्वत एव निर्हेतुको विनाशः। तथा च तेऊचुः। "जातिरेव हि भावानां विनाशे हेतुरिष्यते ॥ यो जातश्च न च ध्वस्तो नश्येत्पश्चात्स केन च ॥ १ ॥ यथा च वैशेषिकाणां लकुटादिकारणसान्निध्ये विनाशः सहेतुकस्तेनोभयरूपेणापि विनाशेन लोकात्मनोर्न विनाश इति तात्पर्यार्थः। यदि वा ( दुहउत्ति ) द्विरूपादात्मनः स्वभावाच्चेतनाचेतनरूपान्न विनश्यतीति । तथाहि । पृथिव्यप्तेजोवाय्वाकाशानि स्वरूपापरित्यागतया नित्यानि । न कदाचिदनीदृशं जगदिति कृत्वा आत्मापि नित्य एव कृतकत्वादिभ्यो हेतुभ्यः। तथा चोक्तं। "नैनं छि-

दन्ति शस्त्राणि नैनं दहति पावकः ॥ न चैनं क्लेदयंत्यापो न शोषयति मारुतः" ॥ १ ॥ अच्छेद्योऽयमदाह्योऽयमविकार्यो-ऽयमुच्यते ॥ नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥५॥ एवं च कृत्वा नासदुत्पद्यते सर्वस्य सर्वत्र सद्भावादसति च कारकव्यापाराभावात् सत्कार्यवादः । यदि वा असदुत्पद्येत खरविषाणादेरप्युत्पत्तिः स्यादिति । तथा चोक्तं "असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यं" । एवं च कृत्वा मृत्पिण्डेऽपि घटोऽस्ति तदर्थिनां मृत्पिण्डोपादानात् । यदि वाऽसदुत्पद्येत ततो यतः कुतश्चिदेवस्यादावश्यमेतदर्थिना मृत्पिंडोपादानमेव क्रियते इत्यतः सदेव कारणे कार्यमुत्पद्यत इति । एवं च कृत्वासर्वेऽपि भावाः पृथिव्यादय आत्मषष्ठा नियतिभावं नित्यत्वमागता नाभावरूपतामभूत्वा च भावरूपतां प्रतिपद्यन्ते आविर्भावतिरोभावमात्रत्वादुत्पत्ति विनाशयोरिति तथाचाभिहितं । "नासतो जायते भावो नाभावो जायते सत" इत्यादि । तस्योत्तरं निर्युक्तिकृदाह । "को वेए इत्यादि प्राकन्येव गाथा" सर्वपदार्थनित्यत्वाभ्युपगमे कर्तृत्वपरिणामो न स्यात्ततश्चात्मनोऽकर्तृत्वे कर्मबंधाभावस्तदभावाच्च को वेदयति न कश्चित्सुखदुःखादिकमनुभवतीत्यर्थः एवं च सति कृतनाशः स्यात् । तथा असतश्चोत्पादाभावे येयं मया आत्मनः पूर्वभावपरित्यागे-नापरभावोत्पत्तिलक्षणा पंचधा गतिरुच्यते सा नस्यात् ततश्च मोक्षगतेरभावाद्दीक्षादिक्रियानुष्ठानमनर्थकमापद्यते । तथाऽप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वेन त्वात्मनोदेवमनुष्यगत्यागती तथा विस्मृतेरभावात् जातिस्मरणादिकं वा न प्राप्नोति । यथोक्तं सदैवोत्पद्यते तदप्यसत् । यतो यदि सर्वथा सदेव कथमुत्पादः । उत्पादश्चेत्तर्हि सर्वदा सदिति । तथाचोक्तं । "कर्मगुणव्यपदेशाः प्रागुत्पत्तेर्न संति यत्तस्मात् ।कार्यमसद्विज्ञेयं क्रियाप्रवृत्तेश्च कर्तृणां"तस्मात्सर्वपदार्थानां कथंचिन्नित्यत्वं सदसत्कार्यवादश्चेत्यवधार्यं । तथाचाभिहितं । "सर्वव्यक्तिषु नियतं क्षणे क्षणेऽन्यत्वमथ च न विशेषः । सत्यश्चित्यपचित्योराकृतिजातिव्यवस्थानादिति" । तथा । "नान्वयः स हि भेदत्वान्न भेदोऽन्वयवृत्तितः ॥ मृद्भेदद्वयसंसर्गवृत्तिजात्यंतरं घटः" ॥ १ ॥ ॥ सूत्र० टी० ॥ स्कं० १ । अ० १

आत (य) जम्म (न्)—आत्मजन्मन्—पुं०—आत्मनो जन्म यस्य । अपत्ये, ॥ वाच० ॥

आत (य) जस ( स् )—आत्मयशस्—न०—आत्मसंविधिनि यशसि, यशोहेतुभूते संयमे, "च जीवा किं आयजसेणं उववज्जंति, ॥ भ० ॥

( आयजसेणं ति ) आत्मनः संबंधि यशो यशो हेतुत्वाद्यशः संयम आत्मयशस्तेन ( आयजसं उवजीवंति त्ति, ) आत्मयश आत्मसंयममुपजीवन्त्याश्रयन्ति विदधतीत्यर्थः ॥ ॥ भ० टी० ॥

आतजाइ ( न् )—आत्मयाजिन्—पुं० आत्मानं ब्रह्मरूपेण कर्मकरणादिकं भावयन् यो न यजते । यज्-णिनि । "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्" इत्युक्तरूपभावनया ज्योतिष्टोमादिकर्म कर्तरि आरुरुक्षोर्ब्रह्मनिष्ठे, कर्म्मयोगिनि, सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छतीति" मनूक्तेरात्मतया सर्वभूतदर्शिनि च ॥ वाच० ॥

आत (य) जोगि (न् )—आत्मयोगिन्—पुं० आत्मनो योगः कुशलमनःप्रवृत्तिरूप आत्मयोगः स यस्यास्ति । सदा धर्मध्यानावस्थिते ॥ सूत्र० ॥

आत ( य ) जोणि—आत्मयोनि—पुं० आत्मा योनिर्निरस्य । चतुर्मुखे ब्रह्मणि, शिवे, मनोभवे, प्रहर्त्तुमभ्युद्यतमात्मयोनिम्—कुमा० विष्णौ च आत्मयोनिः स्वयंजातः विष्णुस० आत्मैव योनिरुपादानकारणम् नान्यदिति, भाष्योक्तेःविष्णोः स्त्रीत्वमपि ॥ वाच० ॥

आत ( य ) ज्झाण—आत्मध्यान—आत्मनो ध्यानम् योगविशेषः । आत्मसाक्षात्कारसाधने मानसवृत्तिभेदे ॥ वाच० ॥

आत ( य ) ह ( अप्पणट्ठ )—आत्मार्थ—पुं० आत्माहिते, ॥ आचा० ॥ आत्मनोऽर्थ आत्मार्थः । ज्ञानदर्शनचारित्रेषु आत्मनो हितम्प्रयोजनमात्मार्थः । चरित्रानुष्ठाने ॥ आचा० ॥

आयतट्ठ—आयतार्थ—पुं०—आयतोऽपर्य्यवसानान्मोक्ष एव स चासावर्थश्चायतार्थः ।मोक्षात्मके प्रयोजने, आयतो मोक्षोर्थः प्रयोजनं यस्य सः । मोक्षप्रयोजनके दर्शनादिके, ॥ आचा० ॥ आत्मनिमित्ते,—अप्पणट्ठा परट्ठा वा आत्मार्थमात्मनिमित्तमिति ॥ दश० ॥

( आत्मार्थश्चावश्यमुपासनीयस्तथा चाचाराङ्गे ) अप्पं च खलु आउयं इह मेगेसिं माणवाणं तं जहा सो य परिणाणेहिं परिहायमाणेहिं चक्खुपरिणाणेहिं परिहायमाणेहिं घाणपरिणाणेहिं परिहायमाणेहिं रसणपरिणाणेहिं परिहायमाणेहिं फासपरिणाणेहिं परिहायमाणेहिं अभिकंतं च खलु वयं सपेहाए तम्रो से एगदा मूढभावं जणयंति जेहिं वासद्धिं संवसति ते वि णं एगदा णियगा पुव्वं परिवयंति सो वि ते णियए पच्छा परिव्वएज्जा णालं ते तव ताणाए वासरणाए वा तुमं पि तेसिं णालं-ताणाए वासरणाए वा से ण हासाए ण किड्डाए ण रत्तीए वा विभूसाए इच्चेवं समुट्ठिए अहो विहाराए अतरं च खलु इमं एसेहाए धीरे मुहुत्तमवि णो एगे पमायए वयो अच्चेति जोव्वणं च जीविए इह जे पमत्ता से हंता छेत्ता भेत्ता लुंपित्ता उद्दवित्ता उत्तासइत्ता अकडं करिस्सामित्ति मण्णमाणो जेहिं वासद्धिं संवसति ते वाणं एगया णियगा पुव्विं पोसंति सो वि ते णियगे पच्छा पोसेज्जा णालं ते तव ताणाए वा सरणाए वा तु ॥ आचा०अल्पंस्तोकश्चशब्दोऽधिकवचनः ॥ खल्ववधारणे आयुरिति भवस्थितिहेतवः कर्म्मपुद्गला इहेति संसारे मनुष्यभवे चैकेषां केषांचिदेव मानवानां मनुजानामिति पदार्थो वाक्यार्थस्त्विहास्मिन् संसारे केषांचिन्मनुजानां क्षुल्लकभवोपलक्षितांतर्मुहूर्तमात्रमल्पं स्तोकमायुर्भवति चशब्दादुत्तरोत्तरसमयादिवृद्ध्या पल्योपमत्रयावसानेऽप्यायुषि तत्र खलुशब्दस्यावधारणार्थत्वात्संयमजीवितमल्पमेवेति ॥ आचा० टी० ॥

येऽपि दीर्घायुष्कस्थितिका उपक्रमणकारणाभावे आयुःस्थितिमनुभवन्ति तेऽपि मरणादप्यधिकां जराभिभूतप्रायां जघन्यतरामवस्थामनुभवंतीति तद्यथेत्यादिना दर्शयति सो अपरिणाणेहिं इत्यादि । ततो से एगदा मूढभावं जणयं-

तीति । यावत् शृणोति भाषापरिणतान् पुद्गलानिति श्रोत्रं तच्च कदंबपुष्पाकारं द्रव्यतो भावतो भाषाद्रव्यग्रहणलब्ध्युपयोगस्वभावमिति तेन श्रोत्रेण परि समंताद् घटपटशब्दादिविषयाणि ज्ञानानि परिज्ञानानि तैः श्रोत्रपरिविज्ञानैर्जराप्रभावात्परिहीयमानैः सद्भिस्ततोऽसौ प्राणी एकदा वृद्धावस्थायां रोगोदयावसरे वा मूढभावं मूढतां कर्त्तव्याकर्त्तव्यज्ञतामिन्द्रियपाटवाभावादात्मनो जनयन्ति हिताहितप्राप्तिपरिहारविवेकशून्यतामापद्यत इत्यर्थः । जनयंतीति विवेकवचनावसरे तिङां तिङो भवन्तीति बहुवचनमकारि अथवा तानि वा श्रोत्रविज्ञानानि परिहीयमाणान्यात्मनः सदसद्विवेकशून्यतामापादयंतीति श्रोत्रादिविज्ञानानां च तृतीया प्रथमार्थे सुब्व्यत्ययेन द्रष्टव्येति एवं चक्षुरादिविज्ञानेष्वपि योज्यम् । अत्र च करणत्वादिन्द्रियाणामेवं सर्वत्र द्रष्टव्यं श्रोत्रेणात्मनोऽपि ज्ञानानि चक्षुषात्मनो विज्ञानानीति ॥ आचा० ॥

अत्र च सोयपरिण्णाणेहिं परिहायमाणेहीत्यादि । य उत्पत्तिं प्रति व्यत्ययेनेन्द्रियाणामुपन्यासः स एवमर्थो द्रष्टव्यः इह संज्ञिनः पंचेन्द्रियस्य उपदेशदानेनाधिकृतत्वादुपदेशश्च श्रोत्रेन्द्रियविषय इति कृत्वा तत्पर्याप्तौ च सर्वेन्द्रियपर्याप्तिः सूचिता भवति श्रोत्रादिविज्ञानानि च वयोऽतिक्रमे परिहीयंते तदेवाह अभिक्कंतमित्याद्यथवा श्रोत्रादिविज्ञानैरपचिता करणभूतैः सद्भिः ( अभिक्कंतं च खलु वयंसपेहाए ) तत्र प्राणिनां कालकृता शरीरावस्थायौवनादिर्वयः तज्जराभिमृत्युं दाक्रांतमिह चत्वारि वयांसि कुमारयौवनमध्यमवृद्धत्वान्युक्तं च—

"प्रथमे वयसि नाधीतं द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति" तत्राद्यवयोद्वयातिक्रमे जराभिमुखमभिक्रांतं वयो भवति अन्यथा वा त्रीणि वयांसि कौमारयौवनस्थविरत्वभेदादुक्तं च—

"पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्राश्च स्थाविरे भावे न स्त्री स्वातंत्र्यमर्हति ॥

अन्यथा वा त्रीणि वयांसि बालमध्यमत्ववृद्धत्वभेदादुक्तं च-

"आषोडशाद्भवेद् बालो यावत् क्षीरान्नवर्तकः ।
मध्यमः सप्तति यावत्परतो वृद्ध उच्यते ॥

एतेषु वयस्तु सर्वेष्वपि चयोपचयवत्यवस्था तामभिक्रान्तोऽभिक्रांतवया इत्युच्यते । चः समुच्चये । न केवलं श्रोत्रचक्षुर्घ्राणरसनस्पर्शनविज्ञानैर्व्यस्तसमस्तैर्देशतः सर्वतो वा परिहीयमानैर्वा मौढ्यमापद्यते वयश्चातिक्रांतं प्रेक्ष्य पर्यालोच्य स इति प्राणी खलुरिति विशेषणेविशेषेणेत्यर्थः मौढ्यमापद्यत इत्याह च ( ततो स इत्यादि ) तत इति तस्मादिन्द्रियविज्ञानापचयाद्वयोऽतिक्रमणाद्वा स इति प्राणी एकदेति वृद्धावस्थयां मूढभावो मूढत्वं किंकर्तव्यताभावमात्मनो जनयत्यथवा स तस्यासुभृतः श्रोत्रादिविज्ञानानि परिहीयमाणानि मूढत्वभावं जनयन्तीति स एव वार्द्धक्ये मूढस्वभावः सन् प्रायेण लोकावगीतो भवतीत्याह जेहिं वेत्यादि । वा शब्दः पक्षांतरद्योतकः । आस्तां तावदपरो लोको यैः पुत्रकलत्रादिभिः सार्द्धं सह संवसंति त एव भार्यापुत्रादयो णमिति वाक्यालंकारे । एकदेति वृद्धावस्थायां निजका आत्मीया ये तेन समर्थावस्थायां पूर्वमेव पोषितास्ते तं परिवदन्ति परि समंताद्वदन्ति यथायं न म्रियते नापि मंचकं ददाति यदि वा परिवदंति परिभवन्तीत्युक्तं भवत्यथ वा किमनेन वृद्धेनेत्येवं परिवदंति न केवलमेषां तस्यात्मापि तस्यामवस्थायामवगीतो भवतीत्याह च "वलिसंततमस्थिशेषितं शिथिलस्नायुधृतं कलेवरं ॥ स्वयमेव पुमान् जुगुप्सते किमु कांताकमनीयविग्रहा" ॥ गोपालबालांगनादीनां च दृष्टांतद्वारेणोपन्यस्तोऽर्थे बुद्धिमधितिष्ठतीत्यतस्तदाविर्भावनाय कथानकं । कौशांब्यां नगर्यामर्थवान् बहुपुत्रो धनो नाम सार्थवाहस्तेन चैकाकिना नानाविधैरुपायैः स्वापतेयमुपार्जितं । तच्चाशेषदुःखितबन्धुजनस्वजनमित्रकलत्रपुत्रादिभोग्यतां निन्ये ततोऽसौ कालपरिपाकवशाद्वृद्धभावमुपगतः सन् पुत्रेषु सम्यक्पालनोपचितकलाकुशलेषु समस्तकार्यचिन्ताभारं निचिक्षेप । तेऽपि वयमनेनेदृशीमवस्थां नीताः सर्वजनाग्रेसरा विहिता इति कृतोपकाराः सन्तः कुलपुत्रतामवलंबमानाः क्वचित् कार्यव्यासंगात् स्वभार्याभिस्तमकल्पं वृद्धं प्रत्यजागरंस्ता अभ्युद्वर्तनस्नानभोजनादिना यथाकालमक्षुण्णविहितवत्यस्ततो गच्छत्सु दिवसेषु वर्द्धमानेषु पुत्रभांडेषु प्रौढीभवत्सु भर्तृषु जरद्वृद्धे च विवशाकरणपरिचारे सर्वाङ्गकंपिनि गलदशेषश्रोतसि सति शनैः शनैरुचितमुपचारं शिथिलतां निन्युरसावपि मदप्रतिजागरणतया चिंताभिमानेन विश्रसया च सुतरां दुःखसागरावगाढः सन् पुत्रेभ्यः स्नुषाक्षुण्णान्याऽऽचचक्षे ताश्च स्वभर्तृभिश्चेखिद्यमानाः सुतरामुपचारं परिहृतवत्यः सर्वाश्च पर्यालोच्यैकवाक्यतया स्वभर्तृनभिहितवत्यः क्रियमाणेऽप्ययं प्रतिजागरणे वृद्धभावाद्विपरीतबुद्धितयाऽपह्नुते यदि भवतामप्यस्माकमुपर्यविस्रम्भस्ततोऽन्येन विश्वसनीयेन निरूपयत तेऽपि तथैव चक्रुस्तास्तु तस्मिन्नवसरे सर्वाणि कार्याणि यथावसरं विहितवत्योऽसावपि पुत्रैः पृष्टः पूर्वविरक्तचेतास्तथैव ता अपवदति नैता मम किञ्चित्सम्यक् कुर्वंति तैस्तु प्रत्ययैकवचनादवगततत्त्वैर्यथायमुपचर्यमाणोऽपि वार्द्धक्याद् रुष्यते ततस्तैरप्यवधीरितोऽन्येषामपि यथाऽवसरे तद्भण्डनस्वभावतामाचचक्षिरे ततोऽसौ पुत्रैरवधीरितः स्नुषाभिः परिभूतः परिजनेनावगीतो वाङ्मात्रेणापि केनचिदप्यननुवर्त्यमानः सुखिते दुःखितकष्टतरामायुःशेषामवस्थामनुभवतीत्येवमन्योऽपि जराभिभूतविग्रहस्तृणाकुब्जीकरणेऽप्यसमर्थः सन् कार्यैकनिष्ठलोकात्परिभवमाप्नोतीत्याह "गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता दृष्टिर्भ्रंश्यति रूपमेव ह्रसते वक्त्रं च लालायते ॥ वाक्यं नैव करोति बांधवजनः पत्नी न शुश्रूषते धिक्कष्टं जरयाऽभिभूतपुरुषं पुत्रैरवज्ञायते" इत्यादि तदेवं जराभिभूतं निजाः परिवदंत्यसावपि परिभूयमानस्तद्व्यतिरिक्तचेतास्तदपवदेज्जनायाऽऽचष्टे आह च (सोवा) इत्यादि वा शब्दः पूर्वापेक्षया पक्षांतरं दर्शयति ते वा निजास्तं परिवदंति स वा जराजर्ज्जरितदेहस्तान्निजान् नैकदोषोद्घट्टनतया परिवदेन्निंदेदथ वा खिद्यमानार्थतया तानसाववगीयति परिभवतीत्यर्थः । येऽपि पूर्वकृतधर्मवशात्त वृद्धं न परिवदंति तेऽपि तदुःखाऽपनयनसमर्था न भवन्त्याह च नालमित्यादि । नालं न समर्थास्ते पुत्रकलत्रादयस्तवेति । प्रत्यक्ष भावमुपगतं वृद्धमाह त्राणाय शरणाय [illegible]

तत्रापत्तरणमुच्यते यथा महाश्रोतोभिरुह्यमानः सुकर्णधाराऽधिष्ठित प्लवमासाद्यापदस्तरतीति। शरणं पुनर्यदवष्टंभान्निर्भयैः स्थीयते तदुच्यते तत्पुनर्दुर्गपर्वतः पुरुषो वेति । एतदुक्तं भवति । जराभिभूतस्य न कश्चित् त्राणाय शरणाय वेत्युक्तश्च जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके इत्यादि स तु तस्यामवस्थायां किंभूतो भवतीत्याह । "से ण हस्सा" इत्यादि स जराजीर्णविग्रहो न हास्याय भवति तस्यैव हसनीयत्वान्न परान् हसितुं योग्यो भवतीत्यर्थः।स च समक्षं परोक्षं वा एवमभिधीयते जनैः किं किलास्य हसितेनहास्यास्पदस्येति। न च क्रीडायै न च लंघनवलनास्फोटनक्रीडानां योग्योऽसौ भवति नापि रत्यै भवति रतिरिह विषयगता गृह्यते सा पुनर्ललनावगूहनादिका तथा भूतोऽप्यवजुघुक्षुः स्त्रीभिरभिधीयते न लज्जते भवान्न पश्यति आत्मान नावलोकयति शिरःपलितभस्मावगुण्ठितं मां दुहितृभूतामेवं गूहितुमिच्छसीत्यादिवचसामास्पदत्वान्न रत्यै भवति न विभूषायै यतो विभूषितोऽपि प्रततचर्म्मावलोकः स नैव शोभते उक्तञ्च "न विभूषणमस्य युज्यते न च हास्यं कुत एव विभ्रमः। अथ तेषु च वर्तते जनो ध्रुवमायाति परां विडंवनां" "जं जं करेइ तं तं न सोहए जोव्वणे अतिक्कंते। पुरिसस्स महिलियाए एक्कं धम्मं पमुत्तूणं" गतमप्रशस्तमूलस्थानं । सांप्रतं प्रशस्तमुच्यते ( इच्चेवमित्यादि ) अथ वा यत एवं ते सुहृदो नालं त्राणाय शरणाय वाऽतः किं विदध्यादित्याह इच्चेयमित्यादि इति रूपप्रदर्शने अप्रशस्तमूलगुणस्थाने वर्तमानो जराभिभूतो न हास्याय न क्रीडायै न रत्यै न विभूषायै प्रत्येकं च शुभाशुभकर्म्मफलप्राणिनामित्येवं मत्वा समुत्थितः सम्यगुत्थितः शस्त्रपरिज्ञोक्तं मूलगुणस्थानमधितिष्ठन् अहो इत्याश्चर्ये विहरणं विहार आश्चर्यभूतो विहारोऽहोविहारो यथोक्तसंयमानुष्ठानं तस्मै अहोविहारायोत्थितः सन् क्षणमपि नो प्रमादयेदित्युत्तरेण संटंकः । किं वांतरं वेत्यादि अंतरमित्यवसरस्तच्चार्ये क्षेत्रे सुकुलोत्पत्तिबोधिलाभसर्वविरत्यादिकं चः समुच्चये खलुरवधारणे इममित्यनेनेदमाह विनेयस्तपःसंयमादावसीदन् प्रत्यक्षभावापन्नमार्यक्षेत्रादिकमंतरमवसरमुपदर्श्याभिधीयते तवायमेवंभूतोऽवसरो नादौ संसारे पुनरतीव सुदुर्लभ एवेत्यतस्तमवसरं संप्रेक्ष्य पर्यालोच्य धीरः सन् मुहूर्तमप्येकं नो प्रमादवशगो भूयादिति संप्रेक्ष्येत्यत्र स्वरे लोपश्छांदसत्वादित्यन्यदप्यलाक्षणिकमेवंजातीयमस्मादेव हेतोरवगंतव्यमिति । आंतर्मौहूर्त्तिकत्वाच्च छाद्मस्थिकोपयोगस्य मुहूर्त्तमित्युक्तमन्यथा समयमप्येकं न प्रमादयेदिति वाच्यं तदुक्तं– "संप्राप्य मानुषत्वं संसारासारतां च विज्ञाय। हे जीव ! किं प्रमादान्न चेष्टसे शांतये सततं" ॥ ननु पुनरिदमतिदुर्लभमगाधसंसारजलधिविभ्रष्टं मानुष्यं खद्योतकतडिल्लताविलसितप्रतिमामित्यादि । किमर्थञ्च नो प्रमादयेदित्याह–वयोऽत्येति वयः कुमारादि अत्येति अतीव एति याति अत्येत्यन्यच्च "जोव्वणं वात्ति" आत्मन्यनुवर्त्तते यौवनं वात्येत्यतिक्रामति वयोग्रहणेनैव यौवनस्यावगतत्वात्तदुपादानं प्राधान्यख्यापनार्थं धर्मार्थकामानां तन्निबंधनत्वात् सर्ववयसां यौवनं सार्धीयस्तदपि त्वरितं यातीत्युक्तं च "नईवेगसमं चंचलं च जीवियं जोव्वणञ्च कुसुमसमं सोक्खं च जं अणिच्चंति णिविसुरमाणभोज्जाइं" तदेवं मत्वा अहो विहारायोत्थानं श्रेय इति ये पुनः संसाराभिष्वङ्गिणोऽसंयमजीवितमेव बहु मन्यन्ते ते किंभूता भवन्तीत्याह । जीविए इत्यादि । ये तु वयोऽतिक्रमणं नावगच्छन्ति ते इहेत्यस्मिन्नसंयमजीविते प्रमत्ता अभ्युपपन्ना विषयकषायेषु प्रमाद्यन्ति प्रमत्ताश्चाहर्निशं परितप्यमानाः कालाकालसमुत्थायिनः सन्तः सत्त्वोपघातकारिणीः क्रियाः समारभंत इत्याह च । से हंता इत्यादि । स इत्यप्रशस्तगुणमूलस्थानवान्विषयाभिलाषी प्रमत्तः सन् स्थावरजंगमानामसुमतां हंता भवतीत्यत्र च बहुवचनप्रक्रमेऽपि जात्यपेक्षयैकवचनेन निर्देश इति तथा छेत्ता कर्णनासिकादीनां भेत्ता नयनशिरोदशनादीनां लुंपयिता ग्रंथिच्छेदनादिभिर्विलुंपयिता ग्रामघातादिभिरपद्रावयिता प्राणव्यपरोपको विषशस्त्रादिभिरपद्रावयिता वा उत्त्रासको लोष्टप्रक्षेपादिभिः स किमर्थं हननादिकाः क्रियाः करोतीत्याह अकडं इत्यादि । अकृतमिति यदन्येन नानुष्ठितं तदहं करिष्यामीत्येवं मन्यमानोऽर्थोपार्जनाय हननादि क्रियासु प्रवर्त्तते स एवं क्रूरकर्म्मातिशयकारी समुद्रलंघनादिकाः क्रियाः कुर्वन्नप्यलाभोदयादपगतसर्वस्वः किंभूतो भवतीत्याह जेहिं वेत्यादि । वा शब्दो भिन्नक्रमः पक्षांतरद्योतको यैर्मातापितृस्वजनादिभिः सार्द्धं संवसत्यसौ त एव णमिति वाक्यालंकारे एकदेत्यर्थः नाशाद्यापदि शैशवे वा निजा आत्मीया बांधवाः सुहृदो वा पुव्विं पूर्वमेव तं सर्वोपायक्षीणं पोषयंति स चाप्राप्तेष्टमनोरथलाभः संस्तान्निजान् पश्चात्पोषयेदर्थदानादिना सम्मानयेदिति ते च पोषकाः पोष्या वा तवापद्गतस्य न त्राणाय भवंतीत्याह नालं इत्यादि । ते निजा मातापित्रादयस्तवेत्युपदेशविषयान्न उच्यते त्राणयापद्रक्षणार्थं शरणाय निर्भयस्थित्यर्थं नालं न समर्थास्त्वमपि तेषां त्राणं शरणं कर्त्तुं नालमिति तदेवंभावः स्वजनो न त्राणाय भवतीत्येतत्प्रतिपादितं ॥ आचा० टी० ॥ अर्थोऽपि महता क्लेशेनोपात्तो रक्षितश्च न त्राणाय भवतीत्येतत्प्रतिपिपादयिषुराह

उवादितसेसं तेण वा संणिहिसंणिचओ किज्जइ इहमेगेसिं असंजयाणं भोयणाए तओ से एगया रोगसमुप्पाया समुप्पज्जंति जेहिं वा सद्धिं संवसति ते वा णं एगया णियगा तं पुव्विं परिहरंति सो वा से णियए पच्छा परिहरेज्जा णालं ते तव ताणाए सरणाए वा तुमं पि तेसिं णालं ताणाए वा सरणाए वा जाणित्तु दुक्खं पत्तेयं सायं ॥ आचा० ॥

उवादितेति अद् भक्षणे इत्येतस्मादुपपूर्वान्निष्ठाप्रत्ययस्तत्र बहुलं छंदसीतिडागमः उपादितमुपभुक्तं तस्य शेषमुपभुक्तशेषं तेन वा वाशब्दादनुपभुक्तशेषेण वा सन्निधानं सन्निधिस्तस्य सन्निचयस्सन्निधिसन्निचयः अथ वा सम्यग्निधीयते स्थाप्यत उपभोगाय योऽर्थः स संनिधिस्तत्सन्निचयः प्राचुर्यमुपभोग्यद्रव्यनिचय इत्यर्थः स इहास्मिन् संसारे एकेषामसंयतानां संयताभासानां च केषांचिद्भोजनायोपभोगार्थं क्रियते विधीयत इत्यसावपि यदर्थमनुष्ठितोऽतरायोदयाच्चत्संपत्तये न प्रभवतीत्याह तउ सेत्यादि

ततो द्रव्य संनिधिसंनिचयादुत्तरकालमुपभोगावसरे ( से ) तस्य बुभुक्षोरेकदेति द्रव्यक्षेत्रकालभावनिमित्ताविर्भावितवेदनीयकर्म्मोदयात् रोगसमुत्पादाज्ज्वरादिप्रादुर्भावाःसमुत्पद्यंत इत्याविर्भवंति स च तैः कुष्ठराजयक्ष्मादिभिरभिभूतः सन् भग्ननासिको गलत्पाणिपादोऽविच्छेदप्रवृत्तश्वासावाकुलः किंभूतो भवतीत्याह जेहीत्यादि यैर्म्मातापित्रादिभिर्निजैः सार्द्धं संवसति त एव निजा एकदा रोगोत्पत्तिकाले पूर्वमेव तं परिहरंति स वा तान्निजान् पश्चात्परिभवोत्थापितविवेकः परिहरेत्त्यजेत्तन्निरपेक्षः सेदुकवत्स्यादित्यर्थः । ते च स्वजनादयो रोगोत्पत्तिकाले परिहरंतो वा न त्राणाय भवंतीति दर्शयति नालं इत्यादि पूर्ववद् रोगाभिभूतान्तःकरणेन वाऽपगतत्राणे न च किमालम्ब्य सम्यक्करणेन रोगवेदना सोढव्या इति आह जाणित्तु इत्यादि ज्ञात्वा प्रत्येकं प्राणिनां दुःखं तद्विपरीतं शातं वा दीनमानसेन ज्वरादिवेदनोत्पत्तिकाले स्वकृतकर्म्मफलमवश्यमनुभवनीयमिति मत्वा वैक्लव्यं कार्यमित्युक्तं च । सहकडेवर । चेदपि चिंतयत् स्ववशता हि पुनस्तव दुर्लभा बहुतरं च सहिष्यसि कर्म्म हे परवश ! नच तत्र गुणोऽस्ति ते यावच्च श्रोत्रादिविज्ञानैरपरिहीयमानैर्ज्जराजीर्णं न निजाः परिवदंति ॥ आचा० टी० ॥ यावच्चानुकम्पया न पोषयंति रोगाभिभूतं न परिहरन्ति तावदात्मार्थोऽनुष्ठेय इत्येतद्दर्शयति–

अणभिक्कंतं च खलु वयं संपेहाए खणं जाणाहिं पंडिए जाव सोत्तपरिण्णाणेहिं अपरिहायमाणेहिं णेत्तपरिण्णाणेहिं अपरिहायमाणेहिं घाणपरिण्णाणेहिं अपरिहायमाणेहिं रसपरिण्णाणेहिं अपरिहायमाणेहिं फासपरिण्णाणेहिं अपरिहायमाणेहिं इच्चेतेहिं विरूवरूवेहिं परिण्णाणेहिं अपरिहायमाणेहिं आयट्ठं समणुवासेज्जा सित्ति बेमि ॥ आचा० मू० ॥

अणभिक्कंतश्च इत्यादि । च शब्द आधिक्ये खलु शब्दः पुनःशब्दार्थे पूर्वमभिक्रांतं वयः समीक्ष्य मूढभावं व्रजतीति प्रतिपादितमभिक्रांतश्च पुनर्वयः संप्रेक्ष्य आयट्ठं समणुवासेज्ज इत्युत्तरेण संबंधः । आत्मार्थमात्महितं समनुवासयेत् कुर्यादित्यर्थः किमनतिक्रांतवयसैवात्महितमनुष्ठेयमुतान्येनापीत्यपरेणापि लब्धावसरेणात्महितमनुष्ठेयमित्येतद्दर्शयति "खणं जाणाहि पंडिए" क्षणोऽवसरो धर्म्मानुष्ठानस्य स चार्यक्षेत्रसुकुलोत्पत्त्यादिकः परिवादपोषणपरिहारदोषदुष्टानां जराबालभावरोगाणामभावे सति तं क्षणं जानीह्यवगच्छ पंडितात्मज अथ वाऽवसीदन् शिष्यः प्रोत्साह्यते हे अनतिक्रांत यौवनपरिवादादिदोषत्रयास्पृष्टपंडित ! द्रव्यक्षेत्रकालभावभेदभिन्नं क्षणमवसरमेवंभूतं जानीह्यवबुध्यस्व ॥ आचा० टी० ॥

एवंभूतमवसरमवाप्यात्मार्थं समनुवासयेदित्युत्तरेण सम्बन्धः किञ्च ( जाव इत्यादि ) यावदस्य विशरारोः कायापसदस्य श्रोत्रविज्ञानानि जरसा रोगेण वा अपरिहीनानि भवत्येवं नेत्रघ्राणरसनस्पर्शविज्ञानानि न विषयग्रहणस्वभावतया मौढ्यं प्रतिपद्यंत इत्येतैर्विरूपरूपैःपरिज्ञानिरूपतया नानारूपैः प्रज्ञानैः प्रकृष्टैर्ज्ञानैरपरिक्षीयमाणैः सद्भिः किं कुर्यादित्याह आयट्ठं इत्यादि आत्मनोऽर्थं आत्मार्थः स च ज्ञानदर्शनचारित्रात्मकोऽन्यस्त्वनर्थ एवाथ वात्मने हितं प्रयोजनमात्मार्थस्तच्च चारित्रानुष्ठानमथ वा अनंतोऽपर्यवसानान् मोक्ष एव स चासावर्थश्चायतार्थोऽतस्तं यदि वा यतो मोक्षोऽर्थःप्रयोजनं यस्य दर्शनादित्रयस्य तत्तथा समनुवासयेदिति वस निवास इत्यस्माद्धेतुमणिणजताल्लिङ्(सं) सम्यग्यथोक्तानुष्ठानेन अनु पश्चादनभिक्रांतं वयः संप्रेक्ष्य क्षणमवसरं प्रतिपद्य श्रोत्रादिविज्ञानानां वा प्रहीणतामधिगम्य तत आत्मार्थं समनुवासयेदात्मनि विदध्यात् अथ वार्थवशाद्विभक्तिपुरुषविपरिणाम इति कृत्वा तेन चात्मार्थेन ज्ञानदर्शनचारित्रात्मकेनात्मानमनुवासयेद्भावयेद्रंजयेत् आयतार्थं वा मोक्षाख्यं सम्यक् पुनरागमानता त्विति यथोक्तानुष्ठानात्पश्चादात्मना समनुवासयेदिति परिसमाप्तौ ब्रवीमीति सुधर्मस्वामी जंबूस्वामिनमिदमाह यद्भगवता वर्द्धमानस्वामिनार्थतोऽभ्यधायि तदेवाहं सूत्रात्मना वच्मीति ॥ ॥ आचा० टी० ॥

आत [ य ] ट्ठि [ न् ]—आत्मार्थिन्—पुं० आत्मनोर्थः आत्मार्थः स विद्यते यस्य स तथा । आत्मवति, "एवं से भिक्खू आयट्ठी,–॥सूत्र०॥ यो ह्यन्यमपायेभ्यो रक्षति स आत्मार्थ्यात्मवानित्युच्यत इति ॥ सूत्र० ॥

आत [ य ] णाण–आत्मज्ञान–न० आत्मनो ज्ञानम् । यथार्थरूपेणात्मनो ज्ञाने, तज्ज्ञाने, ॥ वाच० ॥

आत [ य ] निट्ठ—आत्मनिष्ठ—त्रि० आत्मनि आत्मज्ञाने निष्ठा यस्य—आत्मज्ञानमात्रान्वेषिणि ब्रह्मनिष्ठे मुमुक्षौ, ॥ वाच० ॥

आत [ य ] निप्फेडय—आत्मनिस्फोटक–पुं० आत्मानं सम्यग्दर्शनादिकेनानुष्ठानेन संसारचारकान्निस्सारके,–॥सूत्र०॥ "आयनिप्फेडए आयाणमेवं पडिसाहरेज्जा" ॥ सूत्र० टी० ॥ आत्मानं सम्यग्दर्शनादिकेनानुष्ठानेन संसारचारकान्निस्सारसतीति ॥ सूत्र० ॥

आत [ य ] णीण—आत्मनीन—त्रि० आत्मने हितम् ख० । १ आत्महिते, २ पुत्रे, ३ श्याले, नाटकप्रसिद्धे विदूषके च । पुं० अजये. ४ प्राणधारके, वलिनि, त्रि० ॥ वाच० ॥

आत(य)ण्ण–आत्मज्ञ–पुं० आत्मज्ञानिनि,

अत्ताण जो जाणति जो य लोगं" ॥ सूत्र० मू० ॥

यो ह्यात्मानं परलोकयायिनं शरीराद्व्यतिरिक्तं सुखदुःखाधारं जानाति यश्चात्महितेषु प्रवर्त्तते स आत्मज्ञो भवति । येन चात्मा यथावस्थितस्वरूपोऽहंप्रत्ययग्राह्योऽभिज्ञातो भवति नैवायं सर्वोपि लोकः प्रवृत्तिनिवृत्तिरूपो विदितो भवति स एव चात्मज्ञोऽस्तीत्यादिक्रियावादं भाषितुमर्हतीति ॥ सूत्र० टी० ॥

आत [ य ] तंत—आत्मतन्त्र—त्रि० आत्मायते, ॥ स्था०॥

आत [ य ] तंतकर —आत्मतन्त्रकर—पुं० आत्मतन्त्रः सन् कार्याणि करोतीत्यात्मतन्त्रः आत्मायत्ते जिनादौ, आत्मतन्त्रं आत्मायत्तं धनं गच्छादि करोतीत्यात्मतन्त्रकरः । आत्मायत्तस्य धनस्य गच्छादिकस्य कारके च ॥ स्था० ॥

आत [ य ] तत्त—आत्मतत्त्व—न० आत्मनस्तत्त्वम् । आत्मनो यथार्थस्वरूपे, चैतन्यरूपे मतभेदे कर्तृत्वादिरूपे. आत्मैवतत्त्वम्परमपदार्थे आत्मरूपे परमपदार्थे च, ॥ वाच० ॥ ज्ञानदर्शनचारित्रात्मके तत्त्वे च । परमार्थदृशां ज्ञानदर्शन-

चारित्रात्मकमात्मतत्त्वं विहायान्यत्सर्वं शरीराद्यपि पराक्य-मेवेति ॥ आचा० ॥

आत [ य ] तत्तप्पगास—आत्मतत्त्वप्रकाश—पुं० आत्मधर्मप्राग्भावे,—"गुरुत्वं स्वस्य नोदेति शिक्षा स्वात्म्येव यावता । आत्मतत्त्वप्रकाशो न तावत्सेव्यो गुरूत्तमः ॥ ॥ अष्ट० ॥ वाच० ॥

आत [ य ] तरग—आत्मतरक—पुं० आत्मानं केवलं तारयतीत्यात्मतरः स्वार्थिककप्रत्ययविधानात् आत्मतरकः। प्रायश्चित्तार्हे पुरुषविशेषे,-ये पुनस्तपोवलिष्ठा वैयावृत्त्यलब्धिहीनास्ते तप एव यथोक्तरूपं कुर्वन्ति न वैयावृत्त्यमाचार्यादीनामित्यात्मानं केवलं तारयन्तीत्यात्मतराः स्वार्थिककप्रत्ययविधानात् आत्मतरका इति ॥ व्य० ॥

आत [ य ] तुला—आत्मतुला—स्त्री० आत्मौपम्ये, ॥ सूत्र० ॥ आत्मतुल्यतायाम्,॥ सूत्र० ॥

कम्हा णं तुब्भे पाणिं पडिसाहरह पाणिनो डहिज्जा दड्ढे किं भविस्सइ दुक्खं ति मन्नमाणा पाडिसाहरह एस तुला एस प्पमाणे एस समोसरणे ॥ सूत्र० ॥

अवश्यमग्निदाहभयान्न कश्चिदग्न्यभिमुखं पाणिं ददातीत्येतत्परोऽयं दृष्टांतः । पाणिना दग्धेनापि किं भवतां भविष्यतीति दुःखमिति चेद्यद्येवं भवंतो दाहापादितदुःखभीरवः सुखलिप्सवस्तदेवं सति सर्वेऽपि जंतवः संसारोदरविवरवर्तिन एवंभूता एवेत्येवमात्मतुलयाऽऽत्मौपम्येन यथा मम नाभिमतं दुःखमित्येवं सर्वजंतूनामित्यवगम्याहिंसैव प्राधान्येनाश्रयणीया तदेतत्प्रमाणं एषा युक्तिः । आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ सूत्र० ॥

एवं सहिते हियासए आयतुलं पाणेहिं संजए ॥ सूत्र० ॥

एवमनंतरोक्तरीत्या परिवर्त्तमानः सह हितेन वर्तत इति सहितो ज्ञानादियुक्तो वा संयतः प्रव्रजितोऽपरप्राणिभिः सुखार्थिभिरात्मतुलामात्मतुल्यतां दुःखाप्रियत्वसुखप्रियत्वरूपामधिकं पश्येत् आत्मतुल्यान् सर्वानपि प्राणिनः पालयेदिति ॥ सूत्र० ॥ "आयतुले पयासु" प्रजायंत इति प्रजाः पृथिव्यादयो जंतवस्तास्वात्मतुल्य आत्मवत्सर्वप्राणिनः पश्यतीत्यर्थः एवंभूत एव साधुर्भवतीति तथा चोक्तं—

जह मम ण पियं दुःखं जाणिय एमव सव्वजीवाणं ॥
न हणइ ण हणावेइ समं मणइ तेण सो समणो ॥ सूत्र० ॥

डहरे य पाणे वुड्ढे य पाणे ते आतओ पासइ सव्वलोए" ये केचन डहरंत्ति लघवः कुंथ्वादयः सूक्ष्मा वा ते सर्वेऽपि प्राणाः प्राणिनो ये च वृद्धा बादरशरीरिणस्तान्सर्वानप्यात्मतुल्यान् आत्मवत्पश्यति सर्वास्मिन्नपि लोके यावत्प्रमाणा मम तावदेव कुंथोरपि यथा वा मम दुःखमनभिमतमेवं सर्वलोकस्यापि सर्वेषामपि प्राणिनां दुःखमुत्पद्यते दुःखादुद्विजंते ॥ सूत्र० ॥

आत ( य ) त—आत्मत्व—न० आत्मनो भावे, आत्मधर्मे वाच०॥

अह पास तेहिं कुलेहिं आयताए जाया ॥ सूत्र० मू० ॥

अथेति वाक्योपन्यासार्थे पश्य त्वं तेपूच्चावचेषु कुलेष्वात्मत्वाय आत्मीयकर्मानुभवनाय जाता इति ॥ आचा० ॥

अशेषकर्मकलंकरहितत्वे मोक्षाभावे, संयमभावे च

आरंभं तिरियं कट्टु आतत्ताए परिव्वए ॥ सूत्र० ॥

आरंभं सावद्यानुष्ठानरूपं तिर्यक्कृत्वा ऽपहस्तयित्वाऽऽत्मनो भाव आत्मत्वमशेषकर्मकलंकरहितत्वं तस्मै आत्मत्वाय॥ यदि वा आत्मा मोक्षः संयमो वा तद्भावस्तस्मै तदर्थं परि समंताद् व्रजेत् संयमानुष्ठानक्रियायां दत्तावधानो भवेदित्यर्थः ॥ सूत्र० ॥

आत ( य ) दंड—आत्मदंड—पुं० आत्मानं दण्डयतीत्यात्मदण्डः । आत्मन उपघातके, वीयाइ अस्संजय आयदण्डे ॥ सूत्र० ॥ असंयतो गृहस्थः प्रव्रजितो वा तत्कर्मकारी गृहस्थ एव स च हरितच्छेदं विधायात्मानं दण्डयतीत्यात्मदण्डः स हि परमार्थतः परोपघातेनात्मानमेवोपहन्तीति ॥ सूत्र० ॥ एतेण काएण य आयदण्डे, ॥ सूत्र० ॥ टी०॥ यथैभिः कार्यैः समारभ्यमाणैः पीड्यमानैरात्मा दण्ड्यते तत्समारम्भादात्मदण्डो भवतीत्यर्थः ॥ सूत्र० ॥ णिस्सिय आयदण्डा, आत्मैव दण्डो दण्डयतीति दण्डो येषां ते भवंत्यात्मदण्डा असदाचारप्रवृत्ताः ॥ सूत्र० ॥

आत [ य ] दण्डसमायार—आत्मदण्डसमाचार—त्रि० आत्मा दण्ड्यते हितात् भ्रश्यते येन स आत्मदण्डः समाचारोऽनुष्ठानं येषामनार्य्याणान्ते। आत्महितानुष्ठातरि ॥ सूत्र० ॥ आयदण्डसमायारे ॥ सूत्र० ॥

आत [ य ] दरिस—आत्मदर्श—पुं० आत्मा देहः दृश्यतेऽस्मिन् आधारे घञ् । १ दर्पणे, आदर्शे, हेम० । घञ् ६ त० आत्मनो दर्शने, आत्मसाक्षात्कारे, ॥ वाच० ॥

आत ( य ) द्रोहि [ न् ] आत्मद्रोहिन्—त्रि० आत्मने द्रुह्यति—द्रुह-णिनि । आत्मघातिनि, ॥ वाच० ॥

आत [ य ] पएस—आत्मप्रदेश—पुं० जीवांशे, ॥ पंचा० ॥

आत [ य ] परिणइ—आत्मपरिणति—स्त्री० आत्मनो जीवस्य परिणतिरात्मपरिणतिः जीवस्यानुष्ठानविशेषसम्पादके परिणामविशेषे,। "विषयप्रतिभासं चात्मपरिणतिमत्तथा-तत्त्वसंवेदनं चैव ज्ञानमाहुर्महर्षयः ॥ १ ॥ हीर० ॥ आत्मनो जीवस्य परणतिरनुष्ठानविशेषसंपाद्यः परिणामविशेषः सैव ज्ञेयतया यस्मिन्नस्ति ज्ञानेन पुनस्तद्रूपप्रवृत्तिनिवृत्ती अपि तदात्मपरिणतिमत् ॥ हीर० ॥

विषयप्रतिभासाख्यं आत्मपरिणतिमत्तथा ।
तत्त्वसंवेदनं चैव त्रिधा ज्ञानं प्रकीर्तितम् ॥ द्वा० मू० ॥

तथात्मनः स्वस्य परिणामोऽर्थानर्थप्रतिभासात्मा विद्यते यत्र तदात्मनो जीवस्य परिणामोऽनुष्ठानविशेषसंपाद्यो विद्यते यत्रेति नये सम्यक्त्वलाभप्रयोज्यवस्तुविषयतावत्त्वमर्थो लभ्यते ॥ द्वा० टी०॥

आत [ य ]पसंसा—आत्मप्रसंसा—स्त्री० आत्मस्तुतौ,॥अष्ट०॥

आत्मप्रशंसा च न कार्या तथा चाष्टके—

गुणैर्यदि न पूर्णोऽसि कृतमात्मप्रशंसया ।
गुणैरेवाऽसि पूर्णश्चेत्कृतमात्मप्रशंसया ॥ १ ॥
श्रेयोद्रुमस्य मूलानि सोत्कर्षात्मवाहतः ।
पुण्यानि प्रकटीकुर्वन्फलं किं समवाप्स्यासि ॥ २ ॥

आलम्बिता हिताय स्युः परैःस्वगुणरश्मयः ।
अहो स्वयं गृहीतास्तु पातयन्ति भवोदधौ ॥ ३ ॥
उच्चत्वदृष्टिदोषोत्थं स्वोत्कर्षज्वरशान्तिकम् ॥
पूर्वपुरुषसिंहेभ्यो भृशं नीचत्वभावनम् ॥ ४ ॥
शरीररूपलावण्यग्रामारामधनादि च ॥
उत्कर्षःपरपर्यायैश्चिदानन्दघनस्य कः ॥ ५ ॥
शुद्धाः प्रत्यात्मसाम्येन पर्याया परिभाविताः ॥
अशुद्धाश्चाऽपकृष्टत्वान्नोत्कर्षाय महामुने ॥ ६ ॥
क्षोभं गच्छन्समुद्रोऽपि स्वोत्कर्षपवनेरितः ॥
गुणौघान् बुद्बुदीकृत्य विनाशयसि किं मुधा ॥ ७ ॥
निरपेक्षाऽनवच्छिन्नानन्तचिन्मात्रमूर्तयः ॥
योगिनो गलितोत्कर्षापकर्षानल्पकल्पना ॥ ८ ॥
॥ आत्मप्रशंसनाष्टकम् ॥
( तथाच सूत्रकृताङ्गे )
अहाहु से आयरियाण सयं से जो लावएज्जा असणस्स हेऊ ॥ सूत्र० ॥
अथासावाचार्यगुणानां वा शतांशे वर्तत इति यो ह्यन्नस्य हेतुं भोजननिमित्तमपरवस्त्रादिनिमित्तं वा आत्मगुणान् परेणालापयेद्भाणयेत् असावप्यार्यगुणानां सहस्रांशे वर्त्तते । किमंग पुनर्यः स्वत एवाऽऽत्मप्रशंसां विदधातीति ॥ सूत्र० ॥

आत [ य ] प्पओग–आत्मप्रयोग–पुं० आत्मव्यापारे,आयप्पओगेणं उववज्जंति णो परप्पओगेणं उववज्जंति ॥ भ० ॥

आत [ य ] प्पओगणिव्वत्तिय—आत्मप्रयोगनिर्वर्तित—त्रि० आत्मनः प्रयोगेण मनःप्रभृतिव्यापारेण निर्वर्त्तितं निष्पादितं यस्तत्तथा । आत्मनो मनःप्रभृतिव्यापारेण निष्पादिते, ॥ भ० ॥

आत [ य ] प्पभ–आत्मप्रभ–त्रि० आत्मना स्वयमितरनैरपेक्ष्येण प्रभा यस्य । स्वयंप्रकाशमाने, ॥ वाच० ॥

आत [ य ] प्पमाण—आत्मप्रमाण—त्रि० सार्द्धहस्तत्रयप्रमाणे, ॥ प्रव० ॥

आत [ य ] प्पवाय—आत्मप्रवाद—न० आत्मानं जीवमनेकधा नयमतभेदेन यत्प्रवदति तदात्मप्रवादम् ॥ नं० ॥ यत्रात्मा जीवोऽनेकनयैः प्रोच्यते तदात्मप्रवादमिति ॥ सम० ॥ आत्माऽनेकधा यत्र नयदर्शनैर्वर्ण्यते तदात्मप्रवादम्। पूर्वगतश्रुतविशेषे, ॥ सम० ॥ तस्य पदप्रमाणं षड्विंशतिपदकोट्य इति ॥ नं० ॥ सम० ॥
आयप्पवायपुव्वस्स णं सोलसवत्थू पण्णत्ता ॥ नं० ॥
आत्मप्रवादपूर्वस्य सप्तमस्य ॥ सम० ॥ "आयप्पवायपुव्वं अहिज्जमाणस्स तीसगुत्तस्स । नयमयमयाणमाणस्स दिट्ठिमोहो समुप्पन्नो" आत्मप्रवादनामकं पूर्वमधीयानस्येति ॥ विशे० ॥
आयप्पवायपुव्वा निज्जूढा होइ धम्मपन्नत्ती
इह आत्मप्रवादपूर्वं यत्रात्मनः संसारिमुक्ताद्यनेकभेदभिन्नस्य प्रवदनमिति तस्मान्निर्यूढाभवति धर्मप्रज्ञप्तिः षड्जीवनिकेत्यर्थः ॥ दश० ॥

आत [ य ] प्पियसंबंधणसंयोग—आत्मार्पितसम्बन्धनसंयोग—पुं०—संयोगभेदे, ( तद्वक्तव्यतासंयोगशब्दे ) ॥ ॥ उत्त० ॥

आतव—आतप—पुं० आ समन्तात्तपति संतापयति जगदित्यातपः । उत्त० आ–तप० घ० उद्योते, ॥ कर्म०॥ स चोद्योतो यद्यपि लोके भेदेन प्रसिद्धो यथा सूर्य्यगत आतपः चन्द्रगतः प्रकाश इति तथाप्यातपशब्दः चन्द्रप्रभायामपि वर्त्तते यदुक्तम् "चन्द्रिका कौमुदी ज्योत्स्ना तथा चन्द्रातपः स्मृत" इति॥सू०प्र०॥चं०॥आतवाइ वा आतप इति वा।आतप आदित्यस्येति ॥स्था०॥घर्मे, उत्त०उष्णो न परितापना।व्य०॥ आतप्यते पीड्यते शरीरमनेनेत्यातपः । तृणपाषाणादौ,"आयवस्स निवाएणं अउला हवइ वेयणा" ॥उत्त०॥ निविड़किरणे, रौद्रे च" ३ प्रकाशे, ॥वाच० ॥ स्वनामख्याते अहोरात्रभवे चतुर्विंशतितमे मुहूर्ते च ॥ सम० ॥

आतवणाम(न्)–आतपनामन्–न० नामकर्मभेदे, यदुदयादातपवान् भवति।पृथिवीकाये, आदित्यमण्डलादिवत् ॥श्र०॥यदुदयाज्जन्तुशरीराणि स्वरूपेणानुष्णान्यपि उष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनाम तद्विपाकश्च भानुमण्डलगतभूकायिकेष्वेव न वह्नौ प्रवचनप्रतिषेधात् तत्रोष्णत्वमुष्णस्पर्शनामोदयात् उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वमिति ॥ पं० सं० ॥ यदुदयवशाज्जन्तुशरीराणि भानुमण्डलगतपृथ्वीकायिकरूपाणि स्वरूपेणानुष्णान्यपि उष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनामोदयश्च वह्निशरीरे न भवति सूत्रे प्रतिषेधात् । तत्रोष्णत्वमुष्णस्पर्शनामोदयात् उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वमिति ॥ कर्म० ॥
रविबिंबे उज्जुयंगं तावजुयं आयवाउ न उ जलणे ।
जमुसिणकासस्स तहिं लोहियवण्णस्स उदउ त्ति ४४
आतपादातपनामोदयाज्जीवानामंगं शरीरं तापयुतं स्वयमनुष्णमप्युष्णप्रकाशयुक्तं भवति आतपस्य पुनरुदयो रविबिंबे एव । तु शब्द एवकारार्थः । भानुमण्डलादिपार्थिवशरीरेष्वेव न पुनर्ज्वलने हुतभुजि । अत्र युक्तिमाह–यद्यस्मात्कारणात् तत्र ज्वलने ज्वलनजन्तुशरीरे तेजस्कायशरीरे इत्यर्थः उष्णस्पर्शस्योदयस्तथा लोहितवर्णस्योदय इति । तेजस्कायशरीराण्येवोष्णस्पर्शोदयेनोष्णानि लोहितवर्णनामोदयात्तु प्रकाशयुक्तानि भवंति न त्वातपोदयादिति भावः । तदुदयाज्जन्तुशरीराण्यात्मनानुष्णान्यप्युष्णप्रकाशरूपमातपं कुर्वन्ति तदातपनमित्यर्थः ॥ कर्म० ॥

आतवणिवाय–आतपनिपात–पुं० आतपस्य घर्मस्य नितरां पातो निपातः । घर्मस्य नितराम्पाते, ॥ उत्त० ॥
आयवस्स निवाएणं आउला हवइ वेयणा, ॥उत्त०॥
आतपस्य निपातेन घर्मस्य संयोगेन अतुला वेदना भवति तापशीतवर्षावातादिपीडास्माभिः सोढुं न शक्यते अथ वा आतप्यते पीड्यते शरीरमनेनेत्यातपः तृणपाषाणादिरप्युच्यते तस्य संगेनास्मच्छरीरे महती वेदना भवति ॥ ॥ उत्त० ॥ ङ० ॥

आत [ य ] वतत्त–आतपतप्त–त्रि० घर्मतप्ते, "आतवतत्ते वहे अहवे" नि०चू० । "आयवतत्तं अप्पोदगं अवहं घेप्पंति असइ आयवतत्तं वहं घिप्पतीति" ॥ नि०चू० ॥

आत [ य ] वल–आत्मवल–न० आत्मनो वलं शक्त्युपचय आत्मवलम् । आत्मनः शक्त्युपचये, ॥ आचा० ॥

आत [ य ] वव ( त् ) आतपवत्–त्रि० आतपोऽस्त्यत्र मतुप् मस्य वः । आतपयुक्ते, "शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥वाच०॥ अहोरात्रभवे स्वनामख्याते चतुर्विंशे मुहूर्ते, ॥ जं० ॥कल्प०॥

आत ( य ) वाल–आत्मपाल–त्रि० आत्मानमेव पालयतीत्यात्मपालः। आत्मनः पालके, ज्ञा० ॥

आतवालोय–आतपालोक–पुं० हुतवहतापदर्शने, "आतवालोयमहंततुंवइ य पुरणाकण्णो,, ॥ ज्ञा० ॥

आतवीय–आतपीय–त्रि० आतपस्य सन्निकृष्टदेशादि उत्करा०छ० आतपसन्निकृष्टदेशादौ, ॥ वाच० ॥

आत ( य ) वोध–आत्मवोध–पुं० आत्मज्ञाने, "आत्मबोधो नवः पाशो देहगेहधनादिकम् ॥ यः क्षिप्तोऽप्यात्मना तेषु स्वस्य बंधाय जायते" ॥ ६ ॥ भो भव्या वः युष्माकं आत्मबोध आत्मज्ञानं न पाशः न वंधहेतुः तेषु देहगृहधनादिषु यः आत्मना क्षिप्तः स पाशः रागपरिणामः स्वस्य आत्मनः एव बंधाय जायते इत्यनेन देहगृहादिषु यः रक्तः स सर्वः भवपाशैर्बध्नाति स्वस्य वंधहेतुः इत्यनेन परभवा रागादयः आत्मनो वंधवृद्धिहेतवः ॥ अष्ट० ॥

आत ( य ) भाव–आत्मभाव–पुं० अनादिभवाभ्यस्ते मिथ्यात्वादिके,–विषयगृध्नुतायाम्, "विणइज्जओ सव्वह आयभावं" सूत्र० । आत्मभावोऽनादिभवाभ्यस्तो मिथ्यात्वादिकस्तमपनयेत् यदिवाऽऽत्मभावो विषयगृध्नुताऽतस्तमपनयेदिति–" ॥ सूत्र० ॥ स्वाभिप्राये च ॥ भ० ॥

आत ( य ) भाववंकणया–आत्मभाववंकनता–स्त्री० आत्मभावस्याऽप्रसस्तस्य वंकनता वक्रीकरणं प्रशस्ततत्त्वोपदर्शनतात्मभाववंकनता। मायाप्रत्ययिकक्रियाभेदे, वंकनानाअबहुत्वविवक्षायाम्भावप्रत्ययो न विरुद्धः सा च क्रियाव्यापारत्वात्० ॥ स्था० ॥ अप्पणो चियं भावं गूहति नियडिमंतो उज्जगभावं दरिसेइ संजमादिसिढिलोवाकरणफलाजोडोवंदरिसेइ' ॥ आव० ॥

आत ( या ) भाववत्तव्वया–आत्मभाववक्तव्यता–स्त्री० आत्मभाव एव स्वाभिप्राय एव न वस्तुतत्त्वं वक्तव्यो वाच्योऽभिमानाद् येषान्ते आत्मभाववक्तव्यास्तेषां भाव आत्मभाववक्तव्यता। अहंमानितायाम्, ॥भ०॥ "सव्वेणं एस अट्ठे नो चेव णं आयभाववत्तव्वयाए" ॥ भ० ॥ नैवात्मभाववक्तव्यतयाऽयमर्थः न वयमहंमानितयैव ब्रूमोऽपि तु परमार्थ एवायमेवंविध इति भावना ॥ भ० ॥

आत ( य ) भू–आत्मभू–पुं० आत्मनो मनसो देहाद्वा भवति–भू–क्विप्–६-त-मनोभवे, कामे, देहभवे पुत्रे, कन्यायाम्, ॥ वाच० ॥ "नार्य्याः कुत्राऽपि कस्याश्चिद्दारकौ द्वौ बभूवतुः। सपत्नीतनुभूरेको द्वितीयश्चात्मभूर्द्वयोः ॥ आ० क० ॥ बुद्धौ च । स्त्री० आत्मनैव भवति भू–क्विप् शिवे, विष्णौ, च ॥ वाच० ॥

आत ( य ) रक्ख–आत्मरक्ष–त्रि० अङ्गरक्षके, ॥ औप०॥ आत्मानं रागद्वेषादेरकृत्योद्भवकूपाद्वा रक्षन्तीत्यात्मरक्षाः । रागद्वेषादेरकृत्याच्चात्मनोरक्षके, ( ते च स्थानाङ्गे दर्शितास्तद्यथा )

तओ आयरक्खा पन्नत्ता तं० धम्मियाए पडिचोयणाए पडिचोएत्ता भवइ तुसिणीए वा सिया उट्ठित्तु वा आयाए-गंतमवक्कमेज्जा ॥ स्था० ठा० ३ उ० ३ ॥

धम्मियाए पडिचोयणाए त्ति ॥ आत्मना एवं धार्म्मिकोपदेशेन नेदं भवादृशां विधातुमुचितमित्यादिना प्रेरयिता उपदेष्टा भवतीति अनुकूलेतरोपसर्गकारिणस्ततोऽसावुपसर्गकरणान्निवर्तते ततोऽकृत्या सेवा न भवतीत्यत आत्मा रक्षितो भवतीति १ तूष्णीको वा वाचंयम उपेक्षक इत्यर्थः स्यादिति प्रेरणाया अविषये उपेक्षणासामर्थ्ये च ततः स्थानादुत्थाय ॥ ( आयत्ति ) ॥ आत्मना एकांतं विजनं अंतं भूमिभागमवक्रामेत् गच्छेत् ॥ टी० ठा० ३ उ० ३ ॥

विमानाधिपतेः सूर्याभस्यदेवस्यात्मानं रक्षयन्तीत्यात्मरक्षाः कर्मणोऽणित्यण् प्रत्ययः ॥राज०॥ देवविशेषे, ( तथा च राजप्रश्नीये ) सूर्य्याभस्य वर्णकमधिकृत्य "सोलसहिं आयरक्खदेवसाहस्सीणं" ॥ राज० ॥

षोडशभिरात्मरक्षदेवसहस्रैरिति विमानाधिपतेः सूर्याभस्य देवस्यात्मानं रक्षयन्तीत्यात्मरक्षाः कर्मणोऽणित्यण् प्रत्ययः । ते च शिरस्त्राणकल्पा यथा हि शिरस्त्राणं शिरस्याविद्धप्राणरक्षकं भवति तथा तेऽप्यात्मरक्षका गृहीतधनुर्दण्डादिप्रहरणाः समन्ततः सप्तानीकाधिपतेरग्रतश्चावस्थायिनो विमानाधिपतेः सूर्याभस्य देवस्य प्राणरक्षकाः।देवानामपायाभावात् तेषां तथाग्रहणपुरस्सरमवस्थानं निरर्थकमिति चेतराणां स्थितिमात्रपरिपालनहेतुत्वात् प्रीतिप्रकर्षहेतुत्वाच्च तथा हि–ते समन्ततः सर्वासु दिक्षु गृहीतप्रहरणा ऊर्ध्वस्थिता अवतिष्ठमानाः स्वनायकशरीररक्षणपरायणाः स्वनायकैकनिपतणदृष्टयः परेषामसहमानानां क्षोभमुत्पादयन्ति जनयन्ति स्वनायकस्य परां प्रीतिमिति ॥ राज० ॥
( तथा च भगवत्याम् )

चमरस्स णं भंते ! असुरिंदस्स असुररण्णो कइ आयरक्खदेवसहस्सीओ ? गोयमा ! चत्तारि चउसट्ठीओ आयरक्ख देवसाहस्सीओ पण्णत्ताओ एए णं आयरक्खवण्णओ । एवं सव्वेसिं इंदाणं जस्स जत्तिया आयरक्खा ते भाणियव्वा ॥ भ० ॥ मू० ३ श० ६ उ० ॥

आत्मरक्षदेवानां वर्णको वाच्यः स चायं( सन्नद्धबद्धवम्मियकवया उप्पीलियसरासणपट्टिया पिणद्धगेवेज्जा वद्ध आविद्धविमलवरचिंधपट्टा गहियाउहपहरणातिणयाइं तिसंधियाइं वइरामयकोडीणि धणूइं अभिगिज्झपयओ परमाइयकंडकलावा नीलपाणिणो पीयपाणिणो रत्तपाणिणो एवं चारुचावचम्मदंडखग्गपासपाणिणो नीलपीयरत्त चारुचावचम्मदंडखग्गपासवरधरा आयरक्खा रक्खोवगया गुत्तागुत्तपालिया जुत्ताजुत्तपालिया पत्तेयं २ समयओ विणयओ किंकरभूया इव चिट्ठंति त्ति, अस्यायमर्थः संनद्धा सन्नहनिकया कृतसन्नाहाः बद्धाः कशाबन्धनतः वर्म्मितश्च वर्म्मीकृतः शरीरारोपणतः कवचः कंकटो येस्ते तथा ततः

सन्नद्धशब्देन कर्मधारयः। तथा उत्पीडिता प्रत्यञ्चाऽरोपणेन शरासनपट्टिका धनुर्यष्टिर्यैस्ते तथा अथ वा उत्पीडिता वाहौ वद्धा शरासनपट्टिका धनुर्यष्टिर्यैस्ते तथा । पिनद्धं परिहितं ग्रैवेयकं ग्रीवाभरणं यैस्ते तथा तथा बद्धो-ग्रन्थिदानेन आविद्धश्च शिरस्यारोपणेन विमलो वरश्च चिन्हपट्टो योधतासूचको नेत्रादिवस्त्ररूपः सौवर्णो वा पट्टो यैस्ते तथा। तथा गृहीतान्यायुधानि प्रहरणाय यैस्ते तथा, अथ वा गृहीतान्यायुधानि क्षेप्यास्त्राणि प्रहरणानि च यैस्ते तथा। तथा त्रिनतानि मध्यपार्श्वद्वयलक्षणस्थानत्रयेऽवनतानि त्रिसन्धितानि त्रिषु स्थानेषु कृतसन्धिकानि नैकांगिकानीत्यर्थः । वज्रमयकोटीनि धनूंष्यभिगृह्य वदतः पदे मुष्टिस्थाने तिष्ठन्तीति सम्बन्धः। परिमात्रिकः सर्वतो मात्रावान् काण्डकलापो येषां ते तथा। नीलपाणय इत्यादिषु नीलादिवर्णपुङ्खत्वान्नीलादयो वर्णभेदाः सम्भाव्यन्ते। चारुचापपाणय इत्यत्र च चापं धनुरेवानारोपितज्यमतो न पुनरुक्तता, चर्मपाणय इत्यत्र चर्मशब्देन स्फुरक उच्यते , दण्डादयः प्रतीता उक्तमेवार्थं संग्रहणेनाह ( नीलपीएत्यादि ) अथ वा नीलादीन् सर्वानेव युगपत्केचिद्धारयन्ति देवशक्तेरिति दर्शयन्नाह (नीलपीएत्यादि) तचात्मरक्षा न संज्ञामात्रेणैवेत्याह-आत्मरक्षाःस्वाम्यात्मरक्षा इत्यर्थःते एव विशेष्यन्ते रक्षोपगता रक्षामुपगताःसततं प्रयुक्तरक्षा इत्यर्थः । एतदेव कथमित्याह—गुप्ताः अभेदवृत्तयस्तथा गुप्तपालीकास्तदन्यतो व्यावृत्तिमनोवृत्तिकमण्डलीका, युक्ताः परस्परसम्बद्धाः, युक्तपालीकाः निरन्तरमण्डलीकाः, प्रत्येकमेकैकशः समयतः पदातिसमाचारेण विनयतो विनयेन किंकरभूता इव प्रेष्यत्वं प्राप्ता इवेति,अयं च पुस्तकान्तरे साक्षाद् दृश्यत एवेति ॥ ( एवं सव्वेसिमिंदाणं ति) एवमिति, चरमवत्सर्वेषामिन्द्राणामात्मरक्षा वाच्यास्ते चार्थत एव सर्वेषामिन्द्राणां सामानिकचतुर्गुणा आत्मरक्षास्तत्र चतुःषष्टिसहस्राणि चमरस्येन्द्रसामानिकानां वलेस्तु षष्टि,ः शेषभवनपतीन्द्राणां प्रत्येकं षट् षट् सहस्राणि, शक्रस्य चतुरशीतिः, सनत्कुमारस्य द्विसप्तति,ः माहेन्द्रस्य सप्ततिः, ब्रह्मणः षष्टिः, लान्तकस्य पञ्चाशत्, शुक्रस्य चत्वारिंशत्, सहस्रारस्य त्रिंशत्, प्राणतस्य विंशतिः, अच्युतस्य दशसहस्राणि समानिकानामिति यदाह-

"चउसट्ठी सट्ठी खलु छच्च सहस्सा उ असुरवज्जाणं ।
समाणिया उ एए चउग्गुणा आयरक्खाउ" ॥ १ ॥
"चउरासीइ असीई बावत्तरि सत्तरी य सट्ठी य
पएणा चत्तालीसा तीसा वीसा दससहस्सत्ति" ॥ २॥

भ० ॥टी०॥ ३ श० ६ उ० ॥

आत ( य ) रक्खा—आत्मरक्षा—स्त्री० आत्मन एव रक्षा यस्याः इन्द्रवारूणीवृक्षे, ६ त० आत्मनो रक्षा शास्त्रोक्ते विघ्नकर्तृभ्य आत्मनो रक्षणे च ॥ वाच० ॥

आत ( य ) रक्खि ( न् ) आत्मरक्षिन्—-त्रि० आत्मानं रक्षत्यपायेभ्यः कुगतिगमनादिभ्य इत्येवंशील आत्मरक्षी । कुगतिगमनादिभ्य आत्मनो रक्षणशीले, ॥ उत्त० अप्पाणरक्खी चरमप्पमत्तो, ॥ उत्त० ६ ॥

आत ( य ) रक्खिय—आत्मरक्षित—त्रि०आत्माऽपायेभ्यो दुर्गतिगमनादिभ्यो रक्षितो येन स तथा। दुर्गतिगमनहेतुनिबन्धनात्सावद्यानुष्ठानान्निवृत्ते, ॥ सूत्र० ॥ आयपरक्कमे आयरक्खिए ॥ सूत्र० ॥ दुर्गतिगमनहेतुनिबन्धनस्य सावद्यानुष्ठानस्य निवृत्तत्वादिति ॥ सूत्र० ॥ "अरइं पिट्ठओ किच्चा विरए आयरक्खिए" '। उत्त० ॥ आत्मरक्षितो दुर्गतिहेतोरपध्यानादेरनेनेत्यात्मरक्षितः । आहिताग्न्यादिषु दर्शनात् क्तान्तस्य परनिपातः ॥ उत्त० ॥

आत ( य ) वं—आत्मवत्—त्रि० आत्मा ज्ञानादिकोऽस्यास्तीत्यात्मवान्। ज्ञानादिमति, ॥ आचा० ॥

आत्मा चित्तं वश्यतयाऽस्त्यस्य मतुप् मस्य वः स्त्रियां ङीप् । १ वश्यचित्ते, २ निर्विकारचित्ते च आत्मा प्रकाश्यतया विद्यतेऽस्य आत्मप्रशाशके, शास्त्रे आत्मना तुल्यक्रियावति, ४ आत्मतुल्यक्रियायाम, अव्य० ॥ वाच० ॥

आत ( य ) वस—आत्मवश—-त्रि० आत्मनो वश आयत्तता यत्र। आत्माधीने, "यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः। सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥ मनु० वाच०॥

सव्वत्थेसु विमुत्ता साहू सव्वत्थ होइ अप्पवसो

सर्वार्थेषु विमुक्तः सर्वपदार्थेषु ममतारहितः साधुर्मोक्षसाधकः सर्वत्रात्मवशो भवति न कुत्रापि परवश इति ॥ग० ॥

आत ( य ) वस्स—-आत्मवश्य—-त्रि० आत्मनो वश्यो, यस्य। वशीभूतमनस्के, आत्मनो वश्ये च ॥ वाच० ॥

आत ( य ) वायपत्त—आत्मवादप्राप्त—त्रि० आत्मन उपयोगलक्षणस्य जीवस्यासंख्येयप्रदेशात्मकस्य संकोचविकाशभाजः स्वकृतफलभुजः प्रत्येकसाधारणतया व्यवस्थितस्य द्रव्यपर्य्यायतया नित्यानित्याद्यनन्तधर्मात्मकस्य वा वाद आत्मवादस्तं प्राप्त आत्मवादप्राप्तः। सम्यग् यथावस्थितात्मस्वतत्त्ववेदिनि, सूत्र० ॥ "आयवायपत्ते विऊ" ॥ सूत्र० ॥

आत ( य ) वि [ द् ] आत्मविद्—त्रि०आत्मानं श्वभ्रादिपतनरक्षणद्वारेण वेत्तीत्यात्मवित्। आत्मनो रक्षके, ॥ आचा० ॥ आत्मानं यथार्थरूपेण वेत्ति—विद्—क्विप्—६ त० आत्मस्वरूपज्ञे, आत्मानं स्वपक्षं वेत्ति क्विप् । २ । स्वपक्षज्ञातरि, ॥ वाच० ॥

आत ( य ) विज्जा—आत्मविद्या—स्त्री० आत्मनो विद्या आत्मनो यथास्वरूपावेदकविद्यायाम तद्विद्यासाधने शास्त्रे च ॥ वाच० ॥

आत( य ) वीरिय—आत्मवीर्य्य—न० वीर्यभेदे,"आयविरियं दुविहं विओगायवीरियं च अविओगायवीरियं च । विओगायवीरियं जहा संसारावत्थस्स जीवस्स मणमादिजोगा वियोगजा भवंति अविओगायवीरियं पुण उवओगो असंखेज्जा पएस त्तणं" ॥ नि० चू० ॥

आत ( य ) विसोहि—आत्मविशुद्धि—स्त्री० उत्कालिकश्रुतविशेषे, आत्मनो जीवस्यालोचना प्रायश्चित्तप्रतिपत्तिप्रभृतिप्रकारेण विशुद्धिः कर्मविगमनलक्षणा प्रतिपाद्यते यस्यां ग्रंथपद्धतौ सा आत्मविशुद्धिरिति ॥ नं० ॥ आत्मनो जीवस्यालोचनादिप्रायश्चित्तप्रतिपत्त्यादिप्रकारेण विशुद्धिः कर्म

विगमनलक्षणा प्रतिपाद्यते यत्र तदध्ययनमात्मविशुद्धिरिति ॥ पा० ॥

आत ( य ) वेयावच्चकर—आत्मवैयावृत्त्यकर—त्रि० अलसे, विसम्भोगिके च "आयवेयावच्चकरे नाममेगे णो परवेयावच्चकरे" ॥ स्था० ॥ आत्मवेयावृत्त्यकरोऽलसो विसम्भोगिको वेति ॥ स्था० ॥

आतसंचेयणिज्ज—आत्मसंचेतनीय—पुं० आत्मना संचेत्यंते-क्रियंत इत्यात्मसंचेतनीयाः ॥ स्था० ॥ उपसर्गभेदे ( अस्य भेदोहरणादि वहुवक्तव्यता उवसग्गशब्दे ) ॥ स्था० ॥

आत ( य ) संजम—आत्मसंयम—पुं० आत्मनः शरीरस्य संयमः । संवृतांगोपांगेन्द्रियत्वे, ॥ पा० ॥ आत्मनो मनसः संयमः । चित्तसंयमने, ॥ वाच० ॥

आत ( य ) संयमपर—आत्मसंयमपर—त्रि० आत्मनः शरीरस्य संयमः संवृताङ्गोपाङ्गेन्द्रियत्वम् तत्परं तत्प्रधानम् संवृतांगोपाङ्गेन्द्रियत्वप्रधाने, षो० ।

आत ( य ) संयमोवाय—आत्मसंयमोपाय—पुं० संयमनं संयम आत्मनः संयम आत्मसंयमस्तदुपायः । आत्मसंयमनोपाये, उक्तं च "तस्यात्मा संयतो यो हि सदाचारे रतस्सदा । स एव धृतिमान् धर्मस्तस्यैव च जिनो हित इति ॥ दश० ॥

आत ( य ) संवेयण—आत्मसंवेदन—न० द्रव्योपसर्गभेदे, तथा च सूत्रकृताङ्गे उपसर्गमधिकृत्य

दव्वे चउव्विहो देवमणुयतिरियायसंवेतो' ॥ सूत्र० ॥

आत्मसंवेदना अपि चतुर्विधा तद्यथा घट्टनातो लेशनातोऽगुलाद्यवयवसंश्लेषरूपाया स्तंभनातः प्रपाताच्चेति ॥ सूत्र०॥

आत ( य ) संवेयणिज्ज—आत्मसंवेदनीय—पुं० आत्मना क्रियंत इत्यात्मसंवेदनीयाः । द्रव्योपसर्गभेदे, एतस्य भेदादिबहुवक्तव्यता उवसग्गशब्दे ॥ आ० चू० ॥

आत ( य ) सक्खि ( न् ) आत्मसाक्षिन्—त्रि० आत्मनः बुद्धिवृत्तः साक्षी प्रकाशकः वेदान्तादिमतसिद्धे बुद्धिवृत्तिप्रकाशके चैतन्ये, ॥ वाच० ॥ आत्मा स्वजीवः स्वस्वसंचितप्रत्यक्षविरतिपरिणामपरिणतः साक्षी यत्र तदात्मसाक्षिकम् । स्वजीवसाक्षिके, ॥ पा० ॥

आत ( य ) अप्पसत्तम—आत्मसप्तम—त्रि० आत्मना सप्तमः-सप्तानां पूरण आत्मा वा सप्तमो यस्यासावात्मसप्तमः सप्तानां पूरण आत्मा यस्य तस्मिन् ॥ स्था० ॥ "मल्लीणं अरहा अप्पसत्तमे मुंडे भवित्ता" ॥ स्था०॥

आत ( य ) सत्ति—आत्मशक्ति—स्त्री०—६त० आत्मानुरूपसामर्थ्ये, ॥ वाच० ॥

आत ( य ) समप्पण—आत्मसमर्पण—न० आत्मनिवेदने, गुरवे चात्मनिवेदनम्महते फलाय ( तथा च पञ्चाशके )

अह तिपयाहिण पुव्वं सम्मं सुद्धेण चित्तरयणेण।

गुरुणो णु वेयणं सव्वेहेव दढ मप्पणा एत्थ ॥ २९ ॥

व्याख्या—यथोक्तविधानादनंतरं तिसृणां प्रदक्षिणानां समाहारस्त्रिप्रदक्षिणं तत्पूर्वं प्रथमं यत्र तत्तथा क्रियाविशेषणमिदं गुरुं त्रिःप्रदक्षिणीकृत्येत्यर्थः । सम्यक्शुद्धेन तत्त्वतो निर्मलेन न कल्पनयेत्यर्थः चित्तं मनस्तदेव रत्नमाणिक्यं प्रकाशस्वभावसाधर्म्यात्चित्तरत्नं तेन गुरोर्द्धर्माचार्यस्य निवेदनीयं भवदीयोऽहं किंकरो यूयं मे भवोदधिनिमग्नस्य नाथा इत्येवं समर्पणं सर्वैरेव समस्तैरपि प्रकारैर्द्विपदचतुष्पदधनाद्यर्पणलक्षणैर्मनःप्रभृतिभिर्वा न तु कथंचिन्निवेदमं इढमत्यर्थमव्यभिचरिततया कस्य निवेदनमित्याह आत्मनः स्वस्यात्र दीक्षायां वृत्तायां सत्यामिति गाथार्थः ॥ २९ अथ तदात्मनिवेदनं गुरुः प्रतिपद्यते न वा यदि न प्रतिपद्यते तदा न युक्तं निष्फलत्वात्तस्येत्याशंकां परिहरन्नाह ॥

एसा खलु गुरुभत्ती उक्कोसो एस दाणधम्मो उ ।

भावविसुद्धीए दढं इहरा वि य वीयमेयस्स ॥ ३० ॥

व्याख्या—यदेतत् गुरूणां सर्वथात्मनिवेदनमनंतरोक्तमेषा इयं खलु वाक्यालंकारेऽथवाऽवधारणे तेन एषैव न त्वन्यापि यदाह "का भक्तिस्तस्य येनात्मा सर्वथा न नियुज्यते। अभक्तेः कार्यमेवाहुरंशो नाप्यनियोजनं" गुरुभक्तिर्धर्माचार्यबहुमानो गुरुभक्तिश्च सता विधेया दुःखप्रतीकारत्वात् गुरोस्तस्याश्च महार्थसाधकत्वादुक्तं वानंतरोक्तार्थद्वयसंवादि ( तिण्हं दुप्पडियारं समणा उ सो तं जहा अम्मायियरस्स गुरुस्स भट्टिस्स ) तथा "गुरुभक्तेः श्रुतज्ञानं भवेत्कल्पतरूपमम् "लोकद्वितयभाविन्यस्ततः स्युः सर्वसंपदः" तथा उत्कृष्यत इत्युत्कर्ष उत्कृष्ट (एसत्ति) इहोत्तरस्यैवकारार्थस्य तु शब्दस्य संबंधादेष एवायमेव गुरोरात्मनिवेदनरूपो नान्योऽस्त्वंतरदाने हि तदेवैकं दत्तं स्यादात्मदाने तु सर्वमपीत्यात्मदानधर्मस्यैवोत्कृष्टता दानधर्मो वितरणरूपं कुशलानुष्ठानं विधेयश्चासौ महार्थसाधकत्वाद्यदाह "दानात्कीर्तिः सुधाशुभ्रा दानात्सौभाग्यमुत्तमं । दानात्कामार्थमोक्षाः स्युर्दानधर्मो वरस्ततः "किं यथाकथंचिदप्यात्मनिवेदनमुत्कृष्टदानधर्मो भवति नेत्याह भावविशुद्ध्या परिणामनिष्कलंकतया इढमत्यंतं परिणामकलंकं च कीर्त्याद्यपेक्षयेति तर्हि भावशुद्ध्यभावे किं स्यादित्याह ( इहरा वियति ) इतरथाऽन्यथा भावविशुद्धिव्यतिरेकेणेत्यर्थः अपि चेति पुनः शब्दार्थो बीजमिव बीजं हेतुर्भवतीति द्रव्यतोऽपि सदनुष्ठानस्य प्रायोभावानुष्ठानकारणत्वादेतस्योत्कृष्टदानधर्मस्यात्मनिवेदनमिति प्रकृतमिति गाथार्थः ॥ ३० ॥ कथमिदं भावविशुद्ध्याभावपूर्वकमात्मनिवेदनमुत्कृष्टदानधर्मबीजं भवतीत्याह

जं उत्तमचरियमिणं सोउं पि अणुत्तमाण पारेत्ति ।

ताए य सगासाओ उक्कोसो होइ एयस्स ३१॥

व्याख्या यद्यस्मात्कारणादुत्तमचरितं सत्पुरुषचेष्टितमिदमनंतरदर्शितमात्मनिवेदनं श्रोतुमप्याकर्णयितुमप्यास्तामनुष्ठातुमनुत्तमा असत्पुरुषा न पारयंति न शक्नुवंति तथाविधवीर्यविरहितत्वात्तेषां तत्तस्मात् कारणात्तत्सकाशादेतस्माद्भावविशुद्धिविरहविहितोत्तमपुरुषचरितरूपात्मनिवेदनादवधेः तु शब्द एवकारार्थः तत्प्रयोगं च दर्शयिष्यामः प्रकर्ष उत्कर्षो भवत्येव जायत एव एतस्यानंतरगाथोक्तदानधर्मस्य । इदमुक्तं भवति यद्यप्यात्मनिवेदनरूपो दानधर्मो विशुद्धभावाभावे विधीयमानो ऽनुत्कृष्टो भवति तथाप्युत्तमचरितरूपत्वात्तस्योत्कृष्टतानिमित्तभूताया भावविशुद्धेर्जनकत्वादुत्कृष्टदानधर्मबीजं भवतीत्यतः साधूक्तं ( इहरा वि य

वीयमेयस्सत्ति" अतो गुरुणा अप्रतिपन्नत्वेऽपि न निष्फलतात्मनिवेदनस्येति गाथार्थः ॥ ३१ ॥

अथ यदि तदात्मनिवेदनं गुरुः प्रतिपद्यते तदाधिकरणदोषो गुरोः स्यादित्याशंकापरिहरन्नाह—

गुरुणो वि णाहिगरणं ममत्तरहियस्स एत्थ वत्थुम्मि ।
तब्भावसुद्धिहेउं आणाए पयत्तमाणस्स ॥ ३२ ॥

गुरोरपि न केवलं दीक्षितस्यात्मनिवेदने निष्फलत्वलक्षणो दोषोऽभिहितयुक्तेर्न भवति धर्माचार्यस्यापि न नैवाधिक्रियते दुर्गतावनेनात्मेत्यधिकरणं दीक्षितेनात्मनिवेदिते परिग्रहारंभानुमतिरूपो दोषो भवतीति गम्यते किंभूतस्येत्याह–ममत्वरहितस्य निःसंगस्य क्वेत्याह अत्र एतस्मिन्ननंतरोक्ते वस्तुनि पदार्थे दीक्षितसत्त्वतदीयापत्यवित्तादिरूपे पुनः किंभूतस्येत्याह प्रवर्त्तमानस्य व्याप्रियमाणस्य कया आज्ञया आप्तोपदेशेन किमर्थं तद्भावशुद्धिहेतुं दीक्षितसत्त्वपरिणामविशोधनहेतोरेवं हि प्रवृत्तौ तस्य भावशुद्धिरुपजायत इत्येवं चेहानुमानप्रयोगो यदुत दीक्षितात्मनिवेदनं गुरोरधिकरणं न भवति ममत्वरहितत्वाच्छरीरादिवदिति दृष्टांतोऽभ्यूह्यः । न च ममत्वरहितत्वमसिद्धं तदुपकाराज्ञया प्रवृत्तत्वाच्चारित्रोपकाराय भोजनादाविवेति गाथार्थः ॥ पंचा० ॥

आत [ य ] समया—आत्मसमता–स्त्री० आत्मौपम्ये, सर्वत्रात्मौपम्यं समाचरेदित्याह—"आततो वहिया पास तम्हा ण हंता ण विज्जायए" ॥ आचा० ॥ यथा ह्यात्मनः सुखमिष्टमितरत्त्वन्यथा तथा बहिरप्यात्मनो व्यतिरिक्तानामपि जन्तूनां सुखप्रियत्वमसुखप्रियत्वं च पश्यावधारय तदेवमात्मसमतां सर्वप्राणिनामवधार्य किं कर्त्तव्यमित्याह–तम्हा इत्यादि । यस्मात्सर्वेऽपि जंतवो दुःखद्विषः सुखलिप्सवस्तस्मात्तेषां न हंता न व्यापादकः स्यात् नाप्यपरैस्तान् जंतून् विविधैर्नानाप्रकारैरुपायैर्घातयेदिति ॥ आचा० ॥

आत [ य ] समुब्भव—आत्मसमुद्भव—पुं० आत्मा देहो मनः परमात्मा वा समुद्भवोऽस्य १ पुत्रे, २ मनोभवे कामे, च पुं० ३ मनोजन्ये सुखादौ, त्रि० ४ कन्यायां, ५ बुद्धौ, च स्त्री० ६ परमात्मसम्भूते आकाशादौ, त्रि० ७ चतुर्मुखे, ८ शिवे, ९ विष्णौ, १० परमात्मनि च पुं० ॥ वाच० ॥

आत [ य ] समोयार—आत्मसमवतार— पुं० ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यसमवतारभेदे,

सव्वदव्वा वि णं आयसमोआरेणं आयभावे समोअरंति ॥ ॥ अनु० मू० ॥

ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यसमवतारस्त्रिविधः प्रज्ञप्तस्तद्यथा आत्मसमवतार इत्यादि । तत्र सर्वद्रव्याण्यप्यात्मसमवतारेण चिंत्यमानान्यात्मभावे स्वकीयस्वरूपे समवतरंति वर्तंते तदव्यतिरिक्तत्वात्तेषां ॥ अनु० टी० ॥

( अत्र वहुवक्तव्यता समवतारशब्दे )

आत [ य ] सरीरखेत्तोगाढ—आत्मशरीरक्षेत्रावगाढ—त्रि० स्वशरीरक्षेत्रव्यवस्थिते, "आयशरीरखेत्तोगाढे पोग्गले अतमायाए आहारन्ति,, स्वशरीरक्षेत्रे व्यवस्थितानित्यर्थः ॥ भ० ॥

आत [ य ] साय–आत्मसात–न० आत्मसुखे,

भूताइं जे हिंसति आयसाते ॥ सूत्र० मू० ॥

अभूवन् भवंति भविष्यन्तीति भूतानि प्राणिनस्तान्यात्मसुखार्थं हिनस्ति व्यापादयतीति ॥ सूत्र० टी० ॥

आत [ य ] सायाणुगामि [ न् ]–आत्मसातानुगामिन्–पुं० स्वसुखलिप्सौ,

हंता छेत्ता पगब्भित्ता आयसायाणुगामिणो ॥ सूत्र० मू० ॥

आत्मसातानुगामिनः स्वसुखलिप्सव इति ॥ सूत्र० ॥

आत [ य ] सिद्ध–आत्मसिद्ध–त्रि० आत्मना सिद्धः १ स्वयंसिद्धे, २ अयत्ननिष्पन्ने, ॥ वाच० ॥

आत [ य ] सुह–आत्मसुख–न० शरीरसुखे,

आयसुहं पडुच्च ॥ सूत्र० मू० ॥

आत्मसुखमप्रतीत्य स्वस्य शरीरसुखकृते इति ॥ सूत्र० ॥

जे छिंदंति आयसुहं पडुच्च ॥ सूत्र० मू० ॥

जीवसुखे,

अर्हत्क्रमाम्भोजयुगोपयोगि चेतः कुरुष्वात्मसुखं लभस्व ॥ द्रव्या मू० ॥

आत्मनो जीवस्य सुखं निराबाधानुभवं लभस्व प्राप्नुहि नयज्ञानात् जीवादीन् परीक्ष्य कर्मभ्य आत्मानं वियोज्यानन्तसुखभाक् भवेत्यर्थः । द्रव्या० ॥ आत्मैव सुखमस्य । आत्मलाभमात्रेण सुखिनि, त्रि० आत्मैव सुखं सच्चिदानन्दरूपत्वात् । आत्मरूपे परमानन्दे, न० ॥ वाच० ॥

आत [ य ] सोहि–आत्मशुद्धि–स्त्री० आत्मनो देहस्य मनसो वा शुद्धिः । देहशुद्धौ, चित्तशुद्धौ, च ॥ वाच० ॥ कर्मक्षयोपशमक्षये च "आयपज़ोगमायसोहीए" ॥ आचा० ॥ आत्मशुध्या कर्मक्षयोपशमक्षयलक्षणयाऽऽयतयोगं सुप्रणिहितमनोवाकायात्मकं विधायेति ॥ आचा० ॥

आत [ य ] हित–आत्महित–त्रि० स्वहिते, "आयहियाए सण्णिसेज्जाओ,, ॥ सूत्र० ॥ आत्महिताय स्वहितं मन्यमाना इति ॥ सूत्र० ॥ शरीराय हिते, "आयट्ठीणं आयहिताणं" ॥ ॥ दश० ॥ आत्महितानां हितमिव हितं आत्महितं च शरीरे आत्मनि च भवति । तत्र शरीरे हिताहितं पथ्यापथ्याहारादिकं । आत्मनि तु हिंसादिप्रवृत्तिनिवृत्ती । अथवाऽऽत्मनो हितानि त्रीणि त्रिषष्ठानि पाखण्डिकशतानि तदपनयनं तदस्ति येषान्ते आत्महिता इति ॥ दश० ॥ अहिताचाराश्च चौरादयोऽयं त्वात्महित ऐहिकामुष्मिकापायभीरुत्वादिति ॥ सूत्र० ॥ "आयहिए अणियाण संवुडे" ॥ सूत्र० ॥

आयहेउ—आत्महेतु—पुं०—आत्मनिमित्ते, "आयहेओ परिओभये" आत्महेतोरात्मनिमित्तमिति ॥दश० ॥ "केइ पुरिसे आयहेउं वा णाइहेउं वा" ॥ सूत्र० ॥ आत्मनिमित्तमात्मार्थमिति ॥ सूत्र० ॥

आता ( अप्पा )—स्त्री० आत्मन्—पुं० अत–मनिण् । स्वरूपे, ॥ वाच० ॥ "भस्मात्मनोः पो वा" इति प्राकृतसूत्रेण भस्मात्मनोः संयुक्तस्य पो वा अप्पा–अप्पाणे—पक्षे अत्ता ॥ प्रा० व्या० ॥ "पुंस्यन आणो राजवच्च" इति प्राकृतसूत्रेण पुल्लिङ्गे वर्त्तमानस्यात्वं तस्य स्थाने आण इत्यादेशो वा भवति पक्षे यथा दर्शनं राजवत्कार्यं भवति आणादेशे चातः सेर्डोरि-

त्यादयः प्रवर्त्तते ॥ पक्षे तु राज्ञः जश्शस्ङसिङसां णोणो णाइणममामा इति प्रवर्तते ॥ अप्पाणो । अप्पाणा । अप्पाणं । अप्पाणे । अप्पाणेण । अप्पाणेहिं । अप्पाणाओ । अप्पाणासुन्तो अप्पाणस्स । अप्पाणाण । अप्पाणम्मि । अप्पाणेसु । अप्पाण कअं । पक्षे राजवत् । अप्पा । अप्पो । हे अप्पा । हे अप्प । अप्पाणो चिट्ठंति अप्पाणो पेच्छ अप्पाणा अप्पेहिं । अप्पाणो । अप्पाओ । अप्पाउ अप्पाहि । अप्पाहिन्तो । अप्पा । अप्पासुन्तो अप्पाणो धणं अप्पाणं । अप्पे । अप्पेसु ॥ प्रा० व्या० ॥ "आत्मनष्टो णिअणइआ" इति प्राकृतसूत्रेणात्मनः परस्याष्टायाः स्थाने णिआणइआ इत्यादेशौ वा भवतः । अप्पणिआ पाउसे उवगअम्मि अप्पणिआ अविपड्डिखाणिआ अप्पणइआ । पक्षे-अप्पाणेण । यत्ने, ॥ वाच० ॥ स्वस्मिन् आयाए एगंतमंतं अवक्कमंति ( आयाएत्ति ) आत्मना स्वयमित्यर्थ इति ॥ भ० ॥

दोहिं ठाणेहिं आयासरीरं फुसित्ताणं णिज्जाति देशेण वि आयासरीरं फुसित्ताणं णिज्जाति सव्वेण वि आयासरीरं फुसित्ताणं णिज्जाति एवं फुरित्ता एवं फुडित्ता एवं संसवट्टित्ता निव्वट्टित्ता ॥ स्था० ॥ मू० ॥

द्वाभ्यां प्रकाराभ्यां ( देसेण वित्ति ) देशेनापि कतिपयप्रदेशलक्षणेन केषांचित्प्रदेशा वा मिलिकागत्योत्पादस्थानं गच्छता जीवेन शरीराद्बहिः क्षिप्तत्वात् आत्मा जीवः शरीरं देहं स्पृष्ट्वा श्लिष्ट्वा निर्याति शरीरान्मरणकालेपि निस्सरतीति ( सव्वेण वित्ति ) सर्वेण सर्वात्मना सर्वैर्जीवप्रदेशैः कन्दुकगत्योत्पादस्थानं गच्छता शरीराद्बहिःप्रदेशानामक्षिप्तत्वादिति अथवा देशेनापि देशतोऽपि अपि शब्दः सर्वेणापीत्यपेक्षः । आत्मा शरीरं कोर्थः शरीरं देशं पादादिकं स्पृष्ट्वा अवयवान्तरेभ्यः प्रदेशसंहारान्निर्याति स च संसारी सर्वेणापि सर्वतयाप्यपि निर्देशेनापीत्यपेक्षःसर्वमपि शरीरं स्पृष्ट्वा निर्यातीति भावः स च सिद्धो वक्ष्यति च "पायणिज्जाण निरएसु उववज्जंतीत्यादि" यावत् ( सव्वंगनिज्जाणासिद्धसु त्ति । आत्मना शरीरस्य स्पर्शने सति स्फुरणं भवतीत्यत उच्यते ॥ एवमित्यादि एवमिति दोहिं ठाणेहिं इत्याद्यभिलापसंसूचनार्थः तत्र देशेनापि कियद्भिरप्यात्मप्रदेशैरिलिकागतिकाले ( सव्वेण वित्ति ) सर्वैरपि गेन्दुकगतिकाले शरीरं ॥ फुरित्ताणं ति स्फोरयित्वा संस्पन्दनङ्कृत्वा निर्याति अथवा शरीरकं देशतः शरीरदेशमित्यर्थः स्फोरयित्वा पादादिनिर्याणकाले सर्वतः शरीरं स्फोरयित्वा सर्वाङ्गनिर्याणावसर इति स्फुरणाच्च सात्मकत्वं स्फुटं भवतीत्याह एवमित्यादि एवमिति तेष्वेव देशेनात्मदेशेन शरीरकं फुडित्ताणं ति सचेतनतया स्फुरणलिङ्गतः स्फुटं कृत्वा इलिका गतौ सर्वेण सर्वात्मना स्फुटं कृत्वा गेंदुकगताविति अथवा शरीरैकदेशतः सात्मकतया स्फुटं कृत्वा पादादिना निर्याणकाले सर्वतः सर्वाङ्गनिर्याणप्रस्ताव इति अथवा स्फुटित्वा स्फोटयित्वा विशीर्णं कृत्वा तत्र देशतोऽक्ष्यादिविघातेन सर्वतः सर्वविशरणेन देवदीपादिजीववदिति शरीरकं सात्मकतया स्फुटीकुर्वंस्तत्संवर्त्तनमपि कश्चित्करोतीत्याह एवमित्यादि" एवमिति तथैव ( संवदृइत्ताणं ति ) संवर्त्य संकोच्य शरीरकं देशेनेलिकागतौ शरीरस्थितप्रदेशैः सर्वेण सर्वात्मना गेन्दुकगतौ सर्वात्मप्रदेशानां शरीरस्थितत्वान्निर्यातीति अथवा शरीरकं शरीरिणमुपचाराद्दण्डयोगाद्दण्डपुरुषवत् तत्र देशतः संवर्तनं संसारिणो म्रियमाणस्य पादादिगतजीवप्रदेशसंहारात्सर्वतस्तु निर्वाणं गंतुरिति । अथवा शरीरकं देशतः संवर्त्य हस्तादिसङ्कोचनेन सर्वतः सर्वशरीरसङ्कोचनेन पिपीलिकादिवदिति आत्मनश्च संवर्त्तनं कुर्वन् शरीरस्य निवर्तनं करोतीत्याह एवं ( निवट्टइत्ताणं ति ) तथैव निवर्त्य जीवप्रदेशेभ्यः शरीरकं पृथक् कृत्वेत्यर्थः तत्र देशेनेलिकागतौ सर्वेण गेंदुकगतावथवा प्रदेशतः शरीरकं निवर्त्यात्मनः पादादिनिर्याणवत् सर्वतः सर्वाङ्गनिर्याणवानिति अथवा पञ्चविधशरीरसमुदयापेक्षया देशतः शरीरमौदारिकादिनिवर्त्य तैजसकार्म्मणेत्वादायैव तथा सर्वेण सर्वशरीरसमुदायं निवर्त्य निर्याति सिद्ध्यतीत्यर्थः अनन्तरं सर्वनिर्याणमुक्तं तच्च परम्परया धर्मश्रवणलाभादिषु ते च यथा स्युस्तथा दर्शयन्नाह ( दोहीत्यादि ) कण्ठ्यन्नवरं ( खएणचेवत्ति ) ज्ञानावरणीयस्य दर्शनमोहनीयस्य च कर्मण उदयप्राप्तस्य क्षयेण निर्जरणेन अनुदितस्य चोपशमेन विपाकाननुभवेन क्षायोपशमेनेत्युक्तं भवति यावत्करणात् केवलं बोहिबुज्झेज्जा मुंडेभवित्ता अगाराओ अणगारियं पव्वएज्जा केवलं बंभचेरवासमावसेज्जा केवलेणं संजमेणं संजमेज्जा केवलेणं संवरेणं संवरेज्जा केवलमाभिणिवोहियनाणमुप्पाडेज्जा" इत्यादि दृश्यं यावन्मनःपर्यवज्ञानमुत्पादयेदिति केवलज्ञानं तु क्षयादेव भवतीति तन्नोक्तमिह च यद्यपि बोध्यादयः सम्यक्चारित्ररूपत्वात्केवलेन क्षयेणोपशमेन च भवंति तथाप्येते-क्षयोपशमेनापि भवंति श्रवणाभिनिबोधिकादीनि तु क्षयोपशमेन भवन्तीति सर्वसाधारणः क्षयोपशम उक्तः । स्था० अ० २॥ देहे, उक्तं हि "धर्म्मधृत्यग्निधीन्द्वर्कत्वक्तत्त्वसूर्य्यदेहेषु । शीलानिलमनोयत्नकवीर्येष्यात्मनः स्मृतिरिति ॥ उत्त० ॥

तथा चाचाराङ्गसूत्रम् ।

जमिणं विरूवरूवेहिं सत्थेहिं लोगस्स कम्मसमारम्भा कज्जंति तं जहा अप्पणो से पुत्ताणं इत्यादि ॥ आचा० ॥

अप्पणो इत्यादि तद्यथेत्युपप्रदर्शनार्थं । नोक्तमात्रमेवान्यदप्येवंजातीयकं मित्रादिकं द्रष्टव्यं (से) तस्यारम्भारिप्सोर्य आत्मा शरीरं तस्मै अर्थं तदर्थं कर्म्मारम्भाः पाकादयः क्रियंते ॥ आचा० ॥ मनसि, बुद्धिस्थे निजे स्वभावे, बुद्धौ च ॥ वाच० देहावच्छिन्ने चैतन्ये च । अन्तःकरणे, ॥ वाच० ॥ ज्ञाने, प्रकाशस्वरूपे बुद्धावात्मनि, बुद्धिर्हि मन आदिकरणानि प्राप्नोतीत्यात्मा तेषां प्रत्यभिज्ञानम् ॥ वाच० ॥ अर्के, वह्नौ, वायौ, ॥ वाच० ॥ अततीत्यात्मा ॥ विशे० ॥ अतति सततं गच्छत्यपरापरान् स्वपरपर्य्यायानित्यात्मा अथवा अत धातोर्गमनार्थत्वेन ज्ञानार्थत्वाददति सततमवगच्छत्युपयोगलक्षणत्वादित्यात्मा ॥ भ० ॥ अतति सततमवगच्छति अत सातत्यगमन इति वचनात् अत् धातोर्गत्यर्थत्वाद् गत्यर्थानां च ज्ञानार्थत्वादनवरतं जानातीति निपातनादात्मा जीव उपयोगलक्षणत्वादस्य सिद्धसंसार्यवस्थाद्वयेऽप्युपयोगभावेन सततावबोधभावात् सततावबोधाभावे चाजीवत्वप्रसङ्गात् अजीवस्य च पुनर्जीवत्वाभावात् भावे चाकाशादीनामपि तथात्वप्रसङ्गात् एवं च जीवानादित्वाभ्युपगमाभावप्रसङ्ग इति । अथवा अतति सततं गच्छति स्वकीयान् ज्ञानादिपर्य्यायानित्यात्मा नन्वेवमाकाशादीनामप्यात्मशब्दव्यपदेशप्रसङ्गस्तेषामपि स्वपर्य्यायेषु सततगमनादन्यथा अपरिणामित्वेनावस्तुत्वप्रसङ्गादिति

नैवम् व्युत्पत्तिनिमित्तत्वादस्य उपयोगस्यैव च प्रवृत्तिनिमित्तत्वाज्जीव एवात्मा नाकाशादिरिति यद्वा संसार्यपेक्षया नानागतिषु सततगमनान्मुक्तापेक्षया च भूततद्भावत्वादात्मा जीवः ॥ स्था० ॥ अतति सातत्येन गच्छति तांस्तान् ज्ञानदर्शनसुखादिपर्यायानित्याद्यात्मादिशब्दव्युत्पत्तिनिमित्तसंभवात् उक्तश्च "एवं जीवो जीवो संसारी पाणधारणाणुभवो। सिद्धो पुणरज्जीवो जीवणपरिणामरहिओत्ति" ॥ आ० म० ॥ को ह्यात्मा भगवानाह योऽहमित्यभिमन्यते स कीदृक् सूक्ष्मोऽसौ किं तत्सूक्ष्मं यन्नगृह्णीमः न तु शब्दगंधानिलाः किं तु ते इंद्रियग्राह्याः तेन ग्रहणमात्मा न तु ग्राहयिता हि सः आ० चू० ॥

(१) भेदा आत्मनः त्रिविध आत्मा।
(२) निक्षेप आत्मनः।
(३) भेदाः अष्टविध आत्मा।
(४) भेदाः सूक्ष्मा वादराश्च।
(५) लक्षणम् आत्मनः।
(६) परिभोगोपभोगकषायद्वाराणि।
(७) इन्द्रियाण्यात्मनः।
(८) चित्तादीनि आत्मनः।
(९) अस्तित्वमात्मनः।
(१०) अभ्याख्यानमात्मनः।
(११) अस्तित्वमिन्द्रभूतिं प्रति।
(१२) अभौतिकत्वमात्मनः।
(१३) कस्या दिश आगतोऽहम्।
(१४) अन्यत्वममूर्त्तत्वमनित्यत्वं च।
(१५) कर्तृत्वमात्मनः।
(१६) विभुत्वमात्मनः!
(१७) परिमाणम् आत्मनः।
(१८) एकत्वमात्मनः।
(१९) क्रियावत्वमात्मनः।
(२०) ज्ञानमात्मनो भिन्नमभिन्नं च।
(२१) द्वाभ्यां स्थानाभ्यामात्मा जानाति।
(२२) स्फुटगाथाः।
(२३) क्षणिकत्वमात्मनः।
(२४) रत्नप्रभादिभावानामात्मत्वम्।
(२५) श्लोकाः अप्पाणई वेयरणीति।

(१) स च त्रि विधः-

बाह्यात्मा चांतरात्मा च परमात्मेति च त्रयः। ॥ द्वा० ॥
कायाधिष्ठायकध्येयाः प्रसिद्धा योगवाङ्मये ॥

बाह्यात्मा चेति कायः स्वात्मधिया प्रतीयमानोऽहं स्थूलोऽहं कृश इत्याद्युल्लेखेनाधिष्ठायकः कायचेष्टाजनकप्रयत्नवान् ध्येयश्च ध्यानभाव्य एते त्रयो बाह्यात्मा चांतरात्मा च परमात्मा चेति योगवाङ्मये योगशास्त्रे प्रसिद्धाः ॥ द्वा० ॥ ॥ टी० ॥ तत्र यस्य मनोवचनादिषु आत्मत्वभासदेह एवात्मा एवं सर्वपौद्गलिकप्रवर्त्तनेषु आत्मनिष्ठेषु आत्मत्वबुद्धिः स बाह्यात्मा १ मिथ्यादृष्टिः एष पुनः स कर्मावस्थायामपि आत्मनि ज्ञानाद्युपयोगलक्षणे शुद्धचैतन्यलक्षणे महानंदस्वरूपे निर्विकारामृताबाधरूपे समस्तपरभावमुक्ते आत्म बुद्धिः अंतरात्मा सम्यग्दृष्टिगुणस्थानकतः क्षीणमोहं यावत् अंतरात्मा उच्यते यः केवलज्ञानदर्शनोपयुक्तः शुद्धसिद्धः स परमात्मा संयोगी अयोगी केवली सिद्धश्च स परमात्मा उच्यते ॥ अष्ट० ॥ अस्य वक्तव्यता दशवैकालिके ॥

(२) अधुना जीवपदमाह-

जीवस्स उ निक्खेवो परूवणा लक्खणं च अत्थित्तं ॥
अन्नासुत्तं निचकारगो देहवावित्तं ॥ २२७ ॥
गुणिउड्ढगइतेयानिम्मयसाफल्लता य परिमाणे।
जीवस्स तिविहिकालंमि परिक्खा होइ कायव्वा ॥२२८ ॥

(दो दारगाहाओ) व्याख्या जीवस्य निक्षेपो नामादिः प्ररूपणा द्विभेधाश्च भवंति जीवा इत्यादिरूपा लक्षणं चानादि अस्तित्वं सत्त्वं शुद्धपदवाच्यत्वादिना। अन्यत्वं देहात्। अमूर्तत्वं स्वतः। नित्यत्वं विकारानुपलंभेन। कर्तृत्वं स्वकर्मफलभोगात्। देहव्यापित्वं तत्रैव तल्लिंगोपलब्ध्या। गुणित्वं योगादिना। ऊर्ध्वगतित्वमगुरुलघुभावेन। अनिर्मायता विकाररहितत्वेन। सफलता च कर्मणः। परिमाणं लोकाकाशमात्र इत्यादि। एवं जीवस्य त्रिविधकाल इति त्रिकालविषया परीक्षा भवति कर्त्तव्या इति। द्वारगाथाद्वयसमासार्थः। व्यासार्थस्तु भाष्यादवसेयः ॥

तथा च निक्षेपमाह-

नामं ठवणा जीवो दव्वजीवो अ भावजीवो य।
ओहभवग्गहणंमि य तब्भवजीवे य भावंमि ॥२२९ ॥दश०॥

व्या० नामस्थापनाजीव इति। जीवशब्दः प्रत्येकमभिसंबध्यते। नामजीवः स्थापनाजीव इति। तथा द्रव्यजीवश्च भावजीवश्च वक्ष्यमाणलक्षणः। तत्रौघेत्योघजीवः। भवग्रहणे वेति भवजीवतद्भवजीवश्च तद्भव एवोत्पन्नः भावे भावजीव इति गाथासमासार्थः ॥

व्यासार्थं त्वाह-

नामं ठवणागयाओ दव्वे गुणपज्जवेहि रहिओ त्ति।
तिविहो य होइ भावे ओहे भवतब्भवे चेव ॥ २३० ॥

व्या० ॥ नामस्थापने गते सुवर्णेत्यादीतिभावः। द्रव्य इति द्रव्यजीवो गुणपर्यायाभ्यां चैतन्यमनुष्यत्वादिलक्षणाभ्यां रहितः। बुद्धिपरिकल्पितो न त्वसावित्थंविधः संभवतीति। त्रिविधश्च भवति भाव इति।

भावजीवत्रैविध्यमाह-ओघजीवो भवजीवस्तद्भवजीवश्चेति। प्रागगाथोक्तमप्येतदित्थं विधभाष्यकारशैलीप्रामाण्यतोऽदुष्टमेवेति तु अन्ये पठंति "भावे उ तिहा भणिओ तं पुण संखेवओ वोच्छं" भाव इति भावजीवः। त्रिधेति त्रिप्रकारो भणितो निर्युक्तिकारेण ओघजीवादिस्तमपि च भावार्थमधिकृत्य संक्षेपतो वक्ष्य इति गाथार्थः

तत्रौघजीवमाह

संते आउपकम्मे धरई तस्सेव जीवई उदए।
तस्सेव निज्जराए मओत्ति सिद्धो नयमएणं ॥ २३१ ॥

व्या० ॥ सति विद्यमाने आयुष्ककर्मणि सामान्यरूपे ध्रियते सामान्येनैव तिष्ठति भवांदधौ कथमित्थमवस्थानमात्राज्जीवत्वमस्येत्याशंक्या त्रैवान्वर्थयोजनामाह। तस्यैवो

घायुष्ककर्मणो जीवत्युदये । उदये सति जीवत्यासंसारं प्राणान् धारयत्यतो जीवनाज्जीव इति। तस्यैवौघायुष्ककर्मणो निर्जरया क्षयेण मृत इति सर्वथा जीवनाभावात्। स च सिद्धो मृतो नान्यः विग्रहगतावपि तथा जीवनसद्भावात्। नयमतेनेति सर्वनयमतेनैव मृत इति गाथार्थः । जीवत्यनेनेति जीवः ओघेन सामान्येन जीवः ओघजीवितविशिष्टो जीवः मध्यपदोत्तरपदलोपादित्थं भवति उक्त ओघजीवितविशिष्ट ओघजीवः ॥

सांप्रतं भवजीवं तद्भवजीवं चाह ॥

जेण य धरइ भवगओ, जीवो जेण य भवाउ संकमइ ।
जाणाहि तं भवाउ चउव्विहं तब्भवे दुविहं ॥ २३२ ॥
निक्खेओ त्ति गयं । अ० ४ ॥

व्या० ॥ येन च नारकाद्यायुष्केणाध्रियते तिष्ठति । भगवतो नारकादिभवस्थितो जीवस्तथा येन च मनुष्याद्यायुष्केण भवान्नारकादिलक्षणात् संक्रामति याति। मनुष्यादिभवांतरमिति सामर्थ्याद्गम्यते । जानीहि विद्धि । तदित्थंभूतं भवायुर्भवजीवितं चतुर्विधं नारकतिर्यङ्मनुष्यामरभेदेन तथा तद्भवे तद्भवविषयमायुरिति वर्तते । तच्च द्विविधं तिर्यक्त्वतद्भवायुर्मनुष्यत्वतद्भवायुश्च । यस्मात्तावेव मृतौ संतौ भूयस्तस्मिन्नेव भव उत्पद्येते नान्ये । तद्भवजीवितं च तस्मान्मृतस्य तस्मिन्नेवोत्पन्नस्य यत्तदुच्यते इति । अत्रापि च भावजीवाधिकारात्तद्भवजीवितविशिष्टश्च जीव एव ग्राह्यः । जीवितं तु तद्विशेषणत्वादुक्तमिति गाथार्थः । उक्तो निक्षेपः ॥ दश० ॥ अ० ४ ॥

( ३ ) आत्मनोऽष्टविधानिक्षेपो भगवत्याम् सूत्रम्—

कइविहा णं भंते ! आता पण्णत्ता ? गोयमा ! अट्ठविहा आता पण्णत्ता,तंजहा दवियाता कसायाता जोगायाता उवओयाता णाणाता दंसणाया चरित्ताया वीरियाता ॥ भ० ॥ श० १२ उ० १०

( आयत्ति ) अतति सततं गच्छति अपरापरान् स्वपरपर्यायानित्यात्मा अथवा अत् धातोर्गमनार्थत्वेन ज्ञानार्थत्वादतति सततमवगच्छत्युपयोगलक्षणत्वादित्यात्मा, प्राकृतत्वाच्च सूत्रे स्त्रीलिङ्गनिर्देशः। तस्य चोपयोगलक्षणत्वात्सामान्येनैकविधत्वेऽप्युपाधिभेदादष्टधात्वं, तत्र ( दवियायत्ति ) ॥ द्रव्यं त्रिकालानुगाम्युपसर्जनीकृतकषायादिपर्यायं तद्रूप आत्मा द्रव्यात्मा, सर्वेषां जीवानां ( कसायायत्ति ) क्रोधादिकषायविशिष्ट आत्मा कषायात्मा, अक्षीणानुपशान्तकषायाणां ( जोगाय त्ति ) योगा मनःप्रभृतिव्यापारास्तत्प्रधान आत्मा योगात्मा, योगवतामेव ( उवओगाय त्ति ) उपयोगः साकारानाकारभेदस्तत्प्रधान आत्मा उपयोगात्मा, सिद्धसंसारिस्वरूपः सर्वजीवानां । अथवा विवक्षितवस्तूपयोगापेक्षयोपयोगात्मा(णाणाय त्ति)ज्ञानविशेषत उपसर्जनीकृतदर्शनादिरात्मा ज्ञानात्मा सम्यग्दृष्टेः एवं दर्शनात्मादयोऽपि नवरं दर्शनात्मा सर्वजीवानां, चारित्रात्मा विरतानां वीर्यमुत्थानादि तदात्मा सर्वसंसारिणामिति । उक्तंच--जीवानां द्रव्यात्मा ज्ञेयः सर्वकषायिणां कषायात्मा। योगः संयोगिनां पुनरुपयोगः सर्वजीवानाम॥१॥ ज्ञानं सम्यग्दृष्टेर्दर्शनमथ भवति सर्वजीवानां । चारित्रं विरतानां तु सर्वसंसारिणां वीर्यमिति ॥ भ० टी० श० १२ उ० १० ॥

एवमष्टधात्मानं प्ररूप्याऽथ यस्यात्मभेदस्य यदन्यदात्मभेदान्तरं युज्यते यच्च न युज्यते तस्य तद्दर्शयितुमाह—

जस्स णं भन्ते ! दवियाता तस्स णं कसायाता, जस्स कसायाता तस्स दवियाता ? गोयमा ! जस्स दवियाता तस्स कसायाता सिय अत्थि सिय णत्थि, जस्स पुण कसायाता तस्स दवियाता णियमं अत्थि ॥ भ०श०१२उ० १० ॥

जस्सणमित्यादि । इहाष्टौ पदानि स्थाप्यन्ते तत्र प्रथमपदं शेषैः सप्तभिः सह चिन्त्यते-तत्र यस्य जीवस्य द्रव्यात्मा द्रव्यात्मत्वं जीवत्वमित्यर्थः तस्य कषायात्मा स्यादस्ति कदाचिदस्ति सकषायावस्थायां स्यान्नास्ति कदाचिन्नास्ति क्षीणोपशान्तकषायावस्थायां, यस्य पुनः कषायात्माऽस्ति तस्य द्रव्यात्मत्वं जीवत्वं नियमादस्ति जीवत्वं विना कषायाणामभावादिति, ॥ भ० टी० श० १२ उ० १० ॥

जस्स णं भंते ! दवियाता तस्स जोगाता एवं जहा दवियाता कसायाता भणिया तहा दवियाता जोगायाया वि भाणियव्वा ॥ भ० मू० १० श० १२ उ०

तथा यस्य द्रव्यात्मा तस्य योगात्मास्ति योगवतामिव नास्ति चायोगिसिद्धानामिव, तथा यस्य योगात्मा तस्य द्रव्यात्मा नियमादस्ति जीवत्वं विना योगानामभावादेतदेव पूर्वसूत्रोपमानेन दर्शयन्नाह—एवं जहा दवियायेत्यादि ॥ भ० टी० श० १२ उ० १० ॥

जस्स णं भंते ! दवियाता तस्स उवओगाता एवं सव्वत्थ पुच्छा भाणियव्वा, गोयमा ! जस्स दवियाता तस्स उवओगाया णियमं अत्थि, जस्स वि उवओगाता तस्स वि दवियाता णियमं अत्थि जस्स दवियाता तस्स णाणाता भयणाए, जस्स पुण णाणाता तस्स दवियाता णियमं अत्थि । जस्स दवियाता तस्स दंसणाता णियमं अत्थि, जस्स वि दंसणाता तस्स दवियाता णियमं अत्थि जस्स दवियाता तस्स चरित्ताया भयणाए, जस्स पुण चरित्ताता तस्स दवियाता णियमं अत्थि । एवं वीरियाताए वि समं ॥ भ० मू० श० १२ उ० १० ॥

तथा यस्य जीवस्य द्रव्यात्मा तस्य नियमादुपयोगात्मा यस्याप्युपयोगात्मा तस्य नियमाद् द्रव्यात्मा एतयोः परस्परेण अविनाभूतत्व यथा सिद्धस्य, तदन्यस्य च द्रव्यात्मास्त्युपयोगात्मा चोपयोगलक्षणत्वाज्जीवानामेतदेवाह ( जस्स दवियायेत्यादि ) तथा ( जस्स दवियाता तस्स णाणाया भयणाए, जस्स पुण णाणाया तस्स दवियाया नियमं अत्थि त्ति ) यस्य जीवस्य द्रव्यात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग्दृष्टीनां, स्यान्नास्ति यथा मिथ्यादृष्टीनांमित्येवं भजना, यस्य तु ज्ञानात्मा तस्य द्रव्यात्मा नियमादस्ति यथा सिद्धस्येति, ॥ तथा ॥ ( जस्स दवियाया तस्स दंसणाया नियमं अत्थि त्ति ) ॥ यथा सिद्धस्य केवलदर्शनं ॥ ( जस्स वि दंसणाया तस्स दवियाया नियमं

अत्थित्ति ॥ यथा चक्षुर्दर्शनादि दर्शनवतां जीवत्वमिति, तथा जस्स दवियाया तस्स चरित्ताया भयणाए त्ति॥ यतः सिद्धस्याविरतस्य वा द्रव्यात्मत्वे सत्यपि चरित्रात्मा नास्ति विरतानां चास्तीति भजनेति ( जस्स पुण चरित्ताया तस्स दवियाया नियमं अत्थि त्ति ) चारित्रिणां जीवत्वाव्यभिचारित्वादिति ॥ एवं ( वीरियायाए वि समं ति ) यथा द्रव्यात्मनश्चारित्रात्मना सह भजनोक्ता, नियमश्च एवं वीर्यात्मनापि सहेति तथाहि—यस्य द्रव्यात्मा तस्य वीर्यात्मा नास्ति यथा सकरणवीर्यापेक्षया सिद्धस्य, तदन्यस्य त्वस्तीति भजना, वीर्यात्मनस्तु द्रव्यात्मास्त्येव यथा संसारिणामिति ॥ ७ ॥ भ० टी० श० १२ उ० १०॥

अथ कषायात्मनः सहान्यानि पदानि चिन्त्यन्ते—

जस्स णं भंते ! कसायाता तस्स जोगाया पुच्छा गोयमा ! जस्स कसायाता तस्स जोगाता णियमं अत्थि, जस्स पुण जोगाया तस्स कसायाता सिय अत्थि सिय णत्थि । एवं उवओगाए वि समं कसायाता णेयव्वा । कसायाता णाणाता य परोप्परं दोवि भइयव्वाओ, जहा कसायाया य उवओगाया य तहा कसायाया दंसणाता य कसायाता चरित्ताता य दोवि परोप्परं भइयव्वाओ, जहा कसायाता जोगाता तहा कसायाता य भाणियव्वाओ ॥ भ० मू० श० १२ उ० १० ॥

( जस्स णमित्यादि ) यस्य कषायात्मा तस्य योगात्माऽस्त्येव न हि सकषायोऽयोगी भवति यस्य तु योगात्मा तस्य कषायात्मा स्याद्वा न वा । सयोगानां सकषायाणामकषायाणां च भावादिति । एवं ( उवओगायाए वीत्यादि ) अयमर्थः यस्य कषायात्मा तस्योपयोगात्मावश्यं भवत्युपयोगरहितस्य कषायाणामभावात् यस्य पुनरुपयोगात्मा तस्य कषायात्मा भजनया उपयोगात्मतायां सत्यामपि कषायिणामेव कषायात्मा भवति । निष्कषायाणां तु नासाविति भजनेति, तथा ( कसायाया य णाणाया य परोप्परं दोवि भइयव्वाओ त्ति ) कथं यस्य कषायात्मा तस्य ज्ञानात्मा स्यादस्ति स्यान्नास्ति, यतः कषायिणः सम्यग्दृष्टेर्ज्ञानात्मास्ति मिथ्यादृष्टेस्तु तस्य नास्त्यसाविति भजना । तथा यस्य ज्ञानात्मास्ति तस्य कषायात्मा स्यादस्ति स्यान्नास्ति, ज्ञानिनां कषायभावात् तदभावाच्चेति भजनेति ॥ जहा कसायाया उवओगाया तहा कसायाया य दंसणाया य त्ति अतिदेशः, तस्माच्चेदं लब्धं ( जस्स कसायाया तस्स दंसणाया नियमं अत्थि ) दर्शनरहितस्य घटादेः कषायात्मनोऽभावात् ( जस्स पुण दंसणाया तस्स कसायाया सिय अत्थि सिय नत्थि ) दर्शनवतां कषायसद्भावात्तदभावाच्चेति, दृष्टान्तार्थस्तु प्राक् प्रसिद्ध एवेति ( कसायाया य चरित्ताया य दोवि परोप्परं भइयव्वाओत्ति ) भजना चैवं यस्य कषायात्मा तस्य चारित्रात्मा स्यादस्ति स्यान्नास्ति, कथं कषायिणां चारित्रस्य सद्भावात्, प्रमत्तयतीनामिव तदभावाच्चासंयतानामिवेति, तथा यस्य चारित्रात्मा तस्य कषायात्मा स्यादस्ति स्यान्नास्ति, कथं सामायिकादिचारित्रिणां कषायाणां भावाद्यथाख्यातचारित्रिणां च तदभावादिति ॥ जहा ( कसायाया य जोगाया य तहा कसायाया य वीरियाया य भाणियव्वाओ त्ति )दृष्टान्तः प्राक् प्रसिद्धो दार्ष्टान्तिकस्त्वेवं यस्य कषायात्मा तस्य वीर्यात्मा नियमादस्ति, न हि कषायवान् वीर्यविकलोऽस्ति, यस्य पुनर्वीर्यात्मा तस्य कषायात्मा भजनया, यतो वीर्यवान् सकषायोपि स्याद्यथाऽसंयतः अकषायोऽपि स्याद्यथाऽकेवलीति अथ योगात्माग्रेतनपदैः पञ्चभिः सह चिन्तनीयस्तत्र च लाघवार्थमतिदिशन्नाह ( एवं जहा कसायाया वत्तव्वया) भणिया तहा जोगायाए वि उवरिमाहिं समं भाणियव्वात्ति० ॥ सा चैवं यस्य योगात्मा तस्योपयोगात्मा नियमाद्यथा सयोगानां, यस्य पुनरुपयोगात्मा तस्य योगात्मा स्यादस्ति यथा सयोगानां स्यान्नास्ति यथा योगिनां सिद्धानां चेति । तथा यस्य योगात्मा तस्य ज्ञानात्मा स्यादस्ति सम्यग्दृष्टीनामिव, स्यान्नास्ति मिथ्यादृष्टीनामिव, यस्य ज्ञानात्मा तस्यापि योगात्मा स्यादस्ति, योगिनामिव, स्यान्नास्ति अयोगिनामिवेति २ तथा यस्य योगात्मा तस्य दर्शनात्मास्त्येवेति योगिनामिव, यस्य च दर्शनात्मा तस्य योगात्मा स्यादस्ति योगवतामिव स्यान्नास्त्ययोगिनामिव ३ तथा यस्य योगात्मा तस्य चरित्रात्मा स्यादस्ति विरतानामिव, स्यान्नास्त्यविरतानामिव, यस्यापि चारित्रात्मा तस्य योगात्मा स्यादस्ति सयोगचारित्रवतामिव, स्यान्नास्त्ययोगिनामिवेति, वाचनान्तरे पुनरिदमेवं दृश्यते (जस्स चरित्ताया तस्स जोगाया नियमं ति) तत्र च चारित्रस्य प्रत्युपेक्षणादिव्यापाररूपस्य विवक्षितत्वात्तस्य च योगाविनाभावित्वाद्यस्य चारित्रात्मा तस्य योगात्मा नियमादित्युच्यत इति४ तथा यस्य योगात्मा तस्य वीर्यात्मास्त्येव योगसद्भावे वीर्यस्यावश्यंभावात्, यस्य तु वीर्यात्मा तस्य योगात्मा भजनया यतो वीर्यविशेषवान् सयोग्यपि स्यात् यथा सयोगिकेवल्यादिरयोग्यपि स्याद्यथाऽयोगिकेवलीति ॥ भ० टी० श० १२ उ० १० ॥

अथोपयोगात्मना सहान्यानि चत्वारि चिन्त्यन्ते । तत्रातिदेशमाह—

जहा दवियाताए वत्तव्वया भणिया तहा उवओगाताए वि उवरिल्लाहिं समं भाणियव्वा भ० मू० श० १२ उ० १० ॥

एवं च भावना कार्या यस्योपयोगात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग्दृशां, स्यान्नास्ति, यथा मिथ्यादृशां, यस्य च ज्ञानात्मा तस्यावश्यमुपयोगात्मा सिद्धानामिवेति १ तथा यस्योपयोगात्मा तस्य दर्शनात्मास्त्येव, यस्यापि दर्शनात्मा तस्योपयोगात्मास्त्येव यथा सिद्धादीनामिति २ तथा यस्योपयोगात्मा तस्य चारित्रात्मा स्यादस्ति, स्यान्नास्ति, यथा संयतानामसंयतानां च, यस्य तु चारित्रात्मा तस्योपयोगात्मास्त्येव यथा संयतानां, तथा यस्योपयोगात्मा तस्य वीर्यात्मा स्यादस्ति संसारिणामिव स्यान्नास्ति सिद्धानामिव, यस्य पुनर्वीर्यात्मा तस्योपयोगात्मास्त्येव संसारिणामिवेति ४ ॥ भ० श० ११ उ० १० ॥

अथ ज्ञानात्मना सहान्यानि त्रीणि चिन्त्यन्ते—

जस्स णाणाया तस्स दंसणाया णियमं अत्थि, जस्स पुण

दंसणाया तस्स णाणाया भयणाए । जस्स णाणाया तस्स चरित्ताया सिय अत्थि सिय णत्थि, जस्स पुण चरित्ताया तस्स णाणाया णियमं अत्थि णाणाता वीरियाता दो वि परोप्परं भयणाए ॥ भ० मू० श० १२ उ० १० ॥

तत्र यस्य ज्ञानात्मा तस्य दर्शनात्मास्त्येव सम्यग्दृशामिव, यस्य च दर्शनात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग्दृशां, स्यान्नास्ति यथा मिथ्यादृशामत एवोक्तं भयणाएत्ति, १। तथा । जस्स नाणाया तस्स चरित्ताया सिय अत्थि त्ति । संयतानामिव। सिय नत्थि त्ति असंयतानामिव जस्स पुण चरित्ताया तस्स नाणाया नियमं अत्थि त्ति । ज्ञानं विना चारित्रस्याभावादिति २ तथा । नाणायेत्यादि । अस्यार्थो यस्य ज्ञानात्मा तस्य वीर्यात्मा स्यादस्ति केवल्यादीनामिव, स्यान्नास्ति सिद्धानामिव, यस्यापि वीर्यात्मा तस्य ज्ञानात्मा स्यादस्ति सम्यग्दृष्टेरिव, स्यान्नास्ति मिथ्यादृश इवेति ३॥

अथ दर्शनात्मना सह द्वे चिन्त्येते—

जस्स दंसणाया तस्स उवरिमाओ दो वि भएणाए जस्स पुण ताओ तस्स दंसणाया णियमं अत्थि । जस्स चरित्ताया तस्स वीरियाता णियमं अत्थि, जस्स पुण वीरियाता तस्स चरित्ताया सिय अत्थि सिय णत्थि। भ० मू० श० १२ उ० १०॥

भावना चास्य—यस्य दर्शनात्मा तस्य चारित्रात्मा स्यादस्ति संयतानामिव, स्यान्नास्त्यसंयतानामिव यस्य च चारित्रात्मा तस्य दर्शनात्मास्त्येव साधूनामिवेति, तथा यस्य दर्शनात्मा तस्य वीर्यात्मा स्यादस्ति संसारिणामिव, स्यान्नास्ति सिद्धानामिव, यस्य च वीर्यात्मा तस्य दर्शनात्मास्त्येव संसारिणामिवेति २ ॥ अथान्तिमपदयोर्योजना यस्स चरित्तेत्यादि--

यस्य चारित्रात्मा तस्य वीर्यात्मास्त्येव वीर्यं विना चारित्रस्याभावात्, यस्य पुनर्वीर्यात्मा तस्य चारित्रात्मा स्याद्स्ति साधूनामिव, स्यान्नास्ति असंयतानामिवेति ॥ भ० टी० ॥ श० १२ उ० १० ॥

अधुनैषामेवात्मनामल्पबहुत्वमुच्यते ॥

एयासि णं भंते ! दवियाताणं कसायाताणं जाव वीरियायाणं कयरे कयरेहिंतो जाव विसेसाहिया वा ? गोयमा ! सव्वत्थो वा चरित्ताया णाणायाओ अणंतगुणाओ, कसायायाओ अणंतगुणाओ जोगायाओ विसेसाहियाओ, वीरियाताओ विसेसाहियाओ ॥ भ० मू० श० १२ उ० १० ॥

तत्र च सव्वत्थो वाओ चरित्तायाओत्ति ॥ चारित्रिणां संख्यातत्वात् ॥ नाणायाओ अणंतगुणाओ त्ति ॥ सिद्धादीनां सम्यग्दृशां चारित्रिभ्योऽनन्तगुणत्वात् ॥ कसायायाओ अणंतगुणाओ त्ति, । सिद्धेभ्यः कषायोदयवतामनन्तगुणत्वात् जोगायाओ विसेसाहियाओ त्ति ॥ अपगतकषायोदयैर्योगवद्भिरधिका इत्यर्थः ॥ वीरियायाओ विसेसाहियाओ त्ति ॥ अयोगिभिरधिका इत्यर्थः, अयोगिनां वीर्यवत्त्वादिति ॥ उवओगदवियदंसणायाओ तिण्णि वि तुल्लाओ विसेसाहियाओ त्ति॥ परस्परापेक्षया तुल्याः सर्वेषां सामान्यजीवरूपत्वात् वीर्यात्मभ्यः सकाशादुपयोगद्रव्यदर्शनात्मानो विशेषाधिकाः, यतो वीर्यात्मानः सिद्धाश्च मीलिता उपयोगाद्यात्मानो भवन्ति ते च वीर्यात्मभ्यः सिद्धराशिनाऽधिका भवन्तीति । भवन्ति चात्र गाथाः । "कोडीसहसपुहुत्तं जईणातो थोवियाउ चरणाया । नाणायाणंतगुणा पडुच्च सिद्धे य सिद्धाओ ॥ १ ॥ होंति कसायायाओ णंतगुणा जेण ते सरागाणं । जोगायाभणियाओ अजोगिवज्जाण तो अहिया ॥ २ ॥ जं सेलेसिगयाण वि लद्धी विरियं तओ समहियाओ । उवओगदवियदंसणसव्वजियाणं तवो अहिया"॥३॥ इति ॥ टी० ॥ भ० श० १२ उ० १० ॥

(४) भेदाः सूक्ष्माः बादराश्च यथा दशवैकालिके--

दुविहा य हुंति जीवा, सुहुमा तह वायरा य लोगंमि ।
सुहुमा य सव्वलोए दो चेव य वायरविहाणे ॥ २३३ ॥

व्या०। द्विविधाश्च द्विप्रकाराश्च च शब्दान्नवविधाश्च पृथिव्यादिद्वीन्द्रियादिभेदेन भवंति जीवाः । द्वैविध्यमाह सूक्ष्मास्तथा बादराश्च । तत्र सूक्ष्मनामकर्मोदयात् सूक्ष्माः बादरनामकर्मोदयाच्च बादरा इति लोके इति लोकग्रहणमलोके जीवभवनव्यवच्छेदार्थं तत्र सूक्ष्माश्च सर्वलोक इति च शब्दस्यावधारणार्थत्वात् सूक्ष्मा एव सर्वलोकेषु न बादराः । कचित्तेषामसंभवात् द्वे एव च पर्याप्तकाऽपर्याप्तकलक्षणे बादरविधाने बादरविधौ चशब्दात्सूक्ष्मविधाने च। तेषामपि पर्याप्तकापर्याप्तकरूपत्वादिति गाथार्थः ॥

एतदेवस्पष्टयन्नाह—

सुहुमा य सव्वलोए, परियावन्ना भवंति नायव्वा ॥
दो चेव वायराणं पज्जतियरे अ नायव्वा ॥ २३४ ॥

व्या०॥ सूक्ष्मा एव पृथिव्यादयः सर्वलोके चतुर्दशरज्ज्वात्मके पर्यायापन्ना भवन्ति ज्ञातव्याः पर्यायापन्ना इति तमेव सूक्ष्मपर्यायमापन्ना भावसूक्ष्मा न तु भूतभाविनो द्रव्यसूक्ष्मा इति भावः । तथा द्वौ भेदौ बादराणां पृथिव्यादीनां च शब्दात्सूक्ष्माणां च पर्याप्तकेतरौ ज्ञातव्यौ पर्याप्तकापर्याप्तकाविति गाथार्थः ॥ उक्ता प्ररूपणा ॥ दश० अ० ४॥

(५) तथा चाह-भाष्यकारः ॥

लक्खणमियाणि दारं चिंधं हेऊ य कारणं लिंगं ।
लक्खणमिइ जीवस्स उ आयाणाई इमं तं च ॥ ३३५ ॥

व्या० ॥ लक्षणमिदानीं द्वारमवसरप्राप्तं अस्य च प्रतिपक्षांगतया प्रधानत्वात्सामान्यतस्तावत्तत्स्वरूपमेवाह चिह्नं हेतुश्च कारणं लिंगं लक्षणमिति । तत्र चिह्नमुपलक्षणं यथा पताका देवकुलस्य हेतुर्निमित्तलक्षणं यथा कुंभकारनैपुण्यं घटसौन्दर्यस्य । कारणमुपादानलक्षणं यथा मृन्मसृणत्वं घटवलीयस्त्वस्य । लिंगं कार्यलक्षणं यथा धूमोऽग्नेः । पर्यायशब्दा वा एत इति । लक्षणमित्येतल्लक्षणं लक्ष्यतेऽनेन परोक्षं वस्त्विति कृत्वा जीवस्य पुनरादानादिलक्षणं अनेकप्रकारं इदं तच्च वक्ष्यमाणमिति गाथार्थः ॥

आयाणे परिभोगे, जोगुवओगे कसायलेसा य ।
आणापाणू इंदियबंधोदयनिज्जरा चेव ॥ २३६ ॥
चित्तं चेयणसन्ना विन्नाणं धारणा य बुद्धी य ।
ईहामई वियक्का, जीवस्स उ लक्खणा एए ॥ २३७ ॥

एतत्प्रतिद्वारगाथाद्वयमस्य व्याख्या आदानं परिभोगस्तथा योगोपयोगौ कषाया लेश्याश्च तथोदानापानौ इंद्रि-

याणि बंधोदयनिर्ज्जराश्चैव। तथा चित्तं चेतना संज्ञा विज्ञानं धारणा च बुद्धिश्च तथा ईहा मतिवितर्काः जीवस्य तु लक्षणान्येतानि। तु शब्दस्यावधारणत्वात् जीवस्यैव नाजीवस्येति प्रतिद्वारगाथाद्वयसमासार्थः। व्यासार्थस्तु।

भाष्यादवसेयस्तच्चेदं—

लक्खिज्जाइति नज्जइ, पच्चक्खयरो व जेण जो अत्थो ।

तं तस्स लक्खणं खलु धूमरेहाइव्व अग्गिस्स ॥ २३८ ॥

व्या० लक्ष्यत इति ज्ञायते कोऽसावित्याह । प्रत्यक्षोऽक्षिगोचरापन्न इतरो वा परोक्षः। येनोष्णत्वादिना योऽर्थोऽग्न्यादिस्तस्य लक्षणं खल्विति तदेव स्पष्टयति धूमौष्ण्यादिवदग्नेरिति। स ह्यौष्ण्येन प्रत्यक्षो लक्ष्यते परोक्षो धूमेनेति गाथार्थः।

तत्रादानादीनां दृष्टान्तानाह।

अयगारकूरपरसू अग्गिसुवन्नेय खीरनरवासी।

आहारो दिट्ठंता, आयाणाईण जहसंखं ॥ २३९ ॥

व्या० ॥ अयस्कारः कूरस्तथा परशु रग्निः सुवर्णं च क्षीरनरवाश्यः तथा आहारो दृष्टांता आदानादीनां प्रक्रांतानां यथासंख्यं प्रतिज्ञाघुलुंघनेन चैतदभिधानं। परोक्षार्थप्रतिपत्ति प्रति प्रायः प्रधानाङ्गता स्यापनार्थमिति गाथार्थः॥

सांप्रतं प्रयोगानाह—

देहिंदियाइरित्तो, आया खलु गज्झगाहगयओगो ।

संडासा अयपिंडो, अयकाराइव्व विन्नेओ ॥ २४० ॥

व्या० देहेंद्रियातिरिक्त आत्मा। खलु शब्दो विशेषणार्थः। कथंचिन्न सर्वथा अतिरिक्त एव तदसंवेदनादिप्रसंगादित्यनेन प्रतिज्ञार्थमाह। प्रतिज्ञा पुनरर्थेन्द्रियाण्यादेयदानानि विद्यमानादातृकाणि कुत इत्याह । ग्राह्यग्राहकप्रयोगात्। ग्राह्या रूपादयः। ग्राहकाणींद्रियाणि तेषां प्रयोगः स्वफलसाधनव्यापारस्तस्माच्च ह्यमीषां कर्मकरणभावः कर्त्तारमंतरेण स्वकार्यसाधनप्रयोगः संभवत्यनेनापि हेत्वर्थमाह। हेतुश्चादेयादानरूपत्वादिति। दृष्टांतमाह—संदंशादादानात् अयस्पिण्डादादेयात् अयस्कारादिवल्लोहकारवद्विज्ञेयः अतिरिक्तो विद्यमान आदानेत्यनेनापि दृष्टांतार्थमाह। दृष्टांतस्तु संदंशकायस्पिण्डवत्। यस्तु तदनतिरिक्तः न ततो ग्राह्यग्राहकप्रयोगः। यथा देहादिभ्य एवेति व्यतिरेकार्थः। व्यतिरेकस्तु यानि विद्यमानादातृकाणि न भवंति तान्यादानादेयरूपाण्यपि न भवंति। यथा मृतकद्रव्येंद्रियादीनीति गाथार्थः उक्तमादानद्वारम्॥ दश०॥

( ६ ) अधुना परिभोगद्वारमाह—

देहो सभोत्तिओ खलु भोज्जत्ता ओयणाइथालं व ।

अन्नप्पउत्तिगा खलु जोगा परसुव्व करणत्ता ॥ २४१ ॥

व्या० ॥ देहःसभोक्तृकः खल्विति प्रतिज्ञा भोग्यत्वादिति हेतुः । ओदनादिस्थालवत् स्थालस्थितौदनवदिति दृष्टांतः। भोग्यत्वं च देहस्य जीवेन तथानिवसतोपभुज्यमानत्वादित्युक्तं परिभोगद्वारमः॥ दश० अ० ४॥

साम्प्रतमुपयोगद्वारमाह—

उवओगा नाभावो अग्गि व्व सलक्खणापरिच्चागा ।

सकसायाणाभावो पज्जयगमणा सुवन्नं व ॥२४२॥

व्या० उपयोगात्साकारानाकारभेदभिन्नान्नाभावो जीव इति गम्यते कुत इत्याह स्वलक्षणापरित्यागादुपयोगलक्षणासाधारणात्मीयलक्षणापरित्यागात् अग्निवद्यथाऽग्निरौष्ण्यादिस्वलक्षणापरित्यागान्नाभावस्तथा जीवोऽपीति प्रयोगार्थः । प्रयोगस्तु सन्नात्मा स्वलक्षणापरित्यागादग्निवदित्युक्तमुपयोगद्वारम्। अधुना कषायद्वारमाह। सकषायत्वादचेतनविलक्षणात्मीयलक्षणक्रोधादिपरिणामोपेतत्वादित्यर्थः । नाभावो जीवः। कुत इत्याह । पर्यायगमनात् क्रोधमानादिपर्यायप्राप्तेः। सुवर्णवत् कटकादिपर्यायगमनोपेतसुवर्णवदिति प्रयोगार्थः। प्रयोगस्तुसन्नात्मा पर्यायगमनात्सुवर्णवदिति गाथार्थः । उक्तं कषायद्वारम्, इदानीं लेश्याद्वारमाह लेसाओ णाभावो परिणमणसभावओ य खीरं व। उस्सासा णाभावो समसब्भावा खउ व्व नरो ॥ २४३ ॥ व्या० लेश्यातो लेश्यासद्भावेन नाभावो जीवः किं तु भाव इति कुत इत्याह परिणमनस्वभावत्वात्कृष्णादिद्रव्यसाचिव्येन जम्बूखादकादिदृष्टान्तसिद्धतथाविधपरिणामधर्म्मत्वात् क्षीरवदिति प्रयोगार्थः प्रयोगस्तु सन्नात्मा परिणामित्वात् क्षीरवदिति गतं लेश्याद्वारं प्राणापानद्वारमाह । उच्छ्वासा दित्यचेतनधर्म्मविलक्षणप्राणापानसद्भावान्नाभावो जीवः किन्तु भाव एव इति श्रमसद्भावेन परिस्पंदोपेतपुरुषवदिति प्रयोगार्थः। प्रयोगः। पुनरत्र व्यतिरेकी द्रष्टव्यः। सात्मकं जीवच्छरीरं प्राणादिमत्वात् यत्तु सात्मकं न भवति तत्प्राणादिमदपि न भवति यथाऽऽकाशमिति गाथार्थः। उक्तं प्राणापानद्वारम्। दश०।

( ७ ) अधुनेन्द्रियद्वारमुच्यते॥

अक्खाणे याणि परत्थिगाणि वासाइ वेहकरणत्ता ।

गहवेयगानिज्जरओ कम्मस्सन्नो जहाहारो ॥ २४४ ॥

व्या०-अक्षाणींद्रियाणि एतानीति लोकप्रसिद्धानि देहाश्रयाणि परार्थानि आत्मप्रयोजनानि वास्यादिवदिह करणत्वादिह लोके वास्यादिवदिति प्रयोगार्थः । आदानान्येवेंद्रियाणि तत्किमर्थं। भेदोपन्यासः उच्यते । निर्वृत्त्युपकरणद्वारेण द्वैविध्यख्यापनार्थं ततश्च तत्रोपकरणस्य ग्रहणमिह तु निर्वृत्तेरिति। प्रयोगस्तु परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनादिवत् न चायं विशेषविरुद्धः । कर्म संबंधस्यात्मनः संघातरूपत्वाभ्युपगमात् उक्तमिंद्रियद्वारम्॥ दश०॥ इदानीं बंधादिद्वाराण्याह॥ ग्रहणवेदकानिर्ज्जरकः। कर्मणोऽन्यो यथाहार इति तत्र ग्रहणं कर्म्मणो बंधः वेदनमुदयः निर्ज्जरा क्षयः यथाहार इत्याहारविषयाणि ग्रहणादीनि न कर्त्रादिव्यतिरिक्तेन तथा कर्मणोऽपीति प्रयोगार्थः । प्रयोगस्तु विद्यमानभोक्तृकमिदं कर्म ग्रहणवेदननिर्जरणसद्भावादाहारवदिति गाथार्थः। उक्तानि बंधादिद्वाराणि। व्याख्याता च प्रथमा प्रतिद्वारगाथा॥ दश० अ० ४॥

सांप्रतं द्वितीयामधिकृत्य चित्तादिस्वरूपव्याचिख्यासयाह—

चित्तं तिकालविसयं, चेयणपच्चक्खसन्नमणुसरणं ।

विण्णाणणेगभेयं, कालमसंखेयरं धरणा ॥ २४५ ॥

व्या० ॥ चित्तं त्रिकालविषयं ओघतोऽतीतानागतवर्त्तमानग्राहिचेतनं चेतना सा प्रत्यक्षवर्त्तमानार्थग्राहिणी । संज्ञानं संज्ञा सा अनु स्मरणं इदं तदिति ज्ञानं। विविधं ज्ञानं विज्ञानमनेकभेदमनेकप्रकारं अनेकधर्मिणि वस्तुनि तथा तथाध्यवसाय इत्यर्थः। कालमसंख्येयेतरं असंख्येयं संख्येयं

वा धारणा अविच्युतिस्मृतिवासनारूपा तत्र वासनारूपा संख्येयवर्षायुषामसंख्येयं संख्येयवर्षायुषां च संख्येयमिति गाथार्थः ॥

अत्थस्स ऊहबुद्धी ईहा चेट्ठत्थअवगमो उ मई ।
संभावणत्थतक्का गुणपच्चक्खाघडोव्व त्थि ॥ २४६ ॥

व्या० ॥ अर्थस्येहा बुद्धिः संज्ञिनः परनिरपेक्षार्थपरिच्छेद इति भावः। ईहा चेष्टा किमयं स्थाणुः किं वा पुरुष इति सद्‌र्थपर्यालोचनरूपा। अर्थावगमस्त्वर्थपरिच्छेदस्तु शिरःकण्डूयनादिधर्मोपपत्तेः पुरुष एवायमित्येवंरूपा मतिः ( संभावणत्थतक्कत्ति ) प्राकृतशैल्या अर्थसंभावना । एवमेव चायमर्थ उपपद्यत इत्यादिरूपा तर्का इत्थं द्वाराणि व्याख्याय सर्वे एते चित्तादयो गुणा वर्त्तंत इति जीवाख्यगुणप्रतिपादकेन प्रयोगार्थेनोपसंहरन्नाह ॥

गुणप्रत्यक्षत्वाद्धेतोः घटवदस्तिजीव इति गम्यते। एष गाथार्थः एतदेव स्फुटयति ।

जम्हा चित्ताईया, जीवस्स गुणा हवंति पच्चक्खा ।
गुणपच्चक्खत्तणओ घडुव्व जीवो अओ अत्थि ॥ २४७ ॥

व्या० ॥ यस्माच्चित्तादयोऽनंतरोक्ता जीवस्य गुणा जीवस्य शरीरादिगुणविधर्म्मत्वात् । एते च भवंति प्रत्यक्षाः स्वसंवेदनत्वात् यतश्चैवं गुणप्रत्यक्षत्वाद्धेतोर्घटवज्जीवः । अतोऽस्तीति प्रयोगार्थः । प्रयोगस्तु सन्नात्मा गुणप्रत्यक्षत्वात् घटवन्नायं घटवदात्मनोऽचेतनत्वापादनेन विरुद्धः विरुद्धोऽसति बाधने इति वचनात् एतच्च प्रत्यक्षेणैव बाधनमिति गाथार्थः । व्याख्यातं मूलद्वारगाथाद्वयेन लक्षणद्वारम ॥ दश० अ० ४ ॥

( ९ ) अस्तित्वद्वारमिदानीं तथा चाह भाष्यकारः ।

अत्थित्ति दारमहुणा जीवस्सइ अत्थि विज्जए नियमा ।
लोआययमयघायत्थमुच्चए तत्थिमो हेऊ ॥ २४८ ॥

व्या० अस्तीति द्वारमधुना सांप्रतमवसरप्राप्तं। तत्रैतदुच्यते । जीवः सन् पृथिव्यादिविकारदेहमात्ररूपः सन्निति सिद्धिसाध्यता । न तु ततोऽन्योस्तीत्याशङ्कापनोदायाह । अस्त्यन्यश्चैतन्यरूपस्तदपि मातृचैतन्योपादानं भविष्यति परलोकयायी तु न विद्यत इति मोहापोहायाह विद्यते नियमान्नियमेन तथाचाह लोकायतमघातार्थं नास्तिकाभिप्रायनिराकरणार्थमुच्यते एतत्तस्य चानंतरोदित एवाभिप्राय इति सफलानि विशेषणानि तत्र लोकायतमताविघाते कर्त्तव्ये अयं वक्ष्यमाणो हेतुः अन्यथानुपपत्तिरूपो युक्तिमार्ग इति गाथार्थः ।

जो चिंतेइ सरीरे नत्थि अहं स इव होइ जीवोत्ति ।
नहु जीवम्मि असंते संयसे उप्पायओ अन्नो ॥ २४९ ॥

व्या० यश्चिंतया न शरीरे अत्र लोकप्रतीतेनास्त्यहं स एव चिंतयिता भवति जीव इति कथमेतदेवमित्याह । न यस्माज्जीवे असति मृतदेहादौ संशयोत्पादकोऽन्यः प्राणादिश्चैतन्यरूपत्वात्संशयस्येति गाथार्थः ।

एतदेव भावयति—

जीवस्स एस धम्मो, जा ईहा अत्थि नत्थि वा जीवो ।
खाणुमणुस्सणुगया, जह ईहा देवदत्तस्स ॥२५०॥

व्या०जीवस्यैष स्वभाव एष धर्मः या ईहा सदर्थपर्यालोचनात्मिका किं विशिष्टेत्याह । अस्ति नास्ति वा जीव इति । लोकप्रसिद्धं निदर्शनमाह। स्थाणुमनुष्यानुगता किमयं स्थाणुः किं वा पुरुष इत्येवंरूपा । यथेहा देवदत्तस्य जीवतो धर्म्म इति गाथार्थः ॥

प्रकारांतरेणैतदेवाह—

सिद्धं जीवस्स अत्थित्तं सद्दादेवाणुमीयए ।
नासओ भुवि भावस्स सद्दो हवइ केवलो ॥ २५१ ॥

व्या० ॥ सिद्धं प्रतिष्ठितं जीवस्योपयोगलक्षणस्यास्तित्वं कुत इत्याह । शब्दादेव जीव इत्यस्मादनुमीयते कथमेतदेवमित्याह नासत इति। न असतः अविद्यमानस्य भुवि पृथिव्यां भावस्य पदार्थस्य शब्दो भवति वाचक इति खरविषाणादिशब्दैर्व्यभिचारमाशंक्याह । केवलः शुद्धोऽन्यपदासंसृष्टः। खरादिपदसंसृष्टाश्च विषाणादिशब्दा इति गाथार्थः एतद्विवरणायैवाह भाष्यकारः ।

अत्थित्ति निव्विगप्पो, जीवो नियमाउ सद्दओ सिद्धी ।
कम्हा सुद्धपयत्ताघडखरसिंगाणुमाणाओ ॥ २५२ ॥

व्या० ॥ अस्तीति निर्विकल्पो जीवः निर्विकल्प इति निःसंदिग्धः नियमात् नियमेनैव प्रतिपत्रपेक्षया शब्दतः सिद्धिः वाचकाद्वाच्यप्रतीतेः । एतदेव प्रश्नद्वारेणाह । कस्मात्कुत एतदेवमित्याह । शुद्धपदत्वात्केवलपदत्वाज्जीवशब्दस्य घटखरशृंगानुमानादनुमानशब्दो दृष्टांतवचनः घटखरशृंगदृष्टांतादिति प्रयोगार्थः प्रयोगस्तु । मुख्येनार्थेनार्थवान् जीवशब्दः शुद्धपदत्वात् घटशब्दवत् यस्तु मुख्येनार्थेनार्थवान्न भवति स शुद्धपदमपि न भवति । यथा खरशृंगशब्द इति गाथार्थः ॥

पराभिप्रायमाशंक्य परिहरन्नाह,, ॥

चोयगसुद्धपयत्ता सिद्धी जइ एव सुण्णसिद्धि अम्हं पि ।
तं न भवइ संते णं जं सुन्नं सुन्नगेहं च ॥ २५३ ॥

व्या० ॥ शुद्धपदत्वात्सिद्धिर्यदिजीवस्य एवं तर्हि शून्यसिद्धिरस्माकमपि शून्यनष्टशब्दस्यापिशुद्धपदत्वादित्यभिप्रायः । अत्रोत्तरमाह तन्न भवति यदुक्तं परेण । कुत इत्याह । सता विद्यमानेन पदार्थेन यद्यस्मात् शून्यं शून्यमुच्यते । किं वदित्याह शून्यगृहमिव तथा हि । देवदत्तेन रहितं शून्यगृहमुच्यते। निवृत्तो घतो नष्ट इति न त्वनयोर्जीवशब्दस्य जीववदवाशिष्टं वाच्यमस्तीति गाथार्थः ॥

प्रकारांतरेणास्तित्वपक्षमेव समर्थयन्नाह—

मिच्छाभवेउ सव्वत्था जे केई पारलोइया ।
कत्ताचेवोपभोत्ताय जइ जीवो न विज्जइ ॥ २५४ ॥

व्या०। मिथ्याभवेयुरनृताः स्युः सर्वेऽर्था ये केचन पारलौकिकादानादयः । यदि किमित्याह। कर्त्ता चैव कर्म्मणोपभोक्ता च तत्फलस्य यदि जीवो न विद्यते परलोकयायीति गाथार्थः।

एतदेवाव्युत्पन्नशिष्यानुग्रहार्थं स्पष्टतरमाह ॥

पाणिदया तव नियमा वम्हं दिक्खा य इंदियनिरोहो ।
सव्वं निरत्थमेयं जइ जीवो न विज्जई ॥ २५५ ॥

व्या० ॥ प्राणिदया तपोनियमाः करुणोपवासहिंसाविरत्यादिरूपाः तथा ब्रह्म ब्रह्मचर्यं दीक्षा च योगलक्षणा

इंद्रियनिरोधः प्रव्रज्याप्रतिपत्तिरूपः सर्वं निरर्थकं निष्फलमेतत् यदि जीवो न विद्यते परलोकयायीति गाथार्थः ॥ किंच शिष्टाचरितो मार्गः शिष्टैरनुगंतव्य इति ॥

तन्मार्गख्यापनायाह–

लोइया वेइया चेव तहा सामाइया विऊ ।

निच्चो जीवो पि गे देहो इइ सव्वे ववत्थिया ॥ २५६ ॥

व्या० लोके भवो लोके वा विदिता इति लौकिका इतिहासादिकर्त्तारः । एवं वैदिकाश्चैव त्रैविद्यवृद्धास्तथा सामायिकास्त्रिपिटकादिसमयवृत्तयो विद्वांसः पंडिताः नित्यो जीवो नानित्यः । एवं पृथग् देहाच्छरीरादित्येवं सर्वे व्यवस्थिता नान्यथेति गाथार्थः ॥

एतदेव व्याचष्टे–

लोगे अच्छेज्ज भेज्जो वेए सपुरीसदद्धगसियालो ।

समए ज्जहमासिगओ तिविहो दिव्वाइ संसारो ॥ २५७ ॥

व्या० ॥ लोके अच्छेद्योऽभेद्य आत्मा पठ्यते यथोक्तं गीतासु ॥ अच्छेद्योऽयमभेद्योऽयमविकार्योऽयमुच्यते ॥ नित्यः सर्वगतः स्थाणुरचलोयं सनातनः ॥ इत्यादि तथा वेदे सपुरीषो दग्धः शृगालः पठ्यत इति ॥ यथोक्तं ॥ शृगालो वै एष जायते यः सपुरीषो दह्यते अथापुरीषो दह्यते आत्तोधुका अस्य प्रजाः प्रादुर्भवंतीत्यादि ॥ तथा समये "अहमासीद्विज इति पठ्यते" तथा च बुद्धवचनं ॥ अहमासं भिक्षवो हस्ती पड्दंतः शंखसंनिभः ॥ शुकः पंजरवासी च शकुंतो जीवजीवकः ॥ इत्यादि तथा त्रिविधो दिव्यादि संसारः कैश्चिदिष्यते । देवमानुषतिर्यग्भेदेन । आदिशब्दाच्चतुर्विधः कैश्चिन्नारकाधिक्येनेति गाथार्थः ॥

अत्रैव प्रकारांतरेण तदस्तित्वमाह–

अत्थि सरीरविहाया पइनियया गारयाइ भावओ ।

कुंभस्स जह कुलालो, सो मुत्तो कम्मजोगाओ ॥ २५८ ॥

॥ व्या० ॥ अस्ति शरीरस्यौदारिकादेर्विधाता विधातेति कर्त्ता । कुत इत्याह–प्रतिनियताकारादिसद्भावात् आदिमत्प्रतिनियताकारत्वादित्यर्थः । दृष्टांतमाह कुंभस्य यथा कुलालो विधाता कुलालवदेवमसावपि मूर्त्तः प्राप्नोतीति विरुद्धमाशंक्य परिहरन्नाह ॥ असावात्मा यः शरीरविधाता असौ मूर्त्तः कर्मयोगादिति मूर्तकर्मसंबंधादिति गाथार्थः ।

अत्रैव शिष्यव्युत्पत्तये अन्यथा तद्ग्रहविधिमाह ॥

फरिसेण जहा वाऊ, गिज्झई कायसंसिओ ।

नाणाईहिं तहा जीवो, गिज्झई कायसंसिओ २५९ ॥

॥ व्या० ॥ स्पर्शेन शीतादिना यथा वायुर्गृह्यते कायसंसृतो देहसंगतः अदृश्योऽपि तथा ज्ञानादिभिर्ज्ञानदर्शनेच्छादिभिर्जीवो गृह्यते कायसंसृतो देहसंगत इति गाथार्थः । असकृदनुमानादस्तित्वमुक्तं जीवस्यानुमानं च प्रत्यक्षपूर्वकं न चैनं केचन पश्यंतीति ततश्चाशोभनमेतदित्याशंक्याह ।

अणिंदियगुणं जीवं दुन्नेयं मंसचक्खुणा ।

सिद्धा पासंति सव्वन्नू नाणसिद्धा य साहुणो ॥ २६० ॥

॥ व्या० ॥ अतींद्रियगुणं अविद्यमानरूपादींद्रियग्राह्यगुणं जीवममूर्त्तत्वादेव धर्मकं दुर्ज्ञेयं दुर्लक्ष्यं मांसचक्षुषा छद्मस्थेन पश्यंति सिद्धाः सर्वज्ञाः अंजनसिद्धादिव्यवच्छेदार्थं सर्वज्ञग्रहणं ततश्च ऋषभादय इत्यर्थः ज्ञानसिद्धाश्च साधवो भवस्थकेवलिन इति गाथार्थः ।

सांप्रतमागमादस्तित्वमाह—

अत्तवयणं उ सत्थं दिट्ठा य ततो अइंदियाणं पि ।

सिद्धी गहणाईणं, तहेव जीवस्स विन्नेया ॥ २६१ ॥

व्या० ॥ आप्तवचनं तु शास्त्रं आप्तो रागादिरहितः तु शब्दोऽवधारणे आप्तवचनमेव अनेन अपौरुषेयव्यवच्छेदमाह तस्यासंभवादिति । दृष्टा च तत इत्युपलब्धा च तत आप्तवचनशास्त्रात् अतींद्रियाणामपि इंद्रियगोचरातिक्रांतानामपि सिद्धिर्ग्रहणादीनामिति उपलब्धिश्चंद्रोपरागादीनामित्यर्थः तथैव जीवस्य विज्ञेयेति । अतींद्रियस्याप्याप्तवचनप्रामाण्यादिति गाथार्थः । मूलद्वारगाथायां व्याख्यातमस्तित्वद्वारम ॥ दश० अ० ४ ॥

( १० ) आत्मनोऽस्तित्वे आचाराङ्गसूत्रम्—

णेव सयं लोगं अब्भाइक्खेज्जा णेव अत्ताणं अब्भाइक्खेज्जा ।

जे लोयं अब्भाइक्खइ से अत्ताणं अब्भाइक्खइ जे अत्ताणं अब्भाइक्खइ से लोयं अब्भाइक्खइ ॥ आचा० ॥

नैवात्मानं शरीराधिष्ठातारं ज्ञानगुणं प्रत्यात्मसंवेद्यं प्रत्याचक्षीत तस्य शरीराधिष्ठातृत्वेनाहमिदं शरीरं केनचिदभिसंधिमता तथात्यक्तमिदं शरीरं केनचिदभिसन्धिमतैवेत्येवमादिभिर्हेतुभिः प्रसाधितत्वान्न च साधितसाधनं पिष्टपेषणवत् विद्वज्जनमनांसि रंजयति ॥ आचा० टी० ॥

( स्थानाङ्गटीकायामपि ) आत्मा न विद्यते तस्य प्रत्यक्षादिभिरनुपलभ्यमानत्वात् । तथाहि विद्यमानकर्तृकमिदं शरीरम्भोगत्वादोदनादिवद्व्योमकुसुमं विपक्षः स च कर्त्ता जीव इति न त्वोदनकर्तृवन्मूर्त आत्मा सिद्ध्यतीति साध्यविरुद्धो हेतुरिति नैवं संसारिणो मूर्त्तत्वेनाप्यभ्युपगमात् आह च "जो कत्ता सो जीवो सज्झविरुद्धोत्ति ते मई होज्जा । मोत्ताइ य संगाओ, तत्तो संसारिणो दोसो त्ति" ॥ १ ॥ न चायमेकान्तो यदुत लिङ्ग्यविनाभूतलिङ्गोपलम्भव्यतिरेकेणानुमानस्यैकान्ततोऽप्रवृत्तिरिति हसितादिलिङ्गविशेषस्य ग्रहाख्यलिंग्यविनाभावग्रहणमन्तरेणापि गमकत्वदर्शनात् । न च देह एव ग्रहो येनाऽन्यदेहे दर्शनमविनाभावग्रहणनियामकं भवतीति । उक्तञ्च "सो नेगंतो जम्हा लिंगेहिं समं अदिट्ठपुव्वो वि । गहलिंगदरिसणाओ, गहाणुमेओ सरीरमिति ॥ १ ॥ आगमगम्यत्वं त्वात्मन एगे आया अत एव वचनान्न चास्यागमान्तरैर्विसंवादः सम्भावनीयः । सुनिश्चिताप्तप्रणीतत्वादस्येति । बहुवक्तव्यमत्र तत्तु स्थानांतरादवसेयमिति किंचात्माभावे जातिस्मरणादयस्तथा प्रेतीभूतपितृपितामहादिकृतानुग्रहोपघातौ च न प्राप्नुयुरिति ॥ स्था० अ० १ ॥

( ११ ) तथा च विशेषावश्यके इन्द्रभूतिमुद्दिश्य भगवता महावीरेणोक्तम्—

जीवे तुह संदेहो पच्चक्खं जं न घिप्पइ घडोव्व ।

अच्चत्ता पच्चक्खं च नत्थि लोए खपुप्फं च ॥

आयुष्मन्निन्द्रभूते तवैष संदेहः । किमयमात्मा अस्ति नास्ति वा उभयहेतुसद्भावात्तत्र नास्तित्वहेतवोऽमी नास्त्यात्मा प्रत्यक्षेणात्यंतमगृह्यमाणत्वादिह यदत्यंताप्रत्यक्षं तल्लोके नास्त्येव यथा खपुष्पं यत्त्वस्ति तत्प्रत्यक्षेण गृह्यत एव यथा घट इत्यसौ व्यतिरेकदृष्टांतः अणवोऽपि अप्रत्यक्षाः किं तु घटादिकार्यतया परिणतास्ते प्रत्यक्षत्वमुपयांति पुनरेवमा-

त्मा कदाचिदपि भावप्रत्यक्षमुपगच्छत्यतोऽत्रात्यंतविशेषणमिति ॥

एवं च मन्यसे त्वं किमित्याह–

न य सो णुमाणगम्मो जम्हा पच्चक्खपुव्वयं तंमि ।

पुव्वोबलद्धसंबंधसरणउलिंगलिंगीणं ॥

न चासावात्मानुमानं प्रत्यक्षपूर्वकं वर्त्तते कुत इत्याह ॥ पुव्वोबलद्धेत्यादि लिंग्यते गम्यतेऽतीन्द्रियार्थोऽनेनेति लिंगं अथ वा लीनं तिरोहितमर्थं गमयतीति लिंगं धूमकृतकत्वादिकं तदस्यास्तीति लिंगी वह्न्यनित्यत्वादिस्तयोर्लिंगलिंगिनोर्यः पूर्व महानसादौ प्रत्यक्षादिना उपलब्धकार्यकारणभावादिकः संबंधस्तस्य यत् स्मरणं तस्मादिति । इदमुक्तं भवति । पूर्वं महानसादावग्निधूमयोर्लिंगिलिंगयोरन्वयव्यतिरेकवंतमविनाभावमध्यक्षतो गृहीत्वा तत उत्तरकालं क्वचित्कांतारपर्वतनितंबादौ गगनालंबिनीं धूमलेखामवलोक्य प्राग्गृहीतं संबंधमनुस्मरति ॥ तद्यथा । यत्र २ धूमस्तत्र २ प्रागहं वह्निमद्राक्षं यथा महानसादौ धूमश्चात्र दृश्यते तस्माद्वह्निनापीह भवितव्यमित्येवं लिंगग्रहणसंबंधस्मरणाभ्यां तत्र प्रमाता हुतभुजमवगच्छति न चैवमात्मना लिंगिना सार्द्धं कस्यापि लिंगस्य प्रत्यक्षेण संबंधः सिद्धोऽस्ति यतः तत्संबंधमनुस्मरतः पुनस्तल्लिंगदर्शनाज्जीवसंप्रत्ययः स्याद्यदि पुनर्जीवलिंगयोः प्रत्यक्षतः संबंधसिद्धिः स्यात्तदा जीवस्यापि प्रत्यक्षत्वाप्राप्त्यानुमानवैयर्थ्यं स्यात्तत एव तत्सिद्धेरिति ॥

एतदेवाह–

न य जीवलिंगसंबंधदरिसणमभूजउ पुणो सरउं ।

तल्लिंगदरिसणाउ जीवे संपच्चओ होज्जा ॥

न च वक्तव्यं सामान्यतो दृष्टादनुमानादादित्यादिगतिवज्जीवः सिध्यति यथा गतिमानादित्यो देशांतरप्राप्तो देवदत्तवदिति यथाहं । तद्देवदत्ते दृष्टांतधर्मिणि सामान्येन देशांतरप्राप्तिगतिपूर्विका प्रत्यक्षेणैव निश्चिता सूर्योपि तां तथैव प्रमाता साधयतीति युक्तं न चैवमत्र क्वचिदपि दृष्टांते जीवसत्त्वेनाविनाभूतः कोपि हेतुरध्यक्षेणोपलक्ष्यते इत्यतो न सामान्यतो दृष्टादप्यनुमानात्तद्गतिरिति ।

न चागमगम्योऽपि जीव इति दर्शयति ।

नागमगम्मो वि तओ भिज्जइ जं नागमोणुमाणाउ ।

नइ कीसइ पच्चक्खो जीवो जस्सागमो वयणं ॥

न चागमगम्योऽपि तत्कोऽसौ जीवो यद्यस्मादागमोऽप्यनुमानान्न भिद्यते परमार्थतस्तु तस्याप्यनुमानत्वात्तथाहि ॥ शाब्दप्रमाणमागम उच्यते शब्दश्च द्विविधो दृष्टार्थविषयोऽदृष्टार्थविषयश्च । तत्र दृष्टार्थविषया शब्दाद्या प्रतीतिः सा वस्तुतोऽनुमानसमुत्थैव यतः क्वचित् प्रथमं पृथुबुध्नोदरोर्ध्वकुंडलोष्ठायतवृत्तग्रीवादिमति घटपदार्थे घटशब्दं प्रयुज्यमानं दृष्ट्वा तदुत्तरकालं क्वापि घटमानयेत्यादिशब्दं श्रुत्वा पृथुबुध्नोदरादिमदर्थ एव घट उच्यते । तथाभूत एव पदार्थे घटशब्दप्रयोगप्रवृत्तेः यथा पूर्वं कुंभकारापणादौ घटशब्दश्चायामिदानीमपि श्रूयते तस्मात्तथाभूतस्यैव पृथुबुध्नोदरादिमतः पदार्थस्य मया आनयनादिक्रियाकर्त्तव्येत्यनुमानं विधाय प्रमाता घटानयनादिक्रियां करोतीत्येवं दृष्टार्थविषयं शाब्दं प्रमाणं वस्तुतो नानुमानाद्भिद्यते न चैवमसावात्मशब्दः शरीरादतेऽन्यत्र प्रयुज्यमानः क्वचिदुपलब्धो यत्र खल्वात्मशब्दश्रवणादात्मेति प्रत्ययो भवेदिति । यदपि स्वर्गनरकाद्यदृष्टार्थविषयं शाब्दं प्रमाणं तदपि तत्त्वतोनुमानं नातिवर्तते । तथाहि । प्रमाणं स्वर्गनरकाद्यदृष्टार्थविषयं वचनं अविसंवादिवचनाप्तप्रणीतत्वाच्चंद्रार्कोपरागादिवचनवदित्येवमनुमानादेव तत्र प्रमाणता । न चैवंभूतमाप्तं कमपि पश्यामो यस्यात्मप्रत्यक्ष इति तद्वचनमागम इति प्रतिपद्येमहीति शेषः ॥ किं च ॥ "जंवागमा विरुद्धा परोप्परमउज्जुत्तो । सव्वप्पमाणाविसयाइ उज्जीवोत्ति तो बुद्धी" ॥ यतश्च तीर्थकानां संबंधिनः सर्वेऽप्यागमाः परस्परविरोधिनः खल्वतोऽपि संशय एवात्मनो युक्तो न तु निश्चयस्तथाहि केचिदागमा आत्मनो नास्तित्वमेव प्रतिपादयंति यदाहुर्नास्तिकाः ॥ "एतावानेव लोकोऽयं यावानिन्द्रियगोचरः । भद्रे वृकपदं पश्य यद्वदंति बहुश्रुता" इत्यादि भट्टोऽप्याह विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति । सुगतस्त्वाह ॥ "न रूपं भिक्षवः पुद्गल इत्यादि" ॥ आत्मास्तित्ववचनान्यागमेषु श्रूयंते यथा च वेदः । न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्त्यशरीरं वा वसंतं प्रियाप्रिये न स्पृशत इति" तथा "अग्निहोत्रं जुहुयात्स्वर्गकाम" इत्यादि॥कापिलागमे तु प्रतिपाद्यते ॥ अस्ति पुरुषः अकर्ता निर्गुणो भोक्ता चिद्रूप इत्यादि तस्मादागमानां परस्परविरुद्धत्वान्नागमप्रमाणादप्यात्मसत्त्वसिद्धिः ॥ इदं च वैशेषिकमतेन प्रत्यक्षानुमानागमलक्षणं प्रमाणत्रयमुपन्यस्तं एतच्च स्वयं द्रष्टव्यं । उपमाप्रमाणगम्योऽपि जीवो न भवति तत्र हि यथा गौस्तथा गवय इत्यादावेव सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति न चेहाऽन्यः कश्चित् त्रिभुवनेप्यात्मसदृशः पदार्थोऽस्ति यद्दर्शनादात्मानमवगच्छामः कालाकाशदिगादयो जीवतुल्या विद्यंते इति चेन्न तेषामपि विवादास्पदीभूतत्वेन तदवच्छिन्नत्वात् ॥ अर्थापत्तिसाध्योऽपि जीवो न भवति न हि दृष्टः श्रुतो वा कोऽप्यर्थ आत्मानमंतरेण नोपपद्यते यद्बलात्तं साधयामस्तस्मात्सर्वप्रमाणविषयातीतो जीव इति तव बुद्धिः भावोपलंभप्रमाणपंचकविषयातीतत्वात् प्रतिषेधसाधकाभावात् षष्ठप्रमाणविषय एव जीव इत्यर्थः॥इति पूर्वपक्षः ॥ अथैतत्प्रतिविधानमाह–

गोयम ! पच्चक्खो च्चिय जीवो जं संसयाइविन्नाणं ।

पच्चक्खं च न सज्झं जह सुह दुक्खं सदेहम्मि ॥

गोतम ! भवतोऽपि प्रत्यक्ष एवायं जीवः किमन्येन प्रमाणांतरोपन्यासेन कोऽयं जीवो मम प्रत्यक्ष इति चेदुच्यते । यदेतत्तवैव संशयादिविज्ञानं स्वसंवेदनासिद्धं हृदि स्फुरति स एव जीवः संशयादिज्ञानस्यैव तदनन्यत्वेन जीवत्वाच्चप्रत्यक्षं तत्प्रमाणांतरेण साध्यं यथा स्वशरीर एवात्मसंवेदनासिद्धाः सुखदुःखादयः प्रत्यक्षसिद्धमपि सग्रामनगरं विश्वशून्यवादिनं प्रति साध्यत एवेति चेन्नैवं निरालंबनाः सर्वे प्रत्ययाः प्रत्ययत्वात्स्वप्नप्रत्ययवदित्यादेस्तदुद्भावितबाधकप्रमाणस्यैव तत्र निराकरणादत्र त्वात्मग्राहकः प्रत्यक्षे बाधकप्रमाणाभावादिति । इतश्चायं प्रत्यक्षो जीवः कुत इत्याह "कयवं करेमि काहं, वाह मह पच्चयाय मा ऊय ॥ अप्पा सप्पच्चक्खो तिकालकज्जोवएसाउ ॥ वा इत्यथवा कृतवानहं करोम्यहं करिष्याम्यहं उक्तवानहं ब्रवीम्यहं वक्ष्याम्यहं

ज्ञातवानहं जानेऽहं ज्ञास्याम्यहमित्यादिप्रकारेण योऽयं त्रैकालिकः कार्यव्यपदेशस्तद्विषयप्रयुज्यमानतया तत्समुत्थोऽयमहंप्रत्यय एतस्मादपि प्रत्यक्ष एवायमात्मेति प्रपद्यस्व अयं ह्यहं प्रत्ययो नानुमानिकोऽलिंगिकत्वान्नाप्यागमादिप्रमाणसंभवस्तदनभिज्ञानानां बालगोपालादीनामप्यंतर्मुखतया आत्मग्राहकत्वेन स्वसंविदितस्य तस्योत्पादाद् घटादौ वानुत्पादादिति ॥ अपि च ॥ "कह पडिवन्नमहंति य किमत्थि नत्थि त्ति संसओ कहणु । सइसंसयंमि कस्साहं पच्चओज्जुज्जते निम्मूलो" ॥ हंत कथमसति जीवेऽहमिति प्रतिपन्नं त्वया विषयाभावे विषयिणोऽनुष्ठानप्रसङ्गाद्देह एवास्याप्रत्यऽयस्य विषय इति चेन्न जीवविप्रयुक्तेऽपि देहे तदुत्पत्तिप्रसंगात्सति च जीवविषये अस्मिन्नहंप्रत्यये किमहमस्मि नास्मीति भवतः संशयः कथं केन प्रकारेणोपजायते अहं प्रत्ययग्राह्यस्य जीवस्य सद्भावादस्म्यहमिति निश्चय एव युज्यते इति भावः सति च अस्मिन्नात्मास्तित्वसंशये कस्यायमहंप्रत्ययो युज्यते निर्मूलत्वेन तदनुष्ठानप्रसंगादिति ॥

जीवाभावे संशयविज्ञानमपि न युज्यत एवेति तद्दर्शयन्नाह—

जइ नत्थि संसयच्चिय किमत्थित्ति संसओ कस्स ।
संशयएव सरूवे गोयम किमसंसयं होज्जा ॥

व्या० ॥ यदि संशयी जीव एवादौ नास्ति तर्ह्यस्ति नास्तीति संशयः कस्य भवतु । संशयो हि विज्ञानास्यो गुण एव न चगुणिनमंतरेण गुणाः संभवति । देहोऽत्र गुणीति चेन्न देहस्य मूर्त्तत्वाच्च ज्ञानस्य चामूर्त्तत्वाद्बोधरूपत्वाच्च न चाननुरूपाणां गुणगुणिभावो युज्यते आकाशरूपादीनामपि तद्भावापत्त्यातिप्रसङ्गप्राप्तेः संसइ एवेत्यादि वा इत्यथवा संशयिते स्वरूपे गौतम ! किमसंशयशेषं भवेदिदमुक्तं भवति ॥ किमस्मिन्नास्त्यहमित्येवं यः स्वरूपेऽपि संशेते आत्मनिश्चयोऽपि यस्य नास्तीत्यर्थः । तस्य शेषं कर्म बंधमोक्षादिकं घटपटादिकं च किमसंशयमसंदिग्धं स्यान्न किंचित्सर्वं संशय एव तस्य स्यादित्यर्थः । आत्मास्तित्वनिश्चयमूलो हि शेषवस्तुविषय इति भावः । अहंप्रत्ययग्राह्यं च प्रत्यक्षमात्मानं निह्नुवानस्याश्रावणः शब्द इत्यादिवत्प्रत्यक्षविरुद्धो नाम पक्षाभासस्तथा वक्ष्यमाणात्मास्तित्वानुमानसद्भावान्नित्यः शब्द इत्यादिवदनुमानविरुद्धोऽपि तथा अहमस्मि संशयीति प्रागभ्युपगम्योत्तरत्र नास्तीति प्रतिजानानस्य सांख्यस्य अनित्यः कर्त्ता अचेतनः आत्मेत्यादिवदभ्युपगमविरोधः बालगोपालांगनादिप्रसिद्धं चात्मानं निराकुर्वतोऽचन्द्रः शशीत्यादिवल्लोकविरोधः अहं माहं चेति गदतो माता मे बंध्येत्यादिवत्स्ववचनव्याहतिः एवं च प्रत्यक्षादिबाधितेऽस्मिन् पक्षे अपक्षधर्मतया हेतुरप्यसिद्धः हिमवत्पलपरिणामादौ पिशाचादौ च प्रमाणपंचकाभावस्य च वृत्तेरनैकांतोऽपि वक्ष्यमाणानुमानप्रमाणसिद्धे चात्मनि विपक्षवृत्तेर्विरुद्धश्चेति ।

प्रकारांतरेणाप्यात्मनः प्रत्यक्षसिद्धतामाह—

गुणपच्चक्खत्तणओ गुणी वि जीवो घडोव्व पच्चक्खो ।
घडओ विघेप्पइ गुणी गुणमित्तग्गहणउजह्मा ॥

व्या० प्रत्यक्ष एव गुणी जीवः स्मृतिजिज्ञासाचिकीर्षाजिगमिषाशंशीत्यादिज्ञानविशेषात्तद्गुणानां स्वसंवेदनप्रत्यक्षसिद्धत्वादिह यस्य गुणाः प्रत्यक्षाः स प्रत्यक्षो दृष्टो यथा घटः प्रत्यक्षगुणश्च जीवस्तस्मात्प्रत्यक्षः यस्मात् घटोऽपि गुणी रूपादिगुणप्रत्यक्षत्वादेव प्रत्यक्षस्तद्वद्विज्ञानादिगुणप्रत्यक्षत्वादात्मापीत्याह । अनैकांतिकोऽयं यस्मादाकाशगुणः शब्दः प्रत्यक्षोऽस्ति न पुनराकाशमिति तदयुक्तं । यतो नाकाशगुणःशब्दः किं तु पुद्गलगुणः ऐन्द्रियकत्वाद्रूपादिवदिति । गुणानां प्रत्यक्षत्वे गुणिनस्तद्रूपतायाः किमायातमिति चेदुच्यते—

अन्नोण्णो व गुणी होज्ज गुणेहिं जइ नाम सो णन्नो ।
ननु गुणमेत्त गुहणे घेप्पइ जीवो गुणी सक्खं ॥
अह अन्नातो एवं गुणीनो न घडा वउ विपच्चक्खो ।
गुणमेत्तग्गहणाउ ज्जीवंमि कउ वियारोयं ॥

व्या० ननु भवता गुणेभ्यो गुणी किमर्थांतरभूतोऽभ्युपगम्यतेऽनर्थांतरभूतो वा यदि नाम सोऽनन्यस्तेभ्योऽनर्थांतरभूतस्तर्हि ज्ञानादिगुणग्रहणमात्रादेव गुणी जीवः प्रत्यक्षेण गृह्यत इति सिद्धमेव प्रयोगो यो यस्मादनर्थांतरं स तद्ग्रहणेन गृह्यते यथा वाससि रागो गुणेभ्योऽनर्थांतरं च गुणी तस्माद्गुणग्राहकप्रत्यक्षेण सोऽपि गृह्यत एवेति । अथ गुणेभ्योऽन्योऽर्थांतरभूत एव गुणिनः प्रत्यक्षास्तदर्थांतरभूतस्य रूपादिगुणमात्रस्यैव ग्रहणादिह यद्यस्मातदर्थांतरभूतं तद्ग्रहणेऽपि नेतरस्य ग्रहणं यथा घटे गृहीते पटस्य अर्थांतरभूताश्च गुणिनो गुणा इष्यंते अतो गुणग्रहणेऽपि न गुणिग्रहणमतो घटादीनामपि समानोऽग्रहणादोषः । कोऽयं नाम भवतः केवले जीवे विचारो नास्तित्वविवक्षायां नोच्यते ॥ पच्चक्खं जं न दीसइ घडोवित्यादि अथ द्रव्यविरहिताः केऽपि न सत्येव गुणाः इत्यतस्तद्ग्रहणद्वारेण गृह्यंत एव घटादयो न त्वेतदात्मनापि समानमेव किं च गुणिनो गुणानामर्थांतरत्वे अभ्युपगम्यमाने गुणीभावमात्रद्वारे प्रत्यक्षस्तथापि ज्ञानादिगुणेभ्यः पृथगात्मा गुणित्वादभ्युपगमेनापि सिद्धयत्येवेति ॥

अत्र पराभिप्रायमाशंकमानः प्राह—

अहमन्नसि अत्थि गुणी न य देहत्थंतरं तत्तु किं तु ।
देहे नाणाइगुणा सोच्चिय नाणं गुणी जुत्तो ॥

व्या०अथ मन्यसे अस्त्येव ज्ञानादिगुणानां गुणिनैव तं प्रत्याचक्ष्महे एतन्नाभ्युपगच्छामो यद्देहादर्थांतरं न कोऽसौ इति किन्तु-देह एव ज्ञानादयो गुणाः समुपलभ्यंते अतः स एव तेषां गुणी युक्तो यथा रूपादीनां घटः । प्रयोगे देहगुणा एव ज्ञानादयस्तत्रैवोपलभ्यमानत्वाद्गौरकृशस्थूलतादिवत् ॥

अत्रोत्तरमाह—

नाणादओ न देहस्स मुत्तिमत्ताइवं घटस्सेवा ।
तम्हा ना णाइगुणा जस्स सदेहादिओ जीवो ॥

प्रयोगो देहस्य संबंधिनो ज्ञानादिगुणा न भवंत्येव तस्य मूर्त्तिमत्वाच्चाक्षुषत्वाद्वा घटवन्न च द्रव्यरहितो गुणाः समस्ति ततो यो ज्ञानादिगुणानामनुरूपो अमूर्त्तोऽचाक्षुषश्च गुणी स देहातिरिक्तो जीवो ज्ञातव्यः । आह ज्ञानादयो न देहस्येति

प्रत्यक्षबाधितमिदं देह एव ज्ञानादिगुणानां प्रत्यक्षेणैव ग्रहणात्तदयुक्तं अनुमानबाधितत्वादस्य प्रत्यक्षस्य ॥ तथा हि॥ इंद्रियातिरिक्तो विज्ञाता तदुपरमेऽपि तदुपलब्धार्थानुस्मरणाद्यो हि यदुपरमेऽपि यदुपलब्धमर्थमनुस्मरति स तस्माद्र्थांतरदृष्टो यथा पंचवातायनोपलब्धार्थानुस्मर्त्ता देवदत्त इत्यादि वायुभूतिप्रश्ने ॥

वक्ष्याम इति उपसंजिहीर्षुराह–

इह मुद्देसेणायं पच्चक्खो सव्वहामहं जीवो ।

अविहयनाणत्तणओ तुह विन्नाणं च पडिवज्जा ॥

इत्येवमुक्तप्रकारेण स्वशरीरे तवापि देशतः प्रत्यक्षोऽयमात्मा छद्मस्थत्वेन भवतः सर्वस्यापि वस्तुनो देशविषयत्वात् घटवत्तथाहि सर्वमपि स्वपर्यायतोऽनंतपर्यायवस्तुछद्मस्थश्च प्रत्यक्षेण साक्षात् तद्देशमेव गृह्णाति प्रत्यक्षेण च प्रदीपादिप्रकाशेनैव देशतः प्रकाशिता अपि घटादयो व्यवहारतः प्रत्यक्षा उच्यंते एव सर्वात्मना च केवली प्रत्यक्षमेव वस्तु प्रकाशयत्यतो ममाप्रतिहिताऽनंतज्ञानत्वेन सर्वात्मनापि प्रत्यक्षोऽयं जीवो यथाऽतीन्द्रियमपि त्वत्संशयविज्ञानमिति प्रतिपद्यस्वेति ।

परशरीरे तर्हि कथमित्याह—

एवं विय परदेहेणुमाणओ गिण्ह जीवमत्थित्ति ।

अणुवित्तिनिव्वित्तिओ विण्णाणमयं सरूवेव्व ॥

यथा स्वदेहे एवं परदेहेऽपि गृहाण जीवमनुमानतः कथमित्याह अस्ति विद्यते इति कथंभूतं जीवमित्याह॥ विज्ञानमयं विज्ञानात्मकं अनुमानमेव सूचयन्नाह । अणुवित्तिनिवित्तीउ सरूवे वत्ति । इदमुक्तं भवति । परशरीरेऽप्यस्ति जीवः । इष्टानिष्टयोः प्रवृत्तिनिवृत्तिदर्शनाद्यथा स्वरूपे स्वात्मनि इह यत्रेष्टानिष्टयोः प्रवृत्तिनिवृत्ती दृश्येते तत्सात्मकं दृष्टं यथा स्वशरीरं यथा च प्रवृत्तिनिवृत्ती दृश्येते परशरीरे इतस्तदपि सात्मकं आत्माभावे चेष्टानिष्टप्रवृत्तिनिवृत्ती न भवतो यथा घटद्रव्यानुमानात्परशरीरेऽपि जीवसिद्धिस्तत्र ।

अपरमतमाशंक्योत्तरमाह कंचन लिंगेहिं समं मन्नसि लिंगी पुरा जओगहिओ । संगं ससेण व सम्मं न लिंगजुत्तोणुमेए सो । सोणंगंतो जम्हा लिंगेहिं समं न दिट्ठपुव्वो वि । गहलिंगं दरिसणाउ गहोणु मेओ सरीरम्मि । यच्च न य जीवविंगं संबंधदरिसणमभूदित्यादि ॥ पूर्वोक्तपूर्वपक्षानुसारेण मन्यसे त्वं किमित्याह । नतो न लिंगतो लिंगादनुमेयोऽसौ जीवो यतः किमित्याह यतो न खलु लिंगैः कैश्चिदपि समं लिंगी जीवः क्वापि केनापि पुरा पूर्वं गृहीतः किंवदित्याह शृङ्गमिव शशकेन समं ततो लिंगलिंगिनोः पूर्वसंबंधग्रहणाच्च लिंगाज्जीवोऽनुमीयत इति यन्मन्यसे त्वं तत्र प्रतिविधीयते ऽसौ अनेकांतः यस्माल्लिंगैः समं अदृष्टपूर्वोऽपि ग्रहो देवयोनिविशेषतः शरीरे हसनगानरोदनकरचरणभ्रूविक्षेपादिकृत ग्रहलिंगदर्शनादनुमीयत इति बालानामपि प्रतीतिमेवेति ॥

अनुमानांतरमप्यात्मसाधकमाह–

देहस्सत्थिविहाया पयनियथागारउ घडस्सेव ।

अक्खाणं च करणओ दंडाईणं कुलालोव्व ॥

देहस्यास्ति विधाता कर्त्तेति प्रतिज्ञा आदिमत्प्रतिनियताकारत्वाद् घटवद्यत्पुनरकर्तृकं तदादिमत्प्रतिनियताकारमपि न भवति यथा भ्रूविकारः यश्च देहस्य कर्त्ता स जीवः प्रतिनियताकारत्वं मेर्वादीनामप्यस्ति न च तेषां कश्चिद्विधाता इति तैरनैकांतिको हेतुः स्यादतोऽनुक्तमप्यादिमत्त्वविशेषणं द्रष्टव्यमिति। तथा अक्षाणामिंद्रियाणामस्त्यधिष्ठाता इत्यध्याहारः करणत्वाद्यथा चक्रचीवरमृत्सूत्रदंडादीनां कुलालः यच्च निरधिष्ठातृकं तत्करणमपि न भवति यथा आकाशं यश्चेंद्रियाणामधिष्ठाता स जीव इति ॥

तथा—

अत्थिंदियविसयाणं आयाणादेव भावओ वस्सं ।

कम्मार इवादाया लोए संडासलोहाणं ॥

इह यत्रादानादेयभावस्तत्रावश्यमदाता समस्ति यथा लोके संदंशकलोहानां कर्म्मारोऽयस्कारः विद्यते चेंद्रियविषयाणामादानादेयभावोऽतस्तेषामप्यस्त्यादाता स च जीवः यत्र त्वादाता नास्ति तत्रादानादेयभावोऽपि न विद्यत यथा आकाश इति ॥

तथा ॥

भोत्ता देहाईणं, भोज्जणओ नरोव्व भत्तस्स ।

संधाया यत्तणओत्तात्थियअत्थी घरस्सेव ॥

इह देहादीनां भोक्ता समस्ति भोग्यत्वाद्यथा शाल्यादिभक्तवस्त्रादीनां नरः यस्य च भोक्ता नास्ति तद्भोग्यमपि न भवति यथा खरविषाणं भोग्यं च शरीरादिकं ततो विद्यमानभोक्तृकमिति तथा अर्थी स्वामी ततश्च देहानां विद्यते स्वामी संघातरूपत्वादादिशब्देन मूर्तिमत्त्वादिन्द्रियत्वाच्चाक्षुषत्वादयोऽप्यनेकांतिकतापरिहारार्थं संभवाद्विहितविशेषणाहेतवो योजनीयाः ॥ यथा गृहादीनां सूत्रधारादय इति दृष्टांतः यतः पुनरस्वामिकं तत्संघातादिरूपमपि न भवति यथा गगनकुसुमं संघातादिरूपं च देहादिकं तस्माद्विद्यमानस्वामिकमिति । आह न तु (देहस्सत्थि विहाया) इत्यादिना शरीरादीनां कर्त्रादय एव सिध्यंति । न तु प्रस्तुतो जीवः ॥

इत्याशंक्योत्तरमाक्षेपपरिहारौ चाह-

जो कत्ताइ स जीवो मज्झ विरुद्धोति ते मई होज्जा ।

मुत्ताइपसंगाओ ततो संसारिणो दोसो ॥

यश्चायमनंतरदेहेन्द्रियादीनां कर्त्ता अधिष्ठाता आदाता भोक्ता अर्थी वोक्तः स सर्वोऽपि जीव एव अन्यस्येश्वरादेर्युक्त्यक्षमत्वेन कर्तृत्वाद्यसंभवादिति ॥ अथ साध्यविरुद्धसाधकत्वाद्विरुद्धा एते हेतव इति तव मतिर्भवेत्तथा हि घटादीनां कर्त्रादिरूपाः कुलालादयो मूर्तिमंतः संघातरूपा अनित्यादिस्वभावाश्च दृष्टा इत्यतो जीवोऽप्येवंविध एव सिध्यत्येतद्विपरीतश्च किलास्माकं साधयितुमिष्ट इत्येवं साध्यविरुद्धसाधकत्वं हेतूनामिति तदेतदयुक्तत्वान्न यतःखलु संसारिणो जीवस्य साधयितुमिष्टस्यादोषोऽयं स ह्यष्टकर्म्मपुद्गलसंघातोपगूढत्वात् सशरीरत्वाच्च कथंचिन्मूर्त्तत्वादिधर्मयुक्त एवेति भावः ।

अपरमप्यात्मसाधकमनुमानमाह-

अत्थि च्चिय ते जीवो, संसयउ सोम थाणुपुरिसोव्व ।
जं संदिद्धं गोयम ! तं तत्थान्नत्थवत्थु धुवं ॥

हे सौम्य ! गौतम अस्त्येव तव जीवः संशयतः संशयसद्भावाद्योऽत्र संशयस्तत्रास्ति यथा स्थाणुपुरुषौ संशयश्च तव जीवे तस्मादस्त्येवायं तथाहि स्थाणुपुरुषयोरूर्ध्वत्वारोहपरिणाहाद्युभयसाधारणधर्मप्रत्यक्षतायां चलनशिरःकंडूयनवयोनिलयनवल्ल्यारोहणाद्युभयगतविशेषधर्माप्रत्यक्षतायां चोभयगतैतद्धर्मानुस्मरणे च सत्येकतरविशेषनिश्चयचिकीर्षोः किमिदमिति विमर्शरूपः संशयः प्रादुरस्ति एवंभूते च स्थाणुपुरुषादिगतसंशये तत्स्थाणुपुरुषादिकं वस्त्वस्त्येव ॥ अवस्तुनि संशयायोगात् एवमात्मशरीरयोरपि प्रागुपलब्धसामान्यविशेषधर्मस्य प्रमातुस्तयोः सामान्यधर्मप्रत्यक्षतायां विशेषधर्माप्रत्यक्षत्वेऽपि च तद्विषयानुस्मृतौ सत्यामेकतरविशेषोपलिप्सोः किमयमात्मा किं वा शरीरमात्रमिदमिति विमर्शरूपः संशयो जायते अयं चात्मशरीरयोः सत्त्व एवोपपद्यते नैकतरस्याप्यभावेऽतोऽस्ति जीवः। अथैवं ब्रूषे अरण्यादिषु स्थाणुपुरुषसंशये तत्र विवक्षितप्रदेशे अनयोरेकतर एव भवति न पुनरुभयमपि तत्कथमुच्यते विद्यमान एव वस्तुनि संशयो भवतीति। तदयुक्तमभिप्रायापरिज्ञानात् न हि वयमेवं ब्रूमस्तत्रैव प्रदेशे तदुभयमप्यस्तीति किं तु यद्गतसंदेहः तद्वस्तु तत्रान्यत्र वा प्रदेशे ध्रुवमस्त्येव अन्यथा षष्ठभूतविषयोऽपि संशयः स्यादेतदेवाह। जं संदिद्धमित्यादि तस्मात् संशयविषयत्वादस्त्येव जीव इति स्थितं ।

अथ पूर्वपक्षमाशंक्य परिहरन्नाह-

एवं नामाविसाणं खरस्स पत्तं न तं खरं चेव ।
अन्नत्थ तदत्थि च्चिय एवं विवरीयगाहे वि॥

हंत यदि यत्र संशयस्तेनावश्यमेव भवितव्यं । एवं ततः खरविषाणमप्यस्तीति प्राप्तं तत्रापि कस्यचित्संशयसद्भावादुच्यते ॥ न त्वभिहितमत्र यदुत तत्रान्यत्र वा विद्यमान एव वस्तुनि संशयो भवति नाविद्यमाने खरस्य विषाणं खरविषाणं नास्तीत्यत्र च कोऽर्थ इत्याह ॥ (न तं खरे चेवत्ति) खर एव तद्विषाणं नास्ति अन्यत्र गवादावस्त्येवेति न कश्चिद् व्यभिचारः। एवं (विवरीयगाहेव्वत्ति) इदमुक्तं भवति यदा विपर्यस्तः कश्चित्स्थाणौ पुरुष एवायमित्यादिविपरीतग्रहं करोति तदाप्ययमेव ज्ञेयो वाच्यः सोऽपि विपरीतग्रहो विपरीते पुरुषादिके वस्तुनि सत्त्वे एवोपपद्यते नाविद्यमान इत्यर्थः । एवं भवदभिप्रायेण योऽस्मादृशां शरीरे आत्मास्तित्वाभिमानो नायमात्मनः सर्वथा नास्तित्वे युज्यते इति ॥

इतोऽप्यस्ति जीवः कुत इत्याह

अत्थि अजीवविवरे का पडिसेहाउ घडस्सेव ।
नत्थि घडोत्ति व जीवत्थित्तपरो नत्थि सद्दोयं ॥

अत्र प्रयोगः प्रतिपक्षवानयमजीवोऽत्र व्युत्पत्तिमच्छुद्धपदप्रतिषेधाद्यत्र व्युत्पत्तिमतः शुद्धपदस्य प्रतिषेधो दृश्यते स प्रतिपक्षवान् दृष्टो यथा घटोऽघटप्रतिपक्षवान् अत्र ह्यघटप्रयोगोऽशुद्धस्य व्युत्पत्तिमतश्च पदस्य प्रतिषेधो यथा-खरविषाणं, अडित्थ इत्यादि । अखरविषाणस्य लक्षणस्याऽशुद्धस्य सामायिकपदस्य प्रतिषेध इत्यतोऽत्र खरस्य विषाणं खरविषाणमित्यादिव्युत्पत्तिमत्त्वे सत्यपि खरविषाणलक्षणे विपक्षो नास्ति अडित्थ इत्यत्र तु व्युत्पत्तिरहितस्य डित्थस्य डित्थपदस्य प्रतिषेध इति समासरहितत्वेन शुद्धत्वे सत्यपि नावश्यमवस्थितो डित्थलक्षणः कोऽपि पदार्थो जीववद्विपक्षभूतोऽस्तीति । नत्थि घडोत्ति वेत्यादि पश्चार्धं नास्त्यात्मेति च योऽयमात्मनिषेधध्वनिः स जीवास्तित्वे नांतरीयक एव यथा नास्त्यत्र घट इति शब्दोऽन्यत्र घटास्तित्वाविनाभाव्येव प्रयोगो यस्य निषेधः क्रियमाणो दृश्यते तत् क्वचिदस्त्येव यथा घटादिकं निषिध्यते च भवता नास्ति जीव इति वचनात् जीवस्तस्मादस्त्येव यच्च सर्वथा नास्ति तस्य निषेधो न दृश्यत एव यथा खरविषाणकल्पानां पंचभूतातिरिक्तभूतानां निषिध्यते च त्वया जीवस्तस्मान्निषेध एवायं तत्सत्त्वसाधक इति, अनैकांतिकोऽयं हेतुरसतोऽपि खरविषाणादेर्निषेधदर्शनादित्याशंक्याह-

असओ नत्थि निसेहो संजोगाइपडिसेहओ सिद्धं ।
संजोगाइचउक्कं पि सिद्धमत्थंतरे नियमं ॥

असतोऽविद्यमानस्य नास्ति न संभवत्येव निषेध इति सिद्धं कुत इत्याह॥ संयोगादिप्रतिषेधादादिशब्दात् समवायसामान्यविशेषपरिग्रहः एतदुक्तं भवति इह यत्किंचित्क्वचित् देवदत्तादिकं निषिध्यते तस्यान्यत्र सत एव विवक्षितस्थाने कस्मिंश्चित्संप्रयोगसमवायसामान्यविशेषलक्षणचतुष्टयमेव निषिध्यते न तु सर्वथैव देवदत्तादेरभावः प्रतिपाद्यते । तत्र नास्ति गृहे देवदत्त इत्यादिषु गृहदेवदत्तादीनां सतामेव संयोगमात्रं निषिध्यते । न तु तेषां सर्वथैवास्तित्वमपाक्रियते तथा नास्ति खरविषाणमित्यादिषु खरविषाणादीनां सतामेव समवायमात्रं निराक्रियते तथा नास्त्यन्यश्चन्द्रमा इत्यादिषु विद्यमानस्यैव चन्द्रमसोऽन्यचन्द्रनिषेधाच्चन्द्रसामान्यमात्रं निषिध्यते न तु सर्वथा चन्द्राभावः प्रतिपाद्यते । तथा न संति घटप्रमाणा मुक्ता इत्यादिषु घटप्रमाणतामात्ररूपो विशेषो मुक्तानां निषिध्यते न तु मुक्ताभावः ख्याप्यत इति एवं च सति नास्त्यात्मेत्यत्र विद्यमानस्यैवात्मनो यत्र क्वचनयेन केनचित्सहसंयोगमात्रमेव त्वया निषेद्धव्यम् यथा नास्त्यात्मा वपुषीत्यादि न तु सर्वथात्मनः सत्त्वमिति। अत्राह कश्चित् ननु यदि यन्निषिध्यते तदस्ति तर्हि मत्त्रिलोकेश्वरताप्यस्ति युष्मदादिभिर्निषिध्यमानत्वात्तथा चतुर्णां समवायादिप्रतिषेधानां पंचमोऽपि प्रतिषेधप्रकारोस्ति त्वयैव निषिध्यमानत्वात् तदयुक्तं त्रिलोक्यैश्वरताविशेषमात्रं भवतो निषिध्यते यथा घटप्रमाणत्वं मुक्तानां न तु सर्वथैश्वरता स्वशिष्यादीश्वरतायास्तवापिविद्यमानत्वात्तथा प्रतिषेधस्यापि पंचसंख्याविशिष्टत्वमपाक्रियते. न तु सर्वथा प्रतिषेधस्याभावश्चतुःसंख्याविशिष्टस्य तस्य सद्भावात्। ननु सर्वमप्यसंबद्धमिदं तथा मत्त्रिलोकेश्वरत्वं तावदसदेव निषिध्यते प्रतिषेधस्यापि पंचसंख्याविशिष्टत्वमविद्यमानमेव निवार्यते तथा संयोगसमवायसान्यविशेषाणामपि

गृहदेवदत्तखरविषाणादिष्वसतामेव प्रतिषेध इत्यतो यन्निषिध्यते तदस्त्येवेत्येतत्कथं न प्लवत इत्यासंक्याह ( संयोगाइचउक्कं पीत्यादि ) इदमुक्तं भवति देवदत्तादीनां संयोगादयो गृहादिष्वेवाऽसंतो निषिध्यंते । अर्थांतरे तु तेषां ते विद्यंत एव तथाहि गृहेणैव सह देवदत्तस्य संयोगो न विद्यते अर्थांतरेण तु क्षेत्रहट्टग्रामादिना सह तस्यासौ समस्त्येव गृहस्यापि देवदत्तेन सह संयोगो नास्ति खट्वादिना तु सह तस्यासौ विद्यत एव एवं विषाणस्यापि खर एव समवायो नास्ति गवादावस्त्येव सामान्यमपि द्वितीयचंद्राभावाच्चंद्र एव नास्त्यर्थांतरे तु घटगवादावस्त्येव घटप्रमाणत्वमपि मुक्तासु नास्त्यर्थांतरे तु कूष्माण्डादावस्त्येव त्रिलोकेश्वरता भवत एव नास्ति तीर्थकरादावस्त्येव पंचसंख्याविशिष्टत्वमपि प्रतिषेधो नास्त्यर्थान्तरे त्वनुत्तरविद्यमानादावस्त्येवेत्यनर्या विवक्षया ब्रूमो यन्निषिध्यते तत्सामान्येनास्त्येव न त्वेवं प्रतिजानीमहे यद्यत्र निषिध्यते तत्तत्रैवास्तीति येन व्यभिचारः स्याद्वयमपि शरीरे जीवं निषेधयामो नान्यत्रेति चेत् साधूक्तं । अस्मत्समीहितस्य सिद्धत्वात् जीवसिद्ध्यर्थमेव हि यतामहे वयं स चेत्सिद्धस्तर्हि तत्सिद्ध्यन्यथानुपपत्तेरेव तदाश्रयः सेत्स्यति किं तया चिंतया । न च शरीरमंतरेण जीवस्याश्रयांतरमुपपद्यते तत्रैव तदवस्थानलिंगोपलब्धेर्न च वक्तव्यं शरीरमेव जीवो जीवति मृतो मूर्च्छित इत्यादि व्यवस्थानुपपत्तेरित्यादेरभिधास्यमानत्वादिति ॥

जीवसिद्धाववोपपत्त्यंतरमाह—

जीवोत्ति सत्थयमिणं सुद्धत्तणओ घडाभिहाणं च ।
जेणत्थेण सहत्थं सो जीवो अहमई होज्ज ॥
अत्थे देहो च्चिय तत्तो पज्जाय वयणभेयाउ ।
नाणा य गुणो य जओ भणिओ जीवो न देहो त्ति॥

जीव इत्येतद्वचनं सार्थकमिति प्रतिज्ञा व्युत्पत्तिमत्त्वे सति शुद्धपदत्वात् यद् व्युत्पत्तिमत्त्वे शुद्धपदं तदर्थवद् दृष्टं यथा घटादिकं तथा च जीवपदं तस्मात्सार्थकं यत्तु सार्थकं न भवति तद् व्युत्पत्तिमच्छुद्धपदं च न भवति यथा डित्थादिकं खरविषाणादिकं च न च तथा जीवपदं तस्मात्सार्थकं यद्व्युत्पत्तिमन्न भवति तच्छुद्धपदमपि सन्न सार्थकं यथा डित्थादिपदमिति हेतोरनैकांतिकतापरिहारार्थं व्युत्पत्तिमत्त्वविशेषणं द्रष्टव्यं । यदपि शुद्धपदं न भवति किं तु सामासिकं व्युत्पत्तिमत्त्वे सत्यपि सार्थकं न भवति यथा खरविषाणादिकमिति शुद्धत्वविशेषणं । अथ मन्यसे देह एवास्य जीवपदस्यार्थो न पुनरर्थांतरं उक्तं च देह एवायमनुप्रयुज्यमानो दृष्टो यथैष जीवो यथैनं न हिनस्ति इत्यतो देहपदस्यार्थो युक्त इति तदेतन्न कुत इत्याह देहजीवयोः पर्यायवचनभेदाद्यत्र हि पर्यायवचनभेदस्तत्रान्यत्वं दृष्टं यथा घटाकाशयोस्तत्र घटकुटकुंभकलशादयो घटस्य पर्याया नभोव्योमांतरिक्षाकाशादयस्तु आकाशपर्यायाः प्रस्तुते च जीवो जंतुरसुमान्प्राणी सत्त्वो भूत इत्यादयो जीवपर्यायाः शरीरं वपुः कायो देहः कलेवरमित्यादयस्तु शरीरपर्यायाः पर्यायवचनभेदेऽपि च वस्त्वेकत्वे सर्वैकत्वप्रसंगोत्र बाधकं यत्पुनरिदमुक्तं देह एवायमनुप्रयुज्यमानो दृष्ट इत्यादि तच्छरीरसहचरणावस्थानादितः शरीरे जीवोपचारः क्रियते । किं चेत्थमपि श्रूयत एव गतः स जीवो दह्यतामिदं शरीरमिति किं च नाणा इत्यादि यस्माच्च ज्ञानादिगुणयुतो जंतुर्जडश्च देहस्तत्कथं देह एव जीवः प्रागिहैव चोक्तं न ज्ञानादिगुणो देहो मूर्तिमत्वाद् घटवत्तथा देहेंद्रियातिरिक्त आत्मा तदुपरमेपि तदुपलब्धार्थानामनुस्मरणाद्वातायनपुरुषवदिति तदद्याप्यप्रतिबुध्यमाने इंद्रभूतौ भगवानाह—

जीवोत्थिवओ सच्चं मव्वयणाओ वसेसवयणं च ।
सव्वसु वयणओ वा अणुवइसव्ववयणं व ॥

जीवोऽस्तीत्येतद्वचः सत्यं मद्वचनत्वाद्भवत्संशयविषयाद्यवशेषवचनवत् यच्च सत्यं न भवति तन्मदीयवचनमपि न भवति यथा कूटसाक्षिवचनं । अथ वा सत्यं जीवोऽस्तीतिवचनं सर्वज्ञवचनत्वाद्भवदनुमतसर्वज्ञवचनवदिति ॥ यदि वा—

भयरागदोसमोहा भाउ सच्चमणइवाइं च ।
सव्वं वियमेवयणं जाणयमन्नत्थवयणं च ॥

सर्वमपि मद्वचनं सत्यमनतिपाति च बोद्धव्यं भयरागद्वेषाज्ञानरहितत्वादिह यद्भयादिरहितस्य वचनं तत्सत्यं दृष्टं यथा मार्गज्ञस्य भयरहितस्य प्रष्टरि रागद्वेषरहितस्य मार्गोपदेशे वचनं तथा च मद्वचस्तस्मात्सत्यमनतिपाति चेति ॥

अत्र गौतममतमाशंक्य भगवानुत्तरमाह—

कह सव्वणुत्ति मई जेणाहं संसयच्छेदं ।
पुच्छसु व जं न जाणसि जेण व ते पच्चओ होज्जा ॥

कथं नाम त्वं सर्वज्ञ इति मतिरेवं त्वं मन्यसे तथा भयरागद्वेषमोहाभावश्चासिद्ध इति मन्यसे तदयुक्तं ॥ येनाहं सर्वसंशयच्छेदी यश्च सर्वसंशयच्छेत्ता स सर्वज्ञ एव दृष्टान्ताभावेनान्वयासिद्धेरनैकांतिकोयं हेतुरिति चेत्तन्न सर्वसंशयच्छेतृत्वानुपपत्तिरेवेह वैपर्ययबाधकं प्रमाणं किमिहान्वयान्वेषणेन यदि वा पृच्छ मां यत्त्रैलोक्यांतर्गतं वस्तु त्वं न जानासि येन सर्वज्ञत्वप्रत्ययस्तव जायते भयाद्यभावोपि तल्लिंगादर्शनान्मयि सिद्ध एवेति स्वयमेव द्रष्टव्यं कदाचिदपि लिंगादर्शने लिंगिनोऽस्तित्वशंकायामतिप्रसंग इति॥

अथोपसंहरन्नाह—

एवमुवओगलिंगं गोयम सव्वप्पमाणसंसिद्धं ।
संसारोपरथा वरतसाइभेयं मुणे जीवं ॥

एवमुक्तेन प्रकारेण जीवमात्मानं गौतम मुण प्रतिपद्यस्वेति संबंधः । कथंभूतमुपयोग एव लिंगं यस्य स तथा सर्वैः प्रत्यक्षानुमानागमप्रमाणैः संसिद्धं प्रतिष्ठितं तथा संसारीतरस्थावरत्रसादिभेदं संसारिणश्चेतरे सिद्धाः आदि शब्दाच्च सूक्ष्मबादरपर्याप्तापर्याप्तादिभेदपरिग्रह इति॥विशे०॥

अथ विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यादिवेदवाक्यार्थमनुभावयतस्त्यजतोऽपि मम संशयोतिविरोधिताहित इव पृष्ठं न मुंचति तत्किं करोमीति ॥

चेत्तदयुक्तं कुत इत्याह ॥

गोयम ! वेयपमाणं इमाण अत्थं च तं न याणासि ।
जं विन्नाण घणो च्चिय भूएहिंतो समुत्थाया ॥

मन्नसि मज्जं गेसु विय मयभावो भूयसमुदओ भूओ ।
विण्णाणमेत्तमा या भूएणुविणस्सइ समुब्भूओ ॥
अत्थि न या पेच्च सण्णं जं पुव्वभ वेभिहाणममुगोत्ति ।
जं भणियं न भवाउ भवंतरं जाइ जीवो त्ति ॥

गौतमेत्यामंत्रणं वेदपदानां श्रुतिवाक्यानाममीषां विज्ञानघन एवैतेभ्यः इत्यादीनां चेतसि वर्तनानामर्थं यथास्थितं त्वं न जानासि नावबुध्यसे किमित्यत आह ॥ यद्यस्मात्त्वमात्माभिप्रायेणैवंभूतमिहार्थं मन्यसे विकल्पयसीति संबंधः कथंभूतमित्याह ( विण्णाणघणो च्चियत्ति ) पृथिव्यादिभूतानां विज्ञानलवसमुदायो विज्ञानघनः पृथिव्यादिविज्ञानांशानां पिंड इत्यर्थः अवधारणं त्वात्मवादिपरिकल्पितस्य भूतसमुदायातिरिक्तस्य ज्ञानदर्शनादिगुणाश्रयस्यात्मनो निरासार्थं । भूतेभ्यः पृथिव्यादिभ्यः समुदितेभ्यो न तु व्यस्तेभ्यो ज्ञानस्य तत्समुदायपरिणामांगीकारादिति भावः ॥ मद्यांगेषु मद्यकारणेषु धातक्यादिषु मदभाव इव कथंभूतो विज्ञानघन इत्याह ( भूयसमुदयभूओविण्णाणमेत्तमायत्ति ) भूतसमुदायादुद्भूतस्तदैव जातो न तु परभावात्कश्चिदाघातो विज्ञानमात्ररूप आत्मेत्यर्थः । समुत्थायोत्पद्य ततस्तान्येव पृथिव्यादिभूतानि विनाशमश्नुवानान्यत्र लक्षीकृत्य भूयः पुनरपि स विज्ञानघनो विज्ञानमात्ररूप आत्मा विनश्यति न त्वात्मवादिनामिवान्यभवं याति अत एव न प्रेत्य भवे परभवे संज्ञास्ति यत्पूर्वभवे नारकादिजन्मन्यभिधानमासीत्तत्परभवे नास्ति यदुतामुको नारको देवो वा भूत्वा इदानीं मनुष्यः संवृत्त इत्यादि नारकादेः प्रागेव सर्वनाशं नष्टत्वादिति भावः किमिह वाक्ये तात्पर्यवृत्त्या प्रोक्तं भवतीत्याह जं भणियमित्यादि सर्वथात्मनः समुत्पद्य विनष्टत्वान्न भवाद्भवांतरं कोऽपि यातीत्युक्तं भवति ॥

यद्येवंभूतमस्य वेदवाक्यस्यार्थमहमवगच्छामि तत्र किमित्याह

गोयम पयत्थमे व मन्नंतो नत्थि मन्नसे ।
वक्कंतरे सुय पुणो भणिओ जीवो जमत्थित्ति ॥
अग्गिहवणाइकिरिया फलं च तो संसयं कुणसि जीवे ।
मा कुरु न पयत्थोयं इमं पयत्थं निसामेहिं ॥

गौतमास्य वाक्यस्य दर्शितरूपमेव पदार्थं मन्यमानस्त्वं नास्तीत्येवं मन्यसे यस्माच्च पुनर्नह वै स शरीरस्य प्रियाप्रिययोरपहतिरस्त्यशरीरं वा वशंतं प्रियाप्रिये न स्पृशत इत्यादिषु वेदवाक्यांतरेष्वस्तीत्येवं जीवो भणितः प्रतिपादितस्तथाग्निहोत्रं जुहुयात् स्वर्गकाम, इत्यादि वचनादग्निहवनादिक्रियायाः फलं च परभविकं श्रूयते न चेदं भवांतरयायिनमात्मानमनन्तरेणोपपद्यतेऽतः किं जीवोस्ति नास्ति वेत्येवं संशयं जीवे करोषि त्वं तदमुं मा कृथाः यस्माद्विज्ञानघन एवेत्यादिवाक्यस्य नायमर्थो यं भवानध्यवस्यति किं त्वमुं वक्ष्यमाणं पदार्थमिह निशामयाकर्णयेति ॥
तमेव दर्शयति ॥

विण्णाणाओ णण्णो विण्णाणघणत्ति सव्वसो वा वि ।
स भवइ भूएहिंतो घडविण्णाणाइभावेण ॥
ताइं चिय भूयाइं सोणुविणस्सइ विणस्समाणाइ ।
अत्थंतरोवओगे कमसो विण्णायभोएणं ॥

इह विज्ञानघनो जीव उच्यते विशिष्टं ज्ञानं विज्ञानं ज्ञानदर्शनोपयोग इत्यर्थः तेन विज्ञानेन सहानन्यभूतत्वादेकवत्तया घनत्वं निविडत्वमापन्नो विज्ञानघनो जीव उच्यते । ( सव्वसे वा वित्ति ) सर्वतः प्रतिप्रदेशमनंतानंतविज्ञानपर्यायसंघातघटितत्वाद्विज्ञानघनो जीवः एवकारेण तु विज्ञानघन एवासौ न तु नैयायिकादीनामिव स्वरूपेण निर्विज्ञानत्वाज्जडोऽसौ बुद्धिस्तु तत्र समवेतैवेति नियम्यते स भवन् युज्यत इति क्रिया केभ्य इत्याह ( भूएहिंतोत्ति) भूतानीह घटपटादिज्ञेयवस्तुरूपाण्यभिप्रेतानि तेभ्यो ज्ञेयभावेन परिणतेभ्यः केन भवतीत्याह घटः पटोयमित्यादिविज्ञानभावेन घटादिज्ञानपर्यायेण ततः किमित्याशंक्य तान्येवानुविनश्यतीत्यस्यार्थमाह ( ताइं चिएत्यादि )तान्येव ज्ञानालंबनभूतानि घटादिभूतानि क्रमशः कालक्रमेण व्यवधानस्थगनान्यमनस्कत्वाद्यनर्थांतरोपयोगे सति विज्ञेयभावेन ज्ञानविषयभावेन विज्ञानमाप्नुवानान्यनु पश्चात्तद्बोधपर्यायेण स विज्ञानघनो विनश्यतीति संबंधः । ज्ञानपर्यायेण घटादिभ्यो ज्ञेयभूतेभ्यो जीवः समुत्थाय कालक्रमाद् व्यवधानादिनार्थांतरोपयोगे सति ज्ञेयभावेन तान्येव विनाशमाप्नुवानान्यनुविनश्यतीति तात्पर्यार्थः किमित्थं सर्वथाऽयमात्मा विनश्यति नेत्याह ॥ "पुव्वावरविण्णाणो वगओ विगयसंभवसहाओ विण्णाणसन्तईएविणाणघणोयमविनासी" एक एवायमात्मा त्रिस्वभावः कथमित्युच्यते अर्थांतरोपयोगकाले पूर्वविज्ञानोपयोगेन तावदयं विगमस्वभावो विनश्वररूपः अपरविज्ञानोपयोगतस्तु संभवस्वभाव उत्पादरूपः अनादिकालप्रवृत्तसामान्यविज्ञानमात्रसंतत्या पुनरयं विज्ञानघनो जीवो विनष्ट एवावतिष्ठते एवमन्यदपि सर्ववस्तूत्पादव्ययध्रौव्यस्वभावमेवावगंतव्यं न पुनः किमपि सर्वथोत्पद्यते विनश्यति चेति ॥

न प्रेत्य संज्ञास्तीत्येतद्व्याचिख्यासुराह—

न च पेच्च नाणसन्ना वतिट्ठए संपओवओगाओ ।
विण्णाणघणाभिक्खो जीवो यं वेयपयभिहिओ ॥

न च प्रत्येति न चान्यवस्तूपयोगकाले प्राक्तनज्ञानसंज्ञास्ति कुतः सांप्रतवस्तुविषयोपयोगादिदमुक्तं भवति यथा घटोपयोगनिवृत्तौ पटोपयोग उत्पद्यते तदा घटोपयोगसंज्ञा नास्ति तदुपयोगस्य निवृत्तत्वात् किं तु पटोपयोगसंज्ञैवास्ति तदुपयोगस्यैव तदानीमुत्पन्नत्वात् तस्माद्विज्ञानघनाख्यो वेदपदेष्वभिहितोयं जीवस्ततो गौतम ! प्रतिपद्यस्वैनमिति ।

पुनरपीह प्रेर्यमाशंक्य परिहरन्नाह—

एवं पि भूयधम्मो नाणं तब्भावभावउबुद्धी ।
तत्तो तदभावम्मि वि अन्नाणं वेयसमयम्मि ॥
अत्थमिए आइच्चे चंदे संतासु अग्गिवायासु ।
किं जोइरयं पुरिसो अप्पज्जो इत्ति निद्दिट्ठो ॥

बुद्धीति स्याद् बुद्धिः प्रेकरस्य एवमपि(सभवइभूयेहिंतो)इत्यादिना युष्मद्व्याख्यानप्रकारेपीत्यर्थः । पृथिव्यादिभूतधर्म एव ज्ञानम्भूतस्वभावात्मकमेव ज्ञानमेवेति भावः कुत इत्याह॥ तब्भावभावउत्ति एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति वचनाद्भूतसद्भावे ज्ञानस्य भावात्तदभावे चाभावादित्यर्थः । यस्य च भावे एव यद्भवत्यभावे न भवति तत्तस्यैव धर्म्मो यथा चन्द्रमसश्चंद्रिका तथा च ज्ञानमनुविदधाति भूतान्वयव्यतिरेकौ तस्माद्भूतधर्म्म एव तदयुक्तं विशिष्टमेव हि नीलपीतादिभूतग्राहकं ज्ञानं तदन्वयव्यतिरेकावनुविदधाति न तु सामान्यज्ञानमात्रं यस्माद्भूताभावेपि वेदयुक्ते समये सिद्धांते सामान्यज्ञानं भणितमेवेति शेषः । केन वाक्येनेत्याह ॥ अत्थमिए इत्यादि अस्तमिते आदित्ये याज्ञवल्क्यश्चन्द्रमस्यस्तमिते शांतेऽग्नौ शांतायां वाचि किं ज्योतिरेवायं पुरुषः आत्मज्योतिः सम्राडिति होवाच ज्योतिरिति ज्ञानमाह आदित्यास्तमयादौ किं ज्योतिरित्याह अयं पुरुष इति पुरुष आत्मेत्यर्थः अयं च कथंभूत इत्याह (अप्पज्जोइत्ति) आत्मैव ज्योतिरस्य सोऽयमात्मज्योतिः ज्ञानात्मक इति हृदयं निर्दिष्टो वेदविद्भिः कथितस्तो न ज्ञानं भूतधर्म्म इत्यर्थः ॥

इतश्च न ज्ञानं भूतधर्म्मः कुत इत्याह–

तद्भावे भावाउ भावे वा भाववं न तद्धम्मो ।

जह घडभावा भावेविवज्जयाउ पडो भिन्नो ॥

न भूतधर्म्मो ज्ञानं मुक्तावस्थायां भूताभावेपि भावान्मृतशरीरादौ तद्भावेपि वा भावाद्यथा घटस्य धर्म्मः पटो न भवति किं तु तस्माद्भिन्न एव कुत इत्याह घटभावाभावे विपर्ययाच्च घटभावेप्यभावात्तदभावेपि च भावादित्यर्थः विशे० ॥ आ० म० ॥ आव० ॥ कल्प० ॥

( १२ ) अभौतिकत्वं सूत्रकृतांगे–यथा

एए पंच महब्भूया, तब्भो एगोत्ति आहिया ।

अह तेसिं विणासेणं, विणासो होइ देहिणो ॥ सूत्र० ॥

एतान्यनंतरोक्तानि पृथिव्यादीनि पंचमहाभूतानि यानि तेभ्यः कायाकारपरिणतेभ्यः एकः कश्चिद्रूपोभूतातिरिक्त आत्मा भवति न भूतेभ्यो व्यतिरिक्तोऽपरः कश्चित्परः परिकल्पितः परलोकानुयायी सुखदुःखभोक्ता जीवाख्यः पदार्थोऽस्तीत्येवमाख्यातवन्तस्ते । तथाहि । एवं प्रमाणयंति । न पृथिव्यादिव्यतिरिक्त आत्मास्ति तद्ग्राहकप्रमाणाभावात् ॥ प्रमाणं चात्र प्रत्यक्षमेव नानुमानादिकं । तत्रेंद्रियेण साक्षादर्थस्य संबंधाभावाद्व्यभिचारसंभवः । सति च व्यभिचारसंभवे सदृशे च बाधासंभवे तल्लक्षणमेव दूषितं स्यादिति सर्वत्रानाश्वासः । तथाचोक्तं । "हस्तस्पर्शादिवांधेन, विषमे पथि धावता ॥ अनुमानप्रधानेन, विनिपातो न दुर्लभः" ॥ १ ॥ अनुमानं चात्रोपलक्षणमागमादीनामपि । साक्षादर्थसंबंधाभावाद्धस्तस्पर्शेनैव प्रवृत्तिरिति । तस्मात्प्रत्यक्षमेवैकं प्रमाणं तेन च भूतव्यतिरिक्तस्यात्मनो न ग्रहणं । यत्तु चैतन्यं तेपूपलभ्यते तद्भूतेष्वेव कायाकारपरिणतेष्वभिव्यज्यते मद्यांगेषु समुदितेषु मदशक्तिवदिति । तथा न भूतव्यतिरिक्तं चैतन्यं तत्कार्यत्वाद् घटादिवदिति । तदेवं भूतव्यतिरिक्तस्यात्मनोऽभावाद्भूतानामेव चैतन्याभिव्यक्तिर्जलस्य बुद्बुदादिव्यक्तिवदिति । केषांचिल्लौकायतिकानामाकाशस्यापि भूतत्वेनाभ्युपगमाद्भूतपंचकोपन्यासो न दोषायेति । ननु च यदि भूतव्यतिरिक्तोऽपरः कश्चिदात्माख्यः पदार्थो न विद्यते कथं तर्हि मृत इति व्यपदेश इत्याशंक्याह । अथैषां कायाकारपरिणतौ चैतन्याभिव्यक्तौ सत्यां तदूर्ध्वं तेषामन्यतमस्य विनाशेऽपगमे वायोस्तेजसश्चोभयोर्वा देहिनो देवदत्ताख्यस्य विनाशोऽपगमो भवति । ततश्च मृत इति व्यपदेशः प्रवर्तते न पुनर्जीवापगम इति भूताव्यतिरिक्तचैतन्यवादिपूर्वपक्ष इति ।

अत्र प्रतिसमाधानार्थं निर्युक्तिकृदाह–

पंचण्हं संजोए अण्णगुणाणं च चेयणाइ गुणो ।

पंचिंदियठाणाणं, ण अण्णमुणियं मुणइ अण्णो ॥ ३२ ॥

( पंचण्हं संजोए इत्यादि ) पंचानां पृथिव्यादीनां भूतानां संयोगे कायाकारपरिणामे चैतन्यादिकः । आदिशब्दात् भाषाचंक्रमणादिकश्च गुणो न भवतीति प्रतिज्ञा अन्यादयस्त्वत्र हेतुत्वेनोपात्ताः । दृष्टांतस्त्वभ्यूह्यः । सुलभत्वात्तस्य नोपादानं । तत्रेदं चार्वाकः प्रष्टव्यः । यदेतद्भूतानां संयोगे चैतन्यमभिव्यज्यते तत्किं तेषां संयोगेऽपि स्वातंत्र्य एवाऽहोस्वित् परस्परापेक्षया पारतंत्र्ये इति । किंचातः ॥

न तावत्स्वातन्त्र्ये यत आह ( अन्नगुणाणं चेति ) चैतन्यादन्ये गुणा येषां तान्यन्यगुणानितथाह्याधारकाठिन्यगुणा पृथिवी द्रव्यगुणा आपःपक्तृगुणा तेजः चलनगुणो वायुःअवगाहदानगुणमाकाशमिति । यदि वा प्रागभिहिता गंधादयः पृथिव्यादीनामेकैकपरिहान्याऽन्ये गुणाश्चैतन्यादिति । तदेवं पृथिव्यादीन्यन्यगुणानि । चशब्दो द्वितीयविकल्पवक्तव्यतासूचनार्थः । चैतन्यगुणे साध्ये पृथिव्यादीनामन्यगुणानां सतां चैतन्यगुणस्य पृथिव्यादीनामेकैकस्याप्यभावान्न तत्समुदायाच्चैतन्याख्यो गुणः सिद्ध्यतीति । प्रयोगस्तत्र भूतसमुदायः स्वातंत्र्ये सति धर्मित्वेनोपादीयते । न तस्यचैतन्याख्यो गुणोऽस्तीति साध्यो धर्मः पृथिव्यादीनामन्यगुणत्वात् । योयोऽन्यगुणानां समुदायस्तत्र तत्राऽपूर्वगुणोत्पत्तिर्न भवतीति यथा सिकतासमुदाये स्निग्धगुणस्य तैलस्य नोत्पत्तिरिति घटपटसमुदाये वा न स्तम्भाद्याविर्भाव इति । दृश्यते च कार्ये चैतन्यं तदात्मगुणो भविष्यतीति न भूतानामिति । अस्मिन्नेव साध्ये हेत्वंतरमाह ( पंचिंदियठाणाणं ति ) पंच च तानि स्पर्शनरसनघ्राणचक्षुःश्रोत्राख्यानींद्रियाणि तेषां स्थानान्यवकाशास्तेषां चैतन्यगुणाभावान्न भूतसमुदाये चैतन्यं । इदमत्र हृदयं लौकायतिकानां हि अपरस्य द्रष्टुरनभ्युपगमादिंद्रियाण्येव द्रष्टृणि । एतेषां च यानि स्थानान्युपादानकारणानि तेषामचिद्रूपत्वान्न भूतसमुदाये चैतन्यमिति । इंद्रियाणां चामूनि स्थानानि । तद्यथा । श्रोत्रेंद्रियस्याकाशं सुषिरात्मकत्वात् । घ्राणेंद्रियस्य पृथिवी तदात्मकत्वात् चक्षुरिंद्रियस्य तेजस्तद्रूपत्वात् । एवं रसनेंद्रियस्यापः स्पर्शनेंद्रियस्य वायुरिति । प्रयोगश्चात्र नेंद्रियाण्युपलब्धिमंति तेषामचेतनगुणारब्धत्वात् । यद्यदचेतनगुणारब्धं तत्तदचेतनं । यथा घटपटादीनि । एवमपि च भूतसमुदाये चैतन्याभाव एव साधितो भवति पुनर्हेत्वंतरमाह । ( ण अण्णमुणियं मुणइ अण्णोत्ति ) इहेन्द्रियाणि प्रत्येकं भूतात्मकानि तान्येवापरस्य द्रष्टुरभावाद् द्रष्टृणि तेषां च

प्रत्येकं स्वविषयग्रहणादन्यविषये चाप्रवृत्तेर्नान्यदिंद्रियज्ञातमन्यदिंद्रियं जानातीत्यतो मया पंचापि विषया ज्ञाता इत्येवमात्मकः संकलनाप्रत्ययो न प्राप्नोत्यनुभूयते चायं तस्मादेकेनैव द्रष्टा भवितव्यम् । तस्यैव च चैतन्यं न भूतसमुदायस्येति । प्रयोगः पुनरेवं भूतसमुदाये चैतन्यं तदारब्धेंद्रियाणां प्रत्येकविषयग्राहित्वे सति संकलनाप्रत्ययाभावात् । यदि पुनरन्यगृहीतमप्यन्यो गृह्णीयादेवदत्तगृहीतं यज्ञदत्तेनापि गृह्येत नचैतद्दृष्टमिष्टं चेति । ननु च स्वातंत्र्यपक्षेऽयं दोषः । यदा पुनः परस्परसापेक्षाणां संयोगपारतंत्र्याभ्युपगमेन भूतानामेव समुदितानां चैतन्याख्यो धर्मः संयोगवशादाविर्भवति । यथा किण्वोदकादिषु मद्यांगेषु समुदितेषु प्रत्येकमविद्यमानापि मदशक्तिरिति तदा कुतोऽस्य दोषस्यावकाश इति । अत्रोत्तरं । गाथायां चशब्दाक्षिप्तमभिधीयते । यत्तावदुक्तं । यथा भूतेभ्यः परस्परसव्यपेक्षसंयोगभाग्भ्यश्चैतन्यमुत्पद्यते । तत्र विकल्पयामः । किमसौ संयोगः संयोगिभ्यो भिन्नोऽभिन्नो वा भिन्नश्चेत्षष्ठभूतप्रसंगो नचान्यत्पंचभूतव्यतिरिक्तसंयोगाख्यभूतग्राहकं भवतां प्रमाणमस्ति प्रत्यक्षस्यैवैकस्याभ्युपगमात्तेन च तस्याग्रहणात् प्रमाणांतराभ्युपगमे च तेनैव जीवस्यापि ग्रहणमस्तु तथाऽभिन्नो भूतेभ्यो भूतानामेव संयोगस्तत्राप्येतच्चिंतनीयं । किं भूतानि प्रत्येकं चेतनावंत्यचेतनावंति वा यदि चेतनावंति तदा एकेन्द्रियसिद्धिस्तदा समुदायस्य पंचप्रकारचैतन्यापत्तिः । अथाचेतनानि तत्रोक्तो दोषो न हि यद्यत्र प्रत्येकमविद्यमानं तत्समुदाये भवदुपलभ्यते सिकतासु तैलवदित्यादिना यदप्यत्र पूर्वोक्तं तथा मद्यांगेष्वविद्यमानाऽपि प्रत्येकं मदशक्तिः समुदाये प्रादुर्भवतीति । तदप्ययुक्तं यतस्तत्र किण्वादिषु या च यावती शक्तिरुपलभ्यते । तथाहि । किण्वे बुभुक्षापनयनसामर्थ्यं भ्रमिजननसामर्थ्यं चोदकस्य तृडपनयनसामर्थ्यमित्यादिनेति भूतानां प्रत्येकं चैतन्याऽनभ्युपगमे दृष्टांतदार्ष्टांतिकयोरसाम्यं । किं च भूते चैतन्याभ्युपगमे मरणाभावो मृतकायेऽपि पृथिव्यादीनां भूतनां सद्भावात् । नैतदस्ति । तत्र मृतकाये वायोस्तेजसो वाऽभावान्मरणसद्भाव इत्यशिक्षितस्योल्लापः । तथाहि । मृतकाये शोफोपलब्धेर्न वायोरभावः कायस्य च पक्तिस्वभावस्य दर्शनान्नाग्नेरिति अथ सूक्ष्मः कश्चिद्वायुविशेषोऽग्निर्वा ततोऽपगच्छति मतिरित्येवं च जीव एव नामांतरेणाभ्युपगतो भवति यत् किंचिदेतत् । तथा न भूतसमुदायमात्रेण चैतन्याविर्भावः । पृथिव्यादिष्वेकत्र व्यवस्थापिते चैतन्यानुपलब्धेः । अथ कायाकारपरिणतौ सत्यां तदाभिव्यक्तिरिष्यते । तदपि न यतो लेप्यमयप्रतिमायां समस्तभूतसद्भावेऽपि जडत्वमेवोपलभ्यते । तदेवमन्वयव्यतिरेकाभ्यामालोच्यमानो नायं चैतन्याख्यो गुणो भूतानां भवितुमर्हति । समुपलभ्यते चायं शरीरेषु । तस्मात् परिशेषात् जीवस्यैवायमिति स्वदर्शनपक्षपातं विहायांगीक्रियतामिति । यच्चोक्तं प्राग् न पृथिव्यादिव्यतिरिक्त आत्मास्ति तद्ग्राहकप्रमाणाभावात् प्रमाणं चात्र प्रत्यक्षमेवैकमित्यादि तत्र प्रतिविधीयते । यत्तावदुक्तं प्रत्यक्षमेवैकं प्रमाणं नानुमानादिकमित्येतदनुपासितगुरोर्वचः । तथाहि । अर्थाविसंवादकं प्रमाणमित्युच्यते प्रत्यक्षस्य च प्रामाण्यमेव व्यवस्थाप्यते । कश्चित्प्रत्यक्षव्यक्तीर्धर्मित्वेनोपादाय प्रमाणयति । प्रमाणमेता अर्थाऽविसंवादकत्वादनुभूतप्रत्यक्षव्यक्तिवत् । न च ताभिरेव प्रत्यक्षव्यक्तिभिः स्वसंविदिताभिः परं व्यवहारयितुमयमीशस्तासां स्वसन्निविष्टत्वान्मूकत्वाच्च । प्रत्यक्षस्य नानुमानं प्रमाणमित्यनुमानेनैवानुमाननिरासं कुर्वंश्चार्वाकः कथं नोन्मत्तः स्यादेवं ह्यसौ तदप्रामाण्यं प्रतिपादयते । यथा नानुमानं प्रमाणं विसंवादकत्वादनुभूतानुमानव्यक्तिवदित्येतच्चानुमानमथ परप्रसिध्द्यैतदुच्यते । तदप्ययुक्तं । यतस्तत्परप्रसिद्धमनुमानं भवतः प्रमाणमप्रमाणं वा । प्रमाणं चेत्कथमनुमानमप्रमाणमित्युच्यते । अथाप्रमाणं कथमप्रमाणेन सता तेन परः प्रत्याज्यते । परेण तस्य प्रामाण्येनाभ्युपगतत्वादिति चेतदप्यसांप्रतं । यदि नाम परो मौढ्यादप्रमाणमेव प्रमाणमित्यध्यवस्यति किं भवताऽतिनिपुणेनापि तेनैवाऽसौ प्रतिपाद्यते । यो ह्यन्यो गुडमेव विषमपि मन्यते किं तस्य मारयितुकामेनापि बुद्धिमता गुड एव दीयते । तदेवं प्रत्यक्षानुमानयोःप्रामाण्याप्रमाण्ये व्यवस्थापयतो भवतोऽनिच्छतोपि बलादायातमनुमानस्य प्रामाण्यं । तथा स्वर्गापवर्गदेवतादेः प्रतिषेधं कुर्वन् भवान् केन प्रमाणेन करोति न तावत्प्रत्यक्षेण प्रतिषेधं कर्तु पार्यते । यतस्तत्प्रत्यक्षं प्रवर्त्तमानं वा तन्निषेधं विदध्यान्निवर्त्तमानं वा । न तावत्प्रवर्तमानं तस्याऽभावविषयत्वविरोधात् । नापि निवर्तमानं । यतस्तच्च नास्ति तेन च प्रतिपत्तिरित्यसंगतं । तथाहि । व्यापकविनिवृत्तौ व्याप्यस्यापि निवृत्तिरिष्यते ॥ न चार्वाकदर्शितप्रत्यक्षेण समस्तवस्तुव्याप्तिः संभाव्यते । तत्कथं प्रत्यक्षाविनिवृत्तौ पदार्थव्यावृत्तिरिति । तदेवं स्वर्गादेः प्रतिषेधं कुर्वता चार्वाकेणाऽवश्यं प्रमाणांतरमभ्युपगतं । तथाऽन्याभिप्रायविज्ञानाभ्युपगमादत्र स्पष्टमेव प्रमाणांतरमभ्युपगतं । अन्यथा कथं परावबोधाय शास्त्रप्रणयनमकारि चार्वाकेणेत्यलमतिप्रसंगेन । तदेवं प्रत्यक्षादन्यदपि प्रमाणमस्ति तेनात्मा सेत्स्यति किं पुनस्तदिति चेदुच्यते । अस्त्यात्मा असाधारणतद्गुणोपलब्धेश्चक्षुरिंद्रियवत् । चक्षुरिंद्रियं हि न साक्षादुपलभ्यते । स्पर्शनादींद्रियाऽसाधारणरूपविज्ञानोत्पादनशक्त्या त्वनुमीयते । तथात्मापि पृथिव्याद्यसाधारणगुणोपलब्धेरस्तीत्यनुमीयते । चैतन्यं च तस्यासाधारणगुण इत्येतत्पृथिव्यादिभूतसमुदाये चैतन्यस्य निराकृतत्वादवसेयं । तथाऽस्त्यात्मा समस्तेंद्रियोपलब्धार्थसंकलनाप्रत्ययसद्भावात् । पंचगवाक्षान्योपलब्धार्थसंकलनाविधाय्येकदेवदत्तवत् । तथाऽत्माऽर्थद्रष्टा नेंद्रियाणि । तद्विगमे हि तदुपलब्धार्थस्मरणात् । गवाक्षोपरमेऽपि तद्द्वारोपलब्धार्थस्मर्तृदेवदत्तवत् । तथार्थापत्त्याप्यात्मास्तीत्यवसीयते । तथाहि सत्यपि पृथिव्यादिभूतसमुदाये लेप्यकर्मादौ न सुखदुःखेच्छाद्वेषप्रयत्नादिक्रियाणां सद्भाव इत्यतः सामर्थ्यादवसीयते । अस्ति भूतातिरिक्तः कश्चित्सुखदुःखेच्छादीनां क्रियाणां समवायिकारणं पदार्थः स चात्मेति । तदेवं प्रत्यक्षानुमानादिपूर्विकाऽन्याप्यर्थापत्तिरभ्यूह्या । तस्यास्त्विदं लक्षणम् ॥
"प्रमाणषट्कविज्ञातो, यत्रार्थो नान्यथा भवेत् । अदृष्टं कल्पयेदन्यं, सार्थापत्तिरुदाहृता ॥ १ ॥

तथाऽऽगमादप्यस्तित्वमवसेयं । स चायमागमः । ( अत्थि मे आया उववाइए इत्यादि । यदि वा किमत्राऽपरप्रमाणचिंतया सकलप्रमाणज्येष्ठेन प्रत्यक्षेणैवात्मास्तीत्यवसीयते । तद्गुणस्य ज्ञानस्य प्रत्यक्षत्वात् । ज्ञानगुणस्य च गुणिनोऽनन्यत्वात् प्रत्यक्ष एवात्मा रूपादिगुणाप्रत्यक्षत्वेन पटादिप्रत्यक्षवत् तथा-

ह्यहं सुख्यहं दुःख्येवमाद्यहं प्रत्ययग्राह्योऽस्त्यात्मा प्रत्यक्षः । अहंप्रत्ययस्य स्वसंविद्रूपत्वादिति । ममेदं शरीरं पुराणं कर्मेति च शरीराद्भेदेन निर्दिश्यमानत्वादित्यादीन्यन्यान्यपि प्रमाणानि जीवसिद्धावभ्यूह्यानीति ॥ तथा यदुक्तं न भूतव्यतिरिक्तं चैतन्यं तत्कार्यत्वात् घटादिवदित्येतदप्यसमीचीनं । हेतोरसिद्धत्वात् तथाहि न भूतानां कार्यं चैतन्यं तेषामतद्गुणत्वात् भूतकार्यचैतन्ये संकलनाप्रत्ययासंभवाच्चेत्यादिनोक्तप्रायमतोस्त्यात्मा भूतव्यतिरिक्तो ज्ञानाधार इत्युक्तं । ननु च किं ज्ञानाधारभूतेनात्मना ज्ञानाद्भिन्नेनाश्रितेन यावता ज्ञानादेव सर्वसंकलनाप्रत्ययादिकं सेत्स्यति किमात्मनांतर्गडुकल्पेनेति ! तथाहि । ज्ञानस्यैव चिद्रूपत्वाद् भूतैरचेतनैः कायाकारपरिणतैः सह संबंधे सति सुखदुःखेच्छाद्वेषप्रयत्नक्रियाः प्रादुष्यंति तथा संकलनाप्रत्ययो भवांतरगमनं चेति । तदेवं व्यवस्थिते किमात्मनः कल्पितेनेत्यत्रोच्यते । न ह्यात्मानमेकमाधारभूतमंतरेण संकलना न्याय्या घटते तथाहि । प्रत्येकमिंद्रियैः स्वविषयग्रहणे सति परविषये चाप्रवृत्तेरेकस्य च परिच्छेत्तुरभावात् । मया पंचापि विषयाः परिच्छिन्ना इत्यात्मकस्य संकलनाप्रत्ययस्याभावादिति । आलयविज्ञानमेकमस्तीति चेदेवं सत्यात्मन एव नामांतरं भवता कृतं स्यात् । न च ज्ञानाख्यो गुणो गुणिनमंतरेण भवतीत्यवश्यमात्मना गुणिना भाव्यमिति ॥ सूत्र० अ० १ ॥

( १३ ) साम्प्रतं कस्या दिश आगतोहामिति प्रकृतमनुस्रियते यो हि सोऽहमित्यनेनाहंकारज्ञानेनात्मोल्लेखेन पूर्वादिदिशआगतमात्मानमविच्छिन्नसंततिपतितं द्रव्यार्थतया नित्यं पर्यायार्थतया त्वनित्यं जानाति स परमार्थत आत्मवादीति। सूत्रकृद्दर्शयति—

**से आया उववाइये, जो इमाओ अणुदिसाओ वा अणुसंचरइ सव्वाओ दिसाओ अणुदिसाओ सोहं से आयावादी लोगावादी कम्मावादी किरियावादी अकरिस्सं च हं काराविस्सं च हं करउब्भाविसमणुन्ने भविस्सामि ॥ आचा० ॥**

स इति यो भ्रांतः पूर्वं नारकतिर्यङ्नरामराद्यासु भावदिक्षु पूर्वाद्यासु च प्रज्ञापकदिक्षु क्षणिकामूर्त्यादिलक्षणोपेतमात्मानमवैति स एवंभूत आत्मवादीति आत्मानं वदितुं शीलमस्येति । यः पुनरेवंभूतमात्मानं नाभ्युपगच्छति। सोऽनात्मवादी नास्तिक इत्यर्थः । योपि सर्वव्यापिनं नित्यं क्षणिकं वात्मानमभ्युपैति । सोप्यनात्मवाद्येव यत् सर्वव्यापिनो निष्क्रियत्वाद्भवांतरसंक्रान्तिर्न स्यात्सर्वथा नित्यत्वेप्यप्रच्युतानुत्पन्नास्थिरैकस्वभावं नित्यमिति कृत्वा मरणाभावेन भवांतरसंक्रान्तिरेव न स्यात् सर्वथा क्षणिकत्वेऽपि निर्मूलविनाशात्सोहमित्यनेन पूर्वोत्तरानुसंधानं न स्यात् य एव चात्मवादी स एव परमार्थतो लोकवादी। यतो लोकयतीति लोकः प्राणिगणस्तं वदितुं शीलमस्येत्यनेन चात्माद्वैतवादिनिरासेनात्मबहुत्वमुक्तं । यदि वा लोकयतीतिलोकश्चतुर्दशरज्ज्वात्मकः प्राणिगणो वा तत्रापतितुं शीलमस्येत्यनेन च विशिष्टाकाशखंडस्य लोकसंज्ञा वेदिता तत्र च जीवास्तिकायस्य संभवेन जीवानामागमनमावेदितंभवति । य एव च दिगादिगमनपरिज्ञानेनात्मवादी लोकवादी च संवृत्तः स एवासुमान् कर्मवादी कर्म ज्ञानावरणीयादि तद्वदितुं शीलमस्य यतो हि प्राणिनो मिथ्यात्वाविरतिप्रमादकषाययोगैः पूर्वं गत्यादियोग्यानि कर्माण्याददते । पश्चात्तासु तासु विरूपरूपासु योनिषूत्पद्यन्ते । कर्म च प्रकृतिस्थित्यनुभावप्रदेशात्मकमवसेयमिति । अनेन च कालयदृच्छानियतीश्वरात्मवादिनो निरस्ता द्रष्टव्याः तथा य एव कर्मवादी स एव क्रियावादी । यतः कर्म्म योगनिमित्तं बध्यते योगश्च व्यापारः स च क्रियारूपोऽतः कर्मणः कार्यभूतस्य वदनात्तत्कारणभूतायाः क्रियायाः अप्यसावेव परमार्थतो वादीति क्रियायाश्च कर्मनिमित्तत्वं प्रसिद्धमागमे स चायमागमः "जीवे णं भंते एस जीवे सया समियं एयई वेयइ चलति फंदति तिप्पति जीवो तं तं भावं परिणमति ताव णं अट्ठविहबंधए वा सत्तविहबंधए वा छव्विहबंधए वा एकविहबंधए वा णोणं अबंधएत्ति" एवं च कृत्वा य एव कर्म्मवादी स एव क्रियावादीति । अनेन च साख्याभिमतमात्मनोऽक्रियावादित्वं निरस्तं भवति । सांप्रतं पूर्वोक्तांक्रियामात्मपरिणतिरूपां विशिष्टकालाभिधायिमतिप्रत्ययेनाभिदधदहंप्रत्ययस्याप्यात्मनस्तद्भव एवावधिमनःपर्यायकेवलज्ञानजातिस्मरणव्यतिरेकेणैव त्रिकालसंस्पर्शिना मतिज्ञानेन सद्भावावगमं दर्शयितुमाह "अकरिस्सं च हं कारवेसुं च हं करउआवि समणुन्ने भविस्सामित्ति, इह भूतवर्त्तमानभविष्यत्कालापेक्षया कृतकारितानुमतिभिर्नवविकल्पाः संभवन्ति ते चामी अहमकार्षमचीकरमहं कुर्वंतमन्यमनुज्ञासिषमहं। करोमि कारयाम्यनुजानाम्यहमिति । करिष्याम्यहं कारयिष्याम्यहं कुर्वन्तमन्यमनुज्ञास्याम्यहमिति । एतेषां च मध्ये आद्यन्तौ सूत्रेणैवोपात्तौ तदुपादानाच्च तन्मध्यपतिनां सर्वेषां ग्रहणमस्यैवार्थस्याविष्करणाय द्वितीयो विकल्पः । "कारावेसुं च हमिति" सूत्रेणोपात्तः एते च चकारद्वयोपादानादपिशब्दोपादानाच्चा मनोवाक्कायैश्चिन्त्यमानाः सप्तविंशति भेदाभवन्ति।अयमत्र भावार्थः।अकार्षमहमित्यत्राहमित्यनेनात्मोल्लेखिना विशिष्टक्रियापरिणतिरूप आत्मा विदितस्ततश्चायं भावार्थो भवति । स एवाहं येन मयास्य देहादेः पूर्वं यौवनावस्थायामिंद्रियवशगेन विषयविषमोहितांधचेतसा तत्तदकार्य्यानुष्ठानपरायणेनानुकूल्यमनुष्ठितं । उक्तञ्च । "विहवावलेबनडिएहिं जाइं कीरंति जोव्वणमएण । वयपरिणामे सरियाइं ताइं·हियए खडुक्कंति" तथाचीकरमहमित्यनेन परोपकार्यादौ प्रवर्त्तमानो मया प्रवृत्तिं कारितस्तथा कुर्वन्तमन्यमनुज्ञातवानित्येवं कृतकारितानुमतिभिर्भूतकालाभिधानं तथा करोमीत्यादिना वचनत्रिकेण वर्त्तमानकालोल्लेखस्तथा करिष्यामि कारयिष्यामि कुर्वतोन्यान्प्रति समनुज्ञापरायणो भविष्यामीत्यनागतकालोल्लेखोऽनेन च कालत्रयसंस्पर्शेन देहेन्द्रियातिरिक्तस्यात्मनो भूतवर्तमानभविष्यत्कालपरिणतिरूपस्यास्तित्वावगतिरावेदिता भवति । सा चानेकांतक्षणिकनित्यवादिनां संभवतीत्यतोऽनेन ते निरस्ताः क्रियापरिणामेनात्मनः परिणामेनात्मनः परिणामित्वाभ्युपगमादित्येतदनुसारेणैव संभवानुमानादतीतानागतयोरपि भवयोरात्मास्तित्वमवसेयं यदि वानेन क्रियाप्रबंधप्रतिपा-

द्नेन कर्मण उपादानभूतायाः क्रियायाः स्वरूपमावेदित-मिति ॥ आचा० ॥ टी० ॥

अथ किमेतावत्य एव क्रिया उतान्या अपि सन्तीत्येता-एवेत्याह—

एवावंति सव्वावंति लोगंसि कम्मसमारंभा परिजाणिय-व्वा भवंति अपरिण्णायकम्मा खलु अयं पुरिसे जो इमाओ दिसाओ अणुदिसाओ अणु संचरइ सव्वाओ दिसाओ सव्वाओ अणुदिसाओ साहेति अणेगरूवाओ जोणीओ संधेइ विरूवरूवे फासे पडिसंवेदेइ तत्थ खलु भगवता परिण्णा पवेइया ॥ आचा० ॥

एतावन्तः सर्वेऽपि लोके प्राणिसंघाते कर्मसमारम्भाः क्रिया-विशेषा ये प्रागुक्ताः अतीतानागतवर्त्तमानभेदेन कृतकारि-तानुमतिभिश्चाशेषक्रियानुयायिना च करोतिना सर्वेषां ग्र-हादित्येतावन्त एव परिज्ञातव्या भवन्ति नान्य इति परिज्ञा च ज्ञप्रत्याख्यानभेदाद् द्विधा तत्र ज्ञायामात्मनो बंधस्य चा-स्तित्वमेतावद्भिरेव सर्वैः कर्म्मसमारम्भैर्ज्ञातं भवति प्रत्याख्या-नपरिज्ञायां च सर्वे पापोपादानहेतवः कर्मसमारम्भाः प्र-त्याख्यातव्या इति इयता सामान्येन जीवास्तित्वं प्रसाधित-मधुना तस्यैवात्मनो दिगादिभ्रमणहेतूपदर्शनपुरस्सरमपा-यान् प्रदर्शयितुमाह यदि वा यस्तावदात्मकर्मादिवादी-स दिगादिभ्रमणान्मोच्यते इतरस्य तु विपाकान्दर्शयि-तुमाह अपरिण्णायेत्यादि योऽयं पुरि शयनात्पुरुषःपूर्णः सुखदुः-खानां वा पुरुषो जंतुर्मनुष्यो वा प्राधान्याच्च पुरुषस्योपादान-मुपलक्षणं चैतत्सर्वोपि चतुर्गत्यापन्नः प्राणी गृह्यते दि-शोनुदिशो वा सञ्चरति सोऽपरिज्ञातकर्माऽपरिज्ञातं कर्मा-नेनेत्यपरिज्ञातकर्मा खलुरवधारणे परिज्ञातकर्मैव दिगादौ भ्राम्यति नेतर इत्युपलक्षणं चैतदपरिज्ञातात्मा परिज्ञातक्रि-यश्चेति यश्चापरिज्ञातकर्मा स सर्वा दिशः सर्वाश्चानुदिशः साहेति स्वयंकृतेन कर्मणा सहानुसञ्चरति सर्वग्रहणं सर्वासां प्रज्ञापकदिशां भावदिशां चोपसंग्रहार्थं यदा-प्नोति तद्दर्शयति अणेगरूवाओ जोणीओ संधेइत्ति ॥ आचा० टी० ॥

एताश्चानेकरूपा योनीर्दिगादिषु पर्यटन्नपरिज्ञातकर्मासु मान् संधेइत्ति सन्धयति सन्धिं करोत्यात्मना सहा-विच्छेदेन संघट्टयतीत्यर्थः सन्धाव इति पाठान्तरं सन्धा-वति पौनःपुन्येन ता गच्छतीत्यर्थः तत्सन्धाने च यदनु-भवति तद्दर्शयति विरूपं वीभत्सममनोज्ञं रूपं येषां स्पर्शा-नां दुःखोपनिपातानां ते तथा स्पर्शाश्रिता दुःखोपनिपाता-स्पर्शा इत्युक्तास्तात्स्थात्तद्व्यपदेश इति कृत्वोपलक्षणं चैतन्मानसेऽपि वेदना ग्राह्या अतस्तानेवंभूतान् स्पर्शान् प्रतिसंवेदयत्यनुभवति प्रतिग्रहणात्प्रत्येकं शारीरान्मानसा इव दुःखोपनिपातानुभवतीत्युक्तं भवति स्पर्शग्रहणं चेह सर्वसंसारान्तर्वर्तिजीवराशिसंग्रहार्थं स्पर्शनेन्द्रियस्य सर्वजीवव्यापित्वादपि वक्तव्यं सर्वान्विरूपरूपान् रसगंधरूपशब्दान् प्रतिसंवेदयतीति विरूप-रूपत्वञ्च स्पर्शानां कार्यभूतानाम् विचित्रकर्मोदयात् कारणभूताद्भवतीति वेदितव्यं विचित्रकर्मोदयाच्चापरिज्ञात-कर्मा संसारी स्पर्शादीन्विरूपरूपांस्तेषु तेषु योन्यन्तरेषु विपा-कतः परिसंवेदयत्याह च "तैः कर्मभिः स जीवो विवशः संसारचक्रमुपयाति। द्रव्यक्षेत्राद्धा भावभिन्नमावर्त्तते बहुशः १ नरकेषु देवयोनिषु तिर्यग्योनिषु च मनुजयोनिषु च। पर्यटति घटीयन्त्रवदात्मा विभ्रच्छरीराणि २ सततानुबद्धमुक्तं दुःखं नरकेषु तीव्रपरिणामं।तिर्यक्षु भयक्षुत्तृड्वधादि दुःखं सुखं चाल्पं ३ सुखदुःखे मनुजानां मनःशरीराश्रये बहुविकल्पे, सुख-मेवहि देवानां दुःखं स्वल्पञ्च मनसि भवं ४ कर्मानुभाव-दुःखित एवं मोहांधकारगहनवति। अन्ध इव दुर्गमार्गे भ्रम-ति हि संसारकान्तारे ५ दुःखप्रतिक्रियार्थं सुखाभिलाषाच्च पुनरपि तु जीवः। प्राणिवधादीन् दोषानधितिष्ठति मोह-संछन्नः ६ बध्नाति ततो बहुविधमन्यत्पुनरपि नवं सुबहुकर्म। तेनाथ पच्यते पुनरग्निरग्नि प्रविश्यैव ७ एवं कर्माणि पुनः सम्बन्धानस्तथैव मुञ्चंश्च। सुखकामो बहुदुःखं संसारमनादिकं भ्रमति ८ एवं भ्रमतः संसारसागरे दुर्लभं मनुष्यत्वं। संसारस्यमहत्त्वान्त्वधर्मदुष्कर्म्मबाहुल्यैः ९ आर्योदेशकुलरूपसम्पदायुश्च दीर्घमारोग्यं । यतिसंसर्गः श्रद्धाधर्म्मश्रवणञ्च मतिर्निदरणम ॥ १० ॥ एतानि दुर्लभा-नि प्राप्तवतोऽपि दृढमोहनीयस्य कुपथाकुलहितोऽतिदुर्लभो जगति सन्मार्गः ॥ ११ ॥ यदि वा योऽयंपुरुषः सर्वा दिशोऽ-नुदिशश्चानुसञ्चरति तथानेकरूपां योनिं सन्धावति विरूपांश्च स्पर्शान् प्रतिसंवेदयति सोऽविज्ञातकर्माऽविज्ञातमविदितं क-र्म्म क्रिया व्यापारो मनोवाक्कायलक्षणोऽकार्षमहं कर्म्माणि जीवोपमर्दादिके प्रवर्त्तते येनास्याष्टविधकर्म्मबन्धो भवति तदुदयाच्चानेकरूपयोन्यनुसन्धानं विरूपरूपस्पर्शानु-भवश्च भवतीति यद्येवं ततः किमित्यत आह तत्थेत्यादि तत्र कर्मणि व्यापारेऽकार्षमहं करोमि करिष्यामीत्यात्मप-रिणतिस्वभावतया मनोवाक्कायव्यापाररूपे भगवता वीरव-र्द्धमानस्वामिना, परिज्ञानं परिज्ञा सा प्रकर्षेण प्रशस्तादौ वा वेदिता प्रवेदिता एतच्च सुधर्म्मस्वामी जंबूनाम्ने कथयति सा च द्विधा ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च तत्र ज्ञपरिज्ञयां सावद्यव्यापारेण बन्धो भवतीत्येवं भगवता ज्ञपरिज्ञा प्रवेदिता प्रत्याख्यानपरिज्ञया च सावद्ययोगा बन्धहेतवः प्रत्याख्येया इत्येवंरूपा चेत्यमुमेवार्थं निर्युक्तिकृदाह ॥ ॥ आ० चा० टी० ॥

तत्थ अकारि करिस्संति बंधचिंता कया पुणो होइ।
सहसंमया जाणइ कोई पुण हेउजुत्तीए ॥ आचा०मू० ॥

तत्र कर्मणि क्रियाविशेषे किम्भूत इत्याह ( अकारि करिस्सं-ति ) अकारीति कृतवान् करिस्सन्ति करिष्यामीत्यनेनाती-तानागतोपादानेन तन्मध्यवर्तिनो वर्तमानस्य कारितानुम-त्योश्चोपसंग्रहान्नवाभिदा आत्मपरिणामत्वेन योगरूपा उपात्ता द्रष्टव्याः तत्रानेनात्मपरिणामरूपेण क्रियाविशेषण-बन्धचिन्ता कृता भवति बन्धस्योपादानमुपात्तं भवति कर्म-योगनिमित्तं बध्यत इति वचनात् एतच्च कश्चिज्जानाति आत्मना सह या सन्मतिः स्वमतिर्वाऽवधिमनःपर्यायकेवलि-जातिस्मरणरूपा तया जानाति कश्चिच्च पक्षधर्म्मान्वयव्यति-रेकलक्षणया हेतुयुक्त्येति ॥ आचा० ॥

अथ किमर्थमसौ कटुकविपाकेषु कर्माश्रवहेतुभूतेषु क्रिया-विशेषेषु प्रवर्त्तत इत्याह—

इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए।जाईमरण-मोयणाए दुक्खपडिघायहेउं एयावंति ॥

सव्वावंति लोगंसि कम्मसमारम्भा परिजाणियव्वा भवंति जस्से ते लोगंसि कम्मसमारम्भा परिण्णाया भवंति सेहु मुणीपरिण्णायकम्मेत्ति वेमि ॥ आचा० मू० ॥

तत्र जीवितमिति जीवन्त्यनेनायुष्कर्म्मणेति जीवितं प्राणधारणमेतच्च प्रतिप्राणि स्वसंविदितमिति कृत्वाप्रत्यक्षासन्नवाचिनेदमानिर्द्दिशति च शब्दो वक्ष्यमाणजात्यादिसमुच्चयार्थः । एवकारोऽवधारणे अस्यैव जीवितस्यार्थे परिफल्गुसारस्य तडिल्लताविलसितचञ्चलस्य बह्वपायस्य दीर्घसुखार्थिक्रियासु प्रवर्तते । तथा हि जीविष्याम्यहमरोगः सुखेन भोगान् भोक्ष्ये ततो व्याध्यपनयनार्थं स्नेहपानलावकापिशितभक्षणादिषु क्रियासु प्रवर्त्तते तथाल्पसुखस्य कृते ऽभिमानग्रहाकुलितचेता बह्वारम्भपरिग्रहाद्वह्वशुभकर्मादत्ते उक्तञ्च । "द्वे वाससी प्रवरयोषिदपायशुद्धाशय्यासनं करिवरस्तुरगो रथो वा । काले भिषग्नियमिताशनपानयात्रा राज्ञः पराक्यमिव सर्वमवेहि शेषं ॥ १ ॥ पुष्ट्यर्थमन्नमिह यत्प्रणाधिप्रयोगैः संत्रासदोषकलुषो नृपतिस्तु भुंक्ते ॥ यन्निर्भयं प्रशमसौख्यरतश्च भैक्षं तत् स्वादुतां भृशमुपैति न पार्थिवान्नं ॥ २ ॥ भृत्येषु मन्त्रिषु सुतेषु मनोरमेषु कान्तासु वा मधुमदांकुरितेक्षणासु । विश्रंभमेति न कदाचिदपि क्षितीशः सर्वाभिशङ्कितमतेः कतरत्तुसौख्यं ॥ ३ ॥ तदेवं मम नवबुद्धतरुणकिसलयपलाशचञ्चलजीवितरतयः कर्माश्रवेषु जीवितोपमर्दादिरूपेषु प्रवर्त्तन्ते तथास्यैव जीवितस्य परिवंदनमाननपूजनार्थं हिंसादिषु प्रवर्तन्ते । तत्र परिवंन्दनं संस्तवः प्रशंसा तदर्थमाचेष्टते तथा ह्यहं मयूरादिपिशिताशनाद्बली तेजसा देदीप्यमानो देवकुमार इव लोकानां प्रशंसास्पदं भविष्यामीति माननमभ्युत्थानासनदानांजलिप्रग्रहादिरूपतदर्थं वा चेष्टमानः कर्म चिनोति तथा पूजनं पूजा द्रविणवस्त्रान्नपानसत्कारप्रणामसेवाविशेषरूपन्तदर्थं वा वर्त्तमानः क्रियासु कर्माश्रवैरात्मानं सम्भावयति तथा हि वीरभोग्या वसुन्धरेति मत्वा पराक्रमतो दण्डभयात्सर्वाः प्रजा विभ्यतीति दण्डयति इत्येवं राज्ञामन्येषामपि यथासम्भवमायोजनीयम् अत्र च वन्दनादीनां द्वंद्वसमासं कृत्वा तादर्थ्ये चतुर्थी विधेया परिवन्दनमाननपूजनाय जीवितस्य कर्माश्रवेषु प्रवर्त्तन्त इति समुदायार्थः । न केवलं परिवन्दनाद्यर्थमेव कर्मादत्तेऽन्यार्थमप्यादत्त इति दर्शयति । जातिश्च मरणञ्च मोचनञ्च जातिमरणमोचनमिति समाहारद्वंद्वात्तादर्थ्ये चतुर्थी एतदर्थञ्च प्राणिनः क्रियासु प्रवर्तमानाः कर्मादते तत्र जात्यर्थं क्रौञ्चारिवंदनादिकाः क्रिया विधत्ते तथा यान् कामान् ब्राह्मणादिभ्यो ददाति तांस्तानन्यजन्मनि पुनर्जातो भोक्ष्यते तथा मनुनाप्युक्तं "वारिदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः । तिलप्रदः प्रजामिष्टामायुष्कमभयप्रदः ॥ १ ॥ अत्र चैकमेव सुभाषितमभयप्रदानमिति तुषमध्ये कणिकावदित्येवमादिकुमार्गोपदेशाद्धिंसादौ प्रवृत्ति विदधाति तथा मरणार्थमपि पितृपिंडदानादिषु क्रियासु प्रवर्त्तते यदि वा ममानेन सम्बन्धी व्यापादितस्तस्य वैरनिर्यातनार्थं वधबन्धादौ प्रवर्त्तते यदि वा मरणनिवृत्त्यर्थमना दुर्गाद्युपयाचितमजादिना वलिं विधत्ते यशोधर इव पिष्टमयकुक्कुटेन तथा मुक्त्यर्थमज्ञानावृतचेतसः पंचाग्नितपोनुष्ठानादिकेषु प्राणयुपमर्दकारिषु प्रवर्त्तमानः कर्माददते यदि वा जातिमरणयोर्विमोचनाय हिंसादिकाः क्रियाः कुर्वते (जाइमरणभोयणायत्ति) पाठान्तरं तत्र भोजनार्थं कृष्यादिकर्मसु प्रवर्त्तमाना वसुधाजलज्वलनपवनवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियव्यापत्तये व्याप्रियन्त इति तथा दुःखप्रतिघातमुररीकृत्यात्मपरित्राणार्थमारम्भानासेवन्ते । तथा हि व्याधिवेदनार्ता लावकपिशितमदिराद्यासेवन्ते तथा वनस्पतिमूलत्वक्पत्रनिर्यासादिसिद्धशतपाकादितैलार्थमग्न्यादिसमारम्भेण पापं कुर्वन्ति स्वतः कारयंत्यन्यैः कुर्वतोऽन्यान् समनुजानत इत्येवमतीतानागतकालयोरपि मनोवाक्काययोगैः कर्मादानं विदधातीत्यायोजनीयं । तथा दुःखप्रतिघातमेव सुखोत्पत्त्यर्थं कलत्रपुत्रगृहोपस्काराद्याददते तल्लाभपालनार्थं च तासु क्रियासु प्रवर्तमानाः पापकर्मासेवन्त इति । उक्तञ्च ॥ "आदौ प्रतिष्ठाधिगमे प्रयासो दारेषु पश्चाद्गृहिणः सुतेषु । कर्त्तुं पुनस्तेषु गुणप्रकर्षे चेष्टा तदुच्चैः पदलंघनाय ॥ १ ॥ तदेवंभूतैः क्रियाविशेषैः कर्मोपादाय नानाविधदुःखशोषनिवृत्तिर्विधेयेति एतावंत एव च क्रियाविशेषा इति दर्शयितुमाह एतावंतीत्यादि एआवन्ती सव्वावन्तीति एतौ शब्दौ मागधदेशीभाषाप्रसिध्या एतावन्तः सर्वेऽपीत्येतत्पर्यायौ एतावन्त एव सर्वस्मिन् लोके धर्माधर्मास्तिकायावच्छिन्ने नभःखंडे ये पूर्वं प्रतिपादिताः कर्मसमारम्भाः क्रियाविशेषा नैतेभ्योऽधिकाः केचन सन्तीत्येवं परिज्ञातव्या भवन्ति सर्वेषां पूर्वत्रोपादानादिति भावः तथा ह्यात्मपरोभयैहिकामुष्मिकातीतानागतवर्तमानकालकृतकारितानुमतिभिरारम्भा क्रियन्ते ते च सर्वेऽपि प्रागुपात्ता यथासम्भवमायोज्या इति । एवं सामान्येन जीवास्तित्वं प्रसाध्य तदुपमर्द्दकारिणाञ्च क्रियाविशेषाणां बन्धहेतुत्वं प्रदर्श्यापि संहारद्वारेण विरतिं प्रतिपादयन्नाह जस्सेत्यादि भगवान् समस्तवस्तुवेदी केवलज्ञानेन साक्षादुपलभ्यैवमाह यस्य मुमुक्षोरेते पूर्वोक्ताः कर्मसमारम्भाः क्रियाविशेषाः कर्मणो वा ज्ञानावरणीयाद्यष्टप्रकारस्य समारम्भा उपादानहेतवस्ते च क्रियाविशेषा एव परि समन्तात् ज्ञाताः परिच्छिन्नाः कर्म्मबन्धहेतुत्वेन भवन्ति । हुरवधारणे मनुते जगतस्त्रिकालावस्थामिति मुनिः स एव मुनिर्ज्ञपरिज्ञया परिज्ञातकर्मा प्रत्याख्यानपरिज्ञया च प्रत्याख्यातकर्म्मबन्धहेतुभूतसमस्तमनोवाक्कायव्यापार इत्यनेन च मोक्षांगभूते ज्ञानक्रिये उपात्ते भवतो न ह्याभ्यां विना मोक्षो भवति यत उक्तं ज्ञानक्रियाभ्यां मोक्ष इति । इति शब्द एतावानयमात्मपदार्थविचारः कर्मबन्धहेतुविचारश्च शकलोद्देशकेन परिसमापित इति प्रदर्शकः यदिवेत्येतदहं ब्रवीमि यत्प्रागुक्तं यच्च वक्ष्ये तत् सर्वं भवदन्तिके साक्षात्श्रुत्वेति ॥ आचा० ॥ टी० ॥

आत्मास्तित्वे बहुभङ्गाः क्रियावादिनोऽक्रियावादिनस्ते च स्वकिरियावादिशब्देऽकिरियावादिशब्दे च ॥ आचा० ॥

आत्मास्तित्वं विस्तरेणाचाराङ्गे यथा—

सुयं मे आउसं तेण भगवया एव मक्खायं इहमेगेसिं णो सण्णा भवइ तं जहा पुरत्थिमाओ वा दिसाओ आगओ अहमंसि दाहिणाओ वा दिसाओ आगओ अहमंसि पच्चत्थिमाओ वा दिसाओ आगओ अहमंसि उत्तराओ वा दिसाओ आगओ अहमंसि उड्ढाओ वा दिसाओ आगओ अह-

मंसि अहे दिसाओ वा आगओ अहमंसि अण्णयरीओ वा दिसाओ अणुदिसाओ वा आगओ अहमंसि एवमेगेसिं णो णाणे भवति ॥ आचा० ॥

अस्य संहितादिक्रमेण व्याख्या संहितोच्चारितैव पदच्छेदस्त्वयं श्रुतं मया आयुष्मन् तेन भगवता एवं व्याख्यातं इह एकेषां नो संज्ञा भवति एकं तिङन्तं शेषाणि सुबंतानि गतः सपदच्छेदसूत्रानुगमः सांप्रतं सूत्रपदार्थः समुन्नीयते भगवान् सुधर्मस्वामी जंबूनामानमिदमाचष्टे यथा श्रुतमाकर्णितमवगतमवधारितमिति यावदनेन स्वमनीषिकाव्युदासो मयेति साक्षान्न पुनः पारंपर्येण आयुष्मन्निति जात्यादिगुणसंभवेऽपि दीर्घायुष्मत्त्वगुणोपादानाद्दीर्घायुरविच्छेदेन शिष्योपदेशप्रदायको यथा स्यात् इहाचारस्य व्याचिख्यासितत्वात्तदर्थस्य च तीर्थकृत्प्रणीतत्वादिति सामर्थ्यप्रापितं तेनेति तीर्थकरमाह यदि वा आमृशता भगवत्पादारविंदमनेन विनय आवेदितो भवति आवसता वा तदंतिक इत्यनेन गुरुकुलवासः कर्त्तव्य इत्यावेदितं भवति एतच्चार्थद्वयं आमुसंतेणंत्येतत्पाठांतरमाश्रित्यावगंतव्यमिति भगवतेति भग ऐश्वर्य्यादिषडर्थात्मकः सोऽस्यास्तीति भगवान् तेन एवमिति वक्ष्यमाणविधिना आख्यातमित्यनेन कृतकत्वव्युदासेनार्थरूपतया आगमस्य नित्यत्वमाह इहेति क्षेत्रे प्रवचने आचारे शस्त्रपरिज्ञायां व्याख्यातमितिसंबंधो यदि वेहेति संसारेण केषां ज्ञानावरणीयावृतानां प्राणिनां नो संज्ञा भवति। संज्ञानं संज्ञा स्मृतिरवबोध इत्यनर्थान्तरं सा नो जायत इत्यर्थ उक्तं च पदार्थः पदविग्रहस्य तु सामासिकपदाभावादप्रकटनमिदानीं चालना। ननु चाकारादिकप्रतिषेधकलघुशब्दसंभवे सति किमर्थं नोशब्देन प्रतिषेध इत्यत्र प्रत्यवस्था सत्यमेवं किं तु प्रेक्षापूर्वकारितया नोशब्दोपादानं। सा चेयमन्येन प्रतिषेधेन सर्वनिषेधः स्याद्यथा न घटोऽघट इति चोक्ते सर्वात्मना घटनिषेधः स च नेष्यते यतः प्रज्ञापनायां दश संज्ञाः सर्वप्राणिनामभिहितास्तासां सर्वासां प्रतिषेधः प्राप्नोतीति कृत्वा ताश्चेमाः "कइ णं भंते सरणाओ पएणत्ताओ गोयमा? दस सरणाओ पएणत्ताओ तं-जहा आहारसएणा भयसएणा मेहुणसएणा परिग्गहसएणा कोहसएणा माणसएणा मायासएणा लोभसएणा ओहसएणा लोगसएणेत्ति" आसां चाप्रतिषेधे स्पष्टो दोषोऽतो नोशब्देन प्रतिषेधनमकारि यतोऽयं सर्वनिषेधवाची देशनिषेधवाची च। तथा हि-नो घट इत्युक्ते यथा घटाभावमात्रं प्रतीयते तथा प्रकरणादिप्रसक्तस्य विधानं स पुनर्विधीयमानप्रतिषेध्यावयवो ग्रीवादिप्रतिषेध्यादन्यो वा। पटादिः प्रतीयत इति। तथा चोक्तं "प्रतिषेधयति समस्तं प्रसक्तमर्थं च जगति नोशब्दः। स पुनस्तदवयवो वा तस्मादर्थान्तरं वा स्यादिति" एवमिहाऽपि न सर्वसंज्ञानिषेधोऽपि तु विशिष्टसंज्ञानिषेधो यथात्मादिपदार्थस्वरूपं गत्यागत्यादिकं ज्ञायते तस्यानिषेध इति ॥ आचा० टी० ॥ इह पुनर्ज्ञानसंज्ञयाऽधिकारो यत् सूत्रेणैव निषिद्ध इह एकेषां नो संज्ञानमवबोधो भवतीति प्रतिषिद्धज्ञानविशेषावगमार्थमाह सूत्रं तंजहेत्यादि णो णायं भवतीति यावत् तद्यथेति प्रतिज्ञातार्थोदाहरणं पुरच्छिमाउत्ति प्राकृतशैल्या मागधदेशीभाषानुवृत्त्या पूर्वस्या दिशोऽभिधायकात् पुरच्छिमशब्दात्पंचम्यंतात्तसा निर्देशः वाशब्द उत्तरपक्षापेक्षया विकल्पार्थः यथा लोके भोक्तव्यं वा शयितव्यं वेति एवं पूर्वस्या वा दक्षिणस्या वेति दिशतीति दिक् अतिसृजति व्यपदिशति द्रव्यं द्रव्यभागं वेत्ति भावः।आचा०टी०॥ अत्र च सामान्यदिग्ग्रहणेऽपि यस्यां दिशि जीवानामविगानेन गत्यागती स्पष्टे सर्वत्र संभवतस्तयैवेहाधिकार इति तामेव निर्युक्तिकृत्साक्षाद्दर्शयति भावदिग्भावेनभाविनी सामर्थ्यादधिकृतैव यतस्तदर्थमन्वादिशाश्चिन्तयन्नाह आचा०॥ तत्रेह एवमेगेसिणो णायं भव इत्यनेन केषांचिदेव संज्ञानिषेधात्केषांचित्तु भवतीत्युक्तं भवति। तत्र सामान्यसंज्ञायां प्रतिप्राणि सिद्धत्वात्तत्कारणपरिज्ञानस्य चेहाकिंचित्कत्वाद्विशिष्टसंज्ञायास्तु केषांचिदेव भावात्तस्याश्च भवांतरगस्यात्मनः स्पष्टप्रतिपादनेनोपयोगित्वादसामान्यसंज्ञाकारणं प्रतिपादनमनादृत्य विशिष्टसंज्ञायाःकारणं सूत्रकृद्दर्शयितुमाह।

( सेज्जं पुण जाणेज्जत्ति सूत्रं यावत् सोहमिति )

इतिनिर्देशो मागधशैल्या प्रथमैकवचनान्तः स इत्यनेन च यः प्राग्निर्दिष्टो ज्ञाता विशिष्टक्षायोपशमादिमान्स प्रत्यवमृश्यते यदीत्यनेनापि यत्प्राग्निर्दिष्टं दिग्विदिगागमनं तथा कोहमभूवमतीतजन्मनि देवो नारकस्तिर्यग्योनिर्मनुष्यो वा स्त्री पुमान्नपुंसको वा मुतो मनुष्यजन्मतः प्रभ्रष्टोऽहं प्रेत्य देवादिर्भविष्यामीत्येतत्परामृश्यते जानीयादवगच्छेदिदमुक्तं भवतीति न कश्चिदनादौ संसृतौ पर्यटन्नसुमान् दिगागमनादिकं जानीयाद्यः पुनर्जानीयात्स एव(सहसम्मइयात्ति) सहशब्दः संबंधवाची सदिति प्रशंसायां मतिर्ज्ञानमयमत्र वाक्यार्थः। आत्मना सह सदा या सन्मतिर्वर्त्तते तया सन्मत्या कश्चिज्जानीते सहशब्दविशेषणाच्च संदात्मस्वभावत्वं मतेरावेदितं भवति न पुनर्यथा वैशेषिकाणां व्यतिरिक्ता सती समवायवृत्त्यात्मनि समवेति यदि वा (सम्मएत्ति) स्वकीयया मत्या स्वमत्येति। तत्र भिन्नमप्यश्वादिकं स्वकार्यं दृष्टमतः सहशब्दविशेषणं सहशब्दश्चासमस्तइति सत्यपि चात्मनः सदा मतिसन्निधाने प्रबलज्ञानावरणावृतत्वान्न सदा विशिष्टोऽवबोधइति सा पुनः सन्मतिः स्वमतिर्वा अवधिमनःपर्यायकेवलज्ञानजातिस्मरणभेदाच्चतुर्विधा ज्ञेया। तत्रावधिमनःपर्यायकेवलानां स्वरूपमन्यत्र विस्तरेणोक्तं जातिस्मरणं त्वाभिनिबोधिकविशेषस्तदेवं चतुर्विधया मत्यात्मनः कश्चिद्विशिष्टदिग्गत्यागती जानाति कश्चित्स्वपरस्तीर्थकृत्सर्वकृत्सैस्तस्यैव परमार्थतः परशब्दवाच्यत्वात्परत्वं तस्य तेन वा व्याकरणमुपदेशस्तेन जीवांस्तद्भेदांश्च पृथिव्यादींश्च गत्यागती च जानाति अपरः पुनरन्येष्वेषां तीर्थकरव्यतिरिक्तानामतिशयज्ञानिनामान्तिके श्रुत्वा जानातीति यच्च जानाति तत् सूत्रावयवेन दर्शयति तद्यथा पूर्वस्या दिश आगतोहमस्म्येवं दक्षिणस्याः पश्चिमायाः उत्तरस्या ऊर्ध्वदिशोऽधोऽन्यतरस्या दिशोनुदिशो वाऽऽगतोहमस्मीत्येवमेकेषां विशिष्टक्षयोपशमादिमतां तीर्थकरान्यातिशयज्ञानिबोधितानां च ज्ञानं भवति। तथा प्रतिविशिष्टदिगागमनपरिज्ञानानन्तरमेषामेतदपिज्ञानं भवति यथास्ति मेऽस्य शरीरकस्याधिष्ठाता ज्ञानदर्शनोपयोगलक्षण उपपादको भवांतरसंक्रांतिभावः सर्वगतो भोक्ता मूर्त्तिरहितो विनाशी शरीरमा-

अव्यापीत्यादिगुणधानात्मेति स च द्रव्यकषाययोगोपयोगज्ञानदर्शनचारित्रवीर्यात्मभेदादष्टधा तत्रोपयोगात्मना बाहुल्येनेहाधिकारः शेषास्तु तदंशतयोपयुज्यन्त इति । तथा अस्ति चात्मा योऽमुष्या दिशोऽनुदिशश्च सकाशादनुसञ्चरति गतिप्रायोग्यकर्मोपादानादनु पश्चात् संचरत्यनुसञ्चराति पाठान्तरं ( वाणुसंसरइत्ति ) दिग्विदिशां गमनं भावदिगागमनं वा स्मरन्तीत्यर्थः । सांप्रतं सूत्रावयवेन पूर्वसूत्रोक्तमेवार्थमुपसंहरति सर्वस्या दिशः सर्वस्याश्चानुदिशो य आगतोऽनुसञ्चरति अनुसंस्मरतीति वा सोहमित्यात्मोल्लेखोऽहंप्रत्ययग्राह्यत्वादात्मन अनेन पूर्वाद्याः प्रज्ञापकादिशः सर्वगृहीता भावदिशश्चेति ।

अमुमेवार्थं निर्युक्तिकृद्दर्शयितुमना गाथात्रितयमाह—

जाणइयंमि तीए अन्नेसिं वाति अंतिए सोच्चा ।
जाणगजणपण्णविओ जीवं तह जीवकायए ॥ ६४ ॥
एत्थ य सहसम्मइया य जं पयं तत्थ जाणना होइ ॥
उवहीमणपज्जवनाणकेवलेजाइसरणे य ॥ ६५ ॥
परवइवागरणं पुण जिणवागरणं जिणा परं नत्थि ।
अण्णेसिं सोवत्तिय जेणेहिं सव्वो परो अण्णो ६६ आचा० ॥

जाणत्यादि एत्थयेत्यादि परेत्यादि कश्चिदनादिसंसृतौ पर्यटन्नवध्यादिकया चतुर्विधया स्वकीयया मत्या जानाति अनानुपूर्वीन्यायप्रकटनार्थं पश्चादुपात्तमप्यन्येषामित्येतत्पदं तावदाचष्टे अन्येषां वातिशयज्ञानिनामंतिके श्रुत्वा जानाति तथा ( जाणगजणपण्णविओ ) इत्यनेन परव्याकरणमुपात्तन्तेनायमर्थो ज्ञापकस्तीर्थकृत् तत्प्रज्ञापितश्च जानाति तत्स्वत एव दर्शयति सामान्यतो जीवमित्यनेन चाधिकृतोद्देशकस्याधिकारमाहेत्ति अत्र च ( सहम्मइएत्ति ) सूत्रे यत् पदं तत्र ( जाणणत्ति ) ज्ञानमुपात्तं भवति मन ज्ञाने मननं मतिरिति कृत्वा तच्च किंभूतमिति दर्शयत्यवधिमनःपर्यायकेवलजातिस्मरणरूपमिति । तत्रावधिज्ञानी संख्येयानसंख्येयान्वा भवान् जानातीत्येवं मनःपर्यायज्ञानोऽपि । केवली तु नियमतोऽनन्तान् जातिस्मरणं सुनियमतः संख्येयानिति शेषं स्पष्टमत्र च सहसन्मत्यादिपरिज्ञाने सुखप्रतिपत्त्यर्थं त्रयो दृष्टांताः । प्रदर्श्यंते । तद्यथा—वसंतपुरे नगरे जितशत्रू राजा धारणी महादेवी तयोर्द्धर्म्मरुच्यभिधानः सुतः । स च राजान्यदा तापसत्वेन प्रव्रजितुमिच्छुर्द्धर्मरुचिं राज्ये स्थापयितुमुद्यतस्तेन च जननी पृष्टा किमिति तातो राज्यश्रियं त्यजति तयोक्तं किमनया चपलया नारकादिसकलदुःखहेतुभूतया स्वर्गापवर्गमार्गार्गलयाऽवश्यमपायिन्या परमार्थत इह लोकेऽप्यभिमानमात्रफलयेत्यतो विहायैनां सकलसुखसाधनं धर्मं कर्त्तुमुद्यतो धर्मरुचिस्तथा कर्ण्योक्तवान्यद्येवं किमहं तातस्यानिष्टो येनैवंभूतां सकलदोषाश्रयणीं मयि नियोजयति सकलकल्याणहेतोर्द्धर्मात्प्रच्यावयतीत्यभिधाय पित्रानुज्ञातस्तेन सह तापसाश्रममगात्तत्र च सकलास्तापसक्रिया यथोक्ताः पालयन्नास्ते । अन्यदामावास्यायाः पूर्वाह्णे केनचित्तापसेनोक्तं यथा भो तापसाः श्वोऽनाकुट्टिर्भविताऽतोऽद्यैव समित्कुसुमकुशकंदफलमूलाद्याहरणं कुरुतैतच्चाकर्ण्य धर्मरुचिना जनकःपृष्टस्तात ! केयमनाकुट्टिरिति तेनोक्तं पुत्र ! कन्दफलादीनामच्छेदनं तदमावास्यादिके विशिष्टे पर्वदिवसे वर्त्तते, सावत्वाच्छेदनादिक्रियायाः । श्रुत्वा चैतदसावचिंतयद्यदि सर्वदानाकुट्टिः स्याच्छोभनं भवेदेवमध्यवसायिनस्तस्यामावास्यायां तपोवनासन्नपथेन गच्छतां साधूनां दर्शनमभूत्ते च तेनाभिहिताः किमद्य भवतामनाकुट्टिर्न सञ्जाता येनाटव्यां प्रस्थितास्तैरप्यभिहितं यथाऽस्माकं यावज्जीवमनाकुट्टिरित्यभिधायातिक्रान्ताः साधवस्तस्य च तदाकर्ण्येहापोहविमर्शनाज्जातिस्मरणमुत्पन्नं यथाहं जन्मांतरे प्रव्रज्यां कृत्वा देवलोकसुखमनुभूयेहागत इत्येवं तेन विशिष्टदिगागमनं स्वमत्या जातिस्मरणरूपया विज्ञातं प्रत्येकबुद्धश्च जातः एवमन्येऽपि वल्कलचीरिश्रेयांसप्रभृतयोऽत्र योज्या इति।परव्याकरणे त्विदमुदाहरणं गौतमस्वामिना भगवान्वर्द्धमानस्वामी पृष्टो भगवन्किमिति मे केवलज्ञानं नोत्पद्यते भगवता व्याकृतं भो गौतम ! भवतोऽतीव ममोपरि स्नेहोऽस्ति तद्वशात्तेनोक्तं भगवन्नेवमेवं किन्निमित्तः पुनरसौ मम भगवदुपरि स्नेहस्ततो भगवता तस्य बहुषु भवान्तरेषु पूर्वसंबंधः समावेदितः (चिरसंचिट्ठोसि मे गोयमेत्येवमादि) तच्च तीर्थकृद्व्याकरणमाकर्ण्य गौतमस्वामिना विशिष्टदिगागमनादि विज्ञानमभूदिति।अन्यश्रवणे त्विदमुदाहरणं मल्लिस्वामिना षण्णां राजपुत्राणामुद्वाहार्थमागतानामवधिज्ञानेन तत्प्रतिबोधनार्थं यथा जन्मान्तरे सहितैरेव प्रव्रज्या कृता यथा च तत्फलं देवलोके जयन्ताभिधानविमानेऽनुभूतं तथाख्यातं तच्चाख्यातं तच्चाकर्ण्य ते लघुकर्मत्वात्प्रतिबुद्धाविशिष्टदिगागमनविज्ञानञ्च सञ्जातं उक्तञ्च "किं च तयं पम्हट्ठं च तया भोजयंतपवरंमि । वुच्छा समयनिविट्ठं देवा तं संभरह जाति"॥इति गाथात्रयतात्पर्य्यार्थः॥ आचा० ॥ टी० ॥

( १४ ) अन्यत्वादिद्वारत्रयव्याचिख्यासयाह–

अण्णत्तममुत्तत्तं णिच्चत्तं चेव भन्नए समयं ।
कारणमविभागाइहेउहिं इमाहिं गाहाहिं ॥ २६२ ॥

व्या०-अन्यत्वं देहात् अमूर्तत्वं स्वरूपेण नित्यत्वं चैव परिणामिनित्यत्वं भण्यते । समकं एकैकेन हेतुना त्रितयमपि युगपदिति एककालमित्यर्थः । कारणाविभागादेर्वक्ष्यमाणलक्षणैर्हेतुभिः इमाभिस्तिसृभिर्निर्युक्तिगाथाभिरेवेति गाथार्थः ॥

कारणविभागकारणविणासबंधस्स पच्चया भावा ।
विरुद्धस्स य अत्थस्सपाउब्भावा विणासा य ॥ २६३ ॥

व्या०कारणविभागकारणं विनाशबंधस्य प्रत्ययाभावादित्यभावशब्दः प्रत्येकमभिसंबध्यते कारणविभागाभावान्न खलु जीवस्य पटादेरिव तंत्वादिकारणविभागोऽस्ति कारणाभावादेव । एवं कारणविनाशाभावेऽपि योज्यं । तथा बंधस्य ज्ञानावरणादिपुद्गलयोगलक्षणस्य प्रत्ययाभावात् हेतुत्वानुपपत्तेः बंधस्येति वध्यमानव्यतिरिक्तबंधज्ञापनार्थं असमासः । व्यतिरेकी चायमन्वयव्यतिरेकावर्थसाधकाविति दर्शनार्थमिति तथा विरुद्धस्य चार्थस्य पटादिनाशे भस्मादेरिव अप्रादुर्भावादविनाशाच्च अप्रादुर्भावेऽनुत्पत्तौ सत्यामविनाशाच्च हेतोर्जीवस्य नित्यत्वं नित्यत्वादमूर्त्तत्वं अमूर्त्तत्वाच्च देहादन्यत्वमिति प्रतिपत्त्यानुगुण्यतो व्यत्ययेन साध्यनिर्देशः।वक्ष्यन्ति च निर्युक्तिकारः ।"जीवस्स सिद्धमेवं णिच्चत्तममुत्तमण्णत्तमिति" गाथासमासार्थः । व्यासार्थस्तु भाष्यादवसेयः । तत्राव्युत्पन्नविनेयासंमोहनिमित्तं यथोपन्यासं तावद्द्वाराणि व्याख्याय पश्चान्निर्युक्तिकाराभिप्रायेणमीलयिष्यतीत्यत आह

अन्नत्तिदारमहुणा अन्नो देहागिहाउ पुरिसोव्व ।
तज्जीवतस्सरीरे य मयघायत्थं इमं भणियं २६४ ॥

व्या० अन्यो देहादिति द्वारमधुना तदेतद्व्याख्यायते अन्यो देहाज्जीव इति गम्यते गृहादिगतपुरुषवदिति दृष्टांतस्तद्भावेऽपि तत्र नियमतोऽभावादिति हेतुरभ्यूह्यः न चासिद्धोऽयं मृतदेहे अदर्शनात् प्रयोगफलमाह तज्जीवतच्छरीरवादिमतविघातार्थमिदं प्रयोगरूपं भणितमिति गाथार्थः॥दश०अ०४॥

प्रयोगान्तरमाह–

देहिंदियाइरित्तो आया खलु तदुवलद्धअत्थाणं ।
तव्विगमेवि सरणओ गेहगवक्खेहिं पुरिसोव्व ॥ २६५ ॥

व्या० खलुशब्दो विशेषणार्थत्वात् कथंचिद्देहेंद्रियातिरिक्त आत्मेतिप्रतिज्ञार्थः। तदुपलब्धार्थानामिति सम्भवतःपरामर्शत्वात् इंद्रियोपलब्धार्थानाम् तद्विगमेऽपींद्रियविगमेऽपि स्मरणादितिहेत्वर्थः स्मरंति चांधवधिरादयः पूर्वानुभूतं रूपादीति गेहगवाक्षैः पुरुषवदिति दृष्टांतः।प्रयोगस्तु कथंचिद्देहेंद्रियातिरिक्त आत्मा तद्विगमेऽपि तदुपलब्धार्थानुस्मरणात् पंचवातायनोपलब्धार्थानुस्मर्तृदेवदत्तवदिति गाथार्थः ॥ दश० अ०४॥

इंद्रियोपलब्धि मत्वा शंकापोहायाह–

न उण इंदियाइं उवलद्धिमंति विगएसु विसयसंभरणा ।
जह गेहगवक्खेहिं जो अणुसरिया स उवलद्धा ॥ २६६ ॥

व्या० न पुनरिंद्रियाण्येवोपलब्धिमंति द्रष्टॄणि कुत इत्याह विगतेष्विंद्रियेषु विषयस्मरणात् तद्गृहीतरूपाद्यनुस्मृतेरंधवधिरादीनामिति । निदर्शनमाह यथा गेहगवाक्षैःकरणभूतैर्दृष्टानर्थाननुस्मरन् योऽनुस्मर्ता स उपलब्धा न तु गवाक्षा एव मत्राधात गाथार्थः ॥ दश० अ० ४ ॥

उक्तमेकेन प्रकारेणान्यत्वद्वारमधुना अमूर्त्तद्वारावसर इत्याह भाष्यकारः ।

संपयममुत्तदारं अइंदियत्ता अछेयभेयत्ता ।
रूवाइविरहओ वा अणाइपरिणामभावाओ ॥ २६७ ॥

व्या० संप्रतममूर्त्तद्वारं तद्व्याख्यायते अमूर्त्तो जीवः अतींद्रियत्वाद् द्रव्येंद्रियाग्राह्यत्वात् अच्छेद्याभेद्यत्वात् खड्गशूलादिना, रूपादिविरहितश्च अरूपत्वादित्यर्थः तथाऽनादिपरिणामभावादिति स्वभावतोऽनाद्यमूर्तपरिणामत्वादिति गाथार्थः । दश० अ० ४ ॥

छउमत्थाणुवलंभा तहेव सव्वन्नुवयणओ चेव ।
लोयाइपसिद्धीओ जीवो मुत्तोत्ति नायव्वो ॥ २६८ ॥

व्या० छद्मस्थानुपलंभात् । अवधिज्ञानिप्रभृतिभिरपि साक्षादगृह्यमाणत्वात् तथैव सर्वज्ञवचनाच्चैव सत्यवक्तृवीतरागवचनादित्यर्थः लोकादिप्रसिद्धेः लोकादावमूर्तत्वेन प्रसिद्धत्वात् ॥ आदिशब्दाद्वेदसमयपरिग्रहः । अमूर्त्तो जीव इति ज्ञातव्यः सर्वत्रैवेयं प्रतिज्ञेति गाथार्थः। उक्तममूर्तद्वारम् । दश० अ० ४ ॥

तस्य चानादिकर्मसंबद्धस्य कदाचिदपि सांसारिकस्यात्मनः स्वरूपेऽनवस्थानात् सत्यप्यमूर्तत्वे मूर्त्तेन कर्मणा संबंधो न विरुध्यते । कर्मसंबंधाच्च सूक्ष्मबादरैकेंद्रियद्वित्रिचतुःपंचेंद्रियपर्याप्तपर्याप्तसाद्यवस्था बहुविधाः प्रादुर्भवन्ति ॥ सूत्र० अ० १ ॥

इदानीं नित्यत्वद्वारावसरस्तथा चाह भाष्यकारः—

णिच्चोत्ति दारमहुणा णिच्चो अविणासिसासओ जीवो ।
भावत्ते सइजम्मा भावाओ न हं व विन्नेओ ॥ २६९ ॥

व्या० नित्य इति नित्यद्वारमधुना अवसरप्राप्तं तद्व्याचिख्यासुराह—"नित्यो जीव इति एतावत्युच्यमाने परैरपि संतानस्य नित्यत्वाभ्युपगमात्सिद्धं साध्यते । तन्निराकरणायाह—अविनाशी क्षणापेक्षयापि न निरन्वयनाशधर्म्मा । एवमपि परिमितकालावस्थायी कैश्चिदिष्यते "कप्पट्ठाइपुढवीभिक्खूवेति" वचनात्तदपोहायाशास्वत इति सर्वकालावस्थायी कुत इत्याह–भावत्वे सति वस्तुत्वे सतीत्यर्थः जन्माभावात् अनुत्पत्तेर्नभोवदाकाशवद्विज्ञेयः भावत्वे सतीति विशेषणं । खरविषाणादिव्यवच्छेदार्थमिति गाथार्थः ।

हेत्वंतराण्याह—

संसाराओ आलोयणाओ तह पच्चभिन्नभावाओ ।
खणभंगविघायट्ठं भणियं तेलोक्कदंसीहिं ॥ २७० ॥

व्या० संसारादिति संसरणं संसारस्तस्मात्स एव नारकः स एव तिर्यगादिति नित्यः । आलोचनादिति आलोचनं करोम्यहं कृतवानहं करिष्येऽहमित्यादिरूपं त्रिकालविषयमिति नित्यः तथा प्रत्यभिज्ञाभावात् स एष इति प्रत्यभिज्ञाप्रत्यय आविद्धदंगनादिसिद्धस्तदभेदग्राहीति नित्य इति । उक्ताभिधानफलमाह क्षणभंगविघातार्थं निरन्वयक्षणिकवस्तुवादविघातार्थं भणितं त्रैलोक्यदर्शिभिस्तीर्थकरैरेतदनंतरोदितं न पुनरेष एव परमार्थ इति गाथार्थः। दश०अ० ४॥

एतदेव दर्शयति—

लोगे वेए समये, निच्चो जीवो विभासओ अम्हं ।
इहरा संसाराई सव्वंपि न जुज्जए तस्स ॥ २७१ ॥

व्या० लोके । नैनं छिन्दंति शस्त्राणीत्यादिवचनप्रामाण्यात् वेदेषु स एष अक्षयोऽज इत्यादिश्रुतिप्रामाण्यात् समये न प्रकृतिर्न विकृतिः पुरुष इति वचनप्रामाण्यात् किमित्याह नित्यो जीवः अप्रच्युतानुत्पन्नस्थिरैकस्वभावः एकांतनित्य एव न चैतन्न्यायमेकस्वभावतया संसरणादिव्यवहारोच्छेदप्रसंगादिति वक्ष्यत्यत आह—विभाषयास्माकं विकल्पनेन भजनया स्यान्नित्य इत्यादिरूपया द्रव्यार्थादेशान्नित्यः पर्यायार्थादेशादनित्य इत्यर्थः । इतरथा यद्येवं नाभ्युपगम्यते ततःसंसारादि संसारालोचनादि सर्वमेव न युज्यते तस्यात्मनः स्वभावांतरानापत्त्या एकस्वभावतया वार्तमानिकभावातिरेकेण भवांतरानापत्तेरेवममूर्तत्वान्यत्वयोरपि विभाषा वेदितव्या अन्यथा व्यवहाराभावप्रसंगात् एकांतामूर्त्तस्यैकांतदेहभिन्नस्य घातिपाताद्यसंभवादित्यत्र बहु वक्तव्यं तत्तु नोच्यते अक्षरगमनिकामात्रत्वात्प्रारंभस्येति गाथार्थः॥ दश०अ० ४॥

एवमन्यत्वादिद्वारत्रयं व्याख्यायाधिकृतनिर्युक्तिगाथां व्याचिख्यासुराह—

कारण अविभागाओ कारणअविणासओ य जीवस्स ।
निच्चत्तं विन्नेयं आगासपडाणुमाणाओ ॥ २७२ ॥

व्या० कारणाविभागात्पटादेस्तंत्वादेरिव कारणविभागाभावादित्यर्थः । कारणाविनाशतश्च कारणाविनाशश्च कारणानामेवाभावात् किमित्याह जीवस्यात्मनो नित्यत्वं विज्ञेयं

कुत इत्याह आकाशपटानुमानाद् त्रानुमानशब्दो दृष्टांतवचनः। आकाशपटदृष्टांतः । ततश्चैवं प्रयोगोनित्य आत्मा स्वाकारणविभागाभावादाकाशवत् तथा कारणविनाशाभावादाकाशवदेव यस्त्वनित्यस्तस्य कारणविभागभावः कारणविनाशभावो वा यथा पटस्येति व्यतिरेकः। पटाद्धि तंतवो विभज्यंते विनश्यन्ति चेति नित्यत्वसिद्धिर्नित्यत्वादमूर्त्तः अमूर्त्तत्वाद्देहादन्य इति गाथार्थः ॥

निर्युक्तिगाथायां कारणविभागाभावात् कारणविनाशाभावाच्चेति द्वारद्वयम् ॥ दश० अ० ४॥

तस्य चैकान्तेन क्षणिकत्वे ध्यानाध्ययनश्रमप्रत्यभिज्ञानाद्यभावः एकांतनित्यत्वे च नारकतिर्यङ्मनुष्यामरगतिपरिणामाभावः स्यात्तस्मात्स्यादनित्यः स्यान्नित्य आत्मेत्यलमतिप्रसंगेन ॥ सूत्र० ॥ अ० १ ॥

दव्वादिएहिं निच्चो, एगंतेणेव जेसि अप्पाउ ।

होइ अभावो तेसिं, सुहदुहसंसारमोक्खाणं ॥ ५९ ॥

व्या० द्रव्यादिभिर्द्रव्यक्षेत्रकालभावैर्नारकत्वविशिष्टक्षेत्रवयोऽवस्थितत्वाऽप्रसन्नत्वादिभिर्नित्योऽविचलितस्वभावः एकांतेनैव सर्वथैव येषां वादिनामात्मा जीवः तुशब्दादन्यच्च वस्तु भवति संजायते, अभावोऽसंभवस्तेषां वादिनां केषां सुखदुःखसंसारमोक्षाणां । तत्राह्लादानुभवरूपं सुखं, तापानुभवरूपं दुःखं, तिर्यङ्नरनारकामरभवसंसरणरूपः संसारः, अष्टप्रकारकर्मबंधवियोगो मोक्षः। तत्र कथं पुनस्तेषां वादिनां सुखाद्यभावः आत्मनोऽप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वादन्यथाचापीरणतेः सदैव नारकत्वादिभावादपरित्यक्ताप्रसन्नत्वे पूर्वरूपस्य च प्रसन्नत्वेनाभवनादेवं शेषेष्वपि भावनीयमिति गाथार्थः ।

ततश्चैवं—

सुहदुक्खसंपओगो, न विज्जइ निच्चवायपक्खंमि ।

एगंतच्छेअंमि अ, सुहदुक्खविगप्पणमजुत्तं ॥ ६० ॥

व्या० सुखदुःखसंप्रयोगः सम्यक्संगतो वा प्रयोगः संप्रयोगः अकल्पित इत्यर्थः । न विद्यते नास्ति न घटत इत्यर्थः क नित्यवादपक्षे नित्यवादाभ्युपगमे संप्रयोगो न विद्यते कल्पितस्तु भवत्येव यथाहुर्नित्यवादिनः । प्रकृत्युपधानतः पुरुषस्य सुखदुःखे स्तः । स्फटिके रक्तादिवद् बुद्धिप्रतिबिंबाद्वान्य इति कल्पितत्वं चास्य आत्मनस्तत्त्वत एव तथा परिणतिमंतरेण सुखाद्यभावादुपधानसन्निधावप्यन्धोपले रक्तादिवत्तदभ्युपगमे चाभ्युपगमक्षतिः। बुद्धिप्रतिबिंबपक्षेऽप्यविचलितस्यात्मनः सदैवैकस्वभावत्वात् । सदैवैकरूपप्रतिबिंबापत्तेः । स्वभाव भेदाभ्युपगमे चानित्यत्वप्रसंग इति। मा भूदनित्यैकांतग्रह इत्यत आह एकांतेन सर्वथा उत्प्रावल्ये न छेदो विनाशः एकान्तोच्छेदः। निरन्वयो नाश इत्यर्थः। अस्मिंश्च किं सुखदुःखयोर्विकल्पनं सुखदुःखविकल्पनमयुक्तं घटमानकम । अयमत्र भावार्थः। एकांतोच्छेदेऽपि सुखाद्यनुभवितुस्तत्क्षण एव सर्वथोच्छेदादहेतुकत्वात्त दुत्तरक्षणस्योत्पत्तिरपि न युज्यते । कुतःपुनस्तद्विकल्पनमिति गाथार्थः । दश० अ० १ ॥

नन्वेवं त्रितयस्याप्येकत्वे कर्ता कर्म करणं चेति को विभागः को भेदो भण्यते अत्रोत्तरं पर्यायांतरविशेषणं तस्माददोषः। इदमुक्तं भवति एक एव कर्त्ता आत्मा व्यतिरिक्तैः कंथचिद्भेदाभिन्नैः कर्मकरणादिपर्यायांतरैर्विशिष्यते इति नोक्तदोष इति । पूर्वं भावितमपीदं पुनरपि स्मारयन्नाह—

एक्कंपि सव्वकारगपरिणामाणन्नभावया नेइ ।

नायाणाणन्नो जह विन्नेयाइ परिणामं ॥

व्या० एकमपि घटादिकं वस्तु सर्वकारकपरिणामलक्षणमन्यान्यभावतामन्यान्यरूपतामेति । यथा ज्ञाता जीवो ज्ञानानन्यः सन्विज्ञेयादिपरिणाममेति स एव हि स्वज्ञाने उपयुज्यमानः कर्ता करणभूतमनन्यत्वात्स एव च करणं स्वयं संवेद्यमानस्तु स एव विज्ञेय इति सविस्तरेण प्रागुक्तमिति । विशे० ॥ इदानीं देहव्यापित्वद्वारावसर इत्याह भाष्यकारः—

वावित्तदारमहुणा देहव्वावीमओगि उराहं च ।

जीवो न उ सव्वगओ देहेलिंगोवलंभाओ ॥ २८० ॥

व्या० व्यापीति द्वारमधुना तदेतद्व्याख्यायते । देहव्यापी शरीरमात्रं व्याप्तुं शीलमस्येति तथा मतः इष्टः प्रवचनज्ञैर्जीवो न तु सर्वग इति योगः तुशब्दस्यावधारणार्थत्वान्न चारावादिमात्रः कुत इत्याह-देहे लिंगोपलभात् शरीर एव सुखादि तल्लिंगोपलब्धेः अग्न्यौष्ण्यवत् उष्णत्वं ह्यग्निलिंगं नान्यत्राग्नेर्न त्वनग्नावीति गाथा प्रयोगार्थः प्रयोगस्तु शरीरनियत देशआत्मा परिमितदेशो लिंगोपलब्धेरग्न्यौष्ण्यवदिति गाथार्थः व्याख्याताप्रथमा मूलद्वारगाथा ॥ दश० अ० ४ ॥

सूत्रकृताङ्गेऽप्यात्मानमधिकृत्य-स च न सर्वव्यापी तद्गुणस्य सर्वत्रानुपलभ्यमानत्वात् घटवत्। नापि श्यामाकतंडुलमात्रोऽगुष्ठपर्वमात्रो वा तावन्मात्रस्योपातशरीराव्यापित्वात् त्वक्पर्यंतशरीरव्यापित्वात् त्वचोपलभ्यमानगुणत्वात् । तस्मात्स्थितमिदमुपात्तशरीरत्वक्पर्यंतशरीरव्याप्यात्मेति ॥ ॥ सूत्र० अ० १ ॥

( तथा च स्याद्वादमञ्जर्याम् ) अथ ते वादिनः काव्यप्रमाणत्वमात्मनः स्वयं संवेद्यमानमप्यपलप्य तादृशकुशास्त्रसंपर्कविनष्टसद्दृष्टयस्तस्य विभुत्वं मन्यंते ।

अतस्तत्रोपालंभमाह—

यत्रैव यो दृष्टगुणः स तत्र कुंभादिवन्निष्प्रतिपक्षमेतत् ।

तथापि देहाद्बहिरात्मतत्त्वमतत्त्ववादोपहताः पठंति ॥ ९ ॥

व्या० यत्रैव देशे यः पदार्थो दृष्टगुणो दृष्टाः प्रत्यक्षादिप्रमाणतोऽनुभूता गुणा धर्मा यस्य स तथा स पदार्थस्तत्रैव विवक्षितदेश एवोपपद्यत इति क्रियाध्याहारो गम्यः पूर्वस्यैवकारस्यावधारणार्थस्यात्राप्यऽभिसंबंधात्तव नान्यत्रेत्यन्ययोगव्यवच्छेदः अमुमेवार्थं दृष्टांतेन दृढयति—कुंभादिवदिति घटादिवत् यथा कुंभादेर्यत्रैव देशे रूपादयो गुणा उपलभ्यन्ते तत्रैव तस्यास्तित्वं प्रतीयते नान्यत्र एवमात्मनोऽपि गुणाश्चैतन्यादयो देह एव दृश्यंते न च हि तस्मात्तत्प्रमाण एवायमिति यद्यपि पुष्पादीनामवस्थानदेशादन्यत्रापि गंधादिगुणा उपलभ्यते तथापि तेन न व्यभिचारस्तदाश्रया हि गंधादिपुद्गलास्तेषां च वैस्रसिक्या प्रायोगिक्या वा गत्या गतिमत्त्वेन गंधः तदुपलंभकघ्राणादिदेशं यावदागमनोपपत्तेरिति अत एवाह—निष्प्रतिपक्षमेतदिति एतन्निष्प्रतिपक्षं बाधकरहितं न हि दृष्टेऽनुपपन्नं नामेति न्यायात् । ननु मंत्रादिना भिन्नदेशस्थानामप्याकर्षणोच्चाटनादिको गुणो योजनशतादेः परतोऽपि दृश्यत इत्यस्ति

वाधकमिति चेन्नैवं वाच्यः स हि न खलु मंत्रादीनां गुणः किं तु तदधिष्ठातृदेवतानां तासां चाकर्षणीयोच्चाटनीयादिदेशगमने कौतस्कुतोऽयमुपालम्भः न जातु गुणो गुणिनमंतरेण्य वर्तत इति। अथोत्तरार्द्धं व्याख्यायते तथापीत्यादि। तथापि एवं निष्पन्नं व्यवस्थितेऽपि तत्त्वेऽतत्त्ववादोपहता अनाचार इत्यत्रेव नञः कुत्सार्थत्वात् कुत्सिततत्त्ववादेन तदभिमताप्ताभासपुरुषविशेषप्रणीतेन तत्त्वाभासप्ररूपणेनोपहता व्यामोहिता देहाद् बहिःशरीरव्यतिरिक्तेऽपि देशे आत्मतत्त्वमात्मस्वरूपं पठंति शास्त्ररूपतया प्रणयंते इत्यक्षरार्थः। भावार्थस्त्वयं आत्मा सर्वगतो न भवति सर्वत्र तद्गुणानुपलब्धेः यो यः सर्वत्रानुपलभ्यमानगुणः स सर्वगतो न भवति यथा घटस्तथा चायं तस्मात्तथा व्यतिरेके व्योमादि नचायमसिद्धो हेतुः कायव्यतिरिक्तदेशे तद्गुणानां बुद्ध्यादीनां वादिना प्रतिवादिना वाऽनभ्युपगमात् तथा च भट्टश्रीधरः सर्वगतत्वेऽप्यात्मनो देहप्रदेशे ज्ञातृत्वं नान्यत्र शरीरस्योपभोगायतनत्वात् अन्यथा तस्य वैयर्थ्यादिति अथास्त्यदृष्टमात्मनो विशेषगुणस्तच्च सर्वोत्पत्तिमतां निमित्तं सर्वव्यापकं च कथमितरथा द्वीपांतरादिष्वपि प्रतिनियतदेशवर्तिपुरुषोपभोग्यानि कनकरत्नचंदनांगनादीनि तेनोत्पाद्यंते गुणश्च गुणिनं विहाय न वर्ततेऽतोऽनुमीयते सर्वगत आत्मेति नैवं अदृष्टस्य सर्वगतत्वसाधने प्रमाणाभावात् अथास्त्येव प्रमाणं वह्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पतनं चादृष्टकारितमिति चेन्न तयोस्तत्स्वभावत्वादेव तत्सिद्धेः दहनस्य दाहशक्तिवत् साप्यदृष्टकारिता चेत्तर्हि जगत्त्रयवैचित्रीसूत्रणेऽपि सैव सूत्रधारायतां किमीश्वरकल्पनया तन्नायमसिद्धो हेतुः नचानैकांतिकः साध्यसाधनयोर्व्याप्तिग्रहणेन व्यभिचाराभावात् नापि विरुद्धोऽत्यंतं विपक्षव्यावृत्तत्वात् आत्मगुणाश्च बुद्ध्यादयः शरीर एवोपलभ्यंते ततो गुणिनापि तत्रैव भाव्यमिति सिद्धः कायप्रमाण आत्मा। अन्यच्च त्वयात्मनां बहुत्वमिष्यते "नानात्मानो व्यवस्थात" इति वचनात् ते च व्यापकास्तेषां प्रदीपप्रभामण्डलानामिव परस्परानुवेधेन तदाश्रितशुभाशुभकर्मणामपि परस्परं सङ्करः स्यात् तथा चैकस्य शुभकर्मणाऽन्यः सुखी भवेत् इतरस्याशुभकर्मणाऽन्यो दुःखीत्यसमंजसं समापद्येत अन्यच्चैकस्यैवात्मनः स्वोपात्तशुभकर्मविपाकेन सुखित्वं परोपार्जिताऽशुभकर्मविपाकसंबंधेन च दुःखित्वमिति युगपत् सुखदुःखसंवेदनप्रसंगः अथ स्वावष्टब्धभोगायतनमाश्रित्यैव शुभाशुभयोर्भोग इति चेत्तर्हि स्वोपार्जितमप्यदृष्टं कथं भोगायतनाद् बहिर्निष्क्रम्य वह्नेरूर्ध्वज्वलनादिकं करोतीति चिंत्यमेतत्। आत्मनां च सर्वगतत्वे एकैकस्य सृष्टिकर्तृत्वप्रसंगः सर्वगतत्वेनेश्वरांतरानुप्रवेशस्य संभावनीयत्वात् ईश्वरस्य वा तदंतराऽनुप्रवेशे तस्यापि अकर्तृत्वापत्तिःन हि क्षीरनीरयोरन्योन्यसंबंधे एकतरस्य पानादिक्रियाऽन्यतरस्य न भवतीति युक्तं वक्तुं किंचात्मनः सर्वगतत्वे नरनारकादिपर्यायाणां युगपदनुभवानुषंगः अथ भोगायतनाभ्युपगमान्नायं दोष इति चेन्ननु स भोगायतनं सर्वात्मनावष्टभ्नीयादेकदेशेन वा सर्वात्मनाचेदस्मदभिमतांगीकारः एकदेशेन चेत्सावयवत्वप्रसंगः परिपूर्णभोगाभावश्च अथात्मनो व्यापकत्वाभावे दिग्देशान्तरवर्तिपरमाणुभिर्युगपत् संयोगाभावादाद्यकर्माभावस्तदभावादंत्यसंयोगस्य तन्निर्मितशरीरस्य तेन तत्संबंधस्य चाभावादनुपायसिद्धः सर्वदा सर्वेषां मोक्षः स्यात् नैवं यद्येन संयुक्तं तदेव तं प्रत्युपसर्पतीति नियमासंभवात् अयस्कांतं प्रत्ययसस्तेनासंयुक्तस्याप्याकर्षणोपलब्धेः। अथासंयुक्तस्याप्याकर्षणे तच्छरीरारंभं प्रत्येकमुखीभूतानां त्रिभुवनोदरविवरवर्त्तिपरमाणूनामुपसर्पणप्रसंगात्सजाने तच्छरीरं कियत्प्रमाणं स्यादिति चेत् संयुक्तस्याप्याकर्षणे कथं स एव दोषो न भवेत् आत्मनो व्यापकत्वेन सकलपरमाणूनां तेन संयोगात् अथ तद्भावाविशेषेऽप्यदृष्टवसाद् विवक्षितशरीरोत्पादनानुगुणा नियता एव परमाणव उपसर्पंति तदितरत्रापि तुल्यं। अथास्तु यथाकथंचिच्छरीरोत्पत्तिस्तथापि सावयवं शरीरं प्रत्यवयवमनुप्रविशन्नात्मा सावयवः स्यात्तथा चास्य पटादिवत्कार्यत्वप्रसंगः कार्यत्वे चासौ विजातीयैस्सजातीयैर्वा कारणैरारभ्येत न तावद्विजातीयैस्तेषामनारंभकत्वान्न हि तंतवो घटमारभंते न च सजातीयैस्तं आत्मत्वाभिसंबंधादेव तेषां कारणानां सजातीयत्वं पार्थिवादि परमाणुनां विजातीयत्वात् तथा चात्मभिरात्मारभ्यत इत्यायातं तच्चायुक्तम् एकत्र शरीरेऽनेकात्मनामात्मारंभकाणामसंभवात् संभवे वा प्रतिसंधानाऽनुपपत्तिः न ह्यन्येन दृष्टमन्यः प्रतिसंधातुमर्हति अतिप्रसंगात् तदारभ्यत्वे चास्य घटवदवयवक्रियातो विभागात्संयोगविनाशाद्विनाशः स्यात्। तस्माद्व्यापक एवात्मा युज्यते कायप्रमाणतायामुक्तदोषसद्भावात् इति चेन्न सावयवत्वकार्यत्वयोः कथंचिदात्मन्यभ्युपगमात् तत्र सावयवत्वं तावदसंख्येयप्रदेशात्मकत्वात् तथाच द्रव्यालंकारकारः "आकाशोऽपि सदेशः सकृत् सर्वमूर्ताभि संबंधार्हत्वात् इति" यद्यप्यवयवप्रदेशयोर्गन्धहस्तादिषु भेदोस्ति तथापि नात्र सूक्ष्मेक्षिका चिन्त्या प्रदेशेष्वप्यवयवव्यवहारात् कार्यत्वन्तु वक्ष्यामः नन्वात्मनां कार्यत्वे घटादिवत्प्राक् प्रसिद्धसमान जातीयावयवारभ्यत्वप्रसक्तिः अवयवा ह्यवयविनमारभंते यथा तंतवः पटमिति चेन्न वाच्यं न खलु घटादावपि कार्ये प्राक्प्रसिद्धसमानजातीयकपालसंयोगात्मत्वं दृष्टं कुंभकारादिव्यापारान्वितान्मृत्पिंडात्प्रथममेव पृथुबुध्नोदराद्याकारस्यास्योत्पत्तिप्रतीतेः द्रव्यस्य हि पूर्वाकारपरित्यागेनोत्तराकारपरिणामः कार्यत्वं तच्च बहिरिवांतरप्यनुभूयत एव ततश्चात्मापि स्यात् कार्यः न च पटादौ स्वावयवसंयोगपूर्वककार्यत्वोपलंभात्सर्वत्र तथा भावो युक्तः काष्ठे लोहलेख्यत्वोपलंभाद्वज्रेऽपि तथाभावप्रसंगात् प्रमाणबाधनमुभयत्रापितुल्यं न चोक्तलक्षणकार्यत्वाभ्युपगमेऽप्यात्मनोऽनित्यत्वानुषंगात्प्रतिसंधानाभावोऽनुपज्यते कथंचिदनित्यत्वे सत्येवास्योपपद्यमानत्वात् प्रतिसंधानं हि यमहमद्राक्षं तमहं स्मरामि इत्यादिरूपं तच्चैकांतनित्यत्वे कथमुपपद्यतेऽवस्थाभेदात् अन्या ह्यनुभवावस्थाऽन्या च स्मरणावस्था अवस्थाभेदे चाऽवस्थावतोऽपि भेदादेकरूपत्वक्षतेः कथंचिदनित्यत्वं युक्त्या यातं केन वार्यताम्। अथात्मनः शरीरपरिमाणत्वे मूर्तत्वानुषङ्गाच्छरीरेऽनुप्रवेशो न स्यान्मूर्ते मूर्तस्यानुप्रवेशविरोधात्ततो निरात्मकमेवाखिलं शरीरं प्राप्नोतीति चेत् किमिदं मूर्तत्वं नाम असर्वगतद्रव्यपरिमाणत्वं रूपादिमत्त्वं वा। तत्र नाद्यः पक्षो दोषाय सम्मतत्वात्। द्वितीयस्त्वयुक्तो व्याप्त्यभावान्नहि यदसर्वगतं तन्नियमेन रूपादिमदित्यविनाभावोऽस्ति मनसोऽसर्वगत-

त्वेऽपि भवन्मते तदसंभवात् आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वं चेत्युक्तत्वान्मनसो वैधर्म्यात्सर्वगतत्वप्रतिषेधनात् अतो नात्मनः शरीरेऽनुप्रवेशानुपपत्तिर्येन निरात्मकं तत्स्यात् असर्वगतद्रव्यपरिमाणलक्षणमूर्त्तत्वस्य मनोवत्प्रवेशाऽप्रतिबंधकत्वात् रूपादिमत्त्वलक्षणमूर्त्तत्वोपेतस्यापि जलादेर्वालुकादावनुप्रवेशो न निषिध्यते। आत्मनस्तु तद्रहितस्यापिं तत्रासौ प्रतिषिध्यते इति महाच्चित्रम् ।अथात्मनः कायप्रमाणत्वे वालशरीरपरिमाणस्य सतो युवशरीरपरिमाणस्वीकारः कथं स्यात् किंतत्परिमाणपरित्यागात्तदपरित्यागाद्वा परित्यागाच्चेत्तदा शरीरवत्तस्याऽनित्यत्वप्रसंगात्परलोकाद्यभावानुषंगः अथापरित्यागात्तन्न पूर्वपरिमाणापरित्यागे शरीरवत्तस्योत्तर परिमाणोत्पत्त्यनुपपत्तेः तदयुक्तं युवशरीरपरिमाणावस्थायामात्मनो वालशरीरपरिमाणपरित्यागे सर्वथा विनाशाऽसंभवात् विफणावस्थोत्पादे सर्पवदिति । कथं परलोकाभावोऽनुषज्यते पर्यायतस्तस्या नित्यत्वेऽपि द्रव्यतो नित्यत्वात् । अथात्मनः कायप्रमाणत्वे तत्खंडने खंडनप्रसंग इति चेत्कः किमाह । शरीरस्य खंडने कथंचित् तत्खंडनस्येष्टत्वात् शरीरसंबद्धात्मप्रदेशेभ्यो हि कतिपयात्मप्रदेशानां खंडितशरीरप्रदेशेऽवस्थानादात्मनः खंडनं तच्चात्र विद्यत एवाऽन्यथा शरीरात् पृथग्भूतावयवस्य कंपोपलब्धिर्न स्यात् न च खंडितावयवानुप्रविष्टस्यात्मप्रदेशस्य पृथगात्मत्वप्रसंगस्तत्रैवानुप्रवेशात्।नचैकत्र संतानेऽनेके आत्मानःअकार्थप्रतिभासिज्ञानानामेकप्रमात्राधारतया प्रतिभासाभावप्रसंगात् शरीरांतरव्यवस्थितानेकज्ञानावसेयार्थसंवित्तिवत् कथं खंडितावयवयोः संघट्टनं पश्चादिति चेत् एकांतेन छेदानभ्युपगमात् पद्मनालतंतुवच्छेदस्यापि स्वीकारात् तथाभूतादृष्टवशात्तत्संघट्टनमविरुद्धमेवेति तनुपरिमाण एवात्मार्गीकर्त्तव्यो न व्यापकस्तथा चात्मा व्यापको न भवति चेतनत्वाद्यत्तु व्यापकं न तच्चेतनं यथा व्योमचेतनश्चात्मा तस्मान्न व्यापकः अव्यापकत्वे चास्य तत्रैवोपलभ्यमानगुणत्वेन सिद्धा कायप्रमाणता यत् पुनरष्टसमयसाध्यकेवलिसमुद्घातदशायामार्हतानामपि चतुर्दशरज्ज्वात्मकलोकव्यापित्वेनात्मनः सर्वव्यापकत्वं तत् कदाचित्कमितिन तेन व्यभिचारः स्याद्वादमंत्रकवचावगुंठितानां च नेदृशविभीषिकाभ्यो भयमिति काव्यार्थः ॥ स्या० । ६ ॥

( १५ ) इदानीं कर्तृद्वारावसरस्तथा चाह—

कत्तत्तिदारमहुणा सकम्मफलभोइणो जओ जीवो ।
वाणियकिसीवला इव कविलमयनिसेहणं एयं ॥ २७९ ॥

व्या०। कर्त्तेति द्वारमधुना तदेतद्व्याख्यायते स्वकर्मफलभोगिनो यतो जीवास्ततः कर्तार इति वणिक्कृषीवलादय इव न ह्यमी अकृतमुपभुंजन्त इति प्रयोगार्थः।प्रयोगस्तु कर्तात्मा स्वकर्मफलभोक्तृत्वात्कर्षकादिवत् । ऐदंपर्यमाह कपिलमतनिषेधमेतत्सांख्यमतनिराकरणमेतत् तत्राकर्त्तृवादप्रसिद्धेरिति गाथार्थः ॥ मूलद्वारगाथाद्वये व्याख्यातं कर्त्तृद्वारम् ॥ दश० अ० ४ ॥ ( तथा च दशवैकालिके )

जेसिं पि अत्थि जीवो वत्तव्वा ते वि अम्ह वि स अत्थि ।
किं तु अकत्ता न भवइ वेययइ जेण सुहदुक्खं ७४ ॥

व्या० । येषामपि द्रव्यास्तिकादिनयमतावलंविनां तन्त्रांतरीयाणां किं अस्ति विद्यते आत्मा जीवो वक्तव्यास्तेऽपि तंत्रांतरीयाः साध्वेतदस्माकमप्यस्ति स । तदभावे सर्वक्रियावैफल्यात् अकर्त्ता न भवति सुकृतदुष्कृतानां कर्मणामकर्त्ता न भवत्यनिष्पादको न भवति किं तु कर्त्तैव अत्रोपपत्तिमाह । वेदयते अनुभवति येन कारणेन किं सुखदुःखं दुष्कृतसुकृतकर्म्मफलमिति भावः । न चाकर्त्तुरात्मनस्तदनुभवो युज्यते अतिप्रसंगान्मुक्तानामपि सांसारिकसुखदुःखवेदनापत्तेरकर्तृत्वाविशेषात् प्रकृत्यादिवियोगस्याप्यनाधेयातिशयमेकांतेनाकर्त्तारमात्मानं प्रत्यकिंचित्करत्वादलं विस्तरेणेति गाथार्थः ॥ दश० अ० १ ॥

( विशेषावश्यके आत्मनः सक्रियत्वं साधयन्नाह )

कत्ताइत्तणओ वा सक्किरिओ यं मओ कुलालोव्व ।
देहप्फदणउ वा पच्चक्खं जंतपुरिसोव्व ॥

अथवा सक्रियोऽयमात्मा कर्तृत्वात्कुलालवदादिशब्दाद् भोक्तृत्वादित्यादि वाच्यं अथवा सक्रिय आत्मा प्रत्यक्षत एव देहपरिस्पंददर्शनाद्यंत्रपुरुषवदिति पराशंकां प्रतिविधानं चाह—

देहप्फंदणहेऊ होज्ज पयतोति सो वि नाकिरिए ।
होज्जादिट्ठे व सई तदरुवत्तेनणु समाणं ॥
रुवितंमि सदेहो वव्वो त्यप्फंदणे पुणो हेऊए ।
इत्ति पयप्फंदणमवेक्खणाणं न वियजुत्तं ॥

अथैवं ब्रूषे देहपरिस्पंदहेतुरात्मनः प्रयत्नो न तु क्रिया अतो नात्मनः सक्रियत्वसिद्धिरित्यभिप्रायः । अत्रोत्तरमाह । सोपि प्रयत्नो नभसीवाऽक्रिये आत्मनि न संभवत्यतः सक्रिय एवासौ अमूर्त्तस्य च प्रयत्नस्य देहपरिस्पंदहेतुत्वे कोऽन्यो हेतुरिति वाच्यम् । अन्यहेतुः निरपेक्षः स्वत एवायं परिस्यंदहेतुरिति चेद्यद्येवमात्मापि तद्धेतुर्भविष्यति किमंतर्गडुना प्रयत्नेन अथादृष्टः कोऽपि देहपरिस्पंदहेतुर्न त्वात्मा निष्क्रियत्वात् ननु सोऽप्यदृष्टः किं मूर्तोऽमूर्तो वा यद्यमूर्त्तस्तर्हि आत्मापि देहपरिस्पन्दहेतुः किं नेष्यः किं नेष्यते मूर्त्तत्वाविशेषादथ मूर्त्तिमान् दृष्टः तर्हि स कार्म्मणशरीरलक्षणो देह एव नान्यः संभवति तस्यापि च वहिर्दृश्यदेहपरिस्पंदहेतुतया व्याप्रियमाणस्य परिस्पंदो द्रष्टव्यः स्वस्य चान्यहेतुर्वाच्यस्तस्याऽप्यन्यस्तस्यापि चान्य इत्यनवस्था अथ स्वभावादेवादृष्टस्य कार्म्मणदेहस्य परिस्पन्दः प्रवर्त्तते तर्हि वहिर्दृश्यस्यापि देहस्य तत एव तत्प्रवृत्तिर्भविष्यति किमदृष्टकार्म्मणदेहपरिकल्पनेन अस्त्येवमिति चेत्तदयुक्तम् । अचेतनानामेवंभूतप्रतिनियतविशिष्टपरिस्पन्दनस्वाभाविकत्वानुपपत्तेः "नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणा" दित्यादिदोषप्रसंगात् तस्मात्कर्मविशिष्ट आत्मैव प्रतिनियतदेहपरिस्पंदनहेतुत्वेन व्याप्रियत इति सक्रियोऽसाविति ॥ विशे० ॥

सांख्यमते आत्मनोऽक्रियत्वम् तथाच स्याद्वादमञ्जर्याम्।
"अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः । अकर्ता निर्ग-

णः सूक्ष्म आत्मा कपिलदर्शने" इति ॥ स्या० ॥

( एतन्मतनिराकरणं सूत्रकृताङ्गे यथा )

जे केइ लोगंमि उ अकिरियआया, अन्नेण पुट्ठा धुयमादिसंति । आरंभसत्ता गढिता य लोय, धम्मं ण जाणंति विमुक्खहेउं ॥ १६ ॥ सूत्र० ॥

ये केचन अस्मिन् लोके अक्रिय आत्मा येषामभ्युपगमे तेऽक्रियात्मनः सांख्यास्तेषां हि सर्वव्यापित्वादात्मा निष्क्रियः पठ्यते । तथा चोक्तम् अकर्त्ता निर्गुणो भोक्ता आत्मा कपिलदर्शन इति । तु शब्दो विशेषणे । स चैतद्विशिनष्टि । अमूर्तत्वव्यापित्वाभ्यामात्मनोऽक्रियत्वमेव बुध्यते ते चाक्रियात्मवादिनोऽन्येनाक्रियत्वे सति बंधमोक्षौ न घटेते इत्यभिप्रायवता मोक्षसद्भावं पृष्टाः संतोऽक्रियावाददर्शनेऽपि धूतं मोक्षं तदभावमादिशंति प्रतिपादयंति ते तु पचनपाचनादिके स्नानार्थं जलावगाहनरूपे वाऽऽरंभे सावद्ये सक्ता अध्युपपन्ना लोके मोक्षैकहेतुभूतं धर्मं श्रुतचारित्राख्यं न जानंति कुमार्गग्राहिणो न सम्यगवगच्छंतीति ॥ सूत्र० अ० १० ॥

( १६ आत्मनो विभुत्वविचारः सम्मतितर्के )

न चात्मनो विभुत्वमसिद्धं अनुमानात् तत्सिद्धेस्तथाहि बुध्यधिकरणं द्रव्यं विभु नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वात् यद्यन्नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानं तत्तद्विभु यथा च बुध्यधिकरणं द्रव्यं तस्माद्विभु नच बुद्धेर्गुणत्वासिद्धेर्हेतुविशेषणासिद्ध्या हेतोरसिद्धिरभिधातुं शक्या बुद्धिगुणत्वस्यानुमानेन सिद्धेस्तथा हि गुणो बुद्धिः प्रतिषिध्यमाने द्रव्यकर्मभावे सति संबंधित्वाद्यो यः प्रतिषिध्यमानद्रव्यकर्मभावे सति सत्तासंबंधी स स गुणो यथा रूपादिस्तथा च बुद्धिस्तस्माद् गुणः ॥ सम्म० ॥

बुद्धेर्गुणत्वासाधनं बुद्धिशब्दे ॥ सम्म० ॥

आत्मनःप्रदेशत्वाप्रदेशत्वविचारः संमतितर्के यथा न चात्मनः प्रदेशास्संति येन प्रदेशवृत्तित्वं ज्ञातस्य सिद्धं स्यात्कल्पिततत्प्रदेशाभ्युपगमे च तद्वृत्तित्वमपि हेतुः कल्पित इति न कल्पितात्साधनात्साध्यसिद्धिर्युक्ता सर्वतः सर्वसिद्धिप्रसंगात्सांदिग्धत्वे पक्षव्यावृत्तिकत्वं च हेतोर्विपर्यये बाधकप्रमाणावृत्त्यात्रापि समानमिति तथा स्वदेहमात्रव्यापकत्वेन हर्षविषादाद्यनेकविवर्तात्मकस्याहमिति स्वसंवेदनप्रत्यक्षसिद्धत्वादात्मनो विभुत्वसाधकत्वेनोपन्यस्यमानः सर्व्व एव हेतुः प्रत्यक्षबाधितकर्म्मनिर्देशानंतरप्रयुक्तत्वेन कालात्ययापदिष्टः सप्रतिपक्षश्चायं हेतुरित्यसत्प्रतिपक्षत्वमप्यस्य लक्षणमसिद्धं स्वदेहमात्रात्मप्रसाधकश्च प्रतिपक्षहेतुरत्रैव प्रदर्शयिष्यते तज्ञातोऽपि हेतोरात्मनो विभुत्वसिद्धिः यदप्यात्मनो विभुत्वसाधनं कैश्चिदुपन्यस्तमदृष्टं स्वाश्रयसंयुक्ते आश्रयांतरे कर्म्मारभतं एकद्रव्यत्वे सति क्रियाहेतुगुणत्वाद्यो यः एकद्रव्यत्वे सति क्रियाहेतुगुणः स स स्वाश्रयसंयुक्ते आश्रयांतरे कर्मारभते यथा वेगस्तथा चादृष्टं तस्मात्तदपि स्वाश्रयसंयुक्ते आश्रयांतरे कर्म्मारभत इति नचासिद्धं क्रियाहेतुगुणत्वमग्नेरूर्द्धज्वलनं वायोराधेयत्वात् एकद्रव्यमदृष्टं विशेषगुणत्वाच्छब्दवत् एकद्रव्यत्वादित्युच्यमाने रूपादिभिर्व्यभिचारस्तन्निवृत्त्यर्थं क्रियाहेतुगुणत्वादित्युक्तं क्रियाहेतुगुणत्वादित्युच्यमाने मुसलहस्तसंयोगेन स्वाश्रयासंयुक्तस्तंभादिचलनहेतुताव्यभिचारस्तन्निवृत्त्यर्थमेकद्रव्यत्वे सतीति विशेषणं एकद्रव्यत्वे सति क्रियाहेतुत्वादित्युच्यमाने स्वाश्रयासंयुक्तलोहादिक्रियाहेतुनायस्कांतेन व्यभिचारस्तन्निवृत्त्यर्थं गुणत्वादित्यभिधानं एतदपि प्रत्यक्षबाधितप्रत्यक्षासाधकत्वेनैकशाखाप्रभवत्वानुमानवदनुमानाभासमेकद्रव्यत्वे इति च विशेषणं किमेकस्मिन्द्रव्ये संयुक्तत्वादुत तत्र समवायात्तत्र यद्याद्यः पक्षः स न युक्तः संयोगगुणेनादृष्टस्य गुणवत्त्वात् तद्द्रव्यत्वप्रसक्तेः क्रियाहेतुगुणत्वादित्येतस्य बाधाप्रसङ्गादथ द्वितीयस्तदा द्रव्येण सह कथंचिदेकत्वमदृष्टस्य प्राप्तम् न ह्यन्यस्यान्यत्र समवायः घटरूपादिषु तस्य तत्रानुभूतस्यैवोपलब्धेः न हि घटाद्रूपादयस्तदंतरालवर्त्ती समवायश्च भिन्नप्रतीतिगोचरा अपि तु कथंचित् रूपाद्यात्मका घटपटादयः तदात्मकाश्च रूपादयः प्रतीतिगोचरचारिणोऽनुभूयंते ऽथवा गुणगुणिभावेऽतिप्रसंगात्पटस्यापि रूपादयो घटे स्युस्तेषां तत्राप्यप्रतीतेरेषां तु प्रतीतेरित्यादिकं प्रतिविहितत्वान्नात्रोद्घोष्यते न समवाये नैकत्वात्मनि वर्त्तनाददृष्टस्यैकद्रव्यत्वं वादिप्रतिवादिनोरसिद्धमेकांतभेदे समवायाभावेनैकद्रव्यत्वस्यासिद्धेरथ गुणिनो गुणानामनर्थांतरत्वे गुणगुणिनोरन्यतर एव स्यादर्थांतरत्वे परपक्ष एव समर्थितः स्यादिति समवायः सिद्धः कथंचिद्वादोपि न युक्तोऽनवस्थादिदोषप्रसंगादयुक्तमेतत्पक्षांतरेऽप्यस्य समानत्वात्तथाहि द्वित्वसंख्यासंयोगादिकमेनकेन द्रव्येणातिसंबध्यमानं यदि सर्वात्मनाभिसंबध्यतेतदा द्वित्वसंख्यादिमात्रं द्रव्यमात्रं वा स्यादेकेनैव वा द्रव्येण सर्व्वात्मनाभिसंबंधान्न द्रव्यांतरेण तत्प्रतीतिरथैकेन देशेनैकत्र वर्त्तते ऽन्येनान्यत्र तेऽपि देशा यदि ततोभिन्नास्तेष्वपि स तथैव वर्त्तते इत्यनवस्था भिन्नाश्चेदुक्तो दोषः कथंचित्पक्षे परवाद एव समर्थितः स्यादित्यात्मना सहादृष्टस्य कथंचिदनन्यभावःएवैकद्रव्यत्वमित्यविभुत्वाद् गुणानां तदव्यतिरिक्तस्यात्मनोप्यविभुत्वमिति विपक्षः साधकत्वादेकद्रव्यत्वलक्षणस्य हेतुविशेषणस्य विरुद्धत्वं क्रियाहेतुगुणत्वादित्यत्रापि यदि देवदत्तसंयुक्तात्मप्रदेशे वर्त्तमानमदृष्टं द्वीपांतरवर्त्तिषु मुक्ताफलादिषु देवदत्तं प्रत्युपसर्प्पणवत्सु क्रियाहेतुस्तद्युक्तमतिदूरत्वेन द्वीपांतरवर्त्तिभिस्तैस्तस्यानभिसंबंधित्वेन तत्र क्रियाहेतुत्वायोगात् तथापि तद्धेतुत्वे सर्वत्र स्यादविशेषात् अथाऽनभिसंबंधाविशेषेऽपि यदेव योग्यं तदेव तेनाकृष्यते न सर्वमिति नातिप्रसंगो न च चक्षुषोःप्राप्यकारित्वेऽपि यदेव योग्यं तदेव तद्ग्राह्यमिति यदुक्तं परेणाप्राप्यकारित्वे चक्षुषोर्दूरव्यवस्थितस्यापि ग्रहणप्रसंग इत्ययुक्तं स्यादथ स्वाश्रयसंयोगसंबंधसंभवादनतिसंबंधादित्यसिद्धं तथाहि यमात्मानमाश्रित्यदृष्टं तेन संयुक्तानि देशांतरवर्ति मुक्ताफलादीनि देवदत्तं प्रत्याकृष्यमाणानि न सर्वस्याकर्षणप्रसंगास्तेनाभिसंबंधाविशेषान्न च यददृष्टेन यज्जन्यते तत्तेनाकृष्यत इति कल्पना युक्तिमती देवदत्तशरीरारंभकपरमाणूनां तददृष्टाजन्यत्वे नानाकर्षणप्रसंगास्तथाप्याकर्षणे इति प्रसंगः प्रतिपादित एव यथा च कारणत्वाविशेषे घटदेशादौ सन्निहितमेव दंडादिकं घटादिकार्यं जनयत्यदृष्टंत्वन्यथेत्यभ्युपगमे तथा बाह्येन्द्रियत्वाऽविशेषेऽपि स्पर्शनेन्द्रियाप्राप्तमर्थमवभासयति लोचनं त्वन्यथेत्यभ्युपगमः किन्न युक्तो नापि द्वीपांतर

र्वति मुक्तादिसंयुक्ताऽप्रदेशे वर्तमानं तं प्रत्युपसर्प्पणहेतुर्विकल्पानुपपत्तेस्तथाहि-यथा वायुः स्वयं देवदत्तं प्रत्युपसर्पणवान् तेषां तृणादीनां तं प्रत्युपसर्प्पणहेतुः तथा यद्यदृष्टमपि त प्रत्युपसर्प्पन् स्वयमन्येषां तं प्रत्युपसर्प्पणहेतुस्तथा सत्यदृष्टस्यैव मुक्तादेरपि तथैव तं प्रत्युपसर्प्पणाविरोधाद् व्यर्थमदृष्टपरिकल्पनं तथाभ्युपगमे च यद्देवदत्तं प्रत्युपसर्प्पति तद्देवदत्तगुणाकृष्टं तं प्रत्युपसर्प्पणादित्यनेकांतिको दृष्टेनैव वायुश्चत्वं सक्रियत्वमदृश्यगुणत्वं बाधते शब्दवच्चापरापरस्योत्पत्तावपरमदृष्टं निमित्तकारणं तदुत्पत्तौ प्रसक्तं तत्राप्यपरमित्यनवस्थाऽन्यथा शब्देऽपि किमदृष्टलक्षणनिमित्तपरिकल्पनया दृष्टांतरात्तस्य तं प्रत्युपसर्प्पणे तदप्यदृष्टांतरं प्रत्युपसर्प्पत्यदृष्टांतरात्तदपि तदंतरादित्यनवस्थाद्यं तत्रस्थमेव तत्तेषां तं प्रत्युपसर्पणाहेतुस्तदपि न युक्तमन्यत्र प्रयत्नादावात्मगुणैः तथादर्शनात् न हि प्रयत्नोग्रासादिकं देवदत्तमुखं प्रति प्रापयन् दृष्टः अंतरालप्रयत्नवैफल्यप्रसंगादथ प्रयत्नवैचित्र्यदृष्टेऽप्यन्यथा कल्पनं तथाहि-कश्चित् प्रयत्नः स्वयमपरापरदेशवान् परत्र क्रियाहेतुर्यथानंतरोदितोऽपरोऽपि वान्यथा यथासनाध्यासपदसंयुक्तचात्मप्रदेशस्थ एव शरीरादीनां लक्षप्रदेशप्राप्तिक्रियाहेतुर्यद्येवमियं चित्रता एकद्रव्याणां क्रियाहेतुगुणानां स्वाश्रयं युक्त्या संयुक्तद्रव्यक्रियाहेतुत्वेन किं नेष्यते विचित्रशक्तित्वाद्भावानां तथा दृष्टेरिति नास्तरमयस्कांतभ्रमकस्पर्शगुणस्यैकद्रव्यस्य स्वाश्रयासंयुक्तलोहद्रव्यक्रियाहेतुत्वे ऽपकर्षकान्यद्रव्यविशेषव्यवस्थितस्य तथाविधस्यैव तस्य स्वाश्रयसंयुक्तलोहद्रव्यक्रियाहेतुत्वदर्शनात् अथ द्रव्यं क्रियाकारणं न स्पर्शादिर्गुणः द्रव्यरहितस्य क्रियाहेतुत्वक्रियादर्शनात् न वेगस्य क्रियाहेतुत्वं क्रियायाश्च संयोगनिमित्तत्वं तस्य च द्रव्यकारणत्वं तत एव न स्यात् तथा च वेगवदिति दृष्टांतासिद्धिः अथ द्रव्यस्य तत्कारणत्वे वेगादिरहितस्यापि तत्प्रसक्तिः स्पर्शादिरहितस्यायस्कान्तस्यापि स्पर्शस्याऽकारणत्वेऽन्यत्र क्रियाहेतुत्वप्रसक्तिस्तत्प्रहितस्य तस्यादृष्टेर्नायं दोषस्तर्हि लोहद्रव्यक्रियोत्पत्तावुभयं दृश्यत इत्युभयं तदविशेषात् एवं सत्येकद्रव्यत्वे सति क्रियाहेतुगुणत्वादिव्यभिचारी हेतुः एतेन यदुक्तं परेणादृष्टमेवायस्कांतेनाकृष्यमाणलोहदर्शने मुखवत्पुंसो निःशल्यत्वेन तत् क्रियाहेतुरिति तन्निरस्तं सर्वत्र कार्यकारणभावेऽस्य न्यायस्य समानत्वमेव कारणं स्यात् यस्य शरीरं सुखं दुःखं चोत्पादयति तददृष्टमेव तत्र हेतुरिति न तदारंभकावयवक्रियासंयोगादयः अपि च तददृष्टस्य कथं तद्धेतुत्वं तस्याभावादभावे तावदिति चेत् किं पुनरयस्कान्तस्पर्शाद्यभाव एव तत्क्रिया दृष्टा येनैषां तत्र कारणत्वात्क्लृप्तिः ततो न दृष्टानुसारेण तत्रस्थस्यैवादृष्टस्य संप्रति तत् क्रियाहेतुत्वं प्रयत्नवैचित्र्याभ्युपगमे च हेतोरनैकांतिकत्वमेव सर्वत्रादृष्टस्य वृत्तिस्तर्हि सर्वद्रव्यक्रियाहेतुत्वं यददृष्टं यद्द्रव्यमुत्पादयति तत्रैव क्रियासु परवयतीत्यभ्युपगमे शरीरारम्भकेषु परमाणुषु ततः क्रिया न स्यादित्युक्तं न च गुणत्वमप्यदृष्टस्य सिद्धमिति क्रियाहेतुगुणत्वादित्यसिद्धो हेतुरथादृष्टं गुणः प्रतिषिध्यमानद्रव्यकर्म्मभवे सति सत्तासंबंधित्वा द्रूपादिवत् । न च प्रतिषिध्यमानद्रव्यत्वमसिद्धं तथाहि न द्रव्यमदृष्टमेकद्रव्यत्वात् रूपादिवदिति भसदेतत् एकद्रव्यत्वस्यासिद्धताप्रतिपादनात् सत्तासंबंधित्वस्य चेति यदपि तद्गुणत्वसाधनमुक्तं देवदत्त प्रत्युपसर्प्पन्तः पश्वादयो देवदत्तविशेषगुणकृष्टास्तं प्रत्युपसर्प्पणवत्त्वात् ग्रासादिवदिति तदयुक्तं यतो यथा तद्विशेषगुणा न प्रयत्नाख्येन समाकृष्टास्तं प्रत्युपसर्प्पन्तो ग्रासादयः समुपलभ्यंते तथा नयनांजनादिद्रव्यविशेषेणापि समाकृष्टाः स्त्र्यादयस्तं प्रत्युपसर्प्पतः समुपलभ्यंत एव ततः किं प्रयत्नसधर्मणा केनचिदाकृष्टाः पश्वादयः उत नयनांजनादिसाधर्म्येति संदेहः शक्यं ह्येवमनुमानमारचयितुं परेणापि नयनांजनादिसधर्मणा विवादगोचरचारिणः पश्वादयः समाकृष्टा देवदत्तं प्रत्युपसर्प्पति प्रत्युपसर्प्पणावत्त्वात् स्त्र्यादिवत् अथ तदभावेऽपि प्रयत्नादपि तद्दृष्टेरनैकांतिकत्वं प्रयत्नसधर्म्मणो गुणस्याभावेऽप्यञ्जनादेरपि तद्दृष्टेर्भवदीयहेतोरप्यनैकांतिकत्वं न चात्रानुमीयमानस्य प्रयत्नसधर्म्मणो हेतोः सद्भावाव्यभिचारोऽन्यत्राप्यंजनादिसधर्म्मणोऽनुमीयमानस्य सद्भावनाव्यभिचारप्रसंगात् तत्र प्रयत्नसामर्थ्यादस्य वैफल्येऽन्यत्राप्यंजनादिसामर्थ्यात् वैफल्यं समानं अत्राञ्जनादेरेव तद्धेतुत्वे सर्वस्य तद्वतः स्त्र्याद्याकर्षणप्रसक्तिः न वाञ्जनादौ सतोऽप्यविशिष्ठे तद्वतः सर्वान्प्रति तदागमनं ततोऽवसीयते तदविशेषेऽपि यद्वैकल्पात्तत्रेति तदपि कारणं नाञ्जनादिमात्रमिति तदेतत्प्रयत्नकारणेऽपि समानं न हि सर्वं प्रयत्नवंतं प्रति ग्रासादय उपसर्प्पति तदपहारादिदर्शनात् ततोऽत्राप्यन्यत्कारणमनुमीयतामन्यथा न प्रकृतेप्यविशेषात् ततः प्रयत्नवदंजनादेरपि तं प्रति तदाकर्षणहेतुत्वात्कथं न संदेहोऽञ्जनादेः स्त्र्याद्याकर्षणं प्रत्यकारणत्वे गंधादिवत्तदर्थिनां न तदुपादानं । नच दृष्टसामर्थ्यस्याप्यंजनादेः कारणत्वक्लिप्तिपरिहारेणात्मकारणत्वे गंधादिवत्तदर्थिनां न तदुपादानं न च दृष्टः सः, अथांजनादिकदृष्टसहकारित्वात्कारणं न केवलमिति नचैवं सिद्धमदृष्टवदञ्जनादेरपि तत्र कारणत्वं ततः संदेह एव किं ग्रामादिवत्प्रयत्नसधर्म्मणाकृष्टापःश्वादयः किं वा स्त्र्यादिवदंजनादिसधर्म्मणा तत्संयुक्तेन द्रव्येणेति संदिग्धं गुणत्वादित्येतत्साधनं सपरिस्पंदात्मप्रदेशमतरेण ग्रासाद्याकर्षणहेतोःप्रयत्नस्यापि देवदत्तविशेषगुणस्य परं प्रत्यसिद्धत्वात् साध्यविकलता चात्र दृष्टांतस्य यच्च देवदत्तं सर्प्पतीत्युक्तं तत्र कः पुनरसौ देवदत्तशब्दवाच्यः यदि शरीरं तदा शरीरं प्रत्युपसर्पणात् शरीरगुणाकृष्टाः पश्वादयः इति आत्मविशेषगुणाकृष्टत्वे साध्ये शरीरगुणाकृष्टत्वस्य साधनाद्विरुद्धो हेतुः अथात्मा तस्य समीकृष्यमाणपदार्थदेशकालाभ्यां मद्राभिसंबंधात् न तं प्रति कस्यचिदुपसर्प्पणमन्यदेशं प्रत्यन्यदेशस्योपसर्पणदर्शनात् अन्यकालं प्रत्यन्यकालस्य च यवांकुरं प्रति अपरापरशक्तिपरिणामप्राप्तवीजादिनं चैतदुभयं नित्यव्यापित्वाभ्यामात्मनि सर्वत्र सर्वदा सन्निहिते संभवत्यतो देवदत्तं प्रत्युपसर्प्यंत इति धार्मिविशेषणं देवदत्तगुणाकृष्टा इति साध्यधर्मो देवदत्तं प्रत्युपसर्प्पणावत्त्वादिति साधनधर्म्मः परस्य स्वरुचिविरचितमेवमेव शरीरसंयुक्त आत्मा शतस्यापि व्यापित्वेन तत्र सान्निधानानिवारणान्न हि युक्तमाकाशमेवादौ न सन्निहितमथ शरीरसंयुक्त आत्मप्रदेशो देवदत्तः स काल्पनिकः पारमा-

र्थिको वा काल्पनिकत्वे काल्पनिकात्मप्रदेशगुणाकृष्टाः पश्वादयस्तथाभूतात्मप्रदेशं प्रत्युपसर्प्पणवत्त्वादिति तद्गुणानामपि काल्पनिकत्वं साधयेत्तथा च सौगतस्येव तद्गुणकृतः प्रेत्यभावोऽपि न पारमार्थिकः स्यान्न हि कल्पितस्य पावकस्य रूपादयस्तदीयं वा दाहादिकं पारमार्थिकं दृष्टं पारमार्थिकाश्चेदात्मप्रदेशास्तेऽपि यदि ततो भिदास्तदात्मैव ते इति न पूर्वोक्तदोषपरिहारो भिन्नाश्चेत्तर्हि तद्विशेषगुणाकृष्टाः पश्वादय इति तेषामेवात्मत्वप्रशक्तिरित्यात्मपरिकल्पना अथवा तेषां च न द्वीपांतरवर्त्तिभिर्मुक्तादिभिः संयोग इत्यदृष्टं स्वाश्रयसंयुक्तेऽन्यत्र क्रियाहेतुरिति व्याहतं संयोगे चात्मवदित्यनिवृत्तो व्याघातोऽथ तेषामप्यपरशरीरसंयुक्ताः प्रदेशा देवदत्तशब्दवाच्यास्तत्राप्यनंतरदूषणमनवस्थाकारि अथात्मानमंतरेण कस्य ते प्रदेशाः स्युरिति तत्प्रदेश्यपर आत्मेत्यभ्युपगमनीयं नन्वर्थांतरभूतत्वे आत्मनः कथं तस्य ते इति व्यपदेशोऽथ तेषु तस्य वर्तमानान्न वा व्यपदेशो न सदेतत्तथाऽभ्युपगमेन्वयविपक्षभाविदूषणावकाशात् यथा च तेषां सदूषणत्वं तथा प्रतिपादयिष्यते चेत्यास्तां तावत्तन्न परस्य देवदत्तशब्दवाच्यः कश्चिदस्ति यं प्रत्युपसर्प्पणवंतः पश्वादयः स्वक्रियाहेतोर्गुणत्वं साधयेयुरिति नैतदपि साधनमात्मनो विभुत्वप्रसाधकं यदपि सर्वगत आत्मा सर्वत्रोपलभ्यमानगुणत्वादाकाशवदिति साधनं तदप्यचारु यतो यदि स्वशरीरे सर्वत्रोपलभ्यमानगुणत्वादिति हेतुस्तथा सति तत्रैव ततस्तस्य सर्वगतत्वसिद्धेर्विरुद्धो हेत्वाभासोऽथ स्वशरीरवत्परशरीरेऽन्यत्र चोपलभ्यमानगुणत्वं हेतुस्तदा सिद्धस्तथोपलंभाभावान्न हि बुद्ध्यादयस्तथोपलभ्यंतेऽन्यथा सर्व्वसर्व्वज्ञताप्रसंगोऽथैकनगरे उपलब्धा बुद्ध्यादयो नगरांतरेऽप्युपलभ्यंते मनुष्यजन्मवज्जन्मान्तरेऽपीति कथं न सर्वत्रोपलभ्यमानगुणत्वं न वायोरपि स्पर्शविशेषगुण एकत्रैकदा उपलब्धोऽन्यत्रान्यदोपलभ्यमानः तस्यापि सर्वगतत्वं प्रसाधयेदन्यथा तेनैव हेतोर्व्यभिचारोऽथास्तां तावद्देशात् क्रमेण गतस्य तद्गुणा उपलभ्यते आत्मनोऽपि तथैव तद्गुणस्योपलंभ इति समानं पश्यामो न च तद्वत्तस्यापि सक्रियत्वप्रसक्तेरयुक्तमेवं कल्पनमिति वाच्यमिष्टत्वादथ लोष्ठवत् ततो मूर्तत्वप्रसंगस्तस्य दोषो न नु केयं मूर्तिरसर्वगतद्रव्यपरिमाणं सेति चेन्नायं दोषः सर्वगतात्मवादिनोऽभीष्टत्वाद्रूपरसगन्धस्पर्शवत्त्वं सेति चेन्न तादृशी मूर्तिमात्मनः सक्रियत्वं साधयति व्याप्त्यभावाद्रूपादिमन्मूर्त्त्यभावे सक्रियत्वाद्यो यः स रूपादिमन्मूर्तिमान्यथा शरस्तथा चात्मा तस्माद्रूपादिमन्मूर्तिमानिति कथं न व्याप्तिसंभवोऽसदेतन्मनसापि व्यभिचारान्न च तस्यापि पक्षीकरणं रूपादिविशेषगुणाऽनधिकरणं समानार्थं प्रकाशयति शरीराद्यर्थांतरत्वे सति सर्वत्र ज्ञानकरणत्वादात्मवदित्यनुमानविरोधप्रसंगान्न च सक्रियत्वं रूपादिमन्मूर्त्यभावेपि न विरुद्धं यतस्ततस्तन्निवर्तमानमात्मनि तथाविधां मूर्तिं साधयेन्न च तथाविधमूर्तिरहिते स्वरादौ तददर्शनात्सिद्धो विरोध एकशाखाप्रभवत्वस्यान्यत्राऽह पक्षे दर्शनाद्विरोधशक्तिप्रसक्तेः पक्ष एव व्यभिचारदर्शनात्सा तत्र नेति चेन्न सक्रियत्वस्यापि तथा व्यभिचारः समानः पक्षीकृत एवात्मनि रूपादिमन्मूर्तिरहिते तद्दर्शनादनेनैव च तत्साधनान्न व्यभिचार इत्येकशाखाप्रभवत्वानुमानेऽपि समानं प्रत्यक्षबाधितं कर्म्मनिर्देशानंतरप्रयुक्तत्वेन कालात्ययापदिष्टत्वमुभयत्र तुल्यं तन्न सक्रियत्वमात्मनो रूपादिमन्मूर्तित्वं साधयतीति व्यवस्थितम् ॥

अथ सक्रियत्वे तस्यानित्यत्वं तथा हि यत्सक्रियं तदनित्यं यथा लोष्टादि तथा चात्मा तस्मादनित्य इत्येतदपि न सम्यक्परमाणुभिरनैकांतिकत्वात्कथंचिदनित्यत्वस्येष्टत्वात्सिद्धसाधनं च, सर्वात्मना नित्यत्वस्य लोष्टादावप्यसिद्धत्वात्साध्यविकलता च दृष्टांतस्य, तन्न सर्वत्रोपलभ्यमानगुणमात्मनः सिद्धम् । अपरे सर्वत्रोपलभ्यमानगुणत्वमात्मनोऽतोऽनुमानात्साधयंति देवदत्तोपकरणभूतानि मुक्ताफलादीनि द्वीपांतरसंभूतानि देवदत्तकृतानि कार्यत्वे सति देवदत्तोपकारकत्वाच्छकट्यादिवन्न च तद्देशे सन्निहिता एव तद्गुणास्तान्युत्पादयितुं समर्था न हि पटदेशे सन्निधानवंतस्तंतुतुरीकुविन्दादयः पटमुत्पादयितुं क्षमा आत्मगुणानां च तद्देशसन्निधानं न तद्गुणसंनिधिमंतरेण संभवत्यगुणत्वप्राप्तेस्ततस्तस्यापि तद्देशत्वमसदेतत् तत्कार्यत्वेपि तेषां नावश्यतया कार्यदेशसन्निधमनिमित्तकारणमिति नियमानुपलब्धिगोचरोऽन्यदेशस्यापि ध्यानादेरन्यस्थितविषाद्यपनयनकार्यकर्तृत्वस्योपलब्धिविषयत्वात्तन्नातोऽपि सर्वत्रोपलभ्यमानगुणत्वसिद्धिरित्यसिद्धो हेतुरेतेन विभुत्वान्महानाकाशः तथा चात्मा इति निरस्तं विभुत्वस्यात्मन्यसिद्धेस्तथा हि सर्वमूर्त्तैर्युगपत्संयोगो विभुत्वं न च सर्वमूर्तिमद्भिर्युगपत्संयोगस्तस्य सिद्धोऽथैकदेशवृत्तिविशेषगुणाधारत्वात्तस्य सर्वमूर्तैर्युगपत्संयोग आकाशस्येव सिद्धोऽसदेतत्तद्देशवृत्तिविशेषगुणाधिष्ठानत्वस्य सर्वमूर्तिमत्संयोगादाधारत्वस्य च साध्यस्याकाशेप्यसिद्धेरुभयविकलो दृष्टांतः न चात्मदृष्टांतादाकाशे साध्यसाधनोभयधर्मसंबंधित्वं सिद्धमिति शक्यं वक्तुमितरेतराश्रयदोषप्रसंगाद्यदपि विभुरात्माणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वात् यद्यदणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यं तत्तद्विभु यथाकाशं तथा चात्मा तस्माद्विभुरिति तदप्यसारं तन्नित्यत्वासिद्धेर्हेतोरसिद्धत्वादणुपरिमाणानधिकरणत्वस्य विशेषणस्यात्मनो द्रव्यत्वासिद्धेरसिद्धिस्तदसिद्धेश्चेतरेतराश्रयप्रसक्तेस्तथाह अणुपरिमाणानुगुणस्य गुणत्वसिद्धेनाधारस्य तस्यासंभवादात्मनो गुणवत्त्वनतद्द्रव्यसिद्धिस्तत्सिद्धौ च तदाश्रितत्वेनाणुपरिमाणान्यगुणस्य गुणत्वसिद्धिरिति व्यक्तमितरेतराश्रयत्वं न चाकाशस्याप्यणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वं विभुत्वं च सिद्धमिति साध्यसाधनविकलो दृष्टांतो न चात्मदृष्टांतवलात्तस्य तदुभयधर्म्मयोगित्वं सिद्धमिति वक्तुं युक्तमत्रापीतरेतराश्रयदोषप्रसंगस्य व्यक्तत्वादपि चाणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वं च भविष्यत्यविभुत्वं च विपक्षे हेतोर्बाधकप्रमाणासत्त्वेन ततो व्यावृत्तिसिद्धिसंदिग्धानैकांतिकश्च हेतुर्न च विपक्षे हेतोरदर्शनं बाधकं प्रमाणं सर्वात्मसंबंधिनस्तस्यासिद्धानैकांतिकत्वप्रतिपादनादपि चात्मनः स्वदेहमात्रव्यापकत्वेन सुखदुःखादिपर्यायाक्रांतस्य स्वसंवेदनाध्यक्षसिद्धत्वात्तडिल्लुप्तसाधकस्य हेतोरध्यक्षबाधितपक्षानंतरप्रयुक्तत्वेन कालात्ययापदिष्टत्वमन्यस्य चाहमित्यध्यक्षसिद्धस्य प्रमाणविषयत्वेनासत्त्वादाश्रयासिद्धो हेतुरित्यनया दिशा अन्येपि तद्विभुत्वसाधनायोपन्यस्यमाना हेतवो निराकरणप्रकारस्य सर्वेषु तत्साधकहेतुषु

समानत्वात्तत्रात्मनः कुतश्चिद्विभुत्वसिद्धिः अथापि स्या-
द्यथास्माकं तद्विभुत्वसाधकं प्रमाणं न संभवति तथा
भवतामपि तदविभुत्वसाधकं प्रमाणं न संभवति
नच भवतस्तेषां सिद्धेऽपि तदवस्थं चोद्यं न हि
परपक्षे दोषोद्भावनमात्रतः स्वपक्षः सिद्धिमुपगच्छंत्य-
न्यत्र स्वपक्षसाधकत्वलक्षणपरप्रयुक्तहेतुविरुद्धतोद्भव-
नाद्य वासौ भवता प्रदर्शितेति न सम्यगेतत्तद्भावा-
सिद्धेस्तथाहि देवदत्तात्मा देवदत्तशरीरमात्रव्यापकस्तत्रैव-
व्याप्त्योपलभ्यमानगुणत्वाद्यो यत्रैव व्याप्त्योपलभ्यमानगुणः
स तन्मात्रव्यापको यथा देवदत्तस्य गृह एव व्याप्त्योपलभ्य-
मानभास्वरत्वादिगुणप्रदीपो देवदत्तशरीर एव व्याप्त्यो-
पलभ्यमानगुणस्तदात्मनि तदात्मनो हि ज्ञानादयो
गुणास्ते च तद्देह एव व्याप्त्योपलभ्यन्ते न पर-
देहेनाप्यन्तराले अत्र केचिद्धेतोरसिद्धतामुद्भावयन्तः श-
रीरान्तरेऽपि तदङ्गनासंबन्धिनि तद्गुणा उपलभ्यंत इत्य-
भिदधति तथाहि–देवदत्तांगनाङ्गं देवदत्तगुणपूर्वकं कार्य-
त्वे सति तदुपकारकत्वाद् ग्रासादिवत् कार्यदेशे च सन्निहितं
कारणं तज्जनने व्याप्रियतेऽन्यथातिप्रसंगादिति तदंग-
नांगप्रादुर्भावदेशे तत्कारणात्तद्गुणसिद्धिस्तथा तदंतराले
च प्रतीयंते तथाह्यग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनं तद्-
गुणपूर्वकं कार्यत्वे सति तदुपकारकत्वाद्वस्त्रादिवत् यत्र च य-
द्गुणास्तत्र तद्गुण्यप्यनुमीयते इति स्वदेह एव देवदत्तात्म-
नि प्रतिज्ञानुमानबाधिता तथानुमानबाधितकर्म्मनिर्देशानंतर-
प्रयुक्तत्वेन कालात्ययापदिष्टश्च हेतुः ननु केऽत्र देवदत्तनामगुणा
ये तदंगनांगेतदंतराले च प्रतीयंते यदि ज्ञानस्पर्शनसुखवी-
र्यस्वभावाः सहवर्तिनो गुणा इति वचनादिति पक्षः स न
युक्तः ज्ञानदर्शनसुखानि संवेदनरूपाणि न तदंगनांगजन्मनि
व्याप्रियमाणानि प्रतीयंते नापि सत्तामात्रेण तद्देशे प्रती-
तिगोचराणि कायेषु शक्तिः क्रियानुमेया सापि तद्देह ए-
वानुमीयते तत्रैव तल्लिंगभूतपरिस्पंददर्शनात्तस्याश्च त-
दंगनादेहनिष्पत्तौ देवदत्तस्य भार्या दुहिता स्यात् ततस्तज्ज्ञा-
नादेस्तद्देह एव तत्कार्यजननविमुखस्य प्रतीतेः प्रत्यक्षत-
स्तद्बाधितकर्म्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टः
कार्यत्वे सति यदुपकारकत्वादिति हेतुरथ धर्म्माधर्म्मौ तदं-
गनादिकार्यनिमित्तं तद्गुणास्तदयुक्तं न धर्म्माधर्म्मौ तदात्म-
नो गुणौ अचेतनत्वाच्छब्दादिवत् नासुखादिना व्यभिचारस्त-
त्र हेतोरवर्तनात् तद्विरुद्धत्वेन संवेदनलक्षणचैतन्येन तस्य-
व्याप्तत्वात् अभिमतपदार्थसंबंधसमये एव स्वसंवेदनरूपा-
ह्लादस्वभावस्य तदात्मनोनुभावात् अन्यथा सुखादेः स्वस-
ननुभावात् अनवस्थादोषप्रसंगादन्यज्ञानेनाप्यनुभवे सुखस्य
परलोकप्रख्यताप्रशक्तिः प्रसाधितं चैतत्प्राक् नचासिद्धता
चेतनत्वादिति हेतोः तथाह्यचेतनौ तावसंविदितत्वा
त्कुम्भवत् ननु स्याद्व्यभिचारोऽस्याःस्वसंवेदनसाधनात् ।
स्वग्रहणात्मिका बुद्धिरर्थग्रहणात्मकत्वात् यत्स्व-
ग्रहणात्मकं न भवति न तदर्थग्रहणात्मकं यथा पट इति व्यति-
रेकी हेतुः न च धर्म्माधर्म्मयोर्ज्ञानरूपत्वाद्बौद्धदृष्ट्याज्ञान-
स्य च स्वग्रहणात्मकत्वादसिद्धो हेतुरिति वक्तव्यं
तयोः स्वरूपग्रहणात्मकत्वे सुखादाविव विवादाभावप्रस-
ंगः अस्ति चास्मावनुमानोत्पत्त्यामन्यथानुपपत्तेः तत्र न वा
लौकिकपरीक्षकयोः प्रत्यक्षं कर्म्मेति व्यवहारप्रसिद्धिः न चा-

विकल्पविषयबोधत्वात्तत्स्वग्रहणात्मकत्वेऽपि तयोर्विवादः
क्षणिकत्वादिवत् तथा निश्चयेऽतिद्विषयेऽतिप्रसंगात् तथा-
ह्यविकल्पकाध्यक्षविषयं जगज्जंतुमात्रस्य तथा निश्चयसुक्ष्-
णिकनिर्विकल्पकाध्यक्षविषयत्वात् न च मूषिकालर्क-
विषविकारवत्तदनंतरं तत्फलादर्शनाच्च तद्दर्शनव्यवहार इति
स्वसत्तासमये स्वकार्यजननसामर्थ्ये तद्देव तत्कार्यमिति तद-
नंतरं तद्दृष्टिप्रसक्तेः अन्यदा तु स एव नास्तीति कुतस्तस्य
नावोधस्तयोरचेतनत्वेऽपि तदात्मगुणत्वे को विरोधोऽचेतन-
स्य चेतनात्मगुणत्वमेव चेतनश्च तदात्मा स्वपरप्रका-
शकत्वात् अन्यथा तदयोगात् कुम्भादिवत् न च धर्म्माधर्म्म-
योरभावादाश्रयासिद्धो हेतुरनुमानतस्तयोः सिद्धेः तथाहि चे-
तनस्य तदात्मनो हीनमातृगर्भस्थानप्रवेशस्तत्संबंधोत्पत्तिनि-
मित्तोऽनन्यनेयत्वे सति तत्प्रवेशात् मत्तस्याशुचिस्थानप्रवेश-
वत्तथासावात्मांशद्रव्यविशेषो धर्म्मादिरिति नच कस्यचित्पू-
र्वशरीरत्यागेन शरीरांतरगमनाभावात्तत्प्रवेशासिद्धः अनु-
मानात्तत्सिद्धेःतथाहि तदहर्जातस्य स्तनादौ प्रवृत्तिस्तदभिला-
षपूर्विका तन्मध्यदेशवर्तित्वात् यथा च परलोकागम्यात्मानुमा-
नात्सिद्धिमुपगच्छेत्तत्प्रादुर्भावे सर्वोप्ययं व्यवहारःप्रतिप्राणि-
प्रसिध्येदत्रोत्तरजन्मनि सुखसाधनदर्शनादेरभावान्नहि मातु-
रुदर एव स्तनादेः सुखसाधनत्वेन दर्शनम् यतः प्रत्यग्रजात-
स्य तत्र स्मरणादिव्यवहारः संभवेदिति एवं शरीरसम्बन्धो-
ऽप्यात्मनः सिद्धः न मध्यावस्थायां सुखसाधनदर्शना-
दिक्रमेणोपजायमानोऽपि प्रवृत्त्यन्तो व्यवहारो जन्मादावन्य-
था कल्पयितुं शक्यो विजातीयादपि गोमयादेः कारणा-
च्छालूकादेः कार्यस्योत्पत्तिदर्शनादिति वक्तुं शक्यं जलपान-
निमित्ततृषाच्छेदादप्यनलनिमित्तत्वसंभावनया तदर्थिनः
पावकादौ प्रवृत्तिप्रसंगात् सर्वव्यहारोच्छेदप्रसक्तेरेव देहि-
नो देहाद्देहान्तरानुप्रवेशस्तदभिलापको गृहाद् गृहान्तरा-
नुप्रवेशवदित्यतोऽन्यथासिद्धो हेतुरिति न द्रव्यविशेषं साध-
यति तदुक्तं सौगतैः "दुःखे विपर्यासमतिः सुखादावंध्यका-
रणं "जन्मिनो यस्य ते न स्तो न स जन्माधि गच्छतीति" अस-
देतदिह जन्मनि प्राणिनां तदभिलाषस्य लोकेऽभावात् न
ततस्त इति युक्तं नापिं मनुष्यजन्मा हीनशुन्यादिगर्भसं-
भवमभिलषति यतश्च तत्संभवःस्यात्तदेवं धर्माधर्मयोस्तदा-
त्मगुणत्वनिषेधात्तन्निषेधानुमानबाधितमेतत् पावकादूर्ध्वज्व-
लनादिदेवदत्तगुणकारितामिति यत्पुनरुक्तं गुणवद् गुणिन्यप्यनु-
मानस्तद्देशोस्तीत्यनुमानबाधितस्वदेहमात्रव्यापकात्मककर्म-
निर्देशानंतरप्रयुक्तत्वे नाद्यो हेतुः कालात्ययापदिष्ट इति तदपि
निरस्तं तत्र सद्भावासिद्धेः यच्चान्यत्कार्यत्वे सति तदुपकारक-
त्वादिति तत्र किं तद्गुणपूर्वकत्वाभावेऽपि तदुपकारकत्वं
दृष्टं येन कार्यत्वे सतीति विशेषणमुपादीयेत सति संभवे
व्यभिचारं च विशेषणोपादानस्यार्थवत्त्वात्कालेश्वरादौ
दृष्टमिति चेन्न कालेश्वरादिकं न तत्पूर्वकमपि तु तदुपकारक
कार्यमपि किंचिदन्यपूर्वकं तदुपकारकं स्यादिति संदिग्ध-
विपक्षव्यावृत्तिकत्वादनैकांतिको हेतुः सर्वज्ञत्वाभावसाधने
वागादिवच्चिविशेषणस्यैव तस्याभिधाने को दोषो व्यभि-
चारः कालेश्वरादिनेति चेन्न नित्यैकस्वभावात्कस्यचिदुपका-
राभावादपि च शत्रुशरीरप्रध्वंसाभावरतोद्भवपक्षस्योपका-
रको भवति सोऽपि तद्गुणनिमित्तः स्यात्तदभ्युपगमे वा तत्र
कार्यत्वासंभवेन सविशेषणस्य हेतोरवर्तमानाद्भागासिद्धो हेतु-

रतद गुणनिमित्तत्वे तस्यान्यदप्यतद्गुणपूर्वकं तदुपकारकं
तद्वदेव स्यादिति न तद्गुणसिद्धिः यत्पुनर्ग्रासादिवदिति
निदर्शनं तत्र यदि तदात्मगुणो धर्मादिहेतुः साध्यवत्प्रसंग
आपन्नश्चेति श्चेन्न तत्स्वरूपासिद्धेः शरीराद्यवयवप्रविष्टाना-
मात्मप्रदेशानां परिस्पंदस्य चलनलक्षणक्रियारूपत्वान्न गुणत्वं
तत्त्वेऽतत्त्वे वा गमनादेरपि तत्त्वान्नं कर्म्मपदार्थसद्भावः क्वचि-
दपीति न युक्तं क्रियावदिति द्रव्यलक्षणं निष्क्रियस्यात्मन-
स्तस्येति चेत् कुतस्तस्य निष्क्रियत्वममूर्तत्वादिति चेत्प्रत्यक्ष-
निराकृतमेतत्प्रत्यक्षेण हि देशाद्देशांतरं गच्छन्तमात्मानमनुभ-
वति लोकस्तथा च व्यवहारोऽहमद्य योजनमात्रं गतो न च म-
तः शरीर मेतद्व्यवहारविषयस्तस्याहंप्रत्ययावेद्यत्वात्तदेवं
परस्य साध्यविकलं निदर्शनामिति स्थितं तेन यदुक्तं यस्मात्त-
दात्मनो गुणा अपि दूरदेशभाविनि तदंगनाग एवोपलभ्यंते-
तस्मात्सिद्धं तस्य सर्वत्रोपलभ्यमानगुणत्वादाकाशवदित्य-
नुमानबाधिता तदात्मस्वशरीरमात्रं प्रति तन्निरस्तं सर्वेषां स-
र्वगतात्मप्रसाधकहेतूनां पूर्वमेव निरस्तत्वादतो न स्वदेहमात्र-
व्यापकात्मप्रसाधकहेतोरसिद्धिर्नाप्यनुमानेन तत्पक्षबाधो न
च तेद्दव्यापकत्वेनैवोपलभ्यमानगुणोऽपि तदात्मा सर्वगतो
निजदेहैकदेशवृत्तिर्वा स्यात् अविरोधासंदिग्धविपक्षव्यावृत्ति
कत्वादनैकांतिको हेतुरिति युक्तं वाय्वादावपि तथाभावप्रसंगतः
प्रतिदेशनियतदेशसंबद्धपदार्थव्यहारोच्छेदप्रशक्तेस्तथाहि
यद्यथा प्रतिभाति तत्तथैव सद्व्यवहारपथमवतरति यथा प्रति-
नियतदेशकालाकारतया प्रतिभासमानो घटादिकोऽर्थोऽन्यथा
प्रतिभासमानानियतदेशकालाकारस्पर्शविशेषगुणोऽपि वायुः
सर्वगतः स्यात् नचात्र प्रत्यक्षबाधः परेण तस्य परोक्षत्वोपवर्ण-
नात् यदि च स्वदेहैकदेशस्थितः कथं तत्र सर्वत्र सुखादिगुणो
पलब्धिरितरथा सर्वत्रोपलभ्यमानगुणोऽपि वायुरेकपरमाणुमा-
त्रः स्यात् नच क्रमेण सर्व्वदेहभ्रमणात्तस्य तथा तत्रोपल-
ब्धिर्युगपत्तत्र सर्वत्र सुखादेर्गुणस्योपलम्भात् न चाशुवृत्तेर्यौ-
गपद्याभिमानोन्यत्रापि तथा प्रसक्तेः शक्यं हि वक्तुं पटा-
दिरप्येकावयववृत्तिराशुवृत्तेर्युगपत्सर्वेष्ववयवेषु प्रतीयत-
इत्यत एव सौगतोऽपि तत्रैकं निरंशं ज्ञानं कल्पयन्निरस्तप्रत्यव-
यवमनेकसुखादिकल्पने संतानांतरवत् परस्परमसंक्रमात्-
अनुस्यूतैकप्रतीतिविलोपः सर्वत्र शरीरे मम सुखमिति । अ-
थ युगपद्भाविभिरेव शरीरवर्त्तिभिरनेकनिरंशक्षणिकसुखसंवे
दनैरेकपरामर्शविकल्पजननादयमदोषःअसदेतत् अनेकोपादा
नस्य परामर्शविकल्पस्यैकत्वसंभवे चार्वाकाभिमतैकशरीर-
व्यपदेशभागनेकपरमाणूपादानानेकविज्ञानाभावेऽपि तद्वि-
कल्पसंभवात् ततो यदुक्तं धर्म्मकीर्त्तिना तत्प्रति अनेकपरमाणु
पादानमनेकं चेद्विज्ञानं सन्तानान्तरवदेकपरामर्शाभाव इति
तत्तस्य न सुभाषितं स्यात् यच्च सावयवं शरीरं प्रत्यवयवमनुप्र
विशंस्तदात्मा सावयवः पटवत्समानजातीयारब्धत्वात् तद्व-
द्विनाशवांश्च स्यादिति तदपि न सम्यग्घटादिनाव्यभिचारात्
घटादिस्सावयवोऽपि न तंतुवत्प्राक्प्रसिद्धः समानजातीयकपा-
लसंयोगपूर्व्वको मृत्पिंडात्प्रथममेव स्वावयवरूपाद्यात्मनःप्रादु-
र्भावादिति निरूपयिष्यमाणत्वादपि च यदि तदात्मनः कथं-
चिद्विनाशः प्रतिपादयितुमिष्टः समानजातीयावयवारब्धत्वा-
तदा सिद्धसाधनं तदभिन्नसंसार्यवस्थाविनाशेन तद्रूपतया त-
स्यापि नष्टत्वात् अथ सर्वात्मना सर्वथा नाशः स घटादावप्य-
सिद्ध इति साध्यविकलो दृष्टांतः यदि च तदहर्जातबाला-
त्मा प्रागेकांतेनासंस्तथावयव आरभ्यते तदा स्तनादौ
प्रवृत्तिर्न स्यात् तदभिलाषप्रत्यभिज्ञानस्मरणादर्शनादेरभा-
वात् तदारंभकावयवानां प्राक्सतां विषयदर्शनादिकमिति
चेत् तर्हि तेषामेव तदहर्जातवेलायां तत्त्वांतराणामिव तत्र
प्रवृत्तिः स्यान्नात्मनः स्मरणाद्यभावात् कारणगमनात्तस्यापि
सर्वत्र सा स्यात् कारणसंयोगिनामवश्यं संयुज्यत इति व-
चनान्न तस्य विषयानुभवाभावस्तदेकांते चास्याः प्रक्रियायाः
समवायनिषेधेन निषेधात् अथ कारणप्रक्रमणे तत्र दर्श-
नादयो गुणा वर्ण्यन्ते तेऽपि प्रागसंत एव जायंत इति एव-
मपि न किंचित् परिहृतमेतेनावयवेषु क्रिया क्रियातो विभाग-
स्ततस्संयोगविनाशस्ततोऽपि द्रव्यविनाश इति परस्योक्त-
त्वात् पूर्वभवे तद्विनाशे आदिजन्मनि स्मरणाद्यभावप्र-
संगान्निरस्तं नचायमनेकांतः कटस्य केयूरभावे कुतश्चिद्भागेषु
क्रियाविभागः संयोगविनाशो द्रव्यनाशः पुनस्तदवयवाः के-
वलास्तदनंतरकर्म्मसंयोगक्रमेण केयूरभावः प्रमाणगोचरवा-
सी केवलं सुवर्णकारव्यापारात्कटस्य केयूरीभावं पश्यामः
अन्यथा कल्पनाणप्रत्यक्षविरोधः नं हि पूर्वं विभागस्ततः
संयोगविनाश इति तद्भेदानुपलक्षणाच्चैतन्यबुद्धिवदनेकां-
तेन तस्याः क्षणिकत्वे सुखसाधनदर्शनादयः संभवंती-
त्यऽसकृदावेदितमावेदयिष्यते एवेत्यास्तां तावत्ततोऽनैकां-
तिको हेतुर्विपक्षेऽसंभवात् अत एव न विरुद्धोऽपीति भवत्य-
तः सर्वदोषरहितान् केशनखादिरहितशरीरमात्रव्या-
पकस्य विवादाध्यासितस्यात्मनः सिद्धिरिति साधूक्तं
वाणामणोवममुहमवगयाणमिति ॥ सम्म० ॥

विशेषावश्यके जीवानां नानात्वंव्यवस्थाप्य भवतु तर्हि
जीवानां नानात्वं किंत्वेकैको जीवः सर्वजगद्व्यापकोऽस्त्व-
ति नैयायिकादिमतमपाकुर्वन्नाह—

जीवो तणुमित्तत्थो जह कुंडो तग्गुणोवलंभाउ ।
अहवाणुवलंभाउ भिन्नंमि घडे पडस्सेव ॥ ८० ॥

तनु मात्रस्थो जीव इति प्रतिज्ञा तत्रैव तद्गुणोपलब्धेः यथा
घटः स्वात्ममात्रे इति शेषः । अहवेत्यादि । अथवा यो यत्र
प्रमाणैर्नोपलभ्यते तस्य तत्राभाव एव यथा भिन्ने घटे पट-
स्यानुपलम्भस्तेन च शरीराद्बहिर्जीवस्तस्मात्तस्य तत्राभाव
एवेति ॥ विशे० ॥

सांप्रतं द्वितीयाद्वारगाथा व्याख्यायते तत्र गुणीत्याद्यद्वारं
तद्व्याचिख्यासयाऽऽह भाष्यकारः—

अहुणा गुणित्ति दारं होइ गुणेहिं गुणित्ति विन्नेओ ।
ते भोगजोगउवओगमाइरूवा इव घडस्स ॥ ?८१ ॥

व्या० अधुना गुणीति द्वारं तदेतद्व्याख्यायते भवति गुणैर्हि गु-
णी न तद्व्यतिरेकेणेत्येवं विज्ञेयः अनेन गुणगुणिनोर्भेदाभेद-
माह ते भोगयोगोपयोगादयो गुणा इत्यादिशब्दादमूर्तत्वा-
दिपरिग्रहः । निदर्शनमाह रूपादय इव घटस्य गुणा इति
गाथार्थः व्याख्यातं मूलद्वारगाथायां गुणिद्वारम् ॥दश० अ०४॥

अधुनोर्ध्वगतिद्वारावसर इत्याह भाष्यकारः-

उड्ढंगइत्ति अहुणा अगुरुलहुत्ता सभावउड्ढगइ ।
दिट्ठंतलाउएणं एरंडफलाइं एहिं व ॥ ८२ ॥

व्या० ॥ ऊर्ध्वगतिरित्यधुना द्वारं तदेतद्व्याख्यायते अगुरु-

लघुत्वात्कारणात्स्वभावतः कर्मविप्रमुक्तः सन्नूर्ध्वगतिर्जीव इति गम्यते यद्येवं कथमधो गच्छत्यत्राह दृष्टांतोऽलाबुना तुम्बकेन यथा तत्स्वभावत ऊर्ध्वगमनरूपमपि मृल्लेपाज्जलेऽधो गच्छति तदपगमादूर्ध्वमाजलांतादेवमात्मापि कर्म्मलेपादधो गच्छति तदपगमादूर्ध्वमालोकांतादिति एरण्डफलादिभिश्च दृष्टांत इत्यनेन दृष्टांतबाहुल्यं दर्शयति यथा चैरण्डफलमपि बंधनपरिभ्रष्टमूर्ध्वं गच्छत्यादिशब्दादग्न्यादिपरिग्रह इति गाथार्थः । व्याख्यातं द्वितीयमूलद्वारगाथायामूर्ध्वगतिद्वारम् ॥ दश० अ० ४ ॥

साम्प्रतं निर्मयद्वारव्याचिख्यासयाऽऽह—

अमओ य होइ जीवो कारणविरहा जहेव आगासं ।
समयं च होइ अनिच्चं मिम्मयघडतंतुमाईयं ॥ २८३ ॥

व्या० अमयश्च भवति जीवः न किम्मयोऽपीत्यर्थः कुत इत्याह–कारणविरहात् अकारणत्वात् यथैवाकाशमाकाशवदित्यर्थः । समयं वस्तु भवत्यनित्यं एतदेव दर्शयति मृन्मयघटतन्त्वादौ यथा मृन्मयो घटस्तंतुमयः पट इत्यादि न पुनरात्मा नित्य इति दर्शितं आह अस्मिन् द्वारे सत्यमयो न तु मृन्मय इव घट इति प्राक्किमर्थमुक्तमित्युच्यते । अत एव द्वारादनुग्रहार्थमुक्तमिति लक्ष्यते भवति चासकृच्छ्रवणादकृच्छ्रेण परिज्ञानमित्यनुग्रहः अतिगंभीरत्वाद्भाष्यकारस्य न वयमभिप्रायं विद्म इति अन्ये त्वभिदधत्यन्यकर्तृकैवासौ गाथेति गाथार्थः व्याख्यातं द्वितीयमूलद्वारगाथायां निर्मयद्वारम् ॥ दश० ॥ अ० ४ ॥

अधुना साफल्यद्वारावसरस्तथा चाह भाष्यकारः–

साफल्लदारमहुणा निच्चानिच्चपरिणामि जीवंमि ।
होइ तयं कम्माणं इहरेगसभावओ जुत्तं ॥ २८४ ॥

व्या०साफल्यद्वारमधुना तदेतद्व्याख्यायते नित्यानित्य एव परिणामिनि जीव इति योगः भवति तत्साफल्यं कालांतरफलप्रदानलक्षणं केषामित्याह । कर्म्मणां कुशलाकुशलानां कालभेदेन कर्तृभोक्तृपरिणामभेदे सत्यात्मनस्तदुभयोपपत्तेः कर्मणां कालांतरफलप्रदानमिति । इतरथा पुनर्यद्येवं नाभ्युपगम्यते तत एकस्वभावतः कारणादयुक्तं तत्कर्मणां साफल्यमिति एतदुक्तं भवति यदि नित्य आत्मा कर्तृस्वभाव एव कुतोऽस्य भोगः भोक्तृस्वभावे चाकर्तृत्वम् क्षणिकस्य तु कालद्वयाभावादेवैतदुभयमनुपपन्नं उभये च सति कालांतरफलप्रदानेन कर्म सफलमिति गाथार्थः । द्वितीयमूलद्वारगाथायां व्याख्यातं साफल्यद्वारम् ॥ दश० ॥अ० ४ ॥

( १७ ) अधुना परिमाणद्वारमाह—

जीवस्स उ परिमाणं वित्थरओ जाव लोगमेत्तं तु ।
ओगाहणा य सुहुमा तस्स पएसा असंखेज्जा ॥ २८५ ॥

व्या० जीवस्य तु परिमाणं विततस्य विस्तरतो विस्तरेण यावल्लोकमात्रमेव एतच्च केवलिसमुद्घातचतुर्थसमये भवति तत्रावगाहना च सूक्ष्मा विततैकैकप्रदेशरूपा भवति तस्य जीवस्य प्रदेशाश्चासंख्येयाः सर्व एव लोकाकाशप्रदेशतुल्या इति गाथार्थः ।

अनेकेषां जीवानां गणनापरिमाणमाह—

पत्थेण व कुलएण व जह कोइ मिणेज्ज सव्वधन्नाई ।
एवं मविज्जमाणा हवंति लोगा अणंताओ ॥ २८६ ॥

प्रस्थेन वा चतुःकुडवमानेन कुडवेन वा चतुःसेतिकामानेन यथा कश्चित्प्रमाता मिनुयात् सर्वधान्यानि व्रीह्यादीनि एवं मीयमाना असद्भावस्थापनया भवंति लोका अनंतास्तु जीवभूता इति भावः आह यद्येवं कथमेकस्मिन्नेव ते लोके माता इति उच्यते सूक्ष्मावगाहनया यत्रैकस्तत्रानंता व्यवस्थिता इह तु प्रत्येकावगाहनया चिंत्यत इति न दोषः । दृष्टं च बादरद्रव्याणामपि प्रदीपप्रभापरमाण्वादीनां तथा परिणामतो भूयसामेकत्रैवावस्थानामिति गाथार्थः । व्याख्यातं द्वितीयमूलद्वारगाथायां परिमाणद्वारं तद्व्याख्यानाच्च द्वितीया मूलद्वारगाथा जीवपदं चेति। दश०अ०४।

१८ आत्मन एकत्वानेकत्वविचारः स्थानाङ्गे यथा—

"एगे आया" एको न द्व्यादिरूप आत्मा जीवः कथञ्चिदिति गम्यते तत्र अतति सततमवगच्छति ( अत सातत्यगमन ) इति वचनादत् धातोर्गत्यर्थत्वाद्गत्यर्थानां च ज्ञानार्थत्वादनवरतञ्जानातीति निपातनादात्मा जीव उपयोगलक्षणत्वादस्य सिद्धसंसार्यवस्थाद्वयेऽप्युपयोगभावेन सततावबोधभावात् सततावबोधाभावे चाजीवत्वप्रसंगात् अजीवस्य च पुनर्जीवत्वाभावात् भावे चाकाशादीनामपि तथात्वप्रसंगात् एवं च जीवानादित्वाभ्युपगमाभावप्रसंग इति अथवा अतति सततं गच्छति स्वकीयां ज्ञानादिपर्यायानित्यात्मा नन्वेवमाकाशादीनामप्यात्मशब्दव्यपदेशप्रसङ्गस्तेषामपि स्वपर्यायेषु सततगमनादन्यथा अपरिणामित्वेनावस्तुत्वप्रसंगादिति नैवं व्युत्पत्तिमात्रनिमित्तत्वादस्य उपयोगस्यैव च प्रवृत्तिनिमित्तत्वाज्जीव एवात्मा नाकाशादिरिति यद्वा संसार्यपेक्षया नानागतिषु सततगमनान्मुक्तापेक्षया च भूततद्भावत्वादात्मेति तस्य चैकत्वं कथंचिदेव तथाहि द्रव्यार्थितयैकत्वमेकद्रव्यत्वादात्मनः प्रदेशार्थतया त्वनेकत्वमसंख्येयप्रदेशात्मकत्वात्तस्येति तत्र द्रव्यं च तदर्थश्चेति द्रव्यार्थस्तस्य भावो द्रव्यार्थता प्रदेशगुणपर्यायाधारता अवयविद्रव्यतेति यावत् तथा प्रकृष्टो देशः प्रदेशः निरवयवोंशः स चासावार्थश्चेति प्रदेशार्थः तस्य भावः प्रदेशार्थता गुणपर्यायाधारावयवलक्षणार्थतेति यावत् नन्वयविद्रव्यमेव नास्ति विकल्पद्वयेन तस्यायुज्यमानत्वात् खरविषाणवत्तथाहि अवयविद्रव्यमवयवेभ्यो भिन्नमभिन्नं वा स्यान्न तावदभिन्नमभेदे हि अवयविद्रव्यवदवयवानामेकत्वं स्यादवयववद्वाऽवयविद्रव्यस्याप्यनेकत्वं स्यादन्यथा भेद एव स्याद्विरुद्धधर्माध्यासस्य भेदनिबंधनत्वादिति भिन्नं चेत्तत्तेभ्यः तदा किमवयविद्रव्यं प्रत्येकमवयवेषु सर्वात्मना समवैति देशतो वेति यदि सर्वात्मना तदाऽवयवसंख्यमवयविद्रव्यम् स्यात् कथमेकत्वन्तस्य अथ देशैः समवैति ततो दैर्देशैरवयवेषु तद्वर्त्तते तेष्वपि देशेषु तत्कथं प्रवर्त्तते दशतः सर्वतो वा सर्वतश्चेत्तदेव दूषणं देशतश्चेत्तेष्वपि देशेषु कथमित्यादिरनवस्था स्यादित्यत्रोच्यते यदुक्तं विकल्पद्वयेन तस्यायुज्यमानत्वादिति तदयुक्तमेकान्तेन भेदाभेदयोरनभ्युपगमात् अवयवा एव हि तथाविधैकपरिणामनया अवयविद्रव्यतया व्यपदिश्यन्ते त एव च तथाविधविचित्रपरिणामापेक्षया अवयवा इति अवयविद्रव्याभावे तु एते घटावयवा एते च पटावयवा इत्येवमसङ्कीर्णावयवव्यवस्था न स्यात्तथा च प्रतिनियतकार्यार्थिनां प्रतिनियतवस्तूपादानं न स्यात्तथा च सर्वमसमञ्जसमापनीपद्येत सन्निवेशविशेषाद्घटाद्यवयवानां प्रतिनियतता भविष्य-

तीति चेत् सत्यं केवलं स एव सन्निवेशविशेषोऽवयविद्रव्यमिति यच्चोच्यते विरुद्धधर्माध्यासो भेदनिबन्धनमिति तदपि न सूक्तं प्रत्यक्षसंवेदनस्य परमार्थापेक्षया भ्रांतत्वेन संव्यवहारापेक्षया त्वभ्रांतत्वेनाभ्युपगमादिति यदि नाम भ्रान्तत्वमभ्रांतत्वं कथमित्येवमत्रापि वक्तुं शक्यत्वादिति किंच विद्यते अवयविद्रव्यमव्यभिचारितया तथैव प्रतिभासमानत्वादवयववन्नीलवद्वा नचायमसिद्धो हेतुस्तथा प्रतिभासस्यानुभूयमानत्वान्नाप्यनैकांतिकत्वविरुद्धत्वं सर्ववस्तुव्यवस्थायाः प्रतिभासाधीनत्वादन्यथा न किञ्चनापि वस्तु सिध्येदिति । स्था०टी० ठा०२ । आत्मनस्तु सप्रदेशत्वमवश्यमभ्युपगंतव्यम् ॥ निरवयवत्वे तु हस्ताद्यवयवानामेकत्वप्रसंगः प्रत्यवयवं स्पर्शाद्यनुपलब्धिप्रसंगश्चेति सप्रदेश आत्मा प्रत्यवयवं चैतन्यलक्षणतद्गुणोपलम्भात् प्रतिग्रीवाद्यवयवमुपलभ्यमानरूपगुणघटवदिति स्थापितमेतद्द्रव्यार्थतयैक आत्मेति । अथ वा एक आत्मा कथंचिदिति प्रतिक्षणं सम्भवदपरापरकालकृतकुमारतरुणनरनारकत्वादिपर्यायैरुत्पादविनाशयोगेऽपि द्रव्यार्थतयैकत्वादस्य यद्यपि हि कालकृतपर्यायैरुत्पद्यते नश्यति च वस्तु तथापि स्वपरपर्यायरूपानन्तधर्मात्मकत्वात्तस्य न सर्वथा नाशो युक्त इति आह च । न हि सव्वहा विणासो अद्धपज्जायमित्तनासंमि । सपरपज्जायाणं तयम्मुणो वत्थुणो जुत्तो त्ति ॥१॥ किंच प्रतिक्षणं क्षयिणो भावा इत्येतस्माद्वचनात्प्रतिपाद्यस्य यत् क्षणभंगविज्ञानमुपजायते तदसंख्यातसमयैरेव वाक्यार्थग्रहणपरिणामाज्जायते न तु प्रतिपत्तुः प्रतिसमयं विनाशे सति यत एकैकमप्यक्षरं पदसत्कसंख्यातीतसमयसंभूतं संख्यातानि चाक्षराणि पदं संख्यातपदं च वाक्यं तदर्थग्रहणपरिणामाच्च सर्वं क्षणभंगुरमिति संविज्ञानं भवेत्तच्चायुक्तं समयनष्टस्येति । आह च "कहवा सव्वं खणियं विन्नायं जइ मइसुयाओ त्ति । तदसङ्खसमयसुत्तत्थगहणपरिणामओ जुत्तं ॥ १ ॥ "न उ पइसमयविणासे जेणेक्केक्कक्खरं पि य पयस्स । संखाईयसमाइयं संखेज्जाइं पयं ताइं" ॥ २ ॥ संखेज्जपयं वक्कं तदत्थगहणपरिणामओ होज्जा । सव्वक्खणभङ्गप्पाणं तदजुत्तं समयनट्ठस्सत्ति" ॥ ३ ॥ तथा सर्वथोच्छेदे तृष्णादयो न घटंते पूर्वसंस्कारानुवृत्तावेव तेषां युज्यमानत्वादाह च "तित्तीसमो किलामो सारिक्खविपक्खपच्चयाईणि । अज्झयणज्झाणभावणा य का सव्वनासं सव्वनासंमि त्ति ॥ १ ॥ " तत्र तृप्तिर्ध्राणिः श्रमोऽध्वादिखेदः क्लमो ग्लानिः सादृश्यं साधर्म्यं विपक्षो वैधर्म्यं प्रत्ययोऽवबोधः शेषपदानि प्रतीतानि इत्यादि बहु वक्तव्यं तत्तु स्थानांतरादवसेयमिति । तदेवं आत्मा स्थितिभवनभंगरूपापेक्षया नित्यो नित्यत्वाच्चैको भवनभङ्गरूपापेक्षया त्वनित्योऽनित्यत्वाच्चानेक इति आह च "जमणांतपज्जयमयं वत्थुं भवणं विचित्तपरिणामं । ठिइविभवभंगरूवं णिच्चाणिच्चाइतोभिमयं ति ॥ १ ॥" एवं च—सुहदुक्खबंधमोक्खो उभयं न य मयाणुवत्तिणो जुत्ता । एगयरपरिच्चाए सव्वव्ववहारवोच्छित्ति त्ति ॥ १ ॥" अथ वा एक आत्मा कथंचिदेवेति यतो जैनानां न हि सर्वथा किंचिद्वस्तु एकमनेकं चास्ति सामान्यविशेषरूपत्वाद्वस्तुनः अथ ब्रूयाद्विशेषरूपमेव वस्तु सामान्यस्य विशेषेभ्यो भेदाभेदाभ्यां चिंत्यमानस्यायोगात्तथाहि सामान्यं विशेषेभ्यो भिन्नमभिन्नं वा स्यान्न भिन्नमुपलंभाभावान्नचानुपलभ्यमानमपि सत्तया व्यवहर्तुं शक्यं खरविषाणस्यापि तथा प्रसंगात् । अथाभिन्नमिति पक्षस्तथाच सामान्यमात्रं वा स्याद्विशेषमात्रं चेति न ह्येकस्मिन्सामान्यमेकं विशेषास्त्वनेकरूपा इत्यसंकीर्णा वस्तुव्यवस्था स्यादिति अत्रोच्यते । न ह्यस्माभिः सामान्यविशेषयोरेकांतेन भेदोऽभेदो वाऽभ्युपगम्यते अपि तु विशेषा एव प्रधानीकृतास्तुल्यरूपा उपसर्जनीकृततुल्यरूपाः विषमतया प्रज्ञायमाना विशेषा व्यपदिश्यन्ते त एव च विशेषा उपसर्जनीकृताः तुल्यरूपाः प्रधानीकृततुल्यरूपाः समतया प्रज्ञायमानाः सामान्यमिति व्यपदिश्यन्त इति । आह च—"निर्विशेषं गृहीताश्च भेदाः सामान्यमुच्यते । ततो विशेषात्सामान्यं विशिष्टत्वं न युज्यते ॥ १ ॥" "वैषम्यसमभावेन ज्ञायमाना इमे किल । प्रकल्पयन्ति सामान्यविशेषास्थितिमात्मनीति ॥ २ ॥" तदेवं सामान्यरूपेणात्मा एको विशेषरूपेण त्वनेको न चात्मनां तुल्यं रूपन्नास्ति एकात्मव्यतिरेकेण शेषात्मनामनात्मत्वप्रसंगादिति तुल्यश्च रूपमुपयोग उपयोगलक्षणो जीव इति वचनात्तदेवमुपयोगरूपैकलक्षणत्वात्सर्व एवात्मानः एकरूपाः एवं च एकलक्षणत्वादेक आत्मेति अथ वा जन्ममरणसुखदुःखादिसंवेदनेष्वसहायत्वादेक आत्मेति भावनीयमिति इह सर्वसूत्रेषु कथंचिदित्यनुस्मरणीयं कथंचिद्वादस्याविरोधे सर्ववस्तुव्यवस्थानिबंधनत्वात् उक्तं च "स्याद्वादाय नमस्तस्मै यं विना सकलाः क्रियाः । लोकाद्वितयभाविन्यो नैव सांगत्यमासते ॥ १ ॥" तथा "नयास्तव स्यात्पदसत्त्वलांछिता रसोपविद्धा इव लोहधातवः । भवंत्यभिप्रेतफला यतस्ततो भवन्तमार्याः प्रणता हितैषिण" इति ॥ २ स्था० ठा० १ ॥

एक आत्मा कथं विदितमिति गम्यते तत्र प्रदेशार्थतया असंख्यातप्रदेशोऽपि जीव इत्यर्थतया एकः । अथ वा प्रतिक्षणपूर्वस्वभावक्षयाऽपरस्वरूपोत्पादयोगेनानंतभेदोऽपि कालत्रयानुगामिचैतन्यमात्रापेक्षया एक एव आत्मा । अथ वा प्रतिसंतानं चैतन्यभेदेनाऽनंतत्वेप्यात्मना संग्रहनयाश्रितसामान्यरूपापेक्षयैकत्वमात्मन इति तथा न आत्मा अनात्मा घटादिपदार्थः सोऽपि प्रदेशार्थतयाऽसंख्येयानंतप्रदेशोऽपि तथाविधैकपरिणामरूपद्रव्यार्थापेक्षया एक एव संतानापेक्षयाऽपि तुल्यरूपापेक्षया तु अनुपयोगलक्षणैकस्वभावयुक्तत्वात्कथंचिद्भिन्नस्वरूपाणामपि धर्मास्तिकायादीनामनात्मनामेकत्वमवसेयमिति । सम०टी०स०१ । विशे० ॥ ननु बहुभेदत्वमात्मनोऽसिद्धं तस्य सर्वत्रैकत्वात् तदुक्तं । "एक एव हि भूतात्मा भूते २ प्रतिष्ठितः । एकधा बहुधा चैव दृश्यते जलचंद्रवत्" "यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः । संकीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते" "तथेदममलं ब्रह्म निर्विकल्पमविद्यया कलुषत्वमिवायत्नं भेदरूपं प्रकाशते" "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययं छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् । पुरुष एवेदं ॐ सर्वं यद् भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्येनातिरोहति ॥ यदेजति यन्नैजति यद्दूरे यदंतिके यदंतरस्य सर्वस्य यत्सर्वस्यास्य बाह्यत इत्यादि । इत्येतदेव पूर्वार्द्धेनोत्क्षिप्योत्तरार्द्धेन परिहरन्नाह ॥

जपि पुण सो एगो च्चिय हवेज्ज वोमं व सव्वपिंडेसु ।

गोयम तदेगलिंगं पिंडेसु तहा न जीवो यं ॥

परः प्राह॥ यदि पुनर्दर्शितन्यायेन स आत्मा सर्वेष्वपि नारकतिर्यङ्नरामरपिंडेषु व्योमवदेक एव भवेन्न तु संसारीतरादिभेदभिन्नस्तर्हि किं नाम दूषणं स्यादेवमुक्ते भगवानाह गौतम ? तद्वद्योम सर्वेष्वपि पिंडेषु मूर्तिविशेषु स्थितं एकलिंगं चैतत्सदृशाभावादेकरूपमेवेति युक्तं तस्यैकत्वं जीवस्त्वयं विचार्यत्वेन प्रस्तुतो न तथा नैकलिंगः सर्वत्र दृश्यते प्रतिपिंडं तस्य विलक्षणत्वाल्लक्षणभेदेन च लक्ष्यभेदादिति न तस्यैकत्वमिति ॥

अत्र प्रयोगमाह—

नाणा जीवा कुंभादओ व्व भुवि लक्खणाइभेयाओ ।
सुहदुक्खबंधमोक्खाभावो य जओ तदेगत्ते ॥

नानारूपा भुवि जीवाः परस्परं भेदभाज इत्यर्थः लक्षणादिभेदादिति हेतुः कुंभादय इवेति दृष्टांतः ॥ यच्च न भिन्नं तस्य न लक्षणभेदो यथा नभस इति सुखदुःखबंधमोक्षाभावश्च यस्मात्तत्तदेकत्वे तस्माद्भिन्ना एव सर्वेऽपि जीवा इति ॥

कथं पुनस्तेषां प्रतिपिंडं लक्षणभेद इत्याह—

जेणोवओगलिंगो जीवो भिन्नो य सो पइ सरीरं ।
उवओगो उक्करिसावगरिसोउ तेण तेणंता ॥

येन ज्ञानदर्शनोपयोगलक्षणोऽसौ जीवः स चोपयोगः प्रतिशरीरमुत्कर्षापकर्षभेदादनंतभेदस्तेन भेदादनंतभेदा एवेति तदेवं भावितं नाणा जीवा इत्यादि पूर्वार्द्धम् ॥

इदानीं सुखदुःखेत्याद्युत्तरार्द्धं भावयन्नाह—

एगत्ते सव्वगयत्तओ य न मोक्खादओ नभस्सेव ।
कत्ता भोत्ता मंता न य संसारी जहागासं ॥

एकत्वे जीवानां सुखदुःखबंधमोक्षादयो नोपपद्यंते सर्वगतत्वान्नभस इव यत्र तु सुखादयो न तत्सर्वगतं यथा देवदत्त इति ॥ किं च न कर्त्ता न भोक्ता न मंता न संसारी जीवः एकत्वात् सर्वजीवानां यच्चैकं न तस्य कर्तृत्वादयो यथा नभस इति अपि च "एगत्ते नत्थि सुही बहुबघाउत्ति देसनिरुउच्चं । बहुनरबद्धतणओ य न य मुक्को देसमुक्को व,, इदमत्र हृदयं नारकतिर्यगादयोऽनंता जीवा नानाविधशरीरमाना स्ते यथा तैर्दुःखिता एव तदनंतभागवर्तिनस्तु सुखिनः एवमनंता बद्धास्तदनंतभागवर्तिनस्तु मुक्तास्तेषां चैकत्वे न कोऽपि सुखं प्राप्नोति बहुतरोपघातान्वितत्वाद्यथा सर्वांगरोगग्रस्तोऽगुल्येकदेशेन नारोगो यज्ञदत्तः एवं न कोऽपि मुक्तो घटते बहुनरबद्धत्वाद्यथा सर्वांगकीलितोऽगुल्येकदेशमुक्तस्तस्मादेकत्वे सुखाद्यनुपपत्तेर्नानात्वं जीवानामिति स्थितं द्रव्यानुयोगे गणधरवादे ॥ विशे० ॥

तथाच निरयावल्याम्—

एगे भवं जाव सावधम्मं पडिवज्जित्ता पडिगते॥ निर० ॥

एगे भवंति एको भवान् इत्येकत्वाभ्युपगमे आत्मनः कृते भगवता श्रोत्रादिविज्ञानानामवयवानां चात्मनोऽनेकता उपलब्ध्या एकत्वं दूषयिष्यामीति बुद्ध्या पर्यनुयोगो द्विजेन कृतं यावच्छब्दाद्दुभौ भवत इति गृह्यते द्वौ भगवान् इति च द्वित्वाभ्युपगमेऽहमित्येकत्वविशिष्टस्यार्थस्य द्वित्वविरोधेन द्वित्वं दूषयिष्यामीति बुद्ध्या पर्यनुयोगो विहितः । अत्र भगवता स्याद्वादपक्षं निखिलदोषगोचरातिक्रांतमवलंब्योत्तरमदायि एकोऽप्यहं कथं द्रव्यार्थितया जीवद्रव्यस्यैकत्वात् न तु प्रदेशार्थतया ह्यनेकत्वात्मनेति बादिनामेकत्वोपलंभो न बाधकः ज्ञानदर्शनार्थतया कदाचिद् द्वित्वमपि न विरुध्यतीत्यत उक्तं द्वावप्यहं किं चैकस्यापि स्वभावभेदेनानेकधात्वं दृश्यते तथा ह्येको हि देवदत्तादिपुरुष एकदैव तत्तदपेक्षया पितृत्वपुत्रत्वभ्रातृत्वमातुलत्वभागिनेयत्वादीननेकान् स्वभावान् लभते ( तहा-अक्खए अव्वए निच्चे अवट्ठिए आयद्धिति ) यथा जीवद्रव्यस्यैकत्वादेकस्तथा प्रदेशार्थतया असंख्येयप्रदेशतामाश्रित्याक्षयः सर्वथा प्रदेशानां क्षयाभावात् तथा अव्ययः कियतामपि नव्ययः कियतामपि च व्ययाभावात् असंख्येयप्रदेशता हि न कदाचनाप्यपैति अतो व्यवस्थितत्वान्नित्यताभ्युपगमेऽपि न कश्चिद्दोषः इत्येवं भगवताभिहिते तेनापृष्टेप्यात्मस्वरूपे तद्बोधध्वंस्यवच्छिन्नसंशयः संजातसम्यक्त्वः (दुवालसविहं साव : धम्मं पडिवज्जित्ता सट्ठाणमुवगओ सोमिलमाहणो ॥निर०॥ ज्ञाताधर्मकथायामपि—

एगे भवं दुवे भवं अक्खए भवं अव्वए भवं अवट्ठिए भवं अणेगभूयभावभविए भवं एवं सुया एगे वि अहं दुवे वि अहं जाव अणेगभूयभावभविए वि अहं से केणट्ठेणं भन्ते! एगे वि अहं—जावसूयादव्वट्ठाए एगे अहं णाणदंसणट्ठयाए दुवे अहं पएसट्ठयाए अक्खए वि अहं अव्वए वि अहं उवओगट्ठए अणेगभूयभावभविए वि अहं॥ज्ञाता०मू०॥

एगे भवं ति एको भवान् इति एकत्वाभ्युपगमे आत्मनः कृते सूरिणा श्रोत्रादिविज्ञानावयवानां चात्मनोऽनेकतोपलब्ध्या एकत्वं दूषयिष्यामीति बुद्ध्या पर्यनुयोगः शुकेन कृतः(दुवे भवंति ) द्वौ भवानिति च द्वित्वाभ्युपगमे अहमित्येकत्वविशिष्टस्यार्थस्य द्वित्वविरोधेन द्वित्वं दूषयिष्यामीति बुद्ध्या पर्यनुयोगो विहितः अक्षयः अव्ययः अवस्थितो भवानेनेन नित्यात्मपक्षः पर्यनुयुक्तः अनेके भूता अतीताभावासत्वाः परिणामा वा भाव्याश्च भाविनो यस्य स तथा अनेन चातिक्रांतभाविसत्त्वाप्रश्नेन अनित्यात्मपक्षः पर्यनुयुक्तः एकतरपरिग्रहे अन्यतरस्य दूषणायेति । तत्राचार्येण स्याद्वादस्य निखिलदोषगोचरातिक्रांतत्वात्तमवलंब्योत्तरमदायि एकोऽप्यहं कथं द्रव्यार्थतया जीवद्रव्यस्यैकत्वात् न तु प्रदेशार्थतया तथाह्यनेकत्वान्ममेत्यवयवादीनामनेकत्वोपलंभो न बाधकः । तथा कंचित्स्वभावमाश्रित्यैकत्वसंख्याविशिष्टस्यापि पदार्थस्य स्वभावांतरद्वयापेक्षतया द्वित्वमपि न विरुद्धमित्यत उक्तं द्वावप्यहं ज्ञानदर्शनार्थतया न चैकस्य स्वभावभेदो न दृश्यते एको हि देवदत्तादिपुरुषः एकदैव तत्तदपेक्षतया पितृत्वपुत्रत्वभ्रातृव्यत्वपितृव्यत्वमातुलत्वभागिनेयत्वादीननेकान्स्वभावाँल्लभते इति तथा प्रदेशार्थतया असंख्येयप्रदेशतामाश्रित्याक्षयः सर्वथा प्रदेशानां क्षयाभावात् । अव्ययः कियतामपि च व्ययाभावात्किमुक्तं भवति अवस्थितो नित्यः । असंख्येयप्रदेशो हि न कदाच-

नापि व्यपैति मतो नित्यताभ्युपगमेऽपि न दोषः । उपयोगार्थतया विविधविषयानुयोगार्थतया विविधविषयानुयोगानाश्रित्य अनेकभूतभावभविकोऽपि अतीतानागतयोर्हि कालयोरनेकविषयबोधानामात्मनः कथंचिदभिन्नाना मुत्पादाद्विगमाद्वा नित्यपक्षे न दोषायेति ॥ ज्ञाता टी० अ०५॥

मुक्तोऽपि वाऽभ्येतु भवं भवो वा भवस्थशून्योऽस्तु मितात्मवादे । षड्जीवकायं त्वमनन्तसंख्यमाख्यस्तथा नाथ! यथा न दोषः॥ २९॥

व्या० । मितात्मवादे संख्यातानामात्मनामभ्युपगमे दूषणद्वयमुपतिष्ठते तत्क्रमेण दर्शयति मुक्तोपि वाभ्येतु भवमिति मुक्तो निर्वृतिंप्राप्तः सोऽपि वाअपिर्विस्मये वाशब्द उत्तरदोषापेक्षया समुच्चयार्थः । यथा देवो वा दानवो वेति भवमभ्येतु संसारमभ्यागच्छतु इत्येको दोषप्रसंगः। भवो वा भवस्थशून्योऽस्तु भवः संसारः स वा भवस्थशून्यः संसारिजीवैर्विरहितोऽस्तु भवतु इति द्वितीयो दोषप्रसंगः । इदमत्राकूतं । यदि परिमिता एवात्मानो मन्यंते तदा तत्त्वज्ञानाभ्यासप्रकर्षादिक्रमेणापवर्गं गच्छत्सु तेषु संभाव्यते खलु कश्चित्कालो यत्र तेषां सर्वेषां निर्वृतिकालस्थानादिनिधनत्वादात्मनां च परिमितत्वात्संसारस्य रिक्तता भवंती केन वार्यतां। समुच्चीयते हि प्रतिनियतसलिलपटलपरिपूरिते सरसि पवनतपनातपनजनोदंचनादिना कालांतरे रिक्तता ॥ नचायमर्थः प्रामाणिकस्य कस्यचित्प्रसिद्धः संसारस्य स्वरूपहानिप्रसंगात् तत्स्वरूपं ह्येतयत्र कर्मवशवर्त्तिनः प्राणिनः संसरंति समसार्षुः संसरिष्यंति चेति सर्वेषां च निर्वृतत्वे संसारस्य वा रिक्तत्वं हठादभ्युपगंतव्यं मुक्तै र्वा पुनर्भवे आगंतव्यं न च क्षीणकर्मणां भवाधिकारः " दग्धे बीजे यथा ऽत्यंतं प्रादुर्भवति नांकुरः । कर्मबीजे तथा दग्धे न रोहति भवांकुर" इति वचनात् । आह च पतंजलिः सति मूले तद्विपाको जात्यायुर्भोगा इति एतट्टीका च सत्सु क्लेशेषु कर्माशयो विपाकारंभी भवति नोच्छिन्नक्लेशमूलः यथा तुषावनद्धाः शालितंडुला अदग्धबीजभावाः प्ररोहणसमर्था भवंति नापनीततुषा दग्धबीजभावाः तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति नापनीतक्लेशो न दग्धबीजभावो वेति स च विपाकस्त्रिविधो जातिरायुर्भोग इति । अक्षपादोऽप्याह न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्येति एवं विभंगज्ञानिशिवराजर्षिमतानुसारिणो दूषयित्वा उत्तरार्द्धेन भगवदुपज्ञमपरिमितात्मवादं निर्दोषतया स्तौति षड्जीवेत्यादि त्वं तु हे नाथ! अनन्तसंख्यं अनंताख्यसंख्याविशेषयुक्तं षड्जीवकायं अजीवन् जीवंति जीविष्यंति चेति जीवा इंद्रियादिज्ञानादिद्रव्यभावप्राणधारणयुक्तास्तेषां "संघे चानूर्द्धे" इति। चिनोतेर्घञ् आदेश्च कत्वे कायः समूहो जीवकायः पृथिव्यादिषण्णां जीवकायानां समाहारः षड्जीवकायं पात्रादिदर्शनान्नपुंसकत्वं अथवा षण्णां जीवानां कायः प्रत्येकं संघातः षड्जीवकायस्तं षड्जीवकायं पृथिव्यप्तेजोवायुवनस्पतित्रसलक्षणषड्जीवनिकायं तथा तेन प्रकारेण आख्यः मर्यादया प्ररूपितवान् यथा येन प्रकारेण न दोषो न दूषणमिति जात्यपेक्षमेकवचनं प्रागुक्तदोषद्वयजातीया अन्येऽपि दोषा यथा न प्रादुष्यंति तथा त्वं जीवानंत्यमुपदिष्टवानित्यर्थः । आख्य इति आङ्पूर्वस्य ख्यातेरङि सिद्धिः त्वमित्येकवचनं चेदं ज्ञापयति यज्जगद्गुरोरेवैकस्येदक्प्ररूपणसामर्थ्यं न तीर्थांतरशास्तॄणामिति पृथिव्यादिना पुनर्जीवत्वमित्थं साधनीयं यथा सात्मिका विद्रुमशिलादिरूपा पृथिवी च्छेदे समानधातूत्थानादर्शांकुरवत् भौममंभोऽपि सात्मकं क्षतभूसजातीयस्य स्वभावस्य संभवात् शालूरवत् । आंतरिक्षमपि सात्मकमभ्रादिविकारे स्वतः संभूय पातात् मत्स्यादिवत् तेजोपि सात्मकं आहारोपादानेन वृद्ध्यादिविकारोपलंभात् पुरुषांगवत् । वायुरपि सात्मकः अपरप्रेरितत्वेपि तिर्यग्गतिमत्त्वात् गोवत् । वनस्पतिरपि सात्मकः छेदादिभिर्म्लान्यादिदर्शनात् पुरुषांगवत् । केषांचित् स्वांगोपांगोपश्लेषादिविकाराच्च अपकर्षतश्चैतन्याद्वा सर्वेषां सात्मकत्वसिद्धिराप्तवचनाच्च त्रसेषु च कृमिपिपीलिकाभ्रमरमनुष्यादिषु न केषांचित्सात्मकत्वे विगानमिति । यथा च भगवदुपज्ञे जीवानंत्ये न दोषस्तथा दिग्मात्रं भाव्यते भगवन्मते हि षण्णां जीवनिकायानामेतदल्पबहुत्वं सर्वस्तोकास्त्रसकायिनस्तेभ्योऽसंख्यातगुणास्तेजस्कायिकास्तेभ्यो विशेषाधिकाः पृथ्वीकायिकास्तेभ्यो विशेषाधिका अप्कायिकास्तेभ्यो विशेषाधिका वायुकायिकास्तेभ्योऽनन्तगुणाः वनस्पतिकायिकास्ते च व्यावहारिकाव्यावहारिकाश्च "गोलाय असंखिज्जा असंखनिग्गोयगोलउ भणिओ । इक्किक्कंमि निगोए अणंतजीवा मुणेयव्वा॥ १॥ सिज्झंति जत्तिया खलु इह संववहारजीव रासीउ।इति अणाइवणस्सइ रासीउ ततिया तंमि ॥ २॥ इति वचनात् यावंतश्च यतो गच्छंति मुक्तिं जीवास्तावंतोऽनादिनिगोदवनस्पतिराशेस्तत्रागच्छंति न च तावता तस्य काचित्परिहाणिर्निगोदजीवानामानंत्यस्याऽक्षयत्वात् निगोदस्वरूपं च समयसागराद्वगंतव्यं अनाद्यनंतेपि काले ये केचिन्निर्वृता निर्वांति निर्वास्यंति च ते निगोदानामनंतभागेऽपि न वर्त्तन्ते नावर्त्तिषत न वर्त्स्यंति ततश्च कथं मुक्तानां भवागमनप्रसंगः कथं च संसारस्य रिक्तताप्रसक्तिरिति अभिप्रेतं चैतदन्ययूथ्यानामपि तथाचोक्तं वार्त्तिककारेण "अत एव विशुध्यत्सु मुच्यमानेषु संततं । ब्रह्मांडलोकजीवानामनंतत्वाद्शून्यता ॥१॥ अन्त्यन्यूनातिरिक्तत्वे युज्यते परिमाणवत् । वस्तुन्यपरिमेये तु नूनं तेषामसंभवः"॥२॥ इतिकाव्यार्थः ॥ ॥ स्या० २९ ॥ आव० ॥

अनेकान्तजयपताकायामपि एको नित्यस्तथा बद्धः क्षय्यसस्त्वेह सर्वथा । आत्मेति निश्चयाद्भूयो भवनैर्गुण्यदर्शनात् ॥ ४॥ तत्त्यागायोपशान्तस्य सद्वृत्तस्यापि भावतः । वैराग्यं तद्गतं यत्तन्मोहगर्भमुदाहृतं ॥ ५ ॥ भूयांसो नामिनो बद्धा बाह्येनेच्छादिना ह्यमी ॥ आत्मानस्तद्वशात्कष्टं भवे तिष्ठंति दारुणे ॥ ६ ॥ एवं विज्ञाय तत्त्यागविधिं त्यागश्च सर्वथा। वैराग्यमाहुः सज्ज्ञानसंगतं तत्त्वदर्शिनः॥ अने० ॥ ७॥ आत्मन एकत्वानेकत्वसर्वगतत्वसत्क्रियत्वनिष्क्रियत्ववक्तव्यतापरलोकाद्यपि ।। विशे० ॥

( १९ ) अथवा मुक्तामुक्त विशेषमपहायसामान्येनात्मनः सक्रियत्वं साधयन्नाह–

कत्ताइत्तणओ वा सक्किरिओ यं ओ मउकुलालो व्व।

देहप्फंदणओ वा पच्चक्खं जंतपुरिसो व्व ।।

(अस्य व्याख्या (१९०) पत्रे कर्तृद्वारावसरे) विशे०गणधरवादे। (२०) आत्मनो ज्ञानस्वरूपत्वमाचाराङ्गे दर्शितम् तथाहि-

अणुसंवेदणमप्पाणेणं जं हंतव्वंति णाभिपत्थए ॥

आचा० ॥ टी० ॥ संवेदनमनुभवनं अनु पश्चात् संवेदनं केनात्मना यत्परेषां मोहोदयाद्धननादिना दुःखोत्पादनं विधीयते तत्पश्चादात्मना संवेद्यमित्याकलय्य यत्किमपि हन्तव्यमिति चिकीर्षितं तन्नाभिप्रार्थयेन्नाभिलषेत् ननु चात्मना अनुसंवेद्यमित्युक्तं संवेदनं च सातासातरूपं तच्च यथा नैयायिकवैशेषिकाणामात्मनो भिन्नेन गुणभूतेनैकार्थसमवायिना ज्ञानेन भवति तथा भवतामप्याहोस्विद् भिन्नेनात्मन इत्यस्य प्रतिवचनमाह ॥ आचा० ॥

जे आया से विण्णाया जे विण्णाया से आया जेण विजाणति से आया तं पडुच्च पडिसंखाए । एस आयावादी समियाए परियाए वियाहिएत्तिबेमि ॥ आचा० ॥

य आत्मा नित्य उपयोगलक्षणः विज्ञाताप्यसावेव न तु पुनस्तस्मादात्मनो भिन्नं ज्ञानं पदार्थसंवेदकं यश्च विज्ञाता पदार्थानां परिच्छेदक उपयोग आत्माप्यसावेवोपयोगलक्षणत्वात् जीवस्योपयोगस्य च ज्ञानात्मकत्वादिति ज्ञानात्मनोरभेदाभिधानाद्बौद्धाभिमतं ज्ञानमेवैकं स्यादिति चेत्तन्न भेदाभावोऽत्र केवलं चिकीर्षितो नैक्यं एतदेवैक्यं यो भेदाभाव इति चेद्धाष्टर्यमेतत् तथा हि पटशुक्लत्वयोर्भेदेनावस्थानाभावेऽपि नैकत्वापत्तिरत्रापि शुक्लत्वव्यतिरेकेण नापरः पटः कश्चिदप्यस्तीति चेदशिक्षितस्यलापो यतः शुक्लगुणविनाशे सर्वथा पटाभावापत्तिः स्यात् तदात्मनाविष्ट एवेति चेत् भवतु का नो हानिरनंतधर्म्मात्मकत्वाद्वस्तुनोऽपरमृद्वादिधर्म्मसद्भावे तद्धर्म्मविनाशेऽप्यविनष्ट एवेत्येवमात्मनोऽपि प्रत्युत्पन्नज्ञानात्मकतया विनाशेऽप्यपरामूर्त्तत्वासंख्येयप्रदेशता गुरुलघ्वादिधर्म्मसद्भावादविनाश एवेत्यलं प्रसङ्गेन ननु च य आत्मा स विज्ञातेत्यत्र तृजन्तेन कर्त्तुरभिधानादात्मनश्च कर्तृत्वात्तश्च य एवात्मा स एव विज्ञातेत्यत्र विप्रतिपत्त्यभावो येन वासौ जानाति तद्भिन्नमपि स्यात्तथा हि तत्करणं क्रिया वा भवेद्यदि करणं तद्दात्रादिवद्भिन्नं स्यात् अथ क्रिया सा यथा कर्तृस्था संभवत्येवं कर्म्मस्थापीति एवं भेदसंभवे कुत ऐक्यमिति यश्चोदयेत्तं प्रति स्पष्टतरमाह "जेण इत्यादि येन मत्यादिना ज्ञानेन करणभूतेन क्रियारूपेण वा विविधं सामान्यविशेषाकारतया वस्तु जानाति असावात्मा न तस्मादात्मनो भिन्नं ज्ञानं तथा हि न करणतया भेद एकस्यापि कर्त्तृकर्म्मकरणभेदेनोपलब्धेस्तद्यथा देवदत्त आत्मानमात्मना परिच्छिनत्ति क्रियापक्षे पाश्चिकोह्यभेदो भवताप्यभ्युपगत एवापि च मतिर्येषां क्रिया सैव कारकं सैव चोच्यत इत्यादिनैकत्वमेवेति ज्ञानात्मनोश्चैकत्वे यद्भवति तद्दर्शयितुमाह" तं इत्यादि तं ज्ञानपरिणामं प्रतीत्याश्रित्यात्मा तेनैव प्रतिसंख्यायते व्यपदिश्यते तद्यथा इन्द्रोपयुक्त इन्द्र इत्यादि यदि वा मति ज्ञानी श्रुतज्ञानी यावत् केवलज्ञानीति यश्च ज्ञानात्मनोरेकत्वमभ्युपगच्छति स किं गुणः स्यादिति "एस इत्यादि" एषोऽनंतरोक्तया नीत्या यथावस्थितात्मवादीस्यात्तस्य च सम्यग्भावेन शमितया वा पर्यायः संयमानुष्ठान रूपो व्याख्यात इत्यधिकारपरिसमाप्तौ ब्रवीमीति पूर्ववत् ॥ आचा० पञ्चमोद्देशके ॥

आत्मनो ज्ञानस्वरूपत्वमभिधातुम्भगवत्यामात्मन एव स्वरूपनिरूपणायाह—

आया भंते ! णाणे अण्णे णाणे गोयमा ! आयासिय णाणे सिय अण्णाणे णाये पुण णियमं आया ॥ भ०टी० ॥

आत्मा ज्ञानं योऽयमात्माऽसौ ज्ञानं न तयोर्भेदः, अथात्मनोऽन्यदज्ञानमिति प्रश्नः । उत्तरन्तु आत्मा स्यात् ज्ञानं सम्यक्त्वे सति मत्यादिज्ञानस्वभावत्वात्तस्य स्यादज्ञानं मिथ्यात्वे सति तस्य मत्यज्ञानादिस्वभावत्वात्, ज्ञानं पुनर्नियमादात्मा आत्मधर्म्मत्वात् ज्ञानस्य । न च सर्व्वथा धर्मो धर्म्मिणो भिद्यते सर्वथा भेदे हि विप्रकृष्टगुणिनो गुणमात्रोपलब्धौ प्रतिनियतगुणिविषय एव संशयो न स्यात्तदन्येभ्योऽपि तस्य भेदाविशेषाद् दृश्यते च यदा कश्चिद्धरिततरुतरुणशाखाविसररन्ध्रोदरान्तरतः किमपि शुक्लं पश्यति तदा किमियं पताका किमियं बलाकेत्येवं प्रतिनियतगुणिविषयोऽतो नापि धर्म्मिणो धर्म्मः सर्वथैवाभिन्नः सर्वथैवाभेदे हि संशयानुत्पत्तिरेव गुणग्रहणत एव गुणिनोऽपि गृहीतत्वादतः कथञ्चिदभेदपक्षमाश्रित्य ज्ञानं पुनर्नियमादात्मेत्युच्यत इति । इह चात्मा ज्ञानं व्यभिचरति, ज्ञानं त्वात्मानं न व्यभिचरति, खदिरवनस्पतिवदिति सूत्रगर्भार्थ इति ॥ भ० टी० शत० १२ उद्दे० १० ॥

अमुमेवार्थं दण्डके निरूपयन्नाह-

आयाणं भंते ! णेरइयाणं णाणे अण्णे णेरइयाणं णाणे ? गोयमा ! आया णेरइयाणं सिय णाणे सिय अण्णाणे, णाणे पुण ते णियमं आया एवं जाव थणिय कुमाराणं ॥ भ० ॥ श० ॥ १२ ॥ उ० १० ॥

आयेत्यादि नारकाणामात्माऽऽत्मस्वरूपं ज्ञानं उतान्यन्नारकाणां ज्ञानं तेभ्योऽतिरिक्तमित्यर्थ, इति प्रश्नः ॥ उत्तरन्तु आत्मा नारकाणां स्यात् ज्ञानं सम्यग्दर्शनभावात्, स्यादज्ञानं मिथ्यादर्शनभावात्, ज्ञानं पुनः सेति ॥ तन्नारकसम्बन्धिआत्मा न तद्व्यतिरिक्तमित्यर्थः ॥ भ० टी० ॥

आया भंते ! पुढवीकाइयाणं अण्णायो अण्णे पुढवीकाइयाणं अण्णाणे ? गोयमा ! पुढवीकाइयाणं णियमं अण्णाणे, अण्णाणे णियमं आया, एवं जाव वणस्सइकाइयाणं बेइंदिया तेइंदिया जाव वेमाणियाणं जहा णेरइयाणं ॥ भ० ॥ मू० ॥ श० १२ ॥ उ० १० ॥

पुढवीकाइयाणमित्यादि० आत्मा आत्मस्वरूपमज्ञानं उतान्यत्तत्तेषां उत्तरन्तु आत्मा तेषामज्ञानरूपो नान्यत्तत्तेभ्य इति भावार्थः ॥ भ० टी० ॥

आया भंते ! णेरइयाणं दंसणे अण्णे णेरइयाणं दंसणे ? गोयमा ! आया णेरइयाणं णियमं दंसणे दंसणेवि णियमं आया एवं जाव वेमाणियाणं निरंतरं दंडओ ॥ भ०मू० ॥ श० १२॥ उ० १० ॥

एवं दर्शनसूत्राण्यपि, नवरं सम्यग्दृष्टिमिथ्यादृष्ट्योर्दर्शनस्याविशिष्टत्वादात्मा दर्शने दर्शनमप्यात्मैवेति वाच्यं, यत्र हि धर्म्मे विपर्ययो नास्ति तत्र नियम एवोपनीयते, न व्यभिचारो यथेहैव दर्शने, यत्र तु विपर्ययोऽस्ति तत्र व्यभिचारो नियमश्च यथा ज्ञाने, आत्मा ज्ञानरूपोऽज्ञानरूपश्चेति व्यभिचारः ज्ञानं त्वात्मैवेति नियम इति ॥ भ० ॥ टी० ॥

आत्मनः स्वपर्य्यायेभ्यः कथञ्चिद्व्यतिरिक्तत्वं सम्मति तर्के यथा ॥

"जीवो अणाइणिहणो जीवोत्ति य णियमउ ण वत्तव्वो। जं पुरिसाओय जीवो देवा उय जीविय-विसिट्ठो" जीवो ऽनादिनिधनो जीव एव विशेषविकल्प इति नियमतो वक्तव्यं यतः पुरुषायुष्कजीवो देवायुष्कजीवाद्विशिष्टो जीव एव इति तत्त्वभेदे पुरुषजीव इत्यादि भेदो न भवेत् केवलस्य सामान्यस्य विशेषप्रत्ययाभिधानान्निर्वर्तितस्यापि विशेषप्रत्ययाभिधानस्य संभवे समोन्यस्यभिधानस्यापि निर्निमित्तस्यैव भावात्तन्निबंधनसामान्याभ्युपगमोऽप्ययुक्तः स्यादिति सर्वाभावो न च विशेषप्रत्ययस्य बाधारहितस्यापि मिथ्यात्वमितरत्वापि तत्प्रसक्तेरिति प्रतिपादनात् केवलज्ञानस्य कथं चिदात्माव्यतिरेकादात्मनो वा केवलज्ञानाव्यतिरेकात्। कथं चिदेकस्त्वन्तयोरित्याह संख्येज्जमसंख्येज्जं अणंतकप्पं च केवलं णाणं। तह रागदोसमोहा अण्णेवि य जीवपज्जायौ ॥ आत्मनः एकत्वात्कथंचित्तदव्यतिरिक्तं केवलमप्येकं केवलस्य वा ज्ञानदर्शनरूपतया द्विरूपत्वात्तदव्यतिरिक्त आत्माऽपि द्विरूपोऽसंख्येयप्रदेशात्मकत्वादात्मनः केवलमप्यसंख्येयमनन्तार्थविषयतया केवलस्यानंतत्वादात्माप्यनंतः एवं रागद्वेषमोहा अन्येऽपि जीवपर्यायाः छद्मस्थावस्थाभाविनः संख्येयासंख्येयानंतप्रकारा आलंब्यभेदात् तदात्मकत्वात् स आत्मापि तद्वत् तथैव स्यात् सोमिलब्राह्मणप्रश्नप्रतिवचने चागमे एतदर्थप्रतिप्रश्न उत्तरं सोमिलएगेविहं अहं जाव अणेगभूय भावभविए य अहं सेकेणट्ठेणं भंते एवं वुच्चइ एगेवि अहं ॥ इत्याद्युत्तरहेतुप्रश्ने हेतुप्रतिपादनं ( सोमिला दव्वट्ठयाए एगे अहं णाणदंसणट्ठयाए अहमित्यादि ) प्रकृतार्थसंवादिसिद्धे रागादीनां चैकाद्यनंतभेदत्वमात्मनः ( अहं णाणदंसणट्ठयाए ) जहमित्यादि प्रकृतार्थसंवादिसिद्धे रागादीनां चैकाद्यनंतभेदत्वमात्मपर्यायत्वात् यो ह्यात्मपर्यायः स एकोऽप्यनंतभेदो यथा केवलावबोधस्तथा च रागादय इति स्थित्युत्पत्तिः। निरोधात्मकत्वहेत्यमपि सिद्धमिति यत्परेणोक्तमनेकांतात्मकत्वाभावेऽपि केवलीति सत्वाद्यत् सत्तत्सर्वमनेकांतानात्मकमिति प्रतिपादकस्य शासनस्याव्यापकत्वात् कुसमयविशासित्वं तस्यासिद्धमिति तत्प्रत्युक्तं द्रष्टव्यं ॥ सम्म० ॥

आत्मकर्मणोरन्योन्यानुगतत्वं सम्मतितर्के–

( २१ ) आत्मनो ज्ञानदर्शनश्रवणादिप्रकारस्स्थानाङ्गे यथा–

दोहिं ठाणेहिं आया अधोलोगं जाणइ पासइ तंजहा समोहएणं चेव अप्पाणेणं आया अहोलोगं जाणइ पासइ असमोहएणं चेव अप्पाणेणं आया अहोलोगं जाणइ पासइ अधोहि समोहए असमोहएणं चेव अप्पाणेणं आया अहोलोगं जाणइ पासइ एवं तिरियलोगं उड्ढलोगं केवलकप्पं लोगं दोहिं ठाणेहिं आया अहोलोगं जाणइ पासइ तं जहा विउव्विएणंचेव अप्पाणेणं आया अहोलोगं जाणइ पासइ अविउव्विएणं चेव अप्पाणेणं आया अहेलोगं जाणइ पासइ अहोहिविउव्विया विउव्विएणं चेव अप्पाणेणं आया अहोलोगं जाणइ पासइ एवं तिरियलोगं उड्ढलोगं केवलकप्पं लोगं स्था० ॥ ठा० २ । मू० ॥

दोहीत्यादि पंचसूत्रीस्थानाभ्यां प्रकाराभ्याम् ( देसेण विति ) ॥ देशेन शृणोत्येकेन श्रोत्रेणैकश्रोत्रोपघाते सति सर्व्वेण वानुपहतश्रोत्रेन्द्रियो यो वा संभिन्नश्रोत्राभिधानलब्धियुक्तः स सर्वैरिन्द्रियैः शृणोतीति सर्वेणेति व्यपदिश्यते एवमिति यथा शब्दान् देशसर्व्वाभ्यां एवं रूपादीनपि नवरं जिह्वादेशस्य प्रसुप्त्यादिनोपघाताद्देशेनास्वादयतीत्यवसेयमिति।शब्दश्रवणादयो जीवपरिणामा उक्ताः॥टी०॥

ज्ञानाधिकार एवेदमपरमाह–

दोहिं ठाणेहिं आया सद्दाइसुणेइ तं देसेणवि आया सद्दाई सुणेइ सव्वेण वि आया सद्दाइं सुणेइ एवं रूवाइं पासइ गंधाइं आघायइ रसाइं आसाएइ णासाइं पडिसंवेएइ स्था० मू० ॥ ठा० २ ॥

दोहीत्यादिपञ्चसूत्रीस्थानाभ्यां प्रकाराभ्याम्॥ देसेणवित्ति॥ देशेन शृणोत्येकेन श्रोत्रेणकश्रोत्रोपघाते सति सर्वेण वानुपहतश्रोत्रेन्द्रियो यो वा संभिन्नश्रोत्रोभिधानलब्धियुक्तः स सर्वैरिन्द्रियैः शृणोतीति सर्व्वेणेति व्यपदिश्यते एवमिति यथाशब्दान् देशसर्वाभ्यां एवं रूपादीनपि नवरं जिह्वा देशस्य प्रसुप्त्या दिनोपघाताद्देशेनास्वादयतीत्यवसेयमिति ॥स्था० टी०॥ शब्दश्रवणादयो जीव परिणामा उक्तास्तत्प्रस्तावात् तत्परिणामान्तराण्याह ॥

दोहिं ठाणेहिं आया ओभासइ तं जहा देसेण वि आया ओभासइ सव्वेण वि आया ओभासइ एवं पभासइ विउव्वइ परियावेइ भासं भासइ आहारेइ परिणामेइ वेएइ निज्जरेइ ॥ स्था० मू० ठा२ ॥

दोहीत्यादि नवसूत्राणि सुगमानि न वरं अवभासते द्योतते देशेन खद्योतवत् सर्वतः प्रदीपवत् अथ वा अवभासते जानाति १ स च देशतः पट्टुकावधिज्ञानी सर्व्वतोऽभ्यन्तरावधिरिति एवमिति देशसर्वाभ्यां प्रभासते प्रकर्षेण द्योतते २ विकरोति देशेन हस्तादिवैक्रियकरणेन सर्वेण सर्व्वस्यैव कायस्येति ॥ ३ ॥ परियारे इति ॥ मैथुनं सेवते देशेन मनोयोगादीनामन्यतमेन सर्वेण योगत्रयेणापि ४ भाषां भाषते देशेन जिह्वाग्रादिना सर्व्वेण समग्रताल्वादिस्थानैः ५ आहारयति देशेन मुखमात्रेण सर्वेण ओज आहारापेक्षया आहार मेव परिणामयति परिणामन्नयति स्वस्वरसविभागेन भक्ताश्रयदेशस्य प्लीहादिना रुद्धत्वात्।देशतः अन्यथा सर्व्वतः वेदयति अनुभवति देशेन हस्तादिना अवयवेन सर्वेण सर्व्वावयवैराहारसत्कान् परिणमितपुद्गलान् इष्टानिष्टपरिणामतः निर्ज्जरयति त्यजत्याहारितान् परि[illegible]मितान् वेदितान् आहारपुद्गलान् देशेन अपानादिना सर्व्वेण शरीरेणैव प्रस्वेदवदिति। अथ चैतानि चतुर्दशापि सूत्रा-

णि विवक्षितविषयवत्वापेक्षया नेयानि तत्र देशसर्वयोजना यथा देशेनापीति देशतोऽपि शृणोति विवक्षितशब्दानां मध्ये कांश्चिच्छृणोति सर्व्वेणापीति सर्वतस्तु सामस्त्येन सर्वानेवेत्यर्थः। एवं रूपादीनपि तथा विवक्षितस्य देशं सर्व्वं वा विवक्षितमवभासयत्येवं प्रभासयत्येवं विकरवाणीत्येवं विकुरुते परिचारणीयं स्त्रीशरीरादि परिचारयति भाषणीयापेक्षया देशतो भाषां भाषते सर्व्वतोवेति अभ्यवहार्यमाहारयति आहृतं परिणामयति वेद्यं कर्मवेदयति देशतः सर्व्वतोवा एवं निर्जरयत्यपि॥ स्था० ॥ठा० ॥ २ ॥

(२२) आत्मनिरूपणं गच्छाचारे। तथाच पूर्वाचार्यकृतगाथा–
जीवो अणाईनिहणो अविणासी अक्खओ धुवो निच्चं।
दव्वट्ठयाइ णिच्चो परियायगुणेहिं य अणिच्चो ॥ १ ॥
जह पंजराउसउणि घडाउ वयराणि कंचुआ पुरिसो।
एवं स चेव भिण्णो जीवो देहाउ संसारी ॥ २ ॥
जह खीरोदगतिलतिल्लकुसुमगंधाण दीसइ न भेओ ॥ तह चेवं न जीवस्स विदेहाओ हव्वंति उभेओ ॥ ३ ॥ संकोअविअविकोएहि य जहक्कमं देहलोयमित्तो वा ॥ हत्थिस्स व कुंथुस्स वा पएससंखासमाचेव ॥ ४ ॥ कालो जह अणाई अविणासी होई तिसु वि कालेसु ॥ तह जीवो वि अणाई अविणासी तिसु वि कालेसु ॥५॥ गयणं जहा अरूवी अवगाहगुणेण घिप्पइ तं तु। जीवो तहा अरूवी विणाणगुणेण घेत्तवो ॥ ६ ॥ जह पुढवी अविणट्ठा आहाराइसव्वदव्वाणं। तह अहारो जीवो नाणाईणं गुणगणा ॥ ७ ॥ अक्खयमणंतमउलं जह गयणं होइ तिसु वि कालेसु। तह जीवो अविणासी अवट्ठिओति- सुघिकालेसु ॥ ८ ॥ जह कणगाओ कारंति पज्जवा मउल कुंडलाइ। या दव्वं कणगं तं विय नाम विशेसोइमो अन्नो ॥ ॥ ९ ॥ एवं च उगाई ए परिब्भमंतस्स जीवकणगस्स नामाइं वहुविहाइं जीवदव्वं तयं चेव ॥ १० ॥ जह कम्मयरो कम्मं करेइ भुंजइ सो फलं तस्स। तह जीवोवि अकम्मं करेइ भुंजइ रसफलं ॥ ११ ॥ उज्जोवेउं दिवसं जह सूरा वच्चइ पुणो अत्थं। न यइ सो सूरो अन्नंखित्तं पयासंतो ॥ १२ ॥ जह सूरो तह जीवो भवंतरं वच्चए पुणो। अन्नं तस्स वि सरीरमन्नं खेत्तं वरंवी पयासेई ॥ १३ ॥ फुल्लुप्पलकमलाणं चंदण अगरूण सुरहिंगंधाणं। घिप्पइ नासाइगुणो नय रूवं दीसए तेसि॥१४॥ एवं नाणगुणेण घिप्पइ जीवो वि वुद्धिमंतेहिं। जह गंधो तह जीवो नहु सक्को कीरए भित्तुं ॥ १५ ॥ भंभामउद्दलपणवमकुंदाणसंखसन्नी ण। सदुव्विय सुच्चइ केवलुत्ति न हु दीसई रूवं ॥ १६ ॥ पच्चक्खंगहगाहिओ दीसइ पुरीसो न दीसइ पिसाओ। अगारेहिं मुणिज्जइ एवं जीवो विदेहविओ ॥ १७ ॥ हसइ विरुसइ नच्चइ गाएइ रुयइ सुहदुक्खं। जीवो मेहमइगओ विवहपयारं पयंसेइ ॥ १८ ॥ जह आहारो भुत्तो जिआणंपरिणमइ सत्तभेएहिं वस। १। सोणिय २। मंस ३। ट्ठिअ ४। मज्जा ५। तह मेय ६। सुकेहिं ॥ ७ ॥ १९ ॥ एवं अट्ठविअ जीवेण अणाइसहगयं कम्मं। जह कणगं पाहाणे,अणाइसंजोगनिप्पन्नं॥ २०॥ जीवस्स य कम्मस्स य अणाइमं चेव होइ संजोगो। सोवि उवाएण पुढो कीरइठवलाओजह कणगं ॥२१॥ जह पुव्वयरं कम्मं जीवो वा जइहविज्जवइ सा। वसव्वो कुकुडिअंडाणंभणसु को पढमो ॥ २२ ॥ जह अंडसंभवा कुक्कुडित्ति अंडं च कुकडी उ भयं। नय पुव्वावरभावो जह तह कम्माणजीवाणं ॥ २३ ॥ अणुमाणपहे सिद्धं छउमत्थाणं जिणाण पच्चक्खं। गिण्हसु गणसु गुणहरं जीवं अणाइयं अक्खयसरूवं ॥ २४ ॥ कत्थय जीवो वलिओ कत्थ य कम्माई हुंति वलियाइं। जीवस्स य कम्मस्स य पुव्वनिबद्धाइ वेराई ॥ २५ ॥ गच्छा० ॥

( २३) आत्मतत्वनिरूपणं बौद्धादिसम्मतात्मतत्वनिराकरणेन प्रदर्शितं रत्नावतारिकायाम् सप्तमपरिच्छेदे। यथा बौद्धास्तु बुद्धिक्षणपरंपरामात्रमेवात्मानमाम्नासिषुः न पुनर्मौक्तिककणनिकरनिरंतरानुस्यूतैकसूत्रवत्तदन्वयिनमेकं ते लौकायतलुंटाकेभ्योऽपि पापीयांसस्तद्भावेऽपि तेषां स्मरण प्रत्य भिज्ञानाद्यघटनात् तथा हि॥ पूर्वबुद्ध्यानुभूतेऽर्थे अथ स्यादयं दोषा यद्यविशेषेणान्यदृष्टमन्यः स्मरतीत्युच्यते। किंत्वन्यत्वेऽपि कार्यकारणभावादेव स्मृतिर्भिन्नसंतानबुद्धीनां तु कार्यकारण भावो नास्ति तेन संतानांतराणां स्मृतिर्न भवति। न चैकसांतानिकीनामपि बुद्धीनां कार्यकारणभावो नास्ति येन पूर्वं बुद्ध्यनुभूतेऽर्थे तदुत्तरबुद्धीनां स्मृतिर्न स्यात् तदप्यनवदातमेवमपि नानात्वस्य तदवस्थत्वात्। अन्यत्वं हि स्मृत्यसंभवे साधनमुक्तं तच्च कार्यकारणभावाभिधानेऽपि नापगतं न हि कार्यकारणभावाभिधाने तस्यासिद्धत्वादनामन्यतमो दोषः प्रतिपाद्यते। नापि स्वपक्षसिद्धिरनेन क्रियते। न हि कार्यकारणभावात् स्मृतिरित्यत्रोभयप्रसिद्धोऽस्ति दृष्टांतः॥ अथ "यस्मिन्नेव हि संताने आहिता कर्मवासना फलं तत्रैव संधत्ते कर्प्पासे रक्ततायथेति" कर्प्पासरक्तता दृष्टांतोऽस्तीति चेत् तदसाधीयः। साधनदूषणासंभवात् अन्वयाद्यसंभवात्। न साधनं न हि कार्यकारणभावो यत्र तत्र स्मृतिः कर्पासे रक्ततावदित्यन्वयः संभवति नापि यत्र न स्मृतिस्तत्र न कार्यकारणभाव इति व्यतिरेकोऽस्ति। असिद्धत्वाद्यनुद्भावनाच्च न दूषणं। न हि ततोऽन्यत्वादित्यस्य हेतोः कर्प्पासे रक्ततावदित्यनेन कश्चिद्दोषः प्रतिपाद्यते। किं च यद्यन्यत्वेऽपि कार्यकारणभावेन स्मृतेरुत्पत्तिरिष्यते। तदा शिष्याचार्यादि बुद्धीनामपि कार्यकारणभावसद्भावेन स्मृत्यादि स्यात्। अथ नायं प्रसंग एकसंतानत्वे सतीति विशेषणादिति चेतदयुक्तं भेदाभेदपक्षाभ्यां तस्योपक्षीणत्वात् क्षणपरंपरातस्तस्या भेदे हि क्षणपरंपरैव सा तथा च संतान इति न किंचिदतिरिक्तमुक्तं। भेदे तु पारमार्थिकोऽपारमार्थिको वासौ स्यात्। अपारमार्थिकत्वेऽस्य तदेव दूषणं। पारमार्थिकत्वे स्थिरो वा स्यात् क्षणिको वा। क्षणिकत्वे संतानानिर्विशेष एवायमिति किमनेन स्तेनभीतस्य स्तेनांतरशरणस्वीकरणं कारणिना॥ "स्थिरमथ संतानमभ्युपेयाः प्रथयंतं परमार्थसत्स्वरूपं। अमृतं पिब पूनयाऽनयोक्त्या स्थिरवपुषः परलोकिनः प्रसिद्धेः" उपादानोपादेयभावप्रबंधेन प्रवर्तमानः कार्यकारणभाव एव संतान इति चेत्तदवद्यमविष्वग्भावादिसंबंधविशेषाभावे कारणत्वमात्राविशेषादुपादानेतरविभागानुपपत्तेः संतानजनकं यत्तदुपादानमिति चेन्न इतरेतराश्रयत्वप्रसंगात् संतानजनकत्वेनोपादानकारणजन्यत्वेन च संतानत्वमिति। लोके तु समानजातीयानां कार्यकारणभावे संतानव्यवहारस्तथा ब्राह्मणसंतान इति तत्प्रसिद्ध्या वास्माभिरपि शब्दप्र-

दीपादिषु संतानव्यवहारः क्रियते । तथापि यद्येवमभिप्रेतः संतानस्तदा कथं न शिष्याचार्यबुद्धीनामेकसंतानत्वम्। नह्यासां समानजातीयत्वं कार्यकारणभावो वा नास्ति । ततः शिष्यस्य चिरव्यवहिता अपि बुद्धयः पारंपर्येण कारणमिति तदनुभूतेऽप्यर्थे यथा स्मृतिर्भवति तथोपाध्यायबुद्धयोप्याजन्मप्रभृत्युत्पन्नाः पारंपर्येण कारणमिति तदनुभूतेऽप्यर्थे स्मृतिर्भवेत्। किंच धूमशब्दादीनामुपादानकारणं विनैवोत्पत्तिस्तव स्यान्न हि तेषामप्यनादिप्रबंधेन समानजातीयंकारणमस्तीति शक्यते वक्तुम्। तथा च ज्ञानस्यापि गर्भादावनुत्पादनैवोत्पत्तिः स्यादिति परलोकाभावः। अथ धूमशब्दादीनां विजातीयमप्युपादानमिष्यते। एवं तर्हि ज्ञानस्याप्युपादानं गर्भशरीरमेवास्तु न जन्मांतरज्ञानं कल्पनीयं। यथा दर्शनं ह्युपादानमिष्टमन्यथा धूमशब्दादीनामप्यनादिसंतानःकल्पनीयः स्यादिति संतानघटनात्र परेषां स्मृत्यादिव्यवस्था नापि परलोकः कोऽपि प्रसिद्धपद्धतिं दधाति परलोकिनः कस्यचिदसंभवात्। सत्यपि वा परलोके कथमकृतान्यागमकृतप्रणाशौ पराक्रियेते। येन हि ज्ञानेन चैत्यवंदनादि कर्मकृतं तस्य विनाशान्न तत्फलोपभोगो यस्य वा फलोपभोगस्तेन न तत्कर्म कृतमिति॥ अथ नायं दोषः कार्यकारणभावस्य नियामकत्वात्। अनादिप्रबंधप्रवृत्तो हि ज्ञानानां हेतुफलभावप्रवाहः। स च संतान इत्युच्यते तद्वशात्सर्वो व्यवहारः संगच्छते। नित्यस्त्वात्माभ्युपगम्यमानो यदि सुखादिजन्मना विकृतिमनुभवति। तदयमनित्य एव चर्मादिवदुक्तः स्यात् निर्विकारत्वे तु सताऽसता वा सुखदुःखादिना कर्मफलेन कस्तस्य विशेष इति कर्मवैफल्यमेव॥ तदुक्तं "वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलं। चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्सम इति,, तस्मात् त्यज्यतामेष मूर्द्धाभिषिक्तः प्रथमो मोह आत्मग्रहो नाम। तन्निवृत्तावात्मीयग्रहोपि विरंस्यति। अहमेव न किं ममेति तदिदमहंकारममकारग्रंथिप्रहाणेन नैरात्म्यदर्शनमेव निर्वाणद्वारमन्यथा कौतुस्कुती निर्वाणवार्तापि तदपि वार्त्तं हेतुफलभावस्य संतानस्यानंतरमेव नियामकत्वेन निरस्तत्वात्, यत्पुनः सुखादिविकाराभ्युपगमे चर्मादिवत् आत्मनोऽनित्यत्वं प्रसंजितं तदिष्टमेव कथंचिदनित्यत्वेनात्मनः स्याद्वादिभिः स्वीकारात्। नित्यत्वस्य कथंचिदेवोपगमात्। यत्तु नित्यत्वे ऽस्यात्मीयग्रहसद्भावेन मुकुचनघासिदूषणमभाणि। तदप्यनवदातं विदितपर्यंतविरससंसारस्वरूपाणां परिगतपारमार्थिकैकांतिकात्यंतिकानंदसंदोहस्वभावापवर्गोपनिषदां च महात्मनां शरीरेऽपि किंपाकपाकोपलिप्तपायस इव निर्ममत्वदर्शनात्। नैरात्म्यदर्शने पुनरात्मैव तावन्नास्ति कःप्रेत्य सुखीभवनार्थं यतिष्यते ज्ञानक्षणोपि संसारी कथमपरज्ञानक्षणसुखीभवनाय घटिष्यते । न हि दुःखी देवदत्तो यज्ञदत्तसुखाय चेष्टमानो दृष्ट एकक्षणस्य दुःखं स्वरसनाशित्वात्तेनैव सार्द्धं,दध्वंसे संतानस्तु न वास्तवः कश्चिदिति प्ररूपितमेव वास्तवत्वे तस्य निष्प्रत्यूहात्मसिद्धिरिति॥

अथात्मनः परपरिकल्पितस्वरूपप्रतिषेधाय स्वाभिमतधर्मान्वर्णयंति। "चैतन्यस्वरूपः परिणामी कर्ता साक्षाद्भोक्ता स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलिकादृष्टवांश्चायमिति"। चैतन्यं साकारनिराकारोपयोगाख्यं स्वरूपं यस्यासौ चैतन्यस्वरूपः परिणमनं प्रतिसमयमपरापरपर्यायेषु गमनं परिणामः स नित्यमस्यास्तीति परिणामी करोत्यदृष्टादिकमिति कर्ता साक्षादनुपचरितवृत्त्या भुंक्ते सुखादिकमितिसाक्षाद्भोक्ता स्वदेहपरिणामः स्वोपात्तवपुर्व्यापकः प्रतिक्षेत्रं प्रतिशरीरं भिन्नः पृथक्पौद्गलिकदृष्टवान् पुद्गलघटितकर्मपरतंत्रः । अयमित्यनंतरं प्रमातृत्वेन निरूपित आत्मेति। अत्र चैतन्यस्वरूपत्वपरिणामित्वविशेषणाभ्यां जडस्वरूपः कूटस्थनित्यो नैयायिकादिसम्मतः प्रमाता व्यवच्छिद्यते यतो येषामात्मानुपयोगस्वभावस्तावत्तेषां नासौ पदार्थपरिच्छेदं विदध्याद चेतनत्वादाकाशवत् अथ नोपयोगस्वभावत्वं किंतु चैतन्यसमवायः स चात्मनोऽस्तीत्यसिद्धमचेतनत्वमिति चेत्तदनुचितमित्थमाकाशादेरपि चेतनत्वापत्तेश्चैतन्यसमवायो हि विहायःप्रमुखे पि समानः। समवायस्य स्वयमविशिष्टस्यैकस्य प्रतिनियमहेत्वभावादात्मन्येव ज्ञानं समवेतं नाकाशादिष्विति विशेषोव्यवस्थितः ननु यथेह कुंडे दधीतिप्रत्ययान्न तत्कुंडादन्यत्र तद्दधिसंयोगः शक्यसंपादस्तथेह मयि ज्ञानमितीहेदं प्रत्ययाज्ञात्मनोऽन्यत्र गगनादिषु ज्ञानसमवाय इति चेत्तदयौक्तिकं यतः खादयोपि ज्ञानमस्मास्विवति प्रतियंतु स्वयमचेतनत्वादात्मवम्। आत्मानो वा मैवं प्रत्ययगुस्तत् एव खादिवादिति। जडात्मवादिमते सन्नपि ज्ञानमिहेति प्रत्ययः प्रत्यात्मवेद्यो न ज्ञानस्यात्मनि समवायं नियमयति विशेषाभावात्। नन्वेवमिहपृथिव्यादिषु रूपादय इति प्रत्ययोपि न रूपादीनां पृथिव्यादिषु समवायं साधयेद्यथा खादिषु तत्र वा सतं साधयेत्। पृथिव्यादिष्विवेति न क्वचित्प्रत्ययविशेषात् कस्य चित् व्यवस्थेति चेत् सत्यमयमपरोऽस्य दोषोऽस्तु पृथिव्यादीनां रूपाद्यनात्मकत्वेखादिभ्यो विशिष्टतया व्यवस्थापयितुमशक्तेः स्यान्मतमात्मनो ज्ञानमस्मास्विति प्रतियंति । आत्मत्वाद्ये तु न तथा ते नात्मानो यथा खादयः। आत्मानश्चैतदहं प्रत्ययग्राह्यास्तस्मात्तथेत्यात्मत्वमेव खादिभ्यो विशेषमात्मनां साधयति। पृथिवीत्वादिवत्पृथिव्यादीनां पृथिवीत्वादियोगाद्धि पृथिव्यादयस्तद्वदात्मत्वयोगादात्मान इति तदयुक्तम्। आत्मत्वादिजातीनामपि जातिमदनात्मकत्वे तत्समवायानियमासिद्धेः प्रत्ययविशेषात्तत्सिद्धिरिति चेत्स एव विचारयितुमारब्धः। परस्परमत्यंतभेदाविशेषेऽपि जातितद्वतामात्मत्वजातिरात्मनि प्रत्ययः विशेषमुपजनयति न पृथिव्यादिषु। पृथिवीत्वादिजातयश्च तत्रैव प्रत्ययमुत्पादयंति। नात्मनीतिकोऽत्र नियमहेतुः समवाय इति चेत् सोयमन्योन्यसंश्रयः सति प्रत्ययविशेषे जातिविशेषस्य जातिमति समवायः । सति च समवाये प्रत्ययविशेष इति प्रत्यासत्तिविशेषादन्यत एव तत्प्रत्ययविशेष इति चेत् सकोऽन्योऽन्यत्र कथं चित्तदात्म्यपरिणामादिति स एवप्रत्ययविशेषहेतुरेषितव्यः तदभावे तदघटनाज्जातिविशेषस्य क्वचिदेव समवायासिद्धेरात्मादिविभागानुपपत्तेरात्मन्येव ज्ञानं समवेतमिहेदमिति प्रत्ययं कुरुते न पुनराकाशादिष्विति प्रतिपत्तुमशक्तेर्न चैतन्ययोगादात्मनश्चेतनत्वं सिध्येत्। अथ किमपरेण प्रतीयते तावच्चेतनासमवायादात्मा चेतन इति चेत्तदयुक्तं यतः प्रतीतिश्चे-

त्प्रमाणीक्रियते तर्हि निष्प्रतिद्वंद्वमुपयोगात्मक एवात्मा प्रसिध्यति । न हि जातुचित्स्वयमचेतनोऽहं चेतनायोगाच्चेतनेऽचेतने वा मयि चेतनायाः समवाय इति प्रतीतिरस्ति ज्ञाताहमिति समानाधिकरणतया प्रतीतेः ॥ भेदे तथा प्रतीतिरिति चेन्न कथंचित्तादात्म्याभावे तद्दर्शनात् । यष्टिः पुरुष इत्यादिप्रतीतिस्तु भेदे सत्युपचाराद्दृष्टा न पुनस्तात्विकी, तथा चात्मनि ज्ञाताहमिति प्रतीतिः कथंचिच्चेतनात्मतां गमयति तामंतरेणानुपपद्यमानत्वात् कलशादिवत् । न हि कलशादिरचेतनात्मको ज्ञाताहमिति प्रत्येति । चैतन्ययोगाभावादसौ न तथा प्रत्येतीति चेन्न अचेतनस्यापि चैतन्ययोगाच्चेतनोहऽमिति प्रतिपत्तेरनंतरमेव निरस्तत्वादित्यचेतनत्वं सिद्धमात्मनो जडस्यार्थस्य परिच्छेदं पराकरोति तं पुनरिच्छता चैतन्यस्वरूपताऽस्य स्वीकरणीया । ननुज्ञानवानहमिति प्रत्ययादात्मज्ञानयोर्भेदोऽन्यथा धनवानिति प्रत्ययादपि धनतद्वतोर्भेदाभावानुषंगादिति कश्चित्तदप्यसत् । यतो ज्ञानवानहमिति नात्मा प्रत्येति जडैकांतरूपत्वाद्घटवत् सर्वथा जडश्च स्यादात्मा ज्ञानवानहमिति प्रत्ययश्चास्य स्याद्विरोधाभावादिति मानिर्णीषीस्तस्य तथोत्पत्त्यसंभवात् । ज्ञानवानहमिति हि प्रत्ययो नागृहीते ज्ञानाख्ये विशेषणे विशेष्ये चात्मनि जातूत्पद्यते स्वमतविरोधात् । नागृहीतविशेषणविशेष्यबुद्धिरिति वचनात् गृहीतयोस्तयोरुत्पद्यते इति चेत् कुतस्तद्गृहीति र्न तावत्स्वतः स्वसंवेदनानभ्युपगमात् । स्वसंविदिते ह्यात्मनि ज्ञाने च स्वतः सा युज्यते नान्यथा संतानांतरवत् । परतश्चेत् तदपि ज्ञानांतरं विशेष्यं नागृहीते ज्ञानत्वविशेषणे ग्रहीतुं शक्यमिति । ज्ञानांतरात्तद्ग्रहणेन भाव्यमित्यनवस्थानात्कुतः प्रकृतप्रत्ययः तदेवं नात्मनो जडस्वरूपता संगच्छते नापि कूटस्थनित्यता । यतो यथाविधः पूर्वदशायामात्मा तथाविध एव चेत् ज्ञानोत्पत्तिसमयेऽपि भवेत्तदा प्रागिव कथमेवं पदार्थपरिच्छेदकः स्यात्प्रतिनियतस्वरूपाप्रवृत्तिरूपत्वात्कौटस्थस्य पदार्थपरिच्छेदे तु प्राग्प्रमातुः प्रमातृरूपतया परिणामात्कुतः कौटस्थ्यमिति कर्त्ता साक्षाद्भोक्तेति विशेषण युगलकेन कापिलमतं तिरस्क्रियते तथा हि कापिलः कर्तृत्वं प्रकृतेः प्रतिजानीते न पुरुषस्य ॥ "अकर्त्ता निर्गुणोभोक्तेति" वचनात्तदयुक्तं । यतो यद्ययमकर्त्ता स्यात्तदानीमनुभवितापि न भवेत् । द्रष्टुः कर्त्तृत्वे मुक्तस्यापि कर्तृत्वप्रसक्तिरिति चेत् मुक्तः किमकर्त्तेष्टः । विषयसुखादेरकर्त्तेति चेत् । कुतः स तथा तत्कारणकर्मकर्तृत्वाभावादिति चेत् तर्हि संसारी विषयसुखादिकारणकर्मविशेषस्य कर्तृत्वात् विषयसुखादेः कर्त्ता स एव चानुभविता किं न भवेत् संसार्यवस्थायामात्मा विषयसुखादितत्कारणकर्मणां न कर्त्ता चेतनत्वान्मुक्तावस्थावदित्येतदपि न सुन्दरम् । स्वेष्टविघातकारित्वात् संसार्यवस्थायामात्मा न सुखादेर्भोक्ता मुक्तावस्थावदिति स्वेष्टस्यात्मनो भोक्तृत्वस्य विघातात् । प्रतीतिविरुद्धमिष्टविघातसाधनमिदमितिचेत्कर्तृत्वाभावसाधनमपि किं न तथा पुंसः श्रोता घ्राताहमिति स्वकर्तृत्वप्रतीतेः । अथ श्रोताहमित्यादिप्रतीतिरहंकारास्पदमहंकारस्य च प्रधानमेवकर्तृतया प्रतीयतइति चेत्तत एवानुभवितृप्रधानमस्तु न हि तस्याहंकारास्पदत्वं न प्रतिभाति शब्दादेरनुभविताहमिति प्रतीते सकलजनसाक्षिकत्वात् । भ्रांतमनुभवितुरहंकारास्पदत्वमितिचेत्कर्तुः कथन्नभ्रान्तम् तस्याहंकारास्पदत्वादिति चेत्तत एवानुभवितुस्तदभ्रान्तमस्तु तस्योपाधिकत्वादहंकारास्पदत्वं भ्रांतमेवेति चेत्कुतस्तदौपाधिकत्वसिद्धिः ॥ अथ पुरुषस्वभावत्वाऽभावादहंकारस्य तदास्पदत्वं पुरुषस्वभावस्यानुभवितृत्वस्यौपाधिकमिति चेत् स्यादेवं यदि पुरुषस्वभावोऽहंकारो न स्यात् । मुक्तस्याहंकाराभावात् अपुरुषस्वभाव एवाहंकारः । स्वभावो हि न जातुचित्तद्वंतं, त्यजति तस्य निःस्वभावत्वप्रसंगादिति चेन्न स्वभावस्य द्विविधत्वात् सामान्यविशेषपर्यायभेदात् । तत्र सामान्यपर्यायः शाश्वतिकस्वभावः । कादाचित्को विशेषपर्याय इति न कादाचित्कत्वान्पुंस्यहंकारादेव तत्स्वभावता ततो न तदास्पदत्वमनुभवितृत्वस्यौपाधिकं । येनाभ्रांतं न भवेत् । सिद्धमात्मानुभवितेव कर्त्ता अकर्तुर्भोक्तृत्वानुपपत्तेश्च । ननु भोक्तृत्वमप्युपचरितमेवास्य प्रकृतिविकारभूतायां हि दर्पणाकारायां बुद्धौ संक्रांतानां सुखदुःखादीनां पुरुषः स्वात्मनि प्रतिबिंबोदयमात्रेण भोक्ता व्यपदिश्यते । तदशस्यं तस्य तथा परिणाममंतरेण प्रतिबिंबोदयस्याऽघटनात् स्फटिकादावपि परिणामेनैव प्रतिबिंबोदयसमर्थनात् । तथा परिणामाभ्युपगमे च कुतः कर्तृत्वमस्य न स्यादिति सिद्धमस्य कर्तृत्वं साक्षाद्भोक्तृत्वं चेति । स्वदेहपरिमाण इत्यनेनापि नैयायिकादिपरिकल्पितं सर्वगतत्वमात्मनोनिषिध्यते तथात्वे जीवतत्वप्रभेदानां व्यवस्थानाप्रसिद्धिप्रसंगात् । सर्वगतात्मन्येकत्रैव नानात्मकार्यपरिसमाप्तेः सकृन्नानामनःसमायोगोहि नानात्मकार्यं तत्रैकत्रापि युज्यते । नभसि नानाघटादिसंयोगवत् । एतेन युगपन्नानाशरीरेंद्रियसंयोगः प्रतिपादितः । युगपन्नानाशरीरेष्वात्मसमवायिनां सुखदुःखादीनामनुपपत्तिविरोधादिति चेन्न युगपन्नानाभेर्यादिष्वाकाशसमवायिनां विततादिशब्दानामनुपपत्तिप्रसंगात् तद्विरोधस्याविशेषात्तथाविधशब्दकारणभेदान्न तदनुपपत्तिरिति चेत् सुखादिकारणभेदात्तदनुपपत्तिरप्येकत्रात्मनि माभूद्विशेषाभावात् विरुद्धधर्माध्यासादात्मनोनानात्वमिति चेत्तत एवाकाशस्यापिनानात्वमस्तु । प्रदेशभेदोपचाराददोष इति चेत्तत एवात्मन्यप्यदोषः । जननमरणकरणादिप्रतिनियमोऽपि सर्वगतात्मवादिनां नात्मबहुत्वं साधयेत् एकत्राऽपि तदुपपत्तेर्घटाकाशादिजननविनाशादिवत् । न हि घटाकाशस्योत्पत्तौ घटाद्याकाशस्योत्पत्तिरेव तदा विनाशस्यापि दर्शनात् । नापि विनाशे विनाश एव । जननस्यापि तदोपलंभात् । स्थितौ वा न स्थितिरेव विनाशोत्पादयोरपि तदा समीक्षणात् । सति बंधे न मोक्षः सति वा मोक्षे न बंधःस्यादेकत्रात्मनि विरोधादिति चेत् नाकाशेऽपि सति घटबंधे घटांतरमोक्षाभावप्रसंगात् सति वा घटविश्लेषे घटांतरविश्लेषप्रसंगात् प्रदेशभेदोपचारान्न तत्प्रसंग इति चेत्तत् एवात्मनि न तत्प्रसंगः । नभसः प्रदेशभदापगम जीवस्याप्येकस्य प्रदेशभेदोऽस्त्विति कुतोजीवतत्वप्रभेदव्यवस्था यतो व्यापकत्वं स्यात् नत्वात्मनो व्यापकत्वाभावे दिग्देशांतरवर्त्तिपरमाणुभिर्युगपत्संयोगाभावादाद्यकर्माभावस्तदभावादंत्यसंयोगस्य तन्निमित्तशरीरस्य तेन तत्संबंधस्य वा भावादनुपायसिद्धः सर्वदा सर्वेषां मोक्षः स्यात् । अस्तु वा यथा कथंचिच्छरीरोत्पत्तिस्तथापि सावयवं शरीरं

प्रत्यवयवमनुप्रविशन्नात्मा सावयवः स्यात्तथा चास्य पटादिवत् कार्यत्वप्रसंगः। कार्यत्वे चाऽसौ विजातीयैः सजातीयैर्वा कारणैरारभ्येत न प्राच्यः प्रकारो विजातीयानामनारंभकत्वात्। न द्वितीयो यतः सजातीयत्वं तेषां आत्मत्वाभिसंबन्धादेव स्यात्तथा चात्मभिरारभ्यत इत्यायातं एतच्चायुक्तमेकत्र शरीरेऽनेकात्मनामात्मारंभकाणामसंभवात्। संभवे वा प्रतिसंधानानुपपत्तिः। न ह्यन्येन दृष्टमन्यः प्रतिसंधातुमर्हत्यतिप्रसंगात्। तदारभ्यत्वे चास्य घटवदवयवक्रियातो विभागात्संयोगविनाशाद्विनाशः स्यात्। शरीरपरिणामित्वे चात्मनो मूर्त्तत्वानुषंगाच्छरीरेऽनुप्रवेशो न स्यात् मूर्ते मूर्त्तस्यानुप्रवेशविरोधात्ततो निरात्मकमेव अखिलशरीरमनुषज्यते। कथं वा तत्परिणामित्वे तस्य बालशरीरपरिमाणस्य सतो युवशरीरपरिमाणस्वीकारः स्यात् तत्परिमाणपरित्यागात्तदपरित्यागाद्वा परित्यागाच्चेत्तदा शरीरवत्तस्यानित्यत्वप्रसंगात्परलोकाद्यभावानुषङ्गः। अथापरित्यागात्तत्र पूर्वपरिमाणापरित्यागे शरीरवत्तस्योत्तरपरिमाणोत्पत्त्यनुपपत्तेः। तथा "यदि वपुःपरिमाणपवित्रितं वदसि जैनमतानुगपूरुषं। वद तदा कथमस्य विखंडनं भवति तस्य न खंडनडंबरं" अत्राभिदध्महे यदभ्यधायि नत्वात्मनोव्यापकत्वाभाव इत्यादि तदसत्यं। यद्येन संयुक्तं तदेव तं प्रत्युपसर्पतीति नियमासंभवात्। अयस्कांतं प्रत्ययसस्तेनासंयुक्तस्याप्याकर्षणोपलब्धेः। अथासंयुक्तस्याप्याकर्षणे तच्छरीरारंभं प्रत्येकमुखीभूतानां त्रिभुवनोदरविवरवर्त्तिपरमाणूनामुपसर्पणप्रसंगान्न जाने कियत्परिमाणं तच्छरीरं स्यादिति चेत्संयुक्तस्याप्याकर्षणे कथं स एव दोषो न भवेदात्मनोव्यापकत्वेन सकलपरमाणूनां तेन संयोगात्। अथ तद्भावाविशेषेऽप्यदृष्टवशाद्विवक्षितशरीरोत्पादनानुगुणा नियता एव परमाणव उपसर्पंति तदितरत्रापि तुल्यं। यच्चान्यदुक्तं सावयवं शरीरं प्रत्यवयवमनुप्रविशन्नात्मेत्यादि तदप्युक्तिमात्रं सावयवत्वकार्यत्वयोः कथञ्चिदात्मन्यभ्युपगमात्। न चैवं घटादिवत्प्राक् प्रसिद्धसमानजातीयावयवारभ्यत्वप्रसक्तिर्न खलु घटादावपि कार्ये प्राक् प्रसिद्धसमानजातीयकपालसंयोगारभ्यत्वं दृष्टं कुंभकारादिव्यापारान्वितान्मृत्पिंडात्प्रथममेव पृथुबुध्नोदराद्याकारस्योत्पत्तिप्रतीतेः। द्रव्यस्य हि पूर्वाकारपरित्यागेनोत्तराकारपरिणामः कार्यत्वं तच्च बहिरिवांतरप्यनुभूयत एव। न च पटादौ स्वावयवसंयोगपूर्वकार्यत्वोपलंभात् सर्वत्र तथाभावो युक्तः काष्ठे लोहलेख्यत्वोपलंभाद्वज्रेऽपि तथाभावप्रसंगात् प्रमाणबाधनमुभयत्र तुल्यं न चोक्तलक्षणकार्यत्वाभ्युपगमेऽप्यात्मनोऽनित्यत्वानुषङ्गात्प्रतिसंधानाभावोऽनुषज्यते। कथञ्चिदनित्यत्वे सत्येवास्योपपद्यमानत्वात् यच्चावाचि शरीरपरिमाणत्वे चात्मनो मूर्त्तत्वानुषंग इत्यादि तत्र किमिदं मूर्त्तत्वं नाम। असर्वगतद्रव्यपरिमाणत्वं रूपादिमत्त्वं वा तत्र नाद्यः पक्षो दोषपोषाय सम्मतत्वात् द्वितीयपक्षस्त्वयुक्तो व्याप्त्यभावात् न हि यदसर्वगतं तन्नियमेन रूपादिमदित्यविनाभावोऽस्ति मनसोऽसर्वगतत्वेऽपि तदसंभवात्॥ अतो नात्मनः शरीरानुप्रवेशानुपपत्तिर्यतो निरात्मकं तत्स्यात्। असर्वगतद्रव्यपरिमाणलक्षणमूर्त्तत्वस्य मनोवत्प्रवेशाप्रतिबंधकत्वात्। रूपादिमत्त्वलक्षणमूर्त्तत्वोपेतस्यापि हि जलादेर्भस्मादावनुप्रवेशो न निषिध्यते। आत्मनस्तु तद्रहितस्यापि तत्रासौ प्रतिषिध्यत इति महच्चित्रं यदप्यवादि तत्परिमाणत्वे तस्य बालशरीरपरिमाणस्येत्यादि तदप्ययुक्तं युवशरीरपरिमाणावस्थायामात्मनो बालशरीरपरिमाणपरित्यागे सर्वथा विनाशासंभवात्। विफणावस्थोत्पादे सर्पवदिति कथं परलोकाभावोऽनुषज्यते पर्यायतस्तस्यानित्यत्वेऽपि द्रव्यतो नित्यत्वात्। यच्चाजल्पि यदि वपुःपरिमाणपवित्रितमित्यादि तदप्यपेशलं शरीरखंडने कथंचित्तत् खंडनस्येष्टत्वात् शरीरसंबद्धात्मप्रदेशेभ्यो हि कतिपयात्मकप्रदेशानां खंडितशरीरप्रदेशेऽवस्थानमात्मनः खंडनं तच्चात्र विद्यत एवान्यथा शरीरात्पृथग्भूतावयवस्य कंपोपलब्धिर्न स्यात् न च खंडितावयवानुप्रविष्टस्यात्मप्रदेशस्य पृथगात्मत्वप्रसंगस्तत्रैवानुप्रवेशात्। न चैकत्र संतानेऽनेक आत्मा अनेकार्थप्रतिभासिज्ञानानामेकप्रमात्राधारतया प्रतिभासाभावप्रसंगात् शरीरांतरव्यवस्थितानेकज्ञानावसेयार्थसंवित्तिवत् कथं खंडिताखंडितावयवयोः संघटनं पश्चादिति चेत् एकांतेन छेदानभ्युपगमात्। पद्मनालतंतुवदच्छेदस्यापि स्वीकारात् तथाभूतादृष्टवशाच्च तत्संघटनमविरुद्धमेवेतितनु परिमाण एव त्मांगीकर्त्तव्यो न व्यापकः। तथा चात्मा व्यापको न भवति चेतनत्वात् यत्तु नैवं न तच्चेतनं यथा व्योम चेतनश्चात्मा तस्मादव्यापकः। अव्यापकत्वे चास्य तत्रैवोपलभ्यमानगुणत्वेन सिद्धा शरीरपरिमाणता प्रतिक्षेत्रं विभिन्न इत्यनेन ननु विशेषणेनात्माद्वैतमपास्तं। एतदपासनप्रकारश्च प्रागेव प्रोक्त इति न पुनरुच्यते॥ रत्ना०॥

( २४ ) आत्माधिकाराद्रत्नप्रभादिभावानात्मत्वादिभावेन चिन्तयन्नाह–भगवत्याम्॥

आया भंते ! रयणप्पभा पुढवी अण्णा रयणप्पभा पुढवी गोयमा ? रयणप्पभा पुढवी सिय आया सिय णो आया सिय अवत्तव्वं आताति य णो आताति य ३। से के णट्ठे णं भंते ! एवं वुच्चइ रयणप्पभा पुढवी सिय आया सिय णो आया सिय अवत्तव्वं आयाति य णो आयाति य ? गोयमा ! अप्पणो आदिट्ठे आया, परस्स आदिट्ठे णो आया, तदुभय आदिट्ठे अवत्तव्वं, रयणप्पभा पुढवी आया तिय णो आया तिय से ते णट्ठे णं तं चेव जाव णो आयातिय॥ आया भंते ! सक्करप्पभा पुढवी जहा रयणप्पभा पुढवी तहा सक्करप्पभा वि एवं जाव अहे सत्तमाए भ०सू०श० ॥ १२ ॥ उ० १०

( आयाभंते ) इत्यादि—अतति सततं गच्छति तांस्तान्पर्यायानित्यात्मा ततश्चात्मा सद्रूपा रत्नप्रभा पृथिवी॥ (अन्नात्ति) अनात्मा ऽसद्रूपेत्यर्थः॥ ( सिय आया सिय नो आयत्ति ) स्यात्सती स्यादसतीति॥ ( सिय अवत्तव्वंति ) आत्मत्वेनानात्मत्वेन च व्यपदेष्टुमशक्यं वस्त्विति भावः। कथमवक्तव्यमित्याह—आत्मेति च नो आत्मेति च वक्तुमशक्यमित्यर्थः ( अप्पणो आइट्ठेति ) आत्मनः स्वस्य रत्नप्रभाया एव वर्णादिपर्यायैरादिष्टे आदेशे सति 'तैर्व्यपदिष्टा सतीत्यर्थः'

आत्मा भवति स्वपर्यायापेक्षया सतीत्यर्थः ॥ ( परस्स आइट्ठे णो आयत्ति ) परस्य शर्करादिपृथिव्यन्तरस्य पर्यायैरादिष्टे आदेशे सति तैर्व्यपदिष्टा सतीत्यर्थः, नो आत्मा अनात्मा भवति, पररूपापेक्षया ऽसतीत्यर्थः ॥ ( तदुभयस्स आइट्ठे अवत्तव्वति ) तयोः स्वपरयोरुभयं तदेव वा उभयं तदुभयं तस्य पर्यायैरादिष्टे आदेशे सति तदुभयपर्यायैर्व्यपदिष्टेत्यर्थः अवक्तव्यमवाच्यं वस्तु स्यात् तथाहि—नह्यसौ आत्मेति वक्तुं शक्या परपर्यायापेक्षया अनात्मत्वात्तस्या नाप्यनात्मेति वक्तुं शक्यास्वपर्यायापेक्षया तस्या आत्मत्वादिति अवक्तव्यत्वं च आत्मानात्मशब्दापेक्षयैव न तु सर्वथा अवक्तव्यशब्देनैव तथा तस्या उच्यमानत्वादनभिलाप्यभावानामपि भावपदार्थवस्तुप्रभृतिशब्दैरनभिलाप्यशब्देन चाभिलाप्यत्वादिति ॥ भ० टी० ॥ श० १२ उ० १० ॥

आयाभंते ! सोहम्मे कप्पे पुच्छा, गोयमा ! सोहम्मे कप्पे सिय आया सिय णो आया जाव णो आया तिय से केणट्ठेणं भंते ! जाव णो आयातिय? गोयमा ! अप्पणो आदिट्ठे आया, परस्स आदिट्ठे णो आया, तदुभय आदिट्ठे अवत्तव्वं आया तिय णो आयाति य से तेणट्ठेणं गोयमा ! तं चेव जाव णो आया तिय एवं जाव अच्चुयकप्पे । आया भंते ! गेविज्जगविमाणे अण्णे गेविज्जगविमाणे एवं जहा रयणप्पभा पुढवी तहेव एवं अणुत्तरविमाणा वि, एवं ईसिप्पब्भारा वि आया भंते ! परमाणुपोग्गले अण्णे परमाणुपोग्गले ? एवं जहा सोहम्मे कप्पे तहा परमाणुपोग्गले वि भाणियव्वे ॥ भ० मू० ॥ शत० १२ उ० १० ॥

एवंपरमाणुसूत्रमपि ॥ भ० श० १२ उ० १० ॥

आया भंते ! दुपदेसिए खंधे अण्णे दुपदेसिए खंधे ? गोयमा ! दुपदेसिए खंधे सिय आया, सिय णो आया सिय अवत्तव्वं, आयातिय णो आयातिय सिय आया य, सिय णो आया य ॥ ४ ॥ सिय आयाय अवत्तव्वं आया तिय णो आयातिय ॥ ५ ॥ सिय णो आयाय अवत्तव्वं आयातिय णो आयातिय ॥ ६ ॥ से केणट्ठेणं भंते ! एवं चेव जाव णो आयाय अवत्तव्वं आयातिय णो आयातिय ? गोयमा ! अप्पणो आदिट्ठे आया परस्स आदिट्ठे णो आया तदुभयस्स आदिट्ठे अवत्तव्वं दुपदेसिए खंधे आयातिय णो आयातिय । देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे दुपदेसिए खंधे आयातिय णो आयातिय, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे उभओपज्जवे दुपदेसिए खंधे आया य अवत्तव्वं आयातिय णो आयातिय ॥ ५ ॥ देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे दुपदेसिए खंधे णो आयाय अवत्तव्वं आयातिय णो आयातिय ६, से तेणट्ठेणं तं चेव जावणो आयातिय ॥ भ०मू०श०१२उ०१०॥

"द्विप्रदेशिकसूत्रे षड्भङ्गाः तत्राद्यास्त्रयः सकलस्कन्धापेक्षा पूर्वोक्ता एव,तदन्ये तु त्रयो देशापेक्षास्तत्र च गोयमेत्यत आरभ्य व्याख्यायते" (अप्पणोत्ति ) स्वस्य पर्यायैः(आदिट्ठेति) आदेशे सति आदिष्ट इत्यर्थः । द्विप्रदेशिकस्कन्ध आत्मा भवति १ एवं परस्य पर्यायैरादिष्टोऽनात्मा २ तदुभयस्य द्विप्रदेशिकस्कन्धतदन्यस्कन्धलक्षणस्य पर्यायैरादिष्टोऽसाव वक्तव्यं वस्तु स्यात्, कथं आत्मेति वाऽनात्मेति वेति ॥३ ॥ तथा द्विप्रदेशत्वात्तस्य देश एक आदिष्टः । सद्भावप्रधानाः सत्तानुगताः पर्यवा यस्मिन् स सद्भावपर्यवः अथवा तृतीयाबहुवचनमिदं स्वपर्यवैरित्यर्थः द्वितीयस्तु देश आदिष्टोऽसद्भावपर्यवः परपर्यायैरित्यर्थः । परपर्यवाश्च तदीयद्वितीयदेशसम्बंधिनो वस्त्वन्तरसम्बन्धिनो वेति ततश्चासौ द्विप्रदेशिकः स्कन्धः क्रमेणात्मा च नो आत्मा चेति ४ तथा तस्य देश आदिष्टः सद्भावपर्यवो देशश्चोभयपर्यवस्ततोऽसा, वात्मा चावक्तव्यं चेति ॥ ५ ॥ तथा तस्यैव देश आदिष्टोऽसद्भावपर्यवो देशस्तूभयपर्यवस्ततोऽसौ नो आत्मा चावक्तव्यं च स्यादिति, सप्तमः पुनरात्मा च नो आत्मा चावक्तव्यं चेत्येवं रूपो न भवति द्विप्रदेशिके द्व्यंशत्वादस्य, त्रिप्रदेशिकादौ तु स्यादिति सप्तभङ्गी ॥ भ०टी० ॥ श० १२ उ०१० ॥

आया भन्ते, तिपदेसिए खंधे अण्णे तिपदेसिए खंधे ? गोयमा ! तिपदेसिए खंधे सिय आया १, सिय णो आया २ सिय अवत्तव्वं आयातिय णो आयातिय ३ सिय आयाय णो आया य ४, सिय आयाय णो आयाओय ५, सिय आया ओय णो आयाय ६ सिय आया य अवत्तव्वं आयातिय णो आया तिय ७ सिय आया य अवत्तव्वाइं आया ति य णो आया तिय ८ सिय आयाओय अवत्तव्वं आयाति य णो आयाति य ९ सिय णो आयाय अवत्तव्वं आयातिय णो आयातिय १० सिय णो आयाय अवत्तव्वाइं आयाति य णो आयाति य ११ सियणो आयाओय अवत्तव्वं आयाति य णो आयाति . य १२ सिय आयाय णोआया य अवत्तव्वं आयाति य णो आयाति य १३ से केणट्ठेण भंते! एवं वुच्चइ तिपदेसिए खंधे सिय आया एवं चेव उच्चारेयव्वं जाव सिय आया य णो आया य अवत्तव्वं आया ति य णो आयाति य ? गो० ! अप्पणो आदिट्ठे आया १ परस्स आदिट्ठे णो आया २ तदुभयस्स आदिट्ठे अवत्तव्वं आयाति य णो आयाति य ३ देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे तिपदेसिए खंधे आयाति य णो आयाति य४ देसे आदिट्ठे सब्भावपज्जवे देसा आदिट्ठा असब्भावपज्जवा तिपदेसिए खंधेआया य णो आयाओय ५ देसा आदिट्ठा सब्भावपज्जवा, देसे आदिट्ठे असब्भावपज्जवे तिपदेसिए खंधे आयाओय णो आया य ॥६॥

देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे आयाय अवत्तव्वं आयातिय णो आयातिय ७ देसे आदिट्ठे सब्भावपज्जवे देसा आदिट्ठा तदुभयप-

ज्जवा तिपदेसिए खंधे आया य अवत्तव्वाइं आयाति य णो आयाति य ८ देसा आदिट्ठा सब्भावपज्जवा देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे आयाओय अवत्तव्वं आयाति य णो आयाति य एए तिण्णिभंगा ९ देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे णो आया य अवत्तव्वं आयातिय णो आयाति य १० देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठा तदुभयपज्जवा तिपदेसिए खंधे णो आयाय अवत्तव्वाइं आयातिय णो आयाति य ॥ ११ ॥ देशा आदिट्ठा असब्भावपज्जवा देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे णो आयाओय अवत्तव्वं आयातिय णो आयातिय ॥ १२ ॥ देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे आयाय णो आयाय अवत्तव्वं आयाति य आयाति यणो ॥ १३॥ से तेणट्ठेणं गोयमा एवं बुच्चइतिपदेसिए खंधे सिय आया तं चेव जाव णो आयाति य ॥भ० ॥ मू० ॥ श० ॥ १२॥ उ० ॥ १० ॥

त्रिप्रदेशिकस्कन्धे तु त्रयोदशभंगास्तत्र पूर्वोक्तेषु सप्तस्वाद्याः सकलादेशास्त्रयस्तथैव तदन्येषु तु त्रिषु त्रयस्त्रय एकवचनबहुवचनभेदात् सप्तमस्त्वेकाविध एव यच्चेह प्रदेशद्वयेऽप्येकवचनं क्वचित्तत्तस्य प्रदेशद्वयस्यैकप्रदेशावगाढत्वादिह तु नैकत्वविवक्षणात्, भेद विवक्षायां च बहुवचनमिति, ॥ भ० टी० ॥ श० १२ उ० १०

आयाभंते, चउप्पदेसिए खंधे अण्णे पुच्छा, गोयमा ! चउप्पदेसिए खंधेसिय आया॥१॥ सिय णो आया॥२॥सिय अवत्तव्वं आयातिय णो आयाति य ॥३॥ सिय आया य णो आयाय ॥४॥ सिय आयाय अवत्तव्वं४। सिय णो आया य अवत्तव्वं ५। सिय आया य णो आया य अवत्तव्वं आयाति य णो आतिय १६ सिय आया य णो आया य अवत्तव्वाइं आयाय णो आया य १७ । सिय आया य णो आयाओ य अवत्तव्वं आयातिय णो आयातिय १८ । सिय आयाओय णो आयाय अवत्तव्वं आयातिय णो आयातिय १९ ॥ से केणट्ठेणं भंते ! एवं वुच्चइ--चउप्पदेसिए खंधे सिय आयाय णो आया य अवत्तव्वं, तं चेव अट्ठे पडिउच्चारेयव्वं, गोयमा ! अप्पणो आदिट्ठे आया, परस्स आदिट्ठे णो आया, तदुभयस्स आदिट्ठे अवत्तव्वं देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे चउभंगो, सब्भावेणं तदुभएण य चउभंगो असब्भावेणं तदुभएणं चउभंगो देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे चउप्पदेसिए खंधे आयाय णो आया य अवत्तव्वं, आयातिय णो आयातिय॥ १६ ॥ देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे देसा आदिट्ठा तदुभयपज्जवा चउप्पदेसिए खंधे आयाय णो आयाय अवत्तव्वाइं आयाय णो आयाय ॥ १७ ॥ देसे आदिट्ठे सब्भावपज्जवे देसा आदिट्ठा असब्भावपज्जवा देसे आदिट्ठे तदुभयपज्जवे चउप्पदेसिए खंधे आयाय णो आयाओय अवत्तव्वं, आयातिय णो आयातिय ॥ १८॥ देसा आदिट्ठा सब्भावपज्जवा देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे चउप्पदेसिए खंधे आयाओय णो आयाय अवत्तव्वं, आयातिय णो आयातिय ॥ १९ ॥ से तेणट्ठेणं गोयमा ! एवं वुच्चइ चउप्पदेसिए खंधे सिय आया सिय णो आया सिय अवतव्वं, निक्खेवे एते चेव भंगा उच्चारेयव्वा जाव णो आयातिय ॥ ॥ भ० मू० श० १२ उ० १० ॥

चतुष्प्रदेशिकेऽप्येवं नवरमेकोनविंशतिभङ्गास्तत्र त्रयः सकलादेशास्तथैव शेषेषु चतुर्षु प्रत्येकं चत्वारो विकल्पास्ते चैवं चतुर्थादिषु त्रिषु सप्तमे त्वेषम् ॥ भ० टी० ॥

आया भंते ! पंचपदेसिए खंधे अण्णे पंचपदेसिए खंधे ? गोयमा ! पंचपदेसिए खंधे सिय आया१ सिय णो आया२ सिय अवत्तव्वं, आयातिय णो आयातिय ॥ ३ ॥ सिय आयाय णो आयाय ४ सिय आयाय अवत्तव्वं, णो आयाय अवत्तव्वं ॥ ४ ॥ तियसंयोगे एक्को न पठति, से केणट्ठेणं भंते ! तंचेव उच्चारेयव्वा ? गोयमा । अप्पणो आदिट्ठे आया परस्स आदिट्ठे णो आया, तदुभयस्स आदिट्ठे अवत्तव्वं, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भापज्जवे एवं दुयगसंजोगे सव्वे पठंति, तियसंजोगे एक्को न पठति, छप्पदेसिया सव्वे पठंति जहा छप्पदेसिए एवं जाव अणंतपदेसिए सेवं भंते भंते त्ति ! जाव विहरइ ॥ ॥ भ० मू०श० १२ उ१० ॥

पंचप्रदेशके तु द्वाविंशतिस्तत्राद्यास्त्रयस्तथैव, तदुत्तरेषु च त्रिषु प्रत्येकं चत्वारो विकल्पास्तथैव, सप्तमे तु सप्ततत्र त्रिकसंयोगे किलाष्टौ भङ्गका भवन्ति । तेषु च सप्तैवेह ग्राह्या एकस्तु तेषु न पतत्यसम्भवादिदमेवाह—तिगसंयोगे इत्यादि ॥ तत्रैतेषां स्थापना यत्र न पतति पुनरयं २२२ षट्प्रदेशिके त्रयोविंशतितिरिति ॥ भ० टी० ॥

(२८)अप्पा नई वेतरणी अप्पाव्वकूडसामली।अप्पा कामदुहा धेणू अप्पा मे नंदणं वणं ॥ उत्त० ॥ मू० अ० २० ॥

आत्मेति व्यवच्छेदफलत्वाद्वाक्यस्यात्मैव नान्यः कश्चिदित्याह नदी सरिद्वैतरणीति नरकनद्या नाम ततो महानर्थहेतुतया नरकनदीव अत एवात्मैव कूटमिव जंतुयातनाहेतुत्वाच्छाल्मली कूटशाल्मली नरकोद्भवा तथात्मैव कामानभिलाषानूदोग्धि प्रापकतया प्रपूरयति कामदुधा धेनुरिव धेनुरियं च रूढित उक्ता एतदुपमत्वमभिलषितस्वर्गापवर्गावासिहेतुतया आत्मैव मे मम नंदनं नंद-

न नामकं वनं उद्यानमेतदौपम्यं चास्य चित्तप्रह्लादहेतुतया ॥ उत्त० ॥ टी० ॥
यथा चैतदेवं तथाऽऽह ॥
अप्पा कत्ता विकत्ता य दुहाण य सुहाण य ।
अप्पा मित्तममित्तं च सुपट्ठियदुपट्ठिओ॥उत्त०॥मू० अ०२०
आत्मैव कर्ता विधायको दुःखानां सुखानां चेति योगः प्रक्रमाच्चात्मन एव विकारिता च विक्षेपकश्चात्मैव तेषामेव अतश्चात्मैव मित्रमुपकारितया सुहृत् अमित्रं चेत्यमित्रश्चापकारितया दुर्हृत् कीदृक् ( दुप्पाट्ठियंसुप्पाट्ठिओत्ति ) सुष्टु प्रस्थितश्च सकलसुखहेतुरिति कामधेन्वादिकल्पस्तथा च प्रव्रज्यावस्थायामेवमुपस्थितत्वेन आत्मनोऽन्येषां च योगक्षेमकरणे समर्थत्वान्नाथत्वामीति-सूत्रद्वयगर्भार्थः ॥ उत्त० ॥ टी० ॥
आत्मा चावश्यम्पालयितव्यः तथा च दशवैकालिके चूलि०२।
अप्पा खलु सययं रक्खिअव्वो सव्विंदिएहिं सुसमाहिएहिं।
अरक्खिओ जाइ पहं उवेइ सुरक्खिओ सव्वदुहाण मुच्चइ॥
॥ दश० ॥ आत्माखल्विति खलुशब्दो विशेषणार्थः शक्तौ सत्यां परोऽपि सततं सर्वकालं रक्षितव्यः पालनीयः पारलौकिकापायेभ्यः कथमित्युपायमाह सर्वेन्द्रियैः स्पर्शनादिभिः सुसमाहितेन निवृत्तविषयव्यापारेणेत्यर्थः अरक्षणरक्षणयोः फलमाह अरक्षितः सन् जातिपंथानं जन्ममार्गं संसारमुपैति सामीप्येन गच्छति सुरक्षितः पुनर्यथा गमनप्रमादेन सर्वदुःखेभ्यः शारीरमानसेभ्यो विमुच्यते विविधमनेकैः प्रकारैरपुनर्ग्रहणपरमस्वास्थ्यापादनलक्षणैर्मुच्यत इति ॥ दश० ॥ टी० ॥
आत्मा च सर्वस्यावलम्बनम्—
ममत्तं परिवज्जामि निम्ममत्तं उवट्ठिओ ।
आलंबणं च मे आया अवसेसं च वोसिरे ॥ ३७ ॥ मू० ॥
तथा ममत्वं ममैतदित्येवं रूपो भावो ममत्वं प्रतिबंधस्तथ मनोऽभिमतवस्तुष्विति शेषः । परिजानामि । परिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरामीत्यर्थः अहं किंभूतः सन् निर्ममत्वं निःसंगत्वं उपस्थित आश्रित इत्यर्थः तर्हि किमालंबनतया चिंतयतीत्याह आलंबनं चाश्रयोऽवष्टंभ आधार इत्यर्थः । मे ममात्मैवाराधनाहेतुरयं अवशेषमपरं शरीरोपध्यादि सर्वं व्युत्सृजामि ॥३७ आतु टी०॥
अथ केषु कार्य्येष्वयमात्माऽवलम्बनमित्विषय इत्याह—
आया हु महं नाणे आया मे दंसणे चरित्ते य ।
आया पच्चक्खाणे आया मे संयमे जोगे ॥ आतु० मू० ॥
अतति सततं गच्छति तासु तासु योनिष्विति आत्मा स मम ज्ञाने ज्ञानविषये आलंबनं सहाय इत्यर्थः । हु स्फुटं भवतु इति शेषः । आत्मा मे दर्शने सम्यक्त्वे चारित्रेऽपि चालंबनं तथा प्रत्याख्याने भक्तपरिज्ञारूपे संयमे च संयमसर्वविरत्यंगीकाररूपे योगे च प्रशस्तमनोवाक्कायव्यापाररूपे ममात्मैवालंबनमनंतान्यप्युप्राप्तानि द्रष्टव्यानि ॥ ३८ ॥ आतु टी० ॥
एक एव चात्मा सर्वमङ्गीकरोति तथा चातुरप्रत्याख्याने
एगो वच्चइ जीवो एगो चेवुववज्जए !
एगस्स चेव मरणं एगो सिज्झई नीरज्झई ॥ ३९ ॥
एकः स्वजनधनादिरहितोव्रजति जीवो भवांतरमिति शेषः एक एव च उत्पद्यते मनुष्यादिरूपतया एकस्यैव मरणं भवति एक एव च कर्मरजोरहितः सन् सिध्यति जीवः भवांतरगमनस्य मरणस्य चैकार्थत्वेऽपि पृथगुपादानमेकत्वभावनोत्कर्षपोषार्थं नानादेशजविनेयानां व्यक्त्यर्थप्रतिपादनार्थं वा ॥ ३९ ॥ आतु० टी०॥
एगो मे सासओ अप्पा नाणदंसणसंजुओ ।
सेसा मे बाहिरा भावा सव्वे संजोगलक्खणा।४०आतु०मू०॥
एक एव मेममात्मा शश्वद्भवनात् शाश्वतः सहचारी ज्ञानदर्शनसंयुक्त एव मदीय इत्यर्थः । शेषा ये च न मे मम बाह्या भावाः पदार्थाः पुत्रकलत्रादिकाः ते सर्वे संयोजनं संयोगः स एव लक्षणं येषां ते तथा कृत्रिममेलापका एवेत्यर्थो नतु शाश्वताः येषां संयोगस्तेषामवश्यंभावी वियोग इति हेतोर्न मदीयास्ते इति परमार्थः ॥ ४० आतु० टी० ॥
आत्मकृतमेव च भुज्यते तथा च महानिशीथे—
को देइ कस्स देज्जइ विहियं को हरइ हीरए कस्स ।
सयमप्पणा वि दत्तं अल्लियइ सुहं पि दुक्खं पि ॥
महा० ॥ आत्मनैव च संसारमुत्तरति-"तथा च महानिशीथे श्रुतस्कंधे अ० ६ चू० २ ॥
णोणं गोयमा गुरुसीसगाण निस्साए संसारमुत्तरेज्जा,
णो णं गोयमा परस्सनिस्सा ए संसार मुत्तेरज्जा ॥
अप्पणो निस्साए संसारमुत्तरेज्जा महा० ॥
( आत्मजयेनैव च क्रोधादिजयस्तथा च सूत्रकृताङ्गेश्रुतस्कंधे अध्य० ३—)
जेओ संगामकालंमि नाया सूरपुरंगमा ।
णो ते पिट्ठमुवेहिंति, किं परं मरणं सिया ॥ ६ सूत्र०मू०॥
ये पुनर्महासत्त्वाः तु शब्दोविशेषणार्थः संग्रामकाले परानीकयुद्धावसरे ज्ञातारो लोकविदिताः । कथं शूरपुरंगमाः शूराणामग्रगामिनो युद्धावसरे सैन्याग्रस्कंधवर्त्तिन इति एवं भूताः संग्रामं प्रविशन्तो न पृष्ठमुत्प्रेक्षंते न दुर्गादिकमापत्त्राणाय पर्यालोचयंति । ते चाभंगकृतबुद्धयोऽपि त्वेवं मन्यंते किमपरमत्रास्माकं भविष्यति यदि परं मरणं स्यात्तच्च शाश्वतं यशःप्रवाहमिच्छतामस्माकं स्तोकं वर्त्तत इति । तथा चोक्तं विशरारुभिरविनश्वरमतिचपलैः स्थास्तु वाञ्छतां विशदं ॥ प्राणैर्यदिशूराणां, भवति यशः किं न पर्यातं ॥ सूत्र० ॥
तदेवं सुभटदृष्टांतमप्रदर्श्य दार्ष्टान्तिकमाह ॥ सूत्र० श्रुत० अध्य० ३
तमेगे परिभासंति, भिक्खयं साहुजीविणं ।
जे एवं परिभासंति, अंत एते समाहिये ॥ ८ ॥
"धर्मः स्वात्मसाक्षिक एव तथा च महानिशीथे"आया सयमेव अत्थाणं निउणं जाणे जहट्ठियं आया चेव दुप्पतिज्जे धम्ममविय अत्तसक्खियंति ॥ महा० ॥ उक्तं च ।
श्रीहरिभद्रपूज्यैः–

आयप्पभवं धम्मं आयंति य अप्पणो सरूवं च।
दंसणनाणचरित्ते गतं जीवस्य परिणामं॥ १॥

रे भव्य हिताय वदामः सर्वागमेषु धर्म आत्मनः शुद्धपरिणतिरेव निमित्तस्योपादानात्प्राकल्यहेतुत्वात् बाह्याचरणादिकं साधकैरभ्यस्यं तथापि धर्महेतुत्वेनोपादेयं तथा श्रद्धावद्भिः ततस्त्वात्मचेतन्यव्यापकरूपानंतपर्यायलक्षणं धर्मः उत्तराध्ययनावश्यकादिसर्वसिद्धांताशय इति अष्ट० ॥
आत्मज्ञानस्यैव विद्यात्वं यथा–
नित्यशुच्यात्मना ख्यातिरनित्या शुच्यनात्मसु।
अविद्यातत्त्वधीर्विद्या योगाचार्यैः प्रकीर्तिता॥ १॥
यःपश्येन्नित्यमात्मानमनित्यं परसंगमम्।
छलं लब्धुं न शक्नोति तस्य मोहमलिम्लुचः॥ २॥
तरङ्गतरला लक्ष्मीरायुर्वायुवदस्थिरम्।
अदभ्रधीरनुध्यायेदभ्रवद्भंगुरं वपुः॥ ३॥
शुचीनप्यशुचीकर्तुं समर्थेऽशुचिसम्भवे।
देहे जलादिना शौचभ्रमो मूढस्य दारुणः॥ ४॥
यः स्नात्वा समताकुण्डे हित्वा कश्मलजं मलम्।
पुन र्न याति मालिन्यं सोऽन्तरात्मा परःशुचिः॥ ५॥
आत्मबोधो नवः पाशो देहगेहधनादिकम्।
यः क्षिप्तोऽप्यात्मनान्तेषु स्वस्य बन्धाय जायते॥ ६॥
मिथोयुक्तपदार्थानामसंक्रमचमत्क्रिया।
चिन्मात्रपरिणामेन विदुषैवानुभूयते॥ ७॥
अविद्यातिमिरध्वंसे दृशा विद्याञ्जनस्पृशा।
पश्यन्ति परमात्मानमात्मनेव हि योगिनः॥ ८॥
इतिविद्याष्टकम्॥ १४॥ अष्ट०॥
( आत्मविवेकस्यैव विवेकत्वमष्टके ) यथा
कर्मजीवं च संश्लिष्टं सर्वदा क्षीरनीरवत्।
विभिन्नं कुरुते योऽसौ मुनिहंसो विवेकवान्॥ १॥
देहात्माद्यविवेकोऽयं सर्वदासुलभो भवे।
भवतोऽपि तद्भेदविवेकस्त्वतिदुर्लभः॥ २॥
शुद्धेऽपि व्योम्नि तिमिराद्रेखाभिर्मिश्रिता यथा।
विकारैर्मिश्रिता भाति तथात्मन्यविवेकतः॥ ३॥
यथायोधैः कृतं युद्धंस्वामिन्येवोपचर्यते॥
शुद्धात्मन्यविवेकेन कर्मस्कंधोर्जितं तथा॥ ४॥
इष्टकाद्यपि हि स्वर्णंपीतोन्मत्तो यथेक्षते।
आत्माभेदभ्रमस्तद्वद्देहादावविवेकिनः॥ ५॥
इच्छन्नपरमान्भावान्विवेकाद्रेः पतत्यधः।
परमं भावमन्विच्छन्नविवेके निमज्जति॥ ६॥
आत्मन्येवात्मनः कुर्यात् यः षट्कारकसंगतिम्।
काविवेकज्वरस्यास्य वैषम्यं जलमज्जनात्॥ ७॥
संयमास्त्रं विवेकेन शाणेनोत्तेजितं मुनेः॥
धृतिधारोल्वणं कर्म शत्रुच्छेदक्षमंभवेत्॥ ८॥
आत्मार्चनस्यैव भावपूजात्वम्–यथा दयाम्भसाकृ तस्नानःसन्तोषशुभवस्त्रभृत्॥ विवेकतिलकभ्राजी भावनापावनाशयः॥ १॥ भक्तिःश्रद्धानुघुसृणोन्मिश्रपाटीरजद्रवैः नवब्रह्माङ्गतो देवं शुद्धमात्मानमर्चय॥२॥ क्षमा पुष्पस्त्रजं धर्मयुग्मक्षौमद्वयं तथा॥ ध्यानाभरणसारश्चतरङ्गेविनिवेशय॥ ३॥ मदस्थानभिदत्यागैरष्टाग्रेलिखमंगलाः॥ ज्ञानाग्नौ शुभसंकल्पकाकतुण्डञ्च धूपय॥ ४॥ प्राग्धर्मलवणोत्तारं धर्मसंन्यासवह्निना॥ कुर्वन्पूरय सामर्थ्य राजन्नीराजनाविधिम्॥ ५॥ स्फुरन्मंगलदीपञ्च स्थापयानुभवम्पुरा॥योगनृत्यपरस्तौर्य्यत्रिकसंयमवान्भव॥६॥ उल्लसन्मनसंसत्यघंटावादयस्तव॥ भावपूजारतस्येत्थं करक्रोडे महोदयः॥ ७॥ द्रव्यपूजोचिताभेदोपासना गृहमेधिनाम्॥ भावपूजा तु साधूनामभेदोपासनात्मिका॥ ८॥ भावपूजाष्टकम्॥ २९॥
मोक्षे–संयमे च ( आतताए परिव्वए ) सूत्र० आत्मा मोक्षः संयमो वा तद्भावस्तस्मै तदर्थम्परि समन्ताद् व्रजेत् संयमानुष्ठामाक्रियायां दत्तावधानो भवेदित्यर्थ इति॥ सूत्र० श्रुतस्कंध अध्य० ३
तथाप्रवचनसारोद्धारवृत्यादौ इंद्रियविषयप्रमाणता आत्मांगुलत्वेन प्रोक्तास्ति चक्षुष उत्कृष्टविषयतायां कृतलक्षयोजनरूपोविष्णुकुमारो दृष्टांतः प्रोक्तोस्ति तथा हि चक्षुः सातिरेकयोजनलक्षाद्रूपं गृह्णातीति सातिरेकत्वं तु विष्णुकुमाराद्यः स्वपदपुरःस्थित गर्तादिकं तन्मध्यगतं च लोष्टादीकंपश्यतीति नवतत्वमहाचूर्णावस्ति इति चक्षुषः सातिरेकलक्षयोजनदूरस्थरूपग्रहणविषये दृष्टांतकरणाद्विष्णुकुमारविकुर्वितरुपमात्मांगुलेन संभाव्यतेऽन्यथा दृष्टांतसंगतिरित्येव सति प्रश्नोत्तरसमुच्चयचतुर्थप्रकाशं प्रांतेयद्विष्णुकुमारविकुर्व्वितरूपमुत्सेधांगुलेनिष्पन्नलक्षयोजनप्रमाणमुक्तमस्ति तत्कथमिति प्र० विष्णुकुमारकृतसातिरेकलक्षयोजनप्रमाणरूपं चमरेंद्रादिवत्प्रमाणांगुलेनापि संभवति न कापि विप्रतिपत्तिर्यच्चप्रश्नोत्तरेऽत्सेधांगुलेनप्रोक्तमस्तितत्रकिंचिद्धियेमस्तीति ८० सेनप्रश्नेउल्लास०३।

आताण—आतान—त्रि० आ तन् घञ् १ आभिमुख्येन विस्तारे, २ दीर्घविस्तारे, पटादिवयनार्थे दीर्घविस्तारे, "यथा लता आतानविताना भ्यां जालं विस्तारयतीति" वेदान्तप्र० कर्म्मणि घञ् ३ विस्तार्य्ये॥ वाच०॥

आताणग—आतानक—त्रि० आ तन् ण्वुल् विस्तारके,॥ वाच०॥

आता ( या ) णुकंपय—आत्मानुकम्पक—त्रि० आत्मानमेवानर्थपरिहारद्वारेणानुकम्पते शुभानुष्ठानेन सद्गतिगामिनं विधत्त इत्यात्मानुकम्पकः॥ सूत्र० द्वि० श्रुत० अध्य० २ आत्महितप्रवृत्ते,प्रत्येकबुद्धे जिनकल्पिके च ( आयाणुकंपए णाममेगे णो पराणुकंपए )॥ स्था०॥ ठा० ४

आता ( या ) णुस्सरण—आत्मानुस्मरण—न० आत्मनोऽनुस्मृतौ आत्मानुस्मरणाय च भावाभावविरहासिद्धिफलाः॥ षो०॥ आत्मनोऽनुस्मरणाय च स्वयमेवानुस्मृतिनिमित्तमिति॥ षो० ॥प्र० १६

आता ( या ) णुसासण—आत्मानुशासन–न० आत्मनोऽनुशास्तौ॥ सूत्र०॥
मापच्छ असाधुता भवे अच्चेहीअणुसास अप्पगं॥ अहियं च असाहु सोयती। संथणती परिदेवतीवहु॥ ७॥ सूत्र०॥ अध्य० २

मा पश्चान्मरणकाले भवांतरे वा कामानुषंगादसाधुता कुगतिगमनादिकरूपा भवेत् प्राप्नुयादिति। अतो विषयासंगादात्मानमत्येहि त्याजय। तथात्मानं चाऽनुशाध्यात्मनोऽनुशास्ति कुरु। यथा हे जीव! यो ह्यसाधुरसाधुकर्मकारि

हिंसानृतस्तेयादौ प्रवृत्तः सन् दुर्गतौ पतितोऽधिकमत्यर्थमेवं शोचति स च परमाधार्मिकैः कदर्थ्यमानस्तिर्यक्षु वा क्षुधादिवेदनाग्रस्तो ऽत्यर्थं स्तनति सशब्दं निःश्वसिति । तथा परिदेवते विलपत्याक्रंदति । थणिहिति । हा मातर्म्रियत इति त्राता नैवाऽस्ति सांप्रतं कश्चित् किं शरणं मे स्यादित्याह । दुष्कृतचरितस्य पापस्येत्येवमादीनि दुःखान्यसाधुकारिणः प्राप्नुवंतीत्यतो विषयानुषंगो न विधेय इत्येवमात्मनोऽनुशासनं कुर्विति संबंधनीयं ॥ ७ ॥ सूत्र० टी० ॥

आता ( या ) धीण—आत्माधीन—पुं० अत्मनोऽधीनः पुत्रे। श्यालके-विदूषके च हेम० बलयुक्ते, स्वाधीने, त्रि०।वाच०॥

आताव—आताप—पुं० ईषत्तापे "णो खलु मे कप्पति अगणिकायं उज्जालित्तएवा पज्जालित्तएवा कायं आयावेत्तएवा पयावेत्तएवा" ॥ आचा० उ० ४ ॥

कायं शरीरमीषत्तापयितुं वा प्रकर्षेण तापयितुं प्रतापयितुंवेति ॥ आचा० टी० ॥

आता ( या ) वग—आतापक—पुं० आतापयत्यातापनां शीतातपादिसहनरूपां करोतीत्यातापकः।स्था०ठा० ४। आतापनाग्राहिणि परतीर्थिकेभेदे सूत्र० ॥ द्वि० श्रु० अ० २ ॥

आता ( या ) वण—आतापन—न० सकृदीषद्वा तापने ( आयविज्जा न पयावेज्जा ) सकृदीषद्वा तापनमातापनमिति, ॥ दश०॥अ०४ ॥ शीतादिभिः शरीरस्य संतापने च ॥ स्था० ॥ ठा० ३ ॥

आता ( या ) वणया—आतापनता—स्त्री० आतापनानांशीतादिभिः, शरीरस्य संतापनानां भावः आतापनता। शीतातपादेः सहने, ॥ स्था० ॥ठा० ३ ॥

आता ( या ) वणा—आतापना—स्त्री० शीतादिसहनात्मकेतपोभेदे, ॥ पंचा०प्र०क०॥ (आयावणाए आयविमाणस्स) ॥आ० म० ॥ स्था० ॥ आयावणा य तिविहा उक्कोसा १ मज्झिमा २ जहन्ना य ३ उक्कोसाओ निविएणा निसएणमज्झावि य जहन्ना ॥ ३ ॥ तिविहा होइ निसएणा ओमंथिय १ पास २ तइय उत्ताणउत्ति। निषएणाऽपि त्रिविधा "गोदोहुक्क उपलियं कमेण तिविहा य मज्झिमा होइ ॥ तइयाउहत्थिसुंडे गपायसमपाइय चेवत्ति ॥ १ ॥ इयं च निषएणादिका त्रिविधाप्यातापना स्वस्थाने पुनरुत्कृष्टादिभेदा ओमंथियादिभेदेनावगंतव्या । इह च यद्यपि स्थानातिगत्वादी नामातापनायामंतर्भावस्तथापि प्रधानेतरविवक्षया न पुनरुक्तत्वं मंतव्यमिति ॥ स्था०ठा०५ ॥ तद्वक्तव्यता बृहत्कल्पे यथा "नोकप्पइ निग्गंथीए वहिया गामस्स वा जाव सन्निवेसस्स वा बाहा उड्ढं पगिज्झोय २ सूराभिमुहीए एगपाइयाए ठिच्चा आयावणाए आयावित्तए कप्पइ से उवस्सये अंतोवगडाए संघाडपडिवद्धाए पलंवियाहियाए समतलपाइया ठिच्चा आयावणाए आयाविस्सए"॥ नोकल्पते निर्ग्रंथ्या बहिर्ग्रामस्य वा यावत् संनिवेशस्य वा ऊर्ध्वमूर्ध्वमुखो बाहू प्रगृह्य प्रकर्षेण गृहीत्वा कृत्वेत्यर्थः । सूर्याभिमुख्या एकपादिका या एकं पादमूर्द्धमाकुंच्यापरं एकपदे सुविकृतवत्या एवंविधायाः स्थित्वा आतापयितुं किं तु कल्पते से तस्या उपाश्रयस्यांतर्वगडायाः संघाटीप्रतिबद्धायां प्रलंबितबाहुकायाः समतलपादिकायाः स्थित्वा आतापनाय आतापयितुमिति सूत्रार्थः अथभाष्यं "आयावणा य तिविहा उक्कोसा मज्झिमा जहएणाय। उक्कोसा उ णिवणा णिसएणमज्झा वि य जहणा" आतापना त्रिविधा उत्कृष्टा मध्यमा जघन्या वा तत्रोत्कृष्टा निपएणा एव यां करोतीत्यर्थः । मध्यमा निषएणस्य जघन्या तु ऊर्द्धस्थितस्य पुनरेकैका त्रिविधा "तिविहा होइं निषणाउ मंथेयपासतइयमुत्ताणा उक्कोसुक्कोसाओकोसमज्झिमाउकोसगजहएणाया निषएणस्योत्कृष्टा तापना सा त्रिविधा भवति । उत्कृष्टोत्कृष्टाउत्कृष्ट मध्यमा उत्कृष्टजघन्या च । तत्र यदवाङ्मुखं निपत्याताऽपना क्रियते सा उत्कृष्टोत्कृष्टा या तु पार्श्वतः शयाने क्रियते सा उत्कृष्टमध्यमा या पुनरुत्तानशयनेन विधीयतेसा उत्कृष्टजघन्या । तस्य "उक्कोसा दुहओ वि मज्झिम मज्झिमा जहन्ना य । अहमुक्कोसाहममज्झिमा य अहमाधमाचरिमा" निषण्णस्य मध्यमा तापना सा द्विधा मध्यमोत्कृष्टा दुहओवि मज्झिमत्ति । मध्यममध्यमा मध्यमजघन्या । ऊर्ध्वस्थितस्य या जघन्या सा त्रिधा अधमोत्कृष्टा अधममध्यमा । अधमा च चरमेति अधमशब्दो जघन्यवाचकोऽत्र द्रष्टव्यः । एतासामिदं ॥ सूत्रं० ॥

पलियंकअद्धउक्कुडुगमो य तिविहाउ मज्झिमा होइ॥तइयाउ हत्थिसुंडेगपादसमपाडिगा चेव, मध्यमोत्कृष्टा पर्यंकासनसंस्थिता मध्यममध्या अर्द्धपर्यंका मध्यमजघन्या उत्कुटिका क्वचिदादर्शे पूर्वार्द्धमित्थं दृश्यते गोदोहोहुक्कडपलियंकमो यं वि तिविहा उ मज्झिमा होइत्ति तत्र मध्यमोत्कृष्टा गोदोहिका मध्यमा उत्कुटिका मध्यमजघन्या पर्यंकासनरूपा । गोशब्दः पादपूरणे एषा त्रिविधा मध्यमा भवति । या तु तृतीयास्ति तस्या जघन्योत्कृष्टादिभेदात्त्रिधा भणिता सजघन्योत्कृष्टा हस्तिसुंडिका पुनर्नाभ्यामुपविष्टस्यैकपादोत्पादनरूपा । जघन्यमध्यमा एकपादिका उत्थितस्यैकपादेनावस्थानं जघन्यजघन्या समतलाभ्यां पादाभ्यां स्थित्वायदूर्ध्वस्थितैरातापयते । कथं पुनः शयितस्योत्कृष्टा तापना भवतीत्युच्यते । "सव्वं गिम्ओपतावो यतावियाघम्मरस्सिणा भूमी । ण य कमईतत्थवा ओधिस्सामो नेव गत्ताणं" । भूमी निषएणस्य सर्वांगानां प्रतापः प्रकर्षेण तापो लगति घर्म्मरश्मिना च भूमिः प्रकर्षेणात्यंततापिता नच तत्र भूमौ वायुः क्रमते प्रचरति न च गात्राणामंगानां विश्रामो भवति । अतो निषएणस्योत्कृष्टा तापना मंतव्या । अथैतासां मध्यादार्यिकाणां का आतापना कर्तुंकल्पते इत्यत आह । "एयासिं णवहूयं अणुएणाया संजईण अंतिल्ला । सेसा नाणुन्नाया अट्ठतुआतावणा तेसिं" । एतासां नवानामप्यातापनानां मध्यादंतिमा समपादिकाख्या अतापना संयतीनामनुज्ञाता शेषा अष्टावातापना आसां नानुज्ञाताः । कीदृशे पुनः स्थाने च आतापयंतीत्युच्यते । "पालीहिं जत्थ दीसइ जत्थय सइरं विसंति न हु दाता ॥ उग्गहमादिसु सज्जाआयावयते तहिं अज्जा" यत्र प्रतिश्रयपालिकाभिः संयतीभिः आतापयता दृश्यते । यत्र च स्वैरं स्वच्छंदं वातो न प्रविशति तत्र स्थाने अवग्रहानन्तकादिभिः संघटिकांतैरुपकरणैः सज्जाआयुक्ता आर्यिका प्रलंबितबाहुयुगला आतापयति । किमर्थमवग्रहानंतकादिसज्जेति चेदत आह । "मुच्छाए विवडिताए तावेण मुमुच्छुतेव संवरणे ।

गोचरमनुपणदोसा जे वुत्ताते उपावेभा। तस्या भातापयं त्याः खरतरातपसंपर्कपरितापितायाः कदाचिन्मूर्च्छा संजायेत तया च निपतिता वा तेन वा संवरणे प्रावरणे समुद्भूते अवग्रहानंतकादिभिर्विना गोचरचर्यायामयतनया प्रविष्टाया ये दोषास्तृतीयोद्देशके उक्तास्तान् प्राप्नुयात् अतस्तैः प्रावृता भातापयेत् ॥ वृ० ॥ भातापनोदकतीरे न कर्त्तव्येति उदगतीरशब्दे द्रष्टव्या ॥

आताबि (न्)—आतापिन्–पुं० आतापयति भातापनां शीतातपादिसहनरूपां करोतीत्यातापी शीतादिसहनकर्तरि, ॥ स्था०ठा०४ ॥ वस्त्रादेरातपे दातरि च ॥ कल्प० सु०भ०८ ॥ आतपति भातप्–णिनि–पद्धिभेदे क्षीरस्वामी ॥ वाच० ॥

आता (या) वित्तए—आतापयितुम्—अव्य०–आतपे दातुमित्यर्थे,—(भायावित्तए पयावित्तए वा) भातापयितुमेकवारमातपे दातुं प्रतापयितुं पुनः पुनरातपे दातुमिच्छतीति कल्प० सुबो० भध्य०८ ॥

आता (या) बिया–आतापयित्वा–अव्य० भातापनां कृत्वेत्यर्थे, ॥ भाचा० ॥

आता (या) वेमाण—आतापयत्—त्रि० भातापना कुर्वति "भायावणाए आयावमाणस्स छट्ठेणं भत्तेणं" ॥ आ०म० ॥

आता (या) भिणिवेस—आत्माभिनिवेश—पुं० भात्मनोऽभिनिवेशो, यावच्चात्माभिनिवेशस्तावदेव संसारस्तथा च नन्द्यध्ययने ॥ नं०॥ "शौद्धोदनीयाः पुनरेवमाहुः" नैरात्म्यादिभावना रागादिक्लेशप्रहाणिहेतुर्नैरात्म्यादिभावनायाः सकलरागादिप्रतिपक्षभूतत्वात्। तथाहि। नैरात्म्यावगतौ भात्माभिनिवेशः भात्मनोऽवगमाभावादात्माभिनिवेशाभावाच्च। पुत्रभ्रातृकलत्रादिष्वात्मीयाभिनिवेशः आत्मनो हि य उपकारी स भात्मीयो यश्च प्रतिघातकः स द्वेष्यः यदा त्वात्मैव न विद्यते किन्तु पूर्वापरक्षणत्रुटितानुसन्धानाः पूर्वपूर्वहेतुप्रतिबद्धा ज्ञानक्षणा एव तथा तथोत्पद्यंते तदा कः कस्योपकर्त्ता उपघातको वा क्षणानां क्षणमात्रावस्थायितया परमार्थत उपकर्तुमपकर्त्तुं वा भशक्यत्वात् तन्न तत्ववेदिनः पुत्रादिष्वात्मीयाभिनिवेशो नापि वैरिषु द्वेषो यस्तु लोकानामात्मीयानात्मीयाद्यभिनिवेशः सोऽनादिवासनापरिपाकोपनीतो वेदितव्योऽतत्वमूलत्वात्। ननु यदि न परमार्थतः कश्चिदुपकार्योपकारभावस्तर्हि कथमुच्यते भगवान् सुगतः करुणया सकलसत्वोपकाराय देशनां कृतवानिति। क्षणिकत्वमपि च यद्येकांतेन तर्हि तत्ववेदी क्षणानंतरं विनष्टः सन्न कदाचनाप्यहं भूयो भविष्यामीति जानानः किमर्थं मोक्षाय यत्नमारभते। तदयुक्तमभिप्रायापरिज्ञानात्। भगवान् हि प्राचीनायामवस्थायामवस्थितः सकलमपि जगद्रागद्वेषादिदुःखसंकुलमभिजानानः कथमिदं सकलमपि जगन्मया दुःखादुद्धर्तव्यमिति समुत्पन्नकृपाविशेषो नैरात्म्यक्षणिकत्वादिकमवगच्छन्नपि तेषामुपकार्यसत्वानां निःक्लेशक्षणोत्पादनाय प्रजाहितो राजेव स्वसंततिविशुद्ध्यै सकलजगत्साक्षात्करणसमर्थः स्वसंततिगतविशिष्टक्षणोत्पत्तये यत्नमारभते सकलजगत्साक्षाकारमंतरेण सर्वेषामक्षणविधानमुपकर्त्तुमशक्यत्वात्। ततः समुत्पन्नकेवलज्ञानः पूर्वाहितकृपाविशेषसंस्कारवशात् कृतार्थोऽपि देशनायां प्रवर्त्तते इति। तदेवं श्रुत माध्यंप्रक्रया निर्दोषनैरात्म्यादिवस्तुतत्वं परिभाव्य भावतः तथैव भावयतो जंतोर्भावना प्रकर्षविशेषतो वैराग्यमुपजायते। ततो मुक्तिलाभः। यस्त्वात्मानमभिमन्यते न तस्य मुक्तिसंभवो यत् भात्मनि परमार्थतया विद्यमाने तत्र स्नेहः प्रवर्ततं। ततः स्नेहवशाच्च तत्सुखेषु परितर्षवान् भवति। तृष्णावशाच्च सुखसाधनेषु दोषान् सतोऽपि तिरस्कुर्वतो गुणास्त्वभिभूतानपि पश्यति। ततो गुणदर्शी सन् तानि ममत्वविषयीकरोति तस्माद्यावदात्माभिनिवेशः तावत्संसारः आह "च यः पश्यत्यात्मानं तत्रास्याहमिति" शाश्वतः स्नेहः स्नेहात्सुखेषु तृष्यति तृष्णादोषांस्तिरस्कुरुते १ गुणदर्शी परितृष्यन् ममेति तत्साधनान्युपादत्ते तेनात्माभिनिवेशो यावत्तावत्स संसारः २ तदेतत्सर्वमंतःकरणकृतावासमहामोहमहीयस्त्वविलासितं भात्माभावे बंधमोक्षाद्येकाधिकरणत्वायोगात् तथाहि यदि नात्माभ्युपगम्यते किं तु पूर्वापरक्षणत्रुटितानुसंधाना ज्ञानलक्षणा एव तथा सतोऽन्यस्य बंधो ऽन्यस्य मुक्तिरन्यस्य क्षुदन्यस्य तृप्तिरन्योऽनुभविता भन्यः स्मर्ता भन्यश्चिकित्सादुःखमनुभवति अन्यो व्याधिरहितोभवति। भन्यः तपःक्लेशमपि सहते परः स्वर्गसुखमनुभवति। भपरः शास्त्रमभ्यसितुमारभते अन्योऽधिगतशास्त्रार्थोभवति न चैतद्युक्तमतिप्रसंगात् संतानापेक्षया बंधमोक्षादेरेकाधिकरणयमितिचेन्न संतानस्यापि भवन्मते नानुपपद्यमानत्वात्। संतानो हि संतानिभ्यो भिन्नो वा स्यादभिन्नोवा? यदि भिन्नस्तर्हि पुनरपि विकल्पयुगलमपढौकते। स किं नित्यः क्षणिको वा? यदि नित्यस्ततो न तस्य बंधमोक्षादिसंभवः आकालमेकस्वभावतया तस्यावस्थावैचित्र्यानुपपत्तेः। न च नित्यं किमप्यभ्युपगम्यते सर्वं क्षणिकमिति वचनात्। भथ क्षणिकस्तर्हि तदेव प्राचीनं बंधमोक्षादि वैयधिकरण्यं प्रसक्तं। भथाभिन्न इति पक्षस्तर्हि संतानिन एव न संतानः तदभिन्नत्वात्सतत्स्वरूपवत्। तथा च सति तदवस्थमेव प्राक्तनं दूषणमिति।

आता(या) भिसित्त—आत्माभिषिक्त—पुं० निजबलेन राज्याभिषिक्ते भरतादौ ॥ व्य० ॥ "भहवा राया दुविहो भायाभिसित्तो पराभिसित्तो य भायाभिसित्तो भरहो तस्स उ पुत्तो परेणं तु। अथवेति प्रकारांतरद्योतने राजा द्विविधो भवति। तद्यथा आत्माभिषिक्तः पराभिषिक्तश्च भात्मनैव निजबलेन राज्येऽभिषिक्तः भात्माभिषिक्तः परेणाभिषिक्तः पराभिषिक्तः तत्रात्माभिषिक्तो भरतश्चक्रवर्ती तस्य पुत्र आदित्ययशाः पराभिषिक्तः ॥ व्य० ॥ उ० ५

आता(या)र-आतार–पुं० भार्तार्य्यतेऽनेन भात् बा० घञ् नावा तरणार्थे देये शुल्के ॥ वाच०

आता (या) राम—आत्माराम—त्रि० भात्मा आराममिव रतिस्थानं रतिसाधनं वा यस्य। ज्ञानाय यतमाने योगिनि।

आता (या) रामि (न्) आत्मारामिन्—पुं० आत्मविश्रामिणि, भात्मानुभवमग्ने स स्वयं संसाराब्धिष्टृसस्तत्सेवमापराभिस्तारयतीति ॥ अष्ट० ॥

आतालिज्जंत—आताड्यमान—त्रि० भा समन्तात् ताड्यमाने (भातालिज्जंताणं ताळीणं ताखाणं कं सतास्थानं ति) भा० चू० ॥

आता ( या ) व ( आताप )—पुं असुरकुमारविशेषे, विशेषस्तु नावगम्यते ते इति अभयदेवसूरिः ॥ भ०श०१३ उ०६

आता ( या ) वाइ ( न् )—आत्मवादिन्—पुं० आत्मानं वदितुं शीलमस्येति ॥ आचा० ॥ यथावस्थितात्मवादिनि ॥ आचा० ॥ आत्मवादिनोऽशेषवक्तव्यताऽऽचाराङ्गप्रथमश्रुतस्कंन्धप्रथमाध्ययनस्य प्रथमे उद्देशके सा चात्मशब्दे दृश्या ॥ आचा० ॥ तथाच स्थानाङ्गे ऐक्यवादिनमधिकृत्य ॥ स्था०ठा०८ ॥ अपरस्त्वात्मैवास्ति नान्यदिति प्रतिपन्नस्तदुक्तं । पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १ ॥ तदेजति तन्नैजति तद्दूरे तदंतिके ॥ तदंतरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत इति ॥ ॥ स्था० टी० ॥ नंद्यध्यनेऽपि आत्मवादिनो नाम पुरुष एवेदं सर्वमित्यादि प्रतिपन्नाः तेऽपि महामोहोरगगरलपूरमूर्च्छितमानसा वेदितव्याः तथा हि यदि नाम पुरुषमात्ररूपमद्वैतत्वं तर्हि यदि तदुपलभ्यते सुखितदुःखितादि तत्सर्वं परमार्थतोऽसत्प्राप्नोति । ततश्चैवं स्थिते यदेतदुच्यते प्रमाणतोऽधिगम्य संसारनैर्गुण्यं तद्विमुखया प्रज्ञया तदुच्छेदाय प्रवृत्तिरित्यादि तदेतदाकाशकुसुमसौरभवर्णनोपमानं अवसेयं। अद्वैतरूपे हि तत्त्वे कुतो नरकादिभवभ्रमणरूपः संसारो यन्नैर्गुण्यमवगम्य यदुच्छेदाय प्रवृतिरुपपद्यत । यदप्युच्यते पुरुषमात्रमेवाद्वैतत्वं यत्तुसंसारनैर्गुण्यं भावभेददर्शनं च तत्सर्व्वदा सर्व्वेषामापिगानप्रतिपत्तावपि चित्रे निम्नोन्नतभेददर्शनमिव भ्रांतमवसेयमिति तदप्यचारु । एतद्विषये वास्तवप्रमाणाभावात् । तथा हि नाद्वैताभ्युपगमे किंचिदद्वैतग्राहकं ततः पृथग्भूतं प्रमाणमस्ति द्वैतत्वप्रसक्तेः । न च प्रमाणमंतरेण निःप्रतिपन्ना तत्त्वव्यवस्था भवति माप्रापत्सर्वस्य सर्व्वेष्टार्थसिद्धिप्रसंगः । तथा भ्रांतिरपि प्रमाणभूता द्वैताद्भिन्नाभ्युपगंतव्या । अन्यथा प्रमाणभूतमद्वैतमप्रमाणमेव भवेत्तद्व्यतिरेकात्तत्स्वरूपवत् तथा च कुतस्तत्त्वव्यवस्था भिन्नायां च भ्रांतावभ्युपगम्यमानायां द्वैतं प्रसक्तमित्यद्वैतहानिः । अपि च यदीदं स्तंभकुंभांभोरुहादिभेददर्शनं भ्रांतमुच्यते तर्हि नियमात्तदपि क्वचित्सत्यमवगंतव्यं अभ्रांतदर्शनमंतरेण भ्रांतेरयोगात् । न खलु येन पूर्वमाशीविषो दृष्टस्तस्य रज्वामाशीविषभ्रांतिरुपजायते तदुक्तं नादृष्टपूर्वसर्पस्य रज्वां सर्पमतिः क्वचित् ततः पूर्वानुसारित्वाद्भ्रांतिरभ्रांतिपूर्विका १ तत एवमप्यव्याहतो भेदः। अन्यच्च पुरुषाद्वैतरूपं तत्त्वमवश्यं पूर्वं परस्मै निवेदनीयं नात्मने आत्मनो व्यामोहाभावात् विमोहश्चेदद्वैतप्रतिपत्तेरेव न भवेत । अथोच्येत यत एव व्यामोहोऽत एव तन्निवृत्यर्थमात्मनोऽद्वैतप्रतिपत्तिरास्थेया तदयुक्तमेवं सति अद्वैतप्रतिपत्त्याधानेनात्मनो व्यामोहे निवर्त्यमानेऽवश्यं पूर्वरूपत्यागो अपररूपस्य चाव्याप्ते व्यामूढता लक्षणस्योत्पत्तिरित्यद्वैतप्रतिज्ञाहानिः। परस्मै च प्रतिपादयन् नियमतः परमभ्युपगच्छेत्परं चाभ्युपगच्छन् तस्मै चाद्वैतरूपं तत्त्वं निवेदयन् पिता मे कुमारब्रह्मचारीत्यादि वदन्निव कथं नोन्मत्तः स्वपराभ्युपगमेनाद्वैतवचसो बाधनादिति यत्किंचिदेतत् ॥ नं० ॥

आता ( या ) सय—आत्माश्रय—पुं० आत्मानमाश्रयति आश्रि—अच्—स्वस्य स्वापेक्षित्वहेतुकानिष्टप्रसंगरूपे, तर्कदोषभेदे । "स्वस्य स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्माश्रयः स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रिधा यथा यद्ययं घट एतद्घटजन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्ती न स्यात्, एतद्घटभिन्नः स्यात् एतद्घटव्याप्यो न स्यात्, यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात् एतद्घटभिन्नः स्यादिति वा सर्व्वत्रापाद्यम्" न्यायसूत्रवृत्तिः । २ स्वार्पिते ३ चित्ताश्रिते च त्रि० स्वस्याश्रये पुं० ॥ वाच० ॥

आता ( या ) हम्म—आत्मघ्न—न० आत्मा हन्यते तेषु तेषु यातनास्थानेषु येन तदात्मघ्नम् ॥ दर्श० ॥ आत्मानं ज्ञानदर्शनचारित्ररूपं हन्ति विनाशयतीत्यात्मघ्नम् ॥ वृ० ॥ आत्मानं दुर्गतिप्रपातकारणतया हंति विनाशयतीत्यात्मघ्नम् ॥ पिं० ॥ आधाकर्म्मणि—आत्मघ्नस्याधाकर्म्मैकार्थिकत्वमाधाकर्मशब्दे ॥ दर्श० ॥ एतस्य निक्षेपो निशीथचूर्णौ यथा— ॥ आयाहम्मे वि चउव्विधो निक्खेवो दव्वायाहंमे अणुवउत्तो पाणातिवायं करेंतो भावा ते णाणदंसणचरणा तं हणंतो भवाताहम्मं ॥ नि० चू० ॥ पिंडनिर्युक्तावपि संप्रत्यात्मघ्ननाम्नोऽवसरस्तदपि चात्मघ्नं चतुर्द्धा तद्यथा नामात्मघ्नं स्थापनात्मघ्नं द्रव्यात्मघ्नं भावात्मघ्नं च । इदमप्यधः कर्मवत् तावद्भावनीयं यावन्नो आगमतोभव्यशरीरद्रव्यशरीरद्रव्यात्मघ्नं । ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्यात्मघ्नं निर्युक्तिकृदाह "अट्ठाए अणट्ठाए छक्कायपमद्दणं तु जो कुणइ । अनियाए अ नियाए आयाहम्मं तयंबेंति" ॥ ४ ॥ योगृही अर्थाय स्वस्य परस्य वा निमित्तम् अनर्थाय प्रयोजनमंतरेण एवमेव पापकरणशीलतया ( अणियाए य नियाए त्ति ) निदानं निदा प्राणिहिंसा नरकादिदुःखहेतुरिति जानतापि यद्वा साधूनामाधाकर्म न कल्पते इति परिज्ञानवतापि य जीवानां प्राणव्यपरोपणं सा निदा । तन्निषेधादनिदा । पूर्वोक्तपरिज्ञानविकलेन सता यत् परप्राणनिबर्हणं सा अनिदेति भावार्थः । अथवा स्वार्थं परार्थं चेति विभागेनोद्दिश्य यत् प्राणव्यपरोपणं सा निदा तन्निषेधादनिदा । यत् स्वं पुत्रादिकमन्यं वा विभागेनाविविच्य सामान्येन विधीयते । अथ वा व्यापाद्यस्य सत्वस्य हा धिक् संप्रत्येष मां मारयिष्यतीति परिज्ञानतो यत् प्राणव्यपरोपणं सा निदा तद्विपरीता अनिदा । यत् अजानतो व्यापाद्यस्य सत्वस्य व्यापादनमिति । तथा चाह भाष्यकृत् । "जाणंतु अजाणंतो तहेव उद्दिसिय तुहउवावि । जाणगअजाणगं वा वहेइ अनिया निया एसा" व्याख्यातार्था ततो निदयाऽनिदया वा यः षट्कायप्रमर्द्दनं करोति । षण्णां पृथिव्यादीनां कायानां प्राणव्यपरोपणं विदधाति । तत् षट्कायप्रमर्द्दनं आत्मघ्नं नो आगमतो द्रव्यात्मघ्नं ब्रुवंति तीर्थकरगणधराः । अथ षट्कायप्रमर्दनं कथं नो आगमतो द्रव्यात्मघ्नं यावता भावात्मघ्नं कस्मान्न भवति अत आह ( दव्वाया खलु काया ) कायाः पृथिव्यादयः खलु निश्चयेन द्रव्यात्मानो जीवानां गुणपर्यायवत्तद्द्रव्यत्वात् । उक्तंच अजीवकायाः धर्म्माधर्म्माकाशपुद्गला द्रव्याणि जीवाश्चेति । ततस्तेषां यत् उपमर्दनं तत् द्रव्यात्मघ्नं भवति । उक्तं द्रव्यात्मघ्नं। संप्रति भावात्मघ्नं वक्तव्यं तच्च द्विधा आगमतो नो आगमतश्च । तत्र आगमत आत्मघ्नशब्दार्थज्ञाता तत्र चोपयुक्तः। नो आगमत आत्मघ्नमाह "भावाया तिन्नि नाणमाईणि परपाणपाडणरओ चरणायं अप्पणो हणइ" भावात्मानो भावरूपा आत्मानस्त्रीणि

ज्ञानादीनि ज्ञानदर्शनचारित्राणि आत्मनो हि पारमार्थिकं स्वस्वरूपं ज्ञानदर्शनचरणात्मकं ततस्तान्येव परमार्थत आत्मानो न शेषं द्रव्यमात्रं स्वस्वरूपाभावात् । ततो यश्चारित्री सन् परेषां पृथिव्यादीनां ये प्राणा इंद्रियादयस्तेषां यत् पातनं विनाशनं तस्मिन् रत आसक्तः स आत्मनश्चरणरूपं भावात्मानं हंति । चरणात्मनि च हते ज्ञानदर्शनरूपावप्यात्मानौ परमार्थतो हताविव द्रष्टव्यौ "निच्छयनयस्स चरणाय विघाए नाणदंसणवहो वि । ववहारस्स उ चरणहायंमि भयणा उ सेसाणं"॥ ६ ॥ निश्चयनयस्य मतेन चरणात्मविघाते सति ज्ञानदर्शनयोरपि वधो विघातो द्रष्टव्यः ज्ञानदर्शनयोर्हि फलं चरणप्रतिपत्तिरूपा सन्मार्गप्रवृत्तिः । सा च नास्ति तर्हि ते अपि ज्ञानदर्शने परमार्थततोऽसती एव स्वकार्याकरणात् । उक्तं च मूलटीकायां चरणात्मविघाते ज्ञानदर्शनवधोऽपि तयोश्चरणफलत्वात् फलाभावे च हेतोर्निरर्थकत्वादिति । अपि च यश्चरणं प्रतिपद्य आहारलांपट्यादिना ततो न विनिवर्त्तते स नियमाद्भगवदाज्ञाविलोपादिदोष भागी भगवदाज्ञाविलोपादौ च वर्तमानो न सम्यग्ज्ञानी नापि सम्यग्दर्शनी । उक्तं च । "आणा इण्विय चरणं तब्भंगे जाण किं न तभग्गंति । आणं च अइक्कंतो कस्साए मा कुणइ सेसं । तथा जो जह वायं न कुणइ मिच्छदिट्ठीतउ-हुको अन्नो । वट्टेइयमिच्छत्तं परस्स संकं तणेमाणो" ॥ ततश्चरणविघाते नियमतो ज्ञानदर्शनविघातः । व्यवहारस्य व्यवहारनयस्य पुनर्मतेन हतेऽपि चरणे शेषयोर्ज्ञानदर्शनयोभजने कचिद्भवतः कचिन्न । य एकांतेन भगवतोविप्रतिपन्नस्तस्य न भवतो यस्तु देशविरतिं भगवति श्रद्धानमात्रं वा कुरुते तस्य व्यवहारनयमतेन सम्यग्दृष्टित्वाद्भवत इति । ततो निश्चयनयमतापेक्षया चरणात्मनि हते ज्ञानदर्शनरूपावप्यात्मानौ हताविवेति । परप्राणव्यपरोपणरतः समूलघातमात्मघ्न इति परप्राणव्यपरोपणमात्मघ्नं तत्त्वसाधोराधाकर्म भुञ्जानस्यानुमोदनादिद्वारेण नियमतः संभवतीत्युपचारतः आधाकर्म आत्मघ्नमित्युच्यते तदेवमुक्तमात्मघ्नंनाम ॥ पिंड० आत्मघ्नापिंडे ॥

आता ( या ) हिगरणवतिय—आत्माधिकरणप्रत्यय—त्रि०—आत्मनोऽधिकरणानि आत्माधिकरणानि तान्येव प्रत्ययः कारणं यत्र क्रियाकरणे तदात्माधिकरणप्रत्ययम् आत्माधिकरणकारणके "आयाहिगरणवत्तियं चणं तस्स नो इरियावहिया किरिया कज्जइ संपराइया किरिया कज्जइ" भ० ॥ साम्परायिकी क्रियत इति योगः ॥ भ०शत०७उद्दे० १

आता ( या )—हिगरणि (न् )—आत्माधिकरणिन्—पुं०—अधिकरणी कृष्यादिमान् आत्मनाऽधिकरणी. आत्माधिकरणी आत्मना कृष्यास्मिति, ॥ भ. शत. १६ उ. १॥ आया हिगरणी भवइ, आत्मा जीवोऽधिकरणानि हलशकटादीनि कषाया श्रयभूतानि यस्य सन्ति सोऽधिकरणीति ॥ भ० शत. ७ उ. १

आता ( या ) हिय—आत्महित—त्रि० आत्मोपकारके "परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् । आत्मानं यो न सन्धत्ते सोऽन्यस्मै स्यात्कथं हित, इति" आचा० उ० ५ ॥

आतित्थ—आतिथ्य—न० अतिथेरिदं ञ्यः १अतिथिपरिचर्यायाम । स्वार्थे ष्यञ् २ अतिथौ हेम० ॥

आतिदेसिय—आतिदेशिक—त्रि० अतिदेशादागतः—ठक् अतिदेशप्राप्ते—यथा प्रकृतिधर्मस्य विकृतौ आतिदेशिकत्वम् आतिदेशिकमनित्यम् ॥ वाच० ॥

आतिप्प—आतृप्य—न० आतृप्यत्यनेन*तृप—बा० करणे क्यप् । फलभेदे ॥ वाच० ॥

आतिरेक्क—आतिरेक्य—न० अतिरिच्यते कर्मणि घञ् तस्य भावः ष्यञ् अतिरेके—वृद्धौ स्वपरिणामातिरेके ॥ वाच० ॥

आति ( ती ) ण—आजिन—न० मूषिकादिचर्मनिष्पन्ने वस्त्रे । आतिणाणिवा, ॥आचा०॥ आजिनानि मूषिकादिचर्म्मनिष्पन्नानीति ॥ आचा० अ० ४ ॥

आती (अप्पी) कय—आत्मीकृत—त्रि० आत्मना गाढतरमागृहीते आत्मप्रदेशैस्तुलग्नतोयवन्मिश्रीभूते ॥ विशे० द्वा०१ ॥

आतीय—आतीत—त्रि० आ समन्तादतीव इतो ज्ञातः समन्तादतीव ज्ञाते, सामस्त्येनातिक्रान्ते, समन्तादतीव गते च, ॥ आचा०। (अणातीये) समन्तादतीव इतो गतोऽनाद्यनन्ते संसारे आतीतः न आतीतोऽनातीतः अनाप्तो वा संशयो येन स तथा संसारार्णवपारगामीत्यर्थ, इति आचा० विमोक्षाध्यनस्य उद्दे० ७॥

आत्मीय—त्रि० आत्मनोऽयम् छ आत्मसंबन्धिनि ।वाच० ॥

आतीयट्ठ—आतीतार्थ—त्रि० समन्तादतिशयेन ज्ञातजीवादिपदार्थे-सामस्त्येनातिक्रान्तार्थे—उपरतव्यापारे, —आतीयट्ठे-अणातीए,॥ आचा० उद्दे० ७टी०॥ आ समन्तादतीव इता ज्ञाता परिच्छिन्ना जीवादयोऽर्था येन सोऽयमतीतार्थः । आदत्तार्थेवा यदि वा अतीताः सामस्त्येनातिक्रांता अर्थाः प्रयोजनानि यस्य स तथा उपरतव्यापार इत्यर्थ इति आचा० ॥

आतुर—आतुर—त्रि० ईषदर्थे आ*आत—उरच् । कार्य्याक्षमे विव्हले ॥ उत्त० ॥

आतुरिय—आतुर्य्य—न० आतुरस्य भावः ष्यञ् आतुरत्वे ॥ वाच० ॥

आतेस्सर—आत्मेश्वर—त्रि० आत्मनो मनस ईश्वरः चित्तविकारनिवारके मनःसंयमकारके—"आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति" कुमा०वाच० ॥

आतेस्सरिय—आत्मैश्वर्य्य—न० स्वरूपसाम्राज्ये "स्वभावलाभात् किमपि प्राप्तव्यं नावशिष्यते ॥ इत्यात्मैश्वर्य्यसम्पन्नो-निःस्पृहो जायते मुनिरिति"॥ १ ॥ अष्ट० ।

आत्त—(ताय)—आदत्त—त्रि० गृहीते,—आतएणं सरीरसमुस्सपणं जिणदिट्ठेणं भावेणं, ॥ अनु० ॥ आत्तेन आदत्तेन वा गृहीतेन प्राकृतशैलीवशादात्मीयेन वेति अनु०। आवश्य. द्वा. १॥

आत्ततर—आत्ततर—त्रि०अतिशयेनात्तो गृहीत आत्ततरः यत्नेनाध्यवसिते ॥ आचा० अध्य. ८॥

आदं [ यं ] स—आदरिस—आदस्स—आदर्श—पुं० आदृश्यते ऽत्र—दृश—आधारे घञ्—॥ वाच०॥ आ समन्ताद्दृश्यते आत्मा यस्मिन् स आदर्शः ॥ सूत्र०स्कं. १ अध्य०४ ॥ दर्प्पणे, ॥ राज० ॥ आदसगं च पयच्छाहि, ।सूत्र० स्कं.१अ०। चक्षुरिंद्रियजज्ञाने च "श्रवणं वेदनादर्शो" ॥ द्वा० ॥ आदर्शचक्षुरिंद्रियजज्ञानं आ समंतात् दृश्यतेऽनुभूयते रूपमनेनेति कृत्वा यत्प्रकर्षाद्दिव्यरूपज्ञानमुत्पद्यते ॥

तत्राहि विम्बपदार्थस्य प्रतिबिम्बपतनात् तत्संयोगेन नयनरश्मीनां परावर्तने वा बिम्बग्राहितया बिम्बं दृश्यते इति तस्य तथात्वम् । आदृश्यते सम्यग्रूपेण ज्ञायते ग्राम्यार्थो यस्मिन्। टीकायां ३ प्रतिरूपपुस्तकादौ यत्रत्यमक्षरसन्निवेशं दृष्ट्वा तदनुरूपमन्यल्लिख्यते तादृशे पुस्तके । "यथादर्शं तथा लिखितमिति भूरि प्रयोगः। तत्र तदीयगुणान् दृष्ट्वा परैस्तथा गुणा आश्रीयन्त इति तस्य तथात्वम् ॥ ४ ॥ जनपदसीमाभेदे च ॥ वाच० ॥ वृषभादिग्रीवाभरणे च आदर्शस्तु वृषभादिग्रीवाभरणमिति ॥ अनु० द्वा० १ ॥

आदं [ यं ] सग—आदरिसग—आदसग—आदर्शक-पुं० आ समन्ताद्दृश्यते आत्मा यस्मिन् स आदर्शः स एवादर्शकः दर्पणे, सूत्र०प्र०श्रु०अ० ४ ॥ * राज०आदर्शे भवः भवादौ वुञ् जनपदावधिसूचकस्थानभवे च त्रि० ॥ वाच० ॥

आदं [ यं ] स—[ आदरिस ] [ आदस ] घरग—आदर्शगृहक—न०—आदर्शमये गृहे "आदसघरगा सव्वरयणामया" आदर्शगृहकाणि आदर्शमयानीव गृहाणि राज० टी० ॥ जं० ॥ जी० ॥ भरतस्यादर्शगृहस्थितिकथानकम्भरतशब्दे ॥ आ० म० प्र० ॥

आदं [ यं ] सतल—आदर्शतल—न० दर्पणतले, औप०

आदं [ यं ] स [ आदरिस ]—आदं [ स ] तलोवम—आदर्शतलोपम—त्रि० आदर्शोदर्पणस्तस्य तलन्तेन समतयोपमा यस्य आदर्शतलोपमः आदर्शतलवत्समे राज० ॥

आदं [ यं ] स [आदरिस आदस] मंडल—आदर्शमण्डल न० आदर्श इव मण्डलमस्य । आदर्शाकारमण्डलयुक्ते सर्पभेदे १ आदर्शोमण्डलमिव २ मण्डलाकारे दर्पणे न० ॥ वाच० ( आयंसमण्डलेइवा ) "जं० ॥ ( आयंसमंडलतलव्व पागढभावेण सुद्धभावे ) प्र० व्या० द्वा० ५ ॥

आदं [ यं ] स [ आदरिस—आदंस ] मुह—आदर्शमुख—पुं० स्वनामख्याते अन्तरद्वीपभेदे तद्वक्तव्यताऽन्तरद्वीपशब्दे जी० प्र० ३ ॥ प्रज्ञा० उत्त० नं० ॥

आदं [ यं ] स [आदरिस—आदस्स] लिवि—आदर्शलिपि—स्त्री० व्राह्मलिपेर्लेख्यविधानभेदे ॥ सम० सम० १८ ॥

आद [ य ] र—आदर—पुं०आ—दृ—कप्— । १ गौरवहेतुके, कर्मणि सम्माने, ॥ वाच० ॥ सत्कारे, स्था०ठा०६ ( तं पुरिसं आयरेण रक्खेज्जा ) ॥ आ० म० ॥ उचितकृत्यकरणे, षा० अ०१ । प्रयत्नातिशये, पंचा० उल्ला० २ ॥ "यत्रादरोऽस्ति परमः प्रीतिश्च हितोदया भवति । कर्तुः शेषत्यागेन करोति यच्च तत्प्रीत्यनुष्ठानं" ॥ आदृङः सन्नामः प्राकृतसूत्रेणाद्रियतेः सन्नाम इत्यादेशो वा भवति—सन्नामइ—आद्रेइ॥ प्रा० ॥

आद ( य) रण—आदरण—न० अभ्युपगमे, भ.। श. १२उ.५॥

आद ( य ) रणया—आदरणता—स्त्री० अभ्युपगमे "आयरणयत्ति" यतोमायाविशेषादादरणमभ्युपगमं कस्यापि वस्तुनः करोत्यसावादरणम् ताप्रत्ययस्य च स्वार्थिकत्वादादरणाया आचरणं वा परप्रतारणाय विविधक्रियाणामिति ॥ भ० श० १२ उ० ५

आद ( य ) रणिज्जा—आदरणीय—त्रि० आ—दृ—अनीयर् सम्माननीये—तव्य—आदर्तव्योऽप्यत्र ॥ त्रि० वाच० ॥

आद ( य ) रतर—आदरतर—पुं० अत्यादरे (आयरतरेण रंधंति ) अत्यादरेण राध्यंतीति, ॥ दश० अ० १ ॥

आद ( य ) राइजुत्त—आदरादियुक्त—त्रि० आदरकरण प्रीत्यादिसमन्विते—( स्यादादरादियुक्तं यत्तद्देवार्चनं चेष्टम् १४)॥ षो०॥ स्यादादरादियुक्तं यदादरकरणप्रीत्यादिसमन्वितं यत् तद्देवार्चनं चेष्टं तच्च देवार्चनमिष्टमिति ॥ षो० ॥

आदहण—आदहन—न० आ—दह—भावे—ल्युट्—दाहे—हिंसायाम् कुत्सने च आदह्यतेऽत्र आधारे ल्युट् श्मशाने ॥ वाच० ॥ आसमन्ताद्दहने ॥ सूत्र० ॥ श्रु० २॥ अ० १॥

आदाइ ( न् ) आदायिन्—त्रि० आदा—णिनि—ग्रहीतरि—स्त्रियां ङीप् ( योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्॥ याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ) ॥ मनु०वाच० ॥

आदा ( या ) ण—आदान—न० आ—दा—भावे ल्युट् ग्रहणे ॥ वाच०प्रश्न०द्वा०३ वृ. पं० व० ॥ औप० आ० चू० ॥ उत्त०॥ ॥ स्था०॥ विशे० प्रव० स्था०॥ आयाणं सुसमाहरे ॥सूत्र०प्र० श्रु० अ० ८ आहरेत् आददीत गृह्णीयादित्यर्थः इति ॥ सूत्र०प्र०॥ श्रु०अ०८ दंडसमादाणं संपेहाए। आचा०।दंडयन्ते व्यापाद्यन्ते प्राणिनो येन स दण्डस्तस्य सम्यगादानं ग्रहणमिति ॥आचा.॥ लोक०उद्दे०३ स्वीकरणे ॥ स्था० ठा०३॥ सयमाइयंति अन्ने वि आदियावेंति अन्नं पि आयतं तं समणुजाणंति ॥सूत्र०द्वि०श्रु० अ०१ स्वयमात्मना सावद्यमनुष्ठानमाददते स्वीकुर्वन्त्यन्यान्यप्यादापयंति ग्राहयंत्यन्यमप्यादानं परिग्रहं स्वीकुर्वन्तं समनुजानंतीति। सूत्र० द्वि०श्रु०अ०१। आदीयत इत्यादानम्। परिग्राह्ये वस्तुनि ॥ स्था० ठा०४॥ आदीयते गृह्यत इत्यादानम् धनधान्यादिके परिग्रहे ॥ अत्र० ॥ प्रव०कल्प०॥स्था० ठा०७॥ ( आयाणं नरयं दिस्स नायइज्जतणामवि ) ॥ उत्त० ६ ॥ साधुस्तृणमपि नायइज्ज इति नाददीत अदत्तं न गृह्णीत किं कृत्वा आदानं नरकं दृष्ट्वा आदीयते इत्यादानं धनधान्यादिकं परिग्रहं नरकं नरकहेतुत्वान्नरकं ज्ञात्वेत्यर्थः इति ॥ आदीयत इत्यादानं धनधान्यादि । कृत्यल्युटोऽन्यत्रापीति कर्मणि ल्युट् । आर्षत्वादादानीयं वा नरककारणत्वान्नरकं दृष्ट्वा किमित्याह नाददीत न गृह्णीत न स्वीकुर्य्यादिति यावत् । तणमवीति । तृणमप्यास्तां रजतरूप्यादीनि ॥ उत्त०॥ मिथ्यात्वादिनाऽऽदीयत इत्यादानम् । सूत्र.प्र.श्रु.अ.१३। आदीयते सावद्यानुष्ठाने स्वीक्रियत इत्यादानम्, अष्टप्रकारके कर्मणि ।सूत्र०।प्र.श्रु.अ. १३ आचा.॥ आदीयते कर्माऽनेनेत्यादानम् कर्मोपादाने ॥ आचा० ॥ ( सागारिए उवस्सए णो ठाणं वा चेतेज्जा आयाणमेयं, ॥ आचा० ॥ एयंखु मुणी आयाणं सया सुअक्खायधम्मे विधूतकप्पे णिज्झोसइत्ता ॥ आचा० ॥ एतद्यत्पूर्वोक्तं वक्ष्यमाणं वा खुर्वाक्यालंकारे आदीयत इत्यादानं कर्म आदीयत इति वाऽनेन कर्मेत्यादानं कर्मोपादानम् तच्च धर्मोपकरणातिरिक्तं वक्ष्यमाणं वस्त्रादि तन्मुनिर्झोषयित्वेति संबंधः ॥ आचा० धूता.उद्दे.३॥ संति मे तउ आयाणा जेहिं कीरइ पावगं।सूत्र. प्र.श्रु.अ.१॥ संति विद्यन्ते अमूनि त्रीणि आदीयंते स्वीक्रियंते अमीभिः कर्मेत्यादानानि । एतदेव द-

शयति। यैरादानैः क्रियते विधीयते निष्पाद्यते पापकं कल्मषमिति ॥ सूत्र० श्रु०१ अ०१ ॥ संखडिंसंखडिपडियाए णो अभिसंधारेज्जा गमणाए केवली बूया आयाणमेयं, आचा० ॥ केवली ब्रूयात् आदानमेतत् कर्मोपादानमेतत् पाठान्तरं वा आययणमेयंति आयतनं स्थानमेतद्दोषाणां यत्संखडीगमनमिति ॥ आचा० श्रु२ अ.१ उ.३ ॥ (एते आयाणा संति) आचा० ॥ यस्मादेतान्यायतनानि कर्मोपादानकारणानि सन्ति भवन्तीति ॥ आचा० ॥ आदीयते गृह्यते आत्मप्रदेशैः सह श्लिष्यते अष्टप्रकारं कर्म येन तदादानम्। हिंसाद्याश्रवद्वारे अष्टादशपापस्थानेषु च ( आयाणं सगडिज्जे ) आदीयते गृह्यते आत्मप्रदेशैः सह श्लिष्यते अष्टप्रकारं कर्म येन तदादानं हिंसाद्याश्रवद्वारमष्टादशपापस्थानरूपं वा तत् स्थितेर्निमित्तत्वात् कषायापादानं तद्भिता स्वकृतभिद् भवति स्वकृतमनेकजन्मोपात्तं कर्म भिनत्तीति स्वकृतभित् यो ह्यादानं कर्मणां कषायादि निरुणद्धि सोऽपूर्वकर्मप्रतिषिद्धप्रवेशः स्वकृतकर्मणां भेत्ता भवतीति भावः ॥ आचा० शीलो.उ४ ॥ कषाये परिग्रहे सावद्यानुष्ठाने च ॥ सूत्र० स्कं०१ अ०१६॥ जओजओ आदाणं अप्पणो पद्दोसे हेऊ तओ तओ आदाणतो पुव्वं पडिविरते, ॥ सूत्र० स्कं०१ अ० १६॥ आदीयते स्वीक्रियतेऽष्टप्रकारं कर्म येन तदादानम् कषायः परिग्रहः सावद्यानुष्ठानं वेति ॥ सूत्र० स्कं०१ अ०१६॥ 'पलिउंचणञ्च भयणञ्च, थंडिल्लुस्सयणाणिया ॥ धूणादाणाइं लोगंसि, तं विज्जं परिजाणिया, ॥ ११ ॥ परिसमन्तात् कुंच्यते वक्रतामापद्यते क्रिया येन मायानुष्ठानेन तत्पलिकुंचनं मायेति भण्यते। तथा भज्यते सर्वत्राऽऽत्मा प्रह्वीक्रियते येन स भजनो लोभस्तं तथा यदुदयेन ह्यात्मा सदसद्विवेकविकलत्वात् स्थंडिलवद्भवति स स्थंडिलः क्रोधः यस्मिंश्च सत्यूर्ध्वं श्रयति जात्यादिना दर्पाध्मातः पुरुष उत्तानी भवति स उच्छ्रायो मानः । छांदसत्वान्नपुंसकलिंगता। जात्यादीनामेतत्स्थानानां बहुत्वात् तत्कार्यस्यापि मानस्य बहुत्वमतोबहुवचनं । चकाराः स्वगतभेदसंसूचनार्थाः समुच्चयार्था वा। धूनयेति प्रत्येकं क्रिया योजनीया तद्यथा। पलिकुंचनं मायां धूनय धूनीहि वा। तथा-भजनं लोभं तथा स्थंडिलं क्रोधं तथा उच्छ्रायं मानं विचित्रत्वात् सूत्रस्य क्रमोल्लंघनानिर्देशो न दोषायेति यदि वा रागस्य दुस्त्यजत्वात् लोभस्य च मायापूर्वकत्वादित्यादावेव मायालोभयोरुपन्यास इति कषायपरित्यागे विधेये पुनरपरं कारणमाह। एतानि पलिकुंचनादीनि अस्मिन् लोके आदानानि वर्तते तदेतद्विद्वान् ज्ञपरिज्ञया परिज्ञानप्रत्याख्यानपरिज्ञया प्रत्याचक्षीत॥ ११ प्र.श्रु.अ.९॥ आदीयते स्वीक्रियते प्राप्यते वा मोक्षोयेन तदादानम्-ज्ञानदर्शनचारित्रेषु "वुसिए य विगयगेही आयाणं सरक्खए" विविधमनेकप्रकारमुषितः स्थितो दशविधचक्रवालसामाचर्यां व्युषितस्तथा विगताऽपगता आहारादौ गृद्धिर्यस्यासौ विगतगृद्धिः साधुरेवंभूतश्चादीयते स्वीक्रियते प्राप्यते वा मोक्षो येन तदादानीयं ज्ञानदर्शनचारित्रत्रयं तत्सम्यग्रक्षयेदनुपालयेत् यथा तस्यवृद्धिर्भवति तथा कुर्यादित्यर्थः ॥ सूत्र० टी० स्कं.१ अ.१॥ ( आयाणअट्ठी वोदाणमोणं) मोक्षार्थिनादीयत इत्यादानम् सम्यक् ज्ञानादिकमिति॥ सूत्र श्रु.१ अ.१४ (आयाणवन्तं समुदाहरेज्जा) मोक्षार्थमादीयत इत्यादानं सम्यग्दर्शनज्ञानचारित्ररूपं तद्विद्यते यस्यासावादानवानिति ॥ सूत्र० श्रु० २ अ० ६ आयणं सुसमाहरे, ॥ मोक्षस्यादानमुपादानं सम्यग्दर्शनादिकं सुष्ठूद्युक्तः सम्यग्विस्रोतसिकारहित आहरेत् आददीत गृह्णीयादित्यर्थः ॥ २० ॥ सूत्र० श्रु० १ अ० ८ ( अज्झप्पजोगसुद्धादाणे शुद्धमवदात- मादानं चरित्रं यस्य स शुद्धादानो भवतीति सूत्र० श्रु० १ अ० १६ आदीयत इत्यादानम् मोक्षे, ( आयाणमट्ठं खलु वंचइत्ता, ) आदीयत इत्यादानम् ज्ञानादिकं मोक्षो वा तमर्थं वंचयंति भ्रंशयंत्यात्मन इति– मोक्षार्थिनाऽऽदीयते गृह्यत इत्यादानम् सूत्र० श्रु० १ अ० १३ संयमे-( आयाणगुत्ते वलयाविमुक्के) मोक्षार्थिनाऽऽदीयते गृह्यत इत्यादानं संयमस्तेन तस्मिन्वा सति गुप्त इति ॥ सूत्र. स्कं १ अ० १३ संयमानुष्ठाने च ( एसवीरेपसंसिए जेण णियज्जन्ति आदाणाए, ॥ आचा० ॥ भोगाशाछंदविवेचकोऽप्रमादी पञ्चमहाव्रतभारारोहणोन्नामितस्कन्धो वीरः कर्मविदारणात् प्रशंसितः यतो देवराजादिभिः क एष वीरो नाम योऽभिष्टूयत इत्यत आह जे इत्यादि यो न निर्विद्यते न जुगुप्सते कस्मादादानाय आदीयते गृह्यतेऽवाप्यते आत्मस्वतत्त्वमशेषाचारककर्मक्षयाविर्भूतसमस्तवस्तुग्राहिज्ञानावाधसुखरूपं येन तदादानं संयमानुष्ठानं तस्मै न जुगुप्सते तद्वाकुर्वन् सिकताकेवलचर्वणादेशीयं क्वचिदलाभादौ न खेदमुपयातीति ॥ आचा० ॥ विज० उद्दे० ५ आदीयत इत्यादानम्– प्रथमव्रतग्रहणे--( जाव जीवाए जेहिं समणोवासगस्स आयाणं सो, आमरणं ताएदंडे निक्खित्ते ) सूत्र० स्कं० २ अ० ७ ॥ यावज्जीवेषु वा श्रमणोपासक स्यादीयत इत्यादानम्प्रथमव्रतग्रहणम् तत आरभ्य आमरणान्ताद्दण्डो निक्षिप्तः परित्यक्तो भवतीति ॥ सूत्र० स्कं० २ अ० ७॥ केनचिदादीयत इत्यादानम् कारणे, आयाणमेवं आयाणमेयंति कर्मणां दोषाणां वाऽऽदानं कारणमिति ॥ कल्प० ॥ एगइओ केणइ आयाणेणं विरुद्धे समाणे, ॥ सूत्र० स्कं० २ अ० २ ॥ अथैकः कश्चित् प्रकृत्या क्रोधनोऽसहिष्णुतया केनचिदादीयत इत्यादानम् शब्दादिकं कारणं तेन विरुद्धः समानः परस्यापकुर्यात् शब्दादानेन तावत्केनचिदाकुष्टो निन्दितो वाचा विरुध्येत् रूपादानेन तु बीभत्सं कंचन दृष्ट्वाऽपशकुनाध्यवसायेन कुप्येत- ॥ सूत्र० स्कं० २ अ० २ ॥ आदीयते गृह्यंते शब्दादयोऽर्था एभिरित्यादानानि इन्द्रिये-- वृ० ( केवलीणं आयाणेहिं न जाणइ न पासइ ॥ भ० ॥ मू० ॥ श० ५ उ० ४ ॥ आदीयते गृह्यतेऽर्थ एभिरित्यादानानीन्द्रियाणि तैर्न जानाति केवलित्वादिति ॥ भ० टी० "आयाणनिरुद्धाओ, आदानानीन्द्रियाणि निरुद्धानि यस्यां सा निरुद्धादाना गाथायां व्यत्यासेन पूर्वापरनिपातः प्राकृतत्वादिति– ॥ वृ० राजद्वा० ॥ आयाणगुत्ता विकहाविहीणा, आदानैरिन्द्रियैर्गुप्ता इति ॥ वृ० प्रत्यनीकद्वा० ॥ आदीयते कर्मानेनेत्यादानं दुष्प्रणिहिते इन्द्रिये च, ॥ आचा० ॥ "आयाणसोयमतिवायसोयं" ॥ आचा० ॥ आदीयते गृह्यते, प्रथममादौ यत्तदादानम् ॥ सूत्र० स्कं० १ अ० १० ॥ ॥ आचा० ॥ आदौ, ( प्रथमे ) ( आयाणपएनेयं ) उत्त० आदीयत इत्यादानमादिः प्रथममित्यर्थस्तच्च तत्पदञ्च निराकाङ्क्षतया अर्थगमत्वेन वाक्यमेवादानपदमिति ॥ उत० ॥ सेकिंतं आयाणपदेणं अनु० ॥ आदीयते तत्प्रथमतया उच्चारयितुमारभ्यते शास्त्र-

स्याध्ययनोद्देशकादेश्चादिपदमित्यथ इति अनु० नि० चू०॥ आदानशब्दस्य तत्पर्यायस्य च ग्रहणशब्दस्य च निक्षेपं कर्तुकामो निर्युक्तिकृदाह ॥ सूत्र० ॥ आदाणे गहणंमि य णिक्खेवो होंति दोक्खेत्र वि चउक्को। एगट्ठं नाणट्ठं च होज्ज पगयं तु आदाणे ( आदाण इत्यादि ) अथवा जमतीयंति ) अस्याध्ययनस्य नाम तच्चादानपदेनादावादीयते इत्यादानं तच्च ग्रहणमित्युच्यते । तत्रादानग्रहणयोर्निक्षेपार्थं निर्युक्तिकृदाह ( आदाणे इत्यादि ) आदीयते कार्यार्थिना तदित्यादानं। कर्मणि ल्युट्प्रत्ययः करणे वा दीयते गृह्यते स्वीक्रियते विवक्षितमनेनेति कृत्वा आदानं च पर्यायतोग्रहणमित्युच्यते । ततआदानग्रहणयोर्निक्षेपोभवति द्वौ चतुष्कौ। तद्यथा। नामादानं स्थापनादानं । द्रव्यादानं भावादानञ्च । तत्र नामस्थापने क्षुण्णे । द्रव्यादानं वित्तं यस्माल्लौकिकैः परित्यक्तान्यकर्त्तव्यैर्महता क्लेशेन तदादीयते तेन वाऽपरं द्विपदचतुष्पदादिकमादीयत इति कृत्वा। भावादानं तु द्विधा प्रशस्तमप्रशस्तं क्रोधाद्युदयमिथ्यात्वाविरत्यादिकं वा प्रशस्तं तूत्तरोत्तरगुणश्रेण्या विशुद्धाध्यवसायकंडकोपाख्यानं सम्यक्ज्ञानादिकं वेत्येतदर्थप्रतिपादनं परमेतदेव चाध्ययनं द्रष्टव्यम ॥ सूत्र० स्कं० १अ०१५॥

आ(दा)याणअट्ठि(न्) आदानार्थिन्—पुं० मोक्षार्थिनाऽऽदीयत इत्यादानम् सम्यक्ज्ञानादिकं तेनार्थः स एवार्थः आदानार्थः स विद्यते यस्यासावादानार्थी सम्यक् ज्ञानादिप्रयोजनवति "आयाणअट्ठी वोदाणमोणं"।सूत्र०श्रु०१अ०१४॥

आदा (या) णगुत्त–आदानगुप्त–त्रि० संयमगुप्ते मनोवाक्कायैः कर्मणि गुप्ते च"आयाणगुत्ते वलयाविमुक्के"॥सूत्र.स्कं.१अ.१२ मोक्षार्थिनाऽऽदीयते गृह्यत इत्यादानं संयमस्तेन तस्मिन्वासति गुप्तो यदि वा मिथ्यात्वादिनाऽऽदीयते इत्यादानमष्टप्रकारकं कर्म तस्मिन्नादातव्ये मनोवाक्काये गुप्तःसमितश्चेति ॥ सूत्र.स्कं.१अ. १३ ॥

इन्द्रियैर्गुप्ते च ( आयाणगुत्ता विकहाविहीणा ) आदानैरिन्द्रियैर्गुप्त इति ॥ बृ० प्रत्यनीकद्वा० ॥

आदा ( या ) णणिक्खेवदुगुंछय—आदाननिक्षेपजुगुप्सक त्रि० आदाननिक्षेपौ पात्रादेर्ग्रहणमोक्षौ आगमप्रतिषिद्धौ जुगुप्सा तेन करोतीति आदाननिक्षेपजुगुप्सकः ॥ आगमप्रतिषिद्धौ पात्रादेर्ग्रहणमोक्षौ च कुर्वति—आगमानुसारेण प्रत्यवेक्षणप्रमार्जनपूर्वमुपयुक्तः सन्नुपधेरादाननिक्षेपौ करोतीत्यर्थ इति ॥ प्रव० द्वा. ७२ ॥

आदा [ या ] णनिरुद्ध––निरुद्धादान—त्रि० निरुद्धेन्द्रिये ( आयाणनिरुद्धाओ ) आदानानि इन्द्रियाणि निरुद्धानि यस्यां सा निरुद्धादाना गाथायां व्यत्यासेन पूर्वापरनिपातः प्राकृतत्वादिति ॥ बृ. राजद्वा.॥

आदा [ या ]णपय––आदानपद––न० आदीयते गृह्यते प्रथममादौ यत्तदादानम् आदानञ्च तत्पदं च सुबन्तं तिङन्तं वा तदादानपदम् ॥सूत्र.स्कं.१अ.१५॥ शास्त्रस्वाध्ययनोद्देशकादेश्चादिपदे ॥ अनु० ॥ येषामादानपदेनाभिधानं तन्मतेनादौ यत्पदं तदादानपदमिति ॥ सूत्रु. स्कं. १ अ.१५ उत्त. ॥

से किं तं आयाणपदेणं २ धम्मो मंगलं चूलिआ चाउरंगिज्जं असंखयं आवंती अहा तत्थिज्जं अइइज्जं जण्णइज्जं पुरुषइज्जं एलइज्जं वीरयं धम्मो मग्गो समोसरणं गंत्थो जंमहियं सेतं आयाण पएणं ॥ अनु० ॥

टी० ॥ से किं तं आयाणपएणमित्यादि आदीयते तत्प्रथम तया उच्चारयितुमारभ्यते शास्त्रायनेनेत्यादानं तच्च तत्पदं चादानपदं शास्त्रस्याध्ययनोद्देशकादेश्चादिपदमित्यर्थस्तेन हेतुभूतेन किमपि नाम भवति तच्चआवंतीत्यादि तत्र आवंतीत्याचारस्य पंचमाध्ययनं तत्र ह्यादावेवावंतीत्यालापको विद्यत इत्यादानपदेनैतन्नाम। चाउरंगिज्जंति एतदुत्तराध्ययनेषु तृतीयमध्ययनं। तत्र "चत्तारिपरमंगाणि दुल्लहाणीह जंतुणो"इत्यादि विद्यते असंखयंति इदमप्युत्तराध्ययनेष्वेव चतुर्थमध्ययनं तत्र च आदावेव"असंखयं जीवियमापमायए" इत्येतत् पदमस्ति। ततस्तेनेदं नाम एवमन्यान्यपि कानिचिदुत्तराध्ययनांतर्वर्तीन्यध्ययनानि कानिचित्तु दशवैकालिकसुयगडाध्ययनानि स्वधिया भावनीयानि ॥

आदा [ या ] णफलिह––आदानपरिघ—पुं० आदीयते द्वारस्थगनार्थं गृह्यत इत्यादानः स चासौ परिघश्चादानपरिघः द्वारस्थगनार्थङ्ग्राह्यायामर्गलायाम्॥ जं०॥ जी० प्र०४ आदीयत इत्यादानमादेयो रम्यो यः परिघोऽर्गला स आदानपरिघः रम्यायामर्गलायाम् ॥ प्रश्न० द्वा० ४ ॥

आदा [ या ]णभंडमत्तनिक्खेवणासमिइ—आदानभाण्डमात्रनिक्षेपणासमिति––स्त्री०आदाने ग्रहणे भाण्डमात्राया उपकरणमात्रेया भाण्डस्य वा वस्त्राद्युपकरणस्य मृण्मयादिपात्रस्य वा साधुभाजनविशेषस्य निक्षेपणायां च समितिः सुप्रत्युपेक्षितसुमार्जितक्रमेणेति आदानभाण्डमात्रनिक्षेपणासमितिः। समितिभेदे ॥ पा० स्था०ठा०७॥समः स०४ नि०चू० ॥ भाण्डमात्रे आदाननिक्षेपविषया सुन्द रचेष्टेति ॥स्था० ठा०५॥ इह च सत्त भंगा होन्ति पत्तादि न पडिलेहइ ण य मज्जइ चउभंगो एत्थ चउत्थे चत्तारि गमा दुप्पडिलेहियं दुप्पमज्जियं चउभंगो आइल्लाछ अप्पसत्था चरिमोपसत्थो, आव. । पा. गा. उ. ७ टी. । तत्राप्युदाहरणं एकस्स आयरियस्स पंच सीससयाइं तेसिमेगो सेट्ठिसुओ पव्वइओ ॥ सो जो जो साहू एइ तस्स २डंडगं निक्खिवइ। एवं तस्स ओवट्ठियस्स अन्नो एत्ति अन्नो जोइ तह वि सो भगवं अतुरियं अववलं । उवरिं हेट्ठोयमज्जओ ववेइ । एवं बहुएण वि कालेण न परितम्मइ ॥ पा० ॥

आदा [ या ] णभंडमतनिक्खेवणासमिय—आदानभाण्डमात्रनिक्षेपणासमित–त्रि० आदानेन ग्रहणेन सह भाण्डमात्रा या उपकरणपरिच्छदस्य या निक्षेपणा न्यासस्तस्यां समितो यः स तथा आदानभाण्डमात्रनिक्षेपणासमितो"सम्यक् प्रवृत्ते" ॥ भ. श. २उ. १ सूत्र. स्कं. २अ. २ ॥

आदा [ या ] णभय—आदानभय–न० आदीयत इत्यादानं धनं तदर्थं चौरादिभ्यो यद्भयं तदादानभयं ॥ आव० ॥ ॥ स्था० ठा०७॥ भयस्थानभेदे सम० स० ७ ॥ नि० चू० ॥ आदानभयं आदानं पुण्यार्थमपुण्यार्थं वा परेण राजादिना वितरितग्रामनगरभूखण्डादेः स्वीकरणं तदेव भयमादान

भयम मा कंचनापराधमवाप्य तद् ग्रहीष्यतीति ॥ दर्श० ॥

आदा [ या ] णभरिय–आदानभृत–न० आग्रहणभृते, "आदाणभरियंसि कडाहयंसि अद्दहेमि" आदाणमाग्रहणं यदुदकतैलादिकमन्यतरद्रव्यपाकायाग्नावुत्ताप्यत्ते तद्भृते इति ॥ उपा० ॥

आदा [ य ] णया–आदानता–स्त्री० ग्रहणतायाम् इह च ताप्रत्ययः स्वार्थिकः प्राकृतत्वेनादानादीनां भावविवक्षया वेति, ॥ स्था० ठा० २ ॥

आदा [ या ] णवंत–आदानवत्–त्रि० मोक्षार्थमादीयत इत्यादानम सम्यग्दर्शनज्ञानचारित्ररूपं तद्विद्यते यस्यासावादानवान् सम्यग्दर्शनज्ञानचारित्रवति साधौ ॥सूत्र०स्कं.२अ.६॥ ( आयाणवन्तं समुदाहरेज्जा ) स्कं० २ अ० ६ ॥

आदा [ या ] णसोयगढिय–आदानश्रोतोगृद्ध–त्रि० आदीयते कर्मानेनेन्यादानन्दुष्प्रणिहितमिन्द्रियमादानञ्च श्रोतश्चादानश्रोतः ॥ आचा० ॥ आदीयते सावद्यानुष्ठानेन स्वीक्रियते इत्यादानं कर्म संसारबीजभूतन्तस्य श्रोतांसीन्द्रियविषया मिथ्यात्वाविरतिप्रमादकषाययोगाश्च तेषु गृद्धोऽध्युपपन्नः ॥ आचा० ॥ " आदानश्रोतस्यध्युपपन्ने–( आयाणसोयं गढिए बाले अवोच्छिन्नबंधणे अणभिक्कंतसंजोए तमंसि अविजाणओ आणाए लंभोणत्थि तिबेमि, आचा० ॥ आदानश्रोतोगृद्धः । स्यात्कोऽसौ–बालोऽज्ञः रागद्वेषमहामोहाभिभूतांतःकरणः यश्चादानश्रोतोगृद्धः स किं भूतः स्यादित्याह अव्वोच्छिन्नबंधणा इत्यादि अव्यवछिन्नं जन्मशतानुवृत्तिबंधमष्टप्रकारं कर्म्म यस्य स तथा किञ्च अणभिक्कंत इत्यादि अनभिक्रांतोऽनतिलङ्घितः संयोगोधनधान्यहिरण्य पुत्रकलत्रादिकृतोऽसंयमसंयोगो वा येनासावनभिक्रांत संयोगः तस्य चैवं भूतस्येन्द्रियानुकूल्यरूपे मोहात्मके वा तमसि वर्त्तमानस्यात्महितं मोक्षोपायं वा अविजानत आज्ञायास्तीर्थकरोपदेशस्य लाभो नास्तीत्येतदहं ब्रवीमि तीर्थकरवचनोपलब्धसद्भाव इति ॥ आचा० अ०४ ॥

आदा [या] णिज्ज–आदानीय–त्रि० आदीयत उपादीयतइत्यादानीयः उपादेये ॥ स्था. ठा. ६ ॥ सम.सम.७०॥ ग्राह्ये,–( आयाणिज्जे वियाहिए) आचा.॥ सवीराणां मार्गं प्रतिपन्नमांसशोणितयोरपनेता मुमुक्षूणामादनीयोग्राह्य आदेयवचनश्च व्याख्यान इति ॥ आचा० अध्य०४ ॥ आदीयंत गृह्यन्ते सर्वभावा अनेनेत्यादानीयम् श्रुते भोगाङ्गे, द्विपदचतुष्पद धनधान्यहिरण्यादिके ॥ आचा० ॥ आदीयत इत्यादानीयम् कर्मणि, ॥ आचा० ॥ ( आयाणिज्जं च आदाय तंमि ठाणेण चिट्ठइ ) आचा० आदीयंते गृह्यन्ते सर्वभावा अनेनेत्यादानीयं श्रुतम् तदादाय तदुक्ते तस्मिन् संयमस्थाने न तिष्ठति । यदि वा आदानीयमादातव्यं भोगाङ्गं द्विपदचतुष्पदधनधान्यहिरण्यादि तदादाय गृहीत्वा अथ वा मिथ्यात्वाविरतिप्रमादकषाययोगैरादानीयं कर्मादाय किंभूतो भवतीत्याह । तस्मिन् ज्ञानादिमये मोक्षमार्गे सम्यगुपदेशे वा प्रशस्तगुणस्थाने न तिष्ठति नात्मानं विधत्ते इति ॥आचा.विज. उद्दे४ (आयाणिज्जं परिण्णाय परियाएणं विगिंचइ)॥ आचा.॥ आदीयत इत्यादानीयं कर्म तत् परिज्ञाय मूलोत्तरप्रकृतिभेदतो ज्ञात्वा पर्य्यायेण श्रामण्येन विवेचयति क्षपयतीत्यर्थ इति ॥ आचा. श्रुता. ... [illegible]

मादानीया आश्रयणीयाः पुरुषादानीयाः महान्तोऽपि महीयांसो भवन्ति । यदि वा आदानीयोहितैषिणां मोक्षस्तन्मार्गो वा सम्यग्दर्शनादिकः पुरुषाणां मनुष्याणामादानीयः स विद्यते येषामिति विगृह्य मत्वर्थीयोऽर्श आदिभ्योऽजिति । सूत्र.स्कं१.अ.९।(से तं संबुज्झमाणे आयाणीयं समुट्ठाए तम्हा पावं कम्मं णेव कुज्जा ण कारवेसिवा, ॥ आचा० ॥ यस्यानगारस्यैतत् पूर्वोक्तं न जायते सोऽनगारस्तत्प्राण्युपघातकारिचिकित्सोपदेशदानमनुष्ठानं वा संबुध्यमानोऽवगच्छन् ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च परिहरन्नादातव्यमादानीयं तच्च परमार्थतोभावादानाय ज्ञानदर्शनचारित्ररूपं तदुत्थायेत्यनेकार्थत्वादादाय गृहीत्वाऽथवा सोऽनगार एतदानीयं ज्ञानाद्यपवर्गकारणमित्येवं सम्यगवबुध्यमानः सम्यक् संयमानुष्ठानेनोत्थाय सर्वं सावद्यं कर्म न मया कर्त्तव्यमित्येवं प्रतिज्ञामन्दरमारुह्य क्त्वा प्रत्ययस्य पूर्वकालाभिधायित्वात् किं कुर्यादित्याह । तम्हा इत्यादि ॥ आचा० ॥ आयाणियं समुत्थाय ॥ आचा० ॥ आदानीयं ग्राह्यं सम्यग्दर्शनादि सम्यगुत्थायाभ्युपगम्येति ॥ ॥ आचा० ॥

आदा ( या ) णिज्जज्झयण–आदानीयाध्ययन–न० मोक्षार्थिनाऽशेषकर्म्मक्षयार्थं यज्ज्ञानादिकमादीयते तदत्र प्रतिपाद्यत इतिकृत्वाऽऽदानीयमिति नाम संवृत्तं सूत्रकृताङ्गस्य स्वनामख्याते पञ्चदशेऽध्ययने।सूत्र.स्कं.१अ. १५॥ आदानपदमाश्रित्यास्याभिधानमाकार्य्यादानीयं वा ज्ञानादिकमाश्रित्य नाम कृतमिति आदानीयाभिधानस्यान्यथा वा प्रवृत्तिनिमित्तमाह। सूत्र. स्कं.१ अ.१५॥ जंपढमस्संतिमए बितियस्सओ तहवेज्जआर्दिमि । एतेणादाणिज्जं एसो अन्नो वि पज्जाओ ॥ ३५ ॥ आचा. ॥ यत्पदं प्रथमश्लोकस्य तदर्धस्य चांते पर्यंते तदेव पदं शब्दतोऽर्थत उभयतश्च द्वितीयश्लोकस्यादौ तदर्धस्य चादौ भवत्येतेन प्रकारेणाद्यपदसदृशत्वेनादानीयं भवत्येव आदानीयाभिधानप्रवृत्तेः पर्यायोऽन्यो वा विशिष्टज्ञानाद्यादानीयोपादानादिति । केचित्तु पुनरस्याध्ययनस्यांतादिपदयोः संकलनात्संकलिकेति नाम कुर्वते । तस्या अपि नामादिकश्चतुर्धा निक्षेपो विधेयः तत्रापि द्रव्य संकलिका निगडादौ भावसंकलना तूत्तरोत्तरविशिष्टावसायसंकलनमिदमेव वाऽध्ययनमाद्यंतपदयोःसंकलनादिति ।सूत्र.स्कं.१अ.१५। पंचदशे त्वादानीयाख्येऽध्ययनेऽर्थाधिकारोऽयम् तद्यथा ( आदाणियसंकलिया आदाणीयंमि आदाय चरित्तंति ) निर्युक्तिः।सूत्र. स्कं.१अ. १। आदीयंते गृह्यन्ते उपादीयंते, इत्यादानीयानि पदान्यर्था वा ते च प्रागुपन्यस्तपदैरर्थश्च प्रायशोऽत्र संकलिताः तथाऽऽयतं चरित्रं सम्यक् चरित्रं मोक्षमार्गप्रसाधकं तच्चात्र व्यावर्ण्यत इति ॥ सूत्र. स्कं.१अ.१॥

आदा ( या ) य–आदाय–अव्य० आ–दा–ल्यप्–गृहीत्वेत्यर्थे–सूत्र० स्कं. १ अ. ३ ॥ ( इमं च धम्ममादाय कासवेण पवेइयं. सूत्र० स्कं. १ अ. ३॥ आदायोपादायाचार्य्योपदेशेन गृहीत्वेति० ॥ सूत्र० स्कं. १ अ. ३ आचा० ॥ प्राप्येत्यर्थे.– ( एवं विवेगमादाय ) सूत्र० श्रु. स्कं. १ अ. ४ ॥ विपाकं [illegible] ... विवेकमिति वा [illegible] ... [illegible] स्कं. ६ ...

त्यर्थे, उत्त० अवगम्येत्यर्थे ( आयाए एगंतमवक्कमेज्जा ) आदायावगम्यैकान्तमपक्रामेदिति ।-आदाने-।-पुं० वाच० ॥

आदा [ या ] हिणपयाहिण--आदक्षिणप्रदक्षिण--त्रि० आद-क्षिणात् दक्षिणहस्तादारभ्य प्रदक्षिणः परितो भ्राम्यतो-दक्षिण एव आदक्षिणप्रदक्षिणः ॥ राज० ॥ आदक्षिणाद्द-क्षिणपार्श्वादारभ्य प्रदक्षिणो दक्षिणपार्श्ववर्ती आदक्षिण-प्रदक्षिणः ॥ विपा० अ०१ ॥ दक्षिणपार्श्वादारभ्य परितोभ्रा-म्यत्तो दक्षिणपार्श्ववर्तिनि,-( समणं भगवं महावीरं ति-क्खुत्तो आयाहिणपयाहिणं करेइ ) आदक्षिणाद्दक्षिणहस्ता-दारभ्य प्रदक्षिणः परितो भ्राम्यतो दक्षिण एव आदक्षि-णप्रदक्षिणोऽतस्तं करोतीति ॥ भ० श०१उ०१॥ नि० । औप० । आयाहिणपयाहिणं करेंति, आ सर्वतः समन्तात् परिभ्र-मतां दक्षिणमेव जन्म भवनं यथा भवत्येवं प्रदक्षिणं कुर्व-न्तीति ।-आ०म०प्र० ॥

आदा [ या ] हिणपयाहिणा--आदक्षिणप्रदक्षिणा--स्त्री० आ-दक्षिणतः पार्श्वात्प्रदक्षिणा पार्श्वभ्रमणमादक्षिणप्रदक्षिणा ॥स्था०ठा०१॥दक्षिणपार्श्वादारभ्य परिभ्रमणतो दक्षिणपार्श्व-प्राप्तौ-( अज्जसुहम्मं थेरं तिक्खुत्तो आयाहिणपयाहिणं क-रेइ ) त्रिःकृत्वस्त्रीन्वारान् आदक्षिणप्रदक्षिणां दक्षिणपार्श्वादारभ्य परिभ्रमणतो दक्षिणपार्श्वप्राप्तिराद-क्षिणप्रदक्षिणा तां करोतीति ।-नि० ॥

आदिच्च--आदृत्य--त्रि० आ दृ कर्म्मणि क्यप् आदरणीये आद-र्तव्ये ल्यप् सम्मान्येत्यर्थे अव्य० वाच० ॥

आदिच्छा--आदित्सा--स्त्री० आदातुमिच्छायाम् आव० ॥

आदिच्छु--आदित्सु--त्रि० आ दा सन् उ ग्रहीतुमिच्छौ वाच०

आदिट्ठि--आदृष्टि--स्त्री० प्रा० स० त्रिविभागसंकोचित-दृष्टौ, ॥ वाच० ॥

आदिम--आदिम--त्रि० अग्रिमे, ( आवासगमाईया सूयगडा जाव आइमा भावा ) आवश्यकादयः सूत्रकृताङ्गं यावत् ये आगमग्रन्थास्तेषु ये पदार्था अभिधेयास्ते आदिमा भावा उच्यन्ते, ॥ वृ० ॥

आदियावण--आदापन--न० ग्राहणायाम्--( स य माइ-अंति अन्ने वि आदियावेंति)॥सूत्र० श्रु० २ अ०१॥ स्वयमात्मना सावद्यमनुष्ठानमाददते स्वीकुर्वन्ति अन्यान्यप्यादापयंति ग्राहयंतीति-।-सूत्र० स्कं. श्रु. २अ १ ॥

आदीण--आदीन--त्रि० आ समन्ताद्दीन आदीनः समन्तात्क-रुणास्पदे-।-सूत्र० श्रु०१अ १० ॥

आदीणभोइ ( न् )--आदीनभोजिन्--पुं० पतितपिण्डोपजीवि-नि,-"आदीणभोई वि करेइ पावं" ॥ सूत्र०स्कं.१अ०१०॥ आदी-नभोज्यपि पापं करोति। उक्तं च ( पिंडोलकेव दुःसीले णर-गाओ ण २मुच्चइ ) स कदाचिच्छोभनमाहारमलभमानोऽल्प-त्यादार्त्तरौद्रध्यानोपगतोऽप्यधः सप्तम्यामप्युत्पद्येत । तद्य-था ॥ असाविव राजगृहनगरोत्सवनिर्गतजनसमूहो वैभा-रगिरिशिलापातनोद्यतः स दैवात्स्वयं पतितपिंडोपजी-वीति तदेवमादीनभोज्यपि पिंडोलकादिवज्जनः पापं कर्म करोति ॥ सूत्र० ॥ स्कंध० १ अ० १०

आदीणवित्ति--आदीनवृत्ति--त्रि० आ समन्ताद्दीना करुणास्प-दा वृत्तिरनुष्ठानं यस्य,-(आदीणवित्ती विकरेइ पावं ) सूत्र० स्कं. १ अ. १० ॥
आ समंताद्दीना करुणास्पदा वृत्तिरनुष्ठानं यस्य कृपणव-नीयकादेः सभक्त्यादीनवृत्तिरेवंभूतोऽपि पापं कर्म करो-ति सूत्र० स्कं.१ अ. १० ॥

आदीणिय--आदीनिक--त्रि० आसमन्ताद्दीनमादीनं तद्विद्यते यस्मिन्स आदीनिकः अत्यंतदीनसत्वाश्रये सूत्र० स्कं.१अ.५ ( आदीणियंउक्कडियं पुरत्था, सूत्र० स्कं. १ अ४ ॥

आदीव--आदीप--अव्य० दीपादारभ्येत्यर्थे ॥ स्या० ॥

आदीवग--आदीपक--त्रि० आदीपयत्यन्यगृहमग्निना आदीप णिच्-ण्वुल्-परगृहस्य दाहके उद्दीपके च वाच० ॥

आदीवण--आदीपन--न० आ-दीप-णिच्-ल्युट्-तण्डुलादि-चूर्णमिश्रितजलेन गृहादौ चित्राकारलेपनभेदे--उद्दीपने च ।-वाच० ॥

आदीविय--आदीपित--त्रि० आ-दीप-णिच्-क्त-दन्तादीपने गृहाङ्गनादौ उद्दीपिते च ॥ वाच० ॥

आदेवण--आदेवन--न० आ-दिव-भावे-ल्युट्-द्यूतक्रीडा-याम्--करणे ल्युट् द्यूतसाधने पाशकादौ आधारे ल्युट्-द्यूतक्रीडाधारे द्यूतफलके ॥ वाच० ॥

आध ( ह ) मण--आधमन--न० आधीयते-आ ध । कमनन् बन्धकदाने ॥ वाच० ॥

आध ( ह ) रिसिय--आधर्षित--त्रि० आ-धृष्-क्त-अवैया-त्ये इट् गुणश्च-अवमानिते-तिरस्कृते-बलात्कारेणाभिभू-ते च ॥ वाच० ॥ ( तेण भणियं जोचंडमेहं दूयं आधरिसे-हित्ति,-॥ आ० म० प्र० ॥ आहरिसिओ दूओ संभंतेण निय-त्तिओ ॥ आ० म० प्र० ॥

आधा (हा) आधा--स्त्री आधानमाधा उपसर्गादत इत्यङ्प्रत्य यः ॥साधुनिमित्तं चेतसः प्रणिधाने पंचा० पिं० ॥ प्रव० ॥ प्र० व्या० ॥ दशा० ॥ ग० अ०१ ॥ वृ० ॥ करणे, ॥ उत्त० ॥ अ० ५ आधीयतेऽस्यामित्याधा आश्रये--आधाऽऽश्रय आधार इत्यन-र्थान्तरमिति सापि चाधानामादिभेदाच्चतुर्द्धा । तद्यथा । नामाधा स्थापनाधा द्रव्याधा भावाधा च । तत्र नामा-धा द्रव्याधा पि च आगमतो नो आगमतश्च ज्ञशरीर-रूपा भव्यशरीररूपा च एषणैव भावनीया ज्ञशरीरभव्य-शरीरव्यतिरिक्ते तु द्रव्याधामभिधित्सुराह । "धणुज्जूयका-यभराणं कुडुंबरज्जधुरमाइयाणं च । खंधाई हिययं चिय दव्वाहा अंतए धणुणो,, इह द्रव्याधायां विचार्यमाणा-यामाधाशब्दाधिकरणप्रधानो विवक्ष्यते । आधीयते अस्या-मित्याधा आश्रय आधार इत्यनर्थांतरं । तत्र "धणुत्ति" धनुश्चापं तत्र आधा आश्रयः प्रत्यंचाया इति सामर्थ्या-द्गम्यते । यूपः प्रतीतः । कायःकापोती यया पुरुषः स्कं-धारूढया पानीयं वहति । भरो यवसादिसमूहः तथा कुटुंबं पुत्रकलत्रादिसमुदायः राज्यं प्रतीतं तयोर्धूर्श्चिता आदिशब्दान्महाजनधूः प्रभृतिपरिग्रहः तेषां च यथासं-ख्यं द्रव्याधा द्रव्यरूप आधारस्कन्धादिहृदयं च । तत्र स्कन्धो बलीवर्दादिस्कन्धो नरादिस्कन्धश्च परिगृह्यते आदिशब्दात् गंत्र्यादिपरिग्रहः तत्र यूपस्य द्रव्याधा द्र-व्यरूप आश्रयो वृषभादिस्कंधः सहि यूपस्तत्रारोप्यते ।

कापोत्या आश्रयो नरस्कंधः नरो हि पानीयानयनाय कापोतीं स्कंधेन वहति। भारस्याश्रयो गंत्र्यादि, महाप्रमाणो हि भारो गंत्र्यादिनैवानेतुं शक्यते नान्येन। तथा कुटुंबचिंताया राज्यचिन्तायाश्चाश्रयो हृदयं मनोहृदयमंतरेण चिंताया अयोगात् धनुर्विषये भावनामाह। अंतके करहलके धनुषः संबंधिनि प्रत्यंचाऽऽरोप्यते ततो धनुः प्रत्यंचाया आश्रयः। एवं शेषाणामपि यूपादीनृप्रत्याश्रयत्वं भावनीयं। तच्च भावितमेव उक्ता द्रव्याधा। संप्रति भावाधा वक्तव्या सा च द्विधा आगमतो नो आगमतश्च तत्रागमत आधाशब्दार्थपरिज्ञानकुशलस्तत्र चोपयुक्त उपयोगो भावनिक्षेप इति वचनात्। नोआगमतस्तु भावाधा यत्र तत्र वा मनः प्रणिधानं। तथा हि भावो नाम मानसिकः परिणामस्तस्य चाधानं निष्पादनं भवति मनसस्तदनुगुणतया तेन रूपेण परिणमने सति नान्यथा। ततो मनः प्रणिधानं भावाधा सा चेह प्रस्तावात्साधुदानार्थमोदनपचनपाचनादिविषया द्रष्टव्या॥ पिं०॥

**आधा ( हा ) कम्म**—आधाकर्म—न० आधानमाधा उपसर्गादत इत्यङ् प्रत्ययः। साधुनिमित्तं चेतसा प्रणिधानम् यथाऽमुकस्य साधोः कारणेन मया भक्तादिपचनीयमिति आधायाः कर्म पाकादिक्रिया आधाकर्म तद्योगात् भक्ताद्यप्याधाकर्म। इह दोषाभिधानप्रक्रमेऽपि यद्दोषवतोऽभिधानं तद्दोषदोषवतोरभेदविवक्षया। द्रष्टव्यम ॥ पिं० ॥ प्रव०॥ साधूनामाधया प्रणिधा पिण्डनिर्युक्ताबाधाकर्मदोषं व्याचिख्यासुस्तत्प्रतिबद्धद्वारगाथामाह ॥पिं.॥

( १ ) वक्तव्यसंग्रहः।
( २ ) व्युत्पत्तयः।
( ३ ) प्रतिषेवणादीनि।
( ४ ) प्रतिश्रवणस्वरूपम।
( ५ ) एकार्थिकानि आधाकर्मणः।
( ६ ) आधाकर्माश्रित्य कल्पाकल्पविधिः।
( ७ ) तीर्थकरस्य आधाकर्मभोजित्वम।
( ८ ) द्वाविंशतिजिनेषु कल्पाकल्पविधिः।
( ९ ) अशनादिषु आधाकर्मसंभवः।
( १० ) आधाकर्मण एवाकल्पविधिः।
( ११ ) आधाकर्मभोजिनां कटुकविपाकः।
( १२ ) आधाकर्मभोजिनां बन्धः।

(१) आहाकम्मिय नामा एगट्ठा कस्स वा वि किं वा वि।
परपक्खे य सपक्खे चउरो गहणे य आणाई॥ ९९॥

इह प्रथमत आधाकर्मिकस्य नामान्येकार्थिकानि वक्तव्यानि ततस्तदनंतरं कस्यार्थकृतमाधाकर्म भवतीति विचारणीयं तदनंतरं च किंस्वरूपमाधाकर्मेति विचार्यं। तथा परपक्षो गृहस्थवर्गः स्वपक्षसाध्व्यादिवर्गः तत्र परपक्षनिमित्तं कृतमाधाकर्म्म न भवति। स्वपक्षनिमित्तं तु कृतं भवतीति वक्तव्यं। तथा आधाकर्म्मग्रहणविषये चत्वारोऽतिक्रमादयः प्रकारा भवंतीति वक्तव्यं तथा ग्रहणे आधाकर्मणो भक्तादेरादाने आज्ञादयः सूचनात्सूत्रमिति न्यायादाज्ञाभंगाद्या दोषा वक्तव्या तत्रैकार्थिकाभिधानलक्षणं प्रथमं द्वारं विवक्षुराह—

आहा आहेयकम्मे आयाहम्मे य अत्तकम्मे य।
पडिसेवणपडिसुणणासंवासणुमोयणा चेव॥ ९१॥

आहा आहेयकम्मेत्ति॥ "अत्र कर्मशब्दः प्रत्येकमभिसंबध्यते। चकारश्च कर्मेत्यनंतरं समुच्चयार्थो द्रष्टव्यः तत एवं निर्देशो ज्ञातव्यः आधाकर्म अधः कर्म च। तत्राधाकर्मेति प्रागुक्तशब्दार्थं। अधःकर्मेति अधोगतिनिबंधनं कर्म्म अधः कर्म्म। तथा हि भवति साधूनामाधाकर्म्म भुंजानानामाधागतिस्तन्निबंधनप्राणातिपाताद्याश्रवेषु प्रवृत्तेः। तथा आत्मानं दुर्गतिप्रपातकारणतया हंति विनाशयतीत्यात्मघ्नं तथा यत् पाचकादिसंबंधिकर्म पाकादिलक्षणं ज्ञानावरणीयादिलक्षणं वा। तदात्मनः संबंधे क्रियतेऽनेनेति आत्मकर्म। एतानि च नामान्याधाकर्म्मणो मुख्यानि। संप्रति पुनर्यैः प्रतिषेवणादिभिः प्रकारैस्तदाधाकर्म्म भवति। तान्यप्यभेदविवक्षया नामत्वेन प्रतिपादयति "पडिसेवणेत्यादि" प्रतिसेव्यते इति प्रतिषेवणं तथा आधाकर्म्म निमंत्रणानंतरं प्रतिश्रूयते। अभ्युपगम्यते यत् आधाकर्म्म तत् प्रतिश्रवणं। तथा आधाकर्मभोक्तृभिः सह संवसनं संवासः तद्वशात् शुद्धाहारभोज्यपि आधाकर्म्मभोजी द्रष्टव्यः यो हि नो सह संवासमनुमन्यते स तेषामाधाकर्म्म भोक्तृत्वमप्यनुमन्यतेऽन्यथा तैः सह संवसनमेव नेच्छेत् अन्यच्च संवासवशतः कदाचिदाधाकर्मगतमनोज्ञगंधाघ्राणादिना विभिन्नान्वितः सन् स्वयमप्याधाकर्मभोजने प्रवर्तेत ततः संवास आधाकर्म्मदोषहेतुत्वादाधाकर्म्म उक्तः तथाऽनुमोदनं अनुमोदना। आधाकर्म्मभोक्तृप्रशंसापि आधाकर्मसमुत्थपापनिबंधनत्वादाधाकर्मप्रवृत्तिकारणत्वाच्च आधाकर्म्म उक्ता। अमीषां च प्रतिषेवणादीनामाधाकर्मत्वमात्मकर्मरूपं नाम प्रतीत्य वेदितव्यं तथा च वक्ष्यति ( अत्तीकरेय कम्ममित्यादि ) इह आधाकर्मेति शब्दार्थ विचारे आधया कर्म आधाकर्मेत्युक्तं पिं०॥
प्रणिधानेन यत्कर्म षट्कायविनाशेनाशनादिनिष्पादनम्॥वृ०॥
(२) व्युत्पत्तयः॥
पिं०॥ आधानमाधा प्रस्तावात्साधुप्रणिधानं अमुकस्मै साधवे देयमिति, तयाऽऽधया वा साधून् कर्म षड्जीवनिकायविराधनादिना भक्तादिपाकक्रियाऽऽधाकर्म तद्योगाद्भक्ताद्यपि तथा निरुक्ताद् यलोपः॥ग०अ.१ साधुं चेतस्याधाय प्रणिधाय साधुनिमित्तमित्यर्थः। कर्म सचित्तस्याचित्तीकरणमचित्तस्य वा पाको निरुक्तादाधाकर्म॥ धर्म.॥ आधानमाधा प्रणिधानं तया साधुप्रणिधानेनेत्यर्थः कर्म क्रिया पाकादिकाऽऽधाकर्म्म॥ पंचा०॥ यद्वाऽऽधाय साधुं चेतसि प्रणिधाय यत् क्रियते भक्तादि तदाधाकर्म पृषोदरादय इति यलोपः॥ पिं०॥ प्रव०॥ आधाय चेतस्यवस्थाप्य साधुं यदशनादि सचेतनमचेतनं वा पच्यतेऽचित्तीक्रियते तदाधाकर्म॥ दर्श०॥ आधया साधुप्रणिधानेन यत्सचेतनमचेतनं क्रियते अचेतनं वा पच्यते चीयते, वा गृहादिकं वयते वा वस्त्रादिकन्तदाधाकर्म॥ दशा०॥ साधुनिमित्तं सचित्तस्याचित्तीकरणे,-अचित्तस्य पाके च॥ प्रव०॥ साधुनिमित्तं कृते ओदनादौ च॥ दर्श०॥ तदात्मके उद्गमदोषविशेषे च॥ स्था० ठा.३॥ ॥ आचा०॥ उत्त० अ. ३॥ आधाकर्मिकं यन्मूलत एव साधूनां कृते कृतमिति॥ व्य०॥

सचित्तं जमचित्तं साहूणट्ठाए कीरए जं च ।
अचित्तमेव पच्चइ आहा कम्मं तयं भणिअंति ॥ ४ ॥

सचित्तं विद्यमानचैतन्यं सफ(क)लबीजादि जमचित्तमचेतनं साधूनां संयतानामर्थाय हेतवे क्रियते विधीयते तथा यत् च शब्दो लक्षणांतरसमुच्चयार्थः । अचित्तमेवाचेतनमपि तत्तण्डुलादि पच्यते राध्यते साधुनामर्थायेति प्रकृतं आधाकर्मेतिनिर्वचनं तद्भणितमुक्तं जिनादिभिर्यद्यपि सचित्तस्य पृथिव्यादेरचित्तीकरणेन यत् क्रियते गृहवस्त्रादि तदप्याधाकर्मोच्यते तथापीह तन्नोक्तं पिंडस्यैवाधिकृतत्वादिति गाथार्थः ॥ पंचा० ॥

पिंडनिर्युक्तावाधाया निक्षेपमप्रतिपादयति ॥ तया यत्कृतं कर्म ओदनपाकादि तदाधाकर्म तथा चाह निर्युक्तिकृत् ।

उरालसरीराणं उद्दवणतिवायणं व जस्सट्ठा ।
मणमाहित्ता कीरइ आहाकम्मं तयंबेंति ॥

औदारिकं शरीरं येषां ते औदारिकशरीरास्तिर्यंचो मनुष्याश्च । तत्र तिर्यंच एकेंद्रियादयः पंचेंद्रियपर्यंता द्रष्टव्याः एकेंद्रिया अपि सूक्ष्मा बादराश्च तत्रेह ये अपद्रावणयोग्यास्तिर्यंचस्ते ग्राह्या न च सूक्ष्माणां मनुष्यादिकृतमपद्रावणं संभवति सूक्ष्मत्वादेव ततः कथं ते इह गृह्यते उच्यते इह यो यस्मादविरतः स तदकुर्वन्नपि परमार्थतः कुर्वन्नवसेयो यथा रात्रिभोजनादनिवृत्तो रात्रिभोजनं । गृहस्थश्च सूक्ष्मैकेंद्रियापद्रावणादनिवृत्तस्ततः साध्वर्थं समारंभं कुर्वन् स तदपि कुर्वन्नवगंतव्य इति सूक्ष्मग्रहणं । यद्वा एकेंद्रिया बादरा एव ग्राह्या न सूक्ष्माः तथा च वक्ष्यति भाष्यकृत् । "ओरालग्गहणेणं तिरिक्खमणुयाहवा मुहुमवज्जा" तेषां औदारिकशरीराणां यत् अपद्रावणं अतिपातविवर्जिता पीडा । किमुक्तं भवति । साध्वर्थमुपक्रियमाणेष्वोदनादिषु यावदद्यापि शाल्यादिवनस्पतिकायादीनामतिपातः प्राणव्युपरमलक्षणो न भवति । तावदर्वाग्वर्तिनी सर्वाऽपि पीडा अपद्रावणं । यथा साध्वर्थं शाल्योदनकृते शालिकरटेर्यावद्वारद्वयकंडनं । तृतीयं तु कंडनमतिपातः । तस्मिन् कृते शालिजीवानामवश्यमतिपातभावात् । ततस्तृतीयकंडनमतिपातग्रहणेन गृह्यते । वक्ष्यति च भाष्यकृत् ॥ "उद्दवणं पुण जाणसु अइवायविवज्जयं पीडंति" उद्दवणशब्दात् परतो विभक्तिलोपः आर्षत्वात् ( तथा तिपाणयंति ) त्रीणि कायवाङ्मनांसि यद्वा त्रीणि देहायुरिंद्रियलक्षणानि । पातनं चातिपातो विनाश इत्यर्थः तत्र च त्रिधा समासविवक्षा तद्यथा षष्ठीतत्पुरुषः पंचमीतत्पुरुषः तृतीयातत्पुरुषश्च । तत्र षष्ठीतत्पुरुषोऽयं । त्रयाणां कायवाङ्मनसां पातनं विनाशनं त्रिपातनं एतच्च परिपूर्णगर्भजपंचेंद्रियतिर्यङ्मनुष्याणामवसेयमेकेंद्रियाणां तु कायस्यैव केवलस्य विकलेंद्रियसंमूर्छिमतिर्यङ्मनुष्याणां तु कायवचसोरेवेति । यद्वा त्रयाणां देहायुरिंद्रियरूपाणां पातनं विनाशनं त्रिपातनं । इदं च सर्वेषामपि तिर्यङ्मनुष्याणां परिपूर्णं घटते केवलं यथा येषां संभवति तथा तेषां वक्तव्यं । यथा एकेंद्रियाणां देहस्यौदारिकस्य आयुषस्तिर्यगायूरूपस्य इंद्रियस्य स्पर्शनेंद्रियस्य द्वींद्रियाणां देहस्यौदारिकरूपस्य [illegible]

[illegible] नरसनलक्षणयोरित्यादि । पंचमीतत्पुरुषश्चायं । त्रिभ्यः कायवाङ्मनोभ्यो देहायुरिंद्रियेभ्यो वा पातनं च्यावनमिति त्रिपातनं । अत्रापि त्रिभ्यः परिपूर्णेभ्यः कायवाङ्मनोभ्यः पातनं गर्भजपंचेंद्रियतिर्यङ्मनुष्याणां एकेंद्रियाणां तु कायादेव केवलात् विकलेंद्रियसंमूर्छिमतिर्यङ्मनुष्याणां तु कायवाग्भ्यामिति । देहायुरिंद्रियरूपेभ्यः पातनं सर्वेषामपि परिपूर्णं संभवति तथा तेषां प्रागिव वक्तव्यम् । तृतीयातत्पुरुषः पुनरयं त्रिभिः कायवाङ्मनोभिर्विनाशकेन स्वसम्बन्धिभिः पातनं विनाशनं त्रिपातनं चशब्दः समुच्चये भिन्नविभक्तिनिर्देशश्चशब्दोपादनं च । यस्य साध्वर्थमपद्रावणं कृत्वा गृही स्वार्थमतिपातं करोति तत्कल्पं । यस्य तु गृही त्रिपातनमपि साध्वर्थं विधत्ते तन्न कल्पमिति ख्यापनार्थं । इत्थंभूतमौदारिकशरीराणामपद्रावणं त्रिपातनं च यस्य साधोरेकस्यानेकस्य वार्थाय निमित्तं मन आधाय चित्तं प्रवर्त्य क्रियते । तदाधाकर्म ब्रुवते तीर्थकरगणधराः । इमामेव गाथां भाष्यकृद्गाथात्रयेण व्याख्यानयति । "उरालग्गहणेणं तिरिक्खमणुयाहवा मुहुमवज्जा । उद्दवणं पुण मुअइ वायविवज्जियं पीडं ॥ ॥ ९३ ॥ कायवइमणोतिन्नि उ अहवा देहा उ इंदियप्पाणा । सामित्ता वा याणे होइ ति वा उपकरणेसु ॥ ९४ ॥ हिययंमि समाहेउं एगमणेगं च गाहगं जो उ । वहणं करेइ दाया कानाए तमाहकम्मंति" ॥ ९५ ॥ सुगमा नवरं ( देहाउ इंदियप्पाणत्ति ) देहायुरिंद्रियरूपास्त्रयः प्राणाः ( सामित्तेत्यादि ) स्वामित्वे स्वामित्वविषये संबंधविवक्षयेति भावार्थः एवमपादाने आपादानविवक्षया करणेषु विषये करणविवक्षया अतिपातो भवति यथा त्रयाणां पातनं त्रिपातनं यद्वा त्रिभ्यः पातनं त्रिभिर्वा करणभूतैः पातनं त्रिपातनं भावार्थस्तुप्रागेवोपदर्शितः तदेवमुक्तमाधाकर्मनाम, पिंडम् ॥ आधाकर्मणोऽधःकर्मत्वमधः कर्मअधेकम्मशब्दे द्रष्टव्यम् ॥ पिं० ॥

( ३ ) संप्रति प्रतिषेवणादीनि वक्तव्यानि तानि चात्मकर्मेति नामांगत्वेन प्रवृत्तानि ततस्तेषां आत्मकर्मेति नामांगत्वं परस्परं गुरुलघुचिंतां च चिकीर्षुरिदमाह—

अत्तीकरेइ कम्मं पडिसेवाई हिंतं पुण इमेहिं ।
तत्थ गुरुआयपयं लहुलहुलहुगा कमेणियरे ॥

तत्पुनर्ज्ञानावरणीयादिकं परकर्म आत्मीकरोति । आत्मसात्करोत्येभिर्वक्ष्यमाणस्वरूपैः प्रतिषेवणादिनामा तत्र तेषां प्रतिषेवणादीनां चतुर्णां मध्ये आदिपदं प्रतिषेवणालक्षणं गुरु महादोषं शेषाणि तु पदानि प्रतिश्रवणादीनि लघुलघुलघुकानि द्रष्टव्यानि । प्रतिषेवणापेक्षया प्रतिश्रवणं लघुप्रतिश्रवणादपि संवासनं लघु संवासनादप्यनुमोदनमिति ॥

संप्रत्येतेषामेव प्रतिषेवणादीनां स्वरूपं दृष्टांतांश्च प्रतिपिपादयिषुस्तद्विषयां प्रतिज्ञामाह—

पडिसेयणमाइण दाराणणुमोयणावसाणाणं ।
जहसंभवं सरूवं सोदाहरणं पवक्खामि ॥

प्रतिषेवणादीनां द्वाराणामनुमोदनापर्यवसानानां यथासंभवं यद्यस्य संभवति । तस्य तत्स्वरूपं सोदाहरणं सदृष्टांतं [illegible] तः प्रतिषेवणास्वरूपं वक्तव्यं तत्रा-

पि य आधाकर्म्म स्वयमानीय भुंक्ते स आधाकर्म्मप्रतिसेवी प्रतीत एव केवलमिह ये परेणोपनीतमाधाकर्म्म भुंजानस्य न कश्चिद्दोष इति मन्यंते तन्मतविकुट्टनार्थं परेणोपनीतस्याधाकर्म्मणो भोजने प्रतिषेवणादोषमाह–

अन्नेणाहाकम्मं उवणीयं असइ चोइओ भणइ।
परहत्थेणंगारे कहुंतो जह नडज्झइहु॥
एवं खलु अहं सुद्धो दोसाहिं तस्स कूडउवमाए॥
संमयत्थमजाणंतो मूढो पडिसेवणं कुणइ॥

अन्येन साधुना भक्तादिकमाधाकर्म्म उपनीतं गृहस्थगृहादानीय समर्पितं सत् योऽश्नाति स प्रतिषेवणां करोतीति संबंधः। स चाधाकर्म्म भुंजानः केनाप्यऽपरेण साधुना-त्रिगर्हामहे यत्र तत्रभवान् विद्वानपि संयतोऽप्याधाकर्म्म भुंजीतेति चोदितो विक्षिप्तः सन् प्रत्युत्तरं भणति यथा न मे कश्चिद्दोषः स्वयं ग्रहणस्याभावाद्यो हि नाम स्वयमाधाकर्मगृहीत्वा भुंक्ते तस्य दोषो यस्तुपरेणोपनीतं भुंक्ते तस्य न कश्चित्तथाचात्र दृष्टांतो यथा परहस्तेनांगारानाकर्षयन्नदह्यते। एवमहमप्याधाकर्म्मभोजिषु निश्चितं शुद्ध एव। दोषः पुनर्ददतो यथा परस्य स्वहस्तेनांगारानाकर्षतः एवंकूटया उपमया अलीकेन दृष्टांतेन समयार्थं भगवत्प्रवचनोपनिबद्धम्–

जस्सट्ठा आरंभो पाणिवहो होइ तस्स नियमेण।
पाणिवहे वयभंगो वयभंगे दुग्गईचेव॥

इत्यादिरूपमजानतोऽत एव मूढः प्रतिषेवणं कुरुते तदेवमुक्तं प्रतिषेवणास्य स्वरूपम्॥

(४) संप्रति प्रतिश्रवणस्वरूपमाह–

उवउगंमि य लोभं कम्मगाहिस्स चित्तरइ कट्ठा।
आलोयए सुलद्धं भणइ भणंतस्स पडिसुणणा॥

इह यो गुरूपयोगकरणवेलायां कर्म्मग्राहिणा आधाकर्मग्रहणाय प्रवृत्तस्य शिष्यस्य चित्तरक्षार्थं मनोऽन्यथाभावनिवारणार्थं दाक्षिण्याद्युपेतो लाभं भणति लाभ इति शब्दमुच्चारयति। तथा आधाकर्म्मणि गृहस्थगृहादानीयं आलोचिते। श्राद्धिकयेदं करोटिकया दत्तमित्येवं निवेदिते सुलब्धं भोजनं जातं यत्त्वयेदं लब्धमिति भणति। तस्य गुरोरित्थं भणतः प्रतिश्रवणं नाम दोषः सूत्रे स्त्रीत्वनिर्देशः प्राकृतत्वात् प्राकृते हिलिंगं व्यभिचारि। यदाह पाणिनिः स्वप्राकृतलक्षणे लिंगे व्यभिचार्यपीति प्रतिश्रवणं च नामाभ्युपगमा॥

संप्रति संवासानुमोदनयोः स्वरूपं प्रतिपादयति।

संवासोउ पसिद्धो अणुमोयणकम्मभोयगपसंसा।
एसिंतुदाहरणाए एओ कमेण नायव्वा॥

संवास आधाकर्म्मभोक्तृभिः सह एकत्र संवसनरूपः प्रसिद्ध एव। अनुमोदनादाधाकर्म्मभोजकप्रशंसा कृतपुण्या सुलब्धिका एते ये इत्थं सदैव लभंते भुंजते वेत्येवं रूपा तदेवमुक्तं प्रतिषेवणादीनां चतुर्णामपिस्वरूपम्॥

संप्रत्येतेषामेव प्रतिषेवणादीनां क्रमेण एतानि वक्ष्यमाणानि स्वरूपाणि उदाहरणानि ज्ञातव्यानि। सूत्रे च उदाहरणशब्दस्य पुल्लिंगता प्राकृतलक्षणवशात्। तत्र यान्युदाहरणानि वक्तव्यानि तेषां नामानि क्रमेण प्रतिपादयति॥

पडिसेवणाए तेणा पडिसुणणाए उ रायपुत्तो उ।
संवासंमि य पल्ली अणुमोयण रायदुट्ठेय॥

प्रतिषेवणास्य स्तेना उदाहरणं। प्रतिश्रवणस्य तु राजपुत्रोपलक्षिताः शेषाः पुरुषाः। संवासे पल्ली पल्लीवास्तव्या वणिजः, अनुमोदनायां राजदुष्टेप लक्षितास्तत्प्रशंसाकारिणास्तत्र प्रथमतः प्रतिषेवणसंबंधिनं स्तेनदृष्टांतं भावयति॥

गोणीहरणे सभूमी नेऊणं गोणिओ पहे भक्खे।
निव्विसया परिवेसणट्ठियावि नेरावि य घेत्थे॥

इह गाथाक्षरयोजनासुगमत्वात् स्वयमेव कर्त्तव्या। केवलं निर्वेशका उपभोक्तारो निःपूर्वस्य विशेषरूपभोगेवर्तमानत्वात् तथा चोक्तं। "निर्वेश उपभोगः स्यात् कुजका व्याहारकारिणो" गवांव्यावर्त्तका इत्यर्थः (घेत्थ) इति गृहीतः कथानकमुच्यते। इह कश्चिद्ग्रामे बहवोदस्यवः ते चान्यदा कुतश्चित्सन्निवेशाद्गा अपहृत्य निजग्रामाऽभिमुखं प्रचलिताः, गच्छतां च तेषामंतराले केऽप्यन्ये दस्यवः पथिकामिलितवंतस्ततस्तेऽपि तैः सार्द्धं व्रजंति व्रजंतश्च स्वदेशं प्राप्तास्ततः प्राप्तः स्वदेश इति निर्भया भोजनवेलायां कतिपया गा विनाश्य भोजनाय तन्मांसं पक्तुमारब्धवंतः। अस्मिंश्च प्रस्तावे केऽप्यन्येऽपि पथिकाः समाययुस्ततस्तेऽपि तैर्दस्युभिर्भोजनाय निमंत्रितास्ततो गोमांसं पक्त्वा केऽपि चौराः पथिकाश्च भोक्तुं प्रवृत्ताः केऽपि गोमांसभक्षणं बहुपापमिति परिभाव्य न भोजनाय प्रवृत्ताः केवल मन्येभ्यः परिवेषणं विदधति अत्रांतरे च निष्प्रत्याकारानिशितकरवालभीषणमूर्तयः समाययुः कूजकास्ततस्तैः सर्वेऽपि भोक्तारः परिवेषकाश्च परिगृहीतास्तत्र ये पथिका अपांतराले मिलितास्ते पथिकास्तत्रापि ये परिचयमिति ब्रुवाणा अपि चौरापनीत गोमांसभक्ष्यपरिवेषणप्रवृत्ततया चौरवद्दुष्टा इति गृहीता विनाशिताश्च अमुमेवार्थं दार्ष्टांतिके योजयति।

जे विय परिवसंती तीयाणाणि धरंतिय।
ते विवज्जंतितीषेण कम्मणा किंमु भोयिणः।

इह चौराणां येऽपांतराले भोजनवेलायां वापिमिलिताः पथिकास्तत्रापि ये परिवेषणमात्रं भोजनधारणमात्रं वा कृतवंतस्तेऽपि कूजकैरागत्य बद्धा विनाशिताश्च एवमिहापि ये साधवोऽन्येभ्यः साधुभ्यः आधाकर्म्म परिवेषयंति भोजनानीति वा धरंति। तेपि तीव्रेण दुःसहविपाकेन नरकादिगतिहेतुना कर्म्मणा बध्यंते किं पुनराधाकर्म्मभोजिनस्तत एव दोषभयात्परिवेषणादिमात्रमप्याधाकर्म्मणः प्रतिषेवणं यतिभिर्नकर्त्तव्यं इह चौरस्थानीया आधाकर्म्मनिमंत्रिणः साधवो, गोमांसभक्षकचौरपथिकस्थानीयाः स्वयंगृहीतनिमंत्रिताधाकर्म्मभोजिनो, गोमांसपरिवेषकादिस्थानीया आधाकर्म्मपरिवेषकादयः, गोमांसस्थानीयमाधाकर्म्म, पथस्थानीयं मानुषं जन्म कूजकस्थानीयानि कर्म्माणि, मरणस्थानीयं नरकादिप्रपातः। संप्रति प्रतिश्रवणस्य पूर्वोक्तराजसुतदृष्टांतं भावयति।

सामत्थणरायसुए येऽपि इव हणसहायतहयतुक्किका।
तिण्हंपिहु पडिसुणणा रन्नो सिट्ठंमि सा नत्थि॥

गुणसमृद्धंनाम नगरं तत्रमहाबलो राजा। तस्यशीला नाम

देवी तयोर्विजितसमरोनाम ज्येष्ठः कुमारः स च राज्यं जिघृक्षुः पितरं दुष्टाशयश्चिंतयामास यथा ममैष पिता स्थविरोऽपि न म्रियते तेन दीर्घजीवी संभाव्यते ततो निजभटान् सहायकृत एनं मारयामीति एवं च चिंतयित्वा निजभटैः समं मंत्रयितुं प्रावर्त्तत तत्र कैश्चिदुक्तं वयं तव सहायकारिणोऽपरैरुक्तमेवं कुरु । केचित्पुनस्तूर्ष्णीं प्रतिपेदिरे । अपरे पुनश्चेतस्यप्रतिपद्यमानाः सकलमपि तं वृत्तान्तं राज्ञे निवेदयामासुः ततो राजा ये सहायकं प्रतिपन्ना ये च एवं कुर्वित्युक्तवन्तो येऽपि च तूर्ष्णीं तस्थुः तान् सर्वानपि ज्येष्ठं च कुमारं वैव स्वतमुखे प्रतिचिन्तेष येश्चागत्य निवेदितं ते पूजिताः । गाथाक्षरयोजनात्त्वियं ( सामत्थणं सुभटैः सहायालोचनं ( राजसुएत्ति ) तृतीयार्थे सप्तमी ततो ऽयमर्थः राजसुतेन कर्त्तुमारब्धमिति शेषः तत्र कैश्चिदुक्तं पितृहनने कर्त्तव्ये तव सहाया वयमिति तथेति समुच्चये चशब्दोऽनुक्तसमुच्चयार्थः स च केचिदेवं कुर्विति भाषितवंत इति समुच्चिनोति । केचित् पुनस्तूर्ष्णीका जाताः मौनेनाथस्थिताः । एतेषां च त्रयाणामपि प्रतिश्रवणदोषः । यस्तु राज्ञे शिष्टं तेषां सा तत्प्रतिश्रवणं नास्ति । अमुमेवार्थं दार्ष्टांतिके योजयति ॥

भुंज न भुंजेभुंजसु तइये तुसिणीए भुजय पढमो ।
तिण्हं पिहुपडिसुणणापडिसेहं तस्स सानात्थि ॥

इह किल केनापि साधुना चत्वारः साधव आधाकर्म्मणा निमंत्रिता यथा भुङ्ध्वं यूयमेनमाहारमिति । तत्रैवं निमंत्रणे कृते प्रथमो भुंक्ते द्वितीयः प्राह नाहं भुंजे भुंक्ष्व त्वमिति । तृतीयो मौनमाश्रितश्चतुर्थः पुनः प्रतिषिद्धवान् यथा न कल्पते साधूनामाधाकर्म्म तस्मादहं न भुंजे इति त्रयाणामाद्यानां प्रतिश्रवणदोषश्चतुर्थस्य प्रतिषेधतः सतः सा तत्प्रतिश्रवणं नास्ति । अत्राह । नन्वाद्यस्याधाकर्मभुंजानस्य प्रतिषेवणलक्षण एव दोष उक्तः । उच्यते । इह यदा आधाकर्म्मनिमंत्रितः सन् तद्भोजनमभ्युपगच्छति । तदा नाद्यापि प्रतिषेवणमिति प्रतिश्रवणदोषः तत ऊर्ध्वं तु प्रतिषेवणं ततः न कश्चिद्दोषः ।

अथामीषामेव भोजकादीनां कस्कः कायिको दोषः स्यादत आह—

अणत्तभुंजगा कम्मणा उ वीयस्स वाइउं दोसो ।
तइयस्स य माणसिओतीहिं विसुद्धो चउत्थो उ ॥

इह य आधाकर्म्मणः स्वयमानेता यश्चानीतस्य निमंत्रितः सन् भोक्ता तौ द्वावपि कर्म्मणाआनयनभोजनरूपतया कायक्रियया तुशब्दान्मनसा वाचा च दोषवंतौ द्वितीयस्य तु भुंक्ष्व त्वं नाहं भुंजे इति ब्रुवाणस्य वाचिको दोष उपलक्षणमेतत् मानसिकश्च तृतीयस्यतु तूर्ष्णींस्थितस्य तु मानसिको यस्तु चतुर्थः स त्रिभिरपि दोषैर्विशुद्धः तस्माच्चतुर्थकल्पेन सर्व्वदैवसाधुना भवितव्यं—

संप्रति दृष्टांतोक्तस्य कुमारस्य ये दोषाः संभवंति तानुपदर्श्याऽधाकर्म्मणो भोक्तरि योजयति ।

पडिसेवणपडिसुणणा संवासणुमोयणा उ चउरो त्ति ।
पियमारगरायसुए भासियव्वा जइ जणेय ॥

पितृमारके राजसुते प्रतिषेवणप्रतिश्रवणसंवासानुमोदनारूपाश्चत्वारोऽपि दोषा घटंते तथा हि—तस्य स्वयं पितृमारणाय प्रवृत्तत्वात् प्रतिषेवणं वयं तव सहाया इति निजभटवचनं प्रतिपद्यमानस्य प्रतिश्रवणं तैरेव सार्द्धमेकत्र निवसनेन संवासस्तेष्वेव बहुमानकरणादनुमोदना एवं यतिजनेऽप्याधाकर्म्मणो भोक्तरि विभावितव्या योजनीयाः अत्र यः स्वयमानीयान्यैः सह भुंक्ते तव प्रथमतो योज्यते तस्य आधाकर्म गृहस्थगृहादानीय भुंजानस्य प्रतिषेवणं गृहस्थेनाधाकर्म्मग्रहणाय निमंत्रितस्य तदनुग्रहणाभ्युपगमः प्रतिश्रवणं कस्मै तदाधाकर्म्म आनीय संविभागेन प्रयच्छति तेन-सहैकत्रसंवसनं संवासः तत्रैव बहुमानकरणादनुमोदना । यश्चान्येनानीतमाधाकर्मनिमंत्रितः सन् भुंक्ते तस्य प्रथमतो निमंत्रणानंतरमभ्युपगच्छतः प्रतिश्रवणं ततो भुंजानस्य प्रतिषेवणं निमंत्रकेण सह एकत्र संवसतः संवासस्तत्र बहुमानकरणादनुमोदना तदेवं यत्र प्रतिषेवणं तत्र नियमतश्चत्वारोऽपि दोषाः प्रतिश्रवणे च केवले त्रयः संवासे द्वौ अनुमोदनायां त्वनुमोदनैव केवला अतएवादिपदं गुरु शेषाणि तु पदानि लघुलघुकानीति ।

संप्रति संवासे पल्लीदृष्टांतं भावयति ।

पल्लीवहंपिनद्धा चोरा वणिया वयं न चोरत्ति ।
चोरेहिं वसाहिरि काउं रन्ना उवालद्धा ॥

वसंतपुरं नाम नगरं तत्रारिमर्दनोनाम राजा तस्य प्रियदर्शना देवी तस्य वसंतपुरस्य प्रत्यासन्ना च भीमाभिधाना पल्ली तस्यां च बहवो भिल्लरूपा दस्यवः परिवसंति वणिजश्च । ते च दस्यवस्सदैव स्वपल्या विनिर्गत्य सकलमप्यरिमर्दनराजमंडलमुपद्रवंति । न स कश्चिदस्ति राज्ञः सामंतो मांडलिको वा यस्तान् साधयति ततोऽन्यदा तत्कृतं सकलमंडलोपद्रवमाकर्ण्य महाकोपावेशपूरितमानसो राजा स्वयं महतींसामग्रीं विधाय भिल्लान् प्रतिजगामः भिल्लाश्च पल्लीमुक्त्वा संमुखीभूय संग्रामं दातुमुद्यताः राजा प्रबलसेनापरिकलितया तान् सर्व्वानप्यविगणय्य सोत्साहो हंतुमारब्धवान् ते चैवं हन्यमानाः केऽपि तत्रैव परासवो बभूवुः केपि पुनः पलायितवंतः राजा च सामर्षः पल्लीं गृहीतवान् । वणिजश्च तत्रत्या न वयं चौरास्ततः किमस्माकं राजा करिष्यतीति बुद्ध्या नानश्यन् राज्ञा च तेऽपि ग्राहिताः ततस्तैर्विज्ञापयांचक्रे यथा देव वयं वाणिजो न चोरा इति ततो राजाऽवादीत् यूयं चौरेभ्योऽप्यतीवापराधकारिणो येऽस्माकमपराधकारिभिश्चौरैः सह संवसथेति ततो निगृहीताः गाथाक्षरयोजना तु सुगमत्वात् स्वयं कार्या ॥

दार्ष्टांतिकयोजनां करोति—

आहाकडभोईहिं सवासो तह य तव्विवज्जंपि ।
दंसणगंधपरिकहा भावेंति सुलहविनिंमि ॥

यथा वणिजां चौरैः सह एकत्र संवासो दोषाय बभूव तथा साधूनामप्याधाकर्म्मभोक्तृभिः सहैकत्र संवासो दोषाय वेदितव्यः यतस्तद्विवर्ज्जमपि आधाकर्म्म परिहारकमपि तथा सुरूक्षवृत्तमपि सुष्ठ्वतिशयेन रूक्षा द्रव्यतो विकृत्य परिभोगेन भावतोऽभिष्वङ्गाभावेन निःस्नेहा वृत्तिर्वर्त्तनं यस्य तथा तमपि आधाकर्म्म संबंधिन्यो दर्शनगंधपरिकथां भावयंति । आधाकर्म्मपरिभोगनांछापादनेन वासयंति ।

तथाहि दर्शनमवलोकनं तच्च मनोज्ञतराधाकर्म्माहारविषयं नियमाद्वासयति । यतः कस्य नाम शंखकुंदावदातो रसपाकविधाननिष्णातमहासूपकारसुसंस्कृतः शाल्याद्योदनो मनःक्षोभमुत्पादयति । गंधोऽपि सद्यस्तापितघृतादिसंबंधी नासिकेंद्रियाऽऽप्यायनशीलो बलादपि तद्भोजने श्रद्धामुपजनयति परिकथापि च विशिष्टतरद्रव्यनिष्पादितमोदकादिविषया विधीयमाना तदास्वादसंपत्त्याशंसाविधौ चेत् उत्साहयितुमीश्वरास्तथा दर्शनात्ततोऽवश्यमाधाकर्म्मभोक्तृभिः सह संवासो यतीनां दोषायेति ॥

अनुमोदनातो राजद्विष्टदृष्टांतं भावयति ।

रायारोहवराहे विभूसिउप्पाइ उ नयरमज्झे ।

धन्नाधन्नत्तिकहा वहावहो कप्पडित्ता खोला ॥

श्रीनिलयं नाम नगरं । तत्र गुणचंद्रो नाम राजा तस्य गुणवतीप्रमुखमंतः पुरं तत्रैव च पुरे सुरूपो नाम वणिक्स च निजशरीरसौंदर्यविनिर्जितमकरध्वजलवणिमा कमनीयकामिनीनामतिवकामास्पदं स्वभावतश्च परदाराभिष्वंगलालसस्ततः सोऽन्यदा राजांतःपुरसन्निवेशसमीपं गच्छन्नंतःपुरिकाभिः सस्नेहमवलोकितः तेनाप्यपचित्ताः साभिलाषमवेक्षितास्ततो जातः परस्परमनुरागः । दूतीनिवेदितप्रयोगवशेन च ताः प्रतिदिनं तेन सेवितुमारब्धाः राज्ञा च कथमप्ययं वृत्तांतो जज्ञे । ततो यदा सोऽतःपुरं प्राविशत्तदा निजपुरुषैर्ग्राहितो यैरेवाभरणैरलंकृतोऽतःपुरं प्रविवेश तैरेवाभरणैर्विभूषितो नगरमध्ये चतुष्पथे सकलजनसमक्षं विचित्रकदर्थनापुरस्सरं विनिपातितो राजा चांतःपुरविध्वंसेनातीवदूयमानस्तस्मिन् विनाशितेऽपि न कोपावेशं मुंचति । ततोहेरिकान् प्रेषयामास यथा रे दुरात्मानः ये प्रशंसंति ये वा निंदंति तान् द्वयानपि मह्यं निवेदयतेति एवंच ते प्रेषिताः कार्पटिकवेषधारिणः सर्वत्रापि नगरे परिभ्रमंति लोकाश्च तं विनाशितं दृष्ट्वा केचन ब्रुवंते यथा अहो जातेन मनुष्यजन्मना अवश्यं तावन्मर्त्तव्यं । परं या अस्मादृशामधन्यानां दृष्टिपथमपि कदाचनापि नायांति ता अप्येष यथासुखं चिरकालं भुक्त्वा मृतस्तस्माद्धन्य एष इति । अपरे ब्रुवते अधन्य एव उभयलोकविरुद्धकारी स्वामिनोऽतःपुरिका हि जननीतुल्यास्ततस्तास्वप्येष संचरन् कथं प्रशंसामर्हति शिष्टेभ्य इति ततस्ते द्वये हेरिकैर्निवेदिता राज्ञो, राज्ञा च ये तस्य निन्दाकारिणस्ते सद्बुद्धय इति कृत्वा पूजिता इतरे तु कृतांतमुखे प्राक्षिप्यंत । गाथाक्षरयोजनात्वेवं राज्ञोऽवरोधोऽन्तःपुरं तद्विषयेऽपराधो यैर्वाऽऽभरणैर्विभूषितोऽन्तःपुरे प्रविष्टस्तैरेव विभूषितो नगरमध्येऽप्यानीतः । ततःकार्पटिकवेषधारिणः खोला हेरिका राज्ञा नियुक्ताः । लोकानां च तद्विषया धन्याधन्यकथा । ततोधन्यकथाकारिणां विनाशः इतरेषां त्वविनाश इति दार्ष्टांतिकयोजनात्वेवं एके साधवस्तावदाधाकर्म्म भुंजते । तत्रापरे जल्पंति धन्या एते सुखं जीवंति अन्ये ब्रुवते धिग् तान् ये भगवत्प्रवचनप्रतिषिद्धमाहारमश्नन्ति । तत्र ये प्रशंसिनस्ते कर्म्मणा बध्यंते इतरे तु न इहांतःपुरस्थानीयमाधाकर्म्म, अन्तःपुरद्रोहकारिस्थानीया आधाकर्मकभोजिनः, नृपस्थानीयं ज्ञानावरणादिकं कर्म्म, मरणस्थानीयः संसारस्तत्र ये आधाकर्मभोक्तृप्रशंसास्ते कर्मरजोनिर्ग्राह्याः शेषास्त्वनिर्ग्राह्याः ॥

संप्रत्यनुमोदनाप्रकारमेव दर्शयति—

साउं पज्जत्त आयरेण काले रिउक्खमं तिद्धं ।

तग्गुणविकत्थणाए अभुंजमाणे वि अणुमत्ता ॥

आधाकर्मभोजिन उद्दिश्य केचिदेवं वयं तावन्न कदाचनाऽपि मनोज्ञमाहारं लभामहे एते पुनः सदैव स्वादु लभन्ते तदपि च पर्याप्तं परिपूर्णं तत्राप्यादरेण बहुमानपुरस्सरं तत्रापि काले प्रस्तुतभोजनवेलायां तदपि ऋतुक्षमं शिशिरादिऋतूपयोगि तथा स्निग्धं घृतपूरादि तस्माद्धन्या अमी सुखं जीवंति । एवं तद्गुणविकत्थनया तद्गुणप्रशंसया अभुंजानेऽपि अनभ्यवहरत्यपि अनुमत्या अनुमोदनया अनुमत्या जनितो दोषोऽपि कार्ये कारणोपचारादनुमत्येत्युक्तः ततोऽयमर्थः । अभुंजानेऽप्यनुमोदनाद्वारेणाधाकर्मभोजिन इव दोषो भवतीति । अन्ये तद्गुणविकत्थनामेवं योजयंति आधाकर्मभोजिनं कोऽपि कंदर्पेणानाभोगेनेव पृच्छति साधु लब्धं त्वया भोजनं तथा पर्याप्तं तथा आदरेण भक्त्या इत्यादि तत्राप्यविरोधः तदेवमुक्तान्याधाकर्मणो नामानि तदुक्तौ च यदुक्तं प्राक् मूलद्वारगाथायां ( आधाकम्मियनामाइत्ति) तद्व्याख्यातं ॥ पिं० आधाक० ॥

( ५ ) एकार्थिकानि आधाकर्म्मणः ॥

सम्प्रति एगट्ठा इत्यवयवं व्याचिख्यासुरिदमाह–

आहा अहेयकम्मे आयाहम्मेय अत्तकम्मेय ।

जहजणगा नाणत्तं अत्थेण वि पुच्छए एवं ॥

अत्र पर एवं पृच्छति यथा आधाकर्म्म १ अधःकर्म २ आत्मघ्नकर्म ३ आत्मकर्म ४ इत्येतेषु चतुर्षु नामसु व्यंजनैर्नानात्वं विद्यते तथात्रार्थेनार्थापेक्षयापि नानात्वमस्ति किं वा नेति पृच्छतश्चायमभिप्राय इहाधाकर्म्मादीनां नाम्नां सर्व्वेषामपि व्युत्पत्तिनिमित्तं पृथगुक्तं तद्यथा आधया कर्म्म आधाकर्म्म अथ साधुवेषाय प्रणिधानपुरस्सरः पाकादिक्रियास्वारंभो व्युत्पत्तिनिमित्तमधोऽधः कर्म अधः कर्म । अत्र विशुद्धेभ्यः संयमादिस्थानेभ्योऽधोधस्तरामागमनं । आत्मानं हंतीत्यात्मघ्नमित्यत्र चरणाद्यात्मविनाशनपरं कर्म्म आत्मकर्म्म क्रियते इत्यात्मकर्म्म अत्र परकर्म्मण आत्मसंबंधितया करणं ततोऽत्र संशयो यथा व्युत्पत्तिनिमित्तं पृथक् पृथक् भिन्नमेवं प्रवृत्तिनिमित्तमपि पृथक् पृथक् भिन्नं यथा घटपटशकटादिशब्दानां किं वा न यथा घटकलशकुंभादीनामिति । अत्र आह । आहेयकम्मे इत्यादावक्षरयोजना प्रागिव भावनीया एवं परेण प्रश्ने कृते सति शिष्यमतिप्रागल्भ्याधानाय सामान्यतो नामविषयां चतुर्भंगिकामाह–

एगट्ठएगवंजण एगट्ठा नाणवंजणं चेव ।

नाणट्ठएगं वंजण नाणट्ठा वंजणा नाणा ॥

इह नामानि जगति प्रवर्तमानानि कानिचिदुपलभ्यंते । एकार्थानि एकव्यंजनानि१ कानिचिदेकार्थानि नानाव्यंजनानि२ कानिचिन्नानार्थानि एकव्यंजनानि३ कानिचित् पुनर्नानार्थानि नानाव्यंजनानि ४ ॥

अस्या एव चतुर्भंगिकायाः क्रमेण लौकिकनिदर्शनानि गाथाद्वयेनोपदर्शयति ।

दिट्ठं खीरं खीरं एगट्ठं एगवंजणं लोए ।
एगट्ठं बहुनामं दुद्धपओपालुखीरं च ॥
गोमहिसिअयाखीरं नाणट्ठं एगवंजणं नेयं ।
घडपडकडसगडरहा होइ पिहत्थं पिहं नामं ॥

इह सर्वत्रापि जातावेकवचनं ततोऽयमर्थः । एकार्थानि एकव्यंजनानि नामानि लोके प्रवर्त्तमानानि दृष्टानि यथा क्षीरं क्षीरमिति । इयमत्र भावना । एकत्र क्वचिद्गृहे गोदुग्धादिविषये क्षीरमिति नाम प्रवृत्तमुपलब्धं तथान्यत्रापि गोदुग्धादावेव विषये क्षीरमिति नाम प्रवर्तमानमुपलभ्यते । एवं ततोऽप्यन्यत्र क्वचिद्गृहे गोदुग्धादिविषये क्षीरमिति नाम प्रवृत्तमुपलब्धं तथान्यत्रापि गोदुग्धादावेव विषये क्षीरमिति नाम प्रवर्तमानमुपलभ्यते एवं ततोऽप्यन्यत्र गृहांतरे ततोऽमूनि सर्वाण्यपि क्षीरं क्षीरमित्येवंरूपाणि नामान्येकार्थानि एकव्यंजनानि । तथा एकार्थानि बहूनि बहुव्यंजनरूपाणि नामानि यथा दुग्धं पयः पातुं क्षीरमित्यमूनि हि नामानि सर्वाण्यपि विवक्षितगोदुग्धादिलक्षणे कार्याभिधायितया नानापुरुषैरेककालक्रमेणैकपुरुषेण वा प्रयुज्यमानान्येकार्थानि नानाव्यंजनानि च ततो द्वितीयभंगे निपतंति । नानार्थान्येकव्यंजनानि यथा गोमहिष्यजासंबंधिषु क्षीरं क्षीरमिति नामानि प्रवर्त्तमानानि । एतानि हि नामानि सर्वाण्यपि समानव्यंजनानि भिन्नभिन्नगोदुग्धमहिषीदुग्धादिरूपार्थवाचकतया भिन्नार्थानि च तत उच्यंते नानार्थान्येकव्यंजनानि । नानार्थानि नानाव्यंजनानि यथा घटपटशकटरथादीनि नामानि । तदेव मुक्तानि चतुर्थभंगिकया निदर्शनानि ।

सांप्रतमिमामेव चतुर्भंगिकामाधाकर्माणि यथासंभवं गाथाद्वयेन योजयति ।

आहाकम्माईणं होइ दुरुत्ताइ पढमभंगो उ ।
आहाहेकम्मंति य विइउ सक्किंद इव भंगो ॥१॥
आहाकम्मंतिरिया असणाइ चउरो तइयभंगो ।
आहाकम्मपडुच्चा नियमा सुन्नो चरिमभंगो ॥२॥

आधाकर्मादीनां नाम्नां युगपद्बहुभिः पुरुषैरेकेन वा कालभेदेन एकस्मिन्नेव अशनादिरूपे च यद्द्विरुक्तादि द्विरुच्चारणादि आदिशब्दात्त्रिरुच्चारणादिपरिग्रहः सम्भवति । प्रथमो भंगः । किमुक्तं भवति । एकत्र वसतावशनविषये केनाप्याधाकर्मेतिनाम प्रयुक्तं तथान्यत्रापि वसत्यंतरेऽशनविषये चाधाकर्मेति नाम प्रयुज्यत इति तथान्यत्रापि वसत्यंतरे तान्यमूनि सर्वाण्यप्याधाकर्मेति नामान्येकार्थानि एकव्यंजनानीति प्रथमे भंगेऽवतरंति । आधाकर्म अधःकर्मेत्यादीनि तु नामानि विवक्षिताशनादिरूपैकविषये प्रवर्तमानानि । द्वितीयो भंगः । एकार्थानि नानाव्यंजनानीत्येवंरूपद्वितीयभंगविषयाणि शक्रेंद्र इवेति । यथा इंद्रः शक्र इत्येवमादीनि नामानि । तथा अशनादयोऽशनपानखादिमस्वादिमरूपाश्चत्वारआधाकर्मेतारिता आधाकर्मशब्देन व्यवहिता यथाशनमाधाकर्म पानमाधाकर्मेत्येवमादि तृतीयभंगः तृतीयभंगविषयाः । अत्राप्ययं भावार्थः । यदा शनादयः प्रत्येकमाधाकर्मेति देशभेदेन बहुभिः पुरुषैरेककालमेकेनैव पुरुषेण कालभेदेनोच्यंते तदा तानि आधाकर्म अधःकर्मेति नामानि नानार्थान्येकव्यंजनानीतितृतीये भंगेऽवतरंति आधाकर्मरूपंनामाश्रित्य पुनश्चरमो भंगो नानाव्यंजनानीत्येवंरूपो नियमाच्छून्यः आधाकर्मेत्येवमादिनाम्नां सर्वेषा मपि समानव्यंजनत्वादुपलक्षणमेतत् तेन सर्वाण्यपि नामानि प्रत्येकं चरमभंगे न वर्त्तंते यदा तु कोऽप्यशनविषये आधाकर्मेति नाम प्रयुंक्ते पानविषयेत्वधः कर्मेति खादिमविषये त्वात्मघ्नमिति स्वादिमविषये त्वात्मकर्मेति । तदामूनिनामानि नानार्थानि नानाव्यञ्जनानि चेति चरमोऽपि भंगः प्राप्यते ।

इह विवक्षिताशनादिरूपैकविषये प्रवर्तमानान्याधाकर्म प्रभृतीनि नामानि द्वितीयभंग उक्तस्ततस्तमेव संप्रतिभावयति ।

इंदत्थं जह सद्दा पुरंदराई ओ नाइवत्तंते ।
अहकम्म आयहम्मा तह आहं नाइवत्तंते ॥

यथा इंद्रार्थं इंद्रशब्दवाच्यं देवराजरूपं पुरंदरादयः पुरंदरः शक्र इत्येवमादयः शब्दा नातिवर्तन्ते नातिक्रामंति । तथा अधःकर्म आत्मघ्नशब्दोपलक्षणमेतत् । आत्मकर्मशब्दश्च आहंति सूचनात् सूत्रमिति न्यायात् । आधाकर्मार्थं आधाकर्मशब्दवाच्यं नातिवर्तते यदेव येन दोषेण दुष्टमाधाकर्मशब्दवाच्यं नातिवर्तते यदेव येन दोषेण दुष्टमाधाकर्मशब्दवाच्यमोदनादि तदेव तेनैव दोषेण दुष्टमधःकर्मादयोऽपि शब्दा ब्रुवते इति भावः । एतदेवभावयति । "आहाकम्मेणा अहे करेइ जंहणाभूयाइं । जं तं आयपमाणो परकम्मं अत्तणा कुणइ " आधाकर्मणा भुज्यमानेन कृत्वा यस्माद्विशुद्धेभ्यो विशुद्धतरेभ्यः संयमादिस्थानेभ्योऽवतीर्याधस्तादात्मानं करोति । तेन कारणेन तदेवाधाकर्म अधःकर्मेत्युच्यते तथा यस्मादाधाकर्मणा भुज्यमानेन कृत्वा स एव भोक्ता । परमार्थतः प्राणान् द्वीन्द्रियादीन् भूतान् वनस्पतिकायानुपलक्षणमेतत् । जीवान्सत्वांश्च हंति विनाशयति । " जस्सट्ठा आरम्भो पाणिवहो होइ तस्स नियमेणंति" वचनप्रामाण्यात्प्राणादींश्च घ्नन् नियमतश्चरणादिरूपमात्मानं हंति विनाशयति । जस्सट्ठा इत्यादिवचनात्तत आधाकर्मआत्मघ्नमित्युच्यते तथा यद्यस्मात्कारणात्तत् आधाकर्म•आददानः परस्य पाचकादेः संबंधे यत्कर्म आरंभजनितं ज्ञानावरणीयादिकमुत्पन्नमासीत् ॥ तदात्मनापि करोति ततस्तदाधाकर्म आत्मकर्मेत्युच्यते तस्मादधः कर्मादीनि नामानि सर्वाण्यपि नाधाकर्मशब्दार्थमतिवर्तते इति द्वितीयमवतरति तदेवं मूलद्वारगाथायां एगट्ठा इत्यपि व्याख्यातं । पिंड० ॥

(६) आधाकर्माश्रित्य कल्पाकल्पविधिः ।

संप्रत्येतानेवाधिकृत्य कल्पाकल्पविधिर्वक्तव्यस्तत्र नामसाधर्मिकमधिकृत्य प्रथमतः कल्पाकल्पविधिं गाथाद्वयेन प्रतिपादयति ॥

जावंति देवदत्ता गिहीव अगिहीव तेसिं दाहामि ।
नो कप्पइ गिहीणं दाहति विसेसिए कप्पे ॥
पासंडीसुवि एवं मीसामीसेसु होइ विभासा ।
समणेसु संजयाण उ विसरिसमासाण वि न कप्पे ॥

इह कोपि पितरि मृते जीवति वा तन्नामानुरागतस्तन्नामयुक्तेभ्यो दानं दित्सुरेवंसंकल्पयति यथा यावंतो गृहस्था

अगृहस्था वा देवदत्तास्तेभ्यो मया भक्तादिकमुपकृत्य दातव्यं तदेवं संकल्पे कृते देवदत्ताख्यस्य साधोर्न कल्पते देवदत्तशब्देन तस्यापि संकल्पविषयीकृतत्वात् यदा पुनरेवं संकल्पयति यथा यावंतो गृहस्था देवदत्तास्तेभ्यो दातव्यमिति । तदा एवं विशेषतो निर्द्धारिते सति तद्योग्यमुपस्कृतं देवदत्ताख्यस्य साधोः कल्पते तस्य विवक्षितसंकल्पविषयीकरणाभावात् । तथा पार्षंडिष्वपि मिश्रामिश्रेषु एवं पूर्वोक्तप्रकारेण विभाषा कर्त्तव्या । इह सामान्यसंकल्पविषया मिश्रा उच्यंते यथा यावन्तः पार्षंडिनो देवदत्ता इति मिश्रसंकल्पे कृते न कल्पते । पार्षंडिदेवदत्तशब्दाभ्यां देवदत्ताख्यस्य साधोः संकल्प विषयीकृतत्वाद्यदा पुनरमिश्रसंकल्पो यथा यावंतः सरजस्काः पार्षंडिनो देवदत्ता यदि वा यावंतः सौगता देवदत्ता यद्वा साधुव्यतिरेकेण सर्व्वेऽपि पार्षंडिनो देवदत्तास्तेभ्यो दास्यामीति तदा देवदत्ताख्यस्य साधोः कल्पते तस्य संकल्पविषयीकरणाभावात् । यथा च पार्षंडिषु मिश्रामिश्रेषु विभाषा कृता तथा श्रमणेष्वपि मिश्रामिश्रेषु कर्त्तव्या । श्रमणा हि शाक्यादयोऽपि भण्यंते यतो वक्ष्यति । "निग्गंथसक्कतावसगेरुयआजीव पंचहा समणा" ततो यदैवं मिश्रसंकल्पो यावंतः श्रमणा देवदत्ताख्यास्तेभ्यो दास्यामीति तदा देवदत्ताख्यस्य साधोर्न कल्पते तस्य श्रमणदेवदत्तशब्दाभ्यां संकल्पविषयीकृतत्वात् यदा पुनरेवममिश्रः संकल्पो यावंतः शाक्याः श्रमणा देवदत्ता यदि वा आजीवका देवदत्ता यद्वा साधुव्यतिरेकेण सर्वे श्रमणा देवदत्तास्तेभ्यो दास्यामीति । तदा कल्पते विवक्षितसंकल्पविषयीकरणाभावात् । संयतानां तु निर्ग्रंथानां विसदृशनाम्नामपि संकल्पे कृते देवदत्ताख्यादेः साधोर्न कल्पते किमुक्तं भवति । चैत्रनाम्नोऽपि संयतस्योद्देशेन कृतं देवदत्ताख्यस्य साधोर्न कल्पते तथा भगवदाज्ञाविजृंभणाद्यदा पुनस्तीर्थकरप्रत्येकबुद्धसंकल्पतो न कृतं तदा कल्पते तीर्थकरप्रत्येकबुद्धानां संघातीतत्वेन संयममध्यवर्तिभिः सहधर्मिकत्वात् । "संजयाणउ विसरिसनामाणवि न कप्पे" इति वचनाद्वार्थापत्त्या यावंतो देवदत्ता इत्यादौ विसदृशचैत्रादिनाम्नां साधूनां कल्पत एवेति प्रतिपादितं द्रष्टव्यं तदेवमुक्तो नाम साधर्मिकमधिकृत्य कल्पविधिः ॥

संप्रतिस्थापनाद्रव्यसाधर्मिकावधिकृत्याह—

**नीसमनीसावकडं ठवणा साहंमिओ विभासा वि ।**
**दव्वे मयतणुभत्तं न तं कुकुच्छावि वज्जेज्जा ॥**

इह कोपि गृहीतप्रव्रज्यस्य मृतस्य जीवतो वा पित्रादेः स्नेहवशात्प्रतिकृतिं कारयित्वा तत्पुरतो ढौकनाय बलिं निष्पादयति तन्निष्पादनं च द्विधा तद्यथा निश्रया अनिश्रयाच तत्र ये रजोहरणादिवेषधारिणो मत्पितृतुल्यास्तेभ्यो दास्यामीति संकल्पान्निष्पादयति । तद्बलिनिष्पादनं निश्राकृतमुच्यते यदात्वेवंविधःसंकल्पो न भवति किन्त्वेवमेव ढौकनाय बलिनिष्पादयति । तदा तद्बलिनिष्पादनमनिश्राकृतमुच्यते तथा चाह ( नीसमनीसावकडं ) इहप्रथमातृतीयार्थे वेदितव्या ततोयमर्थः । निश्रया अनिश्रया वा यत्कृतंनिष्पादितं भक्तादिस्थापना साधर्मिकविषये । तत्र विभाषाकर्त्तव्या यदि निश्राकृतं तदपि च ढौकितमढौकितं वा तर्हि न कल्पते अनिश्राकृतं तु ढौकितमढौकितं वा कल्पते । परं तत्रापि प्रवृत्तिदोषप्रसंगयोरिति पूर्व्वसूरयो निषेधमाचक्षते तथा द्रव्ये द्रव्यसाधर्म्मिकविषये यत् मृततनुभक्तं तत्कालं मृतस्य साधोर्या तनुस्तस्याः पुरतो ढौकनाय यदशनादि तत्पुत्रादिना कृतं । तत् मृततनुभक्तं तदपि द्विधा निश्राकृतमनिश्राकृतं वा तत्र साधुभ्यो दास्यामीति संकल्पकृतं निश्राकृतमितरत्तु स्वपित्रादिभक्तिमात्रकृतमनिश्राकृतं तत्र यन्निश्रयाकृतं तन्निषेधति नैव कल्पते इतरत्तुअनिश्राकृतं कल्पते । तद्ग्रहणे लोके जुगुप्सा निंदा वर्तते यथा अहो अमी भिक्षवो भिःशूका मृततनुभक्तमपि न परिहरंतीति ततोविवर्ज्जयंति तत्साधवः ॥

संप्रति क्षेत्रकालसाधर्मिकावधिकृत्यातिदेशेनकल्पाकल्प विधिमाह—

**पासंडियसमणाणं गिहिनिग्गंथाण वेव उ विभासा**
**जह नामेमि तहेव य खेते काले य ना य च**

यथा नाम्नि नाम साधर्मिकविषये पार्षंडिनां श्रमणानां ( गिहित्ति ) सूचनात् सूत्रमिति यावत् गृह्यगृहिणांनिर्ग्रंथानां च विभाषा कृता । तथा क्षेत्रे काले च विभाषणं ज्ञातव्यं तत्र क्षेत्रसौराष्ट्रदेशोत्पन्नस्य साधोर्नकल्पते सौराष्ट्रदेशोत्पन्नत्वेन तस्यापि संकल्पविषयीकरणाच्छेषदेशोत्पन्नानांतु कल्पते तेषां संकल्पविषयीकरणाभावात् । यदि पुनः सौराष्ट्रदेशोत्पन्नेभ्यः पार्षंडिभ्यः सरजस्केभ्यो यदि वा सौगतेभ्यो यद्वा साधुव्यतिरेकेण सर्व्वपार्षंडिभ्यो दास्यामीति संकल्पस्तदा सौराष्ट्रदेशोत्पन्नस्यापि साधोः कल्पते तस्य संकल्पाक्रोडीकरणादेवंश्रमणेष्वपि सामान्यतः संकल्पितेषु न कल्पते साधुव्यतिरेकेण तु संकल्पितेषु कल्पते तथा गृह्य गृहिषु सामान्यतःसौराष्ट्रदेशोत्पन्नत्वेन संकल्पितेषु न कल्पते केवलेषु तु गृहिषु कल्पते निर्ग्रंथेषु तु सौराष्ट्रदेशोत्पन्नेषु सौराष्ट्रदेशेषु वा संकल्पितेषु सौराष्ट्रदेशोत्पन्नानामसौराष्ट्रदेशोत्पन्नानां वा सर्व्वथा न कल्पते तदेवं क्षेत्रसाधार्म्मिके विभाषा भाविता एवं काल साधर्म्मिकेऽपि भावनीया यथा विवक्षितदिनजातेभ्यः पार्षंडिभ्यो मया दातव्यमिति संकल्प विषयीकरणाभावात् । इत्यादि सर्व्वं पूर्वोक्तानुसारेण भावनीयं । प्रवचनादिपदसप्तके पुनरेवं पूर्व्वाचार्यव्याख्या । प्रवचनलिंगदर्शनज्ञानचारित्राभिग्रहभावनारूपेषु सप्तसु पदेषु द्विसंयोगसप्ता एकविंशतिस्तद्यथा प्रवचनस्य लिंगेन सह एको दर्शनेन सह द्वितीयो ज्ञानेन सह तृतीय एवं यावत् भावनया सह षष्ट इति षड्भंगाः एवं लिंगस्य दर्शनादिभिः सह पंच दर्शनस्य ज्ञानादिभिः सह चत्वारः ज्ञानस्य चारित्रादिभिः सह त्रयः । चारित्रस्याभिग्रहभावनाभ्यां द्वौ । अभिग्रहस्य भावनया सहैक इत्येकविंशतिरेतेषु च एकविंशतिसंख्येषु प्रत्येकमेकैकाः चतुर्भंगिकाः तद्यथा प्रवचनतःसाधर्मिको न लिंगतः साधर्मिको न प्रवचनतः प्रवचनसाधर्म्मिको लिंगनश्च न प्रवचनतो न लिंगतः शेषेषु भंगेषु यथा स्थानं चतुर्भंगिका दर्शयितव्या ।

तत्र प्रथमचतुर्भंगिकया आद्यभंगद्वयोदाहरणमुपदर्शयति—

**देससिहागासावगपवयणसाहम्मिया न लिंगीण ।**
**लिंगेण उ साहंमीनोप वयणनिण्हगा सव्वे ॥**

प्रवचनसाधर्म्मिका न लिंगेन अविरतसम्यग्दृष्टेरारभ्य यावद्दशर्मी श्रावकप्रतिमां प्रतिपन्ना ये श्रावकास्ते द्रष्टव्या कुत इत्याह ( दसस सिहगा इति ) अत्र निमित्तकारणहेतुषु सर्व्वासां विभक्तीनां प्रायो दर्शनामिति न्यायाद्धेतौ प्रथमा ततोऽयमर्थः यतस्ते दशर्मी श्रावकप्रतिमां प्रतिपन्नाः ससिखाका शिखासहिता एवेत्यर्थः । ततस्ते प्रवचनत एव साधर्म्मिका भवंति न लिंगतो ये त्वेकादर्शी श्रावकप्रतिमां प्रतिपन्नास्ते निःकेशेत्यादिना लिंगतोऽपि साधर्म्मिका भवंतीति तद्विवर्ज्जनं एतेषां चार्थाय यत् कृतं तत्साधूनां कल्पते तथा लिंगतः साधर्म्मिका न प्रवचनतो' निन्हवा एतेषां प्रवचनवहिर्भूतत्वेन प्रवचनतः साधर्मिकत्वाभावात् लिंगं तु तेषामपि रजोहरणादिकं विद्यते इति लिंगतः साधर्म्मिका स्तेषामप्यर्थाय कृतं साधूनां कल्पते निन्हवाश्च द्विधा लोके निन्हवत्वेन ज्ञाता अज्ञाताश्च तत्र ये अज्ञातास्ते इह ग्राह्या अज्ञातानां लोकेसाधुत्वेन व्यवहरणाभावतः प्रवचनांतर्वर्त्तित्वात् । इहाद्य भंगद्वये उदाहृते शेषमुत्तरं भंगद्वयं स्वयमेव श्रोतारो व भाषन्ते । इति बुद्धया निर्युक्तिकृन्नोदाहृतवान् अनेनैव च कारणेनाशेषाणामपि चतुर्भंगिकानामाद्यमेव भंगद्वयमुदाहरिष्यति नोत्तरं भंगद्वयं वयं तु सुखाववोधाय उदाहरिष्यामः । तत्रास्यामेव प्रथमचतुर्भंगिकायां प्रवचनतः साधर्मिकालिंगतश्चेति तृतीयभंगे उदाहरणं साधवः एकादर्शी प्रतिमां प्रतिपन्नाः श्रावका वा । तत्र साधूनामर्थाय कृतं न कल्पते । श्रावकाणां त्वर्थाय कृतं कल्पते न प्रवचनतः साधर्मिकाणामपि लिंगतस्तीर्थंकरप्रत्येकवुद्धया तेषां प्रवचन लिंगातीतत्वात्तेषामर्थाय कृतं कल्पते । द्वितीयचतुर्भंगिका- प्रवचनतः साधर्म्मिका न दर्शनतो दर्शनतः साधर्मिका न प्रवचनतः । प्रवचनतः साधर्म्मिका दर्शनतश्च । न प्रवचनतो न दर्शनतः ॥

तत्राद्य भंगद्वयोदाहरणमाह—

विसरिसदंसणजुत्ता पवयणसाहम्मिया न दंसणओ ।
तित्थगरायत्तेयानो पवय ण दंससाहम्मी ॥

प्रवचनतः साधर्मिका न दर्शनतो विसदृशदर्शनयुक्ता विभिन्नक्षायिकादिसम्यक्त्वयुक्ताः साधवः श्रावका वा किमुक्तं भवत्येकेषां साधूनां श्रावकाणां वा क्षायोपशमिकदर्शनमपरेषां चौपशमिकं क्षायिकं वाते. परस्परंप्रवचनाः साधर्मिका न दर्शनतः तत्र साधूनामर्थाय कृतं साधूनां न कल्पते श्रावकाणां त्वर्थाय कृतं कल्पते तथा दर्शनतः साधर्मिका न प्रवचनतस्तीर्थंकराः प्रत्येकवुद्धा वा समानदर्शना वेदितव्याः तेषामर्थाय कृतं साधूनां कल्पते प्रवचनतः साधर्मिका दर्शनतश्च साधवः श्रावका वा समानदर्शनाः । अत्रापि साधूनामर्थाय कृतं साधूनां कल्पते प्रवचनतो नापि दर्शनतस्तीर्थकरप्रत्येकवुद्धनिह्नवास्तत्र तीर्थकराः प्रत्येकवुद्धाश्च विभिन्नदर्शना वेदितव्याः निन्हवाश्च मिथ्यादृष्टयः प्रतीता एव एतेषां च सर्व्वेषामर्थाय कृतं कल्पते तृतीया चतुर्भंगिका प्रवचनतः साधर्मिका न ज्ञानतः ज्ञानतः साधर्मिका न प्रवचनतः प्रवचनतः साधर्मिका ज्ञानतश्च न प्रवचनतो नापि ज्ञानतः एवं चतुर्थ्यपि चतुर्भंगिका प्रवचनस्य चारित्रेण सह वेदितव्या एतयोर्द्वयोरपि चतुर्भंगिकयोराद्यमाद्यंभंगद्वयमतिदेशेनोदाहरति ॥

नाणचरित्ता चेवं नायव्वा होंति पवयणेणं तु ॥

यथा प्रवचनेन सह दर्शनमुक्तमेवं ज्ञानचारित्रेऽपि प्रवचनेन सहज्ञातव्ये तद्यथा प्रवचनतः साधर्मिकोन ज्ञानतो विसदृशज्ञानसहिताः साधवः श्रावका वा अत्रापि यदि साधवस्तर्हि न कल्पते अथ श्रावकास्तर्हि कल्पते ज्ञानतः साधर्मिका न प्रवचनतस्तीर्थकराः प्रत्येकवुद्धा वा समानज्ञानास्तेषामर्थाय कृतं कल्पते प्रवचनतःसाधर्मिका- ज्ञानतश्च साधवः श्रावका वा समानज्ञानाः । अत्रापि साध्वर्थं कृतं न कल्पते श्रावकाणां त्वर्थाय कृतं कल्पते न च प्रवचनतो नापि ज्ञानतःतीर्थकरप्रत्येकवुद्धनिह्नवास्तत्रतीर्थकराः । प्रत्येकवुद्धाश्च वीभिन्नज्ञाना- वेदितव्याः । निह्नवास्तु मिथ्यादृष्टित्वादज्ञानिनः प्रतीता एव एतेषां सर्व्वेषामप्यर्थाय कृतं कल्पते तथाप्रवचनतः साधर्मिका न चारित्रतः साधवः श्रावकाश्च । तत्र साधवो विसदृशचारित्रसहितावेदितव्याः श्रावकाणां त्वविरतसम्यग्दृष्टीनां सर्व्वथा विरत्यभावेन देशविरतानां तु देशचारित्रतया चारित्रतः साधर्म्मिकत्वाभावः सुप्रतीतः साध्वर्थं चेत् कृतं कल्पते । प्रवचनतः साधर्मिकाश्चारित्रतश्च साधर्मिकं च समानचारित्रास्तेषामर्थाय कृतं न कल्पते न प्रवचनतो नापि चारित्रतस्तीर्थकरप्रत्येकवुद्धनिह्नवास्तत्र तीर्थकरप्रत्येकवुद्धाविसदृशचारित्रा वेदितव्याः निन्हवास्त्वचारित्रेण एव एतेषां च सर्व्वेषामप्यर्थाय कृतं कल्पते पंचमी चतुर्भंगिका प्रवचनतः साधर्म्मिकाभिग्रहतः अभिग्रहतः साधर्मिका न प्रवचनतोपि साधर्म्मिका अभिग्रहतश्च न प्रवचनतोऽपि नाप्यभिग्रहतः एवं षष्ठ्यपि चतुर्भंगिका प्रवचनेऽस्य भावनया सह वेदितव्या ॥

एतयोर्द्वयोरपि चतुर्भंगिकयोः प्रत्येकमाद्यभंगद्वयमुदाहरति

पवयणओसाहंमी नाभिग्गहसावगा जइणो ।
साहम्माभिगाहेणं नो पवयणनिह्नतित्थपत्तेय ॥
एवं पवयणभावण एत्तो सेसाण वोच्छामि ।

प्रवचनतः साधर्मिका नाभिग्रहतः । श्रावका यतयश्च विसदृशाभिग्रहसहितास्तत्र श्रावकाणामर्थाय कृतं कल्पते न साधूनां । अभिग्रहेण साधर्मिका न प्रवचनेन निह्नवस्तीर्थकरप्रत्येकवुद्धा । एतेषां चार्थाय कृतं कल्पते प्रवचनतः साधर्मिका अभिग्रहतश्च साधवः श्रावकाश्च समानाभिग्रहाः अत्रापि श्रावकाणामर्था कृतं न कल्पते साधूनां न प्रवचनतो नाप्यभिग्रहतस्तीर्थकरप्रत्येकवुद्धनिह्नवा विशादृशाभिग्रहकलिता निराभिग्रहा वा तेषामर्थाय कृतं कल्पते एवं ( पवयणभावणेत्ति ) एवं पूर्व्वोक्तेन प्रकारेण प्रवचनभावनेति प्रवचनतश्चतुर्भंगिका भावनीया तद्यथा । प्रवचनतः साधर्मिका न भावनातः साधवः श्राविका विसदृशभावनाकाः अत्रापि श्रावकाणामर्थाय कृतं कल्पते न साधूनां भावनातः साधर्मिका न प्रवचनतः निह्नवतीर्थकरप्रत्येकवुद्धा स्तेषामर्थाय कृतं कल्पते । प्रवचनतः साधर्मिका भावनातश्च श्रावकाश्च समानभावनाकास्तत्र श्रावकाणां अर्थाय कृतं कल्पते साधूनां । न प्रवचनतो नापि भावनातस्तीर्थकरप्रत्येकवुद्धनिह्नवा विसदृशभावनाकाः एतेषामर्थाय कृतं कल्पते तदेवमुक्तानि प्रवचनाश्रितानां षण्णां चतुर्भंगिकानां-

मुदाहरणानि । ( एतो सेसाण वोच्छामि ) इत ऊर्ध्वं शेषाणां चतुर्भंगिकानामुदाहरणानि वक्ष्ये ॥
प्रतिज्ञातमेवातिदर्शने निर्वाहयति ।

लिंगाईहि वि एवं एक्केक्केण तु उवरिमाइ नेया ।
जे नन्ने उवरिल्ला वे मोत्तुं सेसए एवं ॥

लिंगाईहि वि इत्यत्र सप्तम्यर्थे तृतीया ततोऽयमर्थः एवं पूर्वोक्तेन प्रकारेण लिंगादिष्वपि पदेषु एकैकेन लिंगादिना पदेन उपरितनादिदर्शनज्ञानप्रभृतीनि पदानि नयेत् किमुक्तं भवति। लिंगदर्शनप्रभृतिषु पदेषु दर्शनज्ञानादिभिः पदैः सह याश्चतुर्भंगिकास्ताः पूर्वोक्तानुसारेणोदाहरेत्। अतोऽवेदं संक्षिप्ततरमुक्तमतः संक्षेपेण विवक्षुरिदमाह ( जेनन्नेत्यादि ) ये अनन्ये उदाहरणापेक्षया अन्यादृशानि भवंति भंगास्तान् मुक्त्वा शेषकान् भंगकान् एवं वक्ष्यमाणप्रकारेण जानीत । इयमत्र भावना इह लिंगदर्शनयोर्ये चत्वारो भंगाः सोदाहरणा वक्ष्यंते तादृशा एव प्राय उदाहरणापेक्षया लिंगज्ञानलिंगचरणयोरपि भंगास्ततस्तान् मुक्त्वा लिंगदर्शनलिंगाभिग्रहादिसत्कान् भंगानुदाहरिष्यामीति । तत्र लिंगदर्शनयोरियं चतुर्भंगिका लिंगतः साधर्म्मिका न दर्शनतः दर्शनतः साधर्म्मिका न लिंगतः लिंगतोऽपि साधर्म्मिका दर्शनतश्च । न लिंगतो नापि दर्शनतः ॥
तत्राद्यं भंगद्वयमुदाहरति ।

लिंगेण उ साहंमी न दंसणे वीसु दंसिजइ तिण्हा ।
पत्तेयबुद्धतित्थंकरा य वीयंमि भंगंमि ।

लिंगेन साधर्म्मिका न ( दंसणे ) इत्यत्र तृतीयार्थे सप्तमी न दर्शनेन विष्वग्दर्शना विभिन्नदर्शना यतयो निह्नवाश्च उपलक्षणमेतद्विभिन्नदर्शना एकादशप्रतिमाप्रतिपन्नाः श्रावकाश्च तत्र निह्नवा मिथ्यादृष्टित्वान्न दर्शनतः साधर्मिकाः । अत्र च निह्नवानां श्रावकाणां चार्थाय कृतं कल्पते न तृतीये भंगे दर्शनतः साधर्मिका न लिंगत इत्येवंरूपे प्रत्येकबुद्धास्तीर्थकृतः एकादशप्रतिमाप्रतिपन्नवर्जाः श्रावकाश्च समानदर्शना ज्ञेयास्तेषामर्थाय कृतं कल्पते शेषभंगद्वयं वयमुदाहरामः लिंगतः साधर्म्मिका दर्शनतश्च समानदर्शनाः साधव एकादर्शी प्रतिपन्नाः श्रावकाश्च । अत्रापि श्रावकाणामर्थाय कृतं कल्पते न साधूनां न लिंगतो नापि दर्शनतो विसदृशदर्शनाः प्रत्येकबुद्धास्तीर्थकरा एकादशप्रतिमाप्रतिपन्नवर्जाः श्रावकाश्च तेषामर्थाय कृतं कल्पते लिंगज्ञानचतुर्भंगिकात्वे च लिंगतः साधर्मिका न ज्ञानतः ज्ञानतः साधर्मिका न लिंगतः लिंगतः साधर्मिका ज्ञानतश्च न लिंगतो नापि ज्ञानतः । अस्याश्चतुर्भंगिकाया आद्यभंगद्वयोदाहरणानि प्रायो लिंगदर्शनचतुर्भंगिकाद्यभंगद्वयसदृशानीति कृत्वा निर्युक्तिकृन्नोदाहरति ततो वयमेवोदाहरामः लिंगतः साधर्मिका न ज्ञानतः विभिन्नज्ञाना यतय एकादर्शी प्रतिमां प्रतिपन्नाः श्रावका निन्हवाश्च । अत्रापि श्रावकाणां निन्हवानां चार्थाय कृतं कल्पते न यतीनां ज्ञानतः साधर्मिका न लिंगतः समानज्ञानास्तीर्थकरप्रत्येकबुद्धा एकादर्शी प्रतिमावर्ज्जाः । श्रावकाश्च तेषामर्थाय कृतं कल्पते न यतीनां न लिंगतो नापि ज्ञानतो विभिन्नत्वाज्ज्ञाताः साधव एकादर्शी प्रतिमां प्रतिपन्नाः श्रावकाश्च अत्रापि श्रावकाणां अर्थाय कृतं कल्पते । लिंगचरणयोरियं चतुर्भंगिका लिंगतः साधर्मिका न चरणतः १ चरणतः साधर्मिका न लिंगतो २ लिंगतः साधर्मिकाश्चरणतश्च ३न लिंगतो नापि चरणतः४अस्या अपि चतुर्भंगिकाया उदाहरणानि प्रायः पूर्व्वसदृशानीति कृत्वा निर्युक्तिकृत् नोदाहृतवान् ततोऽहमेवोदाहरामि लिंगतः साधर्मिका न चारित्रतो विभिन्नचारित्रा यतयः एकादर्शी प्रतिमां प्रतिपन्नाः श्रावका निह्नवाश्च अत्र श्रावकाणां निह्नवानां चार्थाय कृतं कल्पते न यतीनां चरणतः साधर्मिका न लिंगतः प्रत्येकबुद्धास्तीर्थकृतश्च समानचारित्रास्तेषामर्थाय कृतं साधूनां कल्पते । लिंगतः साधर्म्मिकाश्चरणतश्च समानचारित्रा यतयः तेषामर्थाय कृतं न कल्पते न लिंगतो नापि चरणतो विसदृशाचरणाः प्रत्येकबुद्धास्तीर्थकरा एकादशप्रतिमावर्जाः श्रावकाश्च तेषामर्थाय कृतं कल्पते लिङ्गाभिग्रहयोश्चतुर्भंगिका इयं लिङ्गतः साधर्मिका नाभिग्रहतः१अभिग्रहतः साधर्मिका न लिंगतो २ लिंगतः साधर्मिका अभिग्रहतश्च ३ न लिंगतो नाप्यभिग्रहत ४ स्तत्राद्यं भंगद्वयमुदाहरति ।

लिंगेण उ नाभिग्गह अणभिग्गहवीसुभिग्गाही चेव ।
जइ सा गवी यभंगे पत्तेयं पुहा तित्थयरा ॥

लिंगेन साधर्म्मिका नाभिग्रहतोऽनभिग्रहा यद्वा विष्वगाभिग्रहणे विभिन्नाभिग्रहाकलिता यतय एकादर्शी प्रतिमां प्रतिपन्ना श्रावकाश्च वेदितव्या उपलक्षणमेतत् निह्नवाश्च । अत्रापि निह्नवानां श्रावकाणां चार्थाय कृतं कल्पते । न यतीनां अभिग्रहतः साधर्मिका न लिंगत इत्येवंरूपे द्वितीये भंगे प्रत्येकबुद्धास्तीर्थकराश्च शब्दादेकादशप्रतिमावर्जाः श्रावकाश्च समानाभिग्रहा द्रष्टव्याः । एतेषामर्थाय कृतं कल्पते लिंगतः साधर्मिकास्तु अभिग्रहतश्च समानाभिग्रहाः साधव एकादर्शी प्रतिमां प्रतिपन्नाः श्रावका निह्नवाश्च । अत्रापि श्रावकनिह्नवानामर्थाय कृतं कल्पते न यतीनां न लिंगतो नाप्यभिग्रहतश्च विसदृशाभिग्रहास्तीर्थकरप्रत्येकबुद्धैकादशप्रतिमावर्जश्रावकाः एतेषामर्थाय कृतं कल्पते लिंगभावनयोरियं चतुर्भंगिका लिंगतः साधर्मिका न भावतो भावतः साधर्मिका न लिंगतो लिंगतः साधर्मिका निह्नवाश्च । अत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते न साधूनामर्थाय भावनातः साधर्मिका न लिंगतः प्रत्येकबुद्धास्तीर्थकृत एकादर्शी प्रतिमाम प्रतिपन्नाः श्रावकाश्च समानभावनाका एतेषामर्थाय कृतं कल्पते लिंगतः साधर्मिका भावनातश्च समानभावनाकाः साधव एकादर्शी प्रतिमां प्रतिपन्नाः श्रावका निह्नवाश्च । अत्रापि श्रावकनिह्नवानामर्थाय कृतं कल्पते न यतीनां न लिंगतो नापि भावनातो विसदृशभावनाकास्तीर्थकरप्रत्येकबुद्धैकादशप्रतिमावर्जाः श्रावकाः एतेषामर्थाय कृतं कल्पते, तदेवं लिंगविषयाः पंच चतुर्भंगिका उक्ताः । संप्रति दर्शनस्य ज्ञानादिभिः सह वक्तव्यास्तत्र दर्शनयोरियं चतुर्भंगिका दर्शनतः साधर्मिका न ज्ञानतः१ज्ञानतः साधर्मिका न दर्शनतः२ दर्शनतोऽपि साधर्म्मिका ज्ञानतश्च३ । न दर्शनतो नापि ज्ञानतः ४ ॥
तत्राद्यं भंगद्वयमुदाहरति ॥

दंसणनाणे पढमभंगो उ जइ सा गवी सु नाणी ।
एवं त्रिय ि्रगभंगो विदर्शज्ञाने दर्शनज्ञानाविषयायां ॥

"जइणो वीसाभिग्गह पढमो वियह सा गजइणोउ"।

चरणतः साधर्म्मिका नाभिग्रहत इत्येवंरूपः प्रथमो भंगः समानचरणा विष्वगभिग्रहा विभिन्नाभिग्रहा यतयः अत्र न कल्पते अभिग्रहतः साधर्म्मिका न चरणत इत्येवंरूपो-द्वितीयो भंगः समानाभिग्रहा निह्नवाः श्रावका विभिन्न-चरणा यतयश्च। अत्र श्रावकाणां निह्नवानां चार्थाय कृतं कल्पते न यतीनां चरणतः साधर्म्मिका अभिग्रहतश्च समानाभिग्रहाश्चरणा यतयः अत्रन कल्पते न चरणतो नाप्यभिग्रहतः सदृशाभिग्रहचरणाः साधवो विसदृशाभि ग्रहाः श्रावका निह्नवाश्च। अत्र कल्प्याकल्प्यभावनं वा द्विती यभंग इव चरणभावनयोरियं चतुर्भंगिका चरणतः साधर्म्मि-का न भावनातः १ चरणतः साधर्म्मिका भावनातः २ भावनातः साधर्म्मिका न चरणतः ३ नचरणतो नापि भावनातः ४अस्या उ-दाहरणान्यतिदेशत आह "एवं तु भावणे सु वि" यथा चरणेन सिंहाभिग्रहे उदाहृतमेवं भावनयाप्युदाहर्तव्य तच्चैवं चरणतः साधर्म्मिका न भावनातः समानचरणा विभिन्नभावा यतयः १ भावनातः साधर्मिका न चरणतः समानभावना निह्नवाः श्रावका विभिन्नचरणा यतयश्च २ चरणतः साध-र्मिका भावनातश्च समानचरणभावना यतयः ३ न चरणतो नापि भावनातः विसदृशचरणभावनाः साधवो विसदृश-भावनाः श्रावका निह्नवाश्च ४ अत्र चतुर्ष्वपि भंगेषु कल्प्या-कल्प्यविधिः प्रागिव तदेवं चरणविषये अपि द्वे चतुर्भंगिके उक्ते संप्रत्यभिग्रहभावनयोश्चतुर्भंगिकां वक्तुकाम आह। "वोच्छं दोगहंति माणित्तो" इत ऊर्द्ध द्वयोरंतिमयोरभिग्रह-भावनालक्षणयोः पदयोश्चतुर्भंगिकामुदाहरणतो वक्ष्ये तत्र तयोरियं चतुर्भंगिका अभिग्रहतः साधर्मिका न भाव-नातः १ भावनातः साधर्म्मिका नाभिग्रहतः २ भावनातः सा-धर्म्मिका अभिग्रहतश्च ३नाभिग्रहतो नापि भावनात ४ स्तत्र भागद्वयमुदाजिहीर्षुराह। "जइणो सावगनिण्हवपढमे वीए य हुंति भंगे य"। अभिग्रहतः साधर्मिका न भावनात इत्येवं-रूपे प्रथमे भंगे भावनातः साधर्मिका नाभिग्रहत इत्येवं रूपे द्वितीये च भंगे यतयः श्रावका निह्नवाश्च भवंति केवलं प्रथमभंगे समानाभिग्रहा विसदृशभावना वेदितव्याः द्वितियभंगे पुनः समानभावना विसदृशाभिग्रहाः अभिग्र-हतः साधर्मिका भावनातश्च समानभावनाभिग्रहाः साधु-श्रावका निह्नवाभिग्रहतो नापि भावनातो विसदृशभावना-भिग्रहाः साधुश्रावका निह्नवाः। अत्र चतुर्ष्वपि भंगेषु श्राव-कनिह्नवानामर्थाय कृतं कल्पते न साधूनामिति तदेवमुक्ता एकविंशतिरपि चतुर्भंगिकाः॥

(७) तीर्थकरस्य आधाकर्म्मभोजित्वम्।

संप्रति सामान्यकेवलिनं तीर्थकरं चाधिकृत्य कल्प्याकल्प्य विधिकथयंति "केवलनाणे तित्थंकरस्स नो कप्पइ कयंतु" केवलज्ञाने केवलज्ञानिनः सामान्यसाधोरुपलक्षणमेतत्तेन तीर्थकरप्रत्येकबुद्धवर्ज्जानां शेषसाधूनामित्यर्थः। तीर्थ-करस्य तीर्थकरग्रहणमुपलक्षणं तेन प्रत्येकबुद्धस्य चार्थाय कृतं यथाक्रमत्र कल्पते तु शब्दस्यानुक्तार्थसमुच्चयार्थकत्वात् कल्पते च। इयमत्र भावना तीर्थकरप्रत्येकबुद्धवर्ज्जशेषसा-धूनामर्थाय कृतं न कल्पते। तीर्थकरप्रत्येकबुद्धानां त्वर्थाय कृतं कल्पते तथा हि तीर्थकरनिमित्तं सुरैः कृतमपि समव-सरणं तत्र साधूनां देशनाश्रवणार्थमुपवेशनादि कल्पते। एवं भक्ताद्यपि एवं प्रत्येकबुद्धस्यापि।

संप्रति यानाश्रित्य पूर्वोक्ता भंगाः संभवंति स्म तान् प्रति पादयति—

पत्तेयबुद्धनिण्हव उवासए केवली य आसज्ज।
खइयाइए य भावे पडुच्चभंगे उ जाएज्जा॥

प्रत्येकबुद्धान् निह्नवान् उपासकान् श्रावकान् केवलिनस्तीर्थ-करान्अपिशब्दाच्छेषसाधूंश्चाश्रित्य तथा क्षायिकादीन् भावा-न् क्षायिक क्षयोपशमिकानि दर्शनानि च शब्दाद्विचित्राणि ज्ञानानि चरणानि अभिग्रहान् भावनाश्च प्रतीत्य भंगान् योजयेत्ते च तथैव योजिताः।

तत्रप्रथमचतुर्भंगिकां प्रवचनलिंगविषयामधिकृत्य विशेष-तः कल्पाकल्पविधिमाह—

तत्थ उ तइओभंगो तत्थ न कप्पंत सेसए भयणा।
तित्थंकरकेवलिणो जहकप्पं नो य सेसाणं॥

यत्र साधर्मिके तृतीयो भंगः प्रवचनतः साधर्मिका लिं-गतश्चेत्येवंरूपस्तत्र न कल्पते यतः प्रवचनतो लिंगतश्च साधर्मिकाः प्रत्येकबुद्धतीर्थकरवर्जा यतयस्ततस्तेषां अ-र्थाय कृतं न कल्पते। तुशब्दोऽनुक्तसमुच्चयार्थः स च श्राव-कस्य एकादशीं प्रतिमां प्रतिपन्नस्य तृतीयभंगभाविनोऽप्य-र्थाय कृतं कल्पत इति समुच्चिनोति केचिदाहुरेकादशीं प्रतिमां प्रतिपन्नः साधुकल्प इति तस्याप्यर्थाय कृतं न क-ल्पते। तदयुक्तं मूलटीकायामस्यार्थस्यासम्मतत्वात्मूलटी-कायां हि लिंगाभिग्रहचतुर्भंगिकाविषये कल्पाकल्पविधि-रेवमुक्तो लिंगेनाभिग्रहे "जइसाहू न कप्पइ गिहत्थगिग्रहवे-कप्पइत्ति"। इह लिंगयुता गृहस्था एकादशीं प्रतिमां प्र-तिपन्नाः श्रावका एव लभ्यंते। ततस्तेषामर्थाय कृतं क-ल्प्यमुक्तं (सेसएभयणत्ति) शेषके भंगकत्रये भजना वि-कल्पना क्वचित्कथंचित्कल्पतेक्वचिन्न। भंगचतुष्टयमप्य-धिकृत्य सामान्यत उदाहरति (तित्थंकरेत्यादि) यथेत्यु-दाहरणोपन्यासार्थः। तीर्थकरकेवलिनोऽर्थाय कृतं कल्प-ते इह तीर्थकर उत्पन्नकेवलज्ञान एव प्रायः सर्वत्रापि भूमण्डले प्रतीतो भवति। प्रतीतस्य च तीर्थकरस्यार्थाय कृतं कल्पते नाप्रतीतस्य ततः केवलिग्रहणं यदा पुनः छ-द्मस्थावस्थायामपि तीर्थकरत्वेन प्रतीतो भवति। तदा त-स्यामवप्यवस्थायां तन्निमित्तं कृतं कल्पते तीर्थकरग्रहणं च प्रत्येकबुद्धानामुपलक्षणं तेन तेषामप्यर्थाय कृतं कल्पते (नोय सेसाणंति) शेषसाधूनामर्थाय कृतं न कल्प-ते इदं च सामान्यत उक्तं। ततोऽमुमेवार्थं उपजीव्य तृतीय वर्जे शेषभंगत्रये भजनाः स्पष्टमुपदिश्यंते प्रवचनतः साधर्मि-का न लिंगतः एकादशप्रतिमाप्रतिपन्नवर्जाः शेषश्राव-कास्तेषामर्थाय कृतं कल्पते ये तु चौरादिमुषितरजोह-रणादिलिंगाः साधवस्तेषामर्थाय कृतं न कल्पते द्रव्य-लिंगापेक्षया साधर्मिकत्वाभावेऽपि भावतश्चरणसाधर्म्मिक-त्वाल्लिंगतः साधर्मिका न प्रवचनतो निह्नवास्ते यदि लोके निह्नवत्वेन ख्यातास्ततस्तेषामर्थाय कृतं कल्पते। अन्यथा न प्रवचनतो न लिंगतस्तीर्थकरप्रत्येकबुद्धास्तेषाम-र्थाय कृतं कल्पते तदेवं प्रथमचतुर्भंगिकामाधिकृत्य क-ल्पाकल्पविधिरुक्त एतदनुसारेण च शेषास्वपि चतुर्भंगि-

कासु विज्ञेयः स च प्रागेव प्रत्येकं दर्शितः सर्वत्राप्ययं तात्पर्यार्थोऽवधारणीयो यदि तीर्थकराः प्रत्येकबुद्धा निह्नवाः श्रावका वा तर्हि तेषामर्थाय कृतं कल्पते । साधूनामर्थाय कृतं न कल्पते तदेवमुक्तः कल्पाकल्पविधिस्तदुक्तौ च आहाकम्मियदनामेत्यादि मूलद्वारगाथायां कस्स वा वीति व्याख्यातं ॥ पिं० ॥ आत्मघ्नाविंद्धे ॥
बृहत्कल्पेऽपि—

जीव उाद्दस्स कडं कंमं सो वि य जया उ साहंमी ।
साविय तइएभंगे लिंगादीणं न सेसेसु ॥

जीवमुद्दिश्य यत् षट्कायविराधनया कृतं सोऽपि च यदि जीवः सार्धमिकः समानधर्मा भवति सोऽपि च साधर्मिको लिंगादीनां लिंगतः साधर्मिको न प्रवचनतः इत्यादीनां चतुर्णां भंगानां तृतीये भंगे लिंगतः प्रवचनतोऽपीत्येवं लक्षणो यदि वर्तते न शेषेषु तदेतदाधाकर्म मंतव्यं अथ तीर्थकरप्रतिमार्थं तन्निवर्तते तत्साधूनां किं कल्पते नवेत्याशंकानिरासार्थमाह ॥

संवट्टमेहपुप्फा सत्थनिमित्तं कया जइजईणं ।
न कुह्लब्भापाडिसिद्धं किं पुणपडिमट्टमारद्धं ॥

शास्ता तीर्थकरस्तस्य निमित्तं यानि देवैः संवर्त्तकमेघपुष्पाणि समवसरणभूमौ कृतानि तानि यतीनां यदि प्रतिषेद्धुं न लभ्यन्ते तेषां तत्रावस्थातुं यदि कल्पते इति भावः । तर्हि किं पुनः प्रतिमार्थमजीवानां हेतोरारब्धं ततः पुरातनं प्रतिषेधमर्हतीत्यभिप्रायः । आह यदि तीर्थकरार्थं संवर्तकमेघपुष्पाणि कृतानि तर्हि तस्य भगवतस्तानि प्रतिसेवमानस्य कथं न दोषो भवतीत्युच्यते ॥

तित्थपरनामगोयस्स खयट्ठा अविय दोण्णि साभव्वा ।
धम्मं कहेइ सत्था पूयं वा सेवई तं तु ॥

तीर्थकरनामानो गोत्रस्य कर्मणः क्षयार्थं शास्ता भगवान् धर्मं कथयति पूजां च तामनंतरोक्तां संवर्त्तकवातप्रभृतिकामासेवते भगवता हि तीर्थकरनामगोत्रं कर्मावश्यं वेदनीयं विपाकोदयावर्तित्वात् तस्य च वेदने अयमेवोपायो यदग्लान्या धर्मदेशनाकरणं सदेवमनुजासुरलोकविरचितायाश्च पूजाया उपजीवनं । तं च "कह वेइज्जइ अगिलाए धम्मदेसणाईहिं" तथा "उदए जस्स सुरासुरनरवइनिवहेहिं पूइ ओ लोए तं तित्थयरं नामं तस्स विवागो उकेवलिणो" इति वचनप्रामाण्यात् अपिचेत्यभ्युच्चये ( दोण्णित्ति ) निपातो वाक्यालंकारे ना भवति । स्वोभावः स्वभावः यथा आपो द्रवाश्चलोवायुरित्यादि " तस्य भावः स्वाभाव्यं तस्मात् तस्य हि भगवतः स्वभावोऽयं यत्तथा धर्मकथाविधानं पूजायाश्चासेवनं इद भवस्पष्टतरमाह ॥

खणकसाओ अरिहा कय किच्चो अविय जीयमणुयत्ती ।
पडिसेवंतो वि अवउ ऽदोसवंतो इतं पुव्वं ॥

क्षीणाः प्रलयमुपगताः कषायाः क्रोधादयो यस्य स क्षीणकषाय एवंविधोऽर्हन् तां पूजां प्रतिसेवमानोऽपि न दोषवान् इयमत्र भावना यो हि रागादिमान् पूजामुपजीवन् स्वात्मन्युत्कर्षं मन्यते स दोषभाग् भवति भगवतस्तु क्षीणकषायस्य पूजामुपजीवतोऽपि नास्ति स्वात्मन्युत्कर्षगन्धोऽतो दूरापास्तप्रसरा तस्य सदोषतेति तथा कृतकृत्यः केवलज्ञानाभाग्निष्ठितार्थः ततः कृतकृत्यत्वादेवासौ पूजामासेवते न च दोषमापद्यते अपि च जीवमुपजीवनीया सुरासुरविरचिता पूजेत्येवंलक्षणं कल्पमनुवर्त्तयितुं शीलमस्यासौ जीवानुवर्त्ती गाथायां मकारो लाक्षणिकः । आह भवत्येवं परं तीर्थकरस्य तत्प्रतिमाया वा निमित्तं यत्कृतं तत्केन कारणेन यतीनां कल्पते उच्यते ।

साहंमिओ न सत्था तस्स कय तेण कप्पई जइणं ।
जं पुण पडिमाण कयं कस्स कहा का अजीवत्ता ॥

शास्ता तीर्थकरः संधार्मिको लिंगतः प्रवचनतोऽपि न भवति तद्य लिंगमस्य भगवतो नास्ति तथाकल्पत्वात् अतो न लिंगतः साधर्मिकः प्रवचनतोऽपि साधर्मिकः सोऽभिधीयते यश्चतुर्वर्णसंघाभ्यंतरवर्त्ती भवति "पवयणसंघेयगरे" इति॥ वचनात् भगवांश्च तत्प्रवर्तकतया न तदभ्यंतरवर्ती किंतु वर्णस्यापि संघस्यापि ततो न प्रवचनतोऽपि साधर्मिक इत्यतस्तस्य तीर्थकरस्यार्थाय कृतं यतीनां कल्पते यत्पुनः प्रतिमानामर्थाय कृतं तस्य का कथा का वार्ता सुतरां तत्कल्पते कुत इत्याह जीवमुद्दिश्य यदि यत्कृतं तदाधाकर्म भवति ( जीवंउद्दिस्सकडं इति ) प्रागेवोक्तत्वात् तच्च जीवत्वमेवप्रतिमानां नास्तीति ॥

अथ वसतिविषयमाधाकर्म दर्शयति—

ठाइमठाई ओसरणमंडवा संजयट्ठदेसे वा ।
पेढी भूमीकंमे निसेवतो अणुमई दोसा ॥

( ओसरणे ) समवसरणे बहवः संयताः समागमिष्यंतीति बुद्ध्या श्रावका धर्मश्रद्धया बहून् मंडपान् कुर्युः ते च द्विधा स्थायिनोऽस्थायिनश्च ये समवसरणपर्वणि व्यतीते सति नोत्कीलयंते ते स्थायिनः ये पुनरुत्कीलयंते ते अस्थायिनः पुनरेकैके द्विविधाःसंयतार्थकृता देशकृता वा । ये आधाकर्मिकास्ते संयतार्थकृताः ये तु साधूनामात्मनः स्वार्थाय कृतास्ते देशकृताः एतेषु तिष्ठतां तन्निष्पन्नं प्रायश्चित्तं । तथा पीठिका नामोपवेशनादिस्थानविशेषाः (भूमिकम्मेति) भूमिकर्म विषमायाः भूमेः समीकरणं । उपलक्षणं चेदं तेन संमार्जनोपलेपनादिपरिग्रहः । एतान्यपि पीठिकादीनि संयतार्थकृतानि देशकृतानि भवेयुः । एतानि मंडपादीनि सदोषाणि निषेवमाणस्य अनुमतिदोषा भवंति एतेषु क्रियमाणेषु या पराणां जीवनिकायानां विराधना सा अनुमोदिता भवतीति भावः कल्पवृत्ति आधाकम्मसद्दा० १ ॥

आधाकर्मणः कल्पाकल्पविवेको बृहत्कल्पे यथा

आहाअहेय कम्मे आताहम्मे य अत्तकम्मे य ।
तं पुण आहाकम्मं णायव्वं कप्पते कस्स ॥

आधाकर्म्म अधःकर्म आत्मघ्नं आत्मकर्म चेति चत्वारि नामानि तत्र साधूनामाधया प्रणिधानेन यत्कर्म षट्कायविनाशेनाशनादिनिष्पादनं तदाधाकर्म तथा विशुद्धसंयमस्थानेभ्यःप्रतिपत्यात्मानमविशुद्धसंयमस्थानेषु यदधोधः करोति तदधःकर्म । आत्मानं ज्ञानदर्शनचारित्ररूपं हंति विनाशयतीत्यात्मघ्नो यत्पाचकादिसंबंधिकर्म पाकादिलक्षणं ज्ञानावरणीयादिलक्षणं वा तदात्मनः संबंधि क्रियते अनेनेत्यात्मकर्म तत्पुनराधाकर्म्म कस्य पुरुषस्य कल्पते न वा यद्वा कस्य तीर्थं कथं कल्पते न कल्पते चेदममीभिर्द्वारैर्ज्ञातव्यं ॥

तान्येव दर्शयति ॥

संघस्स पुरिममज्झिम समणेण चेव समणीणं ।
चउण्हं उवस्सयणं कायव्वा मग्गणा होति ॥

आधाकर्मकारी सामान्येन विशेषेण वा संघस्योद्देशं कुर्यात् । तत्र सामान्येनाविशेषितं संघमुद्दिशति । विशेषेण तु पूर्वं वा मध्यमं वा पश्चिमं वा संघं चेतसि प्रणिधत्ते श्रमणानामप्योघतो विभागतश्च निर्देशं करोति तत्रौघतो ऽविशेषितश्रमणानां विभागतः पंचयामिकश्रमणानां चतुर्यामिकश्रमणानाम् एवं श्रमणीनामपि वक्तव्यं तथा चतुर्णामुपाश्रयाणामप्येवमेव सामान्येन विशेषेण च मार्गणा कर्तव्या भवति । तत्र चत्वार उपाश्रया इमे पंचयामिकानां श्रमणानामुपाश्रयमुद्दिशतीत्येकः पंचयामिकानामेव श्रमणीनां द्वितीयः ॥

एवं चतुर्यामिकश्रमणश्रमणीनामप्येवं भावयति ॥

संघं समुद्दिसिता पढमो वितिउयसमणसमणीओ ।
ततिओ ओवस्सए खलु चउत्थओ एगपुरिसस्स ॥

आधाकर्मकारी प्रथमो दानश्राद्धादिः संघसामान्येन विशेषेण वा समुद्दिश्याधाकर्म करोति । द्वितीयःश्रमणश्रमणी प्रतिधाय करोति तृतीय उपाश्रयानुद्दिश्य करोति चतुर्थ एकपुरुष स्योद्देशं कृत्वा करोति ॥

(८)अत्र यथाक्रमं द्वाविंशतिजिनेषु कल्पाकल्पविधिमाह–

जति सव्वं उद्दिसिउं संघं कारेति दोण्ह वि ण कप्पे ।
अहवा सव्वे समणा समणी वा तत्थ वि तहेव ॥

यदीत्यभ्युपगमे यदि नाम ऋषभस्वामिनोऽजितस्वामिनश्च तीर्थमेकत्र मिलितं भवति पार्श्वस्वामिवर्द्धमानस्वामिनोर्वा तीर्थं मिलितं यदा प्राप्यते तदा तत्कालमंगीकृत्यायं विधिरभिधीयते सर्वमपि संघं सामान्येनोद्दिश्य यदाधाकर्म करोति । यद्वा द्वयोरपि पंचयामिकचतुर्यामिकसंघयोर्न कल्पते । अथ सर्वान् श्रमणान् सामान्येनोद्दिशति । ततस्तत्रापि श्रमणानामपि सामान्येनोद्दिशति । ततस्तत्रापि श्रमणानामपि सामान्येनोद्देशेन तथैव सर्वेषामपि पंचयामिकानां चतुर्यामिकानां न कल्पते । एवं श्रमणीनामपि सामान्येनोद्देशेन सर्वासामकल्प्यं ॥

अथ विभागोद्देशे विधिमाह—

जं पुण पुरिसं संघं उद्दिसती मज्झिमस्स नो कप्पो ।
मज्झिमउद्दिट्ठे पुण दोण्हं पि अकप्पियं होति ॥

यदि पुनः पूर्वऋषभस्वामिसक्तं संघमुद्दिशति ततो मध्यमस्याजितस्वामिसंघस्य कल्पते अथ मध्यमसंघमुद्दिशति तदा द्वयोरपि पूर्वमध्यमसंघयोरकल्पं भवति एवं पश्चिमतीर्थकरसत्कसंघमुद्दिश्य कृतं मध्यमस्य कल्पते। मध्यमस्य कृतं द्वयोरपि न कल्पते।

एमेव समणवग्गो समणीवग्गो य पुव्वमुद्दिट्ठे ।
मज्झिमगाणं कप्पे तेसिं कडं दोण्ह वि ण कप्पं ॥

एवमेव श्रमणवर्गे श्रमणीवर्गे यत्पूर्वेषामृषभस्वामिसंबंधिनां श्रमणानां श्रमणीनां वा यदुद्दिष्टमुद्दिश्य कृतं तन्मध्यमानां श्रमणश्रमणीनां कल्पते । तेषां मध्यमानामर्थाय कृतमुभयेषामपि पूर्वमध्यमानां साधुसाध्वीनां न कल्पते। एवं पश्चिममध्यमानामपि वक्तव्यं।

अथैकपुरुषोद्देशे विधिमाह—

पुरिमाणं एक्कस्स वि कयं तु सव्वेसि पुरिमचरमाण ।
ण विकप्पेट्ठवणामेत्तगहणं तहिं नत्थि ॥

पूर्वेषामृषभस्वामिसक्तानामेकस्यापि पुरुषस्यार्थाय कृतं सर्वेषामपि पूर्वपश्चिमानामकल्प्यं। पश्चिमानामप्येकस्यार्थाय कृतं सर्वेषां पूर्वपश्चिमानामकल्प्यं एतच्च स्थापनामात्रं प्ररूपणामात्रं संज्ञाविज्ञानार्थं क्रियते बहुकालान्तरत्वेन पूर्वपश्चिमसाधूनां एकत्रासंभवात् तत्र परस्परं ग्रहणं नास्ति न घटते मध्यमानां तु यदि सामान्येनैकं साधुमुद्दिश्य कृतं तत एकेन गृहविशेषाणां कल्पते अथ किमप्येकं विशिष्य कृतं ततस्तस्यैवाकल्प्यं शेषाणां सर्वेषामपि कल्प्यं पूर्वपश्चिमानां तु सर्वेषामपि तत्र कल्पते ॥

अथोपाश्रयोद्देशे विधिमाह ।

एवमुवस्सयपुरिसे उद्दिट्ठणतं तु पच्छिमा भुंजे ।
माज्झिमतव्वज्जाणं कप्पे उद्दिट्ठसमपुव्वो ॥

एवं यदि सामान्येनोपाश्रयाणामुद्देशं करोति तदा सर्वेषामकल्प्यं अथ पूर्वेषां मध्ये तीर्थकरसाधूनामुपाश्रयानुद्दिशति ततस्तदर्थमुद्दिष्टं पश्चिमा उपलक्षणत्वात्पूर्वे वा साधवः सर्वेऽपि न भुंजते मध्यमानां पुनः कल्पनीयं । अथ मध्यमसाधूनामुपाश्रयान् सर्वानुद्दिश्य करोति ततो मध्यमानां पूर्वपश्चिमानां सर्वेषामकल्प्यं अथ क्रियत एव मध्यमोपाश्रयानुद्दिशति ततस्तद्वर्जानांतेपूपाश्रयेषु ये श्रमणास्तान् वर्जयित्वा शेषाणां मध्यमश्रमणश्रमणीनां कल्पते।(उद्दिष्ठरूपुव्वत्ति) पूर्वे साधवः ऋषभस्वामिसत्का भण्यंते ते उद्दिष्टसमये साधुमुद्दिश्य कृतं तत्तुल्याः एकमुद्दिश्य कृतं सर्वेषामकल्पनीयमिति भावः. एवं तावत्पूर्वेषां मध्यमानां च भणितं ॥

अथ मध्यमानां पश्चिमानांवाभिधीयते ।

सव्वे समणासमणी मज्झिमगा चेव पच्छिमा चेव ।
मज्झिमगसमणसमणी पच्छिमगा समणसमणीतो ॥

सर्वेषु श्रमणः श्रमण्यो वा यदोद्दिश्यंते तदा सर्वेषामकल्पं ( मज्झिमगा चेवेत्ति ) अथमध्यमश्रमणाः श्रमण्यो वा उद्दिष्टास्ततो मध्यमानां पश्चिमानां च सर्वेषामकल्प्यं ( पच्छिमाचेवेत्ति ) पश्चिमानां श्रमणश्रमणीनामुद्दिष्टे तेषां सर्वेषामकल्पं मध्यमानां कल्पं मध्यमश्रमणानामुद्दिष्टं मध्यमसाध्वीनां कल्पते मध्यमश्रमणीनामुद्दिष्टं मध्यमसाधूनां कल्पते पश्चिमश्रमणानामुद्दिष्टे पश्चिमसाधुसाध्वीनां न कल्पते मध्यमानामुभयेषामपि कल्पते एवं पश्चिमश्रमणीनामप्युद्दिष्टे वक्तव्यं ।

उवस्सयगणियविभाव ओ उज्झगजढायवं कजुद्दाय ।
मज्झिमग उज्जुपण्णायत्थासण्णायगागमणं ॥

अथोपाश्रयेषु साधून् गणितविभाजितान् करोति गणिता नाम इयतां पंचादिसंख्याकानां दातव्यं विभाजिता अमुकस्यामुकस्येति नामोत्कीर्तनेन निर्द्धारिताः अत्र चतुर्भंगी गणिता अपि विभाजिता अपि १ गणिता न विभाजिता २ विभाजिता न गणिता ३ नगणिता न विभाजिता ४ अत्र

प्रथमभंगे मध्यमानां गणितविभाजितानामेवाकल्प्यं शेषाणां कल्पते द्वितीयभंगे यावत् प्रमाणैर्न गृहीतं भवेत्सर्वेषामकल्पं । गणितप्रमाणैर्गृहीते मध्यमानां शेषाणां कल्पं तृतीयभंगे यावंतः सद्दशनामानस्तेषां सर्वेषामकल्पं शेषाणां कल्पं चतुर्थभंगे सर्वेषामकल्पं पूर्वपश्चिमानां तु सर्वेष्वपि भंगेषु न कल्पते ॥ पिंड० ॥

( ६ ) अशनादिषु आधाकर्मसंभवः ॥

संप्रति किंवावीति व्याचिख्यासुराह–

किंतं आहाकम्मंति पुच्छिए तस्स रूवकहणत्थं ।
संभवपदंसणत्थं च तस्स असणाइयं गुरू भणइ ॥

किं तदाधाकर्मेति शिष्येण पृष्टे तत्स्वरूपकथनार्थं । तस्याधाकर्मणः संभवप्रदर्शनार्थं च अशनादिकमशनपानखादिमस्वादिमं गुरुर्भणति इयमत्रभावना किंस्वरूपमाधाकर्म अशनादावेव आधाकर्मणः संभवस्ततो गुरुः किमाधाकर्मेति पृष्टः सन्नशनादिकमेव वक्ति तथा च शय्यंभवसूरिराधाकर्म दर्शयन् पिंडैषणाध्ययने अशनादिकमभिधत्ते तद्यथा "असणं पाणगं चेव खाइमं साइमं तहा । जं जाणेज्ज सुणेज्जा वा समणट्ठा पगडं इमं । तं भवे भत्तपाणं तु संजयाण अकप्पियं। दितियं पडियाइ क्खे न मे कप्पइ तारिसमिति" । संप्रत्यशनादिकमेव व्याचष्टे "सालीमाई अवडे फलाई सुंठाइ साइमं होइ" शाल्यादिकमशनं अवट इति वापीकूपतड़ागाद्युपलक्षणं ततः कूपवापीतड़ागादौ यद्यत्पानं तथा फलादि फलं नालिकेरादि । आदिशब्दात्त्रणिकापुष्पादिपरिग्रहः तत्र खादिमं शुंठ्यादिकं स्वादिमं, तत्र शुंठी प्रतीता आदिशब्दात् हरीतक्यादिपरिग्रहः तदेवं व्याख्यातान्यशनादीनि ।

संप्रत्येतेष्वेवाधाकर्मरूपेषु प्रत्येकं भंगचतुष्टयमाह "तस्स कडनिट्ठियंमी सुद्धमसुद्धे य चत्तारि" तस्येति प्रस्तावात् साधोरर्थाय कृतमित्यत्र तुद्धावादिकर्मविवक्षायां क्तप्रत्ययस्ततोऽयमर्थः । कर्त्तुं प्रारब्धं तथा तस्य साधोरर्थाय निष्ठितं सर्वथा प्रासुकीकृतमित्यत्र विषये ( चत्तारीति ) चत्वारो भंगा भवंति तत्र प्रथम एव एवं भंगस्तस्य कृतं निष्ठितं द्वितीयस्तस्य कृतमन्यस्य निष्ठितं तृतीयोऽन्यस्य कृतं तस्य निष्ठितं चतुर्थोऽन्यस्य कृतमन्यस्य निष्ठितं तत्र प्रथमे व्याख्याने द्वितीयादीनां तु भंगानामयमर्थः पूर्वं तावत्तस्य साधोरर्थाय कृतमारब्धं ततो दातुः साधुविषयदानपरिणामाभावतोऽन्यस्यात्मनः स्वपुत्रादेर्वार्थाय निष्ठां नीतं तथा प्रथमतोऽन्यस्य पुत्रादेरात्मनो वार्थाय कर्त्तुमारब्धं ततः साधुविषयदानपरिणामभावतः साधोरर्थाय निष्ठां नीतं । तथा प्रथमत एवाऽन्यस्य निमित्तं कर्त्तुमारब्धमन्यस्यैव च निमित्तं निष्ठां नीतं । एवमशने पाने खादिमे स्वादिमे च प्रत्येकं चत्वारश्चत्वारो भंगा भवंति । ततः ( सुद्धमसुद्धेयत्ति ) आर्षत्वात् शुद्धावशुद्धौ चेति द्रष्टव्यं । तत्र शुद्धौ साधोरासेवनायोग्यौ तौ च द्वितीयचतुर्थभंगौ तथा हि क्रियानिष्ठिता प्रधाना ततो यद्यपि प्रथमतः साधुनिमित्तं क्रिया प्रारब्धा तथापि निष्ठामन्यनिमित्तं नीतेति द्वितीयोभंगः साधोः कल्पते चतुर्थस्तु भंगः शुद्ध एव न तत्र विवादः अशुद्धावकल्पनीयौ तौ च प्रथमतृतीयौ तत्र प्रथम एकांतेनाशुद्धः

साध्वर्थं प्रारब्धत्वान्निष्ठितत्वाच्च । तृतीये तु भंगे यद्यपि पूर्वं न साधुनिमित्तं पाकादिक्रियारंभस्तथापि साधुनिमित्तं निष्ठां नीता निष्ठा च प्रधानेति न कल्पते तदेवमाधाकर्मस्वरूपं उक्तं ॥ पिंड० ॥

आधाकर्मण उत्पत्तिर्बृहत्कल्पे यथा–

सालीघय गुलगोरसनवेसु वल्लीफलेसु जातेसु ।
पुण्णट्ठकरणसड्ढा आहाकम्मे णिमंतणता ॥

कस्यापि दानरुचेरभिगमश्राद्धस्य वा नवः शालिर्भूयान् गृहे समायातस्ततः स चिंतयति पूर्वं यतीनामदत्वा ममात्मना परिभोक्तुं न युक्त इति परिभाव्याधाकर्म कुर्यात् एवं घृते गुड़े गोरसे नवेषु वा तुंब्यादिवल्लीफलेषु जातेषु पुण्यार्थं दानरुचिः श्राद्धः ( करणंति ) आधाकर्म कृत्वा साधूनां निमंत्रणं कुर्यात्–बृह० अ० द्वा० ॥

निशीथचूर्णौ सम्भवेभेदाश्चप्रदर्शिता यथा–॥ नि० चू० ॥ "तस्स आहाकम्मस्स कहं संभवो हवेज्ज इमो भयणातिसूत्रं॥

सालीघयगुलगोरस नवेसु वल्लीफलेसु जातेसु ।
पुण्णट्ठदाणसड्ढा आहाकंमे णिमंतणया ॥ ५७ ॥
आहाकंमे तिविहो आहारे उवधि वसहिमादीसु ।
आहाए वा कम्मं चउव्विधं होति असणादी ॥ ५८ ॥

कस्सति दाणरुइणो अभिगमसड्ढस्स नाणवो साली घय पवेसितो ताहे दाणसड्ढो चिंतेति पुव्वं जतिणं दाउं पच्छा अप्पणा परिभोगं करेमित्ति आहाकम्मं करेज्ज जहा सालीए एवं घृतगुडे गोरसे वा नवेसु वा तुंब्यादिवल्लिफलेषु जातेसु पुण णिमितं दाणसड्ढा जिया आहाकम्मं काउं साहुणो णिमंतेज्ज तस्स य आहाकम्मस्स इमे दोसा आहा कम्मं तिविधं आहारे उववधो सही य आदिसद्दो णामादिभेदप्रदर्शनार्थः । उत्तरभेदप्रदर्शनार्थं वा आहाए कम्मं चउव्विधं असणादियं गाहा ॥

उवही आहाकम्मं वत्थे पाए होति नायव्वं ।
वत्थे पंचविधं पुण तिविहं पुण होति पातंमि ॥ ५९ ॥

उवधी आहा कम्मं दुविधं वत्थे पादे य तत्थ वत्थे पंचविहं जंगियभंगियं सणियं पत्तयातिरीडपट्टं च पादे तिविहं लाउपदा रुयमट्टियापादं च एतेसिं वक्खाणं पूर्ववत् ॥ नि० चू० ॥

साम्प्रतमशनादिरूपस्याधाकर्मणः सम्भवं प्रतिपिपादयिषुः कथानकं रूपकषट्केनाह ॥ पिंड० ॥

कोइव वरालगामे वसहीरमणे ज्झभिक्खसज्झाए ।
खेत्तपडिलेहसंजयसावयपुच्छुज्जुए कहणा ॥
जुज्जइ गणस्स खेत्तं नवरि गुरूणं तु नत्थि पाउ ।
गा सालित्ति कए रूपेण परिभायण नियगगेहसु ॥
वोलेंता तेव अन्ने वा अडंता तत्थ गोयरं ।
सुणंति एसणाजुत्ता वालादिजं ण संकहा ॥
एए ते जेसिमो रद्धो सालिक्करोघरेघरे ।
दिन्ने वा संसयं देभि देवेहि वांवेति वा इमं ॥
अकेयकावडियं भगराए सान्धिसनगं जारं ।

मज्झयपइस्स भरणं दियरस्स मे मया भज्जा ॥
वाउलेदगंपि से देहि सालीआयामकंजियां ।
किमेयंति कयं नाउं वज्जं नन्नं वयंति वा ॥

इह संकुलो नाम ग्रामस्तत्र जिनदत्तनामा श्रावकस्तस्य भार्या विनमतिस्तत्र च ग्रामे कोद्रवरालकाश्च प्राचुर्येणोत्पद्यंते । इति तेषामेव कूरं गृहे भिक्षार्थमटंतः साधवो लभंते वसतिरपि स्त्रीपशुपंडकाविवर्जिता समभूतलादिगुणैरतिरमणीया कल्पनीया च प्राप्यते स्वाध्यायोऽपि तत्र वसतामविघ्नमभिवर्द्धते केवलं शाल्योदनो न प्राप्यत इति न केचनापिसूरयो भरेण तत्रावतिष्ठंते अन्यदा च संकुलग्रामे-प्रत्यासन्ने भद्रिलाभिधाने ग्रामे कचित् सूरयः समाजग्मुः तैश्च संकुलग्रामे क्षेत्रप्रत्युपेक्षणाय साधवः प्रेष्यंते साधवोऽपि तत्रागत्य यथागमं जिनदत्तस्य पार्श्वे वसतिमयाचिषत । जिनदत्तेनापि च साधुदर्शनसमुच्छलितप्रमोदभरसमुद्भिन्नरोमांचकंचुकितगात्रेण तेभ्यो वसतिः कल्पनीया उपादेशि । साधवश्च तत्र स्थिता यथाविधि साधून् वंदित्वा । महत्तरं साधुमपृच्छत् भगवन् रुचितमिदं युष्मभ्यं क्षेत्रं सूरयोऽत्र निजसमागमेनास्माकं प्रसादमाधास्यंति । ततः स ज्येष्ठः साधुरवादीत् । वर्तमानयोगेन ततो ज्ञातं जिनदत्तेन यथा न रुचितमिदमेतेभ्यः क्षेत्रमिति चिंतयितं च । अन्येऽपि साधवोऽत्र समागच्छंति परमं केचिदवतिष्ठन्ते । तन्न जानामि किमत्र कारणमिति ततः कारणपरिज्ञानाय तेषां साधूनामन्यतमं कमपि साधुमृजुं ज्ञात्वा पप्रच्छ । स च यथावस्थितमुक्तवान् यथात्र सर्वेऽपि गुणा विद्यंते गच्छस्यापि योग्यमिदं क्षेत्रं केवलमत्राचार्यस्य प्रायोग्यः शाल्योदनो न लभ्यते इति नावस्थीयते । तत एवं कारणं परिज्ञाय तेन जिनदत्तश्रावकेण परस्माद् ग्रामात् शालिबीजमानीय निजग्रामक्षेत्रभूमिषु वापितं ततः संपन्नो भूयान् शालिरन्यदा च यथाविहारक्रमं ते चान्ये वा साधवः समायासिषुः श्रावकश्च चिंतयामास यथैतेभ्यो मया शाल्योदनो दातव्यो येन सूरीणामिदं योग्यं क्षेत्रमिति परिभाव्य साधवोऽमी सूरीनत्रानयंति । तत्र यदि निजगृह एव दास्यामि ततोऽन्येषु गृहेषु कोद्रवरालके कूरं लभमानानामेतेषामाधाकर्मशंकोत्पत्स्यते तस्मात् सर्वेष्वपि स्वजनगृहेषु शालिं प्रेषयामीति तथैव च कृतं स्वजनांश्चोक्तवान् यथा स्वयमप्यमुं शालिं पक्त्वा भुंजत साधुभ्योऽपि च ददत एष च वृत्तांतः सर्वोऽपि बालादिभिरवजग्मे साधवश्च भिक्षामटंतो यथागममेषणासमितिसमिता बालादीनामुक्तानि शृण्वंति । तत्र कोऽपि बालको वक्ति एते ते साधवो येषामर्थाय गृहे गृहे शाल्योदनो निरपादि अन्यो भाषते साधुसंबन्धी शाल्योदनो मह्यं जनन्या ददे दात्री वा कचिदेवं भाषते दत्तः परकीयः शाल्योदनः संप्रत्यात्मीयं किमपि ददामि गृहनायकोऽपि ब्रूते दत्तः शाल्योदनः परकीयः संप्रत्यात्मीयं किमपि देहि बालकोऽपि कापि कोऽप्यनभिज्ञो जननीं ब्रूते मम साधुसम्बन्धिनं शाल्योदनं देहीति । अन्यस्त्वीषद्दरिद्रः सहर्षं भाषते । अहो थक्केथक्कावडियमस्माकं संपन्नं । इह यदवसरे अवसरानुरूपं पतति सा थक्केथक्कावडियमित्युच्यते ततः स एवाह येनाभक्तं भक्ताभावेऽस्माकं शालिभक्तमुदपादि अत्रैवार्थे स लौकिकं दृष्टांतमुदाहरति । सूरग्रामे यशोधराभिधाना काचिदाभीरी तस्या योगराजो नाम भर्ता वत्सराजो नाम देवरः तस्य भार्या योधनी अन्यदा च मरणपर्यवसानो जीवलोको मरणं चानियतहेतुकमनियतकालमिति योधनीयोगराजौ समकालं मरणमुपगतौ ततो यशोधरा देवरं वत्सराजमयाचत तव भार्याऽहं भाविनीति देवरोऽपि च ममापि भार्या न विद्यते । इति विचिंत्य प्रतिपन्नवान् ततः सा चिंतयामास । अहो अवसरे अवसरपतितमस्माकमजायत यस्मिन्नेवावसरे मम पतिः पंचत्वमुपागमत् तस्मिन्नेवावसरे मम देवरस्यापि भार्या मृत्युमगच्छत् ततोऽहं देवरेण भार्यात्वेन प्रतिपन्ना । अन्यथा न प्रतिपद्येत तथा कोऽपि बालको जननीमाचष्टे मातः शालितंडुलोदकमपि साधुभ्यो देहि अन्यस्त्वाह शालिकांजिकं तत एवमादीनि बालादिजनजल्पितानि श्रुत्वा किमेतदिति पृच्छंति । पृष्टे च सति ऋजवस्ते यथावत् कथितवंतो यथा युष्माकमर्थायेदं कृतमिति ये तु मायाविनः श्रावकेण वा तथा प्रज्ञापितास्ते न कथयंति केवलं परस्परं निरीक्षंते तत एव कृतमिदमाधाकर्मेति परिज्ञाय तानि सर्वाण्यपि गृहाणि परिहृत्याऽन्येषु भिक्षार्थमटंति स्म ये च तत्र निर्वहंति स्म ते तत्रानिर्वहंतः प्रत्यासन्ने ग्रामे भिक्षार्थमगच्छन् । एवमन्यत्राप्याधाकर्म्म संभवति तत्वं बालादिजल्पितविशेषैरवगत्य कथानकोक्तसाधुभिरिव नियमितो निष्कलंकसंयमाभिकांक्षुना परिहर्त्तव्यं । सूत्रं तु सकलमपि सुगमं न वरं (रूपणत्ति) रोपणं (परिभायणत्ति) गृहे परिभाजनं (से इति) एतेभ्यः (अन्नंति) अन्यं ग्रामं तदेवमुक्तोऽशनस्याधाकर्म्म संभवः ॥

संप्रति पानस्याह–

लोणगापडोदए एवं खणितु महुरोदगं ढक्कि ।
एण अत्थ एतात्र जात्र साहुति आगया ॥

यथा अशनस्याधाकर्म्मकथानकसूचनेन संभव उक्तस्तथा पानस्याऽप्याधाकर्मणो वेदितव्यः । कथानकमपि तथैव केवलमयं विशेषः कस्मिद्ग्रामे सर्वेऽपि कूपाः क्षारोदका आसन् क्षारोदका नाम मलकोदका विज्ञेयाः । नचात्यंत क्षारजलास्तथा सति ग्रामस्याप्यवस्थानानुपपत्तेस्ततस्तस्मिन् लवणावटे क्षेत्रे क्षेत्रप्रत्युपेक्षणाय साधवः समागच्छन् परिभावयंति स्म च यथागमं सकलमपि क्षेत्रं ततस्तस्मिन् वासिना श्रावकेण सादरमुपरुध्यमाना अपि साधवो नावतिष्ठंते ततस्तन्मध्यवर्ती कोऽपि ऋजुकोऽनवस्थानकारणं पृष्टः स च यथावस्थितं तस्मै कथयामास यथा विद्यंते सर्वेऽप्यत्र गुणाः केवलं क्षारजलमिति नावतिष्ठंते ततो गतेषु तेषु स मधुरोदकं कूपं खानितवान् । तं खानयित्वा लोकप्रवृत्तिजनकपापभयात् फलकादिना स्थगितमुखं कृत्वा तावदास्ते यावत्ते साधवः समाययुः समागतेषु च साधुषु मा मम गृहे केवले आधाकार्मिकशङ्काऽभूदिति प्रतिगृहं तन्मधुरमुदकं भाजितवान् । ततः पूर्वोक्तकथानकप्रकारेण साधवो बालादीनामुल्लापनमाकर्ण्याधाकर्मेति च परिज्ञाय तं ग्रामं परिहृतवंत एवमन्यत्राप्याधाकर्म पानीयसंभवो द्रष्टव्यस्तेऽपि च बालाद्युल्लापविशेषैः परिकल्प्य कथानकोक्तसाधव इव परिहरेयुरिति सूत्रं सुगमं ॥

संप्रति खादिमस्वादिमयोराधाकर्मणोः संभवमाह ॥

कक्कडिय अंबगा वा दाडिमदक्खा य बीजपूराई ।
खाइमहेगरणंति साइमंतिगडगाईयं ॥

कर्कटिका चिर्भिटिका आम्रकाणि चूतफलानि दाडिमानि द्राक्षाश्च प्रतीताः बीजपूरकादिकमादिशब्दात् कपित्थादिपरिग्रहः एतान्याश्रित्य स्वादिमविषये अधिकरणं भवेत् पापकरणं भवेत् । एतानि साधूनां शालनिकादिकार्येषु प्रयुज्यंते । इति तेषां वपनादि कुर्यादिति भावः । तथा त्रिकटुकादिकं शुंठीपिप्पलीमरीचकादिमाश्रित्य स्वादिमे अधिकरणकरणं भवेत् । पापकरणं भवेत् । साधूनामौषधाद्यर्थममूनि कल्पंत इति तेषां रोपणादि कुर्यादिति भावः ॥

संप्रति यदुक्तं प्राक् तस्स कडनिट्ठयंमीत्यादि । तत्र कृतनिष्ठितशब्दयोरर्थमाह ॥

असणाईण चउण्हवि आमं जं साहगहणपाउगं ।
तं निट्ठियं वियाणसु उवक्खडं तू कडं होइ ॥

अशनादीनां चतुर्णामपि मध्ये यदा मम परिणतं सत् साधुग्रहणप्रायोग्यं कृतं प्रासुकीकृतमित्यर्थः । तं निष्ठितं विजानीतं उपस्कृतं तु अत्रापि वृद्धावादिकर्म्मविवक्षायां क्तप्रत्ययः । ततोऽयमर्थः । उपस्कर्तुमारब्धमिति भावः कृतं भवति ज्ञातव्यं ।

एतदेव विशेषतो भावयति ।

कंडियइ गुणुक्कंडा निट्ठिया नेगदुगुणउक्कंडा ।
निट्ठियकडो उ कूरो आहाकम्मं दुगुणमाहु ॥

इह ये तंडुलाः प्रथमतः साध्वर्थमुप्तास्ततः क्रमेण करटयो जातास्तत् कंडिताः कथंभूताः कंडिता इत्याह । त्रिगुणान् कंडांस्त्रिगुणं त्रीन् वारान् यावदुत्प्राबल्येन कंडनं छटनं येषां ते त्रिगुणकंडांस्त्रीन् वारान् कंडिता इत्यर्थः ते निष्ठिता उच्यंते ये पुनर्वपनादारभ्य याबदेकगुणोत्कंडा द्विगुणोत्कंडा वा कृता वर्त्तते ते कृता अथवा माभूवन् साध्वर्थमुप्ताः केवलं ये करटयः संतः साध्वर्थं त्रिगुणोत्कंडं कंडितास्ते निष्ठिता उच्यंते ये त्वेकगुणोत्कंडं द्विगुणोत्कंडं वा कंडितास्ते कृताः । अत्र वृद्धसंप्रदायः । इह यद्येकं वारं द्वौ वा वारौ साध्वर्थं कंडितास्तृतीयं तु वारमात्मनिमित्तं कंडिता राद्धाश्च ते साधूनां कल्पंते यदि पुनरेकं द्वौ वा वारौ साध्वर्थं कंडितास्तृतीयं वारं स्वनिमित्तमेव कंडिता राद्धास्तु आत्मनिमित्तं ते केषांचिदादेशेन एकेनान्यस्मै दत्तास्तेनाप्यन्यस्मै इत्येवं यावत्सहस्रसंख्येयस्थाने गतास्ततः परगताः कल्पंते नार्वाक् । अपरेषां त्वादेशेन कदाचिदपि यदि पुनरेकं द्वौ वा वारौ साधुनिमित्तं आत्मनिमित्तं वा कंडितास्तृतीयं तु वारमात्मनिमित्तं राद्धाः पुनः साध्वर्थं ते न कल्पंते यदि पुनरेकं द्वौ वारौ साधुनिमित्तं आत्मनिमित्तं वा कंडितास्तृतीयं तु वारं साध्वर्थमेव तैरेव च तंडुलैः साधुनिमित्तं निष्पादितः कूरः स निष्ठितकृत उच्यते । निष्ठितैराधाकर्म्मतंडुलैः कृतो निष्पादितो राद्ध इत्यर्थः निष्ठितः कृतः स साधूनां सर्वथा न कल्पते । कुत इत्याह । ( आहाकम्मेत्यादि ) आधाकर्म प्रतीतं द्विगुणमाहुस्तीर्थकरादयस्तं निष्ठितः कृतं कूरं तत्रैकमाधाकर्मनिष्ठितं तंडुलरूपं । द्वितीयं तु पाकक्रियारूपं । तदेवमुक्तो निष्ठितकृतशब्दयोरर्थः । संप्रति चतुर्ष्वप्यशनादिषु कृतनिष्ठितता भाव्यते तत्र वपनादारभ्य यावद्द्वारद्वयखंडनं तावत्कृतत्वं तृतीयवारं तु कंडनं निष्ठितत्वं । एतच्चाऽनन्तरमेवोक्तं ग्रामे कूपादिकं साधुनिमित्तं खनितं ततो जलमाकृष्टं ततो यावत्प्रासुकीक्रियमाणं नाद्यापि सर्वथा प्रासुकीभवति तावत् कृतत्वं प्रासुकीभूतं च निष्ठितं । खादिमे कर्कटिकादयः साधुनिमित्तमुप्ताः क्रमेण निष्पन्ना यावद्दात्रादिना खंडितास्तानि च खंडानि यावन्नाद्यापि प्रासुकीभवंति । तावत्कृतत्वमवसेयं प्रासुकीभूतानि च तानि निष्ठितानि । एवं स्वादिमेऽपि विज्ञेया सर्वत्रापि च द्वितीयचतुर्थभंगौ शुद्धौ प्रथमतृतीयौ त्वशुद्धाविति ॥

सम्प्रति खादिमत्वादिकमाश्रित्य मतांतरं प्रतिपिपादयिषुराह—

छायंपि विवज्जंती केई फलहेउगाइ वुत्तस्स ।
तं तु न जुज्जइ जम्हा फूलंपिकप्पं वियंयभंगे ॥

इह फलहेतुकादेः फलहेतोः पुष्पहेतोरन्यस्माद्वाहेतोः साध्वर्थमुपयाति उप्तस्य वृक्षस्य केचिदगीतार्थाश्छायामप्याधाकर्मिकवृक्षसंबंधिनीमिति कृत्वा विवर्ज्जयंति परिहरंति । तत्तु छायाविवर्ज्जनं न युज्यते यस्मात्फलमपि यदर्थं स वृक्ष आरोपितस्तत आधाकर्मिकवृक्षसंबंधिनि द्वितीये भंगे तस्य कृतमन्यार्थं निष्ठितमित्येवंरूपे वर्त्तमानं सत्कल्पते किमुक्तं भवति साध्वर्थमारोपितेऽपि कदल्यादौ वृक्षे यदा फलं निष्पद्यमानं साधुसत्तया अपनीय आत्मसत्तासंबंधि करोति त्रोटयति च तदा तदपि कल्पते किं पुनः छाया सा हि सर्वथा न साधुसत्तासंबंधिनी विवक्षिता न हि साधुच्छायानिमित्तं स वृक्ष आरोपितस्ततः कथं न कल्पते ।

परपच्चइया छाया न वि सा रुक्खोव्व वाड्ढिया कत्ता ।
नेहच्छाए पइडुमे कप्पइ एवं भणंतस्स ॥

साच्छाया परप्रत्ययका सूर्यहेतुका न वृक्षमात्रनिमित्ता तस्मिन् सत्यपि तथाभावे अभावात् । तथाहि छाया नाम पार्श्वतः सर्वत्रातपवेष्टितःप्रतिनियतदेशवर्ती श्यामपुद्गलात्मक आतपाभावः । इत्थंभूता च छाया सूर्यस्यैवान्वयव्यतिरेकावनुविधत्ते न द्रुमस्य । द्रुमस्तु केवलं तस्मान्निमित्तमात्रं नत्वतावता सा दुष्यति । या पुद्गला द्रुमपुद्गलेभ्यो भिन्नत्वान्न च वृक्ष इव तरारेव कर्त्रा वृक्षारोपकेण वृद्धिं नीता तद्विषये तरोरूपसंकल्पस्यैवाभावात्ततो नाधाकार्मिकी छाया । किं च यद्याधाकार्मिकी च्छायेति ततस्तस्यामवस्थानं न कल्पते । तत एवं परस्य भणतो यदा घनपटलैगाच्छादितं गगनमंडलं भवति तदा तस्मिन् द्रुमे नष्टच्छाये सति तस्याधःशीतभयादिनाऽवस्थानं कल्पते इति प्राप्तं न चैतदयुक्तं तस्मात्स एव द्रुम आधाकर्मिकस्तत्संस्पृष्टश्चाधः कतिपयः प्रदेशः परिहरिति प्रतिपत्तव्यं । न तु छायाऽऽधाकर्मिकीति ॥

पुनरपि परेषां दूषणांतरमाह ॥

वड्ढइ हायइ च्छाया तत्थिक्कंपइयं पि वि न कप्पा

नय आहाय सुवहिया निवत्तपई रविच्छायं ॥

इह छाया तथाभूय गतिवशात् वर्द्धते हीयते च ततो रवेरस्तमयसमये प्रातः समयेऽवातिद्राघीयसी विवर्द्धमाना छाया सकलमपि ग्राममभिव्याप्य वर्त्तते । अतस्तत्संस्पृष्टं सकलमपि ग्रामसंबंधि वसत्यादिकं पूतिकमिव तृतीयोद्गमदोषदुष्टमशनादिकमिव न कल्पते । न चैतदागमोपदिष्टं तन्नाधाकर्मिकी वृक्षस्य छाया अपि च प्रागेवैतदुक्तं सूर्यप्रत्यया सा छाया न वृक्षहेतुका न च सूर्यसुविहिता नाधायच्छायां निवर्तयति । ततः कथमाधाकर्मिकी यदि पुनराधाकर्मिकी भवेत्तर्हि—

अइ णवगचारिगगणे छाया नट्ठादिया पुणो होइ ।
कप्पइ निरायवे नाम आयवे तं विवज्जेउं ॥

अथ नाविरला घना मेघाश्चारणपरिभ्रमणशीला यत्र इत्थंभूते गगने विरलविरलेषु नभसि मेघेषु परिभ्रमत्सु इत्यर्थः छाया नष्टापि सती दिवा पुनरपि भवति । ततो मेघैरंतरिते सूर्ये निरातपे आतपाभावे तस्य वृक्षस्याधस्तनं प्रदेशं सेवितुं न कल्पते आतपे तु तं विवर्ज्जयितुं न चायं विषयविभागस्तत्रोपदिश्यते न च पूर्वपुरुषाचीर्णो नापि परेषां सम्मतस्तस्मादसदेतत्परोक्तमिति इह पूर्वं वृक्षसंबंधित्वेन छायामाधाकर्मिकीमाशंक्य ( नट्ठच्छायसु उ दुमे कप्पइ ) इत्याद्युक्तमिदानीं तु रविकृतत्वेनाधाकर्मिकीमाशंक्य ( कप्पइ निरायवे नामं ) त्याद्युक्तमतो न पुनरुक्तता ॥

संप्रति छायानिदोषतानिगमनमगीतार्थधार्मिकाणां परेषां किंचिदाश्वासनं विवक्षुराह ।

तम्हा न एस दोसो संभवई कम्मलक्खणविहूणो ।
तं पियहू अणघिणिल्ला वज्जमाणा अदोसिल्ला ॥

यस्मात् फलमपि द्वितीये भंगे कल्पते तथा रविहेतुका छायेत्यादि चोक्तं तस्मादाधाकर्मिकी छायेति यो दोष उच्यते स एष दोषो न संभवति । कुत इत्याह कर्मलक्षणविहीन इति अत्र हेतौ प्रथमा कर्मेति च आधाकर्मेति द्रष्टव्यं ततोऽयमर्थः यत आधाकर्मलक्षणविहीन एष दोषो न हि तरुरिव छायाऽपि कर्त्रा वृद्धिं नीता इत्यादि तस्मान्नैष दोषः संभवति । अथ वा तामप्याधाकर्मिकवृक्षच्छायां हुं निश्चितमतिघृणावंतोऽतिशयेन दयालवो विवर्ज्जयंतः परेण दोषवंतस्तदेवमुक्तमानुषंगिकं तदुक्तौ च ( आहाकम्मियानामेत्यादिमूलद्वारगाथायां ( किंवावीति ) व्याख्यातं ॥

सम्प्रति "परपक्खोय सपक्खो" द्वारद्वयं व्याख्यानयन् प्रसङ्गतो निष्ठितकृतयोः स्वरूपं ताभ्यामुत्पन्नं भंगचतुष्टयं चाह—

परपक्खो उ गिहत्था समणासमणी उ होइ उ सपक्खो ।
फासुकडं रद्धं वा निट्ठियमियरं कडं सव्वं ॥
तस्स कडनिट्ठियंमी अन्नस्स कडंमि निट्ठिये तस्स ।
चउभंगा इत्थभवे चरमदुगे होइ कप्पंतु ॥

इह परपक्षो गृहस्थाःश्रावकादयस्तेषामर्थाय कृतं साधूनामाधाकर्म न भवति । स्वपक्षः श्रमणाः साधवः (समणी उत्ति ) श्रमण्यो व्रतिन्यस्तेषामर्थाय कृतं साधूनामाधाकर्म वेदितव्यं । तथा प्रासुकं कृतं करट्यादिकं सचेतनं साध्वर्थं निश्चेतनीकृतं यत्स्वयमचेतनमपि तंडुलादिकं कृत्स्नेन निष्पादितं तन्निष्ठितमित्युच्यते । इतरत् पुनरेकगुणाद्विगुणखंडिततंडुलादिकं सर्वं कृतमिति । अत्र च कृतनिष्ठितविषये तस्य साधोरर्थाय कृते निष्ठित विषये तस्य साधोरर्थाय कृतनिष्ठिते च तथा अन्यस्याऽप्यर्थाय कृते तस्य साधोरर्थाय निष्ठिते भक्तादौ चतुर्भंगिका भवति तत्र प्रथमतृतीयभंगौ साक्षाद्दर्शितौ द्वितीयचतुर्थौ तु हेतुगम्यौ तौ चैवं तस्य कृतमन्यस्य निष्ठितमन्यस्य कृतमन्यस्य निष्ठितं तत्रोपात्तयोर्द्वयोर्भंगयो यौ चरमावनुक्तौ पाश्चात्यौ द्वौ भंगौ द्विचतुर्थाविन्यर्थः । प्रथमस्य हि द्वितीयः पाश्चात्यस्तृतीयस्य तु चतुर्थस्ततउपात्तप्रथमतृतीयभंगापेक्षया चरमौ द्वितीयचतुर्थौ लभ्येते तस्मिन् चरमद्विके भवति कल्पमशनादि एतच्च यद्यपि प्रागेवोक्तं तथापि विस्मरणशीलानां स्मरणाय भूयोऽप्युक्तमिति न कश्चिद्दोषः । उक्तं परपक्षस्वपक्षरूपं द्वारद्वयं ॥

संप्रति चउरो इति व्याचिख्यासुराह—

चउरो अइक्कम्म वइक्कमा य अइयार । तह अणायारो निमंतणया ॥

आधाकर्मणि विषये केनाप्यभिनवेन श्राद्धेन निमंत्रणे कृते चत्वारो दोषाः संभवंति । तद्यथा । अतिक्रमो व्यतिक्रमोऽतीचारोऽनाचारश्च । एते चत्वारोऽपि स्वयमेव सूत्रकृता व्याख्यास्यंते एतेषां च चतुर्णामपि निदर्शनं दृष्टांतो भावनीयस्तमपि च वक्ष्यति ॥

तत्र प्रथमत आधाकर्मनिमंत्रणं भावयति—

सालीघयगुलगोरसनवेसु वल्लीफलेसु जाएसु ।
दाणे अहिणवसद्दे आहायकए निमंतेइ ॥

शालिषु शाल्योदनेषु तथा घृतगुडगोरसेषु साधूनाधाय षट्कायोपमर्दनेन निष्पादितेषु नवेषु च वल्लीफलेषु जातेषु साधुनिमित्तमचित्तीकृतेषु दाने दानविषये कोऽप्यभिनवश्राद्धोऽव्युत्पन्नश्रावको निमंत्रयति यथा भगवन् प्रतिगृह्णीत यूयमस्मद्गृहे शाल्योदनादिकमिति ततश्च—

आहाकम्मग्गहणे अइक्कमाई सु वट्टए वउसु ।
नेउरहारिगहत्थी चउत्ति गदुगपव वलणेण ॥

आधाकर्मग्रहणे अतिक्रमादिषु चतुर्षु दोषेषु वर्त्तते । स च यथा उत्तरस्मिन् दोषे वर्त्तते तथा २तद्दोषजनितदोषादात्मानं महता कष्टेन व्यावर्त्तयितुमीशः । अत्र दृष्टांतमाह (नेउरेत्यादि ) इह त्वसुरपंडितायाः कथानकमतिप्रसिद्धत्वाद्बृहत्वाच्च न लिख्यते किंतु धर्मोपदेशमालाविवरणादेरवगंतव्यं । तत्र नूपुरं मंजीरं तस्य हारो हरणं श्वशुरकृतं तेन या प्रसिद्धा सा नूपुरहारिका आगमेवान्यत्र नूपुरपंडितेति प्रसिद्धा तस्याः कथानको यो हस्ती राजपत्नीं संचारयन् प्रसिद्धः सन् स नूपुरहारिको हस्ती स यथा ( चउतिगदुगएगचलणेणांति ) पश्चानुपूर्व्या योजना एकेन द्वाभ्यां त्रिभिश्च चरणैराकाशस्थैर्महता महत्तरेण कष्टेन आत्मानं व्यावर्त्तयितुमीशस्तथाधाकर्मग्राह्यपि । इयमत्र भावना नूपुरहारिकाकथानके राज्ञा हस्ती स्वपत्नीमिवेभ्या सह छिन्नटंके समारोपितः ततो निम्बेन छिन्नटंकपर्वतप्रभागे व्यवस्थाप्याऽग्रेतनमेकं कंचिच्चरणमाकाशे कारितः स

च तथा कारितः समस्तकेनैव क्लेशेन तं चरणं व्यावर्त्य तत्रैव पर्वते आत्मानं स्थापयितुं शक्नोति एवं साधुरपि कश्चिदतिक्रमाख्यं दोषं प्राप्तः सन् तेनैव शुभाध्यवसायेन तं दोषं विशोध्याऽत्मानं स्थापयितुमीशो यथा च स हस्ती चरणद्वयमग्रेतनमाकाशस्थं क्लेशेन व्यावर्त्तयितुं शक्नोति । एवं च साधुरपि व्यतिक्रमाख्यं दोषं विशिष्टेन शुभेनाध्यवसायेन विशोधयितुमीष्टे यथा च स हस्ती चरणद्वयमाकाशस्थमेकेनापि पाश्चात्येन चरणेन स्थितो गुरुतरेण कष्टेन व्यावर्त्तयितुं क्षमस्तथा साधुरप्यतीचारदोषविशिष्टतरेण शुभेनाध्यवसायेन विशोधयितुं प्रभुर्यथा च स हस्ती चरणचतुष्टयमाकाशस्थितं सर्वथा न व्यावर्त्तयितुमीशः किं तु नियमतो भूमौ निपतति विनाशमाविशति एवं साधुरप्यनाचारे वर्त्तमानो नियमतः संयमात्मानं विनाशयति । इह दृष्टांते चरणचतुष्टयं हस्तिना नोत्पादितं किंतु दार्ष्टांतिकयोजनानुरोधात्संभावनामंगीकृत्य प्रतिपादितं ॥

संप्रति ग्रहणाय आणाई इति व्याख्यानयन्नाह—

अणाइणो य दोसा गहणे जं भणिय महइमे ते उ ।
आणाभंगणवत्था मिच्छत्तविराहणा चेव ॥

यदुक्तमाहाकम्मियनाभेत्यादि मूलद्वारगाथायामाधाकर्मग्रहणे आज्ञादय आज्ञाभंगादयो दोषास्ते इमे तद्यथाऽऽज्ञाभंगोऽनवस्था मिथ्यात्वं विराधना च ॥

तत्र प्रथमत आज्ञाभंग दोषं भावयति—

आणं सव्वजिणाणं गिण्हंतो तं अइक्कमइ लुद्धो ।
आणं व अइक्कमंतो कस्साए सा कुणइ सेसं ॥

तदाधाकर्म्मिकमशनादिकं लुब्धः सन् गृह्णानः सर्वेषामपि जिनानामाज्ञामतिक्रामति जिना हि सर्वेऽप्येतदेव ब्रुवंति स्म यदुतमागृह्णत मुमुक्षवो भिक्षव आधाकर्म्मिकीं भिक्षामिति ततस्तदादानो जिनाज्ञामतिक्रामति । तां चातिक्रमन् कस्य नाम आदेशादाज्ञायाः शेषं केशस्मश्रुलुंचनभूशयनमलिनवासोधारणप्रत्युपेक्षणाद्यनुष्ठानं करोति न कस्यापीति भावः । सर्वस्यापि सर्वज्ञोक्तभंगकारिणोऽनुष्ठानस्य निष्फलत्वात् ॥

अनवस्थादोषं भावयति—

एक्केण कयमकज्जं करेइ तप्पच्चया पुणो अन्नो ।
साया बहुलपरंपरवोच्छेओ संयमतवाणं ॥

इह प्रायः सर्वेऽपि प्राणिनः कर्मगुरुतया दृष्टमात्रसुखाभिलाषिणो न दीर्घसुखदर्शिनस्तत एकेनापि साधुना यदाधाकर्मपरिभोगादिलक्षणमकार्यमासेव्यते तदा तत्प्रत्ययात् तेनापि साधुना च तं विदुषापि सेवितमाधाकर्म ततो वयमपि किं सेविष्यामहे इत्येवं तमालंबनीकृत्यान्योऽप्यासेवते तमप्यालंब्यान्यः सेवते इत्येवं सातबहुलानां प्राणिनां परंपरया सर्वथा व्यवच्छेदः प्राप्नोति । संयमतपसा तद्व्यवच्छेदे च तीर्थव्यवच्छेदो यश्च भगवत्तीर्थविलोपकारी स महाशातनाभागित्यनवस्थादोषभयान्न कदाच नाप्याधाकर्मसेवनीयं ॥

मिथ्यात्वदोषं भावयति—

जो जह वायं न कुणइ मिच्छद्दिट्ठी तओ हु को ।
अन्नो वट्टेइय मिच्छत्तपरस्स संजणे माणो ॥

इह यद्देशकालसंहननानुरूपं यथावदनुष्ठानं तत् सम्यक्त्वं यत उक्तमाचारसूत्रे "जं मोणंति पासहा तं सम्मंति पासहा जं सम्मंति पासहा तं मोणंति पासहा" इति । ततो यो देशकालसंहननानुरूपं शक्त्यनुग्रहणेन यथागमेऽभिहितं तथा न करोति ततः सकाशात् कोऽन्यो मिथ्यात्वेनैव कश्चित् किंतु स एव मिथ्यादृष्टीनां धुरि योज्यते महामिथ्यादृष्टिनेत्याह । (वट्टेइयेत्यादि) च शब्दो हेतौ यस्मात्स यथावादमकुर्व्वन् परस्य शंकां जनयति मिथ्यात्वसेवनेन वर्द्धयति । तथा च प्रवचनस्य व्यवच्छेदः शेषास्तु मिथ्यादृष्टयो नैव प्रवचनस्य मालिन्यमापाद्य परंपरया व्यवच्छेदमाधातुमीशास्ततः शेषमिथ्यादृष्ट्यपेक्षयाऽसौ यथावादमकुर्व्वन् मिथ्यादृष्टिरिति । अन्यच्च "वड्ढेइ तप्पसंगं गेहीय परस्स अप्पणो चेव । सज्जिपयं पि भिन्नदढो न मुयइ निद्धंधा सा पच्छा" साधुराधाकर्म गृह्णाति तर्हि तद्गतमनोज्ञरसास्वादलंपटयतो भूयोऽपि तद्ग्रहणे प्रवर्तते । तत एवमेकदाप्याधाकर्म गृह्णन् परस्यात्मनश्च तत्प्रसंगं वर्द्धयति । तत्प्रसंगवृद्धौ च कालेन गच्छता परस्यात्मनश्च वृद्धिरत्यंतमाशक्तिरुपजायते ततो विशिष्टविशिष्टतरमनोज्ञरसास्वादनेन भिन्नदंष्ट्रको निर्बन्धनोपगतसर्वथाभिन्नवचनपरिणामो मिथ्यात्वमपि गच्छतीति ॥

संप्रति विराधनादोषं भावयति—

खद्धे निद्धे य रुया सुते हाणी तिगिच्छाणे काया ।
पडियरगाण विहाणी कुणइ किले संकिलस्संतो ॥

आधाकर्मप्राघूर्णिका सा च गौरवेण क्रियते ततस्तत्स्वादु स्निग्धं भवति तस्मिंश्च खद्धे प्रचुरे स्निग्धे बहुस्नेहे भक्षिते रुजा रोगो ज्वरविसूचिकादिरूपः प्रादुर्भवति । इयमात्मविराधना । ततो रुजा पीडितस्य सूत्रग्रहणमुपलक्षणमर्थस्य च हानिः तथा प्रतिचारकास्तदुक्तं यावन्न प्रपारयंति तावत्संक्लिश्यमानः पीडां सोढुं शक्नुवन् तेभ्यः कुप्यंश्च तेषामपि मनसि क्लेशमुत्पादयति अथ वा क्लिश्यमानो दीर्घकालक्लेशमनुभवन् प्रतिचारकारणामपि जागरणतः क्लेशं रोगमुत्पादयति ततस्तेषामपि चिकित्साविधौ षट्कायविराधना यदि चिकित्सां न कारयति तर्हि चिरकालसंयमपरिपालनभ्रंशः अथ कारयति तर्हि चिकित्सायां क्रियमाणायां कायाः तेजस्कायादयो विनाशमाविशंति यथा च सति संयमविराधना तथा प्रति चारकाणामपि परिपालकानामपि साधूनां तद्वैयावृत्यव्यावृत्ततया सूत्रार्थहानिः षट्कायापलापि आहाकम्मियनामेत्यादिका मूलगाथा ॥ पिंड० आहाकम्मपि० ॥

( १० ) संप्रत्याधाकर्मण एवाकल्पविधिं बिभाणिषुः सम्बन्धमाह—

जह कम्मं तु अकप्पं तत्थिकं वा विभायणट्ठियं वा ।
परिहरणं तस्सेव य गहियमदोसं च तह भणइ ॥

यथा कर्म्म आधाकर्म्म अकल्प्यमभोज्यं यथा तमाधाकर्म्मणा स्पृष्टमकल्पं यथा च भाजनस्थितं यस्मिन् भाजने तदाधाकर्म्म प्रक्षिप्तं तस्मिन्नाधाकर्मपरित्यागानन्तरमकृतकल्पत्रयप्रक्षालने यत् क्षिप्तं शुद्धमशनादि तदपि यथा न कल्पं यथा च तस्याधाकर्मणः परिहारो विध्यविधिरूपो

यथा च गृहीतं सङ्क्रमदोषं भवति तथा गुरुर्भणति-अनेन यथैवागमे पिंडविशुद्धिरभाणि तथैवाऽहमपि भणामीत्यावेदितं द्रष्टव्यं अनया च गाथया पञ्चद्वाराणि प्रतिपाद्यान्युक्तानि।

संप्रति तान्येव शेषं प्रतिपाद्यत्वेनाह।

अब्भुज्जे गमणाई य पुच्छा दव्वकुलदेसभावे य।
एव जयंते छलणा दिहंता तत्थ मोदोत्ति ॥

यथा साधूनामाधाकर्म तत्पूत्कल्पत्रयाप्रक्षालितभाजनस्थं वा अभोज्यं तथा भणनीयं तथा अविधिपरिहारे गमनादिकाः कायक्लेशादिलक्षणा दोषा वक्तव्याः। तथा विधिपरिहारे कर्तव्ये यथा द्रव्यकुलदेशभावे पृच्छा कर्तव्या च शब्दाद्यथा च न कर्तव्या तथा वक्तव्यं एवं यतमाने प्रायश्छलनाया असम्भवो यदि पुनरेवमपि यतमाने छलना शुद्धभक्तादिग्रहणरूपा भवेत् ततस्तत्र दृष्टान्ताविमौ वक्ष्यमाणौ वक्तव्यौ इह ( अब्भुज्जे ) इत्यनेन पूर्वगाथाया द्वारत्रयं परामृष्टं। गमणाइ य पुच्छा दव्वकुलदेसभावे य इत्यनेन पुनः परिहरणस्य विशेषो वक्तव्य उक्तः उत्तरार्द्धेन तु गहियमदोसं चेत्यस्य विशेषः॥

सम्प्रति प्रथमं द्वारमाधाकर्मणोः कल्पनालक्षणं व्याचिख्यासुराह—

जह वंतं तु अभोज्जं भत्तं जइवि य सुकयं आसि।
एवमसंजमवमणे अणेसणिज्जं अभोज्जं तु ॥

इह यद्यपि वमनकालादर्वाक्भक्तमोदनादिकं सुसंस्कृतं शोभनद्रव्यं सुपर्ककृतोपस्कारमासीत्। तथापि यथा तद्वान्तमभोज्यमेव स संयमवमने कृते साधोरप्यनेषणीयमभोज्यमेवं तुरेवकारार्थे। इयमत्र भावना संयमप्रतिपत्तौ हि पूर्वमसंयमो वांतोऽसंयमरूपं चाधाकर्म षट्कायोपमर्द्देन तस्य निष्पन्नत्वान्न च वांतमभ्यवहर्त्तुमुचितं विवेकिनामतः साधोरन्वेषणीयमभोज्यमिति॥

पुनरप्याधाकर्मण एवाभोज्यतां दृष्टांतांतरेण समर्थयमानो गाथाद्वयमाह-

मज्जारखइयमंसा मंसासित्थि कुणिमं सुणय वंतं।
चत्ताइ अन्नउप्पाइयंपि किंतं भवे भेज्जं ॥
केइ भणंति पहियउव्वाणमंसपेसिवोसिरणं।
संभारिय परिवेसणचारेइ सुधे करे ओत्तुं ॥

चक्रपुरं नाम पुरं तत्र वसत्युग्रतेजाः पदातिस्तस्य भार्या रुक्मिणी अन्यदा च उग्रतेजसो ज्येष्ठभ्राता सौदासाभिधः तत्प्रत्यासन्नपुरात्प्राघूर्णकः समायया उग्रतेजसा च भोजनाय अजाविकामासं क्रीत्वा रुक्मिण्यै समर्प्पयामासे तस्यां च रुक्मिण्यां गृहव्यापारव्यापृतायां तन्मांसं मार्ज्जारोऽभक्षत्। इतश्च सौदासोग्रतेजसोर्भोजनार्थमागमवेला ततः सा व्याकुलीबभूव। अत्रान्तरे च क्वापि कस्याऽपि मृतस्य कार्प्पटिकस्य शुना मांसं भक्षयित्वा तद्गृहप्रांगणप्रदेशे तस्याः साक्षात्पश्यंत्याः पुरतः कथमपि वातसंक्षोभादि वशादुद्वमितं। ततः सा ऽचिंतयत्। यदि नाम कुतोऽपि विपणेरन्यत् मांसं क्रीत्वा समानयिष्यामि तर्हि महद्वसरः लगिष्यति। प्राप्ता च समीपं पतिज्येष्ठयोर्भोजनवेला। तस्मादेतदेव मांसं जलेन सम्यक् प्रक्षाल्य वेसचारेणोपस्करोमि। तथैव च कृतं। समागतौ सौदासोग्रतेजसावुपविष्टौ च भोजनार्थं परिवेषितं तयोस्तन्मांसं। ततो गंधविशेषेणोग्रतेजसा विजज्ञे यथा वान्तमेतदिति। ततस्तेन साक्षेपं भ्रूवमुत्पाट्य रुक्मिणी पप्रच्छ सा च साटोपभ्रूक्षेपदर्शनतो बिभ्यती पवनधुतवृक्षशाखेव कंपमाना च पुनर्यथावस्थितं कथितवती ततः परित्यज्य तन्मांसं साक्षेपं निर्भर्त्स्य भूयोऽन्यन्मांसं याचिता तदुक्तं। प्रथमगाथाक्षरयोजना त्वेवं मार्ज्जारेण खादितं भक्षितं मांसं यस्याः सा मार्ज्जारखादितमांसा मांसाशिन उग्रतेजसः स्त्री महेला अन्यन्मांसमप्राप्नुवती श्ववांतं कुणपमांसं गृहीतवती तच्च वेसचारोपस्कारेण वर्णादिभिरन्यदिवोत्पादितमपि किं भवति भोज्यं नैव भवतीति भावः एवमाधाकर्माऽपि संयमिनां न भोज्यम् केचित्पुनरत्रैव कथानके एवमाहुः। तस्या रुक्मिण्या गृहे कोऽप्यतीसारेण पीडितो दुष्प्रभनामा कार्प्पटिकः किंचित् विविक्तं स्थानं याचित्वा स्थितवान् स चातीसारेण मांसखंडानि व्युत्सृजति। ततः सौदासे प्राघूर्णके समागते सति भर्त्रा च समानीते मांसे मार्जारेण च तस्मिन् भक्षिते रुक्मिणी प्रत्यासन्ना समागता भोजनवेलेति भयभीता अन्यन्मांसमप्राप्नुवती तान्येवातीसारव्युत्सृष्टानि मांसखंडानि गृहीत्वा जलेन प्रक्षाल्य वेसचारेण चोपस्कृत्य भोजनायोपविष्टयोः परिवेषितवती अथ च सा तानि मांसखंडानि गृह्णती मृतसपत्नीपुत्रेणोग्रतेजसो जातेन गुणमित्रेण ददृशे न च तदानीं तेन किमपि भयाद्वक्तुं शकं ततो भोजनकाले तौ द्वावपि पितृपितृव्यौ तेन करे गृहीत्वा निवारितौ यथा कार्प्पटिकातीसारसक्तान्यमूनि मांसखंडानि तन्मा यूयं विभक्षत तत उग्रतेजसा सा दूरं निर्भर्त्सयामासे। तत्यजे च तन्मांसं। द्वितीयगाथाक्षरयोजनात्वेवं केचिद्भणंति पथिके पथिकस्य ( उद्दाणे ) अतीसारोत्थाने मांसपेसी व्युत्सर्ज्जनं ततः सा मांसपेसीरादाय तासां संभृत्य वेसचारेणोपस्कृत्य परिवेषणे कृते पुनः करेण गृहीत्वा तौ पितृपितृव्यौ भोजनाय वारयति स्म ततो यथापुरीषमांसं अभोज्यं विवेकिनामेवमाधाकर्मापि साधूनामिति॥

किं च—

अविला करही खीरं ल्हसण पलंडू सरा य गोमंसं।
सवेयसमए वि अमयं किंचि अभोज्जं अपेज्जं च ॥

अविला करिणी करभी उष्ट्री तयोः क्षीरं तथा लशुनं पलांडुं सुरा गोमांसं च वेदे यथा योगं शेषेषु च समयेषु निर्द्धर्मप्रणीतेषु अमतमसम्मतं भोजने पाने च तथा जिनशासनेऽपि किंचिदाधाकर्मिकादिरूपमभोज्यमपेयं च वेदितव्यं। इयमत्र भावना पूर्वमिह संयमप्रतिपत्त्यावसंयमवमनेनाधाकर्मापि साधुभिर्वांतं पुरीषमिवोत्सृष्टं वा न च वांतं पुरीषं वा भोक्तुमुचितं विवेकिनामिति युक्तिवशादभोज्यमुक्तमाधाकर्म अथवा माभूत् युक्तिः केवलं वचनप्रामाण्यादभोज्यमवसेयं तथा च मिथ्यादृष्टयोऽपि वेदेषु यथायोगमन्येष्वपि समयेषु गोमांसादिकं करणीक्षीरादिकं चाभोज्यमपेयं चाभिधीयमानं वचनप्रामाण्याभ्युपगमतस्तथेति प्रतिपद्यंते। तद्यदि मिथ्यादृष्टयोऽपि स्वसमयवचनप्रामाण्याभ्युपगमतस्तथेति प्रतिपद्यास्ततः

साधुभिर्भगवति सामान्ये प्रत्ययदार्ढ्यमवलंबमानैर्विशेषतो भगवत्प्रणीते वचस्यभिधीयमानमाधाकर्मादिकमभोज्यमपेयं च तथेति प्रतिपत्तव्यं ॥

संप्रति तत्स्पृष्टस्याऽकल्पतामाह–

वन्नाइजुयावि वली सपललफलसेहरा असुइनत्था ।
असुइस्स वि फासेण वि जहवि काउं अभोज्जाउ ॥

यथा वर्णादियुतोऽपि बलिरूपहारः सपललफलशेखरइह पललं खिलत्तोद उच्यते फलं नालिकेरादि तत्सहिताशिखा यस्य स तथा आस्तां स्तवकादि इत्यपिशब्दार्थः । एतेनास्य प्राधान्यमुक्तं स एवंविधोऽपि यदा अशुचौ न्यस्तः पुरीषस्योपरि स्थापितः सन् शुचेविप्रुषापि लवेनापि आस्तां स्तवकादिनेत्यपिशब्दार्थःस्पृष्टो भवति तदा अभोज्यो भवति । एवं निर्दोषतया भोज्योऽप्याहार आधाकर्मावयव संस्पृष्टतया साधूनामभोज्यो वेदितव्यः ॥

भोजनस्थितस्यास्याकल्पतां भावयति–

एमेव उज्झयंमि वि आहाकम्मंमि अकयए पत्ते ।
होइ अभोज्जं भाणे जत्थ व सुद्धंमि तं पडियं ॥

यथा आधाकर्मावयवेन संस्पृष्टमभोज्यमेव यस्मिन् भाजने तदाधाकर्मगृहीतं तस्मिन्नाधाकर्मण्युज्झितेऽपि अकृतकल्पे वक्ष्यमाणन्यायेन कल्पत्रयेणाप्रक्षालिते यद्वा यत्र भाजने पूर्वशुद्धेऽपि भक्ते गृहीते आधाकर्म स्तोकमात्रं पतितं तस्मिन् भाजने पूर्वगृहीते शुद्धे आधाकर्मणि च सर्वात्मना त्यक्ते पश्चादकृतकल्पो वक्ष्यमाणप्रकारेणाकृतकल्पत्रये यद्भूयः शुद्धमपि प्रक्षिप्यते तदा भोज्यमवसेयं । न खलु लोकेऽपि यस्मिन् भाजने पुरीषं न्यपतत् तस्मिन्नशुचिपरित्यागानन्तरमप्रक्षालिते यद्वा यस्मिन् भाजने भक्तादिना पूर्णेऽपि तदुपरि पुरीषं निपतितं भवेत् तस्मिन् पूर्वपरिगृहीतभक्तादि पुरीषपरित्यागानंतरमप्रक्षालिते भूयः प्रक्षिप्तमशनादिकमभोज्यं भवति पुरीषस्थानीयं च संयमिनामाधाकर्म ततस्तस्मिन् सर्वात्मना परित्यक्तेऽपि पश्चादत्र कल्पत्रये भाजने यत्प्रक्षिप्यते तदभोज्यमवसेयं ।

संप्रति परिहरणं प्रतिपिपादयिषुरिदमाह–

वंतुच्चारसरित्थं कम्मं सोउमवि कोविओ भीओ ।
परिहरइ सावि य दुहा विहिअविही य परिहरणा ॥

वांतसदृशमुच्चारसदृशं च आधाकर्म यतीन् प्रतिपाद्यमानं श्रुत्वा अपिः संभावने संभाव्यते । एतन्नियमतः कोविदः संसारविमुखतया पंडितोऽत एव भीत आधाकर्मभोगतः संसारो भवतीत्याधाकर्मण स्तदाधाकर्म परिहरति न गृह्णाति ।

परिहरणां बिभणिषुः कथानकं गाथात्रयेणाह—

साली ओयणहत्थं दट्ठुं भणई अकोविओ दिंतीं ।
कत्तो चउसिमाली वणिजा ण य पुच्छयं गंतु ॥
गंतूणं सो वाणियगं पुच्छए कओसाली ।
पच्चंते मगहाए गोव्वरगामे तहिं वयइ ॥
कम्मासंकाए पहं मोत्तुं कयहि सावया अहिसिं ।
यं पि विवज्जंतो दुज्झइ छुहाए मुच्छाई ॥

शालिग्रामे ग्रामणीनामा वणिक् तस्य भार्याऽपि ग्रामणी अन्यदा च वणिजि विपणिं गते भिक्षार्थमटन् कोविदः कोऽपि साधुस्तद्गृहं प्रविवेश । आनीतश्च तद्भार्यया ग्रामण्या शाल्योदनः । साधुना चाधाकर्मदोषाशंकया नोदाय सा पप्रच्छे यथा श्राविके कुतस्त्य एष शालिरिति सा प्रत्युवाच नाहं जाने वणिग्जानाति ततो वणिजं विपणौ यात्वा पृच्छ तत एवमुक्तः सन् स साधुस्तं शाल्योदनमपहाय वणिजं विपणौ गत्वा पृष्टवान् वणिजाऽप्युक्तं मगधजनपदप्रत्यंतवर्तिनो गोब्बरग्रामादागतः शालिरेष इति ततः स तत्र गंतुं प्रावर्तत तत्रापि साधुनिमित्तं केनापि श्रावकेणाऽयं पंथाः कृतो भविष्यतीति आधाकर्मशंकया पंथानं विमुच्योत्पथेन व्रजति उत्पथेन व्रजन्नहि कंटकश्वापदादिभिरभिद्रूयते नापि कंचन देशं जानाति तथा आधाकर्मशंकया वृक्षच्छायामपि परिहरन् मूर्ध्नि सूर्यकरनिकरनिप्रपातेन ताप्यमानो मूर्च्छामगमत् । क्लेशं च महांतं प्राप्नोति ॥

ईयअविहिपरिहरणा नाणाईणं न होइ अभागी ।
दव्वकुलदेशभाए विहिपरिहरणाइ मातत्थ ॥

इत्येवमुक्तेन प्रकारेण अविधिना परिहरणात् ज्ञानादीनाम भोगी न भवति । तस्माद्विधिना परिहरणा कर्त्तव्या तच्च विधिपरिहरणमिदं वक्ष्यमाणं द्रव्यकुलदेशभावानाश्रित्य तत्र आधाकर्मणि विषये द्रष्टव्यं ॥

तत्र प्रथमतो द्रव्यादीन्येव गाथाद्वयेनाह—

ओयणसमिइमसत्तुगकुम्मासाइओ हुंति दव्वाइं ।
बहुजण मप्पजणं वा कुलं तु देसो सुरट्ठाई ॥
आयरणायर भावे सयं च अतेण वा वि दावणया ।
एएसिं तु पयाणं चउपयतिपया व भावणया ॥

ओदनः शाल्यादिकूरः । समिति मा मांडादिकाः सक्तवः कुल्माषाश्च प्रतीता आदिशब्दात् मुद्गादिपरिग्रहः अमूनि भवंति द्रव्याणि । कुलमल्पजनं बहुजनं वा देशःसौराष्ट्रादिकः भावे आदरोऽनादरो वा एतावेव स्वरूपतो व्याख्यानयति । स्वयं वान्येन वा कर्मकरादिना यत् दापनं तौ यथासंख्यमादरानादरौ । एतेषां च पदानां भजना विकल्पना चतुष्पदा त्रिपदा वा स्यात् । किमुक्तं भवति । कदाचिच्चत्वार्यपि पदानि संभवंति कदाचित्त्रीणि तत्र यदा चत्वार्यपि द्रव्यादीनि प्राप्यंते तदा चतुष्पदा यदा तु आदरो नाप्यनादरः केवलं मध्यस्थस्तिष्ठति वा तदा भावस्याभावात् त्रिपदेति ॥

संप्रति यादृशेषु द्रव्यादिषु सत्सु पृच्छा कर्त्तव्या यादृशेषु न कर्त्तव्या तान्याह ॥ "अणुचिय देसं दव्वं कुलं मप्पं आयरोयतोय" इत्यत्र चशब्दाल्लभ्यते एतेन द्रव्यदेशावुक्तौ कुलमपि चाल्पमल्पजनं अनेन कुलमुक्तं आदरश्च प्रभूत एतेन भाव उक्तस्ततो भवति पृच्छा । आधाकर्मसंभवानंतरं तत्रापि कुलं महदपेक्षणीयमन्यथाऽल्पजनेन भवेदाधाकर्मेति संभवश्च निवर्त्तते । अथ भावेऽपि अनादरेऽपि नास्ति पृच्छा यो ह्याधाकर्म कृत्वा दद्यात्स प्राय आदरमपि कुर्यात् तत आदरकरणेन ज्ञायते यथा नास्ति तत्राधाकर्मेति न पृच्छा तदेवं यदा पृच्छा कर्त्तव्या तदा च न कर्त्तव्या तत्प्रतिपादितं ॥

संप्रति पृच्छायां कृतायां यदा तद्ग्राह्यं भवति यदा च न तदेतत्प्रतिपादयति—

तुज्झट्ठाए कयमिणमन्नोन्नमवेक्खं एव सविलक्खं ।

वज्जंति गाढरुट्ठा का भेयत्तित्ति वा गेण्ह ॥

इह यदा स्त्री ऋज्वी भवति सा पृष्टा सती यथावत् कथयति यथा भगवन् तवार्थाय कृतमिदमशनादिकमिति । यत्तु भवति मायाविकुटुम्बं तन्मुखेनैवमाचष्टे गृहार्थमेतत् कृतं न तवार्थायेति परिज्ञाना वयमिति सविलक्षं सर्वाण्यपि मानुषाणि परस्परमवेदयंते कपोलोद्भेदमात्रं च हसंति ततो यदा तवार्थायेदं कृतमशनादिकमिति जल्पति यद्वा सविलक्षं सलज्जमन्योन्यं प्रवेक्षते चशब्दाद्धसति वा तदा साधवस्तद्देयमाधाकर्मेति परिज्ञाय वर्ज्जयंति । यदा तु कस्यार्थायेदं कृतमिति पृष्टा सती गाढं सत्या वृत्त्या रुष्टा भवति यथा भो भट्टारक तव तृप्तिरिति तदा नैवाधाकर्मेति निःशंकं ग्रहीत ॥

संप्रति "गहियमदोसं" चेत्यवयवं व्याचिख्यासुः परं प्रश्नयति

गूढायाराकरणं आयारं पुच्छिया वत कहेंति ।

थोवंति वनपुट्ठानं च अमुट्ठं कहंतत्था ॥

इह ये श्रावकाः श्राविकाश्चातीव भक्तिपरवशगा गूढाचाराश्च तेचादरमतिशयेन कुर्व्वंति माभून्न ग्रहीष्यतीतिनापि पृष्टाः संतो यथा तवार्थादेयं कृतमिति। अथवा स्तोकमिति कृत्वा । ते साधुना न पृष्टाः अथ यदेवं वस्तु शुद्धमाधाकर्म्मदोषदुष्टमतः कथं तत्र साधोः शुद्धिर्भविष्यतीति एवं परेणोक्तं गुरुराह ॥

आहाकम्मपरिणओ फासुयभोई वि बंधओ होइ ।

सुद्धंगवेसमाणो आहाकम्मे विसो सुद्धो ॥

इह प्रासुकग्रहणेन एषणीयमुच्यते सामर्थ्यात्तथा हि साधूनामयं कल्पो ग्लानादिप्रयोजनेऽपि प्रथमतस्तावदेषणीयमेषितव्यं । तदभावेऽनेषणीयमपि श्रावकादिना कारयित्वा श्रावकाभावे स्वयमपि कृत्वा भोक्तव्यं तत्र कदाचनापि प्रासुकाभावेऽप्रासुकामिति ततः कदाचिदप्यप्रासुकाभावनासंभवे ( फासुयभोईवीति ) वाक्यमनुपपद्यमानमथातिप्रासुकशब्दमेषणीये वर्त्तयति ततोऽयमर्थः प्रासुकभोज्यपि यदाधाकर्म्मपरिणतस्तर्हि सोऽशुभकर्मणां बन्धको भवति अशुभपरिणामस्यैव वस्तुस्थित्या बन्धकारणत्वात् शुद्धमुद्गमादिदोषरहितं पुनर्गवेषयन्नाधाकर्म्मण्यपि गृहीते भुक्ते च स शुद्धो वेदितव्यः ॥

शुद्धपरिणामयुक्तत्वादेतदेव कथानकाभ्यां भावयति ॥

संघुद्दिट्ठं सोउं एइ दुयंकोइ साविए यत्तो ।

दिन्नंति देहमज्झंति गाउ साउं तओलग्गो ॥

शतमुखं नाम पुरं तत्र गुणचन्द्रः श्रेष्ठी चंद्रिका तस्य भार्या श्रेष्ठी च जिनप्रवचनानुरक्तो हिमगिरिशिखरानुकारि जिनमंदिरं कारयित्वा तत्र युगादिजिनप्रतिमां प्रतिष्ठापितवान् ततः संघभोज्यं दापयितुमारब्धं । इतश्च प्रत्यासन्ने कस्मिंश्चिद्ग्रामे कोऽपि साधुवेषविडंबकः साधुर्वर्त्तते । तेन च जनपरंपरया शुश्रुवे । यथा शतमुखपुरे गुणचन्द्रः श्रेष्ठी संघभोज्यमद्य ददातीति । ततः स तद्ग्रहणाय सत्वरमाजगाम । संघभक्तं च सर्वं दत्तं तेन च श्रेष्ठी याचितो यथा मह्यं देहि । श्रेष्ठिना च चंद्रिका अभ्यधायि देहि साधवेऽस्मै भक्तमिति । सा प्रत्युवाच दत्तं सर्वं न किमपीदानीं वर्त्तते, ततः श्रेष्ठिना सा पुनरप्यभाणि देहि निजरसवतीमध्यात्परिपूर्णमस्माकमिति । ततः सा शाल्योदनमोदकादिपरिपूर्णमदात् साधुश्च संघभक्तमिति बुद्ध्या परिगृह्य स्वोपाश्रये भुक्तवान । ततः शुद्धमपि भुंजान आधाकर्म ग्रहणपरिणामवशादाधाकर्मपरिभोगजनितेन कर्मणा बद्धः । एवमन्योऽपि वेदितव्यः । सूत्रं सुगमं नवरं ( देहमज्झंतिगाउत्ति ) भार्यया दत्तमित्युक्ते श्रेष्ठी भणति देहि मम मध्यात् मदीयभोजनमध्यात् । दत्ते च स्वादुमिष्टमिदं संघभक्तमिति भुंजानो विचिंतयति । ततो लग्न आधाकर्मपरिभोगजनितेन कर्मणा बद्धः तदेवं ( आधाकम्मपरिणओ ) इत्यादिकथानकेन भावितं ॥

संप्रति शुद्धं गवेसमाणो इत्यादिकथानकेन भावयति ॥

मासियपरेणगट्ठा गमणं आसन्नगामगे खमए ।

सट्ठीपायसकरणं कयाए अज्जोज्झिखमउ खल्लग ॥

मल्लगलेत्थारियाणिडिंभगनिब्भंत्थणिवरुटंणया ।

हंदि समणात्ति पायसघयगुलजुयजावणट्ठाए ।

एगंतमवक्कमणं जइ साहू इज्जहोज्जभित्तोमि ॥

तणुकोट्ठंमि असुत्था भुत्तंमि य केवलं नाणं ॥

पोतनपुरं नाम नगरं तत्र पंचभिः साधुशतैः परिवृता यथागमं विहरंतो रत्नाकरनामानः सूरयः समाययुः तस्याश्च साधुपंचशत्या मध्ये तियंकरो नाम क्षपकः स च माममासपर्यंते पारणकं विदधाति । ततो मासक्षपणपर्यंते मा कोऽपि मदीयपारणकमवबुद्ध्याऽऽधाकर्मादिकं कार्षीदित्यज्ञात एव प्रत्यासन्ने ग्रामे पारणार्थं व्रजामीति चेतसि विचिंत्य प्रत्यासन्ने कचिद्ग्रामे जगाम तत्र च यशोमतिर्नाम श्राविका तया च तस्य क्षपकस्य मासपारणकदिनं जनपरंपरया श्रुतं । ततस्तया तस्मिन् पारणकदिने कदाचिदद्य स क्षपकोऽत्र पारणकरणाय समागच्छेदिति बुद्ध्या परमभक्तिवशतो विशिष्टशालितंडुलैः पायसमपच्यत घृतगुडादीनि च उपबृंहकद्रव्याणि प्रत्यासन्नीकृतानि ततो मा साधुः पायसमुत्तमं द्रव्यमिति कृत्वा आधाकर्मशंकां कार्षीदिति मातृस्थानतो वटादिपत्रैः कृतेषु शरावाकारेषु भाजनेषु डिंभयोग्या स्तोका स्तोका क्षैरेयी प्रक्षिप्ता भणिताश्च डिंभा यथा रे बालका यदा क्षपकः साधुरीदृशस्तादृशो वा समायाति तदा यूयं भणत हे अम्ब प्रभूतास्माकं क्षैरेयी परिवेषिता ततो न शक्नुमो भोक्तुं । एवं च उक्तेऽहं युष्मान्निर्भर्त्सयिष्यामि ततोयूयं भणत किं दिने दिने पायसमुपस्क्रियते । एवं च बालकेषु शिक्षितेषु तस्मिन्नेव प्रस्तावे स क्षपको भिक्षामटन् कथमपि तस्या एव गृहे प्रथमतो जगाम तदा सा यशोमतिरंतः समुल्लसत्परमभक्तिर्मा साधोः कापि शंका भूदिति बहिरनादरम कुर्व्वती यथास्वभावमवतिष्ठते । बालकाश्च यथाशिक्षितं भणितुं प्रवृत्तास्तथैव च तया निर्भर्त्सितास्ततः सरोषयानादरपरया क्षपकोऽपि तया बभणे यथा भो मक्षा बालकाः पायसमपि नैतेभ्यो रोचते तर्हि गृहाण क्षैरेयी नाम

चेद्व्रजत इति । तत एवमुक्ते स क्षपकसाधुर्निःशंको भूत्वा पायसं प्रतिगृहीतुमुद्यतः सापि परमभक्तिमुद्वहंती परिपूर्णभाजनभरणं पायसं घृतगुडादिकं च दत्तवती । साधुश्च मनसि निःशंको भूत्वा पायसं प्रतिग्रहीतुमुद्यतः भोजनाय वृक्षस्य कस्यचिदधस्तादागतवान् गत्वा च यथाविधिरीर्यापथिकादि प्रतिक्रम्य स्वाध्यायं च कियंतं कृत्वा चिंतयामास । अहो लब्धमुत्कृष्टं मया पायसद्रव्यं घृतगुडादि ततो यदि कोऽपि साधुरागत्य संविभागयति मां तर्हि भवामि संसारार्णवोत्तीर्णो यतो निरंतरं ये स्वाध्यायनिषण्णचेतसः प्रतिक्षणं परिभावयंति सकलमपि यथावस्थितं वस्तुजातमत एव च दुःखरूपात्संसाराद्विमुखबुद्धयो मोक्षविधावेकताना यथाशक्ति गुर्वादिषु वैयावृत्योद्यता ये वा परोपदेशप्रवणाः स्वयं सम्यक्संयमानुष्ठानविधायिनश्च तेषां संविभागे कृते तद्गतं ज्ञानाद्युपष्टब्धं भवेन्मम महान् लाभः शारीरकं पुनरिदमसारं प्रायो निरुपयोगि च । ततो येन तेन चोपष्टब्धमुखेन वहतीत्येवं भुंजानोऽपि शरीरे मूर्च्छारहितः प्रवर्द्धमानविशुद्धाध्यवसायो भोजनानंतरं केवलज्ञानमासादितवान् सूत्रं सुगमं । नवरं ( खल्लुगमल्लगल्लित्थारियाणिति ) मल्लकं शरीरं तदाकाराणि यानि खल्लकानि धवादिपत्रकृतानि भाजनानि द्रोणानीत्यर्थः तानि लित्थारियाणि डिंभकयोग्यास्तोकस्तोकपायसप्रक्षेपणेन खरंटितानि कृतानि खरंटणया इत्यवज्ञया हंदीत्यामंत्रणे भो श्रमण यदि रोचते तर्हि गृहाण विशेषः ततः शरीरयापनाय घृतगुडयुतं पायसं गृहीत्वा एकांते अवक्रमणं शेषं सुगमं । एव मन्येषामपि भावतः शुद्धं गवेषयतामाधाकर्मण्यपि गृहीते भुक्ते वा न दोषः भगवदाज्ञाराधनात् तथा च भगवदाज्ञाराधनकृतमेवादोषं भगवदाज्ञाखंडन कृतमेव च दोषं विभावयितुकामः कथानकं रूपकचतुष्टयमाह ।

चंद्रोदयं च सूरोदयं च रन्नोउ दोन्नि उज्जाणे ।
तेसिं विवरीयगमणे आणाको वा तओदंडो ॥
सूरोदयं गच्छगहं पभाव चंदोदयं जंस्वतणा इहरा ।
दु हारवी पच्चुरसत्ति काउं रायावि चंदोदयमेव गच्छे ॥
पत्तलं डुमसालगया दच्छा मुनिवंगणति दुव्वित्ता ॥
उज्जाणपालएहिं गेहिया य हया य बद्धा य ।
सहसा पइट्ठदिट्ठा इयरेहिं निवंगणत्ति बद्धानि ॥
तस्स य अवण्णे दंसणमुभओवहवो विसग्गो ॥

चंद्रानना नाम पुरी । तत्र चन्द्रावतंसो राजा तस्य त्रिलोकरेखाप्रभृतयोऽन्तः पुरिकाः राज्ञश्च द्वे उद्याने तद्यथा एकं पूर्वस्यां दिशि सूर्योदयाभिधानं । द्वितीयं पश्चिमायां चन्द्रोदयाभिधानं । तत्र चान्यदा प्राप्ते वसंतमासे कस्मिंश्चिद्दिने राजा निजांतःपुरक्रीडाकौतुकार्थी जनानां पटहं दापितवान् यथा भो ! शृणुत जनाः प्रभाते राजा सूर्योदयोद्याने निजांतः पुरिकाभिः सह स्वेच्छं विहरिष्यति । ततो मा तत्र कोऽपि यासीत् सर्वेऽपि तृणकाष्ठहारादयश्चंद्रोदयं गच्छन्त्विति । एवं च पटहे दापिते तस्य सूर्योदयोद्यानस्य रक्षणाय पदातीनारोपितवान् । यथा न तत्र कस्यापि प्रवेशो दातव्य इति । राजा च निशि चिंतयामास सूर्योदयमुद्यानं गच्छतामपि प्रभाते सूर्यः प्रत्युरसं भवति ततः प्रतिनिवर्त्तमानानामपि मध्याह्ने प्रत्युरसं च सूर्यो दुःखावहस्तस्माच्चंद्रोदयं गमिष्यामीति । एवं च चिंतयित्वा प्रातस्तथैव कृतवान् । इतश्च पटहश्रवणानंतरं केऽपि दुर्वृत्ताश्चिंतयामासुः यथा न कदाचिदपि वयं राजांतःपुरिका दृष्टवंतः । प्रातश्च राजा सूर्योदये सांतःपुरः समागमिष्यति । अन्तःपुरिकाश्च यथेच्छं विहरिष्यंति । ततः पत्रबहुलतरुशाखासु लीनाः केनाप्यलक्षिता यतः परिभावयामः । एवं च चिंतयित्वा ते तथैव कृतवंतस्तत उद्यानरक्षकैः कथमपि ते शाखास्वंतर्लीना दृष्टास्ततो गृहीता लकुडादिभिश्च हता रज्ज्वादिभिश्च बद्धा ये चान्ये तृणकाष्ठहारादयो जनास्ते सर्वेऽपि चंद्रोदयं गतास्तैश्च सहसा प्रविष्टैरग्रे यथेच्छं राजांतःपुरिकाः क्रीडंत्यो दृष्टास्ततस्तेऽपि राजपुरुषैर्बद्धास्ततो नगराभिमुखमुद्यानान्निर्गच्छता राज्ञा उद्यानपालकैः पुरुषैर्द्वयेऽपि बद्धा दर्शिताः कथितश्च सर्वोऽपि यथावस्थितो वृत्तांतस्तत्र ये आज्ञाभंगकारिणस्ते विनाशिता इतरे मुक्ताः सूत्रं सुगमं नवरं ततो (दंडोत्ति) दंडो मारणं एतद्भावनार्थं रूपकत्रयं । सूरोदयमित्यादि । तत्र ( पच्चुरसं ) उरसः संमुखं ( नितस्सयत्ति ) उद्यानादपराह्णे नियंतो राज्ञ उभयेषां दर्शनं ततो यथाक्रमं वधविसर्गौ । एतेन यदुक्तं ( अभोज्जे गमणोइया ) इत्यादिगाथायां ( दिट्ठंता तत्थिभेदोन्निति ) तद्व्याख्यातं । सांप्रतं दार्ष्टांतिके योजनामाह ॥

जह ते दंसणकंखी अपूरिइच्छा विणासिया रन्ना ।
दिट्ठे वि यरे मुक्का इमे व इहं समोयारे ॥

यथा ते दुर्वृत्ता दर्शनकांक्षिणोऽपूरितेच्छा अपि आज्ञाभंगकारिण इति राज्ञा विनाशिताः इतरे च तृणकाष्ठहारादयश्चंद्रोदयोद्यानं गता दृष्टेऽपि तैरंतःपुरे आज्ञाकारित्वात् मुक्ताः ॥ एवमेव इहापि आज्ञाकर्मविषये समवतारो योजना कार्या सा चैवमाधाकर्मभोजनपरिणामपरिणताः शुद्धमपि भुंजाना आज्ञाभंगकारित्वात् कर्म्मणा बध्यंते साधुवेषविडंबकसाधुवत् शुद्धं गवेषयंत आधाकर्मापि भुंजाना भगवदाज्ञाराधना न बध्यंते प्रियंकराभिधक्षपकसाधुवदिति ॥

आधाकर्म्मभोजिनमेव भूयोऽपिर्निंदति ॥

आहाकम्मं भुंजइ न पडिक्कमए य तस्स ट्ठाणस्स ।
एमेव अडइ वोडो लुक्कविलुक्को जह कवोडो ॥

य आधाकर्म्म भुंक्ते न च तस्मात् स्थानादाधाकर्म्मपरिभोगरूपात्प्रतिक्रामति प्रायश्चित्तग्रहणेन निवर्त्तते । स ( वोडो ) मुंडो जिनाज्ञाभंगे निष्फलं तस्य शिरोलुंचनादीनि ( वोंड ) इत्येवमधिक्षिपति । एवमेव निष्फलमटति जगति परिभ्रमति अधिक्षेपसूचकमेव दृष्टांतमाह ( लुक्कविलुक्को जह कवोडो ) लुंचितलुंचितो यथा कपोतः पक्षिविशेषो यथा तस्य लुंचनमटनं च न धर्माय तथा साधोरप्याधाकर्मभोजिन इत्यर्थः । तत्र सामान्यतो लुंचनं विच्छित्त्या विशर्वरं वा लुंचनं विलुंचनं ॥पिंड० ॥ आहाक० द्वा० ॥
आधाकर्मपरिभोगे दोषमाह—

एगया देवलोएसु नरएसु वि एगया ॥

एगया आउरं कायं, आहाकम्मेहिं गच्छई ॥ ३ ॥

आधानमाधा करणमित्यर्थस्तदुपलक्षितानि कर्माण्याधाकर्माणि तैः किमुक्तं भवति । स्वयं विहितैरेव सरागसंयममाहारं भासुरभावनादिभिरेव नारकासुरगतिहेतुभिः क्रियाविशेषैर्यथाकर्मभिर्घातस्तत्कृत्यनुरूपचेष्टितैर्गच्छन्ति यान्तीति सूत्रार्थः ॥ उत्त० ३ अ० " आहाकम्मं भुंजमाणे सबले" आधाकर्म आधया साधुप्रणिधानेन यत्सचेतनमचेतनं क्रियते अचेतनं वा पच्यते चीयते वा गृहादिकं वयते वा वस्त्रादिकं तदाधाकर्म भुञ्जानः शबलः । दशा० ३ अ० ।

आधाकर्मपरिभोगे दोषस्सदृष्टान्तो यथा ।

जं किंचि उ पूइकम्मं, सड्ढीमागंतुमीहियं ।
सहस्संतरियं भुंजे, दुपक्खं चेव सेवइ ॥१॥

आहारजातं स्तोकमप्यास्तां तावत्प्रभूतं तदपि पूतिकृतमाधाकर्मादि सिक्थेनाप्युपसृष्टमास्तां तावदाधाकर्म । तदपि न स्वयं कृतमपि तु श्रद्धावताऽन्येन भक्तिमताऽपरानागन्तुकानुद्दिश्येहितं चेष्टितं निष्पादितं तच्च सहस्रान्तरितमपि यो भुञ्जीताभ्यवहरेदसौ द्विपक्षं गृहस्थपक्षं प्रव्रजितपक्षं वा सेवते । एतदुक्तं भवति । एवंभूतमपि परकृतमपरागन्तुकमत्यर्थं निष्पादितं यदाधाकर्मादि तस्य सहस्रान्तरितस्यापि योऽवयवस्तेनाप्युपसृष्टमाहारजातं भुञ्जानस्य द्विपक्षसेवनमापद्यते । किं पुनः य एते शाक्यादयः स्वयमेव सकलमाहारजातं निष्पाद्य स्वयमेव चोपभुञ्जते ते च सुतरां द्विपक्षसेविनो भवन्तीत्यर्थः । यदि वा द्विपक्षमिति ईर्यापथः सांपरायिकं वा । अथ वा पूर्वबद्धा निकाचिताद्यवस्थाः कर्मप्रकृतीर्नियत्यपूर्वाश्चादत्ते ( सूत्र० ) ततश्चैवं शाक्यादयः परतीर्थिकाः स्वयूथ्या वा आधाकर्म भुञ्जाना द्विपक्षमेव सेवन्त इति सूत्रार्थः ।

( ११ ) इदानीमेतेषां सुखैषिणामाधाकर्मभोजिनां कटुकविपाकाविर्भावनाय श्लोकद्वयेन दृष्टान्तमाह—

तमेव अवियाणंता, विसमंसि अकोविया ।
मच्छा वेसालिया चेव, उदगस्सऽभियागमे ॥ २ ॥
उदगस्स पभावेणं, सुक्कं सिग्घं तमिंति उ ।
ढंकेहिय कंकेहिय, आमिसत्थेहिं ते दुही ॥ ३ ॥

तमेव आधाकर्मोपभोगदोषमजानाना विषमोऽष्टप्रकारकर्मबन्धो भवकोटिभिरपि दुर्मोक्षश्चतुर्गतिसंसारो वा तस्मिन्नकोविदाः कथमेष कर्मबन्धो भवति कथं वा न भवति केन चोपायेनायं संसारार्णवस्तीर्यत इत्यत्राकुशलास्तस्मिन्नेव संसारोदरे कर्मपाशावपाशिता दुःखिनो भवन्तीति । अत्र दृष्टान्तमाह । यथा मत्स्याः पृथुरोमाणो विशालः समुद्रस्तत्र भवा वैशालिकाः विशालाख्यविशिष्टजात्युद्भवा वा वैशालिकाः विशाला एव वैशालिकाः बृहच्छरीरास्ते एवंभूता महामत्स्या उदकस्याभ्यागमे समुद्रवेलायां सत्यां प्रबलमरुद्वेगोद्धूतोत्तुङ्गकल्लोलमालापनुन्नाः सन्त उदकस्य प्रभावेण नदीमुखमागता पुनर्वेलापगमे तस्मिन्नुदके शुष्के वेगेनैवापगते बृहत्वाच्छरीरस्य तस्मिन्नेव धुनीमुखे विलग्ना अवसीदन्त आमिषगृध्नुभिर्ढङ्कैः कङ्कैश्च पक्षिविशेषैरन्यैश्च मांसवसार्थिभिर्मत्स्यबन्धादिभिर्जीवन्त एव विलुप्यमाना महान्तं दुःखसमुद्घातमनुभवन्तोऽशरणा घातं विनाशं यान्ति प्राप्नुवन्ति । तुरवधारणे प्राणाभावाद्विनाशमेव यान्तीति श्लोकद्वयार्थः ॥ ३ ॥

एवं दृष्टान्तमुपदर्श्य दार्ष्टान्तिके योजयितुमाह—

एवं तु समणा एगे, वट्टमाणसुहेसिणो ।
मच्छा वेसालिया चेव, घातमेस्संति णंतसो ॥ ४ ॥

यथैतेऽनन्तरोक्तमत्स्यास्तथा श्रमणाः श्राम्यन्तीति श्रमणा एके शाक्यपाशुपतादयः स्वयूथ्या वा किंभूतास्ते इति दर्शयति । वर्त्तमानसुखैषिणः समुद्रवायसवत् तत्कालावाप्तसुखलवासक्तचेतसोऽनालोचिताधाकर्मोपभोगजनितातिकटुकदुःखौघानुभवना वैशालिकमत्स्या इव घातं विनाश)शालमेष्यन्त्यनन्तशोऽरहट्टघटीन्यायेन भूयो भूयः संसारोदन्वति निमज्जनोन्मज्जनं कुर्वाणा न ते संसाराम्भोधेः पारगामिनो भविष्यन्तीत्यर्थः । सूत्र० १ श्रु० १ अ० ३ उ० ।

( १२ ) आधाकर्मपरिभोगे कर्मबन्धो यथा ।

आहाकम्मं णं भुंजमाणे समणे निग्गंथे किं बंधइ किं पकरेइ किं चिणाइ किं उवचिणाइ ? गोयमा ! आहाकम्मं णं भुंजमाणे आउयवज्जाओ सत्तकम्मपगडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ जाव अणुपरियट्टइ । से केणट्ठेणं जाव आहाकम्मं णं भुंजमाणे जाव अणुपरियट्टइ ? गोयमा ! आहाकम्मं णं भुंजमाणे आयाए धम्मं अइक्कमइ आयाए धम्मं अइक्कममाणे पुढविकायं णावकंखइ जाव तसकायं णावकंखइ जेसिं पि य णं जीवाणं सरीराई आहारमाहारेइ ते वि जीवे नावकंखइ से तेणट्ठेणं गोयमा ! एवं वुच्चइ आहाकम्मं णं भुंजमाणे आउयवज्जाओ सत्त कम्मपगडीओ जाव अणु परियट्टइ ।

(आहाकम्ममित्यादि) आधाय साधुप्रणिधानेन यत्सचेतनमचेतनं क्रियते, अचेतनं वा पच्यते, चीयते वा गृहादिकं, वयते वा वस्त्रादिकं, तदाधाकर्म ( किं बंधइत्ति ) प्रकृतिबन्धमाश्रित्य स्पृष्टावस्थापेक्षया वा ( किं पकरेइ त्ति ) स्थितिबन्धापेक्षया बद्धावस्थापेक्षया वा, ( किं चिणाइ त्ति ) अनुभागबन्धापेक्षया निधत्तावस्थापेक्षया वा ( किं उवचिणाइ त्ति ) प्रदेशबन्धापेक्षया निकाचनापेक्षया चेति ( आयाए त्ति ) आत्मना धर्म्मं चारित्रधर्म्मं श्रुतधर्म्मं वा, ( पुढविकायं नावकंखइ त्ति ) नापेक्षते नानुकम्पत इत्यर्थः ( भ० ७ श० ६ उ० ) ( आयाए त्ति ) आत्मना धर्मं श्रुतधर्म्मं चारित्रधर्मं चेति " आयाए धम्मं अइक्कममाणे पुढविकायं नावकंखइ आउकायं नावकंखइ तेउकायं नावकंखइ वाउकायं नावकंखइ वणस्सइकायं नावकंखइ तसकायं नावकंखइ । जेसिं पि य णं जीवाणं सरीरयाइं आहारमाहारेइ ते नावकंखइ स एएणं हट्ठेणं गोयमा ! एवं वुच्चइ आहाकम्मं तं भुंजमाणे जाव परियट्टइ तथा कहं तं भंते ! जीवा अप्पाउयत्ताए कम्मं पकरंति गोयम ! पाणे अइवाइत्ता भवइ तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाहित्ता भवइ एवं खलु जीवा अप्पाउयत्ताए कम्मं पकरंतित्ति " द्वितीयपदे पुनर्गाढग्लानादिकार्यासंस्तरणादिरूपे गच्छमध्यव्यवस्थितस्य गुर्वाद्याज्ञावर्तिनोऽशठभावस्य साधोः पञ्चकपरिहाणिक्रमेण सर्वथा

प्रयतमानस्यानुग्रहदृष्टान्तेनाधाकर्माद्यपि निर्दोषं तथा चागमः "संथरणम्मि असुद्धं, दुराह वि गिराहंत दितया ए हियं। आउर-दिट्ठंतेणं, तं चेव हियं असंथरणे " तथा " जा जयमाणस्स भवे, विराहणासुत्तविहिसमग्गस्स । सा होइ निज्जरफला, अज्भ-त्थविसोहिजुत्तस्स त्ति " ॥ ध० र० । चारित्रमधिकृत्याहारवि-षयानाचाराचारौ प्रतिपादयितुकाम आह ।

आहाकम्माणि भुंजंति, अएणमएणे सकम्मुणा ।
उवलित्तेति जाणिज्जा, णुवलित्ते त वा पुणो ॥ ८ ॥

साधुः प्रधानकारणमादायाश्रित्य कर्माण्याधाकर्माणि तानि तु वस्त्रभोजनवसत्यादीन्युच्यन्ते । एतान्याधाकर्माणि ये भुञ्जते ए-तैरुपभोगं ये कुर्वन्त्यन्योन्यं परस्परं तान्स्वकीयेन कर्मणोपलि-प्तान् विजानीयादित्येवं नो वदेत्तथाऽनुपलिप्तानिति वा नो व-देत् । एतदुक्तं भवति आधाकर्मापि श्रुतोपदेशेन शुद्धमिति कृत्वा भुञ्जानः कर्मणा नोपलिप्यते तदाधाकर्मोपभोगेनाऽवश्यतया कर्म-बन्धो भवतीत्येवं नो वदेत्तथा श्रुतोपदेशमन्तरेणाहारगृद्ध्याधा-कर्म्म भुञ्जानस्य तन्निमित्तकर्मबन्धसद्भावसदृशत्वयोर्व्यवहरणं व्यव-हारो निर्युक्तिकत्वान्न युज्यते तथाहि न बध्यस्य सदृशासदृश-त्वयोर्व्यवहरणं व्यवहारो निर्युक्तिकत्वान्न युक्तः सदृशत्वमतोऽनु-लिप्तानपि नो वदेद्यथावस्थितमौनीन्द्रागमज्ञस्य त्वेवं युज्यते वक्तुमाधाकर्मोपभोगेन स्यात्कर्मबन्धः स्यान्नेति। यत उक्तं " कि-ञ्चिच्छुद्धं कल्प्यमकल्प्यं वा स्यादकल्प्यमपि कल्प्यम् ॥ पिण्डे शय्या वस्त्रं पात्रं वा भेषजाद्यं वा " ॥ १ ॥ तथान्यैरप्यभिहित-म् । उत्पद्यते हि साऽवस्था. देशकालामयान्प्रति ॥ यस्यामकार्यं कार्यं स्यात्कर्मकार्यं च वर्जयेदित्यादि ॥ ८ ॥

किमित्येवं स्याद्वादः प्रतिपाद्यत इत्याह ।

एएहिं दोहिं ठाणेहिं, ववहारो ण विज्जई ।
एएहिं दोहिं ठाणेहिं, अणायारं तु जाणए ॥ ९ ॥

आभ्यां द्वाभ्यां स्थानाभ्यामाश्रिताभ्यामनयोर्व्यवस्थानयोरा-धाकर्मोपभोगेन कर्मबन्धाभावाभावभूतयोर्व्यवहारो न विद्यते तथाहि यद्यवश्यमाधाकर्मोपभोगेनैकान्तेन कर्मबन्धोऽभ्युपग-म्येत । एवं चाहाराभावेनापि क्वचित्सुतरामनर्थोदयः स्यात् । तथाहि क्षुत्प्रपीडितो न सम्यगीर्यापथं शोधयेत्ततश्च व्रजन् प्रा-एयुपमर्दमपि कुर्यात् । मूर्च्छादिसद्भावतया देहपाते सत्यवश्यं भावी त्रसादिव्याघातोऽकालमरणं चाविरतिरङ्गीकृता भवत्या-र्त्तध्यानापत्तौ च तिर्यग्गतिरित्यागमश्च । " सव्वत्थ संजमं संज-माओ अप्पाणमेव रक्खेज्जा " इत्यादिनाऽपि तदुपभोगे कर्मबन्ध-भाव इति। तथाहि आधाकर्मण्यपि निष्पाद्यमाने षड्जीव-निकायवधस्तद्वधे च प्रतीतः कर्मबन्ध इत्यतोऽनयोः स्थान-योरेकान्तेनाश्रीयमाणयोर्व्यवहरणं व्यवहारो न युज्यते तथा आभ्यामेव स्थानाभ्यां समाश्रिताभ्यां सर्वमनाचारं विजानीया-दिति स्थितम् ॥ ९ ॥ सूत्र० २ श्रु० ५ अ० ।

आधाकर्मदोषदुष्टत्वात् श्रमणार्थं कृता वल्लिवृक्षादयो न कल्पन्ते ॥

वल्ली वा रुक्खो वा, कोई रोविज्ज संजयट्ठाए ।
तेसिं परिभोगकाले, समणाण तहिं कहं भणियं ॥

वल्लीर्वा वृक्षान् वा कश्चित्संयतानामर्थाय रोपयेत् तत्र तेषां फ-लानां परिभोगकाले श्रमणानां कथं भणितम् किं कल्पते किं वा न कल्पत इत्यर्थः । अत्र सूरिराह ॥

तस्स कडनिट्ठियादी, चउरो भंगे विभावइत्ता य ।
विसमेसु जाण विसमं, नियमा उ समो समग्गहणे ॥

तस्य कृतं तस्य निष्ठितमिति प्रथमः । तस्य कृतमन्यस्य नि-ष्ठितमिति द्वितीयः । अन्यस्य कृतं तस्य निष्ठितमिति तृतीयः । अन्यस्य कृतमन्यस्य निष्ठितमिति चतुर्थः । तत्र तस्य संयतस्य निमित्तं कृतमारोपितं वृक्षादि तथा तस्यैव संयतस्य निमित्तं निष्ठितं निष्ठां नीतमचित्तीकृतमित्यर्थः । एष प्रथमभङ्गार्थः एवं शेषाणामपि भङ्गानामर्थः परिभावनीयस्तत्र तस्य कृतं तस्य नि-ष्ठितमित्यादीन् चतुरो भङ्गान् विभाव्य विषमयोर्भङ्गयोर्ग्रहणे विषममसंयमं जानीयात्तन्निमित्तं नियतात् समयोर्द्वितीयचतु-र्थयोर्भङ्गयोर्ग्रहणे समं संयमं जानीयात् । अन्यनिमित्तं निष्ठित-त्वात् । पर आह । ननु श्रमणार्थं स आरोपितस्ततः कथं द्वि-तीये भङ्गे कल्पते सूरिराह ॥

को मं सो समणट्ठं, वुत्तो तह वि य न होइ सो कम्मं ।
जं कम्मलक्खणं खलु, इह इ वुत्तं न पस्सामि ॥

को मम तु मन्यामहे स वृक्षः श्रमणस्यार्थमारोपितः तथाऽप्यसौ कर्म्म न भवति । यतो यत्कर्म्मलक्षणं खलु तीर्थकरगणधरैरुक्तं तदिह इः पादपूरणे न पश्यामि ॥

किं तत्कर्म्मलक्षणमत आह ।

सचित्तभावविकली-कयम्मि दव्वम्मि मग्गणा होइ ।
का मग्गणा उ दव्वे, सचेयणे फासुभोईणं ॥

यत्सचित्तभावविकलीकृतं द्रव्यं तत्र प्रासुकभोजिनां मार्गणा भवति । तत आधाकर्म्मिकचिन्ताऽपि तत्रैव युक्ता नान्यत्र । स-चेतने तु द्रव्ये का मार्गणा नैव काचित्सचित्तस्य ग्रहणासंभवा-त्ततो न तदपेक्षया आधाकर्म्मिकत्वमिति । तदेवमारोपितरूपकृ-तनिष्ठितविषये कल्प्यविधिरुक्तः ।

संप्रति छिन्नरूपकृतनिष्ठितविषये तमाह ।

संजयहेउं छिन्नं, अत्तट्ठोवक्खडं तु तं कप्पे ।
अत्तट्ठा छिन्नं पि हु, समणट्ठा निट्ठियमकप्पं ॥

अत्रापि भङ्गचतुष्टयम् । तस्य निष्ठितं तस्य कृतम् १ अन्यस्य नि-ष्ठितं अन्यस्य कृतं २ तस्य निष्ठितम् अन्यस्य कृतम् ३ अन्य-स्य निष्ठितं तस्य कृतम् । ४ अत्र कृतं छिन्नं निष्ठितं पाकादिकरण-तो निष्ठां नीतम् । तत्र प्रथमभङ्गः सर्वथा न कल्पते चतुर्थस्तु भङ्ग एकान्तशुद्धः । द्वितीयभङ्गमधिकृत्य पूर्वार्द्धमाह । संयतहे-तोः संयतनिमित्तं छिन्नमात्मार्थमुपस्कृतं निष्ठां नीतं तत्क-ल्पते । तृतीयभङ्गमधिकृत्याह आत्मार्थं छिन्नमपि श्रमणार्थं जनितमकल्प्यम् ।

संप्रति बीजान्युदकं चाधिकृत्याह—

बीयाणि ववावेज्जा, उगभं व खणेज्ज संजयट्ठाए ।
तेसिं परिभोगकाले, समणाण तहिं कहं भणियं ॥

बीजानि शाल्यादिशस्यानि वपेत । अवटं च खानयेत् । संय-तार्थं तेषां परिभोगकाले तत्र श्रमणानां कथं भणितं कल्प्यमक-ल्प्यं वा । सूरिराह ॥

दुद्धदाणियं च उदगं, जइहेउं निट्ठियं च अत्तट्ठा ।
तं कप्पइ अत्तट्ठा, कयं तु जइ निट्ठियमकप्पं ।

अत्रापि प्राग्वत् भङ्गचतुष्टयं तत्राद्यो भङ्ग एकान्तेनाशुद्धः। चरमस्त्वेकान्तशुद्धः। द्वितीयभङ्गमधिकृत्याह। यतिहेतोस्तण्डुला द्विरुद्धीकृता उदकं वा संयतहेतोरवटादानीतमुभयमपि च निष्ठितमचित्तीकृतमात्मार्थं तत्कल्पते। तृतीयभङ्गमधिकृत्याह कृतं द्विरुद्धीकृतास्तण्डुला अवटादानीतं पानीयं निष्ठितं तु यतिनिमित्तं तदकल्प्यमिति

पुनरपि पर आह—

समणाण संजतीण व, दाहामिति जो किणेज्ज अट्ठाए।
गावीम हिसीमादी, समणाण तहिं कहं भणियं॥

श्रमणानां संयतीनां दुग्धादि दास्यामीति बुद्ध्या तेषामर्थाय गोमहिष्यादिकं यः क्रीणीयात्तत्र श्रमणानां कथं कल्प्यमकल्प्यं वा भणितम्। सूरिराह॥

संजयहेउं दूहा, न कप्पए कप्पए य सयमट्ठा।
पामिच्चियकीया वा, जइ वि समणट्ठया धेणू॥

यद्यपि च धेनुर्गोरूपा महिषीरूपा वा श्रमणार्थमियमित्यात्मीयां धेनुं दत्वा परकीया याचिता क्रीता वा यदि संतहेतोर्दुग्धा ततो न कल्पते। अथ स्वयमात्मनोऽर्थाय दुग्धा तर्हि कल्पते॥

पुनरन्यथा परः प्रश्नयति।

चेइयदव्वं विभया, करेज्ज कोई नरो सयट्ठाए!
समणं वा सोवहियं, दावेज्जा संजयट्ठाए॥

चैत्यद्रव्यं चौराः समुदायेनापहृत्य तन्मध्ये कश्चिन्नर आत्मीयेन भागेन स्वमात्मनोऽर्थाय मोदकादि कुर्यात् कृत्वा च संयतेभ्यो दद्यात् यो वा संयतार्थाय श्रमणं सोपधिकं विक्रीणीयात्। विक्रीय च तत्प्रासुकं वस्त्रादि संयतेभ्यो दद्यात्॥

एयारिसम्मि दव्वे, समणाणं किं नु कप्पई घेत्तुं।
चेइयदव्वेणं वा, जंव सुविहियाण तं ण पडिलाभो॥
लोए वि गरहिया वित्ता, किमंग! पुणरुत्तरे।
चेइयजइपडिणीए, जो गेण्हइ सो वि हु तहेव॥

एतादृशेन द्रव्येण गाथायां सप्तमी तृतीयार्थे यत् आत्मार्थं कृतं तत् श्रमणानां किं नु ग्रहीतुं कल्पते। सूरिराह यच्चैत्यद्रव्येण यद्वा सुविहितानां मूल्येनात्मार्थं क्रीतं तद्दीयमानं न कल्पते। किं कारणमिति चेदुच्यते स्तेनानीतस्य प्रतीच्छा प्रतिग्रहणं लोकेऽपि गर्हिता किमङ्ग! पुनरुत्तरे तत्र सुतरां गर्हिता यतश्चैत्ययतिप्रत्यनीके चैत्ययतिप्रत्यनीकस्य हस्तात् यो गृह्णाति सोऽपि हु निश्चितं तथैव चैत्ययतिप्रत्यनीक एव। कस्मादित्याह।

हरियाहडिया सा खलु, ससाचितो भग्गमेव्ररा गुरुणा।
एवं तु कया भत्ती, न वि हाणी जा विणा तेण॥

सा खलु स्तेनानीतप्रतीच्छा हृताहृतिका भण्यते स्तेनैर्हृतस्या स्तेनहरणं हृताहृतिका यत एवं तस्मात् स्वशक्तितश्चैत्यद्रव्यं सोपधिकं वा श्रमणमनूक्रमयेत् उत्पादयेत्। पुनः पृच्छति॥

जा तित्थयराण कया, वंदणआवरसणादि पाहुडिया।
भत्तीहिं सुरवरेहिं, समणाण तहिं कहं भणियं॥

या तीर्थकराणां सुरवरैर्भक्त्या वन्दनावर्पणादिका आदिशब्दात् पुष्पवृष्टिप्रकारत्रयादिकरणपरिग्रहः प्राभृतिका कृता तत्र श्रमणानां कथं भणितं किं तत्र स्थातुं कल्पते न वा।

अत्र सूरिराह-।

जइ समणाण न कप्पइ, एवं एगागिणो जिणवरिंदा।
गणहरमादी समणा, अकप्पिए न वि य चिट्ठंति॥

तस्यां प्राभृतिकायां श्रमणानामवस्थातुं कल्पते भगवतः प्रवचनातीतत्वात्। अन्यच्च यदि श्रमणानां न कल्पते तत एकाकिनो जिनवरेन्द्रा भवेयुः। यतो गणधरादयः श्रमणाः अकल्पिके नैव तिष्ठन्ति व्य० २ उ०। वृ०॥

आधाकर्मोपभोगे प्रायश्चित्तं निशीथचूर्णौ यथा-

जे भिक्खू आहाकम्मं भुंजइ भुजंतं वा साइज्जइ।
आधाकर्म आहाकम्मं तं जो भुंजति तस्स चउगुरुं आणा-
दिणा य दोसा॥ नि० चू० १० उ०॥

( आधाकर्मप्रायश्चित्तमुग्गमशब्देऽपि-ज्ञानवत आधाकर्मादिदोषविचारो नाणशब्दे-गोचरचर्यां गतेनाधाकार्मिकमशनादि न ग्राह्यमिति गोयरचरियाशब्दे ) यदाधाय निमित्तत्वेनाश्रित्य पूर्वोक्तमष्टप्रकारमपि कर्म बध्यते तदाधाकर्मेति। कर्मभेदे, तच्च शब्दस्पर्शरूपरसगन्धादिकर्मिति। तथा हि शब्दादिकामगुणाविषयाभिष्वङ्गवान् सुखलिप्सुर्मोहोपहतचेताः परमार्थासुखमयेष्वपि सुखाध्यारोपं विदधाति॥ तदुक्तं "दुःखात्मकेषु विषयेषु सुखाभिमानः, सौख्यात्मकेषु नियमादिषु दुःखबुद्धिः उत्कीर्णवर्णपदपङ्क्तिरिवान्यरूपा, सारूप्यमेति विपरीतगतिप्रयोगात्" एतदुक्तं भवति। कर्मनिमित्तभूता मनोज्ञेतरशब्दादय एवाधाकर्मेत्युच्यते इति॥ आचा०१श्रु०२अ०१उ०। आधानमाधाकरणमात्मनेति गम्यते तदुपलक्षितानि कर्माण्याधाकर्माणि। स्वकृतकर्मसु,

तत्थोववाइयं ठाणं, जहा मे तमणुस्सुयं।
आहाकम्मेहिं गच्छंतो, सो पच्छा परितप्पई॥ १३॥

तत्रेति नरकेषु उपपाते भवमौपपातिकं स्थानं स्थितिर्यथा येन प्रकारेण भवतीति शेषः। मे मया तदित्यन्तरोक्त—परामर्शोऽनुश्रुतमवधारितं गुरुभिरुच्यमानमिति शेषः। औपपातिकमिति च ब्रुवतोऽस्यायमाशयो यदि गर्भजत्वं भवेद्भवेदपि तदपि तदवस्थायां छेदभेदादिनारकदुःखान्तरमौपपातिकत्वे त्वन्तर्मुहूर्तानन्तरमेव तथाविधवेदनोदय इति कुतस्तदन्तरसंभवः तथा च ( आहाकम्मेहिंति ) आधानमाधा करणमात्मनेति गम्यते तदुपलक्षितानि कर्माण्याधाकर्माणि तैराधाकर्मभिः स्वकृतकर्मभिः यद्वार्षत्वात् ( आहेति ) आधाय कृत्वा कर्माणीति गम्यते। तत—स्तैरेव कर्मभिर्गच्छन् प्रक्रमात् नरकं यद्वा यथा कर्मभिर्गमिष्यमाणगत्यनुरूपैस्तीव्रतीव्रतराद्यनुभवान्वितैर्गच्छंस्तदनुरूपमेवावस्थानं स इति बालः पश्चादित्यायुषि हीयमाने परितप्यते यथा धिग्मामसदनुष्ठायिनं किमिदानीं मन्दभाग्यः करोमीत्यादि शोचते इति सूत्रार्थः उत्त० ५ अ०।

आधा [ हा ] कम्मिय-आधाकर्मिक-त्रि० साधूनामेवार्थाय कृतेति भक्तादौ, वृ० १ उ०।

आधा ( हा ) ण–आधान– न० आ-धा-भावे-ल्युट् संस्कारपूर्वकं वह्न्यादेः स्थापने, अग्न्याधाने, गर्भाधाने च । वाच० । स्थाने, " इअ सव्वगुणाहाणं " सर्वगुणाधानमशेषगुणस्थानमिति आव० ४ अ० । स्थापने, कुशयोग्यादीनामिह तन्मूलाधानयुक्तानाम ॥ मूलाधानं मूलस्थापनं बीजन्यासस्तद्युक्तानामिति ॥ षो० १३ विव० । व्यवस्थापने, आख्याने, व्याख्याने च । वाच० ।

अविरइं पडुच बाले, आहिज्जइ विरइं पडुच पंडिए ।
आहिज्जइ विरयाविरइं, पडुच बालपंडिए आहिज्जइ ॥

आधीयते व्यवस्थाप्यते आख्यायते वा तथा विरतिं चाश्रित्य प्रतीत्य पापाद्वीनः पण्डितः परमार्थज्ञो वेत्येवमाधीयते व्याख्यायते ॥ सूत्र० २ श्रु० २ अ० ।

आधा ( हा ) णिय–आधानिक–पुं० आधानं गर्भाधानं प्रयोजनमस्य ठञ् । गर्भाधाननिमित्ते वेदविहिते गर्भपात्रसंस्कारभेदे, ॥ वाच० ॥

आधा ( हा ) य–आधाय– अव्य० –आ-धा-ल्यप्-कृत्वेत्यर्थे, उत्त० ५ अ० । स्थापयित्वेत्यर्थ, आधानं कृत्वेत्यर्थ, भावे-घञ् आधाने, पुं० ॥ वाच० ॥

आधा ( हा ) यग–आधायक– त्रि०–आ-धा-ण्वुल्-आधानकारके, वाच० ॥

आधा(हा)र–आधार–आ-धृ-आधारे-घञ् । १ आश्रये, " अपामिवाधारमनुत्तरङ्गम् " कुमा० । " चराचराणां भूतानां, कुक्षिराधारतां गतः " । कुमा० । " वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः " या० स्मृ० " व्याकरणप्रसिद्धे औपश्लेषिकवैषयिकाभिव्यापकाख्ये अधिकरणकारके, आधारोऽधिकरणम " पा० अधिकरणञ्च परम्परया क्रियाश्रयः तच्च त्रिविधम् औपश्लेषिकवैषयिकाभिव्यापकभेदात् । तत्र औपश्लेषिक एकदेशसम्बन्धः यथा कटे आस्ते । वैषयिकः मोक्षे इच्छास्ति । अभिव्यापकः तिलेषु तैलमस्ति । मुग्धबोधकारस्तु " सामीप्याश्लेषविषयैर्व्याप्त्याऽऽधारश्चतुर्विध इति "सामीप्यसम्बन्धेनाप्याधारतेत्याह । तच्चिन्त्यम " गङ्गायां घोषो वसतीत्यादौ विषयलक्षणयैव गङ्गासमीपतीरस्योपस्थितौ न तस्य विभक्त्यर्थत्वमिति पाणिनीयाः । शस्यसंपादनार्थं जलरोधनार्थे बन्धने. वृक्षसेकार्थं जलधारणार्थे आलवाले च । " आधारबन्धप्रमुखैः प्रयत्नैः " रघु० वाच० ॥ आधारस्य भावः तल् आधारता संबन्धविशेषेण पदार्थविशेषस्याधेयतासम्पादके धर्मविशेषे, तथा च तयोः परस्परनिरूप्यनिरूपकभावः । आधारताया अनतिरिक्तवृत्तिधर्म्म आधारतावच्छेदकः । एवमाधेयताया अनतिरिक्तवृत्तिधर्म्म आधेयतावच्छेदकः यथा संयोगेन घटाधारे भूतले भूतलत्वमाधारतावच्छेदकं भूतलाधेये घटे च घटत्वमाधेयतावच्छेदकम तयोरवच्छेदकत्वात् । ताभ्यामाधारताऽऽधेयता चावच्छिद्यते यथा घटत्वावच्छिन्ना घटनिष्ठाऽऽधेयता तथा भूतलत्वावच्छिन्ना भूतलनिष्ठाऽऽधारता इति नव्यनैयायिकानां रीतिः । आधारत्वात्तदर्थे, न० ॥ वाच० ॥

आधा ( हा ) रसत्ति–आधारशक्ति–स्त्री० आधारस्य शक्तिः सर्वाधारशक्तिरूपायाम्परमेश्वरशक्तौ, मायायाम् , प्रकृतौ च ॥ वाच० ॥

आधि ( हि ) आधि–पुं० आधीयतेऽनिनिवेश्यते प्रतीकाराय मनोऽनेन आ-धा-कि-मानसव्यथाभेदे, वाच० ॥ आधीनामम्नः पीडानामिति भ० १ श० १ उ० ॥ शरीरमानसे पीडाविशेषे च । आधीनां परमौषधम् आधीनां शरीरमानसपीडाविशेषाणां परमौषधं प्रधानौषधं कल्प्यमिति ॥ षो० १५ विव० । ईषत् अधिक्रियते उत्तमर्णोऽत्र आ-ईषदर्थे-धा-अधिकारार्थे-आधारे-कि-आधीयते ऋणशोधनार्थम् आ-धा-कर्मणि-कि-वा । ऋणशोधनार्थे प्रतिभूस्थानीयतया बन्धकत्वेन उत्तमर्णसमीपे अधमर्णेनाधीयमाने उत्तमर्णस्य ईषत् स्वत्वहेतुभूतव्यापारविशिष्टे, वाच० ॥

आहि ( हि ) क्क–आधिक्य–न० अधिकस्य भावः ष्यञ् । अधिकतायाम, अतिशयितायाम, " यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः " ॥ मनु० ॥ युग्मायामपि रात्रौ चेत्, शोणितं प्रचुरं तदा । कन्या च पुंवत् भवति , शुक्राधिक्ये पुमान् भवेत् ' ज्योतिस्तत्वम । प्रातिपदिकमात्रे लिङ्गमात्राद्याधिक्ये सि० कौ० " एवमेतद्गुणाधिक्यं, द्रव्ये द्रव्ये व्यवस्थितम " सुश्रु० ॥ वाच० ॥ आधिक्यं सजातीयपरिणामप्राचुर्य्यमिति द्वा० ।

आधि [ हि ] गरणिय –आधिकरणिक–त्रि० अधिकरणे विचारस्थाने नियुक्तः ठक् । विचारस्थाननियुक्ते प्राड्विवाकादौ वाच० ॥

आधि ( हि ) गरणिया–आधिकरणिकी–स्त्री० अधिक्रियते आत्मा नरकादिषु येन तदधिकरणं तेन निर्वृत्ता आधिकरणिकी क्रियाविशेषे , सा च द्विधा चक्ररथपशुबन्धमन्त्रतन्त्रादिप्रवर्त्तिनी खड्गादिनिर्वर्त्तिनी चेति । ध० ३ अधि० ।

आधिट्ठि–आधृष्टि–स्त्री० आ-धृष्-भावे-क्तिन् । परिभवे, बलात्प्रहे च ॥ वाच० ॥

आधि ( हि ) सु–आधिज्ञ–त्रि० आधिं मनःपीडां जानाति अनुभवति-ज्ञा-क-व्यथानुभावके, व्यथिते, अजयपालः वाच० ॥

आधि ( हि ) त्थेण–आधिस्तेन– पुं० आधेर्गोप्याधेर्भोगात् स्तेन इव । गोप्याधेर्बलात्कारेण भोक्तरि, " न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् । मूल्येन तोषयेदेन-माधिस्तेनोऽन्यथा भवेत् " मनुना तद्भोगे स्तेनत्वस्योक्तत्वात्वम ॥ वाच० ॥

आधि ( हि ) देविय–आधिदैविक–त्रि० अधिदेवं भवः देवान् वातादीन् अधिकृत्य प्रवृत्ते वा ठञ्-अनुशतिकादित्वाद् द्विपदवृद्धिः । देवाधिकारेण प्रवृत्ते शास्त्रे, वातादिनिबन्धने, दुःखे च । दुःखं हि त्रिविधमाध्यात्मिकादिभे-

दात् ॥ वाच० ॥ आधिदैविकं यक्षराक्षसग्रहाद्यावेशहेतुकमिति ॥ स्या० ॥

आधि ( हि ) बंध—आधिबन्ध—पुं० आधिर्बहुप्रजानां कथं पालनं स्यादिति चिन्ता एव बन्धः । बहुप्रजारक्षणचिन्तारूपबन्धे, ॥ वाच० ॥

आधि ( हि ) भोइय—आधिभौतिक—त्रि० भूतानि व्याघ्रसर्पादीन्यधिकृत्य जातम् अधिभूत ठञ् द्विपदवृद्धिः। व्याघ्रसर्पादिजनिते दुःखे, ॥ वाच० ॥ आधिभौतिकं मानुषपशुपक्षिमृगसरीसृपस्थावरनिमित्तमिति ॥ स्या० ॥

आधि ( हि ) रज्ज—आधिराज्य—न० अधिराजस्य भावः कर्म वा ष्यञ् । आधिपत्ये ॥ वाच० ॥

आधि (हि) वेयणिय—आधिवेदनिक—त्रि० अधिवेदनाय विवाहोपरि विवाहाय हितं ठक् तत्र काले दत्तं ठञ् वा अधिवेदनार्थे तत्र काले च स्त्रियै पत्या दीयमाने स्त्रीधनभेदे ॥

आधी ( ही ) गड—आधीकृत —त्रि० आधि–च्वि–कृ–क्त–दत्तबंधके द्रव्यादौ, वाच० ॥

आधी ( ही ) गरण—आधीकरण—न० अनाधिराधिः क्रियते आधि+च्वि+कृ+ल्युट् बन्धकीकरणे वाच० ॥

आधु ( हु ) णिय—आधुनिक—त्रि० अधुना भवः ठञ् । साम्प्रतंभवे-अर्वाचीने,- । अप्राचीने च-स्त्रियां ङीप्- ॥ ॥ वाच० ॥ अष्टाशीतिग्रहाणामन्यतमे स्वनामख्याते ग्रहे जं० ॥ सूर्य० प्रा. २० ॥

आधु [ हु ] य—आधुत—त्रि०—आ—धु—क्त- । चालिते, ॥ वाच० ॥

आधे [ हे ] य—आधेय–त्रि० आधा—कर्मणि यत् । १ उत्पाद्ये । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" व्या० का० । यस्य सतोगुणान्तरमुत्पाद्यम् तादृशे उत्पाद्यगुणान्तरे विद्यमाने एव यत्र घटादिपदार्थे पाकादिना रक्ततागुणान्तरमाधीयते तादृशे २ घटादौ,। आधानविधिना स्थापनीये ३ वह्नौ, पुं० ॥ ४ ॥ अधिकरणेऽभिनिवेशनीये "अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम्" चन्द्रा० वाच० ॥

आधाराधेयौ द्रव्यक्षेत्रकालभावभेदेन विशेषावश्यके वर्णितौ यथा—

आहारो आहेयं च होइ दव्वं तहेव भावाय ।
खेत्तं पुण आहारो कालो नियमाउ आहेओ ॥

द्रव्यमाधारो भवति पर्यायाणां आधेयं च भवति क्षेत्रं तथा भावश्चाधारो भवति कालस्य कालवर्णादीनां समयादिस्थितित्वादिति आधेयश्च भवति। द्रव्ये क्षेत्रमाकाशं पुनः सर्वेषामपि धर्म्माधर्म्मपुद्गलजीवकालद्रव्याणामगुरुलघुपर्यायाणां चाधार एव न त्वाधेयं सर्वस्यापि वस्तुनस्तत्रैवावगाढत्वात्तस्य च स्वप्रतिष्ठितत्वेनान्यत्राधेयत्वायोगादिति (कालो नियमाउ आहे उत्ति) कालो नियमादाधेय एव भवति न त्वाधारस्तस्य द्रव्यपर्यायेष्ववस्थितत्वात्तत्र चान्यस्याध्रितत्वादिति ॥ विशे० द्रव्य द्वा. ॥ स्थापनीये द्रव्ये च भावे यत् आधाने न० ॥ वाच० ॥

आधे (हे) वच्च—आधिपत्य—न० अधिपतेर्भावः कर्म्म वा पत्यन्तत्वात् यक्-१ स्वामित्वे,, "अवाप्यभूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम्" ॥ गीता० ॥ वाच० ॥ यक्षाणामाधिपत्यश्च राजराजत्वमेव च" ॥ भा० ॥ व० ॥ राजकार्य्ये प्रजापालनादौ ॥ दुर्य्योधनं तत्त्वहितं वै निगृह्य पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये । अजातशत्रुर्हि विमुक्तराज्यो धर्मेणेमां पृथिवीं शास्तु राजन्,, ॥ भा० ॥ व० ॥ प० ॥ ६ ॥ अ० ॥ वाच० ॥ अधिपतेः कर्म्माधिपत्यम् रक्षायाम् ॥ जी० प्र.३॥ ॥ आ० म० प्र० ॥ प्रज्ञा० भ०श.३उ१ ॥ कल्प० । आ० म. १ विपा० अ. २ जं० ॥

आधो ( हो ) रण—आधोरण—पुं० आ धारगतिचातुर्य्ये ल्यु हस्तिगतिचातुर्य्यज्ञे हस्तिपके, स्वल्पबलेनापि महाबलस्य हस्तिनः संकेतादिनैव चालनात्तस्य गतिचातुर्य्यवत्त्वात्तथात्वम् ॥ वाच० ॥

आधोधि ( होहि ) य—आधोवधिक—पुं० नियतक्षेत्रविषयावधिज्ञानिनि ॥ भ० श.७उ.७॥ ( नमिस्स णं अरहओ एगूणचत्तालीसं आहोहियसया होत्था)सम०स.३६॥आहोहियत्ति नियतक्षेत्रविषयावधिज्ञानिनस्तेषां शतानीति ॥ सम० ॥ प्रतिनियतक्षेत्रावधिज्ञाने च न ( केवलीणं भंते आधोऽधियं जाणपासइ)॥भ०॥ आहोहियंति प्रतिनियतक्षेत्रावधिज्ञानामिति भ० श०१४ उ०७

आप [ व ] आष—पुं० आप्यते-आप-कर्म्मणि-घञ्-अष्टसु वसुषु चतुर्थे वसौ, अपां समूहः अण्-जलसमूहे न० आकाशे,-सिद्धा० तस्य सर्वमूर्तसंयोगित्वात्तथात्वम् वाच० ॥ व्याप्तौ ॥ भ० श. १ उ. ६ ॥

आप [ व ] ई—आपद्—स्त्री० आ-पद्-सम्पदा क्विप् विपत्तौ( दुहओगइवालस्स आवई वहमूलिया उत्त.अ.आपदां विपद )इति सा चतुर्विधद्रव्यक्षेत्रकालभावभेदात्-द्रव्यापत्कल्पनीयाशनादिद्रव्यदुर्लभता १ क्षेत्रापत्प्रत्यासन्नग्रामनगरादिरहितमल्पं च क्षेत्रं २ कालापद्दुष्कालादि ३ भावापद्ग्लानत्वादि ४जी०प्र१॥ द्रव्यापत् प्रासुकादिद्रव्यालाभः क्षेत्रापत्कान्तारक्षेत्रपतितत्वं, कालापद्दुर्भिक्षकालप्राप्ति,भावापत् ग्लानत्वमिति ॥ भ० श.२५उ.७॥ ( आउरे आवईसु य) ॥ स्था० ठा०१०॥तथा आपत्सु द्रव्यादिभेदेन चतुर्विधासु तत्र द्रव्यतः प्रासुकद्रव्यं दुर्लभं क्षेत्रतोऽध्वप्रतिपन्नता कालतो दुर्भिक्षं भावतोग्लानत्वमिति उक्तंच ( दव्वाइ अलंभे पुण चउव्विहा आवयाहोइति )॥ स्था०ठा०१०॥ व्य० ॥ नि०चू० ॥ आ०चू० ( आवईसु दढधम्मया) सम० स प्रशस्तयोगसंग्रहाय साधुनाऽऽपत्सु द्रव्यादिभेदासु दृढधर्मता कार्य्या सुतरां तासु दृढधर्म्मिणः भाव्यमित्यर्थ इति॥सम.स.स३२ उदाहरणादियोगः

उज्जेणिइ धणवसू अणगारे धम्मघोसचम्पाए ।
अडवीइ सत्थविब्भमवोसिरणं सिज्झणा चेव ॥ ८० ॥
महुराइ जउणराया जउणावंके अदंडमणगारे ।
वहणंच कालकरणं सक्कागमणं च पव्वज्जा ॥ ८१ ॥

आसां व्याख्या कथानकादवसेया तच्चेदं उज्जेणी नयरी तत्थ धणवसू वाणियओ सो चंपज्जाइउकामो उग्घोसणं करेइ । जहा णाए तं अणुणवेइ धम्मघोसो नाम अणगारो तेसु दूरं अडविमग्गइ गएसु पुलन्देहिं विलोलिओ सत्थो इओ तओ य नट्ठो सो अणगारो अ

गणेण लोएण समं अडविं पविट्ठो तेसु मूलाणि खायंति पाणियञ्च पिवति सो निमंतिज्जइ सो नेच्छति अघरे जाए एगत्थ सिलायले भत्त पच्चक्खायं अदीणस्स अहिया-समाणस्स केवलनाणं समुप्पन्नं सिद्धो दढधम्मयाए योगा संगहिया एसा दव्वावती खेत्तावती खेत्ताणं अ-सितीए कालावती ओमोदरियादि भावावतीए उदाहरण गाहा महुराए जउणराया इत्यादि ॥१८१॥ व्याख्या कथान-कादवसेया तच्चेदं महुराए नगरीए जउणो राया जउ-णावङ्कं उज्जाणं अवरेण तत्थ जओण एको प्परो दिन्नो तत्थ दण्डो अणगारो आयावेइ सो रायणासि तेण दिट्ठो तेण रोसेण दिट्ठो असिणा सीसं छिन्नं अन्ने भणन्ति फलेण आहवो सव्वेहिं वि मणुस्सेहिं पत्थर रासी कओ कोवोदयं पडवेयणा उदयं भावयंतस्स आवती कालगतो सिद्धो देवागमणं महिमाकरणं सक्कागमणं पालएणं वि-माणेण तस्स विय रन्नो अधितीजाया वज्जेण भेसि-ओ सक्केण जइ पव्वयसि तो मुच्चसि पव्वइओ थेराण अन्तिए अभिग्गहं गेण्हइ जइ भिक्खागओ संभरामि तो ण जेमेमि जइ दरजिमिओ तोसे संगं विगिंचामि एवं किर तेणं भगवया एगमवि दिवसं नाहारियं तस्स द-व्वावतीदण्डस्स भावावतीसु दढधम्मतत्तिगयं ॥ आव० ॥ हलन्तत्वाट्टाप् आपदाप्यत्र ॥ वाच० ॥

आप ( व ) ईधम्म—आपद्धर्म—पुं० आपदि कर्तव्यो धर्म्मः । १ आपद्यनुष्ठेये धर्म्मे, आपद्धर्म्ममधिकृत्य कृतो ग्रन्थः अण भारतान्तर्गत शान्तिपर्वमध्यगते व्यासकृते २ अवा-न्तरपर्वभेदे च २ तच्च भा० शा० प० १३१ अध्यायावधि १७३ अध्यायपर्य्यन्तम् ॥ वाच० ॥

आप ( व ) गा—आपगा—स्त्री० आपेन जलसमूहेन गच्छ-ति वहति–ड–नद्याम् "बहुसमाणि तित्थाणि आवगाणि वि-यागरे" बहुसमानि तीर्थानि आपगानां नदीनां व्यागृणी-यात् साध्वादिविषय इत्यर्थ इति ॥ दश० अ०७ ॥

आप [ व ] गेज्ज—आपगेय—पुं० आपगाया गङ्गाया अपत्य-म ढक् भीष्मे ॥ वाच० ॥

आप ( व ) डण—आपतन—न० आ–पत भावे ल्युट् आगमने प्राप्तौ, ज्ञाने,–( कीचत्प्राकरणिकादर्थादप्राकरणिकस्यापत-नम् ) साहि० दैववशात् पतने च ॥ वाच० ॥ प्रस्फोटने ध० अ० ३ प्रस्खलने च ( आवडणं विसमखाणुकंटेसु ) विषमे वा स्थाणौ वा आपतनं प्रस्खलनं भवतीति ॥ वृह० ॥ आपतनं नाम यद् भूमिसम्प्राप्तस्य वा जानुकूर्पराभ्यां प्रस्खल-नमिति ॥ वृह० ॥

आप ( व ) डव—आपटव—न० न सन्ति पटवोऽस्य तस्य भावः अण पटुशून्यत्वं न पटुरपटुरिति तत्पुरुषात्तु ष्यनि उत्तर-पदस्यैव वृद्धिः अपाटवम् । ( अपाटवाद्यशौचाद्यैर्यदि विघ्नं प्रजायते ) स्मृतिः ॥ वाच० ॥

आप ( व ) डिग–आपत्तिक–पुं० आपतति शीघ्रम् आ–पत इ-कन् श्येने दैवायत्ते त्रि० उज्ज्वलदत्तः ॥ वाच० ॥

आप ( व ) डिय—आपतित—त्रि० आ–पत–क–हठादा-गते–दैवायत्तपतने च ॥ वाच० ॥ आस्फालिते च ( दोवि आवडिया कुड्डे ) आपतितौ भित्तौ आस्फालितौ इति ॥ उत्त० अ० २५ ॥

आप ( व ) ण–आपण–पुं० आपण्यन्ते विक्रीणन्त्यत्र आपणः आधारे घञ् हट्टे ॥ औप० भ० श० ५ उ० ७ ॥ आ० न छि० कल्प० प्रश्न० द्वा० ३ विशे० ज्ञा० अ० १ स च नानागृहा-ध्यासितास्त्रिकोणो भूभागविशेष इति ॥ अनु० उ० आ० वीथ्यां न० ( कोलचचुरणइ आवणे ) ॥ दश० ॥ अ० ५ पण्यस्थाने ॥ प्रश्न० द्वा० ३ ॥ क्रयविक्रयद्रव्यशालायां च वाच० ॥ गृहाणि शरणानि लयनानि आपणा इति ॥ जी० प्र० ३ वाच० "शकटापणवेशाश्च वणिजो वन्दिनस्तथा ॥ नराश्च मृगयाशीलाः शतशोऽथसहस्रशः" ॥ भा० व०प० अ २३८ ॥ "भक्ष्यमाल्यापणानाञ्च ददृशुः श्रियमुत्तमाम्" ॥ भा० स० प० ४अ० ( आपणः पण्यवीथिका ) ( आपणो विक्रयस्थानम् ) तेनैवोक्तम् । "पूर्णापणा विपणिनो विपणी विभेजुः माघ० ॥ वाच० ॥

आप ( व ) णगिह—आपणगृह—न० आपणमध्यवर्त्तिगृहे तथा च वृहत्कल्पे । ( जं आवण मज्झमी तं च गिहं आवणा य दुविहं ॥ वि त्तं होइ आवणगिहं रत्थामुहरत्थपासम्मि ) यद् गृहमापणमध्ये समंतादापणैः परिक्षिप्तं तदापणगृहं यद्वा मध्ये गृहं ( दुहउ वित्ति ) द्वाभ्यामपि च पार्श्वाभ्यां । यस्यापणे भवंति ॥ वृह० क० ॥

आप ( व ) णवीहि—आपणवीथि—स्त्री० रथ्याविशेषे ॥ आ० म० प्र० द्वा०३ ॥ राज० जी०प्र० ३ ॥ हट्टमार्गे दशा० ॥ जी० प्र० ३ ॥ ज्ञा० अ०१ ( संमट्ठरत्थं तरावणवीहियं ) ॥ कल्प० ॥ आपणवीथयश्च हट्टमार्गा इति ॥ कल्प ॥ टी० ॥

आप ( व ) णिग—आपणिक—त्रि० आपणादायस्थानाद-गतः ठक् । १ हट्टस्थानादागते राजकरादौ । आपणस्यध-र्म्यम् ठक् २ ॥ हट्टस्य वणिग् धर्म्ये आपणस्यावक्रयः रा-ज्यग्राह्यः ठक् ३। हट्टस्य राजग्राह्ये द्रव्ये ( तोला ) आ पण इ कन् ४॥ वणिक्जने उज्ज्वलदत्तः ॥

आपनिक–त्रि०—आ—पन—स्तुतौ कर्मणि–इकन् । १ इन्द्र-नीले, ॥ वाच० ॥

आप ( व ) णिज्ज--आपनेय--त्रि० आ अप् नी कर्मणि यत् समन्तादपनेये दूरीकार्य्ये, ॥ वाच० ॥

आप ( व ) ण्ण—आपन्न—त्रि० आ–पद क्त आपद्ग्रस्ते आप-न्नः संसृतिं घोरां यन्नाम विवशो गृणन् । ततः सद्यो विमुच्ये त यद्बिभेति स्वयं भयम् ॥ भाग० ॥ आपन्नाभयसत्रेषु दी-क्षिताः खलु पौरवाः" ॥ शकु० ॥ आत्मापराधादापन्नस्तत् किं भीमं जिघांससि" भा० स्त्री० प० १३ आ० ॥ वाच० ॥ आश्रिते ( इमं दरिसणमावण्णा सव्वदुक्खा विमुच्चइ ) ॥ श्रु०१अ०१ सूत्र० ॥ अनु० ॥ उत्पन्ने ॥ ज्ञा० अ०५ ॥ प्राप्ते ॥ आव० ॥ आवण्णो प्राप्त उच्यत इति ॥ नि० चू० ॥ आवण्णादीहमद्धाणं संसारं मिस्सगतए ) आपन्नाः प्राप्ता इति ॥ उत्त० अ०१ ॥ व्याप्ते नि० ॥

आप [ व ] ण्णपरिहार—आपन्नपरिहार—पुं०भावपरिहारभेदे ( मासादीआवण्णे तेण उपगयं न अन्नेहिं ) व्य० ॥ यत् मा-सिकं यावत् षाण्मासिकं वा प्रायश्चितमापन्नं तत आ-पन्नं अपरिभोगेऽपि वर्त्तते परिहियते इति परिहारः क-

र्म्मणि घञ् आपन्नमेव परिहारः । आपन्नपरिहार इति व्युत्पत्तेः तथाचाह ( मासादी आवन्ने इति ) मासादिकं यत् प्रायश्चित्तस्थानमापन्नं तत् आपन्ने परिहार इति भावः । अथ वा परिहरणं परिहार इति भावे घञ् आपन्नेन प्रायश्चित्तस्थानेन परिहारो वर्जनं साधोरिति गम्यते । आपन्नपरिहारः । तथा हि प्रायश्चित्ता अविशुद्धत्वात् विशुद्धचरणैः साधुभिर्यावत्प्रायश्चित्तप्रतिपत्त्या न शुद्धो भवति तावत् परिह्रियते । इह तेन आपन्नपरिहारेण प्रकृतिमधिकारो न शेषैः परिहारैः ॥ व्य० निक्षेपद्धा. ॥

आप ( व ) ण्णसत्ता—आपन्नसत्वा—स्त्री० आपन्न उत्पन्नः सत्वो जीवो गर्भे यस्याः सा ॥ ज्ञा०अ.२॥ गर्भिण्यां स्त्रियाम् सममापन्नसत्वास्ता रेजुरापाण्डुरत्विषः रघु० ॥ वाच० ॥

आप(व)त्त आपात्य—त्रि आपतति स्वयमाक्रामति गच्छति ॥ "भव्यगेयेत्यादि" ॥ पा० नि० ॥ कर्त्तरि ण्यत् । १ । स्वयमाक्रमितं भावे ण्यत् । २ । कर्त्तव्यायतने, ३ कर्मणि ण्यत् आपात्ये देशादौ, त्रि० आ-पत्-णिच् ल्यप् । ४ । समन्तात् पातयित्वेत्यर्थे अव्य० ॥ वाच० ॥

आप [ व ] त्ति—आपत्ति—स्त्री० आ-पद्-क्तिन् आपदि आपद्य रोगाद्यभिभूतावस्था सम्यग् वर्तनोपायानुपलम्भश्च ॥ वाच० ॥ आपादने ॥ व्य० ॥ प्राप्तौ, संवेगात् समरसापत्या २२ ) ॥ षो० वि० ६ ॥ आपत्तिश्च प्राप्तिरिति ॥ टी० ॥ तथाच ॥ जीतकल्पे ॥

जं जं न भणियमिह यं तस्सावत्ती इदाणं ।

सेखवं भिन्याइयायगुरुं छम्मासं ताय जीएणं ॥६०॥जीतकल्पे इह जीतव्यवहारेऽपराधमुद्दिश्य यद्यत्प्रायश्चित्तेन भणितं तस्याऽन्यापत्तिविशेषेण दानं संक्षेपं वक्ष्ये आपत्तिश्चासुकाभिचारेऽमुकस्य तपसः प्राप्तिरिति सा च निशीथकल्पव्यवहारादिषु विस्तरेणाभिहिता ॥ जीत० टी० ॥ व्याप्तौ, उद्भूतौ, विशे० अनिष्टप्रसङ्गे च । स च व्याप्यस्याहार्य्यारोपात् व्यापकस्याहार्य्यारोपः यदि निर्वह्निः स्यान्निर्धूमः स्यादित्येवं रूपः ॥ वाच० ॥

आप (व) त्तिसुत्त—आपत्तिसूत्र—न० । शिष्यगतप्रतिसेवनाद्वारेणापन्नप्रायश्चित्ताभिधायिनि सूत्रे—आवत्तिसुतानाम शिष्यगतप्रतिसेवनाद्वारेणापन्नप्रायश्चित्ताभिधायिनि,। नि० चू० ॥ प्रतिसेवनायां सत्यां प्रायश्चित्तापत्तिः स्यात् इत्यापत्तिसूत्राण्युच्यंते ( जे भिक्खू बहुसो मासियं पडिसेवित्ता आलोइज्जा) बहुसो व बहुसो व थहुसो पंचपडिसेविता आलोइज्ज इति प्रत्येकबहुसूत्रं जेमासिया व दो मासियं मासियं ते मासियं च इत्यादिं सकलसंयोगसूत्रं (जे बहुसो मासियं बहु दो मावहुसो ते मासियमित्यादि ) बहुसंयोगसूत्रं एतत्सूत्रचतुष्टयमेतावता ग्रंथेन सूत्रोपात्तं व्याख्यानं इमे अत्थं उत्ति अर्थो व्याख्यानं भाष्यादिकं तस्मात् पद्बोद्धव्यानि तं जहेत्यादि । जे भिक्खूमासाइरेगदोमासियमित्यादि । सातिरेकसंयोगसूत्रं । जे बहु सोसातिरेगमासियबहुसोसाइरेगदोमासियं चेत्यादि । बहुससातिरेकसंयोगसूत्रं मासियं सातिरेकमासियं । जेदुमासियं सातिरेकदुमासियं चेत्यादि सकलस्य सातिरेकस्य च संयोगसूत्रं । जे बहुसो मासियं बहुसो सातिरेकमासियं च । जे बहुसो दुमासियं बहुसो सातिरेकदुमासिय चेत्यादि । बहुससातिरेगस्सय संजोगसुत्तं इत्येवमापत्तिसूत्राणि दशकल्पितानि ॥ नि० चू० ॥

आप (व) दकाल—आपद्काल—पुं० आपदा कृतोऽकालः आपदा कृते दुष्टे काले, "पीडा चापद्कालश्च प्रतिज्ञानंच पाण्डव, ॥ भा० शा० प० ५६ अ० ॥ वाच० ॥

आप (व) देव—आपदेव—पुं०आपस्य जलसमूहस्य देवः । वरुणे, ॥ वाच० ॥

आपवईण—आप्रपदीन—त्रि० आप्रपदं पादाग्रपर्यंतं व्याप्नोति स्वपादाग्रान्तं लम्बमाने वस्त्रादौ, ॥ वाच० ॥

आपवण—आप्रवण—त्रि० ईषत् प्रवणः । ईषन्नम्रे आ-प्रु-ल्युट् ईषद्द्रवणे, ॥ वाच० ॥

आपवय—आप्रपद—अव्य० प्रपदं पदाग्रं तत्पर्यन्तम् अव्ययी० पदाग्रपर्यन्ते, ॥

आप (व) मिच्चग—आपमित्यक—त्रि० अपमित्य परिवर्त्य निवृत्तम् कक् । विनिमयं दत्वा क्रीते, ॥ वाच० ॥

आप (व) यित्ता—आपयितृ—त्रि० आप्-णिच्-तृच् प्रापयितरि-स्त्रियां ङीप् ॥ वाच० ॥

आप [व] रह्णिय—आपराण्हिक—त्रि० अपराह्णे भवः ठक् । अपराह्णभवे-तद्व्यापके च स्त्रियां ङीप्, ॥ वाच० ॥

आप (पि) लव—आप्लव—पुं० आ-प्लु-घञ्-भावे । पक्षे अप् स्नाने, जलानां सर्व्वतः समुच्छलने, ल्युट्-आप्लवनं तत्रैव न० ॥ वाच० ॥ लात्-इति प्राकृतसूत्रेण लकारावर्णे इकारः ॥ प्रा० ॥

आप(य)सरीर अणवकंखवत्तिया—आत्मशरीरानवकांक्षाप्रत्यया स्त्री० अनवकांक्षाप्रत्ययक्रियाभेदे, तत्रात्मशरीरानवकांक्षा प्रत्यया सा स्वशरीरक्षतिकारि कर्म्माणि कुर्वतः क्रिया भवति ॥ स्था०ठा०२ ॥

आपा(व) ग (य) आपाक—पुं० समन्तात्परिवेष्ट्य पच्यतेऽत्र आ-पच् आधारे घञ् कुम्भकारस्य मृण्मयपात्रपचनस्थाने, वाच० ॥ तथा च स्थानाङ्गे ( कुंभकारावाए इक कवेल्लुयावाए इ वा इट्टावाए इ वा) ॥ स्था० ठा.८॥ कुंभकारस्यापाको भाण्डपचनस्थानम् कवेल्लुकानि प्रतीतानि तेषामापाकः प्रतीत एव ॥ स्था० ठा०८ भावे घञ् । ईषत्पाके सम्यक् पाके-पुटपाके च, ॥ वाच० ॥

आपा [वा] इ( न् ) आपायिन्—त्रि० आपिबति,-आ-पा-णिनि-सुरापानकर्त्तरि स्त्रियांङीप् ॥ वाच० ॥ आवाड स्वनामख्याते चिलातजातौ, "उत्तरड्ढभरहे वासे बहवे आवाडा णाम चिलाता परिवसंतित्ति" ॥ आ० चू० ॥

आपा (वा) ण- आपान—न० आपीयते सम्भूय सुरा पीयतेऽत्र आधारे ल्युट् । सुरापानाय सम्भूयोपवेशनस्थाने, । पानार्थसभायाम् । "आपाने पानकलिता दैवेनाभिप्रणोदिताः" ददर्श यदुवीराणामापाने वैशसं महत् इति च भा०आ० प० २ अ० भावे-ल्युट् । सम्भूय सुरापाने ॥ ताम्बूलीनां दलैस्तत्र रचितापानभूमयः" रघु० ॥

आपा (वा) णग—आपानक—न० आपान स्वार्थे कन् पानगोष्ठ्याः

म, सुरापाने च । आपानकमुत्सवः काद० ॥ वाच० ॥

आपा [वा] य–आपात—पुं० हठात् अविवेकात् कारणान्तरसाचिव्याभावेऽपि आगत्य पातः । २ अतर्कितागमने, । "गरुडापातविश्लिष्टमेघनादास्त्रवन्धनः" रघुः "तदापातभयात् पथि" कुमा० आपतत्यत्राधारे घञ् ३ उपक्रमे, "आपातरम्या विषयाः पर्य्यन्तपरितापिनः" किरा० "आपातरम्यास्तत्कालरमणीयाः" मल्लि०। ४ उपक्रमे च "मध्वापात इति मनुः ॥ मध्वापातो मधुरोपक्रमः" कुल्लू ॥ वाच० ॥ आपतनमापातः प्रथममीलके, ॥ स्था०ठा.३॥ ( तत्प्रथमतया संसर्गे )॥

तस्स भोयणस्स आवाए भद्दए भवइ तओ पच्छापरिणममाणे २ दुरूवत्ताए दुग्गंधत्ताए जहा महस्सवए जाव भुज्जो २ परिणमइ भ० सू० श० ७ उ० १० ॥

आपातस्तत्प्रथमतया संसर्ग इति॥भ०टी०श.७उ.१० ॥ आभिमुख्येनसमवाये (आवाए सव्वदव्वाणं ) ॥विशे०॥ सर्वेषामपि जीवादिद्रव्याणामापाते आभिमुख्येन समवाये निष्पद्यत इति ॥ विशे० ॥ अभ्यागमे, (अणावायमसंलोयं )न आपातोऽभ्यागमः स्वपक्षपरपक्षयोर्यस्मिन् स्थण्डिले तदनापातः ( अस्य बहुभेदाः स्थण्डिलशब्दे ) ॥ ओघ० ॥ अणावायमसंलोए चिट्ठेज्जा ॥ आचा० ॥ अनापाते विजने असंलोके च सन्तिष्ठेत ॥ आचा० अ० १ उद्दे० ५ ॥ प्राप्तौ आपातो विषयप्राप्तिः॥ आ० चू० ॥

आपाद्-पुं० आ-पद-घञ् फललाभे आगतौ च पादपर्य्यन्तम् अव्य० पादपर्य्यन्ते अव्य० वाच० ॥

आपा [ वा ] यओ–आपाततस्–अव्य०आपात तसिल् कारणां विनेत्यर्थे—अकस्मादित्यर्थे—अनवधार्य्येत्यर्थे च ( एतच्चापाततः ) जगदी० आपाततो यदर्थस्येति सा० द० ॥ वाच० ॥

आपा [ वा ] यण–आपादन–न० आ पद् णिच् ल्युट् आपत्तिविषयीकरणे, आपादकज्ञानेन आपद्यनिश्चये, पद–भावे णिच् ल्युट् ॥ २ ॥ सम्पादने, " द्रव्यस्य संख्यान्तरापादने" सि० कौ० ॥ वाच० ॥

आपा [ वा ] यभद्दय–आपातभद्रक–पुं० आपातनमापातः प्रथममीलकस्तत्र भद्रको भद्रकारी दर्शनालापादिना सुखकरत्वादापातभद्रकः । प्रथममीलके दर्शनालापादिना सुखकरे,॥ स्था०॥ टी०ठा.४ ॥ ( आवायभद्दएणामेगेणो संवासभद्दए ) स्था० ठा.४ ॥

आपा [ वा ] यलिया–आपातलिका–स्त्री० मात्राभेदे "कथितेयं भात गुरुकायथपूर्वमन्यत" तल्लक्षणां अन्यत् वैतालीयगतम ॥ वाच० ॥

आपायावच्च–आप्राजापत्य–न० अहोरात्रभवे एकोनविंशतितमे स्वनामख्याते मुहूर्त्ते ॥ कल्प०

आपा [ वा ] लि–आपालि–पुं०आ-पा-किप् तदर्थमलति अल् इन् केशकीटे स हि शीर्षस्थरुधिरापानप्रसक्तः वाच० ॥

आपा [पि ] ला विय–आप्लावित–त्रि० आ-प्लु-णिच्-क्त । सर्वतः प्रवाहेर्क्षिते ॥ वाच० ॥

आपिं [ विं ] जर–आपिञ्जर–न० ईषत् पिञ्जर-प्रा० स० स्वर्णे राजनि० । ईषत्पिञ्जरवर्णे, पुं० ! तद्वति, त्रि० आपिञ्जरावद्धरजःकणत्वात् ॥ रघु० ॥ वाच० ॥

आपि [ वि ] सलि–आपिशलि–पुं आपिशलस्य मुनेरपत्यम् इञ् आदिशाब्दिके मुनिभेदे, । "इन्द्रश्चन्द्रःकाशकृत्स्नपिशली शाकटायनः । पाणिन्यमरजैनेन्द्रः जयन्त्येते हि शाब्दिकाः" कविक० "वाशुप्यापिशलेः पाणिनिनोक्तेस्ततोऽप्यस्यादित्वम् स्त्रियां क्रोड्या० ष्यञ् आपिशल्या तस्य स्त्र्यपत्ये स्त्री । आपिशिलिना प्रोक्तम् अण् आपिशलम् तदीये शास्त्रे न० ॥ वाच० ॥

आपीडा–आपीडा–स्त्री० आ-पीड-अ सम्यक् पीडने, तत्र तूर्णं गलापीडं कुर्य्याचाप्यवधूननम् ॥ सुष्ठु गलस्यापीडा मर्दनं यत्रेति तदर्थः ॥ वाच० ॥

आपीडिय—आपीडित–त्रि०—आ—पीड—क्त—निष्पीडित, निर्मृष्टे, ॥ वाच० ॥

आपीण—आपीन–न० आ-प्याय-क्त-पीभावः तस्य नत्वम् नवादेः ऊधसि, आपीनभारोद्वहनप्रयत्नात् रघुः कूपे पुं० आपीनमूधः आपीनोऽन्धुः अन्योपसर्गपूर्वकत्वे तु संप्यान इत्येव—आङ्—पूर्वकस्यापि अन्धूधसोरेवार्थयोः पीभावो नान्यत्र ॥ वाच० ॥

आपीय–आपीत–न० ईषत्पीतम्—प्रा० त० माक्षिके धातौ ईषत्पीतवर्णे, पुं०। तद्वति, त्रि० ईषत्पानं कृतं यस्य तादृशे जलादौ, त्रि० ॥ वाच० ॥

आपुच्छणा–आप्रच्छना–स्त्री० आपृच्छायाः करणमाप्रच्छना ॥ पंचा० ॥ प्रश्नकरणे ॥ पंचा०॥भ०श.२५उ.७॥ ( आपुच्छणा उवाइय दोहला ) आपुच्छणत्ति भर्त्तुरापृच्छनं इच्छामिणं तुब्भेहिं अब्भणुन्नाया इत्यादिका॥ विपा० अ.८॥ आ मर्य्यादया तथा विधविनयलक्षणया अभिविधिना वा सर्वप्रयोजनाभिव्याप्तिलक्षणेन प्रच्छनं गुरोः प्रश्नकरणमाप्रच्छना ॥ पंचा० ॥ सामाचारीभेदे, सा च कर्तुमभीष्टे, कार्ये प्रवर्तमानेन गुरोः कार्य्या, भगवन्नहमिदं करोमीति ॥प्रव०॥ आ०चू० ॥जीत० ग० अधि०२अनु० ॥ अयं भावः । यत्कार्यं साक्षादाप्रष्टुं शक्यते विशेषप्रयोजनं च तत्र साक्षादापृच्छा यत्तु मुहुः २ सम्भवितया प्रष्टुमशक्यं तत्रापि बहुवेलसंदेशनेनापृच्छाऽऽवश्यकीति ।धर्म०अधि.३ (आपुच्छणा य तइयाउत्त ) तृतीया आपृच्छना (आपुच्छणा सयंकरणे) स्वयं आत्मना कार्याणां करणे गुरोः आपृच्छना कर्त्तव्या, न च गुरौ सति स्वबुद्ध्यैव गुरुं अनापृच्छ्य कार्यं कर्तव्यमिति भावः । उत्त० अ० २६ ॥ आङिति सकलकृत्याभिव्याप्त्या पृच्छना इदमहं कुर्यान्नवेत्येवंरूपा तां स्वयमित्यात्मनः करणं कस्यचिद्विवक्षितकार्यस्य निवर्तनं स्वयं करणं तस्मिन् ॥उत्तर अ०२६ उच्छ्वासनिःश्वासौ विहाय सर्वविषयमपि प्रथमतः प्रच्छनमापृच्छेत्युच्यते सर्वकार्येष्वपि स्वसंबंधिषु गुरवः प्रष्टव्या अतः । ते तथा च निर्युक्तिकृता सामान्येनैवाभिहितम् ( आपुच्छणा उ कज्जेति ) उत्त० अ०२६ ॥ आ० म० द्वि० ॥

तथा च पंचाशके—

आउच्छणा उ कज्जेगुरुणो गुरुसम्मयस्स वा णियमा ।

एवं खु तया सय जायति सति णिज्जराहेउ ॥ २६ ॥

व्याख्या । आपृच्छायाः करणं आपृच्छना तुशब्दः पुनरर्थः स्वत आपृच्छना पुनः कार्ये ज्ञानादिसाधने प्रयोजने सति कार्येति शेषः कस्येत्याह गुरोरत्नाधिकस्य तत्संमतस्य वा गुरुबहुमतस्य वा स्थविरादेर्वाशब्दो विकल्पार्थो नियमादवश्यंभावेन अथ कस्मादेषा विधेयेत्याह एवं खु एवमेव गुर्वाद्यापृच्छापूर्वकमित्यर्थः ॥ तत्कार्य श्रेयोऽतिशयेन प्रशस्यं जायते भवति सकृत्सदा निर्जराहेतुकर्म्मक्षयकारण मिति कृत्वेति गाथार्थः २६ पंचा० ॥

अथ कथमापृच्छाविषयभूतं कार्य श्रेयः स्यादित्यत आह--

सो विहिना या तस्साहणम्मि तज्जाणा सुणायंति ।

सन्नाणापडिवत्ती सुहभावो मंगलं तत्थ ॥ २७ ॥

व्याख्या । (सोत्ति) य आपृच्छ्यते स गुरुः गुर्वनुमतो वा विधिज्ञाता चिकीर्षितकार्यस्य वस्त्रधावनादेर्विधानस्य वेदिता भवति गीतार्थत्वात्ततश्च तत्साधने अहमिदं कार्यं करोमीत्येवंविधिज्ञातृगुरुनिवेदने अथ वा विधिप्रतिपादने सति स हि पृच्छ्यमानो विधिज्ञत्वाच्चिकीर्षितकार्यविधिं साधयति यथा "अच्छोडपिट्टणासु य न धुवे। धाए एयावणं न करे" इत्यादि ( तज्जाणत्ति ) विधिज्ञानं पृच्छकस्य भवति॥ ततश्च ( सुनायंति ) अहो गुरुणा जिनेन वा सुष्ठु ज्ञातं सकलसत्त्वानुपघातकत्वेन मुमुक्षोश्चोपग्राहकत्वेन निपुणमिदं दृष्टं नैवं दर्शनांतरीयैरिति एवं विधात् स्वज्ञानात् स्वगतसद्बोधात् सकाशात्प्रतिपत्तिर्गुरुरेव जिन एवाप्त इत्येवं भूता रुचिर्भवति सा च शुभभावः प्रशास्ताध्यवसायो वर्त्तते स च मंगलं विघ्नविघातकं वस्तु तत्र कार्ये प्रवर्तमानस्येतिशेषः अथ वा स गुरुर्विधिज्ञातोपायज्ञस्ततत्साधना चिकीर्षितकार्यनिष्पादने ततश्च तज्ज्ञानात् गुरोः सकाशात्-यत्ज्ञानं तस्मात् सुज्ञानं कार्य भवति सुज्ञानाच्च प्रतिपत्तिः सम्यक् क्रियाभ्युपगमः सा च शुभो भावः शेषं तथैवेति गाथार्थः ॥ पंचा० ॥

आपुच्छा–आप्रच्छा–स्त्री० आ-पृच्छ-अङ् । आलापे, जिज्ञासायाम आभाषणे,-गतागतकाले,-शुभे,-प्रश्ने,-आनन्दने च ॥ वाच० ॥ आपृच्छनमापृच्छा—समाचारीभेदे,-सा च कर्त्तुमभीष्टे कार्य्ये प्रवर्तमानेन गुरोः कार्य्या अहमिदं करोमीति ॥ आ० म० द्वि० ॥ एतद्बहुवक्तव्यताआप्रच्छनाशब्दे ॥

आपुच्छिणिज्ज–आप्रच्छनीय–त्रि० सकृत्प्रष्टव्ये ॥ भ० श० १८ उ०२ ( आपुच्छिणिज्जे पडिपुच्छिणिज्जे ) आप्रच्छनीयः सकृदिति ॥ ज्ञा० अ० १ ॥

आपुच्छित्ता–आपृच्छ्य–अव्य० आ प्रच्छ ल्यप् जिज्ञासित्वेत्यर्थे ॥ वाच० ॥ ( आपुच्छित्ता ठवंति सठ्ठाणे ) आपृच्छ्य प्रश्नार्हत्वाद्गुरुमिति गम्यते इति ॥ पं० व० ॥

आपुट्ठ—आप्लुष्ट—त्रि० आ-प्लुष्-क्त । १ ईषद्दग्धे २ सम्यग्दग्धे च वाच० ॥

आपूविय–आपूपिक–त्रि० अपूपकर्त्तरि स चामित्वाप्यपूपानां दलस्य मानं जानातीति ॥ नं० ॥

आपूर—आपूर–आपूर्य्यतेऽनेन-आ-पूर-घञ् । जलादिप्रवाहे "स्वेदापूरो युवतिसरितां व्याप्य गण्डस्थलानि" माघः भावे घञ् । सम्यक्पूरणे ३ ईषत्पूरणे, ४ अभिव्याप्तौ, च ॥ वाच० ॥

आपूरिय–आपूरित आ पूर क्त यस्यापूरणं कृतं तस्मिन् (पहयदेवदुंदुहिनिनायापूरियदिसामंडलंति ) ॥ आ० म० प्र० ॥ अभिव्याप्ते च ॥ वाच० ॥ "जाहे तं वंजणमापूरियं होइति" ॥ आपूरितं संव्याप्तं भृतं वासितमित्यर्थ इति ॥ विशे० ॥

आपूरिमाण–आपूरयत्–त्रि० आपूरणं कुर्वति, "सद्देणं तप्पएसे सव्वओ समंता आपूरेमाणे"राज०॥शब्देन तान् प्रत्यासन्नान् सर्वतो दिक्षु समन्ततो विदिक्षु आपूरयति शत्रन्तस्य साविदं रूपम ॥ टी० । जीव० ॥ प्र० ३ ॥

आपूर्य्यमाण—त्रि० आ० पूर० कर्मणि शानच् सम्यक् पूर्य्यमाणे,॥वाच०॥ प्रश्न०द्वा०३॥ समन्तात्प्रसृते, "आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्" ॥ गीता० ॥ आधारे शानच् । सूर्य्यकिरणैः पूर्य्यमाणचन्द्रस्याधारे, पक्षे, ॥ वाच० ॥

आपे [ वे ] क्खिय–आपेक्षिक–त्रि० अपेक्षात आगतः ठञ् अपेक्षया प्राप्ते ( किन्तु मध्यमत्वादापेक्षिकम् ) सि० कौ० स्त्रियां ङीप् ॥ वाच० ॥

आफंस—आस्पर्श—पुं० ईषत्स्पर्शे समन्तात् स्पर्शे च॥वाच०

आफोडिह—आस्फोटित—त्रि० करास्फोटे ( आफोडिह सीहनाय छिलिलिय विघुट्टकुट्टकंठकयसद्दभीमगज्जिए ) आस्फोटितं करास्फोटरूपमिति ॥ प्रश्न० द्वा०३ ॥

आबद्ध—आबद्ध—न० आबन्धनमाबद्धः भावे क्तः । दृढबन्धने, १ आधारे क्तः २ प्रेमणि, । कर्मणि ३ बद्धे ४ आप्ते ५ प्रतिरुद्धे, च त्रि० । "पयोधिमाबद्धचलज्जलाविलम्" माघः "आबद्धभीमभ्रुकुटीकरालाम्" भट्टिः। "स्यन्दनाबद्धदृष्टिषु" रघुः ६ भूषणे, च वा करणे, क्त ७ योक्त्रे ॥ वाच० ॥

आवबहुल—आपबहुल—न० रत्नप्रभायाः पृथिव्या आपबहुले काण्डे ( इमी से भंते रयणप्पभाए पुढवीए आपबहुलें कंडे केवतियं वाहल्लेणं पं० गो० असीतिजोयणसहस्साइं वाहल्लेणं पण्णते ) जीवा० प्र०३॥

आब्वय—आब्द्–त्रि० अब्दे मेघे भवः तस्येदम् इति वा अण् मेघभवे ॥ वाच०॥

आवरिहि–[ न् ] आवर्हिन्–त्रि० आबर्होऽस्त्यस्य इनि उत्पाटनयुक्ते ( मूलमस्याबर्हि ) पा० आ.बर्हः आवर्हणं तदस्यास्ति आबर्हि ॥ सि० कौ० वाच० ॥

आवाहा—आबाधा—स्त्री० आ-बाध-भावे आ पीडायाम तापत्रये क्लेशे च"आबाधा न रणभयाच्चिपा चिराय" किरा० लीलावत्युक्ते, आबाधाशब्दार्थे ॥ वाच० ॥ मानसपीडायाम ( आवाहे च भये वा ) आबाधं नाम मानसी पीडेति ॥ वृह० ॥ तत्र मनःशरीराबाधकराणि शल्यानि सुश्रु० नास्ति बाधा यस्य पीडाशून्ये त्रि० ॥ वाच० ॥

आविल–आबिल–त्रि० आ बिल भेदने च १ अस्वच्छे कालुष्ययुक्ते अस्वच्छस्य हि जलादेः सम्यग्दृष्टिप्रसारभेदनात्तथात्वम् । "पयोधिमाबद्धचलज्जलाविलम्" माघः भेदके त्रि. वाच० २ ॥

आबिलकंद-आबिलकन्द-पुं० आबिलो भूमेराभेदकः कन्दो मूलमस्य । मालाकन्दे क्षुपभेदे तस्य मालाकारतया भूमेः सम्यग्भेदनात्तथात्वम् ॥ वाच० ॥

आबुत्त--आवुत्त--पुं० आपनमाप क्विप् आपि प्राप्तौ उत्ताम्यति उत्तम-ड । नाट्योक्तौ भगिनीपतौ । बहुप्राप्तौ सन्तोषभावेन दुःखित्वात्तस्य तथात्वम् ॥ वाच० ॥

आभंकर--आभङ्कर--पुं० स्वनामख्याते महाग्रहे सू. प्र. प्रा.२० कल्प. चं. (दो आभंकरा) स्था. ठा. २ स्वनामख्याते विमानभेदे च सम. सम. ३ ॥

आभरण--आभरण--न० आ-भृ कर्मणि ल्युट् भूषणे स्था०॥ ॥ ठा०८॥सूत्रप्र.प्रा.२०॥ आ०म० औप० (ललिकयाभरणे) ललितानि शोभमानानि कृतानि न्यस्तान्याभरणानि सारभूषणानि यस्य स तथा॥ तं.सू. ( आभरणभूषणविराइयमंगुवंगं ) आभरणानि अङ्गपरिधेयानि ग्रैवेयककंकणादीनि ॥ कल्प० ॥ ( आभरणहिं विभूसिओ ) आभरणैः कुण्डलमुकुटहारादिभिः विभूषितोऽलंकृत इति॥उत्त०अ.२२॥ ( घेतूणभरणाइं ) आभरणान वस्त्राणीति ॥ व्य० ॥ पाण्डवानां सभामध्येऽदुर्योऽधन उपागतः । तस्मैगाश्च हिरण्यंच सर्वाण्याभरणानि च॥ विदग्धम--आभरणप्रधाने च (आभरणाणि वा)॥आचा०अ.५उ.१॥आभरणानि आभरणप्रधानानीति ॥ आचा० ॥ भावे ल्युट् सम्यक् पोषणे च ॥ वाच० ॥

आभरणचित्त--आभरणचित्र--त्रि० आभरणैश्चित्राणि विचित्राण्याभरणचित्राणि आभरणैर्विचित्रे, ॥ जी० प्र. ३ ॥

आभरणजहट्ठाणविविहपरिहाण--आभरणयथास्थानविविधपरिधान--न० आभरणानां यथास्थानं विविधरूपेण परिधानलक्षणे द्वाषष्ठितमे कलाभेदे ॥ कल्प० ॥

आभरणप्पिय-आभरणप्रिय-पुं० पुरुषभेदे ( आभरणपिए जाणसु अलंकरिंते उ केसमादीणि ) वृ० ॥ केशादीनि माल्यादिभिरलङ्कारैरलङ्कुर्वतः पुरुषान् आभरणप्रियान् जानीहि ॥ वृह० ॥

आभरणविचित्त--आभरणविचित्र--त्रि० आभरणविभूषिते ( आभरणविचित्ताणि वा ) ॥ आचा०अ.५उ.१ ॥ आभरणविचित्राणि गिरिविडकादिविभूषितानीति ॥ आचा० ॥

आरणविभूसिय--आभरणविभूषित--त्रि० आभरणालंकृते ( आभरणविभूसियाणि वा ) ॥ आचा०अ.५उ.१ ॥

आभरणविधि--आभरणविधि--पुं० आभरणं कटकादि तस्य विधिर्भेदा आभरणविधिः । आभरणप्रकारेषु वृ० । कलाभेदे नि.चू.॥सम.स.७२ ॥ज्ञा.अ.१ जं. ॥ ( आभरणविहिपरिमाणं करेइ) ॥ उपा.अ.१ ॥ सूत्रम् आणंदशब्दे,

आभरिय-आभरित-त्रि. आभर आभरणं जातोऽस्य इतच आ भृ वा. इतच-इट्च-पूरिते अलंकृते ॥ वाच. ॥

आभव--आभव--अव्य. आजन्मेत्यर्थे, आसंसारमित्यर्थे, च ( तव्वयणसेवणा आभवमखंडा ) ॥ पंचा० ॥ तद्वचनसेवना गुरुवचनसेवा आभवमासंसारमखण्डा सम्पूर्णा भवत्विति गाथार्थः ॥ पंचा ॥ आभवमखण्डा आजन्मसंसारं वा सम्पूर्णेति ॥ ल० ॥ ( विसुज्झमाणो आभवं भावकिरियं नाराहेइ ) ॥ पं. सू. ॥ आभवं आजन्मासंसारं वा भावक्रियं निर्वाणसाधकमाराधयतीति ॥ पं. सू. ॥

आभवंताहिगार--आभवदधिकार--पुं. व्यवहारभेदे ( ववहारो होइ दुविहो पच्छित्ते आभवंते य ) पं. क० भा० ॥ व्यवहर्तव्यभेदे च ( आभवते य पच्छित्ते ववहारियव्वं समासतो दुविहं ) ॥ व्य. ॥ आभवद्व्यवहारः क्षेत्रविषयः उपसंपच्छब्दे, ॥ व्य. ॥

आभवंताहिगार--आभवदधिकार--पुं. आभवद्व्यवहाराधिकारे "आभवंताहिगारेउ उवट्ठंले तप्पसंगया । आभवं ता इमे अण्णे सुहसीलादि आहिआ" आभवदधिकारे वर्तमाने तत्प्रसङ्गादाभवदधिकारप्रसङ्गादिमे वक्ष्यमाणा अन्ये आभवंतः सुखशीलादयस्तु स्वशीलादिप्रयुक्ता आख्याता इति ॥ व्य. ॥

आभव्व--आभाव्य--त्रि. समंताद्भवितुं योग्ये, " जइ ते अभिधारंती पडिच्छते पडिच्छगस्सेव अहतो अभिधारंतो सुयगुरुणो तो उ आभव्वा" इति ॥ व्य. ॥ अस्य बहुवक्तव्यता चरियापविट्ठशब्दे ॥

आभा--आभा--स्त्री० आ-भा-अङ् । प्रभायाम्॥ प्रश्न.द्वा. ४ ॥ दीप्तौ ॥ वाच. ॥ छव्याम् ॥ जी. प्र.४ ॥ शोभायाम्,, कान्तौ, उपमाने ॥ वाच. ॥

आभाइ--आभाति--स्त्री० आभाति तुल्यरूपतया आ-भा--क्तिच प्रतिबिम्बे, ॥ राज. ॥ तस्य बिम्बतुल्यतया दीप्तेस्तथात्वम् ॥ वाच० ॥

आभासण--आभाषण--न. आ-भाष-ल्युट्-परस्परकथने आलापे सम्बोधने च ॥ वाच. ॥

आभास--आभास--पुं० आभासते-आ-भास-अच्-उपाधितुल्यतया भासमाने प्रतिबिम्बे,१ दुष्टहेत्वादौ,२ ( हेत्वाभासाश्च पंचधा ) भाषा० "सव्यभिचार विरुद्धप्रकरणसमसाध्यसमातीतकालाहेत्वाभासाः" ॥ गौ०सूत्र० ॥ पक्षसत्वसपक्षसत्वविपक्षासत्वाबाधितत्वासत्प्रतिपक्षत्वोपपन्नो हेतुर्गमकः स इवाभासत इति हेत्वाभासस्तेन तद्भिन्नत्वे सति तद्धर्मवत्त्वम् पंचरूपोपपन्नत्वाभावे सति तद्रूपेणाभासमानत्वं हेत्वाभासत्वमिति फलितार्थः "हेत्वाभासाश्च यथोक्ताः" गौ. सूत्र. ॥ एवंप्रमाणाभासो युक्त्याभास आगमाभास इत्यादावपि प्रामाण्याद्यभाववत्वे सति प्रमाणादिरूपेणाभासमानत्वमर्थः । "एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः" ॥ शा. भा. ॥ तथा च यद्वाचकपदोत्तरमाभासशब्दः प्रयुज्यते तस्य दुष्टत्वं तेन गम्यते । रसाभासादावपि तिर्यग्योन्यादिगतत्वेनपरनायकगतत्वेन च दुष्टत्वाद्रसाभासत्वम् । पुनरुक्तवदाभासादौ च न दुष्टत्वम् किन्तु पुनरुक्तभिन्नत्वेनाभासमानत्वात् वस्तुतोऽपुनरुक्तत्वमेव गम्यते इत्येव तत्र विशेषः । "रस्यत इति रस इति व्युत्पत्तिदर्शनात् भावतदाभासादयोऽपि गृह्यन्ते" ॥सा. द. ॥ तत्र रसाभासः"मधुद्विरेफः कुसुमैकपात्रे"इत्यादि॥"अत्र हि सम्भोगश्रृङ्गारस्य तिर्यग्विषयत्वाद्रसाभासत्वम्" ॥ सा. द. ॥ "आपाततो यदर्थस्य पुनरुक्तावभासमानम् । पुनरुक्तवदाभासः" ॥ सा. द. ॥ भावे घञ् । ३ तुल्यप्रकाशे ॥ आभा-

स्यतेऽनेन भा-भास-णिच् करणे अच् ग्रन्थावतारणार्थे ४ ग्रन्थाभिप्रायवर्णने व्याख्यानांशभेदे च ॥ वाच० ॥

आभासिय–आभाषिक–पुं०म्लेच्छजातिभेदे–प्रज्ञा०प०१॥ प्रश्न० द्वा.१॥ आभाषित-त्रि०-परस्परकथिते ॥ निर० ॥

आभासिय–आभाषि (सि) क–पुं० आभाषि (सि) कद्वीपजे, मनुष्ये,॥ जी.प्र.३ स्था० ठा०४॥ अन्तरद्वीपिकमनुष्यस्त्रीभेदे, च टाप् ॥ जी० प्र. २ ॥

आभासियदीव–आभाषि (सि) कद्वीप–पुं. अन्तरद्वीपभेदे स च हिमवतः पर्वतस्य पर्यन्तादारभ्य दक्षिणपूर्वस्यां दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य द्वितीयदंष्ट्राया उपरि एकोरुकद्वीपप्रमाणः आभासिकनामा द्वीपो वर्त्तते ॥ प्रज्ञा० पद १ ॥ कर्म० ॥ स्था० ठा. ४ नं. ॥

कहिणं भंते ! दाहिणिल्लाणं आभासियमणुयाणं आभासिय दीवे नामं दीवे ॥ पं० गो० ॥ जंबुद्दीवे २ तहेव चेव चुल्लहिमवंतस्स वासहरपव्वयस्स । दाहिणपुव्वच्छिमिल्लातो चरिमंताओ लवणसमुद्दं तिन्नि जोयणसेसं जहा एगुरुयाणं निरवसेसं सव्वं जी०मू० प्र० ३ ॥

कहिणं भंते इत्यादि क भदंत! दाक्षिणात्यानां आभाषिकमनुष्याणां आभाषिकद्वीपो नाम द्वीपः प्रज्ञप्तः । भगवानाह गौतम ! जंबूद्वीपे मंदरस्य दक्षिणेन दक्षिणस्यां दिशि क्षुल्लहिमवतो वर्षधरपर्वतस्य पूर्वस्माच्चरमांतात् दक्षिण पूर्वेण दक्षिणपूर्वस्यां दिशि लवणसमुद्रं क्षुल्लहिमवद्दंष्ट्राया उपरि त्रीणि योजनशतान्यवगाह्यात्रांतरे दंष्ट्राया उपरि दाक्षिणात्यानामाभाषिकमनुष्याणामाभाषिकद्वीपो नाम द्वीपः प्रज्ञप्तः शेषवक्तव्यता एकोरुकवक्तव्या यावत्स्थिति सूत्रं ॥ जीवा० ॥ टी० ॥

आभासी–आभाषी–आभासी–स्त्री० आभाषि (सि) कद्वीपजे, मनुष्यस्त्रीभेदे ॥ जी० प्र० ३॥

आभिओग–आभियोग्य–पुं० आ समन्ताद् युज्यन्ते प्रेष्यकर्मणि व्यापार्य्यन्ते इत्याभियोग्याः॥ ध०अधि०३॥ अभियोगं व्यापारणमर्हन्तीत्याभियोग्याः ॥ स्था०ठा४॥ आ समन्तात् आभिमुख्येन युज्यंते प्रेष्यकर्मसु व्यापार्य्यन्त इत्याभियोग्या आभियोगिकाः ॥ राज० ॥ किंकरे किंकरस्थानीये देवविशेषे, च ॥ स्था० ठा०४ राज० ॥ (आभियोगाणं देवाणं अंतिए पयमट्ठं सोच्चा ) ॥ राज० ॥ अभिमुखं कर्मणि युज्यते व्यापार्यते इत्याभियोग्यस्तस्य भावः कर्म वा आभियोग्यं "व्यंजनात् यऽव्यवमस्य सरूपे वा" इत्येकयकारस्य लोपः ॥ जी० प्र.३ ॥ अभियोग आज्ञाप्रदानलक्षणोऽस्यास्तीत्याभियोगी तद्भाव आभियोग्यम् ॥दश०अ.९उ.२॥कर्मकरभावे,॥दश०॥कर्मकारकर्मणि च जी०प्र.३॥( आभिओगमुवाट्ठिया ) आभियोग्यं कर्मकरमित्यर्थ उपस्थिताः प्राप्ता इति ॥ दश० ॥ आभियोग्यं कर्मकरभावं उपस्थिताः प्राप्ता इति ॥ दश० ॥

आभियोगता–आभियोग्यता–स्त्री० अभियोगं व्यापारणमर्हन्तीत्याभियोग्याः किंकरदेवविशेषास्तद्भावस्तत्ता किंकरस्थानीयदेवविशेषत्वे, तत्कारणं स्थानाङ्गे दर्शितम् यथा ।

चउहिं ठाणेहिं जीवा आभिओगत्ताए कम्मं पगरेंति ।
तं जहा अणुक्कोसणं परपरिवाएणं भूइकम्मेणं कोउयकरणेणं ॥

स्था० ठा.४॥ अभियोगं व्यापारणमर्हंतीत्याभियोग्याः। किंकरदेवविशेषास्तद्भावस्तत्ता तस्यैतया वेति आत्मोत्कर्षेणात्मगुणाभिमानेन परपरिवादेन परदोषपरिकीर्तनेन भूतिकर्म्मणा ज्वरितादीनां भूत्यादिभीरक्षादिकरणेन कौतुककरणेन सौभाग्यादिनिमित्तं परस्तपनकादिकरणेनेति । इयमप्येवमन्यत्र कोऊयभूयकम्मे पसिणाइयरे निमित्तमाजीवी। इड्ढिरससायगरुओ अभिजोगं भावणं कुणइत्ति ॥ १ ॥ स्था० ॥ टी० ॥ ४ ॥ ठा०४ ॥

आभिओगपण्णत्ति–आभियोगप्रज्ञप्ति–स्त्री० विद्याधरसंम्बन्धिनि विद्याभेदे, (संकामणिआभिओगपण्णति गमणियं भणीसुय बहूसु विज्जाहरीसु विज्जासु विस्सुयजसे ) ॥ ज्ञा०अ.१६ ॥

आभिओगि (न्) आभियोगिन्–पुं० अभियोग आज्ञाप्रदानलक्षणोऽस्यास्तीत्याभियोगी–कर्मकरे ॥ दश० ॥अ०९

आभिओगिय–आभियोगिक–पुं०आभिमुख्येन योजनं अभियोगः प्रेष्यकर्मसु व्यापार्यमाणत्वम् अभियोगेन जीवन्तीत्याभियोगिकाः चेतनादेर्जीवतीति इकण् प्रत्ययः कर्मकरे ॥ राज० ॥ आभियोगः पारवश्यं प्रयोजनं येषां ते आभियोगिकाः॥विपा०अ.२॥ अभियोगः प्रयोजनमस्येत्याभियोगिकम परतंत्रताफले कर्म्मणि, ॥ पंचा० ॥ विद्यामंत्रादौ च ( आभिओगेहि य आभिओगिता ) अभियोगश्च द्वेधा–यदाह– "दुविहो खलु अभिओगो दव्वेभावे य होइ नायव्वो । दव्वंमि हुंति जोगा विज्जामंता य भावंमि" ॥विपा०अ.२ ॥ पराभिभवहेतौ चूर्णादिके च ( आभिओगिए वा आभिओगिएत्ति ) पराभिभवहेतुरिति ॥ ज्ञा० अ.१६॥ अभियोजनमभियोगः प्रेष्यकर्म्मणि व्यापार्यमाणत्वमिति भावः । अभियोगे नियुक्ता आभियोगिकाः देवविशेषे, ( आभिओगिए देवे सद्दावेतित्ता एवं वयासी ) आभियोगिकान् देवान् शब्दायंते आकारयंति शब्दायित्वा च तानेवमवादिषु इति ॥ जी०प्र.३ ॥ राज० ॥

आभिओगिय–आभियोगित–त्रि० वशीकरणयंत्रमंत्राभिसंस्कृते, ( आभिओगिए गहिए ) आभियोगिते वशीकरणयंत्रमंत्राभिसंस्कृते गृहीते सतीति ॥ आव० ॥

आभिओगियक्खय–आभियोगिकक्षय–पु० अभियोगः प्रयोजनमस्येत्याभियोगिकम् परतंत्रताफलं कर्म तस्य क्षयो विनाश आभियोगिकक्षयः परतंत्रताफलकर्म्मणो विनाशे,–एवं "आणाराहणजोगाओ आभियोगियक्खओत्ति" एवमुक्तविषयेच्छाकारप्रयोगविधिना आज्ञाराधनयोगादाप्तोपदेशपालनसम्बन्धात्पराभियोगपरमार्थान् अभियोगः प्रयोजनमस्येत्याभियोगिकं परतंत्रताफलं कर्म तस्य क्षयो विनाश आभियोगिकक्षयो भवतीति ॥ पंचा० ॥

आभिओगियभावणा–आभियोगिकभावना–स्त्री० आ समन्तात् युज्यंते प्रेष्य कर्मणि व्यापार्यन्ते इत्याभियोग्याः किंकरस्थानीया देवविशेषास्तेषामियमाभियोगिकी॥ध० अ.३॥ सैव भावनाऽऽभियोगिकभावनाभावनाभेदे ॥ ग० अधि. २ ॥

मंता जोगं काउं भूइकम्मं च जे पउंजंति ।

सोय रसइड्ढिहेउं अभिओगभावणं कुणइ ॥ २ ॥

मंत्राणामायोगो व्यापारो मंत्रयोगस्तं यदि वा मंत्राश्च योगश्च तथाविधद्रव्यसंयोगाः । सूत्रत्वान्मंत्रयोगं तत् कृत्वा विधाय व्यापार्य वा भूत्या भस्मना उपलक्षणत्वान्मृदा सूत्रेण कर्मरक्षार्थं वसत्यादिपरिवेष्टनं भूतिकर्म चशब्दात्कौतुकादि च यः प्रयुंक्ते किमर्थं सातं सुखं रसा माधुर्यादयः ऋद्धिरुपकरणादिसंपदेते हेतवो यस्मिन् प्रयोजने तत्सातरसर्द्धिहेतुकं भावः सातार्द्यर्थं मंत्रयोगादि प्रयुंक्ते एवमाभियोगीं भावनां करोति इह च सातादिहेतोरभिधानं निस्पृहस्याऽपवादत एतत् प्रयोगः प्रत्युत गुणः इति ख्यापनार्थं ॥२॥ग०॥ अधि० २ ॥

एयाणि गारवट्ठा कुणमाणो आभिओगियं बंधइ ।

बीयं गारवरहिओ कुव्वं आराहगुत्तं च ॥

एतानि कौतुकादीनि ऋद्धिरससातगौरवार्थं कुर्वाणः प्रयुञ्जानः सन्नाभियोगिकं देवादिप्रेष्यकर्मव्यापारफलं कर्म बध्नाति द्वितीयमपवादपदमत्र भवति । गौरवरहितः सन्नतिशयज्ञाने सति निःस्पृहवृत्त्या प्रवचनं प्रभावनार्थः । एतानि कौतुकादीनि कुर्वन्नाराधको भवति । उच्चैर्गोत्रं च कर्म बध्नाति । तीर्थोन्नतिकरणादिति गताभियोगिकी भावना ॥ बृ० मा०द्वा० ॥

आभिग्गहिय—आभिग्रहिक—त्रि० अभिगृह्यत इत्याभिग्रहः अभिग्रहेण निर्वृत्त आभिग्रहिकः कायोत्सर्गस्तदव्यतिरेकात्कर्त्ताऽप्याभिग्रहिकः । अभिग्रहनिर्वृत्ते कायोत्सर्गादौ, अभिग्रहनिर्वृत्तकायोत्सर्गादिकारिणि च ( उस्सासं न निरुंभइ आभिग्गहिओ वि किमु अचिट्ठाओ ) ॥ आव० ॥ ऊर्ध्वः प्रबलो वा श्वास उच्छ्वासः तन्नो (निरुंभइ) न निरुणद्धि ( आभिग्गहिओ वि ) अभिगृह्यत इत्यभिग्रहः अभिग्रहेण निर्वृत्त आभिग्रहिकः कायोत्सर्गस्तदव्यतिरेकात्कर्त्ताऽप्याभिग्रहिको भरयते । असावप्याभिग्रहिककायोत्सर्गकार्यपीत्यर्थः । किमुत चेष्टाओत्ति किम्पुनश्चेष्टा कायोत्सर्गकारी स तु सुतरां न निरुणद्धीत्यर्थः ॥ आव. ॥ अभिग्रहश्चैत्यपूजनमकृत्वा मया न भोक्तव्यम्न वा स्वप्तव्यमित्यादिरूपो नियमः प्रयोजनमस्येत्याभिग्रहिकः अभिग्रहप्रयोजनके च ॥ पंचा० ॥ जिनकल्पिकादौ पुं० आभिग्रहिको जिनकल्पिकादिरिति ॥ सूत्र०॥श्रु० १ अ० २ ॥

आभिग्गहियकाल—आभिग्रहिककाल—पुं० अभिग्रहश्चैत्यपूजनमकृत्वा मया न भोक्तव्यं न वा स्वप्तव्यमित्यादिरूपो नियमः प्रयोजनमस्येत्याभिग्रहिकः स चासौकाल आभिग्रहिककालः । अभिग्रहप्रयोजनके काले, तथा च पञ्चाशके ॥

तासिं अविरोहेणं अभिग्गहिओ इहं मओ कालो ।

तत्था वोच्छिण्णो जं णिच्चं तक्करणभावोत्ति ॥ ८ ॥

व्याख्या तत्तस्मादासां वृत्तिक्रियाणां तासां वा विरोधे नानाबाधया अभिग्रहश्चैत्यपूजनमकृत्वा मया न भोक्तव्यं न वा स्वप्तव्यमित्यादिरूपो नियमः प्रयोजनमस्येत्याभिग्रहिक इह जिनपूजाविषये मतो विदुषां सम्मतः कालोऽवसरः अथ कथमभिमतोऽसौ यतोऽभिग्रहेण बलात्तत्र काले पूजायां प्रवर्त्यतेऽसौ स्वरसप्रवृत्तिरेव च गुणकरीत्याशंक्याह तत्राभिग्रहे सत्यवच्छिन्नः कटितो यद्यस्मान्नित्यं प्रतिदिनं तत्करणभावः पूजाविधानाध्यवसायो भवति तत्परिणामाव्यवच्छेदस्य वा व्यवच्छिन्नपुण्यबंधहेतुत्वादभिमत एवाभिग्रहिकः पूजाकाल इति भावः इतिशब्दो वाक्यार्थसमाप्ताविति गाथार्थः ॥ ८ पंचा० ॥

आभिग्गहियमिच्छत्त—आभिग्रहिकमिथ्यात्व—न० मिथ्यात्वभेदे तत्राभिग्रहिकं पाषण्डिनां स्वशास्त्रनियंत्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणां जैनानां च धर्म्माधर्मवादेन परीक्षापूर्वत्वमाकलय्य स्वाभ्युपगतार्थे श्रद्दधानानां परपक्षप्रतिक्षेपदक्षत्वेऽपि नाभिग्रहिकत्वं स्वशास्त्रनियंत्रितत्वाद्विवेकालोकस्य । यस्तु नाम्ना जैनोऽपि स्वकुलाचारेणैवागमपरीक्षां बाधते तस्याभिग्रहिकत्वमेव सम्यग् दृशोऽपरीक्षितपक्षपातित्वायोगात्तदुक्तं हरिभद्रसूरिभिः । "पक्षपातो न मे वीरे न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रह" इति गीतार्थनिश्रितानां माषतुषादिकल्पानां तु प्रज्ञापाटवाभावाद्विवेकरहितानामपि गुणवत्पारतंत्र्यान्न दोष इति भावः तच्च नास्त्यात्मेत्यादिषड्विकल्पैः षड्विधं ॥१॥ध०॥अधि०२

आभिजच्च—आभिजात्य—न० अभिजातस्य भावः ष्यञ् कौलीन्ये, पाण्डित्ये, सौन्दर्य्ये च ॥ वाच० ॥

आभिजण—आभिजन—त्रि० अभिजनादागतः अभिजनस्येदं वा अण् अभिजनाद्वंशादागते ( तां पार्वतीत्याभिजनेन नाम्ना ) कुमा० वंशसंबन्धिनि च ॥ वाच० ॥

आभिणंदिय—आभिनन्दित—पुं० लोकोत्तरनाम्ना श्रावणे मासे तस्य च श्रावण इति लौकिकनाम आभिनन्दित इति लोकोत्तरिकनामेति ॥ चं० प्र० ॥

आभिणिबोहियणाण—आभिनिबोधिकज्ञान—न० अर्थाभिमुखो विपर्य्ययरूपत्वान्नियतोऽसंशयरूपत्वाद्बोधः संवेदनमभिनिबोधः स एव स्वार्थिकप्रत्ययोपादानादाभिनिबोधिकं ज्ञातिर्ज्ञायते अनेनेति वा ज्ञानमाऽभिनिबोधिकं च तज्ज्ञान ञ्चेत्याभिनिबोधिकज्ञानमिन्द्रियानिन्द्रियनिमित्तो बोध इति ज्ञानभेदे ॥ भ० श०८ उ०२ स्था० ठा०२ ॥

( १ ) आभि०व्युत्पत्तिः ।
( २ ) भेदाः आभि० ।
( ३ ) अवग्रहेहावायधारणानां स्वरूपम् ।
( ४ ) अवग्रहप्ररूपणा ।
( ५ ) अवग्रहादीनां क्रमोपन्यासे प्रयोजनम् ।
( ६ ) अवग्रहस्य मल्लकदृष्टान्तेन प्ररूपणा ।
( ७ ) अष्टाविंशतिविधमाभिनिबोधिकम् ।
( ८ ) बहुतरभेदत्वं मतेः ।
( ९ ) अवग्रहादीनां संशयादित्वव्यपोहः ।
( १० ) आभिनिबोधिकं चतुर्विधं द्रव्यतः क्षेत्रतः कालतो भावतः ।
( ११ ) अवग्रहादीनां कालमानम् ।
( १२ ) ईहादीनां संज्ञादीनां च आभिनिबोधिकत्वं ।
( १३ ) सत्पदप्ररूपणतादिभिराभिनिबोधिकज्ञानस्य प्ररूपणम् ।

( १ ) व्युत्पत्तिः ।

अर्भील्याभिमुख्ये नीतिनैयत्ये ततश्चाभिमुखो यस्तु योग्यदेशावस्थानापेक्षो नियत इन्द्रियमनः समाश्रित्य स्वस्वविषयापेक्षी बोधन बोधोऽभिनिबोधःसएवाऽभिनिबोधिकम् विनयादेराकृति

गणत्वादिकण्प्रत्ययः अभिनिबुध्यत इत्यभिनिबोध इति कर्त्तरि लिहादित्वादच् वा यद्वा अभिनिबुध्यते आत्मना स इत्याभिनिबोध इति कर्मणि घञ् स एवाभिनिबोधिकमिति तथैव आभिनिबोधिकञ्च तज्ज्ञानं चाभिनिबोधिकज्ञानम् ॥ कर्म०॥ अभिनिबोधे वा भवन्तेन निर्वृत्तं तन्मयं वा तत्प्रयोजनं वेत्याभिनिबोधिकम् । अभिनिबुध्यते वा तत् कर्मभूतमित्याभिनिबोधिकमवग्रहादिरूपं मतिज्ञानमेव तस्य स्वसंविदितरूपत्वादित्यर्थः । अभिनिबुध्यते वा अनेनास्मादस्मिन्वेत्याभिनिबोधिकम् तदावरणकर्मक्षयोपशम इति भावार्थः । आत्मैव वाऽभिनिबोधोपयोगपरिणामानन्यत्वादभिनिबुध्यत इत्याभिनिबोधिकम् तच्च तज्ज्ञानं चेत्याभिनिबोधिकज्ञानम् ॥ स्था० ॥ ठा० ५ ॥ अभिमुखं योग्यदेशावस्थितं नियतमर्थमिन्द्रियमनोद्वारेणात्मा येन परिणामविशेषेणावबुध्यते स परिणामविशेषो ज्ञानापरपर्याय आभिनिबोधिकम् ॥ आ० म० प्र० ॥ अर्थाभिमुखो नियतः प्रतिस्वरूपको बोधो बोधविशेषोऽभिनिबोधोऽभिनिबोध एवाभिनिबोधिकम् अभिनिबोधशब्दस्य विनयादिपाठाभ्युपगमात् विनयादिभ्य इत्यनेन स्वार्थे इकण् प्रत्ययः । अतिवर्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानीति वचनात्तत्र नपुंसकता यथा विनय एव वैनयिकमित्यत्र अथ वा अभिनिबुध्यतेऽस्मादस्मिन्वेति अभिनिबोधस्तदावरणकर्मक्षयोपशमस्तेन निर्वृत्तमाभिनिबोधिकम् तच्च तज्ज्ञानं चाभिनिबोधिकज्ञानम् इन्द्रियमनोनिमित्तो योग्यप्रदेशावस्थितवस्तुविषयः स्फुटः प्रतिलभो बोधविशेष इत्यर्थः ॥ प्रज्ञा०पद.२९॥ अभीत्याभिमुख्ये नीति नैयत्ये ततश्चाभिमुखो वस्तुयोग्यदेशावस्थानापेक्षी नियतइन्द्रियाण्याश्रित्य स्वस्वविषयापेक्षी बोधोऽभिनिबोध इति भावसाधनः स्वार्थिकतद्धितोत्पादात्स एवाभिनिबोधिकम् अभिनिबुध्यते आत्मना स इत्यभिनिबोध इति कर्मसाधनो वा अभिनिबुध्यते वस्त्वसावित्यभिनिबोध इति कर्तृसाधनो वा स एवाभिनिबोधिकमिति तथैव आभिनिबोधिकं च तज्ज्ञानं चाभिनिबोधिकज्ञानम् इन्द्रियपञ्चकमनोनिमित्तो बोध इत्यर्थः ॥ अनु० द्वा०१ ॥

**अत्थाभिमुहो नियओ बोहो जो सो मओ अभिनिबोहो सो ।**
**चेवाभिनिबोहिय मह व जहा जोगमाउज्जं ॥**

बोधनं बोधः ऋगतौ अर्यते गम्यते ज्ञायत इत्यर्थस्तस्याभिमुखस्तद्ग्रहणप्रवणः अर्थबलायातत्वेन तदांतरीयकोद्भव इत्यर्थः । अयमभिशब्दस्यार्थो दर्शितः । एवंभूतश्च बोधः क्षयोपशमाद्यपाटवे निश्चयात्मकोऽपि स्याद्तो नियतो निश्चित इति निशब्देन विशिष्यते रसाद्यपोहेन रूपमेवेदमित्येव धारणात्मक इत्यर्थः । उक्तं च । एवमवग्रहोऽपि निश्चितमवगृह्णाति । कायत उपलब्धेः । अन्यथावग्रहकार्य्यभूतोऽपायोऽपि निश्चयात्मको न स्यादिति भावः । आह ननु नियतोऽर्थाभिमुख एव भवति ततो नियतत्वविशेषणमेवास्तु किमाभिमुख्यविशेषणेन तदयुक्तं द्विचंद्रज्ञानस्य तैमिरिकं प्रति नियतत्वे सत्यप्यर्थाभिमुख्याभावादिति । एवं च मत्यर्थाभिमुखो नियतो बोधः स तीर्थकरगणधरादीनामभिनिबोधो मतोऽभिप्रेतः । ( सोचेवाभिणिबोहियमिति) स एवाभिनिबोध एवाभिनिबोधिकं विनयादिपाठादभिनिबोधशब्दस्य विनयादिभ्यष्ठगित्यनेन स्वार्थ एव ठक् प्रत्ययो यथा विनय एव वैनयिकमिति । ( अहव जहा जोग्गमाउज्जंति ) अथ वा नेह स्वार्थिकप्रत्ययो विधीयते किंतु यथायोगं, यथा संबंधमायोजनीयं । घटमानं संबंधानुसारेण स्वयमेव वक्तव्यमित्यर्थः तद्यथा अर्थाभिमुखे नियते बोधे भवमाभिनिबोधिकं तेन वा निर्वृत्तं तन्मयं वा तत्प्रयोजनं वा आभिनिबोधिकं तच्च तज्ज्ञानंचाभिनिबोधिकज्ञानमिति गाथार्थः ॥ ८ ॥

तदेवमाभिनिबोधिकशब्दवाच्यं ज्ञानमुक्तं । अथ वा ज्ञानं क्षयोपशम आत्मा वा तद्वाच्य इति दर्शयन्नाह–

**तं तेण तओ तम्मि व सो वाभिनिबुज्झए तओ वा ।**
**तं तेण तओ तम्मि वसुणेइसोवा सुयंतेण तंति ॥**

आभिमुख्येन निश्चितत्वेन च बुध्यते संवेद्यते आत्मा तदित्यभिनिबोधोऽवग्रहादिज्ञानं स एवाभिनिबोधिकं अथ वा आत्मा तेन प्रस्तुतज्ञानेन तदावरणक्षयोपशमेन वा करणभूतेन घटादिवस्त्वभिनिबुध्यते तस्मिन्वाधिकृतज्ञाने क्षयोपशमे वा सत्यभिनिबुध्यतेऽवगच्छतीत्यभिनिबोधो ज्ञानक्षयोपशमो वा ( सोवाभिणिबुज्झइत्ति ) अथ वाऽभिनिबुध्यते वस्त्ववगच्छतीति अभिनिबोधोऽसावज्ञानज्ञानिनोः कथंचिदव्यतिरेकादिति स एवाभिनिबोधिकं (तओ वा तम्मिति) न केवलं ( अत्थाभिमुहो नियओ ) इत्यादि व्युत्पत्त्या आभिनिबोधिकमुक्तं किन्तु यतः तं तेण तओ तम्मिवेत्यादिव्युत्पत्त्यंतरमस्ति ततोऽपि कारणात्तदाभिनिबोधिकमुच्यत इत्यर्थः नन्वात्मक्षयोपशमयोराभिनिबोधिकशब्दवाच्यत्वे ज्ञानेन सह कथं समानाधिकरणता स्यात्सत्यं किं तु ज्ञानस्यात्माश्रयत्वात् क्षयोपशमस्य च ज्ञानकारणत्वादुपचारतोऽत्रापि पक्षे आभिनिबोधिकशब्दो ज्ञाने वर्तते । ततश्चाभिनिबोधिकं च तज्ज्ञानं चाभिनिबोधिकज्ञानमिति समानाधिकरणसमासः इत्यदोषः॥ विशे० द्वा०१ ॥

आभिनिबोधिकज्ञानस्य स्वरूपम्परोक्षं ज्ञानमधिकृत्य वृहत्कल्पे ॥

**पच्चक्खं परोक्खं वा जं अत्थं ऊहिऊणं निद्दिसइ ।**
**तं होइ अभिणिबोहं अभिमुहमत्थं न विवरीयं ॥**

प्रत्यक्षमिंद्रियविषयं परोक्षमिंद्रियविषयातिक्रांतं यदर्थमूहित्वा निर्दिशति निर्णयपुरस्सरं ब्रूते एष एवंभूतोऽर्थ इति तदर्थं प्रत्यभिमुखं यथार्थविषयमाभिनिबोधिकं न विपरीतं नानर्थाभिमुखं तस्य यथार्थतया मिथ्यारूपत्वात्तच्च द्विधा इंद्रियनिश्रितमनिन्द्रियनिश्रितं च ॥ वृह० द्वा०१॥

( २ ) आभिनिबोधिकज्ञानस्य भेदा नंद्यध्ययने यथा ॥

से किं तं आभिनिबोहियनाणं । आभिणिबोहियनाणं दुविहं पण्णत्तं तं जहा सुयनिस्सियं च असुयनिस्सियं च॥ नं.॥

से किं त मित्यादि अथ किं तदाभिनिबोधिकज्ञानं सूरिराह आभिनिबोधिकज्ञानं द्विविधं प्रज्ञप्तं तद्यथा श्रुतनिश्रितं च अश्रुतनिश्रितं च तत्र शास्त्रपरिकर्म्मितमतेरुत्पादकाले शास्त्रार्थपर्यालोचनमनपेक्ष्यैव यदुपजायते मतिज्ञानं तत् श्रुतनिश्रितमवग्रहादि । यत्पुनः सर्वथा शास्त्रसंस्पर्शरहितस्य तथा २ विधक्षयोपशमभावत एवमेव यथावस्थितवस्तुसंस्पर्शि मतिज्ञानं उपजायते तत् अश्रुतनिश्रित-

मौत्पत्तिक्यादि तथाचाह भाष्यकृत् ॥

पुव्विं सुयपरिकम्मियमयस्स जं संपयंसुयाईयं ।
तं निस्सियमियरं पुण अणिस्सियं मइचउक्कं तं ॥

आह औत्पत्तिक्यादिकमप्यवग्रहादिरूपमेव तत् कोऽनयोर्विशेषः उच्यतेऽवग्रहादिरूपमेव परं शास्त्रानुसारमंतरेणोत्पद्यते इति भेदेनोपन्यस्तं तत्राल्पतरवक्तव्यत्वात् ॥ नं० टी० ॥

प्रथममश्रुतनिश्रितमतिज्ञानप्रतिपादनायाह ॥ न. ॥

से किं तं असुयनिस्सियं असुयनिस्सियं चउव्विहं पण्णत्तं तंजहा उप्पत्तिया वेणइया कम्मया पारिणामिया बुद्धी चउव्विहा वुत्ता पंचमा नो विलब्भइ ॥ नं०मू० १ ॥

अथ किं तदश्रुतनिश्रितं सूरिराह । अश्रुतनिश्रितं चतुर्विधं प्रज्ञप्तं तद्यथा ( उप्पत्तियाय गाहा ) उत्पत्तिरेव न शास्त्राभ्यासकर्म्मपरिशीलनादिकं प्रयोजनं कारणं यस्याः सा औत्पत्तिकी तदस्य प्रयोजनमितीकण् न तु सर्वस्याः बुद्धेः कारणं क्षयोपशमः तत्कथमुच्यते उत्पत्तिरेव प्रयोजनमस्य इति उच्यते क्षयोपशमः सर्व्वबुद्धिसाधारणः ततो नासौ भेदेन प्रतिपत्तिनिबंधनं भवति अथ च बुद्ध्यंतरभेदेन प्रतिपत्त्यर्थं व्यपदेशांतरं कर्त्तुमारब्धं तत्र व्यपदेशांतरनिमित्तमत्र न किमपि विनयादिकं विद्यते केवलमेवमेव तथोत्पत्तिरिति सैव साक्षान्निर्द्दिष्टा तथा विनयो गुरुशुश्रूषा साप्रयोजनमस्या इति वैनयिकी तथा अनाचार्यकं कर्म्म साचार्यकं शिल्पं । अथ वा कादाचित्कं शिल्पं सर्वकालिकं कर्म्म । कर्म्मणो जातं कर्म्मजं तथा परि समंतान्नमनं परिणामः सुदीर्घकालपूर्वापरपर्यालोचनजन्य आत्मनो धर्म्मविशेषः स प्रयोजनमस्याः सा पारिणामिकी बुध्यतेऽनयेति बुद्धिः सा चतुर्विधा उक्ता तीर्थकरगणधरैः किमिति यस्मात्पंचमी केवलिनाऽपि नोपलभ्यते सर्वस्याप्यश्रुतनिःश्रितमतिविशेषस्यौत्पत्तिक्यादिबुद्धिचतुष्टय एवांतरभावात्॥ ॥ नं० टी० ॥ भ० श०८ उ०२ ॥

तथा च विशेषावश्यके ॥

मइसुयनाणविसेसो भणिओ तल्लक्खणाइ भेएणं ।
पुव्वं आभिणिबोहियमुद्दिट्ठं तं पवक्खिस्सं ॥

मतिश्रुतज्ञानयोर्विशेषो भेदो भणितः केनेत्याह तयोर्लक्षणादिभिर्भेदः अथ वा स चासौ अनंतरोक्तो लक्षणादिभेदश्च तल्लक्षणादिभेदः तेन सांप्रतं त्वाभिनिबोधकज्ञानं प्ररूपयिष्ये विस्तरतो व्याख्यास्यामि । शेषश्रुतादिपरिहारेण किमित्याभिनिबोधिकं प्रथमं प्ररूप्यत इत्याह । यस्माज्ज्ञानपंचके पूर्वमादौ तदुपदिष्टमुपन्यस्तं तस्मात् यथोद्देशं निर्देश इति कृत्वा ततः प्रथमं व्याख्यास्यामीति गाथार्थः ।

तत्त्वभेदपर्यायैश्च व्याख्या तत्र तत्त्वं लक्षणं तच्च प्रागेवोक्तमथ वा तावद्भेदनिरूपणार्थमाह ।

इंदियमणोनिमित्तं तं सुयनिस्सियमहेयरं च पुणो ।
तत्थेक्किक्कं च उभेयमो, ग्गहाप्पत्तियाइयं ॥

इन्द्रियमनोनिमित्तं यत्प्रागुक्तमाभिनिबोधिकज्ञानं तत् द्विभेदं भवति श्रुतनिश्रितमितरत्त्वश्रुतनिश्रितं । अथ शब्दो वाक्यालंकारार्थः । तत्र श्रुतं संकेतकालभावी परोपदेशः श्रुतं ग्रंथश्च पूर्वं तेन परिकर्मितमतेर्व्यवहारकाले तदनपेक्षमेव यदुत्पद्यते तच्छ्रुतनिश्रितं यत्तु श्रुतापरिकर्मितमतेः सहजमुपजायते तदश्रुतनिश्रितं तत्र तयोः श्रुतनिश्रितयोर्मध्ये एकैकं चतुर्विधं कथमित्याह यथासंख्यं अवग्रहादिकं औत्पत्तिक्यादिकं च अवग्रहेहापायधारणाभेदात् श्रुतनिश्रितं चतुर्विधं औत्पत्तिकी, वैनयिकी, कर्मजा, पारिणामिकी, लक्षणबुद्धिभेदाच्च । श्रुतनिश्रितं चतुर्भेदमित्यर्थः यद्यप्यौत्पत्तिक्यादिचतुष्टयेऽप्यवग्रहादयो विद्यंते तथापि "पुव्वमदिट्ठमसुयमवेइयतक्खणविसुद्धगहियत्था" इत्यादिवक्ष्यमाणवचनात्परोपदेशाद्यनपेक्षत्वात्ते श्रुतनिश्रिता न भवंति शेषास्त्ववग्रहादयः पूर्वश्रुतपरिकर्मणानंतरेण संभवंति। ईहादिगताभिलापस्य परोपदेशाद्यंतरेणानुपपत्तेरिति ते श्रुतनिश्रिता उच्यंते । औत्पत्तिक्यादिषु त्वीहाद्यभिलापस्य तथाविधकर्मक्षयोपशमजत्वात् परोपदेशाद्यनंतरेणाप्युपपत्तेरिति गाथार्थः ॥

(३) तत्र श्रुतनिश्रितानवग्रहादींस्तावन्निर्युक्तिकारः प्राह ।

उग्गहो ईह अवाओ य धारणा एव होंति चत्तारि ।
आभिणिबोहियनाणस्स भेयवत्थू समासेणं ॥

रूपरसादिभेदैरनिर्देश्यस्याव्यक्तस्वरूपस्य सामान्यार्थस्यावग्रहणं परिच्छेदनमवग्रहः तेनावगृहीतस्यार्थस्य भेदविचारणं वक्ष्यमाणगत्या विशेषान्वेषणमीहा तया ईहितस्यैवार्थस्य व्यवसायस्तद्विशेषनिश्चयोऽपायः चशब्दोऽवग्रहादीनां पृथक् स्वातंत्र्यप्रदर्शनार्थस्तेनैतदुक्तं भवति अवग्रहादेरीहादयः पर्याया न भवंति पृथक्भेदवाचकत्वादिति निश्चितस्यैव वस्तुनोऽव्युत्पत्त्यादिरूपेण धारणं धारणा एवकारः क्रमद्योतनपरः । अवग्रहादीनामुपन्यासस्यायमेव क्रमो नान्यः अवगृहीतस्यैवेहनादीहितस्यैव निश्चयान्निश्चितस्यैव धारणादिति । एवमेतान्याभिनिबोधकज्ञानस्य चत्वार्येव भेदवस्तूनि समासेन संक्षेपेण भवंति विस्तरतस्त्वष्टाविंशत्यादिभेदभिन्नमिदं विवक्षितं इति भावः । तत्र भिद्यंते परस्परमिति भेदा विशेषास्त एव वस्तूनि भेदवस्तूनीतिसमास इति गाथार्थः ॥ विशे० ॥

अथ निर्युक्तिकारएवावग्रहादीन् व्याख्यानयन्नाह—

अत्थाणं उग्गहणं अवग्गहं तह वियालणं ईहा ।
ववसायं च अवायं धरणं पुणधारणं विंति ॥

अर्थादीनां रूपादीनां प्रथमं दर्शनानन्तरमेवावग्रहणमवग्रहं ब्रुवत इति संबंधः तथा विचारणं पर्यालोचनं अर्थानामिति वर्तते ईहनमीहा तां ब्रुवते । इदमुक्तं भवति । अवग्रहादुत्तीर्णोपायात्पूर्वं सद्भूतार्थविशेषापादानाभिमुखोऽसद्भूतार्थविशेषत्यागसंमुखश्च प्रायः काकनिलयनादयः स्थाणुधर्मा अत्र वीक्ष्यंते न तु शिरः कंडूयनादयः पुरुषधर्मा इति मतिविशेष ईहेति । विशिष्टोऽवसायोनिश्चयस्तं व्यवसायमर्थानामितीहापि वर्तते ऽवायमपायं वा ब्रुवते एतदुक्तं भवति स्थाणुरेवायमित्यवधारणात्मकः प्रत्ययोऽवायोऽपायश्चेति चशब्द एव कारार्थः व्यवसायं एव अवायमपायं वा ब्रुवत इत्यर्थः । पुनः शब्दस्यावधारणार्थत्वात् ब्रुवत इत्यनेन शास्त्रस्य पारतंत्र्यमुक्तम् इथ ता-

र्थंकरगणधरा ब्रुवत इति अन्ये त्वेवं पठंति ( अत्थाणं
उग्गहणम्मि उग्गहो इत्यादि ) तत्रार्थानामवग्रहणे सत्यव-
ग्रहो नाम मतिभेद इत्येवं ब्रुवते एवमीहादिष्वपि यो-
ऽयं भावार्थस्तु पूर्ववदेव अथ वा प्राकृतशैल्यार्थवशा-
द्विभक्तिविपरिणाम इति सप्तमी द्वितीयार्थे द्रष्टव्येति
गाथार्थः ॥ विशे० ॥ मति० ॥ अधि० नं० ॥
अथैतदेव अवग्रहादिस्वरूपं भाष्यकारो विवृण्वन्नाह—

सामण्णत्थावग्गहणमुग्गहो भेयमग्गहणमेहा ।
तस्सावगमो वा ओअविच्चुई धारणा तस्स ॥

"अंतर्भूताशेषविशेषस्य केनाऽपि रूपेणानिर्देश्यस्य सा-
मान्यार्थस्यैकसामायिकमवग्रहणं सामान्यार्थावग्रहण-
मथ वा सामान्येन सामान्यरूपेणार्थस्यावग्रहणं सामान्याव-
ग्रहणमवग्रहो वेदितव्यः । अथानंतरमीहा प्रवर्तते कथंभूतेऽ
यमित्याह भेदमार्गणं भेदा वस्तुनो धर्मास्तेषां मार्गणम-
न्वेषणं विचारणं प्रायः काकनिलयनादयः स्थाणुधर्मा
अत्र वीक्ष्यंते न तु शिरः कंडूयनादयः पुरुषधर्मा इत्येवं वस्तु
धर्मविचारणमीहेत्यर्थः । तस्यैवेहया ईहितस्य वस्तुनस्तद-
नंतरमवगमनमवगमः स्थाणुरेवायमित्यादिरूपो निश्चयोऽ
वायोऽपायो वेति तस्यैव निश्चितस्य वस्तुनोविच्युतिस्मृति
वासनारूपं धरणं धारणा सूत्रे ऽविच्युतिरूपलक्षत्वादिति
गाथार्थः ॥
अत्र चावग्रहादारभ्य परैःसह विप्रतिपत्तयः संतीत्यवग्रह-
विषयां तां तावन्निराकर्तुमाह—

सामण्णविसेसस्स वि केइ उग्गहण मोग्गहं वेंति ।
जं मइरिदंतयंति वं तं नो बहुदोसभावाओ ॥ ८० ॥

सामान्यश्चासौ विशेषश्च सामान्यविशेषः तस्यापि न केवलं
सामान्यार्थस्येत्यपिशब्दः अवग्रहणमवच्छेदनं केचन व्या-
ख्यातारः अवग्रहं ब्रुवते किं कारणमित्याह जं मइरिदंतयं
तिवेति यद्यस्मात्कारणात् प्रच्युतशब्दादिलक्षणसामान्य-
विशेषग्राहकावग्रहादनंतरं इदं तदितिवेति विमर्शलक्षणा
मतिरनुधावति ईहा प्रवर्तत इत्यर्थः । यदनंतरं चेहादिप्रवृत्तिः
सोऽवग्रह एव यथा व्यंजनावग्रहानंतरभावी अव्यक्तानि-
र्देश्यमात्रग्राही अवग्रहः प्रवर्तते शब्दादिसामान्यविशेषग्रा-
हकावग्रहादनंतरमीहादिस्तस्मादवग्रह एवायं तथा हि दूरा-
च्छंखादिसंबंधिनि शब्दे सामान्यविशेषात्मके रूपादिभ्यो
भिन्ने गृहीते प्रवर्तत एवायं विमर्शः किमयं शांखः शार्ङ्गो वा
शब्दः शार्ङ्गश्चेत् किं महिषीशृंगोद्भवो महिषशृंगजो वा
महिषीशृंगसंभवश्चेत् किं प्रसूतमहिषीशृंगसंभवोऽप्रसूतम-
हिषीशृंगसमनुद्भूतो वेत्यादि यतश्चानंतरमित्थं विमर्शेनेहा-
प्रवृत्तिर्न भवति अतः प्राप्तः क्षयोपशमाभावाद्वा स पुनरपायः
तदेतत्परोक्तं दूषयितुमाह ( तं नोइत्यादि ) तदेतत्परोक्तं न
कुत इत्याह बहवश्च ते दोषाश्च तेषां भाव उपनिपातस्त-
स्मात् एवं हि सर्वांगुषाप्यपायप्रवृत्तिर्न स्यात् यथोक्तविम-
र्शप्रवृत्तेरनुष्ठितत्वान्न च पूर्वमनीहिते प्रथमोऽपि
शब्दनिश्चयोक्तः यतश्च पूर्वमीहा प्रवर्तते नासौ अवग्रहः
किं त्वपाये वेत्यादि पुरस्ताद्वक्ष्यत इति गाथार्थः । ८० ॥
अन्ये त्वीहायां विप्रतिपद्यंते तन्मतमुपन्यस्य दूषयन्नाह—

ईहासंसयमेयं केइ न तयं तओ जमन्नाणं ।
मईनाणं सो चेहा कहमन्नाणं तई जुत्तं ॥

किमयं स्थाणुराहोश्वित्पुरुष इत्यनिश्चयात्मकं संशयमात्रं
यदुत्पद्यते तदीहेति केचित्प्रतिपद्यंते तदेव तैन्न घटते
कुत इत्याह । यद्यस्मात्कारणा ( त्तओ ) इति असौ संशयो
ज्ञानं भवतु तर्ह्यज्ञानमपीहेति चेदित्यादि ( मईत्यादि ) म-
तिज्ञानांशश्च मतिज्ञानभेदश्चेहा वर्तते । न च ज्ञानभेद-
स्याज्ञानरूपता युज्यते एतदेवाह । ( कहमित्यादि ) कथं
केन प्रकारेण ज्ञानं युक्तं न कथं चिदित्यर्थः । ( केयमि-
त्यादि ) ते इति असौ मतिज्ञानांशरूपा ईहा । संशयस्य
वस्त्वप्रतिपत्तिरूपत्वेनाज्ञानात्मकत्वादीहाभेदत्वेन वस्तुज्ञा-
नाज्ञानस्वभावत्वात् । ज्ञानाज्ञानयोश्च परस्परपरिहारेण
स्थितत्वान्नाज्ञानरूपस्य संशयस्य ज्ञानांशात्मकेहारूपत्वं
युक्तमिति भाव इति गाथार्थः ॥
आह ननु संशयेहयोः किं कश्चिद्विशेषोऽस्ति येनेहारूपत्वं
संशयस्य निषिध्यत इत्याशंक्य तयोः स्वरूपभेदमुपद-
र्शयन्नाह—

जमणेगत्थालंबणमपज्जुदासपरिकुंठियं चित्तं ।
सय इव सव्वप्पयओ तं संसयरूवमन्नाणं ॥
तं चिय सयत्थहेऊववत्ति वावरतप्परममोहं ।
भूयाभूयविसेसा पायाणस्सायाभिमुहं ईहा ॥

यच्चित्तं यन्मनोऽनेकार्थालंबनमनेकार्थप्रतिभासांदोलितं
अत एव पर्युदसनं पर्युदासो निषेधो न तथा पर्युदासोऽनि
षेधस्तेन तथा उपलक्षणत्वादविधिना च परिकुंठितं
जडीभूतं सर्वथा वस्तुनिश्चयरूपतामापन्नं किं बहुना ( सय-
इवेत्यादि ) शेत इव स्वपितीव सर्वात्मना न किं चित्
चेतयते वस्त्वप्रतिपत्तिरूपत्वात्तदेवंविधं चित्तं संशय
उच्यते इत्यर्थः । तच्चाज्ञानं वस्त्ववबोधरहितत्वादिति ।
यत्पुनस्तदेवं चेतो वक्ष्यमाणस्वरूपं तदीहेति संबंधः ।
कथंभूतं सदित्याह ( भूयाभूयेत्यादि ) भूतः कश्चिद्विव-
क्षितप्रदेशस्थाण्वादिरर्थः अभूतस्तत्राविद्यमानस्तावेव पदार्था-
तरेभ्योविशिष्यमाणत्वात् विशेषो तयोरादानत्यागाभिमुख-
भूतार्थविशेषोपादानस्याभिमुखो भूतार्थत्यागस्याभिमुख-
मिति यथासंख्येन संबंधः । यतः कथंभूतमित्याह । सद-
र्थहेतूपपत्तिव्यापारतत्परहेतुद्वारेणेदं विशेषणं सदर्थहे-
तूपपत्तिव्यापारतत्परत्वादभूतविशेषादानत्यागादिमुखमिति
भावः । अत्र हेतुः साध्यार्थगमकं युक्तिविशेषरूपं
साधनं उपपत्तिः संभवघटनं विवक्षितार्थस्य संभवव्यव-
स्थापनं ततश्च हेतुश्चोपपत्तिश्च हेतूपपत्ती सदर्थस्य
विवक्षितप्रदेशे अरण्यादौ विद्यमानस्य स्थाण्वाद
रर्थस्य हेतूपपत्ती सदर्थहेतूपपत्ती तद्विषयो व्यापारो-
घटनं चेष्टनं सदर्थहेतूपपत्तिव्यापारस्तत्परं तन्निष्ठमिति
समासः । अत एव अमोघं अर्थबलायातत्वेन अविफलं
अमिथ्यास्वरूपं तदेवंभूतं चेत् ईहेति संबंधः कृत एव इद-
मुक्तं भवति । केनचिदरण्यदेशं गतेन सवितुरस्तमयसमये
ईषदवकाशमासादयति तमिस्रे दूरवर्ती स्थाणुरुपलब्धस्त-
तोऽस्य विमर्शः समुत्पन्नः किमयं स्थाणुः पुरुषो वा अयं
च संशयत्वात् अज्ञानं ततोऽनेन तस्मिन् स्थाणौ दृष्टा

वल्यारोहणं प्रविलोक्य काककारंडवकादंबक्रौंचकीरशकुं नकुलनिलयनकृतश्चेतसि हेतुव्यापारो यथा स्थाणुरयं वल्ल्युत्सर्प्पकाकादिनिलयनोपलंभात्तथासंभवपर्यालोचनं च व्यथायि तद्यथा अस्ताचलांतरिते सवितरि प्रसरति चेषत्त-मिस्रे महारण्येऽस्मिन् स्थाणुरयं संभाव्यते न पुरुषः शिरः कंडूयनकरग्रीवाचलनादेस्तद्व्यवस्थापकहेतोरभावादीदृशे त्र प्रदेशेऽस्यां वेलायां प्रायस्तस्यासंभवः तस्मात् स्थाणुनात्र सद्भूतेन भाव्यं न पुरुषेण । तदुक्तं । "अरण्यमेतत् सविता-स्तमागतो न चाधुना संभवतीह मानवः। प्रायस्तदेतेन खगा-दिभाजा भाव्यं रतिप्रियतमारिसमाननाम्ना" एतच्चेदृशं चित्तं इहेत्युच्यते निश्चयाभिमुखत्वेन संशयादुत्तीर्णत्वात् सर्वथा निश्चयेऽपायत्वप्रसंगेन निश्चयादधोवर्त्तित्वाच्चेति संशये-हयोः प्रतिविशेषः इति गाथाद्वयार्थः ॥

अथापायधारणागतविप्रतिपत्तिनिराचिकीर्षया परमतमुप-दर्शयन्नाह—

केइ तयण्णविसेसावणयणमित्तं अवायमिच्छंति ।
सब्भूयत्थविसेसावधारणं धारणं विंति ॥

तत्रशब्दास्यानंतरगाथोऽक्तो भूतोर्थः संबध्यते तस्मात्तत्र भूतान्विद्यमानान् स्थाण्वादेर्योऽन्यः प्रतियोगी तत्रा-विद्यमानः पुरुषादिस्तद्विशेषाः शिरःकंडूयनचलनस्पंदनादयः तेषां पुरोवर्त्तिनि सद्भूतेऽर्थे ऽपनयनं निषेधनं तदन्यविशे-षापनयनं तदेव तन्मात्रमपायं इच्छंति केचनापि व्याख्या-तारोऽपायनमपनयनमपाय इति व्युत्पत्तिरर्थविभ्रमितमन-स्का इति भावः । अवधारणं धारणा इति च व्युत्पत्यर्थ-भ्रमितास्ते धारणां ब्रुवते किं तदित्याह सद्भूतार्थविशे-षावधारणं । सद्भूतस्तत्र विवक्षितप्रदेशे विद्यमानः स्था-एवादिरर्थविशेषस्तस्य स्थाणुरेवायमित्यवधारणं सद्भूता-र्थविशेषावधारणमिति समास इति गाथार्थः ॥ ८४ ॥

तदेतद्दूषयितुमाह—

कस्सइ तयन्नवइरेगमेत्तओवगमणं भवे भूए ।
सब्भूयसमण्णयओ तदुभयओ कस्सइ न दोसो ॥

( भूएत्ति ) तत्र विवक्षितप्रदेशे भूते विद्यमानेऽर्थे स्थाण्वादौ कस्स इति कस्यचित् प्रतिपत्तुस्तदन्यव्यतिरेकमात्रादवगमनं निश्चयो भवति तस्मात्स्थाण्वादेर्योऽन्यः पुरुषादिरर्थस्य व्य-तिरेकः स एव च तदन्यव्यतिरेकमात्रं तस्मात्स्थाण्वाद्यर्थ-निश्चयो भवतीत्यर्थः तद्यथा यतो नेह शिरःकंडूयनादयः पुरुषधर्म्मा दृश्यंते ततः स्थाणुरेवायमिति कस्यापि स-द्भूतसमन्वयतः सद्भूतस्तत्र प्रदेशे विद्यमानः स्थाण्वा-दिरर्थमन्वयतोऽन्वयधर्मघटनात् भूतेऽर्थेऽवगमनं निश्चयो भवेद्यथा स्थाणुरेवायं वल्युत्सर्पणादयो निलयनादिधर्म्मा-णामिहान्वयादिति । कस्यचित्पुनस्तदुभयादन्वयव्यतिरेको-भयात् तद्भूतेऽर्थेऽवगमनं भवेत्तद्यथा यस्मात्पुरुषधर्मा शिरः कंडूयनादयोऽत्र न दृश्यंते वल्युत्सर्पणादयस्तु स्थाणुध-र्म्माः समीदृश्यंते तस्मात् स्थाणुरेवायमिति । न चैवमन्व-यव्यतिरेकादुभयाद्वा निश्चये जायमाने कश्चित्र दोषः । परव्याख्यानेन तु वक्ष्यमाणन्यायेन दोष इति भाव इति गाथार्थः ॥

कथं पुनस्तद्व्याख्याने न दोष इत्याह—

सव्वो च्चिय सोवाओ भेए वा होंति पंच वत्थूणि ।
आहेवं च्चिय चउहा मई तिहा अन्नहा होइ ॥

यस्माद्व्यतिरेकादन्वयादुभयाद्वा भूतार्थविशेषावधारणं कुर्व्वतो योऽवसायः स सर्वोऽप्यपायः प्रस्तुतः स्थाण्वा-दिवस्तुनिश्चयो नतु सद्भूतार्थविशेषावधारणं धारणेति भावः । तस्मान्न दोषः । आह ननु यथा मया व्याख्या-यते सद्भूतार्थविशेषावधारणं धारणा तथा किं कश्चिद्दो-षः समुपजायते येनात्मीयव्याख्यानपक्षे इदमित्थमभिधी-यते न दोष इति एतदाशंक्याह ते एवा इत्यादि वा-शब्दः पातनायां गतार्थः व्यतिरेकोऽपायोऽन्वयस्तु धार-णेत्येवं मतिज्ञानतृतीयभेदस्यापायस्य भेदेऽभ्युपगम्यमाने पंच वस्तूनि पंच भेदा भवंत्याभिनिबोधिकज्ञानस्येति ग-म्यते । तथा ह्यवग्रहेहापायधारणा लक्षणाश्चत्वारो भेदा-स्तावत् त्वयैव पूरिताः पंचमस्तु भेदः स्मृतिलक्षणः प्रा-प्नोति । अविच्युतेः स्वसमानकालभाविन्यपायेऽतर्भूतत्वाद्वा-सनायास्तु स्मृत्यंतर्गतत्वेन विवक्षितत्वात् स्मृतिरनन्यश-रणत्वान्मतेः पंचमो भेदः प्रसज्यत इति भावः ( आहे-त्यादि ) पुनरप्याह परो ननु यथैव मया व्याख्यायते व्यतिरेकमुखेन निश्चयोऽपायोऽन्वयमुखेन तु धारणेत्येवमेव चतुर्द्धा चतुर्विधा मतिर्भवति युक्तितो घटते अन्यथा तु व्याख्यायमानेऽन्वयव्यतिरेकयोरप्यपायत्वेऽभ्युपगम्यमाने इत्यर्थः । किमित्याह । त्रिधा अवग्रहेहापायभेदतस्त्रिभेदा मतिर्भवति न पुनश्चतुर्द्धा धारणाया अघटमानकत्वादि-ति भाव इति गाथार्थः ॥ ८६ ॥

कथं पुनर्धारणाभाव इत्याह—

काणुवओगंमि धिई पुणोवओगे य सा जओ ।
वाओ तो नत्थि धिई भणइ इदं तदेवेति जा बुद्धी ॥
णणु सा वायज्झहिया जउवसा वासणाविसेसाओ ।
जाया वायाणत्तरमविभूई सा धिई नाम ॥

अनुपयोगे उपयोगोपरमे सति का धृतिः का नाम धारणा न काचिदित्यर्थः । इदमुक्तं भवति । इह भवेन्निश्चयोऽपायमु-खेन घटादिके वस्तुनि अवग्रहेहापायरूपतयांऽतर्मुहूर्तप्रमाण एवोपयोगो जायते । तत्र चापाये जाते योनुपयोगः सातत्य-लक्षणाऽविच्युतिर्भवताऽभ्युपगम्यते सापाय एवांऽतर्भूतेति न ततो व्यतिरिक्ता या तु तस्मिन् घटादिरुपयोग उपरते सति संख्येयमसंख्येयं वासनाभ्युपगम्यते । इदं तदेवेति लक्षणा स्मृतिश्चांगीक्रियते सा मत्यंशरूपा धारणा न भवति मत्यु-पयोगस्य प्रागेवोपरतत्वात् पुनरपि कालांतरोपयोगे धारणा भविष्यतीति चेदित्याह ( पुणो इत्यादि ) कालांऽतरे पुनर्जा-यमानोपयोगेऽपि यान्वयमुखोपजायमानावधारणरूपा धार-णा मयेष्यते सा यतोऽपाय एव भवताभ्युपगम्यते । "स-व्वोच्चियसो वाओ" इतिवचनात्ततस्तत्रापि नास्ति धृति-र्धारणा पुनरप्युपयोगोपरमेऽपि पूर्वोक्तयुक्त्यैव तदभावस्त-स्मादुपयोगकालेऽन्वयमुखावधारणारूपाया धारणायास्त्व-यानभ्युपगमादुपयोगोपरमे च मत्युपयोगाभावात्तदंशरू-पाया धारणाया वटमानकत्वात्त्रिधैव त्वदभिप्रायेण मतिः प्राप्नोति न चतुर्द्धेति एवंपक्षाभिप्रायः । अत्रोत्तर-

माह । ( भएणइत्यादि ) भएयतेऽत्र प्रतिविधानं किमित्याह इदं वस्तु तदेव यत् प्रागुपलब्धं मया इत्येवंभूता कालांतरे या स्मृतिरूपा बुद्धिरुपजायते । नत्विह सा पूर्वप्रवृत्तापायान्निर्विवादमभ्यधिकैव पूर्वप्रवृत्तापायकाले तस्याभावात्सांप्रतापायस्य तु वस्तुनिश्चयमात्रफलत्वेन पूर्वापरदर्शनानुसंधानायोगात्ततश्च सानन्यरूपत्वात् धृतिधारणा नामेति पर्यंते संबंधः । यतश्च यस्माच्च वासनाविशेषात् पूर्वोपलब्धवस्त्वाहितसंस्कारलक्षणात्तद्विज्ञानावरणक्षयोपशमसांनिध्यादित्यर्थः सा इदं तदेवेति लक्षणा स्मृतिर्भवति साऽपि वासनाऽपायादभ्यधिकेतिनामेनेहापि संबंधः ( जायावायेत्यादि ) या च अपायादंतरमविच्युतिः प्रवर्तते साऽपि धृतिर्नाम । इदमुक्तं भवतियस्मिन् समये स्थाणुरेवायमित्यादिनिश्चयस्वरूपोपायः प्रवृत्तस्ततः समयादूर्द्धमपि स्थाणुरेवायमित्यविच्युतायांऽतर्मुहुर्त्तं क्वचिदपायप्रवृत्तिः साप्युपायाविच्युतिः प्रथमप्रवृत्तापायादभ्याधिकेति धृतिर्धारणा नामित्येवमविच्युतिवासनास्मृतिरूपा धारणा त्रिधा सिद्धा भवति। अत्राह कश्चिन्नन्वविच्युतिस्मृतिलक्षणौ ज्ञानभेदौ गृहीतग्राहित्वान्न प्रमाणं द्वितीयादिवाराप्रवृत्तापायसाध्यस्य वस्तु निश्चयलक्षणस्य कार्यस्य प्रथमवाराप्रवृत्तापायेनैव साधितत्वान्न च निष्पादितक्रिये कर्मणि ततः साधनायैव प्रवर्तमानं साधनं शोभां बिभर्ति अतिप्रसंगात् कुठारादिभिः कृतच्छेदनादिक्रियेष्वपि वृक्षादिषु पुनस्तत्साधनाय तेषां प्रवृत्याप्तेः स्मृतेरपि पूर्वोत्तरकालभाविज्ञानद्वयगृहीत एव वस्तुनि प्रवर्तमानतया कुतः प्रामाण्यं न च वक्तव्यं पूर्वोत्तरदर्शनद्वयानाधिगतस्य वस्त्वेकत्वस्य ग्रहणात् स्मृतिः प्रमाणं पूर्वोत्तरकालद्वयस्य वस्तुनः कालादिभेदेन भिन्नत्वादेकत्वस्यैवासिद्धत्वादिति वासना तु किं रूपेति वाच्यं । संस्काररूपेति चेत्कोऽयं नाम संस्कारः स्मृतिज्ञानावरणक्षयोपशमो वा तज् ज्ञानजननशक्तिर्वा तद्वस्तुविकल्पो वेति त्रयीगतिस्तत्राद्यपक्षद्वयमयुक्तं ज्ञानरूपत्वाभावात्तद्भेदानां चेह विचार्यत्वेन प्रस्तुतत्वात् तृतीयपक्षोऽप्ययुक्त एव संख्येयमसंख्येयं वा कालं वासनाया इष्टत्वादेतावंतं च कालं तद्वस्तुविकल्पायोगात्तदेवमविच्युतिस्मृतिवासनारूपायास्त्रिविधाया अपि धारणाया अघटमानत्वात् त्रिधैव मतिः प्राप्नोति न चतुर्द्धा। अत्रोच्यते यत्तावद्गृहीतग्राहित्वादविच्युतेरप्रामाण्यमुच्यते तदयुक्तं। गृहीतग्राहित्वलक्षणस्य हेतोरसिद्धत्वादन्यकालविशिष्टं हि वस्तु प्रथमप्रवृत्तापायेन गृह्यते । परकालविशिष्टं च द्वितीयादिवाराप्रवृत्तापायेन । किं च स्पष्टस्पष्टतरस्पष्टतमभिन्नधर्मकवासनाजनकत्वादप्यविच्युतिप्रवृत्ताद्वितीयाद्यपायविषयं वस्तु भिन्नधर्मकमेवेति कथमविच्युतेर्गृहीतग्राहितास्मृतिरपि पूर्वोत्तरदर्शनद्वयानधिगतवस्त्वेकत्वं गृह्णाना न गृहीतग्राहिणी । न च वक्तव्यं कालादिभेदेन भिन्नत्वात् वस्तुनो नैकत्वं कालादिभिर्भिन्नत्वेऽपि सत्वप्रमेयत्वसंस्थानरूपादिभिरेकत्वाद्वासनाऽपि स्मृतिविज्ञानावरणकर्मक्षयोपशमरूपा तद्विज्ञानजननशक्तिरूपा चेष्यते सा च यद्यपि स्वयं ज्ञानस्वरूपा न भवति तथापि पूर्वप्रवृत्ताविच्युतिलक्षणज्ञानकार्यत्वादुत्तरकालभाविस्मृतिरूपज्ञानकारणत्वाच्चोपचारतो ज्ञानरूपाऽभ्युपगम्यते । तद्वस्तुविकल्पपक्षस्त्वनभ्युपगमादेव निरस्तस्तस्मादविच्युतिवासनारूपाया धारणायाः स्थितत्वान्न मतेस्त्रैविध्यं किं तु चतुर्द्धा सेति स्थितमिति गाथाद्वयार्थः ॥

अथैतां स्वाभिमतां धारणां व्यवस्थाप्य परं प्रत्याह—

तं इत्थं तस्स तुहं वत्थूणि यं पंचमेत्थमाणस्स ।
किं होउ सा अभावो भावो नाणं च तं कयरं ॥

अस्मदभिमतामनंतरप्रतिष्ठितस्वरूपां तां धारणामिच्छतस्तव पंचवस्तूनि पंचाभिबोधिकज्ञानभेदाः प्राप्नुवंति अपायस्यैकस्यापि भेदद्वयरूपताभ्युपगमेन भेदचतुष्टयस्य त्वयापि पूरितत्वात्पंचमस्य तु मदुक्तस्य धारणालक्षणस्य प्रसंगादिति भावः । अथास्मदभ्युपगता धारणा त्वया नेष्यते "तर्हि (नेत्थमाणस्स किं होउ) इत्यादि तां मदभ्युपगतां धारणाम निच्छतोऽप्रतिपद्यमानस्य तव सा मदभ्युपगता धारणा किं भवत्यभावो वस्त्वाहोश्विद्भावो वस्त्विति विकल्पद्वयं किं चातो न तावदभावो भावत्वेनानुभूयमानत्वान्न च तथानुभूयमानस्याभावत्वमाधातुं शक्यतेऽतिप्रसंगात् घटादिष्वपि तथात्वप्राप्तेः तेऽपि ह्यनुभववशेनैव भावरूपा व्यवस्थाप्यंते। यदि वानुभवोऽप्यप्रमाणं तदा घटादिष्वपि भावरूपतायामनाश्वास इति भावः । अथ भावोऽसौ तर्हि वक्तव्यं ज्ञानमज्ञानं वा न तावदज्ञानं चिद्रूपतयाऽनुभूयमानत्वादथ ज्ञानं तदपि मतिश्रुतावधिमनःपर्यायकेवलेभ्यो ज्ञानांतरस्याभावात्तेषां मध्ये कतमदिति वाच्यं । न तावत् श्रुतादिचतुष्टयरूपमनभ्युपगमात्तल्लक्षणायोगाच्च मतिज्ञानं चेत्तदपि नावग्रहेहापायरूपं तल्लक्षणासंभवात् "नगुसावायसहिया" इत्यादिनाऽपायाभ्यधिकत्वेन साधितत्वाच्च तस्मादन्वयव्यतिरेकाभ्य निश्चयः सर्वोऽप्यपायोऽविच्युतिस्मृतिवासनारूपानुसारिशिष्योद्धारेणैवेति स्थितमिति गाथार्थः ॥

तदेवं निरुत्तरीकृतोऽप्यविलक्षितयान्येन प्रकारेणाह—

तुज्झं बहुयरभेया भणई मई होइ धिइबहुत्ताओ ।
भएणइ न जाइ भेओ इट्ठो मज्झं जहा तुज्झं ॥६१॥

अत्र प्रेरको भणति । किमित्याह ( तुज्झमित्यादि ) इत्थमाचार्य!तव बहुतरभेदा मतिर्भवति । कुत इत्याह ।धृतेर्धारणाया बहुत्वात् बहुभेदत्वादित्यर्थः धारणाया एकस्या अप्यविच्युतिवासनास्मृतिलक्षणभेदत्रययुक्तत्वादवग्रहेहापायैः सह षड्भेदा मतिः प्राप्नोतीति भावः। अत्र प्रतिविधानमाह। (भएणईत्यादि)भएयतेऽत्रोत्तरं जातिर्भेदो जातिभेदोजातिभेदो व्यक्तिपक्ष इत्यर्थः। स इह धारणाविचारे मम नेष्टो नाभिप्रेतः । किं तु धारणासामान्यरूपा जातिरेव ममाभिप्रेता कस्य यथेत्याह। यथा तवाऽवग्रहविषये इति शेषः। इदमुक्तं भवति । यथावग्रहो व्यंजनार्थावग्रहभेदादुभयरूपोऽवग्रह सामान्यादेकस्त्वयापीष्टोऽन्यथा मतेः पंचविधत्वप्रसंगात्तथा त्रिधा रूपापि धारणा. तत्सामान्यादेकरूपैवेति चतुर्विधैव मतिर्न बहुतरभेदेति गाथार्थः ॥ ९१ ॥

एतदेव भावयन्नाह—

सा भिन्नलक्खणा विहुठिइ सामण्णेण धारणा होइ ।
जह उग्गहो दुरूवो उग्गहसामण्णओ एक्को ॥

सा धारणा अविच्युतिवासनास्मृतीनां भिन्नस्वरूपत्वेन भिन्नलक्षणा सती धारणा सामान्यव्यतिरेकादेकैव भवति । यथाऽवग्रहो व्यंजनार्थावग्रहभेदात् द्विरूपोऽप्यवग्रहसामान्याव्य-

तिरेकादेकः परस्याऽपि सिद्धोऽन्यथा मतेः पंचविधत्वापत्तेरिति गाथार्थः । तदेवमावग्राहिभेदचतुष्टयविषया निराकृताः सर्वा अपि परविप्रतिपत्तयस्तन्निराकरणप्रक्रमे चानंतरमवग्रहो द्विरूपप्रोक्तः स च कथं द्विरूपो भवतीत्याशङ्कते तत् द्विरूपताकथनव्याजेन पूर्वं यान्याभिनिबोधिकज्ञानस्याऽवग्रहादीनि चत्वारि भेदवस्तून्युक्तानि तेष्वेव मध्येऽवग्रहं तावद्व्याचिख्यासुरित्याह–

तत्थूग्गहो दुरूवो गहणं जं होज्ज वंजणत्थाणं ।
वंजणओयजमत्थो तेणाइए तयं वोछं ॥

तत्राथग्रहणमवग्रहो द्विरूपो यथा भवति । तथा प्रोच्यते । कथमित्याह । यद्यस्मादग्रहणं व्यंजनार्थयोरेव भवेदन्यस्य ग्राह्यस्याभावात्ततश्च विषयद्वैविध्यादवग्रहो द्विविध इति भावः । अपरं यद्यस्मात्कारणाद्वक्ष्यमाणन्यायेन प्राप्यकारिष्विन्द्रियेषु व्यंजनतो व्यंजनावग्रहादनंतरमेवार्थोऽर्थावग्रहो भवति । तेनादौ प्रथमतो व्यंजनावग्रहमेव वक्ष्ये इति गाथार्थः ॥

तत्र व्यंजनं तावत्किमुच्यत इत्यादि—

वंजिज्जइ जेणत्थो घडोव्व दीवेण वंजणं तं च ।
उयगरणिंदियसद्दाइपरिणयदव्वस्स संबंधो ॥ ९४ ॥

संबंधो व्यज्यते प्रकटीक्रियतेऽर्थो येन दीपेनेव घटस्तत् व्यंजनं किं पुनस्तदित्याह तं चेत्यादि । तच्च व्यंजनं उपकरणेंद्रियशब्दादिपरिणतद्रव्यसंबंधः इंद्रियं द्विविधं द्रव्येंद्रियं भावेंद्रियं च । तत्र लब्ध्युपयोगो भावेंद्रियं निर्वृत्त्युपकरणे द्रव्येंद्रियं निर्वृत्तिश्च द्विधा । अंगुलासंख्येयभागादिमानकदंबकुसुमगोलकधान्यमसूरका हलांकुरप्राकारा मांसगोलकरूपा शरीराकारा च । श्रोत्रादींद्रियाणां पंचनामपि यथासंख्यमंतर्निर्वृत्तिः कर्णशष्कुलिकादिरूपा तु बहिर्निर्वृत्तिः । तत्र कदंबकुसुमगोलकाकारमांसखंडादिरूपाया अंतर्निर्वृत्तेः शब्दादिविषयपरिच्छेदहेतुर्यः शक्तिविशेषः स उपकरणेंद्रियं शब्दादिश्च श्रोत्रादींद्रियविषयः आदिशब्दाद्रसगंधस्पर्शपरिग्रहः तद्भावेन परिणतानि भाषावग्रहणादिसंबंधीनि द्रव्याणि च शब्दादिपरिणतद्रव्याणि उपकरणेंद्रियं च शब्दादिपरिणतद्रव्याणि च तेषां परस्परं संबंधः । एव तावद्व्यंजनमुच्यते अपरं चेंद्रियेणाऽप्यऽर्थस्य व्यज्यमानत्वात्तदपि व्यञ्जनमुच्यते । तथा शब्दादिपरिणतद्रव्यादिसंबंधस्य निकुरंबमपि व्यज्यमानत्वाद्व्यंजनमभिधीयते इत्येवमुपलक्षणव्याख्यानात् त्रितयमपि यथोक्तं व्यंजनमवगंतव्यं ततश्चेंद्रियलक्षणेन व्यंजनेन शब्दादिपरिणतद्रव्यसंबंधस्वरूपस्य व्यंजनस्यावग्रहो व्यंजनावग्रहः अथ वा तेनैव व्यंजनेन शब्दादिपरिणतद्रव्यात्मकानां व्यंजनानामवग्रहो व्यंजनावग्रहः इत्युभयत्राऽप्येकस्य व्यंजनशब्दस्य लोपं कृत्वा समास इति गाथार्थः ॥ ६४ ॥

अत्राक्षेपं परिहारं चाभिधित्सुराह—

अण्णाणं सो बहिराईणं च तक्कालमणुवलंभाउ ।
नेतदंते तत्तोच्चिय उवलंभाओ तओ नाणं ॥ ९५ ॥

स व्यञ्जनावग्रहोऽज्ञानं ज्ञानं न भवति तस्य उपकरणेन्द्रियशब्दादिपरिणतद्रव्यसंबंधस्य कालस्तत्कालस्तस्मिन् ज्ञानस्यानुपलंभात्स्वसंवेदनेनासंवेद्यमानत्वाद्बधिरादीनामिव यथा हि बधिरादीनामुपकरणेन्द्रियस्य शब्दादिविषयद्रव्यैः संबंधकालेन किमपि ज्ञानमनुभूयतेऽननुभूयमानत्वाच्च तन्नास्ति तथेहापीति भावः ॥ अत्रोत्तरमाह ॥ ( नेतदंते इत्यादि ) नासौ जडरूपतया ज्ञानरूपेणाननुभूयमानत्वादज्ञानं किं तर्हि तत्कोऽसौ व्यञ्जनावग्रहो ज्ञानमेव कुतस्तदंते तस्य व्यञ्जनावग्रहस्यांते तत एव ज्ञानात्मकस्याऽर्थावग्रहोपलंभस्य भावात्तथाहि यस्य ज्ञानस्यांते तज्ज्ञेयवस्तूपादानात्तत एव ज्ञानमुपजायते तज्ज्ञानं दृष्टं यथार्थावग्रहपर्यंते तज्ज्ञेयवस्तूपादानात् ईहासद्भावादर्थावग्रहो ज्ञानं ज्ञायते च व्यञ्जनावग्रहस्य पर्यंते तज्ज्ञेयवस्तूपादानात्तत एवार्थोऽवग्रहज्ञानं तत्तस्माद्व्यञ्जनावग्रहो ज्ञानमिति गाथार्थः ॥ ६५ ॥

तदेवं व्यंजनावग्रहे यद्यपि ज्ञानं नानुभूयते तथापि ज्ञानकारणत्वादसौ ज्ञानमित्येवं व्यंजनावग्रहे ज्ञानाभावमभ्युपगम्योक्तं ॥

सांप्रतं ज्ञानाभावोऽपि तत्राऽसिद्ध एवेति दर्शयन्नाह—

तक्कालम्मिवि नाणं तच्छत्थितणुंतितो तमव्वत्तं ।
बहिराईणं पुण सो अण्णाणं तदुभया भावा ॥

तत्कालेऽपि तस्य व्यंजनसंबंधस्य कालेऽपि तत्रानुपहतेन्द्रियसंबंधिनि व्यंजनावग्रहे ज्ञानमस्ति केवलं एकतेजोऽवयवप्रकाशवत् तत्त्वतो बाल्यमित्यतोऽव्यक्तं स्वसंवेदनेनापि न व्यज्यते । यद्यव्यक्तं कथं तदस्तीति ज्ञायत इति चेन्मा त्वरिष्ठाः “जइ विण्णाणामसंखेज्जं समयसद्दाइव्व सज्झावे” इत्यादिनानंतरमेव तदस्तित्वयुक्तेर्वक्ष्यमाणत्वात् दृष्टांते तु ज्ञानाभावे विप्रतिपत्तिरिति दर्शयन्नाह बधिरादीनामादिशब्दादुपहतघ्राणादींद्रियाणां पुनः स व्यंजनावग्रहोऽज्ञानं ज्ञानं च भवतीत्यत्रापि विप्रतिपत्तिरेव । कुत इत्याह । तच्च तदुभयं च तदुभयं तस्याभावात् ज्ञानकारणत्वाभावाद्व्यक्तस्यापि च ज्ञानस्याभावादिति गाथार्थः ॥

अथ पुनरप्याक्षेपपरिहारं चाभिधित्सुराह—

कह सव्वत्तं ताणं च सुत्तमताइसुहमवोहव्व ।
सुत्तादओ सयंवि य विण्णाणं नावबुज्झंति ॥

परः सासूयमाह । ननु कथं ज्ञानमव्यक्तं चेत्युच्यते । तमः प्रकाशाद्यभिधानवद्विरुद्धत्वान्नेदं युज्यत इति भावः । अत्रोत्तरमनंतरमेवोक्तं । एकतेजोऽवयवप्रकाशवत्सूक्ष्मत्वादव्यक्तमथ पुनरप्युच्यते सुप्तमत्तमूर्च्छितादीनां सूक्ष्मबोधवदव्यक्तं ज्ञान मुच्यत इति न दोषः । सुप्तादीनां तदात्मीयज्ञानं स्वसंविदितं भविष्यतीति चेन्नैतदेवमित्याह । सुप्तादयः स्वयमपि तदात्मीयविज्ञानं नावबुध्यंते न संवेदयंत्यतिसूक्ष्मत्वादिति गाथार्थः ॥

आह । यदि तैरपि सुप्तादिभिस्तदात्मीयज्ञानं न संवेद्यते तर्हि तत्तेषामस्तीत्येतत्कथं लक्ष्यते इत्याह–

लक्खिज्जइ तं सिमिणायमाणवयणाइदाणचेट्ठाहिं ।
जं नाम इ सव्वाओ विज्जंते वयणचेट्ठाओ ॥

तत्सुप्तादीनां ज्ञानमस्तित्वेनोपलक्ष्यते कुतः स्वप्नायमानवचनदानादिचेष्टाभ्यः सुप्तादयोऽपि हि स्वप्नायमानाद्यवस्था

यां केचित्किमपि भाषमाणा दृश्यंते शब्दिताश्चौघतो वाचं प्रयच्छंति संकोचविकोचांगभंगजृंभितकूजनकंडूयनादिचेष्टाश्च कुर्वंति । न च तास्ते तदावेदयंते । नापि च प्रबुद्धाः स्मरंति । तर्हि कथं तच्चेष्टाभ्यस्तेषां ज्ञानमस्तीति लक्ष्यत इत्याह (जमित्यादि) यद्यस्मात्कारणान्नामतिपूर्वास्ता वचनादिचेष्टा विद्यंते किंतु मतिपूर्विका एव नान्यथा काष्ठादीनामपि तत्प्रसंगात्ततस्ताभ्यस्तत्तेषामस्तीति लक्ष्यत एव । धूमादग्निरिवेति गाथार्थः ॥

आह ननु चात्मीयमपि चेष्टितं किं कश्चिन्न जानाति येन सुप्तादीनां स्वचेष्टितासंवेदनमुच्यत इत्याशंक्याह ( जमित्यादि )

जगंतोवि न याणइ छउमत्थो हिययगोयरं सव्वं ।
जं तज्झवसाणाइं जमसं खिज्जाइं दिवसेणं ॥ १७ ॥

हृदयमनोगोचरस्थानं यस्य तत् हृदयगोचरमध्यवसायनिकुरंबमिति गम्यते । तज्जाग्रदपि छद्मस्थः सर्वपरिशेषं न जानाति न संवेदयते । आस्तां तावत्पुनः सुप्तः कुत इत्याह । अध्यवसानाध्यवसायस्थानरूपाणि केवलिगम्यानि सूक्ष्माणि । यत एकेनाप्यंतर्मुहूर्तेनासंख्येयानि यांत्यतिक्रामंति । किं पुनः सर्वेणापि दिवसेन न चैतानि छद्मस्थः सर्वाण्यपि संवेदयते ततश्च यथैतानि छद्मस्थैरसंवेद्यमानान्यपि केवलिदृष्टत्वात्सत्वेनाभ्युपगम्यंते तथा व्यञ्जनावग्रहज्ञानमपीति गाथार्थः ॥

आह ननु सुप्तादीनां सत् ज्ञानं वचनादिचेष्टभ्यो गम्यत इत्युक्तं तत्तावदभ्युपगच्छामः व्यञ्जनावग्रहे तु ज्ञानरूपतागमकं लिंगं न किंचिदुपलभामहेऽतो जडरूपत्वान्नासौ ज्ञानमिति ब्रूम इत्याशंक्याह ॥

जइ वण्णाणमसंखेज्जं समइ सद्दाइ दव्वसब्भावे ।
किह चरमसमयसद्दाइ दव्वविण्णाणसामत्थं॥ १८ ॥

वा शब्दः ;पातनासूचकः सा च कृतैव ततश्च हंत यद्यज्ञानं व्यञ्जनावग्रहः क्व सतीत्याह । असंख्येयसमयशब्दादिद्रव्यसद्भावेऽपि सतीत्यपिशब्दो गम्यते कथं तर्हि चरमसमयशब्दादिद्रव्याणां विज्ञानं जननसामर्थ्यं न कथंचिदित्यर्थः । इदमुक्तं भवति व्यञ्जनावग्रहे तावत्प्रतिसमयमसंख्येयान् समयान् यावच्छ्रोत्रादींद्रियैः सह शब्दादिविषयद्रव्याणि संबध्यंते ततश्च यद्यसंख्येयसमयान् यावच्छ्रोत्रादींद्रियैः सह शब्दादिविषयद्रव्यसंबंधसद्भावेऽपि सति व्यञ्जनावग्रहरूपं ज्ञानं नाभ्युपगम्यते । कथं तर्हि चरमसमये श्रोत्रादींद्रियैः सह संबद्धानां शब्दादिविषयद्रव्याणां परेणाऽप्यर्थावग्रहलक्षणविज्ञानजननसामर्थ्यमिष्यते । तदभ्युपगंतुं न युज्यते इति भावः । यदि हि शब्दादिविषयद्रव्याणां श्रोत्रादींद्रियैः सह संबंधे आदिसमयादेवारभ्य ज्ञानमात्रा काचित्प्रतिसमयमाविर्भवति नाभ्युपगम्यते । तर्हि चरमसमयेऽप्यकस्मादेवैषा न युज्यते तथा च सत्यर्थावग्रहादिज्ञानानामप्यनुदयप्रसंग इति गाथार्थः ॥

तथा हि–

जं सव्वहा न वीसुं सव्वेसु वि तन्न रेणुतिल्लं च ।
पत्तेयमणिच्छंतो किहमिच्छसि समुदये नाणं ॥१९ ॥

यद्वस्तु सर्वथा सर्वप्रकारैर्विष्वक्पृथक्नास्ति तत्समुदायेऽपि नाभ्युपगंतव्यं यथा रेणुकणनिकरे प्रतिरेणुकणमविद्यमानं तैलं एवं चेत्तर्हि त्वमपि प्रत्येकमनिच्छन् कथं समुदाये ज्ञानमिच्छसि । इदमुक्तं भवति । यदींद्रियविषयसंबंधस्य प्रथमसमयादारभ्य व्यंजनावग्रहसंबंधिनोऽसंख्येयान् समयान् यावत्प्रतिसमयं पुष्टिमाबिभ्रतीं ज्ञानमात्रां कांचिदपि नेच्छसि तर्हि चरमसमयशब्दादिविषयद्रव्यसंबंधेन संपूर्णे समुदायेऽपि कथं तामिच्छसि चरमसमयशब्दादिविषयद्रव्यसंबंधि यदर्थावग्रहज्ञानमभ्युपगम्यते । तदपि प्रत्येकमसच्चरमासिकताकणतैलवन्न प्राप्नोतीति भावः । तस्मात्तिलेषु तैलवत्सर्वेष्वपि समयेषु प्रत्येकं यच्च यावच्च ज्ञानमस्तीति प्रतिपत्तव्यमिति गाथार्थः ॥

किं च—

समुदायो जइ णाणं देसूणे समुदए कहं नत्थि ।
समुदाये वा भूयं कह देसे होज्ज तं सयलं ॥ २०० ॥

समुदायज्ञानवादिन् !यदि विषयद्रव्यसंबंधसमयानामसंख्येयानां समुदाये ज्ञानमर्थावग्रहलक्षणमभ्युपगम्यते । तर्हि चरमसमयलक्षणो योऽसौ देशस्तेन न्यूने समुदाये चरमैकसमयो नैष्वसंख्यातेषु समयेष्वित्यर्थः । तत्किं नास्ति समस्त्येव प्रमाणोपपन्नत्वात्तथाहि सर्वेष्वपिशब्दादिद्रव्यसंबंधसमयेषु ज्ञानमस्तीति प्रतिजानीमहे । ज्ञानोपकारिशब्दादिद्रव्यसंबंधसमयसमुदायैकदेशत्वादिति हेतुः । अर्थावग्रहसमयवदिति दृष्टांतः । अत्राह । ननु शब्दादिविषयोपादानसमयसमुदाये ज्ञानं केनाभ्युपगम्यते । येन समुदायैकदेशत्वात्प्रथमादिसमयेषु सर्वेष्वपि तत् प्रतिज्ञायते । मया ह्येकस्मिन्नेव चरमसमये शब्दादिद्रव्योपादाने ज्ञानप्रसव इत्याशंक्याह । समुदायो वा भूयमित्यादि । वशब्दो वाशब्दो वा पातनायां सा च कृतैव तत्र यद्येकस्मिन्नेव चरमसमये ज्ञानमभ्युपगम्यते । तदासौ सर्वसमयसमुदायापेक्षया तावदेकदेश एव । ततश्च तेनैकदेशेनाशेषसमुदाये यद्भूतं ज्ञानं तत्कथं हंत चरमसमयलक्षणे देशे अकस्मादेव सकलमखंडं भवेदप्रमाणोपपन्नत्वात्तथाहि नैकस्मिश्चरमशब्दादिद्रव्योपादानसमये ज्ञानमुपजायते । एकसमयमात्रशब्दादिद्रव्योपादानात् व्यंजनावग्रहाद्यसमयवदिति । स्यादेतच्चरमसमयेऽर्थावग्रहज्ञानमनुभवप्रत्यक्षेणाऽप्यनुभूयते । ततः प्रत्यक्षविरोधिनी प्रतिज्ञा तदयुक्तं चरमसमय एव समग्रं ज्ञानमुत्पद्यत इति भवतु प्रतिज्ञा तस्यैव प्रत्यक्षविरोधाच्चरमतंतौ समस्तपटेत्यादि वचनवत्तथासर्वेष्वपि शब्दादि द्रव्यसंबंधिसमयेषु ज्ञानमस्तीत्यादि पूर्वोक्तानुमानविरोधश्च भवत्पक्षस्येति गाथार्थः ॥

तस्मात्किमिह स्थितमित्याह—

तंतू पडोवगारी न समत्तपडो य समुदिया तओ ।
सव्वे सम्मत्तपडओ तह नाणं सव्वसमयेसु ॥१॥

यथा एकस्तंतुः पटोपकारी वर्तते तमंतरेणापि समग्रस्य तस्याभावान्न चासौ तंतुरेतावता समस्तपटो भवति पटैकदेशत्वात्तस्य समुदिताः पुनस्ते तंतवः सर्वे समस्तपटव्यपदेशभाजो भवंति । तथात्रापि सर्वेष्वपि समुदितेषु समयेषु ज्ञानं भवति नैकस्मिंश्चरमसमये ततश्चार्थावग्रहसमयात्

पूर्वसमयेषु तदेव ज्ञानमतीवास्फुटं व्यंजनावग्रह उच्यते। चरमसमये तु तदेव किंचित्स्फुटतरावस्थामापन्नमर्थावग्रह इति व्यपदिश्यते। अतो यद्यपि सुप्तमत्तमूर्छितादिज्ञानस्येव व्यक्तं तथाविधं व्यंजनावग्रहज्ञानसाधकं लिंगं नास्ति तथापि यथोक्तयुक्तितो व्यंजनावग्रहे सिद्धं ज्ञानमिति गाथार्थः। तत्त्वभेदपर्यायैर्व्याख्या तत्र तत्त्वं व्यंजनावग्रहस्य स्वरूपमुक्तं ॥

अथ तस्य भेदान्निरूपयितुमाह—

नयणमणोवज्जिंदियभेआउ वंजणोग्गहो चउहा।
उवघायाणुग्गहउं जं ताइ पत्तकारीणि ॥

स च व्यंजनावग्रहश्चतुर्द्धा भवति कुत इत्याह नयनमनोवर्जेन्द्रियभेदादिदमुक्तं भवति विषयस्येंद्रियस्य च यः परस्परं संबंधः प्रथममुपश्लेषमात्रं तद्व्यंजनावग्रहस्य विषयः स च विषयेण सहोपश्लेषः प्राप्यकारिष्वेव स्पर्शनरसनघ्राणश्रोत्रलक्षणेषु चतुर्ष्विन्द्रियेषु भवति न तु नयनमनसोरतस्ते वर्जयित्वा शेषस्पर्शनादींद्रियचतुष्टयभेदात्। चतुर्विध एव व्यंजनावग्रहो भवति नत्विंद्रियत्वे तुल्येऽपि केयं सुखपरीक्षिका। यच्चतुर्षु स्पर्शनादींद्रियेषु सोऽभ्युपगम्यते नान्यत्रेत्याह ( उवघायेत्यादि ) यद्यस्मात्तान्येव स्पर्शनरसनघ्राणश्रोत्रलक्षणानि चत्वारींद्रियाणि प्राप्तकारीणि न तु नयनमनसी ततो यथोक्तेंद्रियचतुष्कभेदाच्चतुर्विध एवासौ भवतीति काऽत्र सुखपरीक्षिकेति। तत्र विषयभूतं शब्दादिकं वस्तुप्राप्तं संश्लेषद्वारेणासादितं कुर्वंति परिच्छिंदंतीति प्राप्तकारीणि प्राप्यकारीणि स्पष्टार्थग्राहीणीत्यर्थः ॥ विशे०॥

( ४ ) अवग्रहप्ररूपणामाह ॥

( ६ ) प्रतिबोधक, मल्लक, दृष्टान्ताभ्यां च प्ररूपणां सहोपात्तत्वात्प्ररूपणया सहैव व्युत्क्रमेणाह ॥

( तत्थोग्गहो दुभेओ उग्गहणं जं होज्जवंजणत्थाणं। वंजणओ य जमत्थो तेणाई एतयं वोच्छमित्यादिना ) ग्रंथेन प्रतिज्ञातव्यंजनावग्रहस्वरूपप्रतिपादनं चेह प्रकृतं तस्य च व्यंजनावग्रहस्य स्वरूपं नंद्यध्ययनागमसूत्रे प्रतिबोधकमल्लकोदाहरणाभ्यां प्रतिपादितं तद्यथा—

"वंजणुग्गहस्स परूवणं करिस्सामि। पडिबोहगदिठ्ठंतेणं मल्लगदिठ्ठंतेण य से किं तं पडिबोहगदिठ्ठंतेणं २ से जहा नाम ए केइ पुरिसे कंचिपुरिसं सुत्तं पडि बोहिज्जा अमुगा अमुगत्ति तत्थ चोयगे पण्णवगं एवं वयासी किं एग समयपविठ्ठा पुग्गला गहणमागच्छंति दुसमयपविठ्ठा पुग्गला गहणमागच्छंति जाव दससमयपविठ्ठा पुग्गला गहणमागच्छंति। संखिज्जसमयपविठ्ठा पुग्गला गहणमागच्छंति च असंखिज्जसमयपविठ्ठा पुग्गला गहणमागच्छंति एवं वदंतं चोयगं पण्णवए एवं वयासी नो एगसमयपविठ्ठा पुग्गला गहणमागच्छंति नो दुसमयपविठ्ठा पुग्गला गहणमागच्छंति जाव नो दससमयपविठ्ठा पुग्गलागहणमागच्छंति नो संखिज्जसमयपविठ्ठा पुग्गला गहणमागच्छंति असंखिज्जसमयपविठ्ठा पुग्गला गहणमागच्छंति से तं पडिबोहगदिठ्ठंतेणं से किं तं मल्लगदिठ्ठंतेणं मल्लगदिठ्ठंतेणं से जहा नाम एकेइ पुरिसे आवागसीसाओ मल्लगगहायतत्थेगं उदगबिंदू पक्खिविज्जा- से नठ्ठे अण्णेवि पक्खित्त सेवि नठ्ठे एवं पक्खिप्पमाणेसु पक्खिप्पमाणेसु होही से उदगबिंदू जेणं तं मल्लगं रवेहिइत्ति होइसे उदगबिंदू जेणं तंसि मल्लगं सिठ्ठाहिति होहीसे उदगबिन्दू जेणं तं मल्लगं भरिहित्ति होहीसे उदगबिन्दू जेणं तं मल्लगंपवाहेहित्ति एवामेव पक्खिप्पमाणेहिं २ अणन्तेहिं पुग्गलेहिं जाहेतं वंजणं पूरियं होही ताहे हुन्ति करेइ नो चेवणं जाणइ केवि एससद्दाए तओ इत्यादि" इदं च सूत्रं नंदिविवरण एवेत्थं व्याख्यातं तद्यथा। प्रतिबोधकमल्लकदृष्टांताभ्यां व्यंजनावग्रहस्य प्ररूपणं करिष्यामि। तत्र प्रतिबोधयतीति प्रतिबोधकः स एव दृष्टांतस्तेन तद्यथा नाम कश्चिदनिर्दिष्टस्वरूपः पुरुषः कंचिदन्यमनिर्दिष्टस्वरूपमेव पुरुषं सुप्तं संतं प्रतिबोधयेत्कथमित्याह- अमुक अमुकेति तत्र प्रेरकः प्रज्ञापकमेवं समवादीत्किमेकसमयप्रविष्टा इत्यादि। एवं वदंतं प्रेरकं प्रज्ञापक एक एवमुक्तवान्नो एकसमयप्रविष्टा इत्यादि प्रकटार्थं यावन्नो संख्येयसमयप्रविष्टाः पुद्गला ग्रहणमागच्छंति। नवरमयं प्रतिषेधशब्दविज्ञानग्राह्यतामधिकृत्य वेदितव्यः। शब्दविज्ञानजनकत्वेनेत्यर्थः। अन्यथा संबंधमात्रमधिकृत्य प्रथमसमायादारभ्य पुद्गला ग्रहणमागच्छंत्येव ( असंखेज्ज इत्यादि ) प्रतिसमयप्रवेशनादित आरभ्यासंख्येयसमयैः प्रविष्टाः असंख्येयसमयप्रविष्टाः पुद्गलाः शब्दद्रव्यविशेषा ग्रहणमागच्छंति। अर्थावग्रहज्ञानहेतवो, भवंतीति भावः इह च चरमसमयप्रविष्टा एव विज्ञानजनकत्वेन ग्रहणमागच्छंति। तदन्येत्विंद्रियक्षयोपशमोपकारिण इति सर्वेषां सामान्येन ग्रहणमुक्तं सेयं प्रतिबोधकदृष्टांतेन व्यंजनावग्रहणप्ररूपणेति वाक्यशेषः। अथ केयं मल्लकदृष्टांतेन प्ररूपणा तद्यथा नाम कश्चित्पुरुषः अवाक्शिरसं मल्लकं शरावं गृहीत्वा रुद्धमिदं भवतीति अस्य ग्रहणं तत्र मल्लके एकं उदकबिंदुं प्रक्षिपेत्स नष्टस्तत्रैव तद्भावपरिणतिमापन्न इत्यर्थः। शेषं सुबोधं ( जावज्जेणं तं मल्लगं पवेहिति ) आर्द्रतां नेष्यति शेषं सुबोधं नवरं ( पवाहेहिति ) प्लावयिष्यति एवमेवेत्यादि अत्र बहुत्वात्प्रतिसमयमनंतैः शब्दपुद्गलैः यदा तद्व्यंजनं पूरितं भवति तदा हुमिति करोति तमर्थं गृह्णातीत्युक्तं भवति। किं विशिष्टं नामजात्यादिकल्पनारहितं अत एवाह ( नो चेव णं जाणइ केवेस सद्दा इति ) न पुनरेवं जानाति क एष शब्दादिरित्याह एवं च सति सामायिकत्वादर्थावग्रहस्य अर्थावग्रहात्पूर्वं सर्वो व्यंजनाऽवग्रहः तदेवमस्य व्यंजनाऽवग्रह स्वरूपप्रतिपादकस्य नंदिसूत्रस्य शेषं प्रायः सुगममिति मन्यमानो भाष्यकारः ( जा हेतं वंजणं पूरियं हो ) इत्येतद्व्याचिख्यासुराह ॥

तोएण मल्लगं पिव वंजणमापूरियंति जं भणियं।
तं दव्वमिंदियं वा तस्संजोगो व न विरुद्धं जं भणियं ॥

यदुक्तं नंदिसूत्रकारेण किं तदित्याह व्यञ्जनमापूरितमिति केन किंचिदित्याह। तोयेन जलेन मल्लकं शरावं तद्वदिति तस्मिन् सूत्रकारभणिते व्यञ्जनं द्रव्यं गृह्यते इंद्रियं वा तयोर्वा द्रव्येंद्रिययोः संयोगः संबंध इति सर्वथाऽप्यविरोधः इद मुक्तं भवति व्यञ्जनशब्देन शब्दादिविषयपरिणतपुद्गलसमूहरूपं द्रव्यं श्रोत्रादींद्रियं वा द्रव्येंद्रिययोः सं-

बंधो वा गृह्यते न कश्चिद्विरोधः । व्यज्यते प्रकटीक्रियते विवक्षितोऽर्थोऽनेनेति व्यञ्जनमित्यस्य व्युत्पत्तिः सर्वत्र घटनादिति गाथार्थः ॥

केवलं द्रव्यादिषु अपि व्यञ्जनशब्दवाच्येषु प्रत्येकमापूरितत्वे विशेषो द्रष्टव्यः कः पुनरसावित्याह–

दव्वं माणं पूरिय मिंदियं तहा दोण्हं ।
अवरोप्परसंसग्गो जया तया गिण्हइ तमत्थं ॥ २५० ॥

( दव्वत्ति ) यदा द्रव्यव्यञ्जनमधिक्रियते तदा ( जाहे तं वंजणापूरियं होइति ) कोऽर्थ इत्याह । ( माणं पूरियंति ) मानं तस्य शब्दादिद्रव्यस्य च प्रमाणं प्रतिसमयप्रवेशनप्रभृतिकृतत्वात्स्वप्रमाणमानीतं प्रकर्षमुपनीतं स्वग्राहकज्ञानजनने समर्थीकृतमिति यावत् यदातिंद्रियमिति इंद्रियं व्यञ्जनमधिक्रियते तदा २ ( जाहे तं वंजणं पूरियं होइत्ति ) किमुक्तं भवतीत्याह ( आपूरियंति ) आपूरितं व्याप्तं भृतं वासितमित्यर्थः तथा ( दोण्हंति ) द्वयोः श्रोत्रादींद्रियशब्दादिपरिणतद्रव्ययोः संबंधो यदि व्यञ्जनमधिक्रियते तदा ( जाहे तं वंजणं पूरियं होइत्ति ) किमुक्तं भवतीत्याह ( अवरोप्परं संसग्गोत्ति ) सम्यग् सर्गो योगः संसर्गः सम्यक् सबध ससर्गः इदमत्र हृदयं अस्मिन्पक्षे यदा तयोरिंद्रियद्रव्ययोः परस्परमतीव संयुक्ततांगांगिभावेन परिणामो भवति तथा प्रस्तुतसंबंधलक्षणं व्यञ्जनमापूरितं भवतीत्युच्यते इति । ( जया तया गिण्हइ तमत्थंत्ति ) एवं यदा त्रिविधमपि व्यञ्जनप्रकारत्रयेण पूरितं भवति तदा तं विवक्षितं शब्दादिकमर्थमव्यक्तं नाम जात्यादिकल्पना रहितं गृह्णाति । एतच्च ( ताहेहुत्ति करेई ) त्यस्य व्याख्यानं अर्थावग्रहश्चायमेकसमायिको विज्ञेय इतरस्तु पूर्वमंतर्मुहूर्त्त द्रव्यप्रवेशादिरूपो व्यञ्जनावग्रहोऽवसेय इति गाथार्थः ॥ २५० ॥

किं विशिष्टं पुनस्तमर्थं गृह्णातीत्याशंक्य स्वत एव भाष्यकारस्तत्स्वरूपमाह—

सामण्णमणिद्देसं सरूवनामाइ कप्पणारहियं ।
जइ एवं जं तेणं गहिए सदिति तं किहणु ॥२५१॥

ग्राह्यवस्तुनः सामान्यविशेषात्मकत्वे सत्यप्यर्थावग्रहेण सामान्यरूपमेवार्थं गृह्णाति न विशेषरूपं अर्थावग्रहस्यैकसामयिकत्वात् समयेन च विशेषग्रहणायोगादिति सामान्यार्थश्च कश्चित् ग्रामनगरवनसेनादिशब्देन निर्देश्योऽपि भवति तद्व्यवच्छेदार्थमाह अनिर्देश्यं केनापिशब्देनानभिलप्यं कुतः पुनरेतदित्याह यतः स्वरूपनामादिकल्पनारहितं आदिशब्दाज्जातिक्रियागुणद्रव्यपरिग्रहः तत्र रूपरसाद्यर्थानां य आत्मीयचक्षुरादींद्रियगम्यः प्रतिनियतः स्वभावस्तत्स्वरूपं रूपरसादिकस्तु तदभिधायको ध्वनिर्नाम । रूपत्वरसत्वादिका तु जातिः प्रीतिकरमिदं रूपं पुष्टिकरोऽयं रस इत्यादिकस्तु शब्दक्रियाप्रधानत्वात् क्रियायाः कृष्णनीलादिकस्तु गुणाः पृथिव्यादिकं पुनर्द्रव्यं एतेषां स्वरूपनामजात्यादीनां कल्पना अंतर्जात्याकारतज्ञानरूपा तया रहितमेवार्थमर्थावग्रहेण गृह्णाति यतो जीवस्तस्मादनिर्देश्योऽयमर्थः प्रोक्ततत्कल्पनारहितत्वेन स्वरूपनामजात्यादिप्रकारेण केनापि निर्देष्टुमशक्यत्वादिति एवमुक्ते सति परः प्राह । ( जइ एव मित्यादि ) यदि स्वरूपनामादिकल्पनारहितोऽर्थोऽर्थविग्रहस्य विषय इत्येवं व्याख्यायते भवद्भिस्तर्हि ( जंति ) यन्नंद्यध्ययनसूत्रे प्रोक्तं किमित्याह ( तेणं गहिएसद्दित्ति ) उपलक्षणत्वादित्येतत्संपूर्णं द्रष्टव्यं "से जहा नाम एकेइ पुरिसे अव्वत्तं सद्दं सुणेज्जा तेणं सद्देत्ति उग्गहिए नउणं जाणइ केये से सद्दा इति तं किहणुत्ति" तदेतत्कथमविरोधनं नीयते युष्मद्व्याख्यानेन सह विरुद्ध्यत एवेदमित्यर्थः । तथा ह्यस्मिन्नंदिसूत्रेऽयमर्थः प्रतीयते यथा तेन प्रतिपन्नार्थावग्रहेण शब्दोऽत्र गृहीत इति भवंतस्तु शब्दाद्युल्लेखरहितं सर्वथा अमुं प्रतिपादयंति ततः कथं न विरोध इति भाव इति गाथार्थः ॥

अत्रोत्तरमाह—

सद्देत्ति भणइ वत्ता तम्मत्तं वा न सद्दबुद्धीए ।
जइ होज्ज सद्दबुद्धीतो वाउचेव सो होज्जा ॥

शब्दस्तेनावगृहीत इति यदुक्तं तत्र इति शब्द इति वक्ता प्रज्ञापकः सूत्रकारो भणति प्रतिपादयति अथवा तन्मात्रं शब्दमात्रं रूपरसादिविशेषव्यावृत्याऽनवधारितत्वाच्छब्दतया निश्चितं गृह्णातीत्येतावतांशेन शब्दस्तेनावगृहीत इत्युच्यते न पुनः शब्दबुद्ध्या शब्दोऽयमित्यध्यवसायेन शब्दवस्तु तेनावगृहीतं शब्दोल्लेखस्यांतर्मुहूर्तिकत्वादर्थावग्रहस्य त्वेकसामायिकत्वादसंभव एवायमिति भाव यदि पुनरर्थावग्रहे शब्दबुद्धिः स्यात्तर्हि को दोषः स्यादित्याशंक्य सूत्रकारः स्वयमेव दूषणांतरमाह ( जईत्यादि ) यदि पुनरर्थावग्रहे शब्दबुद्धिः शब्दनिश्चयः स्यात्तदाऽपाय एवासौ स्यान्न त्वर्थावग्रहो निश्चयस्यापायस्वरूपत्वात्ततश्चार्थावग्रहेहाभाव एव स्यान्न चैतदृष्टमिष्टं चेति गाथार्थः । अत्राह परः । ननु प्रथमसमय एव रूपादिव्यपोहेन शब्दोऽयमिति प्रत्ययोऽर्थावग्रहत्वेनाभ्युपगम्यतां शब्दमात्रत्वेन सामान्यत्वादुत्तरकालं तु प्रायो माधुर्यादयः शंखशब्दधर्म्मा इह घटंते ननु शार्ङ्गधर्माः खर्कशत्वादय इति विमर्शबुद्धिरीहा तस्माच्छांख एवायं शब्द इति तद्विशेषस्त्वपायोऽस्तु तथा च सति ( तेणं सद्देति उग्गहिए ) इदं यथा श्रुतमेव व्याख्यायते ( नो चेवणं जाणइ केवे सद्दाइ तओ इहं पविस ) इत्याद्यपि सर्वमविरोधेन गच्छतीति तदेतत्परोक्तं सूरिः प्रत्यनुभाष्य दूषयति तद्यथा ॥

जइसद्द बुद्धिमेतयमवग्गहो तव्विसेसण मया उ ।
नणु सद्दो नासद्दो नइ रूवाइविसेसोयं ॥

भोःपर ! यदि शब्दबुद्धिमात्रं शब्दोऽयमिति निश्चयज्ञानमपि भवतार्थाऽवग्रहोऽभ्युपगम्यते तद्विशेषणं विशेषः शांख एवायं शब्द इत्यादि विशेषज्ञानमित्यर्थः अपायो मतिज्ञानतृतीयो भेदोऽगीक्रियते हंत तर्हि अवग्रहलक्षणस्य तदा भेदस्याभावप्रसंगः प्रथमत एवावग्रहमतिक्रम्याभ्युपगमात्कथं पुनः शब्दज्ञानमपाय इति चेदुच्यते । तस्यापि विशेषग्राहकत्वाद्विशेषज्ञानस्य च भवताप्यपायत्वेनाभ्युपगतत्वात् ननु शांख एवायं शब्द इत्यादिकमेव तदुत्तरकालभाविज्ञानं विशेषग्राहकं शब्दज्ञाने तु शब्दसामान्यस्यैव इति

भासनात्कथं विशेषः प्रतिभासो येनापायप्रसंगः स्यादित्याह (ननु इत्यादि) नन्वित्यक्षमायां परामर्शे वा ननुशब्दोऽयं नाशब्द इति विशेषोऽयं विशेषप्रतिभास एवाऽयमित्यर्थः । कथं पुनर्नाशब्द इति निश्चीयते इत्याह न च रूपादिरिति च शब्दो हि शब्दार्थे आदिशब्दाद्गंधरसस्पर्शपरिग्रहः ततश्चेदमुक्तं भवति यस्मान्न रूपादिरयं तेभ्यो व्यावृत्तत्वेन गृहीतत्वादतो नाशब्दोऽयमिति निश्चीयते । यदि तु रूपादिभ्योऽपि व्यावृत्तिर्गृहीता न स्यात्तदा शब्दोऽयमिति निश्चयोऽपि न स्यादिति भावः । तस्माच्छब्दोऽयं नाशब्द इति विशेषप्रतिभास एवाऽयं तथा च सत्यस्याप्यपायप्रसंगतोऽवग्रहाभावप्रसंग इति स्थितमिति गाथार्थः ॥

अथ परोऽवग्रहापाययोर्विषयविभागं दर्शयन्नाह—

थोवमियं नावाउ संखाइ विसेसणं तवाउत्ति ।
तब्भेया विक्खाए नगु थोवमियं पि नावाओ ॥

इदं शब्दबुद्धिमात्रकं शब्दमात्रस्तोकविशेषावसायित्वात् स्तोकं स्तोकविशेषग्राहकं अतोऽपायो न भवति किं त्ववग्रह एवाऽयमिति भावः कः पुनस्तर्ह्यपाय इत्याह ॥ संखा इत्यादि शांखोऽयं शब्द इत्यादि विशेषणविशिष्टं यज्ज्ञानं तदपायो बृहद्विशेषावसायित्वादिति, इदयं हंत यद्यतः स्तोकं तत्तन्नापायस्तर्हि निवृत्ता सांप्रतमपायज्ञानकथा उत्तरोत्तरार्थविशेषग्रहणापेक्षया पूर्वपूर्वार्थविशेषावसायस्य स्तोकत्वादेतदेवाह ( तब्भेयेत्यादि ) तस्य शांखशब्दस्य ये उत्तरोत्तरभेदाः मंद्रमधुरत्वादयः तरुणमध्यवृद्धस्त्रीपुरुषसमुत्थत्वादयश्च तदपेक्षायां सत्यामिदमपि शांखोयं शब्द इत्यादि ज्ञानं न तु स्तोकं स्तोकविशेषग्राहकंभवेति नाऽपायः स्यादेवमुत्तरोत्तरविशेषग्राहिणामपि ज्ञानानां तदुत्तरोत्तरभेदापेक्षया स्तोकत्वादपायत्वाभावो भावनीय इति गाथार्थः ॥

तमेवाऽपायाभावं स्फुटीकुर्वन्नाह—

इय सुबहुणा वि कालेण सव्वभेयावहारणमसज्झं ।
जंमि हवेज्ज अवाओ सव्वोच्चिय उग्गहो नाम ॥

इति शब्द उपप्रदर्शनार्थस्ततश्चेदमुक्तं भवति यथा शांखोऽयं शब्द इत्यस्यां बुद्धौ शब्दगतभेदावधारणं सांप्रतमसाध्यमंद्रमधुरत्वादि तदुत्तरोत्तरभेदबाहुल्यसंभवात्तथा च मति स्तोकत्वान्नेयं बुद्धिरपायः किंत्वर्थाऽवग्रह इत्येवं सुबहुनाऽपि कालेन सर्वेणाऽपि पुरुषायुषेण शब्दगतमंद्रमधुरत्वाद्युत्तरोत्तरभेदावधारणमसाध्यं तद्भेदानामनंतत्वादशक्यमित्यर्थः । यस्मिन् भेदाऽवधारणे किमित्याह । यस्मिन्नपायो भवेदन्यभेदाकांक्षानिवृत्तेर्यस्मिन् भेदाऽवधारणज्ञानेऽपायत्वं व्यवस्थाप्येत इति भावः । तस्मात्सर्वोऽपि भेदप्रत्यय उत्तरोत्तरापेक्षया त्वदभिप्रायेण स्तोकत्वादर्थावग्रह एव प्राप्नोति नाऽपायः शब्दज्ञानवदिति गाथार्थः ।

किं च शब्द एवायमिति ज्ञानं स्तोकत्वादर्थावग्रहत्वेन भवतोऽभिमतं ततः पूर्वमीहामंतरेण न संभवति तत्पूर्वकत्वे च तस्याऽर्थावग्रहत्वाऽसंभव इति दर्शयन्नाह ।

किं सद्दो किमसद्दो चणीहिए सद्दए व किं जुत्तं ।
अह पुव्वमीहिऊणं सद्दोत्ति मयं तई पुव्वं ॥

किं शब्दोऽयमाहोश्विदशब्दो रूपादिरित्येवं पूर्वमनीहिते यच्छब्द एवेति निश्चयज्ञानं तदकस्मादेव जायमानं कथं युक्तं विमर्शपूर्वकत्वमंतरेण नेदं घटत इत्यर्थः । इदमुक्तं भवति । शब्दगतान्वयधर्मेषु रूपादिभ्यो व्यावृत्तौऽवहीतायां शब्द एवेति निश्चयज्ञानं युज्यते तद्ग्रहणं च विमर्शमन्तरेण नोपपद्यते विमर्शश्च ईहा तस्मादीहामन्तरेणायुक्तमेव शब्द एवेति निश्चयज्ञानं अथ निश्चयकालात्पूर्वमीहितत्वात् भवतापि शब्द एवायमिति निश्चयज्ञानमभिहितं हंत तर्हि निश्चयज्ञानात्पूर्वं ( तई ) असौ ईहा भवद्वचनतोऽपि सिद्धेति गाथार्थः ॥

यदि नाम निश्चयज्ञानात्पूर्वमीहा सिद्धा ततः किमित्याह ।

किं तं पुव्वं गहियं जमीहओ सद्दए व विण्णाणं ।
अह पुव्वं सामण्णं जमिहमाणस्स सद्दोत्ति ॥

हंत यदि निश्चयज्ञानमीहापूर्वकं त्वयाभ्युऽपगम्यते तर्हि प्रष्टव्योऽसि न त्वीहायाः पूर्वं किं तद्वस्तु प्रमात्रा गृहीतं यदीहमानस्य तस्य शब्द एवायमिति निश्चयज्ञानमुपजायते न हि कश्चिद्वस्तुन्यऽगृहीतेऽकस्मात्प्रथमं एव ईहां कुरुत इति भावः क्षुभितस्य परस्योत्तरप्र[illegible]सामर्थ्यमालोक्य स्वयमेव तन्मत[illegible]ऽथ ब्रूयात्परः सामान्यं नाम [illegible]त्वादिकल्पनारहितं वस्तुमात्रमीहायाः पूर्वं गृहीतं यदीहमानस्य शब्द इति निश्चयज्ञानमुत्पद्यत इति गाथार्थः ॥

अथेहायाः पूर्वं सामान्यग्रहणे परेणोष्यमाणे सूरिः स्वसमीहितसिद्धिमुपदर्शयन्नाह—

अत्थोग्गहओ पुव्वं होयव्वं तस्स गहणकालेण ।
पुव्वं च तस्स वंजणकालो सो अत्थपरिसुणो ॥

नन्वीहायाः पूर्वं सामान्यं गृह्यते तस्य तावद्ग्रहणकालेन भवितव्यं स चास्मदभ्युपगतसामायिकार्थाऽवग्रहकालरूपो न भवति अस्मदभ्युपगतांऽगीकारप्रसंगात्किं तर्हि अस्मदभ्युपगतार्थाऽवग्रहात्तत्पूर्वमेव भवदभिप्रायेण तस्यासामान्यस्य ग्रहणकालेन भवितव्यं पूर्वं च तस्मादभ्युपगतार्थाऽवग्रहस्य व्यंजनकाल एव वर्त्तते व्यंजनानां शब्दादिद्रव्याणामिंद्रियमात्रेणादानकाले पदमध्यलोपाद्व्यंजनकालः । भवत्वेवं तथाऽपि तत्रसामान्याऽर्थग्रहणं भविष्यतीत्याशंक्याह स च व्यंजनकालोऽर्थपरिशून्यः न हि तत्र सामान्यरूपो विशेष्यरूपो वा कश्चनाप्यर्थः प्रतिभासते तदमनोरहितेंद्रियमात्रव्यापारात्तत्र चार्थप्रतिभासाऽयोगात्तस्मात्पारिशेष्यादस्मदभ्युपगतार्थाऽवग्रह एव सामान्यग्रहणमिति गाथायामनुक्तमपि स्वयमेव द्रष्टव्यं तदनंतरं चान्वयव्यतिरेकधर्मपर्यालोचनरूपा ईहा तदनंतरं च शब्द एवाऽयमिति निश्चयज्ञानमपाय इति सर्वं सुस्थं भवतीति गाथार्थः ।

अथ प्रथममेवाऽर्थाऽवग्रहज्ञाने शब्दाऽग्रहणे परः पुनरपि दोषमाह—

जइ सद्दोत्ति न गहियं न जाणइ जं कए स सद्दोत्ति ।
तमजुत्तं सामण्णग्गाहिए मग्गिज्जइ विसेसो ॥

यद्यथाऽवबोधसमये प्रथममेव शब्दोऽयमिति एवं तद्वस्तु न

गृहीतं तर्हि न ( उणं जाणइ के वेस सद्देति जंति, ) यत्सूत्रे निर्दिष्टं तदयुक्तं प्राप्नोति यस्माच्छब्दसामान्ये रूपादिव्यावृत्ते गृहीते सति पश्चान्मृग्यतेऽन्विष्यते विशेषः किमयं शब्दः शांखः उत शार्ङ्ग इति इदमुक्तं भवति।"न उणं जाणइ केवेस सद्देति" अस्मिन् नंदिसूत्रे न पुनर्जानाति कोऽप्येष शांखशार्ङ्गाद्यन्यतरशब्द इति विशेषस्यैवाऽपरिज्ञानं उक्तं । चाशब्दसामान्यमात्रग्रहणं त्वनुज्ञातमेव तद्ग्रहणे तु क एष शब्दः किं शांखः शार्ङ्गो वेत्येवं विशेषमार्गणमसंगतमेव स्याद्विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वाच्छब्दसामान्ये गृहीत एव तद्विशेषमार्गणस्य युज्यमानत्वादिति गाथार्थः ।

अत्रोत्तरमाह—

सव्वत्थ देसयंतो सद्दो सद्दोत्ति भासओ भणइ ।
इहरा न समयमित्ते सद्दोत्ति विसेसणं जुत्तं ॥

सर्वत्र पूर्वस्मिन्नत्र च सूत्रावयवेऽवग्रहस्वरूपं प्रदेशयन् प्ररूपयन् शब्दाशब्द इति भाषकप्रज्ञापक एव न तु तत्र ज्ञाने शब्दप्रतिभासोऽस्ति। इत्थं चैतदन्यथा न समयमात्रेऽर्थावग्रहकाले शब्द इति विशेषणं युक्तं आंतर्मुहूर्तिकत्वाच्छब्दनिश्चयस्येति प्रागेवोक्तं सांव्यवहारिकार्थाऽवग्रहापेक्षं वा सूत्र [illegible] व्याख्यास्यत इति मा त्वरिष्ठा इति गाथार्थः ।

अथ सूत्राव[illegible]दितं परं दृष्ट्वा सौत्रमेव परिहारमाह—

अहव सुपच्चिय भणियं तेइ [illegible] सद्दमव्वत्तं ।
अव्वत्तमणिद्देसं सामण्णं कप्पणारहियं ॥

अथवा यदि तव गाढः श्रुतावष्टंभस्तथा तत्राप्येत द्भणितं यदुत प्रथमं अव्यक्तस्यैव शब्दोल्लेखरहितस्य शब्दमात्रस्य ग्रहणं केन पुनः सूत्राऽवयवेनेदमुक्तमित्याह ( अह कोइ सुणेज्ज सद्दमव्वत्तति ) अयश्चसूत्रावयवो नन्द्यध्ययने इत्थं द्रष्टव्यः "से जहा नामएकेविरिसे अव्वत्तं सद्दं सुणेज्जति" अत्राऽव्यक्तमिति कोऽर्थ इत्या: अनिर्देश्यं शब्दोऽयं रूपादिर्वा इत्यादिना प्रकारेणाव्यक्तमेत्यर्थः । ननु यदि शब्दादिरूपेणानिर्देश्यं तर्हि किं तदित्याह । सामान्यं किमुक्तं भवतीत्याह नाम जात्यादिकल्पनारहितं न च वक्तव्यं शांखशार्ङ्गभेदापेक्षया शब्दोल्लेखस्याप्यव्यक्तत्वे घटमाने कुत इदं व्याख्यानं लभ्यत इति अवग्रहस्यानाकारोपयोगरूपतया सूत्रेऽधीतत्वादनाकारोपयोगस्य च सामान्यमात्रविषयत्वात्प्रथममेवाऽपायप्रसक्त्यावग्रहेहाभावप्रसंग इत्याद्युक्तत्वाच्चेति गाथार्थः ।

अथ सूरिरेव पराभिप्रायमाशिशंकिषुराह ।

अहवमइ पुव्वं चिय सो गहिउं वंजणोग्गहे तेणं ।
जं वंजणोग्गहम्मि विभणियं विण्णाणमव्वत्तं ॥

अथ परस्य मतिः स्यात्केयमित्याह । सोऽव्यक्तोऽनिर्देश्यादिरूपः शब्दोऽर्थावग्रहात्पूर्वमेव व्यंजनावग्रहे तेन श्रोत्रा गृहीतस्तत्किमित्यवग्रहेऽपि तद्ग्रहणमुद्घुष्यते कथमिदं पुनर्ज्ञायते यदुतासौ व्यजनाऽवग्रहे गृहीत इत्याह ( जमित्यादि ) यद्यस्माद्व्यंजनाऽवग्रहेऽपि भवद्भिरव्यक्तं विज्ञानमुक्तं अव्यक्तार्थविषयग्रहण एव वा वक्तव्यं तस्योपपद्यत इति गाथार्थः ।

अत्रोत्तरमाह—

अत्थितयं अव्वत्तं न उ तं गिण्हइ सयंपि सो भणियं ।
नउ अगि हयम्मि जुज्जइ सद्दोति विसेसणं बुद्धी ॥

अस्ति तदव्यक्तं श्रोतुर्व्यंजनावग्रहे ज्ञानं न तस्यास्माभिरपलापः क्रियते न पुनरसौ श्रोता अतिसौक्ष्म्यात्तत्स्वयमपि गृह्णाति संवेदयते एतच्च प्रागपि भणितं "सुत्तमत्ताइ सुहुमबोहोवत्ति" वचनात्तथा ( सुत्तादयो सयंविय विण्णाणं णावबुज्झंतीति) । वचनाच्च तस्माद्व्यंजनमात्रस्यैव तत्र ग्रहणं न शब्दस्य व्यंजनावग्रहत्वान्यथाऽनुपपत्तेरेवेति । न च सामान्यरूपतया व्यक्ते शब्देऽगृहीतेऽकस्मादेव शब्द इति विशेषणबुद्धिर्युज्यतेऽनुस्वारस्यालाक्षणिकत्वाद्विशेषबुद्धिरित्यर्थः । अस्यां च विशेषबुद्धौ प्रथममेवेष्यमाणायां आदावेवार्थावग्रहकालेऽप्यपायप्रसंग इत्यसकृदेवोक्तमितिगाथार्थः॥

ननु यदि व्यंजनाऽवग्रहेऽप्यव्यक्तशब्दग्रहणं भवेत्तदा को दोषः स्यादित्याह—

अत्थोत्ति विसयग्गहणं जइ तम्मि वि सो न वंजणं नाम ।
अत्थोग्गहो चिय ततो अविसेसो संकरो वात्रि ॥

अर्थाऽवग्रहेऽर्थ इत्यनेन तावद्विषयग्रहणमभिप्रेतं रूपादिभेदे निर्द्धारितस्याव्यक्तस्य शब्दादेर्विषयस्य ग्रहणं तत्राऽभिप्रेतमित्यर्थः । यदि च तस्मिन्नपि व्यंजनाऽवग्रहेऽसावव्यक्त शब्दः प्रतिभासत इत्यभ्युपगम्यते तदा न व्यंजनं नाम व्यंजनाऽवग्रहो न प्राप्नोतीत्यर्थः । ततश्चेदानीं निवृत्ता [illegible] व्यंजनमात्रसंबंधस्यैव तत्रोक्तत्वाद्भवता च तदति र्थग्रहणे किमसौ स्यादित्याह [illegible]अभिधीयमानत्वादिति।तर्ह्यव्यक्ता ऽर्थावग्रहणात्तत्र नास्ति व्यंजनाऽवग्रहः अथास्याऽपि सूत्रे प्रोक्तत्वादस्तित्वं न परिह्रियते । तर्हि द्वयोरप्यविशेषः सोऽप्यर्थावग्रहः सोऽपि व्यंजनावग्रहः प्राप्नोतीति भावः । मेचकमणिप्रभावत्संकरो वा स्यादिच्छेदिति गाथार्थः ॥

तदेवं व्यंजनाऽवग्रहे व्यंजन संबंधमात्रमेव अर्थाऽवग्रहे त्वव्यक्तशब्दाद्यर्थग्रहणेन व्यक्तशब्दाद्यर्थसंवेदनमिति प्रतिपादितं सांप्रतमुपपत्यंतरेणाप्यर्थाऽवग्रहे व्यक्तशब्दार्थसंवेदननिराचिकीर्षुराह—

जे णत्थोग्गहकाले गहणेहावायसंभवो नत्थि ।
तो नत्थि सद्दबुद्धी अहात्थिनावग्गहो नाम ॥

पूर्वं तावदर्थस्य ग्रहणमात्रं ततश्चेहा तदनंतरं त्ववुपाय इत्येवं मतिज्ञानस्योत्पत्तिक्रमः न चैतत्त्रितयं प्रथममेवशब्दार्थेऽवगृहीते समस्तीत्येतदेवाह येनार्थाऽवग्रहकालेऽर्थग्रहणेहाऽपायानां संभवो नास्ति ततोऽर्थाऽवग्रहे नास्ति शब्द इति विशेषबुद्धिः । अर्थग्रहणेहापूर्वकत्वात्तस्याः अथाऽस्त्यसौ तत्र तर्हि नायमर्थाऽवग्रहः किं त्वपाय एव स्यान्नैतद्युज्यते तदभ्युपगमार्थाऽवग्रहेहयोरभावप्रसंगादिति गाथार्थः ॥

अपि चार्थाऽवग्रहे शब्द इति विशेषबुद्धाविष्यमाणायां दोषांतरमप्यस्ति किं तदित्याह—

सामण्ण तदण्ण विसेसेहावज्जणपरिग्गहणउ से ।
अत्थोग्गहेगसमओ वओगबाहुल्लमावस्सं ॥

इह येयमर्थाऽवग्रहैकसमये शब्द इति विशेषबुद्धिर्भवताऽभ्यु-

पगम्यते सा तावन्निश्चयस्वरूपा निश्चयश्चाकस्मादेव न युज्यते किंतु क्रमेण प्रथमं तावद्रूपादिभ्योऽव्यावृत्तमव्यक्तशब्दसामान्यं ग्रहीतव्यं ततस्तद्विशेषविषयादपररूपादिविशेषविषयाच्च एतैश्च धर्मैः किमयं शब्द आहोस्विद्रूपादिरित्येवं रूपा ईहा तदनंतरं च गृहीतशब्दसामान्यविशेषाणां ग्रहणं अन्येषां तु रूपादिविशेषाणां तत्राऽविद्यमानानां परिवर्जनमित्येवं भूतेन क्रमेण निश्चयोत्पत्तिः तथा च सति श्रोतुरर्थाऽवग्रहैकसमयेऽपि सामान्यग्रहणादिभिःप्रकारैरुपयोगः बहुत्वमापद्यते एकस्मिंश्च समये बहव उपयोगाः सिद्धांते निषिद्धा इति नाऽर्थावग्रहे शब्दादिविशेषबुद्धिरिति गाथाभावार्थः । अक्षरार्थस्तूच्यते सामान्यमिह श्रूयमाणशब्दसामान्यं गृह्यते ( तयरणविसेसेहत्ति ) तच्छब्देनानंतरोक्तं शब्दसामान्यमनुकृष्यते । अन्यशब्देन तु तत्राऽविद्यमानरूपादयः परिगृह्यंते ततश्च तस्मान्ये च तदन्ये शब्दसामान्यं रूपादयश्चेत्यर्थः । तेषां विशेषा धर्माः श्रोत्रग्राह्यत्वादयः चक्षुरादिवेद्यत्वादयश्च तद्विषया ईहा तदन्यविशेषेहा किमत्र श्रोत्रग्राह्यत्वादयो धर्माः उपलभ्यन्ते आहोस्विच्चक्षुरादिवेद्यत्वादय इत्येवं रूपो विमर्श इत्यर्थः । तदनंतरं तु वर्जनं च तत्राऽविद्यमानरूपादिगतानां हेयधर्माणां चक्षुर्वेद्यत्वादीनां परिग्रहणं च तत्र च गृहीतशब्दसामान्यगतानामुपादेयधर्माणां श्रोतुर्ग्राह्यत्वादीनामिति वर्जनपरिग्रहणे त्यागादाने सामान्ये च तदन्यविशेषेहा च वर्जनपरिग्रहणे च सामान्यं तदन्यविशेषेहावर्जनपरिग्रहणानि तेभ्यस्तत्(त्रि)प्राप्ति । तस्य श्रोतुरर्थावग्रहैकसमये ऽप्युपयोगो यथोक्तेहोपयोगस्तु द्वितीयः हेयधर्मवर्जनोपयोगस्तृतीयः उपादेयधर्मपरिग्रहणोपयोगश्चतुर्थः इत्येवमर्थावग्रहैकसमयमात्रेऽपि बहव उपयोगाः प्राप्नुवंति । नचैतद्युक्तं समयविरुद्धत्वात्तस्मान्नार्थाऽवग्रहे शब्दविशेषबुद्धिः किं तु( सद्देति भणइ वत्ता इत्यादि ) स्थितमिति गाथार्थः ॥

अथास्मिन्नेवार्थाऽवग्रहेऽपरवाद्यभिप्रायं निराचिकीर्षुराह—

अण्णे सामण्णग्गहणमाहुबालस्स जायते तस्स ।
समयंमि चेव परिचियविसयस्स विसेसविन्नाणं ॥

अन्ये वादिनः केचिदेवमाहुर्यदेतत्सर्वविशेषविमुखस्याऽव्यक्तस्य सामान्यमात्रस्य वस्तुनो ग्रहणमालोचनं तद्बालस्य शिशोस्तत्क्षणजातमात्रस्य भवति नात्र विप्रतिपत्तिरव्यक्तो ह्यसौ संकेतादिविकलोऽपरिचितविषयो यस्तर्हि परिचितविषयस्तस्य किमित्याह समय एवाद्यशब्दश्रवणसमय एव विशेषविज्ञानं जायते स्पष्टत्वात्तस्य ततश्चामुमाश्रित्य ( तणं सद्देत्ति उग्गहिए ) इत्यादि यथाश्रुतमेव व्याख्यायते तेन न कश्चिद्दोष इति भाव इति गाथार्थः ॥

अत्रोत्तरमाह—

तदवत्थमेव ते पुव्वदोसओ तम्मि चेव वा समये ।
संखसहुगाइसु बहुमविसेसगहणं पसज्जेज्जा ॥

"जं सव्वो ग्गहकाले" इत्यादिना ग्रंथेन "सामण्णतयणविसेसेहा" इत्यादिना च ग्रंथेन यद्दूषितं या तस्यावस्था यत्तस्य रूपं "समयंमि चेव परिचियविसयस्स विसेसविण्णाणमिति" तदेतत्परोक्तमपि तदवस्थमेव न पुनः किं चिदूनाधिकावस्थं कुत इत्याह "पुव्वदोसओत्ति जेणत्थोग्गहकाले" इत्यादिना "सामण्णतयणं" इत्यादिना च यः पूर्वं च दोषोऽभिहितस्तस्मात्पूर्वदोषानतिवृत्तेस्तदेतत्परोक्तं तदवस्थमेवेति तेनान्यद्दूषणाद्यभिधानप्रयासो विधीयत इति भावः । अथ वा पूर्वमपि दूषणमुच्यते किं तदित्याह ( तम्मि चेव ) इत्यादि वा इत्यथ वा तस्मिन्नेव स्पष्टविज्ञानस्य व्यक्तस्य जंतोर्विशेषग्राहिणि समये शांखः शार्ङ्गो वाऽयं शब्दः स्निग्धो मधुरः कर्कशः स्त्रीपुरुषाद्यन्यतरवाद्य इत्यादिषु बहुकविशेषग्रहणं प्रसज्येत । इदमुक्तं भवति । यदि व्यक्तस्य परिचितविषयस्य जंतोरव्यक्तशब्दज्ञानमुल्लंघ्य तस्मिन्नर्थावग्रहैकसमयमात्रे शब्दनिश्चयज्ञानं भवति तदन्यस्य कस्यचित्परिचिततरविषयस्य पटुतरावबोधस्य तस्मिन्नेव समये व्यक्तशब्दज्ञानमपि अतिक्रम्य शांखोऽयं शब्द इत्यादि संख्यातीतविशेषग्राहकमपि ज्ञानं भवदभिप्रायेण स्यात् दृश्यंते च पुरुषशक्तीनां तारतम्यविशेषाः भवत्येव कस्यचित्प्रथमसमये सुबहुविशेषग्राहकमपि ज्ञानमिति चेन्न "न उण जाणइ के वेस सद्दे" त्यस्य सूत्रावयवस्यागमकत्वप्रसंगाद्धिमध्यमशक्तिपुरुषविषयमेतत्सूत्रमिति चेन्न अविशेषेणोक्तत्वात्सर्वविशेषविषयत्वस्य [illegible] युक्त्यनुपपन्नत्वान्न हि प्रकृष्टमतेरपि [illegible] णमगृहीत्वा उत्तरोत्तरसु[illegible]मवोऽस्ति निराधारधर्माणामनुपपत्तेरिति गाथार्थः ॥

किं च समयमात्रेऽपि शब्द इति विशेषविज्ञानमभ्युपगच्छतोऽन्येऽपि समयविरोधादयो दोषाः के पुनस्ते इत्याह—

अत्थोग्गहो न समयं अहवा समओवओगबाहुल्लं ।
सव्वविसेसग्गहणं सव्वमईवोग्गहो गज्झो ॥
एगो वा चाउव्विय अहवा सो अहियणीहिए पत्तो ।
उक्कमवइक्कमा वा पत्ता धुवमोग्गहाई हेणं ॥
सामण्णं व विसेसो सोवा सामण्ण मुभयं वा ।
नयजुत्तं सत्तुमियं सामण्णा लंवणं मोत्तुं ॥७०॥

व्याख्या । "उग्गहो एक्कं समयमित्यादि" वचनादर्थावग्रहः सिद्धांते सामायिको निर्दिष्टः यदि वार्थाऽवग्रहे विशेषविज्ञानमभ्युपगम्यते तदा सामायिकोऽसौ न प्राप्नोति विशेषज्ञानस्याऽसंख्येयसामायिकत्वादथ समयमात्रेऽप्यस्मिन् विशेषज्ञानमिष्यते "तर्हि सामण्णतयणविसेसेहा" इत्यादिना प्रागुक्तं समयोपयोगबाहुल्यं प्राप्नोति अथवेत्ययतोऽप्यनुवर्तते ततश्च अथ वा परिचितविषयस्य विशेषज्ञानेऽभ्युपगम्यमाने परिचिततरविषयस्य तस्मिन्नेव समये सर्वविशेषग्रहणमनंतरोक्तं प्राप्नोति अथाऽवग्रहमात्रादपि विशेषपरिच्छेदेऽगीक्रियमाणे ईहादीनामनुत्थानमेव ततश्च सर्वापि मतिरवग्रहोग्राह्यः सर्वस्याऽपि मतेरवग्रहरूपतैव प्राप्नोतीत्यर्थः । अथ वा सर्वाऽपि मतिरपाय एवैकः प्राप्नोति अर्थावग्रहे विशेषज्ञानस्याश्रयणात्तस्य च निश्चयरूपत्वान्निश्चयस्य चापायत्वादिसमयमात्रे वास्मिन्नपाये सिद्धे "ईहावायां मुहुत्तमित्तं त्वि"ति विरुध्यते अथार्थेऽवगृहीते

ईहिते चाऽशयः सिद्धांते निर्दिश्यते "उग्गहो ईहा अवाओ य" इति क्रमनिर्देशाद्यदि चाद्यसमयेऽपि विशेषज्ञानाभ्युपगमादपाय इष्यते तर्ह्यनवगृहीते च तस्मिन्नसौ प्राप्तः वा इत्थं वा यदि तृतीयस्थाननिर्दिष्टोऽप्यपायः "समयमिमं चेव परिच्छियावसयस्स विण्णाणं" मिति वचनात्पटुवैचित्र्येण प्रथममभ्युपगम्यते तर्हि तस्मादेव पाटववैचित्र्यादवग्रहेहापायधारणानां ध्रुवं निश्चितमुत्क्रमव्यतिक्रमौ स्यातां तत्र पश्चादानुपूर्वीभवनमुत्क्रमः । अनानुपूर्वीभावस्तु व्यतिक्रमः । तथा हि । यथा शक्तिवैचित्र्यात्कस्यचित्प्रथममेवापायो भवताऽभ्युपगम्यते तथा तत एव कस्यापि प्रथमं धारणा स्यात्ततोऽपायस्ततोऽपीहा तदनंतरं त्ववग्रह इत्युत्क्रमः अन्यस्य कस्यचित् पुनरवग्रहमुल्लंघ्य प्रथममेवेहा समुपजायते अपरस्य तु तामप्यतिक्रम्यापायोऽन्यस्य तु तमप्यतिक्रम्य धारणा स्यादित्यादि व्यतिक्रमः । न चेह वयं युक्तिमात्रप्रच्छनीया भवदभ्युपगतस्य शक्तिवैचित्र्यस्यैव पुष्टिहेतोः सद्भावान्न चैतावुत्क्रमव्यतिक्रमौ युक्तौ "उग्गहो ईह अवाओय धारणा एव होंति चत्तारीति" परममुनिनिर्दिष्टक्रमस्यान्यथाकर्त्तुमशक्यत्वादिति तथा यदि यत्प्रथमसमये गृह्यते स विशेषस्तर्हि "सामण्णं च विसेसोत्ति" यत्सामान्यं तदपि विशेषः प्राप्तः प्रथमसमये हि सर्वस्याऽपि वस्तुनोऽव्यक्तं सामान्यमेव रूपं गृह्यते ततोऽन्यस्मिन्नप्यर्थाऽवग्रहसमये सामान्यमेवरूपं गृह्यत इति परमार्थः यदि चात्रविशेषबुद्धिर्भवताऽभ्युपगम्यते तर्हि यदिह वस्तुस्थित्या सामान्यं स्थितं तदपि भवदभिप्रायेण विशेषः प्राप्तः । च शब्दो दूषणसमुच्चयार्थः । "सो वा सामण्णत्ति" स वा भवदभिप्रेतो विशेषो वस्तुस्थितिसमायातं सामान्यं प्राप्नोतीति । "उभयमुभयं चेति" । अथ वा सामान्यविशेषलक्षणं उभयमपि तत्प्रत्येकमुभयरूपं स्यादित्यर्थस्तथा हि अत्र ईषत्सामान्यं गृह्णातीत्यवग्रह इति व्युत्पत्त्या वस्तुस्थितिसमायातं यत्सामान्यं तत्स्वरूपेण तावत्सामान्यं भवदभ्युपगमेन तु विशेष इत्येकस्याऽपि सामान्यस्योभयरूपता तथा योऽपि भवदभ्युपगतो विशेषः सोऽपि त्वदभिप्रायेण विशेषवस्तुस्थित्या तु सामान्यमिति विशेषस्याप्येकस्योभयस्वभावता भवत्वेवमिति चेदित्याह । न च युक्तं सर्वमिदं किं कृत्वेत्याह । सामान्यमालंबनं ग्राह्यमुक्तार्थाऽवग्रहस्येति विशेषः । इदमुक्तं भवति । अर्थावग्रहस्याऽव्यक्तं सामान्यमात्रमालंबनं परिहृत्य यदन्यद्विशेषरूपमालंबनमिष्यते तदभ्युपगमे च "सामण्णं च विसेसो सो वा सामण्णमित्यादि" यदापततीति तत्सर्वमयुक्तमघटमानकत्वादिह च गाथात्रये बहुषु दूषणेषु मध्ये यत् प्रागुक्तमपि किंचित् दूषणमुक्तं तत्प्रसंगायातत्वादिति न पौनरुक्त्यमाशंकनीयमिति गाथात्रयार्थः ॥

प्रस्तुत एवाऽर्थे परमपि मतांतरमुपन्यस्य निराकुर्वन्नाह-

केइ तीहालोयणपुव्वमोग्गहं विंति तत्थ सामण्णं ।
गहियमहत्थावग्गहकाले सद्दित्ति निच्छिण्णं ॥

केचिद्वादिनः इहास्मिन्प्रक्रमेऽवग्रहं ब्रुवतेऽर्थावग्रहं व्याचक्षते किंविशिष्टमित्याह आलोचनं पूर्वं सामान्यवस्तुग्राहिज्ञानमालोचनं तत्पूर्वं प्रथमं यस्य स तथातंप्रथममालोचनज्ञानं ततोऽर्थावग्रह इत्यर्थस्तथा तैरुक्तं "अस्ति ह्यालोचना ज्ञानं प्रथम निर्विकल्पकं बालमूकादिविज्ञानसदृशं शुद्धवस्तुजमिति" किं पुनस्तत्रालोचनज्ञाने गृह्यत इत्याह ( तत्थेत्यादि ) तत्रालोचनज्ञाने सामान्यमव्यक्तं वस्तु गृहीतं प्रतिपन्नेति गम्यते अथानंतरमर्थाऽवग्रहकाले तदेव गृहीतमित्यनुवर्त्तते कथंभूतं सदित्याह निच्छिन्नं पृथक् कृतं रूपादिव्यावृत्तेरित्यर्थः केनोल्लेखेन गृहीतमित्याह ( सद्देत्ति ) शब्दविशेषणविशिष्टमिःयर्थः । ततश्च "से जहानामएकेइ पुरिसे अव्वत्तं सद्दं सुणिज्जाति" एतदालोचनज्ञानापेक्षया नीयते" तेणं सद्देत्ति उग्गहिए "एतच्चार्थाऽवग्रहापेक्षयेति सर्वं सुस्थतामनुभवति न चातः परं भवतोऽप्याचार्यस्य किंचिद्वक्तव्यमस्ति यदि युक्त्यनुभवसिद्धेनार्थेन सूत्रे विषयविभागव्यवस्थापितेऽपि वादी जयं न प्राप्स्यति तदा तूष्णीमाश्रयं तु विपश्चितो विचारचर्यामार्गस्य स्वाग्रहतत्परेण त्वयैव लुप्तत्वादिति गाथार्थः ॥

तदत्र सूरिः परस्येषद्गर्वानुविद्धामज्ञतामवलोकयन् मार्गावतरणाय विकल्पयन्नाह—

तं वंजणोग्गहाउ पुव्वं पच्छास एव वा होज्जा ।
पुव्वं तदत्थवंजणसंबंधाभावओ नत्थि ॥

यद्यनुपहतस्मरणवासना सत्ता नस्तदर्थावग्रहात्पूर्वं व्यंजनावग्रहो भवतीति यदुक्तं प्रोक्तं भवानपि स्मरति । ततः किमिति चेदुच्यते यदेतद्भवदुत्प्रेक्षितं सामान्यग्राहकमालोचनं तत्तस्माद्व्यंजनाऽवग्रहात्पूर्वं वा भवेत्पश्चाद्वा स एव वा व्यंजनावग्रहोऽप्यालोचनं भवेदिति त्रयीगतिरन्यत्र स्थानाभावात्किं चात इत्याह अर्थव्यंजनसंबंधाभावादिति अर्थः शब्दादिविषयभावेन परिणतद्रव्यसमूहः व्यंजनं तु श्रोत्रादि अर्थश्च व्यंजनं चार्थव्यंजने तयोः संबंधस्तस्याभावात् सति ह्यर्थव्यंजनसंबंधे सामान्यार्थालोचनं स्यादन्यथा सर्वथा तद्भावप्रसंगाद्व्यंजनाऽवग्रहाच्च पूर्वमर्थव्यंजनसंबंधो नास्ति तत्सद्भावे तु व्यंजनावग्रहस्यैवेष्टत्वात्तत्पूर्वकालता न स्यादिति भाव इति गाथार्थः ॥

द्वितीयविकल्पं शोधयन्नाह—

अत्थोग्गहो वि जं वंजणोग्गहस्से व चरमसमयंमि ।
पच्छावि तो न जुत्तं परिसेसं वंजणं होज्जा ॥

तथाऽर्थावग्रहोऽपि यद्यस्माद्व्यंजनाऽवग्रहस्यैव चरमसमये भवतीति प्रागिहापि निर्णीतं तस्मात्पश्चादपि व्यंजनाऽवग्रहादालोचनज्ञानं न युक्तं निरवकाशत्वान्न हि व्यंजनार्थाऽवग्रहयोरंतरे कालः समस्ति यत्र तत्त्वदीयमालोचनज्ञानं स्याद्व्यंजनाऽवग्रहचरमसमय एवार्थावग्रहसद्भावात्तस्मात्पूर्वपश्चात्कालयोर्निषिद्धत्वात्पारिशेष्यान्मध्यकालवर्ती तृतीयविकल्पोपन्यस्तो व्यंजनावग्रह एव भवता आलोचनाज्ञानेनाभ्युपगतो भवेदेवं च न कश्चिद्दोषो नाममात्र एव विवादादिति गाथार्थः । क्रियतां तर्हि प्रेरकवर्गेण वर्द्धापनकं त्वदभिप्रायाविसंवादलाभादिति चेन्नैवं विकल्पद्वयस्येह सद्भावात्तथा हि तद् व्यंजनावग्रहकालेऽभ्युपगम्यमानमालोचनं किमर्थस्यालोचनं व्यञ्जनानां वा इति विकल्पद्वयं तत्र प्रथमविकल्पमनूद्य दूषयन्नाह—

तं च समोलोयणमत्थदरिसणं जइ न वंजणं तो तं ।
अह वंजणस्स तो कह मालोयणमत्थसुण्णस्स ॥

तत्समालोचनं यदि सामान्यरूपस्यार्थस्य दर्शनमिष्यते

तर्हि न व्यंजनं न व्यंजनाऽवग्रहात्मकं भवति व्यंजनाऽवग्रहस्य व्यंजनसंबंधमात्ररूपत्वेनाऽर्थशून्यत्वात्तथा च प्रागपि "पुव्वं च वंजणोग्गहकालो सो अत्थ परिसुण्णो" इत्यादिना साधितमेवेदमतोऽर्थदर्शनरूपालोचनं कथमर्थशून्यव्यंजनावग्रहात्मकं भवितुमर्हति विरोधादथ द्वितीयविकल्पमंगीकृत्याह "अथ व्यंजनस्य शब्दादिविषयपरिणतद्रव्यसंबंधमात्रस्य तत्समालोचनमिष्यते तर्हि कथमालोचनं कथमालोचकत्वं तस्य घटत इत्यर्थः । कथंभूतस्य सत इत्याह अर्थशून्यस्य व्यंजनसंबंधमात्रान्वितत्वेन सामान्यार्थालोचकत्वानुपपत्तेरित्यर्थः इति गाथार्थः ।

ननु शास्त्रांतरप्रसिद्धस्यालोचनज्ञानस्य वराकस्य तर्हि का गतिरित्याह—

आलोयणंति नामं हविज्ज तं वंजणोग्गहस्सेव ।
होज्ज कहं सामण्णग्गहणं तत्थत्थसुण्णंमि ॥ २ ॥

तस्मादालोचनमिति यन्नाम तदन्यत्र निर्गतिकं सत्पारिशेष्याद्व्यंजनावग्रहस्यैव द्वितीयं नाम भवेन्न च विवक्षामात्रप्रवृत्तेषु वस्तूनां बहुष्वपि नामसु क्रियमाणेषु कोऽपि विवादमाविष्करोत्यत एतदपि नामांतरमस्तु को दोष इति नैतदेवं यस्मादिदं सामान्यग्राहकमालोचनज्ञानं भविष्यत्यर्थावग्रहस्तु विशेषग्राहक इत्येवमप्यस्माकं समीहितसिद्धिर्भविष्यतीति चेदित्याह (होज्जेत्यादि) व्यंजनावग्रहस्यैव पारिशेष्यादालोचनज्ञानत्वमापन्नं तत्र च प्रागुक्तयुक्तिभिरर्थशून्ये कथं सामान्यग्रहणं भवेद्येन भवतः समीहितसिद्धिप्रद इति तस्मादर्थावग्रह एव सामान्याऽर्थग्राहको न पुनरेतस्मादपरमालोचनाज्ञानं अत एव यदुक्तम् "अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पक" मित्यादि तदप्यर्थावग्रहाश्रयमेव यदि घटते नान्यविषयमिति गाथार्थः ।

अथ दुर्बलं वादिनं दृष्ट्वाऽभ्युपगमोऽपि कर्त्तव्य इति न्यायप्रदर्शनार्थमाह—

गहियं वहो उ तहियं सामण्णं कहमणाहिए तम्मि ।
अन्थावग्गहकाले विसेसणं एस सद्दोत्ति ॥

अथ वा भवतु तस्मिन् व्यंजनाऽवग्रहे सामान्यं गृहीतं तथाऽपि कथमनीहिते विमर्शिते तस्मिन्नकस्मादेवार्थाऽवग्रहकाले शब्द एव इति विशेषणं विशेषज्ञानयुक्तं शब्द एवैष इत्ययं हि निश्चयः न चायमीहामंतरेण झगित्येव युज्यत इत्यसकृदेवोक्तप्रायमतो नार्थाऽवग्रहे शब्द इत्यादिविशेषबुद्धिर्युज्यत इति गाथार्थः ।

अथाऽर्थाऽवग्रहसमये शब्दाद्यवगमेन सहैवेहा भविष्यतीति मन्यसे तत्राह—

अन्थावग्गहसमये वीसुमसंखिज्जसमइया दोवि ।
तक्कावगमसहावा ईहावाया कहं जुत्ता ॥

अर्थाऽवग्रहसंबंधिन्येकस्मिन्समये कथमीहापायौ युक्ताविति संबंधः कथंभूतावेतौ यत इत्याह तर्कावगमस्वभावौ तर्को विमर्शस्तत्स्वभावा ईहा अवगमोऽपि निश्चयस्तत्स्वभावोऽपाय द्वावपि च तौ पृथगसंख्येयसमयनिष्पन्नौ । एतदुक्तं भवति । यदिदमर्थाऽवग्रहे विशेषज्ञानं त्वयेष्यते सोऽपायः स चावगमस्वभावो निश्चयस्वरूप इत्यर्थः । या च तत्समकालमीहाऽभ्युपेयते सा तर्कस्वभावा अनिश्चयात्मिका इत्यर्थः ॥ तत एतौ ईहापायौ अनिश्चयेतरस्वभावौ कथमर्थावग्रहे युगपदेव युक्तौ निश्चयानिश्चययोः परस्परपरिहारेण व्यवस्थितत्वादेकत्रैकदाऽवस्थानाभावेन सहोदयानुपपत्तेरित्येषा तावद्विशेषावगमेहयोः सहभावे एकानुपपत्तिः अपरं च समयं नात्रकालोऽर्थाऽवग्रह ईहापायौ तु "ईहावायामुहुत्तमंतं" त्विति वचनात्प्रत्येकमसंख्येयसमयनिष्पन्नौ कथमेकस्मिन्नर्थाऽवग्रहसमये स्यातामत्यंतानुपपन्नत्वादिति द्वितीयानुपपत्तिस्तस्मादत्यंताऽसंबंधत्वाद्यत्किंचिदेतदित्युपेक्षणीयमिति गाथार्थः ॥

तदेवं युक्तिशतैर्निराकृतानामपि प्रेरकाणां निःसंख्यत्वात्केषांचित्प्रेर्यशेषमद्यापि सूरिराशंकते—

खिप्पेतराइ भेउजमुग्गहोतो विसेसविण्णाणं ।
जुज्जइ विगप्पवसओ सद्दोति सुयं निजं केइ ॥

(केई)ति इहार्थाऽवग्रहे विशेषज्ञानसमर्थनाग्रहममुमुत्तवोऽद्यापि केचिद्वादिनो मन्यंते किमित्याह । क्षिप्रतरादिभेदो यस्मादवग्रहो ग्रंथांतरे भणितोऽत्रापि च विस्तरेण भणिष्यते इति गम्यते । ततः शब्द इति विशेषविज्ञानं युज्यते घटतेऽर्थावग्रहे इति प्रस्तावादेवलभ्यते यत्किमित्याह "सुयंम्मि जंति तेणं सद्देति उग्गहिए" इत्यादिवचनात्यत्सूत्रे निर्दिष्टमिति शेषः । कुतः पुनरिदं विशेषविज्ञानं युज्यते इत्याह । विकल्पवशतोऽन्यत्रोक्तनानात्ववशात इत्यक्षरघटना । एतश्चात्र हृदयं क्षिप्रमवगृह्णाति चिरेणाऽवगृह्णाति बहु च गृह्णात्यबहु च गृह्णाति बहुविधमवगृह्णात्यबहुविधमवगृह्णाति एवमनिश्रितं निश्रितमसंदिग्धं संदिग्धं ध्रुवमध्रुवं गृह्णातीत्यादिना ग्रंथेनाऽवग्रहादयः शास्त्रांतरे द्वादशभिर्विशेषणैर्विशेषिता अत्रापि च पुरस्तादयमर्थो वक्ष्यते । ततः क्षिप्रं चिरेण चावगृह्णातीति विशेषणाऽन्यथानुपपत्तेर्ज्ञायते नैकसमयमात्रमत एवार्थाऽवग्रहः किं तु चिरकालिकोऽपि नहि समयमात्रमानतया एकरूपे तस्मिन् क्षिप्रचिरग्रहणविशेषमुपपद्यत इति भावः तस्मादेतद्विशेषणबलादसंख्येयसमयमानोऽप्यर्थावग्रहो युज्यते तथा बहूनां श्रोतृणामविशेषेण प्राप्तिविषयस्थे शंखभेर्यादिबहुतूर्यनिर्घोषे क्षयोपशमवैचित्र्यात्कोऽप्यबह्ववगृह्णाति सामान्यं समुदिततूर्यशब्दमात्रमवगृह्णातीत्यर्थः अन्यस्तु स्त्रीपुरुषादिवाद्यत्वस्निग्धमधुरत्वादिबहुविधाविशिष्टत्वेन बहुविधमवगृह्णात्यपरस्त्वबहुविधविशेषविशिष्टत्वादबहुविधमवगृह्णात्यत एव तस्माद्बहुविधाद्यनेकविकल्पनानात्ववशादवग्रहस्य क्वचित्सामान्यग्रहणं क्वचित्तु विशेषग्रहणमित्युभयमप्यविरुद्धमतो यत्सूत्रे "तेणं सद्देति उग्गहिए "इति वचनाच्छब्द इति विशेषज्ञानमुपदिष्टं तदप्यर्थाऽवग्रहे युज्यत एवेति केचिदिति गाथार्थः ॥ २७९ ॥

अत्रोत्तरमाह—

सकिमुग्गहोत्ति भणइ गहणेहावायलक्खणत्तोवि ।
अहउवचारोकारइतो मुण जह जुज्जएमोत्ति ॥

इह पूर्वमनेकधा प्रतिविहितमप्यर्थं पुनः २ प्रेरयंतं प्रेरकमवलोक्यांते विस्फुरदसूयावशात्साक्षेपं काक्वा सूरिः पृच्छति ( किमुग्गहोति ) किं शब्दः क्षेप यो बहु २ वि-

धादिविशेषणवशात् विशेषावगमः स किमबुधचक्रवर्तिभ्रवग्रहो भण्यते क सत्यपीत्याह ( गहणे हि इत्यादि ) गृहणं च सामान्यार्थस्य ईहा च गृहीतस्य अपायश्च ईहिताऽर्थस्य गृहणेहापायास्तैर्लक्ष्यते प्रकटीक्रियते यः स तथा तद्भावस्तत्त्वं तस्मिन् सत्यपि बहु २ विधादिग्राहकादिविशेषात् गमो निश्चयः स च सामान्याऽर्थगृहणमीहां च विना न भवति यश्च तदविनाभावी सोपाय एव कथमर्थावगृह इति भण्यते। इत्येतत्पूर्वमसकृदेवोक्तमपि हंत विस्मरणशीलतया जडतया बद्धाभिनिवेशतया वा पुनरस्मात् भाणयसीति किं कुर्मः पुनरुक्तमपि ब्रूमो यद्यस्मादायासेनाऽपि कश्चिन्मार्गमासादयतीति। ननु गृहणमीहा च विशेषावगमस्य लक्षणं भवतु ताभ्यां विना तदभावादपायस्तु कथं तल्लक्षणं तत्स्वरूपत्वादेवास्य। सत्यं। किं तु स्वरूपमपि भेदविवक्षया लक्षणं भवन्त्येव यदाह "विषामृते स्वरूपेण लक्ष्यते कलशादिवत्। एवं च स्वस्वभावाभ्यां ज्ञायेते खलसज्जनौ॥१॥" आह यदि बहु २ विधादिग्राहकोपाय एव भवति तर्हि कथमन्यत्राऽवगृहादीनामपि बह्वादिगृहणमुक्तं सत्यं किं त्वपायस्य कारणमवगृहादयः कारणे च योग्यतया कार्यस्वरूपमस्तीत्युपचारतस्तेऽपि बह्वादिग्राहकाः प्रोच्यंते इत्यदोषः।यद्येवं तर्हि वयमप्यपायगतं विशेषज्ञानमर्थावग्रहेऽप्युपचरिष्याम इत्येतदेवाह। अहेत्यादि। अथोक्तन्यायेनोपचारं कृत्वा विशेषग्राहकोऽर्थ.ऽवग्रहः प्रोच्यते। नैतदेवं यतो मुख्याभावे सति प्रयोजने निमित्ते चोपचारः प्रवर्त्तते न चैवमुपचारे किंचित्प्रयोजनमस्ति ( तेणं सद्देउत्ति उग्गहिए ) इत्यादि सूत्रस्य यथा श्रुतार्थनिगमनं प्रयोजनमिति चेन्न ( सद्देत्ति भणइ वत्ता ) इत्यादिप्रकारेणाऽपि तस्या निर्गमितत्वात् सामर्थ्यव्याख्यानमिदं न यथाश्रुतार्थव्याख्येति चेत्तर्हि यदुपचारेणाऽपि श्रुतोऽर्थः सूत्रस्य व्याख्यायत इति तवाभिप्रायस्तर्हि यथा युज्यते उपचारस्तथा कुरु। न चैवं क्रियमाणोऽसौ युज्यते यतः सिंहो माणवकः समुद्रस्तडाग इत्यादाविव किंचित्साम्ये सन्यथं विधीयमानः शोभते। न चैतत्साम्मायिकेऽर्थावग्रहेऽसंख्येयसामायिकं विशेषग्रहणं कथमुपपद्यते तर्हि कथमयमुपचारः क्रियमाणो घटत इतिचेदहो सुचिरादुपसन्नोऽसि ततः शृणु समाकर्णयाऽवहितेन मनसा सोऽपि यथा युज्यते तथा कथयामि ( सद्देत्तिभणइ वत्ता ) इत्यादिप्रकारेण ताबद्व्याख्यातं सूत्रं यदि चौपचारिकेणाऽप्यर्थेन भवतः प्रयोजनं तर्हि सोऽपि यथा घटमानकस्तथा कथ्यत इत्यपि शब्दाभिप्राय इति गाथार्थः॥ २८०॥

यथा प्रतिज्ञातमेव संपादयन्नाह—

"सामण्णमत्तग्गहणं निच्छइओ समयमग्गहो पढमो।
तत्तोणंतरमीहियवत्थुविसेसस्स जोवाओ॥ २८१॥
सो पुणरीहावाया विक्खायो वग्गहोत्ति उवयारिओ।
एस विसेसा विक्खं सामण्णं गिण्हीए जेणं॥ २८२॥
तत्तोणंतरमीहा ततो वाउय तव्विसेसस्स॥
इय सामण्णविसेसावेक्खा जावंतिमो भेओ॥ २८३॥

व्याख्या॥ इहैकसमयमात्रमानो नैश्चयिको निरुपचरितः प्रथमोऽर्थावग्रहः कथंभूत इत्याह। सामान्यमात्रस्याऽव्यक्तानिर्देशस्य वस्तुनो गृहणं सामान्यवस्तुमात्रग्राहक इत्यर्थः सामायिकानि हि ज्ञानादिवस्तूनि परमयोगिन एव निश्चयवेदिनोऽवगच्छंतीति नैश्चयिकोऽयमुच्यते। अथ छद्मस्थव्यवहारिभिरपि यो व्यवह्रियते तं, व्यवहारिकमुपचरितमर्थावग्रहं दर्शयति (तत्तो) इत्यादि ततो नैश्चयिकाऽर्थाऽवग्रहादनंतरमीहितस्य वस्तुविशेषस्य योऽपायः स पुनर्भाविनीमीहामपायं वापेक्ष्योपचरितोऽवग्रहोऽर्थाऽवग्रह इति द्वितीयगाथायं संबंधः॥ उपचारस्यैवास्य निमित्तांतरमाह॥ (एस्से)त्यादि एष्योभावी योऽन्यो विशेषस्तदपेक्षया येन कारणेनायमपायोऽपि सामान्यं गृह्णाति यश्च सामान्यं गृह्णाति सोऽर्थावग्रहो यथा प्रथमो नैश्चयिकः एतदिह तात्पर्यं प्रथमं नैश्चयिकोऽर्थावग्रहे रूपादिभ्यो व्यावृत्तमव्यक्तं शब्दादि वस्तु सामान्यं गृहीतं तत्तस्मिन्नीहिते सति शब्द एवायमित्यादि निश्चयरूपोऽपायो भवति तदनंतरं तु शब्दोऽयं शांखः शार्ङ्गो वा इत्यादिशब्दविशेषविषया पुनरीहाप्रवर्त्तिष्यते शांख एवायं शब्द इत्यादिशब्दविशेषविषयोपायश्च भविष्यति तदपेक्षया शब्द एवायमितिनिश्चयः प्रथमोऽपायोऽपि सन्नुपचारादर्थावग्रहो भण्यते। ईहापायापेक्षया तु इत्यनेन चोपचारस्यैकं निमित्तं सूचितं। शांखोऽयं शब्द इत्यादिष्वविशेषापेक्षया येनाऽसौ सामान्यशब्दरूपं सामान्यं गृह्णातीत्यनेन तूपचारस्यैव द्वितीयं निमित्तमावेदितं तथा हि यदनंतरमीहापायौ प्रवर्त्तेते यश्च सामान्यं गृह्णाति सोऽर्थावग्रहो यथा आद्यो नैश्चयिकः प्रवर्त्तेते च शब्द एवायमित्याद्यपायानंतरमीहापायौ गृह्णाति च शांखोऽय मित्यादि भाविविशेषापेक्षयाऽयं सामान्यं तस्मादर्थावग्रहः एष्यविशेषापेक्षया सामान्यं गृह्णातीत्युक्तं ततस्तदनंतरं किं भवतीत्याह। तृतीयगाथायां (ततोऽणंतर)मित्यादि ततः सामान्येन शब्दनिश्चयरूपात्प्रथमापायादनंतरं किमयं शब्दः शांखः शार्ङ्गो वेत्यादिरूपा ईहा प्रवर्त्तते ततस्तद्विशेषस्य शांखप्रभवत्वादेः शब्दविशेषस्य शांख एवायमित्यादिरूपेणापायश्च निश्चयरूपो भवति। अयमपि च भूयोऽन्यतमविशेषाकांक्षावतः प्रमातुर्भाविनीमीहामपायं चापेक्ष्य एष्यविशेषापेक्षया सामान्यालंबनत्वादर्थावगृहः इत्युपचर्यते। इयं च सामान्यविशेषापेक्षा कर्त्तव्या तावत् यावदंत्यो वस्तुनो भेदोविशेषः। यस्मा च विशेषात्परतोवस्तुनोऽन्ये विशेषा न संभवंति सोऽन्त्यः अथवा संभवत्स्वपि अन्यतमविशेषेषु यतो विशेषात्परतः प्रमातुस्तज्जिज्ञासा निवर्त्तते सोऽन्त्यस्तं विशेषं यावद्व्यावहारिकार्थावगृहेहा अपायार्थं सामान्यविशेषापेक्षा कर्त्तव्येति गाथार्थः॥

इह च गाथात्रयेऽपि यः पर्यवसितोऽर्थो भवति तमाह—

सव्वत्थहोवाया निच्छयओ मोतु माइसामण्णं।
संववहारत्थं पुण सव्वत्थावग्गहो वाओ॥ २८४॥

सर्वत्र विषयपरिच्छेदे निश्चयतः परमार्थतः ईहापायौ भवतः। ईहा पुनरपायः पुनरीहा पुनरप्यपाय इत्येवं क्रमेण यावदंत्यो विशेषस्तावदीहापायावेव भवतो नार्थावग्रह इत्यर्थः। किं सर्वत्र एवमेव नेत्याह(मोतुमाइ सामण्णंति) आद्यमव्यक्तसामान्यमात्रालंबनमेकसामायिकं ज्ञानमुक्त्वाऽन्यत्रेहापायौ भवतः इदं पुनर्नेहा नाप्यपायः किं त्वर्थावगृह एवेति भावः। संव्यवहारार्थं व्यावहारिकजनप्रतीत्यपेक्षं पुनः सर्वत्र यो

योऽपायः स स उत्तरोत्तरेहापायापेक्षया पष्यविशेषापेक्षया चोपचारतोऽर्थावग्रहः एवं च तावन्नेयं यावत्तारतम्येनोत्तरविशेषाकांक्षा प्रवर्तत इति गाथार्थः ।
तरतमयोगाभावे तु किं भवतीत्याह—

तरतमजोगाभावे वाउव्वि यधारणा तदंतंम्मि ।
सव्वत्थ वासणा पुण भणिया कालंतरे विसई ॥ २८५ ॥

तरततयोगाऽभावे ज्ञातुरगेलनविशेषाकांक्षानिवृत्तौ अपाय एव भवति न पुनस्तस्यावग्रहत्वमिति भावः । तन्निमित्तानां पुनरीहादीनामभावादिति यद्यगृत ईहादयो न भवंति तर्हि किं भवतीत्याह । तदंतेऽपायांते धारणा तदर्थोपयोगाप्रच्युतिरूपा भवति शेषस्यवासनास्मृतिरूपस्य धारणा भेदद्वयस्य क संभव इत्याह ( सव्वत्थ वासणा पुणेत्यादि )वासना च वक्ष्यमाणरूपा तथा कालांतरे स्मृतिः सा च सर्वत्र भणितोऽयमर्थः । अविच्युतिरूपा धारणाऽपायपर्यंत एव भवति वासनास्मृती तु सर्वत्र कालांतरेऽप्याविरुद्धे इति गाथार्थः । एवं चाभिहितस्वरूपव्यावहारिकार्थावग्रहापेक्षया यथाश्रुतार्थव्याख्यानमपि सूत्रस्याविरुद्धमेवेति दर्शयन्नाह ।

सद्दोत्तियसुयभणियं विगप्पओ जइ विसेसविण्णाणं ।
घिप्पजइतपि जुज्जइ संववहारोग्गहे सव्वं ॥ २८६ ॥

वा शब्दोऽथवार्थे ततश्चाऽयमभिप्रायः (सद्देति भणइ वत्ता) इत्यादिप्रकारेण तावद्व्याख्यानं(तेणं सद्देत्ति उग्गहिए)इत्यादिसूत्रं अथ वा शब्द इति यत्सूत्रे भणितं शब्दस्तेनाऽवगृहीतइति यत्सूत्रे प्रतिपादितं तद्यदि विकल्पतो विवक्षावशतो विशेषविज्ञानं गृह्यत तदपि सर्व्वयुज्यते कस्मिन्नित्याह । यथोक्ते अपचारिके सांव्यवहारिकार्थावग्रहेगृह्यमाणे सति अत्र हि शब्द इति विशेष विज्ञानं युज्यते सर्वगृहणात्तदनंतरमीहादयश्चोपपद्यंते पूर्वोक्तयुक्तेः ततश्च (ते जहा नाम एकेइ पुरिसे अव्वत्तं सद्दं सुणेज्ज तेणं सद्देति उग्गहिए नउणजाणइ केवेस सद्देतउ ईहं पविसइ तओ आवायं गच्छइ) इत्यादिसर्वं सुस्थं भवति यद्येवमयमेवार्थावग्रहः कस्मान्न गृह्यते येन सर्वोऽपि विवादः शाम्यतीति चेन्नैवं शब्द एवायमित्याद्यपायरूपोऽयमर्थावग्रहोऽपायश्च सामान्यगृहणेहाभ्यामंतरेण न संभवतीत्याद्यसकृत्पूर्वमभिहितमेवेति प्राक्तनमेव व्याख्यानं मुख्यमित्यलं विस्तरेणेति गाथार्थः ॥
व्यावहारिकार्थावग्रहाभ्युपगमे यो गुणस्तं सविशेषमुपदर्शयन्नाह—

खिप्पेइराइभेओ पुव्वोइयदोसजालपरिहारो ।
जुज्जइ संताणेण य सामण्णविसेसववहारो ॥ २८७ ॥

क्षिप्रेतरादिभेदं यत्पूर्वोदितदोषजालं तस्य परिहारो युज्यतेऽस्मिन् व्यावहारिकेऽर्थावग्रहे सतीति प्रक्रमाद्गम्यते इदमुक्तं भवति सामायिकार्थावग्रहव्याख्यातारं प्रति प्राग् यदुक्तं यद्यसावेकसामायिकस्तर्हि कथं क्षिप्रचिरगृहणाविशेषणमस्योपपद्यते तथा यद्यसौ सामान्यमात्रग्राहकस्तर्हि बहु २ विधादिविशेषणोक्तं विशेषगृहणं कथं घटते तथार्थावग्रहस्य विशेषग्राहकत्वे यत्समयोपयोगबाहुल्यमुक्तमित्यादि कस्य दोषजालस्य परिहारो व्यावहारिकेऽर्थावग्रहेसति युज्यते । तथा हि । नैश्चयिकावग्रहवादिना इदानीं शक्यमिदं वक्तुं यदुत क्षिप्रेतरादिविशेषणानि व्यावहारिकावग्रहविषयाण्येतानि असंख्येयसमयनिष्पन्नत्वेनास्य क्षिप्रचिरगृहणस्य युज्यमानत्वाद्विशेषग्राहकत्वेन बहु २ विधादिगृहणस्यापि घटमानकत्वादिति (सामण्णतयणंतविसेसे ( इत्यादिना प्रागभिहितं समयोपयोगबाहुल्यमप्यस्मिन्निरास्पदमेव सामान्यगृहणेहापूर्वकत्वेनासंख्येयसामायिकत्वेन चैकसमयोपयोकबाहुल्यस्याऽत्रासंबंध्यमानत्वादिति ननु नैश्चयिकावग्रहे किं क्षिप्रेतरादिविशेषणकलापो न घटते । येन व्यावहारिकावग्रहापेक्षः प्रोच्यते। सत्यं। मुख्यतया व्यवहारावग्रह एव घटते कारणकार्यधर्म्मोपचारात् पुनर्निश्चयावग्रहेऽपि युज्यत इति प्रागप्युक्तं वक्ष्यते च विशिष्टादेव हि कारणात्कार्यस्य वैशिष्ट्यं युज्यतेऽन्यथा त्रिभुवनस्याप्यैश्वर्यादिप्रसंगः काष्ठखंडादेरपि रत्नादिनिचयाऽवाप्तेरित्यलं प्रसंगेन । प्रकृतमुच्यते संतानेन च योऽसौ सामान्यविशेषव्यवहारो लोके रूढः सोऽपि व्यवहारावग्रहे सति युज्यत इतीहापि संबंध्यते लोकेऽपि हि यो विशेषः सोप्यपेक्षया सामान्यं यत्सामान्यं तदप्यपेक्षया विशेष इति व्यवह्रियते । तथाहि । शब्द एवायमित्येवमध्यवसितोऽर्थः पूर्वसामान्यापेक्षया विशेषः शांखोयमित्युतरविशेषापेक्षया तु सामान्यमित्येवं यावदंत्योविशेष इति प्रागप्युक्तं अयं चोपर्युपरिज्ञानप्रवृत्तिरूपेण संतानेन लोके रूढः सामान्यविशेषव्यवहार अपचारिकावग्रहे सत्येव घटते नान्यथा। तदनभ्युपगमे हि प्रथमापायानंतरमीहानुत्थानमुत्तरविशेषाग्रहणं चाभ्युपगतं भवति । उत्तरविशेषाग्रहणे च प्रथमापायव्यवसितार्थस्य विशेषत्वमेव न सामान्यत्वमिति पूर्वोक्तरूपोलोक प्रतीतः सामान्यविशेषव्यवहारः समुच्छिद्येत । अथ प्रथमापायानंतरमभ्युपगम्यते ईहोत्थानमुत्तरविशेष ग्रहणं च तर्हि सिद्धं तदपेक्षया प्रथमापायव्यवसितार्थस्य सामान्यत्वं यश्च सामान्यग्राहको यदनंतरं चेहादिप्रवृत्तिः सोर्थावग्रहो नैश्चयिकाद्यर्थावग्रहवदित्युक्तमेवेति सिद्धो व्यावहारिकार्थावग्रहस्तत्सिद्धौ च संतानकप्रवृत्त्यांत्यविशेषं यावत्सिद्धः सामान्याविशेष व्यवहार इति गाथार्थः ॥२८७॥ इति मतिज्ञानाद्यभेदलक्षणोद्विभेदोऽप्यवग्रहः समाप्त इति ॥
अथ तद्वितीयभेदलक्षणामीहां व्याचिख्यासुराह—

इयसामण्णगहणाणंतरमीहा सदत्थ मीमंसा ।
किमिदं सद्दो सद्दो को होज्ज व सं[illegible]पसंगाणं ॥ २८८ ॥

इति शब्द उपदर्शने इत्येवंप्रागुक्तेन प्रकारेण नैश्चयिकार्थावग्रहे यत्सामान्यग्रहणं रूपाद्यव्यावृत्त्या व्यक्तवस्तुमात्रग्रहणमुक्तं तथा व्यावहारार्थावग्रहेऽपि यदुत्तरविशेषापेक्षया शब्दादिसामान्यस्य ग्रहणमभिहितं तस्मादनंतरमीहा प्रवर्त्तते, कथंभूतेयमित्याह। सतस्तत्र विद्यमानस्य गृहीतार्थस्य विशेषविमर्शद्वारेण मीमांसाविचारणा केनोल्लेखेनेत्याह। किमिदं वस्तु मया गृहीतं शब्दोऽशब्दो वा रूपरसस्पर्शरूपः इदं च निश्चयार्थावग्रहादनंतरभाविन्या ईहायाः स्वरूपमुक्तं अथ व्यवहारार्थावग्रहानंतरभाविन्याः स्वरूपमाह । ( को होज्जवे ) त्यादि वा इत्यथवा व्यवहारावग्रहे[illegible] गृहीते इत्थमीहा प्रवर्त्तते शांखशार्ङ्गयोर्मध्ये क[illegible]यं भवेच्छब्दः शांखः शार्ङ्गो वेति ननु किं शब्दोऽशब्दोवेत्यादि किं संशय-

ज्ञानमेव कथमीहा भवितुमर्हति । सत्यं किंतु दिङ्मात्रमेवेदमिह दर्शितं । परमार्थतस्तु व्यतिरेकधर्मनिराकरणपरोऽन्वयधर्मघटनप्रवृत्तश्चापायाभिमुख एव बोध ईहा द्रष्टव्या तद्यथा । "अरण्यमेतत्सविताऽस्तमागतो न चाधुना संभवतीह मानवः ॥ प्रायस्तदेतेन खगादिभाजा भाव्यं रतिप्रियतमारिसमाननाम्नेति" ॥ १ ॥ एतच्च प्रागुक्तमपि मंदमतिस्मरणार्थं पुनरप्युक्तमिति गाथार्थः ॥

अथ मतिज्ञानतृतीयभेदस्यापायस्य स्वरूपमाह—

महुराइगुणत्तणओ संखस्सेवेति जं न संगस्स ।
विण्णाणं सो वाओ अणुगमवइरेगभावाओ ॥ २८९ ॥

मधुरास्निग्धादिगुणत्वाच्छंखस्यैवाऽयं शब्दो न शृंगस्येत्यादि यद्विशेषविज्ञानं सोऽपायो निश्चयज्ञानरूपः । कुत इत्याह । पुरोवर्त्यर्थधर्माणामनुगमभावादस्तित्वनिश्चयसद्भावात्तत्राऽविद्यमानार्थधर्माणां तु व्यतिरेकभावान्नास्तित्वनिश्चयसत्वादयं च व्यवहारार्थावग्रहानंतरभावी अपाय उक्तः निश्चयादवग्रहानंतरभावी तु स्वयमपि द्रष्टव्यस्तद्यथा । श्रोतुर्ग्राह्यत्वादिगुणतः शब्द एवाऽयं न रूपादिरिति । ईहापायविषयाश्च विप्रतिपत्तयः प्रागपि निराकृता इति नेहोक्ता इति गाथार्थः ।

अथ चतुर्थो मतिज्ञानभेदो धारणा इयं चाविच्युतवासनास्मृतिभेदात् त्रिधा भवत्यतः सभेदामपि तामाह—

तयणंतरं तयत्थादविच्चवणं जो य वासणाजोगो ।
कालंतरे य जो पुणरणुसरणं धारणा साउ ॥ २९० ॥

तस्मादपायादनंतरं तदनंतरं यत्तदर्थादविच्यवनमुपयोगमाश्रित्याभ्रंसो यश्च वासनायाः जीवेन सह योगः संबंधः यश्च तस्याऽर्थस्य कालांऽतरे पुनरिंद्रियैरुपलब्धस्याऽनुपलब्धस्य वा एवमेव मनसाऽनुस्मरणं स्मृतिर्भवति सेयं पुनस्त्रिविधाऽप्यर्थस्यावधारणरूपा धारणा विज्ञेयेति गाथाक्षरघटना । भावार्थस्त्वयं । अपायेन निश्चितेऽर्थे तदनंतरं यावद्यापि तदर्थोपयोगसातत्येन वर्त्तते नतु तस्मान्निवर्तते तावदर्थोपयोगादविच्युतिर्नाम सा धारणायाः प्रथमभेदो भवति ततस्तस्यार्थोपयोगस्य यदावरणं कर्म्म तस्य क्षयोपशमेन जीवो युज्यते येन कालांतरे इंद्रियव्यापारादिसामग्रीवशात्पुनरपि तदर्थोपयोगः स्मृतिरूपेण समुन्मीलति । सा चेयं तदावरणक्षयोपशमरूपा वासना नाम द्वितीयस्तद्भेदो भवति । कालांतरे च वासनावशात्तदर्थस्येंद्रियैरुपलब्धस्याथ वा तैरनुपलब्धस्याऽपि मनसि या स्मृतिराविर्भवति सा तृतीयस्तद्भेद इत्येवं त्रिभेदा धारणा विज्ञेया तु शब्दोऽवग्रहादिभ्यो विशेषद्योतनार्थः । विप्रतिपत्तयस्त्वेतद्विषया अपि प्रागेव निराकृता इति गाथार्थः ॥ २९० ॥

तदेवं "से जहा नामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जे"-त्यादि सूत्राऽनुरोधेन शब्दमाश्रित्यावग्रहादयो भाविताः । अथ सूत्रकारेणैव यदुक्तं (एवं एएणं अभिलावेणं अव्वत्तं रूवरसं गंधं फासं इत्यादि) तच्चेतसि निधाय भाष्यकारोऽप्यतिदेशमाह—

सेसेसु वि रूवाइविसएसु होंति रूवलक्खाइं ।
पायं पच्चासन्नत्तणेण मीहाइवत्थूणि ॥ २९१ ॥

यथा शब्दे एवं शेषेष्वपि रूपादिविषयेषु साक्षादनुक्तान्यपि रूपलक्ष्याणि कथितानुसारप्रसरत्प्रज्ञानां चतुरचेतसां सुज्ञेयानि भवंति कानीत्याह । ईहादीन्याभिनिबोधिकज्ञानस्य भेदवस्तूनि केन रूपलक्ष्याणीत्याह । प्रायः प्रत्यासन्नत्वेन चक्षुरादिना गृह्यमाणस्य स्थाण्वादेस्तत्राऽगृह्यमाणेन पुरुषादिना सह प्रायो बहुभिर्धर्मैर्यत्प्रत्यासन्नत्वं या प्रत्यासत्तिः सादृश्यमिति यावत्तेन ईहादीनि ज्ञेयानि न पुनरत्यंतवैलक्षण्ये स्थाण्वादेरुष्ट्रादिना सहेत्यर्थः । इदमुक्तं भवति । अवग्रहे तावत्सामान्यमात्रग्राहकत्वात् द्वितीयवस्त्वपेक्षापि न विद्यते । ईहापुनरुभयवस्त्ववलंबिनी तत्र पुरोदृश्यमानस्य वस्तुनो यत्प्रतिपक्षभूतं वस्तु तत्प्रायो बहुभिर्धर्म्मैः प्रत्यासन्नं ग्राह्यं न पुनरत्यंतविलक्षणं पुरतो हि मंद २ प्रकाशे दूराद्दृश्यमाने स्थाण्वादौ किमयं स्थाणुः पुरुषो वा इत्येवमेवेहा प्रवर्त्तते । ऊर्ध्वस्थानारोहपरिणाहतुल्यतादिभिः प्रायो बहुभिर्धर्म्मैः पुरुषस्य स्थाणुप्रत्यासन्नत्वादिति । किमयं स्थाणुरुष्ट्रो वा इत्येवं तु न प्रवर्त्तते । उष्ट्रस्य स्थाण्वपेक्षया प्रायोऽत्यंतविलक्षणत्वादत एव सामान्यमात्रग्राही अवग्रहोऽत्रादौ न कृतः किंत्वीहादीनामित्येवमेवोक्तं उभयवस्त्ववलंबित्वेनेहाया एवापायं (पच्चासन्नत्तणेणेति) विशेषणस्य सफलत्वादपायस्याऽपि स्थाणुरेवायं न पुरुष इत्यादिरूपेण प्रवृत्तेः । किंचिद्विशेषणस्य सफलत्वादादिशब्दोऽप्यविरुद्ध इति गाथार्थः ॥

इह किं शब्दोऽशब्दोवेति श्रोत्रेंद्रियस्य प्रत्यासन्नवस्तूपदर्शनकृतमेव अथाशेषचक्षुरादींद्रियाणां विषयभूतानि प्रत्यासन्नवस्तूनि क्रमेण दर्शयति—

थाणुपुरिसाइ कुट्ठुप्पलाइ संभियकरिल्लमंसाइ ।
सप्पुप्पलनालाइ व समाणरूवाइविसयाइं ॥ २९२ ॥

ईहादिवस्तूनि रूपलक्ष्याणीत्युक्तं कथंभूतानि संति पुनस्तानि रूपलक्ष्याणीत्याह । समानः समानधर्मा रूपरसादिर्विषयो येषामीहादीनां तानि समानरूपादिविषयाणीति पूर्वगाथायां संबंधः । कः पुनरमीषां समानधर्मा रूपादिविषय इत्याह । स्थाणुपुरुषादिर्वादिति पर्यंते निर्दिष्टो विषयोपदर्शनाभिद्योतकोवच्छब्दः सर्वत्र योज्यते । ततश्चक्षुरिंद्रियप्रभवस्येहादेः स्थाणुपुरुषादिवत्समानधर्मा रूपविषयो द्रष्टव्यः । आदिशब्दात्किमियं शुक्तिका रजतखंडं वा मृगतृष्णिका पयःपूरो वा रज्जुर्विषधरो वेत्यादिपरिग्रहः घ्राणेंद्रियप्रभवस्येहादेः कुष्टोत्पलादिवत्समानगंधो विषयस्तत्र कुष्टः गांधिकहट्टविक्रेयो वस्तुविशेषः । उत्पलं पद्मं अनयोः किल समानगंधो भवति तत ईदृशेन गंधेन किमिदं कुष्टमुत्पलं वेत्येवमीहाप्रवृत्तिः । आदिशब्दात्किमत्र सप्तच्छदाः मत्तकरिणो वा कस्तूरिका वनगजमदो वेत्यादि परिग्रहः रसनेंद्रियप्रभवस्येहादेः संभृतकरीलमांसादिवत्समानरसो विषयस्तत्र संभृतानि संस्कृतानि संधानीकृतान्युस्थितानि यानि वंशजालसंबंधीनि करीलानि तथा मांसमनयोः किलास्वादः समानो भवति ततोऽधकारादावन्यतरस्मिन् जिह्वाप्रदत्ते भवत्येवं किमिदं संभृतवंशकरीलमामिषं चेति आदिशब्दादगुडखंडं वा मृद्वीका शुष्कराजः

नं वेत्यादिपरिग्रहः । स्पर्शनेंद्रियप्रभवस्येहादेः सर्पोत्पलनालादिवत्समानस्पर्शो विषयः । सर्पोत्पलयोश्च तुल्यस्पर्शाच्च नेहाप्रवृत्तिः सुगमैव आदिशब्दात्स्त्रीपुरुषलेष्टूत्पलादिसमानस्पर्शवस्तुपरिग्रह इति गाथार्थः ॥

अथ यदुक्तं सूत्रे ( से जहा नामए केइ पुरिसे अव्वत्तं सुमिणं पासेज्जा) इत्यादि तदनुसृत्य स्वप्ने मनसोऽप्यवग्रहादीन् दर्शयन्नाह—

एवं चिय सिमिणाइसु मणसो सद्दाइ सलुविसएसु ।
होंतिंदियवावाराभावंवि अवग्गहाईया ॥ २९३ ॥

एवमेवोक्तानुसारेणेंद्रियव्यापाराभावेऽपि स्वप्नादिष्वादिशब्दादत्तकपाटसान्धकारापवरकादीन्द्रियव्यापाराभाववन्ति स्थानानि गृह्यंते तेषु केवलस्यैव मनसो मन्यमानेषु शब्दादिविषयेष्ववग्रहादयोऽवग्रहेहापायधारणा भवंतीति स्वयमप्यूह्यस्तथा हि स्वप्नादौ चित्तोत्प्रेक्षामात्रेण श्रूयमाणे गीतादिशब्दे प्रथमं सामान्यमात्रोत्प्रेक्षायामवग्रहः किमयं शब्दोऽशब्दो वेत्याद्युत्प्रेक्षायां त्वीहाशब्दे निश्चये पुनरपायस्तदनंतरं तु धारणा एवं देवतादिरूपे कर्पूरादिगंधे मोदकादिरसे कामनीकुचकलशादिस्पर्शे चोत्प्रेक्ष्यमाणेऽवग्रहादयो मनसः केवलस्य भावनीया इति गाथार्थः ॥

(५) आह नन्वेते अवग्रहादय उत्क्रमेण व्यतिक्रमेण वा किमिति न भवंति । यद्वा ईहादयस्त्रयो द्वौ एको वा किं नाभ्युपगम्यते यावत्सर्वेऽप्यभ्युपगम्यंत इत्याशंक्याह—

उक्कमओ इक्कमओ एगाभावेवि वा न वत्थुस्स ।
जं सब्भावाहिगमोतो सव्वे नियमियकमा या ॥ २९४ ॥

एषामवग्रहादीनामुत्क्रामणोत्क्रमतोऽतिक्रमेणातिक्रमतोऽपि शब्दस्य भिन्नक्रमत्वादेकस्याप्यभावे वा यस्मान्न वस्तुनः सद्भावाधिगमस्तस्मात्सर्वे चत्वारोऽप्येष्टव्यास्तथा नियमितक्रमाश्च सूत्रनिर्दिष्टपरिपाट्यन्विताश्च भवंत्येतेऽवग्रहादय इति प्रक्रमाल्लभ्यत इत्यक्षरयोजना । भावार्थस्तूच्यते तत्र पश्चादानुपूर्वीभवनमुत्क्रमः । अनानुपूर्वीभवनं त्वतिक्रमः । कदाचिदवग्रहमतिक्रम्येहा तामप्यतिलंघ्यापायस्तमप्यतिवृत्य धारणेत्येवमनानुपूर्वीरूपोऽतिक्रम इत्यर्थः । एताभ्यामुत्क्रमव्यतिक्रमाभ्यां तावदवग्रहादिभिर्वस्तुस्वरूपं नाऽवगम्यते । तथैषामेव मध्ये एकस्याऽप्यन्यतरस्याऽभावे वैकल्पेन वस्तुस्वभावावबोध इत्यसकृदुक्तप्रायमेव । ततः सर्वेऽप्यमी एष्टव्या नत्वेको द्वौ त्रयो वेत्यर्थः ॥ तथा "उग्गहो ईह अवाओ य धारणा एव होंति चत्तारि" त्यस्यां गाथायां यथैव कारेण पूर्वमेतेषां नियमितक्रमस्तथैवैते नियमितक्रमा भवंति नोत्क्रमातिक्रमाभ्यामिति भाव इति गाथार्थः ॥

अथोत्क्रमातिक्रमयोरेकादिवैकल्पे वावग्रहादीनां वस्त्वधिगमाभावे युक्तिमाह—

ईहिज्जइ नागहियं नज्जइ नाणीहियं न यानायं ।
धारिज्जइ जं वत्थु तेणं कमोवग्गहाईओ ॥ २९५ ॥

यस्मादवग्रहेणागृहीतं वस्तु नेह्यते न तत्रेहा प्रवर्तते ईहाया विचाररूपत्वादगृहीते च वस्तुनि निरास्पदत्वेन विचाराऽयोगादिति भावस्तदनेन कारणेनादौ अवग्रहं निर्दिश्य पश्चादीहा निर्दिष्टा । न चानीहितमविचारितं ज्ञायतेऽपायविषयतां याति अपायस्य निश्चयरूपत्वान्निश्चयस्य च विचारपूर्वकत्वादिति हृदयं एतदभिप्रायवता चापायस्यादौ ईहा निर्दिष्टेति । न चाज्ञातमपायेनाऽनिश्चितं धार्यते धारणाविषयीभवति वस्तु धारणायाअर्थावधारणरूपत्वादवधारणस्य च निश्चयमंतरेणाऽयोगादित्यभिप्रायः ततश्च धारणादावपायः ततः किमित्याह । तेनाऽवग्रहादिरेव क्रमो न्याय्यो नोत्क्रमातिक्रमौ यथोक्तन्यायेन वस्त्वधिगमाऽभाव प्रसंगादिति गाथार्थः ॥

तदेवं निराकृतौ सयुक्तिकमुत्क्रमातिक्रमौ अथ यदुक्तं "एगाभावे विवा न वत्थुस्स जं सब्भावाहिगमोतो सव्वात्त" तत्रापीयमेव युक्तिरितिदर्शयन्नाह—

एतोच्चिय ते सव्वे भवंति भिन्नाय नेय समकालं ।
न वइक्कमो य तेसिं न अन्नहा नेय सब्भावो ॥ २९६ ॥

यत एव नागृहीतमीह्यत इत्याद्युक्तमेतस्मादेव च तेऽवग्रहादयः सर्वे चत्वारोऽप्येष्टव्या भवंति । उक्तन्यायान्नैकवैकल्पेऽपि मतिज्ञानं संपद्यत इत्यर्थः । नागृहीतमीह्यत इत्यादियुक्तेरेव च ते भिन्नाः परस्परमसंकीर्णाः उत्तरोत्तरा पूर्वभिन्नवस्तुपर्यायग्रहणादिति नागृहीतमीह्यत इत्यादियुक्तेरेव च न ते समकालं भिन्नाः सिद्धास्तेऽवग्रहादयः समकालमपि नैव भवंति युगपन्न जायंत इत्यर्थः । पूर्वमेव गृहीतमेवोत्तरकालमीह्यते ईहोतरकालमेव च निश्चीयत इत्याद्युक्तन्याये नैवावग्रहादीनामुत्पत्तिकालस्य भिन्नत्वान्न युगपत्संभव इति भावः । उक्तयुक्तेरेव तेषां न व्यतिक्रमः उपलक्षणत्वान्नाप्युत्क्रम इत्यपि द्रष्टव्यं। एतच्च (तेण कमोवग्गहाईओ) इत्यनंतरगाथाचरमपादेन सामर्थ्यादुक्तमपि प्रस्तावात्पुनरपि साक्षादुक्तमित्यदोषः । तदेवं ( ईहिज्जइ नागहिय मि)त्यादियुक्तेर्यथोक्तधर्म्मका एवावग्रहादयो न विपर्ययधर्माण इति साधितं अथ ज्ञेयवशेनाप्येषां यथोक्तधर्मकत्वं सिसाधयिषुरिदमाह "नयन्नहा नेय सब्भावोत्ति" ज्ञेयस्याप्यवग्रहादिग्राह्यस्य शब्दरूपादेर्नान्यथास्वभावोऽस्ति येनाऽवग्रहादयस्तद्ग्राहका यथोक्तरूपं परित्यज्याऽन्यथा भवेयुरित्यर्थः । इद मुक्तं भवति । ज्ञेयस्याऽपि शब्दादेः स स्वभावो नास्ति य एतैरवग्रहादिभिरेकादिविकल्पैरभिन्नैः समकालभाविभिरुत्क्रमातिक्रमवद्भिश्चावगम्यते । किंतुशब्दादि ज्ञेयस्वभावोऽपि तथैवव्यवस्थितो यथामीभिः सर्वैर्भिन्नैरसमकालैरुत्क्रमातिक्रमरहितैश्च संपूर्णो यथावस्थितश्चावगम्यतेऽतो ज्ञेयवशेनाप्येते यथोक्तरूपा एव भवंति तदेवं "उक्कमउ अतिक्कमउ पयोगाभावे वि दिवा इत्यादि" गाथोक्तं प्रसंगतोऽन्यदपि भिन्नत्वमसमकालत्वं च समर्थितमिति गाथार्थः ।

अत्र परः प्राह—

अज्झत्थे वाउव्विय कत्थइ लक्खिज्जई इसो पुरिसो ।
अन्नत्थ धारणं विय पुरोवलद्धे इमं तंति ॥ १२७ ॥

स्वभ्यस्तेऽनवरतं दृष्टपूर्वे विकल्पिते भाषिते च विषये पुनः क्वचित्कदाचिदवलोकिते अवग्रहेहाद्वयमतिक्रम्य प्रथमतोऽप्यपाय एव लक्ष्यतेऽनुभूयते निर्विवादमशेषैरपि जंतुभिर्यथाऽसौ पुरुष इति अन्यत्र पुनः क्वचित्पूर्वोपलब्धे सुनिश्चिते दृढवासने विषयेऽवग्रहेहापायानतिलंघ्य स्मृतिरूपा धारणैव लक्ष्यते । यथेदं तद्वस्तु यदस्माभिः पूर्वमुपलब्धमिति

तत्कथमुच्यते उत्क्रमातिक्रमाभ्यामेकादिविकल्पे च न वस्तुसद्भावाऽधिगमः इदं च कथमभिधीयते "ईहिज्जइनागहिय" मित्यादीतिप्रेरकाभिप्राय इति गाथार्थः।

भ्रांतोऽयमनुभव इति दर्शयन्नाह।

उप्पलदलसयवेहेव्व दुव्विभावत्तणेण पडहाइ।

समयं व सुक्कसक्कुलिदसणेवि सयाणमुवलद्धी ॥२९९॥

कश्चित्प्रथममेवाऽपायः क्वचित्तु धारणैवेति यत्त्वया प्रेर्यते तत्प्रतिभातीत्यनंतरगाथोक्तेन संबंधः केनैतत् प्रतिभातीत्याह। दुःखेन विभाव्यते दुर्विभावो दुर्लक्ष्यस्तद्भावस्तत्त्वं तेन दुर्विभावत्वेन दुर्लक्ष्यत्वेनाऽवग्रहादिकालस्येति गम्यते। कस्मिन्निवेत्याह उत्पलं पद्मं तस्य दलानि पत्राणि तेषां शतं तस्य सूच्यादिना वेधनं वेधस्तस्मिन्निव। इदमुक्तं भवति। यथा तरुणः समर्थपुरुषः पद्मपत्रशतस्य सूच्यादिना वेधं कुर्वाण एवं मन्यते मया एतानि युगपद्विद्धानि अथ च प्रतिपत्रं तानि कालभेदेनैव भिद्यंते। न चाऽसौ तं कालमतिसौक्ष्म्याद्भेदेनावबुद्ध्यते एवमत्राप्यऽवग्रहादिकालस्यातिसूक्ष्मतया दुर्भावनीयत्वेनाप्रतिभासो न पुनरसत्त्वेन ईहादयो ह्यत्र क्वचित्तावत्स्फुटमेवानुभूयंते यत्राऽपि स्वसंवेदनेन नानुभूयंते तत्राऽपि "ईहिज्जइ नागहियं नज्जइ नाणीहियमि" त्यादि प्रागसकृदभिहितयुक्तिकलापादवसेयास्तस्मादुत्पलदलशतवेधोदाहरणेन भ्रांत एवायं प्रथमत एवापायादिप्रतिभासः। अथोदाहरणांतरेणाऽप्यऽस्य भ्रांततामुपदर्शयति (समयं वे) त्यादि वा इत्यथवा यथा शुष्कशष्कुलीदशने समये युगपदेव सर्वेंद्रियविषयाणां शब्दरूपरसगंधस्पर्शानामुपलब्धिः प्रतिभाति तथैषोऽपि प्राथम्येनाऽपायादि प्रतिभासः। एतदुक्तं भवति। यथा कस्यचित् शुष्कां दीर्घां शष्कुलिकां भक्षयतस्तच्छब्दोत्थानाच्छब्दविज्ञानमुपजायतेऽत एव शुष्कत्वविशेषणं मृद्व्यामेतस्यां शब्दानुत्थानादिति शब्दश्रवणसमकालमेव च दीर्घत्वात् तस्या दृष्ट्या तद्रूपदर्शनं चाऽयमनुभवति अत एव च दीर्घत्वविशेषणं अतिह्रस्वत्वे मुखप्रविष्टायास्तस्याः शब्दश्रवणसमकालं रूपदर्शनानुभवाभावादिति रूपदर्शनसमकालं च तद्गंधज्ञानमनुभवति। अत एव शष्कुलीग्रहणं गंधोत्कटत्वात्तस्याः इक्षुखंडादिषु तु दीर्घेष्वऽपि तथाविधगंधाभावादिति गंधादिज्ञानसमकालं च तद्रसस्पर्शज्ञानेऽनुभवति तदेवं पंचानामपींद्रियविषयाणामुपलब्धिर्युगपदेवास्य प्रतिभाति। न चेयं सत्या इंद्रियज्ञानानां युगपदुत्पादायोगात्तथा हि मनसा सह संयुक्तमेवेंद्रियं स्वविषयज्ञानमुत्पादयति नाऽन्यथा अन्यमनस्कस्य रूपादिज्ञानानुपलंभाच्च च सर्वेंद्रियैः सह मनो युगपत्संयुज्यते तस्यैकोपयोगरूपत्वादेकत्र ज्ञातरि एककालेऽनेकैः संयुज्यमानत्वायोगात्तस्मान्मनसोऽत्यंताशुसंचारित्वेन कालभेदस्य दुर्लक्ष्यत्वाद्युगपत्सर्वेंद्रियविषयोपलब्धिरस्य प्रतिभाति। परमार्थतस्त्वस्यामपि कालभेदोऽस्त्येव ततो यथाऽसौ भ्रांतैर्नोपलक्ष्यते तथाऽवग्रहादिकालेऽपीति प्रकृते दीर्घत्वविशेषणं च शष्कुलिकायां गाथायामनुक्तमप्युपलक्षणत्वाद्व्याहितमिति परभावनीयं। तदेवमवग्रहादीनां नैकादिविकल्पं नाप्युत्क्रमाऽतिक्रमाविति स्थितमिति गाथार्थः॥ विशेषा०॥

(७) आभिनिबोधिकज्ञानस्य नन्द्यध्ययनेऽष्टाविंशतिभेदा यथा॥

एवं अट्ठावीसइविहस्स आभिणिबोहियनाणस्स।

वंजणुग्गहस्स परुवणं करिस्सामि पडिबोहगदिट्ठंतेणं मल्लगदिट्ठंतेण य॥

से किं तं पडिबोहगदिट्ठंतेणं पडिबोहगदिट्ठंतेणं से जहानामए केई पुरिसे कंचि पुरिसं सुत्तं पडिबोहिज्जा अमुगा अमुगत्ति तत्थ चोयगे पन्नवगं एवं वयासी किं एगसमयपविट्ठा पुग्गला गहणमागच्छंति दुसमयपविट्ठा पुग्गला गहमागच्छंति जाव दससमयपविट्ठा पुग्गला गहणमागच्छंति संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति असंखिज्जसमय पविट्ठा पुग्गला गहणमागच्छंति एवं वदंतचोयगं पण्णवए एवं वयासी नो एगसमयपविट्ठा पुग्गला गहणमागच्छंति नो दुसमयपविठ्ठा पुग्गला गहणमागच्छंति जाव नो दससमयपविट्ठा पुग्गला गहणमागच्छंति नो संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति असंखिज्जसमयपविठ्ठा पुग्गला गहणमागच्छंति सेतं पडिबोहगदिट्ठंतेणं से किं तं मल्लगदिट्ठंतेणं मल्लगदिट्ठंतेणं से जहानामए केइ पुरिसे आपागसीसाओ मल्लग गहाय तत्थेगं उदगबिंदु पक्खिविज्जा से नट्ठे अण्णेवि पक्खित्ते से वि नट्ठे एवं पक्खिप्पमाणेसु पक्खिप्पमाणेसु होही से उदगबिंदू जेणं तं मल्लगं रावेहि इत्ति होही से उदगबिंदू जेणं तंसि मल्लगंसि ? ठाहिति होही से उदगबिंदू जेणं तं मल्लगं भरिहिति होही से उदगबिंदू जेणं तं मल्लगं पवाहेहिति एवामेव पक्खिप्पमाणेहिं २ अणंतेहिं पुग्गलेहिं जाहे तं वंजणं पूरियं होइ ताहे हुंति करेइ नो चेव णं जाणई केविएससद्दाएतओईहं पविसइतओ जाणइ अमुगे एस सद्दाए तओ अवायं पविसइ तओ से अवगयं हवइ तओ णं धारणं पविसइ तओ णं धारेइ संखिज्जं वा कालं असंखेज्जं वा कालं से जहानामए केइ पुरिसे अव्वत्तं सद्दंसुणि ज्जातेणं सद्दोत्ति उग्गहिय नो चेवणं जाणइ के वेससद्दाइ तउ ईहं पविसइ तओ जाणेइ अमुगे एस सद्दे तओणं अवायं पविसइ तओ से उवगयं हवइ तओ धारणं पविसइ तओणं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं से जहानामए केइ पुरिसे अव्वत्तं रूवं पासिज्जा तेणं रूवत्ति उग्गहिए नो चेवणं जाणइ के वेसरूवेत्ति तओ ईहं पविसइ तओ जाणइ अमुगे एसरूवेत्ति तओ अवायं पविसइ तओ से उवगयं हवइ तओ धारणं पविसइ तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं से जहानाम ए केइ पुरिसे अव्वत्तं गंधअग्धाइज्जा तेणं गंधेत्ति उग्गहिए नो चेवणं जाणइ के वेस गंधेत्ति तओ ईहं पविसइ तओ जाणइ अमुके एस गंधे तओ अवाइ पविसइ तओ से अवगयं

हवइ तओधारणं पविसइ तओ धारइसंखिज्जं वा कालं असंखिज्जं वा कालं से जहानाम ए केइ पुरिसे अव्वत्तं रसं आसाइज्जा तेणं रसोत्ति उग्गहिए नो चेव णं जाणइ केवस रसेत्ति तओ ईहं पविसइ तओ जाणइ असुगे एम रसे तओ अवाइं पविसइ तओ से अवगयं हवइ तओ धारणं पविसइ तओणं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं से जहानामए केई पुरिसे अव्वत्तं फासं पडिसंवेइज्जा तेणं फासेत्ति उग्गहिए नो चेवणं जाणइ के वेसफासेत्ति तओ ईहं पविसइ तओ जाणइ अमुगे एस फासे तओअवायं पविसइ तओ से अवगयं हवइ तओ धारणं पविसइ तओणं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं । से जहा नाम एकेइ पुरिसे अव्वत्तं सुमिणं पासिज्जा तेणं सुमिणोत्ति उग्गहिए नो चेव णं जाणइ केवेस सुमिणेत्ति तओ ईहं पविसइ तओ जाणइ अमुगे एसुमणा तओ अवायं पविसइ तओ से अवगयं हवइ तओ धारणं पविसइ तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं से जहा तेणं सुमिणेत्ति उग्गहिए केवेससुमिणेत्ति सेत्तं मल्लगादिट्ठंतेणं ॥ नं०सू०

"एवं अट्ठावीसं" इत्यादि । एवमुक्तेन प्रकारेण अष्टाविंशतिर्विधस्य कथमष्टाविंशविधतेत्युच्यते । चतुर्द्धा व्यंजनावग्रहः अर्थावग्रहः षोढा,षोढा ईहा षड्विधोऽपायः षोढावधारणेत्या ष्टाविंशतिधा एवमष्टाविंशतिविधस्याभिनिबोधिकज्ञानस्य संबंधी यो व्यंजनावग्रहः तस्य स्पष्टतरस्वरूपपरिज्ञानाय प्ररूपणां करिष्यामि कथमित्याह प्रतिबोधिकदृष्टांतेन मल्लकदृष्टांतेन च तत्र प्रतिबोधयतीति प्रतिबोधकः सुप्तस्योत्थापकः स एव दृष्टांतः प्रतिबोधकदृष्टांतः । तेन मल्लकं शरावं तदेव दृष्टांतो मल्लकदृष्टांतस्तेन च (से किं त मित्यादि) अथ कोयं प्रतिबोधकदृष्टांतेन व्यंजनावग्रहस्य प्ररूपणे विशेषः। आचार्यः प्राह । प्रतिबोधकदृष्टांतेनयं व्यंजनावग्रहप्ररूपणा सा यथासंभवनामधेयः कोपि पुरुषः अत्र सर्वत्राप्येकारोमागधिकाभाषालक्षणानुससरणात् तच्च प्रागेवानेकश उक्तं च कंचिदानिर्दिष्टनामानं यथानामकं पुरुषं सुप्तं सत्प्रतिबोधयेत् कथमित्याह।अमुक२ इति तत्र एवमुक्ते सति चोदको ज्ञानावरणकर्मोदयतः कथितमपि सूत्रार्थं म..वगच्छन् प्रश्नं चोदयतीति चोदकः यथावस्थितं सूत्रार्थं प्रज्ञापयतीति प्रज्ञापको गुरुः तं एवं वक्ष्यमाणेन प्रकारेण अवादीत् भूतकालनिर्देशानादिमानागम इति ख्यापनार्थः वदनप्रकारमेव दर्शयति । किमेकसमयप्रविष्टाः पुद्गला गृहणमागच्छंति ग्राह्यतामुपगच्छति किं च द्विसमयप्रविष्टा इत्यादि सुगमं एवं वदंतं चोदकं प्रति प्रज्ञापकोऽवादीत् उक्तवान् नो एकसमयप्रविष्टा इत्यादि प्रकटार्थं यावन्नो संख्येयसमयप्रविष्टाः पुद्गला गृहणमागच्छंति नवरमयं प्रतिषेधः स्फुटप्रतिभासरूपार्थावग्रहलक्षणविज्ञानग्राह्यतामधिकृत्य वेदितव्यो यावता पुनः२प्रथमसमयादप्यारभ्य किंचि २ द्व्यक्तं ग्रहणमागच्छंतीति प्रतिपत्तव्यं (जंवंजणोग्गहम्मि विभणियं विण्णाणसव्वत्तामिति)वचनप्रमाणयात् ( असंखेज्जेत्यादि ) आदितआरभ्य प्रतिप्रसमयप्रवेशनेनासंख्येयान् समयान् यावत् ये प्रविष्टाः ते संख्येय समयप्रविष्टाःपुद्गला ग्रहणमागच्छंति अर्थावग्रहरूपविज्ञानग्राह्यतां उपपद्यते असंख्येयसमयप्रविष्टेषु तेषु चरमसमयेऽर्थावग्रहविज्ञानमुपजायते अर्थावग्रहाविज्ञानाच्च प्राक्सर्वोपि व्यंजनावग्रहः । एषा प्रतिबोधकदृष्टांतेन व्यंजनावग्रहस्य प्ररूपणा व्यंजनावग्रहस्य च कालो जघन्यतः आवलिका असंख्येयभाग उत्कर्षतः संखेया वलिकास्ता अपिसंख्येयावलिकाः प्राणपातपृथक् त्व कालमाना वेदितव्याः । यत उक्तं "वंजणवग्गहकालो आवलिया संखभागातुल्लो ॥ थोवा उक्कोसो पुण आणापाणा पुहुत्तंति" सेत्तमित्यादि निगमनं सेयं प्रतिबोधकदृष्टांतेन व्यंजनावग्रहस्य प्ररूपणा ( से किं तमित्यादि ) अथ केयं मल्लकदृष्टांतेन व्यंजनावग्रहस्य प्ररूपणा सूरिराह । मल्लकदृष्टांतेन व्यंजनावग्रहस्य प्ररूपणा सो निर्दिष्टस्वरूपो यथानामकः कश्चित् पुरुषः आवाक्शिरसः अवाकः प्रतीतः तस्य शिरसो मल्लकं शरावं गृहीत्वा इदं हि किल रूक्षं भवति ततोऽस्योपादानं तत्र मल्लके एकमुदकबिंदुं प्रक्षिपेत् स नष्टः तत्रैव तद्भावपरिणतिमापन्न इत्यर्थः । ततो द्वितीयं प्रेक्षिपेत् सोपि विनष्टः एवं प्रक्षिप्यमाणेषु भविष्यति स उदकबिंदुर्यस्तत् मल्लकं ( रवेहि इयत्ति ) देश्योयंशब्दः आर्द्रतां नेष्यति शेषं सुगमं यावदेवमित्यादि। एवमेव उदकबिंदुभिरिव निरंतरं प्रक्षिप्यमाणैरनंतैः शब्दरूपतापरिणतैः पुद्गलैर्यदा तद्व्यंजनं पूरितं भवति तदा हुं करोति हुंकारं मुंचति तदा तान्पुद्गलाननिर्दिश्यरूपतया परिच्छिनत्तीति भावार्थः ॥

अत्र व्यञ्जनशब्देन उपकरणेंद्रियं शब्दादिपरिणतं वा द्रव्यं तयोः संबंधो गृह्यते न कश्चिद्विरोधः । आह च भाष्यकृत् "तोएण मल्लगं पिव वंजणमापूरियं तं जं भणियं तं दव्वमिंदियं वा तस्सबंधो वनविरोहो१" तत्र यदा व्यंजनमुपकरणेंद्रियमधिक्रियते तदा पूरितमिति कोर्थः परिपूर्णो भृतं व्याप्त इत्यर्थः । यदा व्यंजनं द्रव्यमभिगृह्यते तदा पूरितमिति प्रभूतीकृतं स्वप्रमाणमानीतं स्वव्यक्तौ समर्थीकृतमित्यर्थः यदा तु व्यंजनं द्वयोरपि संबंधो गृह्यते तदा पूरितमिति । किमुक्तं भवति । तावान् संबंधोऽभूत् यावति सति ते शब्दादिपुद्गला ग्रहणमागच्छंति आह च चूर्णिकृत् "यदा पुग्गलदव्वा वंजणं तया पूरियंति पभूया ते पुग्गलदव्वा जाया" स्वं प्रमाणमानीताः सविसयपडिबोहसमत्था जाया इत्यर्थः जया "उवगरणिंदियं वंजणं तया पूरियंति कहं उच्यते जाहे तेहिं पुग्गलेहिं तं दव्विंदियं आवृतं भरियं" व्यापितं तया पूरयंति भण्णइ जया उभयसंबंधो वंजणं तया पूरियंति कहं उच्यते "दव्वेंदियस्स पुग्गला अंगीभावमागता पोग्गला द्रव्येंद्रियाभिषिक्ता इत्यर्थः । तया पूरियंति भण्णइ इति" एवं च यदा पूरितं भवति व्यंजनं तदा हुंकरोति अर्थावग्रहरूपेण ज्ञानेन तमर्थं गृह्णाति तं च गृह्णाति नाम जात्यादिकल्पनारहितं तथा चाह "नो चेव णं जाणइ कोवेस सद्दाइत्ति" नपुनरेवं जानाति क एष शब्दादिरर्थ इति स्वरूपद्रव्यगुणक्रियाविशेषकल्पनारहितं अनिर्देश्यं सामान्यमात्रं गृह्णातीत्यर्थः । एवं रूपसामान्यमात्रकारणत्वादर्थावग्रहस्य एत-

स्माच्च पूर्वः सर्वोऽपि व्यंजनावग्रहः एवा मल्लकदृष्टांतेन व्यंजनाऽवग्रहस्य प्ररूपणा॥हुंकारकरणं वार्थावग्रहबलप्रवर्तितं नतईहा प्रविशति किमिदं किमिति विमर्शं कर्त्तुमारभते ।तत ईहानंतरं क्षयोपशमविशेषभावाज्जानाति अमुक एष शब्दादिरिति । तत एवं रूपे ज्ञानपरिणामे प्रादुर्भवति सति सोऽपायं प्रविशति ततोऽपायानंतरं अंतर्मुहूर्तकालं यावदुपगतं भवति सामीप्येनात्मनि शब्दादिज्ञानं परिणतं भवति अविच्युतिरंतर्मुहूर्त्तं कालं यावत् प्रवर्तत इत्यर्थः । ततो धारणां प्रविशति सा च धारणा वासनारूपा द्रष्टव्या यत आह "ततो णमि"त्यादि ततो धारणायां प्रविशेत् णमितिवाक्यालंकारे संख्येयं वा असंख्येयं वा कालं हृदि धारयंति तत्र संख्येयवर्षायुषः संख्येयं कालमसंख्येयवर्षायुषस्तु असंख्येयं कालं । अत्राह । सुप्तमंगीकृत्य पूर्वोक्तप्रकारः सर्वोऽपि घटते। जाग्रतस्तु शब्दश्रवणसमनंतरमेवाऽवग्रहेहाव्यतिरेकेणावायज्ञानमुपजायते तथा २ प्रतिप्राणिसंवेदनात् तन्निषेधार्थमाह ( से जहानामए इत्यादि ) स यथानामकः कश्चित् जाग्रदपि पुरुषोऽव्यक्तं शब्दं श्रृणुयात् अव्यक्तमेव प्रथमं शब्दं श्रृणोति अव्यक्तं नामानिर्देश्यं स्वरूपं नाम जात्यादिकल्पना रहितं अनेनाऽवग्रहमाह। अर्थाऽवग्रहश्च श्रोत्रेन्द्रिय संबंधिव्यंजनाऽवग्रहमंतरेण न भवति ततोव्यंजनाऽवग्रहोऽप्युक्तो वेदितव्यः।अत्राह।नचैवं क्रमेण कोऽप्युपलभ्यते किंतुप्रथमत एव शब्दाऽपायज्ञानमुपजायते सूत्रेऽपि वा व्यक्तमिति शब्दविशेषणं कृतं ततोऽयमर्थो व्याख्येयः। अव्यक्तमनवधारितमपि शांखशार्ङ्गादिविशेषं शब्दं श्रृणुयादिति इदं च व्याख्यानमुत्तरसूत्रमपि संवादयति "तेणं सद्दोत्ति उग्गहिए" तेन प्रमात्रा शब्देन इत्यवगृहीतं ( नोचेव णं जाणइ केवंस सद्दाइ ) न पुनरेवं जानाति क एष शब्दः शांखः शार्ङ्ग इत्यत्रादिशब्दात् रसादिष्वप्ययमेव न्याय इति ज्ञापयति। तत ईहां प्रविशतीत्यादि सर्व्वं संबद्धमेव । तदेतदयुक्तं। सम्यक् वस्तुतत्त्वापरिज्ञानात् इह हि यत्किमपि वस्तु निर्श्चीयते तत्सर्व्वमीहापूर्वकमनीहितस्य सम्यक् निश्चितत्वाऽयोगात् न खलु प्रथमाक्षसंन्निपाते सत्यधूमाक्षसंन्निपाते सत्यधूमदर्शनेऽपि यावत्किमयं धूमः किं वा मशकवर्तिरिति विमृश्य धूमगतकंठक्षणनकालीकरणसोष्मतादिधर्म्मदर्शनात् सम्यक् धूमं धूमत्वेन विनिश्चिनोति तावत्स धूमो निश्चितो भवति । अनिवर्तितशंकतया तस्य सम्यक्निश्चितत्वायोगात् तस्मादवश्यं यो विशेषनिश्चयः स ईहापूर्वकः शब्दोऽयमिति च निश्चयो वस्तुविशेष निश्चयो रूपादिव्यवच्छेदात्ततोऽवश्यमितः पूर्वमीहया भवितव्यं । ईहा च प्रथमतः सामान्यरूपेणाऽवगृहीते भवति नानवगृहीते। न खलु सर्वथा निरालंबनमीहनं क्वापि भवदुपलभ्यते नचानुपलभ्यमानं प्रतिपत्तुं शक्नुमः सर्वस्या अपि प्रेक्षावतां प्रतिपत्तेः प्रमाणमूलत्वादन्यथा प्रेक्षावताक्षितिप्रसक्तेः।

तस्मादीहायाः प्रागवग्रहो नियमात्प्रतिपत्तव्यः ॥

अमुमेवार्थं भाष्यकारोऽपि द्रढयति "ईहिज्जइ नागहियं नज्जइ नानीहियं नयानायं । धारिज्जइ जं वत्थुं तेण कमो उग्गहाईओ" ॥ अवग्रहश्च शब्दोऽयमिति ज्ञानात् पूर्वं प्रवर्त्तमानोऽनिर्देश्यसामान्यमात्रग्रहणरूप एवोपपद्यते नान्यः अत एवोक्तं सूत्रकृता ( अव्यक्तं शब्दं श्रृणुयादिति ) स हि परमार्थतः शब्द एवं ततः प्रज्ञापकस्तं शब्दमनूद्य तद्विशेषणं आचष्टे अव्यक्तमिति तं शब्दमव्यक्तं श्रृणोति किमुक्तं भवति । शब्दव्यक्तावपि व्यक्तं न श्रृणोति किं तु सामान्यमात्रमनिर्देश्यं गृह्णाति इत्यर्थः। यदपि चोक्तं तेन प्रमात्रा शब्दमित्यवगृहीतमिति तत्र शब्द इति प्रतिपादयति प्रज्ञापकः सूत्रकारो न पुनस्तेन प्रमात्रा शब्द इति अवगृह्यते शब्द इति ज्ञानस्याऽप्यपायरूपत्वात् तथा हि शब्दोऽयमिति । किमुक्तं भवति । न शब्दाऽभावो न च रूपादिः किंतु शब्द एवाऽयमिति ततो विशेषनिश्चयरूपत्वात् अयमवगमोपायरूप एव नावग्रहरूपोऽथ वाऽवग्रहप्रतिपादनार्थमिदं उच्यमानं वर्त्तते ततः शब्द इति प्रज्ञापकः सूत्रकारो वदति न पुनस्तेन प्रमात्रा शब्द इत्यवगृह्यते इति स्थितं तथा चाह सूत्रकृत् "नो चेव णमित्यादि" न पुनरेवं जानाति क एष शब्दादिरर्थ इति शब्दादिरूपतया तमर्थं न जानातीति भावार्थः।अनिर्देश्यसामान्यमात्रप्रतिभासात्मकत्वादर्थाऽवग्रहस्य अर्थाऽवग्रहश्च श्रोत्रेंद्रियघ्राणेंद्रियादीनां व्यंजनाऽवग्रह पूर्वक इति पूर्वं व्यंजनाऽवग्रहोऽपि द्रष्टव्यः तदेवं सर्वत्राप्यवग्रहेहापूर्वं अवायज्ञानमुपजायते । केवलमभ्यासदशामापन्नस्य शीघ्रं शीघ्रतरमवग्रहादयः प्रवर्तंते इति कालसौक्ष्म्यात्ते स्पष्टं न संवेद्यंते इति स्थितं तत ईहां प्रविशति तत्र केचिदीहां संशयमात्रं मन्यंते । तदयुक्तं । संशयो हि नामाज्ञानमिति ज्ञानांशरूपा चेहा ततः सा कथमज्ञानरूपा भवितुमर्हति न त्वीहाऽपि किमयं शांखः किं वा शार्ङ्ग इति एवं रूपतया प्रवर्त्तते संशयोऽपि चैवमेव ततःकोऽनयोः प्रतिविशेषः उच्यते इह यत् ज्ञानं शांखशार्ङ्गादिविशेषाननेकानालंबते न चासद्भूतं विशेषमपासितुं शक्नोति किं तु सर्वात्मना शयानमिव वर्तते कुंठीभूतं तिष्ठतीत्यर्थः । तदसद्भूतविशेषापर्युदासपरिकुंठितं संशयज्ञानमुच्यते यत्पुनः सद्भूतार्थविशेषविषये हेतूपपत्तिव्यापारपरतया सद्भूतार्थविशेषोपादानाभिमुखमसद्भूतविशेषत्यागाभिमुखं च तदीहा आह च भाष्यकृत् ॥

"जमणेगत्थालंबणमपज्जुदासपरिकुंठियं चित्तं ।
सेइ इव सव्वप्पणओ तं संसयरूपमन्नाणं ॥ १ ॥
जं पुण सयत्थहेऊववत्तिवावारतप्परममोहं ।
भूया भूय विसेसादाणव्वायाभिमुहमीहा ॥ २ ॥

इह यदि वस्तु सुबोधं भवति विशिष्टश्च मतिज्ञानावरणक्षयोपशमो वर्त्तते ततोऽतर्मुहूर्तकालेन नियमात्तद्वस्तु विनिश्चिनोति यदि पुनर्वस्तु दुर्बोधं न च तथा विधो विशिष्टो मतिज्ञानावरणक्षयोपशमस्तत ईहोपयोगादच्युतः पुनरप्यंतर्मुहूर्तं कालमीहते एवमीहोपयोगाविच्छेदप्रभूतान्यंतर्मुहूर्त्तानि यावदीहते तत ईहानंतरं जानाति अमुक एषोऽर्थः शब्द इति । इदं च ज्ञानमवायरूपं ततोऽस्मिन् ज्ञाने प्रादुर्भवति णमिति वाक्यालंकारेऽपायं प्रविशति ततः ( से ) तस्योपगतमविच्युत्या सामीप्येनात्मनि परिणतं भवति । ततो धारणां वासनारूपां प्रविशति संख्येयमसंख्येयं वा कालमेवमनेन क्रमप्रकारेण एतेन पूर्वदर्शितेनाभिलापेन शेषेष्वपि चक्षुरादीष्विंद्रियेषु अवग्रहादयो वाच्याः । नवरमभिलापविषये "अव्वत्तं सद्दं सुणेज्जा" इत्यस्य स्थाने "अव्वत्तं रूपं पासेज्जा" इति वक्तव्यं उपलक्षणमेतत् तेन सर्वत्राऽपि रूपस्थाने रूवमिति वक्तव्यं तद्यथा "तेणरूवत्ति उग्गहिए नो चेवणं जाणइ

केवेस रूवत्ति ततो ईहं पविसइ जाणइ असुगे एस रूवत्ति ततोवायं पविसइ" इत्यादि तदवस्थमेव न वरमिह व्यंजनावग्रहो व्याख्येयः अप्राप्यकारित्वात् चक्षुषो घ्राणेंद्रियादिषु तु व्याख्येयः । एवं घ्राणेंद्रियविषये "अव्वत्तं अग्घाइज्जा" इत्यादि वक्तव्यं जिह्वेंद्रियविषये "अव्वत्तं रस आसाएज्जा" इत्यादि स्पर्शनेंद्रियविषये "अव्वत्तं फासं पडिसंवेज्जा" इत्यादि यथा च शब्द इति निश्चिते तदुत्तरकालमुत्तरधर्म्मजिज्ञासायां किं शांखः किं शार्ङ्ग इत्येवंरूपा ईहा प्रवर्तते तथा रूपामिति निश्चिते तदुत्तरकालधर्मसुत्तरमर्थजिज्ञासायां किमयं स्थाणुः किं वा पुरुष इत्यादिरूपा प्रवर्तते । एवं घ्राणेंद्रियादिष्वपि समानगंधादीनि वस्तूनि ईहालंबनानि वेदितव्यानि । आह च भाष्यकृत् "सेसेसुवि रूवाइसु विसएसु होंति रूवलक्खाइं।पायं पच्चासन्नत्तणेण ईहाए वत्थूणि ॥ १ ॥ थाणुपुरिसाइ कट्ठुप्पलादिसंभियकरिल्लमंसाइ । सप्पुप्पलनालाइ व सामण्णरूवाइं सयाइं ॥ २ ॥" सेजहानामए इत्यादि स यथा नामकः कोऽपि पुरुषोऽव्यक्तंस्वप्नं प्रतिसंवेदयेत् अव्यक्तं नाम सकलविशेषविकलमनिर्देश्यमिति यावत्स्वप्नमिति प्रज्ञापकः सूत्रकारो वदति शत्रुप्रतिपत्तास्वप्नादिव्यक्ति विकलं किंचिदनिर्देश्यमेव तदानीं गृह्णाति तथा तेन प्रतिपत्ता "सुविणोत्ति उग्गहिए इति" स्वप्नगृहीतः अत्राऽपि स्वप्न इति प्रज्ञापकः सूत्रकारो वदति स तु प्रतिपत्ता अशेषविशेषवियुक्तमेवाऽवगृहीतवान् तथा चाह न पुनरेवं जानाति क एष स्वप्न इत्यपि तमर्थं न जानातीति भावः तत ईहां प्रविशतीत्यादि प्राग्वत् एवं स्वप्नमधिकृत्य नो इंद्रियस्यार्थाऽवग्रहादयः प्रतिपादिताः ।अनेन चोल्लेखेनान्यत्रापि विषये वेदितव्याः । तदेवं मल्लकदृष्टांतेन व्यंजनावग्रहप्ररूपणां कुर्वता प्रसंगतोऽष्टाविंशतिसंख्या अपि मतिज्ञानस्य भेदाः सप्रपंचमुक्ताः । संप्रति मल्लकदृष्टांतमुपसंहरति "सेतं मल्लगदिट्ठंतेणं" सेयंमल्लकदृष्टांतेन व्यंजनावग्रहस्य प्ररूपणा नं० टी० ॥

मतान्तरेण अष्टाविंशतिभेदत्वं विशेषावश्यके यथा—

"उग्गह ईहावाओ य" इत्यादिगाथायामाभिनिबोधिकज्ञानस्य चत्वारि भेदवस्तूनि समासत इत्युक्तं । तत्किं व्यासतो बहुभेदमप्याभिनिबोधिकज्ञानं भवतीत्याशंक्य तद्भेदबहुविधत्वदर्शनात्समासेनेति विशेषणस्य सफलत्वमाह—

सो इंदियाइभेएण छव्विहा वग्गहादओ भिहिया ।
ते होंति चउव्वीसं चतुव्विहं वंजणोग्गहणं ॥ ३०० ॥
अट्ठावीसइभेयं एयं सुयनिस्सियं समासेणं ।
कइ तु वंजणोग्गहवज्जे छोट्टणमेयम्मि ॥ ३०१ ॥
असुयनिस्सियमेव अट्ठावीसइविहंति भासंति ॥
जनवग्गहो दुभेओ वग्गहसामण्णेणग्गहियो ॥ ३०२ ॥

श्रोत्रेंद्रियादीनां पंचानामिंद्रियाणां मनःषष्ठानां यो भेदस्तेनाऽवग्रहादयः प्रत्येकं षड्विधाश्चत्वारोऽप्यभिहिताः । ततस्तैः षड्भिश्चत्वारो गुणिताश्चतुर्विंशतिर्भवंति । अन्यच्च स्पर्शनरसनघ्राणश्रोत्रेंद्रियचतुष्टयभेदा द्व्यंजनाऽवग्रहणं व्यंजनावग्रहश्चतुर्विधो भवति एवमेतत् श्रुतनिःसृतमाभिनिबोधिकं ज्ञानं सर्वमप्यष्टाविंशतिविधं संपद्यते । एतदपि भेदाभिधानं वक्ष्यमाणबहुतरभेदकलापापेक्षयाऽत्राऽपि समासेन संक्षेपेण द्रष्टव्यं ॥

अन्ये त्वेतानष्टाविंशतिभेदानन्यथा पूरयंति तन्मतमुपदर्शयति ।(के इत्ति)त्यादि केचित्पुनराचार्या एतस्मिन्नेव श्रुतनिःसृते मतिज्ञानभेदसमुदये व्यंजनावग्रहभेदचतुष्टयवर्ज्जे ( उप्पत्तिया वेणइया कम्मिया पारिणामिया ) इत्यादिनाऽन्यत्र प्रागपि च प्रतिपादित स्वरूपमश्रुतनिःसृतमौत्पत्तिक्यादिबुद्धिचतुष्टयं क्षिप्त्वा मीलयित्वा एवमष्टाविंशतिविधं सर्वमपि ज्ञानमिति भाषंते। अयं हि तेषामभिप्रायः । मतिज्ञानस्य संपूर्णस्येह भेदाः प्रतिपादयितुं प्रक्रांताः । यदि वा श्रुतनिःसृतं बुद्धिचतुष्टयं न गण्यते तदा श्रुतनिः सृतरूपस्य मतिज्ञानदेशस्यैवेतेऽष्टाविंशतिभेदाःप्रोक्ता भवंति । ननु सर्वस्याऽपि यदा तूक्तन्यायेन श्रुतनिः सृतमश्रुतनिः सृतं च मील्यते तदा सर्वस्याऽपि तस्य भेदाः सिद्धा भवंति ननु साधूक्तं तैः केवलमेवं सति व्यंजनाऽवग्रहचतुष्टयं क्व क्रियतां नह्येतदपि विक्रीयमाणं खलखंडमात्रेण क्रीतं किंत्विदमपि मतिज्ञानांतर्गतमेव ततोऽस्मान्निष्काश्यमानं वराकमिदं क्वावस्थितिं बध्नात्वित्याशंक्याह "जमवग्गहो" इत्यादि यस्माद्व्यंजनाऽवग्रहभेदतो योऽयमवग्रहो द्विभेदः प्रागुक्तः सोऽवग्रहसामान्येन गृहीतोऽवग्रहसामान्येंऽतर्भावितः।भवति च विशेषाणां सामान्येंऽतर्भावो यथा सेनायां गजादीनां वनादौ च धवखदिरादीनां अतोऽवग्रहस्य सामान्यरूपतया एकत्वादवग्रहेहापायधारणानामिंद्रियमनोभेदेन प्रत्येकं षड्विधत्वात्। श्रुतनिः सृतमतिज्ञानस्य चतुर्विंशतिरेव भेदाः। अश्रुतनिःसृतस्य तु बुद्धिचतुष्टयलक्षणाश्चत्वार इत्येवं सर्वं मतिज्ञानमष्टाविंशतिभेदं सिद्धयतीति केषां चिन्मतमिति गाथात्रयार्थः ॥

एतच्च तन्मतमयुक्तं कुत इत्याह ।

चउवइरित्ताभावा जम्हा न तओग्गहाईओ भिन्नं ।
तेणोग्गहाइसामण्णओ य तं तग्गयं चेव ॥ ३०३ ॥

चतुर्भ्योऽवग्रहेहापायधारणावस्तुभ्यो व्यतिरिक्तं चतुर्व्यतिरिक्तं तस्य चतुर्व्यतिरिक्तस्याश्रुतनिःसृतस्याऽभावात्कारणाद्यस्माद्यतो न तदश्रुतनिःसृतमवग्रहादिभ्यो भिन्नं । ततः किमित्याह । तेन कारणेनावग्रहादिसामान्यादवग्रहादिसामान्यमाश्रित्य "तयं तग्गयं चेवत्ति" तेष्ववग्रहादिसंबंधिष्वष्टाविंशतिभेदेष्वंतर्गतं प्रविष्टमंतर्भूतं तदंतर्गतमेवाश्रुतनिःसृतं बुद्धिचतुष्टयमतः किमिति व्यञ्जनावग्रहचतुष्टयं पानयित्वा श्रुतनिःसृतं बुद्धिचतुष्टयं पुनरपि प्रक्षिप्यत इत्यभिप्रायः । इदमुक्तं भवति "सोइंदियाइभेएण छव्विहा वग्गहादओ" इत्यादिना प्रतिपादितैरवग्रहादिसंबंधिभिरष्टाविंशतिभेदैः किलाऽसंग्रहीतत्वाद्व्यंजनावग्रहचतुष्टयापगमं कृत्वा श्रुतनिः सृतं बुद्धिचतुष्टयं मतांतरवादिभिः प्रक्षिप्यते एतच्चायुक्तं यतः "सोइंदियाइभेएणे" त्यादिनाऽवग्रहादीनामेव अष्टाविंशतिभेदाः प्रोक्ताः । अवग्रहादयश्च बुद्धिचतुष्टयेऽपि संति । अतोऽवग्रहादिभणनद्वारेण तदप्यश्रुतनिःसृतबुद्धिचतुष्टयमेतेष्वष्टाविंशतिभेदेषु संगृहीतमेवेति किमिति तैः पुनरपि प्रक्षिप्यत इति गाथार्थः ।

तत्रैतत्प्रष्टव्यं परस्य कथमौत्पत्तिक्यादिबुद्धिचतुष्टयेऽवग्रहादयः संभवंति तत्र यथा ते भवंति तथा दर्शयन्नाह ।

किह पडिकुक्कुडहीणो जुज्झे विंवेणगहो ईहा।
किं सुसिलिट्ठमवाओ दप्पणसंकंतविंबंति ॥ ३०४ ॥

इह किलागमे "भरहसिलमिंटकुक्कुडतिलवालुयहत्थिअगउवणसंडोपायसआइया पत्तेखाडहिला पंचपिथरोये" त्यादिना औत्पत्तिक्यादिवुद्धीनां बहून्युदाहरणान्युक्तानि तन्मध्याच्छेषोपलक्षणार्थं कुक्कुटोदाहरणमाश्रित्यौत्पत्तिक्यां बुद्धौ अवग्रहादयो भाव्यंते। राज्ञा नटकुमारकस्य-भरतस्य किल बुद्धिपरीक्षणार्थमादिष्टं यदुतायं मदीयकुक्कुटो द्वितीयकुक्कुटमंतरेणैकक एवायं योधनीयस्ततस्तेन-जिज्ञासितं मनसि कथमयं प्रतिकुक्कुटहीनः प्रतिपक्षभूतद्वितीयकुक्कुटवर्जितो युध्येत । एतच्च जिज्ञासमानस्य नस्य झगित्यंव स्फुरितं चेतसि किमित्याह (विंबेतेत्ति) आत्मीयेन प्रतिविंबेन पुरो वीक्षितेन दर्प्पाध्मातत्वादयं युध्यत इत्येव गृहीतमित्यर्थः। एतच्च किमित्याह। अवग्रहसामान्येनैव विंबमात्रग्रहणादवग्रहो मतिप्रथमभेद इत्यर्थः। ईहा तर्हि केत्याह ईहा किं "सुसिलिट्ठ" मिति किं पुनस्तर्हि प्रतिविंबमस्य योधनाय सुश्लिष्टं सुष्ठु युज्यमानकं भवेत्किं तडागपयः पूरादिगतमाहोश्विद्दर्प्पणगतमित्यादिविंबविशेषान्वेषणमीहेत्यर्थः ॥

अपायमुपदर्शयति, "अवाओ दप्पणसंकंतविंवंत्ति" कल्लोलादिभिः प्रतिक्षणमपनीयमानत्वादस्पष्टत्वाच्च जलादिगतविंबमिह न युक्तं ततः स्थिरत्वेन स्पष्टादित्वेन च चरणाघातादिविषयत्वाद्दर्प्पणसंक्रांतमेव तदत्र युज्यत इत्येवं विंबविशेषनिश्चयोऽपाय इत्यर्थः। एवमन्येष्वपि बुद्ध्युदाहरणेष्ववग्रहादयो भावनीयास्तस्माद् बुद्धिचतुष्टयेऽप्येषां सद्भावात् श्रुतनिःसृतमतिज्ञानसंबंधिष्ववग्रहादिगताऽष्टाविंशतिभेदेष्ववग्रहादिसाम्येन बुद्धिचतुष्टयस्यांतर्भावो भावनीयस्ततो न युक्तं व्यंजनावग्रहचतुष्टयाऽपगमेन पुनर्बुद्धिचतुष्टयप्रक्षेपणमिति स्थितमिति गाथार्थः ॥

आह ननु यद्यवग्रहादिसाम्येनाश्रुतनिः सृतावग्रहादिष्वंतर्भवंति तर्हि "आभिनिवोहियनाणं दुविहं पन्नत्तं तं जहा सुयनिस्सियं असुयनिस्सियं वे"त्येवमागमे यः श्रुतनिःसृतादश्रुतनिः सृतस्य भेद उक्तः स विशीर्यत एवेत्याशंक्याह। "जह उग्गहाइ सामण्णओ वि तमणिस्सिया भिन्नं" यथेहावग्रहादिसामान्ये सत्यपि अवग्रहादित्वे तुल्येऽपि सतीत्यर्थः। किमित्याह। श्रोत्रेंद्रियादिना भेदस्तथा हि एकश्रोत्रेंद्रियसंबंधिनोऽवग्रहादयः यावदन्ये स्पर्शनेंद्रियसंबंधिनोऽपरे तु मनः संबंधिनः। तथा तेनैव प्रकारेणाऽवग्रहादिसामान्ये सत्यपि तदश्रुतनिःसृतं भिन्नं श्रुतनिः सृतादितिशेषः । कस्मात् हेतोर्भिन्नमित्याह "अणिस्सियत्ति"भावप्रधानोऽयं निर्देशो निः सृतत्वात् श्रुतानिःसृतत्वादित्यर्थः ॥ एतदुक्तं भवति अष्टाविंशतिभेदविचारप्रक्रमेऽवग्रहादि मत्त्वसामान्यं धर्ममाश्रित्याश्रुतनिः सृतस्य श्रुतनिः सृत एवांतर्भावो विवक्ष्यते। श्रुतनिःसृताश्रुतनिःसृतविचारप्रस्तावेत्वश्रुतनिःसृतत्वं विशिष्टं धर्ममुररीकृत्य श्रुतनिः सृतादश्रुतनिः सृतं पृथगेवेष्यत इत्यागमोक्तस्तयोर्भेदोऽपि न किंचित् विशीर्यते। न च वक्तव्यं कथमेकस्यैवैकस्मादेव भेदश्चा भेदश्च विरोधादिति यतो यदि तेनैव धर्म्मेण भेदोऽभेदश्चेष्येत स्यात्तदा विरोधोधर्मांतरनिबंधनौ तु भेदाऽभेदौ न विरुध्येते किं हि नाम तद्वस्त्वस्ति यस्य वस्त्वंतराद्भेदाऽभेदौ न स्तः। घटादयोऽपि हि घटादित्वसामान्येन परस्परमभेदिनोऽपि स्वद्रव्यक्षेत्रकालादिमत्त्वेन भिन्ना इत्यत्र बहु वक्तव्यं तत्तु नोच्यते ग्रंथगहनताप्रसंगादनेकांतजयपताकादिषु विस्तरेणोक्तत्वाच्चेति गाथार्थः ॥

स्यादेतत्किमेतावता कष्टेन मदीयव्याख्यापक्ष एव सुखावहः । श्रुतनिःसृताश्रुतनिःसृतयोरभेदापत्तेरभावात्समस्तमतिज्ञानभेदभणनाच्चेति तदेतदयुक्तं सिद्धांताभिप्रायबहिर्भूतत्वादेतदेवोपसंहारपूर्वमाह।

अट्ठावीसइभेयं सुयनिस्सियमेव केवलं तम्हा।
जम्हा तम्मि सत्ते पुणरस्सुअनिस्सयं भणियं ॥ ३०५ ॥

तस्मादवग्रहादिसाम्यादश्रुतनिःसृतस्य श्रुतनिःसृतेऽतर्भावं कृत्वा केवलं श्रुतनिःसृतमेव मतिज्ञानमष्टाविंशतिभेदं व्याख्यातुमुचितं न तु परोक्तनीत्या व्यंजनावग्रहाऽपगमेन श्रुताऽश्रुतनिः सृतमिति कुत इत्याह "जम्हा" इत्यादि यतः "से किं तं सुयनिस्सिय" मित्येवमागमे तस्मिन् श्रुतनिः सृते समाप्ते निष्ठां नीते सति पुनः पश्चात् "से किं तं अस्सुयनिस्सिय" मित्यादिना श्रुतनिः सृतं भणितं। अयमभिप्रायः। श्रुतनिःसृतं सभेदमप्यभिधाय पश्चादेवाऽश्रुतनिःसृतमुक्तमतः कथं तत्तत्र प्रक्षिप्यते। तस्मात्समयाऽभिप्रायेण श्रुतस्यैवाष्टाविंशतिभेदा इत्यतो न भवद्व्याख्यानं श्रेय इति। तदेवं "चउवइरित्ताभावा" इत्यादि गाथाः मूलटीकाऽभिप्रायेण व्याख्याता अन्ये त्वन्यथाऽपि व्याख्यानयंति तदभिप्रायस्त्वतिगंभीरत्वान्न विद्म इति गाथार्थः विशे० ज्ञा० द्वा० ॥

एते चावग्रहादयोऽष्टाविंशतिसंख्या अपि मतिज्ञानस्य भेदाः सप्रपंचमुक्ताः संप्रतिमल्लकदृष्टांतमुपसंहरति "से तं मल्लगदिट्ठंतेणं से यं"मल्लकदृष्टांतेन व्यंजनाऽवग्रहस्य प्ररूपणा एते चावग्रहादयोऽष्टाविंशतिभेदाः प्रत्येकं बह्वादिभिः सेतरैः सर्वसंख्याया द्वादशसंख्यैर्भेदैर्भिद्यमाना यदा विवक्ष्यंते तदा षट्त्रिंशदाधिकं भेदानांशतत्रयं भवति । तत्र बह्वादयः शब्दमधिकृत्य भाव्यंते । शंखपटहादिनानाशब्दसमूहं पृथगेकैकं यदा च गृह्णाति तदा बह्ववग्रहः। यदा त्वेकमेव किंचिच्छब्दमवगृह्णाति तदा अबह्ववग्रहः। तथा शंखपटहादिनानाशब्दसमूहमध्ये एकैकशब्दमनेकैः पर्यायैः स्निग्धगांभीर्यादिभिर्विशिष्टं यथावस्थितं च यदा वा गृह्णाति तदा स बहुधावग्रहः। यदा त्वेकमनेकं वा शब्दमेकपर्यायविशिष्टं अवगृह्णाति तदा सौ बहुविधावग्रहः। यदा त्वेकमनेकं वा शब्दमेकपर्यायाविशिष्टमनेकपर्यायाविशिष्टं वा क्षिप्रमवगृह्णाति तदा स क्षिप्रावग्रहः। यदा तु चिरेण तदाऽक्षिप्रावग्रहः। तमेव शब्दं स्वरूपेण यदा जानाति न लिंगपरिग्रहात् तदा निश्चितावग्रहः। लिंगपरिग्रहेण त्ववगच्छतोऽनिश्रितावग्रहः। अथवा परधर्मैर्विमिश्रितं यद्ग्रहणं तन्निश्रितावग्रहः। यत्पुनः। परधर्मैरविमिश्रितस्य ग्रहणं तदनिश्रितावग्रहः। तथाहि । निश्चितमवगृह्णतो निश्चितावग्रहः। संदिग्धमवगृह्णतः संदिग्धावग्रहः । सर्वदैव बह्वादिरूपेणावगृह्णतो ध्रुवावग्रहः। कदाचिदेव पुनर्बह्वादिरूपेणावगृह्णतो ध्रुवावग्रहः। एष च बहुविधादि रूपोवग्रहो विशेषसामान्यावग्रहरूपो द्रष्टव्यः। नैश्चयिकस्यावग्रहस्य सकलविशेषनिरपेक्षानिर्देश्यसामान्यमात्रग्राहिण एकसा-

मयिकस्य बहुविधादिविशेषग्राहकत्वासंभवाद्बह्वादीनां चानंतरोक्तं व्याख्यानं भाष्यकारोऽपि प्रमाणयति। "नाणासद्दसमूहं बहुविहं सुणइ भिन्नजातीयं । बहुविहमणेगभेयं एक्कक्कनिद्धमहुराइ ॥ १ ॥ खिप्पमचिरेण तं चि य सरूवओ जमनिस्सियमलिंगं ॥ निच्छियमसंसयजं धुवमच्चंत नउ कयाइ ॥ २ ॥ एतोच्चियपडिवक्खं साहेज्जा निस्सिए विसेसो वा ॥ परधम्म हि विमिस्सं निस्सियमवनिस्सियं इयरं ॥ ३ ॥" यदा पुनर्लोकस्य मंदं मंदतरमंदतमस्पष्टस्पष्टतरस्पष्टतमत्वादिभेदतो विषयस्याऽल्पमहत्वसंसंनिकर्षादिभेदतः क्षयोपशमस्य च तारतम्यभेदतो भिद्यमानं मतिज्ञानं चिंत्यते तदा तदनंतभेदं प्रतिपत्तव्यं ॥ नं० टी० आ०म० प्र० कर्म० ॥

( ८ ) तथा च विशेषावश्यकेऽष्टाविंशतिविधत्वं मतिज्ञानस्योपदर्श्य विवक्षान्तरेण बहुतरभेदमप्येतद्भवतीति दर्शयन्नाह ॥ विशे० ॥

जं बहुविहखिप्पानिस्सियनिस्सियधुवे अरविभिन्ना ।
पुणरोग्गहादओतो तं छत्तीसत्तिसयभेयं ॥ ३०६ ॥

यद्यस्माद्बहु २ विधाक्षिप्रानिश्रितनिश्रितध्रुवैः सेतरैःसप्रतिपक्षैरेकैकशो विभिन्ना भेदभाजः पुनरप्यवग्रहादय इष्यंते ततस्तदेवाष्टाविंशतिविधमाभिनिबोधिकज्ञानमेतैर्द्वादशाभिर्भेदैः प्रत्येकं भिद्यमानत्वात् षड्त्रिंशदधिकत्रिशतभेदं भवति । इदमुक्तं भवति । अनंतरवक्ष्यमाणन्यायेन संक्षेपतः प्रागभिहितयुक्त्या च श्रोत्रादिभिः कश्चिद्बहुवगृह्णाति कश्चित्त्वबहु अपरस्तु बहुविधमन्यस्त्वबहुविधमेवं यावदन्यो ध्रुवमपरस्त्वध्रुवमवगृह्णातीत्येवमीहापायधारणास्वपि सप्रभेदासु प्रत्येकममीद्वादशभिर्गुणिता षट्त्रिंशदधिकानि त्रीणि शतानि भेदानां भवंतीति गाथार्थः ॥

अथ शब्दलक्षणं विषयमाश्रित्य तावद्बह्वादीनामर्थं व्याख्यातुमाह—

नाणा सद्दसमूहं बहुं पि हुं सुणइ भिन्नजातीयं ।
बहुविहमणेगभेयं एक्केकं निद्धमहुराइ ॥ ३०७ ॥
खिप्पमचिरेणतं चिय सरूवओ जं अणिस्सियमलिंगं ।
निच्छियमसंसयं जं धुवमच्चंतं नउ कयाइ ॥ ३०८ ॥

इह श्रवणयोग्यदेशस्थे तूर्यसमुदाये युगपद्वाद्यमाने कोऽपि श्रोता तस्य तूर्यसंघातस्य संबंधिनं पटहढक्काशंखभेरिभाणकादिना शब्दसमूहमाकर्णितं संतं क्षयोपशमविशेषादबहुमवग्रहादिना शृणोति जानाति । कोऽर्थ इत्याह । पृथग्भिन्नजातीयं एतावंतोऽत्र भेरिशब्दाः एतावंतो भाणशब्दाः एतावंतस्तु शंखपटहादिशब्दाः इत्येवं पृथगेकैकशो भिन्नजातीयत्वेन नानाशब्दसमूहं बुद्ध्यन इत्यर्थः । अन्यस्त्वल्पक्षयोपशमत्वात्तत्समानदेशोऽप्यबहु शृणोति सामान्येन नानातूर्यशब्दोऽयमित्यादिमात्रकमेव जानाति इति प्रतिपत्त एवमुत्तरगाथायमनिर्दिश्यमानः प्रतिपक्षमात्रता सर्वत्राववोद्धव्या । अन्यस्तु क्षयोपशमवैचित्र्याद्बहुविधं शृणोति कोऽर्थ इत्याह । अनेकभेदं इदमपि व्याचष्टे । एकैकं शंखभेर्यादिशब्दं स्निग्धमधुरत्वतरुणमध्यमवृद्धपुरुषवाद्यत्वादिबहुविधधर्म्मोपेतं जानातीत्यर्थः । अन्यस्त्वबहुविधं स्निग्धं मधुरत्वादिस्वल्पधर्मान्वितमेव पृथग्भिन्नजातीयं नानाशब्दसमूहं जानाति अन्यस्तु क्षिप्रं । कोऽर्थः इत्याह अचिरेण शीघ्रमेव परिच्छिनत्ति नतु चिरेण विमृश्येत्यर्थः । अन्यस्त्वक्षिप्रं चिरविमर्शितं जानाति तथा "तंचिय सरूवओ जं अणिस्सियमिति" तमेव नानाशब्दसमूहं कोऽप्यनिसृतं मुणतीति संबंधः । यः किमित्याह । यं सरूपतो जानाति कोऽर्थ इत्याह । अलिंग पताकादिलिंगानिःसृतमित्यर्थः । इदमुक्तं भवति । तमेव शब्दसमूहं देवकुलमत्र तथाविधपताकादर्शनादित्येवं लिंगं निश्चयं कृत्वा स्वरूपत एवायमवगच्छति तमनिसृतं मुणति इत्युच्यत इति। तमेव लिंगनिश्चयाज्जानानो निसृतं मुणतीत्युच्यते तथा "निच्छियमसंसयं जं तियमवच्छिन्नत्ति" तं निश्चितं मुणति निश्चितं तावदित्थमेतन्मया परं न जाने तथा वा स्यादन्यथा वेत्येवं संदेहानुविद्धं जानन्ननिश्चितं मुणति । ध्रुवमित्यादि ध्रुवं कोर्थोऽत्यंतं नतु कदाचिदिति इदमुक्तं भवति । यथैकदा बह्वादिरूपेणावगतं सर्वदैव तथाऽवबुद्ध्यमानो ध्रुवं मुणतीत्युच्यते यस्तु कदाचिद्बह्वादिरूपेण सोऽध्रुवं मुणतीति गाथाद्वयार्थः ॥

इतरशब्दं व्याचिख्यासुराह—

एतोच्चिय पडिवक्खं साहिज्जा निस्सिए विसेसो वा ।
परधम्मेहि विमिस्सं निस्सिय मनिणिस्सिय इयरं ॥ ३०९ ॥

एतस्मादेवोक्तस्वरूपाद्बह्वादिपदषट्कसमूहात्प्रतिपक्षभूतद्विपर्ययमबहु२विधा क्षिप्रनिसृतानिसृताध्रुवपदषट्कलक्षणं साधयेत् स्वयमेव ब्रूयात् मेधावी स च लाघवार्थं बह्वादिविचार एव साधितस्तदेवं व्याख्याता द्वादशापि बह्वादयो भेदाः । अथवा निसृते स प्रतिपक्षेऽपि व्याख्यानांतरलक्षणो विशेषो वक्तव्यः । क इत्याह । परधर्मैरश्वादिवस्तुधर्मैर्विमिश्रं युक्तं गवादिवस्तु गृह्णाणस्य निसृतं भवति गामश्वादिरूपेण गृह्णतो येयं विपर्ययोपलब्धिस्तन्निसृतमित्यर्थः । इतरस्तु यत्परधर्मैर्विमिश्रं वस्तु न गृह्णाति किं तु यथावस्थितमेव तत्सद्भूतोपलब्धिरूपमनिसृतं गवादिकं वस्तु गवादिरूपेणैव गृह्णतो येयमविपर्ययोपलब्धिस्तदनिसृतमित्यर्थः । अत्राह । ननु बहुबहुविधपरिज्ञानादीनि विशेषणानि स्पष्टार्थग्राहकेष्ववायादिषु भवंतु व्यंजनावग्रहनिश्चयार्थावग्रहयोस्तु कथं तत्संभवस्तथाहि। "सामगणमणिद्देसं सरूवनामाइ कप्पणारहियमित्यादि" वचनान्निश्चयावग्रहे शब्दादिविशेषमात्रग्रहणमपि नास्ति कुतो यथोक्त बह्वादिपरिभवज्ञानसंभवः । अथ व्याख्यानाद्यवहारार्थावग्रहोगृह्यते तस्मिश्च विशेषग्राहित्वाद्बहुपरिज्ञानादि विशेषणान्युपपद्यंत एवभवत्वेवं तथाप्यष्टाविंशतिभेदमध्यसंगृहीतस्य व्यंजनावग्रहस्यकथमेतद्विशेषणसंभवस्तत्र हि सामान्यार्थग्रहणमात्रमप्यप्राकृतं बह्वादिपरिज्ञानं तु दुरोत्सारितमेवेति । सत्यमेतत्किं तु व्यंजनावग्रहादयः कारणमपायादीनां तानंतरेणापायाद्यभावात्ततश्चापाया विगतं बह्वादिपरिज्ञानं तत्कारणभूतेषु व्यंजनावग्रहादिष्वपि योग्यतयाऽभ्युपगंतव्यं । न हि सर्वथाऽविशिष्टात्कारणाद्विशिष्टं कार्यमुत्पत्तुमर्हति कोद्रवबीजादपि शालिफलादिप्रसवप्रसंगादिति प्रागप्युक्तप्रायमित्यलमतिचर्चितेनेति गाथार्थः ॥

ननु कथमेकस्यापि मतिज्ञानस्यैतावंतो भेदा इत्याशंक्य

निर्दिष्टभेदानां कारणं अन्येषामपि बहुतरभेदानां सहेतुकं संभवं चोपसंहारगर्भमाह—

सव्वं वज्झंतरनिमित्तवइचित्तओ मइबहुत्तं ।
किंचिम्मत्तविसेसभिज्जमाणं पुणोणंतं ॥ ३१० ॥

एवं तावद्बाह्याभ्यंतरनिमित्तवैचित्र्यान्मति बहुत्वमुक्तं । तत्र बाह्यं निमित्तं मतिज्ञानस्य कारणं आलोकविषयादिकं । तस्य च स्पष्टाऽव्यक्तमध्यमाल्पमहत्वसंनिकर्षविप्रकर्षभेदाद्वैचित्र्यं । अभ्यन्तरनिमित्तं पुनरावरणक्षयोपशमोपयोगोपकारणेंद्रियाणि अस्याऽपि च वैचित्र्यं शुद्धाऽशुद्धमध्यमभेदात्ततश्चैतस्माद्बाह्याभ्यंतरनिमित्तवैचित्र्यान्मातिज्ञानस्य यथोक्तभेदबहुत्वमभिहितमवगंतव्यं। एतदेव च मतिज्ञानं यथोक्तनिमित्तद्वयस्य किंचिन्मात्रभेदाद्भिद्यमानं पुनरनंतमपि भवतीति प्रतिपत्तव्यं । सामान्येन मतिज्ञानमात्रवतां जीवानामनंतत्वात् तेषां च क्षयोपशमादिभेदेन मतेर्भिन्नत्वात् इति भावः इति गाथार्थः ॥

(९) अत्राह कश्चिन्नन्ववग्रहादयो ज्ञानमेव न भवंति स्पष्टार्थनिर्भासाद्यभावात्संशयादिवत्कथममी मतिज्ञानभेदा इत्याशंक्यैतेषां ज्ञानत्वसाधनायाह ॥

इह संसयादणंतभावाओवग्गहादयो नाणं ।
अणुमाणथिवाह न संसयाइसाब्भादओ तेसुं ॥ ३११ ॥

अवग्रहादयो ज्ञानमिति प्रतिज्ञा । संशयादिष्वनंतर्भावादितिहेतुः । आदिशब्दाद्विपर्ययाऽनध्यवसायपरिग्रहः । अनुमानवदिति दृष्टांतः । इह संशयाद्यनंतभूतैर्वर्णगंधादिभिः पुद्गलधर्मैर्व्यभिचारसंभवात्सूत्रस्य सूचकत्वादात्मधर्मत्वे सति संशयाद्यनंतर्भावादिति सविशेषणो हेतुर्द्रष्टव्यः । अत्राह परो ननु सविशेषणे हेतावनैकांतिकता मा भूदसिद्धतात्वनिवार्यैवेत्येतदेवाह ( न संशया ) इत्यादि सूरे नं तद्भवदीयं वचः कुत इत्याह । संशयादिसद्भावतस्तेष्वऽवग्रहादिषु तेषां संशयादिरूपत्वात्संशयाद्यनंतर्भावादित्यसिद्धो हेतुरिति भावः इति गाथार्थः ॥

कथं पुनस्तेषु संशयादिसद्भाव इत्याह ॥

ननु संदिद्धे संसयविवज्जया संसओ हवेहा वि ।
वत्ता सो वा निस्सियमवग्गहो णज्झवसियं तु ॥ ३१२ ॥

ननु "खिप्पमंचिरेणे" त्यादि गाथायां यदुक्तं निच्छियमसंसयं जंति तत्प्रतिपक्षे यदुच्यते कोऽपि "संदिग्धं मुणातीति" तत्र संदिग्धे ज्ञायमाने संशयस्तावद्व्यक्त एव यत्र च संशयस्तत्र संदिहानस्य कदाचिद्विपर्ययोऽपि स्यादित्येवं संदिग्धे संशयविपर्ययौ तावदनिवारितावेव अथ वा किमनेनोत्तरभेदरूपे संदिग्धे दूषणप्रदानेन हंत ! येयं मूलभेदरूपा ईहा सापि संशय एव निश्चयत्वे तस्याऽपायत्वप्रसंगादिति अथ वा "परधम्मे हि विमिस्सं निस्सिय" मित्यत्र यन्निःसृतमुक्तं तदपि गवादिकमश्वादिरूपेण गृह्णद्विपर्यास एव न हि नृत्यन्विपर्यासो भवति किंत्वन्यस्याऽन्यरूपेण ग्रहणमेवेति भावः । नैश्चयिकोऽर्थोऽवग्रहरूपोऽवग्रहः । पुनरनध्यवसितमनध्यवसाय एव अनिर्देश्यसामान्यमात्रग्राहित्वान्नाम कस्याऽप्यर्थस्य संबंधोऽध्यवसायोऽस्तीति कृत्वा तदेवं संशयादिरूपत्वान्नाऽवग्रहादयो ज्ञानमित्यतो न ते मतिज्ञानभेदास्तद्भेदत्वे वा मतिज्ञानमपि न किंचिद्दोषशतजर्जराऽवग्रहाद्यात्मकत्वादिति गाथार्थः ।

अत्राचार्यः प्राह—

इह ऊमोग्गहाइणं ससयाइत्तणं तह वि नाम ।
अब्भुवगं तु भण्णइ नाणं चिय संसयाईया ॥ ३१३ ॥

इह यदवग्रहादीनां संशयादित्वं त्वयोद्भावितं तदद्याऽपि साध्यं साधनीयं वर्तते त्वदुक्तनिर्युक्तिकवाङ्मात्रेणैव मदुक्तहेतोरसिद्धत्वादिति मंतव्यं न पुनरेतावतैव जाता त्वत्समीहितसिद्धिरिति प्रमुदितेन न भाव्यमिति भावः । तथा हि यदुक्तं संदिग्धे संशयविपर्ययाविति तदयुक्तमभिप्रायापरिज्ञानान्न ह्यस्माभिस्तथाविधवस्तु प्रापकं संदिग्धत्वं विवक्षितं येन च वस्त्वप्रापणाद्विपर्ययप्रापणाद्वा तत्र संशयविपर्ययौ स्यातां किं तु कृतेऽपि वस्तुप्रापकेऽवितथे निश्चये यत्र तथाविधक्षयोपशमवैचित्र्यान्मनसि किंचिदल्पं शंकामात्रं न निवर्तते सम्यक् न जाने तथैवं स्यादन्यथा वेति तदेह संदिग्धत्वं विवक्षितं। न चैतावन्मात्रेणैवाऽज्ञानता युक्ता व्यवहारोच्छेदप्रसंगान्न खलु धूमबलाकादेः सकाशात्सम्यग्दहनजलादौ निश्चितेऽपि मुखेन तन्निश्चयं ब्रुवतामपि सर्वेषां प्रमातॄणां चेतसि शंकामात्रं विनिवर्तते । न च ते सर्वेऽपि निश्चितं वस्तु न प्राप्नुवंति न च काऽपि संशयविपर्यासत्वेन अज्ञानता तेषां दृष्टा यदप्युच्यते ईहाऽपि संशय एव तदप्यसंगतं न हि किमयं स्थाणुः पुरुषो वा इत्यादिरूपः संशय ईहाभ्युपगम्यते । किं तु यदनंतरमेव निश्चयोऽवश्यं भवति स एवाऽन्वयधर्मघटनव्यतिरेकधर्मनिराकरणाभ्यां निश्चयाभिमुखो बोध ईहेत्यसकृदेव पूर्वमावेदितं । न चाऽयं संशयो निश्चयाभिमुखत्वान्नाऽपि निश्चयस्तत्प्रत्यासत्तिमात्रप्राप्तत्वान्न च वक्तव्यं निश्चयादन्यस्य सर्वस्य संशयत्वादज्ञानतैवेति निश्चयोपादानक्षणस्यापि सर्वथाऽज्ञानत्व प्रसंगात्तथा च सति निश्चयस्याप्यज्ञानता प्राप्तिर्न ह्यविशिष्टात्कारणाद्विशिष्टकार्योत्पत्तिरित्युक्तत्वादिति। यदप्युक्तं निःसृतं विपर्यास इति तदप्ययुक्तं लिंगासृत निःसृत मित्यस्मिन् व्याख्यानेऽस्य दोषस्य सर्वथैवाऽसंबध्यमानत्वा'त्परधम्मेहि विमिस्सं निस्सिय' मित्यस्य व्याख्यानांतरमात्रत्वाद्भवतु तदपि व्याख्यानं तथाऽपि व्याख्यानात्परधर्मास्तस्मिन्नाशंकिता एव द्रष्टव्या नतुनिश्चिता यथा गौरेवात्र केवलमश्व इव प्रतिभासतीति। एतावन्मात्रेणैव चेयं विपर्ययोपलब्धिरवगंतव्या । ननु सर्वथा विपर्ययधर्मनिश्चयात्सर्वथा विपर्यये तत्राऽश्वादिसत्त्वप्रसंगान्न च वक्तव्यमेवं सतीदमनिश्चतान्नभिद्येत तत्र परधर्मनिःसृतत्वाभावाद्विवक्षितवस्त्वभावशंकामात्रस्यैव सद्भावादिति । न च विपर्ययधर्मशंकामात्रेणाऽप्यज्ञानं वस्तु प्राप्तिविघाताऽभावादिति । यदप्युक्तमवग्रहोऽनध्यवसाय इति तदप्ययुक्तं । तत्र ह्यध्यवसायः साक्षादेव नास्ति योग्यतया पुनरस्त्येवाऽन्यथा तत्कार्येष्वपायादिष्वपि तदभावप्रसंगादित्युक्तमेव । अतिमत्तमूर्च्छितानामेव हि ज्ञानमनध्यवसाय उच्यते तत्र योग्यतयाप्यध्यवसायस्य वक्तुमशक्यत्वात्तत्कार्यभूतस्याऽपायाऽध्यवसायस्याप्यलक्षणत्वात्तदेवमवग्रहादीनामसिद्धं संशयादित्व तथाभ्युपगंतुमंगीकृत्यापि तेषां संशयादिरूपतां ग्रपः । ज्ञानमत्र संशयादयः संशयविपर्ययाऽनध्यवसायाः त-

तश्च संशयादिरूपत्वेऽपि नावग्रहादीनां मतिज्ञानभेदत्वं विरुद्ध्यत इति भावः । इदमुक्तं भवति । नाऽस्माभिः समीहितवस्तुप्रापकं ज्ञानमितरदज्ञानमित्येवं व्यवहारिणां प्रमाणाऽप्रमाणभूते ज्ञानाऽज्ञाने विचारयितुमुपक्रान्ते किं तु ज्ञायते येन किमपि तत्सम्यग्दृष्टिसंबंधिज्ञानमित्येतावन्मात्रकमेव व्याख्यातुमभिप्रेतं वस्तुपरिज्ञानमात्रं तु संशयादिष्वपि विद्यते इति न तेषामपि सम्यग्दृष्टिसम्बन्धिनां ज्ञानत्वहानिरिति गाथार्थः ॥

कथं पुनः संशयादयो ज्ञानमित्याह—

वत्थुस्स देसगमकत्तभावओ परमयप्पमाणं च ।
किह वत्थुदेसविण्णाणहेयवो सुण सत वोच्छं ॥ ३१४ ॥

ज्ञानमेव संशयादय इति प्राक्तनी प्रतिज्ञा, वस्तुनो गवादेः स्वपरपर्यायैरनंतधर्माऽध्यासितस्य यो देश एकदेशस्तस्य गमकत्वभावादिति हेतुः पराभिमतं प्रमाणं निश्चयज्ञानरूपं तद्वदिति दृष्टांतः । इह यद्वस्त्वेकदेशस्य गमकं ज्ञानं दृष्टं यथा परमतं निश्चयरूपं प्रमाणं वस्त्वेकदेशगमकाश्च संशयादयस्ततस्ते ज्ञानमिति । अत्र हेतोरसिद्धतां मन्यमानः परः पृच्छति । कथं वस्त्वेकदेशविज्ञानहेतवः संशयादयो वस्तुनो निरंशत्वेन देशस्यैवाभावान्न ते एकदेशग्राहिणो घटंत इति परस्याऽभिप्रायः । आचार्यः प्राह । यत्त्वया पृष्टं तद्वक्ष्ये भणिष्यामि अहं, शृणु समवहितः समाकर्णय त्वमितिगाथार्थः ॥

यथा प्रतिज्ञातमेवाह ।

इह वत्थुमत्थवयणायपज्जयणंतसत्तिसंपन्नं ।
तस्सेगदेसविच्छेयकारिणो संसयाईया ॥ ३१५ ॥

इह वस्तुनो घटादेः मृण्मयत्वपृथुबुध्नत्ववृत्तत्वकुंडलायतग्रीवायुक्तत्वादयोऽर्थरूपाः पर्यायाः अर्थपर्यायाः अनन्ता भवन्ति घटकुंभकलशादयस्तु वचनरूपाः पर्याया वचनपर्यायास्तेऽप्यनंता भवंति । आदिशब्दात्परव्यावृत्तिरूपा अप्यनंता गृह्यंते । ततश्चेत्थं समासः कर्त्तव्यः । अर्थश्च वचनानि चादिशब्दात्परव्यावृत्तयश्च तद्रूपाः पर्याया अर्थवचनादिपर्यायास्ते च तेऽनंताश्च त एव शक्तयस्ताभिः संपन्नं युक्तं यतो वस्तु भवत्यतस्तस्यैकदेशविच्छेदकारिणः संशयादयो ज्ञेयाः । इदमुक्तं भवति । न खलु वयं निरंशवस्तुवादिनः किं तु यथोक्ताऽनंतधर्म्मलक्षणवस्तुनोऽनंता एव देशाः संतीति वयं मन्यामहे । तन्मध्याच्च एकैकदेशग्राहिणः संशयादयोऽपि भवंत्येवेति कथं न ते ज्ञानं । यदि पुनस्ते किमपि न गृह्णीयुस्तदा तेषामनुन्मानमत्र स्यात्सर्वथा निर्विषयज्ञानस्य प्रसवाऽयोगात्गगनज्ञानवत्तनश्च ज्ञायतेऽनेनेति ज्ञानमिति व्युत्पत्त्यर्थात्संशयादानामपि ज्ञानता न विरुद्ध्यत इति गाथार्थः ।

अथ समस्तवस्तुरूपग्राह्येव ज्ञानं नैकदेशग्राहकमित्येतदाशंक्य निराकुर्वन्नाह ।

अहवा न सव्वसम्भावभासया तो न नाणमिट्ठंते ।
नणु निण्णओवि नेइसमेन्तगाहित्ति अन्नाणं ॥ ३१६ ॥

अथ वा अथ चेदेवं ब्रूयात्परः किमित्याह । न सर्वधर्मावभासनात्मकान कात्स्न्येन गवादिवस्तुसमग्रधर्म्मग्राहिणस्ततो न ज्ञानमिष्टं ते संशयादयः संपूर्णवस्तुग्राहिण एव ज्ञानत्वाद्दत्रोत्तरमाह । ननु भवता ज्ञानत्वेनाऽङ्गीकृतस्तर्हि निर्णयोऽप्यज्ञानमेव प्राप्नोति कुत इत्याह । तस्य गवादिवस्तुन एकदेशमात्रग्राहीति कृत्वा । तथा हि गौरयं घटोऽयं पटोऽयमित्यादिभिर्निर्णयैरपि गोत्वघटत्वादिको वस्त्वेकदेश एव गृह्यतेऽतस्तेऽपि कथं ज्ञानरूपतां भजेयुः । अथ देशस्य देशिनमंतरेण कदाचिदप्यभावात्तद्ग्रहणद्वारेण सर्वमपि वस्तु निर्णयेन गृहीतमित्यतो ज्ञानमेवाऽसौ तदेतत्संशयादिष्वपि समानं । तथा हि । किमयं स्थाणुः पुरुषो वेत्यादि संशयोऽपि स्थाणुत्वादिकं वस्त्वेकदेशं जानाति । विपर्यासोऽपि विपर्ययवस्त्वेकदेशमवबुद्ध्यते । अनध्यवसायोऽपि सामान्यमात्ररूपं वस्त्वेकदेशमवगृह्णाति ततश्च संशयादयोऽप्येकदेशपरिज्ञानद्वारेण समग्रमपि वस्तु जानंत्येवेति तेषामपि ज्ञानता केन वार्यते । अथ गृह्णातु संशयादिभिर्वस्त्वेकदेशः केवलं संशयेन संदिग्धो, विपर्यासेन विपर्यस्तोऽनध्यवसायेन त्वविशिष्ट इति, चेन्ननु प्रतिविहितमप्यदः किं विस्मरसि यतो ज्ञायतेऽनेनेति ज्ञानं मतिरूपं ज्ञानं मतिज्ञानमित्येवं सामान्येनैव सम्यग्दृष्टिसंबंधि मतिज्ञानमिह विचार्यते । तस्य च संशयादिरूपस्य निर्णयरूपस्य वा सम्यग्दृष्टिसंबंधिनो ज्ञानता न विरुध्यते ज्ञायतेऽनेनेति ज्ञानमित्यस्याऽर्थस्य सर्वत्रोपपद्यमानत्वादिति । ननु यदि संशयादयोऽपि मतिज्ञानं तर्हि चतुर्भेदत्वमतिक्रम्य सप्तभेदत्वं तस्य प्रसज्जत इति चेन्नैतदेवं यतोऽनध्यवसायस्तावत् सामान्यमात्रग्राहित्वेनाऽवग्रहे अंतर्भवति संशयोऽपि पूर्वोक्तस्वरूपेहाप्रकारत्वात्कारणत्वाच्च तस्यामेवांतर्विशति । यदपि संशयस्य पूर्वमीहात्वमपाकृतं तदपि व्यवहारिजनानुवृत्त्या नतु सर्वथेति विपर्यासस्तु निश्चयरूपत्वात्साक्षादपाय एवेति कुतश्चतुर्भेदाऽतिक्रमः । इत्थं चैतदंगीकर्त्तव्यमन्यथा सम्यग्दृष्टिसंबंधिनः संशयादयो मतिज्ञानादतिरिच्यमानाः काऽन्तर्भवेयुः अज्ञाने इति चेन्नैवं "सम्मदिट्ठीणं भंते किं नाणी अन्नाणी ? गोयमा ! नाणी नो अन्नाणी"त्याद्यागमवचनात्सम्यग्दृष्टेः सदैव ज्ञानित्वादिति भवत्वेवं तथाऽपि सम्यग्दृष्टिसंबंध्येव मतिज्ञानमिह विचार्यत इति कुतो लभ्यत इति चेदुच्यते । ज्ञानपंचकमेवेह विचारयितुमुपक्रांतं । ज्ञानं च सम्यग्दृष्टेरेव भवत्यतस्तत् संबंध्येव मतिज्ञानमिह विचार्यते । सम्यग्दृष्टिसंबंधिनां च संशयादीनां ज्ञानता साध्यत इत्यलं विस्तरेणेति गाथार्थः ॥ विशे० ॥

( १० ) सम्प्रति पुनर्द्रव्यादिभेदतश्चतुष्प्रकारतामाह–नं० ॥

तं समासओ चउव्विहं पन्नत्तं तं जहा दव्वओ खेत्तओ कालओ भावओ तत्थ दव्वओ णं आभिणिबोहियनाणी आएसेणं सव्वदव्वाइं जाणइ न पासइ खेत्तओणं आभिणिबोहियनाणी आएसेणं सव्वं खेत्तं जाणइ न पासइ कालओ णं आभिणिबोहियनाणी आएसेणं सव्वं कालं जाणइ न पासइ भावओणं आभिणिबोहियनाणी आएसेणं सव्वे भावे जाणइ न पासइ ॥ नं०सू०॥

"तं समासओ इत्यादि" तन्मतिज्ञानं समासतः संक्षेपेण चतुर्विधं प्रज्ञप्तं । तद्यथा द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र द्रव्यतो णमिति वाक्यालंकारे आभिनिबोधि-

कज्ञानी । "आदेसेणंति" आदेशः प्रकारः स च द्विधा सामान्यरूपो विशेषरूपश्च । तत्रेह सामान्यरूपो ग्राह्यस्ततः आदेशेन द्रव्यजातिरूपसामान्यादेशेन सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति किंचिद्विशेषतोऽपि यथा धर्मास्तिकायो धर्मास्तिकायस्य प्रदेशः तथा धर्मास्तिकायो गत्युपष्टंभहेतुरमूर्त्तो लोकाकाशप्रमाण इत्यादि न पश्यति सर्वान् धर्मास्तिकायादीन् घटादींस्तु योग्यदेशावस्थितान् न पश्यत्यपि अथ वा आदेश इति सूत्रादेशस्तस्मात्सूत्रादेशात्सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति न तु साक्षात्सर्वाणि पश्यति । ननु यत्सूत्रादेशतो ज्ञानमुपजायते तत् श्रुतज्ञानं भवति शब्दार्थपरिज्ञानरूपत्वात् । अथ च मतिज्ञानमभिधीयमानं वर्त्तते तत्कथमादेश इति सूत्रादेशो व्याख्यातः तदयुक्तं । सम्यग्वस्तुतत्त्वापरिज्ञानादिह हि श्रुतभावितमतेः श्रुतोपलब्धेष्वप्यर्थेषु सूत्रानुसारमात्रेण येऽवग्रहेहापायादयो बुद्धिविशेषाः प्रादुःषंति ते मतिज्ञानमेव न श्रुतज्ञानं सूत्रानुसारनिरपेक्षत्वात् । आह च भाष्यकृत् । "आदेसोत्ति व सुत्तं सुयोवलद्धेसु तस्स मइनाणं । पसरइ तब्भावणया विणा वि सुत्ताणुसारेण १" एवं क्षेत्रादिष्वपि नवरं तान् सर्वथा न पश्यति । तत्र क्षेत्रं लोकालोकात्मकं कालः सर्वाधाररूपोऽतीतानागतवर्त्तमानरूपो वा, भावाश्च पंचसंख्या औदयिकादयस्तथाचाह भाष्यकृत् " आएसोत्तिपगारो उप्पायसेणं सव्वदव्वाइं । धम्मत्थियाइ याई जाणइ न उ सव्वभावेणं ॥ १॥ खेत्तं लोगालोगं कालं सव्वद्धमहव तिविहं च । पंचोदइयाईए भावे जं नेयमेवइयं ॥ ॥ २ ॥ नं० टी० ॥

( ११ ) अथ तेषां मेव कालनिरूपणार्थमाह निर्युक्तिकारः–

उग्गहो एकं समयं ईहावाया मुहुत्तमंतं तु ।

कालमसंखं संखं च धारणा होइ नायव्वा ॥

अवग्रह इति । व्याख्यानान्नैश्चयिकोर्थोऽवग्रहो द्रष्टव्यः । स किमित्याह सर्वजघन्यः कालविशेषः समयस्तमेकं समयं भवति न परतः । ईहापायौ प्राक्निर्णीतस्वरूपौ ( मुहुत्तमंतंत्विति ) अंतःशब्दो मध्यवचनस्ततश्च जघन्यत उत्कृष्टतश्च मुहूर्त्तान्तर्भिन्नं मुहूर्त्तं ज्ञातव्यौ भवतः अंतर्मुहूर्त्तमित्यर्थः । तुशब्दश्चकारार्थश्चकारश्चानुक्तसमुच्चये । ततश्च व्यञ्जनाऽवग्रहव्यावहारिकार्थोऽवग्रहौ च प्रत्येकमंतर्मुहूर्त्तं भवत इति द्रष्टव्यं । क्वचित् (मुहुत्तमद्धंत्वि)ति पाठस्ततोऽपि मुहूर्त्तार्द्धशब्देनांतर्मुहूर्त्तमेव मंतव्यं तु शब्दोऽपि । तथैव । कलनं कालः न विद्यते संख्या पक्षमासर्त्वयनसंवत्सरादिका यस्यासावसंख्यः पल्योपमादिलक्षणस्तं कालमसंख्यं । तथा । संख्यायत इति संख्यः । पक्षमासर्त्वयनादिप्रमित इत्यर्थः । तं संख्यं च शब्दादंतर्मुहूर्त्तं च धारणा प्रागभिहितस्वरूपा भवति ज्ञातव्या । इदमुक्तं भवति । अविच्युतिस्मृतिवासनाभेदाद्धारणा त्रिविधा । तत्राऽविच्युतिरूपा स्मृतिरूपा च प्रत्येकमंतर्मुहूर्त्तं भवति । या तु तदर्थज्ञानावरणक्षयोपशमरूपा स्मृतिबीजरूपा वासनाख्या धारणा सा संख्येयवर्षायुषां सत्वानां संख्येयं कालं । असंख्येयवर्षायुषां तु पल्योपमादिजीविनामसंख्येयं कालं भवतीति निर्युक्तिगाथार्थः ॥

अथैनां भाष्यकारो व्याख्यानयति–

अत्थोग्गहो जहन्नो समयं सेसोग्गहादओ वीसुं ।

अंतो मुहुत्तमेगं तु वासना धारणा मोत्तुं ॥ ३३३ ॥

अवग्रह इत्यस्य व्याख्यानमर्थोऽवग्रह इति । अयमपि निश्चयव्यवहारभेदतो द्विधा ततो व्यवहारार्थोऽवग्रहव्यवच्छेदार्थमाह । जघन्य इति । अतिस्तोककालत्वेन जघन्यो नैश्चयिकोऽर्थावग्रहो नेतर इत्यर्थः अयमेकसमयं भवति शेषास्त्वेकां वासनारूपां धारणां मुक्त्वा ये अवग्रहादयो व्यञ्जनाऽवग्रहा व्यावहारिकार्थोऽवग्रहेहापायाऽविच्युतिविस्मृतिरूपा मतिभेदास्ते सर्वेऽपि विष्वक् पृथक् एकमेवांतर्मुहूर्त्तं भवंति वासनाधारणायास्तु निर्युक्तिगाथोक्तमेव कालमानमित्यभिप्राय इति गाथार्थः ॥ विशे० ॥

(१२) अथ नानादेशजविनेयाऽनुग्रहार्थं तत्पर्यायानभिधित्सुराह—विशे० ॥

ईहा अपोहवीमंसा मग्गणाय गवेसणा सण्णा ।

सई मई पण्णा सव्वं आभिनिबोहियं ॥

ईह चेष्टायामीहनमीहा सतामन्वयिनां व्यतिरेकिणां चार्थानां पर्यालोचना । अपोहनमपोहोनिश्चयः । विमर्षणं विमर्षः । अपायात्पूर्वः ईहायाश्चोत्तरः प्रायः शिरःकंडूयनादयः पुरुषधर्मा इह घटंते इति सप्रत्ययस्तथा । मार्गणमन्वयधर्मान्वेषणं मार्गणा । च शब्दः समुच्चयार्थः । गवेषणं व्यतिरेकधर्म्मालोचनं गवेषणा । तथा संज्ञानं संज्ञा अवग्रहांतरकालभावी मतिविशेष एव । स्मरणं स्मृतिः । पूर्वानुभूतार्थालंबनप्रत्ययः । मननं मतिः कथंचिदर्थपरिच्छित्तावपि सूक्ष्मधर्मालोचनरूपा बुद्धिः । तथा प्रज्ञानं प्रज्ञा विशिष्टक्षयोपशमजन्या प्रभूतवस्तुगतयथावस्थितधर्म्मालोचनरूपा मतिः सर्वमिदमाभिनिबोधिकं कथंचित् किंचिद्भेददर्शनेऽपि तत्त्वतः सर्वं मतिज्ञानमेवेदमित्यर्थः इति निर्युक्तिश्लोकार्थः ॥

अत्रैव तद्व्याख्यानाय भाष्यं–

होइ अपोहो वाओ सई धिई सव्वमेव मई पन्ना ।

ईहा सेसा सव्वं इदमाभिणिबोहियं जाण ॥

अपोहस्तावत्किमुच्यत इत्याह । अपोहो भवत्यपायः योऽयमपोहः स मतिज्ञानतृतीयभेदोऽपायो निश्चय उच्यत इत्यर्थः । स्मृतिः पुनर्धृतिर्धारणोच्यते धारणाभेदत्वेऽप्यवयवे समुदायोपचारादिति । मतिप्रज्ञे मतिप्रज्ञाशब्दाभ्यां सर्वमपि मतिज्ञानमुच्यते । ईहा (से सत्ति) शेषाऽभिधानानि त्वीहाविमर्षणमार्गणागवेषणासंज्ञालक्षणानि सर्वाण्यऽपि ईहांतर्भावीनि द्रष्टव्यानीत्यर्थः । एवं विशेषतः कथं चिद्भेदसद्भावेऽपि सामान्यतः सर्वमिदमाभिनिबोधिकज्ञानमेव जानीहि । यत ईहाऽपोहादयः सर्वेऽप्यमी आभिनिबोधिकज्ञानस्यैव पर्यायाः केषांचिद्वचनपर्यायत्वात्केषांचित्त्वर्थपर्यायत्वादिति एतदेव दर्शयति ॥

मइपज्जाभिनिबोहियबुद्धीओ होंति वयणपज्जाया ।

जाउग्गहाइ सण्णा ते सव्वे अत्थपज्जाया ॥

इह ये शब्दाः किल सर्वं वस्तु संपूर्णं प्रतिपादयंति ते वचनरूपा वस्तुनः पर्याया वचनपर्याया उच्यंते । ये तु तदेकदेशमभिदधति तेऽर्थैकदेशप्रतिपादकाःपर्याया अर्थपर्यायाः

उच्यंते । तत्र मतिप्रज्ञाभिनिबोधिकबुद्धयो वचनपर्याया भवंति । मतिप्रज्ञाभिनिबोधिकबुद्धिलक्षणाश्चत्वारः शब्दाः आभिनिबोधिकज्ञानपंचकाद्यभेदलक्षणस्य वचनपर्याया द्रष्टव्या इत्यर्थः । संपूर्णस्याऽपि तस्यामीभिः प्रतिपद्यमानत्वाद्येऽत्ववग्रहेहादिकाः संज्ञाविशेषास्ते सर्वेऽप्यर्थपर्यायास्तदेकदेशप्रतिपादकत्वात्तत्रेहादयः आभिनिबोधिकज्ञानस्यैवार्थपर्यायाः । मतिप्रज्ञाशब्दौ तु तस्यैव वचनपर्यायावतः सर्वमेवेदं सामान्येनाऽभिनिबोधिकज्ञानमेवेति स्थितं अथ वा सर्वेषामपि वस्तूनामभिलापवाचकाः शब्दाः वचनरूपापन्ना वचनपर्यायाः । ये तु तेषामेव वाचकशब्दानामभिधेयार्थस्यात्मभूता भेदा यथा कनकस्य कटककेयूरादयस्ते सर्वेऽप्यर्थपर्यायाः भण्यंते।ततश्च प्रस्तुतस्याभिनिबोधिकज्ञानस्य मतिप्रज्ञावग्रहेहादयः सर्वेऽपि वाचका ध्वनयो वचनपर्याया एव । तदभिधेयास्त्वाभिनिबोधिकस्यात्मभूता भेदा अर्थपर्याया इत्यवसेयमिति । इह पूर्वं मतिप्रज्ञादिशब्दानां सर्वमप्याभिनिबोधिकज्ञानं वाच्यं अवग्रहेहादिशब्दानां तु तदेकदेशा एवाऽभिधेया इति दर्शितं ।

अथाऽवग्रहेहादिभिरपि शब्दैरन्वर्थवशात्सर्वमप्याभिनिबोधिकमभिधीयत इति दर्शयति—

सव्वं वाभिनिबोहियमिहोग्गहाइवयणसंगहियं ।
केवलमत्थि विसेसं पइभिण्णा उग्गहा ईहा ॥

वा इत्यथ वा इह सर्वमाभिनिबोधिकज्ञानमवग्रहेहादिवचनेन संगृह्यते न पुनस्तदेकदेश एव तर्ह्यवग्रहादिशब्दानां सर्वेषामेकरूपता प्राप्नोत्येकाभिधेयत्वाद्बहुपुरुषोच्चारितघटाद्येकशब्दवदित्याशंक्याह केवलमित्यादि केवलं नवरमर्थविशेषं प्रत्यवग्रहादयः शब्दाभिन्नाः ।इदमुक्तं भवति । अवग्रहशब्दोऽवग्रहलक्षणेनाथेन सर्वमाभिनिबोधिकं संगृह्णाति। ईहाशब्दस्तु चेष्टालक्षणेन । अपायस्त्ववगमनलक्षणेन । धारणा तु धारणालक्षणेनेत्यादि । ततोऽमुमवग्रहणादिलक्षणमर्थविशेषमात्रमपेक्ष्याऽवग्रहादिशब्दा भिन्नाः। तत्त्वतस्त्वभिधेयं सर्वेषामाभिनिबोधिकज्ञानमेव ।

अथ वा आह ननु यदि सर्वमप्याभिनिबोधिकमवग्रहादिवचनेन संगृह्यते तर्ह्यवग्रहेहापायधारणानां तद्भेदानां सर्वेषामपि संकरः प्राप्नोति । अनंतरवक्ष्यमाणव्युत्पत्तितः प्रत्येकमेषां सर्वेषामप्यवग्रहादिरूपत्वादित्याशंक्याह। ( केवलमत्थ विसेसमित्यादि ) केवलं नवरमर्थविशेषं । प्रत्यवग्रहादयो भिन्नाः । इदमुक्तं भवति । यद्यप्यर्थाऽवग्रहणेहनावगमधारणामात्रस्य सामान्यस्य प्रत्येकं सर्वेष्वपि विद्यमानत्वादेकैकशोऽप्यवग्रहादिशब्देनोच्यंतेऽवग्रहादयस्तथाप्यर्थविशेषमाश्रित्यंते भिन्ना एव । तथा हि।यथाभूतमवग्रहे सामान्यमात्रार्थस्यावग्रहणं न तथाभूतमेवेहायां किं तु विशिष्टतरं विशिष्टतमं चाऽपायधारणयोः । यथाभूता चेहायां मतिचेष्टा न तथाभूतान्यत्र किं तु विशिष्टा विशिष्टतरा चा ऽपायधारणयोः विशिष्टतरावग्रहोऽर्थावगमनस्याऽपाये विशिष्टं धारणायां अविशिष्टमविशिष्टतरं चेहावग्रहयोः। अर्थधारणमप्यवग्रहेहापायेभ्यः सर्वं प्रकृष्टं धारणायामित्येवमवग्रहणादिमात्रे सर्वेषां सामान्ये सत्यप्यर्थविशेषं मात्रमाश्रित्य भिन्ना एवावग्रहादयः स चार्थविशेषोऽमीषां प्राक्प्राग्विस्तरेण दर्शित एवेत्येवं वा उत्तरार्थमिदं व्याख्यायते । इदमेव च व्याख्यानं वृद्धसम्मतं लक्ष्यते । युक्त्या तु प्राक्तनमपि घटत इत्यलं विस्तरेणेति ॥

कथं पुनरवग्रहादिवचनेन सर्वमप्याभिनिबोधिकं संगृह्यत इत्याह—

उग्गहणमोग्गहोति यमविसिट्ठमवग्गहो तयं सव्वं ।
ईहा जं मइचेट्ठा मइवावारो तयं सव्वं ॥

अवग्रहणं तावदवग्रह उच्यते इति कृत्वाऽविशिष्टं तत्सर्वमपि ईहादिभिन्नमाभिनिबोधिकज्ञानमवग्रह एव इदमुक्तं भवति अवग्रहणमवग्रह इति व्युत्पत्तिमाश्रित्य सर्वमप्याभिनिबोधिकज्ञानमवग्रहो भवति । यथाह्यवग्रहः किमप्यर्थमवगृह्णाति एवमीहाऽपि किमप्यर्थमवगृह्णाति एवमपायधारणे अपि । इति सर्वमप्याभिनिबोधिकज्ञानं सामान्येनावग्रहः । तथा यद्यस्मादीहचेष्टायामीहनमीहेतिव्युत्पत्तिरीहापि मतेश्चेष्टा वर्त्तते तस्मात्सर्वमपि तदाभिनिबोधिकमविशिष्टं मतिव्यापार ईहेत्यर्थः । अवग्रहापायधारणानामपि सामान्येन मतिचेष्टारूपत्वा दितिंभावः ॥

तथा ।

अवगमणमवाओत्तिय अत्थावगमो तयं हवइ सव्वं ।
धारणं च धारणं वि य तं सव्वं धरणमत्थस्स ॥

यतश्चाऽवगमनमेवापायो भण्यतेऽतोऽनया व्युत्पत्त्या सर्वमपि तदाभिनिबोधिकमर्थस्यापायः अवग्रहेहाधारणास्वपि सामान्येनार्थावगमस्य विद्यमानत्वाद्धरणं धारणा यतो भण्यतेऽतोऽनया व्युत्पत्त्या तत्सर्वमप्याभिनिबोधिकमर्थधरणरूपत्वाद्धारणा अवग्रहेहापायेष्वप्यविशिष्टस्यार्थस्य धरणस्य विद्यमानत्वादिति । संकरप्राप्तिश्चैवमवग्रहादीनां प्राक् "केवलमत्थविसेसं पई"त्यादिना परिहृतैवेति गाथापंचकार्थः ॥ विशे० । नं० टी० । आ० म० । प्र० ॥

इहात्ति वा अपोहोत्तिं वा वीमंसत्ति वा मग्गणत्ति वा गवेषणत्ति वा सण्णत्ति वा सइत्ति वा मतित्ति वा वा पन्नत्ति वा सव्वमेयं आभिणिबोहियं एतेहिं एगट्ठिएहिं भणितंति ॥आ० चू० ॥

तदेवं तत्वभेदपर्य्यायैराभिनिबोधिकज्ञानं व्याख्याय साम्प्रतं तद्विषयनिरूपणार्थमाह ॥ विशे० ॥

तं पुण चउव्विहं नेयं भेयओ तेण जतदुवउत्तो ।
आदेसणं सव्वं दव्वाइं चउव्विहं मुणइ ॥ ४०० ॥

तत्पुनराभिनिबोधिकज्ञानं चतुर्विधं चतुर्भेदं न त्ववग्रहादिभेदेन भेदकथनं प्रागस्य कृतमेव किमिह पुनरपि भेदोपन्यासः । सत्यं । ज्ञेयमेवेह द्रव्यादिभेदेन चतुर्भेदं ज्ञानस्य तु तद्भेदादेव भेदोऽत्राऽभिधीयते । सूत्रे तथैवोक्तत्वात्तथा च नंदिसूत्रे ॥

तं समातो चउव्विहं पन्नत्तं तं जहा दव्वओ खेत्तओ कालओ भावओ दव्वओ णं आभिणिबोहियनाणी आदेसेणं सव्वदव्वाइं जाणइ पासइत्यादि ॥

ज्ञेयभेदादपि तत्कथं चतुर्विधमित्याह ( जं तदुवउत्तो इत्यादि ) यद्यस्मात्कारणात्तेनाभिनिबोधिकज्ञानेन सर्वं द्रव्याणि मुणतीति संबंधः । कथंभूतमित्याह । चतुर्विधं चतुर्भेदं द्रव्यक्षेत्रकालभावभेदभिन्नमित्यर्थः । कथंभूतः (सन्मुणती-

त्याह ) तस्मिन्नाऽभिनिबोधिकज्ञाने उपयुक्तस्तदुपयुक्तः। केनेत्याह आदेशेनेत्यादि। कोऽयमादेश इत्याह–

आएसोत्तिपगारो ओहादेसेण सव्वदव्वाइं।
धम्मात्थिआइयाइं जाणइ न उ सव्वभेदेणं॥

इहादेशो नाम ज्ञातव्यवस्तुप्रकारः स च द्विविधः सामान्यप्रकारो विशेषप्रकारश्च। तत्रादेशेन सामान्यप्रकारेण द्रव्यं जातिसामान्येनेत्यर्थः। सर्वद्रव्याणि धर्मास्तिकायादीनि जानात्यसंख्येयप्रदेशात्मको लोकव्यापकोऽमूर्तः प्राणिनां पुद्गलानां च गत्युपष्टंभहेतुर्धर्मास्तिकाय इत्यादिरूपेण कियत्पर्यायविशिष्टानि षडपि द्रव्याणि सामान्येन मतिज्ञानी जानातीत्यर्थः। अनभिमतप्रकारप्रतिषेधमाह। न तु सर्वभेदेन सर्वैर्विशेषैर्न सर्वैरपि पर्यायैः केवले दृष्टैर्विशिष्टानि तानि द्रव्याण्यसौ जानातीत्यर्थः। केवलज्ञानगम्यत्वादेव सर्वपर्यायाणामितिभावः। धर्मास्तिकायादिभेदेन कथितं सामान्येन द्रव्यमथ क्षेत्रादिस्वरूपं विशेषतः प्राह।

खेत्तं लोगालोगं कालासव्वद्धमहव तिविहोवि।
पंचोदईयाईए भावे जनेयमेवइयं॥

क्षेत्रमपि लोकालोकस्वरूपं सामान्यादेशेन कियत्पर्यायविशिष्टं सर्वमपि जानाति। न तु विशेषादेशेन सर्वपर्यायैर्विशिष्टमिति। एवं कालमपि सर्वाद्धारूपं अतीताऽनागतवर्तमानभेदतस्त्रिविधं वा इत्येक एवार्थः। भावतस्तु सर्वभावानामनंतभागं जानाति। औदयिकौपशमिकक्षायिकक्षयोपशमिकपरिणामिकान्वा पंचभावान् सामान्येन जानाति। न परतः कुत इत्याह। यद्यस्मादेतावदेव ज्ञेयमस्ति नान्यदिति। इह क्षेत्रकालौ सामान्येन द्रव्यांतर्गतावेव केवलं भेदेन रूढत्वात्पृथगुपादानमवसेयमिति। आदेशस्य व्याख्यानांतरमाह।

आएसोत्ति वसुत्तं सुओवलद्धेसु तस्स मइनाणं।
पसरइ तब्भावणया वि सुत्ताणुसारेणं॥

अथ वा आदेशः सूत्रमुच्यते तेन सूत्रादेशेन सूत्रोपलब्धेष्वर्थेषु तस्य मतिज्ञानिनः सर्वद्रव्यादिविषयं मतिज्ञानं प्रसरति। ननु श्रुतोपलब्धेष्वर्थेषु यज्ज्ञानं तच्छ्रुतमेव भवति कथं मतिज्ञानमित्याह। ( तब्भावणयेत्यादि ) तद्भावनया श्रुतोपयोगमंतरेण तद्वासनामात्रत एव यद्द्रव्यादिषु वर्तते तत्सूत्रादेशेन मतिज्ञानमिति भावः एतच्च पूर्वमपि ( पुव्वंसुयपरिकम्मियमइस्स जं संपयं सुयाइमित्यादि ) प्रक्रमे प्रोक्तमेवेति गाथाचतुष्टयार्थः। विशे०। भ०। श० ८ उ० २॥
( १३ ) तदेवं तत्वभेदपर्यायैर्मतिज्ञानं व्याख्याय विषयं च द्रव्यादिकमस्य निरूप्य साम्प्रतमिदमेव सत्पदप्ररूपणतादिभिर्नवभिरनुयोगद्वारैर्विचारयितुमाह। विशे०।

सतपयपरूवणया दव्वपमाणं च क्खेत्तफुसणा य।
कालो य अत्तरं भागभावअप्पा बहुं चेव॥

सच्च तत्पदं च सत्पदं तस्य प्ररूपणं सत्पदप्ररूपणं गत्यादिद्वारेषु विचारणं तद्भावः सत्पदप्ररूपणता। कस्मिन् गत्यादिद्वारे इदं सदित्येवं सतो विद्यमानस्याभिनिबोधिकज्ञानस्य गत्यादिद्वारेषु प्ररूपणा कर्तव्येत्यर्थः। तथा द्रव्यप्रमाणमिति। मतिज्ञानजीवद्रव्याणां एकस्मिन्समये कियन्तो मतिज्ञानं प्रतिपद्यंते सर्वे वा कियंतस्ते इत्येवं प्रमाणं वक्तव्यमित्यर्थः। चशब्दः समुच्चये। तथा क्षेत्रमिति कियति क्षेत्रे तत्संभवतीत्येवं मतिज्ञानस्य क्षेत्रं वक्तव्यं। तथा कियत्क्षेत्रं मतिज्ञानिनः स्पृशंतीत्येवं स्पर्शना वक्तव्या। यत्राऽवगाढस्तत्क्षेत्रं पार्श्वतोऽपि च स्पर्शनेत्येवं क्षेत्रस्पर्शनयोर्विशेषश्च समुच्चये तथा कालः स्थितिलक्षणो मतिज्ञानस्य वाच्यः। च स्तथैव एकदा प्रतिपद्य वियुक्तः कियता कालेन पुनरपि प्रपद्यत इत्येवं अंतरं च तस्य वक्तव्यं तथा मतिज्ञानिनः शेषज्ञानिनां कतिभागे वर्तत इत्येवं भागोऽस्य वक्तव्यः। तथा कस्मिन् भावे मतिज्ञानिनो वर्त्तते इत्येवं भावो भणनीयः। तथाऽल्पबहुत्वं वक्तव्यं भागद्वारादपि तल्लब्धमिति चेन्नैवं। यतोऽत्र मतिज्ञानिनां स्वस्थान एव पूर्वप्रतिपन्नप्रतिपद्यमानकापेक्षयाऽल्पबहुत्वमभिधानीयं।भागस्तु शेषज्ञानापेक्षया चिंतनीय इति विशेष इति निर्युक्तिगाथाद्वयार्थः। विस्तरार्थं तु भाष्यकार एव वक्ष्यति॥
अथ सत्पदप्ररूपणता किमुच्यत इत्याह।

संततिविज्जमाणं वयक्खाएयस्स जा परूवणया।
गईआइएसु वत्थुसु सतपयपरूवणा साउ॥
जीवस्स च जं संतं जम्हा तं ते हि ते सु वा पयंति।
सो संतस्स पयाइं तायंतेसु परूवणया॥

गत्यादिद्वारेषु सत्वेन चिंत्यमानत्वात्पदं सदुच्यते। ततश्च सतो विद्यमानस्य या वक्ष्यमाणेषु गत्यादिद्वारेषु प्ररूपणता सा सत्पदप्ररूपणतोच्यते। अथ वा जीवस्य यत्सज्ज्ञानदर्शनादिकं तत्तैश्च कारणभूतैस्तेषु वाधिकरणभूतेषु यस्मा(त्पयतित्ति) पद्यतेऽनुगम्यते विचार्यते ततस्तस्मात्सतः पदानि सत्पदानि तानि गत्यादिद्वाराण्युच्यंते। तैः तेषु वा प्ररूपणता मत्याद्येरिति गम्यते सत्पदप्ररूपणतेति गाथाद्वयार्थः तान्येव सत्पदानि गत्यादिद्वाराणि दर्शयति।

गइइंदिए य काए जोएवेए कसायलेसा य।
सम्मत्तनाणदंसणसंजयउवओएआहारे॥
भासगपरित्तपज्जत्तसुहुमसण्णी य भवियचरिमे य।
पुव्वपडिवन्नएय पडिवज्जंते य मग्गणया॥

एतेषु गत्यादिद्वारेषु मतिज्ञानस्य पूर्वप्रतिपन्ना प्रतिपद्यमानकास्तदुभयमुभयाभावाश्चेत्येतच्चतुष्टयं चिंत्यते। तत्र येषु स्थानेषु मतिज्ञानिनो न प्रतिपद्यमानका नापि पूर्वप्रतिपन्नाः किं तूभयाभावस्तान्यपोद्धृत्य दर्शयति॥

एगिंदियजाईओ सम्मा मिच्छो य जो य सव्वन्नू।
अपरित्ता अभव्वा अचरिमा एए सयासु॥

इह सर्वेष्वपि गत्यादिद्वारेषु यावान् कोऽप्येकेंद्रियजातीयः एकेंद्रियप्रकारः एकेंद्रियभेद इत्यर्थः। एष सर्वोऽपि मतिज्ञानेन शून्यः। न तत्र मतिज्ञानस्य प्रतिपद्यमानको नापि पूर्वं प्रतिपन्नः संभवाभावो ( एगिंदिएसु सम्मत्तलद्धीए ) इति वचनादिति कः पुनरेकेंद्रियजातीय इतिचेदुच्यते। इंद्रियद्वारे तावदेकेंद्रिय एव। कायद्वारे पृथिव्यप्तेजोवायुवनस्पतयः। सूक्ष्मद्वारे तु सूक्ष्मइत्यादि तथा, सम्यग्मिथ्यादृष्टिरपि सम्यक्त्वद्वारे मतिज्ञानशून्यः ( सम्मामिच्छदिट्ठीणं भंते! किं नाणी अन्नाणी गोयमा नो नाणी अण्णा

णी)त्यादि वचनादिति यश्च क्वाऽपि द्वारे सर्वज्ञः केवली संभवति। सोऽपि तच्छून्य एव। तद्यथा गतिद्वारे सिद्धिगतौ सिद्धः। इंद्रियद्वारेऽतींद्रियः। कायद्वारेऽकायः। योगद्वारेऽयोगः। लेश्याद्वारेऽलेश्यः। ज्ञानद्वारे केवलज्ञानी। दर्शन द्वारे केवलदर्शनी। तथा संयमपरीत्तपर्याप्तसूक्ष्मसंज्ञिभव्यद्वारेषु यथासंख्यं नोसंयतनोपरीत्तनोपर्याप्तनोसूक्ष्मनोसंज्ञिनो भव्या इत्येते सर्वेऽपि सर्वज्ञत्वान्मतिज्ञानशून्याः छद्मस्थस्यैव तत्संभवादिति भावः। तथा परीत्तभव्यचरमद्वारेषु परीत्ता भव्या चरमा अपि मिथ्यादृष्टित्वान्मतिज्ञानशून्याः तदेवमेते सर्वे सर्वदैव मतिज्ञानशून्या मंतव्या उभयाभावादिति गाथार्थः॥

अथ गत्यादिद्वारेष्वेव पूर्वप्रतिपन्नप्रतिपद्यमानकचिंतां कुर्वन्नाह।

वियला विसुद्धलेसा मणपज्जवणाणिणो अणाहारा।
असण्णि अणागारोवओगिणो पुव्वपडिवन्ना सेसा॥
पुव्वपवण्णा नियमा पडिवज्जमाणया भणिया।
भयणा पुव्वपवण्णा अकसायं वेयया होंति॥

विकला द्वित्रिचतुरिंद्रियलक्षणा विकलेंद्रियाः। तथा विशुद्धलेश्याः भावलेश्यामंगीकृत्य कृष्णनीलकापोतलेश्यावृत्तयः तथा मनःपर्यायज्ञानिनोऽनाहारकाः। असंज्ञिनः अनाकारोपयुक्ताः। एते सर्वेऽपि मतिज्ञानस्य यदि भवंति। तदा पूर्वप्रतिपन्ना एव नतु प्रतिपद्यमानकास्तथा हींद्रियद्वारे केचिद्विकलेंद्रिया ये सास्वादनसम्यक्त्वेन सह पूर्वभवादागच्छंति तेषां पूर्वप्रतिपत्तिमंगीकृत्य स्यान्मतिज्ञानं-प्रतिपद्यमानकास्तस्य विकलेंद्रियाः सर्वेऽपि न भवंत्येव तथाविधविशुद्ध्यभावात्तथा लेश्याद्वारे अविशुद्धलेश्या अपि पूर्वप्रतिपन्नाः केचिद्भवंति। न तु प्रतिपद्यमानकाः विशुद्धभावलेश्यानामेव तत्प्रतिपत्तेर्ज्ञानद्वारे मनः पर्यायज्ञानिनः सर्वेऽपि प्रतिपन्नाः भवंत्येव! न तु प्रतिपद्यमानकाः सम्यक्त्वसहचरितप्राप्तमतिज्ञानस्यैव। पश्चादप्रमत्तसंयतावस्थायां मनःपर्यायज्ञानोत्पत्तेः सम्यक्त्वसहचरितचारित्रलाभे तु सहचरितं मनःपर्यायज्ञानं नोत्पद्यत एव। अत एव वचनादन्यथावधिज्ञानी च मनःपर्यायज्ञान्यपि निश्चयनयमतेन प्रतिपद्यमानकः स्यादिति। आहारकद्वारे अनाहारकाः केचिद्देवादयः पूर्वभवाद्गृहीतसम्यक्त्वा मनुष्यादिषूत्पद्यमानाः मतेः पूर्वप्रतिपन्ना भवंति। ननु प्रतिपद्यमानकास्तथाविधविशुद्ध्यभावात्संज्ञाद्वारेऽसंज्ञिनो विकलेंद्रियवद्भावनीयाः। उपयोगद्वारेऽनाकारोपयोगिनः केचित्पूर्वप्रतिपन्ना भवंति ननु प्रतिपद्यमानकाः मतिज्ञानस्य लब्धित्वात्तदुत्पत्तेश्चानाकारोपयोगे प्रतिषिद्धत्वादिति। उक्तशेषास्तु गतिद्वारे नारकादयः। इंद्रियद्वारे तु पंचेंद्रियाः। कायद्वारे त्रसकायिका इत्येवमादयो जातिमपेक्ष्य पूर्वप्रतिपन्ना नियमतः संति। प्रतिपद्यमानकास्तु भजनीयाः कदाचिद्भवंति कदाचिन्नेति अतिव्याप्तिनिषेधार्थमाह। (भयणा पुव्वपवन्ना) इत्यादि कषायद्वारेऽकषायाः। वेदद्वारे त्ववेदकाः। भजनया पूर्वप्रतिपन्नया एव भवंति। छद्मस्थाः पूर्वप्रतिपद्यमानकास्त्वमी न भवंत्येव पूर्वप्रतिपन्नमतिज्ञानानामेव क्षयोपशमश्रेणिप्रतिपत्तेरिति गाथाद्वयार्थः॥

तदेवं संक्षेपतो गत्यादिद्वारेषु भाष्यकृता मतिज्ञानस्य कृता सत्पदप्ररूपणा। अथ विनेयाऽनुग्रहार्थं किंचिद्विस्तरतोऽप्यसौ विधीयते। तत्र मतिज्ञानं किमस्ति नवा यद्यस्ति क तद्गत्यादिस्थानेषु तत्र नारकतिर्यङ्नरामरभेदाद्गतिश्चतुर्द्धा। तत्र चतुर्विधायामपि गतौ मतिज्ञानस्य पूर्वप्रतिपन्ना नियमात्संति प्रतिपद्यमानकास्तु भाज्या विवक्षितकाले कदाचिद्भवंति कदाचिन्नेत्यर्थः। आभिनिबोधिकप्रतिपत्तिप्रथमसमये प्रतिपद्यमानका उच्यंते। द्वितीयादिसमयेषु तु पूर्वप्रतिपन्ना इत्यनयोर्विशेषः इंद्रियद्वारे एकेंद्रियेषूभयाभावः। सैद्धांतिकमतेन कार्मिकग्रंथिकास्तु लब्धिपर्याप्तबादरपृथ्व्यब्वनस्पतीन् करणपर्याप्तान् पूर्वप्रपन्नानिच्छंति। सास्वादनस्य तेषूत्पत्तेः। विकलेंद्रियास्तूभयमतेनाऽपि करणापर्याप्ताः सास्वादनमेव पूर्वभवायातमङ्गीकृत्य पूर्वप्रतिपन्ना लभ्यंते। ननु प्रतिपद्यमानकाः पञ्चेंद्रियास्तु सामान्येन पूर्वप्रतिपन्ना नियमतः संति प्रतिपद्यमानकास्तु भजनीयाः। कायद्वारे पृथिव्यप्तेजोवायुवनस्पतित्रसकायभेदात्षोढा कायः। तत्राद्यकायपंचके उभयाभावः त्रसकाये तु पंचेंद्रियवद्वाच्यं। योगद्वारे कायवाङ्मनोभेदात्त्रिधा योगः स एष त्रिविधोऽपि समुदितो येषामस्ति तेषां पंचेंद्रियवद्वाच्यं। मनोरहितवाग्योगिनां विकलेंद्रियवत्। केवलकाययोगिनां त्वेकेंद्रियवदिति। वेदद्वारे स्त्रीपुंनपुंसकभेदात्त्रिविधेऽपि वेदे पंचेंद्रियवत् भावनीयं। कषायद्वारे तु चतुर्थाऽनंताऽनुबंधिषु सास्वादनमङ्गीकृत्य पूर्वप्रतिपन्नो लभ्यते न प्रतिपद्यमानकः। शेषेषु द्वादशसु कषायेषु पंचेंद्रियवदेव। लेश्याद्वारे भावलेश्यामङ्गीकृत्य कृष्णादिकासु तिसृष्वप्रशस्तलेश्यासु पूर्वप्रतिपन्नाः संभवंति न त्वितरे। प्रशस्ते तु लेश्यात्रये पंचेंद्रियवदेव। सम्यक्त्वद्वारे निश्चयव्यवहारनयाभ्यां विचारस्तत्र व्यवहारनयो मन्यते मिथ्यादृष्टिरज्ञानी च सम्यक्त्वज्ञानयोः प्रतिपद्यमानको भवति। न तु सम्यक्त्वज्ञानसहितः निश्चयनयस्तु ब्रूते। सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्वज्ञाने प्रतिपद्यते न तु मिथ्यादृष्टिरज्ञानी च। यत्तत कार्यकारभावशब्दे समर्थितम्॥

आह ननु यदि क्रियासमयेऽपि कार्यं भवति तर्हि तत्तत् कस्मान्न दृश्यते। दृश्यत एवेति चेन्न त्वहमपि किमिति तन्न पश्यामीत्याशंक्याह॥

पइसमयकज्जकोडीनिरविक्खो घडगयाभिलासोसि।
पयसमयकज्जकालं थूलमइ! घडम्मि लाएसि॥

इह यद्यस्मिन्समये प्रारभ्यते तत्तत्र निष्पद्यते। दृश्यते च केवलं स्थूलासूक्ष्मेक्षिका बहिर्भूतत्वाद्बादरदर्शिना मतिर्यस्य तत्संबोधनं हे स्थूलमते! त्वं घटे लगयसि किमित्याह। प्रतिसमयोत्पन्नानां कार्यकोटीनां कालः प्रतिसमयकालस्तं सर्वमपि घटस्यैवाऽयं समस्तोऽपि मृत्पिंडविधानचक्रभ्रमणादिकं उत्पत्तिकाल इत्येवमेकस्मिन्नेव घ संधयसीत्यर्थः। कथंभूतः सन्नित्याह। प्रतिसमयोत्पद्यमानासु मृत्पिंडशिवकस्थासकोशादिकासु सिद्धकेवलप्रभृतीनां ज्ञानजननादिकासु च कार्यकोटिषु निरपेक्षः। कुत पुनरेतदित्याह। यतो घटगताभिलाषोऽसि त्वं। घटोऽस्य मृद्दंडचक्रचीवरादिसामग्र्यामुत्पद्यत २ इत्येवं केवलघटा

भिलाषयुक्तत्वाद्भवत इत्यर्थः । इदमुक्तं भवति । प्रतिसमय-
मपरापराण्येव सिविकादीनि कार्याण्युत्पद्यंते दृश्यंते च तानि
तथोत्पद्यमानानि त्वं नावबुद्ध्यसे । घटोत्पत्तिनिमित्तभूते-
यं सर्वाऽपि मृञ्चक्रचीवरादिसामग्रीत्येवं केवलघटाऽभि-
लाषयुक्तत्वात्त्वतस्तन्निरपेक्ष एव स्थूलमतितया सर्वमपि
तत्कालं घटे लगयसि । ततश्च प्राक्तनक्रियाक्षणेष्वनु-
त्पन्नत्वात् घटमदृष्ट्वा एवं ब्रूपे । क्रियाकाले घटलक्षणं
कार्यमहं न पश्यामि । इदं तु नाऽवगच्छामि । यदुत चर-
मक्रियाक्षण एव घटः प्रारभ्यते प्राक्तनक्रियाकाले तु शि-
बिकादय एवारभ्यंते । अन्यारंभे चान्यन्न दृश्यते एवेति व्य-
वहारवादी प्राह ॥

को चरिमसमयनियमो पढमे च्चियतो न कीरए कज्जं ।
नाकारणंति कज्जं तंचेवं तंमि से समए ॥

प्रथमसमयादारभ्य यद्याद्यपरापराणि कार्य्याण्यारभ्यंते ।
तर्हि कोऽयं चरमसमयनियमो येन विवक्षितं कार्यं प्रथमस-
मय एव न क्रियते अकरणे च ततस्तत्तत्र न न दृश्यते त्वाद्य-
कार्यषद्विवक्षितमपि तत्रैव क्रियतां दृश्यतां चेति भावः। अत्र
निश्चयः प्रत्युत्तरमाह । नाकारणं कचित्कार्यमुत्पद्यते नित्यं
सदसत्वप्रसंगाश्च तत्कारणं ( से ) तस्य विवक्षितकार्यस्य
तदंत्यसमये वास्ति न प्रथमादिसमयेष्वतो न तेषूत्पद्यते
नापि दृश्यत इति तदेवं क्रियाकाल एव कार्यं भवति न पुन-
स्तदुपरमे इत्युक्तं ।
अथैवं नेष्यते तर्हि प्रस्तुतमाभिनिवोधिकज्ञानमेवाऽधिकृ-
त्योच्यते ॥

उप्पाए वि न नाणं ज इतो सो कस्स होइ उप्पाओ ।
तम्मि य जइ अण्णाणं त्ता नाणं कंमिकालंमि ॥

उत्पादनमुत्पादः कार्यस्योत्पत्तिहेतुभूतः क्रियाविशेषस्तत्रा-
ऽपि यदि मतिज्ञानं नेष्यते भवता क्रियमाणावस्थायामपि यदि
कार्यं त्वया नाऽभ्युपगम्यत इति भावः । तर्हि उत्पाद्यमान-
स्याऽसत्वात् कस्योत्पादो भवत्विति कथ्यतां न ह्यवि-
द्यमानस्य खरविषाणस्यैवोत्पादो युक्तः । यदि च तास्मिन्
उत्पादकालेऽप्यज्ञानं तर्हि ज्ञानं कस्मिन् काले भविष्यतीति
निवेद्यतां । उत्पादोपरम इति चेन्न कथमन्यत्रोत्पादोऽन्यत्र
तूत्पन्नमिति उत्पादोपरमे च भवत्कार्यमुत्पादात्प्रागपि
कस्मान्न भवत्यविशेषादित्याद्युक्तमेवेति । यदुक्तं ( इय न
सेवणाइ काले नाणमिति ) ।
तत्राह—

को सवणाइकालो उप्पाउज्जम्मि होज्जसे नाण ।
नाणं च तदुप्पाओ य दोवि चरिमंमि समयंमि ॥

घाशब्दाऽर्थे कश्च श्रवणादिकालो व्यवहारवादिन्! भवतो-
ऽभिप्रेतो यत्र ज्ञानं निषेधयसि । हंत त्वया मतिज्ञान
स्योत्पादसमय एव श्रवणादिकालोऽवगंतव्यो यत्र (से)
तस्य शिष्यस्य मतिज्ञानं भवेन्नाऽपरः । अथादित आरभ्य
गुरुसन्निधाने धर्म्मश्रवणादय एव मतिज्ञानस्योत्पादकालो
नापरोऽवगंतव्यःइति चेन्नैवमित्याह । नाणमित्यादिज्ञानं च
मतिज्ञानलक्षणं तदुत्पादश्च तस्योत्पत्तिहेतुभूतःक्रियालक्षणः
एतौ द्वावपि धर्मश्रवणादिक्रियासमयराशेश्चरमसमय एव
भवतो न प्रथमादिसमयेषु तेष्वपराणामेव धर्मावबोधादि
कार्याणामुत्पत्तेः । न च तद्बोधादिमात्रादपिसम्यग्ज्ञानो
त्पत्तिर्युज्यते । भव्येष्वपि तत्सद्भावात्तस्माद्विशिष्ट एव
कस्मिंश्चिद्धर्म्मश्रवणादीनां चरमसमये मतिज्ञानं तदु-
त्पादश्च अतो युक्तमुक्तं । "जुत्तं न दत्तमिति' अस्मा-
भिरपि क्रियाकालस्यांतसमये एव तस्येष्यमाण-
त्वात्तस्मान्न सर्वेषु धर्मश्रवणादिक्रियासमयेषु म-
तिज्ञानं । नाऽपि सर्वेषामपि तेषामुपरमे किंत्वेकस्मिंस्तच्च-
रमसमये तदारभ्यते निष्पद्यते च । अतः क्रियमाणमेव
कृतं यदि कृतमपि क्रियते निश्चयवादी तर्हि पुनः पुनरपि
क्रियतां कृतत्वाऽविशेषादतः करणानवस्थेति चेन्नैवं क्रिया
कालनिष्ठाकालयोरभेदाद्यदि हि तदुत्पादयित्री क्रिया प्रार-
ब्धा सती उत्तरसमयेष्वपि प्राप्येत तदा स्यात्पुनरपि
तत्कारणमेतच्च नास्ति । यतोऽसौ तदुत्पादयित्री क्रिया
न पूर्वे नाप्युत्तरत्राऽपि । किं तु तस्मिन्नेव चरमसमये प्रारभ्य
ते निष्ठां च यातीति कुतः पुनरपि कार्य्यकारणमतो न
तत्करणाऽनवस्थेति तस्मादियं न श्रवणादिकाले नाणमित्य-
नेन यदि सर्वेष्वपि धर्मश्रवणादिसमयेषु मतिज्ञानं निषिध्यते
तथा सिद्धसाध्यता । अथ चरमक्रियासमयेऽपि तन्निवार्यते
तदयुक्तं तत्र तस्य प्रसाधितत्वादिति । तस्मिंश्च धर्मश्रवणादि-
क्रिया चरमसमये सम्यक्त्वं ज्ञानं च प्रतिपद्यमानं प्रतिपन्नमेव
त्यतः सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्वज्ञाने प्रतिपद्यत इति निश्चय
नयमेव तात्पर्य । व्यवहारनयस्तु ब्रूते । तस्मिंश्चरमसमये
सम्यक्त्वज्ञानयोरद्याप्यसौ प्रतिपद्यमानकः प्रतिपद्यमानं
चाप्रतिपन्नमेवातो मिथ्यादृष्टिरज्ञानी च सम्यक्त्वं प्रतिप-
द्यते । उत्तरत्र क्रियानिष्ठासमये तु सम्यक्त्वज्ञाने युगपदेव
लभतेऽतः प्रस्तुते सम्यक्त्वद्वारे तन्मतेन सम्यग्दृष्टि-
राभिनिबोधिकस्य पूर्वप्रतिपन्न एव भवति नतु प्रतिपद्यमा-
नकः सम्यक्त्वज्ञानयोर्युगपल्लाभात्तत्काले च क्रियाया अभा-
वात्तद्भावे च प्रतिपद्यमानकत्वायोगादिति निश्चयनयमते
न तु सम्यग्दृष्टेराभिनिबोधकस्य पूर्वप्रतिपन्नः प्रति-
पद्यमानकश्च लभ्यते क्रियायाः कार्यनिष्ठायाश्च युगपद्भावस्य
समर्थितत्वादित्यलमतिविस्तरेणेति गाथात्रयोदशकार्थः ॥
ज्ञानद्वारे मतिश्रुतावधिमनः पर्यायकेवलभेदात्पंचधा ज्ञानं
व्यवहारनयमतेन मतिश्रुतावधिमनःपर्यायज्ञानिनः आभिनि-
बोधिकस्य पूर्वप्रतिपन्ना भवंति नतु प्रतिपद्यमानकाः ज्ञानि-
नो मतिज्ञानप्रतिपत्त्ययोगस्यैतन्मतेन प्रागुक्तत्वात्केवलिनां
तूभयाभावस्तेषां क्षयोपशमकज्ञानातीतत्वान्मत्यज्ञानश्रुता-
ज्ञानविभंगज्ञानतस्तुप्रतिपद्यमानकाः कदाचित् भवंति यु-
क्तेर्दर्शितत्वात् । ननु पूर्वप्रतिपन्नाः निश्चयनयमतेन मति-
श्रुतावधिज्ञानिनः पूर्वप्रतिपन्ना नियमतः संति । प्रतिपद्य-
मानका अपि भजनीया ज्ञानिनो ज्ञानप्रतिपत्तेः समर्थि-
तत्वान्मनः पर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव भवंति न
तु प्रतिपद्यमानकाः पूर्वसम्यक्त्वलाभकाले प्रतिपन्नमति-
ज्ञानस्यैव पश्चादंत्यावस्थायां मनःपर्यायज्ञानसद्भावात्के-
वलिनां तूभयाभावः । एवमुत्पाद्यज्ञानवतामप्युभया-
भाव एव ज्ञानिन एव ज्ञानप्रतिपत्तेः । दर्शनद्वारे चक्षु-
रचक्षुरवधिकेवलदर्शनभेदात् । दर्शनं तु चतुर्द्धा तत्रा-
द्यदर्शनत्रये लब्धिमङ्गीकृत्य पूर्वप्रतिपन्ना नियमतः प्रा-
प्यंते । प्रतिपद्यमानकास्तु भजनीयाः । तदुपयोगं त्वा-

श्रित्य पूर्वप्रतिपन्ना एव नतु प्रतिपद्यमानका मतिज्ञानस्य लब्धित्वाल्लब्ध्युत्पत्तेश्च . दर्शनोपयोगे निषिद्धत्वा-( त्सव्वाओवि लद्धीओ सागारोपउत्तस्स उववज्जंतित्ति ) वचनादिति। केवलदर्शनिनां तूभयाभावः संयतद्वारे संयतादयश्चाभिनिबोधकस्य पूर्वप्रतिपन्ना नियमाल्लभ्यंते। प्रतिपद्यमाना अपि भजनया प्राप्यंते नतु सम्यक्त्वलाभावस्थायामेव मतिज्ञानस्य प्रतिपन्नत्वात्संयमः कथं प्रतिपद्यमानको ऽवाप्यते। सत्यं। किं तु योऽतिविशुद्धिवशात्सम्यक्त्वंचारित्रं च युगपत्प्रतिपद्यते स तस्यामवस्थायां प्रतिपद्यमानस्य प्रतिपन्नत्वात्संयतो मतेः प्रतिपद्यमानको भवत्युक्तं चावश्यकचूर्णौ ।"नत्थि चरित्तं सम्मत्तविहूणं दंसणं तूभयणिज्जं" । भजनामेव आह । "सम्मत्तचरित्ताइं जुगवं पुव्वं च सम्मत्तं" ॥ उपयोगद्वारे । उपयोगोद्विधा । पंच ज्ञानानि, त्रीणि चाज्ञानानि साकारोपयोगः । चत्वारि दर्शनानि अनाकारोपयोगस्तत्र साकारोपयोगे पूर्वप्रतिपन्ना नियमाःसंति प्रतिपद्यमानकास्तु भजनीयाः । अनाकारोपयोगे तु प्रतिपन्ना एव नतु प्रतिपद्यमानकाः अनाकारोपयोगे लब्ध्युत्पत्तेः प्रतिषिद्धत्वादिति । आहारकद्वारे आहारकाः साकारोपयोगवदनाहारकास्त्वपांतराले गतौ-प्रतिपन्नाः संभवंति प्रतिपद्यमानकास्तु न भवंत्येव । भाषकद्वारे भाष्यकार एवाह । "भासा सलद्धिओ लभई भासमाणो अ भासमाणो वा॥ पुव्वपडिवन्नओ वा उभयंमि अलद्धिए नत्थि"। भाषालब्ध्या सह वर्त्तते इति भाषासलब्धिकः भाषालब्धिमांश्चेद्भवतीत्यर्थः । तदा भाषमाणोऽभाषमाणो वा लभते प्रतिपद्यते कश्चिन्मतिज्ञानं पूर्वप्रतिपन्नो वा भवति । भाषालब्धियुक्तो मनुष्यादिर्जात्यपेक्षया पूर्वप्रतिपन्नो नियमाल्लभते प्रतिपद्यमानकोऽपि भजनयेति तात्पर्यं । अलब्धिके भाषालब्धिशून्ये पुनरुभयमपि नास्ति। स ह्येकेंद्रिय एव तस्य च प्रागुक्तवदुभयाभाव एवेत्यर्थ इति गाथार्थः।

परीतद्वारे परीताः प्रत्येकशरीरिणः परीतीकृतसंसारो वा स्तोकावशेषभवा इत्यर्थः । एते उभयेऽपि पूर्वप्रतिपन्ना नियमाल्लभ्यंते प्रतिपद्यमानकास्तु भजनीया अपरीतास्तु साधारणशरीरिणः अपार्द्धपुद्गलपरावर्त्तादप्युपरिवर्तिसंसारा वा मिथ्यादृष्टित्वादुभयेऽप्युभयविकलाः । पर्याप्तकद्वारे षट्पर्याप्तिभिः पर्याप्ताः परीतवद्वाच्यास्तदपर्याप्तास्तु प्रतिपन्ना एव न त्वितरे । सूक्ष्मद्वारे सूक्ष्मा उभयविकलाः बादरास्तु पर्याप्तकवद्वाच्याः । संज्ञिद्वारे दीर्घकालिकोपदेशेन संज्ञिनो गृह्यन्ते ते च बादरवद्भावनीयाः । असंज्ञिनस्तु अपर्याप्तवदिति । भवद्वारे भवसिद्धिकाः संज्ञिवद्भवसिद्धिकास्तूभयशून्याः । चरमद्वारे चरमो भवो भविष्यति येषां तेऽभेदोपचाराच्चरमा भव्यवद् चरमास्त्वभव्यवदिति । तदेवं कृता गत्यादिद्वारेषु भाष्यवृत्तौ च सत्पदप्ररूपणता । अथ द्रव्यप्रमाणमाह-

किमिहाभिणिबोहियनाणिजीवदव्वपमाणमिगसमए ।
पडिवज्जेज्जं तु न वा पडिवज्जे जहन्नओ एगो ॥ ६६॥
खेत्तपलिओवमासंखभागउक्कोसओ पवज्जेज्जा ।
पुव्वपवन्ना दोसु वि पलियासंखेज्जइभागो ॥ ६७ ॥

किमिहाऽस्मिन् लोके आभिनिबोधिकज्ञानपरिणामापन्नजीवद्रव्याणां प्रमाणमेकस्मिन् विवक्षितसमये एवं शिष्येण पृष्टे सत्याह । प्रतिपद्येरन्न वेति । इदमुक्तं भवति । यदि प्रतिपद्यमानकानां प्रमाणं पृच्छसि तदा प्रतिपद्यमानकास्तस्य विवक्षितसमये प्राप्यंते न वा तत्र प्रतिपद्यमानप्राप्तिपक्षे जघन्यत एकः प्रतिपद्येत । उत्कृष्टस्तु सर्वलोकक्षेत्रपल्योपमासंख्येयभागः प्रतिपद्येत । अथ पूर्वप्रतिपन्नानां तेषां प्रमाणमिच्छसि ज्ञातुं तर्हि पूर्वप्रतिपन्ना द्वयोरपि पक्षयोर्जघन्योत्कृष्टलक्षणयोः क्षेत्रपल्योपमासंख्येयभागप्रदेशराशिप्रमाणाः प्राप्यंते केवलं जघन्यपदादुत्कृष्टं विशेषाऽधिकमिति गाथाद्वयार्थः

अथ क्षेत्रद्वारमधिकृत्याह ।

खेत्तं हवेज्ज चोद्दस भागा सत्तोवरिं अहे पंच ।
इलिया गईएविग्गह गयस्स गमणेहवागमणे ॥ ६८ ॥

नानाजीवानपेक्ष्य सर्वेऽप्याभिनिबोधिकज्ञानिनः पिंडितालोकासंख्येयभागमेव व्याप्नुवंति एकजीवस्य तु क्षेत्रं भवेत्कियदित्याह। सप्तचतुर्द्दशभागाः। चतुर्द्दशभागीकृतस्य लोकस्य सप्तभागाः सप्तरज्जव इत्यर्थः।उपर्यूर्ध्वमिलिका गत्या षष्ठनरकपृथिवीगमने आगमने वा पंचचतुर्द्दशभागाः पंचरज्जवः प्राप्यंते । इदमुक्तं भवति । यदात्राभिनिबोधिकज्ञानी मृत्वा इलिकागत्यानुत्तरसुरेषूत्पद्यते तेभ्यो वात्र मनुष्यो जायते तदाऽस्य जीवप्रदेशदंडः सप्तरज्जुप्रमाणक्षेत्रे भवति । अधस्त्वनयैव गत्या षष्ठनरकपृथिव्यां गच्छतस्तत आगच्छतो वा पंचसप्तरज्जुप्रमाणक्षेत्रेऽसौ लभ्यत इति विराधितसम्यक्त्वोहि षष्ठपृथ्वीं यावत् गृहीतेनाऽपि सम्यक्त्वेन सैद्धांतिकमतेन कश्चिदुत्पद्यते । कार्मग्रंथिकमतेन तु वैमानिकदेवेभ्योऽन्यत्र तिर्यङ्मनुष्यो वा तेनैव क्षायोपशमिकसम्यक्त्वेनोत्पद्यते न गृहीते न सप्तमपृथिव्यां पुनरुभयमतेनाऽपि वा तेनोपजायते ।आह भवत्वेवं किंतु यः सप्तमपृथिव्या गृहीतसम्यक्त्वोऽआगच्छति तस्याऽधः षट्चतुर्द्दश भागाः किमिति न लभ्यंत इत्याह । "आगमणंपि निषिद्धं चरिमाओएइ जं तिरिक्खेसु। सुरनारगा य सम्मदिट्ठीजंपंति मणुएसु १" चरमायाः सप्तमपृथिव्या न केवलं गमनमपि त्वागमनमपि गृहीतसम्यक्त्वस्यागमे निषिद्धं यतस्तया उद्धृत्य सर्वोऽप्येत्यागच्छति तिर्यक्ष्वेव न मनुष्येषु "सत्तममहिनेरइयातेऊ वाऊ अणंतरुव्वट्टा।नयपावे मणुस्स"मिति वचनादिति सुरनारकाश्च सम्यक्त्वसहिता यस्मान्मनुष्येष्वायांति अथ सामर्थ्यात्तिर्यग्गतिगामिनः सप्तमपृथ्वीनारका मिथ्यात्वसहिता एवागच्छंतीति गाथाद्वयार्थः।

अथ स्पर्शनाद्वारं। तत्र क्षेत्रस्पर्शनयोर्विशेषदिद्धीर्षया आह-

अवगाहणाइ रित्तंपि फुसइ वाहिं जहाणुणो भिहियं ।
एगपएसं खेत्तं सत्तपएसा य सेफुसणा ॥ ६९ ॥

इह यत्राऽवगाढस्तत् क्षेत्रमुच्यते। यस्त्ववगाहनातो बहिरप्यतिरिक्तं क्षेत्रं स्पृशति सा स्पर्शनाभिधीयते । इति क्षेत्रस्पर्शनयोर्विशेषः। यथा परमाणोरागमे। यत्रैकस्मिन् प्रदेशेऽवगाढस्तदेकं प्रदेशं क्षेत्रमभिहितं । सप्तप्रदेशास्तु (से) तस्य स्पर्शना प्रोक्ता। यत्रैकस्मिन् प्रदेशेऽवगाढस्तमन्यांश्च षड्दिक्संबंधिनः षट्प्रदेशान् परमाणुः स्पृशतीति कृत्वेति प्रकारांतरेणाऽपि क्षेत्रस्पर्शनयोर्भेदमाह ॥

अहवा जत्थोगाढो तं खेत्तं विग्गहे मयाफुसणा ।

खेत्तं व देहमित्तं संवरओ होइ से फुसणा ॥ ७० ॥

पाठसिद्धैवाऽथ नानाजीवानाधिकृत्य क्षेत्रस्पर्शने प्राह।"होंति असंखेज्जगुणा नाणाजीवाणं खेत्तफुसणाओत्ति" एकस्याभिनिबोधिकज्ञानिजीवस्य ये क्षेत्रस्पर्शने ताभ्यां सकाशान्नानाभिनिबोधिकजीवानां याः क्षेत्रस्पर्शनास्ता असंख्येय गुणाः नानाभिनिबोधिकजीवानां सर्वेषामसंख्येयत्वादिति भावः । कालद्वारमधिकृत्याह । "एगस्स अणेगाणवओगं ते मुहुत्तमित्ताओ" द्विधा मतिज्ञानस्य कालश्चिंतनीयः। उपयोगतो लब्धितश्च । तत्रैकजीवस्य तदुपयोगो जघन्यत उत्कृष्टतश्चांऽतर्मुहूर्त्तमेव भवति । परत उपयोगांतरगमनादिति सर्वलोकवर्तिनामनेकाभिनिबोधिकजीवानामपीदमेवोपयोगकालमानं । केवलमिदमंतर्मुहूर्त्तमपि बृहत्तरमवसेयं । लब्धि मंगीकृत्य कालमानमाह।

लद्धीवि जहण्णेणं एगस्सेवं परा इमा होई ।
अह सागरोवमाई वावट्ठी सातिरेगाई ॥ ७१ ॥

आभिनिबोधिकज्ञानं लब्धिरपि तदावरणक्षयोपशमरूपाद्यात्मसम्यक्त्वस्यैकजीवस्य जघन्यत एवमिति । एवमेवांतर्मुहूर्त्तमेवेत्यर्थः । परतो मिथ्यात्वगमनात् केवलाऽवाप्तेर्वा पराभूतकृष्टा तल्लब्धिरेकजीवस्येयमनंतरवक्ष्यमाणा भवत्यथ सैवोच्यते सातिरेकाणि षट्षष्टिसागरोपमाणि ॥ कथं पुनरेतानि भवंति नानाजीवानां च कियान् लब्धिकाल इत्याह ।

दो वारे विजयाइसु गयस्स तिन्नचूए अहवताइं ।
अइरेगं नरभवियं नाणाजीवाण सव्वद्धं ॥ ७२ ॥

इह कश्चित्साधुर्मत्यादिज्ञानान्वितो देशोनां पूर्वकोटीं यावत्प्रव्रज्यां परिपाल्य विजयवैजयंतजयंतापराजितविमानानामन्यतमविमानेनोत्कृष्टं त्रयस्त्रिंशत्सागरोपमलक्षणदेवायुरनुभूय पुनरप्रतिपतितमत्यादिज्ञान एव मनुजेषु उत्पन्नो देशोनां पूर्वकोटीं प्रव्रज्यां विधाय तदेव विजयादिषूत्कृष्टमायुः संप्राप्य पुनरप्रतिपतितमत्यादिज्ञान एव मनुष्येषु पूर्वकोटीं जीवित्वा सिद्ध्यतीत्येवं विजयादिषु वारद्वयं गतस्य । अथ वाऽच्युतदेवलोके द्वाविंशतिसागरोपमस्थितिकेषु देवेषु त्रीन् वारान् गतस्य तानि षट्षष्टिसागरोपमाणि अधिकानि भवंति। अधिकं चेह नरभवसंबंधिदेशोनं पूर्वकोटित्रयं चतुष्टयं वा द्रष्टव्यं नानाजीवानां तु सर्वाद्धं सर्वकालं मतिज्ञानस्य स्थितिरिति गाथापंचकार्थः ।

अथांतरद्वारमाश्रित्याह ।

एगस्स जहन्नेणं अंतरमंतो मुहुत्तमुक्कोसं ।
पोग्गलपरिअट्टद्धं देसूणं दोसबहुलस्स ॥ ७३ ॥

इह कश्चिज्जीवः सम्यक्त्वसहितं मतिज्ञानमवाप्य प्रतिपत्य चांतर्मुहूर्तं मिथ्यात्वे स्थित्वा यदि पुनरपि सम्यक्त्वसहितं तदेव चाप्नोति । तदेतन्मतिज्ञानस्य जघन्यमंतरं प्राप्तिविरहकालरूपं भवति । आशातनादिदोषबहुलस्य देशोनपुद्गलपरावर्तार्द्धरूपमुत्कृष्टमंतरं भवति । एतावता कालेन पुनरपि सम्यक्त्वाभिनिबोधिकलाभादिति ।

एकजीवस्योक्तमंतरमथ नानाजीवानां तदभिधित्सुर्भावद्वारं च बिभणिषुराह—

जमसुत्रं तहिं तओ नाणाजीवाणमंतरं नत्थि ।
मइनाणी सेसाणं जीवाणमणंतभागंमि ॥ ७४ ॥

यद्यस्मात्तैराभिनिबोधिकज्ञानिभिरशून्यं सर्वदैव नारकादि गतिचतुष्टयाऽन्वितं त्रिभुवनमिदं ततस्तस्मान्नानाजीवानाधित्य नास्ति मतिज्ञानस्यांऽतरकालः । तथा मतिज्ञानिनः शेषज्ञानवतां जीवानामनंततमे भागे वर्तते । शेषज्ञानिनो हि केवलिसहितत्वादनंताः । आभिनिबोधिकज्ञानिनस्तु सर्वे लोकेऽप्यसंख्याता एवेति भाव इति गाथाद्वयार्थः ॥

अथ भावद्वारमल्पबहुत्वद्वारं चाभिधित्सुराह ।

भावे खओवसमिए मइनाणं नत्थि सेसभावेसु ।
थोवा मइनाणविऊ सेसा जीवा अणंतगुणा ॥ ७५ ॥

मतिज्ञानावरणे हि कर्मण्युदीर्णे क्षीणे अनुदीर्णे तूपशांते मतिज्ञानमुपजायतेऽतः क्षायोपशमिक एव भावे तद्वर्त्तते न तु शेषेष्वौदयिकक्षायिकादिभावेष्विति । मतिज्ञानेन विदंतीति मतिज्ञानविदः स्तोका शेषज्ञानयुक्तास्तु सिद्धकेवलादयो जीवाऽनंतगुणा इत्येवमपि तावदल्पबहुत्वं भवति । केवलमिहैवमुच्यमाने भागाल्पबहुत्वद्वारयोरर्थतः परमार्थतो न कश्चिद्विशेषो भेदो दर्शितो भवति । तेन तस्यैवाभिनिबोधिकस्य प्रतिपद्यमानकानाश्रित्याल्पबहुत्वं वक्तुमुचितं पौनरुक्त्याऽभावादित्येतदेवाह ॥

नेहत्थओ विसेसो भागप्पबहूण तेण तस्सेव ।
पडिवज्जमाणपडिवन्नगाणमप्पाबहुं जुत्तं ॥ ७६ ॥

गतार्थैव । अथ यदेव युक्तं तदेवाह ।

थोवा पवज्जमाणा असंखयगुणिया पवन्नयजहन्ना ।
उक्कोसए पवन्ना होंति विसेसाहिया तत्तो ॥ ७७ ॥

आभिनिबोधिकस्य "जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं असंखेज्जा" इत्येवं प्रतिपाद्यमानकाः प्रोच्यंते ते सर्वस्तोकास्तेभ्यो ये जघन्यपदवर्तिनः पूर्वप्रतिपन्नास्तेऽसंख्यातगुणाश्चिरकालसंकलितत्वात्प्रतिपद्यमानकानां तु विवक्षितकसमयमात्रभावादिति । उत्कृष्टपदवर्तिनस्तु पूर्वप्रतिपन्नास्तेभ्योऽपि विशेषाधिका इति प्रकारांतरमप्यल्पबहुत्वे दर्शयति ।

अहवा मइनाणीणं सेसयनाणीहिं नाणरहिएहिं ।
कज्जं सहो भएहि य अहवा गत्याइभेएणं ॥ ७८ ॥

अथ वा मतिज्ञानिनां शेषज्ञानिभिः सहाल्पबहुत्वं प्रथमं वाच्यं । यथा "मइनाणी सेसाणं जीवाणमणंतभागम्मीति" ततो द्वितीयस्थाने "नाणरहिएहिंति" ज्ञानानि व्याख्यानादिह मतिज्ञानादन्यानि गृह्यंते तैःरहिता वियुक्ताः पूर्वप्रतिपद्यमानकमतिज्ञानिन एव केवला इत्यर्थः । तैः सहितं मतिज्ञानिनामल्पबहुत्वं स्वस्थान एव वक्तव्यं । यथा "थोवा पवज्जमाणा असंखेज्जगुणियाघणयजहन्नेत्यादि" ततस्तृतीयस्थाने उभयैः शेषज्ञानिभिर्मतिज्ञानिभिश्च समुदितैः सहाऽल्पबहुत्वं तेषां कर्तव्यं। तद्यथा "सव्वथो वा मणपज्जवनाणीवहिनाणी असंखेज्जगुणाःमइनाणी सुयनाणी य दोवि सट्ठाणे तुल्ला मग्गिल्लेहिं सुविसेसाहिया केवलनाणी अनंतगुणा" ॥ पूर्वप्रतिपन्नप्रतिपाद्यमानकविभागेनाऽल्प-

ल्पबहुत्वमिह स्वधियाऽभ्यूह्यमिति । अथ वा गत्यादिभेदेन तत्कार्यं यथा सर्वस्तोका मतिज्ञानिनो मनुष्याः नारका असंख्यातगुणाः ततस्तिर्यचस्ततो देवा इत्येवं संभवतः सर्वत्र वाच्यमिति । अथोपसंहरन्नाह ॥

लक्खणविहाणविसयाणुओगदारे हि वन्निया बुद्धी ।
तयणत्तरमुद्दिट्ठं सुअनाणमओ परुविस्सं ॥ ७९ ॥

लक्षणमाभिनिबोधिकशब्दव्युत्पत्तिः । विधानं भेदोऽवग्रहादिविषयो द्रव्यक्षेत्रादिः अनुयोगद्वाराणि सत्पदप्ररूपणतादीनि एतैः सर्वैरपि यथोक्तक्रमेणाभिनिबोधिकज्ञानलक्षणा वर्णिता व्याख्याता बुद्धिस्ततस्तदनंतरोद्दिष्टं श्रुतज्ञानं प्ररूपयिष्ये इति गाथापंचकार्थः । तदेवमाभिनिबोधिकज्ञानं समाप्तमिति ॥ विशे० ॥ आ० म० प्र० ॥

आभिणिबोहियनाणलद्धि—आभिनिबोधिकज्ञानलब्धि—स्त्री० आभिनिबोधिकज्ञानं मतिज्ञानम् तस्य लब्धिर्योग्यता । आभिनिबोधिकज्ञानयोग्यतायाम् ( आभिणिबोहियणाणलद्धी जाव सव्वोअसमिआ ) स्वस्वावरणकर्मक्षयोपशमसाध्यत्वात् क्षायोपशमिकी ॥ अनु० क्ष० द्वा० ॥

आभिणिबोहियनाणसागरोवओग—आभिनिबोधिकज्ञानसाकारोपयोग—पुं० अर्थाभिमुखो नियतः प्रतिस्वरूपको बोधो बोधविशेषोऽभिनिबोधोऽभिनिबोध एवाभिनिबोधिकम् अभिनिबोधशब्दस्य विनयादिपाठाऽभ्युपगमात् विनयादिभ्य इत्यनेन स्वार्थे इकण् प्रत्ययः । "निवर्तंते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानीति" वचनात्तत्र नपुंसकता । यथा विनय एव वैनयिकमित्यत्र । अथ वा अभिनिबुध्यते अस्मादस्मिन्वेति अभिनिबोधस्तदावरणकर्मक्षयोपशमस्तेन निर्वृत्तमाभिनिबोधिकम् तच्च तज्ज्ञानञ्चाभिनिबोधिकज्ञानम् । इंद्रियमनोनिमित्तो योग्यप्रदेशाऽवस्थितवस्तुविषयः स्फुटः प्रतिलाभो बोधविशेष इत्यर्थः । स चासौ साकारोपयोगश्चाभिनिबोधिकज्ञानसाकारोपयोगः । साकारोपयोगविशेषे ॥ प्रज्ञा० पद० २९ ॥

आभिरूप्प—आभिरूप्य—न० अभिरूपस्य भावः ष्यञ् सौन्दर्य्ये "आभिरूप्याच्च बिम्बानां देवः सांनिध्यमृच्छति" हय० रा० वाच० ॥

आभिसेक—आभिषेक्य—त्रि० अभिषेकमर्हति आभिषेक्यम् अभिषेकाऽर्हे ( आभिसेक्कं हत्थिरयणं पडिकप्पेहि ) औप०

आभीर—आभीर—पुं० आ समन्तात् भियं-राति-रा०-क० शूद्रजातिभेदे-सूत्र श्रु० १ अ० ८ ( आभीराणं अहिवई ) आ०-म० द्वि० गोपे, सङ्कीर्णजातिभेदे, स हि अल्पभीतिहेतोरप्यधिकं बिभेतीति तस्य तथा तदिदं गृहाण । उद्धटः स च संकीर्णवर्णः । "ब्राह्मणादुग्रकन्यायामावृत्तो नाम जायते ॥ आभीरोऽम्बष्ठकन्यायामायोगव्यांतु धीवरः" इति मनूक्तेः । "भीको कूणादधोभागे तापितः पश्चिमे तटे । आभीरदेशो देवेशि विन्ध्यशैले व्यवस्थित" इति २ देशभेदे ३ तद्देशवासिनि ४ तद्देशराजे च वं० व० । "एकादशकलधारि कविकुलमानसहारि । इदमाभीरमवेहि जगणमन्त्यमनुग्रेहि" इत्युक्तलक्षणे ५ मात्रावृत्तभेदे च ॥ वाच० ॥

आभीरदेस—आभीरदेश—पुं० देशभेदे-आभीरदेशे अचलपुरासन्ने कन्नाबेन्नानद्योर्मध्ये ब्रह्मद्वीपे पंचशतं तापसा नामभूत् ॥ कल्प० ॥

आभीरपल्लि—( ल्ली ) आभीरपल्ली—स्त्री० ६ त० वा ङीप गोपप्रधाने घोषे ॥ वाच० ॥

आभीरविसय—आभीरविषय—पुं० देशभेदे "आभीरविसये कराहवेण णाम णई तस्स कूले बंभद्दीवा तत्थ पंच तावसा परिवसंति । नि.-चू.-आ.-म.अ.-चू. । एवं सो भगवं विरहंतो ततो आभीरविसयं गओ ॥ आ० चू० ॥

आभीरसाहु—आभीरसाधु—पुं० आभीरपुत्रे स्वनामख्याते साधौ, तत्कथाऽज्ञानपरिषहशब्दे, ॥ उत्त० अ० २ ॥

आभीरी—आभीरी—स्त्री० आभीरस्य पत्नी आभीरजातिर्वा स्त्री ङीप्—भार्य्यायाम्—गोपजातिस्त्रियां महाशूद्याम् ॥ वाच० ॥

आभीरीवंचग—आभीरीवंचक—त्रि० आभीर्य्या वञ्चनकारके तत्कथोत्तराध्ययने, यथा—क्वाऽपि ग्रामे कोऽपि वणिक् हट्टे क्रयविक्रयं करोति । अन्यदा एका आभीरी तद्धट्टे आगता । तया भणितं । भो रूपकद्वयस्य मे घृतन्देहि । तेनोक्तं अर्पयामि । अर्पितं तया रूपकद्वयं । तेन वणिजा एकस्यैव रूपकस्य घृतं वारद्वयन्तोलयित्वा अर्पितं । सा जानाति मम रूपकद्वयस्य घृतं दत्तं । वञ्चिता च सा । तस्यागतायां स चिन्तयति । एष रूपको मया मुधा लब्धस्ततोऽहमेव उपभुञ्जामि । तस्य रूपकस्य घृतखण्डादि लात्वा स्वगृहे विसर्जितं भार्यायाः कथापितं अद्य घृतपूराः कुर्य्याः तया घृतपूराः कृताः । तावता तद्गृहे समित्रो जामाता समायातः । तस्यैव तया घृतपूराः परिवेषिताः । समित्रेण तेन भक्षिताः । गतः समित्रो जामाता । वणिग्गृहे समायातः स्नानं कृत्वा भोजनार्थमुपाविष्टः । तया स्वाभाविकमेव भोजनं परिवेषितं । वणिक् वदति । कथं न कृता घृतपूराः तया उक्तं कृताः परमागन्तुकेन समित्रेण जामात्रा भक्षिताः । स चिन्तयति मया सा वराकी आभीरी वञ्चिता । परार्थमेवाऽयमात्मा पापेन संयोजितः । एवं चिन्तयन्नेवाऽसौ शरीरचिन्तार्थं बहिर्गतः । तदानीं ग्रीष्मो वर्तते । स मध्यान्हवेलायां कृतशरीरचिन्तः एकस्य वृक्षस्याधस्तात् विश्रामार्थमुपविष्टः । तेन मार्गेण गच्छन्तं साधुं दृष्टवान् । वणिगुवाच । भो साधो ? विश्रम्यतां । साधुनोक्तं । शीघ्रं मया स्वकार्ये गन्तव्यं वणिजा उक्तं । भगवन् ! कोऽपि परकार्ये गच्छति साधुः प्राह । यथा त्वं स्वजनाऽर्थे क्लिश्यसि । अनेन एकेनैव वचनेन स बुद्धः प्राह । भगवन् ! यूयं क तिष्ठथ साधुना भणितं उद्याने । स साधुना समं तत्र गतः । तन्मुखाद्धर्ममाकर्ण्य भणति । भगवन्नहं प्रव्रजिष्यामि । नवरं स्वजनमापृच्छ्यागच्छामि । गतो निजगृहे बान्धवान् भार्यांश्च भणति । अत्रापणे व्यवहारतो मम तुच्छलाभोऽस्ति देशान्तरं यास्यामि सार्थवाहद्वयमत्रायातमस्ति । एकः सार्थवाहो मूलद्रव्यं अर्पयति इष्टपुरं नयति न च लाभं गृह्णाति । द्वितीयोमूलद्रव्यमर्पयति सहगमनात् ला-

भक्ष गृह्णाति तत्केन सह गमनं युज्यते । तैरुक्तं प्रथमेन सह व्रज । अथ स वणिक् स्वजनैः समं वने गत्वा उवाच । अयं मुनिः परलोकसार्थवाहः स्वकीयमूलद्रव्येण व्यवहारङ्कारयति मोक्षपुरञ्च नयतीति दृष्टांतदर्शनपूर्वकं स्वजनानापृच्छत । स वणिक् तस्य गुरोः समीपे दीक्षां जग्राहेति ॥ उत्त०अ० ४ ॥

आभु—आभु–त्रि०–आ–भू–डु–समन्तात् भवति–विभौ–व्यापके ॥ वाच० ॥

आभुग्ग–आभुग्न–त्रि०–आ–भुज–कर्मकर्तरि क्त तस्य नः आकुञ्चिते ईषद्वक्रे ॥ वाच० ॥

आभूइ—आभूति–स्त्री० आ भू–क्तिन्–व्याप्तौ, ॥ वाच० ॥

आभेरी–आभेरी–स्त्री० रागिणीभेदे–हलायुधः ॥ वाच० ॥

आभोइत्ता—आभोगयित्वा–अव्य० ( आभोइत्ताए णिस्सेसं ) आभोगयित्वा ज्ञात्वा निश्शेषमतिचारमिति ॥ दश०अ०५ ॥

आभोइअ–आभुज्य–अव्य० विज्ञायेत्यर्थे पं० व० ॥

आभोएमाण—आभोगयत्—त्रि० अवलोकयति । कल्प० ॥

आभोग—आभोग—पुं० आभोजनमाभोगः उपयोगविशेषे, आव० ( आभोए तह अणाभोए ) भाव० ( लोकालोकावलोकनाभोगं ) षो०विव.१६। आभोग उपयोग इति षो०टी। (अन्नाए आभोगं नाए स सद्दं करंति सज्झायं) जनेनाज्ञाताः स्थितास्ततो रात्रावाऽऽभोगमुपयोगं कुर्वते तूष्णीका आसत इत्यर्थः।वृ०। ज्ञाने स्था.ठा.४ संज्ञा आभोगइति। स्था० ठा०१०(आभोगे जाणं तेण जोअइयारो कम्मो पुणोतस्स,) आव०। ज्ञानपूर्वके, व्यापारे, । आतु० ।परिस्फुटबुद्धौ–( आभोगेण वि तणुएसु ) आभोगेनापि परिस्फुटबुद्ध्यापि अविस्मृत्यापीत्यर्थ इति, । जीत० । ( अणत्थ अणाभोगेणं ) आभोजनमाभोगः आभोगोऽत्यंतविस्मृतिरित्यर्थः तेन अनाभोगं मुक्त्वेत्यर्थः । आव०॥ विस्तारे॥ज्ञा०अ० १॥ आभोजनमाभोगः भुज पालनाऽभ्यवहारयोः मर्य्यादयाऽभिविधिना वा भोजनं पालनमाभोगः प्रतिलेखनायाम्, ॥ ओघ० ॥ आ भुज् आधारे घञ् परिपूर्णतायां, ॥ सम्यक् सुखाद्यनुभवे वरुणस्य छत्रे, च मेदि० ॥ वाच० ॥

आभोगझाण—आभोगध्यान—न० आभोगो ज्ञानपूर्वको व्यापारस्तस्य ध्यानम्—ज्ञानपूर्वकव्यापारस्य ध्याने, ब्राह्मणनयनाभिप्रायेण फलान्यपि मृद्नतो ब्रह्मदत्तस्येव । आतु० ॥

आभोगण–आभोगन–न० आभोग्यतेऽनेनेति आभोगनं अर्थावग्रहसमयसमनन्तरमेव सद्भूतार्थविशेषाऽभिमुखे आलोचने, ॥ नं० ॥

आभोगणया—आभोगनता—स्त्री० आभोग्यतेऽनेनेत्याभोगनम् अर्थावग्रहसमयसमनन्तरमेव सद्भूतार्थविशेषाभिमुखमालोचनम् तस्य भाव आभोगनता–ईहायाम ॥ नं० ॥

आभोगणिव्वत्तिय–आभोगनिर्वर्तित–त्रि० आभोगो ज्ञानम् तेन निर्वर्तितः ज्ञानेन कृते क्रोधादौ "तच्च यज्जानन् कोपविपाकादि रुष्यतीति" वैमानिकक्रोधविशेषे॥ स्था०ठा० ४ ॥

आभोगबउस—आभोगबकुश—पुं० आभोगः साधूनामकृत्यमेतच्छरीरोपकरणविभूषणमित्येवं ज्ञानम् तत्प्रधानो बकुश आभोगबकुशः बकुशभेदे ॥ भ० श० २५ उ० ६ ॥

आभोगि ( न् )–आभोगिन्–त्रि० आभोगोऽस्त्यस्य इनि परिपूर्णे–स्त्रियां ङीप् ॥ वाच० ॥

आभोगिणी—आभोगिनी—स्त्री० विद्याभेदे, "आभोगिनी नाम विद्या सा भण्यते या परिजपिता सती मानसं परिच्छेदमुत्पादयतीति" ॥ वृह० नि० चू० ॥

आम—आम—अव्य० अभ्युपगमे, ( आम अभ्युपगमे ॥ ७७ ॥ आमेत्यभ्युपगमे प्रयोक्तव्यम् आम बहुला वणोली ) प्रा० व्या० ॥ दुविहं च ( आमंति ) आमशब्दोऽनुमतौ सम्मतमेतदस्माकं सर्वमिति भावः । व्य० ( सो भणइ आमं दिट्ठं ) आ० म० प्र० ( आमंति अणुमयत्थे ) आमं इत्यनुमतार्थे इति आमंति एतदभ्युपगम्यत एवास्माभिरिति ॥ नि० चू० ॥ अपक्वे,विशे०स्था० ठा०४।(आमं ओमं च भुंजीया ) आममपक्वमिति–आ म०–प्र–( आमनिक्षेपश्च वृहत्कल्पे यथा ) "उस्सेइम संसेइम उवक्खमं चेव पलिआमं,, आमश्चतुर्धा तद्यथा नामामं स्थापनामं द्रव्यामं–भावामं (नामं ठवणा आमं दव्वामं चेव होइ भावामम् ) तत्र नामस्थापने गतार्थे द्रव्यामं पुनश्चतुर्द्धा तदेव दर्शयति उस्सेइमइत्यादि उत् ऊर्ध्वं निर्गच्छता बाष्पेण यः स्वेदः स उत्स्वेद उत्स्वेदेन निर्वृत्तं उत्स्वेदिमं भावादिम इति सूत्रेण इम प्रत्ययः उत्स्वेदिमश्च तदामं च उत्स्वेदिमामं १(संसेइम)स एकाकिभावेन स्वेदः संस्वेदस्तेन निवृत्तं संस्वेदिमं तदेवामम् संस्वेदिमामं ॥ २॥ तथोपस्कृताराद्धा ये वल्लचणकादयस्तेषां मध्ये यदामं तदुपस्कृतामं ३ पर्यायः स्वाभाविक औपाधिको वा फलानां पाकः परिणामस्तस्मिन् प्राप्तेऽपि यदामं तत्पर्यायामं ॥ ४ ॥ अथोत्स्वेदिमादिचतुष्टयमेव व्याचष्टे(उस्सेइमपिट्ठाई तिलाई संसेइमं तु णेगविहं । कंकडुयाइ उवक्खड अविपक्करसं तु पलियामं ) उस्वेदिमं पिष्टादिपिष्टं सूक्ष्मतंडुलादिचूर्णनिष्पन्नं तद्धि वस्त्रांतरितमधः स्थितस्योष्मोदकस्य बाष्पेनोत्स्विद्यमामं पच्यते । तत्र यदामं तदुत्स्वेदिमामं । आदिग्रहणाद्धरोलादिपरिग्रहः । संस्वेदिमं पुनस्तिलादिकमनेकविधं । इह कश्चित् पिठरादौ पानीयं तापयित्वा पिटिकायां प्रक्षिप्तास्तिलास्तेनोष्णोदकेन सिच्यंते ततस्तिलाः संस्विद्यंते तेषां संस्विन्नानां मध्ये ये आमास्तत् संस्वेदिमामं । आदिग्रहणेन यदन्यदप्येतेन क्रमेण संस्विद्यते तत् संस्वेदिमामं । तथा चणकमुद्गादीनामुपस्कृतानां ये कंकटुकादय आमास्ते उपस्कृतामं पर्यायामं पुनरविपक्वरसफलादिकमुच्यते । तच्चतुर्विधम् । तद्यथा—

इन्धणधूमे गंधे वच्छप्पभियामए अ आमविही ।

एसो खलु आमविहीत पत्तो अणुपुव्वीए ॥

इन्धनपर्यायामं धूमपर्यायामं गंधपर्यायामं वृक्षपर्यायाममपीत्येवं पर्यायामे आमविधिश्चतुःप्रकारः एष खलु आमविधिर्ज्ञातव्यः । आनुपूर्व्या यथोक्तयाऽद्धा आनुपूर्व्वी नाम वक्ष्यमाणलक्षणा पलालवेष्टनगर्त्ताखननकरीषप्रक्षेपणादिका यथायोगमामफलपाचनाय रचना तया ज्ञातव्य आमविधिरिति अथेन्धनधूमपर्यायामे विवृणोति ।

कोद्दवपलालमाई धूमेणंति दुगाइ पवंते ।

मज्झगडामणिपेरंततिंदुयाछिद्दधूमेणं ॥

कोद्रवपलालादिकमिन्धनमुच्यते । आदिग्रहणेन शालिपलालपरिग्रहः । तेन चाम्रादीनि फलानि वेष्टयित्वा पाच्यंते तत्र यान्यपक्कानि फलानि तदिंधनपर्यायामं । तथा धूमेन तिंदुकादीनि फलानि पाच्यंते । कथं पाच्यंत इत्याह । मज्झगडा इति प्रथमतो गर्त्तायां मध्ये करीषः प्रक्षिप्यन्ते । तस्याश्च गर्त्तायाः पार्श्वेष्वपरा गर्त्ताः खन्यंते तासु च गर्त्तासु तिंदुकादीनि फलानि प्रक्षिप्य मध्यमायां करीषगर्त्तायामग्गणिस्ति अग्निर्दीयते तासां च पेरंतत्तिपर्यातगतानां श्रोतांसि मध्यमगर्त्तया सह मीलितानि क्रियंते । ततस्तस्याःकरीषगर्त्तायाः सकाशाद्धूमस्तैः श्रोतोभिः पर्यंतगर्त्तासु प्रविशति ततस्तच्छिद्रसंबंधेन धूमेन प्रसरता तानि फलानि, पाच्यंत इति तेषां मध्ये यदामं तद्धूमपर्यायामं । अथ गंधपर्यायामे भावयति । "अंबगचिब्भिडमाई गंधेणं जं च उवरि रुक्खस्स कालपत्तं न पच्चइ वत्थपलियाममंतं तु" आम्रकचिर्भिटादीनि आदिशब्दात् बीजपूरकादीनि यान्यपक्कानि फलानि तेषां मध्ये पक्कानि प्रक्षिप्यंते । तेषां गंधेन प्राक्तनान्यामकानि पच्यंते । तत्र यदपक्कं फलं तद्गंधपर्यायामं । तथा बीजं चत्ति चशब्दस्य पुनरर्थत्वाद्यत्पुनर्वृक्षस्योपरि शाखायां वर्त्तमानं काले वसंतादिलक्षणे पाकसमये प्राप्तेऽपि परिपक्केष्वपरफलेषु न पच्यते तद्वृक्षपर्यायामं । व्याख्यातं चतुर्विधमपि पर्यायामं । तद्व्याख्याने च समर्थितं द्रव्यामं । अधुना भावामस्य रूपं निरूपयति । "भावामं पि य दुविहं वयणामं चेव णो य वयणामं । वयणाम अणुमयत्थे आमन्तिहि जीवदेवक्कं "नो वयणामं दुविहं आगमतो चेव नो आगमतो । आगमेनाणुवउत्तो नो आगमओ इमं होइ"भावाममपि द्विविधं वचनामं चैव नो वचनामं । वचनरूपमामं वचनामं अनुमतार्थे आममिति यद्वाक्यं वचनं तदेतद्वचनामं । यथा कोऽपि साधुर्गुरूणां कार्येण गच्छन्नपरेण पृष्टः आर्य ! किं गुरुकार्येण गम्यते ? स प्रत्याह । आमं एवमेतदित्यर्थः । नो वचनामं द्विविधं आगमतश्चैव नो आगमतश्च । तत्रागमत आमपदार्थज्ञानयुक्तस्तत्र चोपयुक्तः उपयोगस्य भावरूपत्वात् ज्ञानस्य चागमरूपत्वात् । नो आगमतो भावाममपीदं भवति तदेवाह ।

उग्गमदोसा ईया भावतो असंजमो अ आमविही ।
अन्नो वि य आएसो जो वरिससयं न पूरेइ ॥

उद्गमदोषा आधाकर्मादयः आदिग्रहणादुत्पादनादोषा एषणादोषाश्च एतद्भावामं प्रतिपत्तव्यं । तथा चाचारांगसूत्रं ॥ "सव्वामगंधं परिन्नाय निरामगंधो परिव्वए" असंयमश्च पृथिव्याद्युपमर्दलक्ष .. भावतः आमविधिरेव ज्ञातव्यश्चारित्रापकताकारणात् यद्वान्योपि आदेशः प्रकारो भण्यते । यो वर्षशतायुः पुरुष आयुष्कोपक्रमेण वर्षशतमपूरयित्वा म्रियते सोऽपि भावत आमः आयुषः परिपाकमंतरेण मरणात् । अत्र च द्रव्याणामधिकारसूत्रेऽपि वृक्षपर्यायामेण शेषाणामुच्चारितसदृशतया विनेयव्युत्पादनार्थं प्रसंगतः प्ररूपितत्वात् व्याख्यातमामपदम् ॥ वृह० ॥ नि० चू० ॥ अपरिशुद्धे ( सव्वामगंधं परिण्णाय ) आममपरिशुद्धमिति॥आचा.अ.४॥(णिरामगंधे धिइमं ठितप्पा सूत्र.श्रुत.१अ.६। निर्गतो ऽपगत आमोऽविशोधिकोट्याख्यस्तथा गन्धो विशोधिकोटिरूपो यस्मात्स भवति निरामगंधः । मूलोत्तरगुणभेदभिन्नां चारित्रक्रियां कृतवानित्यर्थ इति । सूत्र०।अम करणे घञ् रोगमात्रे वैद्यकोक्ते षड्विधे अजीर्णे. रोगभेदे, ॥ वाच० ॥ अजीर्णरोगभेदे च तल्लक्षणं आमे तु द्रवगंधित्वम्।द्रव्यस्य गूथस्य क्वथिततक्रादेरिव गंधो यस्यास्ति तत्तथा तद्भावस्तत्वमिति ॥ ध० अधि० १ ॥

आमइ ( न् )—आमयिन्—पुं० आमयो रोगः स येषां विद्यते ते आमयिनः रोगिणि ( नाउं तिविहामयाणं देइ लहाओ सहगणं तु) व्य.उ.१। त्रिविधतापादिजन्यरोगयोगतस्त्रिप्रकारा आमया रोगाः स येषां ते आमयिनः त्रिविधाश्चते आमयिनश्च तेषां त्रिविधामयिनामिति ॥ व्य० उद्दे० १ ॥

आमंत—आमंत्र—पुं० आमादजीर्णात् त्रायते स्वफलतैलेन मलनिस्सारणात् त्रै क पृषो० १ एरण्डवृक्षे राजनि० आमयड इति वा पाठः । तत् फलतैलपाने हि अजीर्णमलनिस्सारणात्तथात्वम् । आ मंत्र–अच् २ आमन्त्रणशब्दार्थे च ॥ वाच० ॥

आमंतण—आमन्त्रण—न० आ मन्त्र ल्युट् । १ अभिनन्दने २ संबोधने, ३ कामचारानुज्ञारूपे क्रियाभेदेषु प्रवर्तनव्यापारे च । ४ व्यापारे च युच् आमन्त्रणाप्यत्र स्त्री ॥ वाच० ॥ प्रच्छन्ने ( अणामंति या परिट्ठवेति ) अनापृच्छय प्रमादितया परिष्ठापयेत् ॥ आचा० ॥ ( सगणामंतणखमणे ) आचार्येण स्वगणस्य स्वगच्छस्यामंत्रणं प्रच्छन्नं कर्त्तव्यमिति ॥व्य०उद्दे०१॥ स्त्रीपुरुषयोर्वक्तव्यावक्तव्यामंत्रणवचनानि भाषाशब्दे ॥दश०अ०७॥आचा०॥ सर्वो धर्मःगुरुपादमूल तदभावे स्थापना समक्षं कृतः फलवानिति भदंत शब्दे वक्ष्यामि ॥ ध० अधि० २ ॥

आमंतणी—आमंत्रणी—स्त्री० असत्या मृषा भाषाभेदे,स्था० आमंत्रणी हे देवदत्तेत्यादिरूपा । एषा हि प्रागुक्तभाषात्रयाविलक्षणत्वान्न सत्या न मृषा नापिसत्यामृषा केवलव्यवहारमात्रप्रवृत्तिहेतुरित्यसत्यामृषा एव भावना कार्य्या॥ध.अधि.३॥ दश० अ० ६ विभक्तिभेदे च ( अट्ठमी आमंतणे भवे ) ॥ स्था०ठा०८ ॥ "आमंतणे भवे अट्ठमी यँ जह हे जुवाणत्ति" सुऔजसिति प्रथमापीयं विभक्तिरामंत्रणलक्षणस्यार्थस्य कर्मकरणादिवत् । लिंगार्थमात्रातिरिक्तस्य प्रतिपादकत्वेनाष्टम्युक्ता यथा हे युवन्निति॥स्था०ठा०८॥ इदं चानुयोगद्वारानुसारेण व्याख्यातमादर्शेषु तु आमंतणेति दृश्यते स्था० ठा०८॥ ( आमंतणी भवे अट्ठमी उ जहा हे जुवाणत्ति ) अनु० ॥ आमंतणी भवेदष्टमी यथा हे युवन्निति वृद्धवैयाकरणदर्शनेन चेयमष्टमी गण्यते इदं युगानां त्वसौ प्रथमैवेति मंतव्यमिति ॥ अनु० ॥

आमंत्तिता–आमंत्र्य—अव्य०आ मन्त्र–ल्यप् सम्बोध्येत्यर्थे ॥ वाच० ॥ स्था० ठा० ३ ॥

आमंतिय—आमन्त्रित—त्रि० आ—मन्त्र क्त अनावश्यके कर्मणि नियोजिते ॥ वाच० ॥ ( पुमं आमंतेमाणे आमंतिए वा अपडिसुणमाणे णो एवं वदेज्जा) आचा०अ०३उ०३॥वाच०॥

२ परिभाषितायां सम्बोधनार्थे प्रथमायां विभक्तौ न० "सामन्त्रितम्" पा० सम्बोधने या प्रथमा साऽऽमन्त्रितसंज्ञा स्यात् सि० कौ०। "आमंत्रितं पूर्वमविद्यमानवत्" नामन्त्रिते समानाधिकरणे सामान्यवचनम्" ॥ पा०॥ ३ निमन्त्रिते त्रि० "प्रातरामन्त्रितात् विप्रान्" ॥ वाच० ॥

आमंत्र्य—अव्य० आ—मन्त्र—ल्यप् सम्बोध्येत्यर्थे ॥ वाच० ॥ ( आमंतिय उस्सविय भिक्खुं आयसा निमंतंति ) स्त्रियो हि स्वभावेनैवाकर्त्तव्यप्रवणाः साधुमामंत्र्य यथाऽहममुकस्यां वेलायां भवदंतिकमागमिष्यामीत्येवं संकेतं ग्राहयित्वेति ॥ सूत्र. प्र. श्रु. अ. ४॥

आमंतेमाण—आमन्त्रयत्—त्रि० आपृच्छति ( पुमं आमंतेमाणे आमंतिते वा ) ॥ आचा. अ. ३ उ. ३॥

आमंद—आमन्द्र—पुं० ईषन्मद्रः प्रा० स० ईषद्गम्भीरशब्दे "आमन्द्रमन्थध्वनिदत्ततालम्"भट्टिः तद्युक्ते त्रि०॥ वाच०॥

आमग—आमक—त्रि०अपक्वे भ०श०१५उ०१ (आमगमल्लगभूया) आमकमल्लकभूता अपक्वशरावकल्पा जलसंपर्के क्षणेन विलयनात् ॥ ज्ञा०अध्य० ९॥ अशस्त्रोपहते च (आमगं विविहं वीयं) आमकमशस्त्रोपहतमिति ॥दश.अ. ८॥ आचा. अ. ८॥ (फले बीए य आमए ) आमकं सचित्तमिति ॥ दश. अ. ३ ॥

आमगंध—आमगंध—न० आमश्च गंधश्चामगंधम् समाहारद्वन्द्वः अविशुद्धकोट्यन्तर्गतेषु आधाकर्मादिषु ( सव्वामगंधं परिजाय णिरामगंधो परिव्वए) आचा.लो.अ.उ.५॥ आमं च गन्धश्च आमगंधं समाहारद्वंद्वस्सर्वश्च तदामगन्धश्च सर्वामगन्धं सर्वशब्दः प्रकारकार्त्स्न्येऽत्र गृह्यते न द्रव्यकार्त्स्न्ये। आममपरिशुद्धं गन्धग्रहणेन तु पूतिर्गृह्यते। ननु च पूतिद्रव्यस्याप्यशुद्धत्वादामशब्देनैवोपादानात्किमर्थं भेदेनोपादानमिति सत्यमशुद्धसामान्याद्गृह्यते किं न द्रव्यकार्त्स्न्येऽत्र गृह्यते। किं तु पूतिग्रहणेनेह आधाकर्माद्यविशुद्धकोटिरुपात्ता तस्याश्च गुरुतरत्वात्प्राधान्यख्यापनार्थं पुनरुपादानं। ततश्चायमर्थः। गन्धग्रहणेनात्मकर्मोद्देशिकत्रिकं पूतिकर्म्ममिश्रजातं बादरप्राभृतिका अध्यवपूरकाश्चैते षडुद्गमदोषा अविशुद्धकोट्यंतर्गता गृहीता शेषास्त्वयो विशुद्धकोट्यन्तर्गतभूता आमग्रहणेनोपात्ता द्रष्टव्या इति। सर्वशब्दस्य च प्रकारकार्त्स्न्याभिधायकत्वाद्येन केनचित्प्रकारेण आममपरिशुद्धं पूतिर्वा भवति तत्सर्वज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया निरामगन्धः निर्गतो वामगन्धो यस्मात् स तथा परिव्रजेत् मोक्षमार्गे ज्ञानदर्शनचारित्राख्ये परिसमंताद्गच्छेत् संयमानुष्ठानं सम्यगनुपालयेदिति यावत् ॥ आचा० टी०॥

आमगंधि—आमगन्धि—त्रि० आमस्यापक्वस्य गन्ध इव गंधो यत्र इत—समा० अपक्वमांसादितुल्यगंधाढ्ये ॥ क्लीबमित्येके ॥ वाच० ॥

आमगोरस—आमगोरस—पुं० आमं च तद्गोरसश्चामगोरसम् कच्चदुग्धदधितक्रादिके ॥ घ० अधि० २ ॥

आमच्च—आमात्य—पुं० अमात्य एव स्वार्थे अण् अमात्ये ॥ वाच० ॥

आमज्जण—आमार्जन—न० सकृत् कर्दमादिशोधने "णोआमज्जेज्जवा"॥आचा. अ.३ उ.४॥ नैव सकृदामृज्यात्ताऽपि पुनः पुनः प्रमृज्यात् कर्दमादि शोधयेदित्यर्थः॥ आचा०॥ ( आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ) नि०चू०॥ (आमज्जावेज्ज वा पमज्जावेज्ज वा आमज्जावंतं वा पमज्जावंतं वा साइज्जइ)॥ नि०चू०॥ जे० भिक्खू अप्पणो अच्छिणी आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ )॥ नि०-चू०॥ "अच्छीणि आमज्जति णाम अच्छिपत्तरोमे संठवेति अहवा बीयकणगादीणं सकृत् अवणयणे आमज्जणो पुणो२पमज्जणो ॥ नि० चू०॥ मृदुगोमयादिना लिम्पने च ॥ व्य० उद्दे० ४॥

आमज्जंत—आमज्जमाण—आमार्जयत्—त्रि० सकृत् हस्तादिना शोधयति। आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ नि० चू० ॥( आमज्जमाणे वा पमज्जमाणे वा ) आमार्जयत् सकृत् हस्तादिना शोधयन्निति॥आचा.अ.१उ.५॥

आमज्जर—आमज्वर—पुं० आमोऽपक्वः ज्वरः अपक्वज्वरे नवज्वरे। "स्वेदमामज्वरम्प्राज्ञः कोऽम्भसा परिषिञ्चति" माघः ॥ वाच० ॥

आमडाग—आमडाग—न० अर्द्धपक्वे अपक्वे च अरणिकतण्डुलीयकादिके ( सेज्जं पुण जाणेज्जा आमडागं वा ) आममपक्वं अरणिकतण्डुलीयकादि तच्चार्द्धपक्वमपक्वं वा ॥ आचा. अ. १ उ. ८ ॥

आमणस्स—आमनस्य—न० अप्रशस्तं मनो यस्य तस्य भावः ष्यञ् दुःखे ॥ वाच० ॥

आमतर—आपतर—त्रि० अतिशयेन प्रापके ( मणामतराए। चेव ) राज०। द्रष्टॄणां मनांसि आप्नुवंति आत्मवशतां नयन्तीति मन आपस्ततः प्रकर्षविवक्षायां तरप्रत्ययः प्राकृतत्वाच्च पकारस्य मकारे मणामतरा इति भवतीति ॥ राज० ॥

आमत्त—आमार्त्त—त्रि० रोगार्त्ते (आमत्तो रोगार्त्तो आमत्तो जस्स अत्थि सो आमत्तो मणुस्सो भणंति ) नि० चू० ॥

आमद्दि (न्) आमर्दिन्—त्रि० आ मृद्–णिनि–बलान्निष्पीडके ॥ वाच० ॥

आमपत्त—आमपात्र—न० कर्म० अपक्वे पात्रे मृण्मयपात्रे "विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि" ॥ मनुः ॥ वाच० ॥

आममल्लगरूव—आममल्लकरूप—त्रि० अपक्वशरावतुल्ये ( आममल्लगरूवे निव्वेयं वच्चहसरीरे ) अपक्वशरावतुल्ये शरीरे निर्वेदं वैराग्यं व्रजतेति ॥ तं ॥

आममहुर—आममधुर—न० आममिव मधुरमाममधुरमीषन्मधुरे फले ( आमेणामं एगे आममहुरे ) ॥ स्था० ठा० ४॥

आमय—आमय—पुं० आमं रोगं यात्यनेन करणे घञर्थे क आ मीञ् हिंसायाम् करणे अच् वा रोगे अनामयः निरामयः ( समौ हि शिष्टैराम्नातौ वर्त्स्यंतावामयः स च ) माघः ॥ वाच० ॥

आमयकरणी—आमयकरणी—स्त्री० विद्याभेदे ॥ सूत्र.श्रु.२अ.२॥

आमयभाव—आमयभाव—पुं० रोगोत्पत्तौ ( निरामयामयभावे ) ॥ दशा०चू०२॥ निरामयामयभावात् निरामयस्य नीरोगस्यामयभावाद्रोगोत्पत्तेः उपलक्षणं चैतत्सामयनिरामयभावस्य तथा चैवं वकार उपलभ्यते पूर्वं निरामयोऽहमासं सम्प्रति सामयो जात इति ॥ दशा० चू० २ ॥

आमरकुंड—आमरकुण्ड—न० तैलङ्गजनपदस्थे, स्वनामख्या-

ते नगरे आमरकुण्डनगरे" तैलङ्गजनपदविभूषणे-गिरिशिखरभुवनमध्यस्थिता जयति पद्मिनी देवी ॥ ती० ॥

आमरणंत—आमरणान्त—अव्य० मृत्युलक्षणावसानं यावदित्यर्थे, ( आमरणंतमजस्सं संजमपरिपालणं विहिणा ) आमरणान्तं मृत्युलक्षणावसानं यावदिति॥ पंचा० वृ० ७॥ ( एअस्स पायमूलं आमरणंतं न मोत्तव्वं ) एतस्य गुरोः पादमूलं समीपमामरणान्तं न मोक्तव्यं सर्वकालमिति गाथार्थः पं०व०

आमरणंतदोस—आमरणांतदोष—पुं० मरणमेवान्तो मरणान्तः आमरणान्तादामरणांतमसंजाताऽनुतापस्य कालसौकरिकादेरिव या हिंसादिप्रवृत्तिः सैव दोष आमरणान्तदोषः रौद्रध्यानस्य लक्षणभेदे ॥ भ० शत० २५ उ० ७ ॥ स्था० ॥ टा० ४ ॥ ग० अधि० १ ॥ औप० ॥ ( आमरणन्तदोसो यथा पव्वतराई परिगिलायमाणस्स वि आगतपव्वादेसस्स थोवोवि पच्छाणुतावो न भवति अविरमणकाले वि जस्स कालसोयरियस्सेव ण तामो उवरतो भवति एस आमरणन्तदोसोत्ति ) ॥ आ० चू० आ० वृ.॥

आमरत्त—आमरक्त—न० आममपक्वं रक्तम् रोगभेदे रक्तातिसारे ॥ वाच० ॥

आमरणंतिय—आमरणान्तिक—त्रि० आमरणान्तं मरणरूपसीमापर्य्यंतं व्याप्नोति ठञ् मरणकालपर्य्यन्तव्यापके (अन्योऽन्यस्य व्यभिचारो भवेदामरणान्तिकः)॥मनुःवाच०॥

आमरिस—आमर्श—पुं० आ०-मृश-स्पर्शे-घञ् सम्यक् स्पर्शे ल्युट् आमर्शनमप्यत्र न० ॥ वाच० ॥

आमर्ष—पुं आमर्षणमामर्षः संस्पर्शने विशे० आ०म०प्र०॥ ( र्शर्षतप्तवज्रे वा १०५ ) इति प्राकृतसूत्रेण र्शर्षयोः संयुक्तस्यांत्यव्यंजनात्पूर्व इकारो वा ॥ प्रा० व्या० ॥ आ० मृष घञ् कोपे असहने, सम्यग् विवेके च ॥वाच० ॥

आमलईकीडा—आमलकीक्रीडा—स्त्री० क्रीडाभेदे-तथा च भगवतो महावीरस्य वर्णकमधिकृत्य-कुमारैः सह क्रीडां कुर्वाणः आमलकीक्रीडानिमित्तं पुराद्बहिर्जगाम, तत्र च कुमारा वृक्षारोहणादिप्रकारेण क्रीडन्तीति ॥ कल्प० ॥

आमलकप्पा—आमलकल्पा—स्त्री० स्वनामख्यातायां नगर्य्याम् ( आमलकप्पा णयरी मित्तसिरी कूरपिउडाई)आमलकल्पायां नगर्य्यां गतस्तत्र च मित्रश्रीनाम्ना श्रावकेण कूरपिउडादिना कूरसिक्थादिदानेन प्रतिबोधित इत्यर्थः ॥ विशे० ॥ आ०क ॥ आ० चू० ॥ आ० म० ॥ आव० ॥ उत्त० अध्य० ३॥राज० ( इहेव जंबूदीवे भारहे वासे आमलकप्पानामं नयरी होत्था ) ज्ञा० श्रु.२ ॥

आमल—आमल—पुं० बहुबीजके वृक्षभेदे" आमलपाणगं वा" ॥ आचा० अ.१उ. १ ॥

आमलग-आमरक-पुं सामस्त्येन मार्य्याम् ।स्था० ठा०१०॥ तदर्थप्रतिपादके कर्मविपाकदशाया नवमेऽध्ययने च न०। तद्वक्तव्यता स्थानाङ्गे यथा-(महसुद्दाहे आमलए)॥ स्था०ठा०१०॥ (आमलपत्ति) रश्रुतेर्लश्रुतिरित्यामरकः सामस्त्येन मारिरेवमर्थप्रतिबद्धं नवमं तत्र किल सुप्रतिष्ठे नगरे सिंहसेनो राजा श्यामाभिधानदेव्यामनुरक्तस्तदवमतदेवीकोपानि पञ्चशतानि देवीनां ता मिमारयिषूणि ज्ञात्वा कुपितः सन् तन्मातृणामेकोनपञ्चशतान्युपनिमंत्र्य महत्यगारे आवासं दत्वा भक्तादिभिः सम्पूज्य विश्रब्धानि सदेवीकानि सपरिवाराणि सर्वतो द्वारबन्धनपूर्वकमग्निप्रदानेन दग्धवांस्ततोऽसौ राजा मृत्वा षष्ठ्याञ्च गत्वा रोहीतके नगरे दत्तसार्थवाहस्य दुहिता देवदत्ताभिधानाऽभवत् सा च पुष्पनन्दिना राज्ञा परिणीता स च मातृभक्तिपरतया तत्कृत्यानि कुर्वन्नासामासतया च भोगविघ्नकारिणीति तन्मातुर्ज्वलल्लोहदण्डस्यापानप्रक्षेपात्सहसा दाहनवधो व्यधायि । राजा चासौ विविधविडंबनाभिर्विडंब्य विनाशितेति विपाकश्रुते देवदत्ताभिधानं नवममिति ॥ स्था० टी० ॥

आमलक—त्रि०आ-मल्-कुन् स्त्रीत्वे गौरा० ङीष् बहुबीजके वृक्षभेदे ॥ जी०प्र०१ प्र० ल०प्र० ॥ आचा० ॥ स्था०ठा०४ ॥ ( तत्थणं आमलगा पक्खिता ) अनु० ( धात्रीवृक्षे ) ॥वाच०॥ धात्रीफले च- न० ( आमलगाईदगाहरणं च ) सूत्र० श्रुत०१ अ.४॥ आमलकानि धात्रीफलानीति ॥ सूत्र० टी० ॥

आमलगमहुर—आमलकमधुर—त्रि० आमलकमिव मधुरं यदन्यत् आमलकमेव वा मधुरमामलकमधुरम् ईषन्मधुरे ॥ स्था० ठा० ४ ॥

आमलगमहुरफलसमाण—आमलकमधुरफलसमान—पुं० ईषदुपशमादिगुणलक्षणमाधुर्य्यवति पुरुषभेदे ॥ स्था० ठा० ४ ॥

आमलगरस—आमलकरस—पुं० धात्रीफलरसे-शिशिरे चामलकरस इति ॥ सूत्र० श्रुत०१- अध्य ८ ॥

आमलगरसिय—आमलकरसित—त्रि० आमलकरससंसृष्टे. (आमलगरसियाणिय) आमलकरससंसृष्टानीति।विपा० अ.७॥

आमवाय—आमवात—पुं० आमोऽपक्वहेतुर्वातः वात व्याधिभेदे च वाच० ॥

आमाइसार—आमातिसार—पुं० आमकृतोऽतिसारः आमकृतेऽतिसाररोगभेदे वाच० ॥

आमाभिभूय—आमाभिभूत—त्रि० अपक्वरसेनाभिभूते ( आमाभिभूय गत्ता ) आमेनापक्वरसेनाभिभूतानि गात्राण्यङ्गानि ॥ विपा० अ.७ ॥

आमावस्स—आमावास्य—त्रि० अमावास्यायां भवः सन्धिवेलादि० अण् अमावास्याभवे-वा वुन् अमावास्यक इत्यपि तत्रैव ॥ वाच० ॥

आमासय—आमाशय—पुं० आमस्यापक्वस्यान्नस्याशयः देहमध्यस्थे नाभेरूर्ध्वस्थाने भुक्तापक्वान्नादिस्थाने ।आशया हि देहस्थाः सप्त सुश्रुते दर्शिता यथा "आशयस्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशयः आमाशयः पक्वाशयः मूत्राशयः स्त्रीणां गर्भाशयोऽष्टम" इति ॥ वाच० ॥

आमिओइ—आमितौजि—पुं० स्त्री० अमितौजसोऽपत्यम्, बाह्वा०—इञ्—सलोपश्च—अमितौजसोऽपत्ये स्त्रियां ङीप् ॥ वाच० ॥

आमिक्खा—आमिक्षा—स्त्री० आमिष्यते सिच्यते-मिष सक्तप्ते पक्वे दुग्धे दधियोगाज्जाते पदार्थे "आमिक्षापदसान्निध्यात्सस्यैव विषयार्पणम्" भट्टका० ॥ वाच० ॥

आमिलिम ( न् ) आम्लिमन्—पुं० अम्लो रसोऽस्त्यस्य प्रज्ञा० अण् दृढा० गणपाठात् रस्य लः ततो भावे दृढा०

इमनिच् । आम्लत्वे रसभेदे वा । ष्यञ् । आम्ल्यमप्यत्र न० ॥ वाच० ॥

आमिलवेतस—आम्लवेतस—पुं० आम्लः आम्लरसयुक्तः वेतस इव १ आम्लवेतसवृक्षे, राजनि० स्वार्थे संज्ञायां वा कन् २ तिन्तिडीवृक्षे, ॥ वाच० ॥

आमिला—आम्ला—स्त्री० सम्यक् अम्लो रसो यस्याः १ तिन्तिड्याम् स्वार्थे कनि । आम्लिकाप्यत्र २ अम्लरसयुक्ते त्रि० मनोज्ञा० भावे वुञ् आम्लिका २ अम्लरसे ३ अम्लोद्गारे च शब्दमाला । अम्लरसोऽस्त्यस्य अण् ङीप् । आम्लीत्यपि तिन्तिड्याम् ॥ वाच० ॥

आमिस—आमिष—न० आमिषति स्नेहम् अम-टिषच्-दीर्घश्च वा-मांसे स्नेहातिरेकात्तस्य तथात्वम् ॥ वाच० ॥ ( ढंकेहिय कंकेहिय आमिसत्थेहिं ते दुही ) ॥ सूत्र० ॥ ढंकैः कंकैश्च पक्षिविशेषैरन्यैश्च मांसवशार्थिभिर्मत्स्यबंधादिभिरिति॥सूत्र.श्रु.१अ.१॥आहारे॥पंच.॥मांसादिके॥स्था.ठा.४॥ज्ञा.॥ अशनादिके च भोग्यवस्तुनि ॥ध०अधि॥२॥ (जं इच्छासि घेत्तुं जे पुव्विं तं आमिसेणगिण्हाहि । आमिसपासनिबद्धो काहि इकज्जं अकज्जं वा ) ॥ सूत्र.श्रु.१अ.४॥उत्कोचे सुन्दररूपादौ, लोभे-लोभनीये विषये च ॥ वाच० ॥ अभिष्वङ्गहेतौ, धनधान्यादिके च ॥ उत्त० ( अकिंचणाउज्जुकडा निरामिसा) ॥ उत्त. अ.१४ ॥ निष्क्रान्ता आमिषात् विषयादिपदार्थात् इति निरामिषा विषयादयः । पदार्था हि विषया जीवानां गृद्धिहेतुत्वादामिषोपमा एतस्मादहं निर्विषया सती ॥ उत्त. टी. ॥ सामिसं कुललं दिस्स वज्झमाणं निरामिसं । आमिसं सव्वमुज्झित्ता विहरिस्सामो निरामिसा ॥ ४६ ॥ हे राजन् अहं सर्वं आमिषं अभिष्वङ्गहेतुं धनधान्यादिकं उज्झित्वा त्यक्त्वा निरामिषस्त्यक्तसङ्गस्सन् सक्तअप्रतिबद्धविहारतया विहरिष्यामि किं कृत्वा सामिषं आमिषसहितं कुललं गृध्रं अपरं पक्षिणं वा परैरिति अन्यैर्वध्यमानं पीड्यमानं दृष्ट्वा सामिषपक्षी हि आमिषाहारिपक्षिभिः पीड्यते । अथ वा सामिषं सस्पृहं भोजनाद्यर्थे लुब्धं कुललं पक्षिणं परैर्वध्यमानं पीड्यमानं दृष्ट्वा यतो हि पक्षिणो यदा गृह्यन्ते तदा तान् भक्ष्यं दर्शयित्वा पाशादिना बध्यन्ते आमिषाहारी शकुनिस्तु आमिषदर्शनेनैव लोभयित्वा मीनवत् बध्यते सह आमिषेण आमिषरसास्वादलोभेन वर्तते इति सामिषस्तं सामिषं॥उत्त०॥ अ०१४ पर्णे जम्बीरफले, च ॥ वाच० ॥ पूजादौ निवेदनीयेऽक्षतादौ च तथा च दर्शनशुद्धौ पुष्पामिषस्तुतिभेदात् त्रिधा, पूजा, आमिषं चाखण्डाक्षतनारंगनालिकेरबीजपूरकफलविमलगलितजलदधिघृतानेकविधिनैवेद्यस्वभावमिति॥दर्श.॥ ( एतोच्चिय फुल्लामिसथुइ पडिवत्तिपूयमज्झंमि) ॥ पंचा० ॥ वृ० ॥ ६ ॥ इत एव संपूर्णाज्ञाकरणस्य भावसाधुसाध्यत्वादेव (फुल्लामिसथुइ पडिवत्तिपूयमज्झंमित्ति) पुष्पाणि जात्यादिकुसुमानि उपलक्षणत्वाद्वस्त्रत्नादिनामिहैवांतर्भावो वदितव्य आमिषमाहार इहाऽपि तथैव फलादिसकलनैवेद्यपरिग्रहो दृश्यः ॥ पंचा० वृ०६ ॥

आमिसत्थि ( न् ) आमिषार्थिन्—त्रि० आमिषं मांसादि कमर्थयति प्रार्थयति मांसादिप्रार्थयितरि ॥ ज्ञा. अ. ४ ॥

आमिसप्पिय—आमिषप्रिय त्रि० कंकपक्षिणि मांसाभिलाषिणि च ॥ वाच० ॥ वल्लभमांसादिके ॥ ज्ञा० अ० ४ ॥

आमिसलोल—आमिषलोल त्रि० आमिषलम्पटे ॥ ज्ञा.अ.४ ॥

आमिसावत्त—आमिषावर्त-पुं० आमिषं मांसादि तदर्थमावर्तः शकुनिकादीनामामिषावर्तः आवर्तभेदे ॥ स्था० ठा०४ ॥

आमिसाहार—आमिषाहार–त्रि० मांसादिभोजिनि ॥ज्ञा.अ.४॥

आमिसासि ( न् ) आमिषाशिन्–त्रि० आमिषमश्नाति अश णिनि मांसभक्षके, ॥ वाच० ॥

आमिसी—आमिषी–स्त्री० आमिषं तदाकारोऽस्त्यस्याः जटायाम् अर्श० अच् गौरा० ङीष् ॥ जटामांस्याम् । ततः चतुरर्थ्यां मध्वा० मतुप् आमिषीमान् आमिषीसन्निकृष्टदेशादौ त्रि० ॥ वाच ॥

आमुट्ठ—आमृष्ट–त्रि०–आ–मृष्–क—आधर्षिते—आमर्दिते च आमृष्टास्तिलकरुचः स्रजो निरस्ताः ॥ माघः आ–मृज–क्त परि मार्जिते–विशोधिते च आ–मृश–क्त–संस्पृष्टे च विपर्यासीकृते च ( हेट्ठाउरियाआमुट्ठं ) अधस्तादुपरि च यत् आमुट्ठं विपर्य्यासीकृतं भुङ्क्ते ॥ ओघ० ॥

आमुत्त—आमुक्त–त्रि० आ—मुच्–क्त—परिहिते "आमुक्तमुक्तालतमस्य वक्षः" माघः ॥ वाच० ॥

आमुत्ति—आमुक्ति—स्त्री०–आ–मुच क्तिन्–परिधाने–मर्य्यादायामव्ययी० मुक्तिपर्य्यन्ते अव्य० "आमुक्ति श्रियमन्विच्छेत्" समासाऽभावे आमुक्तेरित्येव ॥ वाच० ॥

आमुम्हिय—आमुष्मिक–त्रि० अमुष्मिन् परलोके भवः ठक् सप्तम्याः अलुक् टिलोपः ॥ वाच० ॥ अमुत्र भव आमुष्मिकः परलोकसम्बन्धिनि स्वर्गसुखादौ ध० ॥ परभवविपाकप्रदर्शके ( महानामुष्मिकोऽपि च १७ ) आमुष्मिकोऽपि परभवविपाकप्रदर्शकोऽपि महान्दोष इति–द्वा० (शास्त्रमासन्नभव्यस्य मानमामुष्मिके विधौ ) आमुष्मिके विधौ पारलौकिके कर्मणि शास्त्रं मानं धर्माऽधर्मयोरतीन्द्रियत्वेन तदुपायत्वबोधने प्रमाणान्तरासामर्थ्यात् ॥ द्वा० ॥

आमुसंत—आमृशत्–त्रि० सकृदीषद्वा स्पृशति ॥ दश० अ०४ ॥ ( सुयंमेआमुसंतेणं ) आमृशता भगवत्पादारविन्दं करयुगलादिना स्पृशतेति ॥ आचा. अ. १ ॥ स्था० ठा०१ ॥

आमुसमाण—आमृशत्–त्रि० ईषत् स्पृशति ( आमुसमाणे वा संमुसमाणे वा ) आमृशन्नीषत्स्पृशन्नित्यर्थः ॥ भ० ॥ ॥ टी० श०८ उ०३ ॥

आमुस्सकुलग-आमुष्यकुलक-न० अमुष्य कुलस्य भावः मनोज्ञा० वुञ् अलुक् । प्रशस्यकुलत्वे "आमुष्यायणामुष्यपुत्रिकामुष्यकुलिका" इति वार्त्तिकोक्तेः अस्य स्त्रीत्वमपि ॥ वाच० ॥

आमुस्सकुलीण—आमुष्यकुलीन—त्रि० अमुष्य कुले साधु प्रतिजन० खञ् तद्गणपाठात् षष्ठ्या अलुक् । अमुष्यकुले साधौ ॥ वाच० ॥

आमूल—आमूल—न० अभिव्याप्त्या कारणे ( आमूलमिदं परमं सर्वस्य हि योगमार्गस्य ) आमूलमभिव्याप्त्या कारणमिति ॥ षो० विव०१३ ॥

आमेट्ट ( गा ) घर–आमेष्टकागृह–न० अपक्केष्टकागृहे ( सेजियका णिट्टघरे पक्के आमेवापिंडदारूघरे ) आमा अपक्कास्ताभिरिष्टकाभिः कृतं गृहमामेष्टकागृहम् ॥ व्य० उद्दे०४ ॥

आमेल (आवेड) आपीड–पुं० आ–पीड–अच्–शेखरके ज्ञा.।अ.१६ (पत्पीयूषापीडबिभीतककीदृशे दृशे१०५) इति प्राकृतसूत्रेणेकारस्यैत्वम् ॥ प्रा० व्या० ॥ (नीपापीडेमो वा) इति प्राकृतसूत्रेण पस्य वा मः। आमेलो ॥ आ.–प्रा.–व्या० ॥ (डोलः २०२) प्राकृतसूत्रेण स्वरात्परस्यासंयुक्तस्यानादेर्डस्य प्रायो लः आमेलो आवेडो ॥ प्रा० व्या० ॥ शिखामाल्ये–शिरोभूषणे ॥ वाच० ॥ ( वणमालामेलमउलकुंडलसच्छंदविउव्वियाभरणचारुभूसणधरा) ॥प्रश्न०पद १॥ आमेलत्ति–आपीडशब्दस्य प्राकृतलक्षणवशात आपीडः शेखरक इति ॥ प्रश्न० ॥ टी० ॥ जी० प्र.३ ॥ (आविद्धतिलयामेलाणं ) आविद्धास्तिलक आमेलश्च शेखरकौ यकाभिस्ता आविद्धतिलका मेलास्तासामिति ॥ राज० ॥

आमेलग—आपीडक—पुं० शेखरके ( णीलुप्पलकयामेलएहिं ) आमेलत्ति आपीडः शेखर इति ॥ भ० श.८उ.३३ ज्ञा० अ०२ ॥ ( आमेलगजमलजुगलवट्टियअब्भुण्णयपीणरइयसंठिवपओहराओ ) पीनं पीवरं रचितं संस्थितेः संस्थानं यकाभ्यां तौ - पीनरचितसंस्थितौ आमेलक आपीडः शेखरक इत्यर्थः तस्य यमलं समश्रेणीकं युगलं तद्वत् वर्त्तितौ बद्धस्वभावावुपचितकाठिनभावाविति भावः अभ्युन्नतौ पीनरचितसंस्थितौ च पयोधरौ यासां तास्तथेति ॥ जी० प्र.३ ॥ आमेलगत्ति अपीडः शेखर एव स्तनप्रस्तावाच्चुकस्तत्प्रधानौ आमेलकौ वा परस्परमीषत्संबद्धौ यमलौ समश्रेणिस्थितौ युगलौ युगलरूपौ द्वावित्यर्थः वर्तितौ वृत्तौ अभ्युन्नतावुच्चौ पीनौ स्थूलौ रतिदौ सुखप्रदौ संस्थितौ विशिष्टसंस्थानवन्तौ पयोधरौ स्तनौ यस्याः सा तथेति ॥ ज्ञा० अ.१ ॥ गृहबहिर्निस्सृतकाष्ठे च आपीडकमात्रे त्रि० ॥ वाच० आमेलक त्रि० परस्परमीषत्सम्बद्धे ॥ ज्ञा० अ.१४ ॥

आमेलिय—आम्रेडित—त्रि० आ–म्रेड–उन्मादे अच् आम्रेडने उन्मतेनेवाचर्य्यते आ–म्रेड–आचारे क्विप् ततः क्तः । उन्मत्तेन यथाकथितस्य पुनः पुनः कथनं क्रियते एवं द्विस्त्रिः कथिते "आम्रेडितस्यान्त्यस्य तु वा" ॥ पा० ॥ वाच०

आमोइ ( न् ) आमोदिन्—त्रि० आमोदयति सुरभीकरोति आमोदकृत्यर्थे णिच् णिनि । मुखवासने १ कर्पूरादौ । आमोदः अस्त्यर्थे इनि २ आमोदयुक्ते स्त्रियां ङीप् । "नवकुटजवनस्यामोदिनो गन्धवाहः" ॥ वाच० ॥

आमोइय—आमोदित—त्रि० आ–मुद्–णिच् क्त–प्रहर्षिते–कृतामोदे सुरभीकृते च ॥ वाच० ॥

आमोक्ख–आमोक्ष—पुं० आमुच्यतेऽस्मिन्नित्यामोक्षणं वा मोक्षः। परित्यागे (एतस्स आमोक्खाए ) एतस्यासत्पक्षाभ्युपगमस्यामोक्षे परित्यागे सतीति–सूत्र० श्रु.१अध्य.३। अशेषकर्मक्षये ( आमोक्खाए परिव्वएज्जा ) आमोक्षायाशेषकर्मक्षयं यावत्परिव्रजेदिति–सूत्र० श्रु. १ अध्य.९ अशेषकर्मक्षयसाधके आचारे–तथा चाचारैकार्थिकानधिधित्याचाराङ्गे आमोक्षस्य निक्षेपो नामादिस्तत्र व्यतिरिक्तो निगडादेः भावामोक्षः कर्मा- [illegible] इति । आचा०अ.१

आमोग—आमोक—पुं० आ—मुच—घञ्—परिधान ल्युट् आमोचनमप्यत्र–न० ॥ वाच० ॥ कचवरपुञ्जे–न० ( आमोयाणि वा) आमोकानि कचवरपुञ्जा इति ॥ आचा० ॥अ.७उ.२

आमोडग ( लय )—आमोडक—न० आतोद्यभेदे–( मुच्छिज्जताणं आमोडगाणं ) आ० चू० ॥ पुष्पोन्मिश्रे बालबन्धविशेषे च आमोडकं पुष्पोन्मिश्रो बालबन्धविशेष इति ॥ उत्त० अध्य.३ ॥

आमोय—आमोद—पुं० आमोदयति आ–।–मुद–णिच्––अच्। १ अतिदूरगे गन्धे २ उत्तमस्त्रीणां मुखनिश्वासादिगन्धे च । "मुखामोदं मदिरया कृतानुव्याधमुद्गिरन्" माघः आ–।–मुद्—घञ् । ३ प्रहर्षे ल्युट् । आमोदनमप्यत्र न० ॥ वाच० ॥

आमोयण—आमोदन—त्रि० आ।मुद् णिच् ल्यु । प्रहर्षजनके सुगन्धिसम्पादने "अभुञ्जतामोदनमोदनं जनाः" नैष० । भावे ल्युट् । १ प्रहर्षसम्पादने २ सुगन्धसम्पादने च ॥ वाच० ॥

आमोस—आमर्श—पुं० आमर्शनमामर्शः परामर्शो ज्ञा.अ.-।-संस्पर्शो प्रश्न० द्वा. सं. द्वा.१ ॥ प्रव. ॥ ग. अधि. २ ॥

आमर्ष—पुं० आमर्षणमामर्षः संस्पर्शो विशे० ॥ आ० म० प्र० ॥ अप्रमृज्य करेण स्पर्शने जाग्रतोऽतिचारभेदे च "आमोसे ससरक्खामोसे" अविधिनैव आमर्षणमामर्षः अप्रमृज्य करेण स्पर्शनमित्यर्थः । तस्मिन् सरजस्कामर्षे सति सह पृथिव्यादिरजसा यद्वस्तु स्पृष्टं तत् संस्पर्श इत्यर्थः ॥ आव० ॥

आमोष–आमुष्णाति–आ–मुष–पचाद्यच्–सम्यगपहारके चौरादौ आमुष्–भावे घञ्–अपहरणे ॥ वाच० ॥

आमोसग—आमोषक–पुं०–आमुष्णातीत्यामोषकः चौरे स्था० ठा.५ ॥ ( आमोसगा संपिंडिया गच्छेज्जा ) आमोषकाः स्तेनाः ॥ आचा० ॥ ( तत्थ खलु विहंसि बहवे आमोसगा वत्थ पडियाए संपिडिया गच्छेज्जा ) आमोषकाश्चौराः ॥ आचा० अ०५उ० २ ॥

आमोसहि–आमर्शौ(र्षौ)षधि–पुं०–आमर्शो हि हस्तादिना स्पर्शः ओषधिर्यस्य स आमर्शौषधिः।ग. अधि. २। प्रव–आमर्षणमामर्षः संस्पर्शनमित्यर्थः। स एवौषधिर्यस्यासावामर्षौषधिः करादिसंस्पर्शमात्रादेव व्याध्यपनयनसमर्थो लब्धिलब्धिमतोरभेदोपचारात्साधुरेवामर्षौषधिरित्यर्थः ॥ विशे० ॥आ०म०प्र० ॥ लब्धिभेदे–पा० । औप० । यत्प्रभावात्स्वहस्तपादाद्यवयवपरामर्शमात्रेणैवात्मनः परस्परं सर्वेऽपि रोगाः प्रणश्यंति स आमर्शौषधिरिति ॥ प्रव० द्वा. २७०।आमोसहिणाम रोगाभिभूतं अत्ताणपरं वाजधे वि तिगिच्छामित्ति संचिते ऊण आमुसति तं तक्खणा चेव ववगयरोगातंकं करेतित्तिसा। य आमोसहिलद्धी सरीरेगदसे वा सव्वसरीरे वा समुपज्जतित्ति एवमेसा आमोसहित्ति भण्णति ॥ ) आ० चू० ॥

आमोसहिपत्त—आमर्शौ ( र्षौ ) षधिप्राप्त–त्रि०–आमर्शः संस्पर्शः । स एवौषधिः सर्वरोगापहारित्वात् तपश्चरणप्रभावो लब्धिविशेषस्तां प्राप्ता ये ते तथा आमर्शौ ( र्षौ ) षधिलब्धिविशेषप्राप्ते ( आमोसहि पत्तेहिं ) प्रश्न० सं.द्वा.१

आय आय पुं० आगच्छतीत्यायः द्रव्यादेर्लाभे।सूत्र।श्रु.१अध्य.१० उत्त.अध्य.३।आ.म.ज्ञा.अ.१।आतु.प्रव.द्श.अ.१।विशे.(धनागमे) ।वाच०( आयस्स हेउं पगरेइ संगं ) आयस्स लाभस्य हेतोः कारणादिति आयं दृष्ट्वा कार्यं कुर्यादिति।गच्छसारणाशब्दे। सूत्र.श्रु.१अध्य६।आयः प्राप्तिर्लाभ इत्यनर्थान्तरमिति।अनु.।नि.चू. "गच्छपरिरक्खणट्ठा अणागतं आउवायकुसलेण एवं गुणाधि पतिणासुहसीलगवेसणा कज्जा" । आयोनाम पार्श्वस्थादेः पार्श्वान्निष्प्रत्यूह संयमपालनादिको लाभ इति ॥ वृ.॥ (दाना दिकञ्च लाभोचितमेव कार्यम ) ( लाहोचियदाणे लाहोचियभोगे लाहोचियपरिवारे लाहोचियतिहिकरेसिआ ) ।पं.सू.। टी. पं०सू.। (लाभोचियदाणेत्यादि) तथा लाभोचितदानमष्ट भागाद्यपेक्षया तथा लाभोचितभोगः अष्टभागाद्यपेक्षया लाभोचितपरिवारः चतुर्भागादिभर्तव्यपरिमाणेन लाभोचितनिधिकारः स्यात् । चतुर्भागाद्यपेक्षयैव उक्तं चात्रलौकिकैः "पादमायान्निधिं कुर्यात्पादं वित्ताय वर्द्धयेत् । धर्मोपभोगयोः पादं पादं भर्तव्यपोषणे" । तथाऽन्यैरप्युक्तं "आयादर्द्धं नियुञ्जीत धर्मे यद्वाऽधिकं ततः । शेषेण शेषं कुर्वीत यतस्त त्तुच्छमैहिकमित्यादि १ ॥ पं. सू. ॥ आगच्छतीत्यायो द्रव्यादेर्लाभस्तन्निमित्तापादितेऽष्टप्रकारककर्मलाभे च ( आयं न कुज्जाइह जीवियद्वी॥सूत्र.श्रु.१अ.१०।आगच्छतीत्यायो द्रव्यादेर्लाभस्तन्निमित्तापादितोऽष्टप्रकारकर्मलाभः तमिहास्मिन् संसारे असंयमजीवितार्थी भोगप्रधानजीवितार्थीत्यर्थः । यदि वा आजीविकाभयात् द्रव्यसंचयं न कुर्यात् ॥ सूत्र० श्रु.१अ.१०।आयं कर्माश्रवलक्षणं न कुर्यादिति।सूत्र०श्रु.१अ१०। उपादाने-( हेतौ ) च । विशे० ॥ आयो लाभः प्राप्तिर्ज्ञानादीनामस्मादित्यायः । विशे० ॥ ओघनिष्पन्ननिक्षेपेण सामान्यतः अंगाध्ययनोद्देशकादिके श्रुतौ—।अनु० ॥
तथा च दशवैकालिके—

नाणस्स दंसणस्स वि चरणस्स य जेणे आगमो ।
होइ सो होइ भावआउ आउलोहोत्ति एगट्ठा ॥दश०॥अ०१

ज्ञानस्य मत्यादेर्दर्शनस्य चोपशमिकादेश्चरणस्य च सामायिकादेर्येन हेतुभूतेनागमो भवति प्राप्तिर्भवति स च भावायः आयो लाभ इति निर्द्दिष्टः । अध्ययनेन च हेतुभूतेन ज्ञानाद्यागमो भवतीति गाथार्थः ॥ दश० अ.१ ॥
विशेषावश्यके ओघनिष्पन्ननिक्षेपमधिकृत्य—

ओहो जं सामण्णं सुयाभिहाणं चउव्विहं तं च ।
अज्झयणं अज्झीणं आउज्झयणा य पत्तेयं॥विशे०।दश.अ.१॥

इह यच्छ्रुतस्य जिनवचनरूपस्य सामान्यमङ्गाध्ययनोद्देशकादिकं नाम तदोघ उच्यते सामान्यं शास्त्रनामेत्यर्थः॥विशे.॥ अथायनिक्षेपं कर्तुमाह "से किं तं आए २ चउव्विहे पं. तं० नामाए ठवणाए दव्वाए भावाए नामठवणाओ पुव्वं भणिआओ"॥ अनु०।(आयेत्यादि ) आयः प्राप्तिर्लाभ इत्यनर्थान्तरम् अस्यापि नामादिभेदभिन्नस्य विचारः सूत्रसिद्ध एव यावत् । अनु. ॥

से किं तं दव्वाए २ दुविहे पं० तं० आगमओ अ नो आगमओ अ से किं तं आगमओ दव्वाए २जस्स णं आयति पदं सिक्खितं ठितं जितं मितं परिजितं जावकम्हा अणुव ओगो दव्वमिति कट्टु नेगमस्सणं जावइआ अणुवउत्ता आगमतो तावइआ ते दव्वाया जाव सेत्तं आगमओ दव्वाए से किं तं नो आगमओ दव्वाए २ तिविहे पं० तं० जाणगशरीर दव्वाए भविअसरीर दव्वाए जाणगसरीर भविअसरीरवइरित्ते दव्वाए से किं तं जाणगशरीर दव्वाए २ आयपयत्थाहिगारजाण यस्स जं सरीरयं ववगयचुअचाविअचत्तदेहं जहा दव्वज्झयणे जाव सेत्तं जाणगसरीर दव्वाए से किं तं भविअशरीर दव्वाए २ जे जीवे जोणीजम्मणणिक्खंते जहा दव्वज्झयणे जाव सेत्तं भविअसरीर दव्वाए से किं तं जाणगशरीर भवि असरीरवइरित्ते दव्वाए २ तिविहे पण्णत्ते तं जहा लोइए कुप्पावयणिए लोगुत्तरिए से किं तं लोइए २ तिविहे पण्णते तं जहा सचित्ते अचित्ते मीसए अ से किं तं सचित्ते तिविहे पण्णते तं जहा दुपयाणं चउप्पयाणं अपयाणं अंबाणं अंबाडगाणं आए से तं सचित्ते से किं ते अचित्ते २सुवण्ण रययमणिमोत्ति असंखसिलप्पवालरयणाणं आए से ते अचित्ते से किं तं मीसए २ दासाणं दासीणं आसाणं हत्थीणं समाभरिआखंज्जालं कि आणं आए से तं मीसए सेतं लोइए से किं तं कुप्पावयणिए २ तिविहे पं० तं० सचित्ते अचित्ते मीसए अ तिण्णि वि जहा लोइए जाव सेतं मीसए से तं कुप्पावयणिए से किं तं लोगुत्तरिए २ तिविहे पं० तं० सचित्ते अचित्ते मीसए अ से किं तं सचित्ते २ सीसाणं सिस्सणिआणं सेतं सचित्ते से किं तं अचित्ते २ पडिग्गहाणं वत्थाणं कंबलाणं पाय पुच्छणाणं आए सेत्तं अचित्ते । से किं तं मीसए २ सिस्साणं सिस्सणिआणं सभंडोवगरणाणं आए से त्तं मीसए सेत्तं लोगुत्तरिए सेत्तं जाणगसरीर भविअसरीरवइरित्ते दव्वाए सेत्तं दव्वाए ।

अनु० ॥ से किं तं अचित्ते २ सुवण्णेत्यादि लौकिकोचितस्य सुवर्णादेराढ्यो मंतव्यस्तत्र सुवर्णादीनि प्रतीतानि ( सिलत्ति ) शिला । मुक्ताशैलराजपट्टादीनां रक्तवस्त्राणि रत्नानि पद्मरागरत्नानि ( संतसावपज्जस्सत्ति ) सद्विद्यमानं स्थापतेयं द्रव्यं तस्यायः ( समाहरिया उज्जालं कियाणंति ) आभरितानांसुवर्णसंकलिकादिभूषितानांआतोद्यझल्लरीप्रमुखैरलंकृतानां ॥ अनु० टी० ॥

से किं तं भावाए २ दुविहे पं० तं० आगमओ अ नो आगमओ अ से किं तं आगमओ भावाए २ जाणए उवउत्ते सेतं आगमओ भावाए से किं तं नो आगओ भावाए २ दुविहे पं० तं० पसत्थेअ अपसत्थेअ से किं तं पसत्थे २ तिविहे पं० तं० णाणाए दंसणाए चरित्ताए सेत्तं पसत्थे से किं तं अपसत्थे २ चउव्विहे पं०तं० कोहाए माणाए मायाए

लोभाए से तं । अपसत्थे सेतं णो आगमओ भावाए सेत्तं भावाए सेत्तं आए अनु० ॥

ज्योतिषोक्ते लग्नावधिके राश्यवधिके च एकादशस्थाने लग्नावधिकैकादशस्थानस्यायत्वं च तत्स्थाने आयस्य चिंतनीयत्वात् । वनितागारपालके च कर्मणि अच्-घञ् वा ग्रामादितः स्वामिग्राह्यभागे लभ्ये धनादौ "तदस्मिन् वृद्ध्याय लाभशुल्कोपदा दीयते" पा.। ग्रामेषु स्वामिग्राह्यो भाग आयः ।सि०कौ०वाच०।।कुष्माण्ड भेदे,(से किं तं कुहणा २ कुहणा अणेगविहा पएणत्ता तंजहा आए काए कुहणे इत्यादि) प्रज्ञा. पद. १।आचा. अ. १ उ. ४ ॥

आय-आज-आज्यतेऽनेन आ अज घञर्थे क १ घृते जटा० अजस्येदम् अण् २ छागमांसादौ—त्रि० अलंकृतं कुमारं कुशलीकृत शिरसमहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियम् आजेन वैश्यम् ॥ आश्व० गृ० । "गव्यमाजं तथा चौष्ट्रमाविकं माहिषं च यत् । अश्वायाश्चैव नार्याश्च करेणूनां च यत्पयः" ॥ २॥ सुश्रुतः । अजभावे घञ् न वीभावः । ३ विक्षेपे आजानेय । वाच० ॥

आयइ ( ई ) आयति ( ती ) स्त्री०आ या ति वा ङीप् आगामिकाले आव० । पंचा०वृ०१९॥ज्य०॥ "से तत्थ मुच्छिए बाले आयइं नावबुज्झइ" दश०चू०१॥ तत्र तेषु भोगेषु मूर्च्छितो गृद्धो बालः आयतिमागामिकालं नावबुद्धते न सम्यगवगच्छतीति सूत्रार्थः । दश०चू. १। आगामिकालविषयायाम्महत्यामास्थायाम् "जुत्तराजंमि ॥ ठाँवए पयाओ बंधंति, आयतीं तत्थ" आयतिमागामिकालविषयां महतीमास्थां बन्धन्ति॥ज्य०॥ सन्ततौ, बृहत्कल्पे राजसुतदीक्षामधिकृत्य ( आयती इड्ढिमंतपूया य ) आयतिश्च सन्ततिरमीषामेतेन न विच्छिन्ना भविष्यतीति । बृह० ॥ प्रभावे कोषदण्डजे तेजसि । फलदानकाले च आयति स्त्री-आ यम क्तिन्० । १ स्नेहे, २ वर्धितत्वे, ३ सामर्थ्ये, ४ सीम्नि, ५ शयने, ६ प्रभावे, ७ "आगती च उपाये च अनात्या च तत्कल्पनम् " ॥ शा० आ० ॥ वाच० ॥

आयइजणग—आयतिजनक—त्रि० आयतौ आगामिकाले अभीष्टं फलं जनयति करोति योऽसावायतिजनकः आगामिकालेऽभीष्टफलदायके "आयइजणगोसो"॥पंचा०वृ. १९॥

आयइत्ता-आदाय—अव्य०गृहीत्वेत्यर्थे॥सूत्र० श्रु. १ अ. १२ ॥

आयइफल—आयतिफल—न० आयतावागामिनि काले फलमस्येत्यायतिफलम् परभवफलके ( आयतिफलमङ्गुवसा. हणं च निउण मुणेयव्वं ) आयतावागामिकाले परभवे इत्यर्थः। फलं साध्यमस्येत्यायतिफलम् पाठान्तरेणायतफलं मोक्षफलम् ॥ पंचा. वृ. १२ ॥

आयइविराहग—आयतिविराधक—त्रि० परलोकपीडाकरे ( आयइविराहगं समारंभं न चिंतिज्जा ) ॥ पं० ॥ सूत्र० ॥ आयतिविराधकम्परपीडाकरं समारम्भं अंगारकर्मादिरूपं तथा न चिंतयेदिति च । पं०सूत्र. श्रु. १ अ. १ ॥

आयइसंपगासण—आयतिसम्प्रकाशन—न० सामभेदे। तथा च स्थानाङ्गे चतुर्थं सामभेदमधिकृत्य आयत्याः सम्प्रकाशनम् अस्मिन्नेवङ्कृते इदमाषयोर्भविष्यतीत्याशायोजनमायतिसम्प्रकाशनमिति स्था. ठा. ३ ॥

आयईगव-आयतीगव-अव्य०आयन्ति गावोऽत्र तिष्ठद्गुप्रभृ० अव्ययी० नि० गोष्ठाद् गवागमनकाले ( आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम्) भट्टिः॥ वाच० ॥

आयईसम—आयतीसम—अव्य०आयंति समा अत्र तिष्ठद्गुप्र० न० अव्ययी० वत्सरागमनकाले ॥ वाच० ॥

आयं—आयम्-अव्य०निपाते वाक्यालंकारे च ( नायं भुज्जो करणया ) तेनैव आयंति निपातो वाक्यालंकारे अवधारणे वा भूयः करणतायां पुनराचरणेन प्रवर्तयिष्यत इति गम्यते उपा. अ.२॥ अत्थि आयंति, इह आयशब्दो भाषायाम्-।-ज्ञा.अ.२।

आयंगुल—आत्मांगुल—न० आत्मनोऽङ्गुलमात्माङ्गुलम् आयाङ्गुलप्रमाणभेदे अङ्गुलशब्दे स्वत्वमुक्तम् ( मेरिसेण तं भासिअं विहिणा) प्रव. यत्पुनरात्मांऽगुलं पूर्वमुद्दिष्टं तदीदृशेन वक्ष्यमाणस्वरूपेण विधिना प्रकारेण भाषितं प्रतिपादितं तीर्थकृद्गणधरैस्तमेव विधिमाह ।

जे जंमि जुगे पुरिसा अट्ठसयंगुलसप्तसिआ हुंति।
तेसिं जंनि अमंगुलमायंगुलमेत्थतं होइ ॥

ये पुरुषाश्चक्रवर्तिवासुदेवादयो यस्मिन् युगे सुषमदुःषमादिकाले निजांऽगुलैनैवाऽष्टोत्तरं शतमंगुलानामुच्छ्रिता उच्चा भवंति तेषां च स्वकीयांऽगुलेनाऽष्टोत्तरांऽगुलशतोच्चानां पुरुषाणां यन्निजमात्मीयमंगुलं तत्पुनरात्मांऽगुलं भवति इह च ये यस्मिन् काले प्रमाणयुक्ताः पुरुषा भवंति तेषां सम्बन्धी आत्मा गृह्यते । तत आत्मनोंऽगुलमात्मांऽगुलं इदं च पुरुषाणां कालादिभेदेनानवस्थितमानत्वादनियतप्रमाणं द्रष्टव्यं ।

जं पुणएयप्पमाणा ऊणा अहिगा य तेसिमेयं तु ।
आयुंगुलं न भन्नइ किं नु तदाभासमेवत्ति ॥

ये पुनः पुरुषा एतस्मादष्टोत्तरांऽगुलशतलक्षणात्प्रमाणान्न्यूनाः समधिका वा तेषां संबंधि यदंगुलमेतदात्मांऽगुलं न भण्यते किं तु तदाभासमेव आत्मांगुलाभासमेव परमार्थत आत्मांगुलं तत्र भवतीत्यर्थः । लक्षणशास्त्रोक्तस्वरादिशेषलक्षणवैकल्पस्वभावं च यथोक्तप्रमाणाद्धीनाधिकत्वमिह प्रतिषिद्धं न केवलमिति संभाव्यते भरतचक्रवर्त्यादीनां स्वांगुलतो विंशत्यधिकांऽगुलशतप्रमाणानामप्यत्र निर्णीतत्वान्महावीरादीनां च केषांचिन्मतेन चतुरशीत्यायंगुलप्रमाणत्वादिति ॥ प्रव० द्वा० २५४॥ अनुयोगद्वारे

से किं तं विभागनिप्फण्णे अंगुलविहत्थी रयणी कुत्थी धणुगाउअं च बोद्धव्वं । जोयणसेढी पयरं लोगमलोगेवि अ तहेव १ ॥ से किं तं अंगुले २ तिविहे पण्णत्ते तं जहा आयंगुले उस्सेहंगुले पमाणंगुले से किं तं आयंगुले २ जेणं जया मणुस्सा भवइ तेसिणं तया अप्पणो अंगुलेणं दुवालस अंगुलाइं मुहनवमुहा पुरिसे पमाणजुत्ते भवइ ॥ अनु० ॥

तत्र ये यस्मिन् काले भरतसगरादयो मनुष्याः प्रमाणयुक्ता भवंति तेषां च संबंधी अत्रात्मा गृह्यते आत्मनोंऽगुलमात्मांगुलं अत एवाह जेण मित्यादि ये भरतादयः प्रमाणयुक्ता यदा भवंति तेषां तदा स्वकीयमंगुलमात्मांऽगुलमुच्यत इति शेषः । इदं च पुरुषाणां काल

दिभेदेनाऽनवस्थितमानत्वादनियतप्रमाणं द्रष्टव्यं। अनेनैवा-त्मांगुलेन पुरुषाणां प्रमाणायुक्ततादिनिर्णयं कुर्वन्नाह ( अप्पणो अंगुलेणं दुवालसे ) इत्यादि यद्यस्यात्मीयमंगुलं तेनात्मनोऽगुलेन द्वादशांऽगुलानि मुखं प्रमाणायुक्तं भवत्यनेन च मुखप्रमाणेन नवमुखानि सर्वोऽपि पुरुषः प्रमाणयुक्तो भवति। प्रत्येकं द्वादशांऽगुलैर्नवभिर्मुखैरष्टोत्तरं शतमगुलानां संपद्यते ततश्चैतावदुच्छ्रयः पुरुषः प्रमाणयुक्तो भवतीति परमार्थः। अथ तस्यैव मानयुक्ततांप्रतिपादनार्थमाह॥ "दोणिए पुरिसे माणजुत्ते भवइ अद्धभारंतुल्लमाणे पुरिसे उम्माणजुत्ते भवइ"॥

तत्रोत्तमपुरुषा यथोक्तैःप्रमाणमानोन्मानैः रन्यैश्च सर्वैरेव गुणैः सम्पन्ना एव भवन्तीत्येतद्दर्शयन्नाह॥

माणुम्माणप्पमाणजुत्ता लक्खण वंजणगुणेहिं उववेआ।
उत्तमकुलप्पसूआ उत्तमपुरिसा मुणेअव्वा॥ १॥

अनन्तरोक्तस्वरूपैर्मानोन्मानप्रमाणैर्युक्ता उत्तमपुरुषाश्चक्रवर्त्यादयो मुणितव्या इति संबंधस्तथा लक्षणानि शंखस्वस्तिकादीनि व्यंजनानि मषितिलकादीनि गुणाः क्षान्त्यादयस्तैरुपेतास्तथोत्तमकुलान्युग्रादीनि तत्प्रसूता इति गाथार्थः॥

अथात्मांगुलेनैवोत्तममध्यमाधमपुरुषाणां प्रमाणमाह-

हुंति पुण अहियपुरिसा अट्ठसयं अंगुलाण उच्चिट्ठा।
छण्णउइ अहम्मपुरिसा चउत्तरं मज्झिमिल्लाओ॥ २॥

भवन्ति पुनरधिकपुरुषा उत्तमपुरुषाश्चक्रवर्त्यादयोऽष्टशतमंगुला ( मुव्विहा ) उन्मित्ता उच्चैस्त्वेन वा पुनःशब्दस्त्वेषामेवाधिकं पुरुषादीनामनेकभेदतादर्शकः आत्मांगुलेनैव षण्णवत्यंगुलान्यधमपुरुषा भवंति ( चउरुत्तरं मज्झमिल्लाउत्ति ) तेनैवांऽगुलेन चतुरुत्तरमंगुलशतं मध्यमाः तुशब्दो यथानुरूपशेषलक्षणादिभावप्रतिपादनपर इति गाथार्थः॥ अनु. टी.॥

अष्टोत्तरशतांगुलमाना हीना अधिका वा ते किं भवन्तीत्याह-

हीणा वा अहिया वा जे खलु सरसत्तसारपरिहीणा।
ते उत्तम पुरिसाणं अवसा पेसत्तणमुवेंति ३ अनु०मू०॥

अष्टोत्तरशतांगुलमानाद्धीना अधिका वा ते किं भवन्तीत्याह ( हीणा वा गाहा ) अष्टोत्तरशतांऽगुलहीना वा अधिका वा ये खलु स्वरः सकलजनादेयत्वप्रकृतिगंभीरतादिगुणालंकृतोध्वनिः सत्वं दैन्यविनिर्मुक्तोमानसोऽवष्टंभः सारःशुभपुद्गलोपचयजःशारीरशक्तिविशेषस्तैः परिहीनाः संतस्ते उत्तमपुरुषाणां उपचितपुण्यप्राग्भाराणां अवशा अनिच्छंतोऽप्यशुभकर्मवशतःप्रेष्यत्वमुपयांति स्वरादिशेषलक्षणवैकल्यसहायेव यथोक्तप्रमाणाहीनाधिक्यमनिष्टफलप्रदायि प्रतिपत्तव्यं तैः केवलमिति लक्ष्यते। भरतचक्रवर्त्यादीनां स्वांगुलतो विंशत्यधिकांगुलशतप्रमाणमपि निर्णीतत्वात् महावीरादीनां च केषां चिन्मतेन चतुरशीत्यायंगुलप्रमाणत्वाद्भवंति विशिष्टाः स्वरादयः प्रधानफलदायिनो यत उक्तं "अस्थिष्वर्थाः सुखं मांसे त्वचि भोगा स्त्रियोऽक्षिषु। गतौ याने स्वरे चाज्ञा सर्वं सत्वे प्रतिष्ठितम् १॥इति गाथार्थः॥ अनु. टी.॥

ए एणं अंगुलपमाणेणं छअंगुलाइं पाओ दो पाया॥ विहत्थी दो विहत्थीओ रयणी दो रयणीओ कुत्थी दो कुत्थीओ दंडं धणूजुगे नालिआ अक्खमूसले दो धनूसहस्साइं गाउअं चत्तारि गाउआइं जोअणं। अनु० मू०॥

एतेनांगुलप्रमाणेन षडंगुलानि पादः पादस्य मध्यतलप्रदेशः षडंगुलविस्तीर्णः पादैकदेशत्वात्पादः द्वौ च युग्मीकृतौ पादौ वितस्तिः द्वे च वितस्तीरत्निर्हस्त इत्यर्थः रत्निद्वयं कुक्षिःप्रत्येकं कुक्षिद्वयनिष्पन्नास्तु षट्प्रमाणविशेषा दंडधनुर्युगनालिकाऽक्षमुशललक्षणा भवंति अत्रान्योधुरीशेषा गतार्थाः द्वे धनुः सहस्रे गव्यूतं चत्वारि गव्यूतानि योजनम् अनु० टी.॥

एणं आयंगुलप्पमाणेणं किं पओयणं एएणं आयंगुलेणं जेणं जया मनुस्सा हवंति तेसिणं तयाणं आयंगुलेणं अगडतलागदहनदीवाविपुक्खरिणी दोहियगुंजालिआओसरासरपंतिआओ सरसरपंतिआओ बिलपंतिआओ आरामुज्जाणकाणणवणवणसडवणराईओ देउलसभापवाथूभखाइ अपरिहाओ पागारअट्टालयचरिअदारगोपुरपासायवरसरणलयणआवणसिंघाडगतिगचउक्कचउम्मुहमहापहपहासगडरहजाणजुग्गगिल्लिथिल्लिसिवेअसंदमाणिआओ लोही लोहकडाहकडिल्लयभंडमत्तोवगरणमाईणि अज्जकालिआइं च जोअणाइं मविज्जंति अनु०मूल०॥

( एतेणं आयंगुलप्पमाणेणं किं पओअणमिति ) गतार्थं नवरं ये यदा मनुष्या भवंति तेषां तदा आत्मनामंगुलेन स्वकीय २ कालसंभवीन्यवटह्रदादीनि मीयंत इति॥ अनु० टी०॥ उपकरणं त्वनेकविधं कटपिटकसूर्पादिकं शेषं तु यदिह कचित्किंचिन्न व्याख्यातं तत्सुगमत्वादिति मंतव्यं तदेवमात्मांगुलेनात्मीयात्मीयकालं संभवानि वस्तून्यद्यकालीनानि च योजनानि मीयंते ये यत्र काले पुरुषा भवंति तदपेक्षयाद्यशब्दो द्रष्टव्यः॥ अनु०टी०॥

इदं चात्मांगुलं सूच्यंगुलादिभेदात् त्रिविधम्॥

से समासओ तिविहे पण्णत्ते तं जहा सूइअंगुले पयरंगुले घणंगुले अंगुलायया एगयपसिया सेढी सूइअंगुले सूई सूईगुणिया पयरं गुले पयरं सूइए गुणितं घणंगुले एएसिणं सूइअं लपयरंगुलघणंगुलाणं कयरे२हिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा सव्वथो वे सुइअंगुले पयरंगुले असंखेज्जगुणे घणंगुले असंखिज्जगुणे सेत्तं आयंगुले॥ अनु० मूल०॥

तत्र दीर्घेणांगुलायता बाहुल्यतस्त्वेकप्रदेशिकी नभःप्रदेशश्रेणिः सूच्यंगुलमुच्यते। एतच्च सद्भावतोऽसंख्येयप्रदेशामप्यसत्कल्पनया सूच्याकारव्यवस्थापितप्रदेशत्रयनिष्पन्नं द्रष्टव्यं तद्यथा सूची सूच्यैव गुणिता प्रतरांगुलमिदमपि परमार्थतोऽसंख्येयप्रदेशात्मकं असद्भावतस्त्वेवैवानंतरदर्शिता त्रिप्रदेशात्मिका सूचिस्त्रयेष गुण्यते। अतः प्रत्येकं प्रदेशत्रयनिष्पन्नसूचीत्रयात्म६ नव

प्रदेशसंख्यं संपद्यते । स्थापनाप्रतरश्च सूच्या गुणितो दैर्घ्येण विष्कंभतः पिण्डतश्च समसंख्यं घनांगुलं भवति दैर्घ्यादिषु त्रिष्वपि स्थानेषु समतालक्षणस्यैव समचतुरस्रतया घनस्येह रूढत्वात्प्रतरांगुलं तु दैर्घ्यविष्कंभाभ्यामेव समं न पिंडतस्तस्यैकप्रदेशमात्रत्वादिति भावः । इदमपि वस्तुवृत्त्याऽसंख्येयप्रदेशमानं असत्प्ररूपणया तु सप्तविंशतिप्रदेशात्मकं पूर्वोक्तसूच्या अनंतरोक्तनवप्रदेशात्मके प्रतरे गुणिते एतावतामेव प्रदेशानां भावादेषां च स्थापना अनंतरं निर्दिष्टा नवप्रदेशात्मक प्रतरस्याध-उपरि च नव २ प्रदेशान् दत्वा भावनीया तथा दैर्घ्यविष्कंभपिंडैस्तुल्यमिदमापद्यते । एएसिणं भंते इत्यादिना सूच्यंगुलादिप्रदेशानामल्पबहुत्वचिंता यथा निर्दिष्टन्यायानुसारतः सुखावसेयैव तदेतदात्मांगुलमिति ॥ अनु. टी.॥

आयंत—आचान्त—त्रि. आ चम क्त. आचमनकर्त्तरि-आचान्तः पुनराचामेत्-काशी. कृतमाचमनं यस्य तादृशे जलादौ च ॥ वाच. ॥ गृहीताचमने ॥ राज. । शौचार्थं कृतजलस्पर्शे। नि.भ.श.९उ.३३औप। "आयंते चोक्खे परमसुइभूये" आयंते इति नवानामपि श्रोतसां शुद्धोदकप्रक्षालनेनाचान्ताः गृहीताचमनः राज. ॥ टी. ॥ आचांतः शुद्धोदकेन कृताचमन इति कल्प. श. अ. १॥ भ. श. ११ उ. ९ ॥

आयंबिल-आचामाम्ल--न. आचामोऽवश्रावणम् अम्लं चतुर्थो रसः त एव प्रायेण व्यञ्जने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके तदाचामाम्लम् समयभाषयौदनकुल्माषसक्तुप्रभृतिके, ध. अ. २ ॥

आयामाम्ल-न. आयाममवश्रावणं अम्लं च सौवीरकं त एव प्रायेण व्यञ्जने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके तदायामाम्लम् समयभाषयौदनकुल्माषसक्तुप्रभृतौ ॥ पंचा.वृ.५। अवस्यामे ग. आधि.२ आचाम्लभेदाद्याचाम्लप्रत्याख्यानशब्दे ॥आव. ॥ औप.॥ तद्गते प्रत्याख्यानभेदे च तद्वक्तव्यता चाचाम्लप्रत्याख्यानशब्दे ॥ पंचा ॥

आयंबिलपच्चक्खाण—आ ( यामा ) चामाम्लप्रत्याख्यान—न०—प्रत्याख्यानभेदे ध.अधि.२अत्र सूत्रं'आयंबिलं पच्चक्खाइ अन्नत्थणाभोगेणं सहसागारेणं लेवालेवेणं उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरइ' आचामोऽवश्रावणं आम्लं चतुर्थो रसः त एव प्रायेण व्यंजने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके तदाचामाम्लम् समयभाषयोच्यते तत्प्रत्याख्याति आचामाम्लप्रत्याख्यानं करोतीत्यर्थः । आद्यावंत्याश्च त्रय आकाराः पूर्ववत्, ( लेवालेवेणं ) लेपो भोजनभाजनस्य विकृत्या तीमनादिना वा ॥ आचामाम्लप्रत्याख्यातुरकल्पनीयेन लिप्तता अलेपो विकृत्यादिना लिप्तपूर्वस्य भोजनभाजनस्यैव हस्तादिना संलेखनतोऽलिप्तता लेपश्चालेपश्च लेपालेपम् तस्मादन्यत्र भाजने विकृत्याद्यवयवसद्भावेऽपि न भंग इत्यर्थः । ( उक्खित्तविवेगेणं ) शुष्कौदनादिभक्ते पतितपूर्वस्याचामाम्लप्रत्याख्यानवतामयोग्यस्याद्रवविकृत्यादिद्रव्यस्योत्क्षिप्तस्योद्धृतस्य विवेको निःशेषतया त्याग उत्क्षिप्तविवेकः उत्क्षिप्य त्याग इत्यर्थः तस्मादन्यत्र भोक्तव्यद्रव्यस्याऽभोक्तव्यद्रव्यस्पर्शेनाऽपि न भंग इति भावः । यच्चोत्क्षेप्तुं न शक्यं तस्य भोजने भंगः ( गिहत्थसंसट्ठेणं ) गृहस्थस्य भक्तदायकस्य संबंधि करोटिकादिभाजनं विकृत्यादिद्रव्येणोपलिप्तं गृहस्थसंसृष्टं ततोऽन्यत्र विकृत्यादिसंसृष्टभाजनेन हि दीयमानं भक्तमकल्पद्रव्यावयवामिश्रं भवति न च तद्भुञ्जानस्याऽपि भंगः यद्यकल्पद्रव्यरसो बहुर्न ज्ञायते ( वोसिरइ ) इति आचामाम्लं चतुर्विधाहारं च व्युत्सृजति ॥ पंचाशके, ( अट्ठेवायंबिलम्मि आगारा ) पंचा. वृ. ५॥ अष्टैव न न्यूनाधिकाः आयामोऽवश्रावणमम्लं च सौवीरकं ते एव प्रायेण व्यंजने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके तदायामाम्लं समयभाषयोच्यते । एतद्गतं प्रत्याख्यानमपि तदेवेत्यतस्तस्मिन्नायामाम्ले आयामाम्लस्याकारा भवंति ते चैवं ॥

आयंबिलं पच्चक्खाइ अण्णत्थणाभोगेणं सहसाकारेणं लेवालेवेणं उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ॥

व्याख्यानं सर्वं प्राग्वन्नवरं आयामाम्लं प्रत्याख्याति तदेव मया भोक्तव्यमिति प्रतिलाभिते लेपो भोजनभाजनस्य विकृत्यादिना वा आयामाम्लप्रत्याख्यातुरकल्पनीयेन लिप्तता स चालेपश्च विकृत्यादिना लिप्तपूर्वस्य भोजनभाजनस्यैव हस्तादिना संलेखनतो निर्लेपतेति लेपालेपं तस्मादन्यत्र भाजने विकृत्याद्यवयवसद्भावेऽपि न भंगः इत्यर्थः तथा उत्क्षिप्तस्य शुष्कौदनादिभक्ते निक्षिप्तं पूर्वस्यायामाम्लप्रत्याख्यानवतामयोग्यस्याद्रवविकृत्यादिद्रव्यस्य विवेको निःशेषतया पृथक्करणमुद्धरणमुत्क्षिप्तविवेकस्तस्मादन्यत्र प्रत्याख्यानं भोक्तव्यद्रव्यस्याकल्पनीयद्रव्येण संस्पर्शेऽपि न भंग इति भावः तथा गृहस्थस्य भक्तदायकस्य सम्बन्धि संसृष्टं विकृत्यादिद्रव्येणोपलिप्तं यत्करोटिकादिभाजनं तद् गृहस्थसंसृष्टं ततोऽप्यन्यत्र विकृत्यादिसंसृष्टं भाजनेन हि दीयमानं भक्तमकल्पद्रव्यावयवमिश्रं भवति न च तत् भुंजानस्याऽपि भंग इति भावः वोसिरइति अनायामाम्लं व्युत्सृजतीति। पं०व० । अधुना तदुपन्यस्तमेवचामाम्लमुच्यते—

गुन्नं नाम तिविहं ओअण १ कम्मास २ सत्तुआ ३ चेव।
इक्किंपि अ तिविहं जहन्नयं १ मज्जिमुक्कोसं ९५॥

आयामाम्लमिति गौणं नाम आयामोऽवश्रावण आम्लं चतुर्थरसस्ताभ्यां निर्वृत्तं आयामाम्लं इदं चोपाधिभेदात्त्रिविधं भवति । ओदनः कुल्माषाः सक्तवश्चैवमोदनमधिकृत्य तथा कुल्माषान्सक्तूंश्चेति एकैकमपि चामीषां त्रिविधं भवति । जघन्यं मध्यममुत्कृष्टं चेति ॥

दव्वे १ गुणे २ रसे व ३ जहन्नयं १ मज्झिमं च २ उक्कोसं ३ । तस्सेवय पाउग्गं छलणा पंचेवय कुडंगा ९६॥

कथमित्यत्राह दव्वे गाहा । द्रव्ये रसे गुणे चैव द्रव्यमधिकृत्य रसमधिकृत्य गुणं चाधिकृत्येत्यर्थः । किं जघन्यकं मध्यमं चोत्कृष्टं चेति तस्यैव चा चामलस्य प्रायोग्यं वक्तव्यं तथा आयामाम्लप्रत्याख्यातमिति दध्ना भुंजानस्यदोषः प्राणातिपातप्रत्याख्याने तदनासेवनवदिति छलना वक्तव्या पंचेव कुंडगा वक्रविशेषा इति तद्यथा लोएगाहा ।

लोए १ वेये २ समए ३ अन्नाणे ४ खलु तहेव गेलन्ने५॥
एए पंच कुडंगा नायव्वा अंबिलम्मि भावे ॥ ५७ ॥

लोके वेदे समये अज्ञाने चैव तथा ग्लानत्वे लोकमङ्गीकृत्य कुडंगाः एवं वेदान्समयान् अज्ञानं ग्लानत्वं च एते पंच-कुडंगा ज्ञातव्या आयामाम्ले भवंति आयामाम्लविषय इ-ति गाथात्रयसमासार्थः ॥ ५७ ॥ विस्तरार्थस्तु वृद्धसंप्रदाय-समधिगम्यः सचायं ॥

एत्थ आयंबिलं च भवति आयंबिलपायोगं च तत्थोद-णो आयंबिलं च आयंबिलपाउग्गंच आयंबिलप्पासराकूरा जाणियव्वा कूरविहाणाणि आयंबिलपाउग्गं तंदुलकणिण-या उ कुंडओ पिट्ठं पिहुगपिट्ठपोचलियाभरोलगा मुंड-गादि कुम्मासा पुण पुव्वं पाणिएणं उक्कडिज्जंति पच्छा ओक्खलीए पीसंति ते तिविहा समा मज्झिमा थूला एयं आयंबिलं पाउग्गाणि पुण जा तस्स तु समीसा कणि-याओ कंकदुगाय एवमादि सत्तुगाजवाणं वा गोधूमाणं वा वीहयाणं वा पाओग्गं पुण गोधूमभुज्जिया पहुगा ला-या जावा भुज्जियाये जेय जं तएण न तीरंति पीसिउं तस्सेव नट्टारो कणिगादि वा एयाणि आयंबिलपाओ-गाणि तं तिविहं पि आयंबिलं तिविहं उक्कोसं मज्झिमं ज-हन्नं दव्वओ कलमसालिकूरो उक्कोसो जंवा जस्स प-च्छं रुच्चइ वारालगो सामगो वा जहन्नो सेसा म-ज्झिमा जो सो कलमसालीकूरो सो रसं पडुच्च तिविहो उक्कोसो तं चेव तिविधं पि आयंबिलं निज्जरागुणं पडुच्च तिविधं उक्कोसो णिज्जरागुणो मज्झिमो जहन्नोत्ति कलम-सालिकूरो दव्वउ उक्कोसं दव्वं चउत्थं रसिएण समुद्दिसइ रसओ उक्कोसं गुणं मज्झिमं तस्स वएण वि आयामे-ण उक्कोसं रसओ गुणओ जहन्नं थोवा निज्जामि भणियं होइ सो चेव कलमोयणो जया अन्नेहिं आयामेहिं द-व्वाओ उक्कोसो रसओ मज्झिमओ गुणओ विसमज्झि-मो चेव जया उ एहोदएण तहा दव्वओ उक्कोसं रसओ जहन्नं गुणओ मज्झिमं चेव जेण दव्वओ उक्कोसो न रस-ओ। इयाणीं मज्झिमा ओदणा ते दव्वओ मज्झिमो आयंबिलेण रसओ उक्कोसो गुणओ मज्झिमो ते चेव आ-यामेहिं दव्वओ मज्झिमो गुणओ वि रसओ वि रसओ वि मज्झिमा ते चेव उण्होदएण दव्वओ मज्झं रसजहन्न-गुणमज्झिमं दव्वंति काऊण रालगभणकूरा दव्वओ जहन्नं आयंबिलेण रसओ उक्कोसं गुणमज्झं ते चेवं आयामेणं दव्वजहन्नं रसमज्झं गुणमज्झं ते चेव उण्होदएण दव्वजहन्नं रसजहन्नं गुणुक्कोसं बहुं निज्झरति भणियं होइ अहवा उ-क्कोसेए तिन्नि विभासा उक्कोसोक्कोसं उक्कोसमज्झिमं उक्को-सजहन्नं कंजियआयामउण्होदएहिं जहन्ना मज्झिमा उक्को-सा निज्जरा एवंतिसु विभासियव्वं छलणा नाम एगे-णायंबिलं पच्चक्खायं हिंडं ते ण शुद्धोदणो गहिओ अन्नेण य खीरेण निमंतिओ घेत्तूण आगमओ आलोएउ य भुं-जिओ गुरूहिं भणिओ अज्ज तुज्ज आयंबिलं पच्चक्खायं भणइ सच्चंतो किं भुंजसि जेण मे पच्चक्खायं जहा पाणा-इवाए पच्चक्खा ते ण मारिज्जइ एवं आयंबिले वि पच्चक्खा-ये तन्न कीरइ एसा छलणा ॥

परिहारस्तु प्रत्याख्यानं भोजने तन्निवृत्तौ च भवति। भो-जने आयामाम्लं प्रतिपदन्यत् तत्प्रत्याख्याति आयामाम्लं च वर्तते तन्निवृत्तौ चतुर्विधमप्याहारं प्रत्याचक्षाणस्य तथा लोके एवमेव प्रत्याख्यानार्थः ॥

दोसु अन्नेसु वट्टइ भोजने तन्निवृत्तौ च तेण एसा छ-लणा निरत्थिया पंच कुडंगा लोए वेदे समए अन्नाणे गिलाणे कुडंगोत्ति एगेणायंबिलस्स पच्चक्खायं तेण हिंडंतेण संखडी संभाविया अन्नं वा उक्कोसं लद्धंआयरि-याणं दंसेइ भणियं तुब्भ आयंबिलं पच्चक्खायं सो भणइ खमासमाणो अम्हेहिं बहूणि सत्थाणि लोइयाणि प-रिमिलियाणि तत्थ आयंबिलस्स सद्दो नत्थि पढमो कु-डंगो अहवा वेदेसु चउसु संगोवंगेसु नत्थि आयबितिओ कुडंगो अहवा समए चरगचीरिगभित्थपंडरंगाणं तत्थ वि-नत्थि न जाणामि एस तुब्भं कओ आगओ तइओ कुडं-गो अन्नाणेण भणइ न जाणामि खमासमणो करिसयं आ-यंबिलं भवइ अहं जाणामि कुसणेहि विजिम्मिइत्ति तेण गहियं मिच्छामिदुक्कडं न पुणो घेत्थामि गिलाणकुडंगो भणइ न तरामि आयंबिलं काउं सूलं मे उट्ठेइ अन्नं वा उद्दिसइ रोगंता हि न तीरइ करेउ तस्स अट्ठ आगारा अणाभोगो सह लेवालेवेण उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं पारिमहयरसव्वसमाहिं वोसिरइ ॥ अणाभोगसहसकारा तहेव लेवालेओ जइ भायणे पुव्वं लेवाडगगहियं च समुद्दिट्ठं सं-लिहियं जति तेणं आणेति ण भुंजति उक्खित्तविवेगो जं आयंबिले पडति विगतिमादि तं उक्खवित्ता परिट्ठवि-ज्जतिमाण चरिगलिओ अन्नं वा विलस्स अपओग्गं जइ उद्धरिउं तीरइ उद्धरिए न उवहम्मइ गिहत्थसंसट्ठे जदि गिहत्थो डोविलियं भायणं वा लेवाडकुसणादीहिं तेण ईसित्ति लेवाडादीहिं देइ न भज्जइ जइरसो वा लक्खिज्जइ बहुओ ताहे न कप्पइ परिट्ठावणियमहतरगसमाहीओतहेव॥

व्याख्यातमतिगंभीरबुद्धिना भाष्यकारेणोपन्यस्तक्रममाया-माम्लम तथा च लघुप्रवचनसारे ॥

आयंबिलमवितितिविहं उक्किट्ठजहन्नमज्झिमदएहिं ॥
तिविहं जं विअलपूवाइ पकप्पए तत्थ ॥ १०२ ॥
मियसिंधवसुंठिमिरीमेहीसोवचलं च विडलवणे ॥

हिंगुसुगंधिसु पाए पकप्पए साइमं वत्थु ॥ १०३ ॥ कारणजाएण जइण असणे सिद्धं हविज्ज ठिमियं वा । पिंढं जलेण रइयं घुग्घेरिढुडाइसिद्धेणं ॥१०४॥ पप्पडवडया रुक्खा सिद्धा तिमिपी कया हवइ कप्पा । भज्जियधण्णं तिणधणं कहदलं सिणेहवियलं जं ॥ १०५ ॥ सव्वाणं धणाणं पिहुया दुद्धेण सिद्धिसाइमयं । वेसण्णास्वाराइहलिद्दपत्तिइअकप्पं च ॥१०६॥ जं तिमियं कोउनो नो सक्कइ तं तं न कप्पइ रयाइ । पायं हिंगुं न कप्पइ दुकय दोसप्पसंगओ जण्ण ॥ ॥१०७॥ दंतवणं तंबोलं कायव्वं नेव अंबिमिनवे । जलभिग्गमणाहारं कप्पइ सव्वंपि तत्थडिए ॥ १०८ ॥ सोवीरसुसिणजलं कप्पइ नो अण्णमेसविहिपायं । सोवीरं सिद्धापिंढं निण्णेहं वियलमुक्किडे ॥ १०९ ॥ मज्झमि घुग्घरियाइं हिंगुपमुहाए कप्पए भयणा । भज्जियधण्णाईयं सव्वंपि कप्पइ जहन्नंरत्तादि ॥ ११० ॥

काठिन्यसहितमंडकखाखरपपोटिकादि यतस्तामितुं आर्द्रीकर्तुं न शक्यते तत् आचामाम्लं अकल्पं–

दुन्नि चउअंगुलमाणं नीरं जइ हवइ सिद्ध भत्तुवरि ।
आयंबिलं विसुद्धं हविज्ज तो सव्वकट्ठहरं ॥ १११ ॥
जगराजीरजुत्तं ओयणमिह कप्पए जईण पुणो ।
सद्दाणं नो कप्पइ नूयरिलडाइयं वि पुणो ॥ ११२॥ ल.प्र.सा.

अत्रोत्तरम् । तथा आचामाम्लमध्ये सुंठी मरिचादिकं कल्पते तत्किं कारणेन स्वभावेन वेति अत्र कारणंविनापि कल्पत इति २ तथा आचामाम्लमध्ये सुंठीमरिचादिकं कल्पते पिप्पलीलवंगादिकं च न तत्किंशास्त्राक्षरैः परंपरातो वेति अत्र आचामाम्लमध्ये सुंठीमरिचादिकं कल्पते लवंगपिप्पलीहरीतकीप्रमुखं पुनर्न कल्पते तत्रैतत्कारणं ज्ञायते यल्लवंगेषु दुग्धं भक्तं दीयमानमस्ति हरीतकीपिप्पल्यादिकं नालिकातोऽपक्कं सत् शुष्कीक्रियते यथा युगंधरीगोधूमादिपृथुको राद्धस्स चाचामाम्लमध्ये न कल्पते, युगंधरीगोधूमादिकं तु राद्धं सत् कल्पते इति संभाव्यते॥१०॥ही.। जीतकल्पे प्रायश्चित्तशोध्यान्दोषानधिकृत्य संप्रत्याचामाम्लशोध्यान् एतान् संकलय्य गाथायुगलेनाह ॥

कम्मुद्देसियमीसे धायाइपग्गासणाइएसु च ।
पुरपच्छकम्मउच्छियसंसत्तालित्तकरमत्ते ॥ ३७॥
अइरे परित्तनिक्खित्तपहियसाहरियमीसियाईसु ।
अइमाणधूमकारणविवज्जए विहियमायामं ॥३८॥

कर्मौद्देशिकं विभागोद्देशिकं नवमभेदः मिश्रं च यावदर्थिकमिश्राख्यो मिश्रजाताद्यभेदः कर्मौद्देशिकमिश्रे तस्मिन् धात्र्यादिप्रकाशनादिषु च धात्र्यादयश्च धात्रीदूतीनिमित्तकथनाजीवनापिंडवनीयकत्वावादरचिकित्साकरणक्रोधमानपिंडा द्विविधसंस्तवविद्यामंत्र चूर्णयोगापिंडाः प्रकाशनादयश्च प्रकाशकरणं द्विविधं द्रव्यक्रीतं द्विविधं लौकिकप्रामित्यपरिवर्त्तन निष्प्रत्यपायपरग्रामाहृतापिहितो द्भिन्नक पारोद्भिन्ने उत्कृष्टमालापहृतं सर्वमाच्छेद्यं सर्वमनिष्टं चेति धात्र्यादि काशनादयस्तेषु पुरःकर्मपश्चात्कर्मणोः ( कुच्छियसंसत्तत्ति ) भीमोभीमसेनवदिति नायाद्गर्हिताचित्तम्रक्षिते अगर्हितसंसक्ताचित्तम्रक्षिते आलिप्तकरमात्रलिप्तदोष इत्यर्थः (अइपरं) परितोत्पन्नपरित्ता श-ब्दोपलक्षणत्वात् पृथिव्यप्तेजोवायुप्रत्येकवनस्पतित्रसाख्याः षट्कायाः सचित्ता गृह्यंते । पश्चात् व्यवहितषट्कायनिक्षिप्तपिहितसंहृतमिश्रादिषु आदिशब्दात्षट्कायापरिणतषट्कायोपरिच्छर्दितयोः (निमित्तंमि) अकर्दमप्रक्षिप्ते वालवृद्धमत्तोन्मत्तव्यपनज्वरितांधनिगडितकरचरणाः छिन्नपाणिपादा नपुंसकाः गुर्विणी बालवत्सा च भुंजती विलोडयंती मृद्नंती खंडयंती पिंषती दलंती पिठरकादिकमपवर्त्य ददती साधारणं चोरितकं वा ददती बलिं स्थापयंती परकीयमिदमित्युक्त्वा ददती सप्रत्यपाया च ददती कुलवालकमुनिवृतं त्याजयित्री मागधिका वेश्येव शाकिन्यादिश एतेभ्यो दायकेभ्यो ग्रहणे च तथातिमानं च प्रमाणभूताहाराधिकभोजनं धूमश्च सद्वेषभोजनं कारणविपर्ययश्च निष्कारणे भोजनं अतिमानधूमकारणविपर्ययस्तस्मिन् एतेषु सर्वेषु विहितमाचामाम्लं प्रायश्चित्तमित्यर्थः।जीत.

आयंबिलपाउग्ग–आचामाम्लप्रायोग्य— त्रि० ओदनादिसक्तं कूरादौ तानि चाचाम्लप्रत्याख्यानशब्दे ॥ आव. ॥

आयंबिलवड्ढमाण—आचामा(यामा)म्लवर्द्धमान—न० तपोविशेषे "आयंबिलवड्ढमाणं तवोकम्मं पडिवण्णा" यत्र चतुर्थं कृत्वा आयामाम्लं क्रियते पुनश्चतुर्थं पुनर्द्वे आयामाम्ले पुनश्चतुर्थंपुनस्त्रीणि आयामाम्लानि एवं यावच्चतुर्थं शतं चायामाम्लानां क्रियते इति इह च शतं चतुर्थानां तथा पञ्चसहस्राणि पञ्चाशदधिकानि आयामाम्लानां भवन्तीति ॥औप०॥ तथा च अन्तगडदशासूत्रम् ।

आयंबिलं करेति २ चउत्थं २ बे आयंबिलाइं करेति २ चउत्थं २ तिण्णि आयंबिलाइं करेति २ चउत्थं २ चत्तारि आयंबिलाइं करेति २ चउत्थं २ पंच आयंबिलाइं करेति २ चउत्थं२ छ आयंबिलाइं क०२चउत्थं२ एवं एगुत्तरियाए बुड्ढीए आयंबिलाइं वड्ढति चतुत्थंतरियाइं जाव आयंबिलसयं करेति २ चउत्थं करेति ॥अन्त०अ०१०॥

आयंबिलिय–आचामा (यामा) म्लिक–पुं० आचामाम्लं समयप्रसिद्धं तेन चरतीत्याचामाम्लिकः स्था.ठा.५ आचामाम्लसहिते,"आयंबिलमणायंबिले आयंबिलगा अणायंबिलगा य अणायंबिलिगा आयंबिलगविरहिया इति" ॥ आव० ॥ आचाम्लमोदनकुल्माषादि तेन चरतीत्याचाम्लिकः साधुभेदे, सूत्र० २ श्रु. २ अ. २ ॥

आयग—आजक—न० अजानां समूहः–वुञ्–छागसमूहे, ॥ वाच० । अजापक्ष्मनिष्पन्ने वस्त्रादौ ( आयाणि वा ) कचिद्देशविशेषे अजाः सूक्ष्मरोमवन्यो भवन्ति तत्पक्ष्मनिष्पन्नान्याजकानि भवन्तीति ॥ आचा० अ. ५ उ. १ ॥

आयगव—आजगव—न० अजगवमेव प्रज्ञाद्यण् शिवधनुषि, अजगवं तत्साद्दश्यमस्त्यत्र अण् तत्तुल्यदृढे धनुषि,च॥वाच०॥

आयचरित्त—आयचरित्र—त्रि० आयभूतं निरतिचारतया चारित्रं यस्य स आयचरित्रः । दृढचारित्रे ।

आत्तचरित्र–त्रि० गृहीतचारित्रे, "आयचरित्तो करेइ सामरणं३५" आयभूतं निरतिचारतया चारित्रं यस्य स आयचरित्रां दृढचारित्रत्वात् प्राकृतत्वादात्तचारित्रो गृहीतचारित्रः करोति पालयति श्रामण्यं श्रमणभावमिति ॥ संस्ता० ॥

आयज्झ (आयम्ब) टुवेपृ—कम्पने भ्वा० आत्म० सक० सेट् वेपते अवेपिष्ट ऋदित् चङि न ह्रस्वः टित् वेपथुः ॥ ॥वाच० ॥ ( वेपेरायम्बयज्झौ४६ ) इति प्राकृतसूत्रेण वेपेरायम्ब आयज्झ इत्यादेशौ वा आयम्बइ आयज्झइ वेवइ ॥ प्रा० व्या० ॥

आयट्ठ—आयतार्थ—पुं० आयतोऽपर्य्यवसानान्मोक्ष एव सचासावर्थश्चायतार्थः । मोक्षरूपेऽर्थे, । आयतो मोक्षोऽर्थः प्रयोजनं यस्य दर्शनादित्रयस्य तत्तथा । दर्शनादित्रये च ॥ आचा० अ० १ उ० २॥

आयणण—आजनन—न० आ जन ल्युट् विख्यातजनने,"तेषामाजननं पुण्यं कर्मणः प्रीतिमावहेत्"। भा. आ.प.। सीमायाम अव्ययी. जन्मपर्य्यन्ते, ॥अव्य० ॥वाच०॥

आयण्णण—आकर्णन—न० श्रवणे-"तत्थायरणणजाणणभिण्हणपडिसेवणेसु उज्जुत्ता" तत्राकर्णनं विनयबहुमानाभ्यां-वृतस्य श्रवणमिति, ॥ ध० अधि. २ ॥

आयत—आयत—आ यम क्त० दीर्घे औप०।आ०म.प्र.।अनु०॥ उत्त०अ.१॥ स्था०ठा०७॥ आयामवति॥ प्रश्न०द्वा.३ ॥ (गिरिवरे वा निसहोययाणं रुयएवसेट्ठे वलयाययाणं ) यथा निषधो गिरिवरो गिरीणामायतानां मध्ये जम्बूद्वीपेऽन्येषु वा द्वीपेषु दैर्घ्येण श्रेष्ठः प्रधानः तथा वलयायतानां मध्ये रुचकःपर्वतोऽन्येभ्यो वलयायतत्वेन।सूत्र.श्रु.१अ.६।साद्यपर्यवसितत्वेन दीर्घत्वादायतः मोक्षे।पं० सू०।पं०व०॥आयतोमोक्षोऽपर्य्यवसिताऽवस्थानत्वात्।सूत्र.आयतोऽपर्यवसानान्मोक्ष एव।आचा. आयतो दीर्घसर्वकालभवनान्मोक्षः।सूत्र० श्रु.१अ. २ आत्मनि, 'सव्वे पाणा पियायया'आयत आत्मनोऽनाद्यनंतत्वात् स प्रियो येषान्ते तथा सर्वेऽपि प्राणिनः प्रियात्मान इति ॥ आचा० अ. २उ.२ ॥ आङ्ममभिविधौ सामस्त्येन यत आयतः ॥ आचा० ॥ संयते"आयतजोगन्ताए सेवित्था" आचा०उप. उ.२॥ आकृष्टे यत्नवति च "आययकरणाययं उसुं आयामेत्ता" कर्ण यावदायत आकृष्टः कर्णायतः आयतप्रयत्नवद् यथा भवतीत्येवं कर्णायत इति ॥ भ० श.१उ.८॥ संस्थानभेदे च तद्वक्तव्यताऽऽयतसंस्थानशब्दे स्था०ठा. १ । उत्त० अ. १ ॥

आयत ( य ) कण्णायय—आयतकर्णायत—त्रि० कर्ण यावदायत आकृष्टः कर्णायतः आयतः आयतप्रयत्नवद् यथा भवतीत्येवं कर्णायत आयतकर्णायतः प्रयत्नेन कर्णपर्य्यतमाकृष्टे, "आययकण्णाययं उसुं आयामेत्ता चिट्ठइ"।भ०श.१उ.८। सामान्येन कर्णपर्य्यन्तमाकृष्टे च "आययकरणाययं उसुं करेइ"आयत आकृष्टः सामान्येन स एव कर्णायत आकर्णमाकृष्टआयतकर्णायतस्तं इति । भ० श०उ०८॥

आयत ( य ) चक्खु—आयतचक्षुष्—त्रि० आयतं दीर्घमैहिकामुष्मिकापायदर्शि चक्षुर्ज्ञानं यस्य स आयतचक्षुः ऐहिकामुष्मिकापायदर्शिज्ञानोपेते,। आचा० अ. ३ उ. ५ ॥

आयतचरित्त—आयतचरित्र—न० आयतं चरित्रं सम्यक् चरित्रं मोक्षमार्गप्रसाधकम् मोक्षमार्गप्रसाधके चरित्रे ( आदाणीयंमि आयत चरित्तं ) सूत्र० श्रु. १ अ. १ ॥

आयतच्छदा—आयतच्छदा—स्त्री० आयतो दीर्घश्छदोऽस्याः । कदल्यां त्रिका. वाच. ॥

आयत(य)जोग—आयतयोग-पुं० आयतः संयतो योगो मनोवाक्कायलक्षण आयतश्चासौ योगश्चायतयोगः । ज्ञानचतुष्टयेन सम्यग् योगप्रणिधाने, "आयतजोगताए सेवित्था" आचा०। अ.३उ. ४ "सयमेव अभिसमागम्म आययजोगमायसोहीए" आयतयोगं सुप्रणिहितमनोवाक्कायात्मकं विधायेति॥ आचा० अ. ३ उ. ४ ॥

आयतट्ठ—आयतार्थ—पुं० आयतोऽपर्य्यवसानान्मोक्ष एव स चासावर्थश्चायतार्थः मोक्षरूपेऽर्थे। आयतो मोक्षोऽर्थः प्रयोजनं यस्य दर्शनादित्रयस्य तत्तथा । दर्शनादित्रये "आयतट्ठं समणुवासेज्जा" आयतोऽपर्य्यवसानान्मोक्ष एव स चासावर्थश्चायतार्थोऽतस्तं यदि वाऽऽयतो मोक्षोऽर्थः प्रयोजनं यस्य दर्शनादित्रयस्य तत्तथा समनुवासयेदिति ॥आचा.अ.१उ.२॥ "आयतट्ठं समादाय एवं वीरस्स वीरियं" आयतोऽपर्य्यवसितावस्थानत्वान्मोक्षः स चासावर्थश्च तदर्थो वा तत्प्रयोजनो वा सम्यक्दर्शनज्ञानचारित्रमार्गः स आयतार्थस्तं दृष्ट्वाऽऽदाय गृहीत्वा योधृतिबलेन कामक्रोधादिविजयाय च पराक्रमते एतद्वीरस्य वीर्य्यमिति सूत्र. श्रु. १ अ. ८ ॥

आयतट्ठि [ न् ]–आयतार्थिन्–पुं० मोक्षार्थिनि. दश.अ.३ ॥

आयतट्ठित [ य ]–आयतार्थिक–पुं० आयतो दीर्घः सर्वकालभवनान्मोक्षस्तेनार्थिकस्तदभिलाषी। मोक्षाभिलाषिणि "आयपरे परमायतट्ठिए" सूत्र. श्रु. १ अ. २ ॥

आयतण—आयतन—न० आयतन्तेऽत्र यत् आधारे ल्युट् गृहे । "सव्वओसहाययणं" आयतनं गृहमिति॥ तं०। "आयतणे ढाणठवणा य" आयतने भवन इति ॥पंचा०वृ.३॥ आश्रये, प्रश्न०द्वा.३॥"इच्चेयं विमोहायतणं" विगतमोहानामायतनमाश्रय इति॥आचा०अ.३उ.४स्थाने,संस्ता.।आचा०अ.१उ.१॥ नि०चू०॥( दस्सुगायतणाणि ) दस्यूनां चौराणामायतनानि स्थानानीति ॥ आचा० ॥ "एयाइं आयतणाइं" एतानि रूपादीन्यायतनानि उपभोगास्पदभूतानि वर्तन्त इति ॥ आचा०अ०३उ०४॥ देवादिवन्दनस्थाने,॥ वाच० । प्रश्न० ॥ "नयस्स पुव्वेण जक्खस्स आययणं कयं" ॥ आ० ॥ म० ॥ "भगवतो निव्वाणं गयस्स आययणं काराविय भरहो अक्जमागओ कालेण य अप्पसोगो जाओ" ॥ आ० । म० ॥ देवकुलपार्श्वोपवरके च आयतणाणि वा आयतनानि देवकुलपार्श्वापवरका इति दशा० ॥ आचा० ॥ धार्मिकजनमीलनस्थाने तथा च धर्मरत्ने भावश्रावकस्य शीलवत्स्वरूपं द्वितीय लक्षणं व्याख्यानयन्नाह (आययणं खु निसेवइ ) आयतनं धार्मिकजनमीलनस्थानम उक्तं च "जत्थ साहम्मिया बहवे सीलवंता बहुस्सुया । चरित्तायारसंपण्णा आयतणं तं वियाणाहि" खुर अवधारणे प्रतिपक्षप्रतिषेधार्थः ततआयतनमेव निषेवेत भावश्रावको नानायतनमितियोगः ॥ ध.र. दर्श. ॥ कर्मोपादानस्थाने ( इच्चेयाइं आयतणाइं ) इत्येतानि पूर्वोक्तान्यायतनानि कर्मोपादानस्थानानीति॥ आचा०अ०१उ०४॥ "कम्मायतणेहिं" कर्मणां ज्ञानावरणादीनामायतनान्यादानानि वा बन्धस्थानहेतव इत्यर्थः ॥ अन्त. ॥ विश्रामस्थाने यज्ञस्थाने च ॥ वाच. ॥ आङ्मभिविधौ समस्तपापारम्भेभ्य आ-

त्माऽऽयत्यते आनियम्यते तस्मिन् कुशलानुष्ठाने वा यत्न-त्वान् क्रियते इत्यायतनम्। ज्ञानादित्रये "एकायतणरयस्स इह विप्पमुक्कस्स णत्थि मग्गे विरतस्स" ॥ आचा.अ.५ उ.१ आयतनं द्विधा द्रव्यतो भावतश्च । तत्र द्रव्यतो जिनगृहादि भावतस्तु ज्ञानदर्शनचारित्रधराःसाध्वादयः प्रव.द्वा. १४८। इदानीं आयतनप्रतिपादनायाह-

आययणं पि य दुविहं दव्वे भावे य होइ नायव्वं ।
दव्वंमि जिणघराई भावंमि होइ तिविहं ॥११०४॥

आयतनमपि द्विविधं द्रव्यभावविषये च ज्ञातव्यं । तत्र द्रव्ये जिनगृहादिभावे च भवति त्रिविधं ज्ञानदर्शन-चारित्ररूपं आयतनमिति "जत्थ साहम्मि या बहवे सा-लवन्ता बहुस्सया ॥ चरित्तायारसंजुत्ता आययणं तं वि-याणाहिं ५" सुगमा "सुंदरजणसंसग्गी सीलदरिद्दंपि कुणइ सीलत्थं॥जह मेरुगिरीलग्गं तणं पि तं कंचणं होइ" उक्तमा-यतनद्वारं ओघ०।आविष्करणे-निर्णयने च (पसिणायतणाणि) प्रश्नस्यादर्शप्रश्नादेरायतनमाविष्करणं कथनं यथावस्थि-तप्रश्ननिर्णयनानि यदि वा प्रश्नायतनानि लौकिकानां परस्परव्यवहारे मिथ्याशास्त्रगतसंशये वा प्रश्ने सति य-थावस्थितार्थकथनद्वारेणायतनानि निर्णयनानीति ॥सूत्र० ॥ श्रु. १ अ.९ ॥

आयतणसेवा–आयतनसेवा–स्त्री० आयतनसेवने। नित्यमायत-नसेवा अनायतनपरिहारश्च शीलम्। तथा च दर्शनशुद्धौ शीलत्वभेदानधिकृत्य ॥ नित्यमायतनसेवा अनायतनप-रिहारः तत्रायतनं पंचविधाचाराचरणप्रवणाः सुसा-धव अनायतनपरिहारश्च अनायतनं पार्श्वस्थादिकुतीर्थिवे-श्याविटषण्ढादि तद्वर्जनम् ॥दर्श०॥

नाणस्स दंसणस्स य चरणस्स य जत्थ होइ उवघाओ ।
वज्जिज्ज वज्जभीरू अणाययणवज्जओ खिप्पं॥ ११०० ॥

ज्ञानस्य दर्शनस्य चारित्रस्य च यत्रायतने भवति उपघात-स्तं वर्जेत वध्यभीरुसाधुः किंविशिष्टः अनायतनं वर्जयती-ति अनायतनवर्जकः स एवंविधः क्षिप्रं अनायतनं उपघात-रूपं जीयादिति इदानीं विशेषतः अनायतनप्रदर्शनायाह ।

जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया ।
मूलगुणप्पडिसेवी अणाययणं तं वियाणाहि ११०१॥

सुगमा । नवरं मूलगुणाः प्राणातिपातादयस्तान् प्रतिसेवंत इति मूलगुणप्रतिसेविनस्ते यत्र निवसंति तदनायतनमिति। "जत्थसाहम्मिया बहवे भिन्नचित्ता अणारिया॥ उत्तरगुण-पडिसेवी अणाययणं तं वियाणाहि" ॥ २ ॥ सुगमा । नवरं उत्तरगुणाः (पिंडस्स जाविसोही) इत्यादि तत्प्रतिसेविनो ये। "जत्थ साहम्मिया बहवे भिन्नचित्ता अणारिया ॥ लिंगवेसपडि-च्छिन्ना अणाययणं तं वियाणाहि। ३। सुगमा। नवरं लिंगवेष-मात्रेण प्रतिच्छन्ना बाह्यतः आभ्यंतरतः पुनर्मूलगुणसेविनः उत्तरगुणसेविनश्च ते यत्र तदनायतनमिति उक्तं लोकोत्तरं भावनायतनं तत्प्रतिपादना चोक्तमनायतनस्वरूपं ॥ इदानीं प्रतिसेवनाद्वारव्याचिख्यासयाह सर्वं प्रतिपादयन्नाह। "एवं खलु आययणं निसेवमाणस्स हुज्ज साहुस्स । कंट-कपवरुच्छलणा रागद्दोसे समासिआ" ॥ ६ ॥ एवमुक्तेन न्यायेन आयतनमेव मानस्यापि साधोर्भवेत् (कंट-कपवइवरुच्छलना )किमासाद्य अत आह रागद्वेषौ समाश्रित्य स च रागद्वेषेण सेवना द्विविधा भवति एतदेवाह ।

पडिसेवणावि दुविहा मूलगुणे चेव उत्तरगुणे ।
य मूलगुणे उत्तरगुणा गुणेहुंतिति गमाई ॥ ओघ० ॥ध. र. ॥

आयत ( य ) तर—आयततर—त्रि० आङभिविधौ साम-स्त्येन यत् आयतः अयमनयोरतिशयेनायत आयततर यत्ने नाध्यवसिते ॥ आचा० अ० ३ उ० ३॥

आयतत्थू–आयतस्तू–त्रि० आयतं स्तौति स्तु क्विप्० । दीर्घः। आयतस्तावके क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽस-म्प्रसारणञ्च वार्ति० ॥ वाच० ॥

आयतसंठाण—आयतसंस्थान—न० संस्थानभेदे आयतं दी-र्घं यथा दण्डस्येति॥उत्त०अ०१॥ तथाच स्थानाङ्गे( एगेपिहुले) स्था० ठा० १॥ टी०पृथुलं विस्तीर्णमन्यत्र पुनरिह स्थाने आ-यतमभिधीयते ।तदेव चेह दीर्घह्रस्वपृथुलशब्दैर्विभज्योक्त-मायतधर्मत्वादेषां तच्चायतं प्रतरघनश्रेणिभेदात् त्रिधा।पुनरे-कैकं समविषमप्रदेशमिति षोढा । यच्चायतभेदयोरपि ह्रस्व-दीर्घयोरादावभिधानं तद्वृत्तादिषु संस्थानेष्वायतस्य प्रायो वृत्तिदर्शनार्थं । तथा हि दीर्घायतः स्तंभो वृत्तस्त्र्यस्रश्चतुर-स्रश्चेत्यादि भावनीयं विचित्रत्वाद्वा सूत्रगतेरेवमुपन्यास इति ॥ प्रज्ञा० पद०१॥ भेदादिबहुवक्तव्यता संस्थानशब्दे ।

आयतसंठाणपरिणय—आयतसंस्थानपरिणत—त्रि० आयत-संस्थानभाजि ॥ आयतसंस्थानपरिणता दण्डादिवदिति ॥ ॥प्रज्ञा० पद० १॥

आयतित्त—आत्मतृप्त—त्रि० आत्मस्वरूपतुष्टे "आत्मतृप्तो मुनिर्भवेत्"आत्मतृप्तः आत्मस्वरूपेऽनन्तगुणात्मके तृप्तस्तुष्टो भवेत् अष्ट० ॥

आयत्त—आयत्त–त्रि०आ यत क्त अधीने, वशीभूते वाच० आयत्तो वशवर्ती तदुक्तानुयायीति ॥ दर्श० ॥ कृतप्रयत्ने च ॥ वाच० ॥

आयस्त-त्रि० आ–यस्–क्त क्षिप्ते "आयस्तसिंहाकृतिरुत्पपा-त" किरा० क्लेशिते, प्रतिहते, तीक्ष्णीकृते, आयासयुक्ते च ॥ वाच० ॥

आयत्ति–आयत्ति–स्त्री० आ यत क्तिन् स्नेहे, वशित्वे, सामर्थ्ये, सीम्नि, शयने, प्रभावे, आगतौ, उपाये, च वाच० ॥

आयत्थूण–आयस्थूण–त्रि० अयोमयी स्थूण यस्य तस्यापत्यं शिवा० अण् अयस्थूणापत्ये स्त्रियां ङीप् वाच० ॥

आयपइट्ठिय-आत्मप्रतिष्ठित–त्रि०स्वरूपप्रतिष्ठिते स्था० ठा०३ क्रोधभेदे स्था० ठा.२। व्याख्या क्रोधशब्दे,—

आयपण्ण—आगतप्रज्ञ—त्रि० आगतोत्पन्ना प्रज्ञा यस्या-सावागतप्रज्ञः, संजातकर्त्तव्याकर्त्तव्यविवेके, समितीसु गुत्तीसु य आयपण्णे ॥ सूत्र० श्रु.१ अ. १४॥

आयम–आचम–पुं० आ-चम घञ् वा ह्रस्वः आचमने।वाच०॥

आयमग्ग–आयतमार्ग–पुं० आयतो मोक्षोऽव्यवच्छेदात्तस्य मार्गो ज्ञानादिस्तत्र लिप्सा लालसा आयतमार्गस्तल्लिप्साः ये ते तीर्थकराज्ञास्थिता भवन्तीति ॥ पंचा० वृ०११॥

आयमण —आचमन—न० आ चम भावे ल्युट् निर्लेपने, "आयमणत्थ वाहि वोसिरइ" ॥ वृह० ॥ आयमणं णिल्लेव-

णंति । नि. चू. उ. ४ । पुरीषोत्सर्गानन्तरं शौचकरणे च । पिं। "तिहिं आयमणं अदूरंमि" ध. अधि.३ (उच्चारप्रस्रवणे कृत्वा येन परिष्ठापयति तस्य प्रायश्चित्तं थंमिलशब्दे वक्ष्यते)

आयममाण-आचमत्-त्रि. आचमनं कुर्वति, स्था. ठा. ५

आयमिणी-आयमिनी-स्त्री. विद्याभेदे "आयमिणीं एवमाइ आओ विज्जाओ अन्नस्स हे उं पउंजंति" सूत्र. द्वि. श्रु. अ.२ ॥

आयरंत-आचरत्-त्रि. अङ्गीकुर्वति । कुर्वति "तमायरंतो ववहारं" उत्त. अ. १। विदधति च "नायरेज्ज कयाइवि" नाचरेन्न विदध्यादिति । सूत्र. द्वि. श्रु. अ. ५ ।

आयरक्ख-आत्मरक्ष-पुं. आत्मरक्षके ।

तओ आयरक्खा पन्नत्ता । तंजहा । धम्मियाए पडिचोयणाए पडिचोएत्ता भवइ तुसिणीए वा सिया उट्ठित्तु वा आया एगंतमवक्कमेज्जा ॥

टी. ॥ तओ आय इत्यादि । सुगमं नवरं । आत्मानं रागद्वेषादेरकृत्योद्भवकूपाद्वा रक्षन्तीत्यात्मरक्षाः । धम्मियाए पडिचोयणाएत्ति । आत्मना एवं धार्मिकोपदेशेन नेदं भवादृशां विधातुमुचितमित्यादिना प्रेरयिता उपदेष्टा भवतीति अनुकूलेतरोपसर्गकारिणस्ततोऽसावुपसर्गकरणान्निवर्तते । ततोऽकृत्या सेवा न भवतीत्यत आत्मा रक्षितो भवतीति १ तुष्णीको वा वाचंयम उपेक्षक इत्यर्थः २ स्यादिति प्रेरणाया अविषये उपेक्षणासामर्थ्ये च । ततः स्थानादुत्थाय (आयत्ति) आत्मना एकान्तं विजनं अंतं भूमिभागमवक्रामेत् गच्छेत् ३ । स्था. ठा. ३ ।

आयरक्खिय-आत्मरक्षित-त्रि. आत्मा रक्षितो दुर्गतिहेतोरात्मध्यानादेरनेनेति आत्मरक्षितः । आहिताग्न्यादिषु दर्शनात् क्तान्तस्य परनिपातः । दुर्गतिहेतोरात्मध्यानादेरात्मनो रक्षके ॥

आयरक्षित-त्रि. आयो वा ज्ञानादिलाभो रक्षितोऽनेनेत्यायरक्षितः । ज्ञानादिलाभस्य रक्षके । 'विरए आयरक्खिए' उत्त. अ. २ ।

आयरण-आचरण-न. आचर्य्यतेऽनेनेति । अनुष्ठाने स्था० ठा० ८ । विधाने "अंसिस धम्मे अणायारं नायरेज्ज कयाइवि,, अस्मिन्धर्मे सर्वज्ञप्रणीते व्यवस्थितः सन्ननाचारं सावद्यानुष्ठानरूपं नाचरेन्न विदध्यादिति । सूत्र. श्रु. २ अ. ५ । केन चित्प्रकारेण परिणमने । दव्वायारं वियाणाहि । आचरणमाचारो द्रव्यस्याचारो द्रव्याचारः । द्रव्यस्य यदाचरणं तेन २ रूपेण परिणमनमित्यर्थः । दश. अ. ३ । परप्रतारणाय विविधक्रियाणामाचरणरूपे मायाविशेषे च भ. श. १२ उ. ५ । आचरत्यनेन करणे ल्युट्, रथे शकटे च, शि. वाच. ॥

आदरण-न. मायाविशेषात्कस्यापि वस्तुनोऽभ्युपगमे, भ. श. १२ उ. ५ ।

आयरणकप्प-आचरणकल्प-पुं. उत्सर्गापवादयोः स्वस्थाने सेवनाकर्तव्यतायाम् । इदाणीं इमो आयरणकप्पो जे भणित्ता गाहा ॥

जे भणित्ता उपकप्पे, पुव्वावरबाहिता भवे सुत्ता ।
सो तह समायरंतो, सव्वो आयरणकप्पो ॥ ३०६॥

जे य कप्प पगणवीसा ते उद्देसगेहिं पुव्वावरवाहया सुत्ता अथा वा भणिता तहेव समायारंतस्स आयरणकप्पो भवति एत्थ पुव्वो उस्सग्गो अवरोववादो एते परोप्परवाहता एतेसिं सट्ठाणे सेवणा कर्तव्येत्यर्थः ॥

गाहा । उस्सग्गे अववायं, आयरमाणो विराहओ होत्ति ॥ अववाए पुण पत्ते, उस्सग्गनिसेवओ भइओ । दारं ॥ ३०७ ॥

कया भयणाए कहं उच्यते । जो धितिसंघयणसंपन्नो सो अववादट्ठाणे पत्तेपि उसग्गं करेंतो सुद्धो जो पुण धितिसंघयणहीणो अववादट्ठाणे उस्सग्गं करेति सो विराहणं पावति एस भयणागतो आयरणकप्पो ॥ नि० चू० उ० २० ।

आयरणया-आदरणता-स्त्री. यतोमायाविशेषादादरणमभ्युपगमं कस्यापि वस्तुनः करोत्यसावादरणं । तल्प्रत्ययस्य च स्वार्थिकत्वादादरणता । मायाविशेषे । आचरणताऽप्यत्रैवाभ. श. १२ उ. ५

आयरिय-आचारिक-पुं. स्वकीयमतोद्भवानुष्ठानसमूहे ।

इह मेगेउ मन्नंति, अपच्चक्खाय पावगं ।
आयरियं विदित्ताणं, सव्वदुक्खा विमुच्चई ॥ ९ ॥

इह अस्मिन्संसारे एके केचित्कापिलिकादयो ज्ञानवादिनः इति मन्यन्ते इतीति किं पापकं हिंसादिकं अप्रत्याख्याय पापं अनालोच्याऽपि मनुष्य आचारिकं स्वकीयमतोद्भवानुष्ठानसमूहं विदित्वा ज्ञात्वा सर्व्वदुःखात् विमुच्यते एतावता तत्वज्ञानान्मोक्षावाप्तिरिति वदन्ति । जैनानां तु ज्ञानक्रियाभ्यां मोक्षः ज्ञानवादिनान्तु ज्ञानमेव मुक्त्यङ्गमिति उत्त० अ. ६ (एतन्मतनिराकरणं मोक्खशब्दे)

आयरित-न. आ. चर. भावे क्तः आचरणे । उत्त. अ. ६ आसेवने औप. "आयरितो आचरितो आसेवितो वा एगट्ठं" । आ. चू. । "जं किंचि वितहमायरियं" यत्किञ्चिद्वितथमन्यथाऽऽचरितमासेवितं कृतमिति शेषः ॥ आ. म. । अनुष्ठानमापन्ने । जं किंचि वितहमायरियं । वितथमन्यथाभूतं संयमानुकूलमित्यर्थः । आचरितमनुष्ठानमापन्नमिति शेषः । पंचा. वृ. १२ ।

धम्मज्जियं च ववहारं, बुद्धेहायरियं सया ।
तमायरंतो ववहारं, गरहं नाभिगच्छई ॥ ४२ ॥

धर्मेण क्षान्त्यादिरूपेणार्ज्जितमुपार्ज्जितं धर्म्मार्ज्जितं न हि क्षान्त्यादिधर्म्मविरहित इमं प्राप्नोति । च पूरणे । विविधं विधियेत्वा व्यवहरणमनेकार्थत्वादाचरणं व्यवहारस्तमिति कर्तव्यतारूपंबुद्धैरवगततत्वैराचरितं सदा सर्वकालं तमिति सदावस्थिततया प्रतीतमेव आचरन् व्यवहरन् यद्वा यत्तदोर्नित्याभिसंबन्धात्सुपव्यत्ययाच्च धर्म्मार्ज्जितो बुद्धैराचरितश्च यो व्यवहारस्तमाचरन् कुर्वन् विशेषेणापहरति पापकर्म्मेति व्यवहारस्तं व्यवहारविशेषणमेतत् एव च किमित्याह गर्हामविनीतोऽयमित्येवंविधां निन्दां नाभिगच्छति न प्राप्नोति यतिरिति ॥ ४२ ॥ उत्त. अ. १ ।

आचर्य्यते स्म वृहत्पुरुषैरप्याचरितम् । व्यवहारे । तथा च व्यवहारेकार्थिकान्यधिकृत्य "आयरिए चेव ववहारे" व्य. खं. १ उ. १

आचर्य्य-त्रि. आचर्य्यतेऽत्र आ. चर. आधारे यत् । अनुष्ठानयोग्ये देशे वाच. ॥

आचार्य्य-पुं. आचर्य्यतेऽसावाचार्य्यः । सूत्रार्थावगमार्थं मुमुक्षु

भिरासेव्यते इत्याचार्यः आव. । दशा. । आ मर्यादया तद्विषयविनयरूपया चर्यन्ते सेव्यन्ते जिनशासनार्थोपदेशकतया तदाकांक्षिभिरित्याचार्यः । उक्तञ्च । "सुत्तत्थविऊलक्खण, जुत्तो गच्छस्स मेढिभूओ य । गणतत्तिविप्पमुक्को, अत्थं वाएइ आयरिओत्ति " ॥ १ ॥ अथवा आचारो ज्ञानाचारादिः पञ्चधा । आ मर्यादया वाचारो विहार आचारस्तत्र साधवः स्वयंकरणात्प्रभाषणात्प्रदर्शनाच्चेत्याचार्याः आह च "पंचविहं आयारं आयरमाणा तहा पयासंता। आयारं दंसंता आयरिया तेण वुच्चंति॥१॥" अथवा आ ईषदपरिपूर्णा इत्यर्थश्चारा हेरिका ये ते आचाराश्चारकल्पा इत्यर्थो युक्तायुक्तविभागनिरूपणनिपुणा विनेया अतस्तेषु साधवो यथावच्छास्त्रार्थोपदेशकतयेत्याचार्याः । भ. श. १उ.१। दशा. । चरगतिभक्षणयोः आङ्पूर्व आचर्यते कार्यार्थिभिः सेव्यते इत्याचार्यः । ऋवर्णव्यंजनाद्ध्यणिति यत् । आ. म. द्वि. । आङ् मर्यादाभिविध्योः । चरिर्गत्यर्थे मर्यादया चरन्तीत्याचार्याः आचारेण वा चरन्तीत्याचार्याः । आ. चू. । अट्ठारससीलंगसहस्साहिट्ठियं तम्हा छत्तीसइविहमायारं जह ठियमेगेसाए महत्ति साहुसमयं आयरंतित्ति वत्तयंतित्ति आयरिया परमप्पणो य हियमायरंति आयरिया सव्वसत्तसीसगणाणं च हियमायरंति आयरिया । पाणपरिच्चाए विगपुढवादिणं समारंभं नायरंति नारभंति णाणुजाणंति आयरिया सुहुमावरद्धेवि ण कस्सई मणसावि पावमायरंतित्ति वा आयरिया ॥ महा. अ० ३॥ स्याद्भव्यचैत्यचौर्यसमेषु यात्॥८।१०७इति प्राकृतसूत्रेण चौर्यशब्देन समेषु शब्देषु संयुक्तस्य यात्पूर्व इत् । आचार्ये चोऽच्च ॥ १ ॥ ७३ ॥ इति प्राकृतसूत्रेणाचार्यशब्दे चस्यात इत्वमत्वं च। गुरौ, पं. व.। सूरौ, ध. अधि. ३ आचार्या अर्थदातार इति वृ. । अचार्यस्सूत्रार्थदाता दिगाचार्यो वा कल्प. । आचार्यस्सूत्रार्थोभयवेत्ता लक्षणादियुक्तश्च । आव.॥

विषयाः॥



( १ ) निक्षेप आचार्यपदस्यास्य ।

आङ् मर्यादाभिविध्योः । चरिर्गत्यर्थः । मर्यादया चरन्तीत्याचार्याः । आचारेण वा चरन्तीत्याचार्याः ।" ते चउव्विहा णामट्ठवणाओ गताओ द्रव्यभूतो वा द्रव्यनिमित्तं वा द्रव्येण वा दव्वं आयारवंतं भवति अनायारवंतं च । नामनं प्रति तिणिस सिभया परंतो य धावणं प्रति हारीहो रागोय वासणं प्रति कवेल्लुगा वइरं व सिक्खवेणं प्रति मदणसलागा भासादीपकरणं प्रतिसुवण्णं घंटाओहंच अविरोधं प्रतिभक्कीरं सक्करायविरोधं प्रतितेल्लं दाधिरार्त्त एवमाइए भणाणामण धावण वासणसिक्खावणं सुयकरणअविरोधीणि दव्वाणि जाणि लोए दव्वयारं वियाणेहि । अहवा दव्वायरिओ तिविहो एगभविओ बद्धाउओ अभिमुहणामगोतो । एगभविओ वरित्ते जो एगेणं भवेणं उववज्जिहित्ति । बद्धाउओ जेण आउयं बद्धं । अभिमुहणामगोतो जेण पदेसा उच्छूढो अहवा मूलगुणणिव्वत्तितो उत्तरगुणणिव्वत्तितो य । सरीरं मूलगुणा, फिक्कम्मादि उत्तरगुणा । अहवा जाणउत्थि भविओ वतिरित्तो मंगुवायगाणं समुद्दवायगाणं नागहवायगाणं अधासंखं आदेसो । भावायरिओ दुविहो । आगमतो णो आगमतो य । तहेव णो आगमतो दुविहो । लोइओ लोउत्तरिओ य । लोइत्तो सिप्पाणि चित्तकम्मादि सत्थाणि वइसेसियादि जो उपदिसति । उत्तरिओ जो पंचविधो णाणादियं आयारं आयरति पभासति य अण्णेसिं आयरियाणं आचरितव्यानि दर्शयति । एवं गंतव्यं । एवमादि तेण ते भावायरिया तेसिं फलं तहेव ॥ आ. चू. ॥

विशेषावश्यकेऽपि ।

नामं ठवणा दविए, भावे चउव्विहोय आयरिओ ।
दव्वंमि एगभवियाइ, लोइए सिप्पसत्थाई ॥ ३८५ ॥

इह नामस्थापने सुगमे द्रव्यविचारे पुनराह।

आगम दव्वायरिओ, आयारवियाणओ अणुवउत्तो । नो आगमओ जाणय, भव्वसरीराइरित्तोयं ।३८७।
भविओ बद्धाउओय, अभिमुहो मूलाइनिम्मिओ वावि ।
अहया दव्वभूओ, दव्वनिमित्तायरणओ वा ॥ ३८८ ॥
आमजायावयणो, चरणं चारोत्ती तीए आयारो ।
सो होइ नाणदंसण, चरित्ततववीरियवियप्पो ॥ ३८९ ॥

तस्मायरणपन्नासए, देसणदेसिया विमोक्खत्थं । जे ते जा-
वायरिया, जावायारेचरत्तस्य ॥ ३५० ॥ अहवायरंति
जं सय, मायारेंतिय जमायरिज्जंति ॥ मज्जायया जिगम्मं, ति
जमुत्तं तेण आयरिया ॥ ३५१ ॥

व्याख्या–इशरीरजव्यशरीरव्यतिरिक्तस्वाचार्योऽयं क इत्याह । जविओ इत्यादि । एकजविको बद्धायुष्कोऽजिमुखनामगोत्रश्चेत्यर्थः । [ मूलाई निम्मिओ वाविति ] तथा मूलगुणनिर्मित उत्तरगुणनिर्मितश्च तद्व्यतिरिक्तो द्रव्याचार्यो मन्तव्यः । तत्र मूलगुणनिर्मित आचार्यशरीर निवर्त्तनयोग्यानि द्रव्याणि उत्तरगुणनिर्मितस्तु तान्येव तदाकारपरिणतानीति । अथवा द्रव्यजूतोऽप्रधान आचार्य स्तद्व्यतिरिक्तो द्रव्याचार्यः प्रतिपाद्यते । योवा द्रव्यनिमित्तेनाचरति चेष्टते स द्रव्यनिमित्ताचरणाद् द्रव्याचार्यः स च लौकिको लौकिकमार्गे शिल्पशास्त्रादि विज्ञेयः । यःशिल्पनिमित्तादिशास्त्राणि ग्राहयति स इहोपचारतः शिल्पशास्त्रादिरुक्तः । अन्ये त्विमं शिल्पशास्त्राचार्य लौकिकं जावाचार्य व्याचक्षते । शेषं सुगमं पंचविहमित्यादिना । लोकोत्तरेण जावाचार्य उक्तस्तत्स्वरूपव्याख्यानमाह पाठसिद्धा एव न वरं [ तीएत्ति ] तया मर्यादया चरणमाचारः [ तस्सेत्यादि ] तस्य पञ्चविधस्याचारस्य स्वयमाचरणतः परेषाञ्च प्रजाषणतः तथा विनेयानां वस्त्रप्रत्युपेक्षणादिक्रियाविधेर्दर्शनतो ये परात्मनो मोक्षार्थं [ देसियत्ति ] देशितारस्ते जावाचारोपयुक्तत्वाद्भावाचार्या इति । अथवा स्वयं यस्मादाचरन्ति सदनुष्ठानमाचारयन्ति चान्यैः ॥ अथवा आचर्यन्ते मर्यादया अजिगम्यन्ते यतो मुमुक्षुजिरिति यदुक्तमेतत्तात्पर्यमित्यर्थस्तेनाचार्या इति गाथार्थः ॥

तथाच महानिशीथे-अ.५। कस्याज्ञा नातिक्रमणीयेत्यधिकृत्य गोयमा!चउव्विहा आयरिया जवंति तंजहा । नामायरिया, ठवणायरिया, दव्वायरिया, जावायरिया, तत्थणं जे ते जावायरिया ते तित्थयरसमा चेव दट्ठव्वा तेसिं संतियाणं णाइक्कमेज्जा, से जयवं कयरेणं ते जावायरिया जन्नंति गोयमा ! जे अज्जपव्वइए वि आगमविहीए पयं पए २ आणाणुसंचरंति तेजावायरिए । जओणं वाससयदिक्खिए विहुत्ताणं वायामेत्तेणं पि आगमओ बाहिं करेंति ते णामठवणाहिं णिउइयव्वे ॥ से जयवं आयरिया णं केवइयं पायच्छित्तं जवेय जेसिं गच्छस्स साहू एत्ते आयरियमयहरपवित्तिणीए य सत्तरस्सगुणं अहाणं सीलखलिए जवंति तओति लक्खगुणं जं अइदुक्करणासंज सुकरं तम्हा सव्वहा सव्वपयारेहिणं आयरियमयहरे पवित्तिणि पय अत्ताण पायच्छित्तस्स संरक्खेयव्वं अखलिअ सीलेहिं च जवियव्वं ॥

( २ ) आचार्यस्य जेदाः ।

तओ आयरिया पण्णत्ता । सिप्पायरिया, कलायरिया, धम्मायरिया । जे ते धम्मायरिया, परलोगगहियट्ठाए, निज्जरट्ठाए, आराहेयव्वा । अन्ने कलायरिया, सिप्पायरियाए, कएहिं, कित्तबुद्धिए, आराहियव्वे । तत्थेगे धम्मायरिया, सोवायकरंडगसमा ।वण्णाइकयत्थप्पयगाहाइहिं जे सुद्धसज्जाए वखाणिंति ते सोवागकरंडगसमा । वेसाकरंडगसमा जो रीरी आहारणसरिसजीहावक्खाणमंतरेणं अंतरं सुत्तसार विरहियावि मुद्धसज्जाए जणं विमोहिंति णरविति अप्पाणं तुलंमि आजुच्च आएत्तये पाभिंति गोयम! गणहराणं उवमाए ते वेसाकरंडगसमा, गाहावइकरंडगसमा जे समं ससुवसियसुगुरुहिंतो संपत्त अंगोवंगाइ सुत्तत्थेसु परिच्छियच्छेयगंथा सयसमयपरसमयणिच्छया परोवयारकरणिक्कच्छिच्छया । जणजोगविहीए अणुओगं करिंति ते गाहावइकरंडगसमा रायकरंडगसमा । जे गणहरा चउदसपुव्विणो वा घमाओ घमसयं पमाओ पमसयं इच्चाइ विहाइ सयसमणिया ते रायकरंडगसमा । गाहावईकरंडगसमाणे रायकरंडगसमाणे दो विए आयरिए तित्थयरसमाणे ॥ अंग० ॥

तथाच राजप्रश्नीये । केसीकुमारसमणे पदेसं रायं एवं वयासी जाणासि णं तुम्हं पएसी केवइयारिया पएणत्ता ? हंता जाणामि तओ आयरिया पएणत्ता । तंजहा । कलायरिए, सिप्पायरिए, धम्मायरिए, जाणासि णं तुम्हं पएसी तेसिं तिण्हं आयरियाणं कस्स का विणयपमिवत्ती पउंजियव्वा ? हंता जाणामि कलायरियस्स, सिप्पायरिअस्स उवलेवणं वा समज्जणं करेज्जा पुप्फाणि वा आणवेज्जा, मंमेवज्जा, वा जोयवेज्जा वा विउलं जीवियारिहं पीइदाणं दलएज्जा पुत्ताणं पुत्तियं वावि विकप्पेज्जा जत्थेव धम्मायरियं पासेज्जा तत्थेव वंदिज्जा णमंसेज्जा सक्कारेज्जा सम्माणेज्जा कल्लाणं मंगलं चेइयपज्जुवासेज्जा फासुएसणिज्जेण असणपाणखाइमसाइमेणं पमिलाजेज्जा पामिहारिएणं पीढफलगसेज्जासंथारतेणं उवनिमंतिज्जा ॥

आचार्यस्त्रिविधस्तद्यथा । सिंहानुगो, वृषजानुगः, क्रोष्टुकानुगश्च । क्रोष्टुकः शृगालः । तत्र यो महत्यां निषद्यां स्थितः सन् सूत्रमर्थं वा वाचयति तिष्ठति वा स सिंहानुगः। य पुनरेकस्मिन्कल्पे स्थितस्सन् वाचयति तिष्ठति वा स वृषजानुगः। यस्तु रजोहरणनिषद्यायामौपग्रहिकपाद प्रोञ्छने वा स्थितो वाचयति तिष्ठति स क्रोष्टुकानुगतः॥ व्य-खं-१ उ. १ ( अस्य बहुवक्तव्यता ऽऽलोयणाशब्दे ) ॥

( ३ ) स्वरूपमाचार्यस्येह परत्र च ।

आयरिओ केरिसओ, इहलोए केरिसो व परलोए ।
इहलोए असारणओ, परलोए फुमंजणंतो ओ ।

य एष उपग्रहकृदाचार्यस्तमेव ज्ञातुमिच्छामि कीदृशः खल्वाचार्य इहलोके हितकारी कीदृशः परलोके इति सूरिराह । चतुर्विधस्सामान्येनाचार्यस्तद्यथा । इह लोके हितो नामैको न परलोक हितः [१ ]परलोकहितो नेह लोकहितः [२ ]इह लोके हितोऽपि परलोके हितः[३]न इह लोकहितो नापि परलोकहितः[४ ]तत्र प्रथमद्वितीयजंगव्याख्यानमाह । ( इह लोए ) इत्यादि तत्र यो वस्त्रपात्रजक्तपानादिकं समस्तमपि सम्यग्नां प्रयच्छति न पुनः संयमे सीदन्तस्सारयति सोऽसारणिकस्सारणारहित इह लोके

हितो न परलोके एषा प्रथमभङ्गभावना। यः पुनस्संयमयोगेषु प्रमाद्यतां सारणां करोति न च वस्त्रपात्रभक्तपानादिकं प्रयच्छति स केवलं स्फुटं भणन् कुर्वाणः परलोके हितो नेह लोके, इति सामर्थ्याद्गम्यते एषा द्वितीयभङ्गभावना। तृतीयचतुर्थ भङ्गभावना तु स्वयं भावनीया। सा चैवं यो वस्त्रपात्रभक्तपानादिकं समस्तमपि साधूनाम्पूरयति संयमयोगेषु च सीदतस्सारयति स इहलोके हितः परलोके च हितः। चतुर्थ उभयरहितः। अत्र पर आह। ननु यो भद्रस्वभावतया न सारयति वस्त्रपात्रभक्तादिकं तु समस्तमापूरयति स एव समीचीनो यः पुनः परुषपुरुषं कुर्वाणश्चण्डरुद्राचार्य इव सारयति स न समीचीनोऽसमाध्युत्पादकत्वात्। तत्र आह।

जीहाए विलिहंतो, न भद्दतो जत्थ सारणा नत्थि।
दंडेणवि तामेंतो, स भद्दतो सारणा जत्थ ॥ १ ॥

यत्र नाम संयमयोगेषु सीदतां सारणा नास्ति स आचार्यो जिव्हयाऽपि लिहन् मधुरवचोभिरानन्दयन् उपलक्षणमेतत् वस्त्रपात्रादिकञ्च पूरयन् न भद्रको न समीचीनः परलोकापायेषु पातनात्। यत्र पुनस्सीदतां साधूनां सम्यक् सारणा संयमयोगेषु प्रवर्तना समस्ति स आचार्यो दण्डेनापि ताडयन् भद्रकः एकान्तं समीचीनः सकलसंसारिकं पापेभ्यःपरित्राणकरणात्। अथ सारणमकुर्वाणो जिव्हया विलिहन् कस्मान्न समीचीन इत्यत्राह।

जह सरणमुवगयाणं, जीवियववरोवणं नरो कुणइ।
एवं सारणियाणं, आयरिओ असारओ गच्छे ॥ २ ॥

यथा कोऽपि नर एकान्तेनाहितकारी शरणमुपागतानां जीवितव्यपरोपणङ्करोति एवं साधूनामपि शरणमुपागतानां संयमयोगेषु प्रमादव्यावर्तनेन प्रवर्तनीयानामाचार्यो ऽसारको गच्छे भावनीयः। सोऽपि शरणोपगतशिरोनिकर्त्तक इव एकान्तेनाहितकारीति भावः। संसारापारपारावारे निरनुकंपं प्रक्षेपणात् स च तादृश इह परलोकार्थिना परित्याज्यः। यस्तु खरपुरुषभणनेनापि संयमयोगेषु सीदतः सारयति संसारनिस्तारकत्वादेकांतेनाश्रयणीयः॥ व्य. खं. १ उ. १। नि. चू. उ. २०॥

( ४ ) प्रव्राजनाचार्या उपस्थापनाचार्याश्च॥

चत्तारि आयरिया पन्नता। तंजहा। पव्वावणायरिए नामं एगे ।नो उवट्ठावणायरिए नामं एगे२नो पव्वावणायरिए वि उवट्ठावणायरिए एगे३नो पव्वावणायरिए नो उवट्ठावणायरिए ४अस्य संबंधमाह।

अदद्धा पियधम्माणं, तव्विवरीए करेंति आयरिए।
तेसिं विहाणमिं इमं, कमेण सुत्तं समुद्दिट्ठं तु ॥ १ ॥

अदृढा प्रियधर्म्माणामप्रियधर्म्माणां। अप्रियधर्माणां चानुशासनाय स्थविराद्याचार्या व्याख्यानार्थमाहुः।

पव्वावणउट्ठावण,उभए नोभयमिति चउयोउ।
अत्तट्ठपरट्ठा वा, पव्वावण केवला पढमो ॥ २ ॥
एवमेव य बिइओवि, केवलमेत्तं उवट्ठवे सोउ।
तइओ पुण उभयं, पिअत्तट्ठपरट्ठवा कुणई ॥ ३ ॥
जो पुण नोभयकरी,सो कम्हा भवति आयरिओ. उ।
भएति धम्मायरिओ, सोपुण गहिओ व समणो वा ॥ ४ ॥

प्रथमं प्रव्राजनाचार्यः। द्वितीयः द्वितीयभङ्गेन सूचितउपस्थापनाचार्यः। तृतीयभङ्गसूचित उभयप्रव्राजनोपस्थापनाचार्यः। अनुभयश्चतुर्थः। तत्र प्रथमे प्रथमस्यात्मार्थपरार्थस्य केवला प्रव्राजना। किमुक्तं भवति। आत्मनिमित्तं परनिमित्तञ्च यः केवलं प्रव्राजयति स प्रथमः प्रव्राजनाचार्यः। एवमेवानेनैव प्रकारेण द्वितीयः स केवलमात्र उपस्थापयति प्रव्राजितस्य सदुपस्थापनमात्रङ्करोति स द्वितीय इत्यर्थः। तृतीयः पुनरपि प्रव्राजनमुपस्थापनं वाऽऽत्मार्थं परार्थं वा करोति यः पुनर्नोभयकारी स चतुर्थः। अथ स कस्माद्भवत्याचार्यः भयविभुमात्स्यरिराह। भण्यते स धर्म्माचार्यो धर्म्मदेशकत्वात् स पुनर्गृही वा श्रमणो वा वेदितव्यः। एवं च यत्राचार्यास्तनया चाह।

धम्मायरिपव्वावण, तह्य उट्ठावणा गुरू तइओ।
कोइ ति हि संपत्तो, दोहिं वि एक्केक्कएणं वा ॥ ५ ॥

प्रथमो धर्म्माचार्योयस्तत्प्रथमतया धर्म्मं ग्राहयति। द्वितीयः प्रव्राजनाचार्यो यः प्रव्राजयति। तृतीयो गुरुरुभयस्थापनाचार्यो यो महाव्रतेषूपस्थापयति। तत्र कश्चित्त्रिभिरपि संपन्नो भवति। तथाहि कदाचित्स एव धर्म्मं ग्राहयति तृतीयो गुरुरेव प्रव्राजयति स एवोपस्थापयति कश्चिद्द्वाभ्यां। तद्यथा धर्म्मग्राहकत्वेन प्रव्राजनेन च अथवा धर्म्मग्राहकत्वेनोपस्थापनेन अथवा प्रव्राजनेनोपस्थापनेन केनचिदेकैकेन गुणेन तद्यथा। कश्चिद्धर्म्ममेव ग्राहयति। कश्चित्प्रव्राजयत्येव कश्चिदुपस्थापयत्येव। सूत्रं ( चत्तारि आयरिया पन्नत्ता। तंजहा। उद्देसणायरिए, एगे णामं एगे नो वायणायरिए १ वायणायरिए एगे णामं एगे णो उद्देसणायरिए २ एगे उद्देसणायरिए वि वायणायरिएवि ३ एगे नो उद्देसणायरिए नो वायणायरिए ४ अमीषां स्वरूपमाह॥

एगो उद्देसइ सुयं, एगो वाएइ तेण उद्दिट्ठं।
उद्दिसइ वाएइ य, धम्मायरिए चउत्थोय ॥ ६ ॥

एकःप्रथमंश्रुतमुद्दिशति न वाचयति यथा मङ्गलबुद्ध्या प्रथमत आचार्यमुद्दिशति तत्र उपाध्यायोऽप्याचार्यः। प्रथमभंगवर्ती उपाध्यायो द्वितीयभङ्गे तथा चाह। एको द्वितीय उपाध्यायस्तेनाचार्येणोद्दिष्टं वाचयति य एवोद्दिशति स एव वाचयति एष तृतीय, उभयविकलश्चतुर्थो धर्म्माचार्यः॥व्य.खं.२उ.१०॥ आचर्यते सेव्यते वा आचार्यः। स च पंचधा। प्रव्राजकाचार्यो दिगाचार्य उद्देशाचार्यस्समुद्देशानुज्ञाचार्य आम्नायार्थवाचकाचार्यः। तत्र सामायिकव्रतादेरारोपयिता प्रव्राजकाचार्यः। सचित्ताचित्तमिश्रानुज्ञायी दिगाचार्यः। प्रथमत एव श्रुतमुद्दिशति यः स उद्देशाचार्यः। उद्देष्टृगुर्वभावे तदेव श्रुतं समुद्दिशत्यनुजानीते वा यः स समुद्देशानुज्ञाचार्यः। आम्नायमुत्सर्गापवादलक्षणमर्थं वक्ति यः स प्रवचनार्थकथनेनानुग्राहकोऽक्रनिषद्यानुज्ञायी आम्नायार्थवाचकाचार्य इति। ध. अधि. ३॥

( ५ ) स्वरूपमाचार्यस्य सूत्रार्थ० इत्यादि॥

कीदृश आचार्यस्तत्स्वरूपमाह॥

सुत्तत्थतदुभएहिं, उवउत्ता णाणदंसणचरित्ते।
गणतत्तिविप्पमुक्का, एरिसया हुंति आयरिया ॥

ये सूक्ष्मार्थतदुन्नयोपेता इति गम्यते । तथा सततं ज्ञानदर्शन चारित्र समाहारो द्वन्द्वः । ज्ञानदर्शनचारित्रेषु उपयुक्ताः कृतोपयोगाः । तथा गणस्य गच्छस्य या तप्तिस्सारा * तया विप्रमुक्ताः । गणावच्छेदप्रभृतीनां तत्तप्तेः समर्पितत्वादुपस्म क्रमेतत् । शुभलक्षणोपेताश्च य एतादृशा भवन्त्याचार्य्याः । ते चार्थमेव केवलं भाषन्ते न तु सूत्रमपि वाचयन्ति । तथा चोक्तं । "सुत्तत्थविउलक्खण, जुत्तो गच्छस्स मेढिभूतो य ॥ गणतत्तिविप्पमुक्को, अत्थं भासेइ आयरियो" ॥ अथ किं कारणमाचार्य्यास्स्वयं सूत्रन्न वाचयन्तीत्यत आह ॥

एगग्गया य झाणे वड्ढी, तित्थयरअणुगिई गरुया ।
आणाथेज्जमिति गुरु, कयरिणमुक्खो न वाएइ ॥

सूत्रवाचनाप्रदानपरिहारेणार्थमेव केवलव्याख्यानाय माचार्य्यस्य एकाग्रता एकाग्रमनस्कता ध्यानेऽर्थचिन्तनात्मके भवति । यदि पुनस्सूत्रमपि वाचयेत्तदा बहुव्यग्रत्वादर्थचिन्तायामेकाग्रता न स्यात् एकाग्रतयाऽपि को गुण इत्यत आह । वृद्धिः । एकाग्रस्य हि सतोऽर्थं चिन्तयतस्सूत्रार्थस्य तत्र सूक्ष्मार्थोन्मीलनाद्वृद्धिरुपजायते । तथा तीर्थकरानुकृतिरेव कृता भवति । तथाहि । तीर्थकृतो भगवन्तः किलार्थमेव केवलं भाषन्ते न तु सूत्रं नापि गणतप्तिकुर्वन्ति । एवमाचार्य्या अपि तथा वर्तमानास्तीर्थकरानुकारिणो भवन्ति । सूत्रवाचनां तु प्रयच्छतामाचार्य्याणां लाघवमप्युपजायते । तद्वाचनायास्ततोऽधस्तनपदवृत्तिभिरप्युपाध्यायादिभिः क्रियमाणत्वादेवं च तस्य तथा वर्तमानस्य लोके राज्ञ इव महती गुरुता प्रादुर्भवति । तद्गुरुतायां च प्रवचनप्रभावना तथा आज्ञायां स्थैर्यमाज्ञास्थैर्यं कृतं भवति तीर्थकृतामेवमाज्ञा पालिता भवतीत्यर्थः । इयं हि तीर्थकृतामाज्ञा यथोक्तप्रकारेण ममानुकारिणा आचार्येण भवितव्यमित्यस्मात् हेतुकलापात् गुरुराचार्यः । कृतः ऋणमोक्षोयेन स कृतऋणमोक्षस्तेन हि सामान्यावस्थायामनेके साधवस्तत्र सूत्रमध्यापितास्तत ऋणमोक्षस्य कृतत्वात्सूत्रं न वाचयति ॥ उक्तमाचार्यस्वरूपम ॥ व्य० खं. १ उ. १ ॥

## ( ६ ) लक्षणमाचार्य्यस्य ॥

आवश्यकचूर्णौ ॥

किंचि आयरियं आयारकुसलं एवं संजमपवयणसंगह उवग्गहणुग्गहकप्पववहारपण्णत्तिदिट्ठिवायससमयपरसमयकुसलं ओयंसि तेयंसि वच्चंसि जसंसि दुद्धरिसं अग्गहुगचित्तं जितकोहं पयारं जितिंदियं जीवितासं समरणभयविप्पमुक्कं जियपरिस्सहं पुव्वरयपुव्वकीलियपुव्वसंथवविरहितं णिम्ममं निरहंकारं अणुणुतावि सक्कारलाभालाभसुहदुखमाणा अवमाणसहं अचवलं असवलम असंकिलिट्ठं विसुद्धचरित्तं दसविह आलोय एदोसविहिन्नुं अट्ठारसआयारगुणजाणगं अट्ठविहालोय णारिहगुणोवदेसगं आलोय णारिहं सुतरहस्सं अपरिस्साइं पायच्छित्तकुसलं मग्गामग्गविया णगं उग्गहईहअवायधारणापवरबुद्धिकुसलं अणुओगजाणगं णयविहिन्नुं आहरणहेउकारणविदरिसण उवमाणिरुत्तं अहट्ठअट्ठदरं रिसिहिं वहुविहउपायगारोपदेस णइंगितायारो गमतिलासितसूगत्तम णुवदिट्ठा वा

* नमिभिन्नं । प्रनिमाशनके श्लोक ८५ नमे ॥

हयसच्छंदविकप्पविहिविहिन्नुं तिविगाणितसहस्साणिमित्त-उप्पादपैराणपंमिश्रसभावजाणगं वसुहसमं सीतघरस माणं पुक्खरपत्तमिव, णिरुवलेवं वायुमिव, अप्पडिबद्धं पव्वयमिव, णिप्पकंपं सागरमिव, अक्खोभं कुम्मो, इव गुत्तिदियं जव्वकणगमिव, जायतेयं चन्दमिव, सोम्मं सूरमिव, दित्ततेयं सलिलमिव, सव्वजगणिव्वुइकरं गगणमिव, अपरिमितणाणं मतिकेतुं सूयकेतुं सुदिट्ठत्थं सुपरिट्ठितत्थं एगं आयतसुहगवेसगं कुट्ठांसजढं तिदंडविरतं तिगारवरहितं तिसल्लणिम्मलं तिगुत्तिगुत्तं तिगणविसुद्धं चउव्विहविकहा विवज्जियमतिं चउक्कसायविजढं चउव्विहविसुद्धबुद्धिं चउव्विहाहार गीरायंबमतिं पञ्चसमितं पञ्चमहव्वयधारगं पञ्चवियंउिदा उजाणगं पञ्चविहचरित्तजाणगं पञ्चविहचरित्त लक्खणसंपन्नं छव्विहविकडविवज्जगं छव्विहदव्वविधिविलथ रजाणगं छट्ठाणविसुद्धपच्चक्खाणदेसगं छज्जीवकायदयापरं सत्तनयविप्पमुक्कं सत्तविहसंसारजाणगं सत्तविहगुत्तो वदेसगं अट्ठविहमाणमहणं अट्ठविहवाहिरझाणजोगरहियं अट्ठविहअंतरझाणजुत्तं अट्ठविहकम्मगंठिभेदगं नववंभचेर वावत्तिघातकं दसविहसमणधम्मजाणगं एक्कारससातिय क्खरविहिवियाणगं एक्कारसउवासगपडिमोवेदसगं बारस भिक्खुपडिमाफासगं वारसंगतवभावणाभावितमतिं बारसं गसुत्तत्थपारगं एवमाइगुणोववेयस्स णिम्मथमहिरिसिस्स सगलं सकम्मं किनिकम्मं काऊणं भणति भगवं बहुपुरिसपरंपरागयं संसारणित्थरणोपायं आवस्सगाणुओग मिच्छामि तस्सायरिओ गुणमहप्पणा आवस्सयाणुओग परिकहेइ. ॥ आ. चू. ॥

ईदृशि गुरौ गुणमाह ॥

भत्तिवहुमाणसद्धा, थिरयाचरणंमि होइ सेहाणं ॥
एआरिसम्मि नियमा, गुरुंमि गुणरयणजलहिंमि ॥ १५ ॥

व्याख्या । भक्तिबहुमानाविति भक्तिर्बाह्यविनयरूपा बहुमानो भावप्रतिबन्धः एतौ भवतः ॥ शिक्षकाणामभिनवप्रव्रजितानामिति योगः । केत्याह ईदृश्येवं भूते गुरौ आचार्ये नियमान्नियमेन पुनरपि स एव विशिष्यते । गुणरत्नजलधौ गुणरत्नसमुद्र इति ततः श्रद्धास्थिरताचरणे भवतीति । तथाहि । गुरुभक्तिबहुमानभावत एव चारित्रे श्रद्धा स्थैर्यं च भवति नान्यथेति गाथार्थः ॥ गुणान्तरमाह ॥

अणुवत्तगो अ एसो, हवइ दढं जाणई जओ सत्ता ॥
चित्ते चित्त सहावे, अणणुवत्ते तह उवायं च ॥ १६ ॥

व्याख्या । अनुवर्तकश्च एषोऽनन्तरोदितो गुरुर्भवति दृढमत्यर्थं कुत इत्याह । जानाति यतः सत्वान् प्राणिनश्चित्रान् नानारूपांश्चित्रस्वभावाध्यानास्वभावान् अनुवर्त्यानुवर्तनीयान् तथोपायं चानुवर्तनोपायंच जानातीति गाथार्थः । पं. व०

## ( ७ ) गुणा आचार्य्यस्य यै रहितो गुरुर्न भवति ॥

गुरुगुणाश्च षट्त्रिंशदनुयोगशब्दे ॥

गुरुगुणरहितस्य गुरोर्विधिना परित्यागः ॥

गुरुगुणरहिओ उ गुरू, न गुरू विहिचायमो उ उद्दिट्ठो ॥
अन्नत्थसंकमेणं, ण उ एगागित्तणेणंति ॥ २४ ॥

व्याख्या । गुरुगुणाः संज्ञानं सदनुष्ठानविशेषास्ते रहितोहीनोगुरुगुणरहितः तुशब्दः पुनरर्थः । गुरुर्धर्म्माचार्य्योगुरुर्नैधर्म्माचार्य्यो भवति । सुवर्णगुणविकलं सुवर्णमिव । ततश्च (विहिचायमो उत्ति ) इह मकारो आगमिकस्ततश्च विधित्याग एवागमिकन्यायेन परिहार एव तस्य गुरोरिष्टो ऽभिमतो जिनानां । स च न यथा कथं चिदत एवाह । अन्यत्र गुरुकुलान्तरे संक्रमेण प्रवेशेन न पुनरेकाकित्वेन एकाकिविहारितयेति । गुरुकुलान्तरसंक्रमणे विधिश्च" संदिट्ठो संदिट्ठस्स चेव संपज्जइ-एपमाइ ॥ चउभंगो एत्थं पुण, पढमो भंगो हवइ सुद्धो,,॥१॥ इत्यादिरागमप्रसिद्ध इति सर्वथा गुरुरहितेन न भाव्य मिति भावो यदाह" एस गमणेस णं वा, कहं तेनाहिति जिण-वरमयं वा ॥ करिणं मिव पोयाला, जे मुक्का पव्वइय-मेत्ता" इतिशब्दः प्राग्वदिति गाथार्थः ॥ पंचा. वृ. ११ ॥ अथ गुरुगुणरहितस्तु गुरुर्न गुरुरिति विधित्याग एव तस्येष्ट इति यदुक्तं तत्र विशेषाभिधानायाह ॥

गुरुगुणरहिओ वि इह, दट्ठव्वो मूलगुणविउत्तो ॥
जो ण उ गुणमेत्तविहीणोत्ति चंडरुद्दो उदाहरणं ॥३५॥

व्याख्या । गुरुगुणरहितोऽपि अपि शब्दोऽत्र पुनः शब्दार्थ स्ततश्च गुरुगुणरहितो गुरुर्न भवति । गुरुगुणरहितः पुनरिह गुरुकुलवासप्रक्रमे स एव द्रष्टव्योज्ञातव्यो मूलगुणवियुक्तो महाव्रतरहितः सम्यग्ज्ञानक्रियाविरहितोवा यो न तु नपुनर्गुणमात्रविहीनो मूलगुणव्यतिरिक्तप्रतिरूपताविशिष्टोपशमादि गुणविकल इति हेतोर्गुरुगुणरहितोदृष्टव्य इति प्रक्रमः उप प्रदर्शनार्थोवा इति शब्दः उक्तं चेहार्थे " काल परिहाणिदोसा,एत्तो इक्काइगुणविहीणेण ॥ अन्नेण विप्पवज्जा,-दायव्वा सीलवंतेणं" अत्रार्थे किं ज्ञापकमित्याह । चंडरुद्रश्चंडरुद्राभिधानाचार्य उदाहरणं ज्ञापकं तत्प्रयोग श्चैवं ॥ गुणमात्र विहीनोऽपि गुरुरेव मूलगुणयुक्तत्वात् चंडरुद्राचार्यवत् तथा ह्यसौ प्रकृतिरोषणोऽपि बहूनां संविग्नगीतार्थशिष्याणाममो चनीयः विशिष्टबहुमानविषयश्चाभूत् । पंचा० वृ० ११ ॥

( ८ ) गुणा आचार्य्यस्य अपरिश्रावीत्यादि ॥

पुनरप्याचार्यगुणानाह ।

अपरिस्सावी सम्मं, समपासी चेव होइ कज्जेसु ।
सोरक्खइ चक्खुपिव सबालवुड्ढाउलं गच्छं ॥ २२ ॥

व्याख्या । न परिश्रवति परिकथयितान्यगुह्यजलमित्येवं शीलोऽपरिश्रावी आलोचनामाश्रित्य आचारांगोक्ततृतीयभंगतुल्य इत्यर्थः । भंगाश्चैते । एकोन्हदः परिगलत्श्रोताः पर्यागलत् श्रोताश्च शीता शीतोदा प्रवाहन्हदवत् । यतस्तत्र जलं निर्गच्छत्यागच्छति च ।१। अपरः सुपरिगलच्छ्रोता नो पर्यागलत् श्रोताः पद्मन्हदवत् पद्मन्हदे तु जलं निर्गच्छति नत्वागच्छति । २ । तथा परोनो परिगलत् श्रोताः पर्यागलत् श्रोताश्च लवणोदधिवत् लवणे आगच्छति जलं न तु निर्गच्छति । ३ । अपरस्तु नो परिगलत् श्रोता नो पर्यागलत् श्रोताश्च मनुष्य लोकाद्बहिः समुद्रवत् तत्र नागच्छति न च निर्गच्छति ।४। तत्राचार्यः श्रुतमंगीकृत्य प्रथमभंगपतितः श्रुतस्य दानग्रहण सद्भावात् । १ । सांपरायिककर्मापेक्षया तु द्वितीयभंगपतितः कषायोदयाभावेन ग्रहणाभावात् तपः कायोत्सर्गादिना क्षपणापतेश्च सांपरायिककर्म कषायकर्म्म । २ । आलोचनामंगीकृत्य तृतीयभंगपतितः आलोचनाया अपरिश्राविस्वात् । ३ । कुमार्गं प्रति चतुर्थभंगपतितः कुमार्गस्यहि प्रवेशनिर्गमाभावात् । ४ । यदि वा केवलश्रुतमाश्रित्य भंगा योज्यंते तत्र स्थविरकल्पिकाचार्याः प्रथमभंगपतिताः । १ । द्वितीयभंगपतितास्तु तीर्थकृतः । २ । तृतीयभंगपतिता यथा लंदिकाः तेषां तुक्वचिदर्थपरिसमाप्त्यभावाचार्यादेर्निर्णय सद्भावात् । ३ । प्रत्येकबुद्धास्तूभयाभावाच्चतुर्थभंगस्याः ४ सम्यकसर्वथेत्यर्थः ( समपासी चेव होइकज्जे सुत्ति) सममविपरीतं पश्यतीत्येवं शीलः समदर्शी"दसो नियच्छ पेंच्छे"त्यादिना दशेः पासादेशः । एवं विध एव योभवति क्व कार्येषु आगमव्याख्यानादिसकलव्यापारेष्वित्यर्थः । स आचार्यः रक्षति धत्ते कुमार्गे पतन्तमिति शेषः । कं गच्छं गणं किंभूतं सबालाश्च ते वृद्धाश्च सबालवृद्धास्तैराकुलः संकीर्णस्तं सबालवृद्धाकुलं किमिव चक्षुरिव ॥

यथाचार्यस्वरूपमाह ।

सीआवेइ विहारं, सुहसीलगुणेहिं जो अबुद्धीओ ॥
सन वरं लिंगधारी, संजमजोएण निस्सारो ॥ २३ ॥

व्याख्या ( जो अबुद्धी ओत्ति ) य आचार्योऽबुद्धिकस्तत्वज्ञानरहितः ( सीयावे इत्ति ) सीदयति शिथिलीकरोति कं विहारं नवकल्परूपं गीतार्थादिरूपं वा । कैः सुखशीलगुणैः सुखशीलस्य साताभिलाषिणो गुणाः पार्श्वस्थादिस्थानानि सुखशीलगुणास्तैः ( स नवरित्ति ) केवलं लिंगधारी वेषमात्र धारी संयम आश्रवनिरोधरूपस्तस्य योगः प्रतिलेखनादि व्यापारस्तेन रहितत्वात् निस्सारश्चर्वितताम्बूलवदिति गाथाछंदः ॥ २३ ॥

कुलगामनगररज्जं, पयहियं जो तेसु कुणइ हुममत्तं ॥
सोन वरि लिंगधारी संजमजोएण निस्सारो ॥ २४ ॥

व्याख्या । कुलं गृहं ग्रामं सकरं नगरमष्टादशकररहितं राज्यं सप्तांगमयं उपलक्षणत्वात् धूलीप्रकारपरिक्षिप्तं खेटं कुनगरं-कर्बटं सर्वत्रार्द्धतृतीयगव्यूतांतरग्रामान्तररहितं मडंवं जलपयोपेतं जलपत्तनं द्वीपमिव स्थलपयोपेतं स्थलपत्तनं लोहादिधातुजन्मभूमिरूपं आकरं जलस्थलपथाभ्यामुपेतं द्रोणमुखं वणिक् समूहवासं निगममित्यादि ज्ञेयं ( पयहियत्ति ) प्रहायत्ति प्रहाय्य प्रकर्षेण त्यक्त्वा पुनर्यः आचार्यस्तेषु कुलादिषु करोति विधत्ते हु पुनरर्थे ममत्वं ममेतदित्यभिप्रायमित्यर्थः । स सूरिः नवरि केवलं वेषधारी संयमयोगेन निस्सार इति गाथा छन्दः ॥ २४ ॥

अथ पुनरपि सुन्दराचार्यप्रशंसामाह ॥

विहिणा जो उ चोएइ, सुत्तं अत्थं च गाहइ ॥
सो धन्नो सो अपुणो अ, सबन्धू मुक्खदायगो ॥ २५॥

व्याख्या "विधिणा धम्ममइएहिं अइसुंदरेहिं कारणगुणोवणि एहिं पल्हायन्तो अमणं सीसं चोएइ आयरिओ" इत्याद्याग गमोक्तप्रकारेण ( जोउत्ति. ) यः पुनराचार्यः ( चोएत्ति ) चोदयति प्रेरयति शिष्यगणं कृत्यकरणादौ तथा सूत्रमाचारांगादिश्रुतविधिनेत्यस्यात्रापि सम्बन्धनात् व्यवहारदशमोद्देशकोक्तेन विधिना ग्राहयति पाठयति सूत्रपाठानन्तरं तस्य

निर्युक्तिभाष्यचूर्णिसंग्रहणीवृत्तिटिप्पनकादिपरंपरोपलब्धमर्थं च विधिनेत्यस्यात्राप्यभिसम्बन्धनात् "सुत्तत्थो खलु पढमो बीओ" इत्यादिना श्रीभगवतीसूत्रपञ्चविंशतितमशतकतृतीयोद्देशकश्रीनन्दिसूत्रावश्यकनिर्युक्त्याद्युक्तेन विधिनैव ग्राहयति बोधयति अथवा सूत्रमर्थं च विधिना गाहते निरंतरं स्वयमभ्यस्यतीत्यर्थः स आचार्योधन्यः पुण्यवान् अतएव ( सो अ पुणेयत्ति ) स पुण्य एव पवित्रात्मैव बंधुरिव बन्धुः। कुमत्यादिनिवारकत्वेन परमहितकर्तृत्वात् अतएव ( मुक्ख दायगोत्ति ) मोक्षप्राप्तिहेतुज्ञानादिरत्नत्रयजनकत्वेन मोक्ष दायक इति अनुष्टुप्छन्दः ॥२५॥

सएव भव्वसत्ताणं, चक्खुभूए वियाहिए ॥
दंसेइ जो जिणदिट्ठं, अणुट्ठाणं जहट्ठिअं ॥ २६ ॥

व्याख्या । स एवाचार्यो भव्यसत्वानां मोक्षगमनयोग्यजंतूनां चक्षुर्भूतोनयनतुल्यो व्याहृतः कथितो जिनादिभिः । स कोयो जिनोद्दिष्टमागमोक्तमनुष्ठानं मोक्षपथप्रापकरत्नत्रयाराधनमित्यर्थः। यथा स्थितमवितथं दर्शयति कुमतिनिराकरणेन प्रकटीकरोतीति अनुष्टुप्छन्दः ॥ २६ ॥
अथ पूर्वार्द्धेन सूरेर्गुणविशेषेण तीर्थकरसाम्यमुत्तरार्द्धेनाज्ञोल्लंघिनस्तस्य कापुरुषत्वं च दर्शयन्नाह ॥

तित्थयरसमोसूरी, संमं जो जिणमयं पयासेई ॥
आणं अइक्कमन्तो, सोकापुरिसो न सप्पुरिसो ॥२७॥

व्याख्या । स सूरिस्तीर्थकरसमः सर्वाचार्यगुणयुक्ततया सुधर्मादिवत्तीर्थकरकल्पो विज्ञेयः।न च वाच्यं चतुस्त्रिंशदतिशयादिगुणविराजमानस्य तीर्थकरस्योपमा सूरेस्तादृकिभ्रस्यानुचिता। यथा तीर्थकरोऽर्थं भाषते एवमाचार्योऽप्यर्थमेव भाषते तथा । यथा तीर्थकर उत्पन्नकेवलज्ञानो भिक्षार्थं न हिंरुते एवमाचार्योऽपि भिक्षार्थं न हिंरुते इत्याद्यनेकप्रकारैस्तीर्थकरानुकारित्वस्य सर्वातिशयित्वस्य परमोपकारित्वादेश्च ख्यापनार्थं तस्या भ्याय्यतरत्वात्। किंच श्रीमहानिशीथे पंचमाध्ययनेऽपि भावाचार्यस्य तीर्थकरसाम्यमुक्तं । यथा "सेभयवं किं तित्थयरसंतिअं आणं नाइक्कमिज्जा ? उदाहु आयरिय संतिअं गोअमा ! चउव्विहा आयरिया भवन्ति। तं० नामायरिया, ठवणायरिया, दव्वायरिया, भावायरिया, तत्थ णं जे ते भावायरिया ते तित्थयरसमा चेव दट्ठव्वा तेसिं सन्तिअं आणं नाइक्कमेज्जत्ति,, स कः यः सम्यग् यथास्थितं जिनमतं जगत्प्रभुदर्शनं नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूतरूपनयसमूहात्मकं प्रकाशयति भव्यानां दर्शयतीत्यर्थः । तथा आज्ञां तीर्थकरोपदेशवचनरूपां अतिक्रामन् वितथप्ररूपणादिनोल्लंघयन् स सूरिःकापुरुषः पुरुषाधमः नसत्पुरुषो न प्रधानपुरुष इति । इहचाज्ञोल्लंघिनः कापुरुषत्वमात्रमैहलौकिकं फलं पारलौकिकं तु तदनेकदुस्सहदुःखसन्ततिसम्वलितमनन्तसंसारित्वं श्रीमहानिशीथपञ्चमाध्ययनोक्तसावद्याचार्यस्येव ज्ञेयं ॥ तस्माद्गच्छाधिपतिना सर्वदा सर्वार्थेषु अप्रमत्तेन भाव्यमिति पूर्वाचार्यसंस्तुतः सावद्याचार्यसम्बन्ध इत्येवं विलोक्याऽचार्योपाध्यायप्रवर्तकादिना मोक्षार्थिना भगवदाज्ञया आगमार्थोनिरूपणीयः न स्वमत्या तथात्वेऽनन्तसंसारावाप्तेरिति गाथाछन्द ॥ २७ ॥ ग. अधि. १ ॥

( ए ) भ्रष्टाचारत्वं दुर्गुणस्सूरेः ॥

अथ के सूरयः आज्ञामतिक्रामन्तीत्याह ॥

भट्ठायारो सूरी भट्ठायाराणुविक्खओ सूरी ॥
उम्मग्गट्ठिओ सूरी तिन्निवि मग्गं पणासंति ॥ २८ ॥

व्याख्या। भ्रष्टः सर्वथा विनष्ट आचारो ज्ञानाचारादिर्यस्य स भ्रष्टाचारः सूरिरधर्म्माचार्यः १ भ्रष्टाचाराणां विनष्टाचाराणां साधूनामुपेक्षकः प्रमादप्रवृत्तसाधूनामनिवारयितेत्यर्थः । सूरिंमंदधर्म्माचार्यः । २ । उन्मार्गस्थित उत्सूत्रादिप्ररूपणपरः सूरिरधमाधमाचार्यः । ३ । त्रयोऽप्येते मार्गं ज्ञानादिरूपं मोक्षपथं प्रणाशयन्ति जिनाज्ञामतिक्रामन्तीत्यर्थः । गाथा छन्दः ॥ २८ ॥
अथ तेषां त्रयाणां सेवकस्याशुभफलमाह ।

उम्मग्गनासए जोउ, सेवए सूरी नियेमणं ।
सो गोयम! अप्पाणं, अप्पं पाडेइ संसारे ॥ २९॥

व्याख्या । उन्मार्गस्थितान् सन्मार्गनाशकान् १ (उ) शब्दात् भ्रष्टाचारान् २ भ्रष्टाचारोपेक्षकाँश्च ३सूरीन् यः सेवते पर्युपास्ते नियमेन निश्चयेन स नरो हे गौतम !आत्मानं आत्माना पातयति संसारे चतुर्गत्यात्मके इति गाथा छन्दः ॥ २९ ॥
अथ भंग्यन्तरेण पनमेवार्थं दृष्टान्तेन समर्थयन्नाह ।

उम्मग्गट्ठिओ एक्को, विनासए भव्वसत्तसंघाए ॥
तं मग्गामणुसरंतं, जह कुत्तारो नरो होइ ॥ ३० ॥

व्या० उन्मार्गस्थितः उत्सूत्रप्ररूपणानिरतः एकोऽपि अधिकारात् सूरिर्नाशयति संसारसमुद्रे अनंतानंतमरणप्रदानेन विनाशयतीत्यर्थः । कान् भव्यसत्वसंघातान् किं कुर्वतस्तान् तन्मार्गस्थितप्रदर्शितपथं अनुसरतः आश्रयतः प्राकृतत्वात् वचनव्यत्ययः ।अत्र दृष्टांतमाह। यथा कुतारः कुत्सितस्तारकोनरो भवति स बहून् प्रष्ठलग्नान् जंतुसमूहान् नद्यादौ विनाशयति गाथाछन्दः ॥ ३० ॥
अथोन्मार्गगामिनामेवाशुभफलं दर्शयति ।

उम्मग्गमग्गा संपट्ठि, याए साहूणंगोअमा ! नूणं ।
संसारो अ अणंतो, होई सम्मग्गनासीणं ॥ ३१ ॥

व्याख्या । उन्मार्गगाः गोशालकबोटिकनिन्हवादयः तेषां मार्गः परम्परा तस्मिन् अथवा उन्मार्गरूपो योमार्ग स्तस्मिन् समित्येकीभावेन इति प्रकर्षेण स्थितानां साधूनां साधुलिंगधारकाणां हे गौतम ! नूनं निश्चितः संसारश्चतुर्गत्यात्मक अनंतो ऽपर्यंतो भवति चशब्दस्तत्कृतानेकदुःखकसूचकः । किंभूतानां तेषां सन्मार्गनाशिनां शुरूपथोच्छेदकानां महानिशीथोक्तमुनिचन्द्रसाधुवत् इति गाथाछन्दः ३१ ग. अधि. १ ॥
( प्रव्रज्यार्हाः पञ्चदशगुरवस्ते च प्रव्रज्याशब्दे )
सद्गुरुस्वरूपं दर्शयति ॥

देशं खित्तं उ जाणित्ता, वत्थं पत्तं उवस्सयं ।
संगहे साहुवग्गं च सुत्तत्थं च निहालए ॥ १४॥

व्याख्या । आचार्यो देशं मालवकादिकं क्षेत्रं रूक्षारूक्षभाविताभावितादिरूपं ( उ ) शब्दात् ग्लानादियोग्यं द्रव्यं दुर्भिक्षादिकालं दातृपरिणामादिरूपं भावं च ज्ञात्वा वस्त्रं चीवरं पात्रं पतद्ग्रहादि उपाश्रयं मुनियोग्यालयं संगृ

ह्णीत कोऽर्थः । आचार्यः क्षेत्रादिकारणं ज्ञात्वा वस्त्रादिकं मेल-यित्वा प्रायोगृहस्थानामदर्शयन् स्वपार्श्व एव संरक्षेत् न तु यथाकथंचिदित्यर्थः। तथा ( साहु वग्गन्ति ) साधूनां वर्गोवृन्दं साधुवर्गस्तं च साध्वीवर्गं च संगृह्णीत तु हीनाचारवर्गं तथा सुत्तत्थं च ( निहालए ) इति सूत्रमाचारांगादि अर्थो निर्युक्ति भाष्यचूर्णिसंग्रहिणीवृत्तिटिप्पनादिः । सूत्रं चार्थश्चेति समाहारद्वन्द्वे सूत्रार्थं निनिभालयति चिन्तयतीत्यर्थः । चशब्दा-त्साधूनामपि सूत्रार्थं ददातीति एवं विधोयः स सदाचार्यः स्यादिति शेषः । इत्यनुष्टुप्छन्दः ॥ १४ ॥ ग. अधि. १ टी ॥

भ्रष्टाचारस्य सूरेर्निन्दा यथा ॥

भट्ठायारोसूरी, भट्ठायाराणुविक्खओ सूरी ॥
उम्मगट्ठिओ सूरी, तिन्नि वि मग्गं पणासन्ति॥१॥

उम्मग्गट्ठिए सूरिंमिनिच्छयं भव्वसत्तसंघाए। जम्हा तंमग्गमणुसरन्ति तम्हाणतंजुत्तं। एकंपि जोदुहत्तं सत्तं पडि-बोहिं ठवे मग्गे । ससुरासुरंमि विजिगे तेण ह घोसियं आणायोयं। भूए अत्थि भविस्सति केइ जगवन्दणीय-कमजुयले। जोसिं परहियकरणे कबद्धलक्खाणवो लिही कालं । भूए अणागए काले ण केइ इहोहिंति गोयमा! सूरी । णामग्गहणेण वि जेसिं होज्जनियमेण पच्छित्तं। ए-यंगच्छिचवत्थं दुप्पसहाणं तरंतु जोरंवके। तं गोयम! जाणगाणिं निच्छयओ अणंतसंसारि । जेसयल जीवजगमंगलेक्ककल्ला-ण परमकल्लाणसिद्धिपए। वा वोच्छिन्ने पच्छितं होइ तं गणिणो। तम्हा गणिणं समसत्तुमित्तपक्खेण परहियरएणं कल्लाणकंखुणा अप्पणो विय अणाण लंघेया। एवं मेरा ण लंघेयव्वत्ति एवं गच्छववच्छ लंघितुनगारवोहिं पडिवच्छे संखाइए गणिणो अज्जवि बोहिं न पावंति। ण लब्भोहिंति य अन्ने अणंतहुत्तोवि परिन्नयं तित्थं । चउगइभवसंसा-रंचेढिज्जचिरसुदुक्खत्ते ॥ महा. ५ अ. ।

( १० ) परहितकारित्वं सुगुणः ॥

अथ ये नाममात्रग्रहणेनाऽपि परहितकारिणः सूरयस्तानाह ॥

तीअणागयकाले, केई होहिंति गोयमा ! सूरी ।
जेसिं नामग्गहणे, वि होइ नियमेण पच्छित्तं ॥ ३७ ॥

व्या० । अतीतकाले ते केचिदनिर्दिष्टनामानोऽभूवन्निति शेषः । अनागतकाले च ( होहिंति ) भविष्यन्ति आद्यंतग्रहणे मध्यस्यापि ग्रहणमिति न्यायेन वर्त्तमानकाले च संति । हे गौतम ! सूरयः आचार्यनामधारकाः येषां परिचयकरणादिकं दूरे आस्तां नामग्रहणेऽपि भवति नियमेन निश्चयेन प्रायश्चित्तं । तथाचोक्तं । श्रीमहानिशीथपंचमाध्ययने "इत्थं चायरियाणं, पणपन्नं होंति कोडिलक्खाओ ॥ कोडिसहस्से कोडिं, सएय तह एत्तिएच्चेव ॥ १ ॥ एतेसिं मज्झा एगे, निव्वुओह गुणगणाइण्णो ॥ सव्वुत्तमभंगेणं, तित्थयरस्सा णुसारिगुरू" इति गाथाछंदः ॥ ३७ ॥

अथात्र हेतुमाह ॥

जओ सयरी भवंति, अणविक्खयाइ जह भिच्चवाहणा लोए ॥
पडिपुच्छेहिं चोयणं, तम्हाउ गुरू सया भयइ ॥ ३८ ॥

व्याख्या ( जओत्ति ) भिन्नं पदं यतो भणितं ( सयरित्ति ) स्वेच्छाचारीणि भवंति ( अणविक्खया इति ) अनपेक्षया शिक्षारहितत्वेन यथा लोके ( भिच्चवाहणत्ति ) भृत्याश्च सेवकाश्च वाहनानि च हस्त्यश्ववृषभमहिषादीनीति द्वंद्वे भृत्यवाहनानि । तथा विनेयाः गुरूणां प्रतिपृच्छाभिः कार्यं २ प्रति पृच्छा ताभिः ( चोयणत्ति ) प्राकृतत्वाद्वि-भक्तिलोपः । चोदनाभिश्च विनाति शेषः । स्वेच्छाचारिणो भवंति ( तम्हाउत्ति ) तस्मादेव कारणात्प्रतिपृच्छाभिश्चो-दनादिभिश्चाचार्यो विनयान् सदा सर्वकालं ( भयइत्ति ) भजते सत्यापयति शिक्षयतीत्यर्थः । गाथाछंदः ॥ ३८ ॥ ग० अधि. १ ।

( ११ ) सूरेः स दुर्गुणो येन कुगुरुर्भवति ।

कुगुरुश्च कदा भविष्यतीति महानिशीथे अ.८ । से भयवं केवइअेणं कालेणं पहे कुगुरुभावी होंति गोयमा! इओ यमाइउयअद्धतेरसण्हं वाससयाणं साइरेगाणं समइक्कंताणं परउ भविंसु से भयवं केणं अट्ठेणं गोयमा ? तक्कालं इड्ढि रससायगारवसंगए ममीकारे अहंकारग्गीए अंतो संपज्जलंतबोंदी अहमहंति कयमाणसे असुणि य समयसब्भावे गणी भवीसु एएणं अट्ठेणं से भगवं किं सव्वेवीएवं विहे तक्कालगणि भवीसुं गोयमा! एगंतेणं नो सव्वे केयपुण दुरन्तपंतलक्खणे अदट्ठव्वेणं एगाए जणणीए जमगसमगं पसूए निम्मेरे पावसीले दुज्जायजम्मे सुरोद्दपयंडाभिगाहिय दूरमहामिच्छादिट्ठी भविसुं सेयं भयवं कहं ते समुवलक्खेज्जा गोयमा ! उस्सुत्तउस्सगायवत्तणुद्दिस्सणमइपन्नवएण वा ॥

( १२ ) प्रमादिनमाचार्य्यं शिष्यो बोधयति ॥

अथ कथंचित् प्रमादिनं गुरुं शिष्यो विबोधयतीत्याह ।

तुम्हारिसा वि मुणिवर, ! पमायवसगा हवंति जइ पुरि-सा। तेणन्नो को अम्हं, आलंवणं हुज्ज संसारे॥ १७ ॥

व्याख्या ॥ युष्मादृशा अपि हे मुनिवर ! श्रमणश्रेष्ठ प्रमादवशगाः प्रमादपरवशा भवंति यदि चेत् पुरुषाः पुमांसस्तेन कारणेनान्यो युष्मद्व्यतिरिक्तः कोऽस्माकं मंदभाग्यानामालंबनमत्र विभक्तिलोपः प्राकृतत्वात् । सागरं नौरिव भविष्यति संसारे चतुर्गत्यात्मके पततामिति शेषः । अनेन विधिना शिष्यः प्रमादिनं गुरुं विबोधयतीत्यधिकारालभ्यते । तथाच विबोधनविषये आचार्य्यगुणानपि शिष्य आचार्यस्य दर्शयति यथा॥

पुढवीविव सव्वसहं, मेरुव्व अकंपिरं ठियं धम्मे ।
चंदुव्व सोमलेसं, तं आयरियं पसंसंति॥ १ ॥
अप्परिसावि आलोयणा, रिह हेउकारणविहिन्नुं ।
गंभीरं दुद्धरिसं तं आयरियं० ॥ २॥

कालन्नुं देसन्नुं, जावन्नुं अतुरियं असंजंतं।
अणुवत्तयं अमायं, तं आय० ॥ ३ ॥
लोइयसामाइएसु, सव्वेसु जस्स वक्खेवो ।
ससमयपरसमयंमि अ, तं० ॥ ४ ॥
बारसहिंवि अंगेहिं, सामाइयमाइपुव्वनिव्वध्दे।
लध्दडं गहियट्ठं, तं० ॥५॥
आयरियसहस्साइं, लहइ अ जीवो जवेहिं बहुएहिं ।
कम्मेसु य सिप्पेसु य, धम्मायरणेसु नो कहवि ॥ ६ ॥
जे पुण जिणोवइट्ठे, निग्गंथे पवयणंमि आयरिया ।
संसारमुक्खमग्गस्स, देसगा ते हु आयरिया ॥ ७ ॥
देवा वि देवलोए, निग्गंथं पवयणं अणुसरंता ।
अच्छरगणमज्झगया, आयरिए वंदयाइंति ॥ ८ ॥
जह दीवो दीवसयं, पइप्पए दिप्पई य ।
सो दीवसमा आयरिया, अप्पं च परं च दीवंति ॥ ९ ॥
देवा वि देवलोए, निच्चं दिव्वोहिणा वियाणंता।
आयरियमणुसरंता, आसणसयणाणि मुंचंति ॥ १० ॥
इत्यादि चंदकवेध्यकप्रकीर्णकोक्तं वाच्यमिति गाथाछन्दः ॥ ग. १ अधि० ॥
प्रमादगतस्याचार्य्यस्य श्रमणोपासकेन कथं निवारणा कर्त्तव्येति ( समणोपासग ) शब्दे ॥
अथ चोदनाया अकर्तुः फलं दर्शयन्नाह ॥
जो उ प्पमायदोसेणं, आलस्सेणं तहेव य।
सीसवग्गं न चोएइ, तेण आणा विराहिया ॥ ३९ ॥
व्याख्या। योगणी चशब्दादुपाध्यायादिश्च प्रमाददोषेण प्रमादरूपो यो दोषस्तेन तथैव च चकाराडुक्तशेषैर्मोहादिभिश्च उक्तं च "आलस्स १ मोह २ वन्ना, ३ थंभा ४ कोहा ५ पमाय ६ किविणत्ता ७ ॥ भय ८ सोगा ९ अन्नाणा, १० वक्खेव ११ कुऊहला १२ रमणा १३ (१) " एतैर्हेतुभिः शिष्यवर्गमंतेवासिवृंदं न प्रेरयति मोक्षानुष्ठाने इति शेषः । तेनाचार्येण उपाध्यायादिना वा आज्ञेति जिनाज्ञा विराधिता खंडितेत्यर्थः ॥ ग. अधि. १
"आचार्यस्यैव तत् जाड्यं, यच्छिष्यो नावबुध्यते । गावो गोपालकेनेव, कुतीर्थेनावतारिताः ( १ ) " आ. म. १. खं. १ अ. ॥

## ( १३ ) वैरी शिष्यस्य गुरुः ॥

अथ यःसूरिशिष्यस्य वैरी स्यात्तं वृत्तद्वयेनाह ।
संगहोवग्गहं विहिणा, न करेइ य जो गणी ।
समणं समणिं तु दिक्खित्ता, सामायारिं न गाहए ॥१५॥
बालाणं जो उ सीसाणं, जीहाए उवलिंपए ।
तं सम्ममग्गं गाहेइ, सो सूरि जाण वेरिउ॥ १६॥
( संगहोवगाहंति ) संग्रहश्च शिष्यादीनां संग्रहणं उपग्रहश्च तेषामेव भक्तश्रुतादिदानेनोपष्टंभनं तया तन्न करोति वा न कारयति विधिना आगमोक्तप्रकारेण योगणी आचार्य्यस्तथा यः श्रमणं श्रमणीं दिक्षित्वा तु शब्दात्प्रतिच्छकगणमपि समाचारीं आगमोक्ताहोरात्रक्रियाकलापरूपां सत्स्वगच्छोक्तां वा न ग्राहयेच्छिक्षयेत्पाठयेत् न शिक्षयेदित्यर्थः ।१५। तथा यःपुनर्बालानां शिष्याणां शिरः प्रभृत्यवयवमिति शेषः। जिव्हया रसनया उपलिंपति गौरिव वत्सस्य चुंबेत् अत्यंतबाह्याहितं करोतीत्यर्थः । ननु बालादीनां प्रव्राजने निषेधोऽस्ति तत्कथं बालानां शिष्यत्वमुच्यते। योऽयं प्रव्रजने बालो निषिध्यते स ऊनाष्टवर्षः। अत्र त्वष्टवर्षोपरिवर्त्ती बालो गृह्यते। अपवादपदेन तु ऊनाष्टवर्षोऽपि॥ तथा सम्यक्मार्गं मोक्षपथं न ग्राहयति दर्शयति न शिक्षयतीत्यर्थः । स आचार्यो वैरीति जानीहि हे गोतम ! त्वामिति विषमाक्षरेतिगाथाऽनुष्टुप्छंदसी ॥ १६ ॥
अथ पुर्वोक्तार्थलेशं विशेषयन्नाह ॥
जीहाए विलिहंतो, न भद्दओ सारणा जहिं नत्थि।
दंडेणवि तार्डतो, स भद्दओ सारणा जत्थ ॥ १७ ॥
व्याख्या. जिव्हया विलिहन् शिष्यं चुंबन्नाचार्यो न भद्रको न श्रेष्ठो यत्राचार्ये सारणा हिते प्रवर्तनलक्षणा स्मारणा वा कृत्यस्मारणलक्षणा उपलक्षणत्वाद्वारणा अहितान्निवारणलक्षणा तोदना संयमयोगेषु स्खलितस्याऽयुक्तमेतद्भवादृशां विधातुमित्यादिवचनेन प्रेरणा प्रतिनोदना तथैव पुनः २ प्रेरणा नास्ति न विद्यते तथा दंडेनाऽपि यष्ट्याऽपि किं पुनर्दवरकादिना ताडयन् शरीरपीडां कुर्वन् स आचार्यो भद्रकः श्रेष्ठः । यत्र गणिनि सारणा उपलक्षणत्वाद्वारणादि र्वाऽस्तीति गाथाछंदः ॥ ग० १ अधि. ।

## ( १४ ) विनय आचार्य्यस्य॥

आचार्य्ये सापेक्षैः साधुभिर्भवितव्यम् । तेषु च तेनेति दृष्टान्तैः प्रदर्शयति ॥
वध्दीधन्नसुभरियं, कोट्ठागारं डज्झते कुटुंबिस्स ।
किं अम्हमुहा देई, केई तहियं न अल्लीणा ॥
एकः कौटुंबिकः स कर्षकाणां कारणे उत्पन्ने वृद्ध्या कालांतररूपया धान्यं ददाति । तया च वृद्ध्या कौटुंबिकस्य कोष्ठागाराणि धान्यस्य सुभृतानि जातानि । अन्यदा च तस्यैकं कोष्ठागारं वृध्दिधान्यसुभृतं वन्हिना प्रदीप्तेन दह्यते । न च केचित्कर्षका विध्यापननिमित्तं तत्र प्रदह्यमाने कोष्ठागारमसमागताः । किमेष कौटुंबिकोऽस्माकं मुधा ददाति येन वयं विध्यापनार्थमभ्युद्यता भवामः ॥
एयस्स पभावेणं, जीवा अम्हेति एव नाऊणं ।
अल्ले तु समल्लीणा, विज्झाविए तेसिं सो तुट्ठो॥
अन्ये कर्षका एतस्य कौटुंबिकस्य प्रभावेण च ये जीवंति स्म जीवा अनुप्रत्यया जीविता इत्यर्थः। एवं ज्ञात्वा समालीनास्त उ समागता विध्यापनाय च प्रवृत्तास्ततो विध्यापिते कोष्ठागारे स कौटुंबिकस्तेषां तुष्टस्ततः किमकार्षीदित्यत आह ॥
जे ओ सहायगत्तं, करेसु तेसिं अवड्ढियं दिन्नं ॥
दडंति न दिण्णियरे, अकासगा दुक्खजीवीया ॥
ये तु विध्यापने सहायत्वमकार्षुस्तेषामवृद्धिकं कालांतररहितं धान्यं दत्तं। इतरेषां तु सहायत्वमकृतवतां दत्तमित्युत्तरं विधाय न दत्तं । ततस्ते अकर्षकास्संतो दुःखवज्जीविनो जाता एष दृष्टांतः ॥
सांप्रतमुपनयमभिधित्सुराह ।
आयरियकुडुंबी व, सामाणियथाणिया भवे साहू ॥
बावाहअग्गिणितुल्ला, सुत्तत्था जाण धन्नं तु ॥

आचार्यः कुटुंबीव कुटुंबितुल्य इत्यर्थः । सामान्यकर्षकस्थानीयाः साधवः । आचार्यस्य निष्काटने वातादिव्याबाधाऽभितुल्या । सूत्रार्थान् जानीहि धान्यं धान्यतुल्यान् ॥

एमेव विणीयाणं, करेंति सुत्तत्थसंगहं थेरा ॥
होवंति उदासीणे, किलेसभागी य संसारे ॥

(एमेव) कौटुंबिकदृष्टांतप्रकारेण ये विनीतास्तेषां स्थविरा आचार्याः सूत्रार्थसंग्रहं कुर्वंति सूत्रार्थान्प्रयच्छंति । यस्तूदासीनस्तत्र हापयतीति न प्रयच्छतीति भावः । सचोदासीनो वर्त्तमानः केवलं सूत्रार्थयोग्यो भवेत् क्लेशभागी च संसारे जायते ॥ संप्रति दंडिकदृष्टांतं विभावयिषुरिदमाह ॥

उप्पण्णकारणे पुण, जइ सयमेव सहस्सा गुरू हिंडे ।
अप्पाणं गच्छमुभयं, परिचयती तत्थिमं नायं ॥

उत्पन्ने कारणे वक्ष्यमाणलक्षणे यदि सहसा स्वयमेव गुरुरात्मानं गच्छमुभयं च परित्यजति । तत्र चेदं वक्ष्यमाणज्ञातमुदाहरणं । तदेवाह ॥

सोउं परबलमायं, सहसा एक्काणिओ उ जो राया ॥
निग्गच्छति सो वयती, अप्पाणं रज्जमुभयं च ॥

यो निरपेक्षो राज्ये परबलमागतं श्रुत्वा बलवाहनान्यमेलयित्वा सहसा एकाकी परबलस्य संमुखो निर्गच्छति स आत्मानं राज्यं चेत्युभयं त्यजति बलवाहनव्यतिरेकेण युद्धारंभे मरणभावात् एवमाचार्योऽपि निरपेक्षः समुत्पन्नेऽपि कारणे सहसा निष्क्रामन्नात्मानं गच्छमुभयं च परित्यजति निरपेक्षदंडिकदृष्टान्तभावना ॥

संप्रति सापेक्षदंडिकदृष्टांतभावनामाह ॥

सावेक्खो पुण राया, कुमारमादीहिं परबलं खविया ।
अजिए सयंपि जुज्झइ, उवमा एसेव गच्छेवि ॥

सापेक्षः पुना राजा प्रथमं कुमारादीन् युद्धाय प्रेषयति । ततः कुमारादिभिः परबलं क्षपयित्वा यदा कुमारैर्न परबलं तदा तस्मिन् जिते स्वयमपि राज्ञा युध्यते । एषैवोपमा गच्छेऽपि द्रष्टव्या । आचार्योऽपि पूर्वयतनां करोति तथापि असंस्तरणे स्वयमपि हिंडते । एवं चात्मानं गच्छमुभयं च निस्तारयतीति भावः । व्य. ६ उ. ॥

आचार्यसमीपवर्त्तिना च शिष्येण किं विधेयमित्याह ।

तद्दिट्ठीए तम्मोत्तीए तप्पुरक्कारे तस्सण्णी तन्निवेसणे जयं विहारी चित्तणिवाई पंथणिज्झाई बलिवाहिरे पासियपाणे गच्छेज्जा से अभिक्कममाणे पडिक्कममाणे संकुसेमाणे पसारेमाणे विणियट्टमाणे संपरिज्जमाणे ॥ आचा० ॥ ५ अ. ४ उ. ॥

( तद्दिट्ठीए ) तस्याचार्यस्य दृष्टिस्तद्दृष्टिस्तया सततं वर्तितव्यं हेयोपादेयेषु । यदि वा तस्मिन् संयमे दृष्टिस्तद्दृष्टिस्स एव आगमो दृष्टिस्तद्दृष्टिस्तया सर्वकार्येषु व्यवहर्तव्यं तथा ( तम्मोत्तीए ) तेनोक्ता सर्वसंगभ्यो विमुक्तिर्मुक्तिस्तन्मुक्तिस्तया सदा यतितव्यं तथा ( तप्पुरक्कारे ) पुरस्करणं पुरस्कारः सर्वकार्येष्वग्रतः स्थापनं तस्याचार्यस्य पुरस्कारस्तद्पुरस्कारस्तस्मिंस्तद्विषये यतितव्यं तथा (तस्सण्णी) तस्य संज्ञा ततसंज्ञा तत ज्ञानं तद्वांस्तत्संज्ञी सर्वकार्येषु स्यात् स्वमतिविरचनया-

कार्यं विदध्यात्तथा ( तन्निवेसणे ) तस्य गुरोर्निवेशनं स्थानं यस्यासौ तन्निवेशनः । सदा गुरुकुलवासी स्यादिति भावस्तत्र च गुरुकुले निवसन् किंभूतः स्यादित्याह ( जयंविहारी ) यत्नतो यतनया विहरणशीलो विहारी स्यात् । यतमानः प्राणुपमर्द्दनमकुर्वन् प्रत्युपेक्षणादिकाः क्रियाः कुर्यादिति । किञ्च ( चित्तनिवाती ) चित्तमाचार्याभिप्रायस्तेन निपतितुं क्रियायां प्रवर्त्तितुं शीलमस्येति चित्तनिपाती सदा स्यादिति । तथा ( पंथणिज्झाती ) गुरोः क्वचित्गतस्य पंथानं निर्ध्यातुं प्रलोकितुं शीलमस्येति पथनिर्ध्यायी । उपलक्षणं चैतत् । शिशयिषोः संस्तारकप्रलोकी बुभुक्षोराहारान्वेषीत्यादिना गुरोराराधकः सदा स्यात्किञ्च (पलिवाहिर )परि समन्ताद्गुरोरवग्रहात् पुरतः पृष्ठतो वा चस्थानात्सदा कार्यमृते बाह्यः स्यादेतस्माच्च सूत्रात् त्रय ईर्योद्देशका निर्गता इति । किञ्च (पासियइत्यादि ) कचित्कार्यादौ गुर्वादिना प्रेषितः सन् दृष्ट्वा प्राणिनां युगमात्रदृष्टिस्तदुपघातं परिहरन् गच्छेत्किञ्च ( सइत्यादि) स भिक्षुः सदा गुर्वादेशविधायी एतद्व्यापारवान् भवति । तद्यथा । अभिक्रामन् गच्छन् प्रतिक्रामन्निवर्तमानः संकुचन् हस्तपादादिसंकोचनतः प्रसारयन् हस्तादीनवयवान् विनिवर्तमानः समस्ताशुभव्यापारान् सम्यक् परिसमंताद्धस्तपापादादीनवयवांस्तन्निक्षेपस्थापनानि वा रजोहरणादिना मृजन् परिमृजन् गुरुकुलवासं वसेदिति सर्वत्र संबंधनीयम् ॥ आचा० टी. ॥

अस्य वहुव्यक्तव्यता ( आसायणा ) शब्दे ॥

अथैवमाचार्यं रक्षिते शुश्रूषिते च को गुण इत्यत आह ॥

पुयंति य रक्खंति य, सीसा सव्वे गणीं सया पयया ॥
इह परलोए य गुणा, हवंति तप्पुयणे जम्हा ॥

गणिनमाचार्यं शिष्याः सर्वे सदा प्रयताः प्रयत्नपराः पूजयंति शुश्रूषंते च । यस्मात्तत्पूजने आचार्यपूजने इह लोके परलोके च गुणा भवंति इह लोके सूत्रार्थतदुपघाति परलोके सूत्रार्थाभ्यामधीताभ्यां ज्ञानादिमोक्षमार्गप्रसाधनं अथवा पारलौकिका गुणा "आयरिए वेयावच्चं करेमाणे महानिज्जरे महापज्जवसाणे भवति" इत्येवमादयः ॥ व्य० द्वि. खं. ६ अ. ॥

गुरुशुश्रूषा ( विणय ) शब्दे ॥ आचार्यस्य चतुर्विधविनये नान्तेवासी अनृणी भवतीति विनयशब्दे ॥

आचार्यस्याराधने फलं यथा ॥ "गुर्वायत्ता यस्मात्, शास्त्रारंभा भवति सर्वेऽपि॥तस्मात् गुर्वाराधन,परेण हितकांक्षिणा भाव्यं " । १ । आवश्यकभाष्यकारेणाप्यन्यथायि ।

गुरुचित्तायत्ताइं, वक्खाणंगाइ जेण सव्वाइं ॥ जेण पुण सुप्पसण्णं, होइज्जं आगारिंगियं ॥ १ ॥ कुसलं जइ सेयं, वायगं वए पुज्जा ! तह वियसिं न वि कूरे, विरहंमियं कारणं पुव्वे ॥ २ ॥ व्य० १खं० १ उ० ॥

( १५ ) गुरुविनये वैद्यदृष्टान्तः ॥

आचार्यसेवायां वैद्यदृष्टान्तो यथा ॥

से जहा नाम एकेइ महाराहिगहिए अणुहूअतव्वेअणे विमाया सरुवेणं निविसंसे । तत्तओ सुविज्जवयणेण सम्मं तमवगच्छिअ जहा विहाणओ पवण्णे सुविकिरिअं निरुद्धजहिच्छाचारो तुच्छपच्छभोई मुच्चमाणे वाहिणा नि

अत्तमाणवेअणे समुवलद्धारोग्गं पवड्ढमाणतब्भावे तल्लाभनिव्वुईए तप्पडिबंधाओ सिरारवाराइजोगे वि वाहिसमारुग्गविन्नाणेणं इट्ठनिप्फत्तिओ अणाकुलभावयाए किरिओवओगेण अपीडिए अव्वहिए सुहलेस्साए वड्ढइ विज्जं च बहु मन्नइ। एवं कम्मवाहिगहिए अणुभूअजम्माइवेअणे विन्नाया दुक्खरूवेणं निविण्णे तत्तओ तओ सुगुरुवयणेणं अणुट्ठाणाइणा तमवगच्छिअ पुव्वुत्तविहाणओ पव्वइए सुकिरिअं पव्वज्जं विरुद्धपमायायारे असारसुद्धभोई मुच्चमाणे कम्मवाहिणा निअत्तमाणिट्ठविओगाइवेअणे समुवलब्भ चरणारोग्गं पवड्ढमाणसुहभावे तल्लाभनिव्वुईए तप्पडिबंधविसेसओ परिसहोवसग्गभावे वि तत्तसंवेअणाओ कुसलासयवुड्ढिओ थिरासयत्तेण धम्मोवओगाओ सया थिमिए। तेउल्लेसाए वड्ढइ गुरुं च बहुमन्नइ जहोचिअं असंगपडिवत्तिए निसग्गपवित्तिभावेण। एसा गुरुई विआहिआ भावसारा विसेसओ भगवंतबहुमाणेण जो मं पडिमन्नइ से गुरुत्तितदाणा अन्नहा किरिआ अकिरिआ कुलडा नारी किरिआसमा गरहिआ। तत्त वेईणं अफलजोगओ विसन्न तित्तीफलमित्थ नायं आवट्टे खु तप्फलं असुहाणुबंधे आयओ गुरुबहुमाणो अवंझकारणत्तेण अओपरमगुरुसंजोगो तओ सिद्धीरसंसयं एसो इह सुहोदए पगिट्ठतयणुबंधे भववाहितेगिच्छ नइओ सुंदरं परं उवमा इत्थ न विज्जई ॥ पं. सू. ४ सू. ॥

से जहेत्यादि । तद्यथा । कश्चित्सत्वः महाव्याधिगृहीतः कुष्ठादिग्रस्त इत्यर्थः । अनुभूततद्वेदनोऽनुभूतव्याधिवेदनः। विज्ञाता स्वरूपेण वेदनायाःन कंडूगृहीतकंडूयनकारिवद्विपर्यस्तः निर्विण्णस्तत्वतस्तद्वेदनयेति प्रक्रमः। ततःकिमित्याह ।सुवैद्यवचनेन हेतुभूतेन सम्यगवैपरीत्येन तं व्याधिमवगम्य यथाविधानतो यथा विधानेन देवतापूजादिलक्षणेन प्रपन्नः सुक्रियां परिपाचनादिरूपां रुद्धयदृच्छाचारः सन् प्रत्यपायभयात्तथातुच्छपथ्यभोजी व्याध्यनुगुण्यतः अनेन प्रकारेण मुच्यमानो व्याधिना खसराद्यपगमेन निवर्त्तमानवेदनः कंड्वाद्यभावात् समुपलब्धारोग्यं सदुपलंभेन प्रवर्द्धमानतद्भावः प्रवर्द्धमानारोग्यभावः। तल्लाभनिर्वृत्त्या आरोग्यलाभनिर्वृत्त्या तत्प्रतिबंधात् आरोग्यप्रतिबंधाद्धेतोः शिराक्षारादियोगेऽपि शिरावेधक्षारपातनादावप्यपीत्यर्थः । व्याधिसमारोग्यविज्ञानेन व्याधिशमाद्यदारोग्यं तदवबोधेनेत्यर्थः । किमित्याह । इष्टनिष्पत्तेरारोग्यनिष्पत्तेर्हेतोरनाकुलभावतया निबंधनाभावात् ॥ तथा क्रियोपयोगेन इति कर्त्तव्यताया बोधेन हेतुना अपीडितो व्यथितो निवातस्थानामनोपथ्यपानादिना । किमित्याह । शुभलेश्यया प्रशस्तभावरूपया वर्द्धते वृद्धिमाप्नोति । तथा वैद्यं च बहु मन्यते । महापायनिवृत्तिहेतुरयं ममेति सम्यक् ज्ञानात् एष दृष्टांतोऽयमर्थोपनयः ( एवमित्यादि ) एवं कर्मव्याधिगृहीतः प्राणी किंविशिष्ट इत्याह । अनुभूतजन्मादिवेदनः आदिशब्दाज्जरामरणादिग्रहः । विज्ञाता दुःखरूपेण जन्मादिवेदनायाः न तु तत्रैवाशक्त्या विपर्यस्त इति। ततः किमित्याह । निर्विण्णस्तत्वतः। ततो जन्मादिवेदनायाः किमित्याह। सुगुरुवचनेन हेतुना अनुष्ठानादिना तमवगम्य सुगुरुकर्मव्याधिं च पूर्वोक्तविधानतस्तृतीयसूत्रोक्ते तद्विधानेन प्रपन्नस्सन् सुक्रियां प्रव्रज्यां विरुद्धप्रमादाचारो यदृच्छया असारशुद्धभोजी संयमानुगुणेन अनेन विधिना मुच्यमानः कर्मव्याधिना निवर्त्तमानेष्टवियोगादिवेदनस्तया मोहनिवृत्त्या किमित्याह। समुपलभ्य चरणारोग्यं सदुपलंभेन प्रवर्द्धमानशुभभावः। प्रवर्धमानचरणारोग्यभावः बहुतरकर्मव्याधिविकारनिवृत्त्या तल्लाभनिवृत्त्या तत्प्रतिबंधाविशेषात् चरणारोग्यप्रतिबंधविशेषात् स्वाभाविकात् कारणात्परीषहोपसर्गभावेऽपि क्षुद्व्याधिव्यसनभावेऽपि तत्वसंवेदनात् सम्यक्ज्ञानाद्धेतोः । तथा कुशलाशयवृद्ध्या क्षायोपशमिकभाववृद्ध्या स्थिराशयत्वेन चित्तस्थैर्येण हेतुना तथा धर्मोपयोगात् इति कर्त्तव्यताबोधात्कारणात् सदास्तिमितः भावद्वंद्वविरहेण प्रशान्तः। किमित्याह तेजोलेश्यया शुभप्रभावरूपया वर्द्धते वृद्धिमनुभवति। गुरुं च बहु मन्यते। भाववैद्यकल्पं कथमित्याह। यथोचितमौचित्येन असंगप्रतिपत्त्या स्नेहरहितस्तद्भावप्रतिपत्त्या। किमस्या उपन्यास इत्याह । निसर्गप्रवृत्तिभावेन सांसिद्धिकप्रवृत्तित्वेन हेतुना एषाऽसंगप्रतिपत्तिर्गुर्वी व्याख्याता भगवद्भिः। किमित्याह। भावसारा तथौदयिकभावविरहेण विशेषतोऽसंगप्रतिपत्तेः। इहैव युक्त्यंतरमाह । भगवद्बहुमानेन अचिंत्यचिंतामणिकल्पतीर्थकरप्रतिबंधेन कथमयमित्याह । यो मां प्रति मन्यते भावतस्स सुकर्मेत्येवं तदाज्ञा भगवदाज्ञा। इत्थं । तत्वं व्यवस्थितं अन्यथेत्यादि । अन्यथा गुरुबहुमानव्यतिरेकेण क्रियाऽप्यक्रिया प्रत्युपेक्षणादिरूपा अक्रिया सत्क्रिया ताभ्यां किंविशिष्ट इत्याह। कुलटानारी क्रियासमा दुःशीलवनितोपवासक्रियातुल्या ततः किमित्याह। गर्हिता तत्ववेदिनां विदुषां कस्मादित्याह। अफलयोगतः इष्टफलादन्यत्फलं मोक्षात्सांसारिकमित्यर्थः । तद्योगात् एतदेव स्पष्टयन्नाह । विषान्न तृप्तिफलमत्र ज्ञानमल्पं विपाकदारुणं विराधनासेवनात्।एतदेवाह। आवर्त्त एव तत्फलं आवर्त्तते प्राणिनोऽस्मिन्नित्यावर्त्तः संसारः । स एव तत्वतस्तत्फलं विराधनाविषजन्यं । किंविशिष्ट आवर्त्त इत्याह। अशुभानुबंधः। तथा विराधनोत्कर्षेण एवं सफलं गुर्वबहुमानमभिधाय तद्बहुमानमाह ( आयत इत्यादिना ) आयतो गुरुबहुमानः साद्यपर्यवसितत्वेन दीर्घत्वादायतो मोक्षः स गुरुबहुमानः गुरुभावप्रतिबंध एव मोक्ष इत्यर्थः । कथमित्याह। अवंध्यकारणत्वेन मोक्षं प्रत्यप्रतिबद्धसामग्रीहेतुत्वेन। एतदेवाह । अतः परमगुरुसंयोगः । अतोगुरुबहुमानात्तीर्थकरसंयोगः। ततः संयोगाद्दिततत्संबंधत्वात् सिद्धिरसंशयं मुक्तिरेकांतेन। यतश्चैवमत एषोऽत्र शुभोदयो गुरुबहुमानः। कारणे कार्योपचारात्। यथाऽऽयुर्घृतमिति । अयमेव विशेष्यते प्रकृष्टतदनुबंधः प्रधानशुभोदयानुबंधस्तथा २ राधनोत्कर्षेण तथा भवव्याधिचिकित्सकगुरुबहुमान एव हेतुफलभावात् । न इतः सुंदरं परं गुरुबहुमानात् । उपमाऽत्र न विद्यते- गुरुबहुमाने सुंदरत्वेन भगवद्बहुमानादित्यभिप्रायः ॥ पं. सू. टी.॥

( १६ ) नमस्कार आचार्यस्य ॥

( णमो आयरियाणं ) नमस्यता चैषामाचारोपदेशकतया

पकारित्वादिति ॥ ज० ३० १ उ० १॥

॥ आचार्य्यनमस्कारे फलं यथा ॥

आयरियनमोकारो, जीवं मोएइ जवसहस्साओ ॥
जावेण कीरमाणो, होइ पुणो बोहिलाजाए ॥ १ ॥
आयरियनमोकारो, धन्नाणजवक्खयं करेंताणं ।
हिययं अणुमोयंतो, विसोत्तिया वारतोहोई ॥ २ ॥
आयरियनमोकारो, एवं खलु वणिओमहत्थोत्ति ।
जो मरणंमिउवग्गे, अजिक्खणं कारए बहुसो ॥ ३ ॥
आयरियनमोकारो, सव्वपावप्पणासणो ।
मंगलाणं च सव्वेसिं, तइयं हवइ मंगलं ॥ ४ ॥
आ० म०२ खं १ अ० ॥

( आचार्य्यस्य मङ्गलत्वम्मङ्गलशब्दे )

( १७ ) वैयावृत्यं गुरोः ॥

आचार्य्यस्य वैयावृत्यमतिशेषशब्दे ( वेयावच्च ) शब्दे च ॥

आचार्य्यवेयावृत्ते फलं यथा ॥

गुरुवेयावच्चेणं, सदणुट्ठाणसहकारिजावाओ ॥
विउलं फलमिव्जस्स व, विसावगेणावि ववहारे॥ २२ ॥

व्या०।गुरुवैयावृत्येन आचार्यविषयेण भक्तादिदानग्लानताप्रतिचरणादिलक्षणेन हेतुना सदनुष्ठाने गुरुगते जिनप्रवचनार्थप्रकाशनगच्छपालनादौ सहकारिभावो यः सहायककरणं स तथा तस्मात्सदनुष्ठानसहकारिभावतः। किमित्याह।विपुलं महत्फलं कर्म्मक्षयलक्षणं गुरुकुलवासिनो भवति। कस्मिन्निवेत्याह। इज्यस्येव सुवर्णलक्षादिमान् महाधनपतेरिव।स केन विंशोपकेनाऽपि तदीयद्रव्यविंशतितमभागेनाऽपि । आस्तां सर्वेण व्यवहारे वाणिज्ये क्रियमाणे सति। तथा हि। लक्षपतिसंबंधिना लक्षविंशतिभागेनाऽपि । आस्तां सर्वेण सहस्रपंचक लक्षणेन व्यवहारतो वणिक्पुत्रस्य महान् लाभो भवत्येव। गुरोर्वैयावृत्यमात्रमपि कुर्वन् महत्फलमासादयति गुरुविषयवैयावृत्यमात्रस्याऽपि महत्वादिति। अन्ये त्वाहुः इज्यस्य गृहागतस्य विंशोपकेनाऽपि व्यवहारे सत्कार इति गाथार्थः। पंचा० ११ वृ. ।

आचार्य्यस्य च बलाभियोगमन्तरेणैव मोक्षार्थिना स्वयमेव प्रत्युतेच्छाकारं दत्वाऽनन्यार्थितेनैव वैयावृत्यादि कर्त्तव्यमितीच्छाकारशब्दे॥

( १८ ) गच्छाधिपतिः केन कर्म्मविपाकेन जवति ॥

केन कर्मविपाकेनाऽचार्य्यो जूत्वा ईप्सितं लभत इति महानिशीथे ५ चूलि० यथा ॥

से जयवं ताकयरेणं कम्मविवागेणं तेणं गच्छाहिवइणा होऊण पुण इच्छिअं समाच्छियत्ति गोयमा ! मायापच्चएणं से जयवं कयरेणं से मायापच्चए जेणं पयणीकयसंसारे वीसयलपावायपणावीयविवुहजणे णिंदे सुरहिवहुदव्वपयवंरूजुन्नसूमकरियसमजावपमाणपागनिप्फन्नपोयगमब्बगे इव तम्म जक्खे मयलदुक्खे साणमालए सयलसुहासणस्स परमपवित्ततमस्स एं अहिंसाल-क्खणसमणधम्मस्स विग्घे सम्मगला निरयदारजूए सयलअकित्तीकलंकलिकलहवेरायणत्तनिहाणनिम्मलकुलस्स एं दुप्परिसअकज्जकज्जलकन्हमसीखपणे तेणं गच्छाहिवइणा इत्थीजावे णिविंतिएत्ति गोयमा! एो तेणं गच्छाहिवइ तेहिएणं अणुमवि माया कया सेणं तहा पुहवइचक्कहरे जवित्ता एयरलोगजीरूए णिव्विएकामजोगे तणमिव परिविच्चाएं तं तारिसं चोदसरयणनवनिहीतो चोसट्ठीसहस्से वरजुवईणं बत्तीससाहस्सीओ अणादिवरनरिंद च्छन्नउईगायकोमीओ जाव ण छखंरूजरहवाससस णं देविंदोवमं महारायलच्छितीयं बहुपुन्नचाईए णीसंगे पव्वइएय थोवकालेणं सयलगुणोहधारी महातवस्सी सुयहरे जाए जोगेणाऊणं गुरूहिं गच्छाहिवई समणुन्नाए तहेव गोयमा! तेणं सुदिट्ठसुग्गइपहेणं जहोवइट्ठसमणट्ठेणं माणेणं उग्गाजिग्गहाविहारत्ताए घोरपरिसहोवसग्गाहियासणेणं रागद्दोसकसायविवज्जणेणं आगमाणुसारेणं सुविहिए गणं परिवालणेणं आजम्मसमणा कप्पपरिजोगवज्जणेणं छकायसमारंजविवज्जणेणं ईसंपिदि व्वोरालियमेहुणपरिणामविप्पमुक्को एं इह परलोगासंसाइणियाणमायाइसल्लविप्पमुकेणं णीसल्लालोयणनिंदणगरहणेणं जहोववइट्ठपायच्छित्तकरणेणं सव्वत्था परिवड्ढत्तेणं सव्वपमायालंबणं विप्पमुक्के णइ पइणिदिट्ठअवसेसीकए अणेगजवसंचिए कम्मरासी अन्नेगजवे तेणं माया कया तप्पव्वइणं गोयमा ! सविवागे सेजयवं कयरा उ ए अन्नजवे तेणं महाणुजागेणं मायाकया जीएणं एरिसो दारुणविवागो गोयमा! सेणं महाणुजागस्स गच्छाहिवइणो जीवेण णूणाहिएयणा फलं लक्खइमेव जवग्गहणा ॥

आचार्य्यस्य प्रायश्चित्तं महानिशीथे. अ.६ यथा. ॥

से जयवं जेणं गुरुं सहस्साकारेणं अन्नयरे ठाणे चुकेज्ज वा खलेज्ज वा सेणं आराहगेण वा गोयमा ! गुरूणं गुरुगुणेसु वट्टमाणो अखालियसीले अपवादी अणालस्सी सव्वालंबणविप्पमुक्के समसतुमित्तपक्खे समग्गपक्खवाए जावणं कहाजाणिरे सद्धाम्मजुत्ते जवेज्जा णो एं उम्मग्गदेसए अहमाणुरए जवेज्जा सव्वहा सपयरिहिणं गुरुणा तात्र अप्पमत्तेणं जावियव्वं। णो एं पमत्तेणं जउण पमादी जवेज्जा सेणं दुरंतपंतलक्खणे अदट्ठव्वे महापावे जईणं सवीरिए हवेज्जा। तेणं कयदूच्चरियं जहावत्तं सपरसीमगणाणं पक्खाविय जहा दुरंतपंतलक्खणे अदट्ठव्वे महापावकम्मकारी संमग्गं पणासेउ अहयंतिएवं निंदित्ता गरहित्ताणं आलोइत्ताणं च जहा जणियं पायच्छित्तमणुचरज्जा। सेणं किं उद्देसेणं आराहगे जावज्जा!

जइणं नीसद्वे नियट्टी विप्पमुक्के न पुणो संमग्गाउ परिन्नंसेज्जा । अट्टाणं परिन्नस्स तओ णाराहेइ ॥
आलोचनाया अप्रदाने आचार्यस्य प्रायश्चित्त ( मालोयणा ) शब्दे ॥ आचार्यस्यावश्यकप्रमादे प्रायश्चित्त (मावस्सग) शब्दे।

( १९ ) अतिशया आचार्य्यस्य ॥

आचार्य्यस्य पञ्चातिशया ( अइसेस ) शब्दे ॥
आचार्यस्य बहिर्गमने दोषः ( अइसेस ) शब्दे, ( निगामन ) शब्दे च ॥
आचार्य्यस्य संज्ञाजूमिगमन(मइसेस)शब्दे(थण्डिल)शब्दे च।
गोचरचर्य्या कारणेऽसत्याचार्य्येण न गंतव्येति ( अइसेस ) शब्दे ( गोयरचरिया ) शब्दे च ॥
आचार्य्यस्य शुरूवस्त्रंकीदशम ( इसेस ) शब्दे ॥
उपाश्रयस्याऽन्तर्बहि र्वा निवसन्नाचार्य्यो न दुष्यतीत्य(इसेस) शब्दे वसतिशब्दे च ॥
आचार्यस्याचारप्रकल्पे भ्रष्टे कर्तव्यता (आयारपकप्प)शब्दे। आचार्य्यः स्मरन्नस्मरन् वा कल्पाकं उपस्थापयेन्नोपस्थापयेद्वा तत्र कर्त्तव्यता ( उवट्ठाण ) शब्दे ॥
आचार्य्योपसम्पत्( उवसंपया ) शब्दे ॥
आचार्य्ये प्रमादिनि शिष्याणां गणान्तरोपसंपत्तिः ( उवसंपया ) शब्दे ॥
आचार्य्यादौ मृते ऽन्यस्योपसंपत् ( उवसंपया ) शब्दे।
संयमसंरक्षणार्थमन्यत्रोपसम्पद्येत तत्र दृष्टान्तादिः ( उवसंपया )शब्दे ॥
वर्षास्वाचार्य्ये कालगतेऽन्यत्रोपसम्पत्तिः ( उवसंपया) शब्दे।
आचार्यस्य कृतिः ( कम्म ) शब्दे ॥
आचार्य्यस्य तीर्थकरसमानत्वं ( वेयावच्च ) शब्दे ॥
जिक्षुणा कृतः शिष्य आचार्यस्येति ( सीस ) शब्दे ॥
आचार्य्यस्तुतिः ( थुई ) शब्दे ॥

( २० ) निर्ग्रन्थीनामाचार्य्यः ॥

श्रमणीनामाचार्य्यावश्यकता यथा ॥

आयरियउवज्झातो, तइया य पत्तिणीओ समणीणं ॥
आणसि अट्ठाणत्ती, होइ एणसि-तिण्हंपि ॥

श्रमणीनामाचार्य उपाध्यायस्तृतीया प्रवर्त्तिनी च जवति । श्रमणानां त्वाचार्योपाध्यायास्ततोऽन्येषामर्यायेति । यदुक्तं सूत्र द्वयेऽपि व्याख्यातम्। व्य० २ खं. ७ उ०॥
तथा च व्यवहारसूत्रम् ॥

तिवासपरियाए समणे निग्गंथे तीसवासपरियाए समणीए निग्गंथीओ कप्पइ उवज्झायत्ताए उद्दिसित्तए धारित्तए । वा पंचवासपरियाए समणे निग्गंथे सट्ठिवासपरियाए समणीए निग्गंथिए कप्पइ आयरियत्ताए उद्दिसित्तए ॥ १६ ॥

व्याख्या । त्रिवर्षपर्यायश्रमणो निर्ग्रंथस्त्रिंशद्वर्षपर्यायायाः श्रमण्याः कल्पते उपाध्यायतया उद्देष्टुं। पंचवर्षपर्यायः श्रमणो निर्ग्रंथः षष्टिवर्षपर्यायायाः श्रमण्या निर्ग्रंथ्याः कल्पते आचार्यतया उपाध्यायतया उद्देष्टुमिति एष सूत्राक्षरार्थः ॥ संप्रति जाष्ये विस्तरः ॥

तइयंमित उद्देसे, दिसासु जा गणहरा समक्खाओ ॥
सो चेव य होइ इहं, परियातो वसितो नवरं ॥

तृतीये उद्देशे दिक्षु आचार्योपाध्यायप्रवर्त्तिस्थविरगणावच्छेदिरूपासु यो गणधर आचार्य उपाध्यायो वा समाख्यातः स एव इहाऽपि जवति ज्ञातव्यः । नवरमिह पर्यायोऽधिको वर्णितः तत् स एव प्रवक्ष्यते ॥

तेवरिसो तीसिया, जहएणचत्ताए कप्पइ उवज्झे ॥
वितियाए सट्ठि सयरा, य जम्मणयणवास आयरितो ॥

त्रिवर्षस्त्रिवर्षपर्याय उपाध्यायः कल्पते त्रिंशकायास्त्रिंशद्वर्षपर्यायाया जन्मना जन्मपर्याये ण जघन्यतश्चत्वारिंशकायाश्चत्वारिंशद्वर्षपर्यायाया उत्कर्षतो देशोनपूर्वकोटिकायाश्चत्वारिंश त्कथं स्यादिति चेदुच्यते। दशवर्षजातायाः प्रव्रज्यायाः प्रतिपत्तिस्त्रिंशद्वर्षाणि व्रतपर्याय,एवं चत्वारिंशत्तथा द्वितीयस्याः श्रमण्या निर्ग्रंथ्याः षष्टिवर्षव्रतपर्यायाया जन्मतो जघन्यतःसप्ततिःसप्ततिवर्षपर्याय आचार्यः कल्पते।उत्कर्षतो देशोनपूर्वकोटिकाया जन्मनः सप्ततिर्वर्षाणि कथं भवंतीति चेदुच्यते। दशवर्षपर्यायायाः प्रव्रज्याप्रतिपत्तिः प्रव्रजितायाः षष्टिवर्षाणीति ।

गीयागीतावुड्ढा व, अवुड्ढा जाव तीसपरियाया।
अरिहंति तिदुसंगहं सा, दुसंगहं सा जयपरेणं ॥

गीता चागीतार्था वा जवतु अगीता वा गीतार्था वा तथा वृद्धा च। वा जवतु।अवृद्धा वा यावत्त्रिंशद्वर्षपर्यायाःतावाश्रिय मात् त्रिसंग्रहं त्रयाणामाचार्योपाध्यायप्रवर्तिनीनां संग्रहमर्हति द्विसंग्रहं वा जयं पारणं त्रिंशद्वर्षपर्यायात्परतोऽभवद्गीता वि कल्पना त्रिसंग्रहमुपाध्यायस्य प्रवर्तिन्या वा अरोधतः। एतदेव भावयति ॥

वयपरिणया य गीया, बहुपरिवारा य निव्वियारा व।
होज्जउ अणुवज्झाया, अप्पवत्तिणि जाव सट्ठीओ॥

वयसा परिणता गीतार्था बहुपरिवारा निर्विकारा च सा यावत्षष्टिस्तावदनुपाध्याया वा भवेदप्रवर्त्तिनी वा एवं भवति द्विसंग्रहिका ।

एमेव अणायरिया, थेरी गणिणा व होज्ज इयरीय।
कालगतोसण्णाए व, दिसाए धारेंति पुव्वदिसं ॥

षष्टिवर्षेभ्यः परतो गणिनी प्रवर्त्तिनी इतरा वा अप्रवर्त्तिनी स्थविरा अनाचार्या भवेत्। कथमित्याह ( कालगतोसन्नाए वेत्यादि ) कालगतायामवसन्नायां वा दिशि आचार्यलक्षणायां षष्टिवर्षेभ्यः परतो वर्त्तमाना आर्यिका धारयंति पूर्वां दिशमेवमनाचार्या जवंति। किंकारणं संयतीनामवश्यं संग्रहीष्यते तत आह ॥

बहुपच्चवाय अज्जाउ, नियमा पुण संगहे अपरिजूया।
संगहिया पुण अज्जा, थिरथावरसंजमा होइ ॥

आर्या पुनर्बहुप्रत्यवाया ततः संग्रहे सति नियमात्परिजूता जवति। परा जवस्थानमुपजायते संगृहीता पुनरार्या स्थिरस्थावरसंयमा जवति। ततः संग्रह इष्यते। अथ के अपाया इत्याह ।

पेसी अइया दीया, जे पुव्वमुदीहट्ठा अवायाउ ॥
ते सव्वे वत्तव्वा, दुसंगहं वक्ष्यं तेणय ॥

पूर्वं कल्पाध्ययने द्विसंग्रहं वर्णयता पेसी अजिका आदि शब्दात्कुलपुत्रनोजिकादिपरिग्रहः । इत्यादिका उदाहृता अपायास्ते सर्वेऽत्रापि वक्तव्यास्ता बहूपायदर्शनतः संग्रहो मन्यत तदेव द्रढयति ॥

अज्जाउविउलखंधा, लता वाएण कंपते जले वा ॥
नावा अबंधणावा, उवमा एस असंगहे होइ ॥

अजालविपुलस्कंधा यथा वातेन लता कंपते जले वा । यथा अबंधना बंधनरहिता नौरेषा असंग्रहे उपमयाऽप्यसंगृहीता सती बहुप्रत्यवायवातोत्कलिकानिरितस्ततः संयमात्कम्पते इत्यर्थः ॥

दिट्ठंतो गुव्विणीए, उ कप्पट्टगबोधिएहि कायव्वो ॥
गब्भत्थे रक्खंती, सामत्थंरवत्तुए अगमे ॥

अत्र लोके दृष्टान्तो गुर्विण्या कर्तव्यो लोकोत्तर कल्पस्त्रकबोधिकैः कुल्लकाचौरैः तत्र गच्छे पुत्रे स्वगोत्रराजादयस्तां रक्षंति स एष पुत्रप्रभावः । अवेटे गते चौरे क्षुल्लकस्य तन्मार्गाय साम र्थ्यपर्यालोचनं सोऽप्येष पुरुषस्य प्रभावस्तत्र प्रथमतो गुर्विणी दृष्टांतं विभावयिषुस्तावदिदमाह ॥

सगोत्तरायमादीसु, गब्भत्थोवि धणं सुतो ॥
रक्खए मायरं चेव, किमुता जायवड्ढितो ॥

गर्भस्थोऽपि यतः स्वगोत्रराजादिषु धनं जिघृक्षुषु धनं रक्षति मातरं च किं पुनर्जातः प्रवर्द्धितश्च ससुतरां रक्षति । सूत्रं यथा गर्भस्थोऽपि रक्षति तथा प्रतिपादयति ॥

वणिएपरायासिट्ठे, गब्भिणिभणमच्छ धूपसूयाए ॥
सव्वं सुयस्स दाहं, धूया पवत्तवेवाहे ॥

एको वणिक् तस्य भार्या आपन्नसत्त्वा स वणिक् कालगतस्ततः केनाऽपि राज्ञः शिष्टं देव ! गुर्विण्या धनमस्ति राज्ञोक्तं तिष्ठतु तद्वित्तं । यदि प्रसूतायाः सुतो भविष्यति । ततः सर्वं सुतस्य दास्यामो दुहितरि च जातायां यावता भक्तं यावता च विवाहस्तावन्मात्रं दास्यामः । एवं गच्छोऽपि । गर्भस्थोऽपि सुतो राज्ञःस्वगोत्रे भ्यश्च धनं रक्षति मातरं च । अन्यथा स्वगोत्रैराज्ञा चाद्यापि तव पार्श्वे धनमस्तीति बहुधा विलुप्यते ॥ भावितं लौकिकमुदाहरणमधुना लोकोत्तरं भावयति ॥

लोउत्तरिए अज्जा, खुड्डग बोहिहरणं पसरणीयं ॥
चोरो मरणं कूवे, सामत्थण चारणा लेट्ठ ॥

लोकोत्तरिकोऽयं दृष्टांतः । कचिद्ग्रामे मालवशबरानीकमापतितं । तत्र कैश्चिद्बौधिकैश्चौरैरार्यिकाणामेकस्य कुल्लकस्य हरणं कृतं । ते चौरा अन्यस्यैकस्य चौरस्यार्जिकाः क्षुल्लकं च समर्प्याऽन्यस्य हरणाय गताः । स चैव चौरस्तृषापीडितः सन् कूपे पानीयायावतीर्णः । ततः कुल्लकश्चिंतयति । वयमिति । वयमेतावत्संख्याका बहवोऽयमेकस्ततः किमेकस्यापि न प्रभविष्याम इति विचिन्त्य ता आर्यिका भणिताः । पाषाणपुंजमेनं कुर्मस्ता नेच्छंति नः मारयिष्यतीति कृत्वा ततः कुल्लकेन तद्वचः श्रुत्वा महानेकः पाषाणस्तस्योपरि मुक्तस्ततः पश्चात्ताभिः सर्वाभिरेककालं पाषाणा मुक्तास्ततः पाषाणपुंजेनाक्रांतश्चौरोमरणमुपागमत् । ततः कुल्लकेन तास्तनो निष्काशिता एवं कुल्लको रक्षति किंपुनर्महान् तत एतेन कारणेन उपाध्याय आचार्यश्च त्रिवर्षपंचवर्षपर्यायस्त्रिंशत्षष्टिवर्षपर्यायाणामपि गीतार्थानामपि दीयते । व्य. २ खं. ७ उ. ।

( २१ ) आचार्ये कालगते आचार्यान्तरस्थापनं ॥

( १ ) आयरियउवज्झाए गिलायमाणे अन्नत्तरं विवज्ज अज्जो माएणं कालगतंसि समणंसि अयं समुक्कसियव्वे सेय समुक्कसणारिहि समुक्कसियव्वे णो समुक्कसिणारिहि णो समुक्कसियव्वे अत्थि यो अत्थ अन्नेकेइ समुक्कसिणारिहे से समुक्कसियव्वे णत्थि या अत्थ केइ अन्ने समुक्कसिणारिहे सो चेव समुक्कसियव्वे । तंसिं चणं समुक्कंसि परोवएज्जा दुसमुकंतं ति अज्जो णिक्खिवाहि तस्स णं णिक्खिवमाणस्स वा णत्थि केइ अत्थे एवापरिहारे वा जे तं साहम्मियं अहाकप्पाणं णो अब्भुट्ठं तेसिं व सव्वेसिं तप्पाति यं ते एवा परिहारे वा ॥ व्य० सू० उ. ४ ॥

( आयरिय उवज्झाए गिलायमाणे ) मित्यादि अयास्य सूत्रस्य कः संबंध इत्यत आह ॥

आयरियत्ते पगते, अणुयत्तं तेयकालकारणंमि ।
गच्छे सावेक्खोवा, वुत्तोइ मतो वि सावेक्खो ॥

आचार्यत्वं पूर्वसूत्रेषु प्रकृतमनुवर्त्तमानं च कालकरणं तत आचार्यत्वे प्रकृते अनुवर्तमानमेवाकालकरणे इदमपि सूत्रमापतितमत्राऽस्याचार्यत्वस्य कालकरणस्य वाभिधास्यमानत्वात् यदि वा पूर्वमर्थतः सापेक्ष उक्तोऽयमपि चाधिकृतसूत्रे णाभिधीयमानः सापेक्ष इति सापेक्षत्वप्रकरणादनंतरमस्य सूत्रस्योपनिपातः । अनेन संबंधेनायातस्य व्याख्या ॥ आचार्य उपाध्यायो वा धातुक्षोभादिना ग्लायन् अन्यतरमुपाध्यायप्रवर्त्तिगणावच्छेदकगीतार्थभिक्षूणामन्यतमं सापेक्षः सन् वदेत् । आर्य ! मयि कालगते सति अयं समुत्कर्षयितव्यः आचार्यपदे स्थापयितव्यः । सचेत्परीक्षया समुत्कर्षणार्हो भवतीति । ततः समुत्कर्षयितव्यो नोचेत्समुत्कर्षणार्हस्तर्हि नो समुत्कर्षयितव्यः । अथ यो ऽसौ पूर्वमाचार्येण समीक्षितः सोऽभ्युद्यतविहारमभ्युद्यतमरणं वा व्यवसितस्तत्राह । अस्ति चात्र गच्छेऽन्यः कश्चित्समुत्कर्षणार्हः स समुत्कर्षयितव्यः अथ नास्ति कश्चिदन्यः समुत्कर्षणार्हस्तर्हि स एवान्यर्थ्यः समुत्कर्षयितव्यः । तस्मिंश्च समुत्कर्षिते परोगच्छे वदेत्तं दुःसमुत्कृष्टं ते तव हेआर्य ! तस्मान्निक्षिप एवं तस्य निक्षिपतो नास्ति कश्चिच्छेदः परिहारो वा । उपलक्षणमेतदन्यतपो वा ससरात्रादिक ये पुनः साधर्म्मिका गणसाधवो यथा कल्पेन आवश्यकादिषु यथोक्तविनयकरणलक्षणेन नोत्थाय विहरंति तेषां सर्वेषां प्रत्येकं तत्प्रत्ययं यथा कल्पनेऽभ्युत्थानप्रत्ययश्छेदः परिहारः सप्तरात्रं वा तपः प्रायश्चित्तमिति सूत्रसंक्षेपार्थः । एनमेव भाष्यकृत्प्रपंचयन्प्रथमतो गिलायमाण इत्यस्यार्थं भावयति ॥

अतिसयनरिट्ठतो वा, धातुक्खोभेण वा धुवं मरणं ।
नाउं सावेक्खगणी, भणंति सुत्तम्मि जं वुत्तं ॥

अतिशयेन श्रुतज्ञानातिशयादिना अरिष्टतो वा अरिष्टदर्शनतो वा धातुक्षोभेण वा ध्रुवं मरणं ज्ञात्वा सापेक्षा गच्छापेक्षोपेता गणिनो यत्सूत्रे उक्त ( मज्झोकालगयंमी ) त्यादि तद्भणंति सांप्रत ( मन्नतरं वएज्जा ) इत्यस्यार्थमाह ॥

अन्नयर उवज्झाया, दिगाउ गीयत्थपंचमा पुरिसा ।
उक्कसणमणणत्तिय, एगट्ठं ठावणा चेव ॥
उपाध्यायादिका उपाध्यायःप्रवर्त्ती गणावच्छेदको गणी गीतार्थश्च निकुरित्येवं रूपा गीतार्थपंचमाः पुरुषाः तेषामन्यतमोऽन्यतरः समुत्कर्षणं मननं स्थापना आचार्यत्वस्थापनमित्यर्थः ॥
पुव्वं गावेति गणे, जीवंतो गणहरं जहा राया ।
कुमरेत्ते परिच्छित्ता, रज्जरिहं ठावए रज्जे ॥
पूर्वमेव जीवन्नाचार्यो यः शक्तिमान् तं गणधरं गणे स्थापयति। यथा राजा कुमारान्परीक्ष्य यः शक्तिमत्तया राज्यार्हस्तं राज्ये स्थापयति । कथं परीक्षेत्यतः परीक्षाविधिमाह ॥
दहि कुम्भ अमच्च आणत्ती, कुमारा अतिणएतहिंएको ।
पासे निरिक्खिऊणं, असिमंति पवेसणे रज्जं ॥ १ ॥
एगो राया बहुपुत्तो, सो चिंतेइ जो सत्तिमंतो ।
तं रज्जे ठावेहामि, ततोकुमारे परिच्छिउ माढत्तो ॥ २ ॥
आणत्ता पुरिसा दहि, घम्मगे एगत्थओगासे ।
ठवेह तेहिं ठवेत्ता, रण्णो निवेदियं अमव्वो भणितो। ३।
विच्छ तुमं दाहिघमाणं, पासे अत्था ह्मितोअमच्चो ।
अन्नाते कुमारा सद्दाविता, भणिया वत्थदहिघम्मेक्कं ४
आणेह सेगया असं, वहंतयं न पासंति ।
ततो ते अप्पांसेता सयं चेव दहिघम्मेक्कं ॥ ५ ॥
घेत्तुंसंपट्ठियाएकोकुमारो, पासाणि निरिक्खेत्ता असं च ।
हंतयमपासंतो अमच्चं भणति दहिघमं अमच्चे ॥ ६ ॥
नेच्छइ कुमारेण असिं, उज्जिरिऊण भणइजइनेच्छसि
सीसतेपाडेमि अमव्वेणगहितो, दहिघमो कुमारो तं घेत्तुं
गतो रायसमीवं ॥ रण्णा एस सत्तिमंतोत्ति परिक्खि
त्ता रज्जेठवितो ॥ ७ ॥
अक्षरयोजनात्वियं । दधिकुटा एकत्र राज्ञा पुरुषैः स्थापितास्तदनंतरममात्यस्याज्ञप्तिः प्रदत्ता । यथा घटानां पार्श्वे तिष्ठ । तत कुमारा दधिघटानामानयने निरोपितास्तत्रैकः कुमारः पार्श्वात् निरीक्ष्याऽन्यमपश्यत् अमात्यस्योपरि असिरुत्पारितस्ततो मंत्रिणा दधिघटो गृहीतस्तेन दधिघटस्य प्रवेशने कुमारेण कारिते दृष्टे तस्य कुमारस्य राज्यं दत्तवान् । अत्रोपनयमाह ॥
दसविहवेयावच्चतिउ, कुसलज्जयाणमेवं तु ।
ठावेंति सत्तिमंतं, असत्तिमंते बहूदोसा ।
एवमाचार्योऽपि दशविधेवैयावृत्त्ये उद्यतानामुद्यतमतीनां मध्ये ( कुसलत्ति ) यो यत्र कुशलस्तस्य तत्र नियोगं करोति तं तत्र नियोजयति । यस्तं शक्तिमंतं गणधरं स्थापयति अशक्तिमति तु स्थाप्यमाने बहवो दोषाः के ते इतिचेदुच्यते । सोऽशक्तिमत्वेन शक्नोति साधून् यथायोगमनियोक्तुं । तत आहारोपधिपरिहानिनिर्जरातश्च ते परिभ्रश्यंति । अथाशुकारणतः पूर्वं न स्थापितं स्यात्ततोऽपस्थापिते गणधरे स कालगतो न प्रकाशयितव्य इत्यादि पूर्वोक्तमपि च ज्ञातव्यम् ॥
अत्रैव विधिशेषमाह ।

दोमादीगीयत्थे पुव्वुत्त, गमेण सति गणं विभए ।
मीसेव अणरिहे वा, अगीयत्थे वा भएज्जाहि ॥
आचार्येण शिष्या निर्मापितास्ते द्वौ त्रयश्चत्वारो वा भवेयुस्तेषु द्व्यादिषु गीतार्थेषु सति प्रभवति परिवारे पूर्वोक्तागमेन तृतीयोद्देशकोक्तेन प्रकारेण गणं विभजेत् तेषु सर्वेष्वपि विभज्य पृथक् २ गणोदातव्य इत्यर्थः ॥ तथा मिश्रानाम तेषामाचार्यशिष्याणां मध्ये केचित् गीतार्थाः केचिदगीतार्थास्तानपि विभजेत् । किमुक्तं भवति । यो गीतार्थास्तान् गणधरपदे स्थाप्य तया पृथक् कुर्यादितरांस्त्वगीतार्थाननर्हतया अथवा यैरर्थो देशतो गृहीतो न देशतो गृहीतस्ते मिश्रास्तान् विभजेत् एते मिश्रा अपि योग्या एते त्वयोग्या इति विभागेन स्थापयेत् तथा ये शरीरेण जुंगिकतया* सर्वथा गणधरपदानर्हास्तानपि विभजेत् वाशब्दोऽपि शब्दार्थः ॥ एकांतेनाऽयोग्यतया पृथक् स्थापयेत् अगीतार्थत्वाच्च भजेत् । इयमत्र भावना । योऽगीतार्थानामाचार्यलक्षणोपेतास्ताननर्हतया स्थापयति ये पुनरगीतार्था अपि संभाव्य श्रुतसंपदा आचार्यलक्षणोपेतास्तान् योग्यतया पृथक् स्थापयति ॥
सप्रति मिश्रपदव्याख्यानार्थमाह ॥
गीयागीया मिस्सा, अहवा अत्थस्स देसो गहितो उ ।
तत्थ अगीया णअरिहा, आयरिय तस्स होंतीउ ॥
केचित् गीता गीतार्थाः केचिदगीतार्था एते मिश्रा अथवा अर्थस्य देशो यैर्गृहीतस्ते मिश्रास्तत्र ये अगीता आचार्यलक्षणपरिभ्रष्टाश्च ते आचार्यत्वस्याऽनर्हा भवंति ॥ संप्रति " सेय समुक्कसणारिहे समुक्कसियव्वो नासमुक्कसणारिहे णो समुक्कसियव्वे,, इत्यस्य भावार्थमभिधित्सुः प्रथमतः पूर्वपक्षमुत्थापयति ॥
कहमरिहो वि अणरिहो, किंतु हु असमिक्खकारिणो
थेरा । ठावेंति जं अणरिहं, चोयगसुण कारणमिणं तु ॥
परो ब्रूते । कथं पूर्वमाचार्यविद्यमानवेलायामर्होऽपि सन् पश्चादनर्हो जातो येनोच्यते । स चेत्समुत्कर्षणार्हस्तर्हि समुकर्षयितव्यः । किंतु वितर्के वितर्कयामि । हु निश्चितमसमीक्षितकारि स्थविरा आसीरन् । यदनर्हं स्थापयंति । यथायं समुत्कर्षयितव्यः अत्र सूरिः प्राह । चोदक ! शृणु कारणमिदं येन पूर्वमर्होऽपि पश्चादनर्हो जातः ॥
तदेव कारणमभिधित्सुर्द्वारगाथामाह ॥
उप्पियणभीतसंदिसण, देसिए चेव फरुससंगहिए ।
वायमनिप्फावग, अन्नसीसइच्छाअहाकप्पो ॥
( उप्पियणं ) मुहुः स्वसनं तद्वारं भीतसंदेशनद्वारमदेशिकद्वारं परुषद्वारमेतानि चत्वार्यपि प्रस्तुतार्थविषयाणि । संग्रहद्वारं वाचकनिष्पादकं द्वारमन्यशिष्यद्वारमिच्छाद्वारं यथा कल्पद्वारमित्येतानि संग्रहादीनि द्वाराणि ( अत्थियाइं च अस्से समुक्कसणारिहे ) इत्यादि सूत्रविषयाणीति द्वारगाथा संक्षेपार्थः ॥
संप्रति उप्पियणद्वारं विभावयिषुराह ॥
सन्निसेज्जागयं दिस्सा, सिस्सेहिं परिवारियं ।

* हस्तपादादिशरीरविकलतयेत्यर्थः ।

कौमुदी जोगजुत्तं व, तारापरिवुडं ससिं ॥१॥
गिहत्थपरतित्थीहिं, संसयत्थिहि निच्चसो ।
सिविज्जंतं विहगेहिं, सरं वा कमलोज्जलं ॥२॥
खज्जूडे अणुसासंतं, सब्भावंतं समुज्जए ।
गणस्स गिलाकुव्वंतं, संगहं विसए सए ॥ ३ ॥
इंगियागारदक्खेहिं, सया छंदाणुवत्तिहिं ।
अविकडियानिद्देसं, रायाणं च अनायकं ॥ ४ ॥

सती नाम शोभना स्वकीया वा निषद्या सन्निषद्या तस्यां गतमुपविष्टं शिष्यैःपरिवारितमित्थंभूतमुपमयति। कौमुदी कार्त्तिकी पौर्णमासी तद्योगयुक्तं तारापरिवृतं शशिनमिव।१। तथा गृहस्थैः परतीर्थिभिः संशयार्थिभिश्च साधुभिर्नित्यशः सर्वकालं सेव्यमानं किमिवेत्यत आह ( कमलोज्जलं ) कमलपरिमंडितं सर इव विहगैः पक्षिभिस्तथा।२।(खडजूडान्)कुस्वभावान् अनुशासंतं सम्यक् उद्यताः समुद्यतास्तान् श्रद्धापयंतं तेषां महतीं श्रद्धामुत्पादयंतं तथा गणस्य गच्छस्य अग्लया निर्जरार्थमात्मोत्साहेन स्वके विषये आत्मीयया शक्त्या इत्यर्थः। संग्रहं कुर्वतं॥३॥ तथा इंगिताकारदक्षैश्छंदोऽनुवर्त्तिभिः सदा सर्वकालमविकटितनिर्देशमखंडिताज्ञं राजानमिव अनायकं न विद्यते नायको यस्य स तथा। तं चक्रवर्त्तिनमिवेत्यर्थः। दृष्ट्वा कश्चिदगीतार्थ उत्पन्नगौरवो भवति।

उप्पन्नगारवे एवं, गणित्ति परिकंखिओ ।
उप्पियंतं गणिं दिस्सा, अगीतो भासेइ इमं ॥

उत्पन्नमभिलषणीयतया जातं गौरवं यस्य स तथा । एवमहमपि गणी भवामि गणिपदमवाप्य परिपालयामि। ततः शोभनं भवतीत्येव परिकांक्षितः परिकांक्षावान् गणिनमाचार्यमुप्पियंतं मुहुर्मुहुः श्वसंतं मर्तुकाममग्लिगं दृष्ट्वा कश्चिदगीतोऽगीतार्थः कथमहं गणधरो भविष्यामीति विचिंत्य यथा गच्छवर्त्तिनः साधवः शृण्वंति। तथा मातृस्थानत इदं वक्ष्यमाणं भाषते । तदेवाह ॥

अलं मज्झ गणेणंति, तुब्भे जीवह मे चिरं ।
किमेयं तोह पुट्ठोउ, दिव्वए मे गणो किल ॥

अलं पर्याप्तं मम गणेन यूयं मम पुण्योदयेन चिरं प्रभूतं कालं जीवथ । ततस्ते गच्छवर्त्तिनः साधवस्तस्यागीतार्थं ब्रुवते। किमेतत्त्वं ब्रूषे। यथा अलं मम गणेन। एवं तैः पृष्टःसन् सोऽगीतार्थो वक्ति। क्षमाश्रमणैः किल मे गणो दीयते। तत एवमुक्तं मयेति'।

अथवा उप्पियणद्वारस्यायमर्थः ॥

अहावि एव पुव्वंतु, गीयत्था उप्पियं तए ॥
आमदाहा मो एयस्स, संमतो एस अम्मवि ॥ १ ॥
गीयत्थो पव्वयत्थो य, संपुन्नसुहलक्खणो ॥
सम्मतो एस सव्वेसिं, साहू ते ठावितो गणे ॥ २ ॥

वाशब्दः प्रकारांतरद्योतने। पूर्वमस्थापिते गणधरे म्रियमाण आचार्यः किल ( उप्पियंतित्ति ) मुहुर्मुहुः श्वसिति तं च तथाभूतं दृष्ट्वा गीतार्थश्चिन्तयति आचार्यस्य वाक् नास्ति यया ब्रूते यथा अमुकं साधुं गणधरं स्थापयथ। मा तत् सा वाणी वयमेव गच्छवर्त्तिनः साधून् भणामो यथाचार्यैरमुकोगणधरपदे संदिष्ट इति। तथाचोपायं करिष्यामो यथा गच्छसाधूनामकंपनीयो भवति। एवं चिन्तयित्वा गच्छसाधवः शृण्वंति । तथाब्रुवंते " आमदाहामोएयस्सत्ति । इच्छामः क्षमाश्रमणाश्च तस्यामुकस्य दास्यामो गणधरपदमस्माकमप्येष सम्मतो यत एष गीतार्थो वयस्थः संपूर्णानि शुभानि लक्षणानि यस्याऽसौ स संपूर्णशुभलक्षणस्तथा एष सर्वेषां साधूनां संमतस्ततस्ते त्वया गणे स्थापितः।एवमेतौ द्वौ प्रकारा बुप्पियणद्वारेण व्याख्यातौ । एतौ द्वावपि जनौ यदि -पूर्वमाचार्येण समीक्षितौ यथानर्हाविति तदा न कश्चिदाचार्याणामसमीक्षितदोषः । गतमुप्पियणद्वारम् ॥

अधुना भीतसदेशद्वारमाह॥

असमाहियमरणं वे, करेमि जइ मे गणं न देसि ।
इति गीतेउ गीते, संदिसए गुरु तओ भीओ ॥

कश्चिदगीतार्थः पापीयान् प्रत्यासन्नमरणमाचार्यमवगम्य ब्रूते । यदि मे मह्यं गणं न ददासि ततस्तेऽसमाहितमरणं तथा करो"भिवर्त्तमानसामीप्ये वर्तमानवद्वे"ति वचनात् प्राकृतत्वाद्भविष्यति । वर्त्तमाना ततोऽयमर्थः । करिष्यामि यथा दीर्घ कालं संसारे भ्रमसि तत एवमुक्ते तस्य भीत आचार्यो गीतो गीतार्थो देशकालपुरुषौचित्यवेदनात् गीतार्थान् स दिशति यथैतस्मै मया गणो दत्त इति गीतार्थाश्च विदितकारणाब्रुवते।

आमंति वोत्तुं गीयत्था, जाणंताकरणं तमु ।
कयंहवं तुनिज्जुहे, अतिसीसेय संवसे ॥

आमं इच्छाम इति उक्त्वा गीतार्थास्तत्करणं जानंतः कृतार्थे निर्यापिते आचार्ये तं दुष्टाभिप्रायं निर्यूहंति निष्काशयंति । एवमेषोऽनर्होभवति । अथातिशेषेऽतिशयज्ञानी जानातीति यथा सांप्रतमेष निर्दोषीभूतः स वा तस्मात् स्थानात् गुरुजनसमक्षं प्रतिक्रांतस्ततः संवास्यते ॥ गतं भीतसंदिसणद्वारम् ॥

इदानीमदेशिकद्वारमाह ॥

अरिहोवि अणरीहो, होइ जो उ तेसिमदेसितो ॥
तुल्लदेसीव फरुसो, महुरोव असंगहो ॥

एक आचार्यस्तस्य षट् कुरुकाः । तेषां मध्ये एक आचार्येण गणधरपदे समीहितोऽन्ये चाचार्यस्य शिष्याः सिंधुदेशादिषु विहरंति । ते सिन्ध्वादिषु विहृत्याऽचार्यसमीपमागताः । एकं कुरुकमाचार्यसमीहितं मुक्त्वा अन्ये सर्वे कुरुकाः केचित् कालगताः । केचित्प्रतिभग्ना एवं सकुरुकः कुरुकदेशोद्भवस्तेषां सैन्धवादीनामनर्हो जातो येन ते तस्य भिन्नदेशिकत्वादुल्लापनं परित्यजंति । अक्षरयोजनात्वेवमर्होऽप्यनर्हो भवति । यस्तेषां तत्कालभाविनां साधूनामदेशिको भिन्नदेशिको यथा सैन्धवादीनां कुरुक इति । गतमदेशिकद्वारम् ॥

अधुना परुषद्वारमाह ॥ ( तुल्लदेसीवफरुसो ) तुल्यदेशीयः पूर्वसमीहितो गणधरपदे स पश्चात्परुषभावो जातः परुषत्वाच्च प्रतिचोद्यमान आक्रोशति आक्रोशांश्चासहमानानामुत्संखलादिकं कुर्वन् गच्छभेदं करोति। एवमेष पश्चादनर्हः । संप्रति ( अत्थियाइं अभे समुक्कसणारिहे ) इत्यस्यार्थं विभावयिषुः संग्रहद्वारमाह (महुरो व असंगहो) यः पूर्वं समीहितः स सत्यपि मधुरत्वे असंग्रहो न संग्रहशीलः अन्यस्तु संग्रहशीलः स समुत्कर्ष्यते नेतर इति । सांप्रतमस्मिन्नेवार्थे वाचकनिष्पादकद्वारमाह ।

वायंतगनिप्फायग, चउरोभंगाउ पढमो।
गच्छे तइओउ होइ, सुष्णो ओवेण वा वाएइ ॥
वाचको निष्पादक इति पदद्वयसंयोगतश्चत्वारो भंगास्तद्यथा । वाचयत्यपि निष्पादयत्यपीति प्रथमः १ वाचयति न निष्पादयति द्वितीयः २ न वाचयति निष्पादयाति तृतीयः ३ न वाचयति न निष्पादयति चतुर्थः ४ अत्र सत्यपि पूर्वसमीहिते यः प्रथमभंगवर्ती संस्थाप्यते नेतरो द्वितीयादिभंगवर्ती । तथाचाह । प्रथमको ग्राह्यः द्वितीभङ्गको न स्थाप्योऽनिष्पादकत्वात् । तृतीयस्तु गृन्यो वाचनाया अभावे निष्पादकत्वायोगात् । यदि वा आत्मना न वाचयति अन्येन वाचयति । तदा सोऽपि योग्यः । चतुर्भंगिकस्तु सर्वथाऽनर्ह एव । सांप्रतमधिकृत पदार्थेऽन्यशिष्यद्वारमाह ॥
असतीव अप्पसीसं, ठवेंति गणम्मि जाव निम्मातो ।
एसो चेव अणरिहो, अहवा विइमो ससिस्सोवि ॥
आचार्याः कालं कर्तुकामा आत्मीयाः शिष्याः सर्वेऽप्यनिर्माता इति तेषां मध्ये गणधरपदयोग्ये एकस्मिन्नप्यसति अन्यस्य शिष्यं प्रातीच्छिकं गणे स्थापयंति च यावन्मम शिष्यो निर्मातो निष्पन्नो भवति तावत्त्वं गणधरः । निर्माते सति त्वया गणधरपदं निक्षेप्तव्यं । यदि न निक्षिपति ततश्छेदःपरिहारः सप्तरात्रं वा तपः प्रायश्चित्तम् । एष समीक्षितोऽप्यनर्हो जातः । अथवाऽयं स्वशिष्योऽप्यनर्हस्तमेवाह ।
जो अणुमतो वहूणं, गणहरअवियतो दुस्समुक्कठो ।
दोसा अणिक्खिवंते, सेसा दोसं च पावेंति ॥
आचार्यैःकालं कुर्वद्भिर्ज्ञातो य एष मम शिष्यः सूत्रतोऽर्थतश्च निर्म्मात एतस्मादयं बहुभिर्गुणैर्गणधरगुणैरभ्यधिको भविष्यति । केवलमिदानीमनिर्मातस्ततो योऽसौ निर्म्मातः स आचार्यैरुच्यते । यावदेनं त्वं निर्मापयसि । तावत्त्वं गणधरः।एतस्मिंस्तु निर्म्मापिते त्वया गणधरपदं निक्षेप्तव्यम् । यत एष तव पार्श्वाद्बहुभिर्गुणैर्गच्छस्य प्रवचनस्य चोपग्रहकारी भविष्यति।तेनतथा प्रतिपन्नम्।आचार्य्यः कालगतः सच तेन निर्मापितो जातः समस्तस्याऽपि संघस्य प्रीतिकरः ततोयस्तेन निर्मापितो जातोऽनुमतो बहूनां स गणधरः स्थापनीयो यस्त्ववियत्तोऽप्रीतिकरः पूर्वं स्थापितः स दुस्समुत्कृष्ट इति वक्तव्यो निक्षिप गणधरपदमेवमुक्तो यदि न निक्षिपति तत स्तस्मिन्ननिक्षिपति दोषाश्छेदं परिहारं सप्तरात्रं वा तपः प्राप्नोतीति भावः । येऽपि च शेषास्तं भजंते तेऽपि दोषं प्राप्नुवन्ति छेदं परिहारं सप्तरात्रं वा तेऽपि प्राप्नुवंतीत्यर्थः । यदेतद्भणितमेतत्प्रसंगागतमयं पुनः स्फुटसूत्रेण निपातः ॥
अब्भुज्जयमेगयरं, वयमियकामंमि होइ सुत्तं तु ।
तेवेंति कुणसुएक्कं, गीयं पच्छा जहिच्छा ते ॥
आचार्येण कोऽपि स्वशिष्यः समीहितो यथाऽयमाचार्यपदयोग्य इति ततो गीतार्थाः संदिष्टा, एष सुमुत्कर्षयितव्यः सच कालगते आचार्यं ब्रूते । अहमभ्युद्यतविहारं जनकल्पादिकमभ्युद्यतमरणं वा प्रतिपत्स्ये तस्मिन्नभ्युद्यतमेकतरं विहारं मरणं । वाच्यवशात्पुमनसि भवति निपतति सूत्रम् । अन्थिया इत्थं अषे केइ समुक्कसणारिहे से समुक्कसियव्वे नत्थि याइं च केइ अन्ने समुक्कसणारिहे संचेव समुक्कसियव्वे । तस्मिन्नभ्युद्यतस्यैकतरं व्यवसातुकामे भास्ति चेदत्र गच्छेऽन्यः कश्चित्समुत्कर्षणार्हस्तर्हि स समुत्कर्षयितव्यो नास्ति चेदत्र कश्चिदन्यः समुत्कर्षणार्हस्ततः स एव समुत्कर्षयितव्यः। कथमिति चेदुच्यते । गीतार्थो अभ्यर्थनपुरस्सरं ब्रुवते । यूयं गणधरपदं परिपालयत। एकमस्माकं कंचन गीतं गीतार्थं कुरुत निर्मापयत ततः पश्चात्तस्मिन्निर्मापिते ते भवतां यदिष्टं यत्प्रतिभासते तत्कुरुतेतिभावः । अत्रेच्छाद्वारावसरः । एवमुक्ते तेन गणधरपदं प्रतिपाद्य कश्चनाप्येको निर्म्मापितः । पश्चात्तस्य चित्तमजायत । यथा अभ्युद्यतविहारात् गच्छपरिपालनं विपुलतरं निर्जराद्वारम् तस्मात्परिपालयाम्यहमेव गच्छमिति । तथाचाह ॥
निम्माऊण णेगइमंपि, मे निज्जरायदारं तु ।
निक्खिव निक्खिवामी, इत्थं इतरे उ खुब्भत्ति ॥
स गणधरपदे स्थापित एकं कंचनापि निर्म्माप्येदं चित्तमकार्षीत् इदमपि गच्छपरिपालनं महत् निर्जराया द्वारं।एवं व्यवसिते तस्मिन् गच्छे गीतार्था ब्रुवते निक्षिप गणधरपदं स प्राह। न निक्षिपामि किंस्विच्छामि गच्छं परिपालयितुमेवमुक्ते इतरे गच्छगीतार्थाः क्षुभ्यंति ते च क्षुभ्यंतो यद्ब्रुवते तदाह ।
दुस्सहुकट्ठं निक्खिव, भणंति गुरुगा अणुट्ठिहं तेय ।
एमेव अन्ने सीसे, निक्खिवणा गाहिते नवरं ॥
पूर्वं तव नेप्सितं गणधारणं पश्चादिदानीं यद्यपि रुचिस्तथापि नत्वसमर्थ्यं रोचसे दुःसमुत्कृष्टं खलु तव गणधरपदं । तस्मान्निक्षिपेति एवं भणति गच्छसाधुवर्गे प्रायश्चित्तं चत्वारो गुरुकाः ( अणुट्ठिहंतेयमेवे )त्यादि योऽसौ प्रातीच्छिकः स्थापितः स चेत् यावदद्यापि न निर्म्मापयति कमपि शिष्यं तावद्यदि गच्छसाधवो भाषंते निक्षिप त्वं गणधरपदमिति तदा तेषां तथा भाषमाणानां प्रायश्चित्तं चत्वारो गुरुकाः । अथ तस्मिन्नन्यशिष्ये निर्मापयितुमिष्यमाणे अनुतिष्ठति अनिर्मापिते गणधरपदनिक्षेपणं करोति तदा तस्मिन्नन्यशिष्ये अनुतिष्ठति गणधरत्वं निक्षिपतः प्रातिच्छिकस्य प्रायश्चित्तमेव चत्वारो गुरुका इत्यर्थः।यथा गीतार्थत्वेन गच्छसाधवः सेविष्यंते तन्निमित्तमपि तस्य प्रायश्चित्त नवरं केवलं तस्मिन्नन्यशिष्ये ग्राहिते निर्म्मापिते गणधरपदनिक्षेपणा कर्तव्या । नच तत्र तां कुर्वतस्तस्य च्छेदः परिहारः सप्तरात्रं वा तपः । गतमिच्छाद्वारम् ॥
संप्रति यथा कल्पद्वारावसरस्तत्र ये गच्छसाधवस्ते स्वगच्छसाधुं प्रातिच्छिकं च पूर्वस्थापितं यथा कल्पेनाऽभ्युत्तिष्ठंति यथाकल्पानभ्युत्थानमेवाह ॥
आवस्सगसुत्तत्थे, भत्ते आलोयणाउवट्ठाणे ।
पडिलेहा किर्तिकम्मं, मत्तगसंथारगतिगं च ॥
आवश्यके क्रियमाणो यो विनयस्तस्य आचार्यस्य कर्तव्यस्तं च न कुर्वंति सूत्रमर्थं वा तस्य समीपे न गृह्णंते । ( भत्तेत्ति ) आचार्य्यप्रायोग्यं तस्य भक्तं न प्रयच्छंति। ( आलोयणत्ति ) तस्य पुरतो नालोचयंति ( उवट्ठाणत्ति ) आचार्यवस्त्रकंबलपात्रादिप्रत्युपेक्षणाय नोपतिष्ठंते । नापि कृतिकर्म वंदनकमन्यद्वा कुर्वंति नापि मात्रकत्रिकं तस्य ढौकयति तिस्रः संस्तारकभूमयस्ता अपि न प्रयच्छंति । तेषामपि यथा कल्पमनभ्युत्तिष्ठतां प्रायश्चित्तं छेदः परिहारः सप्तरात्रं वा तप इति । व्य. २ खं. ४ उ. ॥
आचार्ये मृते तत् क्षणमेवान्यः स्थाप्यते॥तथाच व्यवहारसूत्रं

णिग्गंथस्स णं णवरूहरतरुणगस्स आयरिय उवज्झाए विसंभेज्जा णो से कप्पइ । अणायरियउवज्झायस्स होंतए कप्पइ । से पुव्व आयरियं उद्दिसावित्ता ततोपच्छा उवज्झायं सेकिमाहु भंते ! दुसंगहिए समणे णिग्गंथे तंजहा आयरियेणं उवज्झायेणय ॥ ११ ॥ व्य. सू. ३ उ. ॥

निर्ग्रन्थस्य णमिति वाक्यालङ्कारे । नवरूहरतरुणस्य वा आचार्यसहित उपाध्याय आचार्योपाध्यायस्तस्याचार्योपाध्यायस्येत्यर्थः । विष्कंभयात् म्रियेत । ततः सेतस्य नवरूहरतरुणस्याचार्योपाध्यायस्य सतो भवितुं न कल्पते वर्तितुं किन्तु पूर्वमाचार्यमुद्देशासंस्थापयित्वा ततः पश्चादुपाध्यायमुद्देशाअप्येवमाचार्योपाध्यायस्य सतो भवितुं कल्पते । सेकिमाहु ( भन्ते ! इति ) से शब्दोऽय शब्दार्थः । अथ भदन्त ! किं कस्मात्कारणात् भगवन्त एवमाहुः । सूरिराह । द्वाभ्यामाचार्योपाध्यायाभ्यां संगृहीतो द्विसंग्रहीतः श्रमणो निर्ग्रन्थस्सदा भवति तद्यथा आचार्योपाध्यायेन च एष सूत्रसंक्षेपार्थः ॥ ११ ॥

( २ ) आचार्य्ये मृते निर्ग्रन्थीनामप्यन्य आचार्यः स्थाप्यते ॥ तथा च व्यवहारसूत्रं ॥

निग्गन्थीएणं णवरूहरतरुणियाए आयरियउवज्झाए पवित्तिणियं विसंभेज्जा णो से कप्पइ अणायरिय अणुवज्झाइयताए अपवत्तिणिएय होंतए कप्पइ से पुव्वं आयरियं तु दिसाविता तओ पच्छापातिओ उवज्झायं ततोपच्छापावित्तिणियं से किमाहु भंतेति संगाहिया समणी निग्गंथी । तंजहा । आयरिएणं उवज्झाएणं पवित्तिणिएय ॥ १२॥ व्य. सू. ३ उ. ॥

निग्गन्थीएणमिति पूर्ववत् नवरूहरतरुणयाः आचार्योपाध्यायस्समासोऽत्रपूर्ववत् । आचार्योपाध्यायमेतत्प्रवर्तिनीच विष्कंभयात् म्रियेत । ततस्सेतस्या अनाचार्योपाध्यायाया उपलक्षणमेतत् प्रवर्तिनीरहितायाश्च नोकल्पते भवितुं । किन्तु पूर्वमाचार्यमुद्दिश्यते । ततः पश्चादुपाध्यायं । ततः पश्चात् प्रवर्तिनीं । कथा भवितुं कल्पते ( से किमाहु ) इत्यादि अथ भदन्त ! किंकस्मात् कारणात् भगवन्त एवमाहुः । सूरिराह । त्रिभिः संग्रहिता श्रमणी निर्ग्रन्थी सदा भवति तद्यथा आचार्येणोपाध्यायेन प्रवर्तिन्या च एष सूत्रसंक्षेपार्थः ।

( २२ ) आचार्य्येऽवधाविते आचार्य्यान्तरस्थापनं ॥

पूर्वाचार्योऽवधावेत्तर्हि नवः स्थाप्यः ॥ तथा च व्यवहारसूत्रं

आयरिय उवज्झाए उहायमाणे अन्नयरं वएज्जा अज्जो मएणं उदायंसि समणंसि अयं समुक्कसियव्वे । जाव मव्वेसिं तेसिं तप्पतियं छेए वा परिहारे वा ॥ १३ ॥ व्य. सू. ४ उ. ॥

व्याख्या । आचार्य उपाध्यायो वा मोहेन रोगेण वा अवधावन ( मन्यतर ) मुपाध्यायादिकानां गीतार्थपंचमानां पुरुषाणामन्यतमं वदेत् यावत्करणादेवं परिपूर्णपाठो द्रष्टव्यः ॥

अज्जो ममं सिणं उहावियंसि समाणंसि अयं समुक्कसियव्वो सेय समुक्कसणारिहे समुक्कसियव्वेसिया सेयनो समुक्कसणारिहे नो समुक्कसियव्वे सिया अन्थियाइत्थ अन्ने केइ समुक्कसणारिहे से समुक्कसियव्वे नत्थियाइत्थ अन्ने केइ समुक्कसणारिहे से चेव समुक्कसियव्वे तंसिचणं समुक्किट्ठंसि परोवएज्जा दुस्समुक्किट्ठंते अज्जोनिक्खिवाहि तस्स णं निक्खिवमाणस्स नत्थि केइ छेदे परिहारे वा ॥

अस्य व्याख्या प्राग्वत् व्य. सू. ४ उ. ॥

अधुना निर्युक्तिविस्तरः । केन पुनः कारणेनाऽसावधावतीति वदत आह ॥

मोहेण वा रोगेण, ववहाणं भेसयं पयत्तेण ॥
धम्मकहाए निमित्तेणं, अणाहसालागवेसणया ॥

अवधावनं मोहेन वा कामोद्रेकरूपेण रोगेण वा । तत्र मोहविषया यतना प्राक् तृतीयोद्देशकेऽभिहिता । यदि रोगेण ततो नाधावितव्यं । किंतु प्रयत्नेन भेषजं दातव्यम ॥ तच्च धर्मकथानिमित्तेन चोत्पादनीयं । तथाऽप्यलाभे अनाथशालातो गवेषणा भैषजस्य कर्तव्येति निर्युक्तिगाथायाः संक्षेपार्थः ॥ एतामेव संप्रति भाष्यकृद्विवरीषुरिदमाह ।

मोहेण पुव्वभणियं, रोगेण करेंति माएजयणाए ॥
आयरियकुलगणे वा, संघो व कमेण पुव्वुत्तं ॥

यदि मोहेनावधावनं कर्तुमीहते तदा यत्पूर्वं तृतीयोद्देशके मोहचिकित्सा विषयं भणितं तत्कर्तव्यमथ रोगेण तदाऽनयावक्ष्यमाणया प्रथमतः ततःप्रासुकेन तदलाभे वाऽप्रासुकेनापीत्येवरूपया यतनया पूर्वोक्तं भैषज्यं प्रयत्नेन संपादनीयमित्यादिरूपं कुर्वन्ति केते कुर्वंति । तत आचार्य्यकुलं गणसंघोवा कथमित्याह । क्रमेण परिपाट्या तामेव परिपाटीं कालनियमनपूर्विकामाह ॥

छम्मासे आयरियकुलंतु, संवच्छराणि तिन्नि भवे ॥
संवच्छरं गणो खलु, जावज्जीवं भवे संघो ॥

प्रथमत आचार्य्यः षण्मासान् यावत् चिकित्सां कारयति तथाप्यप्रगुणीभूतं तं कुलस्य समर्पयति ततः कुलं त्रीन्संवत्सरान् यावत् चिकित्सकं भवति । तत्राऽप्यप्रगुणीभवंतं गणस्य तं समर्पयति । तदनंतरं संवत्सरं यावत् गणः खलु चिकित्सको भवति । एतच्चोक्तं भक्तविवेकं कर्तुमशक्नुवतो यः पुनर्भक्तविवेकं कर्तुं शक्नोति । तेन प्रथमतोऽष्टादशमासान् चिकित्सा कारयितव्या । विरतिसहितस्य पुनः संसारे दुःप्रापकत्वात् तदनंतरं चेत्प्रगुणीभवति । तत स्सुन्दरमथ न भवति । तर्हि भक्तविवेकः कर्तव्यः । अत्रैव देशांतरमाह ॥

अहवा विइयादेसा, गुरुयमत्ते भिक्खुमादिते गच्छं ।
जतिय वारसवासा, तिछक्कमासो असुद्धेणं ॥

अथवा द्वितीय आदेशो गुरौ च भे भिक्षादौ यथाक्रमं चिकित्सां कारयंति यावज्जीवं द्वादशवर्षाणि त्रिषट्कमष्टादशमासान् कथमित्याह अशुद्धेनापिशब्दोऽत्र लुप्तोद्रष्टव्यः प्रथमतः शुद्धेन तदभावे चाशुद्धेनापि । तदनन्तरं भिक्षादिना भक्तविवेकः कर्तव्यः । गुरुस्सुगच्छप्रवर्तकइति तस्य यावज्जीवं चिकित्सा तत्र प्रथमोद्देशेन च विवेकं कर्तुं शक्नुवंतं प्रत्यष्टादशमासान् ॥ कश्चिकित्साविधिस्तमभिधित्सुराह ॥

पयत्तेण ओसहं से, करेंति सुद्धेण उग्गमादीहिं ।
पहाणीए अलंभे, धम्मकहाहिं निमित्तेहिं ॥

प्रथमतः प्रयत्नेनोद्गमादिभिः शुद्धेन वस्तुजातेन (से) तस्य औषधं कुर्वंति । तदलाभे पंचपरिहान्या यावच्चतुर्गुरुकेनाप्यशुद्धे

दवसेयस्तच्च कथितमेव तत्र वैरस्वामि नमालंबनं कुर्वाणा इदं नेच्छंत मदधियः । किमित्याह ॥

ओहावणं परेसिं, सतित्थ उब्जावणं च वच्छल्लं ।
न गणंति गणे माणो, पुव्विच्चिअ पुष्फमहिमं च ॥ १६ ॥

टी० ॥ अपभ्राजनां लांछनं परेषां शाक्यानां स्वतीर्थोद्भावनां च दिव्यकरणेन तथा वात्सल्यं श्रावकाणां एतन्न गणयंत्यालंबनानि गणयतः संतः तथा पुव्वोच्चियपुष्फमहिमं च गणयंतीति पूर्वावाचेतैः प्राग्गृहीतैः पुष्पैः कुसुमैर्महिमा यात्रा तामिति गाथार्थः १६ ॥ चैत्यभक्तिद्वार गतं ॥ अधुनार्यिकालाभद्वारम् । तत्रेयं गाथा ॥

अज्जियलाभे गिद्धा, सएणलाभेणजे असंतुट्ठा ।
भिक्खायरिया भग्गा, अन्नियपुत्तं ववइसंति ॥

अन्निअपुत्तायरिओ, भत्तं पाणं च पुप्फचूलाए ।
उवणीअं भुंजंतो,ते णवभावे अंतगडो ॥

टी० अक्षरार्थो निगदसिद्धः । भावार्थस्तु कथानकादवसेयः । तच्च अन्विकापुत्राचार्यशब्दे । तेन मंदमतय इदमालंबनं कुर्वतः इदमपरं नेच्छंत ॥ किमत आह ॥

गयसीसगणं ओमे, भिक्खायरिआ अपच्चलं थेरं ।
न गणंति सहो विसढो, अज्जिअलाभं गवेसेज्जा ॥

टी० गतः शिष्यगणोऽस्येति समासस्तं ओमे दुर्भिक्षे भिक्षाचर्य्यायां अप्पच्चलो असमर्थः भिक्षाचर्य्यायां अपच्चल असमर्थस्तं स्थविरं वृद्धं एवं गुणयुक्तं न गणयंति नालोचयंति सहा विसढा समर्थाः अपि शब्दात् सहायादिगुणयुक्तत्वेऽपि शठा मायाविन आर्यिकालाभं गवेषयंतीति अन्विषत इति गाथार्थः १९ ॥

गतमार्यिकालाभद्वारं विकृतिद्वारमधुना तत्रेयं गाथा. ।

भत्तं वा पाणं वा, भुत्तूणं लावलाविअमि विसुद्धं ।
तोवज्जपरिच्छन्ना, उदायणरिसिव्व वइसंती ॥ २० ॥

टी० ॥ भक्तं वा ओदनादि पानं वा द्राक्षपानादि भुक्त्वा उपभुज्य (लावलाविययति) लोपेत्तं अशुद्धं विगतिसंपर्कदोषात् तथाच निः कारणे प्रतिषिद्ध एव विगतिपरिभोगः ॥ उक्तंच ॥

विगतिं विगति भीया, विगतिगयं जो उ भुंजाते साहू ।
विगति विगतिसहावा, विगति विगतिं वलानेति ॥

ततः केनचित्साधुना चोदिताः संतोऽवद्यप्रतिछन्नाः पापप्रच्छादिता उदायनर्षिव्यपदेशत्यालंबनतयेति गाथार्थः ॥ २० ॥
आव. ३ अ. ॥

कथाचेयम् ।

आसीदुदायनो नाम, राजा वीतभयाधिपः ।
राज्ये निवेश्य जामेयं, प्रव्रज्यां स्वयमग्रहीत् ॥ १ ॥
भिक्षाहारस्य तस्यानूत्, व्याधिर्वैद्यैरभाणि सः ।
केवलं दधि भुंजीथा, येन व्याधिर्न वर्द्धते ॥ २ ॥
राजर्षिस्तु व्रजंस्तस्या, तत्रयत्सुलभं दधि ।
सोऽगाद्वीतभयेऽन्येद्यु, स्तत्र तज्जामिभूर्नृपः ॥ ३ ॥
ऊचेऽमात्यैः स्वराज्यार्थी, जिनसर्वपरीषहैः ।
राजर्षिराजगामात्र, राज्यं दास्यामि सोऽवदत् ॥ ४ ॥
उक्तस्तैर्नार्प्यते राज्यं, चिरादभ्युद्ग्राहितोऽथ सः ।
पशुपाल्यैकया साधोः, सविषं दध्यदापयत् ॥ ५ ॥
दुष्टाः पुनरमात्यास्ते, सर्वत्राऽप्यादिशन् पुरे ।
राजर्षेरस्य युष्माभि, र्दातव्यं सविषं दधि ॥ ६ ॥
हत्वा तद्देवताभाणी, न्महर्षे ! सविषं दधि ।
त्यजेतस्य क्रमेतेन, पुनर्व्याधिरवर्द्धत ॥ ७ ॥
पुनर्दध्याददे सोऽथ, पुनर्दैव्यहरद्विषं ।
एवं तत्पृष्ठतो लग्ना, देवता संचचार सा ॥ ८ ॥
तस्याः प्रमादतोऽन्येद्यु, र्बुभुजे सविषं दधि ।
तत्तापात्तः शुभध्यानः, केवलं प्राप्य निर्वृतः ॥ ९ ॥
तस्य शय्यातरः कुंभ, कारो देवतया तदा ।
सिनपल्ल्यां कृतो राजा, राजर्षेर्भक्तिमानिति ॥ १० ॥
कुंभकारकृतमिति, तन्नाम्नाऽजनि तत्पुरं ।
पांशुवृष्ट्या पुनर्वीत, भयं सर्वं स्थलीकृतं ॥ ११ ॥
ऋषिहत्याकरमिति, कोपाद्देवतया तदा ।
कारणाद्दधिभुग्युक्तः, कर्त्तमालंबनं न सः ॥ १२ ॥ आ. क. ॥

सीअलसुक्खाणुचिअं, वएसु विगईगएण जावंतं ॥
दट्ठा वि भणंति सढा, किमासि उदायणो न मुणी ॥ २१ ॥

टी० । शीतलं च तद्रूक्षं च शीतलरुक्षं अन्नमिति गम्यते । तस्याऽननुचितः अननुरूपः नरेंद्रप्रव्रजितत्वाद्रोगाभिभूतत्वाच्च शीतलरुक्षानुचितस्तं व्रजेषु गोकुलेषु विगतिंगतेन विगतिं यातेन यापयंतं ( दट्ठाविंत्ति ) समर्था अपि भणंति शठाः किमासीत् ( उदायणो न मुनिः ) मुनिरेव विगत्ति परिभोगे सत्यपि तस्माद्विदोष एवायमिति गाथार्थः ॥ ७ ॥ एवं नित्यवासादिषु मंदधर्माः संगमस्थविरादीन्यालंबनान्याश्रित्य सीदंति । अन्ये पुनः सूत्रादीन्येवाधिकृत्य तथाचाह ॥ आव० ॥

सुत्तत्थबालवुड्ढे, असहदव्वाइआवईओ अ ।
निस्साणपयं काउं, सत्यरमाणा विसीअंति ॥ २२ ॥

सूत्रश्चार्थश्च बालश्च वृद्धश्च सूत्रार्थबालवृद्धाः । तान् तथा असहश्च द्रव्याद्यापदश्च असहद्रव्याद्यापदस्तांश्च निश्राणां आलंबनानां पदं कृत्वा संस्तरंतोऽपि संयमानुपरोधेन वर्तमाना अभिसंतः सीदंति । एतदुक्तं भवति । सूत्रं निश्रापदं कृत्वा यथाहं पठामि तावत्किं ममाऽन्येन एवमर्थं निश्रापदं कृत्वा शृणोमि तावत् एवं बालत्वं वृद्धत्वं असहत्वं असमर्थत्वमित्यर्थः । एवं द्रव्यापदं दुर्लभमिदं द्रव्यं, तथा क्षेत्रापदं क्षुल्लकमिदं क्षेत्रं, कालापदं दुर्भिक्षं वर्त्तते, तथा भावापदं ग्लानोऽहमित्यादि, निश्रापदं कृत्वा संस्तरंतोपि विशीदंत्यल्पसत्वा इति गाथार्थः ॥ २२ ॥

आलंबणाण लोगो, भरिओ जीवस्स अजउकामस्स ॥
जं जं पिच्छइ लोए, तं तं आलंबणं कुणइ ॥ २३ ॥

टी० ॥ आलंबनानां प्राङ्निरूपितशब्दार्थानां लोको मनुष्यलोको भृतः पूर्णो जीवस्य ( अजतुकामस्सत्ति ) अयतितुकामस्य तथा चायतितुकामो यद्यत्पश्यति लोके नित्यवासादि

तत्तदालंबनं करोतीति गाथार्थः ॥ २३ ॥

किंच द्विविधाऊर्वति प्राणिनो मंदश्रद्धास्तीव्रश्रद्धाश्च तत्रान्यत् मंदश्रद्धानामालम्बनमन्यच्च तीव्रश्रद्धानामित्याह च ॥

जे जत्थ जयाजइ्अ, बहुस्सुआ चरणकरणपब्भट्टा ॥
भट्टा जं ते समायरंती, आलंवणं मंदसद्धाणं ॥ २४ ॥

टी० ॥ ये केचन साधवो यत्र ग्रामनगरादौ यदा यस्मिन् काले सुखमदुःखमादौ ( यद्यत्ति ) यदा दुर्भिक्षादौ बहुश्रुताचरणकरणप्रभ्रष्टाः संतः यत्ते समाचरंति । पार्श्वस्थादिरूपं तदालंबनं मंदश्रद्धानां भवतीति वाक्यशेषः । तथा ह्याचार्यो मथुरामंगुः सुभिक्षेऽप्याहारादिप्रतिबंधापरित्यागात्पार्श्वस्थतामभजत्तदवमपि नूनं जिनैर्धर्मो दृष्ट एवेति गाथाभिप्रायः ॥ २४ ॥

जे जत्थ जया जइअ, बहुस्सुआ चरणकरणसंपत्ता ॥
जं ते समायरंती, आलंवणं तिव्वसद्धाणं ॥ २५ ॥

ये केचन यत्र ग्रामनगरादौ यदा सुखमदुःखमादौ (जइयत्ति) यदा च दुर्भिक्षादौ बहुश्रुताश्चरणकरणसंपन्नाः यत्ते स्माचरंते त्रि(गु)प्रतिमा तदालम्बनं तीव्रश्रद्धानां भवतीति गाथार्थः ॥ आव. ३ अ० ॥

आलंबनं रज्ज्वादि तद्वदापत्तार्तादिनिस्तारकत्वादालम्बनम् आलम्बनसदृशे, च भ० श. १८ उ० २ ( आहारभूए आलंबणे ) आलंबनं वस्त्रादिकमिव । ज्ञा०अ० ७ ॥ ( मेढीआलम्बणं खंभं ) आलंबनं हस्ताद्याधारः तत्समानः यथा हस्ताद्याधारो गर्तादौ पतंतं जंतुं धारयति तथाचार्योऽपि भवगर्ते पतंतं गच्छं धारयतीत्यर्थः ग० अधि० १ ( मेढीयपमाणं आहारे आलंबणे ) आलंबनं रज्ज्वादि तद्वदापत्तर्तादिनिस्तारकत्वादालम्बनम्. राज. । आलम्ब्यत इत्यालम्बनम् भावेऽनट्प्रत्ययः कर्म० ॥ अवष्टम्भे यथा मंदशक्तिः कश्चित् नगरे परिभ्रमणाय यष्टिमवलम्बते ततस्तदवष्टंभते । जातसामर्थ्यविशेषः सन् तान् प्राणापानादिपुद्गलान् विसृजतीति. कर्म. प्र. ॥ गृहणशब्दे निर्ग्रन्थीनां ग्रहणं वक्ष्यते ॥

आलंबणजोग-आलंबणयोग- पु० आलम्बनवाच्ये पदार्थे अर्हत्स्वरूपे उपयोगस्यैकतानत्वम् । एतस्य वक्तव्यता योगशब्दे अष्ट० ॥ सालम्बनो निरालम्बनश्च योगः परो द्विधा ज्ञेयः । सह आलंबनेन चक्षुरादिज्ञानविषयेण प्रतिमादिना वर्तत इति सालम्बनम् षो० वृ० १३ । योगभेदेच अष्ट० ।

आलंबणभूय- आलम्बनभूत त्रि० आलम्बनसदृशे, ( आलंबणभूए ) आलंबनं रज्ज्वादि तद्वदापत्तर्तादिनिस्तारकत्वादालंबनम् । ज्ञा० अ १ ।

आलंबमाण- आलम्बमान त्रि० बाह्वादौ गृहीत्वा धारयति, देशतः करेण गृह्णाति च । वृ० ।

आलंबि ( न् ) आलम्बिन् त्रि० आ लवि णिनि आश्रयिणि, " गजाजिनालम्बिदुकूलधारिणा " । कुमा. । वाच० ॥

आलंबिय-आलम्बित त्रि० लवि क्तः धृते, गृहीते, च वाच० ।

आलंभ-आलम्भ पु० आ लभ घञ् नुम् संस्पर्शे १ हिंसने २ च वाच० ॥

आलंभिय-आलम्भिक-न० स्वनामख्याते नगरे, यत्र चुल्लशतको गृहपतिरासीत् स्थानांगे चुल्लशतकमधिकृत्य ( सवाल म्भिकाभिधाननगरनिवासी ) स्था० ठा. १ । (आलभियणयरं मज्झं मज्झेण णिग्गच्छइ ) भ० श. ११ उ. १२ ॥ आलम्भिकायां नगर्यां यत्प्ररूपितं तत्प्रतिपादक उद्देशकोऽप्यालंभिक इत्युच्यते । ततोऽसौ द्वादशः भगवत्या एकादशशतकस्य द्वादशे उद्देशे च ॥

आलंभिया-आलम्भिका-स्त्री० स्वनामख्यातायां नगर्याम् भ० श. ११ उ. १ ( ततो भयवं आलंभियं नयरीं गतो ) आ० म. । कल्प० ॥ आ० चू० ॥

अस्या वर्णको भगवत्याम् यथा ॥

तेणं कालेणं तेणं समएणं आलंभिया णामं णयरी होत्था वण्णओ संखवणे चेइए वण्णओ तत्थणं आलंभियाए णयरीए बहवे इसिभद्दपुत्तप्पामोक्खा समणोवासगा परिवसंति । अड्ढे जाव अपरिभूए अभिगयजीवाजीवा जाव विहरंति ॥ भ० श. ११ उ. ११ ।

आलत्त- आलप्त- त्रि० आभाषिते, ( आलत्ते वाहिते, ) आलप्तानाम आर्य ! किं तव वर्त्तते इत्येवमाभाषित इति. वृह. । ( सेवगपुरीसो उ कोइ आलत्तो ) आलप्तः संभाषित इति । व्य० भ. २ ॥ शब्दिते. ततश्चालप्ताः शब्दिता वा तूष्णिंभावं भजन्ते. । आचा. श्र. ६ उ. ४ । आलपने. न. (आलत्तमादिकज्जत्था ) आलप्तमालपनम्. व्य. उ. १० ।

आलद्ध. आलब्ध त्रि० आ लभ क्त संसृष्टे, संयुक्ते, स्पृष्टे, हिंसित, च.

आलप्प--आलाप्य--त्रि० आ. लप. कर्मणि. ण्यत्. कथनीये. णिच्. यत्. आभाष्ये. वाच० ।

आलवंत--आलपत्--त्रि० ईषद्वदति, ( आलंवते लवंते वा ) आलपति सति ईषद् वदति सति. उत्त अ. १ सकृल्पति, च. ( आलवित्तएवा ) आलपितुं सकृत् प्रति० । आलपनं कुर्वति, च ( आलवंताणं मुरयाणं नंदिमुइंगाणं ) मुरजमृदंगनंदिमृदंगानामालपनम्, । राज० । आ. चू. ।

आलय--आलय--पुं. आलीयतेऽस्मिन्.आ. ली. आधारे अच्. आधारे वाच० आश्रये, स्था० ठा. ३ स्था. ठा. २ ॥ जं० ॥ आवासे. ओघ० ॥ गृहे, तं.॥ स्थाने. विशे. ( हिमालयो नाम नगाधिराजः ) कुमा० तत्रामरालय मरालमरालकेशी नैष० नहि दुष्टात्मना मार्या निवसत्यालये चिरम्, रामा० ( आलयं देव शत्रूणां सुघोरं खाण्डवं वनम् ) भा.आ० प० । आलीयंते साधवोऽत्रेत्यालयः वृ० । वसतौ, स्था० ठा. ॥ आ. चू. । ( आलएणं विहारेणं) आलयो वसतिः आव.। अणुत्तरेण. आलएणं, आलयेन स्त्रीपश्वादिरहितवसतिसेवनेन कल्प० ॥ उपाश्रये, ॥

वृहत्कल्पे उपाश्रयस्यैकार्थिकानधिकृत्य ( उवस्सगपरिस्सगलिज्जा आलयवसधीनिसीहिया ठाणं, वृह० । शरीरे, च.
निसीहिगा सरीरगं वसही थंडिलं च भणंति। यतोनिसीहिया नाम आलयो वसही थंडिलं च सरीरस्स आलओ सरीरं जीवस्स आलयोत्ति ॥ आ. चू. ॥

॥ आलयवर्तिनि, च ( आलयविहारसमिओ ) आलयः सूचकत्वादालयवर्ती सकलकलंकविकलनिर्षदीत्यर्थः.प्र.अधि.३

भावे घञ् संश्लेषे, मर्य्यादायामव्ययी० लयपर्यन्ते. अव्य० वाच० ॥

**आलयगुण**–आलयगुण–पु० बहिश्चेष्टादौ, प्रतिलेखनादौ,उपशमगुणे च वृ० ॥

**आलयविन्नाण**–आलयविज्ञान–बौद्धपरिभाषिते क्षणिकविज्ञाने, आव० ॥

**आलयसामि ( न् )** आलयस्वामिन् पुं० साध्वाश्रयप्रभौ, ( सेज्जायरोत्ति भण्णति आलयस्वामी उ तस्स जो पिंडो ) आलयस्वामी तु साध्वाश्रयप्रभुरेव-पंचा० वृ० १७

**आलयसुध्धाइलिंगपरिसुध्द**– आलयशुध्दादिलिंगपरिशुध्द–पुं० आलयशुद्धादीनि वसतिनिर्दोषताप्रभृतीनि यानि लिङ्गानि सुविहितचिन्हानितैःपरिशुद्धोनिश्चितसुविहितभावोयः स आलयशुद्धादिलिङ्गपरिशुद्धःतस्मिन्. ( तम्हा जहोइयगुणो आलयसुद्धाइलिंगपरिसुद्धो ) पंचा० वृ० ११ ॥

**आलवण्ण**–आलवण्य–न० न लवण० न० त० अलवणस्यभावः ष्यञ् लवणरसाभिन्नत्वे नास्तिलवणं यत्र बहु० तत्त्ववा ष्य. ञ्-अलवणता-स्त्री० अलवणत्वंतु. न० लवणशून्यत्वे वाच० ।

**आलस**–आलस–त्रि० आलसति, ईषत्व्याप्रियते-अच्. क्रियामान्द्ये अलसस्यापत्यम विदा० अञ्-अलसापत्ये-पुं० स्त्री० यून्यपत्ये हरिता० फञ् आलसायनः तस्य यून्यपत्ये-पु० स्त्री० वाच० ।

**आलस्स**– आलस्य– न० अलसस्य भावः ष्यञ् अनुद्यमने उत्त० १ अ० ॥

औदासिन्ये प्रमादो यत्र आलस्यमौदासीन्यं च हेतषु आलस्यं च हेतुषु समाधिसाधनेष्वादौसीन्यं माध्यस्यं न तु पक्षपातः द्वा० द्वा.१६ ॥ आ० म० ॥

**आलाव**–आलाप–पु० आलप्-करणे घञ्-वाच० आङ ईषदर्थत्वादीषल्लपनमालापः स्था० ठा० ५ ईषद्भाषणे,ध० अधि० २ असकृत्संभाषणे, च ( आलावं वा संलावं वा ) आलापः संभाषणं संलापस्तदेव पुनः पुनः भ० श० ३ उ० १ ॥

आलावत्ति सकृज्जल्पं सलावंवत्तिमुहुर्मुहुर्जल्पं. भ० श० ५ उ० ४ ॥ ध० अधि० २ ॥ ईषत्प्रथमतया वा जल्पने, चतुर्भिश्च स्थानैर्निर्ग्रन्थस्य निर्ग्रन्थ्या सममालापे न दोषः ॥

तथाच स्थानाङ्गे स्था० ठा० ४ ॥

चउहिं ठाणेहिं णिग्गंथे णिग्गंथि आलवमाणे वा संलवमाणे वा णाइक्कमइ तं० पंथं पुच्छमाणे पंथं देसमाणे असणं वा पाणं खाइमं वा साइमं वा दलयमाणे दवावेमाणे वा ॥

स्था० टी० ( चउहीत्यादि) स्फुटं किंतु आलपन्नीषत्प्रथमतया वा जल्पन् संलपन् मिथो भाषणेन नातिक्रामति न लंघयति निर्ग्रंथाचारं ( एगो एगत्थिए सद्धिं नेव चिट्ठे न संलवे ) विशेषतः साध्व्या इत्येवं रूपं मार्गप्रश्नादीनां पुष्टालम्बनत्वादिति तत्र मार्गं पृच्छन् प्रश्नणीयसाधर्म्मिकगृहस्थपुरुषादीनामभावे हे आर्ये ! कोऽस्माकमितो गच्छतां मार्ग इत्यादिना क्रमेण मार्गं वा तस्यादेशयन् धर्मशीलेऽयं मार्गस्त इत्यादिना क्रमेण अशनादि चाददद्धर्मशीले ! गृहाणेदं अशनादीत्येवं तथा अशनादि दापयन् आर्ये ! दापयाम्येतत्तुभ्यं आगच्छेह गृहा

दावित्यादिविधिनेति ॥ प्रवादे–उच्चारणविधौ च– ( एसाल वेरुसव्वत्ते· ) एष ईदृश आलाप उच्चारणविधिः वृह० ( आलावेदेवदत्तादि किं भोत्ति किं देवदत्तेति. ) (अक्ष-याव नेए आलावसद्दो सुओ ) नि० चू० ॥

**आलावग**–आलापक–पुं. आ लाप. क. उच्चारणविधौ ( एवमिक्केक्के आलावगा भणियव्वा ) चत्तारि आलावगा, स्था० ठा. ६ ॥

**आलावण**–आलापन–न. आ लप णिच्. भावे ल्युट्. परस्परकथोपकथने, आभाषणे, आलापशब्देऽस्य प्रवृत्तिहेतुत्वमुक्तम् स्यादाभाषणमालाप इत्यमरः । स्वस्तिवाचेन,च ( मंगलालापनैर्होमैः ) रामा ० वाच ० । संभाषणे. वृ० । सकृत्संभाषणे आव. ॥ भाणने. ( जो लावेसज्जा असणस्स हेऊ ) आलापयेद् भाणयेत्. सूत्र श्रु. अ. ० ॥ आ लाप्यते आलापनं क्रियेत एभिरित्यालापनानि. रज्वादौ. भ ० श. ८ उ.९

**आलावणबंध**–आलापनबन्ध–पु.आलाप्यते आलीनं क्रियते एभिरिति आलापनानि रज्वादीनि तैर्बन्धस्तृणादीनामालापनबन्धः । बन्धभेदे. भ० श. ८ उ. ९ ।

तथाच भगवत्याम्.

सेकिंतं आलावणबंधे २ जण्णं तणभाराण वा कट्ठभाराण वा पत्तभाराण वा पलालभाराण वा वेल्लभाराण वा वेत्तलया वा गवरतरज्जुवीक्लकुशदब्भमाइएहिं आलावणबंधे समुप्पज्जइ । जहण्णेणं अंतोमुहुत्तं उक्कोसेणं संखेज्जं कालं । सेत्तं आलावणबंधे ॥

**आलि**-आलि–पु. वनस्पतिविशेष, । जी प्र. ३ ॥

आलीकदल्यौ वनस्पतिविशेषौ. ज्ञा०३ अ० ॥

**आलिंग**–आलिङ्ग– पुं० मुरजनामके, वाद्यविशेषे, राज०प्र. ३ आलिंगोमृन्मयो मुरजः जी०.३ प्र. उताडिज्जताणं आलिंगाणं, राज ० आ. चू. ॥ ( आलिंग पुक्खरेइ वा ) आलिंग्य वाद्यते इत्यालिंगो मुरजवाद्यविशेषस्तस्य पुष्करं चर्मपुटं तत् किलात्यंतसममिति तेनोपमा क्रियते इति. आ. म. प्र. १ अ. जं. ॥

**आलिङ्ग्य** त्रि. आ. लिग. एयत् आलिंगनीये प्रियादौ, वाच० ॥ मुरजनामके वाद्यविशेषे. पु. ( आलिंगपुक्खरे इव ) आलिंग्यो नाम यो वादकेन मुरज आलिंग्य वाद्यते हृदि धृत्वा वाद्यत इत्यर्थः ॥ आलिंग्यो मुरजोवाद्यविशेषः ॥ एष यकारान्तः शब्दः । जी० प्र. ३

**आलिंगण**–आलिङ्गन–न० आ लिगि ल्युट्-आश्लेषे-अष्ट. । ईषत्स्पर्शने० प्रव० द्वा. १७० नि. चू. उ. १ दश० अध्य. ६

**आलिंगनवट्टि**–आलिङ्गनवर्त्ति–स्त्री० शरीरप्रमाणे उपधाने ( तारिसगंसि सयणिज्जंसि सालिंगनवट्टिए ) सहालिंगनवर्त्या शरीरप्रमाणेनोपधानेन यत्तत्तथा-सू. प्र. प्रा. २०। जी० प्र. ३ । भ० श. ११ उ. ११ । ज्ञा० अ. १

**आलिंगणवट्टिया**–आलिङ्गनवर्त्तिका–स्त्री० शरीरप्रमाणे दीर्घे, गण्डोपधाने, आलिंगनवर्त्तिका नाम शरीरप्रमाणं दीर्घं गण्डोपधानम् । कल्प० ॥

**आलिंगणिया**–आलिंगनिका– स्त्री० पुरुषप्रमाणे उपधाने, आलिंगनिकायां पुरुषप्रमाणायां राज्ञेति बुध्या समतलिम्य

राजान्तः पुर्य्यः शेरते. जी० प्र० १

आलिंगपुक्खर--आलिंगपुष्कर--न० मुरजमुखे,भ० श. २ उ. ८ मुरजमुखपुटे, च भ० श. ६ उ. ७ जं० । आ. म. प्र० १ अ. । राज० ॥

आलिंपत--आलिंपत्--त्रि० आलेपं कुर्वति( आलिंपंतं वा विलिंपंतं वा साइज्जइ ) नि. चू. उ० ३

आलिंपावंत--आलेपयत्--त्रि० आलेपं कारयति(अन्नयरेण वा भालेवणजाएणं आलिंपावंतं वा) नि० चू. उ. १७

आलिघरग--आलिगृहक--न० आलिर्वनस्पतिविशेषस्तन्मयानि गृहकाणि । आलिमये गृहे, राज० ।

आलित्त--आदीप्त--त्रि० समंततो दीप्ते. " जह आलित्ते गेहे, कोइ पसुत्तं नरं तु बोहेज्जा " आसमन्ततो दीप्ते गृहे, व्य० उ. ३ अंत० अ. ५ अभिविधिना ज्वलिते, भ० श. २ उ. १ प्रदीपने, न० कोट्टिमघरे वसंते आलित्तंमि वि न डज्झई त्तेणे आदीप्तेऽपिप्रदीपनकेऽपि न दह्यते इति-व्य. उ. ४

आलिप्त-त्रि. आ. लिप. क. कृतालेपने,दत्तादीपने, च वाच० ॥

आलिद्ध--आदिग्ध--त्रि० लग्ने, ( अत्थेगइया पुढवीकाइया आलिद्धा ) आदिग्धाः शिलायां शिलापुत्रके च लग्ना इति भ० श. १९ उ. ३

आश्लिष्ट-त्रि० । आ. श्लिष क्त आश्लिष्टे, लधौ ॥ ४९ ॥ इति प्राकृतसूत्रेण आश्लिष्टे संयुक्तयोर्यथासंख्यं लध इत्येतौ भवतः प्रा० । आलिंगिते संबद्धे ( शिखाभिराश्लिष्ट इवाम्भसां निधिः । आश्लिष्टभूमिं रसितारमुच्चैः ) इति माघः वाच० ।

आलिद्धमणालिद्धवंदण-आश्लिष्टानाश्लिष्टवन्दन--न० सप्त विंशे वन्दनकदोषे, तत्र(आलिद्धमणालिद्धं रयहरसीसे य होइ चउभंगो ) वृ० । अश्लिष्टमनाश्लिष्टं चेति पदद्वयमाश्रित्य रजोहरणशिरसो विषये चतुर्भंगिका भवति। सा च अहो कायं काय इत्याद्यावर्तकान्ते संभवति । रजोहरणं कराभ्यामाश्लिष्यति शिरश्चेत्येको १ रजोहरणं श्लिष्यति न शिर इति द्वितीयः २ शिरःश्लिष्यति न रजोहरणमिति तृतीयो ३ न रजोहरणं न शिरः श्लिष्यति ४ इति चतुर्थो भंग इति अत्राऽऽद्योभंगः शुद्धः । शेषभंगत्रये आश्लिष्टदोषदुष्टप्रकृतवंदनमवतरति । प्रव. द्वा. १ ध० अधि २ । आव० । आ. चू. २ अ. ॥

आलि ( ली ) वग--आदीपक--त्रि० आदीपयत्यन्यगृहमाग्निना । आ. दीप णिच् ण्वुल् परगृहस्य दाहके, गृहादिदीपनककारिषु प्रश्न० द्वा० ३ । अग्निदातरि ज्ञा० अ. २ उद्दीपके, च वाच० ॥

आलि ( ली ) वण--आदीपन--न० आ. दीप णिच् ल्युट् तण्डुलादिचूर्णमिश्रितजलेन गृहादौ चित्राकारलेपनभेदे, उद्दीपने, च वाच० ॥ग्रामादिप्रदीपने ( आलीवणेहि य ) व्याकुललोकानां मोषणार्थं ग्रामादिप्रदीपनैः । विपा० अ. १ ।

आलि ( ली ) विय--आदीपित-त्रि० आ. दीप णिच् क्त दत्तादीपने गृहाङ्गनादौ, उद्दीपिते, च वाच. ॥

आलिसं ( सिं ) दग--आलिस ( सि ) न्दक--पुं. धान्यविशेषे दशा. (आलिसंदगत्ति) चपलकाः जं. टी० (आलिसंदगत्ति) चवलकप्रकाराः चवलका एवान्ये । भ. श. ६ उ. ७

आलिह--स्पृश् स्पर्शे तु. पर. सक. अनिट् । स्पृशः फासफंसफरिसछिवछिहालुंखालिहाः ॥ ८१ ॥ इति प्राकृतसूत्रेण स्पृशतेरालिहादेशः आलिहइ प्रा. ॥ स्पृशति अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् पस्पर्श । वाच. ॥

आलिहमाण- आलिखत् त्रि० विन्यस्यति, ( आलिहमाणे २ अणुप्पविसइ ) आलिखन् २ विन्यस्यन् २ अनुप्रविशति ॥ जं० ॥

आलिहिज्जमाण- आलिख्यमान त्रि० विन्यस्यमाने,(मंगलेहिं आलिहिज्जमाणेहिं ) जं० ॥

आली- आली--स्त्री० सख्याम् ॥ प्रा० ॥

आलीढ-आलीढ त्रि० आ- लिह- क्त-युद्धासनविशेषे॥ वाचा.॥

तत्र दक्षिणमूरुमग्रतो मुखं कृत्वा वाममूरुं पश्चान्मुखं प्रसारयति । अंतराबद्धयोरपि पादयोः पंचपदोः ततो वामहस्तेन धनुर्गृहीत्वा दक्षिणहस्तेन प्रत्यंचामाकर्षति तत् आलिढम् ॥ व्य० उ- १ आ० म- अ- १ ॥ आ- चू- ॥ उत्त० १ अ. । नि ० चू- उ ११

आलीण-आलीन-त्रि. आ ली कर्तरि क्त आश्लिष्टे, वाच० आलिंगिते, कल्प० सुश्लिष्टे, ज्ञा० अ २ किंचिल्लग्ने, च ॥ जं० ॥ प्राकृते ( आलिङोऽल्ली ॥ ५४ ॥ ) इति सूत्रेणालियतः अल्ली इत्यादेशो भवति । अल्लिअइ अल्लीणो ॥ प्रा० ॥ ( अल्लीणपमाणजुत्तसवणा ) आलीनौ मस्तकभित्तौ किंचिल्लग्नौ नतु दूरौ प्रमाणयुक्तौ स्वप्रमाणोपेतौ श्रवणौ कर्णौ येषां ते ॥ जं० ॥ (आलीणे महए विलीणे ) आलीनः सर्वगुणैरालिंगितः ॥ कल्प० ॥(आलीणगुत्तो परिव्वए ) आचा० अ ३ उ २ ॥ भावे क्तः संश्लेषे, न० तत्र साधु अण् वंगे धातुभेदे तस्य धात्वन्तरसंश्लेषकारकत्वात् तथात्वं । वाच० ॥

आलीणगुत्त--आलीनगुप्त-- त्रि० आङ् मर्य्यादयेन्द्रियरोधादिकया लीन आलीनो गुप्तो मनोवाक्कायकर्मभिः कूर्मवत्संवृतगात्रः।आलीनश्चासौ गुप्तश्चालीनगुप्तः । इन्द्रियरोधादियुते मनोवाक्कायकर्मभिर्गुप्ते, कूर्मवत्संवृतगात्रे, च आचा० अ.३उ.२ ( आलीणगुत्तो परिव्वए )आलीनो गुप्तश्च परिव्रजेत् ॥आचा.॥

आलु--आलु--पुं०आ लाति-ला-मितद्रु ऋजगणिश्च रस्य लः धा पेचके, भेलके, । शब्दरत्ना० स्वल्पवारिधानिकायाम् सनाले जलपात्रभेदे, स्त्री० कन्दभेदे राजनि० तस्य भेदा नानाविधाः "कंदो बहुविधो लोके आलुशब्देन भण्यते ॥ काष्ठालुश्चैव घंटालु, पिंडालुश्शर्करादिकम् ॥ काष्ठालुश्चैव माद्यं स्यात् तस्य भेदा अनेकशः" । वाच० ॥

आचाराङ्गदीपिकायाम् । द्वात्रिंशदनंतकाय वनस्पतिजीवानधिकृत्य- ( आलू तह पिंडालू बत्तीसं आणिउं अणंताइं ) आचा० अ. १ उ. ३ ॥

आलू तह पिंडालू हवन्ति एए अणन्तनामेणं । ध० अ० २ । आलू इति दीर्घान्तोऽप्यत्र ॥

आलुई--आलुकी---स्त्री० वल्लीभेदे, । आचा ० अ. १ उ. ५ ॥ प्रव द्वा. १ ० ॥

आलुंख---दह-दाहे--भस्मीकरणेच सक ० भ्वा० प० अनिट्- दहेरहिऊ लुंखौ ॥ २०७ ॥ इति प्राकृत सूत्रेण दहेरालुंखादेशः आलुंखइ डहइ प्रा०

आलुंख-स्पृश-स्पर्शे-तु० पर० सक० अनिट् (स्पृशः फासफंसफ

रिसछिवछिहालुंखालिहा. ७१ ॥ इति प्राकृतसूत्रेण स्पृशेः-रालुंखादेशः आलुंखइ ॥ प्रा० ॥

आलुंचण—आलुंचन-न० आ० लुचि. ल्युट् उत्पाटने, केशादेर्बन्धराहित्ये, च ॥ वाच० ॥ ग्रहणे, ॥ आव० ॥

आलुंटण—आलुंठन-न० आ लुटि. ल्युट् बलादपहरणे,-वाच० ॥

आलुंप-आलुम्प—त्रि० आसमंताल्लुंपतीत्यालुंपः धनापहारके, आलुंपे सहसाकारे। स हि लोभाभिभूतान्तः करणोऽपगतकर्तव्याकर्तव्यविवेकोऽर्थलोभेनैकदत्तदग्रैरैहिकामुष्मिकविपाक-कारिणीर्निर्लाञ्छनगलकर्तनचौर्यादिकाःक्रियाः करोति॥ आचा० श्रु. २ उ. १० ॥ ( आलुंपइ विलुंपइ ) आलुंपतवस्त्रादिकं विलुंपत् सर्वस्वापहारेण ॥

आलुग ( य ) आलुक पुं० आ. लाति पृथ्वीं कासरोगं वा आला. मित् रु संज्ञायां कन्. शेषनागे, कासालौ, च आलु. स्वार्थे कन् कन्दभेदे, न० वाच० ॥ ( तरुणगपलालुयत्ति वा ) आलुकं कन्दविशेषः । तच्चानेकप्रकार मिति विशेषपरिग्रहार्थं पलालुकमित्युक्तम् ॥ अणु० श्र. १ ॥ साधारणशरीरबादरवनस्पतिकायिकानधिकृत्य ( साहारणसरीरा अणेगहा ते पकित्तिया आलु ए मूलए चेव सिंगवेरे तहेव य ) उत्त० अ. ३६ ॥ भ० श. ७ उ. ३ ॥ प्रज्ञा० पद १० ॥ जी० प्र. १ ॥

आलूण—आलून—त्रि० लू० क्त० ईषच्छिन्ने, सम्यक्छिन्ने, च तेनामरवधूहस्तैः सदयालूनपल्लवाः कुमार० ॥ वाच० ॥ विशीर्णे, ॥ आ० म० ॥

आलेट्टुयं—आलेष्टुम्—अव्य० आश्लेष्टुं कर्तुमित्यर्थे,स्वार्थेकश्च वा इति प्राकृतसूत्रेण स्वार्थे कः ॥ प्रा० ॥

आलेप—आलेप—पु० आ-लिप् घञ्-उपलेपे, आलिम्पने, च आलिप्यते कर्मणि ल्युट् आलिप्यमाने, च ॥ वाच० ॥

आलेवण—आलेपन—न० आ-लिप् ल्युट् उपलेपे, आलिम्पने, च वाच० ॥ सकृल्लेपने, नि० चू० उ. १२ ईषल्लेपने,॥ वृ० ॥ दिवा गृहीतगोमये रात्रौ व्रणाद्यालेपननिषेधो ॥ नि ० चू० ॥

जे भिक्खू दिया गोमयं पडिग्गहेत्ता। दिया कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥ ३९ ॥ जे भिक्खू दिया गोमयं पडिग्गहेत्ता रत्तिं कायं सि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥ ४० ॥ जे भिक्खू रत्तिं गोमयं पडिग्गहेत्ता दिया कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा साइज्जइ ।४१। जे भिक्खू रत्तिं गोमयं पडिग्गहेत्ता रत्तिं कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ॥ ४२ ॥ चउक्कभंगसुत्तं उच्चारेयव्वं। कायः शरीरं व्रणः क्षतं तेण गोमयेण आलिंपइ सकृत् विलिंपइ अनेकशो ऽपरिवासिते मासलहुं। परिवासिते चउभंगे चउलहुं तवकालविसिट्ठा आणादिया दोसा। गाहा।

दियएतो गोमत्तेणं चउक्कभयणा तु जाव णेवुत्ता॥ एतो एगतरेणं पक्खेत्ताणाहिणो दोसा ॥२१६ ॥ चउक्कभयण चउभंगो त्ति उद्देसए जाव णेवुत्ता इहंपि सच्चेव। गाहा। ततुप्पतित्तं दुक्खं अभिभूतो वेयणा एत्तिव्वाए। अच्छाणे अव्वहितो तं दुक्खहिया सते सम्मं ।।२१७।। अव्वोच्छित्तिणिमित्तं जीयट्ठाए समाहिहेउं वा। एतेहि कारणेहिं जयणा आलिंपणं कुज्जा ।।२१८।। पूर्ववत् गोमय गहणा इमा विधी गाहा। अभिणवबोसट्ठासत्ति इतरे उवयोगं काउगहणं तु माहिसअसत्तीगव्वं अच्छातवच्छं व विसघाता ।।२१९।। वोसिरियमोत्तं घेत्तव्वं तं वहुणं तस्सासतिइयरं चिर काल वोसिरियं तं पि उवकरे तु गहणं दिणसंसत्तं पि मादितं घेत्तव्वं मोहिसासतिगव्वं तं पि अणायवेत्तियं छायायामित्यर्थः। तं असुसितं विसघाती भवति आयवत्तयं पुण सुसियरं सग्गुणकारी। सुत्तं जे भिक्खू दिया आलिवणजायं पडिग्गाहेत्ता दिया कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥ ४३ ॥ जेभिक्खू दिया आलिंपणजायं पडिग्गाहेत्ता रत्तिं कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं विलिंपंतंवा साइज्जइ ॥४४॥ जे भिक्खू रत्तिं आलेवणजायं पडिग्गाहेत्ता दिया कायं सि वणं आलिं पेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥ ४५ ॥ जे भिक्खू रत्तिं आलेवणजायं पडिग्गाहित्ता रत्ति कायंसि वणं आलिंपेज्ज वा विलिंपेज्ज वा आलिंपंतं वा विलिंपंतं वा साइज्जइ ॥ ४६ ॥ आलेवण जातं आलेवणप्पगारा ॥ गाहा ॥

दियराओ लेवेणं, चउक्कभयणाउ जाव णेवुत्ता ॥ एतो एगतरेणं, मक्खेत्ताणादिणा दोसा नि. चू. उ. १२

पर्युषितेनालेपनजातेनालेपननिषेधो । बृहत्कल्पे ॥

णो कप्पइ निग्गंथाणं वा निग्गंथीणं वा पारि यसिएणं आलेवणजाएणं आलिंपित्तए वा विलिंपित्तए वानन्नत्थ आगाढेहिं रोगायंकेहिं ॥

एवं म्रक्षणसूत्रमप्युच्चारणीयं॥ व्याख्यातः कल्पते निर्ग्रन्थानां वा २ परिवासिते नालेपनजातेनालेपयितुं वा ईषल्लेपयितुं विलेपयितुं विशेषेण लेपयितुं नान्यत्र आगाढेभ्यो रोगातंकेभ्य इति सूत्रार्थः ॥

अथ भाष्यं ॥

मक्खेऊणं लिप्पइ, एस कमो होइ वणतिगिच्छाए । जइ तेण तप्पमाणं, माकुण किरियं सरीरस्स ॥

परः प्राह ॥ ननु व्रणचिकित्सायां पूर्वं व्रणो म्रक्षित्वा ततः पिण्डी आदानेन आलिप्यते एष क्रमस्ततः प्रथमं म्रक्षणसूत्रमुक्त्वा पश्चादालेपनसूत्रं भणितुमुचितमिति भावः। यदि चैतत्तव न प्रमाणं ततोमा शरीरस्य क्रियामकार्षीरिति सूरिराह ।

आलेवणेण पउणइ, जो उवणो मक्खणेण किं तत्थ।
होहिइ वणो वमासे, आलेवो दिज्जई समणं ॥
नायमेकान्तो यदवश्यं व्रणे म्रक्षणमालेपनं च भवति। किन्तु कुत्रचिदेकतरं कुत्राऽप्युभयं ततो यः किल व्रण आलेपेन प्रगुणीभवति तत्र किं म्रक्षणेन कार्यं किंचिदित्यर्थः। यद्वा। मा मे व्रणो भविष्यतीति कृत्वा प्रथममेवालेपः शमनमौषधं दीयते किंच॥

चाउर उकज्जे करिंति, जह लाभकज्जपरिवाडी।
अणुपुव्विसंताविभवे, जुज्जइ न उ सव्वजाईसु॥
अत्यातुरे आगाढे कार्ये यथा लाभं आलापो म्रक्षणं वा यः प्रथमं लभ्यते तेनैव चिकित्सां कुर्वन्ति। कुत्र नाम परिपाटिः क्रमो विद्यते इदमेव व्यनक्ति यः स विभावा विद्यमानविकृति सूत्रचिकित्सायां क्रियमाणायामानुपूर्वी चिकित्साशास्त्रेण भणिता परिपाटिर्युज्यते घटते न पुनः सर्वजातिषु अतः किमत्र क्रमनिरीक्षणेनेति॥

सुत्तंमि कड्डियंमि, आलेवउवत्ति चउलहू हुंति॥
आणाइणाइदोसा, विणा इमेहिं तु ठाणेहिं॥
सूत्रार्थकथनेन सूत्रे आकृष्टे सति निर्युक्तिविस्तर उच्यते। यथा लेपं रात्रौ स्थापयति। तदा चतुर्लघु, आज्ञादयश्च दोषाः विराधना च क्रमोऽपि स्यान्निर्भवति॥

निद्धे दवे पणीए, आवज्जणपाणतक्खणक्खरणा।
आयंके विविज्जा, सो मासलहुगा य॥
स्निग्धे द्रवे प्रणीते आलेपे स्थापिते प्राणिनामायततत्क्षणकरणं तस्य द्रवादेः स्यन्दनं भवति। अत्र दोषभावना प्राग्वत्॥ आतंके च रोगे विपर्यासेन क्रियाकरणे वक्ष्यमाणं प्रायश्चित्तं मासेत्ति॥ अगाढानागाढकारणमन्तरेण पदे परिवासयत्ति। ततः प्रासुकादौ स्थाप्यमाने चतुर्लघु। अप्रासुकादौ चतुर्गुरु। इदमेव व्याचष्टे॥

तिविय संचयदोसा, तयावि से लालविणलिहणं वा।
अंबीभूयं विइए, उज्झमणुज्झंति जे दोसा॥
त एवं संचयादयो दोषा मन्तव्याः॥ त्वग्विषः सर्पः स्पृशेत् लालाविषो वा जिह्वया वा लेहनं कुर्यात्। द्वितीये च दिने अम्लीभूतं तदुप्स्यते। अनुज्झतो वा ये दोषास्तान् प्राप्नुयात् यत एते दोषास्ततः॥

दिवसे २ गहणं, पिट्ठमपिट्ठे य होय जयणाए।
आगाढे निक्खिवणं, अपिट्ठ पिट्ठे य जयणाए॥
यदा ग्लानार्थमालेपो न प्रयोजनं भवति तदा दिवसे २ ग्रहणं विधेयं। तत्र प्रथमं पिष्टस्य पश्चादपि पिष्टस्यापि यतनया कर्त्तव्यं भवति। आगाढे च ग्लानत्वे आलेपस्य निक्षेपणं परिवासनमपि कुर्यात्। तदप्यपिष्टस्य पिष्टस्य वा यतनया कर्तव्यम्

अथा ऽऽतंकाव्यत्यासं व्याख्याति॥

आगाढे अणागाढं, अणागाढे वा वि कुणइ आगाढं।
एवं तु विवज्जासं, कुणइ वत्ताए कफतिगिच्छं॥
आगाढे ग्लानत्वे अनागाढां क्रियां करोति चतुर्लघु। अनागाढे वा आगाढं करोति चतुर्लघु यदा वाते चिकित्सनीये कफचिकित्सां करोति। एष विपर्यासो मंतव्यः।

अथ सेसे लहुगायत्ति पदं व्याचष्टे।

अगिलाणो खलु सेसो, दव्वाई ति विह आवइ जढो वा।
पच्छित्ते मग्गणया, परिवासित्तं तस्सिमा तस्स॥
शेषो नाम य आगाढोऽनागाढो वा ग्लानो न भवति यो वा द्रव्यक्षेत्रकालापदेभेदात् त्रिविधया आपदा जढो मुक्तः स शेष उच्यते तस्य परिवासयत इयं प्रायश्चित्तमार्गणा।

फासुगमफासुगे वा, अचित्तचित्ते परित्तणंते वा।
असिणे हसिणे हसए, अणाहारा हारलहुगुरुगा।
प्रासुकं स्थापयति चतुर्लघु। अप्रासुकं स्थापयति चतुर्गुरु अचित्ते स्थाप्यमाने चतुर्लघु सचित्ते चतुर्गुरु परित्ते चतुर्लघु अनन्ते चतुर्गुरु स्नेहगते स्नेहावगाढे चतुर्गुरु अनाहारे चतुर्लघु आहारे चतुर्गुरु॥ वृ०॥

आलिप्यते अनेनेत्यालेपनं आलेपनसाधने द्रव्ये, आलेवो तिविधो वेदनप्रशमकारी पाककारी व्रणादिणीहरणकारी। नि० चू० उ० ३॥

**आलेवणजाय**–आलेपनजात– न० आलेपनप्रकारे, ( आलेवणजाएणं आलिंपेज्ज वा विलिंपेज्ज वा ) नि० चू० उ० ३॥

**आलेह**–आलेख– पुं० आ–लिख्–घञ् सम्यकुलेखने, आधारे, घञ् लेखपत्रे, च॥ वाच०॥ चित्रे,॥ आ० म० प्र०॥

**आलेक्ख**–आलेख्य– त्रि० आ– लिख्– एयत्– चित्रादौ लेख्यदेवादिप्रतिबिम्बे, विधातुमालेख्यमशक्नुवंतः। माघः। इति संरंभिणो वाणीबलस्यालेख्यदेवताः। माघः। अहो रूपमालेख्यस्य शकु० लेखनीये– त्रि० आधारे एयत् चित्र॥ वाच०॥

**आलोइऊण**–आलोक्य– अव्य० विमृश्येत्यर्थे ( आलोइऊणा एवं ) आलोच्य विमृश्येति॥ पंचा. वृ. १४ वृ. ३॥

**आलोइय**–आलोकित– त्रि. आ– लोक्– क. दृष्टे॥ वाच.॥ ( आलोइयं इंगियमेव नच्चा ) आलोकितं निरीक्षितमिति॥ दश. अ. ए उ. ३॥ आलोइयपाणभोयणभोई से णिग्गंथे ) आलोकितं प्रत्युपेक्षितमशनादिभोक्तव्यं तदकरणे दोषसंभवात्॥ आचा० अ० ७ उ० २॥

**आलोचित**– त्रि० आ— लुचु. णिच्. क आलोचनाविषयीभूते विशेषदर्शनादिना कृतालोचने, (आलोचितमिन्द्रियेणेति)सां० कौ० इति कर्त्तव्यतयावधारिते च॥ वाच०॥ निवेदिते॥ भ. श. २ उ. १॥ ( आलोइयंमि आराहणाअणालोइए भयणा ) आलोचिते गुरोरपराधजाले निवेदिते,॥ आव०॥ आलोचनावति, च॥ भ०॥ श. ७ उ. २॥

**आलोइयणिंदिय**–आलोचितनिन्दित– त्रि० सम्यक् कृतालोचननिन्दाविधौ,॥

कयपावो वि मणुस्सो, आलोइयनिंदियगुरु सगासे।
होइ अइरेगलहुओ, हरियमरुव्व भारवहो॥
आलोइयनिंदिओत्ति० आलोचितनिन्दितः सम्यक् कृतालोचननिन्दाविधिरित्यर्थः॥ ध० अधि. २॥

**आलोइयपडिक्कंत**–आलोचितप्रतिक्रान्त– त्रि० आलोचितं गुरूणां निवेदितं यदतिचारजातं तत् प्रतिक्रान्तमकरणविषयीकृतं येनासावालोचितप्रतिक्रान्तः तास्मिन् आलोचितश्चासावालोचनादानात्प्रतिक्रान्तश्च मिथ्या दुष्कृतदानादालोचि

क्रांतः ॥ भ० श. २ उ. १ । आलोचनाप्रदानपूर्वं प्रदत्तमिथ्या दुष्कृते, ( आलोइयपडिक्कंता गवयति तओगणे ) वृ० ॥

**आलोएमाण–आलोकयत्–** त्रि० पश्यति आचा० श्र. ५ ॥

**आलोएयव्व–आलोचितव्य–** त्रि० प्रकाशनीये, पंचा० वृ. १५ निवेदनीये अपराधादौ, च. ॥ पंचा० वृ. १८ ॥

**आलोय–आलोक–** पुं० आलोक्यतेऽनेन आ लुक् लोक् वा करणे घञ् प्रकाशे । दश० अ. २ ॥ आव० ॥ ( आलोओ उज्जोओ दित्तीभासापहा पयासो य ) प्रा० को० ॥ ज्ञा० १० अ. आलोकस्थाने गवाक्षादौ, च वाच० ॥

णो गाहावइकुलस्स, आलोयं वा थिग्गलं वा संधिं वा दगभवणं वा बाहाओपगाज्झिय २ अंगुलियाए वा उद्दिसिय उद्दिसित्र उएणमिय उन्नमिय २ णिज्झाएज्जा ॥

आलोकस्थानं गवाक्षादिकम् आचा. अ. १ उ. ५ आलोय थिग्गलं दारं आलोक निर्यूहकादिरूपं दश० अ. ५ ॥ आलोक्यत इत्यालोकः लोके, तथा चावश्यके लोकपर्य्यायशब्दानधिकृत्य ( आलोकइपलोकइ संलोकई य एकट्ठा ) आ० म० ॥ आचारांगे ( लोयालोयपवंचाओ पमुच्चति ) आलोक्यत इत्यालोकः कर्मणि घञ् । लोके चतुर्द्दशरज्वात्मके आलोको लोकालोकस्तस्य प्रपंचः पर्य्याप्तापर्याप्तकसुभगादिद्वन्द्वविकल्पस्तद्यथा । नारको नारकत्वेनालोक्यते एकेन्द्रियादिरेकेन्द्रियादित्वेनैवं पर्य्याप्तापर्याप्तकाद्यपि वाच्यम् । तदेवं सूतात्प्रपंचान्मुच्यते । चतुर्दशजीवस्थानान्यतरव्यपदेशार्हो न भवति इति यावत् ॥ आचा० ॥ दृष्टिविषये क्षेत्रादौ ॥ ज्ञा० अ० १ ॥ दृष्टिविषये ॥ औप० ॥ आलोकनमालोकः भावे घञ् दर्शने, । आव० ॥ ज्ञा० अ. २ ॥ ( आलोए समणस्स भगवओ महावीरस्स पणामं करेइ ) आलोके दर्शनमात्रे, ॥ कल्प० ॥ आलोकनमालोकः मर्यादयाऽभिविधिना वालोचनम् निरीक्षणे, ( पिक्खणनिरिक्खणावि य आलोयपलोयणेगट्ठा ) ओघ० ॥

**आलोयग–आलोचक–** त्रि० आ-लुच्-णिच्-एवुल् आलोचनाकारके, ॥ वाच० ॥ आलोचनाया योग्या आलोचका आलोचनाशब्दे ॥ व्य० उ. १ ॥

**आलोयचल–आलोकचल–** त्रि० आलोकनमालोकस्तस्मिन्नालोके चलमालोकचलं दर्शनलालसे, आलोअचलं चक्खुं मणुव्वतं दुक्करं थिरं काउं । आव० टी० ।

**आलोयण–आलोकन–** न० आ. लुक लोक वा भावे ल्युट दर्शने, ॥ आचा० श्र. ३ उ. ५ दश० अ. ४ ॥ ततस्तदालोकनतत्पराणाम् । भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ॥ कुमार० । "व्रजति हि सफलत्वं वल्लभालोकनेन,, माघः ॥ वाच० ॥

निरीक्षणे, ॥ आव० ॥ निरूपणे, ॥ ओघ० ॥ प्रकाशे, प्रश्न० द्वा. १ सं. ॥

**आलोचन–** न० आ-लुच् णिच् भावे ल्युट् विशेषधर्मादिना विवेचने नैया० । वाच० ॥ विचारणे, ( पुव्वामेव आलोएज्जा ) आलोचयेद्विचारयेत् ॥ आचा० श्र. ३ उ. ५ । आलोचयेदत्तावधानो भवेदित्यर्थः ॥ आचा० श्रु. २ अ. १ उ. ६ ॥ सामान्यवस्तु ग्राहिज्ञानविशेषे, च सामान्यवस्तुग्राहिज्ञानमालोचनम् । तद्वक्तव्यताऽर्थावग्रहवक्तव्यताऽवसरेऽवग्रहशब्दे ॥ आङ्मर्य्यादायां लोचृदर्शने मर्य्यादयाऽऽलोचनं दर्शनमालोचनम् ॥ नि० चू० उ. २० । निवेदने, उपदर्शने, च आलोयणदायणं च दाऊणं आलोचनं यथा गृहीतभक्तपाननिवेदनं तयोरेवोपदर्शनञ्च प्रश्न० सं. द्वा. १ । आलोएहि गुरूणां निवेदयेति ॥ उपा० अ. ३ ॥ स्था० ठा. ३ ॥ आलोइत्तए आलोचयितुं गुरवे अपराधान्निवेदयितुम् ॥ स्था० २ ठा. ॥ आलोचनं गुरोः पुरतः स्वापराधस्य प्रकटनम् ॥ घ० ॥ आङ्मर्यादायाम् सा च मर्य्यादा इयं ।

जह बालो जंपंतो कज्जमकज्जं च उज्जुयं भणइ ।
तं तह आलोइज्जा, मायामयविप्पमुक्को उ ॥

अनया मर्यादया लोचृदर्शने चुरादित्वाण्णिच् लोचनं लोचना प्रकटीकरणं आलोचना गुरोः पुरतो वचसा प्रकाशनमिति भावः । यत्प्रायश्चित्तमालोचनमात्रेण शुद्ध्यति तदाऽऽलोचनार्हतया कारणे कार्योपचारादालोचनम् । प्रायश्चित्तभेदे ॥ प्रव० ॥ द्वा. ९८ ॥ व्य० उ. १ ॥

अस्याशेषवक्तव्यताऽऽलोचनाशब्दे आलोचनार्हशब्दे च ॥ सामाचारीभेदे च तत्र पिण्डादिनिवेदनं, ॥ ग० अधि२ ॥ लोचनपर्य्यन्ते, अव्य० । " आलोचनान्तं श्रवणं वितत्य " रघुः । वाच० ॥

**आलोयणभायण–आलोकनभाजन–** न० प्रकाशमुखे भाजने ॥ प्रश्न० सं. १ द्वा. ॥

अह कोइ न इच्छेज्जा, तओ भुञ्जेज्ज एकओ ।
आलोयभायणे साहू, जयं अपरिसाडियं ॥

आलोकभाजनं मक्षिकाद्यपोहाय प्रकाशप्रधाने भाजने इत्यर्थः ॥ दश० अ. ५ उ ॥

**आलोयणा–आलोचना–** स्त्री० आङ्मर्य्यादायाम् सा च मर्यादा इयम् ॥

जह बालो जंपंतो, कज्जमकज्जं च उज्जुयं भणइ ।
तं तह आलोइज्जा, मायामयविप्पमुक्को उ ॥

अनया मर्यादया लोचृदर्शने चुरादित्वाण्णिच् लोचनालोचनं प्रकटीकरणम् आलोचना गुरोः पुरतो वचसा प्रकाशनम् प्रव० द्वा० ९८ । व्य उ. १० ॥ जीत० ॥

विषयाः

( १ ) आलोचनाया व्युत्पत्तिरर्थः स्वरूपंच ।
( २ ) द्रव्यादिनिक्षेप आलोचनायाः ।
( ३ ) आलोचनाया मूलगुणोत्तरगुणेन भेदाः ।
( ४ ) विहारादिभेदेनालोचना त्रिविधा तद्भेदाश्च ।
( ५ ) शल्योद्धरणार्थमालोचनकरणविधिः ।
( ६ ) आलोचनाये विषये यथाक्रममालोचनाप्रकारः ।
( ७ ) आलोचनायां शिष्याचार्य्यपरीक्षणे–आवश्यकादिद्वाराणि ।
( ८ ) काऽऽलोचना गृहीतव्या तानि स्थानानि ।
( ९ ) द्रव्यादि चतुर्विधमालोचनीयम् ।
( १० ) अपराधालोचनायां प्रशस्ताऽप्रशस्तद्रव्यादयः ।
( ११ ) यथाभूतेषु द्रव्यादिष्वालोचना तादृशानां प्रतिपादनम् ।

( १२ ) आलोचनासमयवर्णनम् ।
( १३ ) कस्य समीपे आलोचना कर्त्तव्या ।
( १४ ) गीतार्थमवाप्य शङ्कयानुद्धरणादौ दोषगुणादिकं भावयता यद्विधेयत्वम् ।
( १५ ) मरणाभिमुखेनाप्यालोचना करणीयात्र ब्राह्मणदृष्टान्तः ।
( १६ ) अदत्तालोचने व्याधदृष्टान्तभावना ।
( १७ ) स्वगणपरगणवासिकानां समीपे आलोचना ।
( १८ ) आलोचनाया अष्टौ स्थानकाः दशस्थानकाश्च ।
( १९ ) सामुदानिकाऽतिचारालोचना ।
( २० ) आलोचयित्रा एतानि वर्जनीयानि ।
( २१ ) संम्यगालोचनादाने किं लिङ्गम् ।
( २२ ) कृतानां कर्मणां क्रमत आलोचना ।
( २३ ) आलोचनायां दत्तायां न विरतिभंगः सदृष्टान्तः ।
( २४ ) आलोचनायामकृतायां मृत्वाऽनाराधको भवति।
( २५ ) आलोचनायाः फलम् ।

( १ ) आलोचनाया व्युत्पत्तिरर्थस्स्वरूपं च ॥

आ अभिविधिना सकलदोषाणां लोचना गुरुपुरतः प्रकाशना आलोचना भ० श० १७ उ. ३ ।

आसामस्त्येन स्वगताऽकरणीयस्य वागादियोगत्रयेण गुरोः पुरो भावशुद्ध्या प्रकटनमालोचना ध० अधि. २ गुरुभ्यो निजदोषकथने, ध० अधि. २ ॥ आमर्य्यादायां लोचृदर्शने आलोचना नाम आलोचना प्रकटना ऋजुभावनेति ॥ पं० चू०॥ आलोचनमालोचना मर्य्यादयाऽऽलोचनं दर्शनमाचार्यादेरालोचनेत्यभिधीयते । ओघ० ॥

आलोयणा णाम जहा अप्पणो जाणति तहा परस्स पागडं करेइ । नि० चू० उ० २० ॥

आ अपराधमर्य्यादया लोचनं दर्शनमाचार्य्यादेः पुरत इत्यालोचना ध० अधि. ३ ।

गुरोः स्वचरितप्रकाशनात्मके, प्रायश्चित्तभेदे,॥ पंचा. वृ. १६ " व्यवहारो आलोयणा सोही पच्छित्तमेव एगट्ठा " व्यवहार आलोचना शोधिः प्रायश्चित्तमित्येकार्थः ॥ व्य० उ. २

आलोचनाया एकार्थिकानि प्रतिपादयन्नाह ॥

आलोयणा वियडणा, सोही सब्भावदायणा चेव ।
निंदागरहविउट्टा, सल्लुद्धरणेय एगट्ठा ॥ १३ ॥

आलोचना विकटना शुद्धिः सद्भावदापना णिंदणगरहण विउट्टण सल्लुद्धरणं चेति एकार्थिकानि इति ॥ ओघ. ॥

आलोचना प्रयोजनतो हस्तशताद्बहिर्गमनादौ गुरोर्विकटना ॥ आव० ॥ स्था० ठा. ४ ॥

जे भिक्खू मासियं परिहारट्ठाणं पडिसेवित्ता आलोएज्जा । व्य० उ० १ ॥

आलोचयेत् लोचृदर्शने चुरादित्वाणिच् आङ्मर्य्यादायाम आ मर्य्यादया (जह बालोजंपंतो ) इत्यादि रूपया आलोचयेत यथात्मनस्तथा गुरोः प्रकटीकुर्यात् ॥ व्य० उ. १ ।

अथालोचनाशब्दार्थमाह ॥

आलोयणं अकिच्च, अभिविहिणा दंसणं तिलिंगेहिं ।
वइमादिएहिं सम्मं, गुरुणो आलोयणेया ॥ २ ॥

व्याख्या । आलोचनमालोचना ज्ञेयेति योगः । आलोचनमेव किमित्याह । अकृत्ये अकरणीयविषये स्वगतस्याकृत्यस्येत्यर्थः। अभिविधिना सामस्त्येनेत्यार्थः दर्शनं प्रकाशनमिति लोचृधातोः कारितां तस्यार्थ इतिशब्दोऽग्रे योक्ष्यते । कथमकृत्यदर्शनमित्याह । लिंगैः परोक्षाकृत्यगमकैर्हेतुभिर्वागादिभिर्वचनकायविकारविशेषैः। सम्यक्भावशुध्या कस्य तद्दर्शनमित्याह । गुरोरालोचनाचार्यस्येति । एषा आलोचना प्रकरणाद्विज्ञेया ज्ञातव्या तच्छब्दज्ञानार्थिभिरिति गाथार्थः ॥ पंचा. वृ. १५

आलोचनास्वरूपं व्यवहारकल्पे यथा ॥

"आलोचना नाम अवश्यकरणीयस्य कार्यस्य पूर्वं कार्यसमाप्तेरूर्द्धं वा यदि वा पूर्वमपि पश्चादपि गुरोः पुरतो वचसा प्रकटीकरणम ॥ ३ ॥ व्य. १ उ. ॥

( २ ) द्रव्यादिनिक्षेप आलोचनायाः ॥

आलोचनानिक्षेपश्चतुर्धा तथाच महानिशीथे अ. ७ ॥

तंजहा नामालोयणं ठवणालोयणं दव्वालोयणं भावालोयणं एते चउरो वि पए अणे गहा वि [ ? ) उग्घोइज्जंति तत्थ ताव समासेणं णामालोयणं नाममेत्तेणं ठवणालोयणं पोत्थयाइसुमालिहियं दव्वालोयणं नाम जं आलोएत्ताणं असढभावत्ताए जहोवइट्ठं पायच्छित्तं नाणुचिट्ठे एते तओवि पए एगंतेणं गोयमा ! अपसत्थे जेयणं से चउत्थपए भावालोयणं नाम तेणं तु गोयमा ! । आलोएत्ताणं निंदित्ताणं गरहित्ताणं पायच्छित्तमणुचरित्ताणं जाव णं आयहियट्ठाए संपाज्जित्ताणं संकज्जुत्तमट्ठं आराहेज्जा से भवयं कयरेणं से चउत्थे यए गोयमा ! भावालोयणं से भयवं! भावालोयणं जेणं भिक्खू परिसे संवेगगगए सीलतवदाणभावण चउक्कखंधसुसमणधम्ममाराहणाकंतरसिए मयभयगारवादीर्हि अचंतविप्पमुक्के सव्वभावनाभावंतरेहिं नीसल्ले आलोइत्ताणं विसोहिए य पडिगाहित्ताणं तहत्ति समणुट्ठिया सव्वुत्तमं संजमकिरियमणुपालिज्जा ॥ तं जहा ॥

कयाइं पावाइं, इमाइं जेहिं अट्ठाणवज्जए ।
तेसिं तित्थयरवयणेर्हि, सुद्धी अम्हाणकीरउ ॥ १ ॥
परिनिव्वाणं तयं कम्मं, घोरं संसारदुक्खदं ।
मणोव्वयकायकिरियाहिं, सीलभारं धरेमि हं ॥ २ ॥
जह जाणइ सव्वन्नू, केवली तित्थंकरे ।
आयरिए चरित्तढे, उवज्झाए य सुसाहुणो ॥ ३ ॥
जह पंचलोयपाले, य सताधम्मे य जाणए ।
तहालोएमिहं, सव्वं तिलमित्तं पि न निन्हवं ॥ ४ ॥
तत्थ जं पायच्छित्तं, गिरिवरगुरुयं पि आवए ।
तमणुचरेमि हं, सुद्धी जह पावं विलिज्जए ॥ ५ ॥

मरिऊणं नरयातिरिएसु, कुंभीपाएसु कत्थई ।
कत्थय करवत्तजंतेहिं, कत्थइ जिन्नो उ सूलिए ॥ ६ ॥
घंसणं घोलणं कहविमि, कत्थइ च्छेयणं जयणं ।
बंधणं ण कहविमि, कत्थई दमणमंकणं ॥ ७ ॥
णत्थणं वाहणं कहिमि, कत्थइ वहणत्तालणं ।
गुरुक्कमणं कहिं, विकत्थइ जमलारविधणं ॥ ८ ॥
उरपट्टिअट्ठिकम्भिजंगं, परवसो तएहं बुहं ।
संतावुव्वेवदारिहं, विसहिहासि पुणो विहं ॥ ९ ॥
जारहं चेव सव्वंपि, नियदुच्चरियं जहट्ठियं ।
आलोएत्ता निंदित्ता, गरहित्ता पायच्छित्तं चरित्तुणं ॥१०॥
निद्दहेमि पावयं कम्मं, अतिसंसारदुक्खयं ।
अब्भुट्ठित्तातवं घोरं, धीरं वीरपरक्कमं ॥ ११ ॥
अणंतकम्मयमं कहं, दुक्खरं दुरणुचरं ।
उग्गगायरं जिणाभिहियं, सयलकल्लाणकारणं ॥ १२ ॥
पायच्छित्तनिमित्तेणं, पाणसंथारकारयं ।
आयरेण तवंचरिमो, जेणुब्भेमोक्खइ तणुं ॥ १३ ॥
कसाए विहलीकट्टुं, इंदिए पंचनिग्गहं ।
मणोवइकायदंडाणं, निग्गहं धणियमारंभे ॥ १४ ॥
आसवदारे नेरुंभित्ता, चत्तमयमच्छरअमरिसो ॥
गयरागदोसमोहोहं, निस्संगो निपरिग्गहो ॥ १५ ॥
निम्ममो निरहंकारं, सरीरअचंतनिप्पिहो ॥
महव्वयाइं पालेमि, निरइयाराइ निच्छिओ ॥ १६ ॥
हहीहा अहन्नोहं, पावोपावमती अहं ॥
पाविठ्ठो पावकम्मोणं, वाहमोहमायारो ॥ १७ ॥
अहं कुसीलोद्धचरित्ती, भिन्नसूणोवमो अहं ॥
चिलातो निक्किवो पावी, कूरकम्माहं निग्घिणो ॥ १८ ॥
इणमो दुल्लहं लभिउं, सामन्नं नाणदंसणं ॥
चारित्तं वा विराहित्ता, अणालोइयनिंदिय ॥ १९ ॥
गरहियअकयपच्छित्तो, वावज्जंतो जई अहं ॥
ता निच्छयं अणुत्तारे, घोरे संसारसायरे ॥ २० ॥
निब्बुडोभवकोडिहिं, समुत्तारं ताण वा पुणो ॥
जरा जाव ण पीडेइ, वाही जाव न केइ मे ॥ २१ ॥
जाविंदिया ण हाइंति, ताव धम्मं चरित्तु हं ॥
निद्दहमपरेण, पावाइं निंदिउ गरहिउ चिरं ॥ २२ ॥
पायच्छित्तं चरित्ताणं, निक्कलंको भवामि हं ।
निक्कलुमनिक्कलंकाणं, गुरुभावाणं गोयमा ! ॥२३॥
वन्नो नहं जयं गहिया, सुहराम विपरिवलित्तुणं ।
कलिकलुसकम्ममलमुक्कं, जइणो मिज्झिज्जतक्खणं ॥२४॥
नाव यं देवलोगम्मि, निच्चुओ एसयंपहे ।
देवदुंदुहिनिग्घोसे, अच्छरगसयसंकुले ॥२५॥
तओ चुया इहागंतुं, सुकुलुप्पत्तिं लभित्तुणं ।
निव्विन्नकामभोगाय, तवं काउं मया पुणो ॥२६॥
अणुत्तरविमाणेसुं, निव्वसिउणे इमागया ।
हवंति धम्मतित्थयरा, सयलतेलोक्कबंधवा ॥२७॥
एस गोयम ! विन्नेए, सुपसत्थे पए भावालोयणं ।
नाम अक्खयंसिवसोक्खदायगो ॥२८॥ त्तिबेमि ॥

( ३ ) आलोचनाया मूलगुणोत्तरगुणेन भेदाः ।

आलोचनाया मूलगुणोत्तरगुणभेदेन भेदा यथा ओघ० ॥

आलोयणा दुविहा, मूलगुणे चेव उत्तरगुणे य ।
एक्केक्का चउकन्ना, दुवग्गसिद्धावसाणा य ॥१२॥

आलोचना च द्विविधा मूलगुणालोचना । उत्तरगुणालोचना चेति । सा च द्विविधाप्येकैकमूलगुणालोचना उत्तरगुणालोचना च ( चउकएणादुवग्गत्ति ) द्वयोरपि साधुसाध्वीवर्गयोरेकैकस्य चतुष्कर्णा भवति । एक आचार्यः द्वितीयश्चालोचकःसाधुरेवं साधुवर्गे चतुष्कर्णा भवति साध्वीवर्गेऽपि चतुष्कर्णा भवति । एका प्रवर्त्तिनी द्वितीया तस्या एव या आलोचयतीति साध्वी एवं साध्वीवर्गे चतुष्कर्णा भवतीति । अथवा एकैका मूलगुणे उत्तरगुणे च चतुष्कर्णा भवति । द्वयोश्च साधुसाध्वी वर्गयोर्मिलितयोरष्टकर्णा भवति । कथमात्मद्वितीयः प्रवर्त्तिनी चात्मद्वितीया आलोचयति यदा तदाऽष्टकर्णा भवति । सामान्यसाध्वी वा यद्यालोचयति तदाष्टकर्णाश्चेति अथवा ॥

छक्कएणा होज्जा, यदा वुड्ढो आयरिओ हवइ ।
तदा एगागिस्सवि, साहुणीदुगं आलोएइ ।
एवं छक्कएणा हवइ, सव्वहा साहुणी उ अज्ज ।
विइयाए आलोयव्वं, न तु एगागिणी एत्ति ॥

एवं तावदुत्सर्गतः आचार्य आलोचयति शल्यं तदभावे सवदशसु निरूपयित्वा आलोचयितव्यं एवं तावत् यावत् सिद्धानामप्यालोचते साधूनामभावे ततश्चैवं सिद्धावसाना आलोचना दातव्येति ॥

तथाच वृहत्कल्पे राहस्यिकीं पर्षदमधिकृत्याह ॥ वृ० ॥

सल्लुद्धरणे समणस्स, चाउकन्ना रहसिया परिसा ।
अज्जाणं चाउकएणा, छकन्ना अट्ठकन्ना वा ॥

द्विविधं शल्यं द्रव्यशल्यं भावशल्यं च द्रव्यशल्यं कंटकादि भावशल्यं मायानिदानमिथ्यात्वादि अथवा भावशल्यं मूलोत्तरगुणातिचारस्ततः श्रमणस्य भावशल्योद्धरणे आचार्यसमीपे आलोचयत इत्यर्थः । राहस्यिकी पर्षद् भवति । कथंभूतेत्यत आह । चतुष्कर्णी द्वावाचार्यस्य द्वौ साधोरिति च त्वारः कर्णा यत्र सा तथा । आचार्याणां चतुष्कर्णा षट्कर्णा वा तत्र यदा निर्ग्रंथी निर्ग्रंथ्याः पुरतः आलोचयति तदा चतुष्कर्णा । यथा निर्ग्रंथस्य निर्ग्रंथपार्श्वे आलोचयतः यदा च द्वितीयस्थविरगुरुसमीपे आलोचयति सद्वितीया भिक्षुकी तदा षट्कर्णा । स द्वितीयतरुणगुरुसमीपे सद्वितीयाया सभिक्षुक्या आलोचयन्त्या अष्टकर्णा तत्र प्रथमतः संयतस्य चतुष्कर्णा भावयति ।

आलोयणं पउंजइ, गारवपरिवज्जितो गुरुसगासे ।
एगंतमणावाए, एगो एगस्स निस्साए ॥

एकांते अनापाते एकोऽद्वितीय एकस्याद्वितीयस्याऽऽचार्य-

स्य निश्रया तत्पुरत इत्यर्थः । गौरवपरिवर्जितः ऋद्धिरसातगौरवपरित्यक्तो गौरवादि सम्यगालोचयितव्यं न भवतीति तत्प्रतिषेधः गुरुसमीपे आलोचनाऽऽचार्यसमीपे आलोचनां प्रयुंक्ते। कथमित्याह ।

विरहंमि दिसाभिग्गह, उक्कुडुतो पंजलीनिसेज्जा वा ।
एस सपक्खे परपक्खे, मोतु च्चउति सिज्जा वा ॥

एकांते यत्र कोऽपि न तिष्ठति तत्र विरहे अन्ये प्रदेशे पूर्वं गुरोर्निषद्यां कृत्वा पूर्वामुत्तरां चरंति । कां वा दिशमभिगृह्य वंदनकं दत्वा उत्कुटुकः प्रबद्धांजलिः अथासौ व्याधिमान् प्रभूतं वा लोचनीयं ततो निषद्यामनुज्ञाप्याऽऽलोचयति । एष सपक्षे आलोचनाविधिः। परपक्षे नाम संयती तत्र अन्नं मुक्त्वा आलोचना दातव्या निषद्या च न कार्यते । इयमत्र भावना। यदा संयती संयतस्य पुरत आलोचयति तदा अन्नं वर्जयति किं तु यत्र लोकस्य संलोकस्तत्रालोचयति निषद्यां वाचार्यस्य न करोति ॥ आत्मनाऽभ्युत्थिता आलोचयति । श्रमणीमधिकृत्याऽऽलोचनाविधिश्चतुष्कर्णत्वमाह ॥

आलोयणं पउंजइ, गारवपरिवज्जिया उ गणिणिए ।
एगंतमणावाए, एगा एगाए निस्साए ॥

या श्रमणी गौरवपरिवर्जिता गणिन्याः पुरत आलोचनां प्रयुंक्ते । केत्याह । एकांते अनायाते एका अद्वितीया एकस्या अद्वितीयाया गणिन्या निश्रया ततो गुरुसमीपे श्रमणस्येव श्रमण्या अपि गणिन्याः पुरतः आलोचयंत्याश्चतुष्कर्णा पर्षद् भवति ॥

षट्कर्णामाह ॥

आलोयणं पउंजइ, एगंते बहुजनस्स संलोए ।
अबितियथेरगुणो, सबियईया भिक्खुणि निहुया ॥

अद्वितीयस्य स्थविरगुरुसमीपे सद्वितीया भिक्षुकी निभृता निर्व्यापारा न दिशो नापि विदिशः आलोकयति नापि यत्किंचिदुल्लापयति इत्यर्थः । एवं भूता सती एकांते बहुजनस्य संलोके आलोचनां प्रयुंक्ते॥

अथ कीदृशी तस्या द्वितीया भवतीत्यत आह ॥

नाणदंसणसंपन्ना, पोढा वयसपरिणया ।
इंगियागारसंपन्ना, भणिया तीसेवि इज्जिया ॥

ज्ञानदर्शनसंपन्ना प्रौढा समर्था या संयतस्य तस्या वा भावं विज्ञाय न मंत्रणं कर्त्तुं ददाति किंतु वदति यद्यालोचित तर्हि व्रजामो नोचेदालोचनयापि न प्रयोजनमिति । यथा वयसा परिणता परिणतवयास्तथा इंगिताकारसंपन्ना इंगितेनाकारेण च यस्य यादृशो भावस्तस्य तं जानातीत्यर्थः एवं भूता सा तस्या द्वितीया गणिन्या सा पुनः कियद्दूरे तिष्ठति । उच्यते। एके सूरयो वदंति यत्रोभयोराकारा दृश्यंते तावन्मात्रे परे ब्रुवते यत्र श्रवणं शब्दस्येति ॥

अष्टकर्णामाह ॥

आलोयणं पउंजइ, एगंते बहुजणस्स संलोए ।
सबितियतरुणगुरुणो, सबिइया भिक्खुणि निहुया ॥

एकांते बहुजनस्य संलोके सद्वितीयस्य तरुणगुरोः समीपे सद्वितीया तादृशी प्रागुक्ता ॥

संप्रति यादृशस्य आचार्यस्य द्वितीयस्तादृशमाह ॥

नाणेण दंसणेण य, चरित्ततवविणयआलयगुणेहिं ।
वयपरिणामेण य, अभिगमेण इयरो हवइ जुत्तो ॥

ज्ञानेन दर्शनेन चारित्रेण तपसा विनयेन आलयगुणैर्बहिर्भेदाभिः प्रतिलेखनादिभिरुपशमगुणेन च यया वयःपरिणामेन अभिगमेन सम्यक् शास्त्रार्थकौशलेन युक्तो भवत्याचार्यस्येतरो द्वितीयः ॥ वृ. ॥

सशल्यमालोचयितव्यम् । ओघनिर्युक्तौ ॥

गंतूण गुरुसगासं, काऊण य अंजलिं विनयमूलं ।
सव्वेण अत्तसोही, कायव्वा एसओ उवएसो ॥१९॥

सुगमा ॥

न हु सुज्झइ ससल्लो, जह भणियं सासणे धुवरयाणं ।
उद्धरिय सव्वसल्लो, सुज्झइ जीवो धुअकिलेसो ॥२०॥

न हु चैव शुद्ध्यति सशल्यः पुरुषः कथं पुनः शुद्ध्यते ।यथा भणितं धुतरजसां शासने तथा शुद्ध्यते। कथं पुनः शुद्ध्यति अत आह । उद्धृतः सर्वशल्यो जीवः शुध्यति धुतक्लेश इति। तस्माद्यद्यपि कथमपि किंचिदकार्यं कृतं ततस्तदालोचयितव्यं ॥

कथं पुनस्तत्कृतं भवतीत्यत आह ॥

सहसा अन्नाणेण व, भीएण व पेल्लिएण व ।
वसणेण णायं, केण व मूढेण वा रागदोसेहिं ॥२१॥

सहसा अप्रतर्कितमेव प्राणिवधादिकर्म कार्यं यदि कृतं ततस्तस्मात्प्रतिक्रमितव्यमित्येतद्द्वितीयगाथायां वक्ष्यते । अज्ञानेन च कृतं न तत्र प्राणिज्ञातां व्यापादितस्य भीतेन तेन आत्मभयात् मा भूदयं मां मारयिष्यतीत्यत आह । प्राणिव्यपरोपणं यदि कृतं प्रेरितेन वा परेण यदि कृतं व्यसनेन वा आपदा यदि कृतं आतंकेन ज्वराद्युपसर्गेण यदि कृतं मूढेन वा रागद्वेषैर्यदि कृतं किंचिदकार्यं ततः ॥

जं किंचि कयमकज्जं, न हु तं लब्भापुणो समायरियं ।
तस्स परिक्कमियव्वं, न हु तं हियएण वोढव्वं ॥२२॥

यत्किंचित्कृतमकार्यं तत्पुनर्न हु नैव समाचरितुं लभ्यं उपलभ्यते । यथा तथा प्रतिक्रमितव्यं । एतदुक्तं भवति । किंचिदकार्यं कृत्वा पुनर्यथा तत्रैव भवति नैव क्रियते यथा तस्य प्रतिक्रमितव्यं न तु तदकार्यं हृदयेन वोढव्यं सर्वमालोचयितव्यमित्यर्थः ॥

कथं पुनस्तदालोचयितव्यमित्यत आह ॥

जह बालोजंपंतो, कज्जमकज्जं च उज्जुयं भणइ ।
तं तह आलोएज्जा, मायामयविप्पमुक्कोओ ॥२३॥

सुगमा ॥

तस्स य पायच्छित्तं, जं मग्गविऊ गुरु वउवइसंति ।
तं तह आयरियव्वं, अणवत्थपसंगभीएणं ॥ २४ ॥

तस्य च साधोर्यत्प्रायश्चित्तं मार्गविदो गुरव उपदिशंति । तत्प्रायश्चित्तं तेनैव विधिना आचरितव्यं कयमनवस्थाप्रसंगभीतेन सता आचरितव्यं अनवस्था नाम. •यद्यकार्यसमाचरणात्प्रायश्चित्तं न कृतं तदा अन्येऽपि न समाचरिष्यन्ति ॥

न वि तं सत्थं व विसं, वदुप्पउत्तो य कुणइ वेयालो ।
जंतं व दुप्पउत्तं, सप्पो य पमाइणो कुद्धो ॥ २५ ॥

न तत्करोति दुःखं शस्त्रं नापि विषं नाऽपि दुःप्रयुक्तो दुःसाधितवेतालः यंत्रं वा दुःप्रयुक्तं सर्पो वा क्रुद्धः प्रमादिनः पुरुषस्य दुःखं करोति ॥

जं कुणइ जावसल्लं, अणुद्धियं उत्तिमहकालंमि ।
दुल्लजवोहीयंतं, अणंतसंसारियत्तं च ॥ २६ ॥
यत्करोति भावशल्यं अनुद्धृतं शस्त्रादिदुःखानि पुनरेकभव एव भवंति अतः संयतेन सर्वमालोचयितव्यं ।
ता उध्धरंति गारव, गहियासूलं पुणब्भवलयाणं ।
मिच्छादंसणसल्लं, मायासल्लं नियाणं च ॥ २७ ॥
ततः एवमालोच्य गौरवरहिता मुनयः उध्धरंति उत्पाटयंति शूलं पुनर्नवलतानां यत् मिथ्यादर्शनशल्यं मायाशल्यं निदानशल्यं च उध्धरंतीति ततः ॥
उध्धरियं सव्वसल्लो, आलोइय निंदिओ गुरुसगासे ।
होइ अइरेगलहुओ, उध्धरियजरुव्वजारवहो ॥ २८ ॥
सुगमा न वरं अतिरेकप्रत्यर्थं लघुर्भवति उत्सीरयभरो उत्तारितभरोभारवहो गर्दभादिः स यथा लघुर्भवति । एवमालोचिते सति कर्मलघुत्वं भवतीति । यतश्चैवंविधः सः ॥
उध्धरिय सव्वसल्लो, भत्तपरिणाए वणियमाउत्तो ।
मरणाराहणजुत्तो, चंदगविज्झ समाणेइ ॥ २९ ॥
उद्धरितसर्वशल्यो भक्तपरिज्ञाए भक्तप्रत्याख्याते वनिकमत्यर्थं अयुक्तप्रयत्नपरः मरणाराधनयुक्तः स एवंविधश्चंद्रवेधं समानयति करोतीत्यर्थः । अत्र च कथानकं राधावेधमंगीकृत्य आवश्यकादवसेयमिति ॥ ओघ. ॥

( ४ ) विहारादिभेदेनालोचना त्रिविधा तद्भेदाश्च ॥

आलोचना त्रिविधा । तद्यथा । विहारालोचना उपसंपदालोचनाऽपराधालोचना च व्य. उ. १
तत्रप्रथमां विहारालोचनां तावदाह ॥
तं पुण ओहविजागे, दरजुत्ते ओह जाव भिन्नोउ ॥
तेण परेण विजागो, संजमसच्छाइजयणाओ ॥ १ ॥
तत्पुनर्विहारालोचनं द्विधा तद्यथा ( ओहविभागे ) इति प्राकृतत्वात् तृतीयार्थे सप्तमी । ओघेन विभागेन वा ओघः समान्यं विभागो विस्तरः । तत्र ये साधवः समाना ( भोदरभुंते ) इति ईषद्भुंक्ते वास्तव्यसाधुभिरिति गम्यते । भोक्तुमारब्धवतां वास्तव्यसाधूनामित्यर्थः । प्राघूर्णकाः समागताः ( तउहत्ति) ओघेनालोचयंति । यथा अल्पा विराधना मूलगुणेष्वल्पा पार्श्वस्थादिषु दानग्रहणतश्चेत्येवमालोच्य मंरुल्यां भुंजते तत्र यदि मूलगुणापराधनिमित्तं वा प्रायश्चित्तं पंचकादि यावत् । भिन्नो भिन्नमासः भिन्नमासपर्यंतमापन्ना भवंति तदा ओघालोचनामालोच्य साधुभिः प्रशस्तस्य प्रशस्तो विपक्षः ततोऽप्यमर्थः । प्रशस्ते वा दिवसे रात्रौ वा न स्यातामिति " विवक्खातो होउ तइयाउ " इति तृतीया पुनरपराधालोचना विभागतो दीयमाना विपक्षतः सर्वस्यवाक्यस्य विपक्षव्यवच्छेदफलतया साधारणत्वाद्विपक्षत एव प्रशस्त एव दिवसे रात्रौ वा भवतीति भावः ॥
सांप्रतमोघालोचनायाः प्रकारमाह ॥
अप्पा मूलगुणेसुं, उत्तरगुणतो विराहणा अप्पा ।
अप्पापासत्थादिसु, दाणुग्गहसंपयो गाहा ॥ १ ॥
अल्पा स्तोका विराधना मूलगुणेषु प्राणातिपातनिवृत्यादिषु रात्रिभोजनविरमणपर्यंतेषु अल्पा विराधना । उत्तरगुणेषु पिंडविशुद्ध्यादिषु अल्पा विराधना । पार्श्वस्थावसन्नकुशीलसंसक्तेषु दानग्रहसंप्रयोगतः दानसंप्रयोगतो ग्रहणसंप्रयोगतश्च । एषा अंघात ओघेनालोचना एवमालोच्य मंरुल्यामेकत्र समुद्दिशंति ॥ व्य० उ० १ ॥
विहारविभागालोचनाया विधिमाह ॥
भिक्खादिनिग्गयेसुं, रहिएविरुयंति फट्टगपईओ ।
सव्वसमक्खं केई, ते वीसरियं तु सारेंति ॥
भिक्षादिनिर्गतेषु भिक्षादि आदि शब्दाद्विचारभूमिगमनार्थमन्यप्रयोजनार्थं वा बहिर्विनिर्गतेषु शेषेषु साधुषु । किमुक्तं भवति । यस्यां वेलायां शिष्याः प्रतीच्छकाश्च बहिर्विनिर्गता भवंति । तदानीं रहिते रहितस्य एकाकिन आचार्यस्य समीपे स्पर्द्धकपतिकाः स्पर्द्धकस्वामिनो विकटयंति । आलोचयंति । केचित्पुनराचार्या एतत् ब्रुवते । ये स्पर्द्धकपतिना सह समागताः साधवस्तेषां समक्षं स्पर्द्धकपतयो विकटयंति । किं कारणमिति चेत् आह । ते वीसरियं तु सारेंति । यस्मात्ते यत्किमपि विस्मृतं तत् स्मारयंति कथयंति ॥ व्य० १ उ० ॥

( ५ ) शल्योध्धरणार्थमालोचनाकरणविधिः ॥

शल्योद्धरणायाऽलोचना विधेया तत्फलं च केवलज्ञानम् तथाच महानिशीथे १ अ. ॥
णवरं सुहासुहं, सव्वं सुविणगं समवधारए ॥
जं तत्थ सुविणगे, पासे तारिसगतं तहा भवे ॥ ५१ ॥
जईणं सुंदरगं पासे, सुमिणगंतो इमं महा ॥
परमत्थतत्थसारत्थं, सल्लुध्धरणं सुणेतु णं ॥ ५२॥
देज्जा आलोयणं सुध्धं, अट्ठमयट्ठाणविरहिओ ॥
रंजंतो धम्मातित्थयरे, सिध्धे लोगगासट्ठिए ॥ ५३ ॥
आलोएत्ता ण णीसल्लं, सामण्णेण पुणो विय ॥
वंदित्ता चेइए साहू, विहपुव्वेण खमावए ॥ ५४ ॥
खामित्ता पावसल्लस्स, निम्मूलुध्धरणं पुणो ॥
करेज्जा विहिपुव्वेणं, रंजंतो ससुरासुरं जगं ॥ ५५ ॥
एवं होऊण निस्सल्लो, सव्वभावे पुणोरवि ॥
विहिपुव्वं चेइए वंदे, खामे साहंमिए तहा ॥ ५६ ॥
नवरं । जेण समं वुत्थो, जेहिं सध्धिं पविहरिओ ॥
खरफारिसं चोइओ, जेहिं जेहिं सयं वाइओ ॥ ५७ ॥
जे वियकज्जमकज्जे वा, भणिओ खरफरुसनिट्ठुरं ॥
भणियं जेण वा किंचि, सोजइ जीवई जई मुओ ॥५८॥
खामेयव्वो सव्वभावेण, जीवंतो जत्थ चिट्ठई ॥
तत्थ गंतूण विणएण, मउवी साहुसक्खियंम् ॥ ५९ ॥
एवं खामणमरिसामणं, काउं तिहुअणस्सवि भावओ ॥
सुध्धो मणवइकाएहिं, एयं घोसेज्ज निच्छिओ ॥ ६० ॥
खमावेमि अहं सव्वे, सव्वे जीवा खमंतु मे ॥
मित्ति मे सव्वभूएसु, वेरं मज्झ ण केण वि ॥ ६१ ॥
खमामि अहं पि सव्वेसिं, सव्वभावेण सव्वहा ॥
भवे भवेसु वि जंतूणं, वाया मणसा य कम्मुणा ॥ ६२॥
एवं घोसे तु वंदिज्जा, चेइय साहू विहियओ ॥

गुरुस्सावि विहीपुव्वं, खामणमरिसामणं करे ॥ ६३ ॥
खमावेंतु गुरुं सम्मं, नाणमहिमं स सात्तिओ ॥
काऊणं वंदिऊणं च, विहिपुव्वेण पुणोवि य ॥ ६४ ॥
परमन्नतत्तसारन्नं, सल्लुध्दरणमिमं सुणे ॥
सुणेज्जा तहमालोए, जह आलोयतोचेव ॥ ६५ ॥
उप्पाए केवलं नाणं, दिन्ने रिसभावत्थाहि निसल्ला ॥
आलोयणा जेण, आलोयमाणाणं चेव उप्पन्नं तत्थ-
केवलं ॥ ६६ ॥
केसिं विसोहिमो नामे, महासत्ताण गोयम ! । जेहिं भा-
वणा लोययं, तेहिं केवल नाणमुप्पाइयं ॥ ६७ ॥
हाहा दुट्ठु कम्मे साहू,हाहा दुट्ठु विचिंतिरे ।
हाहा दुट्ठुभाणिरे साहु, हाहा दुट्ठुमणुमते ॥ ६८ ॥
संवेगालोयगे तह य, भावालोयणकेवली ॥
पयखेव केवली चेव, मुहणांतगकेवली ॥ ६९ ॥
तहा पच्छित्तकेवली, सम्मं महावेरग्गकेवली ॥
आलोयणकेवली तहय, हा हं पावित्तिकेवली ॥ ७० ॥
उस्सुत्तमग्गं पन्नवए, हाहा अणायारकेवली ॥
सावज्जं न करेमित्ति, अक्खंमिय सीलकेवली ॥ ७१ ॥
तवसंजमवयसं, रक्खे निंदणगरहणे तहा ।
सव्वतो सीलसंरक्खे, कोमीपच्छित्ते वि य ॥ ७२ ॥
निप्परिकम्मे अ कंडुपणे, अणिमिसत्थी य केवली ।
एगपासित्तदोपहरे, मूणव्वयकेवली तहा ॥ ७३ ॥
न सक्कोकाउ सामन्नं, अणसणे वामि केवली ।
नवकारकेवली तहय, य निव्वालोयणकेवली ॥ ७४ ॥
नीसल्लकेवली तह य, सल्लुध्दरणकेवली ।
धन्नोमितिसंपुन्नो, स ताहंपी किन्न केवली ॥ ७५ ॥
ससल्लो हं न पारेमि, वलकट्ठपयकेवली ।
पयखसुध्द विहाणे य, चाउम्मासी य केवली ॥ ७६ ॥
संवच्छरमहपच्छित्ते, जहा चलजीविते तहा ।
अणिच्चे खणविध्दंसी, मणुपत्ते केवली तहा ॥ ७७ ॥
आलोयं निंदरं दियए, घोरपच्छित्तदुकरे ।
लखोवलग्गपच्छित्ते, संमाहिया सए केवली ॥ ७८ ॥
हत्थोसरणनिवासे य, अट्ठकवलासि केवली ।
एगसिध्दगपच्छित्ते, दसवासो केवली तहा ॥ ७९ ॥
पच्छित्ताढवगोवेसु, पच्छित्तध्दकयकेवली ।
पच्छित्तपरिसमत्ती, य अह स उकोसकेवली ॥ ८० ॥
न सुध्दिवि न पच्छित्ता, नावरं खिप्पकेवली ।
एगं काऊण पच्छित्तं, वीयं न भवे जह चेव केवली ॥ ८१ ॥
तं वा यराम पच्छित्तं, जेण गच्छइ केवली ॥
तं वा यराम जेण तमं, सफली होइ केवली ॥ ८२ ॥
किं पच्छित्तं चरंतोहं, विहणो तवलीजिणा ॥
ण माणंण लंघेयं पाण, परिच्चयणकेवली ॥ ८३ ॥
अन्नं होही सरीरं मे, नो वोही चेव केवली ॥
सुन्नध्दामिणं सरीरेणं, पाविणीदुहगकेवली ॥ ८४ ॥
अणाइपावकम्ममलं, निध्दोवेमीह केवली ।
वीयंतं न समायरियं, पमाया केवली तहा ॥ ८५ ॥
देहे खवउ सरीरं मे, निज्जराभावउ केवली ।
सरीरस्स संजमं सारं निक्कलंकं तु केवली ॥ ८६ ॥
मणसा विखंमिए सीले, पाणए धरामि केवली ।
एवं वइकायजोगेणं, सीलं रक्खे अहं केवली ॥ ८७ ॥
एवमाई अणादीया, कालाउ णंते मुणी ।
केइयालोयणासिध्दे, पच्छित्ता जाइ गोयमा ! ॥ ८८ ॥
खंता दंता विमुत्ता य, जिइंदी सव्वभासिणो ।
छकायसमरंभाओ, विरत्ते तिविहे णओ ॥ ८९ ॥
तिदंमा सवसंवरिया, इत्थिकहासंगवज्जिया ।
इत्थिणं लावनिराय, अंगोवंगणिरक्खणा ॥ ९० ॥
निम्ममत्ता सरीरेवि, अप्पमिवध्दा महायसा ।
भीयाइत्थियियगब्भवसहीणं, बहुदुक्खाओ भवओए?
तहा तोपरिसेणं, भावेणं दायव्वा आलोयणा ।
पच्छित्तं पि व कायव्वं, तहा जहा चेव एहिं कयं ९२॥
न पुणो तहा आलोएयव्व, मायाडंभेण केणइ ।
जह आलोयणं चेव, संसार वुड्डिभवे ॥ ९३ ॥
अणंतेणाइकालाओ, अत्तकम्मेहिं दुम्मइ ।
बहुविकप्पकल्लोले, आलोए तेवि अहोगए ॥ ९४ ॥
द० प० ॥ नहु सिज्झई स स सल्लो, जह भणियं सा-
सणं धुयरयणा ।
उध्दरियसव्वसल्लो, सिज्झइ जीवो धुअकिलेसो २४ ॥
सुवहुंपि भावसल्लं, जे नालोयंति गुरुसगासंमि ।
निसल्लासंथारग, सुविंतिआराहगा हुंति ॥ २५ ॥
अप्पंपि भावसल्लं, जे नालोयंति गुरुसगासंमि ।
वंतंपि सुयसमिध्दा, नहु ते आराहगा हुंति ॥ २६ ॥
नवि ते सत्थं च विसं, च दुप्पउत्तो वि कुणइ वेयालो ।
जंतं च दुप्पउत्तं, सप्पुव्वपमाइओ कुध्दो ॥ २७ ॥
जं कुणइ भावसल्लं, अणुद्धियं उत्तमट्ठकालंमि ॥
दुल्लभवोहियत्तं, अणंतसंसारियंतं च ॥ २८ ॥
तत्पुध्दरंति गौरव, रहिया मूलं पुणब्भवलयाणं ॥
मिच्छादंसणसल्लं, मायासल्लं नियाणसल्लं च ॥ २९ ॥
मरिऊं ससल्लमरणं, संसारामविमहाकमिल्लम्मि ॥
सुचिरं भमंति जीवा, अणोरपारंमि ओइन्ना ॥ ४२ ॥
व्याख्या । मृत्वा आसेव्य सशल्यमरणं प्रतीतं ततः किमि-
त्याह । संसाराटविमहाकमिल्ले भवारण्यगुरुगहने सुचि-
रमतिदीर्घकालं भ्रमंति पर्यटंति जीवा देहिनः अनर्वाक् पारे

अर्वाक्भागपरभागवर्जितं अवतीर्णा अवगाढा इति संवेगं कृत्वेति योगः ॥

तथा ॥

उद्धरियसव्वसल्ला, तित्थगराणाए सुत्थिया जीवा ।
जवसयकयाइं खविओ, पावाइं गया सिवं थामं ॥ ४३ ॥

व्याख्या ॥ उद्धृत सर्वशल्याः कृतालोचनास्तीर्थकराज्ञायां जिनोपदेशे सुस्थिताः सुष्ठु व्यवस्थिताः संतो जीवा देहिनः भवशतकृतानि जन्मशत विहितानि क्षपयित्वा प्रकृपस्यश-स्योद्धारसामर्थ्यात् पापानि कर्माणि गताः प्राप्ताः शिवं निरुपद्रवं ( यामंति ) स्थानं सिद्धालयमित्यर्थः ॥

सल्लुद्धरणं च इमं, तिलोगवंधूहिं दंसियं सम्मं ।
अवितहमारोगफलं, धएणोहं जेणिमं णायं ॥ ४४ ॥

व्याख्या । शल्योद्धरणमालोचना च शब्दः पूर्वगाथाद्वयोक्तार्थापेक्षया समुच्चयार्थः । इदमनंतरोक्त विधानं त्रिलोकबंधुभिर्जिनैरित्यर्थः दर्शितमुक्तं । सम्यक् सोपपत्तिकं अवितथमव्यभिचारि आरोग्यफलं भावारोग्यसाधकं ततश्च धन्योऽहं पुण्यवानहं येन मया इदमेतच्छल्योद्धरणं ज्ञातमवगतं ॥

ता उद्धरेमि सम्मं, एय एयस्स णाणरासिस्स ।
आवेदियं असेसं, अणियाणो दारुणविवागं ॥ ४५ ॥

व्याख्या । ता इति यस्मादिदं मया ज्ञातं तत्तस्मादुद्धराम्यपनयामि सम्यग् न्यायेन एतत् भावशल्यं एतस्य गुरोर्ज्ञानराशेः अग्रे सल्लोधनिकरस्यावेद्य कथयित्वाऽशेषं सकल मनिदानो निर्निदानः सन् दारुणविपाकं रौद्रफलं शल्यमिति प्रक्रमः ॥

इय संवेगं काउं, मरुगाहरणादिएहिं विविहेहिं ।
दढपुणकरणाजुत्तो, मामायारिं पउंजेज्जा ॥ ४६ ॥

॥ व्या० ॥ इति एवमनंतरगाथाचतुष्कोक्तप्रकारं संवेगं शुभाध्यवसायविशेषं कृत्वा विधाय केरित्याह । मरुकाहरणादिभिर्ब्राह्मणोदाहरणाद्यैः समयप्रसिद्धैर्भिन्नैर्भिर्गर्भमरणान्त्युपगमेनाऽपि शुद्धिः कार्येत्येवंभूतार्थगमकैः ॥ पंचा-वृ-१५.

नवि सुज्झंति ससल्ला, जह भणियं सव्वभावदंसीहिं ।
मरणापुणब्भवरहिआ, आलोअणनिंदणा साहू ॥५५॥द.प.४॥

( ६ ) आलोचनीये विषये यथाक्रममालोचनाप्रकारः ॥

संप्रति यत् आलोचनीयं तदालोचनाविषयं तस्य विधिमाह ।

मूलगुणपढमकाया, तत्थवि पढमं तु पंथमादीसु ।
पाय अपमज्जणादी, विइए उल्लाइपंथे वा ॥

इह द्विधा अपराधा ( मूलगुणापराधा उत्तरगुणापराधाश्च तत्र उभयसंभवे प्रथमं ) मूलगुणापराधालोचना । तेष्वपि मूलगुणापराधेषु मध्ये प्रथमं मूलगुणापराधः प्राणातिपात इति सः प्रथममालोचनीयः । स च षड्जीवकायविषय इति काया प्रथमत आलोचयिष्यन्ते च कायाः पृथिव्यादिक्रमेण तत्र सूत्रे तपन्यस्ता इति ( तत्थवि ) तेष्वपि कायेषु पृथिव्यादिषु मध्ये प्रथमं पृथिवीकायमेवमालोचयेत् ।" पंथमादीसु पादअपमज्जणादी,, पंथादिषु यत् पादप्रमार्जनादि कृतं । किमुक्तं भवति । पथि व्रजिता स्थंडिलादस्थंडिलाद्वा स्थंडिलं कृष्णमृत्तिकातो वा नीलमृत्तिकां नीलमृत्तिकातो वा कृष्णमृत्तिका मेवं शेषवर्णेष्वपि भावनीयं । संक्रामता पादयोर्यत्प्रमार्जनं न कृतं । तथा वातोद्धृतेन सचित्तेन रजसा सचित्तया वा मृत्तिकया संसृष्टेन हस्तेन संसृष्टेन मात्रकेण वा यत् भिक्षाग्रहणं कृतं । तदेव मयाऽऽलोचीति सर्वत्रापि सामर्थ्यात् योजनीयम् "विइय उल्लाइ पंथेवा,, इति पृथिवीकायविराधनालोचनानंतरं द्वितीये अप्कायविषये यदुदकार्द्रादि आदिशब्दात्सस्निग्धादि परिग्रहः । एतदुक्तं भवति । उदकार्द्रेण सस्निग्धेन वा हस्तेन मात्रेण भिक्षाग्रहणं कृतं पथि वा मार्गे वा अयतनया उदकमुत्तीर्णे वा एवमादि तयालोचयेत् ।

तइए पइट्ठियादी, अभिधारणवीयणादि वाउंमि ।
वीयाइघट्टपंचमे, इंदिये अणुवायतो छट्टे ॥

अप्कायविराधनालोचनानंतरं तृतीये तेजस्काये यत् प्रतिष्ठितादितेजसि परंपरादिप्रतिष्ठितं भक्तं पानं वा गृहीतं ॥ आदिशब्दात् सद्योषिति वा वसतावस्थानं कृतमित्येवमादीतिभावः । तदा लोचयेत् । तदनंतरं वायौ वातकाये यत् अभिधारणवीजनादि कृतं । घर्मार्तेन बहिर्वातोऽभिसंधारितो भक्तं पानं शरीरं वा वीजनिकादि वा जीवितं एवमादि तदालोचयेत् । ततः पंचमे वनस्पतिकाये "वीयाइघट्टत्ति,, । यत् बीजादिघट्टनं आदिशब्दात् हरितकायादिपरिग्रहः उपलक्षणमेतत् । तेन यदि वा बीजादिकं भिक्षासु पतितं गृहीतमित्येवमादि तदालोचयेत् । तदनंतरं षष्ठेऽत्र त्रसकाये इंद्रियानुपातत इंद्रियवृद्धिक्रमेणालोचना दातव्या ॥ तद्यथा । प्रथमतो । द्वींद्रियाणां संघट्टनपरितापनाद्यालोचयेत् । तदनंतरं त्रींद्रियाणां चतुरिंद्रियाणां ततः पंचेंद्रियाणामिति । एवं प्रथममूलगुणापराधेषु क्रमेणालोचितेषु सत्सु ॥

दुब्भासियहसियादी, विए तइए य जावियग्गहणं ।
संघट्टणपुव्वरयादी, इंदियआलोगमेहुणे ॥

द्वितीये मूलगुणापराधिमृषावादे मृषावादविषये यत् दुर्भाषितहासितादियत्किमपि दुर्भाषितं हासेन वा मृषावादो भणितः आदिशब्दात् । क्रोधेन वा मानेन मायया वा लोभेन वा यत्किमपि मृषा भणित मिति परिग्रहस्तदालोचयेत् । तदनंतरं तृतीयेन मूलगुणापराधे अदत्तादानलक्षणे यत् अयाचितस्य तृणडगलकादेर्ग्रहणं उपलक्षणमेतत् । तेन अनुज्ञाप्य वा अवग्रहं कायिकादिव्युत्सृष्टं भवेदित्यादि परिग्रहः । तदालोचयेत् । मैथुनविषये ततो मैथुने यत् घट्टने पूर्वरतादि । किमुक्तं भवति । चैत्यवंदनम हिमादिषु प्रभूतजनसंमर्दे स्त्रीशरीरसंघट्टने स्पर्श आस्वादितो भवेत् । पूर्वरतक्रीडितं वा अनुस्मृतं स्यात् ( इंदियत्ति ) इंद्रियाणि वा मनोहरणानि उपलक्षणमेतत् । वदनस्तनादिमतिसुमनोहरमवेक्ष्य मनाक् रागं गतो भवेत् । इत्यादि तदालोचयेत् ॥

मुच्छातिरित्तपंचमे, छट्टे लेवाडअगयसुंठादी ।
गुत्तिसमिईविवक्खा, णामि गहणुत्तरगुणेसु ॥

चतुर्थमूलगुणापराधालोचनानंतरं पंचमे मूलगुणापराधे परिग्रहे विषयभूते यत् उपकरणेषु मूर्च्छा कृता भवेत् । ( अइरित्तत्ति ) अतिरिक्तो वा उपधिः परिगृहीत एतदालोचयेत् । तदनंतरं षष्ठे मूलगुणापराधे रात्रिभोजने (लेवाडत्ति) लेपकृद्द्रव्यतः कथमपि पर्युषितो भवेत् । अगदं वा शुंठ्यादिकं किंचित्सन्निहितं परिभुक्तं भवेत् । एवमादि आलोचयेत् एवं क्रमेण मूलगुणापराधालोचनां दत्वा तदनंतरमुत्तरगुणेषु विषयेषु गुप्तिसमितिविपक्षाः कृताः । अनेषणीयग्रहणं वाऽकारि । किमुक्तं भवति । गुप्तिषु कदाचिदगुप्तः स्यात् । समि-

तिषु कदाचिदसमितोऽनेषणीयं वा भक्तं वा पानं वा गृहीतं स्यादित्यादि आलोचयेत् तथा ॥

संतंमि विज्जविरिए, तवोवहाणे यं जं न उज्जमियं ।
एसा विहारवियडण, वोत्थं उवसंपणाणंतं ॥

सत्यपि विद्यमानेऽपि बले शारीरप्राणः वीर्यमांतरीशक्तिर्य-द्वशात्तपः कुर्वन् शरीरस्यातिकृशतायामपि न संयमयोगेषु सीदति बलं च वीर्यं च बलवीर्यं समाहारे द्वन्द्वस्तस्मिन् तपसो द्विप्रभेदस्याऽपि उपधानं तस्मिन्नोद्यतं नोद्यमः कृत-एतदपि आलोचयेत् । एषा विहारविकटना विहारालो-चना । उपसंपदालोचनाऽपि प्राय एवंरूपा केवलं यन्नानात्वं तत् वक्ष्ये ॥ व्य० ।

तत्रप्रथमत उपसंपदालोचनाया अपराधालोचनायाश्च वि-हारालोचनया सह नानात्वं दर्शयति ॥

एगमणेगा दिवसेसु, होइ ओहे य पदविभागे य ।
उवसंपयावराहे, नायमनायं परिच्छंति ॥

उपसंपच्चापराधश्च उपसंपदपराधस्तस्मिन् आलोचनेति प्रस्तावात् गम्यते उपसंपदालोचना अपराधालोचना चेत्यर्थः। प्रत्येकं द्विधा ( ओघे य ) इत्यादि तृतीयार्थे सप्तमी । ओघेन पदविभागेन च तथा एकैकापि दिवसेषु चिंत्यमाना ( एगमणेगा ) इति पदैकदेशे पदसमुदायोपचारात् । एक दिवसिकी अनेकदिवसिकी च भवति । ओघालोचना एक-दिवसिकी । विभागालोचना एकदिवसिकी अनेकदिवसिकी चेत्यर्थः ॥

तदेवमुक्तमनानानात्वमधुनानात्वमुपदर्शयति । ( नायमनायं परिच्छंति ) उपसंपद्यमानो द्विविधो भवति । ज्ञातोऽज्ञातो वा। तत्र यदि ज्ञातस्ततः स न परीक्ष्यते तस्याग्रेऽपि ज्ञातत्वात् अथाज्ञातस्तर्हि स आवश्यकादिभिः पदैः परीक्षणीय इति ॥

संप्रति यदुक्तं विभागेन ( अप्पसत्थे दिण ) मित्यादि । तद्व्याख्यातुकाम आह ॥

दियरातो उवसंपय, अवराहे दिवसतोपसत्थंमि ।
उग्घातो दिवसं, तिएहंतु अतिक्कमे गुरुगा ॥

विहारालोचनावत् । उपसंपदालोचनाऽपि विभागेन प्रशस्ते वा दिवसे रात्रौ वा दातव्या दोषाभावात् । तथा पूर्वसूरिभि रनुज्ञानात् । अपराधे अपराधविषये पुनरालोचनादिवसतो इति सप्तम्यन्तात् तद्दिवसे उपलक्षणमेतत् । रजन्यां वा प्रशस्ते विष्टि व्यतीपातादिदोषवर्जिते " व्याख्यानतो विशेष प्रतिपत्तिरिति " न्यायात् द्रव्यादिषु प्रशस्तेषु दातव्या नाऽ प्रशस्तेषु एषा जिनाज्ञा । तथा उग्घातो तद्दिवसमिति यस्मिन् दिवसे उपसंपद्यमान आगतः । तस्मिन् दिवसे यदि उद्घात-परिश्रांत इति कृत्वा न पृष्ट आचार्येण ततः स आचार्यः शुद्धः। त्रयाणां तु दिवसानामतिक्रमे । किमुक्तं भवति । त्रिषु दिव-सेषु मध्ये यदि न पृष्टस्ततश्चतुर्थे दिवसे तस्याऽपृच्छतः परिहारस्थानं गुरुकाश्चत्वारो गुरुमासाः । एतच्च उपरि व्या-ख्यास्यते ॥

समणुन्नजुगनिमित्तं, उवसंपज्जंते य होइ एमेव ।
अप्पमणुन्नेन वरं, विभागतो कारणे भइयं ॥

उपसंपद्यमानो द्विधा तद्यथा । समनोज्ञो ऽसमनोज्ञश्च-तत्र समनोज्ञस्य समीपे समनोज्ञ उपसंपद्यमानो द्विकनि मित्तं उपसंपद्यते । तद्यथा ज्ञानार्थं दर्शनार्थंच न चारित्रार्थं येन चरणं प्रति सदृश एव समनुज्ञो द्विकनिमित्त मुपसंप-द्यमाने एवमेव विहारालोचनेव भवत्यालोचना । इयमत्र भावना।समनोज्ञो द्विकनिमित्त मुपसंपद्यमान आलोचनां विहा रालोचना मिव ओघेन ददाति । पदविभागेन च पदविभागे-नालोचना । एकदिवसेन वा भवत्यनेकदिवसैर्वा । एवं सम नोज्ञस्य उपसंपदालोचना ( अप्पमणुण्णे ) त्यादि । अन्यो नाम भिन्न संभोगिकः समनोज्ञो ऽसंविग्नः सो ह्यऽ समनो ज्ञश्च उपसंपद्यमान स्त्रिक निमित्त मुपसंपद्यते । तद्यथा ज्ञाना र्थं दर्शनार्थं चारित्रार्थं वा तस्मिंश्च तथोपसंपद्यमाने पूर्वव-दालोचनां विधिः । अत्रा ऽपीयं भावना अन्यो ऽसमनोज्ञो वा आलोचनां ददाति । ओघेन पदविभागेन च ददान एकदिव-सेन वा ददाति । अनेक दिवसै र्वा नवरमिति विशेष-एष पुनरत्र विशेषः । तस्याऽन्यस्यासमनोज्ञस्य वा आलोच-ना उत्सर्गतो विभागतः सर्ववाक्यं साधारणमिति विभागत एव कारणे पुनर्भजितं विकल्पितं वेलाप्राप्तौ विभागालोचना भवति संभ्रम सार्थादिषु पुनः कारणेषु तदप्राप्ताबोधे नालो-चनेतिभावः । एषा भजना अपराधालोचनाया अपि द्रष्ट-व्या तथाहि । अपराधालोचना व्युत्सर्गतः पद विभागेन दात-व्या अपवादकारणे पुनः संभ्रम सार्थादिलक्षणा ओघेनापीति । संप्रति उच्यते । तद्दिव समिति व्याख्यातुकाम आह ।

पढमदिणमविफाले, लहु विइए गुरुतइए लहुया ।
तेव्विय तम्हाकहणे, सुद्धमसुद्धोत्तिमेहिंतु ॥

यः स मनोज्ञ उपसंपदनार्थमागतस्तं यद्याचार्यः प्रथमदिवस-मिति सप्तम्यर्थे द्वितीया प्रथमदिवसेन ( विप्फालेइ ) देशी-वचनमेतत् पृच्छतीत्यर्थः । उक्तंच" विप्फालनत्ति पुच्छणत्ति वा एगट्ठमिति „ यथा कुत आगत कुत्र वा गमिष्यसि । किं निमित्तं वा समागत इति । ततस्तस्य दिवसे एव मविप्फा-लने परिहारस्थानं ( लहुयत्ति ) मासलघु द्वितीयेऽपि दिवसे यदि न पृच्छति ततो ( गुरुत्ति ) मास गुरु ( तइएत्ति-तृतीये दिवसेऽप्यपृच्छने ( लहुया ) इति चत्वारो लघुमासा-चतुर्थेऽपि दिवसे यदि न पृच्छति । ततः ( तिएहं तु अइक्क-मे गुरुगा ) इति वचनाच्चतुर्गुरु पंचमादिषुदिवसेष्वप्रच्छने तदेव चतुर्गुरु ( तिएहंतु अइक्कमे ) गुरुगा इति निरवधितया वचनप्रवृत्तेः । "तव्वियतस्साकहणे" इति ते च प्रायश्चित्तवि-शेषाः क्रमेण तस्याकथने । तद्यथा । स पृष्टः सन् यदि ब्रूते कथयिष्यामि न तु कथयति । तस्मिन् प्रथमदिवसे अकथने मासलघु । द्वितीयदिवसेऽप्यकथयतो मासगुरु । तृतीयदिवसे चतुर्लघु चतुर्थदिवसेऽप्यकथयतश्चत्वारो गुरुमासाः । ततः परं पंचमादिष्वपिदिवसेष्व कथने तदेव चतुर्गुरु ।

इदानीं उग्घातो तद्दिवसमिति व्याख्याया अवसरः । तद्दिवसे प्रथमदिवसे उद्घात इति कृत्वा न पृच्छति । तत आचार्यः प्रथमदिवसे अविप्फालेअपृच्छने ( लहुयत्ति ) लघु न दोष-गुरुः शुद्ध इत्यर्थः । कारणवशेनापृच्छनात् द्वितीयदिवसे न पृच्छति मासगुरु तृतीयदिवसेऽप्यप्रश्ने चतुर्गुरु । एवं तेनोप-संपद्यमानेन पृष्ठेन वा यद्व्याख्यातं भवति । तथाचाह ॥ ननु केन कारणेन वा समागत इति । तत आगतार्थिचतनीयः ( सु-द्धमसुद्धोवत्ति ) शुद्धोऽशुद्धो वा अत्र चत्वारो भंगास्तद्यथानिर्ग मनमप्यशुद्धमागमनमप्यशुद्धं १ निर्गमनमशुद्धमागमनं शुद्धं २ निर्गमनं शुद्धमागमनमशुद्धं ३ निर्गमनमपि शुद्धमागमनमपि

ग्रुरू ४ तत्र प्रथमभंगेननिर्गमन ( इमेहितुत्ति ) पश्चिविंशतमा णि द्वाराणि भिद्यितान्येव द्वाराणि दर्शयति ॥

अहिगरणविगतिजोगे, पडिणीए थद्धलुद्धनिद्धम्मे ।

अज्ञलसअणुबद्धवेरे, सच्छंदमनीपयाहियव्वो ॥

यदि स उपसंपद्यमानोऽधिकरणतः स्वस्थानान्निर्गतः ( विगतित्ति ) विकृतेर्वोपस्थात ( योगत्ति ) योगोद्वहनभीरुतया ( पडिणीपत्ति ) प्रत्यनीकोऽत्र मे साधुरिति बुद्ध्या तथा थद्धलुद्ध" इत्यादिस्तब्ध इति वा लुब्ध इति वा निर्द्धर्म्म इति वा अलस इति वा स्वच्छंदमतिरिति वा विनिर्गतस्तत स्तस्य निर्गमनमशुद्धमिति कृत्वा ( पय.हयव्वोत्ति ) परिहर्त्तव्यः । तदपरिहरणे प्रायश्चित्तं तत्राधिकरणविषये प्रायश्चित्तमाह ।

गिहिसंजय अहिगरणे, लहु गुरुगा तस्स अप्पणोच्छेदो ।

विगई न देइ घेत्तुं, उत्तरयं व गहिये वि ॥

गृहिभिः संयतैश्च सहाधिकरणे विनिर्गतं यद्याचार्य्यः स्वीकरोति ततो यथाक्रम प्रायश्चित्तं लघुगुरुकं । इयमत्र भावना । यदि गृहस्थेन सहाधिकरणं कृत्वा विनिर्गतस्तं यद्याचार्यःसंगृह्णाति ततस्तस्याचार्यस्य परिहारस्थानं चत्वारो लघुमासाः अथ संयतेन सममधिकरणं कृत्वा समागतं संगृह्णाति ततश्चत्वारो गुरुकाः । तस्य पुनरागंतुकस्य ( पणत्ति ) रात्रिंदिवपंचकप्रमाणाः पर्यायस्य च्छेदः । इहाऽधिकरणादिदोषतो विनिर्गतास्ते प्रश्ने वा सति तदुक्तिवशादवसीयंते । तत्र विकृतिदोषविनिर्गतपृष्टस्य वा य उक्तिविशेषस्तं दर्शयति ( विगइमित्यादि ) आचार्यो विकृतिं घृतादि कांग्रहणां य न ददाति तथा योगवाहिभिर्योगोत्तीर्णैः कायोत्सर्गकरणतो गृहीतोऽपि परिपूर्ण विकृतिजातेऽन्यैर्भुक्ते या उद्धरिता विकृतिस्तामपि नानुजानाति किंच ।

नववज्जिया विदेहो, पगईए दुब्बलोअहं भंते ! ।

तब्भावियस्स इर्हिं, नयगहणं धारणं कत्तो ॥

वज्जिवावोनाम देशीवचनत्वादिक्षुः । उक्तं च " वज्जियावगोउच्छू " इति नववज्जियावत् देहो यस्य स तथा । इयमत्र भावना । स ब्रूते अहं भगवन् ! नवेक्षुतुल्यो मम देहो यथा स इक्षुः पानीयेन विना शुष्यति तथा ममापि देहो विकृतिं विना सीदति । अन्यच्चाऽहं स्वभावत दुर्बलो न विकृतिमंतरेण बलिको भवामि । तथा सर्वदैव विकृत्याचितदेहस्ततस्तद्भावितस्य सतो ममेदानीं तयाऽभावेन बलं न च सूत्रार्थस्य वा ग्रहणमशक्तत्वात् । पूर्वं गृहीतस्य सूत्रस्यावधारणं कुतः तत् अशक्त्या सर्वं दूरत एव विस्मृतं । ततोऽहं विनिर्गतः ॥

संप्रति योगविषये प्रत्यनीकविषये चोक्तिविशेषं दर्शयति ॥

एगंतरनिव्वगत्ती, जोगोपव्वत्तियगोवमे अत्थि ।

बुक्कखलिएसु गेण्हइ, छिद्दाणि कहेइय गुरूणं ॥

तस्मिन् गच्छे योग एकान्तरनिर्विकृतिकः । किमुक्तं भवति । सगृह्णीयात् ब्रूते । तस्याऽऽचार्यस्य गच्छे योग एकान्तरोपवासेनाऽन्ने । एकान्तरा चाम्लेन वा तथा योगवाहिना योगोत्तीर्णस्याऽपि न आचार्या विकृतिं न विसृजंति । ततः कर्कशा सुत्र योगा इति विनिर्गतः ॥ न तथा तत्र गच्छे मे मम प्रत्यर्थिकः । प्रत्यनीकोऽस्ति स कथं चिरसामाचारीयोगेषु "बुक्कखलिएसु त्ति" बृद्धखलित मात्र आदीनीति स्खलितेषु जातेषु । अथवाऽह मां गृह्णाति अत्यर्थं खरंटयति । अथवा बुक्कस्खलितेषु जातेषु तानि बुक्कस्खलितानि अपराधपदे छिद्राणीवछिद्राणि गृह्णाति गृहीत्वा गुरूणां कथयति । पश्चात् गुरवो मां खरंटयंति ततो विनिर्गतः ॥

संप्रति लुब्धस्य स्तब्धस्य चोक्तिविशेषं दर्शयति ॥

चंकमणादिउठाणे, कडिग्गहणं काउ नत्थि वाहि एवं ॥

भुंजइ सयमुक्कोसं, तयदेति नेमिलुद्धेवं ॥ १ ॥

स्तब्ध एवं भाषते चंक्रमणादावुत्थाने कटिग्रहणं स्वाध्यायश्च नास्ति । एतदुक्तं भवति । यद्याचार्याश्चंक्रमणं कुर्वंति । आदि शब्दात् यदि वा कायिक्यादिभूमिं गच्छंत्यागच्छंति वा तथा तथाऽप्यभ्युत्थातव्याः । तेषां नायकत्वात् । ततः एवं चंक्रमणादावभ्युत्तिष्ठतामस्माकं कटी वा तेन गृह्यते भूयोभूय उत्थाने पलिमंथभावात् सूत्ररूपस्याऽर्थरूपस्य वा स्वाध्यायस्य हानिः । अथ नाभ्युत्थीयतेऽतः आचार्यः प्रायश्चित्तं ददाति खरंटयति च । ततोऽहं विनिर्गतः लुब्धः पुनरेवं ब्रूते यत्किमप्युत्कृष्टं शिखरिणीमोदकादि तदाचार्यः स्वयं भुंक्ते न त्वस्माकं इशेन्यो ददाति । अन्येभ्यो वा बालदुर्बलप्राघुर्णकेभ्यो ददाति ततः एवमसहमानोऽहं निर्गतः ॥

अथवा निर्द्धर्मालसयोरुक्तिविशेषं प्रकटयति ॥

आवासियापमज्जण, अकरणं उज्जदंरुनिद्धम्मो ॥

बालावुड्ढादीहा, भिक्खायरिया य उज्झामा ॥ १ ॥

योनिर्द्धर्म्मा स पृष्टः सन्नेवं वक्ति आवश्यक प्रमार्जनीकरणे उग्रदंडा आचार्याः । इयमत्र भावना । यदि कथमपि निर्गच्छन् प्रविशन् वा आवश्यकीं नैषेधिकीं च न करोति दंडादिकं वा गृह्णन् निक्षिपन्वा न प्रमार्जयति । तत आचार्या निरनुकंपाः संतः उग्रं प्रायश्चित्तरूपं दंडं प्रयच्छंति ततोऽहं दंडभयाद्विनिर्गतः । यः पुनरलसः स एवं ब्रूते । बालाद्यर्थाय बालवृद्धादीनामर्थाय । तस्मिन् गच्छे दीर्घभिक्षाचार्या अथवा कुल्लकं कर्कशं वा तत् क्षेत्रं ततो दिने दिने उद्भामा भिक्षाचर्या प्रतिदिवसमन्यत्र ग्रामान्तरे गत्वा भिक्षा नीयते इति भावस्तया यदिकथमप्यपर्याप्तेन समागम्येत ततो गुरुः खरंटयति किं वसतौ न महानसमस्ति येनापर्याप्तः समागतः । तस्मा द्भूयोऽपि व्रज भिक्षार्थं यतः, कालोऽद्यापि बहु प्राप्य इति ततोऽहं निर्गतः ॥

सांप्रतमनुबद्धवैरस्वच्छंदमत्योरुक्तिविशेषं दर्शयति ॥

पाणसुणगा व भुंजंति, एगत्तो भंडिउंपि अणुबद्धो ॥

एगागिस्स न लब्भा, बलिउं घेवंपि सच्छंदो ॥

अनुबद्धोऽनुबद्धवैरो भवति भंडित्वाऽपि भंडनं कलहस्तमपि कृत्वा पाणशुनका इव एकत्र भुंजते ॥ इयमत्र भावना ॥ यथा पाणाश्चंडालाः शुनकाः कुर्कुराः परस्परं भंडित्वा तत्क्षणादेवैकत्र भुंजते । एवं तत्र संयता अपि नवरं मिथ्यादुष्कृतं परस्परं दाप्यं इति विशेषः । अहं पुनर्न शक्नोमि हृदयस्थेन शल्येन तैः सह एकत्र समुद्देष्टुमिति विनिर्गतः । स्वच्छंदमतिः पुनरेवं भाषते एकाकिनः सतः स्तोकमपि न लभ्यं चलितुं । किमुक्तं भवति । संज्ञाभूमावप्येकाकिनः सतो न गंतुं प्रयच्छंति किंत्वेवं ब्रुवते नियमात्संघाटक रूपतया केनापि सहितेन गंतव्यं । ततस्तमसहमानो ऽहमत्रागतः । एतान्यधिकरणादीनि पदान्याचार्यः श्रुत्वा तं परित्यजति । एवं अधिकरणादिपदैरागतस्य तस्योपसंपद्यमानस्य चाप्रतीच्छतआचार्यस्येव प्रायश्चित्त ।

जइ भंडणपडिणीए, लुद्धे अणुवद्धरोस चउगुरुगा ॥
सेसा ण हुंति लहुगा, एमेव पडिच्छमाणस्स ॥

यो यतिभिः सह भण्डनं कृत्वा समागतः । यश्च तत्र मे प्रत्यनीकः साधुरिति कृत्वा समागच्छेत् । यश्च लुब्धो यश्चानुबद्धरोषः । एतेषामुपसंपदं प्रतिपद्यमानानां प्रायश्चित्तं चतुर्गुरुकाः चत्वारो गुरुमासाः । शेषाणां भंडनकारिविकृतिप्रतिबद्धयोगभीरुस्तब्धनिर्द्धर्मस्वच्छंदमतीनां लघुका इति चत्वारो लघुकाः । यः पुनराचार्यस्तदाचार्याननुज्ञया प्रायश्चित्तदानमंतरेण च प्रतीच्छति तस्यापि प्रायश्चित्तमेवमेव । तद्यथा । यतिभंडनकारिप्रत्यनीकलुब्धानुबद्धवैरान्प्रतीच्छतश्चत्वारो मासाः शेषान् षट्प्रतीच्छतश्चत्वारो लघुमासाः । अथवा ये एते दोषा उक्तास्तेषां मध्ये एकेनापि दोषेण नागतो भवेत् किन्त्वे निर्वक्ष्यमाणैस्तानेवाह ।

एगे अपरिणए वा, अप्पाधारे य थेरए ।
गिलाणे बहुरोगी य, मंदधम्मे य पाहुडे ॥

यदि एक एकाकी पश्चादाचार्यः ।

यदिवा अपरिणए वा, अप्पाधारे य थेरए ।
गिलाणे बहुरोगी य, मंदधम्मे य पाहुडे ॥

यदि एकतः । अकल्पिकवस्त्रादिसहितः स च कल्पिकवस्त्राद्युत्पादने लब्धिमानथवा तदाचार्योऽल्पाधारः सूत्रार्थेषणविकलः स च पृष्टः सन् सूत्रार्थकथने निपुणः शक्तिमान् यदि वा तदाचार्यः परिवारो वा स्थविरो जरसा वृद्धशरीरः । स च तेषां प्रतिजागरूकः अथवा पश्चादेको ग्लानः । स च तस्य चिंताकारी यदि वा पश्चात्तत्रैको बहुरोगी नाम बहुभिः साधारणैरोगैर्जाप्यशरीरः स च तस्य वर्त्तापकः । यदि वा पश्चात्तनाचार्यपरिवारः सर्वोऽपि निर्द्धर्मा न गुर्वाज्ञां करोति केवलं तद्भयात् किमपि करोति । तथा तत्र पश्चात् गुरोः केनापि सह प्राभृतं वर्त्तमानमस्ति । प्राभृतं नाम अधिकरणं । स च गुरोः क्रमेण अपनतः साहाय्यकारी एवं प्राग्वर्त्तमाने यदि समागतो भवति । तदा तस्य निर्गमनमशुद्धत्वाच्च परित्याज्यमिति ॥

एनामेव गाथां व्याख्यातुकाम प्रथमत एका परिणताऽल्पाधारद्वाराणि व्याख्यानयति ॥

एगाणियं पमोत्तुं, वत्थादि अकप्पएहिं वा सहियं ।
अप्पाधारावायणं, तं चेव य पुच्छिओ देइ ॥

एकमेकाकिनं पश्चादाचार्यं मुक्त्वा यदि समागतः । अथवा वस्त्राद्यकल्पिकैः प्रथममपि अगृहीतैरकल्पिकैर्वस्त्रादिभिः सहितं मुक्त्वा एतेनापरिणत इति व्याख्यातं । यदि वा अल्प सूत्रस्याऽर्थस्य वा आधार इति स आचार्यस्तमेवपृष्ट्वा शेषसाधुभ्यो वाचनां ददाति तादृशं मुक्त्वा एतेनाऽल्पाधार इति विवृतं ॥

थेरं अतिमहल्लं, अजंगमं मोत्तु आगतो गुरुं तु ॥
सो व परिसाव थेरा, अहं तु अट्ठावगोतेसिं ॥ १ ॥

स्थविरमेव व्याचष्टे अतीव महान्तमजंगमं गमनशक्तिविकलं गुरुं उपलक्षणमेतत् परिवारं वा स्थविरमुक्तरूपंमुक्त्वा यदि समागतः स च प्रतिजागरुक स्तथा च तस्य पृष्टस्य सतोऽमुमेवोक्तिविशेषं दर्शयति । स च आचार्यः स्थविरः पर्यन्द्रा परिवारो वा आसीत् अहं तु तेषां गुर्वादीनां वर्त्तापकः प्रतिजागरुक एतेन स्थविर इति पदं व्याख्यानं ॥

ग्लानबहुरोगानिर्द्धर्म्मपदानि व्याख्यानयति ॥

तत्थ गिलाणोएगो, जप्पसरीरो य होइ बहुरोगी ॥
निद्धम्मा गुरुआणं, न करेंति समं पमोत्तूणं ॥ १ ॥

तत्र गच्छे ग्लान एकोऽस्ति यदि वा बहुरोगी यो जाप्यशरीरो भवति । स बहुरोगी तंग्लानं बहुरोगिणं वा विमुच्य यदि स समागतस्तथा निर्द्धर्म्मपरिषद्विषये तस्य पृष्टस्य सत उक्तिविशेषं दर्शयति । निर्द्धर्म्माधर्म्मवासनारहितस्तस्य ममाचार्यस्य शिष्याः सर्वथा गुर्वाज्ञां कुर्वंति । मां प्रमुच्य मम पुनराज्ञां न कुर्वंति । तादृशं वा निर्द्धर्म्म परिवारं मुक्त्वा यदि समागतस्तर्हि स न प्रतिग्राह्यः । केवलमयमुपदेशस्तस्मै दातव्यः ॥

तमेवाह ॥

एयारिसं विओसज्ज, विप्पवासो न कप्पई ॥
सीसायरियपडिच्छे, पायच्छित्तं विहिज्जइ ॥ १ ॥

एतादृशमेकाक्यादिस्वरूपं गुरुमन्यं वा ग्लानादिकं व्युत्सृज्य परित्यज्य विशेषेण प्रवासोऽन्यत्र गमनं विप्रवासो भद्र तव न कल्पते । बहुगुणाधारो भवान् कथमीदृशं कृतवान् । तस्मात् अद्याऽपि प्रायश्चित्तं प्रतिपद्य पश्चात् गच्छ । स च समागतस्तस्य प्राक्तनाचार्यस्य शिष्यो वा स्यात् प्रतीच्छको वा एवमागतमुपसंपद्यमानं योऽन्याचार्यः प्रतीच्छति सोऽपि प्रायश्चित्तभाक् । ततः शिष्यप्रतीच्छकाचार्याणां प्रायश्चित्तं विवक्षुरिदमाह ॥

( सीसायरिएत्यादि ) शिष्ये आचार्ये प्रतीच्छके च प्रायश्चित्तं विधीयते । प्रायश्चित्तदानविधिरुच्यते इति भावः ॥

प्रतिज्ञातमेव निर्वाहयति ॥

एगे गिलाणगे वा, तिण्हवि गुरुगा उ सीसमादीणं ॥
सेसे सिस्से गुरुगा, पडिच्छलहुगा गुरुसरिसं ॥

एकस्मिन् एकाकिनि गुरौ ग्लाने वा तत्र गच्छे तिष्ठति यदि समागतः । शिष्यः प्रतीच्छको वा आचार्येण वा तथा समागतः सन् यदि प्रतीच्छितस्तदा शिष्यादीनां शिष्यप्रतीच्छकाचार्याणां त्रयाणामपि प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः । यः पुनरन्यः शेषोऽपरिणताऽल्पाधारस्थविरबहुरोगमंदधर्म्मपरिचारलक्षणस्तस्मिन् शेषे यदि समागतः शिष्यः ततस्तस्य प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः । अथ प्रतीच्छकः समागतस्तर्हि तस्य लघुकाश्चत्वारो लघुमासाः ( गुरुसरिसमिति ) गुरोरपि प्रतीच्छकसदृशं प्रायश्चित्तं । किमुक्तं भवति यदि शिष्यं प्रतीच्छति ततः प्रायश्चित्तं चत्वारो गुरुमासाः । अथ प्रतीच्छकं तर्हि चत्वारो लघुका इति ॥

सीसपडिच्छे पाहुड, छेदो राइंदियाणि पंचेव ।
आयरियस्स उ गुरुगा, दोवेण पडिच्छमाणस्स ॥

यदि प्राभृते गुरोः केनापि सहाधिकरणावर्त्तमानः शिष्यः प्रतीच्छको वा समागतः । तदा तस्य प्रतीच्छकस्य वा प्रायश्चित्तं पंचरात्रिंदिवानि पर्यायस्य छेदः । आचार्यस्य पुनर्द्वावप्येतौ प्रतीच्छतः प्रतिगृह्णतः प्रायश्चित्तं । गुरुकाश्चत्वारो गुरुमासाः । तदेवं प्रथमभंगे निर्गमनदोषा उक्ताः आगमनमशुद्धं तदा भवति यदा व्रजिकादिषु प्रतिबध्यमानः समागतस्तत्रापि प्रतिबंधनिमित्तं प्रायश्चित्तं सूत्रानुसारतो वक्तव्यं । गतः प्रथमो भंग द्वितीयभंगोऽप्येतादृश एव न नगं । तथा-

गमनं शुद्धं क्वचिदपि व्रजिकादौ प्रतिबंधकरणात् तृतीयचतुर्थभंगावनुक्रमेणाऽऽह ॥

एतद्दोसविमुक्कं, वइयादी अपडिबद्धमायातं ॥
दाऊणं पच्छित्तं, पडिबद्धं पडिच्छेज्जा ॥ १ ॥

एतैरनंतरोदितैरधिकरणकारित्वविकृतिस्त्रीपश्चादादिदोषैर्विमुक्तमेतेन निर्गमनं शुद्धमुक्तं । तथा व्रजिकादौ अप्रतिबद्धं क्वचिदपि प्रतिबंधमकुर्वतमायातमनेनाऽऽगमनं शुद्धमपि दर्शितं एष चतुर्थोभंगः। एष एवोत्सर्गतः श्रेयानिति ज्ञापनार्थं तृतीयभंगात्पूर्वमुक्तः। एवं भूतं प्रतीच्छेत्। तृतीयभंगमाह (दाउणे) त्यादि यस्त्वधिकरणकारित्वादिदोषैर्विनिर्मुक्तो निर्गतः केवलं व्रजिकादिषु प्रतिबद्धमप्यपवादपदेन व्रजिकादिषु प्रतिबंधकारणमनूत्पन्नमित्तं प्रायश्चित्तं दत्वा प्रतीच्छेत् ॥

( ७ ) आलोचनायां शिष्याऽऽचार्यपरीक्षणे आवश्यकादिद्वाराणि ॥

सुद्धं पडिच्छिऊणं, अपरिच्छणा लहुय तिन्निदिवसाणं।
सिस्से आयरिए वा, पारिच्छा तत्थिमा होइ ॥

शुद्धं निर्गमनागमनादिदोषरहितं प्रतीच्छ्य प्रतिगृह्य त्रीन् दिवसान्यावत् परीक्षेत। किमेष धर्म्मश्रद्धावान् किं वा नेति यदि पुनर्न परीक्षते। ततोऽपरीक्षणे परीक्षणाकरणे ( लहुयत्ति ) मासलघु प्रायश्चित्तं आचार्यान्तराभिप्रायेण चतुर्मासलघु। सा च परीक्षा उभययाऽपि शिष्य आचार्यं परीक्षते आचार्यः शिष्यं उभययापि च परीक्षा आवश्यकादिपदैस्तथाचाह ॥ ( सिस्सित्यादि ) तत्र तस्मिन् उपसंपद्यमाने प्रतीच्छिते सति शिष्ये आचार्ये च परस्परमियमावश्यकादिपदैर्वक्ष्यमाणा परीक्षा भवति ॥

तामेवाह ॥

आवस्सयपडिलेहण, सज्झाए भुंजणा य भासाय।
वीयारे गेलन्ने, भिक्खग्गहणे पडिच्छंति ॥

आवश्यके, प्रतिलेखने, स्वाध्याये, भोजने, भाषायां, विचारे, बहिर्भूमौ, ग्लाने, भिक्षाग्रहणे, च परस्परमाचार्यशिष्यौ परीक्ष्येते ॥

तत्राऽऽवश्यकादिपदान्यधिकृत्य यथाचार्यः शिष्यं परीक्षते तथोपदर्शयति॥

केई पुव्वनिसिद्धा, केई सारेइ तत्थ सारेइ।
संविग्गोमिक्खमग्गइ, मुत्तावलिमो अणाहो हं ॥

केचित्साधवोवृषभादयः तस्योपसंपत्कालात् पूर्वमेव आवश्यकादिपदेषु ये दोषास्तेभ्यो निषिद्धा यथा आचार्या इदमिदं च माकार्षुरिति। ते तत्रैव वर्त्तमानास्तिष्ठंति। ये पुनःकेचित् अभिनवदीक्षितत्वादिना कारणेन प्रमाद्यंति तान् गुरुः सारयति। सम्यग् यथोक्तानुष्ठाने वर्त्तयति। तं पुनरुपसंपन्नं प्रमादस्थाने वर्त्तमानमपि न सारयति। तत्र यदि स उपसंपद्यमानः संविग्नो भवति। ततः सोऽप्रतिनोद्यमान सन्नेवं चिंतयति। यथा स्थानप्वन्यान्प्रमाद्यत आचार्याः सारयंति अहो अहमनाथः परित्यक्त एतैरिति चिंतयित्वा संविग्नविहारमिच्छन् आचार्यपादमूले गत्वा ( मुत्तावलिमो ) इति निपातः पादपूरणाच्छिन्नमुक्तावलीप्रकाशान्यश्रूणि विमुंचन् पादयोः पतित्वा भिक्षांमार्गयते याचते यथा मामप्यन्यादृशेण भगवंतः शिक्षयन्तां मां शरणमुपागतं परित्यजत एवं परीक्षानिर्वर्तितः परिग्राह्यः। इतरस्तु परित्याज्यः ॥

तत्राऽऽवश्यके यथा परीक्षा कर्त्तव्या तथोपदर्शयति ॥

हीणाहियविवरिए, सतिविवक्ले पुव्वहूंते चोएइ ॥
अप्पणवो देती नममंति इहं सुहं वसिउं ॥

हीनं नाम यत्कायोत्सर्गसूत्राणि मंदमंदमुच्चार्य शेषेषु साधुषु चिरकालं कायोत्सर्गे स्थितेषुपश्चात्स कायोत्सर्गे तिष्ठति। इत्यादि। अधिकं नाम कायोत्सर्गसूत्राण्यति त्वरितमुच्चार्याधुःप्रेक्षाकरणार्थं पूर्वमेव कायोत्सर्गे तिष्ठति रत्नाधिके वोत्सारितेकायोत्सर्गेपश्चाच्चिरेण स्वं कायोत्सर्गमुत्सारयति इत्यादि। विपरीतं नाम प्रादोषिकान्कायोत्सर्गान् प्राभातिकानिव करोति। प्राभातिकान् प्रादोषिकानिव इत्यादि। हीनाधिकं च विपरीतं समाहारद्वंद्वस्तस्मिन्प्रमादतोवर्तमानात् अथवा सूर्ये किल अस्तमितमात्रे एव निर्व्याघाते सर्वैरपि साधुभिराचार्येण सह प्रतिक्रमितव्यं। यदि पुनराचार्यस्य श्राद्धादिधर्म्मकथादिभिर्व्याघातस्ततो बालवृद्धग्लानासहान् निषद्याधरं च मुक्त्वाशेषैः सूत्रार्थस्मरणार्थं कायोत्सर्गेण स्थातव्यं। ये सत्यपि वले पूर्वं कायोत्सर्गे न तिष्ठंति तान्पूर्वमातिष्ठतश्चोदयंति यः पुनः परीक्ष्यते तं प्रमाद्यंतमपि न शिक्षयंति। ततो यदि स एवं व्यवस्यति। यथा आत्मीयान् प्रमाद्यतश्चोदयंति। न मामिति सुखमिह वसितुमिति। स इत्थं भूतः पंजरभग्नो ज्ञातव्यो न प्रतीच्छनीयः ॥

जो पुण चोइज्जंते, दट्ठूण नियत्तए ततो ठाणा।
भणइ अहं नेवत्तो, चोएह ममं पि सीयंतं ॥

यः पुनश्चोद्यमाना न् शिक्ष्यमाणान् शेषसाधून् दृष्ट्वा ततः स्थानात् निवर्त्तितैर्भणति। गुरुपादमूले गत्वा मन्युभराक्रांतो गद्गदस्वरेण अहं युष्मच्चरणमागतोऽपि भगवन् युष्माभिः शिक्षाया अप्रदानतस्त्यक्तः। न चैतत् भगवतां परमकरुणापरीतचेतसामुचितं। तस्मात्प्रमादमाध्माय मामपि सीदंतं शिक्षयध्वमिति एष इत्थंभूतः प्रतिग्राह्यः कृता आवश्यकमधिकृत्य परीक्षा ॥

संप्रतिप्रतिलेखनस्वाध्याय भोजनभाषाद्वाराणि अधिकृत्य तामाह ॥

पडिलेहणसज्झाए, एमेव य हीणअहियविवरीयं।
दोसेहि वा वि भुंजइ, गारत्थियढक्कएभासा ॥

एवमेवावश्यकोक्तेनैव प्रकारेण प्रतिलेखने, स्वाध्याये, च हीनमधिकं विपरीतं च कुर्वत आत्मीयान् शिक्षयते न तु तं परीक्ष्यमाणमित्यादि पूर्ववत् तत्र प्रतिलेखनाया हीनाधिकता नाम यत् कालतो हीनामधिकां वा प्रतिलेखनां करोति। खोटकादिभिर्वा हीनामधिकां वा। विपरीतता नाम प्रभाते यत् मुखपोतिकादि क्रमेण न प्रत्युपेक्षते। किं तु स्वेच्छया यदि वा पूर्वाह्णेरणं निःपश्चिमं प्रत्युपेक्षते। अपराह्णे तु सर्वं प्रथममित्यादि। स्वाध्याये हीनता नाम यदिप्राप्तायामपिकालवेलायां कालप्रतिक्रमणं करोति अधिकता यदतिक्रांतायामपि कालवेलायां कालं प्रतिक्रामति। वंदनादिक्रियायां वा तदनुगतां हीनाधिकां करोति विपरीतता पौरुषीपाठमतिक्रांतायां पौरुष्यां पठति। उत्कालिकं पौरुष्यामिति तथा भोजनद्वारे आलोकादिविधानसूत्रोक्तेन न भुंक्ते दोषैर्वा ऽपि ( असुरसुरं भचवचवं अदुयमविलंबियमि ) त्यादि विपरीतरूपैर्भुंक्ते।

तत्रात्मीयानतथा भुंजानान् शिक्षयते न तु परीहयमाणमित्यादि पूर्ववत् नाषाद्वारे या अगारस्थिते भाषागृहस्थभाषा च ढकुरभाषा स्थूरस्वरभाषा तां भाषते । तत्रात्मीयान् तथारूपया भाषया भाषमाणान् शिक्षयते न पुनः परीहयमाणमित्यादि विभाषा पूर्ववत् ॥

शेषाणि त्रीणि द्वाराण्येकगाथया प्रतिपादयति ॥

थंमिल्लसामायारीहिं, हवेइ अतरंतगं न पमिजये ॥
अज्ञणतो निक्खं, न हिंमइ अणेसणाइ च पेल्लेइ ॥

स्थंमिले सामाचारीं पादप्रमार्जनरूगलकग्रहणं दिनालोकनादिरूपां हापयति परिभवति विलुंपतीत्यर्थः । तत्र तथा सामाचारी विलुंपत आत्मीयान् साधून् शिक्षयते न परीहयमाणमित्यादि प्राग्वत् । गतं विचारद्वारम् ॥

ग्लानद्वारमाह । अतरंतगं असमर्थं ग्लानमित्यर्थः । न प्रतिजागत्ति नापि तस्य ग्लानस्य खेलमल्लकादि कंसमर्प्पयति । अत्रापि ग्लानमप्रतिजाग्रत आत्मीयान् साधून् शिक्षयते । नतु परिहयमाणमित्यादि भाषा पूर्ववत् । गतं ग्लानद्वारं ।

निक्षाग्रहणद्वारमाह । अजणितः सन् भिक्षां न हिंरुते भणितोऽपि च इषदाहिंरुने सति प्रतिनिवर्तते अनेषणीयां भिक्षां गृह्णाति । आदिशब्दात् कौटिल्ये न चोत्पादयति इत्यादि परिग्रहः । तं तया भिक्षाग्रहणे प्रवर्त्तमानमपि न शिक्षयति । किं त्वात्मीयान् साधून् इत्यादि प्राग्वत् । तस्य चागमो द्वाभ्यां स्थानाभ्यां नवति । ततस्ते एव द्वे स्थाने प्रतिपादयति ॥

जयमाणपरिहवंते, आगमणं तस्स दोहिं ठाणेहिं ।
पंजरजग्ग अभिमुहे, आवस्सगमादि आयरिए ॥

तस्योपसंपद्यमानस्यागमनं द्वाभ्यां स्थानाभ्यां नवेत् । तद्यथा । यतमानेभ्यः परिनवद्भ्यश्च यतमाना नाम संविग्नाः परिभवंतः पार्श्वस्थादयः । उक्तं च ।

सो पुण जयमाणगाण, वा साहूण मूलातो । आगतोहुज्जा
परिनवंताण मूला उ, आगतो हुज्जा परिनवंता नाम पासत्य ।

इति । तत्र यो यतमानसाधूनां मूलादागतः संज्ञानदर्शनार्थं पंजरभग्नो वा समागतो नवेत् । यः पुनः परिभवतां मूलादागतः स चारित्रार्थमुद्यंतुकामः समागतो भवेत् । अनुद्यंतुकामो वा ज्ञानदर्शनार्थमिति । अथ वा यो यतमानेभ्यः समागतः स पंजरभग्नः यः पुनः परिभवद्भ्य उद्यंतुकामश्चारित्रार्थं समागतः । सोऽभिमुखः पंजराभिमुखः एतयोर्द्वयोरपि समागतयोरावश्यकादिभिः पदैराचार्येण परीहयमाणानपि सीदतः पश्यति तत आचार्येभ्यः कथयति । तेन कथिते सति यद्याचार्याः सम्यक् प्रतिपद्य तान्प्रमादिनः प्रति नोदयंति । प्रायश्चित्तं च प्रयच्छंति । ततस्तत्रोपसंपत्तव्यं । अथ कथितेऽपि ते आचार्यास्तूष्णींतिष्ठंति । भणंति वा किं तव यद्येतेन सम्यग्वर्त्तते । तर्हि अन्यत्र गच्छांतरे उपसंपत्तव्यं । न तत्रेति अथ यतमानेभ्यः समागतः पंजरभग्न इत्युक्तं तत्र पंजरे इति किमुच्यते । तत आह ॥

पणगाइसंगहो होइ, पंजरो जायसारणाणेसिं ।
पच्छित्तं चढमणाहिं, तिवारणं. सउणिदिट्ठंतो ॥

पंचकं नाम आचार्योपाध्यायप्रवर्त्तिस्थविरगणावच्छेदकरूपं आदिशब्दात् निक्षवो वृषनाः क्षुल्लकवृद्धाश्च परिगृह्यंते । तेषां संग्रहः पंचकादिसंग्रहो भवति । पंजरः अथवा आचार्यादीनामन्योन्यं परस्परं यत् । मृदुमधुरभाषया सोपालंभं वा शिक्षयति एष वा पंजरः । यदि वा यत् प्रायश्चित्तं चमढनाभिरसमाचार्यो निवारणपूर्वं खरपुरुषैस्तर्जयित्वा पश्चात्प्रायश्चित्तप्रदानेन यदा सामाचारीतो निवर्त्तनं तत् पंजरः अत्रार्थे शकुनिदृष्टांतः । यथा पंजरे शकुनेः शलाकादिभिः स्वच्छंदगमनं निवार्यते । तथा आचार्यादिपुरुषगच्छपंजरे सारणाशलाकया सामाचारीरूपोन्मार्गगमनं निवार्यते इति । अत्र ये यतमानानां मूलात् ज्ञानदर्शनार्थमागता ये च परिनवतां मूलात् चारित्रार्थमागच्छन् ते संग्रहीतव्याः । ये पुनः पंजरभग्ना ज्ञानदर्शनार्थमागता ये च परिनवतां मूलात् ज्ञानदर्शनार्थमागमन् ते न संग्रहीतव्याः । तत्र ये संग्रहीतव्यास्ते एको वास्मादनेको वा यत आह ॥

ते पुण एगमणेगाणं, गाणं सारणा जहा पुव्वं ॥
उवसंपयआउट्टे, अणाउट्टे अन्नहिं गच्छे ॥ १ ॥

ते पुनरुपसंपद्यमानाः कदाचिदेको वा स्यादनेको वा तत्रानेकेषां या सारणा सा यथापूर्वं कल्पाध्ययने " उवएसो सारणा चेव तइया पमिसारणा " इत्यादिना ग्रंथेन भणिता तयाऽत्रापि ऊष्टव्या यः पुनरेकोऽसमीचीनं कुर्वन् शिक्ष्यमाणश्च यद् व्यावृत्तः शिक्षां प्रत्यनिमुखेभवति । ततस्तस्मिन् आवृत्ते षष्ठीसप्तम्योरर्थं प्रत्यभेदात्तस्यावृत्तस्य उपसंपद्भवति यदिपुनर्नावर्त्तते । तदा तस्मिन् अनावृत्ते इदं भण्यते । अन्यत्र गच्छमात्र स्था इति । अथवा इदमुत्तरार्द्धम् ( आवस्सगमाइआयरिए ) इति यदुक्तं तस्य व्याख्यानं आवश्यकादिषु गच्छवासिनः प्रमादिनो दृष्ट्वा आचार्याय कथयेत् । कथिते च सति यदि आचार्यः सम्यगावर्तते निजसाधून् सम्यक् शिक्षयते प्रायश्चित्तं च तेभ्यः प्रयच्छति ततस्तस्मिन्नावृत्ते तस्य तत्रोपसंपद्भवति । अथ कथिते नावर्त्तते तूष्णीं करोति न भणति किं तवैतैः स्वयं सम्यग्वर्त्तेथा इति । तदाऽन्यत्र गच्छेदिति । यदुक्तं प्राक् ॥

दाऊणं पच्छित्तवज्जंतपी पमिच्छेज्जा

इति ॥ तत् व्याख्यानयति । ( निग्गमणे अपरिसुद्धे, इमाए जयणाए वारेति ) तृतीये भंगे निर्गमने परिशुद्धे प्रागुक्तदोषवर्जिते आगमने अशुद्धे व्रजिकादिषु प्रतिबंधकरणादिषु प्रतिबंधकरणात्द्वितीये पदे अल्पदोषतयाप्रतीच्छागुरौ सत्यां प्रायश्चित्तं प्रतिबंधमात्रनिष्पन्नं ददाति । दत्वा च प्रतीच्छंति निर्गमने पुनः प्रथमनंगे द्वितीयनंगे वा अधिकरणमेव अधिकरणादिभिः । एगेऽपरिणए वा इत्यादिभिर्वा दोषैरपरिशुद्धे न प्रतीच्छनीयः किंतु वारणीयः । तं वाऽनया वक्ष्माणयाऽयतनया वारयंति ॥

तामेवाह ॥

नत्थियसंकियसंयाम, मंमली निक्खवाहिराणयणं ।
पच्छित्तविउस्सग्ग, निग्गमसुद्धस्स ठाणेण ॥

यः पंजरभग्नो ज्ञानदर्शनार्थमागतः तं प्रतीयं वाग्यतना यत्त्वं श्रुतमभिलषसि । तन्मम पार्श्वे नास्ति अथ स ब्रूयात् मया श्रुतं यथाऽमुकोग्रंथोऽमुकस्यपार्श्वे युष्माभिः श्रुत इति तत इदं वक्तव्यं श्रुतः स ग्रंथः केवलमिदनीं बहुषु स्थानेषु शंकितं जातं न च शंकितं श्रुतमन्यस्मै दीयते प्रवचने निषेधात् तस्मादन्यत्र निःशंकितश्रुतात् गवेषयस्व । यस्तु स्वच्छंदमतिःसंघाटकोऽहिंमःसंज्ञाभूमिमप्येकाकिना गंतुं न लभ्यमिति

मामागतस्तं प्रतीदं वक्तव्यं । अस्माकमाचार्यपरंपरात इयं सामाचारी संज्ञाभूमिमात्रमपि न गंतव्यमेतच्च तव दुष्करमतोऽन्यत्र गच्छ तावदिति । यः पुनरनुबद्धवैरत्वेनागतस्तं प्रतीदं वक्तव्यं । मंडलीति । अस्माकमीदृशी सामाचारी यदवश्यं मंडल्यांसमुद्देष्टव्यं । यद्यपि च न पठति न शृणोति वा तथापि सूत्रपौरुष्यां मंडल्यामुपविश्यार्थः श्रोतव्यः न कदाचनापि साधूनां स्वच्छंदत्वमेतच्च भवतोऽप्रीतिकरं तस्मादन्यत्र गम्यतां । यस्त्वलसत्वेनागतस्तं प्रतीदं वाच्यं । ( भिक्खवाहिराणं ) । भिक्षाया बहिः प्रदेशादानयनं । किमुक्तं भवति ॥ अस्माकमत्र क्षेत्रे बहवो बालवृद्धाः स ग्लानाः साधवः ते च भिक्षां न हिंडंते । ततो यदि प्रतिदिवसं भिक्षां बहिः प्रदेशादानयसि ततस्तिष्ठ परमेतत् दुष्करं तव तस्मात् यत्र सुखेन तिष्ठसि तत्र याहि किमत्र क्लेशसहनेन यस्तु निर्द्धर्म्मा उग्रदंडा आचार्या इति विनिर्गतस्तंप्रतीदमुत्तरं ( पच्छित्तत्ति ) अस्माकमियं सामाचारीयदिदुः प्रमार्जनादिमात्रमपिकरोति । तदातत्कालमेवप्रायश्चित्तं यथोक्तं दीयते न कालक्षेपेण नापि पक्षपातादिना स्तोकन्हासेन यस्तु विकृतिलंपटो न मह्यं विकृतिमनुजानातीति विनिर्गतस्तं प्रतीयं वाग्यतना ( अविउस्सगत्ति ) अस्माकमप्ययं समाचार्यागमः ॥ अभ्युत्सर्गोनुत्कलनं विकृतेरिति व्याख्यानतो गम्यते । योगवाहिना अयोगवाहिना वा विकृतिर्न ग्राह्या इत्यर्थः । अत्राधिकरण प्रत्यनीकस्तब्ध लुब्धविषये यतनानोक्ता विचित्रत्वात् सूत्र भाष्यगते सूत्राधिकरणे यतना यथा कल्पाध्ययने तथा द्रष्टव्या । शेषविषया तु विनेयजनानुग्रहायाभिधीयते तत्र य प्रत्यनीकस्तत्र मे प्रत्यनीकोऽस्तीत्यागतः स भण्यते ममापि शिष्याः प्रतीच्छकाश्च ईषदपि प्रमादं न क्षमंते मह्यं कथयांति । अहं च दोषानुरूपं दंडं प्रयच्छामि । अन्यथैकतरपक्षपातकरणतोगच्छमुद्राभंगः । सर्वज्ञाज्ञाविलोपश्च । तस्मादत्राऽपि तवदुष्करमिति नस्थातुमुचितं स्तब्धः पुनरेवं भण्यते । अस्माकमियं सामाचारीचंक्रमणादिकुर्वति गुराव भ्युत्थानं अनभ्युत्तिष्ठतः प्रायश्चित्तदानमिति लुब्धं प्रत्येषा वाग्यतना उत्कृष्टद्रव्याणिमोदकादीनि अस्माकं बालवृद्धग्लानप्राघूर्णिकेभ्यो दीयंते । तदेव स्वच्छंदचारित्रप्रभृतीनां निवारणे वाग्यतनोक्ता यदि पुनरेते तथा निवारिता अपि न वक्ष्यमाणप्रकारेण प्रत्यावर्त्तते नापि निर्गच्छंति येऽपि च विशुद्धनिर्गमाः प्रतीच्छिताः संतः सीदंति तेषां परिस्थापने यतनामाह ( निग्गममुत्तस्स उत्तेण ) यदा परिस्थापयितुमिष्यमाणस्य स्वयं भिक्षादिनिमित्तं निर्गमो भवति । यदा रात्रौ निर्भरुया सुमस्तदा तं त्यक्त्वा नष्टव्यं ॥

कथमित्याह ॥

[illegible] सागारिकं किमुक्तं भवति । ये अपरिणता बालादयो [illegible] गच्छे तेषां न कथ्यते यथाऽमुमेवं त्यक्त्वा नष्टव्य [illegible] स्यमेदं कार्यमिति छन्नेति एष गाथार्थः ॥

सांप्रतमेनामेव गाथां विनेयजनानुग्रहाय विवृणोति ॥

नत्थेयंमिज मिच्छामि, सुयं मया आमसंकियं तं नु ।
न य संकियं तु दिज्जइ, निस्संकमुए गंथस्साहि ॥

यदिच्छामि शास्त्रं श्रोतुं तदेतन मे मम पार्श्वे नास्ति । अथ [illegible] मयेदं श्रुतं यथाऽमुक शास्त्रं भवद्भिः श्रुतमिति । तथाह । आम तत शास्त्रं [illegible]मिदानीं शंकितं जातं न च [illegible] ॥

( संघाडत्ति ) मंडलीति च द्वारद्वयं व्याचिख्यासुराह ॥

एगागिस्स न लब्भा, वियारादी विजयणमच्छंदे ।
भोयणसुत्ते मंडली, पढमंते वा निओयंति ॥

स्वच्छन्दे स्वच्छंदमतौ निवारणार्थमियं वाग्यतना अस्माकमेकाकिनः सतोविचारादावपि बहिर्भूम्यादावपि तत्र लभ्यं गन्तुमिति । अनुबद्धवैरे । इयं वाग्यतना । अस्मदीया मुनिवृषा भोजने सूत्रे उपलक्षणमेतत् अर्थे वा पठंतोऽपि मंडल्यां नियोजयंति । एतच्च तवदुष्करमिति ॥

अधुना " भिक्खवाहिराणयणं पच्छित्तविउस्सग्गे " इति त्रीणि द्वाराणि व्याख्यानयति ॥

अलसं भणंति वाहि, भिक्खंभहिंडसि अम्हएत्थबालादी ।
पच्छित्तं हाडहडं, अविउस्सग्गो तहा विगई ॥

अलसं प्रति भणंत्याचार्याः । अस्माकमत्र क्षेत्रे बहवो बालादयस्ते च भिक्षां न हिंडंते ततो यदि बाहिर्भिक्षां हिंडसे । तर्हि तिष्ठ अन्यथा व्रज स्थानांतरमिति । निर्द्धर्म्माणं प्रति पुनरिदं वदति अस्माकं केऽपि दुःप्रमार्जनादौ कृते प्रायश्चित्तं हाडहडं देशीपदमेतत् तत्कालमित्यर्थः । दीयते अन्यथा मूलत एव सामाचारीविलोपप्रसक्तेः विकृतिलंपटं प्रति पुनरियं वाग्यतना योगवाहिनो वाऽस्माकं गच्छे विकृतेरभ्युत्सर्गोऽनुत्कलनं भवांश्च दुर्बलशरीरोनवेक्षुरिव पानीयैर्विकृत्याऽल्पस्वभावास्तस्मादन्यत्र प्रयाहीति ॥

अत्र चोदक आह ॥

तित्थ भवे मायमोसो, एवं तु भवे अणुज्ज मं तस्स ।
वुत्तं च उज्जुभूते, सोही तेलोक्कदंसीहिं ॥

यदेतत् निर्गमनाशुद्धे उपायेन प्रतिषेधनमुक्तं तत्र कस्याचिन् मतिः स्यात् । एवं प्रतिषेधतो माया भवति । मृषावादश्च । तत्र यत् परिचिंतनं तन्मायाविद्यमानमपि श्रुतं नास्ति शंकितं वा तिष्ठतीत्यादि कुर्वाणस्य मृषावादः । एवं तु अमुना प्रकारेण पुनर्माया मृषां कुर्वते भवेत् । तस्याऽनार्जवमनृजुता मायातः कुटिलभावभावात् उक्तं पुनस्त्रैलोक्यदर्शिभिरिदं शोधिकल्पे ऋजुभूते सोही उज्जुयस्सेत्यादेः प्रदेशांते श्रवणात् ततो नेदं माया मृषा भाषणमुचितमिति ॥

अत्र सूरिः प्रत्युत्तरमाह ॥

एसअगिते जयणा, गीते वि करेंति जुज्जई जं तु ॥
विद्देसकरं इह ए, मच्छरिव दोव फुडरुक्खो ॥ ? ॥

एषा अनंतरोदिता वाग्यतना ऽगीते अगीतार्थे गीतेऽपि गीतार्थेऽपि निर्गमनाशुद्धे निवारणा क्रियते । स्फुटाक्षरैर्यथा एवंभूतदोषात् त्वमत्रागत एवं भूतदोषश्च न सुविहितैः प्रतीच्छ्यते इति न चैवं भणितगीतार्थो हि सर्वामपि सामाचारीमवबुध्यते । अवबुध्यमानाश्च कथमप्रीतिं विद्वेषं वा कुर्वंतीति ॥

तथाचाह ॥ ( करेंति जुज्जई जंतु ) यत् अत्र युज्यते युक्तिमापतति तत् गीतार्थाः कुर्वंति । ना प्रीत्यादिकमिति । इहरत्ति । इतरया यद्यगीतार्थेऽपि स्फुटरूक्षैर्निवारणा क्रियते । ततः स्फुटरूक्षे भाषिते सति स्फुटं नाम सद्भूतदोषोच्चारणं रूक्षं स्नेहोपदर्शनरहितं यदि वा स्फुटमेव परस्य रूक्षतोत्पादनात् रूक्षं स्फुटरूक्षं तस्मिन् भाषितेन तत् भाष्यमाणं वचस्तेषां विद्वेषकरं विरोधोत्पादकं भवति । अगीतार्थत्वात् चिंतयति न [illegible] सूत्रमर्थं वा न प्रयच्छंति । ततो मत्सरिण

एत इति एवं च चिंतयित्वा स्वपक्षे परपक्षे च मत्सरिण एते इति प्रकाशयति । ततो लोके मत्सरिप्रवादो विरूपकरं च तद्वचस्तेषां मा भूदिति प्रागुक्तयतनया निवारणा क्रियते यचनेमायामृषादोषसंभवः । यतः परप्रीत्यनुवादकतया परिणाममसुंदरतया चोभयोरपि गुणकारित्वमवेक्ष्य तत्रा वाग्यतना क्रियते । न विप्रतारणबुद्ध्येति ॥

एतेषामेव प्रतीच्छने अपवादमाह ॥

निग्गमसुमुवागएण, वारिया गेण्हए समाउट्टं ॥

अहिगरणमिणिअणुबद्ध, मेगागिजढं न साएज्जा ॥

निर्गमोऽशुद्धो यस्य स निर्गमाशुद्धस्तं उपायनप्रागुक्तयतनाक्रमेण वारितं समावृत्तं संतं गृह्णाति । किमुक्तं भवति । यदि स तया प्रतिषिद्धः सन् ब्रूते भगवन्मिथ्या मे दुष्कृतं न पुनरेवं करिष्यामि । किन्तु यथा यूयं भणिष्यथ तथा करिष्यामि । मुक्तो मया पापस्वभावो दुर्गतिवर्द्धन इति । तत एवं तं समावृत्तं गृह्णाति किं सर्वमपि नेत्याह ॥ ( अहिगरणेत्यादि ) योऽधिकरणं कृत्वा समागतस्तं यश्च मे तत्र प्रत्यनीकोऽस्तीत्युक्तवान् तं तथा अनुबद्धरोषं येन च पश्चादेकाकी आचार्यस्त्यक्तस्तं च न ( साएज्जा ) न सात्मयेत् न सात्मीकुर्यादिति भावः ॥

केवलं प्रत्यनीके अपवादोऽस्ति तमेवाभिधित्सुराह ॥

पडिणीयंमि उ भयणा, गिहंमि आयरियमादिदुट्ठंमि ॥

संजयपडिणीए पुण, न होति उवसामिए भयणा ॥

प्रत्यनीके भजना तामेवाह । गृहिणी गृहस्थे आचार्यादिदुष्टे । किमुक्तं भवति । यदि कोऽपिनाम गृहस्थ आचार्यस्य आदिशब्दादुपाध्यायप्रवर्त्तिस्थविरगणावच्छेदानां शेषभिक्षूणां च प्रद्विष्टः स चानेकधा उपशाम्यमानोऽपि नोपशांतस्ततस्तस्मिन् आचार्यादिप्रदुष्टे गृहिण्यनुपशांते तद्भयादागतः सन् प्रतिगृह्यते । यदि पुनः स ब्रूयात् संयतोमे तत्र प्रत्यनीकोऽस्ति ततस्तस्मिन् संयतप्रत्यनीके न भवत्युपसंपत् न स प्रतिगृह्यते इत्यर्थः । अथवा स भण्यते । गच्छ त्वं क्षमयित्वा समागच्छ । एवमुक्तो यदि तत्र गत्वा तं न क्षमयति ततो न स प्रतिगृह्यते अथ तेन गत्वाऽसौ क्षामितः केवलं स एव न क्षमते तर्हि पश्चादागतः प्रतिग्राह्यः । अथ स वक्ति मया स तदानीमेवागच्छता क्षामितः । तदा तस्मिन्नुपशांते स नियमात् प्रतिगृह्य एव न भवति भजनानिर्दोषत्वात् ॥

सो पुण उवसंपज्जं, नाणट्ठा दंसणे, चरित्ते, य

एएसिं नाणत्तं, वुच्छामि अहाणुपुव्वीए ॥

स पुनरुक्तप्रकारेण संगृह्यमाण उपसंपद्यते ज्ञानार्थं ज्ञाननिमित्तं दर्शने दर्शननिमित्तं सप्तम्या निमित्ते विधानात् । दर्शनप्रभावकशास्त्रनिमित्तमित्यर्थः । चारित्रार्थं चारित्रनिमित्तं एतेषां ज्ञानाद्यर्थमुपसंपद्यमानानां नानात्वभेदं यथोपन्यासं या आनुपूर्वी तया वक्ष्यामि ॥

प्रतिज्ञातमेव निर्वाहयति ॥

वत्तणा संधणा चेव, गहणे सुत्तत्थ तदुभए ।

वेयावच्चे खमणे, काले आवकहाएय ॥

ज्ञानार्थं दर्शनार्थं चोपसंपत्प्रत्येकं त्रिधा । तद्यथा सूत्रं चार्थश्च तदुभयं च सूत्रार्थतदुभयं तस्मिन् सूत्रेऽर्थे तदुभयस्मिश्चेत्यर्थः । निमित्तसप्तमी चेयं । ततोऽयं भावार्थः । ज्ञानार्थं दर्शनार्थं चोपसंपद्यमानः प्रत्येकं सूत्रार्थं वा उपसंपद्यते । अर्थार्थं वा तदुभयार्थं चेति । पुनरेकैका प्रत्येकं भवति त्रिधा । तद्यथा । वर्तनेति अत्र सप्तमीलोपः प्राकृतत्वात् । वर्त्तनायां वर्तनानिमित्तमेवमेव संधनायां संधनानिमित्तं ग्रहणे ग्रहणानिमित्तं तत्र पूर्वगृहीतस्य सूत्रार्थस्य तदुभयस्य वा पुनःपुनः रभ्यसनं वर्तना । पूर्वगृहीतस्य विस्मृतस्य पुनः संस्थापनं संधना । तथा ग्रहणे तत्प्रथमतया अपूर्वस्य सूत्रार्थस्य तदुभयस्य वा ग्रहणनिमित्तं एवं ज्ञाने दर्शने च प्रत्येकं भवति त्रिधा उपसंपत् चरणोपसंपद्यमानाद्विधोपसंपद्यते । तद्यथा । वैयावृत्ये क्षपणे च वैयावृत्यनिमित्तं क्षपणनिमित्तं च । ते द्विधा उपसंपद्यमानाः कालतो यावज्जीवं भवेयुश्च शब्दादित्वराश्च ।

एतामेव गाथां व्याख्यानयति ॥

दंसणनाणे सुत्तत्थ, तदुभए वत्तणा य एक्केक्के ॥

उवसंपया य चरित्ते, वेयावच्चे य खमणे य ॥ १ ॥

दर्शनविशोधकानि यानि सूत्राणि शास्त्राणि वा तानि दर्शन शेषाणि सूत्राणि शास्त्राणि वा ज्ञानं । तत्र दर्शनज्ञाने च प्रत्येकमुपसंपत्त्रिधा । सूत्रनिमित्तमर्थनिमित्तं यदुभयनिमित्तं च । एकैकस्मिन् सूत्रादौ प्रत्येकं वर्त्तना संधना ग्रहणं च । किमुक्तं भवति । सूत्रेऽपि वर्त्तनानिमित्तमुपसंपद्यते । संधनानिमित्तमुपसंपद्यते । अपूर्वग्रहणनिमित्तं वा उपसंपद्यते । एवमर्थेऽपि त्रितयमुभयेऽपि त्रितयमिति दर्शनेऽपि नवविधोपसंपद् ज्ञानेऽपि नवविधेति । चारित्रे चारित्रविषया उपसंपत् वैयावृत्ये, क्षपणे च ॥

शुद्ध अपडिच्छणे, लहुगा अकरेंते सारणा अणापुच्छा ।

तेसु विमासो लहुतो, वत्तणादिसुत्थाणेसु ॥ १ ॥

यदेतद्गुरुसकाशे सूत्रं तत् सर्वमधीतं । ततोगुरुभिरनुज्ञातो विधिना आपृच्छ्य व्रजकादिष्वप्रतिवध्यमान आगतः । आगतश्च सन् त्रीन् दिवसान् यावत् परीक्षितः शुद्धः । इत्थंभूतं यो न प्रतीच्छत्याचार्यस्तस्य प्रायश्चित्तं लघुकाश्चत्वारो लघुमासाः । योऽपि उपसंपन्नो वर्त्तनानिमित्तं संधनानिमित्तं ग्रहणनिमित्तं वा स यदि वर्त्तनां संधनां ग्रहणं वा न करोति तदा तस्मिन् वर्तनादिकमकुर्वति प्रत्येकं त्रिष्वपि स्थानेषु वर्तनादिषु मासोलघुकः प्रायश्चित्तं । आचार्योऽपि यद्युपसंपन्नं प्रमाद्यंतं न सारयति तदा तस्मिन्नपि सारणा । अत्र विभक्तिलोप आर्षत्वात् । अकुर्वति त्रिष्वपि वर्त्तनादिषु स्थानेषु मासलघु । एतच्च प्रायश्चित्तविधानं सूत्रविषयम् । अर्थे पुनर्वर्त्तनादिमकुर्वति शिष्ये अर्थनिमित्तमुपसंपन्नं प्रमाद्यंतं वर्त्तनादिष्वसारयति गुरौ च प्रत्येकं त्रिष्वपि वर्त्तनादिषु स्थानेषु प्रायश्चित्तं मासगुरु । उभयविषये च द्वयोरपि प्रत्येकं वर्त्तनादि त्रिष्वपि स्थानेषु पृथक् उभयं प्रायश्चित्तं मासगुरु मासलघु चेति । एतच्च गाथायामनुक्तमपि संप्रदायादवसितं । तथा ( अणापुच्छा ) इति । अनापृच्छायामननुज्ञायामित्यर्थः । अत्र चत्वारो भंगास्तद्यथा । अननुज्ञातोऽननुज्ञातेन सह वर्तनां करोत्येकोभंगः १ अनुज्ञातो अननुज्ञातेन सहेति द्वितीयः २ अननुज्ञातोऽनुज्ञातेनेति तृतीयः ३ अनुज्ञातोऽनुज्ञातेनेति चतुर्थः ४ एवं संधनायां ग्रहणेऽपि च प्रत्येकं चत्वारो भंगाः । एवमर्थेऽपि तदुभयस्मिन्नपि च प्रत्येकं वर्त्तनादिषु चत्वारो भंगाः । तत्र सूत्रविषये त्रिष्वपि वर्त्तनादिषु स्थानेषु प्रत्येकमाद्येषु भंगेषु ददानस्य गृह्णानस्य च प्रायश्चित्तं मासलघु । तपःकालविशेषितं । तद्यथा । वर्त्तनायामाद्येषु

त्रिषु भंगेषु मासलघु संघनायां मासलघु । तपो गुरुकाललघु । ग्रहणे मासलघु द्वान्यां गुरुस्तद्यथा तपसा कालेन च । एव मर्थे तपःकालविशेषितं मासगुरु । तदुभयप्रायश्चित्तमर्थविषयं च प्रायश्चित्तं गाथानुपात्तमपि व्याख्यानादवगतं । चतुर्थभंगःपुनः सर्वत्राऽपिशुद्ध इति न तत्र कस्याऽपि प्रायश्चित्तमिति । इहाचार्यस्याऽपि प्रमादतः सूत्रादिषु वर्त्तनादिकमकुर्वतमुपसंपन्नमसारयतः प्रायश्चित्तमतो नियमात्स आचार्येण सारयितव्यस्तथा च एतदेवाह ॥

सारेयव्वो नियमा, उपसंपन्नोसि जं निमित्तं तु ।
तं कुण सु तुमं भंते!, अकरेमाणे विवेगोउ ॥

स उपसंपन्नो नियमात्सारयितव्यः कथमित्याह । अहोभदंत! ज्ञानाद्यभ्यासकारितया परमकल्याणयोगिन्! इह शिष्यस्याऽप्याचार्येण प्रोत्साहनार्थं तथाविधयोग्यतासंभवमधिकृत्यैवंविधमप्यामंत्रणं कर्त्तव्यमिति ज्ञापनार्थं । अन्यथा भदंतेति गुर्वामंत्रणे रूढत्वात्तत्रैव न्याय्यं न शिष्ये इति । यन्निमित्तमुपसंपन्नस्त्वं तत्कुरु । एवमेकद्वित्रिवारं सारितोऽपि यदि न करोति वर्त्तनादिकं ततस्तस्मिन्नकुर्वति विवेक एव परित्याग एव कर्त्तव्यः । तुरेवकारार्थः ॥

( यदुक्तमणापुच्छा ) इति तत् व्याख्यानयति ॥

अणणुन्नमणुण्णाए, दिंतं पडिच्छंतभंगचउरो उ ।
भंगतियंमि वि मासो, दुहतोणुण्णाए सुद्धो उ ॥

अननुज्ञातो मकारोऽलाक्षणिकः । अननुज्ञातो ददाति इतरस्तु प्रतीच्छतीत्येवं ददानप्रतीच्छतां चत्वारो भंगास्तत्र भंगत्रिकेऽपि आद्येऽपि त्रिष्वपि वर्तनादिषु स्थानेषु प्रत्येकं प्रायश्चित्तं मासो लघुमासः । अर्थे गुरुमासस्तदुभयास्मिन् तदुभयं प्रायश्चित्तमिति व्याख्यानात् ॥ ( दुहतोणुण्णाए ) इति उभयतो ददानतया प्रतीच्छकतया चाऽनुज्ञाते भंगश्चतुर्थः शुद्ध एव । तुरेवकारार्थः एषोऽक्षरार्थः । भावार्थस्तु प्रागेवोपदर्शितः ।

एष प्रायश्चित्तविधिर्ज्ञानार्थमुपसंपद्युक्त एवं दर्शनार्थमुपसंपदि द्रष्टव्यस्तथा चाह ॥

एमेव दंसणावी, वत्तणमादी पया उ जह नाणे ।
वेयावच्चकरो पुण, इत्तरितो आवकहितो य ॥

यथा ज्ञाने वर्तनादिपदान्यधिकृत्य प्रायश्चित्तविधिरुक्त एवमेव अनेनैव प्रकारेण दर्शनेऽपि वर्त्तमानादीनि पदान्यधिकृत्य वेदितव्यः । गता ज्ञानदर्शनोपसंपत् ॥

इदानीं चारित्रोपसंपत् भावनाया ॥

तत्र काले ( आवकहाए य ) इति पदं व्याख्यानयति । ( वेयावच्चे ) त्यादि वैयावृत्यकरो वैयावृत्यार्थमुपसंपन्नः पुनर्द्विधा इत्वरः स्वल्पकालभावी यावत्कथिको यावज्जीवभावी । अस्य च द्विविधस्याऽपि वैयावृत्यकरापणविधिरयं एको गच्छवासी वैयावृत्यकरोऽपरः प्राघूर्णकः स च वक्ति अहं वैयावृत्यं करोमि ॥

तत्र विधिमाह ।

तुल्लेसु जो सुलद्धी, अन्नस्स व वारएण निच्छंते ।
तुल्लेसु व आवकही, तस्स मणणं च इत्तरिओ ॥

यदि द्वावपि कालतस्तुल्यावित्वरौ च तत्र यद्येकोलब्धिमान् अपरोऽलब्धिकस्तर्हि तयोस्तुल्ययोर्यः स लब्धिकः स कार्यते इतरस्तु उपाध्यायादिभ्यो दीयते । अथ द्वावपि यावत्कथिकौ तत्रापि यो लब्धिमान् स कार्यते इतरोऽन्येभ्यो दीयते । यदि पुनर्द्वावपि सलब्धिकौ यावत्कथिकौ च तत्र अन्यतर उपाध्यायादेः कार्यते । अथैकोऽपि तस्य नेच्छति तत आगंतुको विमुच्यते । अथ द्वावपि सलब्धिकावित्वरौ च तत आगंतुक उपाध्यायादीनां वैयावृत्यं कार्यते सूत्रालापकश्च उपाध्यायादिवैयावृत्यफलप्रदर्शकस्ततः प्रोत्साहनार्थं पठनीयः ॥

उवज्झायवेयावच्चं, करेमाणे समणे ॥
निग्गंथे महानिज्जरे, महापज्जवसाणे होई ॥ १ ॥

इत्यादि । अथ नेच्छति तर्हि तस्मिन्नन्यस्य उपाध्यायादिवैयावृत्यमनिच्छति वा शब्दोभिन्नक्रमत्वात् । वारएण चेत्येवं योजनीयः । द्वावपि वारकेण कार्येते कियत्कालमेकः कियत्कालमपर इति । यदि वास्तव्यो वैयावृत्यकरोऽनुमन्यते । अथ नाऽनुमन्यते तत आगंतुकस्तावंतं कालं प्रतीक्षाप्यते । यावत् वास्तव्यस्य वैयावृत्यस्य इत्वरकालसमाप्तिमुपयाति ॥ अथ न प्रतीक्षते तर्हि विसृज्यते अथ द्वयोरपि तयोर्वैयावृत्यकरापणविधिः ॥

अथ एक इत्वर एको यावत्काधिकस्तत्राह ( तुल्लेसु व ) इत्यादि । तुल्ययोर्लब्ध्यासमानयोर्यावत्काथिकः स कार्यते । इतरोऽन्यस्योपाध्यायादेः सन्नियोजनीयः । अथ वास्तव्यो यावत्कथिकस्तर्हि स भण्यते विश्राम्य त्वं तावत् यावदित्वरः करोति तथा चाह । तस्य वास्तव्यस्य वैयावृत्यकरस्य मतेन इच्छया इत्वरो वा कार्यते वैयावृत्यकरस्तथा प्रज्ञापितोऽपि नेच्छति तर्हि न कार्यते । स हि पश्चादपि यास्यति । तत इतरो वास्तव्यो न करिष्यतीति । अथ इत्वरो यावत्कथिकश्च द्वावपि सलब्धिकौ तत्र यावत्कथिकः कार्यते । इतरोऽन्यस्य नियुज्यते विसृज्यते वा । अथवा इत्वरः स लब्धिकस्तत्र यावत्कथिको भण्यते । विश्रम्य तावत् वर्त्तितव्यम् । यावदेष इत्वरः सलब्धिकः करोति । पश्चात्त्वमेव करिष्यसि । अथ नेच्छति तर्हि स एव कार्यते । इतरस्त्वन्यस्मै दीयते । तस्य तत्रानिच्छायास विसृज्यते अथेत्वरोऽलब्धिको लब्धिमान् तत्र यावत्कार्थकः कार्यते । इतर उपाध्यायादेः समर्प्यते । अथ तस्य तत्रानिच्छा तर्हि विसृज्यते । इह यदि वास्तव्यवैयावृत्यकरेणाननुज्ञातो वैयावृत्यं कारयति । यदि वा नापृच्छया अन्यंवैयावृत्यकरं स्थापयति तदा तस्याऽऽचार्यस्य बहवो दोषास्तानेवाह ॥

अणणुन्नाए लहुगा, अचियत्तमसाहजोग्ग दाणादी ।
निज्जरं महती हु भवे, तवस्सिमाई ण करणे वी ॥

वास्तव्यवैयावृत्यकरेणाननुज्ञायामुपलक्षणमेतत्तस्यानापृच्छायां वा यद्यागंतुकमित्वरं वैयावृत्ये स्थापयति । ततस्तस्य प्रायश्चित्तं लघुकाश्चत्वारोलघुमासाः । अन्ये ब्रुवते अनापृच्छायां मासलघु । अननुज्ञायां चतुर्लघु । अन्यच्चाननुज्ञायामनापृच्छायां वा वैयावृत्यपदे अन्यस्येत्वरस्य स्थापने वास्तव्यस्य अचियत्तमप्रीतिरुपजायते । अप्रीत्या च कलहं कुर्यात् ( असाहजोग्गादी ) इति यानि दानादीनि दानश्राद्धादीनि कुलानि योग्यानि तान्यागतुकवैयावृत्यकरस्य न साधयति । न कथयति तस्मात्स इत्वर आगंतुको वैयावृत्यकरः प्रज्ञाप्यते । त्व तपस्यादीनां क्षपकादीनां वैयावृत्यं कुरु तेषामपि क्रियमाणे वैयावृत्ये महती निर्जरा ॥ तदेवं वैयावृत्यद्वारं गतम् ॥

प्रायश्चित्तं चतुर्गुरु । एतदेवाह ( गीयत्थे होंति चउगुरुगा ) तदेवं संविग्नानां सांभोगिकात् यावत् विधिरुक्तः । संप्रति शेषाणामपि विधिमाह ॥

संविग्गे गीयत्थे, सरूविपच्छाकडे य गीयत्थे ।
पडिकंते अब्भुट्ठिय, असती अन्नत्थ तत्थेव ॥

संविग्ने अन्यसांभोगिकादिरूपे असति अविद्यमाने पार्श्वस्थस्य गीतार्थस्य समीपे आलोचयितव्यं तस्मिन्नपि गीतार्थे पार्श्वस्थे असति सारूपिकस्य वक्ष्यमाणस्वरूपस्य गीतार्थस्य समीपे तस्मिन्नपि सारूपिके असति पश्चात्कृतस्य गीतार्थसमीपे आलोचयितव्यं। एतेषां च मध्ये यस्य पुरत आलोचना दातुमिष्यते । तमभ्युत्थाप्य तदनंतरस्य पुरत आलोचयितव्यं । अभ्युत्थानं नाम वंदनकप्रतीच्छनादिकं प्रत्यभ्युपगमकारापणं ॥ तथा चाह । ( पडिक्कंते अब्भुट्ठिएत्ति ) अभ्युत्थिते वंदनप्रतीच्छनादिकं प्रति कृताभ्युपगमेऽतिक्रांतो ब्रूयात् नान्यथा अथ ते पार्श्वस्थादय आत्मानं हीनगुणं पश्यंतो नाभ्युत्तिष्ठंति तत आह ( असतित्ति ) असति अविद्यमाने अभ्युत्थाने पार्श्वस्थादीनां निषद्यामारचय्य प्रणाममात्रं कृत्वा लोचयनीयमितरस्य तु पश्चात्कृतस्य इत्वरसामायिकारोपणं लिंगप्रदानं च कृत्वा यथाविधि तदंतिकमालोचनीयं ( अन्नत्थ तत्थवत्ति ) यदि पार्श्वस्थादिकोऽभ्युत्तिष्ठति । तदा तेनान्यत्र गंतव्यं येन प्रवचनलाघवं न भवति । तत्र च गत्वा तमापन्नप्रायश्चित्तं शुद्धतपो वहति मासादिमुत्कर्षतः षण्मासपर्यवसानं यदि वा प्रागुक्तस्वरूपं परिहारतपः । अथ स नाऽभ्युत्तिष्ठति शुद्धं च तपः । तेन प्रायश्चित्तं दत्तं ततस्तत्र तपो वहति । एतदेव असतीत्यादिकं व्याख्यानयति ॥

असतीए लिंगकरणं, सामाइय इत्तरं च किइकम्मं ।
तत्थेव य सुद्धतवो, गवेसणा जाव सुहदुक्खे ॥

असति अविद्यमाने पश्चात्कृतस्याऽभ्युत्थाने गृहस्थत्वात् लिंगकरणं इत्वरकालं लिंगसमर्पणं तथा इत्वरमित्वरकालं सामायिकमारोपणीयं । ततस्तस्यापि निषद्यामारचय्य कृतिकर्म वंदनकं कृत्वा तत्पुरत आलोचयितव्यं । तदेवमसतीति व्याख्यातमधुना तत्थेवत्ति व्याख्या। यदि पार्श्वस्थादिका नाभ्युत्तिष्ठति शुद्धं च तपस्तेन प्रायश्चित्तं तथा दत्तं ततस्तत्र तत् शुद्धं तपो वहति यावत्तपो वहति । तावत्तस्यालोचनाप्रदायिनः सुखदुःखे गवेषयति । सर्वमुदंतं वहतीत्यर्थः। पश्चात्कृतमेव विधिमाह ॥

लिंगकरणं निसेज्जा, किइकम्ममणिच्छओ पणामो य ।
एमेव देवयाए, न वरं सामाइयं मुत्तुं ॥

पश्चात्कृतस्येत्वरकालसामायिकारोपणपुरस्सरमित्वरकाललिंगकारणं रजोहरणसमर्पणं तदनंतरं निषद्याकरणं ततः कृतिकर्म वंदनकं दातव्यं । अथ स वंदनकं नेच्छति । ततस्तस्य कृतिकर्ममनिच्छतः प्रणामो वाचा कायेन प्रणाममात्रं कर्त्तव्यं पार्श्वस्थादेरपि कृतिकर्मानिच्छायां प्रणामः कर्तव्यः । एवमेव अनेनैव प्रकारेण देवताया अपि सम्यक्त्वभावितायाः पुरतः आलोचयति ते वरं सामायिकारोपणं लिंगसमर्पणं न च कर्तव्यमविरतत्वेन तस्यास्तद्योग्यताया अभावात् । यदुक्तं ( गवेषणा जाव सुहदुक्ख ) इति तद्व्याख्यानयति ॥

आहारउवहिसेज्जा, एएसणमादीसु होइ जइयव्वं ।
अणुमोयणकारावण, सिक्खत्तिपयम्मितो सुद्धो ॥

आहारः पिंडः उपधिःपात्रनिर्योगादिः शय्या वसतिरेषणाशब्दः प्रत्यकमभिसंबध्यते । आहारैषणायामुपध्येषणायां शय्यैषणायामादिशब्दाद्विनयवैयावृत्यादिषु च भवति । तेन यतितव्यं कथमित्याह । अनुमोदनेन कारापणेन च। किमुक्तं भवति । यदि तस्याऽलोचनार्हस्य कश्चिदाहारादीनुत्पादयति । ततस्तस्यानुमोदनाकरणतः प्रोत्साहने यतते । अन्यथाऽन्यः कश्चिन्नोत्पादयति ततः स्वयमालोचक आहारादीन् शुद्धानुत्पादयति । अथ शुद्धं नोत्पद्यते । ततः श्राद्धान् प्रोत्साह्याकल्पिकानप्याहारादीन् यतनया उत्पादयतीति । अथाकल्पिकानाहारादीनुत्पादयतः तस्य महती मलिनतोपजायते । अथ च स वृद्धिकरणार्थं तदंतिकमागतस्ततः परस्परविरोधः । अत्राह ( सिक्खत्तिपयम्मितो सुद्धो ) यद्यपि नाम तस्यालोचनार्हस्याप्यकल्पिकानप्याहारादीनुत्पादयति । तथाप्यासेवनाशिक्षा तस्यांऽतिके क्रियते । वितिपदे अपवादपदे स तथा वर्तमानः शुद्ध एव एतदेव भावयति ॥

चोएति परिवारं, अकरेमाणे भणाइ वा सद्दे ।
सव्वोच्छिन्नतिकरिस्सइ उ, सुयभत्तीए कुणह पूयं ॥

प्रथमतः । स तस्यालोचनार्हस्य परिवारं वैयावृत्यादिकमकुर्वंतं चोदयति शिक्षयति । तथा ग्रहणासेवना शिक्षानिष्पन्नात एष तत एतस्य विनयवैयावृत्यादिकं क्रियमाणं महानिर्जराहेतुरिति । एवमपि शिक्ष्यमाणा यदि न करोति । ततस्तस्मिन्नकुर्वाणे स्वयमाहारादीनुत्पादयति । अथ स्वयं शुद्धं प्रायोग्यमाहारादिकं न लभते । ततः श्राद्धान् भणति प्रज्ञापयति प्रज्ञाप्य च तत्र्याऽकल्पिकमपि यतनया संपादयति न च वाच्यं तस्यैवं कुर्वतः कथं न दोषो यत आह ( अव्वोच्छित्तीत्यादि ) अव्यवच्छित्तिकरणस्य पार्श्वस्थादेः श्रुतभक्त्या हेतुभूतया अकल्पिकस्याप्याहारादेः श्रुतभक्त्या पूजां कुरुत यूयं न च तत्र दोष एवमपि । इयमत्र भावना ॥ यथा कारणे पार्श्वस्थादीनां समीपे सूत्रमर्थं च गृह्णानोऽकल्पिकमप्याहारादिकं यतनया तदर्थं प्रतिसेवमानः शुद्धो ग्रहणशिक्षायाः क्रियमाणत्वादेवमालोचनार्हस्याऽपि निमित्तं प्रतिसेवमानः शुद्ध एव आसेवनाशिक्षायास्तत्समीपे क्रियमाणत्वादिति । एतदेव स्पष्टतरं भावयति ॥

दुविहासती एतेसिं, आहारादी करेइ सव्वेसिं ।
पणहाणी य जयंतो, अत्तट्ठाए वि एमेव ॥

इह परिवाराभावे तस्याऽलोचनार्हस्य कर्तव्यमिति सामाचारी तेषां च पार्श्वस्थादीनां द्विविधा असती इति परिवाराभावो द्विविधः। विद्यमानाभावोऽविद्यमानाभावश्च । विद्यमानः सन् अभावोऽसद्वैयावृत्यादकरणात् विद्यमानाभावः । अविद्यमानः सन्नभावोऽविद्यमानाभावः । तत्र द्विविधेऽप्यभावे (स) तस्यालोचनस्याऽहारादिकं सर्वकल्पमकल्पिकं वा यतनया करोति उत्पादयति । यतनया कथमकल्पिकमुत्पादयति इति चेदत आह । पंचकहान्या यतमानः । किमुक्तं भवति । अपरिपूर्णमासिकप्रायश्चित्तस्थानप्रतिसेवनापत्तौ गुरुलाघवपर्यालोचनया पंचकादिपंचकहीनमासिकप्रायश्चित्तस्यानप्रतिसेवनां करोति । तामपि यतनया पंचकग्रहणमुपलक्षणं तेन दशादिहान्यापि यतमान इति द्रष्टव्यं । एवं सर्वत्र न केवलमालोचनार्हार्थमेवं यतते किं तु कारणे समुत्पन्ने आत्मार्थमप्येवमेवं पंचकहान्या यतते इति । यदुक्तं सम्यक्त्वभावितायाः पुरत आलोचयितव्यमेतदेव भावयति ॥

कोरंटगं जहा जाति, पच्छमं पुच्छिऊण वा अन्नं ॥

असति अरहं सिद्धे जाणंतो सुद्धो जावेव ॥ १ ॥

कोरंटकं नाम भरुकच्छे उद्यानं तत्र भगवान्मुनिसुव्रतस्वामीअर्हन्नतीर्थं समवसृतस्तत्र तीर्थकरेण गणधरैश्च बहूनि प्रायश्चित्तानि च दीयमानानि तत्रत्यया देवतया दृष्टानि ततः कोरंटकं गत्वा तत्र सम्यक्त्वभाविनदेवताराधनार्थमष्टमं कृत्वा तत्र च सम्यक्त्वकम्पितायादेवतायाः पुरतो यथोचितप्रतिपत्तिपुरस्सरमालोचयति । सा च प्रयच्छति यथार्हं प्रायश्चित्तं । अथ सा देवता कदाचित् च्युता भवेत् पश्चादन्या समुत्पन्ना तया च न दृष्टस्तीर्थकरस्ततः साधुमेनाकम्पिता ब्रूते महाविदेहे तीर्थकरमापृच्छ्य समागच्छामि ततः सा तेनाऽनुज्ञाता महाविदेहे गत्वा तीर्थकरं पृच्छति पृष्ट्वा च समागच्छत्यस्याग्रे प्रायश्चित्तं कथयति । यथा च कोरंटकमुद्यानमुक्तमेवं गुणशिलादिकमपि द्रष्टव्यम् अत्राऽप्यर्हतीर्थं वर्द्धमानस्वाम्यादीनां समवसरणात् । तासामपिदेवतानामभावे अर्हत्प्रतिमानां पुरत स्वप्रायश्चित्तदानपरिज्ञानकुशल आलोचयति । ततः स्वयमेव प्रतिपद्यते प्रायश्चित्तं तामप्यसत्यभावे प्राचीनादिदिगभिमुखोऽर्हतः सिद्धानभिसमीक्ष्य जानन् प्रायश्चित्तदानविधिः । विद्वान् आलोचयति । आलोच्य च स्वयमेव प्रतिपद्यते प्रायश्चित्तं सचतथा प्रतिपद्यमानः शुद्ध एव सूत्रोक्तविधिना प्रवृत्तेः । यदपि विराधितं तत्रापि शुद्धप्रायश्चित्तप्रतिपत्तेरिति । कोरंटकं जहेत्यत्र यथाशब्दोपादानात्कोरंटकसमुद्दिशताऽन्यान्यऽप्युद्यानानि सूचितानीति प्रकटयितुमाह ।

सोहीकरणा दिट्ठा, गुणसिलमादीसु जह य साहूणं ।

तेदेंति विसोहीतो, पच्चुप्पण्णा व पुच्छंति ॥

गुणशीलादिषूद्यानेषु याभिर्देवताभिः साधूनां तीर्थकरैर्गणधरैश्चानेकशो विधीयमानानि शोधिकरणानि दृष्टानि ताः स्वयं ददति प्रयच्छन्ति । विशोधीः प्रायश्चित्तानि याः पुनः प्रत्युत्पन्नाः देवतास्ता महाविदेहेषु गत्वा तीर्थकरान् पृच्छन्ति । पृष्ट्वा च साधुभ्यः कथयन्ति ॥ आ. म. १ अ० ग.अधि. १ प्रतिमा. श्लो. ६४ ॥

( १४ ) गीतार्थमवाप्य शल्यानुद्धरणादौ दोषगुणादिकं भावयता यद्विधेयस्तम् ॥

अथ गीतार्थमवाप्य शल्यानुद्धरणादौ दोषगुणादिकं भावयता यद्विधेयं तदाह । पंचा० । वृ. १५ ॥

मरिउं ससल्लमरणं, संसाराडविमहाकडिल्लंमि ।

सुचिरं भमंति जीवा, अणोरपारंमि ओइन्ना ॥ ४२ ॥

व्या. । मृत्वा आसेव्य सशल्यमरणं प्रतीतं ततः किमित्याह । संसाराटविमहाकडिल्ले गहनगुरुगहने सुचिरमपि दीर्घकालं भ्रमंति पर्यटंति जीवा देहिनः अनर्वाक्पारे अर्वाक्भागपरभागवर्जिते अवतीर्णा अवगाढा इति संवेगं कृत्वेति-योगः तथा ॥

उद्धरियसव्वसल्ला, तित्थगराणाए सुत्थिया जीवा ।

भवसयकयाइं खविउं, पावाइं गया सिवं थामं ॥ ४३ ॥

व्या० । उद्धृतसर्वशल्याः कृतालोचनास्तीर्थकराज्ञायां जिनोपदेशे सुस्थिताः सुष्ठु व्यवस्थिताः सन्तो जीवा देहिनः भवशतकृतानि जन्मशतविहितानि क्षपयित्वा प्रक्षप्य शल्योद्धारसामर्थ्यात् यानि यानि कर्माणि गताः प्राप्ताः शिवं निरुपद्रवं धामेति स्थानं सिद्धावस्थामित्यर्थः ।

सल्लुद्धरणं चउमति, होगवंभूहि देसियं सम्मं ।

अवितहमारोग्गफलं, धन्नोहं जाणमं णायं ॥ ४४ ॥

व्या० । शल्योद्धरणमालोचना चशब्दः पूर्वगाथाद्ययोक्ताथपिक्षया समुच्चयार्थः । इदमनंतरोक्तविधानं त्रिलोकबंधुभिर्जिनैरित्यर्थः दर्शितमुक्तं सम्यक् सोपपत्तिकं अवितथमव्यभिचारि आरोग्यफलं भावारोग्यसाधकं ततश्च धन्योऽहं पुण्यवानहं येन मया इदमेतच्छल्योद्धरणं ज्ञातमवगतम् ॥

ताउद्धरेमि सम्मं, य एयस्स णाणरासिस्स ।

आवेदियं असेसं, अणियाणो दारुणविवागं ॥ ४५ ॥

व्या०तइति यस्मादिदं मया ज्ञातं तत्तस्मादुद्धराम्यपनयामिसम्यग् न्यायेन एतत् भावशल्यं एतस्य गुरोर्ज्ञानराशेः अग्रे सद्बोधनिकरस्याऽवेद्य कथयित्वाऽशेष सकलं अनिदानो निर्निदानः सन् दारुणविपाकं रौद्रफलं शल्यमिति प्रक्रमः ।

इयसंवेगं काउं मरुगाहरणादिएहिं विविहेहिं ।

दढ पुण करणजुत्तो, सामायारिं पउंजेज्जा ॥

व्या० । इति एवमनंतरगाथाचतुष्कोक्तप्रकारसंवेगं शुभाध्यवसायविशेषं कृत्वा विधाय कमित्याह मरुकाहरणादिभिब्राह्मणोदाहरणाद्यैः समयप्रसिद्धैश्चिन्हैहिर्मरणादुयुगमेनापि शुद्धैः कार्यमेवं भूतार्थगमकैः सशल्यतादोषज्ञापकैर्वा आदिशब्दात्पीठमहापीठादिग्रहः दृढमत्यर्थमपुनः करणयुक्तः पुनरमुमपराधं न करिष्यामीत्यभिप्रायवान् सन् सामाचारीमालोचनागतसमाचारं वंदनकदाननिषद्यादानादिकं प्रयुञ्जीत विदध्यादालोचनाकारीति ॥

( १५ ) मरणाऽभिमुखेनाऽप्यालोचना करणीयाऽत्र ब्राह्मणदृष्टान्तः ॥

मरुकज्ञातं चेतत् ॥

नगरे पाटलीपुत्रे, विप्र आसीत् त्रिलोचनः ।

वेदवेदांगगत्तार्थ, विशारदशिरोमणिः ॥ १ ॥

तस्य पार्श्वे बटुः कोऽपि, समा यातः प्रणम्य तम् ॥

उवाच मयका मोहा, त्परदाररतिः कृता ॥ २ ॥

तस्यपापस्य मे शुद्धिः क्रियतां सोऽप्यभाषत ।

तत्रावस्य परीक्षार्थं, यथा भो विप्रपुत्रक ! ॥ ३ ॥

तप्तां लोहमयीं नारीं, फुल्लकिंशुकसन्निभाम् ।

आलिंगय यतो नान्य,त्प्रायश्चित्तमिहास्ति ॥ ४ ॥

तेनापि पापभीतेन, प्रतिपन्नमिदं ततः ।

सोपि विज्ञाय तद्भावं, शुद्धिमन्यां न्यवेदयत् ॥ ५ ॥

अथवा मरुकोदाहरणमेवं ॥

बभूव ब्राह्मणः कोऽपि वेदार्थेषु विशारदः ।

स्वागमाहितबोधेन, धर्मार्थोऽभूत्स तापसः ॥ १ ॥

ततस्तपस्यतस्तस्य, वसतस्तापसाश्रमे ।

कंदमूलाशिनोऽत्यर्थं, कष्टानुष्ठानकारिणः ॥ २ ॥

स्नानाद्यर्थं नदीतीरे, प्रयातस्यैकदा किल ।

पश्यतो मत्स्यबंधानां, मत्स्यमांसस्य भक्षणम् ॥ ३ ॥

तत्र जाताभिलाषस्य, जेमितस्य प्रयाच्य तत् ।

तस्यैवाऽजीर्णदोषेण, समुत्पन्नो महाज्वरः ॥ ४ ॥

तच्चिकित्सार्थमानीतो, वैद्यः सोऽपि च पृष्टवान् ।
किंनो त्वं भुक्तवान् ब्रूहि, सोऽप्यभाषत लज्जया ॥५॥
कंदमूलफलाहारा, स्तापसा यत्प्रभुंजते ।
तद्भुक्तं न पुनस्तेन, कथितं मत्स्यभक्षणम् ॥ ६ ॥
वैद्योऽपि तस्य वाक्येन, ज्ञात्वा तं वातिकंज्वरं ।
तथाविधक्रियां चक्रे, नचाभूतज्ज्वरमुक्तता ॥ ७ ॥
पुनः पृष्टोऽथवैद्येन, तदेवाख्यातवानसौ ।
चक्रे क्रियां सतामेव, विशेषान्नत्वभूद्गुणः ॥ ८ ॥
अन्यदावेदनाक्रांतो भीतोऽसौ मृत्युराहसात् ।
लज्जां विहाय वैद्याय, न्यगादीन्मत्स्यभोजनं ॥ ९ ॥
ततोवैद्योऽन्यगादीत्तं, दुष्टु दुष्टु त्वया कृतं ।
यदीयंति दिनानीदं नाख्यातं रोगकारणं ॥ १० ॥
अधुनापि कृतं साधु साधो यत्साधितं त्वया ॥
निदानं ज्वररोगस्य, करोमीतो रुजः क्षयम् ॥ ११ ॥
तस्योचितं ततो वैद्यः, क्रियां कृत्वा तकं व्यधात् ॥
व्याधिबाधाव्यपेतांगं, पुष्टदेहं महोजसमिति ॥ १२ ॥

( १६ ) अदत्तालोचने व्याधदृष्टान्तभावना.

कंटगमादिपविट्ठे, नोच्चरइ सयं नहोइ एकहए ।
कमठीभूयवणगए, आगल्लणं खोल्लियामरणं ॥

इह किल व्याधा वने संचरंत उपानहौ पादेषु नापनह्यंति मा हस्तिन उपानहोः शब्दान श्रौषुरिति । तत्रैकस्य व्याधस्याऽन्यदा वने उपानहौ विना परिभ्रमतो द्वयोरपि पादयोः कंटकादयः प्रविष्टा आदिशब्दात् श्लक्ष्णं किलिंचादिपरिग्रहः ॥ तान्प्रविष्टान् कंटकादीन्स्वयं नोद्धरति । नापि भोजिकायै निजभार्यायै व्याधिं कथयति । ततः स तैः पादतलप्रविष्टैः कंटकादिभिः पीमितः सन् वनगतो हस्तिना पृष्ठतो धावता प्रेर्यमाणो धावन् कमठीभूतः स्थले कमठ इव मंदगतिरभूत् ततः प्राप्तो हस्ती प्रत्यासन्न देशामिति जानन् क्षुधाक्रोभेगत्वा ( आगलन ) मितिवैकल्यं प्राप्तः । ततो मरणमेव गाथाक्षरार्थः । भावार्थस्त्वयं ।

एगो वाहो उवाहणातो विणावणे गतो तस्स पायतला कंटगाईणं भरिया ते कंटगाइयानो सयमुद्धरियानो विय वाहीए उद्धराविया अन्नया वणे संचरंतो हत्थिणा दिट्ठो तो तस्स धावंतस्स कंटगाइया दूरतरमंसे पविट्ठ । ताहे अतिदुक्खेण अद्दितो महापायवो इवाच्छिन्नमूलो हत्थिभएण पवेयणद्धतो पमितो हत्थिणा विणासितो ॥ बितिए सयमुद्धरती अणुट्ठिए भोइयाए नीहरइ । परिमद्दणदंतमलादि पूरणं वणगयपलातो ॥

अन्यो द्वितीयो व्याध उपानहौ विना वने गतः । तस्य वने संचरतः कंटकादयः पादतले प्रविष्टा स्तान्स्वयमुद्धरति ये च स्वयमुद्धर्तुं न शक्तान् अनुद्धृतान् भोजिकया निजभार्यया व्याधा नीहारयंति निष्काशयंति तदनंतरं तेषांकंटकादिवेधस्थानानामंगुष्ठादिना परिमर्दनं तदनतरं दंतमलादिना आदिशब्दात् । कर्णमलादिपरिग्रहः । पूरणं कंटकादिवेधानां ततोऽन्यदा वनगतः सन् हस्तिना ध्रोऽपि पलायितो जातो जीवि-

तव्यसुखानामाभागी एष दृष्टांतः । सांप्रत दार्ष्टांतिकयोजनामाह ॥

वाहत्थाणी साहू, वाहिगुरुकंटकादिअवराहा ।
सोही य ओसहाइ, पसत्थनाएण वणतो उ ॥

व्याधस्थानीयाः साधवः व्याधिस्थानीयो गुरुः कटकादिस्थानीया अपराधा औषधानि दंतमलादीनि तत्स्थानीया शोधिः अत्र द्वौ व्याधदृष्टांतौ प्रशस्तोऽप्रशस्तश्च आद्योऽप्रशस्तो द्वितीयः प्रशस्तः । तत्र प्रशस्तेन ज्ञातेन दृष्टांतेनोपनयः कर्त्तव्यः । आचार्योऽपि यदि तान् उपेक्षते ततः कंटकादीनामुपेक्षको व्याध इव सोऽपि दुस्तरामापदमाप्नोति । तथा चाह ॥

पमिसेवंते उवेक्खइ नयणं ओवीलए अकत्यंतो ।
संसारहत्थिहत्थं पावति विवरीयामयरोवि ॥

इतरोऽपि आचार्योऽपि तुशब्दोऽपिशब्दार्थः । यः प्रतिसेवमानात उपेक्षते ननु निषेधति न वा कुर्वतोऽकुर्वाणात् प्रायश्चित्तमुत्पीमयति । न भूयः प्रायश्चित्तदानदंडेन ताम्रयन् कारयति सविपरीतमाचार्यपदस्य हि यञ्चोक्तनीत्या परिपालनफलमचिरात् मोक्षगमनं तद्विपरीतं संसार एव हस्तिहस्तं प्राप्नोति । दुस्तरं संसारमागच्छतीति भावः । उपसंहारमाह ॥

आलोयमणालोयणदोसा य, गुणा य वण्णिया एए ॥

एते अनन्तरोदिता आलोचनायां गुणा आनालोचनायां दोषा वर्णिताः उ० १ आगमव्यवहारिणां सकाशे आलोचना (आगमनववहारि ) शब्दे ॥

इदानी मागमव्यवहारिणामभावे समयानुसारेणो त्कृष्टश्रुतानां श्रुतव्यवहारिणां सन्निधावालोच्यत इति । जीत. ।

( १७ ) स्वगणपरगणवासिकानां समीपे आलोचना.

स्वगणपरगणवासिकानां समीपे आलोचना ऽङ्गचूलिकायाम्. ॥

कहएणं भंते सहुरूवे आयरिय उवज्झाए पमायवंते । सगण परगण वासियाणं समीवे पावं आलोइज्जा तएणं अज्जसुहम्मे जंबू एवं वयासी । जंबू जिणसासणे ववहारो बलवंतो रिय भिक्खू अणागदकम्मं अन्नतरं अकिच्चट्ठाणं पमिसेवित्ता आलोएज्जा तस्य पासेज्ज पुणो आयरियउवज्झायं बहुस्सुयं बहूआगमं कप्पइ से तस्संतिए आलोइत्तए पमिक्कमित्तए निंदए गरिहारत्तिए विश्रोदित्तए अकरणयाए अब्भुट्ठित्तए अहारिहं पायच्छित्तं पमिवज्जित्तए जत्थेवणो आयरियउवज्झायं पासेज्ज बहुस्सुयं बहुआगमं तत्थेव संभोइय उवज्झाय आयरिय–पासेज्ज बहुस्सुयं बहुआगमं कप्पइ से तस्संतिए जाव पाम्ह वज्जित्ता । १ । जत्थेणो संभोय आयरियउवज्झायं पासेज्ज तत्थेव अण संभोइय आयरिय उवज्झायं पासेज्ज तत्थेव बहुस्स आगमं तस्संतियं जाव पमिवज्जित्तए । ६ । जत्थेव णो अन्नसंभोइय आयरिय उवज्झायं पासेज्ज तत्थेव सावयं पासेज्ज बहुसुत्रं तस्संतिए आलोयतए ॥ ४ ॥ जत्थेव णो सावयं जत्थेव सार विहिं जत्थेव णयेतत्थेव पच्छा कम्मजाव आलो० । ५ ।

जत्थेव णो पच्छा० । तत्थे समणावियाइं चेइयाइं पासिज्ज जाव कप्पइ जत्थेवणो समणावियाइं पासिज्ज तत्थेव गमेणगरस्स वाहिं पाईणाभिमुहस्स वा उदीणाभिमुहस्स वा ठिच्चा अलोइज्जा जाव पडिवज्जिज्जा एवं जंबू जहाविवएहारुद्देसएपच्छत्तं तहा करिज्जा णोय रपासंडि एसु रासिज्जा ।

निर्ग्रन्थानां निर्ग्रन्थीनां च स्वपक्षपरपक्षयोरालोचना व्यवहारकल्पे तथा च व्यवहारसूत्रम् उ. ५ ।

जे निग्गंथानिग्गंथीओयसंभोइया सियाणं एहं कप्पइ अन्नमन्नं कप्पई अणमणहस्स अंतिए आलोइत्तए अत्थिय इत्थ केइ आलोयणा रिहे कप्पति से तस्संतिए— आलोइए तए णज्जिया इत्थं केइ अणो आलोयणारिहे एवएहं कप्पइ अन्नमन्नसंतिए आलोएत्तए ॥ १९ ॥

व्य० ५ उ० अस्य सूत्रस्य संबंधप्रतिपादनार्थमाह ॥

थेरो अरिहो आलोयणाए आयारकप्पितोजोग्गो ।
साय न होइ विवक्खे नेव सपक्खे अगीएसु

स्थविरः पूर्वसूत्रे ऽभिहितः स च आलोचनाया अर्हः सोऽपि च योग्य आलोचनाया भवत्याचार कल्पिक आचारप्रकल्पा भिधानाध्ययन धारी । तत एवंसति सा आलोचना न विपक्षे नाऽपि सपक्षे अगीतेष्वगीतार्थेषु भवति । तत्र संयता संयतीनां विपक्षः संयत्यः संयतानां । सपक्षः संयता संयतीनां संयत्यः सयंतीनां तत्र विपक्षे सपक्षे वा गीतार्थेष्वालोचनाप्रतिषेधार्थमधिकृतं सूत्रं व्याख्यात निर्ग्रन्थानिर्ग्रन्थ्यो वा संभोगिका स्युस्तेषां (नोएहमिति) वाक्यालंकारे कल्पते अन्योन्यस्य परस्परस्यांतिके आलोचयितुमगीतार्थत्वात् अस्ति वेदत्र कश्चिदालोचनार्हः एवं सति न कल्पतेऽन्यत्न्यस्यांतिके आलोचयितुमेष सूत्रसंक्षेपार्थः ॥ सम्भोगिकानां सप्रपञ्चप्रतिपाद्य ॥

सांप्रतमालोचनाविधिमाह ॥

आलोयणा सपक्खे, परपक्खे चउगुरुं च ।
आणादी भिन्नकहादि, विराहणं दट्ठूण व भावसंबंधो ॥

आलोचना सपक्षे दातव्या । तद्यथा ।

निर्ग्रंथो निर्ग्रंथस्य पुरत आलोचयति । निर्ग्रंथी निर्ग्रन्थ्याः पुरतो यदि पुनर्विपक्षआलोचयति । यथा निर्ग्रंथ निर्ग्रन्थ्याः पुरतो निर्ग्रन्थी वा निर्ग्रन्थस्य तदा प्रायश्चित्तं चतुर्गुरुकं किंचाज्ञादयश्च दोषा श्चशब्दे भिन्नक्रम : सचतथैवयोजितः कस्मादेवमत आह भिन्नकहादि इत्यादि च चतुर्थव्रतातिचारमालोचयंत्याः संयत्या भिन्न कथादोषो भवति चतुर्थव्रतातिचारकथनतस्तस्याः कदाचि दालोचनाधारस्य भावभेदो भवतीत्यर्थः । आदिशब्दात् षष्ठी भूता सा यांचामिति कुर्यादिति परिग्रहः एवं सति शीघ्रं विराहणं दट्ठुणं भावसंबंधो दृष्टिविकारेण मुखविकारेण वा स वा सा वा भावं दृष्ट्वा मामिच्छतीत्यभिप्रायं ज्ञात्वा संबंधो घटना स्यात् एतदेव व्याख्यानयति ॥

मूलगुणेसु चउत्थे, विगडिज्जंते विराहणा हुज्जा ।
भित्यकचिट्ठिमहुरा, गतो य भावं वियाणंति ॥

मूलगुणेषु मध्ये चतुर्थे मूलगुणातिचारे विकथ्यमाने आलोच्यमाने विराधना शीघ्रस्य भिन्नकथादिना प्रागुक्तस्वरूपेण भवति तथा निरुक्का धृष्टा सती यांचां या कुर्यात् तथा दृष्टिरागतो मुखरागतोवा परस्य भावं विज्ञानीते यथा मामेष एषा वा इच्छतीति ततो घटना स्यात् न केवलमेते विपक्षे आलोचनायां दोषः किंचिमेऽपि तानाह ॥

अप्पच्चयनिब्भयया, पिल्लणया जइपगासणे दोसा ।
वयणो वि होइ गुम्मा, नियए दोसे पगासिंते ।
वंदत्ते वा उड्डे वा, गच्छो तह लहुसगत्तणाण गणे ।
विगडिंपि जप्पिउदुं, दद्दूणादाहकुवियन्न ॥

यतः संयत्याः पुरतः प्रकाशने आलोचनायामिमे दोषाः तद्यथा अप्रत्ययः किमयं वराको जानातीति तदाज्ञातो यत्किमपि सा प्रायश्चित्तं ददाति तत्र विश्वासाभावः । तथा भूयोऽपराधकरण गुरुर्गरीयांसं दंडं दास्यतीति महत्याशंका संयतीनां तु पुरुषस्य न भयमिति निर्भयता तद्भावाच्च भूयोभूयोऽपराधकारण प्रवृत्तिस्तथा ( पेल्लणयेति ) यदि महत्प्रायश्चित्तं ददाति ततः संयतो ब्रूते न भवत्येतत्प्रायश्चित्तं किंचिदमित्येवं प्रायश्चित्तस्य प्रेरणा । तथा व्रतिन्यपि यदि संयतस्य पुरत आलोचयति ततः सा निजकान् दोषान् प्रकाशयंती गम्या भवति यथा एकवारं तावदिदमाचरितं भूयोऽपि संप्रति मया सह स समाचर्यतां पश्चात्प्रायश्चित्तं दास्यते इति द्वितीयगाथा संप्रदायात् व्याख्येया । यद्येव तर्हि कथं पूर्वमार्यिकाः छेदश्रुतमधीयरन् कथं चालोचनां दद्युस्तत्रोत्तरमाह ।

ततो जाव अज्जरक्खिय, आगमववहारिणो वियाणत्ता ।
न भविस्सति दोसो, त्तितो वायंती उच्छेदसुयं ॥

यावदार्यरक्षितास्तावदागमव्यवहारिणोऽभूवन् त चागमव्यवहारबलेन विज्ञाय यथा एतस्याश्छेदश्रुतवाचनायां दोषो न भविष्यतीति सयतीमपि छेदश्रुतं वाचयंतिस्म ।

आरेणागमरहिया, मा विणाहिं तितो नवाएंति ।
तेण कहं कुव्वंत, सोहितु अपाणमाणीतो ॥

आर्यरक्षितादारत आगमरहितास्ततस्ते मा छेदश्रुताध्ययनतः संयत्यो विनाशयति विनङ्क्ष्यंतीति हेतोश्छेदश्रुतानि संयतीर्न वाचयंतीति । अत्राह । तत छेदश्रुताध्ययनाभावेन कथं ताः संयत्योऽजानानाः शोधिं कुर्वंतु । अत्राचार्य आह ( ततो जाव अज्जरक्खियस्स आणे पगासइ सुवणीतो । असतीए विवक्खंमि वि एमेव य होंति समणा वि ) यतः पूर्वमागमव्यवहारिणः स्युश्छेदश्रुतं च संयत्याऽधीयरन् ततो यावदार्यरक्षितास्तावत् व्रतिन्याः स्वस्थाने स्वपक्षे संयतीनां प्रकाशने प्रकाशनामकायुः स्वपक्षाभावे विपक्षेऽप्यालोचितवंत्यः श्रमण्यः । एवमेव श्रमणा अपि भवंति ज्ञातव्याः । किमुक्तं भवति । श्रमणा अपि सपक्षे आलोचितवंतस्तदभावे विपक्षेऽपि श्रमणीनां पार्श्वे इत्यर्थः दोषाभावात् । आगमव्यवहारिभिर्हि दोषाभावमवबुध्य छेदश्रुतवाचना संयतीनां दत्ता नान्यथेति । आर्यरक्षितादारतः पुनः श्रमणानामेव समीपे आलोचयति श्रमण्योऽपि श्रमणानामागमव्यवहारच्छेदादत्रैव परमतमाशंक्य दूषयति ॥

मेहुणवज्जं आरेण, केइ समणेसु ता पगासंति ॥
तंतु न जुज्जइ जम्हा, लहुसगदोसा सपक्खेवि ॥

आर्यरक्षितादारतः श्रमणेषु श्रमणानां पार्श्वे ताः श्रमण्यः प्रकाशयंत्यालोचयंति मैथुनवर्ज्यं मैथुनं पुनः श्रमण्यः श्रमणी,

नामेव सकाशे आलोचयंति इति केचिद् व्याचक्षते तत्तु न युज्यते यस्मात् लघुस्वकदोषाः सपक्षेऽपि । किमुक्तं भवति । श्रमण्यो ऽपि स्वकलघुदोषतस्तुच्छत्वरूपस्वकदोषतःपरिस्त्रावित्वं कुर्युः परिभवं वा समुत्पादयेयुस्तस्मान्मैथुनमपि श्रमणानामेवांतिके विकटनीयं ।

असती कडजोगी, पुण सुत्तूणं संकियाइं ठाणाइं ॥
आइल्ले धुवकम्मिय, तरुणी थेरस्स दिट्ठिपहे ॥ १ ॥

आर्यरक्षितकालेऽपि यदि संयत्या मूलगुणापराधआलोचार्यस्तर्हि संयत्याः सकाशे आलोच्यते । तस्याऽसति अन्यो वे यः कृतयोगी कृतः सूत्रतोऽर्थतश्च छेदग्रंथधरः स्थविरस्तस्य समीपे आलोचयति नवरं शंकितानि स्थानानि वक्ष्यमाणानि शून्यगृहादीनि मुक्त्वा किंत्वाचीर्णे उचिते प्रदेशे आलोचयितव्यं यत्र ध्रुवकर्म्मिको दृष्टिपथे वर्तते दृष्ट्या पश्यति न तु शृणोति । तत्र जवनिकांतरिता आलोचयति । तरुणी थेरस्येत्येष तृतीयभंग उपात्तः । स च शेषभंगानां त्रयाणामप्युपलक्षणं । ते चेमे । स्थविरा स्थविरस्यालोचयति १ स्थविरा तरुणस्यालोचयति २ तरुणी स्थविरस्यालोचयति ३ तरुणी तरुणस्य ४ यदुक्तं मुक्त्वा शंकितानि स्थानानि ॥

संप्रति तान्येवोपदर्शयति ॥

सुन्नघरदेउलउज्जाण, रन्नपच्छन्नमुवस्सयस्संतो ॥
एयंविवज्जे ठायंति, तिन्निचउरोहवा पंच ॥ १ ॥

शून्यगृहं देवकुलं उद्यानमरण्यं प्रच्छन्नं च स्थानम् तथा उपाश्रयस्यांऽतर्मध्ये एतद्विवर्जे एतद्विरहिते प्रदेशे आलोचनानिमित्तं तिष्ठंति । ते च जघन्यतस्त्रयो यदि वा चत्वारोऽथवा पंच ते च त्रिप्रभृतयो वक्ष्यमाणभंगकानुसारेण प्रतिपत्तव्याः भंगकानेवाह ॥

थेरतरुणेसु भंगा, चउरो सव्वत्थपरिहरे दिट्ठिं ॥
दोएहंपुण तरुणाणं, थेरे थेरी यमचुरसं ॥ १ ॥

स्थविरतरुणेषु भंगाश्चत्वारस्ते च प्रागेवोपदर्शिताः । स्थविरा स्थविरस्यालोचयंतीत्यादि ॥ तत्र यदि जवनिकाया अवकाशो नास्ति ततः सर्वत्र चतुर्ष्वपि भंगेषु दृष्टिं परिहरेत् । भूमिगत दृष्टिका सती आलोचयेत् यथा आलोचनार्हः शृणोति तत्र चतुर्भंगे द्वयोःस्थविरः स्थविरा च प्रत्युरसमिति । प्रत्यासन्नौ सहायौ दीयेते । येन परस्परं तौ दृष्टिं न बध्नीतोनापि मुख विकारं कुरुतः । एवमस्मिन् चतुर्थे भंगे चत्वारो भवंति ॥

थेरो पुण असहाओ, निग्गंथी थेरिया वि ससहाया ।
सरिसवयं च विवज्जे, असती पंचमं कुज्जा ॥ १ ॥

तृतीयभंगे पुनः स्थविरोऽसहायोऽपि भवतु । तरुण्यः पुनः स्थविरासहाया दीयते । द्वितीयभंगे निर्ग्रंथी स्थविराऽपि ससहाया कर्तव्या । तरुणस्याऽऽलोचनार्हस्य सहायोऽस्तु वा न वा कश्चिद्दोषः । एवं तृतीये द्वितीये च भंगे त्रयो जना भवंति । तथा सदृशवयो नियमतः सहायानां विवर्जयेत् तद संजावे सदृशवया अपि भवेत् । तत्र प्रथमभंगे चतुर्थभंगे वा सदृशवयः सहायसंभवे पंचमकुल्लककुल्लकां वा पट्टकां कुर्यात् ॥

ईसिं अणोयताविया, उ आलोचयए विवक्खंमि ।
सरिपक्खे उक्कुडु, पंजलिचिट्ठोवणुन्नातो ॥

विपक्षे श्रमणस्य समीपे श्रमणी आलोचयति ईषत् अवनता ऊर्ध्वस्थिताः सदृशपक्षे पुनः श्रमणः श्रमणस्य पार्श्वे पुनरुत्कुटुका । कृतप्रांजलिरालोचयति । अथ सोऽर्शव्याधिपीडितस्ततोऽनुज्ञापनां कृत्वा अनुज्ञातः सन् निषद्यामुपविष्टमालोचयति ॥

दिट्ठीए होंति गुरुगा, सविकाराओ सरागेसा उणिया ।
तस्स विवड्ढितरागे, तिगिच्छजयणाए कायव्वा ॥

यो दृष्ट्या दृष्टिं बध्नाति तस्य दृष्टौ सविकारायां भवंति प्रायश्चित्ततया चत्वारो गुरुकास्तत्र ये ते द्वितीयका दत्तास्ते यदि एकतर पश्यति तत आलोचनातोऽपसारयंति यथा अपसरतापसरत यूयं न किमप्यालोचनया प्रयोजनमिति । अथ सा निर्ग्रंथी स्वभावत एवोदारशरीरा सविकारा ,दृष्ट्या अपसरेति उणिता सती अपसृता तथापि तस्याऽऽलोचनाचार्यस्य यदि तस्या उपरि विवर्द्धितो रागस्तर्हि तस्मिन् सति यतनया चिकित्सा कर्तव्या ॥

तामेवयतनामाह ॥

अन्नेहिं पगारेएहिं, जाहे नियत्तेउं से न तीरति अ ॥
घेत्तूणाभरणाइति, गच्छजयणाए कायव्वा ॥

यदा अन्यैः प्रकारैस्तं भावं निवर्तयितुं न शक्नोति तदा तस्याः संयत्या आभरणानि वस्त्राणि गृहीत्वा यतनया चिकित्सा कर्तव्या ॥

एतामेवाह ॥

जारिसवएहिं जिया, तारिसएहिं तमस्सती चरिया ॥
संजाविविणायकेयण, वेल्लवणं चिहुरगंमेहिं ॥

यादृशैः सचित्रैर्वस्त्रैः प्रावृतः सा संयती उपविष्टा दृष्टा तादृशैर्वस्त्रैस्तमोऽधकारमस्यास्तीति तमस्वती रात्रिस्तस्यां तरुणसाधुर्वरितः प्रावृतः क्रियते ततः संजवतीति दृती प्रेष्यते ततो विनावितृको नरविहीनो य ओको निवासो गृहमित्यर्थः । तत्र केतनं संकेतो दीयते दत्वा च स तत्र स्थितस्तावत्तिष्ठति यावत्स तरुणसाधुः संयतीनेपथ्योपेत आगच्छति । तस्मिंश्चागते त्रिकेरषु केशेषु गंडयोश्च विलेपनं क्रीडनं करोति तत्र यद्येता वता शुक्रनिपाततास्तिष्ठति ततः सुंदरं । अथ नोतर्हि संयत नेपथ्योऽपसार्यते प्रकारांतरमारभ्यते ॥

तदेव प्रकारांतरमाह ॥

अहवा वि सिद्धपुत्तिं, पुव्विं गमेऊण तीए सिवएहिं
आवरियकालियाए, सुन्नागारादिसंमेल्लो ॥

अथवेति प्रकारांतरद्योतने पूर्वं सिद्धपुत्रीं गमयित्वा तस्याः संयत्याः शिवायैरावृत्य कालिकायां कृष्णायां रात्रौ शून्यगृहादिषु तया सह तस्य मेलः संगमः कर्तव्यः । व्य. ॥

सा चालोचनाऽऽचार्यशिष्यभावे भवति तत्र च शिष्याचार्याणामियं मर्यादा सामाचारि पडिच्छगशब्दे ॥

सम्प्रति यादृशा उत्सर्गत आलोचनार्हास्तानभिधित्सुराह ॥ व्य० ५ उ० ॥

गीयत्था कयकरणा, पोढा परिणामिया य गंजीरा ।
चिरदिक्खिया य वुड्ढा, जईणं आलोयणा जोगा ॥

गीतार्थः सूत्रार्थतदुभयनिष्णातत्वात् कृतकरणा अनेकवारमालोचनायां सहायीभवनात् प्रौढाः समर्थाः सूत्रतोऽर्थतश्च प्रायश्चित्तदाने पश्चात्कर्तुमशक्यत्वात् परिणामिकत्वाः परिणामिका वा गंभीरामहत्यप्यालोचकस्य दोषे श्रुते अपरिश्राविणश्चिरं दीक्षिताः प्रभूतकं प्रव्रजिता वृद्धाः श्रुतेन

पर्यायेण वयसा च महांत एवंभूता यतीनां साधूनामुपलक्षणमेतत् संयतीनां चालोचनायोग्याः ॥ व्य. उ. ५ ॥
तथाच महानिशीथे

भयवं कस्सा लोएज्जा, पच्छित्तं को वदिज्ज वा ।
कस्स व पच्छित्तं देज्जा, आलोविज्जा वा कहंगो ॥

लोयणं ताकेवलीएबहूसुवि । जोयणसएहिं गंतूणं सुध्भावेहिं दिज्जए । चउनाणीणं तया भावे एवं । ओहिमईसुजस्स विमलयरे तस्स तारतम्मेण दिज्जई । उमग्गपन्नविंतस्स उस्सग्गोपट्ठियस्स य । उस्सग्गरयणोचेव सव्वभावं तरेहिणं । १ । उवसंतस्स दंतस्स संजयस्स तवस्सिणो । सुमिती गुत्तीपहाणस्स दढवीरितस्स असढभाविणो । २ । आलोएज्जा पच्छिज्ज देज्जादाविज्जवा परं । अहक्किसंत दाहिट्ठं पायच्छित्तं अणुच्चरो ॥ ३ ॥

पंचा० वृ. १५ आचारवान् ज्ञानासेवनादयां ज्ञानादिपंचप्रकाराचारयुक्तोऽयं हि गुणत्वेन श्रद्धेयवाक्यो भवति । तथा ( आहारवत्ति ) अवधारः आलोचकोक्तापराधानामवधारणा तद्वान्सहिसर्वापराधेषु यथावत् शुद्धिदानसमर्थो भवति तथा ( ववहारत्ति ) मतुब्लोपाद्व्यवहारवान् आगमश्रुताऽऽज्ञाधारणा जीतलक्षणपंचप्रकारव्यवहाराऽन्यतरयुक्तः व्यवहारवांश्च यथावत् शुद्धिकरणसमर्थो भवतीति तथा ( ओवीलएत्ति ) लज्जया अतिचारान् गोपायंतमुपदेशविशेषैरपव्रीडयति विमतलज्जां करोतीत्यपव्रीडकः अयं ह्यालोचकस्याऽत्यंतमुपकारको भवतीति अवधारादिपदत्रयस्य च कर्मधारयः कार्यः तथा ( पकुव्वीति ) आलोचिताऽतिचाराणां प्रायश्चित्तदानेन शुद्धिं प्रकर्षेण कारयतीत्येवंशील इत्येतदर्थस्य सामायिकस्य कुर्वधातोर्दर्शनात् प्रकुर्वी आचारवत्त्वादिगुणयुक्तोऽपि कश्चित् शुद्धिदानं नाभ्युपगच्छतीत्यतस्तद्व्यवच्छेदार्थं प्रकुर्वीत्युक्तं । चः समुच्चये । तथा ( निज्जवत्ति ) प्राकृतत्वान्निर्यापकोपपत्तेः प्रायश्चित्तस्य निर्वापकोऽयं हि तथा विधत्ते यथा साधुर्महदपि प्रायश्चित्तं वोढुं शक्नोत्यत एवायमिहमहोपकारीति तत्तथा अपायान् दुर्भिक्षदुर्बलत्वादिकानैहलौकिकानर्थान् पश्यति । अथवा दुर्लभबोधिकत्वादिकान् पारलौकिकान् सातिचाराणां तान् दर्शयतीत्येवं शीलोऽपायदर्शी अयं चात एवाऽऽलोचकस्योपकारी तथा न परिश्रवति आलोचकोक्तमकृत्यमन्यस्मै न निवदयतीत्येवं शीलोऽपरिश्रावी तदन्यो ह्यालोचकानां लाघवकारी स्याच्चः समुच्चये । बोद्धव्यो ज्ञेय इति आलोचनाचार्य इति योगः ॥ पं. व. ।

तहपरहियम्मि जुत्तो, विसेसओ सुहुमभावकुसलमती ।
भावाणुमाणवं तह, जोग्गो आलोयणापरिओ १५

तथेति समुच्चये । परहिते परोपकारे युक्तः उद्युक्त उद्यत इत्यर्थः । तदन्यो हि परेषामवधारको भवति । तथा विशेषत आचार्यान्तरापेक्षया विशेषेण सूक्ष्मभावकुशलमतिः लोकशास्त्रगताऽस्थूलार्थनिपुणबुद्धिः अत एव भावानुमानवान् परचेतसामिंगितादिभिर्निश्चायकः । अयं हि परभावानुसारेण शुद्धिदाने शक्तो भवति । तथेति समुच्चय योग्य उचित आलोचनाचार्यो विकटना गुरुक्तगुणकलापशून्यो हि न शुद्धिकरणक्षम इति गाथाद्वयार्थः ॥ पंचा. वृ. १५ ।
तथा च स्थानांगे—स्था० ॥ ठा. ८

( १८ ) आलोचनाया अष्टौ स्थानकाः दशस्थानकाश्च ॥

अट्ठहिं ठाणेहिं संपन्ने अणगारे अरिहइ आलोयणा पडिच्छित्तए । तं जहा । आयारवं आहारवं ववहारवं उव्वीलए पकुव्वए अपरिस्सावी णिज्जवए अवायदंसी ॥

अट्ठहीत्यादि । सुगमं । नवरं । आयारवंति । ज्ञानादिपंचप्रकाराचारवान् ज्ञानासेवनाभ्यामाहारवांति अवधारणावान् आलोचकेनालोच्यमानानामतिचाराणामिति आह च ।

आयारवमायारं, पंचवि मुणाइ जोय आयरइ ।
आहारवमहारे, आलोइं तस्स तं सव्वंति ॥

ववहारवति आगमश्रुताज्ञाधारणजीतलक्षणानां पंचानामुक्तरूपाणां व्यवहाराणां ज्ञातेति ( उव्वीलएति ) अपव्रीडेति विलज्जीकरोति यो लज्जया सम्यगनालोचयन्तं सर्वं यथा सम्यगालोचयति तथाकरोतीत्यपव्रीडिकः अभिहितं च ॥

ववहारववहरं, आगममाइ उ सुणइ पंचविहं ।
ओबीलुवगूहंतु, जह आलोए इंत्तसव्वंति । १ ।

( पकुव्वएत्ति । ) आलोचिते सति यः शुद्धिं प्रकर्षेणं कारयति संप्रकारेति भणितं च ( आलोयइयंमि सोहिं जो कारावेइ सो पकुव्वोअत्ति । अपरिस्सात्ति ) न परिश्रवति नालोचकदोषानुपश्रुत्याऽन्यस्मै प्रतिपादयति य एवंशीलः सोऽपरिश्रावीति यदाह ( जो अन्नस्स उ दोसे न कहेइ अपरिसाइ सो होइति । ) ( निज्जवएति ) निर्यापयति तथा करोति यथा गुर्वपि प्रायश्चित्तं शिष्यो निर्वाहयतीति निर्यापक इत्यगादि च ( निज्जवओ तह कुणइनिव्वहेईजेण पच्छित्तंत्ति । ) ( अवायदंसित्ति । ) अपायाननर्थान् चित्तभंगानिर्वाहार्थीन् दुर्भिक्षदौर्बल्यादिकृतान् पश्यतीत्येवंशीलः सम्यगनालोचनायां च दुर्लभबोधिकत्वादीनपायान् शिष्यस्य दर्शयतीत्यपायदर्शीति भणितं च ॥

दुब्भिक्खदुब्बलाइ, इहलोएजाणए अवाएउ ।
उदंसेइय परलोए, दुल्लहबोहित्तसंसारोत्ति ॥ १ ॥
भ० १५ श० ७ उ० । स्था० ठा० ८ ।

दसहिं ठाणेहिं संपन्ने अणगारे अरिहइ अत्तदोसं आलोयणं पडिच्छित्तए तंजहा आयारवं आहारवं जाव अवायदंसी पियधम्मे दढधम्मे । ठा. १०

अधिकमिह प्रियधर्माधर्म प्रियो दृढधर्माय आपद्यपि धर्मान्न चलतीति । आलोचितदोषाय प्रायश्चित्तं देयम् ।

अट्ठहिं ठाणेहिं संपन्ने अणगारे अरहइ अत्तदोसं आलोएत्तए । तंजहा । जाइसंपन्ने कुलसंपन्ने विणयसंपन्ने नाणसंपन्ने दंसणसंपन्ने चरित्तसंपन्ने खंते दंते ।

टी० ( अत्तदोसत्ति ) आत्मापराधमिति जातिकुले मातापितृपक्षौ तत्सम्पन्नः प्रायोऽकृत्यन्न करोति कृत्वाऽपि पश्चातापादालोचयतीति तद्ग्रहणं यदाह ॥

जाइकुलसंपन्नो, पायमकिच्चं न सेवइ किंचि ।
आसेविउंचयच्छा, तग्गुणओसम्ममालोएत्ति ।'

विनयसंपन्नः सुखेनैवालोचयति तथा ज्ञानसंपन्नो दोषविपाकं प्रायश्चित्तं वावगच्छति यतो ॥

वा विन्नाणेउ संपन्नो, दोसविवागं वियाणिओ घोरं।
आलोएइ सुहं विय, पायच्छित्तं च अवगच्छेत्ति ॥ १ ॥

दर्शनसंपन्नः शुद्धोऽहमिति एवं श्रद्धत्ते चरित्रसंपन्नो भूयस्तमपराधं न करोति सम्यगालोचयति प्रायश्चित्तं च निर्वाहयति इति उक्तं च ॥

सुद्धो तहत्ति सम्मं, सद्दहई दंसणेण संपन्नो।
चरणेणउ संपन्नो, न कुणइ जुज्जो तमवराहंति ॥२॥

क्षान्तः परुषं भणितोऽप्याचार्यैर्न रुष्यतीति। आह च ॥

खंतो आयरिएहिं, फरुसं भणिओ वि न विरूसेति ॥

दान्तः प्रायश्चित्त दत्तं वोढुं समर्थोभवतीति। आह च ॥

दंतो समत्थो वोढुं पच्छित्तं जमिह दिज्जए तस्सात्ति ॥

॥ स्था० ८ ठा० ॥

दसहिं ठाणेहिं संपन्ने अणगारे अरिहइ अत्तदोसं आलोइत्तए। तं जहा। जाइसंपन्ने कुलसंपन्ने एवंजहा अट्ठट्ठाणे खंते दंते अमाईअपच्छाणुतावी ॥ ठा० १०

(एवंति) अनेन क्रमेण यथा अष्टस्थानके तथेदं सूत्रं पठनीयमित्यर्थः कियद्दूरं यावत् ( खंतेदंतेत्ति ) पदे तथाहि ॥

विणयसंपन्ने नाणसंपन्ने दंसणसंपन्ने चरणसंपन्नेत्ति।
अमाईअ पच्छाणुतावीति ॥

पदद्वयमिहाधिकं प्रकटं च नवरं ग्रन्थान्तरोक्तं तत्स्वरूपमिदम् ॥

नोपलिउं चेमाई, अपच्छयावो न परितप्पेति ॥

(१८) सामुदानिकाऽतिचारालोचना।

ओघनिर्युक्तौ सामुदानिकानतिचारानधिकृत्य इदानीं सामुदानिकानतिचारान् आलोचयति यदि व्याक्षेपादिरहितो गुरुर्भवति अथ व्याक्षिप्तो भवति। तदा नालोचयतीत्येतदेवाह।

वि.क्खित्तपराहुते, विप्पमत्ते माकयाइआलोए।
आहारं च करेंतो, णीहारं वा जइ करेइ ॥ ७८२ ॥

व्याक्षिप्तो धर्मकथादिना स्वाध्यायेनापराएहुतो पराङ्मुखः अन्यतोऽभिमुखः प्रमत्तः विकथयाति एवं विधं गुरुन् कदाचिदालोचयेत् तथा आहारं कुर्वति सति तथा नीहारं वा यदि करोति ततो नालोचयति। इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह।

दारगाहा।

कहणाइवक्खित्ते, विगहाए पमत्त अन्नओ।
वमुहो अतरमकाए, वाणीहारे संकमरणं वा ॥७८३॥

धर्म्मकथादिना वा प्रमत्तः अन्यतोऽभिमुखो वा भवति भुंजतेऽपि वा नालोचनीयं किं कारणं ( अंतरति ) अंतरायं भवति यावदालोचनां शृणोति अकारकं वा शीतलं भवति यावदालोचनां वा शृणोति तथा नीहारमपि कुर्वतो नालोचनीयं किं कारणं यत् आशंकया साधुजनितया कायिकादि निर्गच्छति अथ धारयति ततो वा मरणं भवति यस्मादेते दोषास्तस्मात्।

अव्वक्खित्ताउत्तं, उवसंतमुवट्ठियं च नाऊणं।
अणुण्णवेत्तुमेहावी, आलोएत्ता सुसंजए ॥ ७८४ ॥

धर्म्मकथादिना व्याक्षिप्ते गुरौ आलोचयेत् आयुक्तमुपयोगतत्परं उपशांतमनाकुलगुरुं दृष्ट्वा उपस्थितमुद्यतं च ज्ञात्वा एवंविधं अनुज्ञाप्य मेधावी आलोचयेत् सुसंयुतः साधुः। इदानीमेतामेव गाथां व्याख्यानयन् भाष्यकृदाह ॥

कहणाई अवक्खित्ते, कोहाइ अणाउले तदुवउत्ते।
संदिसहत्ति अणुन्ना, काउण विदिन्न मालोए ॥ ८५॥

धर्मकथादिना व्याक्षिप्तोक्रोधादिभिरनाकुले तदुपयुक्ते भिक्षालोचनोपयुक्ते ( संदिसहति ) अणुन्नं काऊण संदिसत आलोचयामीत्येवं अनुज्ञां कृत्वा मार्गयित्वेत्यर्थः ( विदिन्नत्ति ) आचार्येण दत्तायामनुज्ञायां भणत इत्येवं लक्षणायां तत आलोचयेत्।

तथा च पञ्चाशकेऽर्हद्वारविवरणायाह पंचा० वृ० १५

संविग्गोउव मादी, मइमं कप्पट्ठिओ अणासंसी।
पन्नवणिज्जो सड्ढो. आणाइत्तो दुक्कडतावी ॥१२॥
तव्विहिसमूसुगो खलु, अभिगाहासेवणादिलिंगजुत्तो।
आलोयणापयाणे, जोगो भणितो जिणिंदेहिं ॥१३॥

व्या० संविग्नस्तु संसारभीरुरेवाऽलोचनाप्रदाने योग्यः इति योगः। तस्यैव दुष्करकरणाध्यवसायित्वात् दुष्करं चालोचनादानं यदाह ( अविरायाचराऽऽलंनयदुच्चरियं कहे ) तथा अमायी अशठः याहीहि न यथा यावत् दुष्कृतं कथयितुं शक्नोति तथा मतिमान् विद्वांस्तदन्यो ह्यालोचनीयादिस्वरूपमेव नजानाति। तथा कल्पास्थितः स्थविरजातसमाप्तकल्पादि व्यवस्थितादन्यस्य ह्यतीचारविषया जुगुप्सैव न स्यात् यथा अनाशंसी आचार्याद्याराधनाषारहितः सांसारिकफलानपेक्षो वा। आशंसिनो हि न समग्रातिचारालोचना संभवत्याशंसाया एवातिचारत्वात्। तथा प्रज्ञापनीयः सुखावबोध्यस्तदन्यो हि स्वाग्रहादकृत्यविषयान्निवर्तयितुं न शक्यते तथा श्राद्धः श्रद्धालुः स हि गुरूक्तां शुद्धिं श्रद्धत्ते। तथा आज्ञावान् आप्तोपदेशवर्त्ती सहि प्रायोऽकृत्यं न करोत्येव तथा दुष्कृतेनातिचारासेवनेन तप्यते। अनुतापं करोत्येव शीलः दुष्कृततापी स एव तदालोचयितुं शक्नोतीति। तथा तद्विधिसमुत्सुकः खल्वालोचनाकल्पनालस एव स हि तद्विधिं प्रयत्नेन परिहरति। तथा अभिग्रहासेवनादिभिर्द्रव्यादिनियमविधानविधायनानुमोदनप्रभृतिलिंगैरालोचनायोग्यतालक्षणैर्युतो युक्तोयः स तथा। आलोचनाप्रदाने प्रतीते योग्योऽर्हो भणित उक्तोजिनेन्द्रैस्तीर्थकरैरिति गाथाद्वयार्थः। ओघ. ॥

किमेतावन्त एव करणीययोगा आहोस्विदन्येऽपि सन्तीत्याह।

जं चन्नं करणिज्जं, जेयणो हत्थसयत्राहिगयारियं।
अविगडयम्मि असुद्धो, आलोयंतो तयं सुद्धो ॥७॥

यच्च पूर्वोक्तकरणीयव्यापारेभ्योऽन्यद्यत्तत्करणीयं क्षेत्रप्रतिलेखनार्थाएडलान्वेषणशंकानिष्क्रमणाचार्यसंलेखना दिहस्तशताद्बहिराचरितं तस्मिन्पूर्वोक्ते च करणीययोगनिवहे अविकटिते गुरोरप्रकाशितेऽनालोचिते अशुद्धः समित्याद्यतिचारलेशवान् आलोचयंस्तं करणीययोगनिवहं शुद्धः आलोचनास्यप्रायश्चित्तेन समित्याद्यतिचारलेशस्य निवर्तनाद्धस्तशताभ्यन्तराचरितं किञ्चित्प्रश्रवणादिकमालोच्यते। किञ्चित् खेलसंधानजल्लनिवसनोत्थानविजृंभणाकुञ्चनप्रसारणोच्छ्वासनिःश्वासचेष्टादिकमालोच्यते ॥ अत्राह शिष्यः। करणीययोगेष्वाहारादिग्रहणाद्येषु यथोक्तविधिना कृतेष्वपि कथा-

लोचनाप्रायश्चित्तयोग्यता न याति । तर्हि न किमपि कर्तव्यं व्रतमादाय प्रथममेव सर्वैरप्यनशनङ्कार्यं । गुरुराह । तन्न । एवं सति तीर्थोच्छेदः स्यात् । कः केन प्रतिबोध्य इष्यते । किञ्च न खलु मालिन्याऽऽशंकया वस्त्राणि न परिधीयन्ते। अपरिधानेहिं विवस्त्रतथा सर्वेषांपशुरूपतापत्तिस्ततःपरिधीयंत एव । जातमालिन्यानि च जलेन प्रक्षाल्य निर्मलीक्रियन्ते । एवं चारित्रमपि करणीययोगकरणे संजातातिचारलेशमलं आलोचनाप्रायश्चित्तजलेन विशोध्य निर्मलीकार्यं ॥

अतिचारलेशवशतोऽपि तच्छुद्धये भवत्यालोचना परं निरतिचारस्य किमित्याह ।

कारणविणिग्गयस्सय, सगणाउपरगणागयस्स विय ।
उवसंपयाविहारे अ, आलोयणनिरयारस्स ॥ ए ॥

टीका । कारणेनाऽशिवदुर्भिक्षराजादिप्रत्यनीकत्व अज्ञाने समाधिविराधनागुर्व्वादेशादिनिर्गतस्य निरतिचारस्याऽथ विराधितसमितिगुप्तिकस्याऽप्यालोचना भवति । सा च द्विधा । ओघतो विभागतश्च । तत्र यः कारणविनिर्गतः पक्षाभ्यन्तरे समागच्छति। आगतमात्रश्चैर्यापथिकीप्रतिक्रम्य समुद्देशवेलाया अर्वागेवाऽऽलोचयति। तस्याऽप्योघालोचनामात्रं भवति ॥ यथा ॥

अप्पा मूलगुणेसु विराहणा, अप्पा उत्तरगुणेसु ।
अप्पा पासत्थाइसु, दाणगह संपओगोहा ॥

अल्पशब्दोऽभाववाचीतिन मूलगुणेषु विराधना अल्पा न कदाचिदुत्तरगुणेष्वप्यल्पा न काचित्पार्श्वस्थावसन्नादिषु दानग्रहाभ्यां संप्रयोगः सम्पर्कः सोऽप्यल्पः । सोऽपिनासीदित्यर्थः इयमोघालोचना । यस्तु पक्षाभ्यन्तरागतोऽपि समुद्देशानन्तरमालोचयति । यावत्पक्षात्परतः समागतः समुद्देशादर्वागप्यालोचयति । तयोर्निरतिचारयोरपि विभागालोचना विशेषालोचना सुव्यक्ता । निः शेषनिजाऽनुष्ठितनिवेदनरूपा। वस्तुतक्षशिलायां धर्म्मचक्रस्य मथुरायां स्तूपस्य पुरुकायां जीवत्स्वामिप्रतिमायाः तीर्थकृज्जन्मनिः क्रमणज्ञाननिर्वाणभूमीनामयोध्यादीनां दर्शनार्थं स्वजनगोकुलविवाहादि संखडिकाप्रेक्षार्थं यत्र विशिष्टाहारोपधी लप्स्येति । तत्र लिप्सया स्थ्यदेशदिदृक्षयादिना वागुर्वनादेशादिनिर्गतोऽकारणविनिर्गतस्तस्य साऽतिचारत्वेन बृहत्तरप्रायश्चित्तशोध्यत्वाच्चालोचनामात्रेण शुद्धिः । तथा स्वगणात्सांभोगिकरूपादेकमण्डलीभोजिनः उभयतोऽपि संविग्ना संविग्नरूपादागतस्याऽपि च निरतिचारस्य उपसंपयत्ति उपसंपद्यमानस्य सा चोपसंपत्पञ्चधा । श्रुतग्रहणायान्यमाचार्य्यमुपसम्पद्यमानस्य श्रुतोपसंपत ३मार्गेव्रजतोममयोप्माकी निश्रेतिमार्गोपसंपत ४ विनयं कर्तुं गच्छांतरमुपसंपद्यमानस्य विनयोपसंपद् ५ जाप्यक्तताऽप्युक्तं ॥

उपसंपयपंचविहा, सुय सुहदुक्खे यखित्तमग्गे य ।
विणउपसंपयाविविय, पंचविहा होइ नायव्वा ॥

एतासामन्यतरामुपसंपदं प्रथममाददानस्य विभागालोचना भवति । विहारत्ति । विहारे कृते निरतिचारस्याऽप्यालोचना भवति । अयंभावः । एकाहात्पक्षादर्वाग्वा यदा सांभोगिकाः स्पर्द्धकपतयो गीतार्थाचार्या मिलन्ति । तदा निरतिचारेऽप्यन्योन्यस्य विहारालोचनां स्वस्वविहारक्रमानुष्ठितप्रकाशरूपां ददतीति ॥ जीत. ॥

( २० ) आलोचयित्रा एतानि वर्जनीयानि ॥

णट्टं चलं भासं मूयं तह ढंढ़र च वज्जेज्जा ॥
आलोएज्जा सुविहिओ, हत्थं मत्तं च वावारं ॥७६॥

नृत्यन्नाऽऽलोचयति । चलंश्च नाऽऽलोचयति । अङ्गानि चालयन्नालोचयति । तथा गृहस्थभाषया नालोचयति । किं तर्हि संयतभाषया आलोचनीयमिति । तद्यथा । " मुयारियाओ " इत्येवमादि, तथा आलोचयन् केन स्वरेण नालोचयति मिणिमिणेण तथा ढड्डरेण च स्वरेण उच्चैर्नालोचयति । एवं विधं स्वरं वर्जयेत् । किम्पुनरसावालोचयतीत्येतदाह ॥

आलोचयेत्सुविहितःहस्तमुदकस्निग्धं तथामात्रकं गृहस्थसत्कं कटच्छुकादि उदकार्द्रादि तथा गृहस्थया कृतमव्यापारकुर्व्वता तदेतच्चालोचयति । इदानीमेनामेव गाथां व्याख्यानयन्नाह ॥

करपायस्समुह, सीसत्थि उट्ठमाईहिंण ढिएणाम ॥
चल्लणं हत्थसरीरे, वल्लणं काए नूयनावे य ॥ ७७ ॥

करस्य तथा पादस्य भ्रूवशिरसः अक्ष्णः ओष्ठस्य चैवमादीनामङ्गानां सविकारं चलनं नर्तितं नाम तच्च नर्तितं कुर्व्वन्नालोचयति । चलनं हस्तस्य शरीरस्य कुर्व्वन्नालोचयति । तथा चलनं कायस्य करोति मोटनं कुर्व्वन्नालोचयति तथा भावतश्चलनं अन्यथा गृहीतमन्यथा आलोचयति ॥

अमविरियहुज्ज गारत्थिय, भासा उवउजए मूयढ्ढरं च सरं ।
आलोएवाचारं, संसट्ठियकरमत्तो ॥ ७८ ॥

आलोचयेतगृहस्थभाषया न आलोचयति यदुत ( लंगणीउ लट्ठाउ मंडलका उट्ठा ) इत्येवमादि किन्तु संयतभाषया आलोचनीयं ( मयारियाउ ) इत्येवमादि मूकस्वरे मनाक् ढड्डर च महान्तं स्वरं वर्जयित्वाऽऽलोचयति । व्यापारं गृहस्थाः संबन्धिनं तथा संसृष्ट उदकार्द्रादि इतरं असंसृष्टं किं तत्करं संसृष्टं असंसृष्टं च उदकेन तथा मात्रकं गृहस्थसत्कं कैलिकादि उदकसंसृष्टंचेति । एतदालोचयति ॥ ओघ. । पं. व. ॥

तथाच स्थानाङ्गे ठा. १. ।

दस आलोयणादोसा पएणत्ता ।
आकंपइत्तु अणुमाणइत्तु, जं दिट्ठवायरं च सुहुमं वा ॥
छन्नं सदाउलगं, बहुजण अव्वत्ततस्सेवि ॥ १ ॥

टीका । आकम्प्य आवर्ज्येत्यर्थः । यदुक्तं ॥

वेयावच्चाइहिं पुव्वं, आकंपइत्तु आयरिए ॥
आलोएइ कहं मे, थोवं वियरेज्ज पच्छित्तंति ॥ १ ॥

( अणुमाणइत्ता ) अनुमानं कृत्वा किमयं मृदुदण्ड उतोग्रदण्ड इति ज्ञात्वेत्यर्थोऽयमभिप्रायोऽस्य । यद्ययं मृदुदण्डस्ततो दास्याम्यालोचनामन्यथा नेति उक्तञ्च ॥

किं एस उग्गदंडो, मिउदंडो वात्तिएवमणुमाणो ॥
अप्पेयविंतिलोवं, पच्छित्तं मज्झदेज्जाहिति ॥ १ ॥

( जंदिट्ठंति ) यदेव दृष्टमाचार्यादिना दोषजातं तदेवालोचयति । नान्यदेोषश्चायमाचार्य्य रञ्जनमात्रपरत्वेनासंविग्नत्वादस्येति । उक्तञ्च ॥

दिट्ठाव जेपरेणं, दोसावियेडयं तेच्चियए एएणे ॥
सोहिज्जया जाणंतु, वएसो पयावदोसोउत्ति ॥ १ ॥

( वायरंवत्ति ) बादरमेवातिचारजातमालोचयति न सूक्ष्ममिति ( सुहुमंवत्ति ) सूक्ष्ममेव वातिचारमालोचयति । यः किल सूक्ष्ममालोचयति स कथं बादरं संतं नालोचयत्येवं रूपं भावसम्पादनायाचार्यस्येति । आह च ।

वायरवड्डवएहे, जो आलोएइ सुहुमनालोए ॥

अहवा सुहमाओए वरमणंतोउएवं तु ॥ १ ॥
जो सुहमे आलोए, सो किह नालोय बायरे दोसेति ॥

( छन्ति ) प्रच्छन्नमालोचयति यथात्मनैव शृणोति नाचार्य्य भणितं ( छएणतह आलोए जह नवर अप्पणा सुणइत्ति ) (सद्दाउलयत्ति) शब्देनाऽकुलं शब्दाकुलं वृहच्छब्देनालोचयति। यथान्येऽप्यगीतार्थास्तच्छृण्वन्तीत्यन्नाणि च । (सद्दाउलवट्टेणं सद्देणालोय जह अगिया विवोहेत्ति बहुजणंति ) बहवो जना आलोचनाचार्या यस्मिन्नालोचने तद्बहुजनं । अयमभिप्रायः॥

एगस्सालोइत्ता जो, आलोएतणोवि अएणस्स ॥
ते चेवय अवराहे, तं होई बहुजणं नामोत्ति ॥ १ ॥

( अव्वत्तेति ) अव्यक्तस्याऽगीतार्थस्य गुरोः सकाशे यदालोचनं तत्तत्संबन्धादव्यक्तमुच्यते । उक्तञ्च । ( जो य अगीयत्थस्स आलोए तं तु होइ अव्वत्तमिति तस्स विति ) ये दोषा आलोचयितव्यास्तत्सेवी यो गुरुस्तस्य पुरतो यदालोचनं स तत्सेविलक्षणमालोचनादोषस्तत्र चाऽयमभिप्रायः आलोचयितुः ॥

जह एसो सतुल्लो, नो दाही गुरुगमेव पच्छित्तं ॥
इय जो किलिट्ठचित्तो, दिएणा आलोयणा तेणंति ॥

भ. श. २५ उ. ७ । ध. अ.ध. २ । पं. चू. ॥

दस दोसविप्पमुक्कं, तम्हा सव्वं अगहमाणेणं ।
किंपि कयमकज्जं, तं जहवत्तं कहेयव्वं ॥ ३२ ॥

द० प० ॥

आलोचनायाम्परुषवचने दोषः ( ववहार ) शब्दे ॥
कथम्पुनरालचनः शोधिजातमप्यालोचयेदित्याह ॥

जह बालो जंपंतो, कज्जमकज्जं च उज्जयं भणति ।
तं तह आलोएज्जा, मायामयविप्पमुक्कोउ ॥ ४७ ॥

व्याख्या । यथा यद्वालः शिशुर्जल्पन्भाषमाणः विवक्षितमिति गम्यते । कार्यमकार्यं वा विधेयमविधेयं वा निर्विशेषमृजुकं अक्रमवत् गोपायन्नित्यर्थः । भणत्यभिधत्ते मात्रादिकं प्रतीतमित्यालोचनीयाऽपराधं तथा तद्वालवदृक्त्व्यमवक्तव्यं वाऽलोचयेत् गुरोर्निवेदयेत् । मायामदविप्रमुक्तस्तु शठता गर्व्वरहित एव मायामदयुक्तो हि न सम्यगालोचयितुं शक्नोतीत्यतस्तद्रहिते इत्युक्तम् । व्य० उ० ४ । १० । पंचा० वृ० १५ आलोचनाविधिः ॥

एत्थं पुण एसविही, अरिहो अरिहम्मि दलयति कमेण ।
आसेवणादिणा खलु, सम्मं दव्वादि सुद्धीए ॥ ८ ॥

व्याख्या । अत्रालोचनायां पुनः शब्दस्य चैवं संबंधो विधिनाऽलोचना देया । अत्र पुनः एषोऽयं वक्ष्यमाणो विधिः कल्पस्तथथा । अर्हं आलोचनादानोचितः । तथा अर्हे आलोचनादानयोग्ये गुरौ विषयभूते ( दलय इत्ति ) ददाति प्रयच्छति तया क्रमेणाऽनुपूर्व्येण किं विधेनेत्याह । आसेवनादिना खलु प्रतिषेवणप्रभृतिनैव आदिशब्दादालोचनाक्रमग्रहः । तथा सम्यग्यथावत् आकुट्टिकादिभावप्रकाशनतः ॥

तथा द्रव्यादिशुद्धौ द्रव्यक्षेत्रकालभावशुद्धौ सत्यां प्रशस्तेषु द्रव्यादिष्वित्यर्थः ॥

अथ सम्यगिति यदुक्तन्तत्राह ॥

तह आउट्टियदप्पओ, कप्पमायप्पलवजयणाए ॥
कज्जे वा जयणाए, जहट्ठियं सव्वमालोए ॥ १० ॥

व्याख्या । तथेति शब्दः समुच्चये । यथाक्रममालोचनाक्रमेव माकुट्याद्रिकृतत्वमपीत्येतदर्थः । आकुट्टिकोपेत्यकरणं दर्पो वल्गनादिः । प्रमादो मद्यादिस्मृतिभ्रंशादिर्वा एषां द्वन्द्वोऽतस्तेभ्यस्तत आकुट्टिकादर्पप्रमादतस्तया कल्पतो वाऽशिवादिपुष्टालम्बनतो वा कल्पश्च यतनादिविषय इत्यत आह । यतनया यथाशक्तिसंयमरक्षारूपया कार्ये वा प्रयोजने वा संभ्रमहेतोः प्रदीपनकादावयतनयाऽनापादितसारेतरविभाग तया यदासेवितं तदिति गम्यं यथास्थितं यथावृत्तं सर्वं समस्तमकृत्यमालोचयेत् । गुरुभ्यो निवेदयेच्छुद्धिकाम इतिगाथार्थः ॥ १० ॥ पंचा० १५ वृ० ॥

( २१ ) सम्यगाऽलोचनादाने किं लिङ्गम् ॥

सम्यगालोचनादाने किम्पुनर्लिङ्गमित्याह ॥ पंचा० वृ० १५

आलोयणासुदाणे, लिंगमिणं विंति मुणियसमयत्था ।
पच्छित्तकरणमुचितं, अकरणयं चेव दोसाणं ॥ ४८ ॥

व्याख्या । आलोचनासु दाने सम्यगालोचनायां लिंगं चिन्हमिदं वक्ष्यमाणं ब्रुवते आहुः । मुणियसमयत्था ज्ञातसिद्धांतार्थाः प्रायश्चित्तकरणं विशुद्धिविशेषासेवनमुचितं योग्यं गुरूपदेशानुसारि तथा अकरणकमेव विधानकमेव चैवेत्यवधारणे दोषाणामालोचितापराधानामिति गाथार्थः ॥

कउम्पुनरालोचनादानं शुद्धिकरणं भवतीत्याह ।

इयभावपहाणाणं, आणाए सुट्ठियाण होंति इमं ॥
गुणट्ठाणसुद्धिजनगं, सेसं तु विवज्जय फलंति ॥४९॥

व्याख्या । इत्येवमुक्तनीत्या भावप्रधानानां संवेगसाराणां तया आज्ञायामाप्तोपदेशे सुस्थितानां सुष्ठु व्यवस्थितानां भवति स्यात् इदमालोचनादानं गुणस्थानशुद्धिजनकं प्रमत्तादिगुणविशेषनिर्मलताधायकं शेषं तत्कादन्यत्पुनर्विपर्ययफलं गुणस्थानकाशुद्धिजनकमिति शब्दः समाप्ताविति गाथार्थः ॥

तयाच महानिशीथे अ० १ ॥

खंता दंता विमुत्ता य, जिइंदी सव्वभासिणो ॥
छक्कायसमारंभाओ, विरत्ते तिविहेणओ ॥ ८९ ॥

तिदंडा सव्वसंवरिया, इत्थिकहासंगवज्जिया ॥
इत्थिसंलावनिरया जीय, अंगोवंगनिरक्खणा ॥ ९० ॥

निम्ममत्ता सरीरेवि, अप्पडिबध्दा महायसा ॥
जीया इत्थित्थिगब्भ,सहीणं बहुदुक्खाओभावओए१ ?

तहातो परिसेणं, भावेणं दायव्वा आलोयणा ॥
पच्छित्तं पित्र कायव्वं, तहा जहा चेव एहिकयं ।९२।

न पुणा तहा आलोएयव्वं, मायाडंभेण केणई ॥
जह आलोयणं चेव, संसारं वुड्ढीभवे ॥ ९३ ॥

अणंतणाइकालाओ, अत्तकम्मेहिं दुम्मइ ॥
बहुविकप्पकल्लोले, आलोए तेवी अहोगए ॥ ९४ ॥

गोयम ! केसिं विना माई, साहिमोतं निवोधय ॥
जेमालोयणपच्छित्ते, भावदोसिक्ककलुसिए ॥ ९५ ॥

ससल्ले घोरमहं दुक्खं, दुरिहियासंसुद्धसहं ॥
अणुहवंति चिट्ठति, पावकम्म नराहमे ॥ ९६ ॥

गुरुगा संजमं नाम, साहू निद्धंद्धसे तहा ॥
दिट्ठवायाकुसीले य, मणकुसीले तहेव य ॥ ९७॥

सुहुमालोयगे तहय, परवंचयसा लोयगे तह ॥

किं वा लोयणा तहयए, किंवा लोयगे तहा ॥ ९८ ॥
अकयालोयणे चेव, जणरंजवणे तहा ॥
नाहं काहामि पच्छित्तं, उम्मामा लोयणमेव य । ९९ ।
मायारूं नपवंचीय, पुरकरूतववरणकहा ॥
पच्छित्तं मे किंचि, न कायालोयणुच्चरे ॥ १०० ॥
आमणालोयणवखाइं, लहुं पच्छित्तजायगो ॥
अम्हाणा लोइयं चेह, मुहबंधालोयगे तहा ॥ १०१ ॥
गुरुपच्छित्ताहमक्किय, गिलाणालंबणं कहे ॥
अएमालोयगे साहू, सुणासुणिण तहेव य ॥ १०२ ॥
निच्छिन्ने वियपच्छित्तं, न काहं वुड्डिसायगे ॥
रंजवणमेत्तलोगाणं, वाया पच्छित्ते तहा ॥ १०३ ॥
पडिवज्जणपच्छित्ते, चिरयालए वेसगे तहा ।
अणाणिट्ठियपायच्छित्ते, अन्नज्जणियसहायरे तहा । १०४ ।
आउट्टीयमहापावे, कंदप्पादप्पे तहा ।
अजयणासेवणे तहय, सया असुयपच्छित्ते तहा । १०५ ।
दिट्ठयच्छयपायच्छित्ते, सयं पच्छित्तकप्पगे ।
एव इयं इच्छयपच्छित्तं, पुव्वालोइयमणुस्सरे । १०६
जाइमयसंकिए चेव, कुलमदसंकिए तहा ।
जाइकुलोज्जयमयासंके, मुत्तलाजिसिमरि सकियाए तहि । ७ ।
तवोमया संकिएचेव, पडिवासयसंकिए तहा ।
सक्कारमयलुद्धे य, गारवसंडसिए तहा । १०८ ।
अपुज्जो वा विहंजंमे, एगजंमेव चिंतगे ।
पाविणंपि पावतरे, सकलुसचित्तालोयगे । १०९ ।
परकहावगे चेव, अविणयालोयगे तहा ।
अविहीयालोयगे साहू, एवमादी दुरप्पणो । ११० ।
अणंतेणाइकालेणं, गोयमा ! अत्तदुक्खिया ।
अहो अहो जाववत्त, सियं जावदोसेक ओगए । १११ ।
गोयम ! णंते चिट्ठंति, जे असादिए समालिए ।
नियत्तासदोसमल्लाणं, भुज्जंते विरसं फलं । ११२ ।
चिट्ठइस्संति अज्जवि, तेणं सल्लेण सल्लिए ।
अणंतंपि अणागयं, कालं तम्हा सल्लं न धारएसं मु णित्ति ॥ ११३ ॥

( ७२ ) कृतानां कर्मणां क्रमत आलोचना ॥

आलोचनाक्रमश्च ।

न य पडिसेवणाए, अणुलोमा होंति वियडणाएय ।
पडिसेवावियडणाए, एन्थ चउरो जवे जंगा ॥ ८१ ॥

नाश्चातिचाराः प्रतिसेवनानुलोमेन यथैव प्रतिसेवितास्तेनैवानुक्रमेण कदाचिच्चिन्तयति । तथा ( वियडणाएत्ति ) विकटना आलोचना तस्य च अनुलोमा एव चिंतयति एतदुक्तम्भवति । पढमं लहुओ दोसो पडिसेविउ पुणोवड्डो वहुतरो चिंतेइ । एवमेव ततश्च प्रतिसेवनायां अनुकूलमालोचनायामपि अनुकूलमेव । यतः प्रथमं लघुको दोष आलोच्यते पुनर्बृहत्तरः पुनर्बृहत्तमः इति एष प्रथमो भंगकः । अन्नोपडिसेवणा अनुकूलो न उणवियडणा एतदुक्तंभवति ।

आसेवियं पढमं वड्डं पुणो लहुयं पुणोवड्डं ।
पुणो वड्डयरं चिंतेइ ॥

एवमेव ततश्च प्रतिसेवनायाः । अनुकूल । अननुकूलं तत्यालोचनाया यतस्तत्र प्रथमं लघुरालोच्यत । पुनर्बृहत्तरः पुनर्बृहत्तमः इति एष द्वितीयो भंगः । " अन्नो पडिसेवणाएवि अणणुकूलो आलोयणाए पुण अणुकूलो " । एतदुक्तं भवति । अट्ठावियट्ठापडिसेवणाएवि अणणुकूलो आलोयणाएवि अणणुकूलो । एतदुक्तम्भवति पढम वड्डो पडिसेविओपुणो वड्डायरो चिंतेत्ति पुण ज जहा संभरइ पढमं वड्डो पुणो लहुओ पुणो वड्डो पुणो बहुयारो एवं अपडिवियडु चिंते तस्स ण पडिसेवणाणुकूलो यणाणुकूलो एस चउत्थो एसो वज्जेयव्वो ॥

इदानीमिमुमेवार्थं गाथार्द्धेनोपसंहरन्नाह ।

( पडिसेवावियडणा एय होइ इत्थपि चउभंगो ) इदं व्याख्यातमेवेति ॥ ओघ. ॥

तथा च पंचाशके वृ. १५ ॥

दुविहेण णुलोमेण, आसेवणावियडणाभिहाणेणं ।
आसेवणाणुलोमं जं जह आसेवियं वियडे ॥ १६ ॥
आलोयणाणुलोमं, गुरुगवराहे उपच्छओ वियडे ।
पणगादिणा कमेण, जहजह पच्छित्तवुड्डि ॥ १७ ॥

व्याख्या । द्विविधेन द्विप्रकारेणानुलोम्येन क्रमेण वै विध्यमेवाह । आसेवना यदानुलोम्यं तदासेवनमेव विकटनेन च यत्ताद्विकटनमेवानस्ते एवाभिधाने यस्य तत्तथा तेनासेवन विकटनाभिधानेनालोचनां ददातीति उत्तरगाथासंबंधपदं संबंधनीय । तत्राद्यं स्वरूपत आह । आसेवनानुलोम्यमुक्तशब्दार्थं तदिति शेषः । यत्कि येन क्रमेणासेवितं यथा सेवितं विकटयत्यालोचयत्यालोचनाकारीति । आलोचनानुलोम्यं पुनर्व्यक्तशब्दार्थं तद्यदिति शेषः । गुरुकापराधान्महातिचारान् तु शब्दः पुनरर्थः । स च योजित एव पच्छत्ति प्राकृतत्वात्पश्चाद्यथापराधानंतरं विकटयत्यालोचयति । कथमित्याह । पणगाइणत्ति । समयनापत्वात्पंचकादिना पंचदशकप्रभृतिना क्रमेणानुपूर्व्या किमित्याह ।

यथा यथायेनयेन प्रकारेण प्रायश्चित्तवृद्धिर्विशुद्धिवर्द्धनं तथातथायद्विकटयतीति प्रकृतमिह च लघावचारपंचकंनाम प्रायश्चित्तं गुरुक तु दशकं गुरुतरे तु पंचदशकमित्येवमादीति तुशब्दःपूरणार्थः । अत्र च गीतार्थ आलोचनानुलोम्यैवालोचयति कारणं तु गीतार्थगम्यमितरस्त्वासेवनानुलोम्येनालोचना तु दोम्यानजिइत्वा तस्य च कारणमतिचाराणां सुस्सरत्वमिति गाथाद्वयार्थः ॥

संयतीनामालोचना । महानिशीथे अ० १ ॥

गोयम ! समणीणणोसंखा जा उनिकलुसनीसल्लवीसुद्धसुनिम्मलवमणमाणमाउ अज्जऊप्पाविसोहीए आलोयत्ताणसुपरिपुन्नं । नीरुकं निखिलं निरात्तं नियत्तं नियदुच्चरियमाइयं सव्वंपिजावमल्लं अहारिहं तवो कम्मं पायच्छित्तं मणुचरित्ताणं निद्धोपपावकम्ममललेवकलंकाओ उप्पन्नदिव्ववरकेवलनाणाओ महाणुभावाओ महाय सओ महासत्तसंपन्नाओ सुगणाहेयनामाधेसाओ अणंतमसोक्खं सोक्खं पत्ताओ ॥

कासिंच गोयमा नामे, पुन्नभागाए सा हिमो ॥
जेसिमालोयमाणीणं, उप्पणंसमणीणकेवलं ॥ १॥
हाहाहापाकम्माणं, पावापावमतीअहं ॥
पावं गणं वि पावयए, हाहाहाडुट्ठिचिं तमे ॥ २ ॥
हाहा हाइच्छे जावं, मे ताविहजं मेउवट्ठियं ॥
तहावीणघोर वीरुग्गं, कट्ठंतवसंजमं धरं ॥ ३ ॥
अणंतपावरासीओ, संमिलियाओ जयाजवे ॥
तइयाइच्छित्तणं लद्धे, शुद्धं पावाण कम्मणा ॥ ४ ॥
एगदिसी न्नूताणं, समुद्दयंतणुतो तह ॥
करेमि जह न पुणो, इत्थीहं होमि केवली ॥ ५ ॥
दिट्ठीए वि न खंमामि, सीलं हंसमाणि केवली ॥
हाहामणेणमे किंपि, अट्ठदुहट्ठाचिंतियं । ६ ॥
तमालोइत्तालहुं, सुद्धिगिएहंहं समणिकेवली ॥
दिव्वूणमझावणणं, रूवं कंतिदित्तिसिरिं ॥ ७ ॥
माणरदयं गाहमाजं तु, खयमणरूमणीय केवली ॥
वातमोत्तूण नो अन्नो, निच्छयं मह तणुच्छिवे ॥ ८ ॥
छकायं समारंभं, न करेहंसमणि केवली ॥
पोग्गलकरे कारुगुज्जातं णाहि जहणं तरे तहा । ९ ।
जणाणा एव ण दंसेमि, सुसंगुत्तं गोदं गासम्णी य केवली ॥ बहुजंवंतरकोसीओ, घोरं गब्भपरंपरं ॥ १०॥
परियदंतीए सुलद्धंमे, णाणचरित्तसंजुअं । माणुस्स जम्मं सुसंमत्तं, पावकम्म क्खयं करं ॥११॥ तासव्वन्ना वणीसद्धा, आलोएमी खणेखणे ॥ पायच्छित्तमणुट्ठामि, वीयंतं न समारजं ॥ १२ ॥ जेणागब्भइपाछित्तं, वायामणु साय कम्मुणा । पुढविदगागणिवाऊ, हरियकायं तहे वय ॥ १३ ॥ वीयकायसमारंभं, विति चउपंचिंदिया णया ॥ सुमाणंपि न जाणामि, समरक्खंपि अदिन्नयं ॥ १४ ॥ न गिएहंसि मणंतेवि, णपच्छं मणसावि मेहुणं ॥ परिग्गहं न काहामि, मूलुत्तरगुणरवलणं तहा ॥ १५ ॥ मयजयकसायदंरूसु, गुत्तिसमितिं दिएसु य । अट्ठारसीलं गसहस्साहि ठियह्वे ताणू ॥ १६ ॥ सज्झायज्झाणयोगेसु, आभिरमं समणकेवली ॥ तेलोकलक्खणकवंज धम्मातित्थंकरेण जं ॥ १७ ॥ तमहंलिंगंधारेण, जाणिज्जइ विजंते निप्फलियं ॥ मज्जेमझाय दोखमा, फालिज्जामि तहत्तय ॥१८ ॥ अहपाक्खिपयामि दिन्नम्मि, अहवा छिजे जइसिरं ॥ तावीहं नियमवयजंगं, मीअ चारित्तखंरुणं ॥ १९ ॥ मणसा वी एकजं, मकएण कुण समाणकेवली ॥ खरुट्टगोणजाइसुं, सरागाहिंडिया अहं ॥ २० ॥ विक्रमं पि समायरियं, अणंते जवजवंतरे तेमव खरकम्ममह, पवज्जाए ट्ठियाकुणं ॥ २१॥ घोरंध यारपायाला, जेणणोणिहरं पुणो ॥ इंन्दियाणमाणुसं जंमंय तवं च बहु दुक्ख जायणं ॥ २२ ॥ अणिच्चं रवणविद्धंसी, बहुदंरू दोषसंकरं । तत्थवि इत्थीसंजाया, सयललेलोकनिंदिया ॥ २३ ॥
तहावि पावियं धम्मं, णिविग्घमणं तराइयं । ताहं त नं विराहेमि, पावदोसेण केणई । २४ । सिंगाररागसविगारं, साहिलासं न विट्ठिमो । पसंताए विदिट्ठीण, मा तु धम्मोवएसगं ।२५। अन्नं पुरिसं न निज्का य,णालंवं समणिकेवली । तं तारिसं महापावं, काओ अकहणीय तं ।२६। सल्लमविउपन्नं जह, दत्तालोयसमणिकेवली । पमादि अणंतसमणी उ, दाउसुद्धीलोयणं । नीसल्लोकेवलं पप्प,सिद्धा उ अणादीकालेण गोयमा ! खंता दंता व मुत्ताउ जिइंदिया उ सव्वन्नाणिए उ । छकायसमारंभा विरया तिविहेण उ । तिदंडा सव्वसंगुप्ता पुरिसकहासंगवज्जिया पुरिससंलवविरया उ पुरिसंगोवंगनिरक्खणा निममत्ताउ सरीरे अप्पडिबद्धा उ महायसा भीयत्थियगब्भजवसहीणं बहुदुक्खाओ जवसरणओ तहा ताएरिसेणं जावेणं दायव्वा आलोयणा पायच्छित्तं पि कायव्वं ॥

तह जह एयाहिं समणिहिं कयं णउणं तह आलोएयव्वं । माय.रूजेण केणई जह आलोयमाणी णं पावकम्मवुड्ढीजवे अणंतेणा इकालेणंमायाउं तत्थ कम्मदोसेणं कवरूालोयपकाउसमणी उ सल्लीउ आतिउ गयस्सरेणं ठवियं पुढविंग या । ३३ । ठकासिंवगोयमा ! नामेसाहिमो तंत बोधयजाउ आलोयमाणिउ जावदोसेसु फुत्तरगपावकम्ममलपचालिया जवसंजमसीलगाणं णीसल्लतपसंदियं तं परमजावविसोहिए विणाखणद्धंपि नाजवे तो गोयम ! केसिमित्थियणं चित्तविसोहिं सुनिम्मलाजवंतारं विमो होही जेण नीसल्लयाजावे उट्ठहमदसमदुवालसेहिं सुक्खंतिकेवि समणि उत हवि यसंरागजावं गाणालोयंतणिं चउसंतिवहुविहवि कप्पकल्लोलमालाओ किलगाहणं वियरं तंतेण लक्खिखज्जा २५ दुखगाहमणसागरं ते कहमालोयणं दि तुं जासि चित्तं पि नोवसे सल्लंजो ताणमुद्धरए ।२६। स वंदणीओखणे खणे । असणेहि पीयपुव्वेणं धम्मसुद्धलसावियं । सीलंगगुणट्ठाणेसु उत्तमेसुं धरेइ जो । इ ठीवहुवंधणमुक्कंगिहकलत्ता विचारगा । सुविसुद्धसुनिम्मलाचित्तं णीसल्लं सोमहायशो दट्ठव्वो वंदणीओ य देविंदाणं सउत्तमो दीणत्थी सव्वपरिजूयं विरइठाणे जो उत्तमे वरेणा लोएमि अहं समणी देक हं किंचि स. हुणि बहुदोसं न कहं समणी जं दिट्ठं समणिहिंतं कहं असावज्ज कहासमणि बहु आलंवणा कहा पमा ।

या खावगा समीए पाविट्ठा बल्लमाणी कहा लोगाविरुद्ध-कहा तह य परवएसा लोयणीसुयपच्छित्ता तहया जायादीमयसंकिया । सूसगारजीरुया चेव गारवत्ति-पदूसिया तहा । एवमादि अणेगजवादोसवसल्लेहिं पूरि-यानिरंतरा अणतेणं कालसमएणं गोयमा ! अइक्कंतेणं अणंताउ समाणीओ बहुरवावसंहंगया गोयमा ! अणं ताउ चिट्ठंति जाअणादी सल्लवल्लीया । जावदोसे कसे-ल्लेहिं जुजमाणीओ कडुविरसं घोर ग्गतरं फलं चिट्ठइस्सं-ति अज्जावि तेहिं सल्लेहिं सल्लिया अणंतं पि अणागयं कालं तम्हा सल्लं सुसुहुमंपि समणी णो धरेज्ज खणं त्तिबेमि

( २३ ) आलोचनायां दत्तायां न विरतिभंगः सदृष्टान्तः ॥

प्रालोचनायां दत्तायामपि विरतिभंगो न करणीयः । महानिशीथे । अ. ७ ॥

पाणाइवाय विरइ, सेवफलया गिएहिऊण ताबीमं मरणावयं मिपत्ते मरेज्जाविरइ न खंडिज्जा १ अलियव-एस्स विरइ, सावज्जं सच्चमवि न जालिज्जा परदव्वह-रए विरइ, करेज्ज दिन्ने वि मालोयं २ घरणं दुद्धरवं जव्वयस्सकाउं परिग्गहवायं ॥ राइजोयणविरइ, पं-चिंदियनिग्गहं विहिणा ३ अन्ने य कोह माणा, एग दोसे य आलोयणं दाउं । पमाहारअहंकारे, गायट्ठे सव्वं पव्वतणे । जइ तव संजमसज्जा यम, गाणमाइसु-सुद्धि जावेहिं उज्जमियव्वं गोयम ! विज्जुलयाचंच ले जीवे किं बहुणा गोयमा ! इत्थं दाउणं पुढविकायं विराहिज्जा कत्थगंतुं समुज्जिहही किं बहुणा गोयमा ! इत्थं दोउणं आलोयणं वाहिणंपाणिं तहिं जम्मे जो पिए-कत्य । चउमुजिही किं बहुणा गोयमा ! एत्थं दाउणं आलोयणं उन्हवाइ जाइय जाइ फुसिउत्ता कत्थसुज्झिहो किं बहुणा गोयमा ! इत्थं दाऊण आलोयणं वाउकायं उदिरिज्जा कत्थगँतु समुज्झिहि किं बहुणा णं गोय-मा! एत्थम्दाउणम् आलोयण जोहरियतणं कप्पांवा करिसे कत्थमसु झिहि किं बहुणा गोयमा ! इत्थं दाऊणं आलोयणं अक्कमइ बीजकायं जो कच्छगंतो समुज्झिही किं बहुणा गोयमा ! इत्थं दाउणं आलोयं वियलं दीविति चउपंचि-दियपरिताचे जो कत्थ समुत्यही किं बहुणा गोयमा इत्थं दाउणं आलोयणं छक्काए जो तं न रक्खेज्जा । सुहुमे कत्थसमुच्चिही किं बहुणा गोयमा ! इत्थं दाउणं आलोयणं तसथावरो जो न रक्खे कत्थगंतु समुच्चिही आलोइयनिंदियगरहियओविकयपायच्छित्त निसल्लो उत्तम ठाणंमि ठिउपुढवारंजं परिहरिज्जा । आलोइयनिंदिउगर-हियविकयपायच्छित्तनीसल्लो उत्तमठाणंमि ठिओ-जोइ ए मा फुसावेज्जा । आलोइयनिंदियगरहिओविकयपा यच्छित्तसंविग्गो उत्तमठाणमि ठिओमाविराहिज्जा अत्ता णं आलोइयनिंदियगरहिउग्गकयपायच्छित्तसंविग्गोच्छिन्नं पि तणं हरियं असइमणगं मा फरिसे आलोइयनिंदियगर हियो विकयपायच्छित्तं संविग्गो उत्तमठाणंमि ठिउ जाव-ज्जीवं एतोसि बेइंदियतेंदियचउरो पंचिंदियाणं जीवाणं संघट्टणपरियाव ए किलावणोद्दवणमाकासी आलोइयनिंदि यगरहिओविकयपायच्छित्तसंविग्गो उत्तमठाणंमि ठिओ सावज्जं मानाणिज्जा आलोइयनिंदियगरहिओ विकय पायच्छित्तसंविग्गो लोयतेण विज्जइ गरहियागहिओ खिवि उदिन्ना आलोइयनिंदियगरहिओ विकयपायच्छित्तनिजो-सल्लोजोइत्थि संलवेज्जा गोयमा ! कत्थमुज्जिहिआलोइय निंदियगरहियओविकयपायच्छित्तसंविग्गोंचउदसधम्ममुव गरणे उट्टमापरिहगं कुज्जा तेसुंपि वि ममतो अमुच्छिओ अगढिओ दढंहविया अहवा कुज्जाउ ममत्तं तासुच्छी गोयमा ! नत्थि किं बहुणा गोयमा ! नत्थइत्थंदाउणं आ-लोयणं रयाणिए आविए पाणम्कत्थगम् तु समुज्झिही आलोइयनिंदियगरहिओ विकयपायच्छित्तनीसल्लो छइ-क्कमेणरक्खे जो कत्थसुद्धिं लभेज्ज से । महा. अ. ७ ॥

आलोचनायां दत्तायां विरतिभङ्गो न करणीयस्तथा उप-चारात्तत्कारणहूतप्रमादक्रियायाञ्च । ध. २ अ. ।

आलोचनायाः प्रायश्चित्तस्य प्रशस्तयोगसङ्ग्रहनिमित्तत्वा-त्तदात्मके प्रथमे योगसङ्ग्रहे, च । "प्रशस्तयोगसङ्ग्रहनिमि-त्तत्वादालोचनादय एव तथोच्यन्ते„ सम. ३१ स. । मोक्ष-साधनयोगसङ्ग्रहाय शिष्येणाऽऽचार्याया लोचना दत्तेति । अत्रोदाहरणम् ।

उज्जेणि अट्टणे खलु, सिंहगिरि सोपारए पुह हवई ।
मच्छिअमल्ले फुरुल्ल, क्खविओ फलिहमल्ले अ ॥ १ ॥

फुरुल्लखनिया ग्रामाः फलहीशब्दो देश्यो वत्तणीवाची ।
उज्जयिन्यामुज्जयिन्यां, समस्तनगरावली: ।
जितशत्रुर्नृपस्तत्र, मल्लस्तस्याट्टनाभिधः ॥ १ ॥ इत्यादि,
( अट्टन ) शब्दे तत्कथा ।

यथाट्टनस्तथाचार्यः, पताकानिर्वृत्तिः पुनः ।
साधुर्मल्लोऽपराधास्तु, प्रहारास्तान् गुरोर्हि यः १०
आलोचयति निःशल्य, स निर्वाणपताकिकां ११
त्रैलोक्यरंगे गृण्हाती, त्युक्ताः शिष्यगुणा इमे ।
आव. क. । आ. चू. । आव. ॥

( २४ ) आलोचनायामकृतायां मृत्वाऽनाराधको भवति ।

भिक्खू य अन्नयरं अकिच्चट्ठाणं पडिसेवित्ता सेणं तस्स ठाणस्स अणालोइयपडिक्कंते कालं करेइ । णत्थि तस्स

आराहणा। सेणं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेइ। अत्थि तस्स आराहणा। भिक्खू अएणयरं अकिच्चट्ठाणं पडिसेवित्ता तस्स णं एवं भवइ पच्छावि णं अहं चरिमकालसमयंसि एयस्स ठाणस्स आलोइस्सामि जाव पडिक्कमिस्सामि। सेणं तस्स ठाणस्स अणालोइयपडिक्कंते जाव णत्थि तस्स आराहणा। सेणं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेइ। अत्थि तस्स आराहणा भिक्खूय अएणतरं अकिच्चठाणं पडिसेवित्ता तस्स णं एवं भवइ जइ ताव समणोवासयावि कालमासे कालं किच्चा अएणयरेसु देवलोएसु देवत्ताए उववत्तारो भवंति। किमंग पुण अणवपिणयदेवत्तणं पि णो लभिस्सामित्ति कट्टु सेणं तस्स ठाणस्स अणालोइय-पडिक्कंते कालं करेइ नत्थि तस्स आराहणा। सेणं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेइ अत्थि तस्स आराहणा सेवं भंते! भंतेत्ति ॥ भ. १० श. २ उ.।

टीका। इह च शब्दश्चेदित्येतस्यार्थे वर्तते। स च भिक्षोरकृत्यस्थानासेवनस्य प्रायेणासंभवप्रदर्शनपरः ( पडिसेवित्ति ) अकृत्यस्थानं प्रतिषेविता भवतीति गम्यं। वाचनांतरे त्वस्य स्थाने ( पडिसेविज्जत्ति ) दृश्यते। सेणंति। स भिक्षुः तस्स ठाणस्सति तत्स्थानम् अणपन्निदेवत्तणं पि नो ल भिस्सामिति अणपन्निका व्यंतरनिकायविशेषास्तत्संबंधिदेवत्वमणपन्निकदेवत्वं तदपि नो लप्स्ये इति भ. ॥ टी.।

### ( २५ ) आलोचनाफलम् ॥

आलोयणाएणं भंते! जीवे किं जणयइ आलोयणाएणं मायाणिया। मिच्छादरिसणसल्लाणं मोक्खमग्गविग्घाणं अणंतसंसारवंधणाणं उद्धरणं करेइ। उज्जुभावं च जणयइ। उज्जुभावपडिवएणे वियणं जीवे अमाइ इत्थिवेयं नपुंसगवेयं च न बंधइ पुव्वबद्धं च णं निज्जरेइ॥ ५ उत्त० अ० २९॥

गुरुशुश्रूषां कुर्वतोऽप्यतीचारसंभवे आलोचना तया मायाशल्यं निदानं ममाऽतस्तपःप्रभृत्यादेरिदं स्यादिति प्रार्थनात्मकं मिथ्यादर्शन सांशयिकादयेतानि शल्यानीव शल्यानि तेषां ततः कर्मधारये मायानिदानमिथ्यादर्शनशल्यानि तथाहि तोमरादिशल्यानि तत्कालदुःखादानेप्यायते दुःखदायीन्येवं मायादीन्यपीत्येवमुच्यते तेषां मोक्षविघ्नानां पापानुबंधनत्वेन मुक्त्यंतरायाणां तथानंतं संसारं वर्द्धयंति वृद्धि नयंतीत्यनंतसंसारवर्द्धनानि तेषामुद्धरणमपनयनं करोति तदुद्धरणतश्च ऋजुभावं चार्जवं जनयति॥ ( उज्जुभावपडिवएणेयत्ति ) प्रतिपन्नऋजुभावश्च जीवोऽमायी मायारहितस्ततः पुंस्त्वनिबंधनत्वादमायित्वस्य ( इत्थिवेयत्ति ) प्राग्वद्विद्वलोपस्त्रीवेदं नपुंसकवेदं च न बध्नाति पूर्वबद्धं च तदेव द्वयं यद्वा सकलमपि कर्म्म निर्ज्जरयति क्षपयति तथा च मुक्तिपदमाप्नोतीत्यभिप्रायः। उक्तंहि। "उद्धियदंडो साहू अचिरेण भवति सासयं ठाणं। सोविय अणुद्धियदंडो संसारपवड्ढओ होतित्ति ॥२९॥" उत्त० टी० ॥

आलोचनापरिणतस्य म्रियमाणस्यापि आराधकत्वमाराधनाशब्दे ॥

तिहिं ठाणेहिं मायी मायं कट्टु णो आलोएज्जा णोपडिक्कमेज्जाणो णिंदेज्जा णो गरहेज्जा णो विउट्टेज्जा णो विसोहेज्जा णो अकरणयाए अब्भुट्ठेज्जा णो अहारिहं पायच्छित्तं तवोकम्मं पडिवज्जेज्जा। तं०। अकरि सुवाहं करेमि वाहं करिस्सामि वाहं। तिहिं ठाणेहिं मायी मायं कट्टु णो आलोएज्जा णो पडिक्कमेज्जा जाव नो पडिवज्जज्जा। तं जहा। अकित्ती वा मे सिया अवन्ने वा मे सिया अविणये वा मे सिया तिहिं ठाणेहिं मायी मायं कट्टु णो आलोएज्जा जाव णो पडिवज्जज्जा तं० कित्तिवा मे परिहाइस्सइ जसोवा मे परिहाइस्सइ पूयसक्कारे वा मे परिहाइस्सइ। तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा पडिक्कमेज्जा निंदेज्जा जाव पडिवज्जेज्जा। तं०। मायी स्सणं अंसिं लोगे गरहिए भवइ उववाए गरीहए भवइ आयाइं गरहिया भवइ। तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा जाव पडिवज्जेज्जा तं अमाइस्सणं अंसिं लोगे पसत्थे भवइ उववाए पसत्थे भवइ आयाई पसत्थे भवइ। तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा जाव पडिवज्जज्जा तं०। णाणट्ठयाए दंसणट्ठयाए चरितट्ठयाए स्था. ठा. ३.॥

तिहिं ठाणेहिमित्यादि व्याख्या। मायी मायावान् मायं। मायाविषयं गोपनीयं प्रच्छन्नमकार्यं कृत्वा नो आलोचयेत मायामेवेति शेषंसुगमं नवरमालोचनं गुरुनिवेदनं प्रतिक्रमणं मिथ्यादुष्कृतदानं निंदाऽऽत्मसाक्षिका गर्हा गुरुसाक्षिका- वित्रोटनं तदध्यवसायविच्छेदनं। आत्मनश्चारित्रस्य वाऽतिचारमलक्षालनमकरणता ऽभ्युत्थानं पुनर्नैतत्करिष्यामीत्यभ्युपगमः। अहारिहं। यथो चितं पायच्छित्तंति पापच्छेदकं प्रायश्चित्तविशोधकं वा तपः कर्म निर्विकृतिकादिप्रतिपद्येत तद्यथा अकार्षमहमिदमतः कथं निन्द्यमित्यालोचयिष्यामि स्वस्य महात्म्यहानिप्रसक्तेरित्येवमभिमानात्। तथाकरोमि चाहमिदानीमेव कथं साध्विति भणामि करिष्यामीति चाहमेतदकृत्यमनागत कालेऽपीति कथ प्रायश्चित्तं प्रतिपद्यत इति कीर्तिः कादिग्गामिनी प्रसिद्धिः। सर्वदिग्गामिनी सैव वर्णो यशः। पर्यायत्वादस्य अथवा "दानपुण्यफला कीर्तिः पराक्रमकृतं यशः" तच्च वर्णयति तयोः प्रतिषेधोऽकीर्तिरवर्णश्चेति। अविनयः साधुकृतो स्यादिति। इदं च सूत्रमप्राप्तप्रसिद्धिपुरुषापेक्षं मायं कट्टुति मायां कृत्वा मायां पुरस्कृत्य माययेत्यर्थः। परिहास्यति हीना भविष्यति पूजा पुष्पादिभिः। सत्कारो वस्त्रादिभिरिदमेव विवक्षितमेकरूपत्वादिति। इदं तु प्राप्तप्रसिद्धिपुरुषापेक्षं शेषं सुगमं। उक्तविपर्य्ययमाह।

( तिहि ) मित्यादि सूत्रत्रयं स्फुटं किन्तु मायी ( मायंकट्टु आलएज्जति ) इह मायी अकृत्यकरणकाल एव आलोचनादिका सेत्वमाख्येयालोचनाद्यन्यथानुपपत्तेरिति ( अस्सिंसति ) अयं यतो मायिन इह लोकाद्या गर्हिता भवन्ति। यतश्चामायिन इहलोकाद्याः प्रशस्ता भवंति यतश्चामायिनः आलोचनादिना निरतीचारीभूतस्य ज्ञानादीनि स्वस्वभावं लभन्ते। उक्तंहम

मायी कृत्वा आलोचनादि करोमीति भावः ॥

आलोयणाणय-आलोचनानय-पुं० अभिमुख्येन गुरोरात्मदोषप्रकाशनमालोचना स एव नयः । आलोचनायाः नयभेदे, तद्वक्तव्यता ( सामाइय ) शब्दे विशे० आ. चू. १ अ. ।

आलोयणारिह-आलोचनार्ह-न. आ मर्यादया " जह बालो जंपंतो, कज्जमकज्जं च उज्जुओ भणइ । तं तह आलोइज्जा, मायामयविप्पमुक्को य " इत्येवंरूपयाऽऽलोचनं गुरोः पुरतः प्रकाशनं तावन्मात्रेणैव यस्य पापस्य शुद्धिस्तदालोचनार्हं तद्विशोधकं प्रायश्चित्तमप्युपचारादालोचनार्हम् । जीत. व्य. उ. १ आलोचनां गुरुनिवेदनां विशुद्धये यदर्हत्यतिचारजातं तदाऽऽलोचनार्हन्तद्विशोधकमालोचनालक्षणं प्रायश्चित्तमप्युपचारादालोचनार्हम् ग. अ. १।२ औप. प्रायश्चित्तभेदे । आलोचनार्हं यद्गुरुनिवेदनया शुद्ध्यतीति ग. २ ग. भग. श. २५ उ. ७ आलोचना गुरुनिवेदनम् । तथैव यच्छुद्ध्यत्यतिचारजातं तत्र तदर्हत्वादालोचनार्हम् । तच्छुद्ध्यर्थं यत्प्रायश्चित्त तदप्यालोचनार्हन्तच्चालोचनैव स्था० ठा० १० ।६॥

एतस्याशेषवक्तव्यताऽऽलोचनाशब्दे आलोचनायोग्ये आचार्यादिके. पु. ते चालोचनाशब्दे व्य० उ. १० ध. आधि.२ नि. चू. उ. २० ॥

आलोयणायरिय-आलोचनाचार्य्य-पुं० विकटनागुरौ ( जोगो आलोयणायरिओ ) आलोचनाचार्य्यो विकटनागुरुस्स च कीदृशो योग्य इत्यालोचनाशब्दे । पंचा० १५ वृ. ध. अधि. २ ॥

आलोयणाविहिसुत्त-आलोचनाविधिसूत्र-न० शिष्यनिवेदितप्रायश्चित्तपर्य्यालोचनविषयप्रायश्चित्ताभिधायिनि सूत्रे आलोचनाविधिसुत्ता नाम गुरुं शिष्येण गुरोर्निवेदिते गुरुणा प्रायश्चित्तपर्य्यालोचनविषयाणि प्रायश्चित्ताभिधायिनि नि० चू. उ. २ ॥

आलोयदरिसणिज्ज-आलोकदर्शनीय-त्रि० आलोकं दृग्गोचरं यावद् दृश्यतेऽप्युच्चत्वेन यः स आलोकदर्शनीयः भ. श. ९ उ. ३३ आलोके दृष्टिविषये क्षेत्रे स्थितोऽत्युच्चतया दृश्यते यः स आलोकदर्शनीयः अत्युच्चतया यावद्दृष्टिगोचरं दृश्यमाने ज्ञा० अ० १ ( दंसणरइयआलोअदरिसणिज्जा ) आलोकं दृष्टिपथं यावद्दृश्यते अत्युच्चैस्त्वेन या सा आलोकदर्शनीयेति औप० नात्युच्चतया आलोकमात्र एव दर्शनीये मङ्गल्यत्वात् प्रस्थानसमये द्रष्टुं योग्ये, च ॥

दरिसणरइयआलोयदरिसणिज्जा ॥

आलोके बहिः प्रस्थानसमयभाविनि दर्शनीया द्रष्टुं योग्या मंगल्यत्वात् अन्ये त्वाहुरालोके दर्शनीया न पुनरत्युच्चा आलोकदर्शनीयेति राज० ॥

आलोल-आलोल-त्रि० ईषत् लोलः प्रा० स० ईषच्चञ्चले, । "आलोलपुष्करमुखोल्लसितैरभीक्ष्णम् माघः"वाच. ॥

आलोलिय-आलोलित-त्रि० आ लुल् णिच् क्त ईषच्चञ्चलीकृते ॥

आवंत-आवन्त-पुं० अवन्तेरयं राजा अण् अवन्तिदेशाधिपे चन्द्रवंश्ये नृपभेदे, वाच० ॥

आवन्तिअज्झयण-आवन्त्यध्ययन-न० आचाराङ्गस्य नवब्रह्मचर्य्याध्ययनान्तर्गते लोकसाराख्ये पञ्चमेऽध्ययने । आवंतीत्यारस्य पञ्चमाध्ययनम् तत्र ह्यादावेवाधंतीत्यालापका विद्यते इत्यादानपदेनैतन्नाम । अनु० । आवंतीति आद्यपदेन नामान्तरेण तु लोकसार इति स्था० ठा. ९ । सम० । आव० ( आयाण पएणावंती गोणनामेण लोगसारोत्ति ) आदीयते प्रथममेव गृह्यत इत्यादानम् तच्च तत्पदं चादानपदम् तेन करणभूतेनावंतीत्येतन्नामाध्ययनादावावंतीशब्दस्योच्चारणात् आचा० अ. ५ उ. १ ॥

आव-( जाव ) यावत्-त्रि० आदेर्योजः ॥४५॥ इति प्राकृतसूत्रेण पदादेर्यस्य जो वा भवति आर्षे लोपोऽपि । प्रा० । यत्परिमाणमस्य मतुप् । यत्परिमाणे स्त्रियां ङीप् यावति साकल्ये अवधौ, व्याप्तौ, माने, अवधारणे च । अव्य० अमरः । एतद्योगे द्वितीया । वाच० ॥

आवकह-यावत्कथ-अव्य० यावज्जीवमित्यर्थे, । आवकहं भगवं समित्तासि ॥ १६ ॥ यावत्कथमिति यावज्जीवम् आचा० अ. ९ उ.४॥

आवकहा-यावत्कथा-स्त्री० यावती यत्परिमाणा कथा मनुष्योऽयं देवदत्तादिर्वाऽयमिति व्यपदेशलक्षणा यावत्कथा यावज्जीवे जत्थवियणं आवकहाए चिट्ठइ स्था० ठा. ४ सपारए आवकहाए यावत्कथं यावज्जीवमित्यर्थः । आचा० अ. ९ उ. ४ जे आवकहा समाहिए कियंतं कालं यावत् कथा देवदत्तो यज्ञदत्त इति कथा यावदिति सूत्र० श्रु. १ अ. २ धम्मा आवकहाए गुरुकुलवासं ण मुंचंति ॥१६॥ यावत्कथं यावज्जीवम् । पंचा १० वृ. ११ ॥

आवकहिय-यावत्कथिक-त्रि० यावज्जीविके । पंचा० वृ. ११ एत्थ उसावय धम्मे,पायमणुव्वयगुणव्वयाइ च । आवकहियाइं सिक्खा, वयाइं पुण इत्तरां— ॥

इति पंचा० १ वृ. । यावत्कथिकानि यावती यत्परिमाणा कथा मनुष्योऽयमित्यादिव्यपदेशरूपा यावत्कथा तस्यां भवानि यावत्कथिकानि यावज्जीवानीत्यर्थः । पंचा.॥

यावत्कथिकानीति सकृद्गृहीतानि यावज्जीवमपि भावनीयानीति । आव. । सामयिकभेदे-तच्च मध्यमद्वैदहकतीर्थंकरतीर्थान्तर्गतसाधूनामवसेयम् । तेषामुपस्थापनाया अभावात् । पंचा वृ. ११ । आत्मनः कथां यावद्यदास्ते तद्यावत्कथं यावज्जीवमित्यर्थः । यावत्कथमेव यावत्कथिकम् । सामायिकचरित्रगुणप्रमाणभेदे, । एतच्च भरतैरावतप्वाद्यचरमवर्जमध्यमतीर्थकरसाधूनां महाविदेहयतीनां च संभवति । अनु. । यावत्कथस्य भाविव्यपदेशान्तराभावात् यावज्जीविकस्य सामायिकस्याऽस्तित्वात् यावत्कथिकः । सामायिकसंयतभेदे,। स च मध्यमजिनमहाविदेहजिनसम्बन्धिसाधुः । भ० श.२५ उ. ७ । प्रतिक्रमणभेदे, च स्था ठा. ॥ यावत्कायकं यावज्जीविक महाव्रतभक्तपरिज्ञानादिरूपं प्रतिक्रमणत्वं चाऽस्य निवृत्तिलक्षणाऽन्वर्थयोगादिति । आव० ॥

पंच य महव्वयाइं, राई छट्ठाइं चाउजा मोत्तुं ।

भत्तपरिन्ना य तहा, दुन्हं पि अ आवकहिआइं ॥

पंच महाव्रतानि प्राणातिपातादिनिवृत्तिलक्षणानि राइभोयणछट्ठाइंति । उपलक्षणत्वात् रात्रिभोजननिवृत्तिषष्ठानि पुरिमपश्चिमतीर्थकरयोस्तीर्थे इति । चतुर्यामश्च निवृत्तिधर्म एव भक्तपरिज्ञा च तथा चशब्दादिङ्गितमरणादिपरिग्रहः द्वयोरपि पुरिमपश्चिमयोः चशब्दान्मध्यमानां च यावत्कथिकान्येतानीति गाथार्थः ॥

अशनभेदे, च-भ० श. २५ उ. ७ ॥

सेकितं आवकहिए आव २ दुविहे प० तं पा
ओवगमणे य भत्तपच्चक्खाणे य ॥ प्रव० द्वा.६ दश०.अ १।

आवग-आवक-त्रि० अवति, अव एवुल्—रक्षके, वाच०

आवज्ज-आतोद्य न०( ओतोऽद्वाऽन्योऽन्यप्रकोष्ठातोद्यशिरोवेद नामनोहरसरोरुहे क्तो इच वः ॥ १ । ५६ इति प्राकृतसूत्रेणौत्वोतोऽत्वं वा भवति तत्संनियोग च यथा संभवं ककारतकारयोर्वादेशः । प्रा० । वीणादौ वाद्ये, अत्रत्याबहुत्वव्यता ( आवज्ज ) शब्दे ।

आवज्जण-आवर्जन-न० उपयोगे व्यापारे, च केवलिसमुद्घातगन्तुमनसा केवलिना कर्तव्यमावर्जीकरणमधिकृत्य ( आवज्जणमुव ओगो वावारो वा तदत्थमाइए ) तदर्थं समुद्घातकरणार्थमादौ केवलिन उपयोगो मया अधुनेदं कर्तव्यमित्येवंरूप उदयावलिकायां कर्म्मप्रक्षेपरूपो व्यापारोवाऽऽवर्जनमुच्यते । इति विशे० । अभिमुखीकरणे, आ० चू० ॥

आवज्जिय-आवर्जित-त्रि-वृज-णिच्-क्त० अभिमुखे,आ. चू०

आवज्जियकरण-आवर्जितकरण-न० अभिमुखीकरणे, । केवलिसमुद्घातात्पूर्वं कर्तव्ये केवलिनोव्यापारविशेषे च आ. चू० केचिदावर्जितकरणमिति वर्णयंति ।

तेषामप्यावर्जितशब्दस्याऽतिमुखपर्यायवाचित्वात् आवर्जितकरणसिद्धिः कथमावर्जितमुपपद्यत यथा लोके इष्टरेतदावर्जितो मनुष्योऽभिमुखीकृत इति तथा च सिद्धान्तः। सिद्धपर्यायपरिणामाभिमुखीकरणं यत्तदावर्जितकरणं येन कारणन परिणत आत्मा नियमात् सिद्धत्वपर्यायपरिणामाभिमुखो भवतीत्यर्थः ॥

आवज्जीकरण-आवर्जीकरण-न० समुद्घातकरणार्थमादौ केवलिन उपयोगो मया अधुनेदं कर्तव्यमित्येवं उदयावलिकायां कर्म्मप्रक्षेपरूपो व्यापारो वा आवर्जनमुच्यते । तथा भूतस्य करणमावर्जीकरणम् केवलिसमुद्घातात्पूर्वं केवलिना कर्तव्ये व्यापारभेदे, विशे. ।

आव ( ट्ट ) ( त्त ) ( त्त ) त-आवर्त पुं० आवर्तनमावर्तःसचस मुद्रादेश्चक्रविशेषाणांचेति । स्था० ठा. ४। इ. अ. १। आ. म. प्र. । आवर्तयति प्राणिनं भ्रामयतीत्यावर्तः । सूत्र० श्रु. १ अ. ३ । आ. वृत. भावादौ घञ् चक्राकारेण जलस्यपरिभ्रमणे । वाच० ॥ र्त्तस्याधूर्तादौ ॥ २ । ३० ॥ इति प्राकृतसूत्रेण तस्य भवति धूर्तादीन् वर्जयित्वा बाहुलकाधिकाराद् धूर्तादावपि प्रा० । जलादीनां परिभ्रमणे आचा० अ० १ उ. ५ आवर्त आवर्तनं परिभ्रमणमिति ज्ञा० अ० १ मोहावत्तं महाभीमं । मोहोमोहनीयं कर्म्म तदेव तत्र विशिष्टभ्रमिजनकत्वादावर्तो यस्मिन्स तथा विभ्रस्तमिति आव । स्था० द्वा. ४ ॥

चत्तारि आवत्ता पण्णत्ता । तं. खरावत्ते उन्नयावत्ते गूढावत्ते आमिसावत्ते ग्रा.। आवर्तन्तेपरिभ्रमंति प्राणिनो यत्र स आवर्तः संसारे आचा० अ. १ । ५ ( आवट्ट सो एसंगमभिजाणति ) आचा० अ. ३३ । १ ।आवट्ट इत्यादि भावावर्तो जन्मजरामरणरोगशोकव्यसनोपनिपातात्मः संसार इत्युक्तं हि "रागद्वेषवशाविद्धं, मिथ्यादर्शनदुस्तरं ॥ जन्मावर्ते जगत् क्षिप्तं, प्रमादाद् भ्राम्यते भृशं ॥ १ ॥ भावश्रोतोऽपि शब्दादिकामगुणविषयाभिलाष आवर्तश्च श्रोतश्च आवर्तश्रोतसी तयोरागद्वेषाभ्यां सम्बन्धः संगस्तमभिजानत्याभिमुख्येन परिच्छिनत्ति यथा यं संग आवर्तश्रोतसः कारणं जानानाश्चपरमार्थतः कोऽभिधीयतेयोऽनर्थं ज्ञात्वा परिहरति यश्चायमर्थः । संसारश्रोतः संग रागद्वेषात्मक ज्ञात्वा यः परिहरति स एव चावर्तःश्रेतसोः संगस्याभिज्ञाता ( आवट्टमेवमणुपरियट्टंति भावावर्तः संसारस्तमरहट्टघटीयंत्रन्यायेनानुपरिवर्त्तन्ते । तारवेव नरकादिगतिषु भूयो २ भवन्तीति आचा० अ. ५ उ. १ ॥

( विषयं आवट्टमेयं तु पेहाए एत्थ विरमेज्जवेदवी ) आवट्टं तु इत्यादि रागद्वेषकषायविषयावर्तं कर्म्मबन्धावर्तं वा तुशब्दात्तु नः शब्दार्थं भावावर्तं पुनरुत्प्रेक्षात्राऽस्मिन् भावावर्ते विषयरूप । वेदविदागमविद्विरमेदाश्रवद्वारनिरोधं विदध्यात् । आचा० अ. ५ उ. ६ संसारकारणे, शब्दादिगुणे, च ( जेगुणे से आवट्टे जे आवट्टे से गुणे ) आचा० अ. १ उ. ४ आवर्तो नामादिभेदाच्चतुर्धा । नामस्थापने क्षुण्णे द्रव्यावर्त्तः स्वामित्वकरणाधिकरणेषु यथा संभवं योज्यः । स्वामित्वेनद्यादीनां क्वचित्यविभागे जलपरिभ्रमणं द्रव्यावर्त्तः द्रव्याणां वा हंसकारंडवचक्रवाकादीनां व्योम्नि क्रीडता मावर्तो नादावर्त्तः । करणे तु तेनैव जलद्रव्येण भ्रमता यदन्यदावर्तते तृणकाष्ठादि स द्रव्येणावर्तः ।तथा त्रपुसीसकलोहरजतसुवर्णैरावर्तमानैर्यदन्यत्तदन्तः पात्या वर्तते। स द्रव्यैरावर्तत इति ।अधिकरणत्वविवक्षायामेकस्मिन् जलद्रव्ये आवर्तः ॥ तथा रजतसुवर्णरीतिकात्रपुसीसकेष्वेकस्थीकृतेषु बहुषु द्रव्येष्वावर्तः । भावावर्तो नामान्यो भावसङ्क्रान्तिः औदयिकभावोदयाद्वा नरकादिगतिचतुष्टयेषु भावावर्तः । आचा. १ अ. ५ उ. ॥

उत्कटमोहोदयापादितविषयाभिलाषसंपादकसंपत्प्रार्थनाविशेषे, सूत्र० श्रु० १ अ० ३ ॥

अह मे संति आवट्टा, कासवेणं पवेइया ।
बुद्धा जत्थ वसप्पंति, सीयंति अबुहा जहिं ॥१४॥

टीका । अथेत्यधिकारांतरदर्शनार्थः । पाठांतरं वा अहो इति । तच्च विस्मये इमे इति प्रत्यक्षासन्नाः सर्वजनविदितत्वात् संति विद्यंते वक्ष्यमाणा आवर्तयंति प्राणिनं भ्रामयंतीत्यावर्तास्तत्र द्रव्यावर्त्ता नद्यादेर्भावावर्तास्तूत्कटमोहोदयापादितविषयाभिलाषसंपादकसंपत्प्रार्थनाविशेष एते चावर्त्ता काश्यपेन श्रीमन्महावीरवर्द्धमानस्वामिनाऽनुत्पन्नदिव्यज्ञाने नावेदिताः कथिताः प्रतिपादिताः । यत्र येषु सत्सु बुद्धा अवगततत्त्वा आवर्तविपाकवेदिनस्तेभ्योऽवसर्पते प्रमत्ततया तद्दूरगामिनो भवंत्यबुद्धास्तु निर्विवेकतया ये ह्यवसीदंत्यासक्तिं कुर्वंतीति । आवर्तने, वाच. द्वादशावर्तादिवन्दनकगते सूत्राभिधानगर्भे कायव्यापारविशेषे । आवत्तोव रसेवय आवपौनः पुन्यभवने ।

दुक्खाणमेव आवट्टं अणुपरियट्टइ आचा० अ. २ उ. ३

दुक्खाणमित्यादि । दुःखानां शरीरमानसानामावर्त्तः पौनः पुन्यभवनमनुपरिवर्तते दुःखावर्तावमग्नौ बंभ्रम्यत इत्यर्थः ॥ णिच् भावे अच् पुनः पुनश्चालने परिघट्टने । धातूनां द्रावणे । चिन्तायाञ्च । चिन्तयाहि चित्तं स्वविषयेषु पुनः पुनश्चाल्यते इति तस्यास्तथात्वम् । भूशाख्यघोटकचिन्हे रोमसंस्थानभेदे। आवर्तिनः दशावर्तयुक्ताः प्रशंसायाम् णिनिः ते च । द्वावुरस्योशिरस्यो द्वौ, द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । एको भाले ह्यपाने च, दशावर्त्ता ध्रुवाः स्मृताः ॥ १ ॥ पयोधिपङ्के जलभ्रमः मल्लि. वाच० ।

आवर्तो देवमणिनामहयानां महालक्षणतया प्रसिद्ध इति जं आवर्ताकारे, देहिनां रोमसंस्थानभेदे, च वाच० आदर्शो द्वा क्षि-

णे भगे, दक्षिणः शुभकृन्नृणाम् । वामो वामेऽतिनिन्द्यः स्यात्, दिगन्यत्वे तु मध्यमः ॥ १ ॥ कल्प० । राजावर्तनामके मणौ पु. वाच० । मणिलक्षणभेदे आवर्तादीनि मणीनां लक्षणानीति ॥ आ. म. प्र. जी. प्र. ३ राज. । मेघाधिपभेदे, वाच० । स्तनितकुमारेन्द्रस्य घोषस्य स्वनामख्याते लोकपाले स्तनितकुमारेन्द्रस्य महाघोषस्य स्वनामख्याते लोकपाले, च स्था ठा. ४ उ. श. ३ उ. ८ स्वनामख्याते जंबूद्वीपस्थे दीर्घवैताढ्यपर्वते, स्था० ठा. ए एकखुरे चतुष्पदस्थलचरपञ्चेन्द्रियतिर्यग्योनिकभेदे, प्रज्ञा. पद १ अहोरात्रभवे स्वनामख्याते पंचविंशतितमे मुहूर्त्ते, सम० स. ३५ । स्वनामख्याते ग्रामे ( आवत्ते, मुहत्तासे ) ततो भगवान् आवर्त्ते ग्रामे बलदेवगृहे प्रतिमां प्रतिपन्न इति आ. म. द्वि. । आ. चू. मार्त्तिकधातौ, न० वाच० स्वनामख्याते विमानभेदे, सम० स १७ । जंबुमंदरपौरस्त्ये सीताया महानद्या उत्तरस्थे स्वनामख्याते चक्रवर्तिविजयक्षेत्रे, स्था ठा. ८ । दो आवत्ता स्था० ठा. २ महाविदेहस्थे चक्रवर्तिविजयक्षेत्रे, च । जं ॥

कहिणं भंते महाविदेहे वासे आवत्तणामं विजए पणत्ते गोअमा ! णीलवंतस्स वासहरपव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं णलिणे कूडस्स वक्खारपव्वयस्स पच्छिमेणं दहावतीए महाणइए पुरच्छिमेणं एत्थणं महाविदेहे वासे आवत्ते णामं विजए पणत्ते सेसं जहा कच्छस्स विजयस्स ॥ जं. ।

आव ( ट्ट ) पच्चावत्तसेढियसोत्थिय सोवत्थिय पूसमाणवद्धमाणगत्थंगमकरंगजारामाराफुल्लावलियपउमपत्त सागरतरंगवणलयपउमलयभत्तिचित्तं ॥

आवर्तप्रत्यावर्तश्रेणिप्रश्रेणिस्वस्तिकपुष्यमाणवर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरंगवासन्तीलतापद्मलताभक्तिचित्रनस्वनामख्याते नाट्यविधिभेदे, राज० ॥

आव ( ट्ट ) त्तकूड-आवर्तकूट-न० महाविदेहस्थनलिनकूटवक्खारपर्वतस्थे स्वनामख्याते कूटे, । जं. ॥

आव (ट्ट) त्तण-आवर्तन-आवृत आधारे ल्युट् सूर्यस्य पश्चिमादिगवस्थितच्छायायाः पूर्वदिग्गमनसमये मध्याह्नकाले " आवर्तना तु पूर्वाह्णोऽपराह्णस्तु ततः परम्:" स्मृतिः वाच० विलयने, ( आवट्टती तत्थ असाहुकम्मा ) आवर्तते विलीयंते इति ॥ सूत्र० १ श्रु. ५ अ. ॥

पीडने, ( आवट्टतीकम्मसु पावएसु ) आवर्त्यते पीड्यते दुःखभाग् भवतीति सूत्र० १ श्रु. १ अ. ॥

आकंपने ( कहणा उट्टण आगमणपुच्छणा दीवणा य कज्जस्स ) आवर्तनमाकंपनं राज्ञो भक्तीभवनम् व्य० ए उ. ।

आ. वृत भावे ल्युट् आलोडने, गुणने, च धातूनां द्रावणे आवर्तयति संसारचक्रम् आ. वृत णिच् कर्तरि ल्यु विष्णौ, ( आवर्तनो निवृत्तात्मा विष्णुसह० ) जम्बुद्वीपोपद्वीपभेदे च । आवर्त्यतेऽनया ल्युट्ङीप् ट्यम् स्त्री आधारे ल्युट्ङीप् धातुद्रव्यद्रावणाधा मूषायाम्, करणे, ल्युट्वेष्टने, प्राचीरादौ न० । वाच० ॥

आव (ट्ट) त्तणपेढिया-आवर्तनपीठिका-स्त्री० इंद्रकीलिकानिवेशस्थाने, आवर्तनपीठिका यत्रेन्द्रकोलके निवेश्यत इति जी. ३ प्र.

( वश्रामयीतो आवत्तणपेढिआउ ) आवर्तनपीठिका नाम यत्रेन्द्रकीलका उक्तं च विजयद्वारचिन्तायाम् जीवाभि० मूलटीकाकारेण " आवर्तनपीठिका यत्रेन्द्रकीलको भवतीति " ॥ राज० । जी. जं० ॥

आव (ट्ट) त णे ज-आवर्तनीय-त्रि० आ. वृत-णिच्-अनीयर् द्रावणीये धात्वादौ, वाच० ॥

आव ( ट्ट ) तय-आवर्तक-पुं० आवर्त एव स्वार्थे कन् आवर्तशब्दार्थे प्रा. ॥

आव ( ट्टा ) त्तयंत-आवर्तायमान-त्रि० आवर्तं कुर्वाणे भ० श. ११ उ. ॥ प्रदक्षिणं भ्रमति, च कल्प० ॥

आवत्तायंतवट्टतडियविमलसरिसनयणं ।

( आवत्तायंत्ति ) आवर्तं कुर्वाणं तद्वद् ये वृत्ते च तडिदिव विमले च सदृशे च परस्परेण ते लोचने यस्य स तथा तं । भ. ११ श. ११ उ. ॥

( आवत्तायति ) आवर्तायमानं प्रदक्षिणं भ्रमन्एवंविधं यत् ( प्रवरकनगति ) प्रवरकनकं तद्वत् वृत्ते ( तडियविमलत्ति ) विमला या तडित् विद्युत् तत्सदृशे नयने लोचने यस्य स तथा तम् । कल्प० ॥

आवडिय-आपतित-त्रि० समन्तात्पतिते, ॥

आवण आपण-पुं० हट्टे, कल्प० ॥

आवरग-आवरक-न०-आ वृ-करणे अप् संज्ञायां कन् अपवरके, आच्छादके वस्त्रादौ, ॥

आवरण-आवरण-न० आव्रियते देहोऽनेन आ वृ करणे ल्युट् वाच. । आ मर्य्यादया वृणोतीत्यावरणम् । स्था. ४ ठा. ।

अंगरक्षादिके, ज्ञा० ८ अ. ।

कवचादिके उत्त० ३ अ. ।

( णाणावरणपहरणे ) आवरणं कवचादि आ. क०

आवरणे कवचादौ सूत्र० १ श्रु. ८ अ. ।

( णाणायं ० प्पती आवरणाणं पहरणाणं च ) आवरणानां सन्नाहानाम् स्था० ए ठा. ॥

आवरणानां कंकटानाम् ज्ञा० १६ अ. ।

स्फुरकादिके ( सच्चावसरपहरणावरणभरियजुद्धसज्जाणं ) आवरणानि च स्फुरकादीनि । औप. । फलादिके, आचा' १ अ. ५ उ. ।

आव्रियते आकाशमनेनेत्यावरणम् प्रसादनगरादिके, स्था० ए ठा. ॥

आच्छादनसाधनमात्रे, वाच. स्थगने, वृ. १ उ. ।

ईषद्वरणे आवरिज्जइ वा णिवारइज्जइवा आवरिज्जइति इष-द्व्रियते । भ० ए श. ३३ उ. ।

आव्रियते चैतन्यमनेन वेदान्तिमतसिद्धे चैतन्यावरणे अज्ञाने, वाच० ।

आव्रियते आच्छाद्यतेऽनेनेत्यावरणम् यद्वा आवृणोत्याच्छादयति नन्यादिभ्यः कर्तर्य्यनटप्रत्यये आवरणम् । मिथ्यात्वादिके कर्मभेदे, स च जीवव्यापाराहृतकर्म्मवर्गणान्तःपाती विशिष्टपुद्गलसमूहः । कर्म० । प्रव० २१५ द्वा. ।

तच्चद्विभेदम् ज्ञानावरणं दर्शनावरणं च(नाणस्स दंसणस्स आवरणं वेयणियं य ) पं. सं. ३ द्वा० ।

( पढमं नाणावरणं वीयं पुणदंसणस्स आवरणं ) ज्ञायते परिच्छिद्यते वस्तु अनेनेति ज्ञानं । सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोधः । आव्रियते आच्छाद्यतेऽनेनेत्या-

वरणं मिथ्यात्वादि, सचित्तजीवव्यापाराहृतकर्म्मवर्गणान्तःपाती विशिष्टः पुद्गलसमूहज्ञानस्य मत्यादेरावरणं ज्ञानावरणं तथा दृश्यतेऽनेनेति दर्शनं सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधस्तस्यावरणं दर्शनावरणं प्रव. ११५ द्वा. ॥ कर्म्म. । पंचप्रकारं ज्ञानावरणं चतुष्प्रकारं दर्शनावरणम् क. प्र. । आवरणानि मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनः पर्यायज्ञानावरणकेवलज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणावधिदर्शनावरणा केवलदर्शनावरणलक्षणानि नव । पंचविधं ज्ञानावरणं नवविधं दर्शनावरणं आवरणानि ज्ञानावरणपञ्चकदर्शनावरणनवकस्वरूपाणि ॥ कर्म्म. ॥

पंचविहं नाणावरणं, नव नेया दंसणस्स ।

ते च भेदा ज्ञानावरणस्य ( नाणावरण ) शब्दे । दर्शनावरणस्य ( दंसणावरण ) शब्दे ।

आवरणस्य द्विविधानि स्पर्शकानि भवन्ति । सर्व्वोपघातीनि देशोपघातीनि च । सर्व्वं स्वाचार्य्यं गुणमुपघ्नन्तीत्येवं शीलानि सर्व्वोपघातीनि । स्वाचार्य्यस्य गुणस्य देशमुपघ्नं तीत्येवं शीलानि देशोपघातीनि । आह च भाष्यकृत् ।

मइसुयनाणावरणं, दंसणमोहं च तदुवघातीणि ।
तप्फड्डगाई दुविहाई, सव्वदेसोवघाईणि ॥ आ. म. द्वि १ अ. ॥ पं. सं. ३ द्वा. ।

मिथ्यात्वादिकं च किङ्कस्या ऽऽवारकमित्याह ।

अडुणो जस्सोदयओ, न लब्भइ दंसणाईसामइयं ॥
लब्भं पुणो व भस्सइ, तदिहावरणं कसायाई ॥

सुगमा । नवरं तदिह कषायादिकर्म्मावरणमुच्यते । तत्रानन्तानुबन्धिकषायचतुष्टयं मिथ्यात्वञ्च सम्यक्त्वस्यावरणं । श्रुतस्य श्रुतज्ञानाऽवरणं । चारित्रस्य चारित्रमोहनीयमिति ॥

तदेवाह ॥ पढमेल्लुयाण उदएत्यादि ।

अथवा पातनान्तरमाह ।

अहवा खयाइओ, केवलाई जं जेसिं ते कई कसाया
को वा कस्सावरणं, को वक्खयाई कमो कस्स ॥ २२६ ॥

अथवा यत्केवलादिकमादिशब्दाद्दर्शनचारित्रपरिग्रहः एषां कषायाणां क्षयादितो भवत्यादिशब्दात्क्षायोपशमादि परिग्रहः । ते कति कषायाःको वा कस्य साहायिकस्याऽवरणं को वा क्षयादिक्रमः । कस्येति गाथार्थः ॥

अथ क्रमेणोत्तरमाह ॥

पढमील्लुयाणं उदए, नियमा संजोयणा कसायाणं ।
सम्मद्दंसणलंभं, भवसिद्धी या वि न लहंति ॥ २२ ॥

तत्र प्रथमील्लुकानां संयोजनाकषायाणामुदये नियमात्सम्यग्दर्शनलाभं भवसिद्धिका अपि न लभन्ते । किमुताऽभव्याः । इत्यक्षरयोजना । भावार्थस्त्वयं । प्रथमा एवं देशीवचनतः प्रथमिल्लुकास्तेषां प्रथमिल्लुकानामनन्तानुबन्धिक्रोधमानमायालोभानामित्यर्थः । प्राथम्यञ्चैषां सम्यक्त्वाख्यप्रथमगुणविघातित्वात् क्षपणक्रमाद्वेति । उदये विपाकाऽनुभवे सति नियमान्नियमेन अस्य व्यवहितसम्बन्धस्स च दर्शित एव । किं विशिष्टानां प्रथमिल्लुकानामित्याह । कर्म्मणा तत्फलभूतसंसारे संयोजनाहेतवः कषायाः संयोजनाकषायास्तेषामुदये नियमात्सम्यगविपरीतं दर्शनं सम्यग्दर्शनं । सम्यक्त्वं तस्य लाभः तं भवे सिद्धिर्येषान्ते भवसिद्धिकाः ॥ ननु सर्व्वेषामपि सिद्धिर्भवे एव कस्मिंश्चिद्भवति । किमनेन व्यवच्छिद्यते । सत्यम् । किन्त्विह व्याख्यानाद्भव एव भवा गृह्यन्ते । तद्भवसिद्धिका इत्यर्थः । तेऽपि न लभन्ते किमुताऽभव्याः । इति निर्युक्तिगाथार्थः ॥

भाष्यम् ॥

खवणं पडुच्च पढमा, पढमगुणविगाइणोत्ति वा जम्हा ।
संयोयणा कसाया, भवादिसंजोयणा उत्ति ॥

गतार्थैव ॥ विशे० ॥

आओ वउवादाणं, तेण कसाया जओ कसस्साया ।
चत्तारि बहुव्वयणओ, एवं बीआदओ वी मया ॥

ते च बहुवचननिर्देशाच्चत्वारः क्रोधादयो गम्यन्ते । एवं देशविरत्याद्युत्तरोत्तरगुणघातित्वाद्वितीयतृतीयचतुर्थत्वेन कषायशब्दादिवाच्यत्वेन च द्वितीयादयोऽपि मताः सम्मता इति ॥ भवसिद्धियावीत्येतद् व्याख्यानयति ॥

भवसिद्धियावि भणिए, नियमा न लभंति तहमभव्वावि ।
अविसेदणवगहिया, परित्तसंसारिया ईया ॥

भवसिद्धिका अपीत्युक्तेऽपि शब्दादभव्यास्तं नैव लभन्त इत्यवगम्यत एव । अथवाऽपि शब्दात्परित्तसंसारादयोऽपि न लभन्त इति गम्यत इति गाथार्थः ॥ २३१ ॥

उक्ताः सम्यक्त्वस्याऽवरणभूताः कषाया अथ देशविरत्यावरणभूतांस्तानाह ॥

विअ कसायाणुदये, अप्पच्चक्खाणणामधेज्जाणं ।
सम्मद्दंसणलंभं, विरया विरई न उ लहंति ॥

सर्व्वप्रत्याख्यानं देशप्रत्याख्यानञ्च न येषामुदये लभ्यतेऽप्रत्याख्यानाः । अकारस्य सर्व्वप्रतिषेधवचनत्वादप्रत्याख्यानइति नामधेयं येषामप्रत्याख्याननामधेयानां द्वितीयस्य देशविरतिगुणस्याऽऽवारकत्वात् । द्वितीयास्ते च ते कषायास्तेषां द्वितीयकषायाणामुदये भव्याः सम्यग्दर्शनलाभं लभन्त इतिवाक्यशेषः ॥ अयं च वाक्यशेषः ( विरयाविरई न उ लहंति ) इत्यत्र तु शब्दोपादानाव लभ्यते । एषामुदये भव्याः सम्यग्दर्शनलाभं लभन्ते ते विरताविरतिं देशविरतिम्पुनर्लभन्त इति वाक्यसङ्गतोरति विरति वा । विरतिश्च यस्यां निवृत्तौ सा विरताविरतिस्तामिति निर्युक्तिगाथार्थः ॥

भाष्यम् ॥

सव्वं देसो वजओ, पच्चक्खाणं न जेसिमुदएणं ।
ते अप्पच्चक्खाणा, सव्वनिसेहे मओकारो ॥१॥
सम्मद्दंसणलंभं, लभंति भवियति वक्कसेसोयं ।
विरयाविरइविसेसे,णं तुसद्दंसल्लखिओयंच ॥२३४॥

गतार्थैव ।

अथ तृतीयस्य सर्वविरतिगुणस्याऽऽवारकांस्तृतीयकषायानाह ॥

तइयकसायाणुदए, पच्चक्खाणावरणनामधेज्जाणं ।
देसिक्कदेसविरइं, चरित्तलंभं न उ लहंति ॥

सर्वविरतिलक्षणतृतीयगुणघातित्वात्क्षपणक्रमाद्वा तृतीयास्ते च ते कषायाश्च तृतीयकषायाः क्रोधादयः चत्वारः तेषामुदये कथं भूतानामावृण्वन्त्यावरणाः प्रत्याख्यानं सर्वविरतिलक्षणं तस्यावरणा एतदेव नामधेयं येषां ते प्रत्याख्यानावरण

नामधेयास्तयां । आह न त्वप्रत्याख्यानमामधेयानामुदये सवथा प्रत्याख्यानं नास्तीत्युक्तं । तत्राऽप्रतिविरुद्धत्वादिहापि चावरणशब्देन प्रत्याख्यानस्य सर्वस्यापि निषेधो गम्यत इति। क एषां प्रतिविशेष इत्यत्रोच्यते । तत्र नञ्सर्वनिषेधे उक्तः । इह त्वाङोमर्यादेषदर्थत्वादास्येविरतिप्रत्याख्यानमर्यादया अथवा ईषत्सावद्ययोगानुमतेमात्रविरतिरूप प्रत्याख्यानमावृण्वंतीति प्रत्याख्यानावरणा इति व्युत्पत्तेस्सर्वविरतिरूपप्रत्याख्याननिषेधार्थं एवायं वर्तते न देशविरतिप्रत्याख्याननिषेधे। आवरणशब्दैस्तथाचाह देशश्च देशैकदेशौ तत्र देशः स्थूलप्राणातिपातादि, एकदेशस्तु तस्यैव द्वयवनस्पतिकायाद्यतिपातस्तयोर्विरतिः निवृत्तिस्तां लभत इति वाक्यशेषः (चरित्तलंभं न लहंति) इत्यत्र तुशब्दोपादानादेव लभ्यते । चरत्यनिंदितमनेनेति चारित्रं । अष्टविधकर्मचयरिक्तीकरणाद्वाचारित्रं । सर्वविरतिक्रियेत्यर्थः । तस्य लाभस्तमेषामुदये लभत देशैकदेशविरतिं पुनर्न लभत इति निर्युक्तिगाथार्थः । विशे. ॥ प्रत्याख्यानावरणवक्तव्यता (पञ्चक्खाणावरण) शब्दे ॥

अथोक्तमेवार्थं संगृह्य विभणिषुस्तथा चतुर्थकषायाणां यथाख्यातचारित्रादिविघातित्वं च दिदर्शयिषुराह ॥

मूलगुणाणं लंभं, न लहइ मूलगुणघाइणो उदये ।
संजलणाणं उदए, न लहइ चरणं अहक्खायं ॥

इह सम्यक्त्व महाव्रताणुव्रतानि च मूलभूता गुणा मूलगुणाः उत्तरगुणानामाधारभूतत्वात्तेषां मूलगुणानां लाभं न लभंते । कदेत्याह । यथोक्तान् मूलगुणान् हंतुं शीलंयेषां ते मूलगुणघातिनस्तेषां मूलगुणघातिनामनंतानुबंधि अप्रत्याख्यानप्रत्याख्यानावरणानां द्वादशानां कषायाणामुदय एतच्च ( पढमिल्लुयाण उदए ) इत्यादिना सर्वं भावितमेव तथा ईषज्ज्वलनात्संज्वलनाः संपादि ज्वलनाद्वा संज्वलनाः परीषहादिसंपाते चारित्रिणमपि ज्वलयन्तीति वा संज्वलनाः क्रोधादय एव चत्वारः कषायास्तेषामुदये न लभंते लब्धं वा त्यजति चरणं चारित्रं किंसर्वमपि नेत्याह । यथैव तीर्थंकरगणधरैराख्यातं । अकषायमित्यर्थः । सकषायं तु लभते । नच यथाख्यातचारित्रमात्रमेवोपघ्नंति संज्वलनाः किं तु विशेषचारित्राणामपि देशोपघातिनो भवंति । तदुदये शेषचारित्रदेशाभिचारसिद्धेरितिनिर्युक्तिगाथार्थः । विशे० आव. म. ।

आवरणसत्य-आवरणशास्त्र-न० आव्रियते आकाशमनेनेत्यावरणम् । भवनप्रासादनगरादि तल्लक्षणं शास्त्रमपि तथा वास्तुविद्यात्मके पापश्रुतभेदे, स्था० ए ठा. ।

आवरणावरणपविभत्ति -आवरणावरणप्रविभक्ति-न० नाट्यविधिभेदे, ॥

चंदावरणपविभत्तिं च सूरावरणपविभत्तिं च आवरणावरणपविभत्ति णामं दिव्वं णट्टविहिं उवदंसेइ ॥

चन्द्रावरणप्रविभक्तिसूर्यावरणप्रविभक्तियुक्तमावरणावरणप्रविभक्तिमर्य्यावरणप्रविभक्तिनामकमष्टमं नाट्यविधिमुपदर्शयन्ति । राज० ॥

आवरणी-आवरणी- स्त्री० आवरणकारिण्याम् विद्यायाम्, ज्ञा० १६ अ० ॥

आवरिज्जमाण-आव्रियमाण- त्रि० स्खल्यमाने, ( आवरिज्जमाणावा । आवरिज्जमाणत्ति ) स्खल्यमानानि भ० १५ श० १उ० ।

आवरित्ता-आवृत्य- अव्य० आवरणं कृत्वेत्यर्थे ( आवरित्ता चिट्ठइ ) व्या० ॥

आवरिय-आवृत्त- त्रि० आ० वृ क्त कृतावरणे, अप्रकाशीकृते, आच्छादिते, वाच० ( आवरिओ कम्मेहि ) आवृत्तः प्रच्छादितः नि० चू० १ उ० । आवारिया विरणमुहे ) आवृता अपि सन्निरुद्धसन्नाहा । अपि व्य० १ उ० ॥

आवरिसण-आवर्षण- न० उदकादिना छटकप्रदाने, ॥

समंजणआवरिसणउवलेवणसुहुमदीएवए चेव ।

आवर्षणमुदकेन छटकप्रदानमिति बृ० उ० १ ॥ आवरिसणं पाणिएण अप्फालण नि० चू० २ उ० । ( उवलेवणसम्मज्जणावरिसण ) आवर्षणं गन्धोदकादिनेति ग० २ अधि० अनु. । उदगादि आवरिसणं उदकेनादिशब्दाद् घृतेन तैलेन वाऽऽवर्षणं करोति बृ० ४ उ. ॥

समन्ताद्वर्षणं ( आवरिसला ) आसमन्ताद्वर्षत राज० ॥

आवरिहिय-आवर्हित- त्रि० आ० वृह उद्यमने णिच् क्त आ वर्हा इसायाम् क्तः । उत्पाटिते, उन्मूलिते. वाच० ॥

आवलण-आवलन-न० मोटन (गलगवलावलणमरणाणि )

गलस्य कण्ठस्य गवलस्य शृंगस्याऽऽवलनं च मोटनम् प्र० न० १ द्वा० ॥

आव ( लि ) ली-आव ( लि ) ली स्त्री० आ वल वा ङीप् पङ्क्तौ विशे० अनु० १ अ० ( कोंचावलीइ वा हारावलीइ वा वलयावलीइ वा ) आवलिपदोपादानं वर्णोत्कटत्वप्रतिपादनार्थम् । जं० । अस्यार्थो जीवाजीवशब्दे द्रष्टव्यः ॥

आवालिय-आवलित- त्रि० आ वल चलने क्त ईषच्चलिते , सम्यक्चलिते, च । वाच० । आमोटिते, ॥

(अणवाविद्धंओवालियं) अवलितं यथात्मनो वस्त्रस्य च वलितमिति मोटनं न भवतीति । उत्त० २६ अ० ॥

आवालि ( या ) णिवाय-आवलिकानिपात-पुं० आवलिकया क्रमेण निपातः संपात आवलिकानिपातः क्रमेण संपातः,॥

ताजोगेति व वुत्त आवलि ( त ) याणिवाते आहितेति वदेज्जा ताइति ॥

आस्तां तावदन्यकथनीय सम्प्रत्येतावत्कथ्यंत । योग इति । वस्तुतो न क्षत्रजातस्य आवलिकानिवायोति)आवलिकया क्रमेण निपातश्चन्द्रसूर्यैः सह संपात आख्यातो मयेति वदेत् सू० प्र. प्रा. १० । चं. प्र. प्रा. १० ।

आवालिय ( या ) पविट्ठ-आवलिकाप्रविष्ट-त्रि० आवलिकासु श्रेणिषु प्रविष्टा व्यवस्थिता आवलिकाप्रविष्टाः श्रेणया व्यवस्थिते, जी. ३ प्र. ॥

इमे णं भंते ! रयणप्पभाए पुढवीए णरगा किं संठिता प० गो० दुविहा पं० तं आवलियपविट्ठा य आवलियबाहिराय तत्थणं जे ते आवलियपविट्ठा ते तिविहा पं. तं. वट्टा १ तंसा २ चउरंसा ३ जी. प्र. ३ ।

आवलिकासु संस्थानमधिकृत्य त्रिविधाः प्रज्ञप्तास्तद्यथा । वृत्तास्त्र्यस्राश्चतुरस्राः । जी. टी. ।

सोहम्मीसाणेसु णं भंते ! कप्पेसु विमाणे किं संठिता प० गो० दुविहा० पं० तं० आवलियाए बाहिराय ॥

तत्रावलिकाप्रविष्टानि नाम यानि पूर्वादिषु चतसृषु दिक्षु श्रेणयोवस्थितानि यानि पुनरावलिकाप्रविष्टानां प्राङ्गणप्रदेशे

कुसुमप्रकरस्य यतस्ततो विप्रकीर्णानि तान्यावलिकाबाह्यानि। तानि च पुष्पावकीर्णानीत्युच्यन्ते । पुष्पाणीव इतस्ततोऽवकीर्णानि विप्रकीर्णानि पुष्पावकीर्णानि इति व्युत्पत्तेः जी. ३ टी. ४ प्र. ॥

**आवलिय ( या ) पविभत्ति**–आवलिकाप्रविभक्ति–न० दिव्ये नाट्यविधिभेदे, ॥

चंदावलिपविभत्तिं च सूरावलिपविभत्तिं च हंसावलिपविभत्तिं च एगावलिपविभत्तिं च तारावलिपविभत्तिं च मुत्तावलिपविभत्तिं च आवलियपविभत्तिं णामं दिव्वं णट्टविहिं उवदंसेइ ॥

चन्द्रावलिप्रविभक्तिसूर्यावलिप्रविभक्ति, वलयावलिप्रविभक्ति हंसावलिप्रविभक्त्येकावलिप्रविभक्ति, तारावलिप्रविभक्ति, मुक्तावलिप्रविभक्ति, कनकावलिप्रविभक्ति, रत्नावलिप्रविभक्त्यात्मकमावलिप्रविभक्ति नाम पञ्चमं नाट्यविधिमुपदर्शयन्ति राज० टी० ॥

**आवलिय ( या ) बाहिर**–आवलिकाबाह्य–त्रि० इतस्ततो विप्रकीर्णे, अत्र यद्वक्तव्यन्तद् (आवलियापविट्ठ) शब्दे उक्तम् जी० ४ प्र० ॥

**आवलिया**–आवलिका–स्त्री० पङ्क्तौ वृ० ३ उ. । आवलिका पङ्क्तिरभिधीयते। आलीश्रेणिरवली पङ्क्तिरिति वचनात् पं० सं० ( भ्रमरावलियत्ति वा ) भ्रमरावली भ्रमरपङ्क्तिः। राज० एकान्ते स्थितायां विच्छिन्नायामण्यल्यां च । या विच्छिन्ना एकान्ते भवति मण्डली सा आवलिका या पुनः स्वस्थाने एव सा मण्डली। व्य० ४ उ. ।

अथावलिकाया मण्डल्याश्च कः प्रतिविशेष इत्यत आह ॥

भिण्णाभिण्णविसेसो, आवलियाए उ अंतएगंते ।

मंडलीए सट्टाणं, सच्चित्ताएसु संकमति ॥

आवलिकामण्डल्योः परस्परं भिन्नाभिन्नरूपो विशेषः आवलिका भिन्ना विविक्त एकांता भवति । मण्डलिका त्वच्छिन्ना ( आवलियतत्थभिन्ना मण्डलिया होइ अच्छिन्ना उ ) इति वचनात् । एतदेव सुव्यक्तमाह । आवलिकायामुपाध्यायकोऽन्तर्मध्ये विविक्ते प्रदेशे तिष्ठति । मण्डल्या पुनः स्वस्थानमभवनं च पाठयितरिसक्रामतिसचित्तादिषु तल्वेऽभगतसचित्तादिविषयं(आवलियमण्डलिकमो पुच्छतो भिण्णभिण्णभेदेण ) व्य० १० उ. । क्रमे, सूर. प्र० १० प्रा. चं. प्र. १० प्रा. कालविशेषे, असंख्येयसमयसंघातात्मकः कालविशेष आवलिका । विशे० । असंख्यातैः समयैरावलिका जघन्ययुक्ता संख्येयसमयराशिमानेति । तं० । अनु० । असंख्यातसमयसमुदायात्मिका आवलिकाः क्षुल्लकभवग्रहणकालस्य षट्पञ्चाशदुत्तरद्विशततमभागवर्त्तता इति । स्था० ठा. २ चं० प्र. प्रा. २० आ० म० ।

असंखेज्जाणं समयाणं समुदयं समइ समागमेणं सा एगा आवलिय त्ति पवुच्चइ । भ० ।

टी० असङ्ख्यातानां सम्बन्धिनो ये समुदया वृन्दानि तेषां याः समितयो मीलनानि तासां यः समागमः संयोगः स समुदयसमितिसमागमस्तेन यत्कालमानं भवतीति गम्यते सा आवलिकेति प्रोच्यते ( संखेज्जा आवलियत्ति ) किल षट्पञ्चाशदधिकशतद्वयमावलिकानां क्षुल्लकभवग्रहणं भवति भ. ६ श. ७ उ. ॥ अनु० विशे० नं० पं० स. दर्श० कर्म०ज्यो०तं. ॥

**आवसंत**–आवसत्–त्रि० आवासं कुर्वति ॥

(सुयं मे आउसंतेणं भगवया एवमक्खायं )सुयं मे आउसंतेणंति मयेत्यस्य विशेषणमेतत आङिति गुरुदर्शितमर्यादया वसता अनेन तत्वतो गुरुमर्यादावर्तित्वरूपत्वात् गुरुकुलवासस्य तद्विधानमथत उक्त ज्ञानादिहेतुत्वात् स्था. १ ठा. (गारमावसंताहि) आगारमावसद्भिः सेवमानैः आचा० ५ अ. ३ उ. ॥

**आवसह**–आवसथ–पुं० आवसत्यत्र आ वस अथच्. गृहे, सूत्र० २ श्रु. २ अ. ॥

प्रति० ( आवसहं च जाणमतं च ) आवसथं गृहमिति सूत्र० १ श्रु. ४ अ. । आश्रये, ( आवसहं वासमुस्सिणामि ) आवसथं वा युष्मदाश्रयं समुच्छृणोमि आचा० ७ अ. २ उ. । परिव्राजकाश्रये उटजाकारे गृहे, आवसथः परिव्राजकाश्रय इति प्रश्न० १द्वा. । आवसथास्तापसाश्रया उटजादयः । दशा. ( जेणेवपरिव्वायगावसहे तेणेव उवागच्छइ परिव्वायावसहेत्ति ) परिव्राजकमठः ज्ञ० २ श. १ उ. केचनावेसथूटजाकारेषु गृहेषु वसंतीति सूत्र० २ श्रु. २ अ. आर्याच्छंदोरचिते कोषभेदे, वाच० ॥

**आवसहिय**–आवसथिक –पुं० आवसथो गृहं तेन च रतीत्यावसथिकः । प्रति० सूत्र० १ श्रु. १ अ. आवसथे गृहे वसति ठञ् स्त्रियां ङीप् गृहस्थे, वाच० आवसथास्तापसाश्रया उटजादयस्तत्रवसन्तीत्यावसथिकाः ॥ दशा० तीर्थिकविशेषे सूत्र० २ श्रु. ७ अ. आवसथिकाः केचनावसथेषूटजाकारेषु गृहेषु वसतीति सूत्र० २ श्रु. २ अ. ॥

**आवसहि**–आवसति–स्त्री० वसत्यत्र गृहे वसतिः रात्रिः सम्यक् वसतिः प्रा० स० निशीथे, वसतेः सम्यकत्वश्चावश्यगृहवासयोग्यत्वं तत्राद्धरात्रेऽवश्यं भवतीति तस्य तथात्वम् वाच० ॥

**आवस्सय**–आपाश्रय–पुं० आङ्मर्यादाभिविध्याची। आमर्यादयाऽभिविधिना वा गुणानामापाश्रय आधार इदमित्यापाश्रयः । सामायिकादिके आवश्यके,॥

विशेषावश्यके आवश्यकपर्यायनामान्यधिकृत्य ।

आवस्सयं अवस्सकरणिज्जं धुवनिग्गहो विसोहीय ।

आमर्यादयाऽभिविधिना वा गुणानामापाश्रय आधार इदमित्यापाश्रयं गुणाधार इत्यर्थः । नन्वाधारवाचक आपाश्रयशब्दः पुंल्लिङ्गे वर्तते । तत्कथमापाश्रयमिति नपुंसकत्वमितिचेन्न । प्राकृतशैलीवशतोऽदोषादिति । विशे० ।

आवश्यक–न० अवश्यं भाव आवश्यकं द्वन्द्वमनोज्ञादित्वाद्वेति मनोज्ञादेरधिकृतत्वाद्बुञ् । आ० चू. २ अ. ।

अवश्यंभावे नैयत्ये,वाच० अवश्यं कर्म आवश्यकं अवश्यकर्तव्यक्रियानुष्ठाने, । नं ०

आवस्सगपरिसुद्धीय, होंति भिक्खुस्स लिङ्गाइं ।

आवश्यकपरिशुद्धिश्चावश्यं करणीययोगनिरतिचारतेति । दश० अ. १० । द्वा. । आव. । धर्म. । अनु. । पंचा. । स्था. १० ठा. । नियमात्कर्तव्ये, आवश्यकानि नियमत एव करणीयानीति आव० ४ अ. । अवश्यंभावित्वाद्वाच्यत्वाद्वावश्यकं स्था०४ठा.अनु. ।अवश्यकर्तव्यमावश्यकम् श्रमणादिभिरवश्यमुभयकालं क्रियते इति भावः । क्वचिदितिकर्मणि बाहुलकात् प्रत्ययः । पृषोदरादय इति निपातनात् शेषरूपसिद्धिः । अथवा ज्ञानादिगुणानामासमन्ताद्वश्यमात्मानं करोति । यदि वा आसमन्ताद्वश्या इन्द्रियकषायादिभावशत्रवो यस्मात्तदाव-

श्यकं । शेषाद्वेतिकप्रत्ययः यदि वा ज्ञानादिगुणकदम्बकं मोक्षोवा आसमन्ताद्वश्यः क्रियतेऽनेनेत्यावश्यकं । आ० म० प्र० १ अ. । प्रव० । स्था. । ग. । विशे० । ओघ० ।

दंसणविणए आवस्सए असीलव्वए निरइआरो ।

आवश्यकं अवश्यकर्त्तव्यं संयमव्यापारनिष्पन्नं तस्मिन्नपि विशुद्धाद्युत्तरगुणकलापे, इति । आ० क० । ज्ञा. ।

तत्प्रतिपादके सामायिकादिषडध्ययनकलापात्मके अङ्गबाह्ये श्रुतविशेषे च अनु० । विशे० । स्था० । नंदी० ।

समणेणं सावएणय, अवस्सकायव्वं हवइ जम्हा ।

अंतो अहो निसस्सय, तम्हा आवस्सय नाम २ सेत्तं आवस्सयं ॥

टी० श्रमणादिना अहोरात्रस्य मध्ये यस्मादवश्यं क्रियते । तस्मादावश्यकं । एवमवश्यकरणीयादिपदानामपि व्युत्पत्तिर्द्रष्टव्या । उपलक्षणत्वादस्य इति गाथार्थः । अन. ॥

तत्राच विशेषावश्यक । आवश्यकस्य पर्य्यायनामान्याभिधित्सुराह ।

पर्य्यायाः ॥

तस्साभिन्नत्थाइं, सुपसत्थाइं जहंनु नियमाइं ।

अव्वामोहाइं, निनित्तमाहपज्जाय नामाइं ॥

तस्याऽवश्यकस्य पर्यायनामान्याह इति संबन्धः । कथंभूतान्यभिन्नार्थानि सुप्रशस्तानि यथार्थो व्यवस्थितस्तथैव नियतानि निश्चितानि । किमित्याह ॥ अव्यामोहादिनिमित्तं एकार्थिकैर्हि पर्यायनामभिर्ज्ञातैरन्योन्यस्थानेष्वन्यान्यनामश्रवणतः शिष्यो नमुह्यति । आदिशब्दान्नानादेशजविनेयानां सुखेनैवार्थ प्रतिपत्तिर्भवति इत्यादि वाच्यमिति ॥

कानि पुनस्तानि पर्यायनामानीत्याह ।

आवस्सयं १ अवस्सकरणिज्जं २ धुव ३ निग्गहो ४ विसोहिय ५ अज्झयण ६ वग्गो ७ घनाउ ८ आराहणा ९ मग्गो १० ।

एतानि दश पर्य्यायनामानि ॥

अत्राऽवश्यकमिति कः शब्दार्थः इत्याह ।

समणेण सावएण य, अवस्सकायव्वयं हवई जम्हा ।

अंतो अहोनिसिस्सा, तम्हा आवस्सयं नाम ॥

श्रमणादिभिरहोरात्रिमध्येऽवश्यंकरणादावश्यकमितीह तात्पर्यमिति ॥

एतदेव सविशेषमाह ॥

जदवस्सं कायव्वं, तेणावस्सयमिदंगुणाणं वा ।

आवस्सयमाहारो, आमज्जायाभिविहिवाइ ॥

अवस्संवा जीवं, करेइ जं नाणदंसणगुणाणं ।

संनिज्झभावणत्थयणेहि, वा वासयं गुणोओ ॥

यद्यस्मादवश्यं कर्तव्यं तेन तस्मादावश्यकमिदमित्येतत्प्राकृतगाथायाः पर्यवसितार्थकथनमेव । अथवा आङ्मर्य्यादाभिविधिवाची । आमर्यादया अभिविधिना वा गुणानामापाश्रय आधार इदमित्यापाश्रयं गुणाधारमित्यर्थः । नन्वाऽधार वाचक आपाश्रयशब्दः पुंलिंगे वर्तते । तत्कथमापाश्रयमिति नपुंसकत्वमिति चेन्न । प्राकृतशैलीवशतोऽदोषादिति । अथवा ज्ञानादिगुणानामासमंताद्वश्यमात्मानकरोतीत्यावश्यकं । यथा । अन्तं करोतीत्यंतकः । सान्निध्यभावच्छादनैर्वा आवासकं गुणत इत्यावासकमुच्यते । इदमुक्तं भवति । वसनिवास इति गुणशून्यमात्मानं गुणैरासमन्ताद्वासयति गुणसान्निध्यमात्मनः करोतीत्यावासकं । अथवा यथावद् वासधूपादिभिस्तथा गुणैरासमन्तादात्मानं वासयति भावयति रंजयत्यावासकं । यदि वा वस आच्छादने गुणैरासमंतादात्मानं छादयति । छद षट्ट संवरणे । दोषेभ्यः संवृणोत्यावश्यकमिति तदेतदेवमावस्सयत्याद्यं पर्य्यायनाम व्याख्यातं ।

शेषाण्यतिदिशन्नाह ॥

एवं चिअ सेसाइं, विउसासुय लक्खणाणुसारेण ।

कमसो वत्तव्वाइं, तहा सुयक्खंधनामाइं ॥

एवमेव शेषाण्यपि अवश्यकरणीयादिनामानि सिद्धान्तलक्षणाऽनुसारेण क्रमशो विदुषा वक्तव्यानि । तद्यथा । ममुक्षुभिरवश्यं क्रियत इति अवश्यंकरणीयमिदमुच्यते । तथा अर्थतो ध्रुवत्वाच्छास्वतत्वात्ध्रुवं । निग्रहाते इन्द्रियकषायादयो भावशत्रवोऽनेनेति निग्रहः । अन्ये तु प्रवाहतोऽनादिकालीनध्रुवं कर्म्म तन्निग्रह्यते अनेनेति ध्रुवनिग्रह इत्येकमेवेदं पर्य्यायनाम व्याचक्षते । कर्ममलिनस्याऽत्मनोविशुद्धिहेतुत्वाद्विशुद्धिः । सामायिकादिषडध्ययनात्मकत्वादध्ययनषट्कं । वृजी वर्जने वृज्यन्ते दूरतः परिह्रियन्ते रागादयो दोषा अनेनेति वर्गः । अन्येतुषडध्ययनकलापात्मकत्वादध्ययनषट्कवर्ग इतीदमत्येकमेव पर्यायं नाम ब्रुवते । अभिप्रेतार्थसिद्धेः सम्यगुपायत्वान्न्यायः अथवा जीवकर्मसंबन्धापनयनान्न्यायः । अयमभिप्रायो यथा कारणिकैर्दृष्टो न्यायो द्वयोरर्थिप्रत्यर्थिनोर्भूमिद्रव्यादिसंबधे चिरकालीनमप्यपनयत्येवं जीवकर्मणोरनादिकालीनमप्याश्रयाश्रयिभावसम्बन्धमपनयतीत्यावश्यकमपिन्याय उच्यते । मोक्षाराधनहेतुत्वादाराधना मोक्षपुरप्रापकत्वान्मार्ग इव मार्ग इति ॥ विशे० ॥ अनु० ॥ आ० ॥ चू० ॥ आ० म० प्र० ॥

आवश्यकस्य चतुर्धा निक्षेपो नामस्थापनाद्रव्यभावभेदात् ।

सेकिंतं आवस्सयं २ चउव्विहं पण्णत्तं । तंजहा ।

नामावस्सयं १ ठवणावस्सयं २ दव्वावस्सयं ३ भावावस्सयं ४ ॥

( सेकिंतं आवस्सय ) मित्यादि अत्र से शब्दो मागधदेशी प्रसिद्धो थ शब्दार्थे वर्तते । अथ शब्दस्तु वाक्योपन्यासार्थः । स्तथा चोक्तम् ॥

अथ प्रक्रियाप्रश्नानन्तर्य्यमंगलोऽपन्यासनिर्वचनसमुच्चयेष्विति किमिति परप्रश्ने । तदिति सर्वनामएवप्रक्रान्तपरामर्शार्थे । ततश्चायं समुदायार्थेऽथ किं स्वरूप तदावश्यकं । एवं प्रश्निते सत्याचार्यः शिष्यवचनाऽनुरोधेन समाधानार्थं प्रत्युच्चार्य निर्दिशति ॥

(आवस्सयं चउविहं) इत्यादि अवश्यं कर्तव्यमावश्यकम् । अथवा गुणानामासमंताद्वश्यमात्मानं करोति इत्यावश्यकम् । यथाऽतं करोतीति अन्तकः । अथवा आवस्सयंति प्राकृत शैल्या आवासकं । अत्र वस निवासे इति गुण शून्यमात्मानं वा समंताद्वासयति गुणैरित्यावश्यकं (चउविहं पण्णत्तं) चतस्रो विधा भेदा अस्येति चतुर्विधम् प्रज्ञप्तं प्ररूपितमर्थतस्तीर्थंकरैः सूत्रतो गणधरैस्तद्यथा ( नामावस्सय ) मित्यादि नामाभिधानतद्रूपमावश्यकं नामावश्यकं आवश्यका भिधानमेषेत्यर्थः । अथवा नाम्ना नाममात्रेणाऽवश्यकं जीवादीत्यर्थस्तल्लक्षणञ्चेदम् । यद्वस्तुनोऽभिधानं स्थितमन्यार्थे तदर्थनिरपेक्षं पर्यायानभिधेयं च नाम यादृच्छिकं च तथा विनेयाऽनु

अहार्थमेतद्व्याख्या यद्वस्तुन इन्द्रादिरभिधानमेन्द्र इत्यादि वर्णावलिमात्रमिदमेव आवश्यकलक्षणवर्णचतुष्टयावलीमात्र मिदमेव ।
आवश्यकलक्षणवर्णचतुष्टयावलिमात्रं । यत्तदोर्नित्याभिसंबन्धात्तन्नामेति संटंकः ॥

अथ प्रकारान्तरेण नाम्नोलक्षणमाह। स्थितमन्यार्थे तदर्थनिरपेक्षं पर्यायानभिधेयञ्चेति तदपि नाम यत्कथंभूतमित्याह । अन्यश्चासावर्थश्च अन्यार्थो गोपालदारकादिलक्षणस्तत्र स्थितमन्येन्द्रादार्थे यथार्थत्वेन प्रसिद्धं तदन्यत्र गोपालदारकादौ यदारोपितमित्यर्थः। अतएवाह । तदर्थनिरपेक्षमिति। तस्येन्द्रादिनाम्नोऽर्थः परमैश्वर्य्यादिरूपस्तदर्थः । स चासावर्थश्चेति वा तदर्थस्तस्य निरपेक्षं गोपालदारकादौ तया तदर्थस्याऽभावात्पुनः किम्भूतं तदित्याह । पर्य्यायानभिधेयमिति । पर्य्यायाणां शक्रपुरन्दरादेनामनभिधेयमवाच्य गोपालदारकादयो हीन्द्रादिशब्दैरुच्यमाना अपि शचीपत्यादिरिव शक्रपुरन्दरादिशब्दैर्नाभिधीयन्ते । अतस्तन्नामाऽपि नाम तद्वतोरभेदोपचारात्पर्य्यायानभिधेयमित्युच्यते च । शब्दाश्चाम्न एव लक्षणान्तरसूचकं शचीपत्यादौ प्रसिद्ध । तन्नाम वाच्यार्थशून्ये अन्यत्र गोपालदारकादौ यदारोपितं तदपि नामेति तात्पर्य्यम । तृतीयप्रकारेणाऽपि लक्षणमाह । याहच्छिकं च तथेति । तथाविधव्युत्पत्तिशून्यं डित्थकापित्यादिरूपं याहच्छिकं स्वेच्छया नाम क्रियते तदपि नामेत्यार्यार्थः ॥ अनु० ॥
अत्र नामावश्यकस्वरूपनिरूपणार्थं सूत्रकार एवाह ॥

सेकिंतं नामावस्सयं २ जस्स एं जीवस्स वा अजीवस्स वा जीवाए वा अजीवाण वा तदुभयस्स वा तदुभयाण वा आवस्सएत्ति नामं कज्जइ सेत्तं नामावस्सयं ॥

अथ किं तन्नामावस्सकमिति प्रश्ने सत्याह । ( नामावस्सयं जस्स ण ) मित्यादि । अत्र द्विकलक्षणेनाऽङ्केन सूचितं द्वितीयमपि ( नामावस्सयं ) ति पदं द्रष्टव्यं । एवमन्यत्राऽपि यथासम्भवमभ्यूह्यम । णमिति वाक्यालङ्कारे । यस्य वस्तुनो जीवस्य वा अजीवस्य वा जीवानामजीवानां वा ( तदुभयस्स वा ) तदुभयानां वा आवश्यकमिति यन्नाम क्रियते तन्नामावश्यकमित्यादिपदेन संबन्धः ॥ नाम च तदावश्यकं चेति व्युत्पत्तिरथवा यस्य जीवादिवस्तुनः आवश्यकमिति नाम क्रियते। तदेव जीवादिवस्तु नामावश्यकं। नाम्ना नाममात्रेणाऽवश्यकं नामावश्यकमिति व्युत्पत्तिर्वाशब्दाः पक्षान्तरे सूचका इति समुदायार्थस्तत्र जीवस्य कथमावश्यकमिति नाम संभवतीत्युच्यते। यथा लोके जीवस्य स्वपुत्रादेः कश्चित्सीहको देवदत्त इत्यादि नाम करोति । तथा कश्चित्स्वाभिप्रायवशादावश्यकमित्यपि नाम करोति । अजीवस्य कथमिति चेदुच्यते । इहावश्यकावासकशब्दयोरकार्थता प्रागुक्ता । ततश्चार्द्रशुष्कोऽचित्तो बहुकोटराकिर्णो वृक्षोऽन्यो वा तथाविध कश्चित्पदार्थविशेषस्सर्पादेरावासोऽयमिति लौकिकैर्व्यपदिश्यत एव । स च वृक्षादिर्यद्यप्यनन्तैः परमाणुलक्षणैरजीव द्रव्यैर्निष्पन्नस्तथाप्येकस्कंधपरिणतिमाश्रित्यकाजीवत्वेन विवक्षित इति स्वार्थिककप्रत्ययोपादानादेकानि वयस्यावासकनाम सिद्धम । जीवानामपि बहूनामावासकनाम सन्दृश्यते । यथा इष्टकापाकाद्यग्निर्मूषिकावास इत्युच्यते । तत्र हल्मौ किल मूषिकाः संमूर्च्छन्त्यतस्तेषामसङ्ख्येयानामग्निजीवानां एवंवदावासकन्नाम सिद्धम । अजीवानान्तु यथा नीडं पक्षिणामावास इत्युच्यते । तन्नीडं बहुभिस्तृणाद्यजीवैर्निष्पद्यते । इति बहूनां जीवानामावासकंनाम भवति । इदानीमुभयस्यावासकसंज्ञा भाव्यते । तत्र गृहदीर्घिका अशोकवनिकाद्युपशोभितः प्रासादादिप्रदेशः राजादेरावास उच्यते । सौधर्म्मादि विमानं वा देवानामावासोऽभिधीयते । अत्र च जलवृक्षादयस्सचेतनरत्नादयश्च जीवा इष्टकाः काष्ठादयो चेतनरत्नादयश्चाजीवास्तन्निष्पन्नमुभय तस्य कप्रत्ययोपादाने आवासक संज्ञा सिद्धा । उभयानां त्वावासकसंज्ञा यथा सम्पूर्णनगरादिक राजादीनामावास उच्यते । सम्पूर्णः सौधर्म्मादिकल्पो वा इन्द्रादीनामावासोऽभिधीयते । अत्र च पूर्व्वोक्तप्रासादविमानयोः स्वल्पत्वादेकमेव जीवाजीवोभयं विवक्षितमत्र तु नगरादीनां सौधर्म्मादिकल्पानां च महत्त्वाद्बहूनि जीवाजीवोभयानि विवक्षितानीति विवक्षया भेदो द्रष्टव्यः एवमन्यत्राऽपि जीवादीनामावासकसंज्ञा यथा सम्भवं भावनीया ॥
दिङ्मात्रप्रदर्शनार्थत्वादस्य निगमयन्नाह । (सेतमित्यादि) (सेत्त)मित्यादि वा क्वचित्पाठः तदेतन्नामावश्यकमित्यर्थः ॥
इदानीं स्थापनाऽवश्यकनिरूपणार्थमाह ।

सेकिंतं ठवणावस्सयं २ जण्णं कट्ठकम्मे वा पोत्थकम्मे वा चित्तकम्मे वा लिप्पकम्मे वा गंथिमे वा वेढिमे वा पूरिमे वा संघाइमे वा अक्खेवा वराडए वा एगोवा अणेगोवा सब्भावठवणा वा असब्भावठवणा वा असब्भाय ठवणा वा आवस्सएत्ति ठवणाठविज्जइ सेत्तं ठवणावस्सयं । नाम ठवणाणं कोपइविसेसो णामं आवस्सकहिअं ठवणा इत्तरिआ वा होज्जा आवकहिआ वा ॥

टीका । सेकितमित्यादि अथ किंतत् स्थापनावश्यकमिति प्रश्ने सत्याह । ( ठवणा आवस्सयं जण्ण ) मित्यादि । तत्र स्थाप्यते शुष्कोऽयमित्यभिप्रायेण क्रियते निर्वर्त्यते इति स्थापना । काष्ठकर्म्मादिगतावश्यकवत् साध्वादिरूपा । सा चासौ आवश्यकतद्वतोरभेदोपचारादावश्यकं च स्थापनावश्यके स्थापनालक्षणं च सामान्यत इदमुक्तं । यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्करणि लेप्यादिकर्म्म तत्स्थापनेति क्रियते अल्पकालं च ॥ १ ॥ इति विनेयाऽनुग्रहार्थमत्रापि व्याख्यातुशब्दो नामलक्षणस्य स्थापनालक्षणस्य भेदसूचकः। स चासावर्थश्च तदर्थो भावेन्द्रभावावश्यकादिलक्षणस्तेनवियुक्तं रहितं यद्वस्तु तदभिप्रायेण भावेन्द्राद्यभिप्रायेण क्रियते स्थाप्यते तत् स्थापनेति संबन्धः किंविशिष्टं यदित्याह । यच्च तत्करणि तेन भावेन्द्रादिना सहकारणिः सादृश्यं तस्य तत्करणि तत्सदृशमित्यर्थः । चशब्दात्तदकरणि चाक्षादिवस्तु गृह्यते। अवसदृशमित्यर्थः । किंपुनस्तदेवं भूतं वस्त्वित्याह । लेप्यादिकर्म्मेति लेप्यपुत्तलिकादीत्यर्थः । आदिशब्दात् काष्ठपुत्तलिकादि गृह्यते अक्षरादि अनाकारं कियंतं कालं तत् क्रियते इत्याह । अल्पः कालो यस्य तदल्पकालमित्वरकालमित्यर्थः । च शब्दाद्यावत्काथिकं शाश्वतप्रतिमादि यत्पुनर्भावेन्द्राद्यर्थरहितं साकारमनाकारं वा तदर्थाभिप्रायेण क्रियते तत् स्थापनेति तात्पर्यमित्यार्यार्थः ॥

इदानीं प्रकृतमुच्यते (जण्णंति) णमिति वाक्याऽलंकारे यत्काष्ठकर्मणि वा चित्रकर्म्मणि वा वराटके वा एको वा अनेको वा सद्भावस्थापनायां वा असद्भावस्थापनायां वा। आवस्सएति। आवश्यकतद्वतोरभेदोपचारात्तद्वानिह गृह्यतेऽस्तश्चैको वा अनेको वो कथं भूतां अन उच्यते। आवश्यकक्रिया वाआवश्यक

कथयेदिति तद्यथा यदि लौकिककुप्रावचनिकपार्श्वस्थादिदानानि प्रशंसत्यवद्यतरागादीनि वा ततः पृथिवीकायादयो व्यापादिता भवेयुरथ दूषयति ततोऽपरेषामंतरायापादनेन तत्कृतो बंधविपाकानुभवः स्यादुक्तं च ।

जे उ दाणं पसंसन्ति वहमिच्छंति पाणिणं ।
जे उ णं पडिसेहेंति वित्तिच्छेयं करंति ते ॥

तस्मात्तदवद्यतरागादिविधिप्रतिषेधव्युदासेन यथावस्थितं दानं शुद्धं प्ररूपयेदसावद्यानुष्ठानं चेत्येवं च कुर्वन्नुभयदोषपरिहारी जंतूनामाश्वासभूर्भवतीत्येतत् दृष्टांतद्वारेण दर्शयति यथा सौद्वीपो संदीनः शरणं भवत्येवमसावपि महामुनिः तद्रक्षणोपायोपदेशतः बध्यमानानां बधकानां च तदध्यवसायान्निवर्त्तने न विशिष्टगुणस्थानापादनाच्छरण्यो भवति तथा हि यथोद्दिष्टेन कथाविधानेन धर्मकथां कथयन् कांश्चन प्रव्राजयति कांश्चन श्रावकान्विधत्ते कांश्चन सम्यग्दर्शनयुजः करोति केषांचित्प्रकृतिभद्रतामापादयति । आचा० उ०अ० इय०

आसायणिज्ज–आश्वादनीय–त्रि० आ. स्वद णिच् कृत्यहलमिति कर्त्तयनीयः । प्रज्ञा० जी० ईषत्स्वादयोग्ये, दशा० जं० ।

आसायवडिया–आस्वादप्रतिज्ञा–स्त्री० विषयभोगप्रतिज्ञायाम् आचा० ।

आसारेंत-आसारयत्-त्रि० ईषत्स्वस्थानत्याजनेनसारयति,ज्ञा०

आसालिय–आशालिक–पु० उरः परिसर्पस्थलचरपंचेन्द्रियतिर्यग्भेदे, प्रज्ञा० ।

सेकिंतं आसालिया ? कहि णं भंते ! आसालिया समुच्छंति गोयमा ! अंतो मणुस्सखेत्ते अड्ढाइज्जेसु दीवेसु णिव्वाघाएण पन्नरससु कम्मभूमीसु वाघातं पडुच्च पंचसु महाविदेहेसु चक्कवट्टी खंधावारेसु वासुदेवखंधावारेसु बलदेवखंधावारेसु मंडलियखंधावारेसु महामंडलियखंधावारेसु गामनिवेसेसु नगरनिवेसेसु निगमनिवेसेसु खेडनिवेसेसु कव्वडनिवेसेसु मडंबनिवेसेसु दोणमुहनिवेसेसु पट्टणनिवेसेसु आगरनिवेसेसु आसमनिवेसेसु संवाहनिवेसेसु रायहाणिनिवेसेसु एएसिणं चेव विणासेसु एत्थ णं आसालिया समुच्छंति । जहन्नेणं अंगुलस्स असंखिज्जइ भागमित्तीए ओगाहणाए, उक्कोसेणं बारसजोयणाइं । तहाणुरूवं च णं विक्खंभबाहल्लेणं भूमिं दालित्ताणं समुट्ठेत्ति । असन्नी मिच्छादिट्ठी अन्नाणी अंतोमुहुत्तद्धाउया चेव कालं करेइ । सेत्तं आसालिया ॥ जी० ॥

आसावग–आश्रावक–त्रि० बन्धके विशे० ।

आसाविणी–आस्राविणी–स्त्री० शतच्छिद्रायाम् ।

जहा आसाविणि जाइअंधे दुरुहिया, इच्छन्ति पारमागं तु अंतराय विसीयति । सूत्र. श्रु० १ । अ० ११ ॥

आसास–आश्वास–पु० आश्वासन्त्यस्मिन्नित्याश्वासो नामादिसूत्रव्यतिरिक्तो द्रव्यतो यानपात्रद्वीपादौ भावतो ज्ञानादौ आचारांगे आचा० धीरो भव अहं ते सर्वमपि वैयावृत्त्यं करिष्ये–इत्यादिरूपे प्राणिनामाश्वासने, वृ० प्रश्न. विश्रामे, भारं वहत आश्वासाः स्था० ।

भारणं वहमाणस्स चत्तारि आसासा पन्नत्ता तंजहा जत्थ णं अंसाओ अंसं साहरइ तत्थ विय से एगे आसासे पन्नत्ते जत्थ वि यणं उच्चारं वा पासवणं वा परिठावेति तत्थ वि य से एगे आसासे पन्नत्ते जत्थ वि य णं णागकुमारावासंसि वा सुवन्नकुमारावासंसि वा वासं उवेइ तत्थ वि य से एगे आसासे पण्णत्ते जत्थ वि य णं आवकहाए चिट्ठइ तत्थ वि य से एगे आसासे पन्नत्ते । एवमेव समणोवासगस्स चत्तारि आसासा प० तं० जहा सीलव्वयगुणव्वयवेरमणपच्चक्खाणपोसहोववासाइं पडिवज्जइ तत्थ वि य से एगे आसासे पन्नत्ते जत्थ वि य णं सामाइयं देसावगासियमणुपालेइ तत्थ वि य से एगे आसासे पन्नत्ते जत्थ वि य णं चाउद्दसिए मुद्दिट्ठपुन्निमासीसु पडिपुन्नं पोसहं सम्मं अणुपालेइ तत्थ वि य से एगे आसासे पन्नत्ते जत्थ वि य णं अपच्छिममारणंतियसंलेहणाजूसणाजूसिए भत्तपाणपडियाइक्खिए पाओवगए कालमणवकंखमाणे विहरइ तत्थ वि य से एगे आसासे पन्नत्ते ॥

भारं धान्यमुक्तादिकं वहमानस्य देशान्तरं नयतः पुरुषस्य आश्वासा विश्रामाः भेदश्च तेषामवसरभेदेनेति यत्रावसरे अंशादेकस्मात् स्कंधादंशमिति स्कन्धान्तरं संहरति नयति भारमिति प्रक्रमः तत्रावसरेपि चेति उत्तराश्वासापेक्षया समुच्चये स तस्य वोढुरिति परिष्ठापयति व्युत्सृजति नागकुमारावासादिकमुपलक्षणमतो ऽन्यत्र वा यतने वा समुपैतीति रात्रौ वसति यावती यत्परिमाणा कथा मनुष्योयं देवदत्तादिर्वायमिति व्यपदेशलक्षणा यावत्कथा तया यावज्जीवमित्यर्थः । तिष्ठति वसतीत्ययं दृष्टान्त एवमेवेत्यादिदार्ष्टान्तिकः श्रमणान् साधूनुपास्त इति श्रमणोपासकः श्रावकस्तस्य सावद्यव्यापारभाराक्रान्तस्याश्वासास्तद्विमोचनेन विश्रामाश्चित्तस्याश्वासनानि स्वास्थ्यानि इदं मे परलोकभीतस्य त्राणमित्येवंरूपाणीति स हि जिनागमसंगमावदातबुद्धितया आरम्भपरिग्रहौ दुःखपरंपराकारिसंसारकान्तारकारणभूततया परित्याज्यावित्याकलयन् करणभटवशतया तयोः प्रवर्त्तमानो महान्तं खेदं संतापं भयं चोद्वहति भावयति चैवंहि ।

एयं जिणाण आणा–चारियं मह एरिसं अउण्णस्स ।
एयं आलप्पालं अच्चादूरं वि सवयइ ॥ १ ॥
हयमम्हाणं नाणं हयमम्हाणं मणुस्समाहप्प ॥
जे किल लद्धविवेया विचिट्ठिमो बालवा लुव्वात्ति ॥२॥

यत्रावसरे शीलानि समाधानविशेषा ब्रह्मचर्यविशेषा वा व्रतानि स्थूलप्राणातिपातविरमणादीनि अन्यत्र तु शीलान्यणुव्रतानि सप्तशिक्षाव्रतानि तदिह न व्याख्यातं गुणव्रतादीनां साक्षादेवोपादानादिति गुणव्रते दिग्व्रतोपभोगपरिभोगव्रतलक्षणे विरमणान्यनर्थदण्डविरतिप्रकारा रागादिविरतयो वा प्रत्याख्यानानि नमस्कारसहितादीनि पौषधः पर्वदिनमष्टम्यादि तत्रोपवसनं भक्तार्थः पौषधोपवास एतेषां द्वंद्वस्तान् प्रतिपद्यतेऽभ्युपगच्छति तत्रापि च स तस्यैक आश्वासः प्रक्रमो यत्रापि च सामायिकं सावद्ययोगपरिवर्जननिरवद्ययोगप्रतिसे

वनलक्षणं यद्दावस्थितः श्राद्धः श्रमणभूतो भवति तथा देशे दिग्व्रतगृहीतस्य दिक्परिमाणस्य विभागोऽवकाशोऽवस्थानमवतारो विषयो यस्य तद्देशावकाशं तदेव देशावकाशिकं दिग्व्रतगृहीतस्य दिक्परिमाणस्य प्रतिदिनं संक्षेपकरणलक्षणं सर्वव्रतसंक्षेपकरणलक्षणं वानुपालयति प्रतिपत्त्यनन्तरमखण्डमासेवत इति तत्रापि च तस्यैव आश्वासः प्रज्ञप्त इति उद्दिष्टेत्यमावास्यापरिपूर्णमित्यहोरात्रं यावत् आहारशरीरसत्कारत्यागब्रह्मचर्यव्यापारलक्षणभेदोपेतमिति यत्रापि च पश्चिमैवा मंगलपरिहारार्थमपश्चिमा चासौ मरणमेवान्तो मरणान्तस्तत्र भवा मारणान्तिकी सा चेत्पश्चिममारणान्तिकी सा चासौ संलिख्यते अनया शरीरकषायादीनि संलेखनात्तपोविशेषः सा चेति अपश्चिममारणान्तिकसंलेखनात् तस्याः ( कुसणत्ति ) जोषणा सेवनालक्षणो यो धर्म्मस्तया ( कूसिपत्ति ) जुष्टः सेवितोऽथवा क्षिप्तः क्षपितदेहो यस्स तथा । तथा भक्तपाने प्रत्याख्याते येन सः पादपवत् उपगतो निश्चेष्टतया स्थितः पादपोपगतः अनशनविशेषं प्रतिपन्न इत्यर्थः । कालं मरणकालं अनवकांक्षन् तत्राऽनुत्सुक इत्यर्थः विहरति तिष्ठति । स्था० ४ ठा० ॥

आसासंकरसमुब्भव–आश्वासांकुरसमुद्भव– न० आश्वास एव वांकुरप्ररोहस्तस्य समुद्भव उत्पत्तिर्यस्मात्तदाश्वासांकुरसमुद्भवम् ग्लानस्याश्वासप्ररोहबीजे, । वृ० १ उ० ॥

आसासदीव–आश्वासद्वीप–पुं० आश्वास्यतेऽस्मिन्निति आश्वासः स चासौ द्वीपश्चाश्वासद्वीपः यदिवा आश्वसनमाश्वासः आश्वासाय द्वीप आश्वासद्वीपः । नदीसमुद्रबहुमध्यप्रदेशे, भिन्नबोधिस्थादयो यमवाप्याश्वासंति तस्मिन्द्रव्यद्वीपविशेषे, स च द्विधा सन्दीनोऽसन्दीनश्च–आचा० ६ अ० ३ उ० पं० सू०—

आसित्त–आसिक्त–पुं० स्त्रीशरीरावसक्ते, " नपुंसकविशेषे „ स च मोहोत्कटतया मेहनं योनावनुप्रवेश्य नित्यमास्ते वृ० ४ उ० पं० भा० पं० चू० ॥

जो विग्गहं अणुप्पवेसिअ अतीसा गारिअं स आसित्तो णयसे जावोवसमं अलजंतो सो वि अपुमं जवे पं० भा०।

सुगंधजलच्छटादानेन कल्प० उदकच्छटने दशा० । कृतासेके जी० १ प्र० ३ प्र० । ज्ञा० १ अ० आ० म० प्र० ६ अ० । ईषत्सिक्ते. भ० ए श० ३३ उ० ।

( आसित्तसित्तसुईअ सम्मट्ठरत्थंतरावणविहियं ) आसिक्तानीषत्सिक्तानि च तदन्यथा अत एव सुचिकानि पवित्राणि संमृष्टानि कचवरापनयनेन रथ्यामध्यानि आपणवीथयश्च हट्टमार्गा यत्र तत्तथा भ० ए श० ३३ उ० ।

आसिम–आशिमन्–पुं० आशोर्भाव इमनिच् टिलुप्त । शीघ्रत्वे वाच० ।

आसिय–आश्रित–त्रि० प्रतिष्ठिते स्था० ६ ठा० आश्रयं प्राप्ते शरणागते वाच० ।

आश्विक–त्रि० अश्वान् भारभूतान् हरति वहति आवहति वा ठञ् भारभूतस्याऽश्वस्य हारके वाहके आवाहके । अश्वस्य निमित्तं संयोगं उत्पातो वा ठक् अश्वलाभसूचके संयोगे उत्पाते निमित्ते च । वाच० ॥ अश्वस्वामिनि, ४ व्य. ॥

जो णाम मारहीणं, मक्कुजो जहवाइणो दमए ।

दुट्ठे वि अ जोआसे, दमेइ तं आसियंविंत्ति ।
पं० व० १ द्वा० ॥

आसियावण–आश्रितापन–न० अपहरणे वृ० १ उ० । निष्काशयितुमासादने । व्य० १० व्य० स्तैन्ये, वृ० ४ उ० ।

आसियावाय–आशीर्वाद– पुं० बहुपुत्रो बहुधनो बहुधर्मो दीर्घायुस्त्वं भूया इत्यभीष्टोक्तौ,आसियावायवियागरेज्जा-सूत्र० १ श्रु० १४ अ० ।

आसी–आशी– स्त्री० सर्पदंष्ट्रायाम-विशे० । स्था० ४ ठा० ।

आसीण–आसीन– त्रि० उपविष्टे । प्रश्न० १ सं० द्वा० ।

आसिते । आव० ४ अ० ।

आसीविस-आशीविष-पुं० आश्यो दंष्ट्रास्तासु विषं यस्य सः ।

आसीदाढातग्गय महाविसा आसीविसा इति ।

दंष्ट्राविषे दर्वीकरसर्पभेदे, । प्रज्ञा० १ पद । जी० १प्र० नागे. प्रश्न० १ द्वा० । स्था० ४ठा० आशीविष इवाशीविषः यथा हि तमत्यन्तमवजानानो मृत्युमवाप्नोति एवमेतमपि मुनिमवजानानानामवश्यंभावि मरणम् । आशीविषलब्धिमति शापानुग्रहसमर्थे । उत्त० १२ अ० ।

( आशीविषाणां भेदाः )

कइविहा णं भंते ! आसीविसा पण्णत्ता २ गोयमा ! दुविहा आसीविसा पण्णत्ता । तंजहा । जाइ आसीविसा य कम्मआसीविसा य ॥

कइइत्यादि । आसीविसत्ति ॥ आशीविषा दंष्ट्राविषाः । जाइ आसीविसत्ति । जात्या जन्मना आशीविषा जात्याशीविषाः कम्मआशीविसत्ति ॥ कर्म्मणा क्रियया शापादिनोपघातकरणेनाशीविषाः कर्म्माशीविषास्तत्र पंचेन्द्रियतिर्यंचो मनुष्याश्च कर्म्माशीविषाः पर्याप्तका एव एते हि तपश्चरणानुष्ठानतोऽन्यतो वगुणतः खल्वाशीविषा भवन्ति शापप्रदानेनैव व्यापादयन्तीत्यर्थः । एते चाशीविषलब्धिस्वभावात्सहस्रारान्तदेवेष्ववोपपद्यन्ते । देवास्त्वेत एव ये देवत्वेनोत्पन्नास्तेऽपर्याप्तकावस्थायामनुभूतभावतया कर्म्माशीविषा इति । उक्तंच । शब्दार्थाभेदसंवादिभाष्यकारेण । आसीदाढातग्गय, महाविसासीविसादुविहभेया । तेकम्मजाइभेएण, णेगहा चउविहविगप्पा ॥ ॥ १ ॥ भ० टी० ए श० २ उ० ॥

जात्याशीविषाः ।

जाइआसीविसाणं भंते ! । कइविहा २ पण्णत्ता गोयमा ? चउव्विहा पण्णत्ता । तंजहा । विच्छुयजाइआसीविसे १ मंडुकजाइआसीविसे २ उरगजाइआसीविसे ३ मणुस्सजाइआसीविसे ४ । स्था० ४ ठा० । भ० ॥ विच्छुयजाइआसीविसस्सणं भंते । केवइए विसए पण्णत्ते २ गोयमा ! । पभूणं विच्छुयजाइआसीविसे अद्धभरहप्पमाणमेत्तं बोदिंविसेणं विसट्टमाणं पकरेत्तए एवइए विसए नो चेवणं संपत्तीए करिसु वा करंति वा करिस्संतिवा मंडुकजाइअसीविसपुच्छा गोयमा ! पभूणं मंडुकजाइआसीविसे भरहप्पमाणमेत्तं बोदिंविसेणं विसपरिगयं सेसं तं चेव जाव करिस्संति वा । एवं उरगजाइआसीविसस्सवि । नवरं ।

जंबुद्दीवप्पमाणमेत्तं वोदिं विसेणं विसपरिगयं सेसं तं चेव जाव करिस्संति वा। मणुस्सजाइआसीविसस्स वि एवं चेव। नवरं। समयखेत्तप्पमाणमेत्तं वोदिं विसेणं विसपरिगयं सेसं तं चेव जाव करिस्संति वा॥

(केवइएत्ति) कियान्। विसएत्ति। गोचरो विषस्येति गम्यं। अद्धभरहप्पमाणमेत्तंति। अर्द्धभरतस्य यत्प्रमाणं सातिरेकत्रिषष्ट्यधिकयोजनशतद्वयलक्षणं तदेव मात्रा प्रमाणं यस्याः तथा तां (॥ वोदिंति ॥) तनुं (विसेणत्ति।) विषेण स्वकीयाशीप्रभवेण करणभूतेन (विसपरिगयंति) विषं भावप्रधानत्वान्निर्देशस्य विषतां परिगता प्राप्ता विषपरिगताऽतस्तामत एव। विसट्टमाणंत्ति। विकस्यन्तीं विदलन्तीम् (करेत्तएत्ति) कर्तुम् (विसंएसंति) गोचरोऽसौ अथवा (से) तस्य वृश्चिकस्य (विसट्टयाएत्ति) विषमेवार्थो विषार्थस्तद्भावस्तत्ता तस्या विषार्थतया विषत्वस्य तस्यां वा (नो चेवत्ति।) नैवेत्यर्थः (संपत्तीएत्ति) संपत्त्या एवंविधबोधिसम्प्राप्तिद्वारेण (करिंसुत्ति) अकार्षुर्वृश्चिका इति गम्यत इह चैकवचनप्रक्रमेपि बहुवचननिर्देशो वृश्चिकाशीविषाणां बहुत्वज्ञापनार्थमेवं कुर्वंति करिष्यंति त्रिकालनिर्देशश्चामीषां त्रैकालिकत्वज्ञापनार्थः। समयखेत्तत्ति। समयक्षेत्रं मनुष्यक्षेत्रं॥

कर्माशीविषाः भ०

जइ कम्मआसीविसे किं नेरइयकम्मआसीविसे तिरिक्खजोणियकम्मआसीविसे मणुस्सकम्मआसीविसे देवकम्मासीविसे। गोयमा ! नो नेरइयकम्मासीविसे तिरिक्खजोणियकम्मासीविसे वि मणुस्सकम्मासीविसे देवकम्मासीविसे वि। जइ तिरिक्खजोणियकम्मासीविसे किं एगिंदियतिरिक्खजोणियकम्मासीविसे जाव पंचिंदियतिरिक्खजोणियकम्मासीविसे गोयमा ! नो एगिंदियतिरिक्खजोणियकम्मासीविसे जाव। नो चउरिंदियतिरिक्खजोणियकम्मासीविसे पंचिंदियतिरिक्खजोणियकम्मासीविसे जइ पंचिंदियजावकम्मासीविसे किं सम्मुच्छिमपंचिंदियतिरिक्खजोणियकम्मासीविसे गब्भवक्कंतियपंचिंदियतिरिक्खजोणियकम्मासीविसे। एवं जहा वेउव्वियसरीरस्स भेओ जाव पज्जत्ता संखेज्जवासाउयगब्भवक्कंतियकम्मभूमियपंचिंदियतिरिक्खजोणियकम्मासीविसे नो अपज्जत्ता संखेज्जवासाउ य जावकम्मासीविसे। जइ मणुस्सकम्मासीविसे किं समुच्छिममणुस्सकम्मासीविसे गब्भवक्कंतियमणुस्सकम्मासीविसे २ गोयमा ! नो संमुच्छिममणुस्सकम्मासीविसे गब्भवक्कंतियमणुस्सकम्मासीविसे। एवं जहा वेउव्वियसरीरं जाव पज्जत्ता संखेज्जवासाउ य कम्मभूमियगब्भवक्कंतियमणुस्सकम्मासीविसे नो अपज्जत्ता जावकम्मासीविसे। जइ देवकम्मासीविसे किं भवणवासीदेवकम्मासीविसे जाव वेमाणियदेवकम्मासीविसे गोयमा ! भवणवासीदेवकम्मासीविसे वि वाणमंतरदेवजोइसियवेमाणियदेवकम्मासीविसे वि। जइ भवणवासीदेवकम्मासीविसे किं असुरकुमारभवणवासीदेवकम्मासीविसे जाव थणियकुमारजावकम्मासीविसे २ गोयमा ! असुरकुमारभवणवासीदेवकम्मासीविसे जाव थणियकुमारजावकम्मासीविसे जइ असुरकुमारजावकम्मासीविसे किं पज्जत्ता असुरकुमारभवणवासीदेवकम्मासीविसे किं अपज्जत्ता असुरकुमारजावकम्मासीविसे गोयमा ! नो पज्जत्ताअसुरकुमारजावकम्मासीविसे अपज्जत्ता असुरकुमारभवणवासीजावकम्मासीविसे। एवं थणियकुमाराणं। जइ वाणमंतरदेवकम्मासीविसे किं पिसायवाणमंतरदेवकम्मासीविसे एवं सव्वेसिं अपज्जत्तगाणं जोइसियाणं सव्वेसिं अपज्जत्तगाणं। जइ वेमाणियदेवकम्मासीविसे किं कप्पोवगवेमाणियदेवकम्मासीविसे कप्पातीयवेमाणियदेवकम्मासीविसे गोयमा ? कप्पोवगवेमाणियदेवकम्मासीविसे नो कप्पातीयवेमाणियदेवकम्मासीविसे। जइ कप्पोवगवेमाणियदेवकम्मासीविसे किं सोहम्मकप्पोवगजावकम्मासीविसे जाव अच्चुयकप्पोवगजावकम्मासीविसे गोयमा ! सोहम्मकप्पोवगवेमाणियदेवकम्मासीविसे वि जाव सहस्सारकप्पोवगवेमाणियदेवकम्मासीविसे वि, नो आणयकप्पोवगवेमाणियदेवकम्मासीविसे जाव नो अच्चुयकप्पोवगवेमाणियदेवकम्मासीविसे। जइ सोहम्मकप्पोवगवेमाणियदेवकम्मासीविसे किं पज्जत्ता सोहम्मकप्पोवगजावकम्मासीविसे अपज्जत्ता सोहम्मजावकम्मासीविसे- गोयमा ! नो पज्जत्ता सोहम्मकप्पोवगवेमाणियदेवकम्मासीविसे अपज्जत्ता सोहम्मकप्पोवगवेमाणियदेवकम्मासीविसे एवं जाव नो पज्जत्ता सहस्सारकप्पोवगवेमाणियदेवकम्मासीविसे अपज्जत्ता सहस्सारकप्पोवगजावकम्मासीविसे॥

टी० एवं (जहा वेउव्वियसरीरस्स भेओत्ति) यथा वैक्रियं भणत जीवभेदो भणितः तथेहापि वाच्योसावित्यर्थः। स चायं-गोयमा नो संमुच्छिमपंचिंदियतिरिक्खजोणियकम्मासीविसे गब्भवक्कंतियपंचिंदियतिरिक्खजोणियकम्मासीविसे किं संखेज्जवासाउयगब्भवक्कंतियपंचिंदियातिरिक्खजोणियकम्मासीविसे असंखेज्जवासाउ य जाव कम्मासीविसे गोयमा संखेज्जवासाउ य जाव कम्मासीविसे नो असंखेज्जवासाउ य जाव कम्मासीविसे जइ संखेज्जजावकम्मासीविसे किं पज्जत्तसंखेज्जजावकम्मासीविसे अपज्जत्तसंखेज्जजावकम्मासीविसे ? गोयमा। शेषं लिखितमेवास्ते। भ. टी.। ८ श. १ उ.॥

एतदेवसंक्षिप्याह।

(आसीविस इति) आश्यो दंष्ट्रास्तासु विषं येषां ते आशीविषाः ते द्विविधा जातितः कर्मतश्च तत्र जातितो वृश्चिकमंडूकोरगमनुष्यजातयः क्रमेण बहुबहुतरबहुतमाविषाः वृश्चिकविषं हि उत्कर्षतोऽर्धभरतक्षेत्रप्रमाणं शरीरं व्याप्नोति। मंडूकविषं भरतक्षेत्रप्रमाणं। भुजंगमविषं जंबूद्वीपप्रमाणं। मनुष्यविषं समयक्षेत्रप्रमाणं। कर्मतश्च पंचेंद्रियतिर्यग्यो

नयो मनुष्या देवाश्चासहस्रारात् । एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणत आशीविषवृश्चिकभुजंगादिसाध्यां क्रियां कुर्वन्ति । शापप्रदानादिना परं व्यापादयंतीति भावः । देवास्त्वपर्याप्तावस्थायां तच्छक्तिमंतोऽवसातव्याः । ते हि पूर्वं मनुष्यभवे समुपार्जिताशीविषलब्धयः सहस्रारांतदेवेष्वभिनवोत्पन्ना अपर्याप्तावस्थायां प्राक्तनविकाशीविषलब्धिसंस्कारादाशीविषलब्धिमंतो व्यवह्रियंते । ततः परं तु पर्याप्तावस्थायां संस्कारस्यापि निवृत्तिरिति न तद्व्यपदेशभाजः । यद्यपि च नाम पर्याप्ता अपि देवाः शापादिना परं व्यापादयंति । तथापि न लब्धिव्यपदेशो भवप्रत्ययतस्तथा रूपसामर्थ्यस्य सर्वसाधारणत्वात् गुणप्रत्ययो हि सामर्थ्यविशेषो लब्धिरिति प्रसिद्धिः ॥ आ. म. प्र. १ अ. । विशे० प्रव० द्वा० १३८ जंबूद्वीपे मन्दरस्य पश्चिमे शीतोदाया महानद्या दक्षिणे वक्षस्कारपर्वतविशेषे, स्था० ४ । ८ । ठा. । ( दो आसीविसा ) स्था० २ ठा० ।

आसीविसत्त–आशीविषत्व–न०शापानुग्रहसामर्थ्य-स्था.५ठा.।

आसीविसभावणा-आशीविषभावना-स्त्री०आशीविषत्वं पूर्वोक्तस्वरूपं भाव्यते प्रतिपाद्यते यासु ग्रन्थपद्धतिषु ता आशीविषभावना अंगबाह्यकालिकश्रुतभेदे। पा० आशीविषभावनायां पिच्छिकायामाशीविषत्वलब्ध्येयथा समाचरणैराशीविषतयाकर्म बध्यते व्य० १ उ. सा च चतुर्दशवर्षपर्यायस्य दीयते पं० व० २ द्वा. ॥

आसीविसलद्धि–आशीविषलब्धि–स्त्री० ( तपश्चरणमाहात्म्याद्, गुणादितरतोपि वा ॥ आशीविषसमर्थाः स्युर्निग्रहेऽनुग्रहेऽपि च ॥ १ ॥ ग० अधि० । इत्युक्तस्वरूपे निग्रहाऽनुग्रहसामर्थ्ये. ग. अ. । आ० चू० १

आसीस–आशिष्–स्त्री० आ. शास क्विप्-आङ्पूर्वकत्वात् अत इत्वम् गोणादित्वादन्त्यस्यात्वम् । इष्टार्थाविष्करणे प्रार्थने, च । वाच० ।

आसु–आशु–अव्य. शीघ्रे,-वि० । नि० आव. । सूत्र० क्षिप्रे सूत्र० १ श्रु. ४ अ. ॥ स्वल्पकाले-आव. ।

आसुकार–आशुकार–पु० करणं कारः आचित्तीकरणं गृह्यते आशु शीघ्रं कार आशुकारः । मारणे, । तद्धेतुत्वाद्दाहविषाचिसूचिकादौ, आव० मरणावसरे. च । आतु० ॥

आसुकारोवगय–आशुकारोपगत–त्रि० आशुकारेण शूलादिनोपगतः कालगत आशुकारोपगतः । शूलादिना मृते । व्य. ४ उ. ।

आसुग–आशुग–पु० आशु-गम-ड-वायौ, । सूर्ये वाणे । वाच०

आसुपण्ण–आशुप्रज्ञ–पु० आशु शीघ्रं कार्याकार्येषु प्रवृत्तिनिवृत्तिरूपा प्रज्ञा मतिर्यस्य स आशुप्रज्ञः उत्त० क्षिप्रप्रज्ञे । सूत्र० १ श्रु. १४ अ. पटुबुद्धौ । सदसद्विवेकविकले ।सूत्र. २ श्रु. १ अ. निगदवर्णनात् आव० सर्वत्र सदोपयोगाद्छद्मस्थे० सूत्र १ श्रु. ६ अ. । मनसाऽपर्यालोच्यैव पदार्थपरिच्छित्तिविधायके सूत्र० १ श्रु. ६ अ. । केवलज्ञानिनि उत्पन्नदिव्यज्ञाने ( णेआसुपणीकासव आसुपन्ने ) सूत्र. १ श्रु. ६ अ. ॥

आसुयर–आशुचर–त्रि० शीघ्रसंचरणशीले-विशे० ।

आसुर–आसुर–न० असुरकुमारभावे, उत्त०। असुरभावनाजनितेऽनुष्ठाने, । स्था. पणबन्धेन कन्याप्रदाने - विवाहभेदे-ध०

आसुरत्ता–आसुरता–स्त्री० आसुरभावे. स्था० ।

आसुरा–री-आसुरी–स्त्री० असुरा भवनपतिदेवविशेषास्तेषामियमासुरी येष्वनुष्ठानेषु वर्त्तमानोऽसुरत्वं जनयति तैरात्मनो वासने वृ. उप. स्था० ।

> चउहिं ठाणेहिं जीवा आसुरत्ताए कम्मं पकरेति तंजहा कोवसीलयाए पाहुडसीलयाए संसत्ततवोकम्मेणं निमित्ताजीवयाए । स्था. ४ ठा.

व्या० चउहिं ठाणेहिमित्यादि कंठ्यं नवरं असुरेषु भव आसुर असुरविशेषस्तद्भाव आसुरत्वं तस्मै आसुरत्वाय तदर्थमित्यर्थः अथवा असुरतायै असुरताया वा कर्म तदायुष्कादि प्रकुर्वन्ति कर्तुमारभन्ते तयया क्रोधनशीलतया कोपस्वभावत्वेन प्राभृतशीलतया कलहनसंबंधतया संसक्ततपःकर्मणा आहारोपधिशय्यादि प्रतिबद्धभावतपश्चरणेन निमित्ता जीवनतया त्रैकालिकशुभाशुभादिविषयनिमित्तोपात्ताहाराद्युपजीवनेनेति । स्था. ४ ठा. ।

अथासुरीमाह ।

> अणुबद्धविग्गहो वि य संसत्ततवोनिमित्तमाएसी ।
> निक्किवनिराणुकंपो आसुरियं भावणं कुणइ ॥

अनुबद्धविग्रहसंसक्ततया निमित्तादेशी निष्कृपो निरनुकंपस्सत्त्वासुरीं भावनां करोतीति निर्युक्तिसमासार्थः । वृ. उ. १ प्रव० ध० । पं० व० । आसुर्यपि सदा विग्रहशीलत्व १ संसक्ततपः २ निमित्तकथन ३ निष्कृपता ४ निरनुकम्पता ५ भेदेन पंचविधा उक्तंच सइविग्गहेत्यादि १ असुराणामियमासुरी सूत्र० । रौद्राणां रुद्रकर्मकारिणां भावदिशि, उत्त० ।

आसुरि–असुरि–पु० सांख्याचार्यकपिलप्रथमशिष्ये, यदाह आसुरिः विविक्ते दृक्परिणतौ भोगोऽस्य कथ्यते । स्या० । आ० म० प्र. आ. चू. ।

आसुरिय–आसुरिक–पु० असुराणां चारुकोपेन चरन्तीति आसुरिकाः । प्राक्संयतभवे कृतचारुकोपेषु, असुरत्वेनोत्पन्नेषु । आतु० ।

आसुर्य–न० असुरभावे, प्रश्न० ।

आसुरुत्त–आसुरुप्त–त्रि० आशु शीघ्रं रुप्तः कोपोदयाद्विमूढो रुप् लुप् विमोहने इति वचनात् भ. श. ७ उ. ९ । शीघ्रं कोपविमूढबुद्धौ. भ० । श. ६ उ. १ । स्फुरितकोपलिंगे । ज्ञा. । अ. २ । जं. ।

आसुरोक्त–त्रि० आसुरमसुरस्यैककोपेन दारुणत्वात् उक्तं भणितं यस्य स आसुरोक्तः । असुरसदृशकोपेन दीर्घशब्दकारिणि, नि० ।

आशुरुष्ट–त्रि. आशु शीघ्रं रुष्टः क्रोधेन विमोहितो यःसः नि०कोपेन विमोहिते, विपा. अ- ९ वि० । कुपिते विपा० । क्रुद्धे-ज्ञा० । अ १६

आसूणि–आशूनि–न०येनाशूनः सन् आ समन्तात्शूनीभवति बलवानुपजायते तदाशूनीत्युच्यते। घृतपानादौ आहारविशेषे रसायनक्रियायां, च सूत्र० १ अ ६ । आसूणिमक्खिरागं च गिद्धुवघायकम्मगं-सूत्र० ।

आसूणिय–आशूनित.–त्रि०ईषच्छूनीकृते-प्रश्न० ।

आसेय–आसेक–पु० । आ सिच्-घञ्-जलादिना वृक्षादेर्सेचने,आ सम्यक् सिच्यते येन. । करणे ल्युट् आसेचनसाधने पात्रे, वाच० ।

आसेवण–आसेवन.–न०सम्यक्सेवने, सततसेवने पौनःपुन्ये, च वाच० । सम्यक्पालने– । मैथुनक्रियायाम्, । द० ।

आसेवणा–आसेवना–स्त्री० प्रतिसेवायाम्, पंचा. । संयमस्य विपरीताचरणे,–ध० अधि० ३ । प्रव. । अभ्यासे, आ० चू० यथावस्थितसूत्रानुष्ठाने । सूत्र० श्रु० १ अ० १४ ।

आसेवणाकुसील–आसेवनाकुशील–पु० संयमस्य विपरीताराधनया कुशीले, प्रव० । स्वरूपमस्य कुसीलशब्दे ॥

आसेवणासिक्खा–आसेवनाशिक्षा.–स्त्री०" औधिकी दशधाऽऽख्या च तथा पदविभागयुक् । सामाचारी त्रिधेत्युक्ता तस्याः सम्यक् प्रपालनम्" इत्युक्तलक्षणे शिक्षाभेदे–ध. अधि. ३ ।

आसेविय–आसेवित–त्रि०सकृत्करणात्(ज्ञा० आचा० पंचा०) प्रतिसेविते, सम्यक् सेविते, पौनः पुन्येन सेविते, च भावे. क्तः आसेवनायाम्, । वाच. ।

आसोअ–अश्वयुज्–पु० । आश्विनमासे,–जो० ( आसोअमावासाए नेमिजिणिंदस्स) । आ. म. प्र० ।

आसोत्थ–अश्वत्थ–पु–बहुबीजकवृक्षविशेषे, प्रश्न० ।

आहंसु–आख्यातवति, प्रश्न० ।

आहच्च–आहत्य–अव्य० सहसा इत्यस्य ( आचा० ) कदाचिदित्यस्य वार्थे भ० नि. चू. ४ व्य. । आचा० । उत्त० आहत्य अव्य० ढौकित्वा आचा० । उपेत्य । आचा० ॥ व्यवस्थाप्य । सूत्र ० श्रु २ अ० १ । सूत्र. । परिभाज्य । परिभागीकृत्यइत्यस्य वार्थे, आचा०"आहच्चदिज्जमाणं भुंजमाणे"सबले आहृत्य दीयमानं स्वस्थानात्साध्वर्थमभिमुखदानमानीय, दशा. ।

आहच्चा–आहत्या–स्त्री०आहनने,– प्रहारे, । नि० ।

आहट्ट–आहत्त–पुं–प्रेहलिकायां, वृ० ॥

आहट्टु–आहृत्य–अव्य. व्यवस्थाप्य अपाहृत्य वेत्यर्थे । सूत्र० अभिहडं आहट्टु देसियं । सूत्र० श्रु० २ अ० १ ।

आहड–आहृत–त्रि० प्रत्यादौडः ७ । १ । ६ । इति तस्य डः प्रा० साध्वर्थं यद् गृहस्थेन नीयते तदाहृतम्. सूत्र० श्रु०१ अ०५ आनीते,–आव० आचा० दश० । प्राहणके– वृ० उ. २ । आहृतं द्विधा स्वग्रामाहृतं परग्रामाहृतं । सप्रत्यवायमप्रत्यवायं चेत्याद्यन्याहृतशब्दे । जीत० नि. चू० व्य० ।

आहडिया–आहृतिका–स्त्री० प्राहणके–वृ० उ० २ ।

आहत्तहिय–याथात्म्य–न० यथातथाभावो याथातथ्यम् धर्ममार्गसमवसरणाख्याध्ययने तत्रोक्तार्थ-तत्त्वे सत्तानुगतसम्यक्त्वे–चारित्रे, च-सूत्र० यथावस्थितेऽर्थे । सूत्र० श्रु०१ अ० १ परमार्थेन परमार्थचिंतायां सम्यग्ज्ञानादिके–सूत्र० श्रु १ अ० १३ । तत्प्रतिपादके त्रयोदशे सूत्रकृताध्ययने । सम०२ ३ स. ।

आहम्म–आहम्म–धा. हम्म गतौ. आपूर्वः । आहम्मई आहम्माति–प्रा० ।

आहम्मत्–आहन्यमान–त्रि० वाद्यमानेषु पणवादिषु, आहम्मं ताणं पणवाणं पडिहाणं । प्रा० ।

आहय–आहत–त्रि० अननुबद्धे–स्था० प्रेरिते–आव० रा० आवश्यकर्त्तव्ये–गमनागमनादौ । प्रव० । चूर्णिते, । प्रति० । आहृत–त्रि० उपदर्शित–प्रति० ।

आख्यात–न. आख्यानकप्रतिबद्धे–प्रज्ञा० । जी० स्था० । आ० म. प्र० । भ० ।

आहरत्त–आनयत्– त्रि० आनयति,–द० ।

आहरण–आहरण–न० व्यवस्थापने, आचा० । स्वीकरणे आचा० । आनयने,–सूत्र० श्रु० २ अ० २ । आचा० आदाने, ग्रहणे, सूत्र० श्रु० १ अ० ७ ।

उदाहरण–न० उदाह्रियते प्राबल्येन गृह्यतेऽनेनदार्ष्टान्तिकोऽर्थ इत्युदाहरणम् द० साध्यसाधनान्वयप्रदर्शने दृष्टान्ते, आ. म. प्र. । विशे० !

आहरणं दुविहं चउव्विहं होइ इक्कमेक्कं तु ।

आ अभिविधिना ह्रियते प्रतीतौ नीयते अप्रतीतोऽर्थोऽनेनेत्याहरणं यत्र समुदित एव दार्ष्टान्तिकोऽर्थ उपनीयते यथा पापं दुःखाय ब्रह्मदत्तस्यैवेति । द० अ० १ स्था० ।

आहरणे चउव्विहे पन्नत्ते । तंजहा आवाए ।
उवाए ठवणाकम्मे पडुप्पन्नविणासीआ ॥
सांप्रतमुदाहरणमभिधातुकाम आह ॥
चउहा खलु आहरणे होइ अवाउ उवाय ठवणा य ।
तह य पडुपन्नविणासमेव पढमं चउविगप्पं ॥ ५४ ॥

व्या० चतुर्धा खलूदाहरणं भवति अथ चतुर्धा खलूदाहरणे विचार्यमाणे भेदो भवति । तद्यथा । अपायः उपायः स्थापना च तथा च प्रत्युत्पन्नविनाशमेवेति स्वरूपमेव प्रपंचेन भेदतो निर्युक्तिकार एव वक्ष्यति द० अ० १ अपायादीनां व्याख्याऽन्यत्र स्वस्वस्थाने ।

आहरणतद्देश–आहरणतद्देश–पु० तस्य देशस्तद्देशः स चासावुपचारादाहरणं चेति प्राकृतत्वादाहरणशब्दस्यपूर्वनिपाते । आहरणतद्देशः । दृष्टान्तार्थदेशेनैव दार्ष्टान्तिकस्यार्थस्योपनयनं क्रियते तत्तद्देशेउदाहरणमिति-यथा चन्द्र इवमुखमस्या इति । इह हि चन्द्रे सौम्यत्वलक्षणेनैव देशेन मुखस्योपनयननाभिष्टेन नयननासावर्जितत्वं कलंकादिना । स्था० ठा. । ४ । आहरणतद्देसे चउव्विहे पन्नत्ते तंजहा अणुसट्ठि उवालंभे पुच्छाणिस्सावयणे । अनुशास्त्यादीनां व्याख्या स्वस्थाने ।

आहरणतद्दोस–आहरणतद्दोष–पु० तया तस्यैवाहरण तद्देशस्यैवाहरणस्य संबन्धी साक्षात्प्रसंगसंपन्नो वा दोषस्तद्दोषः स चासौ धर्मे धर्मिण उपचारादाहरणं चेति प्राकृतत्वेन पूर्वनिपातादाहरणतद्दोषः । अथवा तस्याऽऽहरणस्य दोषो यस्मिंस्तत्तथा । दुर्हेतुभेदे,–स्था० ठा. ४ इह साध्य साधन कैवल्यं नाम दृष्टांतदोषो यथासत्यादिवचनरूपं तद्दोषाहरणं यथा सर्वथाहमसत्यं परिहरामि गुरुमस्तककर्त्तनवदिति । यद्वा साध्यासिद्धिं कुर्वदपि दोषान्तरमुपनयाति तदपि तदेव यथा सत्यं धर्म्ममिच्छंति लौकिकमुनयोऽपि " वरं कूपशताद्वापी वरं वापीशतात् क्रतुः । वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरमिति " । १ । वचनवक्तृनारदवदिति अनेन च श्रोतुः पुत्रक्रतुप्रभृतिषु प्रायः संसारकारणेषु धर्म्मप्रतीतिराहितेति आहरणतद्दोषतेति यथा वा बुद्धिमता केनापि कृतमिदं जगत्सन्निवेशविशेषवत्वात् घटवत् स चेश्वर इति अनेन हि स बुद्धिमान् कुंभकारतुल्योपीश्वरः सिध्यतीति ईश्वरश्च स विवक्षित इति स्था० । ४ ठा.

तद्यथा ।

आहरणतद्दोसे चउव्विहे पन्नत्ते । तं जहा । अधम्मजुत्ते पडिलोमे आत्तोवणीए दुरोवणीए ॥

स्था० ठा. ४ दश० अ. २ ।

आहरिज्जमाण—आह्रियमाण—त्रि० खाद्यमाने पुद्गले आहारे अभ्यवह्रियमाणे, स्था० ठा. १० । आहारतया जीवेन गृह्यमाणे,। स्था० ठा. ३ ।

आहरित्तए—आहर्तुम्—अव्य० अदनं कर्तुमित्यर्थे, । तं० ।

आहरिसिय—आधर्षित—त्रि० भर्त्सिते, आ० म. प्र० ।

आहवण—आह्वान—न० संशब्दने,पंचा० १ वृ. ( अग्गिकुमाराहवणे धूवं एगं इहं वेति ) । पंचा० ।

आहव्वणी—आथर्वणी—स्त्री० स्वाभिधानायां सद्योऽनर्थकारिण्यां विद्यायाम, सूत्र० श्रु. २ अ. २ ।

आहा—कांक्ष्—धा० आकांक्षायाम्, कांक्षेराहाहिलंघाहिलंखवच्चवंकमहसिहविलुंपाः । ८।४।१९ । इति कांक्षेराहादेशः । आहाइ । कांक्षति । प्रा० ।

आहार—आधार—पु० अधिकरणे, विशे० आ. चू. अ. १ अनु० ।

दोएहं गब्भत्थाणं आहारे पं. तं. मणुस्साणं चेव पंचिंदियतिरिक्खजोणियाणं चेव ॥

टी० द्वयोरेव गर्भस्थयोराहारोऽन्येषां गर्भस्थैवाभावादिति । स्था० ठा. २ । स चतुर्भेदस्तद्यथा वैषयिको व्यापक औपश्लेषिकः सामीप्यकश्च आ. म. द्वि. यथा ।

आहारोआहेयं च होइ दव्वं तहेव भावा य ।

द्रव्यं आधारो भवति पर्यायाणाम् । विशे० । आश्रये, ज्ञा० अ. १ आलम्बने, संथा० आधेयस्यैव सर्वलोकानामुपकारित्वात् (ज्ञा० अ.१) आधार इवाधार आश्रय इति यावत् । सम्यक्त्वे· यथा धरातलमन्तरेण निरालंबं जगदिदं न तिष्ठति एवं धर्मजगदपि सम्यक्त्वलक्षणाधारव्यतिरेकेण नावतिष्ठत इति स्वया भावनीयम् । प्रव. ध० । आधारणादाधारः । आकाशे, भ० श. २ उ. २ ।

आहार-पु०-आहरणमाहारः । ग्रहणे,क-प्र० । भोजने, प्रश्न० अभ्यवहरणे प्रव० ।

आहारनिक्षेपः ।

नामं ठवणा दविए खेत्ते भावे य होंति बोधव्वो ।
एसो खलु आहारेनिक्खेवो होइ पंचविहो ॥

(नामं ठवणेत्यादि)नामस्थापना द्रव्यक्षेत्रभावरूपः पंचप्रकारो भवति निक्षेप आहारपदाश्रय इति। तत्र नामस्थापनेअनादृत्य द्रव्याहारं प्रतिपादयितुमाह ।

दव्वे सचित्तादी खेत्ते नगरस्स जणवओ होइ ।
भावाहारो तिविहो ओए लोमे य पक्खेवे ॥

(दव्वे इत्यादि ) द्रव्याहारे चिन्त्यमाने सचित्तादिराहारस्त्रिविधो भवति। तद्यथा सचित्तोऽचित्तो मिश्रश्च तत्रापि सचित्तः षड्विधः पृथिवीकायादिकः। तत्र सचित्तस्य,पृथिवीकायस्य लवणादिरूपापन्नस्याहारो द्रष्टव्यः तथाप्कायादेरपीति एवं मिश्रोऽचित्तश्चायोज्यः नवरमग्निकायमचित्तं प्रायशो मनुष्या आहारयंति ओदनादेस्तद्रूपत्वादिति । क्षेत्राहारस्तु यस्मिन्क्षेत्रे आहारः क्रियते उत्पद्यते व्याख्यायते। यदि वा नगरस्य यो देशो धान्यधनादिनोपभोग्यःस क्षेत्राहारः। तद्यथा । मथुरायाः समासन्नो देशः परिभोग्यो मथुराहारो माठरकाहारः खेडाहार इत्यादिभावाहारस्त्वयं । क्षुधोदयाद्भक्षपर्यायोपपन्नं वस्तु यदाहारयति स भावाहार इति तत्रापि प्रायश आहारस्य जिह्वेन्द्रियविषयत्वात्तिक्तकटुककषायाम्ललवणमधुररसा गृह्यंते । तथा चोक्तं "राईभत्ते भावओ तित्ते वा जाव मधुरेत्यादि" अन्यदपि प्रसंगेन गृह्यते। तद्यथा। खरविशदमभ्यवहार्यं भक्ष्यं तत्रापि पुष्पाढ्य ओदनः प्रशस्यते न शीतः । उदकं तु शीतमेव तथा चोक्तं शैत्यमपां प्रधानो गुणः । एवं तावदभ्यवहार्यं द्रव्यमाश्रित्य भावाहारः प्रतिपादितः । सांप्रतमाहारकमाश्रित्य भावाहारं निर्युक्तिकृदाह। भावाहारस्त्रिविधस्त्रिप्रकारो भवति। आहारकस्य जंतोस्त्रिभिः प्रकारैराहारोपादानादिति । प्रकारानाह ( ओहेति ) तैजसेन शरीरेण तत्सहचरितेन च कर्मणा कार्मणेनाभ्यां द्वाभ्यामप्याहारयाति यावदपरमौदरिकं शरीरं न निष्पद्यते। तथा चोक्तं "तएण कम्मएणं आहारेइ अणंतरं जीवो । तेण परं मिस्सेणं जाव शरीरस्स निप्पत्ती ॥ तथा । ओहारा जीवा सव्वे आहारगा अपज्जत्ता " । लोमाहारस्तु शरीरपर्याप्त्युत्तरकालं बाह्यया त्वचा लोमभिराहारो लोमाहारस्तथा-प्रक्षेपेण कवलादेराहार प्रक्षेपाहारः स च वेदनीयोदयेन चतुर्भिः स्थनैराहारसञ्ज्ञावाद्भवति। तथाचोक्तं" चउहिं ठाणेहिं आहारसन्ना समुप्पज्जइ तं जहा ओमोडयाए छुहावेयणिज्जस्स कम्मस्स उदएणं मई एतमट्ठोवओ गेणंति ॥

सांप्रतमेतेषां त्रयाणामप्येकयैव गाथया व्याख्यानं कर्तुमाह

सरीरेणोयाहारो तयायफासेण लोमआहारो ।
पक्खेवाहारो पुण कावलितो होइ नायव्वो ॥

सरीरेणेत्यादि ॥ तैजसेन कार्मणेन च शरीरेणौदारिकादिशरीरानिष्पत्तेर्मिश्रेण च य आहारः स सर्वोऽप्योजाहार इति केचिद् व्याचक्षते । औदरिकादिशरीरपर्याप्तापर्याप्तकोपींडियनापानभाषामनःपर्याप्तिभिरपर्याप्तकः शरीरेणाहारयन् ओजाहार इति गृह्यते तदुत्तरकालं त्वचा स्पर्शेंद्रियेण आहार स लोमाहार इति । प्रक्षेपाहारस्तुकावलिकः कवलप्रक्षेपनिष्पादित इति ज्ञातव्यो भवति के ओजाहाराः के लोमाहारा के प्रक्षेपाहारा पुनरप्येषामेव स्वामिविशेषेण विशेषमाविर्भावयन्नाह ॥

ओयाहारा जीवा सव्वे अपज्जत्तगा मुणेयव्वा ।
पज्जत्तगा य लोमे पक्खेवे होइ मायव्वा ॥ ४ ॥

ओयाहार इत्यादि । यः प्रागुक्तः शरीरेणौजसाहारस्तेनाहारेणा हारका जीवाः सर्वेऽप्यपर्याप्तका ज्ञातव्याः। सर्वाभिपर्याप्तिभिरपर्याप्तास्ते वेदितव्याः । तत्र प्रथमोत्पत्तौ जीव पूर्वशरीरपरित्यागे विग्रहेणाविग्रहेण चोत्पत्तिदेशे तैजसेन कार्मणेन शरीरेण तप्तस्नेहपतितसंपातकवस्तत्प्रदेशस्थानातु लानादत्ते तदुत्तरकालमपि यावदपर्याप्तकावस्था तावदोज आहार इति पर्याप्तकास्त्विंद्रियादिभिः पर्याप्तिभिः पर्याप्ता केषांचिन्मतेन शरीरपर्याप्तका वा गृह्यंते तदेवं ते लोमाहार भवंति तत्र स्पर्शेंद्रियेणोष्मादिना तप्तच्छायया शीतवायुनोदकेन प्रीयते प्राणी गर्भस्थोऽपि पर्याप्त्युत्तरकालं लोमाहार एवेति प्रक्षेपाहारे तु भजनीया यदैव प्रक्षेपं कुर्वंति तदैव प्रक्षेपाहारो नान्यदा लोमाहारता तु वाय्वादिस्पर्शात्सर्वदैवेति च लोमाहारश्चक्षुष्मतामर्वाग्दृग्भिर्मतां न दृष्टिपथमवतरत्य तोऽसौ प्रतिसमयवर्ती प्रायशः प्रक्षेपाहारस्तूपलभ्यते प्राय स च नियतकालीयः। तद्यथा । देवकुरूत्तरकुरुप्रभवा अष्टम भक्ताहाराः संख्येयवर्षायुषामनियतकालीयः प्रक्षेपाहार इति सांप्रतं प्रक्षेपाहारं स्वामिविभागेन दर्शयितुमाह ॥

एगिंदियदेवाणं नेरइयाणं च नत्थि पक्खेवो ।
सेसाणं पक्खेवो संसारत्थाण जीवाणं ॥

(एगिंदिय इत्यादि) एकमेव स्पर्शेन्द्रियं येषां भवति ते एकेन्द्रियाः पृथिवीकायादयस्तेषां देवनारकाणां च नास्ति प्रक्षेपस्ते हि पर्याप्त्युत्तरकालं स्पर्शेन्द्रियेणैवाहारयंतीति कृत्वा लोमाहाराः तत्र देवानां मनसा परिकल्पिताः शुभाः पुद्गलाः सर्वेणैव कायेन परिणमंति नारकाणां त्वशुभा इति । शेषास्त्वौदारिकशरीरा द्वीन्द्रियादयस्तिर्यङ्मनुष्यास्तेषां प्रक्षेपाहार इति । तेषां संसारस्थितानां कायस्थितेरवाभावात्प्रक्षेपमंतरेण कावलिक आहारो जिह्वेंद्रियसद्भावादिति अन्ये त्वाचार्या अन्यथा व्याचक्षते तत्र यो जिह्वेंद्रियेण स्थूलशरीरे प्रक्षिप्यते स प्रक्षेपाहारः यस्तु घ्राणदर्शनश्रवणैरुपलभ्यते धातुभावेन परिणमति स ओजाहारः । य पुनः स्पर्शेन्द्रियेणैवोपलभ्यते धातुभावेन प्रयाति स लोमाहार इति । सूत्र० श्रु. २ अ ३ प्रव० द्वा २०५

सांप्रतं कालविशेषमधिकृत्याऽनाहारकानभिधित्सुराह ।

एक्कं च दोवसमए तिन्निवसमए मुहुत्तमद्धं वा ।
सादीयमनिहणं पुण कालमणाहारगा जीवा ॥

एक्कं चेत्यादि । तत्र "विग्गहगइमावन्ना केवलिणो समोहया अयोगीया । सिद्धा य अणाहारा सेसा आहरगा जीवा" अस्या लेशतोऽयमर्थः उत्पत्तिकाले विग्रहगतौ वक्रगतिमापन्नाः केवलिनो लोकपूरणकाले समुद्घातावस्थिता अयोगिनः शैलेश्यवस्थाः सिद्धाश्चानाहारकाः शेषास्तु जीवाहारकाः इत्यवगंतव्यं तत्र भवाद्भवांतरं यदासमश्रेण्या याति तदानाहारको न लभ्यते यदापि विश्रेण्यामेकेन वक्रेणोत्पद्यते तदापि प्रथमसमये पूर्वशरीरस्थेनाहारितं द्वितीये त्ववक्रसमये समाश्रितशरीरस्थेनेति वक्रद्वये तु त्रिसमयोत्पत्तौ मध्यसमयेनाहारक इति । इतरयोस्त्वाहारक इति वक्रत्रये तु चतुःसमयोत्पत्तिके मध्यवर्त्तिनोः समययोरनाहारकश्चतुःसमयोत्पत्तिश्चैवं भवति । त्रसनाड्या बहिरुपरिष्टादधोधस्तादुपर्युत्पद्यमानो दिशो विदिशि विदिशो वा दिशि यदोत्पद्यते तदा लभ्यते । तत्रैकेन समयेन त्रसनाडी प्रवेशो द्वितीयेनोपर्यधो वा गमनं तृतीयेन च बहिर्निःसरणं चतुर्थेन तु विदिक्षूत्पत्तिदेशप्राप्तिरिति । पंचमसमयस्तु त्रसनाड्या बहिरेव विदिशो विदिगुत्पत्तौ लभ्यते । तत्र च मध्यवर्तिषु अनाहारक इत्यवगंतव्यं । आद्यंतसमययोस्त्वाहारक इति । केवलिसमुद्घातेपि कार्मणशरीरवर्तित्वात्तृतीयचतुर्थपंचमसमयेष्वनाहारको द्रष्टव्यः । शेषेषु त्वौदारिकतन्मिश्रवर्तित्वादाहारक इति (मुहुत्तमद्धंचत्ति) अंतर्मुहूर्तं गृह्यते । तत्र केवली स्वायुषः क्षये सर्वयोगनिरोधे सति ह्रस्वपंचाक्षरोद्गिरणमात्रकालम् यावदनाहारक इत्येवमवगंतव्यं सिद्धजीवास्तु शैलेश्यवस्थाया आदिसमयादारभ्यानंतमपि कालमनाहारका इति । सांप्रतमेतदेव स्वामिविशेषविशेषिततरमाह ।

एक्कं च दोव समए केवलिपरिवज्जिया अणाहारा ।
पंचंमि दोण्णि लोए य पूरिए तिन्नि समयाओ ॥

एक्कंचेत्यादि ॥ केवलपरिवर्जिताः संसारस्था जीवा एकं द्वौ वा अनाहारका भवंति ते च द्विविग्रहत्रिविग्रहोत्पत्तौ त्रिचतुःसामयिकायां द्रष्टव्याः चतुर्विग्रहपंचसमयोत्पत्तिस्तु स्वल्पसत्वाश्रितेपि न साक्षादुपात्ता । तथा चान्यत्राप्यभिहितं एकं द्वौ वानाहारकः । वाशब्दात् त्रीन् वा आनुपूर्व्या अभ्युदग्र उत्कृष्टतो विग्रहगतौ चतुरः समयानागमेऽभिहिताः तत्र । पंचमसमयोत्पत्तौ लभ्यते नान्यत्रेति । भवस्थकेवलिनस्तु समुद्घाते मंथ तत्करणोपसंहारावसरे तृतीयपंचमसमयौ द्वौ लोकपूरणाच्चतुर्थसमयेन सहितास्त्रयः समया भवंतीति ।

पुनरपि निर्युक्तिकारः सादिकमपर्यवसानं कालमनाहारकत्वं दर्शयितुमाह ॥

अंतो मुहुत्तमद्धं सेलेसीए भवे अणाहारा ।
सादीयमनिहणं पुण सिद्धायणाहारगा होंति ॥

(अंतोमुहुत्तमित्यादि) शैलेश्यवस्थाया आरभ्य सर्वथानाहारकः सिद्धावस्थाप्राप्तावनंतमपि कालं यावदिति पूर्वं तु कावलिकाख्यव्यतिरेकेण प्रतिसमयमनाहारकः कावलिकेन तु कादाचित्क इति । सूत्र. श्रु. २ अ. ३ ॥ सयोगिकेवली अनाहारक इति वदतां दिगम्बराणां तस्याऽऽहारकत्वसाधनेन प्रतिक्षेपः कृतः । सूत्र० । सम्म० । तदेवं संसारस्या जीवा विग्रहगतौ जघन्येनैकं समयं उत्कृष्टतः समयत्रयं भवस्थकेवली च समुद्घातावस्थाः समयत्रयमनाहारकः शैलेश्यवस्थायांत्वंतर्मुहूर्तं सिद्धास्तुसादिकमपर्यंतं कालमनाहारका इति स्थितं ॥

सांप्रतं प्रथमाहारग्रहणं येन शरीरेण करोति तद्दर्शयति ॥

जोएण कम्मएणं आहारेई अणंतरं जीवा ।
तेण परं मीसेणं जीवशरीरस्स पज्जत्ती ॥

जोएणेत्यादि । ज्योतिस्तेजस्तदेव तत्र वा भवं तैजसं कार्मणेन वाहारयति । तैजसकार्मणे हि शरीरे आसंसारभाविनि ताभ्यामेवोत्पत्तिदेशं गता जीवा प्रथममाहारं कुर्वंति ततः परमौदारिकमिश्रेण वैक्रियमिश्रणेन वा यावच्छरीरं निष्पद्यते तावदाहारयंति । शरीरनिष्पत्तौ त्वौदारिकेण वैक्रियेण वाऽऽहारयंतीति स्थित । सूत्र० श्रु० २ अ० ३ । श्रा० ।

केवलिनां प्रच्छन्नाहारनिर्हारौ ॥ स० ॥

पृथ्वीकायिकादीनामाहारनिरूपणम्—कथं किं वा ते आहरन्ति ॥

सुयं मे आउसंते णं भगवया एवमक्खायं इह खलु आहारपरिण्णा णामज्झयणे तस्स णं अयमट्ठे इह खलु पाईणं वा सव्वत्तो सव्वावंति च णं लोगंसि चत्तारि बीयकाया एवमाहिज्जंति । तं जहा अग्गबीया मूलबीया पोरबीया खंधबीया ते सिं च णं अहाबिएणं अहावगासेणं इहे गतिया सत्ता पुढवीजोणिया पुढविसंभवा पुढवीवुक्कमे तज्जोणिया तस्संभवा तदुवक्कमा कम्मोवगा कम्मणियाएणं तत्थ वुक्कमा णाणाविहजोणियासु पुढवीसु रुक्खत्ताए विउट्टंति ते जीवा तेसिं णाणाविहजोणियाणं पुढवीणं सिणेहमाहारेंति ॥ १ ॥

॥ टी० ॥ सुधर्मस्वामी जंबूस्वामिनमुद्दिश्येदमाह । तद्यथा श्रुतं मयाऽऽयुष्मता तु भगवतेदमाख्यातं । तद्यथा । आहारपरिज्ञेदमध्ययनं तस्य चायमर्थः । प्राच्यादिषु दिक्षु सर्वत इत्यूर्ध्वाधो विदिक्षु च ( सव्वावंतित्ति ) सर्वस्मिन्नपि लोके क्षेत्रप्रज्ञापकभावदिगाधारभूतेऽस्मिन् चत्वारो बीजकाया बीजमेव कायो येषां ते तथा बीजं वक्ष्यमाणं चत्वारो बीजप्रकारा समुत्पत्तिभेदा भवंति तद्यथा अग्रे बीजं येषामुत्पद्यते ते तलतालिसहकारादयः शाल्यादयो वा । यदिवाग्राण्येवोत्पत्तौ

कारणतां प्रतिपद्यंते येषां कोरंटादीनां ते अग्रबीजास्तथा मूलबीजा आर्द्रकादयः पर्वबीजास्त्विक्ष्वादयः स्कंधबीजाः सल्लक्यादयः । नागार्जुनीयास्तु पठंति (वणस्सइकाइयाणं पंचविहा बीजवक्कंती एवमाहिज्जइ तं जहा अग्गमूलपोरुक्खंधबीयरुहा छट्ठापि एगेंदिया समुच्छिमा बीया जायंते ) यथा दग्धवनस्थलीषु नानाविधानि हारितान्युद्भवंति पद्मिन्यो वाऽभिनवतडागादाविति तेषां च चतुर्विधानामपि वनस्पतिकायानां यद्यस्य बीजमुत्पत्तिकारणं तद्यथा बीजं । तेन यथाबीजेनेति । इदमुक्तं भवति । शाल्यंकुरस्य शालिबीजमुत्पत्तिकारणं । एवमन्यदपि द्रष्टव्यं । यथावकाशेति यो यस्यावकाशः यद्यस्योत्पत्तिस्थानमथवा भूम्यंबुकालाकाशबीजसंयोगा यथावकाशे गृह्यंते तेनेति । तदेवं यथाबीजं यथावकाशेन चेहास्मिन् जगत्येके केचन सत्त्वा ये तथाविधकर्मोदयाद्वनस्पतिष्वुत्पित्सवस्ते हि वनस्पतावुत्पद्यमाना अपि पृथिवीयोनिका भवंति यथा तेषां वनस्पतिबीजं कारणमेवमाधारमंतरेणोत्पत्तेरभावात्पृथिव्यपि शैवालजंबालादेरुदकवदिति । तथा पृथिव्यां संभवः सदा भवनं येषां वनस्पतीनां तथा । इदमुक्तं भवति । न केवलं ते तद्योनिकायस्थितिकाश्चेति । तथा पृथिव्यामेव विविधमुत्प्राबल्येन क्रमः क्रमणं येषां ते पृथिव्युत्क्रमाः । इदमुक्तं भवति । पृथिव्यामेव तेषामूर्ध्वक्रमणलक्षणा वृद्धिर्भवति । एवं च ते तद्योनिकास्तत्संभवास्तद्व्युत्क्रमा इत्येतदनूद्याप्यपरं विधातुकाम आह ॥

कम्मोवगा इत्यादि । ते हि तथाविधेन वनस्पतिकायसंभवेन कर्मणा प्रेर्यमाणास्तेष्वेव वनस्पतिषूपसामीप्येन तस्यामेव च पृथिव्यां गच्छंतीति कर्मोपगा भण्यंते तेहि कर्मवशगा वनस्पतिकायादागत्य तेष्वेव पुनरपि वनस्पतिषूत्पद्यंते । न चान्य श्रोता अन्यत्र भविष्यंतीति उक्तं च । "कुसुमपुरोप्ते बीजे मथुरायां नाङ्कुरः समुद्भवति । यत्रैव तस्य बीजं तत्रैवोत्पद्यते प्रसवः" तथा ते जीवाः कर्मनिदानेन कारणेन समाकृष्यमाणास्तत्र वनस्पतिकाये वा व्युत्क्रमाः समागताः संतो नानाविधयोनिकासु पृथिवीष्वित्यन्येषामपि षष्णां कायानामुत्पत्तिस्थानभूतासु सचित्ताऽचित्तमिश्रासु वा श्वेतकृष्णादिवर्णतिक्तादिरसमुरभ्यादिगंधमृदुकर्कशादिस्पर्शादिकैर्विकल्पैर्बहुप्रकारासु भूमिषु वृक्षतया विविधा वर्तंते ते च तत्रोत्पन्नास्तासां पृथिवीनां स्नेहं स्निग्धभावमाददते स एव च तेषामाहार इति । नत्र ते पृथवीशरीरमाहारयंतः पृथिव्याः पीडामुत्पादयंति ॥ सूत्र० श्रु. २ अ- ६ ।

ते जीवा आहारेंति पुढवीशरीरं आउशरीरं तेउशरीरं वाउशरीरं वणस्सइसरीरं णाणाविहाणं तसथावराणं पाणाणं सरीरं अचित्तं कुव्वंति परिविध्दत्थं तं शरीरं पुव्वाहारियं तयाहारियं विपरिणयं सारूवियकडं संतं अवरेत्रियणं तेसिं पुढविजोणियाणं रुक्खाणं सरीरा णाणावण्णाणा णागंधा णाणारसा णाणाफासा णाणासंठाणसंठिया णाणा विहसरीरपुग्गलविउव्वित्ता ते जीवा कम्मोववन्नगा भवंतीति मक्खायं ॥

टी० एवमप्कायतेजोवायुवनस्पतीनामायोज्यं । अत्र च पीडानुत्पादनेऽयं दृष्टान्तः । तद्यथा । अण्डोद्भवाद्या जीवामातुरुष्मणा विवर्धमाना गर्भस्था एवोदरगतमाहारयंतो नातीव पीडामुत्पादयंत्येवमसावपि वनस्पतिकायिकः पृथिवीस्नेहमाहारयन्नातीव तस्याः पीडामुत्पादयति उत्पद्यमानः समुत्पन्नश्च वृद्धिमुपगतोऽसदृशवर्णरसाद्युपेतत्वात् बाधां विदध्यादपीति । एवमप्कायस्य भौमस्यांतरिक्षस्य वा शरीरमाहारयंति तथा तेजसो भस्मादिकं शरीरमाददति । एवं वाय्वादेरपीति द्रष्टव्यं । किंबहुनोक्तेन नानाविधानां त्रसस्थावराणां प्राणिनां यच्छरीरं तत्ते समुत्पद्यमाना अचित्तमपि स्वकायेनावष्टभ्य प्रासुकीकुर्वंति । यदि वा परिविध्वस्तं पृथिवीकायादिशरीरं किंचित्परितापितं कुर्वंति ते वनस्पतिजीवा एतेषां पृथिवीकायादीनां तच्छरीरं पूर्वमाहारितमिति तैरेव पृथिवीकायादिभिरुत्पत्तिसमये आहारितमासीत् स्वकायत्वेन परिणामितमासीत् । तदधुना वनस्पतिजीवस्तत्रोत्पद्यमान उत्पन्नो वा त्वचा स्पर्शेनाहारयत्याहार्य च स्वकायत्वेन विपरिणामयति विपरिणामितं च तच्छरीरं स्वकायेन सह स्वरूपतां नीतं सत्तन्मयतां प्रतिपद्यते । अपराण्यपि मूलशाखाप्रतिशाखापत्रपुष्पफलादीनि तेषां पृथिवीकायिकानां वृक्षाणां नानावर्णानि । तथाहि । स्कंधस्यान्यथाभूतो वर्णो मूलस्य चान्यादृश इति । एवं यावन्नानाविधशरीरेषु पुद्गलविकुर्वितास्ते भवंतीति । तथाहि । नानारसवीर्यविपाका नानाविधपुद्गलोपचयात्सुरूपकुरूपसंस्थानास्ते भवंतीति । तथा दृढाल्पसंहननाः कृशस्थूलस्कंधाश्च भवंत्येवमादिका नानाविधस्वरूपाणि विकुर्वंतीति स्थितम् । केषांचिच्छाक्यादीनां वनस्पत्याद्या स्थावरजीवा एव न भवंतीति अतस्तत्प्रतिषेधार्थमाह । ते जीवा इत्यादि । ते वनस्पतिषूत्पन्ना जीवा उपयोगलक्षणत्वाज्जीवानां तेषामप्याश्रयोत्सर्पणादिकया क्रिययोपयोगो लक्ष्यते । तथा विशिष्टाहारोपचयापचयाभ्यां शरीरोपचयापचयसद्भावाद्भेकजीवाः स्थावरास्तथाच्छिन्नप्ररोहणात्स्वापात्सर्वत्वगपहरणे मरणादित्येवमादयो हेतवोऽत्र द्रष्टव्याः यदत्र कैश्चित्पृष्टेपि वनस्पतीनां चैतन्ये सिद्धानैकांतिकत्वादिकमुक्तं स्वदर्शनानुरागात्तदपकर्णनीयं न हि सम्यगार्हतमताभिज्ञोऽसिद्धविरुद्धानैकांतिकोपन्यासेन व्यामोह्यते सर्वस्य कथंचिदभ्युपगतत्वात्प्रतिषिद्धत्वाच्चेति ते जीवास्तत्र वनस्पतिषु तथाविधेन कर्मणा उपपन्नगाः । तदेवं एकेंद्रियजातिस्थावरनामवनस्पतियोग्यायुष्कादिकमिति तत्कर्मोदयेन तत्रोत्पन्ना उच्यंते न पुनः कालेश्वरादिना तत्रोत्पाद्यंते इत्येवमाख्यातं तीर्थकरादिभिरिति । एवं तावत्पृथिवीयोनिका वृक्षा अभिहिताः सूत्र० श्रु० २ अ० ३ ।

सांप्रतं तद्योनिकेष्वेव वनस्पतिषु अपरे समुत्पद्यंत इत्येतद्दर्शयितुमाह । सूत्र०

आहावरं पुरक्खायं इहेगतिया सत्ता रुक्खजोणिया रुक्खसंभवा रुक्खवुक्कमा तज्जोणिया तस्संभवा तवुवक्कमा कम्मोवगा कम्मनियाणेणं । तत्थ वुक्कमा पुढवीजोणिएहिं रुक्खेहिं रुक्खत्ताए विउट्टंति ते जीवा तेसिं पुढवीजोणियाणं रुक्खाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरं आउतेउवाउवणस्सइसरीरं णाणाविहाणं तसथावराणं पाणाणं सरीरं अचित्तं कुव्वंति परिविध्दत्थं तं सरीरं पुव्वाहारियं तयाहारियं विप्परिणामियं सारूविकडं संतं अवरेवियणं तेसिं रुक्खजोणियाणं रुक्खाणं सरीरा णाणावण्णा णाणागंधा णाणारसा णाणाफासा णाणासंठाणसंठिया णाणाविह-

सरीरपुग्गलविउव्विया ते जीवा कम्मोववन्नगा भवं-
तीतिमक्खायं ॥ ३ ॥

टी०। सुधर्मस्वामी शिष्योद्देशेनेदमाह ॥ अथापरमेतदा ख्यातं पुरा तीर्थकरेण यदि वा तस्यैव वनस्पतेः पुनरपरं वक्ष्यमाणमाख्यातं यद्यथेहास्मिन् जगत्येके केचन तथावि-धकर्मोदयवर्तिनः सत्वाः प्राणिनो वृक्षा एव योनिरुत्पत्तिस्था नमाश्रयो येषां ते वृक्षयोनिकाः । इह च यत्पृथिवीयोनिकेषु वृक्षेष्वभिहितं तदेतष्वपि वृक्षयोनिकेषु वनस्पतिषु तदुपच यकर्तृसर्वमायोज्यं यावदाख्यातमिति। सूत्र. श्रु० २ अ० ३।

साम्प्रतं वनस्पत्यवयवानधिकृत्याऽऽह ॥

अहावरं पुरक्खायं इहेगतिया सत्ता रुक्खजोणिया रुक्ख-संभवा रुक्खवुक्कमा तज्जोणिया तस्संभवा तदुवक्कमा कम्मोवगा कम्मणियाणेणं तत्थ वुक्कमा रुक्खजोणिएसु रुक्खत्ताए विउट्टंति ते जीवा तेसिं रुक्खजोणियाणं रुक्खाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरं आउतेउवाउवणस्सइसरीरं तसथावराणं पाणाणं सरीरं अचित्तं कुव्वंति परिविद्धत्थं तं सरीरं पुव्वाहारियं तयाहारियं विपरिणामियं सारूविकडं संतं अवरेवियणं तेसिं रुक्ख जोणियाणं रुक्खाणं सरीरा णाणावन्ना जाव ते जीवा कम्मोववन्नगा भवंतीति मक्खायं ॥ ४ ॥

अथापरमेतदाख्यातं तद्दर्शयति । इहास्मिन् जगत्येके न सर्वे तथाविधकर्मोदयवर्तिनो वृक्षयोनिकाः सत्वा भवंति तदवयवा श्रिताश्च परे वनस्पतिरूपा एव प्राणिनो भवंति तथा यो ह्येको वनस्पतिजीवः सर्ववृक्षावयवव्यापी भवति तस्य चापरे तद वयवेषु मूलकंदस्कंधत्वक्शाखाप्रवालपत्रपुष्पफलबीजभूतेषु दशसु स्थानेषु जीवाः समुत्पद्यंते ते च तत्रोत्पद्यमाना वृक्ष-योनिका वृक्षव्युत्क्रमाश्चोच्यंते इति । शेषं पूर्ववत् इह च प्रा क् चतुर्विधार्थप्रतिपादकानि सूत्राण्यभिहितानि । तद्यथा वन. स्पतयः पृथिव्याश्रिता भवंतीत्येकं १ तच्छरीरं अप्कायादिशरीरं वाऽऽहारयंतीति द्वितीयं २ तथा विवृक्षास्तदाहारितं शरीर-मचित्तं विध्वस्तं च कृत्वात्मसात्कुर्वंतीति तृतीयं ३ अन्यान्य पि तेषां पृथिवीयोनिकानां वनस्पतीनां शरीराणि मूलस्कंधकं दादीनि नानावर्णानि भवंतीति चतुर्थं ॥ ४ ॥ एवमत्रापि वनस्पतियोनिकानां वनस्पतीनामेवंविधार्थप्रतिपादकानि चतु-ष्प्रकाराणि सूत्राणि द्रष्टव्यानीति यावत्ते जीवा वनस्पत्यवयव मूलस्कंधादिरूपाः कर्मोपपन्नगा भवंत्येवमाख्यातं । सूत्र-श्रु. २-अ.३ ॥

अथ वृक्षोपर्य्युत्पन्नान् वृक्षानाश्रित्याह ।

अहावरं पुरक्खायं इहेगइया सत्ता रुक्खजोणिया रुक्ख-संभवा रुक्खवुक्कमा तज्जोणिया तस्संभवा तदुवक्कमा कम्मोवगा कम्मनियाणेणं तत्थ वुक्कमा रुक्खजोणिएसु रुक्खेसु मूलत्ताए कंदत्ताए खंधत्ताए तयत्ताए सालत्ताए पवालत्ताए पत्तत्ताए पुप्फत्ताए फलत्ताए बीयत्ताए विउट्टंति ते जीवा तेसिं रुक्खजोणियाणं रुक्खाणं सिणेह-माहारेंति ते जीवा आहारेंति पुढवीसरीरं आउतेउवाउ-वणस्सइसरीरं णाणाविहाणं तसथावराणं पाणाणं सरीरं अचित्तं कुव्वंति परिविद्धत्थं तं सरीरगं जाव सारूविकडं संतं अवरे वि य णं तेसिं रुक्खजोणियाणं मूलाणं कंदाणं खंधाणं तयाणं सालाणं पवालाणं जाव बीयाणं सरीरा णाणावन्ना णाणागंधा जाव णाणाविहसरीरं पुग्गलविउ-व्विता ते जीवा कम्मोववन्नगा भवंतीति मक्खायं ॥५॥

अथापरमेतत्पुराऽऽख्यातं यद्वक्ष्यमाणमिहैके सत्वा वृक्षयो-निका भवंति तत्र ये ते पृथिवीयोनिका वृक्षास्तेष्वेव प्रतिप्रदे-शतया ये परे समुत्पद्यंते तस्यैकस्य वनस्पतेर्मूलारंभकस्यो-पचयकारिणस्ते वृक्षयोनिका इत्यभिधीयंते । यदि वा ये त मूलकंदस्कंधशाखादिकाः पूर्वोक्तदशस्थानवर्तिनस्त एवमभि-धीयंते तेषु च वृक्षयोनिकेषु वृक्षेषु कर्मोपपादननिष्पादितेषु उपर्युपरि अध्यारोहंतीत्यध्यारुहा वृक्षोपरि जाता वृक्षाभिधानाः कामवृक्षाभिधाना वा द्रष्टव्यास्तदभावे वाऽपरे वनस्पतिकायाः समुत्पद्यंते वृक्षयोनिकेषु वनस्पतिष्विति। इहापि प्राग्वच्चत्वारि सूत्राणि द्रष्टव्यानि।

अहावरं पुरक्खायं इहेगतिया सत्ता रुक्खजोणिया रुक्खसंभवा रुक्खवुक्कमा तज्जोणिया तस्संभवा तदुव-क्कमा कम्मोववन्नगा कम्मनियाणेणं तत्थ वुक्कमा रुक्ख-जोणिएहिं रुक्खेहिं अज्झारोहत्ताए विउट्टंति ते जीवा तेसिं रुक्खजोणियाणं रुक्खाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरं जाव सारूविकडं संतं अवरे वि-य णं तेसिं रुक्खजोणियाणं अज्झारुहाणं सरीरा णाणा वन्ना जाव मक्खायं ॥ ६ ॥

तद्यथा योनिकेषु वृक्षेष्वपरेऽध्यारुहाः समुत्पद्यंते ते च तत्रोत्प-न्नाः स्वयोनिभूतं वनस्पतिशरीरमाहारयंति तथा पृथिव्यप्तेजोवा य्वादीनां शरीरकमाहारयंति तथा तच्छरीरमाहारितं सदचित्तं विध्वस्तं परिणामितमात्मसात्कृतं स्वकायावयवतया व्यवस्था-पयंत्यपराणि च तेषामध्यारुहाणां नानाविधरूपरसगंधस्प-र्शोपेतानि नानासंस्थानानि शरीराणि भवंति ते जीवास्तत्र-स्वकृतकर्मोपपन्ना भवंतीत्येतदाख्यातमिति प्रथमं सूत्रम्। सूत्र० श्रु० २ अ० ३।

अहावरं पुरक्खायं इहेगतिया सत्ता अज्झारोहजोणिया अज्झारोहसंभवा जाव कम्मनियाणेणं तत्थ वुक्कमा रुक्ख जोणिएसु अज्झारोहेसु अज्झारोहत्ताए विउट्टंति ते जीवा तेसिं अज्झारोहजोणियाणं अज्झारोहाणं सिणे-हमाहारेंति ते जीवा आहारेंति ते जीवा पुढवीसरीरं जाव सारूविकडं संतं अवरे वि यणं तेसिं अज्झारोह-जोणियाणं अज्झारोहाणं सरीरा णाणावन्ना जाव म-क्खायं ॥ ७ ॥

द्वितीयं त्विदमथापरं पुराख्यातं । ये ते प्राग्वृक्षयोनिषु वृक्षे-षु अध्यारुहाः प्रतिपादितास्तेष्वेवोपरि प्रतिप्रदेशोपचयकर्त्ता-रोऽध्यारुहवनस्पतित्वेनोपपद्यंते ते च जीवा अध्यारुहप्रदेशे-ष्वुत्पन्ना अध्यारुहजीवास्तेषां स्वयोनिभूतानि शरीराण्याहार-यंति । तथाऽपराण्यपि पृथिव्यादीनि शरीराणि आहारयंति अपराणि चाध्यारोहसंभवानामध्यारुहजीवानां नानाविधवर्ण कादिकानि शरीराणि भवंतीत्येवमाख्यातं ।

अहावरं पुरक्खायं इहेगतिया सत्ता अज्झारोहजोणिया अज्झारोहसंजवा जाव कम्मनियाणेणं तत्थ वुक्कमा अज्झारोहजोणिएसु अज्झारोहत्ताए विउट्टंति ते जीवा तेसिं अज्झारोहजोणियाणं अज्झारोहाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरा आउसरीरा जावमारुविकरूं संतं अवरे वि य णं तेसिं अज्झारोहजोणियाणं अज्झारोहाणं सरीरा णाणावन्ना जाव मक्खायं ॥ ८ ॥

तृतीयं त्विदं ॥ अहावरमित्यादि । अथापरं पुराख्यातं तद्यथा इहैके सत्त्वा अध्यारुहसंभवेष्वध्यारुहत्वेनोपपद्यंते ये चैवमुत्पद्यंते तेऽध्यारुहजीवा आहारयंति तृतीये त्वध्यारुहयोनिकानामध्यारुहजीवानां शरीराणि इष्टव्यानीति विशेषः ।

अहावरं पुरक्खायं इहेगतिया सत्ता अज्झारोहजोणिया अज्झारोहसंजवा जाव कम्मनियाणेणं तत्थ वुक्कमा अज्झारोहजोणिएसु अज्झारोहेसु मूलत्ताए जाव बीयत्ताए विउट्टंति ते जीवा तेसिं अज्झारोहजोणियाणं अज्झारोहाणं सिणेहमाहारेंति जाव अवरेवि य णं तेसिं अज्झारोहजोणियाणं मूलाणं जाव बीयाणं सरीरा णाणावन्ना जाव मक्खायं ॥ ९ ॥

इदं तु चतुर्थकं तद्यथा ( अहावरमित्यादि ) अथापरमिदमाख्यातं । तद्यथा इहैके सत्त्वा अध्यारुहयोनिकेष्वध्यारुहेषु मूलकंदस्कंधत्वक्शाखाप्रवालपत्रपुष्पफलबीजभावेनोत्पद्यंते ते च तथाविधकर्मोपगा भवंतीत्येतदाख्यातमिति शेषं तदेवेति । साम्प्रतं वृक्षव्यतिरिक्तशेषवनस्पतिकायमाश्रित्याह ।

अहावरं पुरक्खायं इहेगतिया सत्ता पुढविजोणिया पुढविसंजवा जाव णाणाविहजोणियासु पुढवीसु तणत्ताए विउट्टंति ते जीवा तेसिं णाणाविहजोणियाणं पुढवीणं सिणेहमाहारेंति जाव ते जीवा कम्मोववन्ना भवंतीति मक्खायं १० एवं पुढविजोणिएसु तणेसु तणत्ताए विउट्टंति जाव मक्खायं ११ एवं तणजोणिएसु तणेसु तणत्ताए विउट्टंति तणजोणीयं तणसरीरं च आहारेंति जाव मक्खायं १२ एवं तणजोणिएसु तणेसु मूलत्ताए जाव बीयत्ताए विउट्टंति ते जीवा जाव एवमक्खायं १३ एवं ओसहीणं वि चत्तारि आलावगा १४ एवं हरियाणं वि चत्तारि आलावगा ॥ १५ ॥

साम्प्रतं वृक्षव्यतिरिक्तं शेषवनस्पतिकायमाश्रित्याह । ( अहावरमित्यादि ) अथापरमिदमाख्यातं यदुत्तरत्र वक्ष्यते । तद्यथा इहैके सत्त्वाः पृथिवीयोनिकाः पृथिवीसंभवाः पृथिवीव्युत्क्रमा इत्यादयो यथा वृक्षेषु चत्वार आलापकाः एवं तृणान्यप्याश्रित्य द्रष्टव्याः । ते चामी नानाविधासु पृथिवीयोनिषु तृणत्वेनोपपद्यंते पृथिवीशरीरं चाहारयन्ति १० द्वितीयं तु पृथिवीयोनिकेषु तृणेषूत्पद्यन्ते तृणशरीरं चाहारयंतीति ११ तृतीय तु तृणयोनिकेषु तृणेषूत्पद्यंते तृणयोनिकं शरीरं चाहारयंतीति १२ चतुर्थं तृणयोनिकेषु तृणावयवेषु मूलादिदशप्रकारेषूत्पद्यंते तृणशरीरं चाहारयंत्येवं यावदाख्यातमिति १३ एवमौषध्याश्रयाश्चत्वार आलापका भणनीयाः १४ नवरमौषधिग्रहणं कर्तव्यमेवं हरिताश्रयाश्चत्वार आलापका भणनीयाः । कुहणेषु त्वेक एवालापको द्रष्टव्यस्तद्योनिकानामपरेषामभावादिति भावः ।

अहावरं पुरक्खायं इहेगतिया सत्ता पुढविजोणिया पुढविसंजवा जाव कम्मनियाणेणं तत्थ वुक्कमा णाणाविहजोणियासु पुढवीसु आयत्ताए वायत्ताए कायत्ताए कूहणत्ताए कंदुकत्ताए उव्वेहणियत्ताए निव्वेहणियत्ताए सछत्ताए छत्तगत्ताए वासाणियत्ताए कूरत्ताए विउट्टंति ते जीवा तेसिं णाणाविहजोणियाणं पुढवीणं सिणेहमाहारेंति ते वि जीवा आहारेंति पुढविसरीरं जाव संतं अवरे वि य णं तेसिं पुढविजोणियाणं आयत्ताणं जाव कूराणं सरीरा णाणावन्ना जाव मक्खायं एगो चेव आलावगो सेसा तिन्नि णत्थि ॥ १६ ॥

इह चामी वनस्पतिविशेषा लोकव्यवहारतोऽनुगंतव्याः प्रज्ञापनातो वावसेया इति । अत्रायं सर्वेषामेव पृथिवीयोनिकत्वात्पृथिवीसमाश्रयत्वेनाभिहिताः इह च स्थावराणां वनस्पतेरेव प्रस्पष्टचैतन्यलक्षणत्वात्तस्यैव प्राक्प्रदर्शितं चैतन्यं ।

सांप्रतमप्काययोनिकस्य वनस्पतेः स्वरूपं दर्शयितुमाह ।

अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणिया उदगसंजवा जाव कम्मानियाणेणं तत्थ वुक्कमा णाणाविहजोणिएसु उदएसु रुक्खत्ताए विउट्टंति । ते जीवा तेसिं णाणाजोणियाणं उदगाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढविसरीरं जाव संतं अवरे वि य णं तेसिं उदगजोणियाणं रुक्खाणं सरीरा णाणावन्ना जाव मक्खायं । जहा पुढविजोणियाणं चत्तारि गमा अज्झारुहाणं वि तहेव तणाणं ओसहीणं हरियाणं चत्तारि आलावगा जाणियव्वा । एकेके तहा उदगजोणियाणं रुक्खाणं इक्को ॥ १७ ॥ अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणिया उदगसंजवा जाव कम्माणियाणेणं तत्थ वुक्कमा णाणाविहजोणिएसु उदयेसु उदगत्ताए अवगत्ताए पणगत्ताए सेवालत्ताए कलंबुगत्ताए हरुत्ताए कसेरुगत्ताए कच्छभाणियत्ताए उप्पलत्ताए पउमत्ताए कुमुयत्ताए नलिणत्ताए सुजगत्ताए सोगंधियत्ताए पोंमरियत्ताए महापोंमरियत्ताए सयपत्ताए सहस्सपत्ताए एवं कहलारकोकणपत्ताए अरविंदत्ताए तामरसत्ताए जिसजिससुणालपुक्खलत्ताए पुक्खलत्थिजगत्ताए विउट्टंति ते जीवा तेसिं णाणाविहजोणियाणं उदगाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरं जाव संतं अवरे वि य णं तेसिं उदगजोणियाणं उदगाणं जाव पुक्खलत्थिजगाणं सरीरा णाणावन्ना जाव मक्खायं एगो चेव आलावगो ॥ १८ ॥

( अहावरमित्यादि) अथानंतरमेतद्वक्ष्यमाणमाख्यातं तद्यथा

इहैके सत्त्वास्तथाविधकर्मोपपत्त्युदुदकं योनिरुत्पत्तिस्थानं येषां ते तथा । तथोदके संभवो येषां ते तथा । यावत्कर्मनिदानेन संढालितास्तदुपक्रमा भवंतीति ते च तत्कर्मवशगा नानाविधयोनिषूदकेषु वृक्षत्वेन व्युत्क्रामंत्युत्पद्यंते । ये च जीवा उदकयोनिका वृक्षत्वेनोत्पन्नास्ते तच्छरीरमुदकं शरीरमाहारयंति न केवलं तदेवान्यदपि पृथिवीकायादिशरीरमाहारयंतीति शेषं पूर्ववत् यथा पृथिवीयोनिकानां वृक्षाणां चत्वार आलापका एवमुदकयोनिकानामपि वृक्षाणां भवंतीत्येवं द्रष्टव्यं अपरस्य प्रागुक्तस्य विकल्पाभावादिति किं तर्हि एक एवालापको भवति १७ एतेषां हि उदकाकृतीनां वनस्पतिकायानां तथाविधवनकशैवलादीनामपरस्य प्रागुक्तस्य विकल्पस्याऽभावादिति । एते च उदकाश्रया वनस्पतिविशेषाः कलंबुकाहरुादयो लोकव्यवहारतोऽवसेया इति ॥ १८ ॥

साम्प्रतमन्येन प्रकारेण वनस्पत्याश्रयमालापकत्रयं दर्शयितुमाह ।

अहावरं पुरक्खायं इहेगतिया सत्ता तेसिं चेव पुढवीजोणिएहिं रुक्खेहिं रुक्खजोणिएहिं रुक्खेहिं रुक्खजोणिएहिं मूलेहिं जाव बीएहिं रुक्खजोणिएहिं अज्झारोहेहिं अज्झारोहजोणिएहिं अज्झारुहेहिं अज्झारोहजोणिएहिं मूलेहिं जाव बीएहिं पुढविजोणिएहिं तणेहिं तणजोणिएहिं तणेहिं तणजोणिएहिं मूलेहिं जाव बीएहिं एवं ओसहीहिं वि तिन्नि आलावगा एवं हरिएहिं वि तिन्नि आलावगा पुढविजोणिएहिं वि आएहिं काएहिं जाव कूरेहिं उदगजोणिएहिं रुक्खेहिं रुक्खजोणिएहिं रुक्खेहिं रुक्खजोणिएहिं मूलेहिं जाव बीएहिं एवं अज्झारुहेहिं वि तिन्नि तणेहिं वि तिन्नि आलावगा ओसहीहिं वि तिन्नि हरिएहिं वि तिन्नि उदगजोणिएहिं उदएहिं अवएहिं जाव पुक्खलत्थिभएहिं तसपाणत्ताए विउट्टंति ॥ १९ ॥

टी० तद्यथा । पृथिवीयोनिकैर्वृक्षैर्वृक्षयोनिकैर्वृक्षैस्तथा वृक्षयोनिकैर्मूलादिभिरिति एवं वृक्षयोनिकैरध्यारुहैस्तथाऽध्यारुहयोनिकैर्मूलादिभिरिति एवमन्येऽपि तृणादयो द्रष्टव्याः एवमुदकयोनिकेष्वपि वृक्षेषु योजनीयं ॥ १९ ॥

तदेवं पृथिवीयोनिकवनस्पतेरुदकयोनिकवनस्पतेश्च भेदानुपदर्श्याऽधुना तदनुवादेनोपसंजिघृक्षुराह ॥

ते जीवा तेसिं पुढवीजोणियाणं उदगजोणियाणं रुक्खजोणियाणं अज्झारोहजोणियाणं तणजोणियाणं ओसहीजोणियाणं हरियजोणियाणं रुक्खाणं अज्झारुहाणं तणाणं ओसहीणं हरियाणं मूलाणं जाव बीयाणं आयाणं कायाणं जाव करवाणं उदगाणं अवगाणं जाव पुक्खलत्थिभगाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरं जाव संतं अवरे वि य णं तेसिं रुक्खजोणियाणं अज्झारोहजोणियाणं तणजोणियाणं ओसहिजोणियाणं हरियजोणियाणं मूलजोणियाणं कंदजोणियाणं जाव बीयजोणियाणं आयजोणियाणं कायजोणियाणं जाव कूरजोणियाणं उदगजोणियाणं अवगजोणियाणं जाव पुक्खलत्थिभगजोणियाणं तसपाणाणं सरीरा णाणावन्ना जाव मक्खायं ॥ २० ॥

(ते जीवा इत्यादि) ते वनस्पतावुत्पन्ना जीवाः पृथिवीयोनिकानां तथोदकवृक्षाध्यारुहतृणौषधिहरितयोनिकानां वृक्षाणां यावत्स्नेहमाहारयंतीत्येतदाख्यातमिति । तथा त्रसानां प्राणिनां शरीरमाहारयन्त्येतदवसाने द्रष्टव्यमिति । तदेवं वनस्पतिकायिकानां सुप्रतिपाद्यचैतन्यानां स्वरूपमभिहितं शेषाः पृथ्वीकायादयश्चत्वार एकेन्द्रिया उत्तरत्र प्रतिपादयिष्यंते । सूत्र. श्रु. २ अ. ३ ।

उत्पलादिजीवानामाहारो वनस्पतिशब्दे ।

मनुष्याणाम् ॥

सांप्रतं त्रसकायस्याऽवसरः स च नारकतिर्यङ्मनुष्यदेवभेदभिन्नः तत्र नारका अप्रत्यक्षत्वेनानुमानग्राह्या दुष्कृतकर्मफलभुजः केचन संतीत्येवं ते ग्राह्या तदाहारोऽप्येकान्तेनाशुभपुद्गलनिर्वर्तित ओजसा प्रक्षेपेणेति । देवा अप्यधुना बाहुल्येनानुमानगम्या एव तेषामप्याहारः शुभ एकांतेनौजोनिवर्तितो न प्रक्षेपकृत इति । सचाभोगनिवर्तितो नाभोगकृतश्च । तत्र नाभोगकृतः प्रतिसमयभावी आभोगकृतश्च जघन्येन चतुर्भक्तकृत उत्कृष्टतस्तु त्रयस्त्रिंशद्वर्षसहस्रनिष्पादित इति शेषास्तु तिर्यङ्मनुष्यास्तेषां च मध्ये मनुष्याणामभ्यर्हितत्वात्तानेव प्राग्दर्शयितुमाह ॥

अहावरं पुरक्खायं णाणाविहाणं मणुस्साणं तं जहा कम्मभूमगाणं अकम्मभूमगाणं अंतरदीवगाणं आरियाणं मिलक्खूयाणं तेसिं च णं अहाबीएणं अहावकासेणं इत्थीए पुरिसस्सयं कम्मकडाए जोणिए एत्थणं मेहुणवत्तियाए णामं संजोगे समुप्पज्जइ ते दुहओ वि सिणेहं संचिणंति तत्थणं जीवा इत्थित्ताए पुरिसत्ताए णपुंसगत्ताए विउट्टंति ते जीवा माओओयं पिउसुक्कं तं तदुभयं संसट्ठं कलुसं किब्बिसं तं पढमत्ताए आहारमाहारेंति ततो पच्छा जं से माया णाणाविहाओ रसविईओ आहारमाहारेंति ततो एगदेसेणं ओयमाहारेंति आणुपुव्वेण वुड्ढा पलिपागमणुपिन्ना ततो कायातो अभिनिवट्टमाणा इत्थिं वेगया जणयंति पुरिसं वेगया जणयंति णपुंसगं वेगया जणयंति ते जीवा डहरा समाणा माउक्खीरं सप्पिं आहारेंति आणुपुव्वेण वुड्ढा ओयणं कुम्मासं तसथावरेय पाणे ते जीवा आहारेंति पुढविसरीरं जाव सारूविकडं संतं अवरे वि य णं तेसिं णाणाविहाणं मणुस्सगाणं कम्मभूमगाणं अकम्मभूमगाणं अंतरदीवगाणं आरियाणं मिलक्खूणं सरीरा णाणावन्ना भवंतीति मक्खायं ॥ २१ ॥

(अथावरं पुरक्खाय) मित्यादि । अथानंतरमेव तु पुरा पूर्वमाख्यातं तद्यथा आर्याणामनार्याणां च कर्मभूमिजाऽकर्मभूमिजादीनां मनुष्याणां नानाविधयोनिकानां स्वरूपं वक्ष्यमाणनीत्या समाख्यातं तेषां च स्त्रीनपुंसकतदभिन्नानां । यथाबीजेनेति । यत्रास्य बीजं तत्र स्त्रियाः संबंधि शोणितं पुरुषस्य च शुक्रं एतदुभयमप्यविध्वस्तं शुक्राधिकं सन्मनुष्यस्य शोणिताधिकं स्त्रियास्तत्स-

मता नपुंसकस्य कारणतां प्रतिपद्यते । तथा यथावकाशनेति । योऽर्थस्यावकाशो मातुरुदरकुक्ष्यादिकस्तत्रापि किल वामा स्त्रिया दक्षिणा कुक्षिः पुरुषस्योभयाश्रितः षंढ इति । अत्र चाविध्वस्ता योनिरविध्वस्तं बीजमिति चत्वारो भंगाः तत्राप्याद्य एव भंगक उत्पत्तेरवकाशो न शेषेषु त्रिष्विति । अत्र च स्त्रीपुंसयोर्वेदोदये सति पूर्वकर्मनिर्वर्तितायां योनौ मैथुनप्रत्यायिको रताभिलाषोदयजनितोऽग्निकारणयोररणिकाष्ठयोरिव संयोगः समुत्पद्यते तत्संयोगे च तच्छुक्रशोणिते समुपादाय तत्रोत्पित्सवो जंतवस्तैजसकार्मणाभ्यां शरीराभ्यां कर्मरज्जुसंदानितास्तत्रोत्पद्यंते ते च प्रथममुभयोरपि स्नेहमाचिन्वंत्यविध्वस्तायां योनौ सत्यामिति । विध्वस्यते तु योनिः "पंचपंचाशिका नारी सप्तसप्ततिः पुरुष इति" तथा द्वादश मुहूर्त्तानि यावच्छुक्रशोणिते अविध्वस्तयोनिके भवतस्तत ऊर्ध्वं ध्वंसमुपगच्छत इति । तत्र जीवा उभयोरपि स्नेहमाहार्य्य स्वकर्मविपाकेन यथा स्वं स्त्रीपुन्नपुंसकभावेन । ( विउट्टंतित्ति ) वर्तंते समुत्पद्यंत इति यावत् । तदुत्तरकालं च स्त्रीकुक्षौ प्रक्षिप्ताः सन्तः स्त्रिया हारितस्याहारस्य निर्यासं स्नेहमाददति तत्स्नेहेन च तेषां जंतूनां क्रमोपचयादानेन क्रमेण निष्पत्तिरुपजायते ( सत्ताहं कललं होइ सत्ताहं होइ बुब्बुयं ) इत्यादि तदेवमनेन क्रमेण तदेकदेशेन वा मातुराहारमोजसा मिश्रेण वा लोमाभिर्वानुपूर्व्वेणाहारयंति यथाक्रममानुपूर्व्येण वृद्धिमुपागताः संतो गर्भपरिपाकं गर्भनिष्पत्तिमनुप्रपन्नास्ततो मातुःकायादभिनिवर्त्तमानाः पृथग्भवंतः संतस्तद्योनेर्निर्गच्छंति । ते च तथाविधकर्मोदयादात्मनः स्त्रीभावमप्येकदा जनयंत्युत्पादयंत्यपरे केचन पुंभावं नपुंसकभावं च । इदमुक्तं भवति । स्त्रीपुंनपुंसकभावः प्राणिनां स्वकृतकर्मनिवर्तितो भवति न पुनर्यो यादृगिह भवे सोऽमुष्मिन्नेव तादृगेवेति । ते च तदहर्जातबालकाः संतः पूर्वभवाभ्यासादाहाराभिलाषिणो भवंति मातुः स्तन्यमाहारयंति तदाहारेण चानुपूर्व्येण च वृद्धास्तदुत्तरकालं नवनीतदध्योदनादिकं यावत्कुल्माषान् भुंजते तथाहारत्वेनोपगतास्त्रसान् स्थावरांश्च प्राणिनस्ते जीवा आहारयंति तथा नानाविधपृथिवीशरीरं लवणादिकं सचेतनं वाहारयंति तच्चाहारितमात्मसात्कृतं सारूप्यमापादितं सत् रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव इति सप्तधा व्यवस्थापयंत्यपराण्यपि तेषां नानाविधमनुष्याणां शरीराणि नानावर्णान्याविर्भवंति । ते च तद्योनिकत्वात्तदाधारभूतानि नानावर्णानि शरीराण्याहारयंतीत्येवमाख्यातमिति ॥ २१ ॥ सूत्र० श्रु. २ अ. ३ ।

तिर्यग्जलचराणाम् ।

एवं तावद्गर्भव्युत्क्रांतजमनुष्याः प्रतिपादितास्तदनंतरं संमूर्छनजानामवसरस्तांश्चोत्तरत्र प्रतिपादयिष्यामि ।

सांप्रतं तिर्यग्योनिकास्तत्रापि जलचरानुद्दिश्याह ।

अहावरं पुरक्खायं णाणाविहाणं जलचराणं पंचिंदियतिरिक्खजोणियाणं । तंजहा । मच्छाणं जाव सुसमाराणं तेसिं च णं अहाबीएणं अहावगासेणं इत्थीए पुरिसस्स य कम्मकडा तहेव जाव ततो एगदेसेणं ओयमाहारेंति आणुपुव्वेणं वुड्ढा पलिपागमणुविन्ना ततो कायाओ अभिनिवट्टमाणा अंडं वेगया जणयंति पोयं वेगया जणयंति से अंडे उब्भिज्जमाणे इत्थिं वेगया जणयंति पुरिसं वेगया जणयंति नपुंसगं वेगया जणयंति ते जीवा डहरा समाणा आउसिणेहमाहारेंति आणुपुव्वेणं वुड्ढा वणस्सतिकायं तसथावरे य पाणे ते जीवा आहारेंति । पुढवीसरीरं जाव संतं अवरे वि य णं तेसिं नानाविहाणं जलचरपंचिंदियतिरिक्खजोणियाणं मच्छाणं सुसुमाराणं सरीरा णाणावण्णा जाव मक्खायं ॥ २२ ॥

अथानंतरमेतद्वक्ष्यमाणं पूर्वमाख्यातं । तद्यथा । नानाविधजलचरपंचेन्द्रियतिर्यग्योनिकानां संबंधिनः कांश्चित्स्वनामग्राहमाह । तद्यथा । ( मच्छाणं जाव सुसुमाराण ) मित्यादि तेषां मत्स्यकच्छपमकरग्राहसुषुमारादीनां यस्य यथा यद्बीजं तेन तथा यथावकाशेन यो यस्योदरादाववकाशस्तेन स्त्रियाः पुरुषस्य च स्वकर्मनिर्वर्तितायां योनावुत्पद्यंते ते च तत्राभिव्यक्ता मातुराहारेण वृद्धिमुपगताः स्त्रीपुंनपुंसकानामन्यतमेनोत्पद्यंते । ते च जीवा जलचरा गर्भाद्व्युत्क्रांताः संतस्तदनंतरं यावद्वहरंति लघवस्तावदप्स्नेहमप्कायमेवाहारयंति आनुपूर्व्येण च वृद्धाः संतो वनस्पतिकायं तथापरांश्च त्रसाँस्थावरांश्चाहारयंति यावत्पंचेंद्रियानप्याहारयांति तथा चोक्तं " अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तरः । तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः" तथा ते जीवाः पृथिवीशरीरं कर्दमस्वरूपं क्रमेण वृद्धिमुपगताः संत आहारयंति तच्चाहारितं समानरूपीकृतमात्मसात्परिणामयंति शेषं सुगमं यावत्कर्मोपगता भवंतीत्येवमाख्यातं ॥ २२ ॥

अहावरं पुरक्खायं णाणाविहाणं चउप्पयथलयरपंचिंदियतिरिक्खजोणियाणं एगखुराणं दुखुराणं गंडीपदाणं सणप्पयाणं तेसिं च णं अहाबीएणं अहावगासेणं इत्थिपुरिसस्स य कम्म जाव मेहुणवत्तिए णामं संजोगे समुपज्जइ ते दुहओ सिणेहं संचिणंति तत्थ णं जीवा इत्थित्ताए पुरिसत्ताए जाव विउट्टंति ते जीवा माउओयं पिउसुक्कं एवं जहा मणुस्साणं इत्थि वि वेगया जणयंति पुरिसं पि नपुंसगं पि ते जीवा डहरा समाणा माउक्खीरं सप्पिं आहारेंति आणुपुव्वेणं वुड्ढा वणस्सइकायं तसथावरे य पाणे ते जीवा आहारेंति पुढवीसरीरं जाव संतं अवरे वि य णं तेसिं णाणाविहाणं चउप्पयथलयरपंचेंदियतिरिक्खजोणियाणं एगखुराणं जाव सणप्पयाणं सरीरा णाणावण्णा जाव मक्खायं ॥ २३ ॥

टी० अथापरमेतदाख्यातं नानाविधानां चतुष्पदानां तद्यथा । एकखुराणामित्यश्वखुरादीनां, तथा द्विखुराणां, गोमहिष्यादीनां तथा गंडीपदानां हस्तिगंडकादीनां, तथा सनखानां सिंहव्याघ्रादीनां, यथाबीजेन यथावकाशेन सकलपर्याप्तिमवाप्योत्पद्यंते तयोत्पन्नाः संतस्तदनंतरं मातुः स्तन्यमाहारयंतीति । क्रमेण च वृद्धिमुपगताः संतोऽपरेषामपि शरीरमाहारयंति । शेषं सुगमं यावत्कर्मोपगताः भवंतीति ॥ २३ ॥

साम्प्रतमुरःपरिसर्पानुद्दिश्याह ।

अहावरं पुरक्खायं णाणाविहाणं उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणियाणं तेसिं च णं तं जहा अहीणं अयगराणं आसालियाणं महोरगाणं तेसिं च णं अहाबीएणं अहावगासेणं

इत्थीए पुरिसि जाव एत्थ णं मेहुणं एवं तं चेव नाणत्तं तेसिं च णं अंडं वेगइया जणयंति पोयं वेगइया जणयंति से अंडे उब्भिज्जमाणे इत्थिं वेगइया जणयंति पुरिसं पि णपुंसगं पि ते जीवा डहरा समाणा वाउकायमाहारेंति आणुपुव्वेणं वुड्ढा वणस्सइकायं तसथावरपाणे ते जीवा आहारेंति पुढवि सरीरं जाव संतं अवरे वि य णं तेसिं णाणाविहाणं उरपरिसप्पथलयरतिरिक्खा पंचिंदियअहीणं जाव महोरगाणं सरीरा णाणावण्णा णाणागंधा जाव मक्खायं ॥ २४ ॥

टी. नानाविधानां बहुप्रकारणामुरसा ये प्रसर्पन्ति तेषां । तद्यथा अहीनामजगराणामाशालिकानां महोरगाणां यथावकाशेन यथाबीजत्वेन चोत्पत्त्यांऽण्डजत्वेन पोतजत्वेन वा गर्भान्निर्गच्छन्तीति ते च निर्गता मातुरूष्माणं वायुं चाहारयंति तेषां जातिप्रत्ययेन तेनैवाहारेण क्षीरादिनैव वृद्धिरुपजायते। शेषं सुगमं यावदाख्यातमिति ॥

सांप्रतं भुजपरिसर्पानुद्दिश्याह ॥

अहावरं पुरक्खायं णाणाविहाणं भुयपरिसप्पथलयरपंचिंदियतिरिक्खजोणियाणं तं जहा । गोहाणं नउलाणं सिहाणं सरडाणं सल्लाणं सरघाणं खराणं घरकोइलियाणं विस्सभराणं मुसगाणं मंगुसाणं पयलाइयाणं विरालियाणं जोहाणं चउप्पाइयाणं तेसिं च णं अहाबीएणं अहावगासेणं इत्थीए पुरिसस्स य जहा उरपरिसप्पाणं तहा भाणियव्वं जाव सारूविकडं संतं अवरे वि य णं तेसिं णाणाविहाणं भुयपरिसप्पपंचिंदियथलयरतिरिक्खाणं तं गाहाणं जाव मक्खायं ॥ २५ ॥

टी० नानाविधाभ्यां भुजाभ्यां ये परिसर्पन्ति तेषां । तद्यथा । गोधानकुलादीनां स्वकर्मोपात्तेन यथाबीजेन यथावकाशेन चोत्पत्तिर्भवति। ते चाण्डजत्वेन पोतजत्वेनचोत्पन्नास्तदनंतरं मातुरूष्मणा वायुना वाहारितेन वृद्धिमुपयांति शेषं सुगमं यावदाख्यातमिति ॥

सांप्रतं खेचरानुद्दिश्याह ॥

अहावरं पुरक्खायं णाणाविहाणं खहचरपंचिंदियतिरिक्खजोणियाणं तं जहा चम्मपक्खीणं लोमपक्खीणं समुग्गपक्खीणं विततपक्खीणं तेसिं च णं अहाबीएणं अहावगासेणं इत्थीए जहा उरपरिसप्पाणं नाणत्तं ते जीवा डहरा समाणा माउगात्तसिणेहमाहारेंति आणुपुव्वेणं वुड्ढा वणस्सतिकायं तसथावरे य पाणे ते जीवा आहारेंति पुढविसरीरं जाव संतं अवरे वि य णं तेसिं णाणाविहाणं खहचरपंचिंदियतिरिक्खजोणियाणं चम्मपक्खीणं जावमक्खायं ॥ २६ ॥

नानाविधानां खेचराणामुत्पत्तिरेवं द्रष्टव्या यथा चर्मपक्षिणां चर्मकीटवल्गुलीप्रभृतीनां तथा लोमपक्षिणां सारसराजहंसकाकबकादीनां समुद्गपक्षिविततपक्षिणां वहिर्द्वीपवर्तिनामेतेषां यथाबीजेन यथावकाशेन चोत्पन्नानामाहारक्रियैवमुपजायते। तद्यथा । सा पक्षिणी तदण्डकं पक्षाभ्यामावृत्य तावत्तिष्ठति यावत्तदण्डकं तदूष्मणा हारितेन वृद्धिमुपगतं सत् कललावस्थां परित्यज्य चंच्वादिकानवयवान् परिसमाप्य भेदमुपयाति तदुत्तरकालमपि मात्रोपनीतेनाहारेण वृद्धिमुपयाति शेषं प्राग्वत् ॥ २६ ॥

विकलेन्द्रियाणाम् ।

व्याख्याताः पंचेंद्रिया मनुष्यास्तिर्यञ्चश्च तेषां चाहारो द्वेधा। आभोगनिवर्तिताऽनाभोगनिवर्तितश्च तत्रानाभोगनिवर्तितः । प्रतिक्षणभाव्याभोगनिवर्तितस्तु यथास्वं क्षुद्वेदनीयोदयभावीति ।

सांप्रतं विकलेंद्रियानुद्दिश्याह ।

अहावरं पुरक्खायं इहेगतिया सत्ता णाणाविहजोणिया णाणाविहसंभवा णाणाविहवुक्कमा तज्जोणिया तस्संभवा तदुवक्कमा कम्मोवगा कम्मणियाणेणं तत्थ वुक्कमा णाणाविहाणं तसथावराणं पोग्गलाणं सरीरेसु वा सचित्तेसु वा अचित्तेसु वा अणुसुयत्ताए विउट्टंति ते जीवा तेसिं णाणाविहाणं तसथावराणं पाणाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरं जाव संतं अवरे वि य णं तेसिं तसथावरजोणियाणं अणुसूयगाणं सरीरा णाणावण्णा जाव मक्खायं ॥ २७ ॥

(अहावरमित्यादि) अथानंतरमेतदाख्यातमिहास्मिन् संसारे एके केचन तथाविधकर्मोदयवर्तिनः सत्वाः प्राणिनो नानाविधयोनिकाः कर्मनिदानेन स्वकृतकर्मणा उपादानभूतेन तत्रोत्पत्तिस्थाने उपक्रम्यागत्य नानाविधत्रसस्थावराणां शरीरेषु अचित्तेषु सचित्तेषु वा ( अणुसुयत्ताएत्ति ) अपरशरीराश्रिततया परनिश्रया विवर्तते समुत्पद्यंते इति यावत् ते च जीवा विकलेंद्रियाः सचित्तेषु मनुष्यादिशरीरेषु यूकालिक्षादिकत्वेनोत्पद्यंते। तथा तत्परिभुज्यमानेषु मंचकादिष्वचित्तेषु मत्कुणत्वेनाविर्भवंति तथाऽचित्तीभूतेषु मनुष्यादिशरीरकेषु विकलेंद्रियशरीरेषु वा ते जीवा अनुस्यूतत्वेन परनिश्रयाः कृम्यादित्वेनोत्पद्यंते । अपरे तु सचित्ते तेजःकायादौ मूषिकादित्वेनोत्पद्यंते यत्र चाग्निस्तत्र वायुरित्यतस्तदुद्भवा अपि द्रष्टव्याः तथा पृथिवीमनुश्रित्य कुंथुपिपीलिकादयो वर्षादावूष्मणा संस्वेदजा जायंते तथोदके पूतरका मोल्लणकभ्रमरिकाच्छेदनकादयः समुत्पद्यंते तथा वनस्पतिकाये पनकभ्रमरादयो जायंते तदेवं ते जीवास्तानि स्वयोनिशरीराण्याहारयंतीत्येवमाख्यातमिति ।

सांप्रतं पंचेंद्रियमूत्रपुरीषोद्भवानसुमतः प्रतिपादयितुमाह

एवं दुरूवसंभवत्ताए ॥ २८ ॥

एवमिति पूर्वोक्तपरामर्शः । यथा सचित्ताचित्तशरीरनिश्रया विकलेंद्रियाः समुत्पद्यंते तथा तत्संभवेषु मूत्रपुरीषवांतादिषु अपरे जंतवो दुष्टं विरूपं रूपं येषां कृम्यादीनां ते दुरूपास्तत्संभवत्वेन तद्भावेनोत्पद्यंते ते च तत्र विष्ठादौ देहान्निर्गतेऽनिर्गते वा समुत्पद्यमाना उत्पन्नाश्च तदेव विष्ठादिकं स्वयोनिभूतमाहारयंति । शेषं प्राग्वत् ॥ २८ ॥

एवं खुरदुगत्ताए ॥ २९ ॥

सांप्रतं सचित्तशरीराश्रयान् जंतून् प्रतिपादयितुमाह ( एवं खुरदुगत्ताएइत्यादि ) एवमिति यथा मूत्रपुरीषादावुत्पादस्तथा तिर्यक्शरीरेषु । खुरदुगत्ताएत्ति । चर्मकीटतया समुत्पद्यंते ।

इदमुक्तं भवति जीवतामेव गोमहिष्यादीनां चर्मणोंऽतः प्राणिनः संमूर्च्छंते ते च तन्मांसचर्मणी भक्षयंति भक्षयंतश्च-चर्मणो विवराणि विदधति गलच्छोणितेषु विवरेषु तिष्ठंतस्तदेव शोणितमाहारयंति। तथा अचित्तगवादिशरीरेऽपि तथा सचित्ताचित्तवनस्पतिशरीरेऽपि घुणकीटकाः संमूर्च्छंते ते च तत्र संमूर्च्छंतस्तच्छरीरमाहारयंतीति ॥ २९ ॥

साम्प्रतमप्कायं प्रतिपादयिषुस्तत्कारणभूतवातप्रतिपादनपूर्वकं प्रतिपादयतीत्याह ॥

अहावरं पुरक्खायं इहेगतिया सत्ता णाणाविहजोणिया जाव कम्मणियाणेणं तत्थ वुक्कमा णाणाविहाणं तस थावराणं पाणाणं सरीरेसु सचित्तेसु वा अचित्तेसु वा तं सरीरगं वायसं सिद्धं वा वायसंगहियं वा वायं परिगहियं उड्ढवाएसु उड्ढभागी भवति अहेवाएसु अहेभागी भवति तिरियंवाएसु तिरियंभागी भवति तं जहा ओसा हिमए महियाकरए हरतणुए सुद्धोदए ते जीवा तेसिं णाणाविहाणं तसथावराणं पाणाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढविसरीरं जाव संतं अवरे वि य णं तेसिं तसथावरजोणियाणं ओसाणं जाव सुद्धोदगाणं सरीरा णाणावण्णा जाव मक्खायं ॥ ३० ॥

( अहावरमित्यादि ) अथानंतरमेतद्वक्ष्यमाणं पुरा पूर्वमाख्यातं इहास्मिन् जगत्येके सत्वास्तथाविधकर्मोदया नानाविधयोनिकाः संतो यावत्कर्मनिदानेन तत्र तस्मिन्वातयोनिकेऽप्काये व्युत्क्रम्यागत्य नानाविधानां बहुप्रकाराणां त्रसानां दर्दुरप्रभृतीनां स्थावराणांच हरितलवणादीनां प्राणिनां सचित्ताचित्तभेदभिन्नेषु शरीरेषु तदप्कायशरीरं वातयोनिकत्वादप्कायस्य वायुनोपादानकारणभूतेन सम्यक् संसिद्धं निष्पादितं तथा वातेनैव सम्यग्गृहीतमभ्रपटलांतरनिर्वृत्तं तथा वातेनान्योन्यानुगतत्वात्परिगतं तथोर्ध्वगतेषु वातेषूर्ध्वभागी भवत्यप्कायो गगनगतवातवशाद्दिवि संमूर्च्छते जलं तथाधस्तात्कृतेषु तद्वशात्कृवत्यधोभागीत्यप्काय एवं तिर्यग्गतेषु तिर्यग्भागी भवत्यप्कायः। इदमुक्तं भवति। वातयोनिकत्वादप्कायस्य यत्र यत्रासौ तथाविधपरिणामपरिणतो भवति तत्र तत्र तत्कार्यभूतं जलमपि संमूर्च्छते। तस्य चाभिधानपूर्वकं भेदं दर्शयितुमाह। तद्यथा(ओसत्ति) अवश्यायः (हिमयेति) शिशिरादौ वातेरिता हिमकणाः। मिहिका धूमिकाः। करकाःप्रतीताः(हरतणुयत्ति) तृणाग्रव्यवस्थिता जलबिंदवः शुद्धोदकं प्रतीतमिति। इहास्मिन्नुदकप्रस्तावे एके सत्वास्तत्रोत्पद्यंते स्वकर्मवशगास्तत्रोत्पन्नास्ते जीवास्तेषां नानाविधानां त्रसस्थावराणां स्वोत्पत्त्याधारभूतानां स्नेहमाहारयंति ते जीवास्तच्छरीरमाहारयंति अनाहारका न भवंतीत्यर्थः शेषं सुगमं यावदेतदाख्यातमिति ३०॥

तदेवं वातयोनिकमप्कायं प्रदर्श्याधुनाऽप्कायसंभवमेवाप्कायं दर्शयितुमाह।

अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणिया उदगसंभवा जाव कम्मणियाणेणं तत्थ वुक्कमा तसथावरजोणिएसु उदएसु उदगत्ताए विउट्टन्ति ते जीवा तेसिं तसथावरजोणियाणं उदगाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरं जाव संतं अवरे वि य णं तेसिं तसथावरजोणियाणं उदगाणं सरीरा णाणावण्णा जाव मक्खायं ॥ ३१ ॥

अथापरमाख्यातमिहास्मिन् जगति उदकाधिकारे वा एके सत्वास्तथाविधकर्मोदया वातवशोत्पन्नत्रसस्थावरशरीराधारमुदकं योनिरुत्पत्तिस्थानं येषां ते तथा तथोदकसंभवा यावत्कर्मनिदानेन तत्रोत्पित्सवस्त्रसस्थावरयोनिकेषूदकेष्वपरोदकतया विवर्तंते समुत्पद्यंते ते चोदकजीवास्तेषां त्रसस्थावरयोनिकानामुदकानां स्नेहमाहारयंत्यन्यान्यपि पृथिव्यादिशरीराण्याहारयंति। तच्च पृथिव्यादिशरीरमाहारितं सत् सारूप्यमानीयात्मसात्प्रकुर्वंत्यपराण्यपि तत्र त्रसस्थावरशरीराणि निर्वर्तंते तेषां चोदकयोनिकानामुदकानां नानाविधानि शरीराणि निवर्तन्ते इत्येतदाख्यातम् ॥ ३१ ॥

तदेवं त्रसस्थावरसंभवमुदकयोनित्वेन प्रदर्श्याऽधुना निर्विशेषणमप्कायसंभवमेवाप्कायं दर्शयितुमाह ।

अहावरं पुरक्खायं इहे गतिया सत्ता उदगजोणियाणं जाव कम्मनियाणेणं तत्थ वुक्कमा उदगजोणिएसु उदएसु उदगत्ताए विउट्टंति ते जीवा तेसिं उदगजोणियाणं जीवाणं उदगाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढविसरीरं जाव संतं अवरे वि य णं जीवाणं उदगजोणियाणं उदगाणं सरीरा णाणावन्ना जाव मक्खायं ॥ ३२ ॥

( अहावरमित्यादि ) अथापरमाख्यातमिहास्मिन् जगत्युदकाधिकारे वा एके सत्वाःस्वकृतकर्मोदयादुदकयोनिषूदकेषूत्पद्यंते ते च तेषामुदकसंभवानामुदकजीवानामात्माधारभूतानां शरीरमाहारयंति शेषं सुगमं । यावदाख्यातमिति ॥ ३२ ॥

सांप्रतमुदकाधारानपरान् पूतरकादिकांस्त्रसान् दर्शयितुमाह ।

अहावरं पुरक्खायं इहेगतिया सत्ता उदगजोणियाणं जाव कम्मनियाणेणं तत्थ वुक्कमा उदगजोणिएसु उदएसु तसपाणत्ताए विउट्टंति ते जीवा तेसिं उदगजोणियाणं उदगाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढवीसरीरं जाव संतं अवरे वि य णं तेसिं उदगजोणियाणं तसपाणाणं सरीरा णाणावण्णा जाव मक्खायं ॥ ३३ ॥

( अहावरमित्यादि ) अथापरमेतदाख्यातमिहैके सत्वा उदकयोनिषु चोदकेषु त्रसप्राणितया पूतरकादित्वेन विवर्तन्ते समुत्पद्यंते ते चोत्पद्यमानाः समुत्पन्नाश्च तेषामुदकयोनीनामुदकानां स्नेहमाहारयंति शेषं सुगमं यावदाख्यातमिति ॥ ३३॥

साम्प्रतं तेजस्कायमुद्दिश्याह ॥

अहावरं पुरक्खायं इहेगतिया सत्ता णाणाविहजोणिया जाव कम्मनियाणेणं तत्थ वुक्कमा णाणाविहाणं तसथावराणं पाणाणं सरीरेसु सचित्तेसु वा अचित्तेसु वा अगणिकायत्ताए विउट्टंति ते जीवा तेसिं णाणाविहाणं तसथावराणं पाणाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढविसरीरं जाव संतं अवरे वि य णं तेसिं तसथावरजोणियाणं अगणीणं सरीरा णाणावण्णा जाव मक्खायं सेसा तिन्नि आलावगा उदगाणं ॥ ३४ ॥

(अहावरमित्यादि ) अथैतदपरमाख्यातं इहास्मिन् संसारे एके केचन सत्वाः प्राणिनस्तथाविधकर्मोदयवर्तिनो नानाविधयोनयः प्राक् सन्तः पूर्वजन्मानि तथाविधं कर्मोपादाय तत्कर्मनिदानेन नानाविधानां त्रसस्थावराणां प्राणिनां सचित्तेष्वचित्तेषु शरीरेषु चाग्नित्वेन विवर्त्तन्ते प्रादुर्भवंति । तथाहि । पंचेन्द्रियतिरश्चां दंतिमहिषादीनां परस्परं युद्धावसरे विषाणसंघर्षे सति अग्निरुत्तिष्ठते एवमचित्तेष्वपि तदस्थिसंघर्षादग्नेरुत्थानं तथा द्वींद्रियादिशरीरेष्वपि यथासंभवमायोजनीयं तथा स्थावरेष्वपि वनस्पत्युपलादिषु सचित्ताचित्तेष्वग्निजीवाः समुत्पद्यंते ते चाग्निजीवास्तत्रोत्पन्नास्तेषां नानाविधानां त्रसस्थावराणां स्नेहमाहारयंति । शेषं सुगमं यावद्भवंतीत्येवमाख्यातं । अपरे त्रयोऽप्यालापकाः प्राग्वद् द्रष्टव्या इति ।

साम्प्रतं वायुकायमुद्दिश्याह ॥

अहावरं पुरक्खायं इहेगतिया सत्ता णाणाविहजोणियाणं जाव कम्मनियाणेणं तत्थ वुक्कमा णाणाविहाणं तसथावराणं पाणाणं सरीरेसु सचित्तेसु वा अचित्तेसु वा वाउकायत्ताए विउट्टंति जहा अगणीणं तहा भाणियव्वा चत्तारि गमा ॥ ३५ ॥

अथापरमेतदाख्यातमित्याद्यग्निकायागमेन व्याख्येयम् । साम्प्रतमशेषजीवाधारं पृथिवीकायमधिकृत्याह ॥

अहावरं पुरक्खायं इहेगतिया सत्ता णाणाविहजोणियाणं । जाव कम्मनियाणेणं तत्थ वुक्कमा णाणाविहाणं तसथावराणं पाणाणं सरीरेसु सचित्तेसु वा अचित्तेसु वा पुढवित्ताए सक्करत्ताए वालुयत्ताए इमाओ गाहाओ अणुगंतव्वाओ पुढवी य सक्करा वा लुयाय उवले सिला य लोणूसे । अयत उय तंव सीसग रुप्प सुवण्णे य वइरेय १ हरियाले हिंगुलए मणोसिला सासगंजणपवाले । अब्भपडल ब्भवालु य वायरकाए मणिविहाणा २ गोमेज्जए य रूयए अंके फलिहिय लोहियक्खे य । मरगयमसारगल्ले भूयमोयग इंदणीले य ३ चंदण गेरुयहंसगब्भे पुलए सोगंधिए य बोद्धव्वे । चंदप्पभवेरुलिए जलकंते सूरकंते य ४ एयाओ एएसु भाणियव्वा एओ गाहाओ जाव सूरकंताए विउट्टंति ते जीवा तेसिं णाणाविहाणं तसथावराणं पाणाणं सिणेहमाहारेंति ते जीवा आहारेंति पुढविसरीरं जाव संतं अवरे वि य णं तेसिं तसथावरजोणियाणं पुढवीणं जाव सूरकंताणं सरीरा णाणावण्णा जाव मक्खायं सेसं तिण्णि आलावगा जहा उदगाणं ॥ ३६ ॥

अथापरमेतत्पूर्वमाख्यातं इहैके सत्वाः पूर्वं नानाविध योनिकाः स्वकृतकर्मवशा नानाविधत्रसस्थावराणां शरीरेषु पृथिवीत्वेनोत्पद्यन्ते । तद्यथा । सर्पशिरस्सु मणयः, करिदंतेषु मौक्तिकानि, स्थावरेष्वपि वेणवादिषु तान्येवेति । एवमचित्ते षूपलादिषु लवणभावेनोत्पद्यन्ते । तदेवं पृथिवीकायिका नानाविधासु पृथिवीषु शर्करावालुकोपलशैललवणादिभावेन तथा गोमेदकादिरत्नभावेन च बादरमणिविधानतया समुत्पद्यन्ते । शेषं सुगमं । यावच्चत्वारो ऽप्यालापका उदकागमेन नतव्या इति ॥ ३६ ॥

साम्प्रतं सर्वोपसंहारद्वारेण सर्वजीवान् सामान्यतो विभणिषुराह ।

अहावरं पुरक्खायं सव्वे पाणा सव्वे भूता सव्वे जीवा सव्वे सत्ता णाणाविहजोणिया णाणाविहसंभवा णाणाविहवुक्कमा सरीरजोणिया सरीरसंभवा सरीरवुक्कमा सरीराहारा कम्मोवगा कम्मनियाणा कम्मगतीया कम्मट्ठिइया कम्मणा चेव विप्परिया समुवेंति ॥ ३७ ॥

( अहावरमित्यादि ) अथापरमेतदाख्यातं । तद्यथा । सर्वे प्राणा प्राणिनो ऽत्र च प्राणिभूतजीवसत्वशब्दाः पर्यायत्वेन द्रष्टव्याः । कथंचिद्भेदं चाश्रित्य व्याख्येयाः । ते च नानाविधयोनिका अतो नानाविधासु योनिषूत्पद्यन्ते नारकतिर्यग्नरामराणां परस्परगमनसंभवात्ते च यत्र यत्रोत्पद्यन्ते तत्तच्छरीराण्याहारयन्ति तदाहारवन्तश्च तत्रागुप्ताश्रवद्वारतया कर्मवशगा नारकतिर्यङ्नरामरगतिषु जघन्यमध्यमोत्कृष्टस्थितयो भवंति । अनेनेदमुक्तं भवति । यो यादृगिह भवे स तादृगेवामुत्रापि भवतीत्येतन्निरस्तं भवति । अपितु कर्मोपगाः कर्मनिदानाः कर्मायत्तगतयो भवन्ति । तथा तेनैव कर्मणा सुखार्थिनो ऽपि तद्विपर्यासं दुःखमुपगच्छंतीति ॥ ३७ ॥

साम्प्रतमध्ययनार्थमुपसंजिघृक्षुराह ॥

से एवमायाणह से एवमायाणित्ता आहारगुत्ते सहिए समिए सयाजए त्तिबेमि ॥ बियसुय क्खंधस्स आहारपरिण्णा णाम तईयमज्झयणं सम्मत्तम् ॥

यदेतन्मयादितः प्रभृत्युक्तं । तद्यथा । यो यत्रोत्पद्यते स तच्छरीराहारको भवति आहारगुप्तश्च कर्मादत्ते कर्मणा च नानाविधासु योनिषु अरहट्टघटीन्यायेन पौनःपुन्येन पर्यटतीत्येवमाजानीत यूयं एतद्विपर्यासं दुःखमुपगच्छंतीति । एतत्परिज्ञाय च सदसद्विवेक्याहारगुप्तः पञ्चभिस्समितिभिस्समितो यदि वा सम्यक् ज्ञानादिके मार्गे इतो गतः समितस्तथा सह हितेन वर्त्तते सहितः सन् सदा सर्वकालं यावदुच्छ्वासं तावद्यतेत तत्संयमानुष्ठाने प्रयत्नवान् भवेदिति । इति परिसमाप्त्यर्थे ब्रवीमीति पूर्ववत् । गतोऽनुगमः साम्प्रतं नयास्ते च प्राग्वद् द्रष्टव्याः ॥ ३८ ॥ समाप्तमाहारपरिज्ञाख्यं तृतीयमध्ययनम् ॥ ३ ॥

आहारस्य दिक् ॥

छहिं दिसाहिं जीवाणं आहारे पवत्तइ ।
तंजहा पाईणाए जाव अहाए ॥ स्था० ठा० ६ ।

आहारः प्रतीतः सोऽपि षट्स्वेव दिक्षु एतद्व्यवस्थितप्रदेशावगाढपुद्गलानामेव जीवेन स्पर्शनात्स्पृष्टानामेवाहरणात् । स्था० टी० ॥ जीवा० प्र० १ ॥ स च देशतः सर्वतश्च ।

दोहिं ठाणेहिं आया आहारेइ देसेण वि सव्वेण वि ।

आहारयति देशेन मुखमात्रेण सर्वेण ओज आहारापेक्षया आहारमेव परिणमयति परिणामयति खलरसविभागेन भक्ताद्यर्थदेशस्य प्लीहादिना रुद्धत्वात् देशतोऽन्यथा सर्वतः । स्था० ठा० २ टी० ॥

चतुर्गतिषु आहारः ॥

णेरइयाणं चउव्विहे आहारे पन्नत्ते तंजहा ।
इंगालोवमे मुम्मुरोवमे सीयले हिमसीयले ॥

नारकानाहारतो निरूपयन्नाह । नेरइयाणमित्यादि । व्यक्तं केवलं अंगारोपमः अल्पकालदाहत्वान्मुर्मुरोपमः स्थिरतरदाहत्वाच्छीतलः शीतवेदनोत्पादकत्वात् हिमशीतलो ऽत्यन्तशीतलोऽत्यंतशीतवेदनोत्पादकत्वात् अधोऽध इति क्रम इति ॥ स्था० ठा० ४ ।

तिरिक्खजोणियाणं चउव्विहे आहारे पं. तं. कंकोवमे बिलोवमे पाणमंसोवमे पुत्तमंसोवमे । मणुस्साणं चउव्विहे आहारे पं. तं. असणे जाव साइमे। देवाणं चउव्विहे आहारे पं. तं. वण्णमंते गंधमंते रसमंते फासमंते ॥

तिरिक्खजोणियाणमित्यादि । व्यक्तनवरं कंकः पक्षिविशेषस्तस्याहारेणोपमा यत्र स मध्यमपदलोपात्कङ्कोपमः । अयमर्थो यथा हि कंकस्य दुर्जरोऽपि स्वरूपेणाहारः सुखभक्ष्यः-सुखपरिणामश्च भवति एवं यस्तिरश्चां सुखभक्ष्यस्सुखपरिणामश्च स कङ्कोपम इति। तथा बिले प्रवेशाद्रव्यं बिलमेव तेनोपमा यत्र स तथा । बिले हि अलब्धरसास्वादं झटिति यथा किल किंचित्प्रविशति एवं यस्तेषां गलबिले प्रविशति स तथोच्यते । पाणो मातङ्गस्तन्मांसमस्पृश्यत्वेन जुगुप्सया दुःखाद्यं स्यादेवं यस्तेषां दुःखाद्यस्स पाणमांसोपमः। पुत्रमांसन्तु स्नेहपरतया दुःखाद्यतरं स्यादेवं यो दुःखाद्यतरः स पुत्रमांसोपमः क्रमेण चैते शुभसमा शुभाशुभतरा वेदितव्याः वर्णवानित्यादौ प्रशंसायामतिशायने वा मतुरिति । स्था ठा० ॥ ४ ॥ टी० ॥

आहारमधिकृत्य वक्तव्यार्थाः ।

सचित्ताहारट्ठी केवति किंवा वि सव्वतो चेव ।
कतिभागं सव्वे खलु परिणामे चेव बोधव्वे ॥ १ ॥
एगिंदियसरीरादि लोमाहारे तहेवमणभक्खी ।
एतेसिं तु पदाणं विभावणा होइ कायव्वा ॥ २ ॥

प्रथमोऽधिकारस्सचित्तपदोपलक्षितस्स चैवं ( नैरइयाणं भंते! किं सचित्ताहारा अचित्ताहारा ) इत्यादि १ द्वितीय आहारार्थिन इति २ तृतीयः । ( केवइयत्ति ) कियता कालेन आहारार्थः समुत्पद्यते इत्यादिरूपः ३ । चतुर्थः किमाहारमाहारयन्तीति पदोपलक्षितः ४ । पंचमः सर्वत इति पदोपलक्षितस्स चैवं-( नेरइयाणं सव्वतो परिणामन्तीत्यादि ) । ५ । चेव शब्दस्समुच्चये ( कइभागंति ) गृहीतानां पुद्गलानां कतिभागमाहारयन्तीत्येवमादि षष्ठोऽधिकारः ६ तथा ( सव्वं इति ) यान्पुद्गलानाहारतया गृह्णन्ति तान्किं सर्व्वानपरिशेषान् आहारयन्ते उत सर्व्वानित्येवमुपलक्षितः सप्तमोऽधिकारः ७ तथा अष्टमोऽधिकारः परिणामः परिणामरूपो बोद्धव्यः स चैवं ( नेरइयाणं भंते ! जे पोग्गले आहारत्ताए गिण्हंति तेणं तेसिं पुग्गला कीसत्ताए भुज्जो २ परिणामन्तीत्यादि- ) रूपः ८ नवमोऽर्थाधिकारः एकेन्द्रियादीनि शरीराणि स चैवं- ( नेरइयाणं भंते ! किं एगिंदियसरीराइं । आहारेंति जाव पंचिंदियशरीराइं आहारेंति ) इत्यादि ९ दशमोऽधिकारो लोमाहारो लोमाहारवक्तव्यतारूपः । १० । एकादशो मनोभक्षिवक्तव्यतारूपः । ११ । एएसिं तु इत्यादि । एतेषां सामान्यतोऽनन्तरमुद्दिष्टानां पदानामर्थाधिकाराणां विभावना विस्तरतः प्रकाशना नाम भवति कर्त्तव्या। सूत्रकारवचनमेतत्प्रतिज्ञानमेव निर्व्वाहयितुकामो यथोद्देशनिर्द्देश इति न्यायात्प्रथमाधिकारं विभावयति । प्रज्ञा० पद० २८ । भ० श० १ उ १ ॥

सचित्ताहाराः ॥

नेरइयाणं भंते ! किं सचित्ताहारा अचित्ताहारा मीसाहारा ? गोयमा ! नो सचित्ताहारा अचित्ताहारा नो मीसाहारा एवं असुरकुमारा जाव वेमाणिया । उरालिय सरीरा जाव मणूसा सचित्ताहारा वि अचित्ताहारा वि मीसाहारा वि ॥

नैरयिका भदन्त ! किं सचित्ताहाराः सचित्तमाहारयन्तीति सचित्ताहाराः एवमचित्ताहारा मिश्राहारा इत्यादि भावनीयं भगवानाह- ( गोयमेत्यादि ) इह वैक्रियशरीरिणो वैक्रियशरीरपरिपोषयोग्यान् पुद्गलानाहारयन्ति ते चाचित्ता एव संभवंति न जीवपरिगृहीता इत्यचित्ताहारा नापि मिश्राहारा एवमसुरकुमारादयः स्तनितकुमारपर्य्यवसाना भवनपतयो व्यन्तरज्योतिष्का वैमानिकाश्च वेदितव्याः । औदारिकशरीरिणः पुनरौदारिकशरीरपरिपोषयोग्यान्पुद्गलानाहारयन्ति ते च पृथिवीकायिकादिपरिणामपरिणता इति ।

सचित्ताहारा मिश्राहारा अपि घटन्ते । तथाचाह । ( उरालियसरीरी जाव मणूसा इत्यादि ) औदारिकशरीरिणः पृथिवीकायिकेभ्यः आरभ्य यावन्मनुष्याः । किमुक्तम्भवति पृथिव्यप्तेजोवायुवनस्पतिरूपा एकेन्द्रिया द्वित्रिचतुःपञ्चेन्द्रिया मनुष्याश्च एते प्रत्येकं सचित्ताहारा अपि अचित्ताहारा अपि मिश्राहारा अपि वक्तव्याः ॥ उक्तः प्रथमोऽधिकारः ॥

सम्प्रति द्वितीयानष्टपर्य्यन्तान्सप्ताधिकारान् चतुर्विंशतिदण्डकक्रमेण युगपदभिधित्सुः प्रथमतो नैरयिकाणामभिदधाति ।

नेरइया णं भंते! आहारट्ठी ? हंता आहारट्ठी णेरइयाणं भंते ! केवइकालस्स आहारट्ठे समुप्पज्जइ? गोयमा ! णेरइयाणं दुविहे आहारे पण्णत्ते। तं० आभोगनिव्वत्तिए य. अणाभोगनिव्वत्तिए य। तत्थ णं जे से अणाभोगनिव्वत्तिए से णं अणुसमयं अविरहिए आहारट्ठे समुप्पज्जइ । तत्थ णं जे से आभोगनिव्वत्तिए से णं असंखेज्जसमइए अंतोमुहुत्तिए आहारट्ठे समुप्पज्जइ ॥

( नेरयाणमित्यादि ) नैरयिका णमिति वाक्यालङ्कारे भदन्त ! आहारार्थिनो नैरयिका इति यदि आहारार्थिनस्ततो भगवानाह ( हंतेत्यादि ) हंतेत्यनुमतौ अनुमतमेतत् गौतम ! आहारार्थिनो नैरयिका इति यदि आहारार्थिनस्ततो भदन्त! नैरयिका णमिति पूर्ववत् ( केवइ कालस्सत्ति ) प्राकृतत्वात् तृतीयार्थे षष्ठी । कियता कालेन आहारार्थ आहारलक्षणं प्रयोजनं आहाराभिलाष इति यावत्समुत्पद्यते-भगवानाह ( गोयमेत्यादि ) नैरयिकाणां द्विविधो द्विप्रकार आहारस्तद्यथा । आभोगनिर्वर्तित आहारयामीति इच्छापूर्वनिर्म्मापित इति यावत् । तद्विपरीतोऽनाभोगनिर्वर्तितः । आहारयामीति विशिष्टेच्छामन्तरेण यो निष्पाद्यते प्रावृट्काले प्रचुरतरमूत्राद्यभिव्यंगशीत पुद्गलाद्याहारवत्सोऽनाभोगनिर्वर्तित इति भावः । ( तत्थणमित्यादि ) तत्राभोगानाभोगनिर्वर्तितयोर्मध्ये योऽनाभोगनिर्वर्तितः आहारः ( सेणमिति ) पूर्ववत् अनुसमयं प्रतिसमयं २ समयं २ इत्यर्थः । इत्यदीर्घकालोपभोगस्याहारस्यैकवारमपि ग्रहणे तावंतं कालमनुसमयम्भवति । तत आभवपर्य्यन्तं सातत्यग्रहणप्रतिपादनार्थमाह । अविरहित आहारार्थस्समुत्पद्यते । अथवा सततप्रवृत्त आहारार्थेऽपांतराले

चुक्रस्खलितन्यायेन कथञ्चिद्विरहे भावेऽपि लोके तद्गणनया अनुसमयमिति व्यवहारः प्रवर्तते । ततोऽपान्तराले विरहाभावप्रतिपादनार्थमित्युक्तं । अनुसमयविरहितोऽनाभोगनिर्वर्तित आहारार्थः समुत्पद्यमान ओज आहारादिना प्रकारेणावसेयः । ( तत्थ णमित्यादि ) तत्राभोगानाभोगनिर्वर्तितयोर्मध्ये योऽसावनाभोगनिर्वर्तित आहारार्थः सोऽसंख्येयसामायिकोऽसंख्येयैः समयैर्निर्वर्तितम् । यथासंख्येयसमयनिर्वर्तितं तत् जघन्यपदेऽप्यन्तर्मुहूर्तिकम्भवति । न हीनमत आन्तर्मुहूर्तिक आहारार्थः समुत्पद्यते । किमुक्तं भवति । अन्तर्मुहूर्तकालं यावत्प्रवर्तते न परतो नैरयिकाणां हि योऽसावाहारयामीत्यभिलाषः स परिगृहीताहारद्रव्यपरिणामेन यज्जनितमतितीव्रतरं दुःखं तद्भावादन्तर्मुहूर्तान्निवर्तते । तत आन्तर्मुहूर्तिको नैरयिकाणामाहारार्थः ( नेरइयाणमित्यादि ) नैरयिकाणामिति पूर्ववत् किंस्वरूपमाहारयन्ति भगवान्द्रव्यादिभेदतस्तमाहारयन्तीति निरूपयितुकाम आह ( गोयमेत्यादि ) ॥

किमाहारमाहारयन्ति ॥

णेरइया णं भंते ! किमाहारमाहारेंति ? गोयमा ! दव्वओ अणंतपदेसियाइं खेत्तओ असंखेज्जपदेसोगाढाइं कालओ अन्नतरकालट्ठितियाइं भावतो वन्नमंताइं गंधमंताइं रसमंताइं फासमंताइं जाइं भावओ वन्नमंताइं आहारंति ताइं किं एगवन्नाइं आहारंति जाव किं पंचवन्नाइं आहारंति ? गोयमा ! ठाणमग्गणं पडुच एगवन्नाइं पि आहारंति । जाव पंचवन्नाइं पि आहारंति विहाणमग्गणं पडुच कालवन्नाइं पि आहारंति जाव सुक्किल्लाइं पि आहारंति । जाइं वन्नओ कालवन्नाइं आहारंति ताइं किं एगगुणकालाइं आहारंति जाव दसगुणकालाइं आहारंति संखिज्ज असंखिज्ज अणंतगुणकालाइं आहारंति। गोयमा ! एगगुणकालाइं पि आहारंति जाव अणंतगुणकालाइं पि आहारंति एवं जाव सुक्किल्लाइं। एवं गंधतो वि रसतो वि । जाइं भावओ फासमंताइं ताइं नो एगफासाइं आहारंति नो दुफासाइं आहारंति । नो तिफासाइं आहारंति चउफासाइं पि आहारंति । जाव अट्ठफासाइं पि आहारंति । विहाणमग्गणं पडुच्च कक्खडाइं पि आहारंति जाव लुक्खाइं पि आहारंति । जाइं फासओ कक्खडाइं आहारंति ताइं किं एगगुणकक्खडाइं आहारंति । जाव अणंतगुणकक्खडाइं आहारंति गोयमा ! एगगुणकक्खडाइं पि आहारंति जाव अणंतगुणकक्खडाइं पि आहारंति एवं अट्ठविहफासा भाणियव्वा । जाव अणंतगुणलुक्खाइं पि आहारंति । जाइं भंते ! अणंतगुणलुक्खाइं आहारंति ताइं किं पुट्ठाइं आहारंति अपुट्ठाइं ! गोयमा ! पुट्ठाइं आहारंति नो अपुट्ठाइं आहारंति जहा भासुद्देसए जाव नियमा छद्दिसिं आहारंति ओसन्नं कारणं पडुच्च वन्नओ कालनीलाइं गंधओ दुब्भिगंधाइं रसओ तित्तरसकडुयाइं फासओ कक्खडगरुयसीतलुक्खाइं तेसिं पोराणा वन्नगुणे गंधगुणे रसगुणे फासगुणे विपरिणामइत्ता परिपीलइत्ता परिसाडइत्ता परिविद्धंसइत्ता अन्ने अपुव्वे वन्नगुणे गंधगुणे फासगुणे उप्पाएत्ता आयसरीरखित्तोगाढे पोग्गले सव्वप्पणयाए आहारमाहारेइ ॥

टी० गौतम ! द्रव्यतो द्रव्यस्वरूपपर्यालोचनायां अनन्तप्रादेशिकानि द्रव्याणि । अन्यथा ग्रहणासंभवात् न हि संख्यातप्रदेशात्मका असंख्यातप्रदेशात्मका वा स्कंधा जीवस्य ग्रहणयोग्या भवन्ति । क्षेत्रतोऽसंख्येयप्रदेशावगाढानि । कालतोऽन्यतरस्थितिकानि जघन्यस्थितिकानि मध्यमस्थितिकानि उत्कृष्टस्थितिकानि चेति भावार्थः । स्थितिरिति चाहारयोग्यस्कंधपरिणामत्वेनावस्थानमवसेयं । भावतो वर्णवंति गंधवंति रसवंति स्पर्शवंति च । प्रतिपरमाण्वेकैकवर्णगंधरसद्विस्पर्शभावात् । (जाइं भावओ वन्नमंताइं) इत्यादि प्रश्नसूत्रं सुगमं भगवानाह । ( गोयमा ! ठाणमग्गणं पडुच्चेत्यादि ) तिष्ठंति विशेषा अस्मिन्निति स्थानं सामान्यमेकवर्णं द्विवर्णं त्रिवर्णमित्यादिरूपं तस्य मार्गणमन्वेषणं तत्प्रतीत्य सामान्यचिन्तामाश्रित्येति भावार्थः । एकवर्णान्यपि द्विवर्णान्यपि इत्यादि सुगमं । नवरं तेषामनन्तप्रादेशिकानां स्कन्धानामेकवर्णत्वं द्विवर्णत्वमित्यादि व्यवहारनयमतापेक्षया । निश्चयनयमतापेक्षया तु अनन्तप्रादेशकस्कंधीयानापि पञ्चवर्ण एव प्रतिपत्तव्यः । ( विहाणमग्गणं पडुच्चेत्यादि ) ॥ विव्यक्तमितरव्यवच्छिन्नं धानं पोषणं स्वरूपस्य यत्तद्विधानं विशेषः कृष्णो नील इत्यादिविशेष इति यावत्तस्य मार्गणं तत्प्रतीत्य त्यक्त्वा सवर्णान्यप्याहारयंतीत्यादि सुगमं । नवरमेतदपि व्यवहारतः प्रतिपत्तव्यं । निश्चयतः पुनरवश्यं तानि पञ्चवर्णान्येव ॥ जाइं वन्नओ कालवन्नाइं पीत्यादि ॥ सुगमं । यावदनन्तगुणसुक्किल्लाइं पि आहारंति । एवं गंधरसस्पर्शविषयाणि सूत्राण्यपि भावनीयानि ( जाइं भंते ! अनन्तगुणलुक्खाइं इत्यादि ) यानि भदन्त ! अनन्तगुणरूक्षाणि उपलक्षणमेतत् । एवं गुणकालादीन्यप्याहारयन्तीति तानि च भदन्त ! किं स्पृष्टान्यात्मप्रदेशैः स्पर्शविषयाण्याहारयन्ति उतास्पृष्टानि । भगवानाह । स्पृष्टानि नो अस्पृष्टानि ( जहा भासुद्देसए जाव नियमा । छद्दिसित्ति ) अत ऊर्ध्वं यथा भाषोद्देशके प्राक्सूत्रमभिहितं तथात्रापि द्रष्टव्यं । तत्र तावत् यावन्नियमाः ( छद्दिसिंति ) पदं तच्चैवं ।

जाइं पुट्ठाइं आहरंति ताइं भंते ! किं ओगाढाइं आहारंति गोयमा ! ओगाढाइं आहारंति णो अणोगाढाइं आहारंति । जाइं भंते ओगाढाइं आहारंति ताइं किं अणंतरोगाढाइं आहारंति परंपरोगाढाइं आहारंति गो० अणंतरोगाढाइं आहारंति नो परंपरोगाढाइं आहारंति जाइं अणंतरोवगाढाइं आहारंति ताइं भंते ! किं अणूइं आहारंति बादराइं आहारंति ? गोयमा ! अणुं पि आहारंति बायराइंपि आहारंति । जाइं भंते ! अणुं पि आहारंति बायराइं पि आहारंति ताइं किं उड्ढं आहारंति अहे आहारंति तिरियं आहारंति ? गोयमा ! उड्ढं पि आहारंति अहे वि आहारंति तिरियं पि आहारंति जाइं भंते ! उड्ढं पि आहारंति अहे पि आहारंति तिरियं पि आहारंति

ताइं आइं पि आहारंति मज्झे आहारंति पज्जवसाणे आहारंति? गोयमा! आइं पि आहारंति मज्झे वि आहारंति पज्जवसाणे वि आ० । जाइं भंते! आइं पि आहारंति मज्झे वि आहारंति पज्जवसाणेवि आहारंति ताइं भंते! किं सविसए आहारंति अविसए आहारंति? गोयमा! सविसए आहारंति नो अविसए आहारंति । जाइं भंते! सविसए आहारंति ताइं किं आणुपुव्विए आहारंति । अणाणुपुव्विए । गो०! आणुपुव्विं आहारंति नो अणाणुपुव्विं आहारेंति । जाइं भंते! आणुपुव्विं आहारंति ताइं किं तिदिसिं आहारंति । चउदिसिं आहारंति पंचदिसिं आहारंति छद्दिसिं आहारंति ?

अस्य व्याख्या । इहात्मप्रदेशैः संस्पर्शनेनात्मनः प्रदेशावगाढात्क्षेत्राद्बहिरपि सम्भवति ततः प्रश्नयति । ( जाइं भंते! इत्यादि ) यानि भदन्त! स्पृष्टान्याहारयंति तानि किं अवगाढानि आत्मप्रदेशैः सह एकक्षेत्रावस्थायीनि उत अनवगाढानि आत्मप्रदेशावगाढक्षेत्राद्बहिरवस्थितानि । भगवानाह । गौतम! अवगाढान्याहारयंति नानवगाढानि । उत अवगाढानि आत्मप्रदेशावगाढक्षेत्रे किमनन्तरावगाढानि । किमुक्तं भवति । ययात्मप्रदेशेषु यान्यव्यवधानेनावगाढानि तैरात्मप्रदेशैस्तान्येवाहारयंति उत परम्परावगाढानि एकद्व्याद्यात्मप्रदेशव्यवहितानि । भगवानाह । गौतम! अनन्तरावगाढानि आहारयंति नो परम्परावगाढानि । यानि भदन्त! अनन्तरावगाढान्याहारयंति तानि किमणूनि स्तोकान्याहारयन्ति उत बादराणि प्रभूतप्रदेशोपचितानि । भगवानाह । अणून्यप्याहारयन्ति बादराण्यप्याहारयन्ति । इहाणुत्वबादरत्वे तेषामेवाहारयोग्यानां स्कन्धानां प्रदेशस्तोकत्वबाहुल्यापेक्षया वेदितव्ये इति । यानि भदन्त! अणून्यप्याहारयन्ति तानि भदन्त! किमूर्ध्वमूर्ध्वप्रदेशस्थितान्याहारयन्ति अधस्तिर्यग्वा । इह ऊर्ध्वाधस्तिर्यक्त्वं यावति क्षेत्रे नैरयिको ऽवगाढस्तावत्येव क्षेत्रे तदपेक्षया परिभावनीयं । भगवानाह । ऊर्ध्वमप्याहारयन्ति ऊर्ध्वप्रदेशावगाढान्यप्याहारयंति एवमधोऽपि तिर्य्यगपि । यानि भदन्त! ऊर्ध्वमप्याहारयन्ति अधोऽप्याहारयन्ति तिर्यगप्याहारयन्ति तानि किमादावाहारयन्ति मध्ये आहारयन्ति पर्य्यवसाने आहारयन्ति । अयमत्राभिप्रायो नैरयिका ह्यनन्तप्रादेशिकानि द्रव्याण्यन्तर्मुहूर्त्तं कालं यावदुपभोगोचितानि गृह्णन्ति ततः संशयः किमुपभोगोचितस्य कालस्यान्तर्मुहूर्त्तप्रमाणस्यादौ प्रथमसमये आहारयन्ति उत मध्ये मध्येषु समयेषु आहोस्वित्पर्य्यवसाने पर्य्यवसानसमये? भगवानाह । गौतम! आदावपि मध्येऽपि पर्य्यवसानेऽप्याहारयन्ति । किमुक्तं भवति । उपभोगोचितस्य कालस्यान्तर्मुहूर्तप्रमाणस्यादिमध्यावसानेषु समयेषु आहारयन्ति उत अविषयाणि स्वोचिताहारयोग्यान्याहारयन्ति । भगवानाह । गौतम! स्वविषयानाहारयन्ति नो अविषयान् । यानि भदन्त! स्वविषयानाहारयन्ति तानि भदन्त! किमानुपूर्व्या आहारयन्ति अनानुपूर्व्या?। आनुपूर्व्वी नाम यथासन्नं । तद्विपरीता अनानुपूर्व्वी । भगवानाह । गौतम! आनुपूर्व्या सूत्रे द्वितीया तृतीयार्थे वेदितव्या प्राकृतत्वात् यथा आचाराङ्गे-( अगणिपुट्ठा ) इत्यत्र आहारयन्ति नो अनानुपूर्व्या ऊर्ध्वमधस्तिर्य्यग्वा यथासन्नं नातिक्रम्याहारयन्तीति भावनीयानि । भदन्त! आनुपूर्व्या आहारयन्ति तानि किं (तिदिसिंति)। तिस्रो दिशः समाहृतास्त्रिदिक् तस्मिन् व्यवस्थितान्याहारयन्ति चतुर्दिशि पंचदिशि षड्दिशि वा इह लोकनिष्कुटपर्य्यन्ते जघन्यपदे त्रिदिग्व्यवस्थितमेकदिग्व्यवस्थितं वा अतस्त्रिदिश आरभ्य प्रश्नः कृतः । भगवानाह । गौतम! नियमात् षड्दिशि व्यवस्थितान्याहारयन्ति । नैरयिका हि त्रसनाड्यां मध्ये व्यवस्थितास्तत्र चावश्यं षड्दिक्संभव इति । (ओसन्नकारणं पडुच्चेत्यादि ) ओसन्नशब्दो बाहुल्यवाची । यथा ओसन्नं देवा सायं वेयणं वेयंतीत्यत्र । तत ओसन्नकारणं बाहुल्यकारणं प्रतीत्य किंतद्बाहुल्यकारणमिति चेदुच्यते । अशुभानुभाव एव । तथापि प्रायो मिथ्यादृष्टयः कृष्णादीन्याहारयन्ति न तु भविष्यत्तीर्थकरादयः । तत ओसन्नेत्युक्तं । वर्णतः कालनीलादि । गन्धतो दुरभिगन्धादि । रसतस्तिक्तकटुकानि । स्पर्शतः कर्कशगुरुशीतरूक्षादि इत्यादि तेषामाहार्य्यमाणानां पुद्गलानां पुराणान् अग्रेतनान् वर्णगुणान् गन्धगुणान् स्पर्शगुणान् (विपरिणामइत्ता परिपीलइत्ता परिसाडइत्ता परिविद्धंसइत्ता) एतानि चत्वार्य्यपि पदान्येकार्थिकानि विनाशार्थप्रतिपादकानि नाना देशजविनेयानुग्रहार्थमुपात्तानि विनाश्य किमिति आह । अन्यानपूर्व्वान्वर्णगुणान् रसगुणान् स्पर्शगुणानुत्पाद्य आत्मशरीरक्षेत्रावगाहान् पुद्गलान् ( सव्वप्पणयाए ) सर्व्वात्मना सर्व्वैरेवात्मप्रदेशैराहारमाहाररूपानाहारयन्ति ॥ प्रज्ञा. पद २८ । जी. प्र. १ । भ. श. ६ उ० ४ ।

नेरइया णं भंते! जे पोग्गला अत्तमायाए आहरंति ते किं आयसरीरखेत्तोगाढे पोग्गले अत्तमाए आहारंति अणंतरखेत्तोगाढेपोग्गले अत्तमायाए आहारंति परं पर खेत्तोगाढे पोग्गले अत्तमायाए आहरंति? गोयमा! आयसरीरंखेत्तोगाढे पोग्गले अत्तमाया एआहारंति नो अणंतरखेत्तोगाढे पोग्गले अत्तमायाए आहारंति नो परंपर खेत्तोगाढे जहा नेरइया तहा जावे वेमाणियाणं दंडओ ॥

टी० नेरइयाणमित्यादि । ( अत्तमाएत्ति ) । आत्मना आदाय गृहीत्वेत्यर्थः । जीवाधिकारादेवमाह । ( आयसरीर खेत्तोगाढेत्ति ) स्वशरीरक्षेत्रे अवस्थितानीत्यर्थः । ( अणंतरखेत्तोगाढेत्ति) । आत्मशरीरावगाढक्षेत्रापेक्षया यदनन्तरं क्षेत्रं तत्रावगाढानीत्यर्थः ( परंपरखेत्तोगाढेत्ति ) आत्मक्षेत्रानन्तरक्षेत्राद्यत्परं क्षेत्रं तत्रावगाढानीत्यर्थः ) ॥ भ. श. ६ । उ० १० ।

नेरइयाणं भंते सव्वओ आहारंति सव्वओ परिणामंति सव्वओ ऊससन्ति सव्वओ नीससंति अभिक्खणं २ आहारंति अभिक्खणं २ परिणामन्ति अभिक्खणं ऊससंति अभिक्खणं नीससंति आहच्च आहारंति आहच्च परिणामंति आहच्च ऊससंति आहच्च नीससंति । हंता गोयमा! णेरइया सव्वओ आहारंति एवं चेव जाव आहच्च नीससंति णेरइयाणं भंते! जे पोग्गले आहारत्ताए गेण्हंति ते णं पोग्गलाणं सेयालंसि कतिभागं आहारंति कइभागं आसायंति? गोयमा! असंखेज्जइ भागं आहा

रंति अणंतभागं आस्साएंति णेरइयाणं भंते ! जे पोग्गले आहारत्ताए गिएहंति ते किं सव्वे आहारंति नो सव्वे आहारंति? गोयमा ! ते सव्वे अपरिसेसिए आहारंति ॥

( नेरइया णं भंते इत्यादि ) प्रश्नसूत्रं सुगमं । ( नेरइयाणं भंते ! जे पोग्गलाइत्यादि ) नैरयिका णमिति पूर्ववत् भदन्त ! यान् पुद्गलानाहारतया गृएहन्ति नैरयिकास्तेषां गृहीतानां पुद्गलानां ( सेकालंसि ) एष्यत्काले ग्रहणकालोत्तरकालग्रहणकालमित्यर्थः ( कइभागं ति ) कतिथं भागमाहारयन्ति आहारतयोपभुंजते । तथा । कतिभागं कतिथं भागमामाहार्य्यमाणपुद्गलानामास्वादं गृएहंति । न हि सर्वे पुद्गला आहार्यमाणान्यास्वादमायान्ति इति पृथक् प्रश्नः । भगवानाह । गौतम ! असंख्येयं भागमाहारयन्ति । अन्ये तु गवादि. पृथमवृहदुग्रासग्रहण इव परिसटंति । आहार्य्यमाणानां च पुद्गलानामनन्तभागमास्वादयन्ति । शेषास्त्वनास्वादिता एव शरीरपरिणाममापद्यन्ते इति ॥

णेरइया णं भंते ! जे पोग्गले आहारत्ताए गेएहंति ते णं तेसिं पोग्गला कीसत्ताए भुज्जो भुज्जो परिणमंति? गोयमा ! सो इंदियत्ताए जाव फासिंदियत्ताए अणिट्ठत्ताए अकंतत्ताए अप्पियत्ताए अमणुन्नाए अमणामत्ताए अणिच्छियत्ताए अभिज्झियत्ताए अहत्ताए नो उड्ढत्ताए दुक्खात्तए नो सुहत्ताए एतेसिं भुज्जो भुज्जो परिणमंति असुरकुमाराणं भंते ! आहारट्ठी ? हंता ! आहारट्ठी । एवं जहा णेरइयाणं तहा असुरकुमाराणं विभाणियव्वम् जाव तेसिं भुज्जो २ परिणमन्ति । तत्थ णं जेसे आभोगनिव्वत्तिए सेणं जहन्नेणं चउत्थभत्तस्स उक्कोसेणं सातिरेगस्स वाससहस्सस्स आहारट्ठे समुप्पज्जइ ओसन्नकारणं पडुच्च वन्नओ हालिद्दसुक्किल्लाइं गंधओ सुब्भिगंधाइं रसओ अविलमहुराइं फासओ मउलहुयणिधुएहाइं तेसिं पोराणं वन्नगुणे जाव फासिंदियत्ताए जाव मणामत्ताए इच्छियत्ताए भिज्झियत्ताए उड्ढत्ताए नो अहत्ताए सुहत्ताए नो दुहत्ताए तेसिं भुज्जो २ परिणमंति सेसं जहा णेरइयाणं एवं जाव थणियकुमाराणं । नवरं आभोगनिव्वत्तिए उक्कोसेणं दिवसपहुत्तस्स आहारट्ठे समुप्पज्जइ ॥

नैरयिका णमिति पूर्ववत् यान्पुद्गलानाहारतया गृएहंति-इह ग्रहणं विशिष्टमवसेयं । ततो ये उज्झितशेषाः केवलाहारपरिणामयोग्या एवावतिष्ठन्ते ते ऽत्राहारतया गृह्यमाणाः पृष्टा द्रष्टव्याः । अन्यथा निर्वचनसूत्रमपेक्ष्य पूर्व्वापरविरोधप्रसङ्गो न च भगवद्वचने विरोधसम्भावनाऽप्यस्ति तत इदमेव व्याख्यानं सम्यक् । अत एवंविधपूर्व्वापरे विरोधाशङ्काव्युदासार्थं पूर्वसूरिभिः कालिकसूत्रस्यानुयोगः कृतः उक्तञ्च । "जं जह सुत्ते भणियं तहेव तं जइ वियालणा नत्थि । किं कालियाणुजोगो दिट्ठो दिट्ठिप्पहाणेहिं" ॥ १ तान् किं सर्व्वान्नाहारयन्ति उत नो सर्व्वान् सर्वैकदेशभूतान् । भगवानाह । तान्सर्व्वानविशेषेणाहारयन्ति उज्झितशेषाणामेव केवलानामाहारपरिणामयोग्यानां गृहीतः स्यात् ( नेरइयाणमित्यादि ) नैरयिका णमिति पूर्ववत् । यान्पुद्गलानाहारतया गृएहन्ति ते पुद्गला णमिति पूर्ववदेव । नैरयिकाणां कीदृक्तया किं स्वरूपतया भूयः २ परिणमन्ते । भगवानाह । गौतम ! श्रोत्रेन्द्रियतया यावत्करणाच्चक्षुरिन्द्रियतया घ्राणेन्द्रियतया जिह्वेन्द्रियतयेति परिग्रहः । स्पर्शनेन्द्रियतया इन्द्रियरूपतयापि परिणममाणाः शुभरूपाः किंत्वेकांताशुभरूपाः । यत आह । ( अणिट्ठत्ताए इत्यादि ) इष्टा मनसा इच्छाविषयी कृता यथा "शोभनमिदं जातं यदित्थमिमे परिणता इति" । तद्विपरीता अनिष्टास्तद्भावस्तत्ता तया इह किंचित्परमार्थतः श्रुतमपि केषाञ्चिदनिष्टं भवति । यथा मक्षिकाणां चन्दनकर्पूरादिस्तत आह ( अकंतत्ताए ) कांताः कमनीयाः अकांता अत्यंताशुभवर्णोपेतत्वात् अत एवाऽप्रियतया न प्रिया अप्रिया दर्शनापातकालेऽपि तत्प्रियबुद्धिमात्मन्युत्पादयंतीति भावः । तद्भावोऽप्रियता तया ( असुभत्ताए इति ) न शुभा अशुभा अशुभगन्धरसस्पर्शात्मकत्वात् तद्भावस्तत्ता तया ( अमणुन्नत्ताए इति ) न मनोज्ञा अमनोज्ञा विपाककाले दुःखजनकतया न मनप्रह्लादहेतव इति भावः । तद्भावस्तत्ता तया ( अमणामत्ताए ) भोज्यतया मन आप्नुवंतीति मन आपा प्राकृतत्वात्पकारस्य मकारत्वे मणाम इति सूत्रनिर्देशः । न मन आपा अमन आपा न जातुचिदपि भोज्यतया जंतूनमनोज्ञान् कुर्वन्तीति भावः । तद्भावस्तत्ता तया अत एव । ( अणिच्छियत्ताए इति ) अनीप्सिततया भोज्यतया स्वादितुमिष्टा ईप्सिता न ईप्सिता अनीप्सितास्तद्भावस्तत्ता तया । ( अभिज्झियत्ताए । ) अभिध्यानमभिध्या अभिलाष इत्यर्थः । अभिध्या सञ्जाता येष्विति आभिध्यितास्तारकादिदर्शनादितच् प्रत्ययः । तद्भावस्तत्ता तया । किमुक्तं भवति । ये गृहीताहारतया पुद्गला न ते तृप्तिहेतवोऽनुबध्निति न पुनरभिलषणीयत्वेन परिणमन्ते तथा । ( अहत्ताए इति ) अधस्तया गुरुपरिणामतयेति भावः । नो ऊर्ध्वतया लघुपरिणामतया अत एव दुःखतया गुरुपरिणामपरिणतत्वात् न सुखतया लघुपरिणामपरिणतत्वाभावात् । ते पुद्गलास्तेषां नैरयिकाणां भूयः परिणमन्ते एतान्येव आहारार्थिन इत्यादीनि सप्त द्वाराणि । असुरकुमारादिषु भवनपतिषु चिचिंतयिषुरिदमाह ( जहा नेरइयाणमित्यादि ) यथा नैरयिकाणां तथा असुरकुमाराणामपि भणितव्यं । यावत् तेसिं भुज्जो २ परिणमन्तीति पर्य्यन्तपदं । तत्र नैरयिकसूत्रस्य विशेषमुपदर्शयति ( तत्थ णं जेसे इत्यादि ) एवं चोपदर्शित सूत्रम् मन्दमतीनां यथास्थितं प्रतीतिमागच्छति ततस्तदनुग्रहाय सूत्रमुपदर्श्यते ( असुरकुमाराणं भंते ! आहारट्ठी ? हंता आहारट्ठी असुरकुमाराणं भंते ! केवइ कालस्स आहारट्ठे समुप्पज्जइ । ) अत्र सप्तम्यर्थे षष्ठी कियति कालेऽतिक्रान्ते सति भूय आहारार्थः समुत्पद्यत इत्यर्थः । ( असुरकुमाराणं दुविहे आहारे पन्नत्ते । तंजहा । आभोगनिव्वत्तिए अणाभोगनिव्वत्तिए य । तत्थ णं जेसे अणाभोगनिव्वत्तिए से णं अणुसमयम विरहिए आहारट्ठे समुप्पज्जइ । तत्थणं जेसे आभोगनिव्वत्तिए सेणं जहन्नेणं चउत्थभत्तस्स उक्कोसेणं साइरेगस्स वाससहस्सस्स आहारट्ठे समुप्पज्जइ । ) अत्र तु चउत्थभत्तस्सेति सप्तम्यर्थे षष्ठी । चतुर्थभक्त आगमिकीयं संज्ञा एकस्मि-

न्दिवसेऽतिकान्ते इत्यर्थः । नूयो जघन्येनाहारार्थः । समुत्पद्यते । एतच्च दशवर्षसहस्रायुषां प्रतिपत्तव्यमुत्कर्षतः सातिरेके अत्यधिके वर्षसहस्रेऽतिकांते । एतच्च सागरोपमायुषामवसेयं ॥

असुरकुमाराणं जंते ! किमाहारमाहारयंति ? गोयमा ! दव्वओ अणंतपएसियाइं खेत्तओ असंखेज्जपएसोगाढाइं कालओ अन्नयरठिइयाइं जावओ वन्नमंताइं गंधमंताइं रसमंताइं फासमंताइं जाव नियमा । छद्दिसिं आहारंति ओसन्नं कारणं पडुच्च वन्नओ हालिद्दसुक्किल्लाइं गंधओ सुरभिगंधाइं, रसओ अंबिलमधुराइं, फासओ मउयलहुणिद्धुण्हाइं, तेसिं पोराणं वन्नगुणं गंधगुणे फासगुणे जाव इच्छियत्ताए अभिज्झियत्ताए उड्ढत्ताए नो अहत्ताए सुहत्ताए नो दुहत्ताए एतेसिं जुज्जो २ परिणमंति * यथा चासुरकुमाराणां सूत्रमुक्तं । तथा नागकुमारादीनामपि स्तनितकुमारपर्य्यवसानानांवक्तव्यम्नवरमाजोगनिवर्त्तिताहारार्थं चिन्तायामुत्कर्षाभिधानानुसारेण * "उक्कोसेणं दिवसपुहुत्तस्स आहारट्ठे समुप्पज्जइ" * इति वक्तव्यं । एतच्च पल्योपमासंख्येयजागायुषां तदधिकायुषां चावसेयं । शेषं तथैव । तथा चाह । एवं जाव थणियकुमाराणमित्यादि * ॥

सम्प्रति पृथिवीकायिकानामेतान्सप्ताधिकारान् चिंतयितुकाम आह । पृथ्वीकायिकानाम् ॥

पुढवीकाइयाणं जंते ! आहारट्ठी हंता आहारट्ठी । पुढविकाइयाणं जंते ! केवइकालस्स आहारट्ठे समुप्पज्जइ । गोयमा ! अणुसमयं अविरहिए आहारट्ठे समुप्पज्जइ । पुढविकाइयाणं जंते ! किमाहारमाहारंति । एवं जहा । णेरइयाणं जाव ताइं जंते ! कइदिसिं आहारेइ निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं नवरं उसन्नकारणं न जन्नइ । वन्नओ कालनीललोहियहालिद्दसुक्किल्लाइं, गंधओ सुब्भिगंध दुब्भिगंधाइं, रसओ तित्तरसकडुयकसायअंबिलमहुराइं, फासओ करकडफासगरुयलहुयसीतउसिणणिद्धलुक्खाइं, तेसिं पोराणा वन्नगुणा । सेसं जहा । नेरइयाणं जाव आहच्च नीससंति पुढविकाइयाणं जंते ! जे पोग्गले आहारत्ताए गेण्हंति । तेसि णं जंते ! पोग्गलेणं सेयालंसि कतिजागं आहारंति । कतिजागं आसायंति ? गोयमा ! असंखेज्जाइजागं आहारंति अणंतजागं आसायन्ति पुढविकाइयाणं जंते ! जे पुग्गले आहारत्ताए गेण्हंति तेसिं सव्वे आहारंति नो सव्वे आहारंति जहेव णेरया तहेव । पुढविकाइयाणं जंते ! जे पोग्गले आहारत्ताए गेण्हंति तेणं तेसिं पोग्गलाणं कीसत्ताए जुज्जो जुज्जो परिणमंति ? गोयमा ! फासिंदियवेमाणियत्ताए तेसिं जुज्जो २ परिणमंति । एवं जाव वणस्सइकाइया । बेइंदियाणं जंते ! आहारट्ठी ? हंता गोयमा ! आहारट्ठी । बेइंदियाणं जंते ! केवइकालस्स आहारट्ठे समुप्पज्जइ जहा णेरइयाणं नवरं तत्थणं जेसे आजोगनिव्वत्तिए सेणं असंखेज्जसमए अंतो मुहुत्तिए आहारट्ठे समुप्पज्जइ सेसं जहा पुढविकाइयाणं जाव आहच्च नीससंति नवरं नियमा छद्दिसिं बेइंदियाणं पुच्छा जे पोग्गले पक्खेवाहारत्ताए गेण्हंति तेणं तेसिं पोग्गलाणं कइजागं आहारंति । कइजागं आसायंति । एवं जहा नेरइयाणं । बेइंदिया णं जंते ! जे पोग्गले आहारत्ताए गिण्हंति । तेसिं किं सव्वे आहारंति । बेइंदियाणं दुविहे आहारे पण्णत्ते । तंजहा । लोम आहारे य पक्खेवाहारे य । जे पोग्गले लोमआहारत्ताए गिण्हंति ते सव्वे अपरिसेसे आहारंति । जे पोग्गले पक्खेवाहारत्ताए गेण्हंति तेसिं असंखेज्जइजागमाहारंति अणेगाइं च णं जागसहस्साइं अफासाइज्जमाणाणं अणास्साइज्जमाणाणं विद्धंसमागच्छंति ॥ प्रज्ञा० पद २८ ॥

टी० ( पुढविकाइयाणं भंते ! इत्यादि) सर्वं पूर्ववदसुरकुमारवद्भावनीयं नवरं ( निव्वाघाएणं छद्दिसिमित्यादि ) व्याघातो नाम अलोकाकाशेन प्रतिस्खलनं व्याघातस्तस्याजावो निर्व्याघातः । " शब्दे यथावद्व्ययपूर्वपदार्थनित्यमव्ययीभाव " इत्यव्ययीभावस्तेन वा तृतीयायामिति विकल्पेन आम्विधानात्पक्षेऽत्राम् जावः । नियमादवश्यतया षड्दिशि व्यवस्थितानि षड्भ्यो दिग्भ्य आगतानि द्रव्याण्याहारयंतीति जावः । व्याघातम्पुनः प्रतीत्य लोकनिष्कुटादौ स्यात्कदाचित् । त्रिदिशि तिसृभ्यो दिग्भ्य आगतानि कदाचिच्चतुर्दिग्भ्यः कदाचित्पञ्चदिग्भ्यः । काऽत्र भावनेति चेदुच्यते । इह लोकनिष्कुटे पर्यंताधस्त्यप्रतराग्निकोणावस्थितो यदा पृथिवीकायिको वर्तते तदा तस्याधस्तादलोकेन व्याप्तत्वादधोदिक् पुद्गलाभावः । आग्नेयकोणावस्थितत्वात्पूर्वदिक् पुद्गलाभावो दक्षिणदिक्पुद्गलाजावश्च । एवमधः पूर्वदक्षिणरूपाणां तिसृणां दिशामलोकेन व्यापन्नता अपास्य याः परिशिष्टा ऊर्ध्वा अपरा उत्तरा च दिग् व्याहता वर्तते तत आगतान्पुद्गलानाहारयन्ति यदा पुनस्स एव पृथिवीकायिकः पश्चिमां दिशमनुसृत्य वर्तते तदा पूर्वा दिगभ्यधिका जाता । द्वे च दिशौ दक्षिणाधस्त्यरूपे अलोकेन व्याहते इति स चतुर्दिगागतान्पुद्गलानाहारयति । यदा पुनरूर्ध्वं द्वितीयादिप्रतरगतपश्चिमदिगवलम्ब्य तिष्ठति तदा अधस्त्याऽपि दिगभ्यधिका लभते केवलदक्षिणैवैका पर्यन्तवर्तिनी अलोकेन व्याहतेति पञ्चदिगागतान्पुद्गलानाहारयन्तीति शेषं सूत्रं समस्तमपि पूर्ववद्भणनीयं यस्तुविशेषस्तमुपदर्शयति ( न वरमुसन्नकारणं न हवइ इत्यादि ) सुगमं ( फासिंदियवेमायत्ताए इति ) विषममात्रा विमात्रा तस्याजावो विमात्रता तया इष्टानिष्टा नानाभेदतयेति जावो न तु यथा नारकाणामेकान्ताशुभतया सुराणां च शुभतयैवेति । एवं जाव वणस्सइकाइयाणंति । यथा पृथिवीकायिकानां सूत्रमुक्तमेवमप्तेजोवायुवनस्पतीनामपि जणनीयं । सर्वेषामपि सकललोकव्यापितया विशेषाजावात् ( बेइंदियाणं जंते ! इत्यादि ) सुगमं नवरं । ( लोमाहारे पक्खेवाहारेयत्ति ) लोम्न आहारो

मनुष्येषु चोत्पत्तिसम्भवात् । अवशेषेषु स्थानेषु एकेन्द्रियविकलेन्द्रियवर्जेषु प्रत्येकं भंगत्रिकं । गतं ज्ञानद्वारम् ॥

संप्रति योगद्वारम् ॥

सजोगीसु जीवेगिंदियवज्जो तियजंगो मणजोगी वइजोगी य जहा सम्मामिच्छादिट्ठी । नवरं वइजोगी विगलिंदियाण वि कायजोगीसु जीवेगिंदियवज्जो तियजंगो । अजोगी जीवमणूससिद्धा अणाहारगा । दारम् ॥

तत्र सामान्यतः सयोगीसूत्रमेकवचने तथैव बहुवचने जीवैकेन्द्रियपदानि वर्जयित्वा शेषेषु स्थानेषु भङ्गत्रिकं, जीवपदे पृथिव्यादिपदेषु च पुनः प्रत्येकमाहारका अपि अनाहारका अपीति भङ्ग उभयेषामपि सदैवतेषु स्थानेषु बहुत्वेन लभ्यमानत्वात् । मणजोगी वइजोगी जहा सम्मामिच्छादिट्ठीयत्ति । मनोयोगिनो वाग्योगिनश्च । यथा प्राक् सम्यग्मिथ्यादृष्टय उक्तास्तथा वक्तव्याः । एकवचने बहुवचने वाऽऽहारका एव वक्तव्याः नत्वनाहारका इति भावः ( नवरं वइजोगी विगलिंदियाणवित्ति ) नवरमिति । सम्यग्मिथ्यादृष्टिसूत्रादत्रायं विशेषः । सम्यग्मिथ्यादृष्टित्वं विकलेन्द्रियाणां नास्तीति तत्सूत्रं तत्रोक्तं । वाग्योगः पुनर्विकलेन्द्रियाणामप्यस्ति तत्सूत्रमपि वाग्योगे वक्तव्यं । तच्चैवं ॥

* मणजोगीणं जंते ! जीवे किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए एवमेगिंदियवज्जं जाव वेमाणिए एवं पुहुत्तेण वि ॥ *

काययोगिसूत्रमप्येकवचने बहुवचने च सामान्यतः सयोगिसूत्रमिव ( अजोगीणं जंते ! जीवे किं आहारए ) तेनात्र त्रीणि पदानि । तद्यथा जीवपदं मनुष्यपदं सिद्धपदं च त्रिष्वपि स्थानेष्वेकवचने बहुवचनेनाहारकत्वमेव ॥

अधुना उपयोगद्वारम् ॥

सागाराणागारोवउत्तेसु जीवेगिंदियवज्जो तियजंगो सिद्धा अणाहारगा । दारम् ॥

तत्र साकारोपयोगसूत्रे च प्रत्येकमेकवचने सर्वत्र स्यादनाहारक इति वक्तव्यं सिद्धपदे त्वनाहारक इति बहुवचने जीवपदे पृथिव्यादिपदेषु चाहारका अपि अनाहारका अपीति भङ्गः । शेषेषु भङ्गत्रिकं । सिद्धास्त्वनाहारका इति सूत्रोल्लेखस्त्वयं ॥

* सागारोवओगोवउत्तेणं जंते ! जीवे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए ॥ *

गतमुपयोगद्वारं ॥

वेदद्वारम् ॥

सवेदजीवेगिंदियवज्जो तियजंगो । इत्थिवेयपुरिसवेएसु जीवाइओ तियजंगो । नपुंसगवेदए जीवेगिंदियवज्जो तियजंगो । अवेयए जहा केवलनाणी ॥

सामान्यतः सवेदसूत्रमेकवचने स्यादाहारकस्स्यादनाहारक इति बहुवचने जीवपदे एकेन्द्रियाश्च वर्जयित्वा शेषेषु स्थानेषु भङ्गत्रिकं जीवपदे एकेन्द्रियेषु च पुनःप्रत्येकमभंगकं आहारका अनाहारका अपीति स्त्रीवेदसूत्रं पुरुषवेदसूत्रं च एकवचने तथैव नवरमत्र नैरयिकैकेन्द्रियविकलेन्द्रिया न वक्तव्यास्तेषां नपुंसकत्वात् बहुवचने जीवादिषु प्रत्येकं भंगत्रिकं । नपुंसकवेदेऽपि सूत्रमेकवचने तथैव नवरमत्र भवनपतिव्यन्तरज्योतिष्कवैमानिका न वक्तव्याः । तेषां न नपुंसकत्वाद्बहुवचने जीवैकेन्द्रियवर्जेषु भंगत्रिकं । जीवपदे एकेन्द्रियपदेषु च पृथिव्यादिषु पुनरभंगकं प्रागुक्तस्वरूपमिति । अवेदो यथा केवली तथा एकवचने बहुवचने च वक्तव्याः । जीवपदे मनुष्यपदे च एकवचने स्यादाहारकस्स्यादनाहारक इति बहुवचने जीवपदे आहारका अपि अनाहारका अपि मनुष्येषु भंगत्रिकं सिद्धेत्वनाहारका इति वक्तव्यमिति भावः ॥ गतं वेदद्वारम् ॥

शरीरद्वारम् ॥

ससरीरे जीवेगिंदियवज्जो तियजंगो । उरालियसरीरिसु जीवमणूसेसु तियजंगो । अवसेसा आहारगा नो अणाहारगा जेसिं अत्थि उरालियसरीरं वेउव्वियसरीरी आहारगसरीरी य अणाहारगा जेसिं अत्थि तेयगकम्मगसरीरी जीवेगिंदियवज्जो तियजंगो । असरीरी जीव सिद्धा य नो आहारगा अणाहारगा ॥

शरीरद्वारे सामान्यतः शरीरसूत्रे सर्वत्रैकवचने स्यादाहारकः स्यादनाहारक इति । बहुवचने जीवैकेन्द्रियवर्जेषु शेषेषु स्थानेषु प्रत्येकं भंगत्रिकं । जीवपदे पृथिव्यादिपदेषु च प्रत्येकमभङ्गकं प्रागुक्तमिति । औदारिकसूत्रमेकवचने तथैव नवरमत्र नैरयिकभवनपतिव्यन्तरज्योतिष्कवैमानिका न वक्तव्यास्तेषामौदारिकशरीराभावात् । बहुवचने जीवपदे मनुष्यपदेषु च प्रत्येकं भंगत्रिकं । तद्यथा । सर्वेऽपि तावद्भवेयुराहारका एष भंगो यदा न कोऽपि केवली समुद्घातगतयोगी वा । अथवा आहारकाश्चानाहारकश्च एष एकस्मिन्केवलिनि समुद्घातगते ऽयोगिनि वासति प्राप्यते । अथवा आहारकाश्चानाहारकाश्च एष भंगो बहुषु केवलिषु समुद्घातगतेषु अयोगिषु वा सत्सु वेदितव्यः । शेषास्त्वेकेन्द्रियद्वीन्द्रिय त्रीन्द्रिय चतुरिन्द्रियातिर्यक् पंचेन्द्रिया आहारका एव वक्तव्याः नत्वनाहारकाः । विग्रहगत्युत्तीर्णानामेवौदारिक शरीरसम्भवात् । वैक्रियाहारकशरीरिणश्च सर्वे ऽप्येकवचने बहुवचने चाहारका एव नत्वनाहारका नवरं येषां वैक्रियमाहारकं वा संभवति त एव वक्तव्या नान्ये । तत्र नैरयिक भवनपतिवायुकायिकतिर्यक्पंचेन्द्रियमनुष्यव्यंतरज्योतिष्कवैमानिकेषु आहारकं मनुष्येष्वेव । सूत्रोल्लेखश्चायं ।

* वेउव्वियसरीरिणं ! जंते जीवे किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए ! वेउव्वियसरीरेणं जंते ! नेरइए किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए ॥ *

इत्यादि । तैजसकार्म्मणशरीरसूत्रे चैकवचने सर्वत्र स्यादाहारकस्स्यादनाहारक इति । बहुवचने जीवैकेन्द्रियवर्जेषु स्थानेषु भंगत्रिकं जीवपदे एकेन्द्रियेषु पुनरभंगकं । अशरीरिणस्सिद्धास्तेन तत्र द्वे एव पदे । तद्यथा । जीवास्सिद्धाश्च । तत्रैकवचने बहुवचने चोभयत्राप्यनाहारक एव ॥ गतं शरीरद्वारम् ॥

सम्प्रति पर्याप्तिद्वारम् ॥

आहारपज्जत्तिपज्जत्तए सरीरपज्जत्तीपज्जत्तए इंदियपज्जत्तिपज्जत्तए आणपाणूपज्जत्तीपज्जत्तए एतासु चउसु वि पज्जत्तीसु जीवेसु मणूसेसु य तियजंगो अवसेसा

आहारगा नो अणाहारगा भासामणपज्जत्तिपंचिंदियाणं अवसेसाणं नत्थि आहारपज्जत्ती अपज्जत्तए नो आहारए अणाहारए एगत्तेण वि पुहत्तेणवि । सरीरपज्जत्तिअपज्जत्तिए सिय आहारए सिय अणाहारए । उवरिल्लियासु चउसु अपज्जत्तीसु णेरइयदेवमणूसेसु छ भंगा । अवसेसाणं जीवेगिंदियवज्जो तियभंगो । भासामणपज्जत्तीए जीवेसु पंचिंदियतिरिक्खजोणीएसु य तियभंगो । णेरइयत्ते देवमणूसेसु छ भंगा । सव्वपदेसु एते एगत्तपुहत्तेणं जीवादिओ दंडगोपुच्छाए भाणियव्वो जस्स जं अत्थि तस्स तं पुच्छिज्जइ जं नत्थि तं न पुच्छिज्जइ जाव भासामणपज्जत्तीएसु अपज्जत्तएसु णेरइयदेवमणूसएसु छब्भंगा सेसेसु य तियभंगा ॥

तत्रागमे पर्य्याप्तयः पञ्च भाषामनः पर्याप्त्योरेकत्वेन विवक्षणात् । तथाहारपर्य्याप्त्या पर्य्याप्ते शरीरपर्य्याप्त्या पर्य्याप्ते इन्द्रियपर्य्याप्त्या पर्य्याप्ते प्राणापानपर्य्याप्त्या पर्य्याप्ते भाषामनःपर्य्याप्त्या पर्य्याप्ते चिन्त्यमानेऽत्रैव सर्वसंकलनामाह । एतासु पञ्चस्वपि पर्य्याप्तिषु समर्थितासु चिन्त्यमानास्विति शेषः । प्रत्येकमेकवचने जीवपदे मनुष्यपदे च स्यादाहारकस्स्यादनाहारक इति । शेषेषु तु स्थानेषु आहारका इति बहुवचने (जीवेसु मणूसेसु य तियभंगोत्ति) जीवपदे मनुष्यपदे च भङ्गत्रिकञ्च वक्तव्यं । तच्चौदारिकशरीरसूत्रमिव भावनीयं । अवशेषास्सर्वेऽप्याहारका वक्तव्याः नवरं भाषामनः पर्य्याप्तिपञ्चेन्द्रियाणामेवेति । तत्सूत्रे एकेन्द्रियविकलेन्द्रिया न वक्तव्याः किन्तु शेषाः । तदेवाह । भासामणपज्जत्ती पंचिंदियाणं नत्थि इति । आहारपर्य्याप्त्यपर्य्याप्तसूत्रे एकवचने सर्वत्राप्यनाहारको वक्तव्यो नो आहारक आहारपर्य्याप्त्या ह्यपर्य्याप्तो विग्रहगतावेव लभ्यते उपपातक्षेत्रप्राप्तस्य प्रथमसमय एवाहारकपर्य्याप्त्या पर्य्याप्तत्वभावादन्यया तस्मिन्समये आहारकत्वानुपपत्तेर्बहुवचने त्वनाहारका इति । शरीरपर्य्याप्त्या पर्य्याप्तिसूत्रे एकवचने सर्वत्र स्यादाहारक इति । तत्र विग्रहगतावनाहारक उपपातक्षेत्रप्राप्तस्तु शरीरपर्य्याप्तिपरिसमाप्तिं यावदाहारक इति । एवमिन्द्रियपर्य्याप्त्या पर्य्याप्तिसूत्रे प्राणापानपर्य्याप्त्या पर्य्याप्तसूत्रे भाषामनः पर्य्याप्त्या पर्य्याप्तिसूत्रे च प्रत्येकमेकवचने स्यादाहारकस्स्यादनाहारक इति वक्तव्यं । बहुवचने (उवरिल्लिया) इत्यादि । उपरितनीषु शरीरपर्य्याप्तिप्रभृतिषु चतसृषु अपर्य्याप्तिषु चिन्त्यमानासु प्रत्येकं नैरयिकदेवमनुष्येषु षड्भंगा वक्तव्यास्तद्यथा । कदाचित्सर्वेऽप्याहारका एव १ कदाचित्सर्वेऽप्यनाहारका एव २ कदाचिदेक आहारक एकोऽनाहारकः ३ कदाचिदेक आहारको बहवोऽनाहारकाः ४ कदाचिद्बहव आहारका एक अनाहारकः ५ कदाचिद्बहव आहारका बहवश्चानाहारकाः ६ अवशेषाणां नैरयिकदेवमनुष्यव्यतिरिक्तानां जीवैकेन्द्रियवर्जं भङ्गत्रिकं वक्तव्यं । तद्यथा । सर्वेऽपि तावद्भवेयुराहारकाः १ अथवा आहारकाश्चानाहारकश्च २ अथवा आहारकाश्चानाहारकाश्च ३ जीवपदे एकेन्द्रियपदेषु च पुनश्शरीरपर्य्याप्त्या पर्य्याप्तिसूत्रे इन्द्रियपर्य्याप्त्या पर्य्याप्तिसूत्रे प्राणापानपर्य्याप्तिसूत्रे च प्रत्येकमभङ्गकं आहारका अपि अनाहारका अपि । उभयेषामपि च सदा बहुत्वेन लभ्यमानत्वात् । भाषामनः पर्य्याप्त्यपर्य्याप्तकास्त्वेकेन्द्रियविकलेन्द्रिया न भवन्ति किन्तु पञ्चेन्द्रिया एव । येषां हि भाषामनः पर्य्याप्तिसंभवोऽस्ति त एव तत्पर्य्याप्ताः प्रोच्यन्ते न शेषा इति । ततस्तत्सूत्रं । बहुवचने जीवपदेऽपि पञ्चेन्द्रियतिर्य्यग्योनिपदे च भङ्गत्रिकं । पंचेन्द्रियतिर्य्यञ्चो हि सम्मूर्च्छिमाः सदैव बहवो लभ्यन्ते । ततो यावदद्याप्यन्यो विग्रहगत्यापन्नो लभ्यमाने द्वितीयो भङ्गः आहारकाश्चानाहारकश्च इति । यदा तु विग्रहगत्यापन्ना अपि बहवो लभ्यन्ते तदा तृतीयो भङ्गः । आहारकाश्चानाहारकाश्चेति जीवपदेऽपि भङ्गत्रिकमेतदपेक्षया । ( णेरइयत्ति ) नैरयिकदेवमनुष्येषु प्रत्येकं षड्भंगाः । ते च प्रागेवोक्ताः । इह भव्यपदादारभ्य प्राय एकत्वेन बहुत्वेन च विवक्षितानि सूत्राणि जीवादिदण्डकक्रमेण नोक्तानि ततो माभून्मन्दमतीनां सम्मोह इति तद्विषयमतिदेशमाह ( न सव्वपएसु एगत्ते ) इत्यादि । एते जीवादयो दण्डकास्सर्वपदेषु सर्व्वेष्वपि पदेषु एकत्वेन बहुत्वेन च पृच्छया उपलक्षणमेतन्निर्वचने च भणितव्याः । किं सर्वत्राप्यविशेषेण कर्तव्या । नेत्याह । यस्येत्यादि । यस्य यदस्ति तस्य तत्पृच्छति तद्विषयं सूत्रं भण्यते यस्य पुनः यन्नास्ति न तस्य तत्पृष्ठव्यं न तद्विषयं तस्य सूत्रं वक्तव्यमिति भावः । कियद्दूरं यदेव कर्तव्यमिति शङ्कायां चरमदण्डकवक्तव्यतामुपदिशति ( जाव भासामणपज्जत्तीएसु ) इत्यादि भावितार्थं इहाधिकृतार्थभावनार्थमिमाः पूर्वाचार्य्यप्रतिपादिता गाथाः ।

सिद्धेगिंदियसहिया, जहिं तु जीवा अभंगयं तत्थ ।
सिद्धेगिंदियवज्जे–हिं होइ जीवेहिं तियभंगो ॥ १ ॥
असन्नीसु य नेरइय, देवमणुएसु होंति छब्भंगा ।
पुढविदगतरुगणेसु य, छब्भंगा तेउलेसाए ॥ २ ॥
कोहे माणे माया, छब्भंगा सुरगणेसु सव्वेसु ।
माणे मायालोभे, नेरइएहिं पि छब्भंगा ॥ ३ ॥
आभिणिबोहियनाणे, सुयनाणे खलु तहेव सम्मत्ते ।
छब्भंगा खलु नियमा, बियतियचउरिंदियेसु भवे ॥ ४ ॥
उवरिल्लउपज्जत्ती–सु चउसु नेरइयदेवमणुएसु ।
छब्भंगा खलु नियमा, वज्जे पढमा उपज्जत्ती ॥ ५ ॥
सन्नी विसुद्धलेस्सा, संजयाहिट्ठिल्लातिसुयनाणेसु ।
त्थीपुरिसाणयवेदेवि, छब्भंगा खलु तियभंगो ॥ ६ ॥
सम्मामिच्छमणवइ, मणनाणे बालपंडियवेउव्वी ।
आहारसरीरंमि य, नियमा आहारया होंति ॥ ७ ॥
ओहिम्मिवि भंगंमि, नियमा आहार याउ नायव्वा ।
पंचिंदिया तिरिच्छा, मणुया पुण होंति विभंगा ॥ ८ ॥
ओरालसरीरम्मि य, पज्जत्तीणं च पंचसु तहेव ॥
तियभंगो जियमणुए–सु होंति आहारगा सेसा ॥ ९ ॥
णो भव अलुविल्लेसा, अजोगिणो तहय होंति असरीरी ।
पढमाए अपज्जातिए, तउ नियमा अणाहारा ॥ १० ॥
सन्नासन्नविउत्ता, वेयकसाइणो य केवलिणो ।
तियभंग एकवयणं सिद्धाणाहारया होंति ॥ ११ ॥
एताश्च सर्वा अपि गाथा उक्तार्थप्रतिपादकत्वाद्भावितार्था

इति न भूयो भाव्यन्ते । ग्रन्थगौरवभयात् । न वरं । ( एक्कव-यणे सिद्धाणाहारया होंति इति । ) एक्कवयणे इत्यत्र तृतीयार्थे सप्तमी । एकवचनेन एकार्येनेति भावः । सर्वत्र सिद्धा अनाहारका भवन्तीति विज्ञेयम् ॥ प्रज्ञा० २८ पद ॥

जीवः कं समयमनाहारकः ।

तेणं कालेणं तेणं समएणं जाव एवं-वयासी जीवेणं भंते ! कं समयमणाहारए भवइ ? गोयमा ! पढमे समये सिय आहारए सिय अणाहारए, बितिए समये सिय आहारए सिय अणाहारए, तइए समये सिय आहारए सिय अणाहारए, चउत्थे समए नियमा आहारए, एवं दंमओ जीवा य एगिंदिया य चउत्थे समए सेसा तइए समए ॥ भ०-७ श. १ उ. ॥

( कं समयमणाहारएत्ति ) परभवं गच्छन् कस्मिन्समयेऽनाहारको भवतीति प्रश्नः । उत्तरन्तु यदा जीव ऋजुगत्योत्पादस्थानं गच्छति तदा परभवायुषः प्रथम एव समय आहारको भवति । यदा तु विग्रहगत्या गच्छति तदा प्रथमसमये वक्रेऽनाहारको भवति, उत्पत्तिस्थानाऽनवाप्तौ तदाहरणीयपुद्गलानामभावादत आह ( पढमे समए सिय आहारए सिय अणाहारएत्ति ) तथा यदा एकेन वक्रेण द्वाभ्यां समयाभ्यामुत्पद्यते तदा प्रथमेऽनाहारको द्वितीयेत्वाहारको यदा तु वक्रद्वयेन त्रिभिः समयैरुत्पद्यते तदा प्रथमे द्वितीये चानाहारक इत्यत आह ( बीयसमये सिय आहारए सिय अणाहारएत्ति ) तथा यदा वक्रद्वयेन त्रिभिस्समयैरुत्पद्यते तदा द्वयोरनाहारकस्तृतीये त्वाहारको यदा तु वक्रत्रयेण चतुर्भिस्समयैरुत्पद्यते तदाद्ये समयत्रयेऽनाहारकश्चतुर्थे तु नियमादाहारक इति कृत्वा(तइए समए सिय०) इत्याद्युक्तं वक्रत्रयं चेत्थं भवति । नाड्या बहिर्विदिग्व्यवस्थितस्य सतो यस्याधोलोकादूर्ध्वलोके उत्पादो नाड्या बहिरेव दिग्धि भवति सोऽवश्यमेकेन समयेन विश्रेणितस्समश्रेणीं प्रतिपद्यते द्वितीयेन नाडीम्प्रविशति तृतीयेनोर्ध्वलोकं गच्छति चतुर्थेन लोकनाडीतो निर्गत्योत्पत्तिस्थान उत्पद्यते । इह चाद्ये समयत्रये वक्रत्रयमवगन्तव्यं । समश्रेण्यैव गमनात् ।

अन्ये त्वाहुः । वक्रचतुष्टयमपि सम्भवति । यदाहि विदिशो विदिश्येवोत्पद्यते तत्र समयत्रयं प्राग्वत् । चतुर्थसमये तु नाडीतो निर्गत्य समश्रेणीं प्रतिपद्यते पञ्चमेन तूत्पत्तिस्थानं प्राप्नोति । तत्र चाद्ये समयचतुष्टये वक्रचतुष्कं स्यात्तत्र चानाहारक इति । इदञ्च सूत्रे न दर्शितं प्रायेणेत्यमनुत्पत्तेरिति ( एवं दंमओत्ति ) अमुनाऽभिलापेन चतुर्विंशतिदण्डको वाच्यस्तत्र च जीवपद एकेन्द्रियपदेषु च पूर्वोक्तभावनयैव चतुर्थे समये नियमादाहारक इति वाच्यं । शेषेषु तु पदेषु तृतीयसमये नियमादाहारक इति । तत्र यो नारकादित्रसस्त्रसेष्वेवोत्पद्यते । तस्य नाड्या बहिस्तादागमनं गमनञ्च नास्तीति तृतीयसमये नियमादाहारकत्वम् । तथाहि यो मत्स्यादिर्भरतस्य पूर्वभागादैरवत-पश्चिमभागस्याऽधो नरकेषूत्पद्यते । स एकेन समयेन भरतस्य पूर्वभागात्पश्चिमं भागं याति द्वितीयेन तु तत ऐरवतपश्चिमं भागं ततस्तृतीयेन नरकमिति । अत्र चाद्ययोरनाहारकस्तृतीये त्वाहारक एतदेव दर्शयति ( जीवाय एगिंदिया य चउत्थे समये सेसा तइयसमएत्ति ॥

कस्मिन् समये सर्वाल्पाहारकः ।

जीवेणं भंते ! कं समयं सव्वप्पाहारए भवइ ? गोयमा ! पढमसमयोववन्नए वा चरिमसमयभवत्थे वा एत्थ णं जीवे सव्वप्पाहारए भवइ दंमओ जाणियव्वो जाव वेमाणियाणं । भ०-७ श. १ उ. ॥

कस्मिन् समये सर्वाल्पः सर्वथा स्तोको न यस्मादन्यः स्तोकतरोऽस्ति स आहारोयस्य सः सर्वाल्पाहारः स एव सर्वाल्पाहारकः ( पढमसमयोववण्णएत्ति ) प्रथमसमय उत्पन्नस्य यस्य प्रथमो वा समयो यत्र तत्प्रथमसमयं । तदुत्पन्नमुत्पत्तिं यस्य स तथा उत्पत्तेः प्रथमसमय इत्यर्थः । तदाहार ग्रहणहेतोः शरीरस्या ऽल्पत्वात्सर्वाल्पाहारता भवतीति । ( चरमसमयभवत्थेवात्ति ) । चरमसमये भवस्य जीवितस्य तिष्ठति यः स तथा आयुषश्चरमसमय इत्यर्थः । तदानीं प्रदेशानां संहृतत्वेनाऽल्पेषु शरीरावयवेषु स्थितत्वात्सर्वाल्पाहारतेति ।

वनस्पतिः सर्वाल्पाहारकः ।

वणस्सइकाइया णं भंते ! कं कालं सव्वप्पाहारगा वा सव्वमहाहारगा वा भवंति ? गोयमा ! पाउसवरिसा रत्तेसु णं एत्थणं वणस्सइकाइया सव्वमहाहारगा भवंति । तयाणंतरं च णं सरए, तयाणंतरं च णं हेमंते, तयाणंतरं च णं वसंते, तयाणंतरं च णं गिम्हासु, णं वणस्सइकाइया सव्वप्पाहारगा भवंति । जइ णं भंते ! गिम्हासु वणस्सइकाइया सव्वप्पाहारगा भवंति । कम्हाणं भंते ! गिम्हासु बहवे वणस्सइकाइया पत्तिया पुप्फिया फलिया हरिय गेररिज्जमाणा सिरीए अतीव अतीव उवसोभेमाणा उवचिट्ठंति ? गोयमा ! गिम्हासु णं बहवे उसिणजोणिया जीवा य पोग्गला य वणस्सइकाइयत्ताए वक्कमंति विउक्कमंति चयंति उववज्जंति । एवं खलु गोयमा ! गिम्हासु बहवे वणस्सइकाइया पत्तिया पुप्फिया जाव चिट्ठंति । से नूणं भंते ! मूला मूलजीवफुडा कंदा कंदजीवफुडा जाव बीया बीयजीवफुडा ? हंता गोयमा ! मूला मूलजीवफुडा जाव बीया बीयजीवफुडा । जइणं भंते ! मूला मूलजीवफुडा जाव बीया बीयजीवफुडा कम्हाणं भंते ! वणस्सइकाइया आहारंति परिणामंति ? गोयमा ! मूला मूलजीवफुडा पुढवीजीवपडिबद्धा तम्हा आहारंति तम्हा परिणामंति कंदा कंदजीवफुडा मूलजीवपडिबद्धा तम्हा आहारंति तम्हा परिणामंति एवं जाव बीया बीयजीवफुडा फलजीवपडिबद्धा तम्हा आहारंति तम्हा परिणामंति ।

( वणस्सइ ) इत्यादि । ( कं कालंति ) कस्मिन्काले । ( पाउसेत्यादि । ) प्रावृडादौ बहुत्वाज्जलस्नेहस्य महाहारतोक्ता प्रावृट् श्रावणादिर्वर्षारात्रो ऽश्वयुजादिः । ( सरएत्ति ) शरत् मार्गशीर्षादिस्तत्र चाल्पाहारा भवन्तीति ज्ञेयं । ग्रीष्मे सर्वाल्पाहारतोक्ता । अत एव च शेषेष्वप्यल्पाहारता क्रमेण द्रष्टव्येति । ( हरितगेरेरिज्जमाणत्ति । ) हरितकाश्च ते नीलका रेरिज्यमानाश्च देदीप्यमाना हरितकरेरिज्यमानाः ।

( सिरीपत्ति । ) वनवल्ल्या । ( उसिणजोणिपत्ति । ) उष्ण मेव योनिर्येषान्ते उष्णयोनिकाः । ( मूलामूलजीवफुरुत्ति )। मूलानि मूलजीवैः स्पृष्टानि व्याप्तानीत्यर्थः । यावत्करणात ( खंधाखंधजीवफुडा ) एवं ( तया साला पवाला पत्ता पुष्फा फलत्ति ) दृश्यं । ( जइण ) मित्यादि । यदि जदन्त ? मूला-दीन्येव मूलादिजीवैः स्पृष्टानि तदा ( कम्हत्ति ) । कस्मात्केन हेतुना कथमित्यर्थः । वनस्पतय आहारयंति । आहारस्य ज्ञूमिगतत्वान्मूलादिजीवानां च मूलादिव्याप्त्यै वावस्थितत्वा त्केषांश्चिच परस्परव्यवधानेन ज्ञूमेर्दूरवर्तित्वादिति । अत्रोत्तरं । मूलानि मूलजीवस्पृष्टानि केवलं पृथिवी जीवप्रतिबद्धानि । ( तम्हत्ति ) । तस्मात्तत्प्रतिबन्धाद्धेतोः पृथिवीरसं मूलजीवा आहारयन्ति कन्दाः कन्दजीवस्पृष्टाः केवलं मूलजीव प्रतिबद्धा स्तस्मात्तत्प्रतिबंधान्मूलजीवोपात्तं पृथिवीरसमाहारयंतीत्येवं स्कंधादिष्वपि वाच्यं ॥ ज. श. ७ उ. २ ॥

आहारकाणां कायस्थितिः ( कायट्ठिइ ) शब्दे उक्ता ॥ अद-त्तमाहारमाहारयंति ॥

जे जिक्खू आयरिय उवज्झाएहिं अदिन्नं आहारं आहारेइ आहारंतं वा साइज्जइ ॥ २२ ॥ जे जिक्खु आयरियउवज्झाएहिं अविदिन्नं विगयं आहारेति आहा-रंतं वा साइज्जइ ॥ २३ ॥

आचार्य्य उपाध्यायः । असहीणोवायरिए उवज्झाओ पुच्छि ज्जइ । अथवा उवज्झायगहणेणं जो जं पुरतो काउं विह-रति सो तेण पुच्छियव्वो अविदिण्णं अदत्तं अणुण्णा यं अ-ण्णायं अण्णतरं गहणतोणवविगत्तीओ जो आहारेइ तस्स मासलहुं एस सुत्तत्थो ॥ नि० चू० ४ ॥

ओषधीराहारयति ।

जे जिक्खू कसिणाओ ओसहीओ आहारेइ आहारंतं वा साइज्जइ ॥ २४ ॥

कसिणा संपुण्णा दव्वतो अभिण्णा ओसहीओ सालिमा-तियाओ आहारेति जुंजति तस्स मासलहुं कसिणत्ते ओसहीए दव्वजावेहिं चउजंगा कायव्वा दव्वतो ॥

कसिणत्तमोसहीणं, दव्वे जावे व उक्कजयणाउ ।
दव्वेण जानु सकला, जीवजुता जावितो कसिणा॥२५॥

कसिणा सम्पुण्णा अखंमिता अप्फुमिता जावकसिणा जा सचेयणा ॥

सतुसा सचेयणा वि य, पढम जंगोउ ओसधीणीउं ।
विंतिओ सचेतणा अतु-सा ओखाएिमता अतिच्छमिता ॥

जा सतुसा दव्वतो अजिण्णा सचेयणा य एस पढमजंगो जा सचेयणा अतुसा चेयणा तंदुला सतुसा वा खंमिता अतिच्छडा एगडुच्छडा वा कता एस वितियजंगो ॥

णियगाठितिमतिक्कंता सतुसा वीयाउ ततियओजंगो ।
पढमसाजिविवरीओ चउत्थजंगोमुणे तव्वो ॥२७॥

णियगा आत्मीयस्थिति मतिकन्ता अचेतना इत्यर्थः । दव्वतो पुण सतुसा अखंमिता अप्फुमिता एरिसा जा ओसहीओ एस ततियजंगो जावतो णियगट्ठितिमतिक्कन्ता दव्वतो भिण्णा ए स पढमजंगविवरीतो चतुर्थजंगो भवतीति ।

एतेसु चउभंगेसु इमंपच्छित्तं ।

दोसु लहुया दोसु लहुओ, तवकालविसेसिता जधा कमसो परित्तोसधीणसोधी, एसे व गुरुअणंताणं ॥ २८ ॥

आइल्लेसु दोसु जंगेसु चउलहुं । पच्छिमेसु दोसु जंगेसु मासलहुं जहाकमं आतिल्लातो समारब्भ तवकालविसेसिया कायव्वा । पढमे दोहिं वि गुरु वितिए तव गुरु ततिए काल-गुरु चउत्थे दोहिं वि लहु एवं परित्ते भणियं अणंतवीएसु एवं पच्छित्तं गुरुगं दत्तव्वं ।

चोदगआह ।

अण्णोण्णेण विरुद्धं तु, सो विसुत्तंव मा जणसा ।
संघट्टणे तुमोही, पंचाहा जुंजतो सुत्तं ॥ २९ ॥

सुत्तगहणतो इहसुत्ते वितिएसु मासलहुं सो वि ग्गहणाउ इहेव पढिगाए अत्थेवीएसु पाणगं दत्तं एए दो वि अण्णोण्ण विरुद्धा एवं मा जणाहि आचार्योआह सातु संघट्टणे पच्छन्नं पंच राइन्दिया अत्येण जे वीएसु भणिता ते संघट्टणा इमं पुण जुंजओ सुत्ते मासलहुं अंतो भणियं तम्हातो अण्णोण्णविरुद्धं अण्णे आयरिया वक्खाणेंति । अत्यतो चोइए आचार्य उत्तर-माह अण्णोण्णेण गाहा शेषं पूर्ववत् ।

पुणरवि चोयगआह ।

गा०-जं च वीएसु पंचावो, कुंमरोट्टेसु मासियं ।
तत्थपाती तु सो वीयं, कुंमरोट्टतुणिवसाउ ॥ ३० ॥

प्रचोदको भणति वीएसु संघट्टिएसु पणगकुंडरोट्टेसु संघ-ट्टितेसु मासलहुं एत्थ किं कारणं तुसमुहीकणिया कुक्कस-मीसा कुडगं जणाति असत्थो वहतो आमो चेयणं च तंदुले लोट्टो भणति आयरिओ भणति तत्थे पाणी तु पच्छन्नं चोइते तत्थेव उत्तरं भणाति पाति रक्खति सो तुसो तं वीयं तेणं तत्थपणगं कुंडरोट्टे पुण णितुसा तेण वत्थमहंततवरी पीडा अतो तत्थ मासितं ।

गा०-एते सामण्णतरं, कसिणं जोऊ अधिउ आधारे ।
सा आणा अणवत्थं, मिच्छत्त विराधणं पावे ॥ ३१ ॥

तिलमुग्गमासचवलगा गोधूम चणयसालिकंगुमातीयाणं अणंतरं कसिणं जुंजति सो आणाती दोसे पावति इमे दोसा ।

गा०-पलिमंथोअणाइण्णं, जो णिग्घातो असंजमे ।
अतिजुत्ते य आयाए, पत्थारंमि पसज्जणा ॥ ३२ ॥

चमलयमातयासु संगासु सचित्तासु अचित्तासु वा पलिमं-थो एगरि सिउं संजमो मंथिज्जति जेण सो पलिमंथो साहू-ण वा तओ अणाइण्णा जोणीजूते बीए जोणी घातो भव-तीत्ति सचित्ते असंजमो भवति रसाले वा अतिजुत्ते विसूइ-यत्ति आयविराहणा अण्णतरं वा दीहे रोगायंक जवति तत्थप-त्थारपसंगो प्रसूरणं प्रस्तारप्रसंगः उत्तरोत्तरदुःखसंभव इत्यर्थः।

तत्थ परितावमहादुक्खं ॥

गा०-वितियपदं गेलाणे, अद्धाणे चेव तह य उमंमि ॥
कसिणोसहीणगहणो, जतणाए कप्पती काउं ॥ ३३ ॥

वेज्जुवदेसागिलाणो जुंजति भत्तालंभे अद्धाणे अकम्मं ता वा उमेकसिणो वा उमेकसिणोसही गहणं करेज्ज तं पि जयणा-ए पणगातिमासपत्तो पच्छाचरिमजंगेण ततो तत्तियजंगे, ततो वितियभंगे, ततो पढमेण एवं गहणं काउं कप्पति ॥

यावज्जीवं कियद् भुंक्ते ॥

चत्तारि य उसासकोमिसए जाव चत्तालीसं च

ऊसास सहस्साइं जीवंतो अघ्धतेवीसं तंदुलवाहे भुंजइ । कहमाउसो अघ्धतेवीसं तंदुलवाहे भुंजइ । गोयमा ! दुब्बलाए खंडियाएं वलियाए छड्डियाणं खयरमुसलपच्चाहयाणं ववगयतुसकणियाणं अखंडाणं अफुडियाणं फलगसरीयाणं एक्किक्कं बीयाणं अघ्धतेरसपलियाणं पत्थयणं सेवियणं पत्थ ए मागहए कल्लंपत्थो १ मायंपत्थो २ चउसट्ठितंदुलसाहस्सीओ मागहओ पत्थो विसाहस्सिएणं कवलेणं बत्तीसं कवला पुरिसस्स आहारो १ अट्ठाविसं इत्थीयाए २ चउवीसं पंडगस्स ३ एवमेव आउसो एयाए गणणाए दो असईओ पसई १ दो पसईउ सेइया होइ २ चउवीसं पंडगस्स ३ एवमेव आउसो चत्तारी सेइया कुलउ चत्तारि कुलया पत्थो ४ चत्वारि पत्था आढगं ५ सट्ठीए आढगाणं जहन्नए य कुंभे ६ असीए आढगाणं मज्झिमे कुंभे ७ आढगसयं उक्कोसए कुम्भे ८ अट्ठेव आढगसयाणि वाहो एएणं वाहपमाणेणं अघ्धतेवीसं तंदुलवाहे भुंजइ ते य गणिय निदिट्ठा "चत्तारि य कोडिसया, सट्ठिं चेव य हवंति कोडियो । असीइं च तंदुलसय-सहस्सा हवंतित्ति विक्खायं" ४६०८००००० तं एवं अघ्धतेवीसं तंदुलवाहे भुंजंतो अघ्धछट्ठे मुग्गकुंभे भुंजइ । अघ्धछट्ठे मुग्गकुम्भे भुंजंतो चउवीसं नेहाढगसयाइं भुंजइ चउवीसं नेहाढगसयाइं भुंजंतो बत्तीसं लवणपलसहस्साइं भुंजइ बत्तीसं लवणपलसहस्साइं भुंजंतो छप्पडगसाडगसयाइं नियंसेइ दोमासीएण परियट्टएणएणं मासिएण वा परियट्टेणं बारसपडसाडगसयाइं नियंसेइ एवमेव आउसो वाससयाउयस्स सव्वं गणियं तुलियमवियं नेहलवणभोयणं छायणंपि एयं गणियप्पमाणं दुविहं भणियं महरिसीहिं जस्सत्थि तस्स गुणिज्जइ जस्स नत्थि तस्स किं गणिज्जइ ॥
'ववहारगणियदिट्ठं, सुहुमं निच्छयगयं मुणेयव्वं ॥
जइ एयं नवि एयं, विसमा गणणा मुणेयव्वा' ॥ १ ॥

चत्वारि उच्छ्वासकोटिशतानि यावच्चत्वारिंशदुच्छ्वाससहस्राणि जीवन्सार्द्ध द्वाविंशति तंदुलवाहान् वक्ष्यमाणस्वरूपान् भुनक्ति। कथं हे आयुष्मन् ! हे सिद्धार्थनंदन! सार्द्ध द्वाविंशतितंदुलवाहान् भुनक्ति संसारीति-हे गौतम ! दुर्बलिकया स्त्रिया कंडितानां बलवत्या रामया वृटितानांशूर्पादिना खदिरमुशलप्रत्याहतानां व्यपगततुषकणिकाणां अखंडानां संपूर्णावयवानां अस्फुटितानां राजिरहितानां ( फलगसरियाणं ) फलक वीनितानां कर्करादिकर्षणेन एकैकबीजानां वीननार्थं पृथक् २ कृतानामित्यर्थः । एवं विधानां सार्द्धद्वादशपलानां तंदुलानां प्रस्थकोभवति णं वाक्यालंकारे ॥ पलमानं यथा पंचभिर्गुंजाभिर्माषः षोडशमाषाः कर्षः अशीति-गुंजाप्रमाण इत्यर्थः । स यदि कनकस्य तदासुवर्ण संज्ञः नान्यस्यरजतादेरितिचतुर्भिः कर्षैः पलमिति विंशत्यधिकशतत्रय-गुंजाप्रमाणमित्यर्थः ( ३२० )सोपि च प्रस्थकः मगधे भवो मागध इत्युच्यते कल्लन्ति श्वः प्रातः कालइत्यर्थः प्रस्थो भवति भोजनायेति सायमिति संध्यायां प्रस्थो भोजनायेति १ एकस्मिन्मागधप्रस्थके कति तंदुला भवन्ति इत्याह । चउसट्ठि १ चतुः षष्ठि तंदुलसाहस्रिको मागधप्रस्थोभक्त्येकः एवं कवलं कतिभिः तंदुलैः स्यादित्याह ( विसाहस्सिएणं कवलेणंति ) द्विसाहस्रीकेण तंदुलेन कवलो भवति तत्र गुंजा कति भवन्ति यथा एकविंशत्यधिकशतप्रमाणः किंचितन्यूना एका गुंजाचेति अनेन कवलमानेन पुरुषस्य द्वात्रिंशत् कवलरूप आहारो भवति१ स्त्रिया अष्टाविंशतिकवलरूप आहारः २ पंडकस्य नपुंसकस्य चतुर्विंशतिकवलरूप आहारः ३ ( एवमेवेति ) उक्तप्रकारेण वक्ष्यमाणप्रकारेण च हे आयुष्मन् एतया गणनया एतन्मानं भवति । अथासत्यादिमानपूर्वकं अष्टाविंशतिसहस्राधिकलक्ष तंदुलमानं चतुः षष्ठीकवलप्रमाणं प्रस्थद्वयं प्रतिदिनं भुंजन्-प्रतिवर्षेण कति तंदुलवाहान् कतितंदुलांश्च भुनक्तीत्याह ( दो असईओ पसई इत्यादि ) धान्यभृतोऽवाङ्मुखीकृतो हस्तोऽसतीत्युच्यते द्वाभ्यामसतीभ्यां प्रसृतिः १ द्वाभ्यां प्रसृतिभ्यां सेतिका भवति २ चतसृभिः सेतिकाभिः कुडवः ३ चतुर्भिः कुडवैः प्रस्थः ४ चतुर्भिः प्रस्थैराढकः ५ षष्ठ्याआढकैर्जघन्यकुंभः ६ अशीत्याढकैर्मध्यमकुंभः ७ आढकशतेनोत्कृष्टः कुंभः ८ अष्टभिराढकशतैः वाहोभवति ९ अनेनवाहप्रमाणेन सार्द्धद्वाविंशति तंदुलवाहान् भुनक्ति वर्षशतेनेति ते च वाहोक्त तंदुला गणयित्वा संख्यां कृत्वा निर्दिष्टाः कथिताः यथा चत्वारिकोटिशतानि षष्ठिश्चैवकोटयः अशीतिस्तंदुलशतसहस्राणि भवंतीत्याख्यातं कथितं एकेनप्रस्थेन चतुः षष्ठिस्तंदुलसहस्राणि भवन्ति प्रस्थद्वयेनाष्टाविंशतिसहस्राधिकं लक्षं भवति प्रतिदिनं द्विर्भोजनेन एतावततंदुलान् भुनक्तीति अतोष्टाविंशतिसहस्राधिकलक्षं वर्षशतेन षट्त्रिंशद्दिनसहस्रमानत्वात् षट्त्रिंशत्सहस्रैर्गुण्यन्ते । शून्यानि पंच भवन्ति चत्वारिकोटिशतानि षष्ठि कोटयः अशीतिलक्षाणि । ४६०८००००० तंदुलानामिति ( तं एवंति ) तदेवंसार्द्धद्वाविंशति तंदुलवाहान् भुंजन् सार्द्धपंचमुद्गकुंभान् भुनक्ति सार्द्धपंचमुद्गकुंभान् भुंजन् चतुर्विंशति स्नेहाढकशतानि भुनक्ति चतुर्विंशति स्नेहाढकशतानिभुंजन् षट्त्रिंशल्लवणपलसहस्राणि भुनक्ति षट्त्रिंशल्लवणपलसहस्राणिभुंजन् षट्पटकशाटकशतानि (नियंसेइति )परिदधाति। द्वाभ्यांमासाभ्यां (परियट्टएणन्ति) परावर्त्तमानत्वेनेति वा अथवा मासिकेन परावर्तित्वेन द्वादशशतशाटकशतानि नियंसेइति परिदधाति (एवमेवत्ति) उक्तप्रकारेण हे आयुष्मन् वर्षशतायुषः पुरुषस्य सर्वगुणितं तंदुलप्रमाणादिना तुलितं पलप्रपाणादिनामवित्तमसत्तीप्रसृत्यादिना प्रमाणेन तत्किमित्याह । स्नेहलवणभोजनाच्छादनमिति एतत्पूर्वोक्तं गणितप्रमाणं द्विधाभणितं महर्षिभिः यस्य जन्तोरस्ति तंदुलादिकं तस्य गुण्यते यस्य तु नास्ति तस्य किं गुण्यते न किमपीति व्यवहारगणितदृष्टं स्थूलन्यायमंगीकृत्य कथितं सूक्ष्मं निश्चयगतं ज्ञातव्यं यदि एतन्निश्चयगतं भवती तदा एतदृव्यवहारगणितं नास्त्येव अतो विषमा गणना ज्ञातव्येति १ आहारकारणानि ॥

छहिं ठाणेहिं समणे निग्गन्थे आहारमाहारेमाणे णाइक्कमइ तंजहा "वेयण वेयावच्चे, इरियट्ठाए य संजमट्ठाए । तह पाणवत्तियाए, छट्ठं पुण धम्मचिंताए" ॥

॥ टी० ॥ कपत्थ श्रवर माहारमशनादिक माहारयभस्य वह-

रन् नातिक्रामत्याज्ञां पुष्टिकारणत्वादन्यथात्वतिक्रामत्येव रागादिभावात्तथा वेदनेत्यादिगाथा वेदना च क्षुद्वेदना वैयावृत्त्यं चाचार्यादिकृत्यकरणं वेदना वैयावृत्त्यं तत्र विषये भुञ्जीत वेदनोपशमनार्थं वैयावृत्त्यकरणार्थञ्चेति भावः ईर्या गमनं तस्याः विशुद्धिर्युगमात्रनिहितदृष्टित्वमीर्याविशुद्धिस्तस्यै इदमीर्याविशुध्यर्थं इह च विशुद्धिशब्दलोपादीर्यार्थमित्युक्तं बुभुक्षितो हीर्याशुद्ध्यावशक्तः स्यादिति तदर्थमिति च समुच्चये संयमः प्रेक्षोत्प्रेक्षाप्रमार्जनादिलक्षणस्तदर्थं तथेति कारणान्तरसमुच्चये प्राणा उच्छ्वासादयो बलं वा प्राणास्तेषां तस्य वा वृत्तिः पालनं तदर्थं प्राणसंधारणार्थमित्यर्थः षष्ठं पुनः कारणं धर्मचिन्तायै गुणनानुप्रेक्षायैमित्यर्थः इत्येतानि षट् कारणानीति स्था० ६ ठाणा०।

अधुनाकारणे द्वारमाह ।

छहिं कारणेहिं साहू, आहारिन्तो य आयरइ धम्मं ।
छहिं चेव कारणेहिं, णिज्जूहिन्तो वि आयरइ ॥

षड्भिर्वक्ष्यमाणस्वरूपैः साधुराहारयन्नप्याहारमाचरति धर्मं षड्भिरेवकारणे वक्ष्यमाणस्वरूपे भोजनकारणनिबन्धनैः (निज्जूहिन्तो वित्ति) परित्यजन्नप्याचरति धर्मं तत्र यैः षड्भिः कारणैराहारमाहारयति तानि निर्दिशति "वेयण वेयावच्चे, इरियट्ठाए य संजमट्ठाए । तह पाणवत्तियाए, छट्ठं पुण धम्मचिन्ताए" इह पदैकदेशे पदसमुदायोपचारात् (वेयणत्ति) क्षुद्वेदनोपशमनाय तथा आचार्यादीनां वैयावृत्तिकरणाय तथा ईर्यापथि संशोधनार्थं तथा प्रेक्षादिसंयमनिमित्तं तथा प्राणप्रत्ययार्थं प्राणसंधारणार्थं षष्ठं पुनः कारणं धर्मचिन्ताभिवृद्ध्यर्थं भुञ्जीतेति क्रियासंबन्धः।

एतामेव गाथां विवृण्वन्नाह ।

नत्थि छुहाए सरिसा, वियणा भुंजेज्ज तप्पसमणट्ठा ।
छाओ वेयावच्चं, न तरइ काउं अओ भुंजे ॥
इरियं न विसोहेई, पेहाईयं च संजमं काउं ।
थामो वा परिहायई, गुणणमणुप्पेहासु य असत्तो ॥

नास्ति क्षुधाया बुभुक्षाया सदृशी वेदना उक्तं च "पंथसमा नत्थि जरा, दालिद्दसमो य परिभवो नत्थि । मरणसमं नत्थि भयं, खुहासमा वेयणा नत्थि॥ तं नत्थि जं न वाहइ, तिलतुसमित्तं पि एण कायस्स।सन्निज्झं सव्वदुहाइं, देंति आहाररहिययस्स" ततस्तत्प्रशमनार्थं भुंजीत तथा क्षामो बुभुक्षितः सन् वैयावृत्त्यं न शक्नोति कर्तुं। तथाचोक्तं।"गलइ बलं उच्छाहो, अवेइ सिढिलेइ सयलवावारे । नासइ सत्तं अरई, विवट्टइ असणरहियस्स" अतो वैयावृत्त्यकरणाय भुंजीत । तथा बुभुक्षितः सन्नीर्यापथं न शोधयत्यशक्तत्वादतस्तच्छोधननिमित्तं वा अश्नीयात् तथा क्षुधार्तः सन् न प्रेक्षादिकं संयमं विधातुमलमतः संयमाभिवृद्ध्यर्थं भुंजीत तथा स्थाम बलं प्राण इत्येकार्थः ततः बुभुक्षितस्य परिहीयते परिहानिं याति। ततोऽश्नीयात् तथा गुणनं ग्रन्थपरावर्तनमनुप्रेक्षा चिन्ता तयोरुपलक्षणमेतत् वाचनादिष्वपि बुभुक्षितः सन् अशक्तोऽसमर्थो भवति ततोऽश्नीयात् इत्थंभूतैश्च षड्भिः कारणैः समग्रैरन्यतमेन वा कारणेनाहारयन्नातिक्रामति।

संप्रत्यभोजनकारणप्रतिपादनार्थं संबन्धगाथामाह ।

अहवं न कुज्जाहारं, छहिं ठाणेहिं संजओ ।
पच्छा पच्छिमकालम्मि, काउं अप्पक्खमं खमं ॥

अथवा षड्भिः स्थानैर्वक्ष्यमाणस्वरूपैः संयतः आहारं न कुर्यात् तत्र विचित्रा सूत्रगतिरिति षष्ठं शरीर-व्यवच्छेदलक्षणं कारणं व्याख्यानयति (पच्छा इत्यादि) पश्चात् शिष्यनिष्पादनादि सकलकर्तव्यतानंतरं पश्चिमे काले पाश्चात्त्ये वयसि (अप्पक्खमंति) संलेखनाकरणेनात्मानं क्षपयित्वा यावज्जीवमशनप्रत्याख्यानकरणस्य क्षमं योग्यमात्मानं कृत्वा भोजनं परिहरेन्नान्यथा । एतेन शिष्यानिष्पन्नाद्यभावे प्रथमे वा द्वितीये वा वयसि संलेखनामन्तरेण वा शरीरपरित्यागार्थमशनप्रत्याख्यानकरणे जिनाज्ञाभङ्गमुपदर्शयति । पिं० ॥

( भावत एवाहरेदिति अस्मिन्नेव शब्दे । )

आहारत्यागकारणानि ।

छहिं ठाणेहिं समणे निग्गंथे आहारं वोच्छिंदमाणे णाइक्कमइ तंजहा "आतंके उवसग्गे, तितिक्खणे बंभचेरगुत्तीए । पाणिदया तवहेउं, सरीरवोच्छेयणट्ठाए"

(वोच्छिंदमाणेत्ति) परित्यजन् आतंके ज्वरादावुपसर्गे राजस्वजनादिजनिते प्रतिकूलस्वभावे तितिक्षणे अधिसहने कस्याः ब्रह्मचर्यगुप्तेः मैथुनव्रतसंरक्षणस्याहारत्यागिनो हि ब्रह्मचर्यं सुरक्षं स्यादिति। प्राणिदया च संपातिम-त्रसादिसंरक्षणं तपश्चतुर्थादि षण्मासान्तं प्राणिदया तपस्तच्च तद्धेतुश्च प्राणिदया तपो हेतुस्तस्मात् प्राणिदया तपो हेतोर्दयादिनिमित्तमित्यर्थस्तथा शरीरव्यवच्छेदार्थं देहत्यागाय आहारं व्यवच्छिन्दन्नातिक्रामत्याज्ञामिति प्रक्रम इह गाथे। "आयंको जरमाई, रायासन्नाइगय उवसग्गे। बंभवयपालणट्ठा, पाणिदया वासमहियाई ॥ १ ॥ तवहेउ चउत्थाइ, जाव य छम्मासिओ तवो होइ । छट्ठं सरीरवोच्छेयण-ट्ठयाहोति अणाहारोत्ति॥२॥" स्था० ६ ठा० ॥

संप्रत्यभोजनकारणानि निर्दिशति।

आयंके उवसग्गे, तितिक्खए बंभचेरगुत्तीसु ।
पाणिदया तवहेउ, शरीरवोच्छेयणट्ठाए ॥

आतंके ज्वरादावुत्पन्ने सति न भुंजीत । तथा उपसर्गे राजस्वजनादिकृते देवमनुष्यतिर्यक्कृते वा संजाते सति तितिक्षार्थमुपसर्गसहनार्थं तथा ब्रह्मचर्यगुप्तिस्विति । अत्र षष्ठ्यर्थे सप्तमी । ततोऽयमर्थः ब्रह्मचर्यगुप्तीनां परिपालनाय तथा प्राणिदयार्थं तथा तपोहेतोस्तपः करणनिमित्तं तथा चरमकाले शरीरव्यवच्छेदार्थं सर्वत्र न भुंजीतेति क्रियासंबन्धः ।

एतामेव गाथां विवृण्वन्नाह ॥

आयंको जरमाई, रायासन्नाइ गय उवसग्गे ।
बंभवयपालणट्ठा, पाणिदया वासमहियाई ॥

आतंको ज्वरादिस्तस्मिन्नुत्पन्ने सति न भुंजीत यत उक्तं "बलावरोधिनिर्दिष्टं ज्वरादौ लंघनं हितं । ऋतेऽनिलश्रमक्रोध-शोककामकृतज्वरान्,, राजस्वजनादिकृते उपसर्गे यद्वा देवमनुष्यतिर्यक्कृते उपसर्गे जाते सति तदुपशमनार्थं नाऽश्नीयात् । तथा मोहोदये सति ब्रह्मव्रतपालनार्थं न भुंजीत भोजननिषेधे हि प्रायो मोहोदयो विनिवर्तते । तथा चोक्तम् ॥ "विषया विनिवर्तन्ते, निराहारस्य देहिनः । रसवर्जं रसोऽप्येवं, परं दृष्ट्वा निवर्तते" । तथा । वर्षे वर्षति मिहिकायां वा निपतन्त्यां प्राणिदयार्थं नाश्नीयात् । आदिशब्दात् सूक्ष्ममंडूकादिसंसक्तायां भूमौ प्राणिदयार्थमटनं परिहरन् न भुञ्जीत ।

तवहेउ चउत्थाई, जाव छम्मासिओ तवो होई ।
छट्ठं शरीरवोच्छे-यणट्ठया होइ अणाहारो ।

तपोहेतोस्तपःकरणनिमित्तं न भुञ्जीत तपश्चतुर्थादिकं चतुर्थादारभ्य तावद्भवति यावत्षाण्मासिकं षण्मासप्रमाणं परतो भगवद्वर्द्धमानस्वामितीर्थे तपसः प्रतिषेधात् षष्ठं पुनः प्रागुक्तविधिना चरमकाले शरीरव्यवच्छेदनार्थं भवत्यनाहारः । तदेवमुक्तं कारणद्वारं । पिं० । उत्त० । अ. ३० ॥

जह कारणं तु तंतू, पडस्स तेसिं च होंति पम्हाइं ।
णाणाइतिगस्सेवं, आहारो मोक्खनेमस्स ॥

यथा पटस्य तन्तवः कारणं तेषामपि च कारणं पक्ष्माणि भवन्ति । एवमेव प्रकारेण ज्ञानादित्रिकस्य ( मोक्खनेमस्सत्ति ) । नेमशब्दो देश्यः कार्य्याभिधाने रूढः ततो मोक्षो नेमः कार्य्यं यस्य तस्य कारणं भवत्याहारः । पिं० । नि० चू० १ उ. ॥

आहारप्रमाणद्वारम्

बत्तीसं किर कवला, आहारो कुच्छिपूरओ भणिओ ।
पुरिसस्स महिलियाए, अट्ठावीसं भवे कवला ॥

पुरुषस्य कुक्षिपूरक आहारो मध्यप्रमाणो द्वात्रिंशत्कवलः किलेत्याहारस्य मध्यमप्रमाणतासूचकः । महिलायाः कुक्षिपूरक आहारो मध्यमप्रमाणोऽष्टाविंशतिकवलः । नपुंसकस्य चतुर्विंशतिः स चात्र न गृहीतो नपुंसकस्य प्रायः प्रव्रज्यानर्हत्वात् कवलानाञ्च प्रमाणं कुक्कुट्यण्डकम् । कुक्कुटी च द्विधा द्रव्यकुक्कुटी भावकुक्कुटी च । द्रव्यकुक्कुट्यपि द्विधा । उदरकुक्कुटी गलकुक्कुटी च । तत्र साधोरुदरं यावन्मात्रेणाहारेण न न्यूनं नाऽप्यध्मातं भवति स आहार उदरकुक्कुटी । उदरपूरक आहारः कुक्कुटी च उदरकुक्कुटीति मध्यमपदलोपिसमासाश्रयणात् । तस्य द्वात्रिंशत्तमो भागोऽण्डकं तत्प्रमाणः कवलः स्यात्तथा गलः कुक्कुटीव गलकुक्कुटी गल एव कुक्कुटीत्यर्थः । तस्यान्तरालमण्डकम् । किमुक्तं भवति । अविकृतस्य पुंसो गलान्तराले यः कवलोऽविकलः प्रविशति तावत्प्रमाणं कवलमश्नीयात् । अथवा शरीरमेव कुक्कुटी तन्मुखमण्डकं तत्राक्षिकपोलभ्रूणां विकृतिमनापाद्य यः कवलो मुखे प्रविशति तत्प्रमाणम् । अथवा कुक्कुटी पक्षिणी तस्या अण्डकं प्रमाणं कवलस्य । भावकुक्कुटी येन आहारेण भुक्तेन न न्यूनं नाऽप्यत्याध्मातमुदरम्भवति । धृतिश्च समुद्वहति । ज्ञानदर्शनचारित्राणाञ्च वृद्धिरुपजायते । तावत्प्रमाण आहारो भावकुक्कुटी । अत्र भावस्य प्राधान्यविवक्षणादेव प्राग् द्रव्यकुक्कुट्युक्तः । इह भावकुक्कुटी उक्तः । तस्य द्वात्रिंशत्तमो भागो अण्डकप्रमाणो तत्कवलस्य ।

एत्तो किणाईहीणं, अद्धं अद्धद्धगं च आहारं ।
साहुस्स बेंति धीरा, जायामायं च ओमं च ॥

एतस्मात् द्वात्रिंशत्कवलप्रमाणादाहारात् ( किणई इति ) किञ्चिन्मात्रया एकेन द्वाभ्यां त्रिभिश्चतुर्भिर्वा कवलैः साधोर्हीनं हीनतरं यावदर्द्धमर्द्धस्याऽप्यर्द्धमाहारं यात्रामात्रमाहारं धीरास्तीर्थकृदादयो ब्रुवते न्यूनश्च एष यात्राहार एव वाऽवमाहार इति भावः । पिं० ॥

संप्रति प्रमाणदोषानाह ॥

पगामं च निगामं च, पाणीयं भत्तपाणमाहारे ।
अइबहुयं अइबहुसो, पमाणदोसो मुणेयव्वो ॥

यः कामं निकामं प्रणीतं वा भक्तपानमाहारयति तयाऽतिबहुकमतिबहुशश्च तस्य प्रमाणदोषा ज्ञातव्याः ॥

संप्रति प्रकामादिस्वरूपमाह ॥

बत्तीसाइपरेण, पगाम निचंतमिव उ निकामं ।
जं पुण गलिंतसिणेहं, पणीयमिति तं बुहा बिंति ॥

द्वात्रिंशदादिकवलेभ्यः परेण परतो भुञ्जानस्य यद्भोजनं तत्प्रकामभोजनं तदेव तत्प्रमाणातीतमाहारं नित्यन्तं प्रतिदिवसमश्नतो निकामभोजनम् । यत्पुनर्गलितस्नेहं भोजनं तत्प्रणीतं बुधास्तीर्थकृदादयः ब्रुवते ॥ तथा-

अइबहुयं अइबहुसो, अइप्पमाणेण भोयणं भुत्तं ।
हाएज्ज व वामेज्ज व, मारेज्ज व तं अजीरंतं ॥

अतिबहुकं वक्ष्यमाणस्वरूपमतिबहुशोऽनेकशोऽभ्यस्यता सता भोजनं भुक्तं सत् हादयेत् अतीसारं कुर्यात् तथा वामयेत् यद्वा तदजीर्यन्मारयेत् । तस्मान्न प्रमाणातिक्रमः कर्तव्य इति ।

संप्रति अतिबह्वादिस्वरूपमाह ।

बहुयातीयमइबहुं, अइबहुसो तिन्निसिन्नि परेणं ।
तंचिय अइप्पमाणं, भुंजेज्जइ वा अतिप्पंतो ॥

बहुकातीतमतिशयेन बहु अतिशयेन निजप्रमाणाभ्यधिकमित्यर्थः । तथा दिवसमध्ये यत्त्रीन् वारान् भुंक्ते त्रिभ्यो वा वारेभ्यः परतस्तद्भोजनमतिबहुशः । तदेव च वारत्रयातीतमतिप्रमाणमुच्यते अइप्पमाणे त्यवयवो व्याख्यातः । अस्यैव प्रकारांतरेण व्याख्यानमाह ॥ भुंक्ते यद्वा अतृप्यन् एष अइप्पमाण इत्यस्य शब्दस्यार्थः । अइप्पमाण इत्यत्र च शानच् प्रत्ययस्ताच्छील्यविवक्षायां यद्वा प्राकृतलक्षणवशादिति ।

संप्रति प्रमाणयुक्तहीनतरादिभोजने गुणानाह ।

हियाहारा मियाहारा, अप्पाहारा य जे नरा ।
न ते विज्जा चिगिच्छंति, अप्पाणं ते तिगिच्छगा ॥

हितं द्विधा द्रव्यतो भावतश्च द्रव्यतोऽविरुद्धानि द्रव्याणि भावत एषणीयं तदाहारयंति ये ते हिताहाराः । मितं प्रमाणोपेतमाहारयन्तीति मिताहाराः । द्वात्रिंशत्कवलप्रमाणादप्यल्पमल्पतरं वा आहाराः । सर्वत्र वा बहुव्रीहिः हित आहारो येषां ते हिताहारा इत्यादि एवंविधा ये नरास्तान् वैद्या न चिकित्संति हितमितादिभोजनेन तेषां रोगस्यैवासंभवात् किं त्वेते स्वत एव रोगोत्थानप्रतिषेधकरणेनाऽऽत्मनैवात्मनस्ते चिकित्सकाः ।

सांप्रतमहितहितस्वरूपमाह ॥

तेल्लदहिसमा जोगा, अहितं उ खीरदहिकंजियाणं च ।
पत्थं पुण रोगहरं, विनामगं होइ रोगस्स ।

दधितैलयोस्तथा क्षीरदधिकांजिकानां च यः समायोगः सोऽहितो विरुद्ध इत्यर्थः । तथा चोक्तं शाकमुद्गफलपिण्याककपित्थलवणैः सह करीरदधिमत्स्यैश्च प्रायः क्षीरं विरुध्यते इत्यादि अविरुद्धद्रव्यमेलनं पुनः पथ्यं तच्च रोगहरं प्रादुर्भूतरोगविनाशकरं न च भाविनो रोगस्य हेतुः कारणम् । उक्तञ्च "अहिताशनसम्पर्को, बहुरोगोद्भवो यतः । तस्मात्तदहितं पथ्यं, न्याय्यं पथ्यनिषेवणम्" ।

सांप्रतं मितं व्याचिख्यासुराह ।

अट्ठमसणस्स सव्वं, जणस्स कुज्जा दवस्स दो भागे ।
वाउपवियारणट्ठं, छब्भायउ ऊणयं कुज्जा ॥

इह किल सर्वसुन्दरं षड्भिर्भागैर्विभज्यते तत्रार्द्धं भागत्रय-

रूपमशनस्य सव्यंजनस्य तक्रशाकादिसहितस्याधारं कुर्यात् तथा द्वौ भागौ द्रव्यस्य पानीयस्य षष्ठं तु भागं वायुप्रविचरणार्थमूनं कुर्यात्, इह कालापेक्षया तथा तथा आहारस्य प्रमाणं भवति। कालश्च त्रिधा तथा चाह-

सिओ उसिणो साहारणो य, कालो तिहा मुणेयव्वो।
साहारणंमि काले, तत्थाहारे इमा मत्ता ॥

त्रिधा कालो ज्ञातव्यस्तद्यथा शीत उष्णः साधारणश्च तत्र तेषु कालेषु मध्ये साधारणे काले आहारविषया इयमनंतरोक्ता मात्रा प्रमाणम् ॥

सीए दवस्स एगो, भत्ते चत्तारि अहव दो पाणी।
उसिणे दवस्स दोन्नि उ, तिन्नि व सेसा उ भत्तस्स ॥

शीत अतिशयेन शीतकाले द्रव्यस्य पानीयस्यैको भागः कल्पनीयश्चत्वारि भक्तस्य। मध्यमे तु शीतकाले द्वौ भागौ पानीयस्य कल्पनीयौ त्रयस्तु भागा भक्तस्य। वा शब्दो मध्यमशीतकालसंसूचनार्थः। तथा उष्णे मध्यमोष्णकाले द्वौ भागौ द्रव्यस्य पानीयस्य कल्पनीयौ शेषास्तु त्रयो भागाः भक्तस्य। अत्युष्णे च काले त्रयो भागा द्रव्यस्य शेषौ द्वौ भागौ भक्तस्य। वा शब्दोऽत्युष्णकालसंसूचनार्थः सर्वत्र च षष्ठो भागो वायुप्रविचरणार्थमुक्तोऽतो मोक्तव्यः।

संप्रति भागानां स्थिरचरविभागप्रदर्शनार्थमाह।

एगो दवस्स भागो, अवट्ठिओ भोयणं दो भागा॥
वड्ढंति व हाइंति व,दो दो भागा उ एक्केक्के ॥ १ ॥

एको द्रव्यस्य भागोऽवस्थितो द्वौ भागौ भोजनस्य शेषौ तौ द्वौ भागौ एकैकस्मिन् भक्ते पाने चेत्यर्थः। वर्द्धेते वा हीयेते वृद्धिं वा व्रजेते हानिं वा व्रजेते इत्यर्थः। तथा हि। अतिशीतकाले द्वौ भागौ भोजनस्य वर्धेते अत्युष्णकाले च पानीयस्य। अत्युष्णकाले च द्वौ भागौ भोजनस्य हीयेते अतिशीतकाले पानीयस्य।

एतदेव स्पष्टं भावयति॥

एत्थ उ तइयचउत्था, दोन्नि य अणवट्ठिया भवे भागा।
पंचमछट्ठो पढमो, विइओ विअवट्ठिया भागा ॥ १ ॥

आहारविषयौ तृतीयचतुर्थौ भागावनवस्थितौ तौ ह्यतिशीतकाले भवतोऽत्युष्णकाले च न भवतः। तयाऽयं पानविषयः पंचमो भागो यश्च वायुप्रविचरणार्थं षष्ठो भागो यौ च प्रथमद्वितीयावाहारविषयावेते सर्वेऽपि भागा अवस्थिता न कदाचिदपि भवंतीति भावः। तदेवमुक्तं प्रमाणद्वयम्। पिं०। सूत्र. १ श्रु. ७ अ०।

"आहारार्थं कर्म कुर्यादनिन्द्यं, स्यादाहारः प्राणसंधारणार्थं ॥ प्राणा धार्यास्तत्त्वजिज्ञासनार्थं, तत्त्वं ज्ञेयं येन भूयो न भूयात्" ॥ ॥ १ ॥ आचा० अ० ३ उ० १ ॥

प्रणीताहारभोजनं न युक्तं ब्रह्मचारिण इति ( बम्हचेरसमाहि ) शब्दे ॥

स्तोकाहारफलं ( पडिक्कमण ) शब्दे ॥

आहारस्यांगारधूमादिदोषाः ( अंगारधूमादि ) शब्देषु उक्ता अपि संग्रहेणाह ॥

अह भंते ! सइंगालस्स सधूमस्स संजोयणादोसदुट्ठस्स पाणभोयणस्स के अट्ठे पण्णत्ते ? गोयमा ! जेणं निग्गंथे वा निग्गंथी वा फासुएसणिज्जं असणपाण ४ पडिग्गहेत्ता संमुच्छिए गिद्धे गढिए अज्झोववण्णए आहारं आहारेइ एसणं गोयमा ! सइंगाले पाणभोयणे जेणं निग्गंथे वा निग्गंथी वा फासुएसणिज्जं असण ४ पडिग्गहेत्ता महया अप्पत्तियकोहकिलामं करेमाणे आहारमाहारेइ एस णं गोयमा ! सधूमे पाणभोयणे जेणं निग्गंथे वा जाव पडिग्गहेत्ता गुणुप्पायणहेउं असद्दव्वेणं सद्धिं संजोएत्ता आहारमाहारेइ एस णं गोयमा ! संजोयणादोसदुट्ठे पाणभोयणे एएणं गोयमा ! सइंगालस्स सधूमस्स संजोयणादोसदुट्ठस्स पाणभोयणस्स अट्ठे पण्णत्ते ॥

(सइंगालस्सत्ति) चारित्रेन्धनमङ्गारमिव यः करोति भोजनविषयरागाग्निः सोऽङ्गार एवोच्यते तेन सह यद्वर्त्तते पानकादि तत्साङ्गारं तस्य ( सधूमस्सत्ति ) चारित्रेन्धनधूमहेतुत्वाद्धूमो द्वेषस्तेन सह यत्पानकादि तत्सधूमं तस्य ( संजोयणादोसदुट्ठस्सत्ति ) संयोजना द्रव्यस्य गुणविशेषार्थं द्रव्यान्तरेण योजनं स इव दोषस्तेन दुष्टं यत्तत्तथा तस्य ( जेणंति ) विभक्तिपरिणामाद्यमाहारमाहारयन्तीति संबन्धः ( मुच्छिएत्ति ) मोहवान् दोषानभिज्ञत्वात् ( गिद्धेत्ति ) तद्विशेषाकांक्षावान् ( गढिएत्ति ) तद्गतस्नेहतन्तुभिः संदर्भितः ( अज्झोववण्णेत्ति ) तदेकाग्रतां गतः ( आहारमाहारेत्ति ) भोजनं करोति ( एसणंति ) एष आहारः साङ्गारं पानभोजनम् ( महयाअप्पत्तियंति ) महदप्रीतिकमप्रेम ( कोहकिलामंति ) क्रोधात्क्लमः शरीरायासः क्रोधक्लमोऽतस्तं ( गुणुप्पायणहेउंति ) रसविशेषोत्पादनायेत्यर्थः ॥ भ. ७ श० १ उ०।

उत्तरगुणानधिकृत्याह ॥

सुद्धे सिया जाए न दूसएज्जा।
अमुच्छिए ण य अज्झोववन्नए वा ॥
धितिमं विमुक्के ण य पूयणट्ठी।
न सिलोयगामी य परिव्वएज्जा ॥ २३ ॥
निक्खम्म गेहाउ निरावकंखी।
कायं वि उस्सेज्ज नियाणछिन्ने ॥
णो जीवियं णो मरणावकंखी।
चरेज्ज भिक्खू वलयाविमुक्केत्तिवेमि ॥ २४ ॥

( सुद्धेसिया इत्यादि ) उद्गमोत्पादनैषणाभिः शुद्धे निर्दोषे स्यात् कदाचिद्याते प्राप्ते पिंडे सति साधू रागद्वेषाभ्यां न दूषयेत्। उक्तं च " बायालीसेसणसं, कडंमि गहणंमि जीव नहु छलिओ। इण्हिं जह न छलिज्जसि, भुंजंतो रागदोसेहिं " तत्रापि रागस्य प्राधान्यख्यापनायाह। न मूर्च्छितोऽमूर्च्छितः सकृदपि शोभनाहारलाभे सति गृद्धिमकुर्वन्नाहारयति। तथा नाऽध्युपपन्नस्तमेवाहारं पौनःपुन्येनाभिलषमाणः केवलं संयमयात्रापालनार्थमाहारमाहारयेत् प्रायो विदितवेद्यस्यापि विशिष्टाहारसन्निधावभिलाषातिरेको जायत इत्यतोऽमूर्च्छितोऽनध्युपपन्न इति च प्रतिषेधद्वयमुक्तम्। उक्तं च " भुत्तभोगो पुरा जो वि, गीयत्थो वि य भाविओ। संते साहारमाईसु, सो वि खिप्पं तु खुब्भइ " ॥ सूत्र. श्रु. १ अ० १० ॥

शास्त्रातिक्रान्त आहारः ॥

अह भंते ! सत्यातीयस्स, सत्यपरिणामियस्स, एसियस्य, वेसियस्स, समुदाणियस्स, पाणभोयणस्स, के अट्ठे पम्मत्ते ? गोयमा ! जेणं निग्गंथे वा २ निक्खित्तसत्थमुसले ववगयमालावण्णगविलेवणे ववगयचुयचइयचत्तदेहं जीवविप्पजढं अकयमकारियमसंकप्पियमणाहूयमकियकडमणुद्दिट्ठं नवकोडिपरिसुद्धं दसदोसविप्पमुक्कं उग्गमउप्पायणेसणासु परिसुद्धं वीइंगालं वीइधूमं संजोयणा–दोसविप्पमुक्कं असुरसुरं अचवचवं अदुयमविलंबियं अपरिसाडिं अक्खोवंजणवणाणुलेवणभूयं संजमजाया मायावत्तियं संजमभारवहणट्ठयाए बिलमिव पन्नगभूएणं अप्पाणेणं आहारमाहारेइ एसणं गोयमा ! सत्यातीयस्स, सत्यपरिणामियस्स, जाव–पाणभोयणस्स, अयमट्ठे पण्णत्ते तं चेव सेवं भंते ! भंतेत्ति ॥

( सत्थातीतस्सत्ति ) शस्त्रादग्न्यादेरतीतमुत्तीर्णं शस्त्रातीतम् एवं भूतं च तथाविधप्रयुकादिवदपरिणतमपि स्यादत आह ( सत्थपरिणामियस्सत्ति ) वर्णादीनामन्यथा करणेनाचित्तीकृतस्येत्यर्थः । अनेन प्रासुकत्वमुक्तम् ( एसियस्सत्ति ) एषणीयस्य गवेषणाविशुद्ध्या गवेषितस्य ( वेसियस्सत्ति ) विशेषेण विविधैर्वा प्रकारैरेषितं व्येषितं ग्रहणैषणाग्रासैषणाविशोधितं तस्य अथवा वेषो मुनिनेपथ्यं स हेतुर्लाभे यस्य तद्वैषिकं आकारमात्रदर्शनादवाप्तं नत्वावर्जनया अनेन पुनरुत्पादनादोषापोहमाह । ( समुदाणियस्सत्ति ) ततस्ततो भिक्षारूपस्य किं भूतो निर्ग्रन्थ इत्याह । ( निक्खित्तसत्थमुसलेत्ति ) त्यक्तखड्गादिशस्त्रमुसलः ( ववगयमालावण्णगविलेवणेत्ति ) व्यपगतपुष्पमालाचंदनानुलेपनः स्वरूपविशेषणे चेमे न तु व्यवच्छेदार्थे निर्ग्रन्थानामेवं रूपत्वादेवेति ( ववगयचुयचइयचत्तदेहंति ) व्यपगता स्वयं पृथग्भूता भोज्यवस्तुसंभवा आगंतुका वा कृत्यादयश्च्युता मृताः स्वत एव परतो वा ऽन्यवहार्यवस्त्वात्मकाः पृथिवीकायिकादयः । ( चइयत्ति ) त्याजिता भोज्यद्रव्यात् पृथक्कारिता दायकेन ( चत्तत्ति ) स्वयमेव दायकेन त्यक्ता भक्ष्यद्रव्यात् पृथक् कृता देहाभेदविवक्षया देहिनो यस्मात् स तथा तमाहारम् । वृद्धव्याख्या तु व्यपगत ओघतश्चेतनापर्यायादचेतश्च्युतो जीवनक्रियातो भ्रष्टश्च्यावितस्तत एवाऽऽयुष्कक्षयेण भ्रंशितस्त्यक्तदेहः परित्यक्तजीवसंसर्गजनिताहारप्रभवोपचयस्तत एषां कर्मधारयोऽतस्तं किमुक्तं भवतीत्याह ( जीवविप्पजढंति ) प्रासुकमित्यर्थः ( अकयमकारियमसंकप्पियमणाहूयमकीयकडमणुद्दिट्ठं ) अकृतं साध्वर्थमनिर्वर्तितं दायकेन एवमकारितं दायकेनैव अनेन विशेषणद्वयेनानाधाकर्मिक उपात्तः असंकल्पितं स्वार्थं संस्कुर्वता साध्वर्थतया न संकल्पितं अनेनाप्यनाधाकर्मिक एव गृहीतः स्वार्थमारब्धस्य साध्वर्थं निष्ठां गतस्याऽपि आधाकर्मिकत्वात् । न विद्यते आहूतमाह्वानमामन्त्रणं नित्यं मद्गृहे पोषमात्रमन्नं ग्राह्यमित्येवं रूपं कर्मकराद्याकरणं वा साध्वर्थं स्थानान्तरादन्नाद्यानयनाय यत्र सोऽनाहूतोऽनित्यपिण्डो ऽनभ्याहृतो वेत्यर्थः । स्पर्धया वाऽऽहूतं तन्निषेधादनाहूतो दायकेनास्पर्धया दीयमान इत्यर्थः । अनेन भावतोऽपरिणतानभिधान एषणादोषनिषेध उक्तोऽतस्तमक्रीतकृतं क्रयेण साधुदेयं न कृतमनुद्दिष्टमनौद्देशिकं ( नवकोडीपरिसुद्धंति ) इह कोट्यो विभागास्ताश्चेमा बीजादिकं जीवं न हन्ति न घातयति घ्नन्तं नानुमन्यते । ३ । एवं न पचति । ३ । न क्रीणाति । ३ । इत्येवं रूपाः ( दसदोसविप्पमुक्कंति ) दोषाः शंकितम्रक्षितादयः । ( उग्गमउप्पायणेसणासुपरिसुद्धंति ) उद्गमश्च आधाकर्मादिः षोडशविधः । उत्पादना च धात्रीदूत्यादिका षोडशविधैव उद्गमोत्पादने एतद्विषया या एषणा पिण्डविशुद्धिस्त या सुष्ठु परिशुद्धो यः स उद्गमोत्पादनैषणासु परिशुद्धो ऽतस्तम् अनेन चोक्तानुक्तसंग्रहः कृतः । वीतांगारादीनि क्रियाविशेषणान्यपि भवन्ति । प्रायोऽनेन च ग्रासैषणा विशुद्धिरुक्ता ( असुरसुरंति ) अनुकरणशब्दोऽयम् एवं ( अचवचवमित्यपि ) ( अदुयंति ) अशीघ्रं ( अविलंबियंति ) नातिमन्थरम् ( अपरिसाडिंति ) अनवयवोज्झितं ( अक्खोवंजणवणाणुलेवणभूयंति ) अक्षोपांजनं च शकटधूर्म्रक्षणं व्रणानुलेपनं च क्षतस्यौषधेन विलेपनं अक्षोपांजनव्रणानुलेपने ते इव विवक्षितार्थसिद्धिरसादिनिरभिष्वङ्गता साधर्म्याद्यः सोऽक्षोपांजनव्रणानुलेपनभूतोऽतस्तं क्रियाविशेषणं वा ॥ ५ ॥ ( संजमजायामायावित्तियंत्ति ) संयमयात्रा संयमानुपालनं सैव मात्रा आलम्बनसमूहांशः संयमयात्रामात्रा तदर्थं वृत्तिः प्रवृत्तिर्यत्राहारे स संयमयात्रामात्रावृत्तिको ऽतस्तं संयमयात्रामात्रावृत्तिकं वा यथा भवति संयमयात्रामात्रा वा प्रत्ययो यत्र स तथाऽतस्तं संयमयात्रामात्राप्रत्ययं वा यथा भवति । एतदेव वाक्यान्तरेणाह । ( संजमभारवहणट्ठयाएत्ति ) संयम एव भारस्तस्य वहनं पालनं स एवार्थः संयमभारवहनार्थस्तद्भावस्तत्ता तस्यै ( बिलमिव पण्णगभूएणं अप्पाणेणंति ) बिले इव रन्ध्रे इव पन्नगभूतेन सर्पकल्पेनात्मना करणभूतेन आहारमुक्तविशेषणं आहारयति शरीरकोष्ठके प्रक्षिपति । यथा किल बिले सर्प आत्मानं प्रवेशयति पार्श्वानसंस्पृशन्नेवं साधुर्वदनकंदरपार्श्वानसंस्पृशन्नाहारेण तदसंचारणतो जठरबिले आहारं प्रवेशयतीति । ( एसणंति ) एषोऽनंतरोक्तविशेषण आहारः शस्त्रातीतादिविशेषणस्य पानभोजनस्यार्थो ऽभिधेयः प्रज्ञप्तः । भ०–७ श. १ उ ० ॥ अनु ० । वि० ।

आहारपरिष्ठापना ( परिट्ठावणा ) शब्दे ॥

भक्तपरिज्ञा तु समाप्यर्थमाहारो दीयते । (इति भत्तपरिण्णा) शब्दे । युगलिनः कन्दाद्याहारा आसन् ऋषभस्वामिनाऽऽहारिणः कृताः ।

सूत्रं । जे भिक्खू पिउमंदपल्लासयं वा पडोलपल्लासयं वा बिल्लपल्लासयं वा सीओदगवियडेण वा उसिणोदगवियट्टेण वा संफाणिय संफाणिय आहारेइ आहारंतं वा साइज्जइ ॥ १४ ॥

पिचुमंदो निंबो पल्लासं पत्तं संफाणियंति धोविउं अहवा संफाडिउं मेलितुमित्यर्थः ।

गा०-आहारमणाहारस्स, मग्गणा णिमसा कता होति । निंबपडोलादीहिं, दियराओ चउक्कभयणाओ । ३८ ।

को आहारो को वा अणाहारो एतेहिं निंबपडोलादएहिं मग्गणा कता भवति आहार आणाहारे दियरे वा राति चउभंगो दियागहियं दियाभुत्तं एवं च भंगा ॥

गा०-जा हट्ठसमाहारो, चउव्विहो परियासियं तं तु ।

णिवपमोल्लादीयं सति लाजे जं व परिवसति ॥ ३९ ॥
हट्ठो णिरोगो णिव्वाधितो समत्तो तस्स जो आहारो असणा-इचउव्विहो तं परियासिउं जो तुंजति चउभंगेण तस्स पच्छित्तं । इमं ।

गा०–आहारे चउभंगे, चउगुरुगेतरे व चउलहुगा ॥
सुत्तं पुण तद्दिवसं जो धुवति अचेतणा पलासो ॥ ४० ॥

आहारे परियासिते चउसु चउगुरुगं इतरे अणाहारिमेसु चउसु विभंगेसु चउलहुं इमे पुण सुत्तं जो तद्देवसियं अचित्तं धुविओ भुंजाति तस्स भवति अणाहारियं परियासियं पडुच्च भण्णति ॥

गा०-भयणपदाण चउण्हं, अण्णतराएण जो तु आहारे।
णिवपमोल्लादीयं, सो पावति आणमादीणि ॥ ४१ ॥

चउरो भंगा भयणापदात्तेहिं जो आहारोति तस्स आणा-दिदोसा संफाणंति सुत्तपदं तेसिं भावक्खा ॥

गा०-सविणव उसिणेणव, वियडेणं धोवणानुफंसणा ।
अहवा जायं धोवति, संफाहो एगहाणेगाहं ॥ ४२ ॥

एगाहाणेगाहं एगाणेगदिवसपिंफितााणि धोवति इमा विराहणा।

गा०-छद्दवतविराधणता, पाणादीया समुच्छंति ।
तद्दिवसधोवणट्ठा, तं णिस्सिमतघाती भुंजंतो ॥ ४३ ॥

छट्ठं रातीभोयणवयं तं विराहिज्जति मच्छियातिपाणा तत्थ-तिव्विति ते गिहिकोइलिया तिणंति किज्जंतेसु वा पिंफिएसु कुंथुमाती संमुच्छंति । आद्य शब्दः तर्कणादिदोषादिप्रति-पादनः यथा गवाद्यां ब्राह्मणान् परिभोजयेत् एते परिवासिते दोसा इमे तद्देवसिते वि अिंवपत्ताति अणट्ठा घेत्तुं धोविउं भुंजंतस्स तन्निस्सियपाणिघातो भवति धावंतस्स य प्लाा-वणदोसो अतो तद्देवसियंपि ण कप्पति भुंजिउं कारणा कप्पति ॥

वितियपदं गेलण्णे, वेज्जुवएसे य दुल्लभंदव्वे ।
तद्दिवसंजत्तणाए, वीयं गीयत्थसंविग्गे ॥ ४४ ॥

गिलाणकारणे वेज्जुवदेसेण संफाणे दुल्लभं दव्वं वा अणेग-दिवसे संफाणेतितद्देवसियं पुण परसंफाणियं गेण्हंति असति अप्पणा वि संफाणेति तद्देवसियंमि अ लभंते वितिय-मिति आगाढे पओयणे गीतत्थे संविग्गे सविगरणं पि करे-ज्ज तं पुण पित्तादिरोगाणं पसमणट्ठा इमं गेण्हे ॥

पउमप्पलमाउलुंगे, एरंडे चेव णिंबुपत्ते य ।
वेज्जुवदेसे गहणं, गीतत्थे विकरणं कुज्जा ॥ ४५ ॥

पित्तुदए ग पउमप्पलासिंधे वाए निंवाए मातुलुंगं वा एरंडो संभेणि च पत्ता तद्दिवस जयणापत्ति । अस्य व्याख्या । वेज्जु-वएसे गहणंति । वितियं संविग्गेत्ति । अस्य व्याख्या । गीयत्थे विकरणं कुज्जाएतदेवार्थं स्फुटतरं करोति ॥

संफाणितस्स गहणं, असती घेत्तूण अप्पणा धोवे ।
तद्दिवसिगिलंजासति, णेगा विणिसा नु संफाणो । ४५ ।

तद्देवसियस्स असति अणेगदिवसे वि करेति ॥ नि. चू. १ उ.। (सचित्तवृक्षे सचित्तायनाहारः कार्य इति सचित्तरुक्खशब्दे ॥)
( आहारग्रहणविधिः–गोयरचरिया,शब्दे ॥ )

संसार चक्कवाले, सव्वे ते पुग्गलामए बहुसो ।
आहारिया य परिणा–मियाय न यहं गओ तत्तिं ॥५२॥

आहारनिमित्तेणं, अह यं सव्वेसु नरयलोएसु ।
उववन्नोमिय बहुसो, सव्वासु य मिच्छजाईसु ५३ ॥
आहारनिमित्तेणं, मिच्छा गच्छंति दारुणे नरए ।
सच्चित्तो आहारो,न खमइ मणसा वि पच्छेउं ॥ ५४ ॥
महा० प० ॥

आह्रियते इत्याहारः । ओदनादौ, ॥ सूत्र० ॥ १ श्रु. ७ अ. ।
चउविहे आहारे प० तं० असणे पाणे खाइमे साइमे ॥
स्था० ४ ठा० ॥ अट्ठविहे आहारे पण्णत्ते तं० ॥
मणुण्णे असणे पाणे खाइमे साइमे अमणुण्णे असणे पाणे खाइमे साइमे । स्था० ८ ठा० ॥

असणं पाणगं चेव, खाइमं साइमं तहा ।
एसो आहारविही, चउविहो होइ नायव्वो ॥ ३६ ॥

अशनं मण्डकौदनादि पानं चैव द्राक्षापानादि खादिमं फलादि स्वादिमं गुडादि एष आहारविधिश्चतुर्विधो भवति ज्ञातव्य इति गाथार्थः । आव० । ६ अ० ।

सांप्रतं समयपरिभाषया शब्दार्थनिरूपणायाह ॥

आसुं खुहं समेइं, असणं पाणाणुवग्गहे पाणं ।
खे माइ खाइमंति, साएइ गुणे तओ साइ ॥ ३७ ॥
सव्वो वि अ आहारो, असणं सव्वो वि वुच्चई पाणं ।
सव्वो वि खाइमंति अ, सव्वो वि अ साइमं होई ॥३८॥
जइ असणं चि अ सव्वं, पाणगमविवज्जणंमि सेसाणं ।
हवइ असेसविवेगो,तेण विभत्ताणि चउरो वि ।३९ ।
असणं पाणगं चेव, खाइमं साइमं तहा ।
एवं परूविअं सीस–हहि ओ जे सुही होइ ॥ ४० ॥

( आसुत्ति ) आशु शीघ्रं क्षुधां बुभुक्षां समयतीति अशनम् । तथा प्राणानामिन्द्रियादिलक्षणानामुपग्रहे उपकारे यद्वर्तते इति गम्यते तत्पानमिति । खमित्याकाशं तच्च मुखविवरमेव तस्मिन्मातीति खादिमम् । स्वादयति गुणान् रसादीन् संयमगुणान्वा यतस्ततः स्वादिमं । हेतुत्वेन तदेवा-स्वादयतीत्यर्थः । विचित्रनिरुक्तिपाठाद्भ्रमाति रौति तद्भ्रमर-इत्यादिप्रयोगदर्शनात् साधुरेवाऽयमन्वर्थः इति गाथार्थः ॥ ३७ ॥ उक्तः पदार्थः पदविग्रहस्तु समासभाक् पदविषय इति नोक्तः अधुना चालनामाह ॥ ( सव्वो वि यत्ति ) यदनं-तरोदितपदार्थापेक्षया अशनादीनीति । यतः सर्वोऽपि चाहारश्चतुर्विधोऽपि तथा । अशनं सर्व्वोऽपि चोच्यते । पानकं सर्वोऽपि च खादिमं सर्व एव च स्वादिमं भवति अन्वर्थाविशेषात् । तथा हि यथैवाशनमोदनमण्डकादि क्षुधं शमयति एवं पानमपि तत्तथैव द्राक्षाक्षीरपानादि । खादिममपि फलादि, स्वादिममपि गुडादि । यथा च पानं प्रा-णानामुपग्रहे वर्तते एवमशनादीन्यपि तथा चत्वार्यपि खे मान्ति चत्वार्यपि वा स्वादयन्ति अस्वाद्यंते चेति न कश्चिद्विशेषस्त-स्मादयुक्त एवं भेद इति गाथार्थः ॥३८॥ इयं चालना । प्रत्यव-स्थानं तु यद्यपि एतदेव तथापि तुल्यत्वार्यप्रामावपि रुढितो नीति-प्रयोजनं च संयमोपकारकमस्येवं कल्पनया अन्यथा दोषस्त या चाह ( जइ असणत्ति ) यद्यशनमेव सर्वमाहा-रजातं गृह्यते ततः शेषापरिभोगेऽपि पानकाद्यवर्जने उदका-परित्यागे शेषाणामाहारभेदानां निवृत्तिर्न कृता भवतीति

तथा ममापि त्रैलोक्य-जित्वरस्य महौजसः ॥
अजेयं किमिवास्तीह तद्गच्छामि जयाम्यमुम् ॥ ७ ॥
इत्यादि चिन्तयन् प्रभु-मवेक्ष्य सोपानसंस्थितो दध्यौ ।
किं ब्रह्मा किं विष्णुः सदाशिवः शङ्करः किं वा ॥ ८ ॥
चन्द्रः किं स न यत्कलङ्ककलितः सूर्योऽपि नो तीव्ररुक्
मेरुः किं न स यन्नितान्तकठिनो विष्णुर्न यत् सोऽशितः ॥
ब्रह्मा किं न जरातुरः स च जराभीरुर्न यस्सोऽतनु-
र्ज्ञातं दोषविवर्जिताखिलगुणाकीर्णोन्तिमस्तीर्थकृत् ॥ ९ ॥
हेमसिंहासनासीनं सुरराजनिषेवितम् ॥
दृष्ट्वा वीरं जगत्पूज्यं चिन्तयामास चेतसि ॥ १० ॥
कथं मया महत्त्वं हा, रक्षणीयं पुरार्जितम् ॥
प्रासादं कीलिकाहेतो-र्भङ्क्तुं को नाम वाञ्छति ॥ ४ ॥
एकेन चाजितेनापि मानहानिस्तु का मम ॥
जगज्जेत्रस्य किं नाम करिष्यामि च सांप्रतम् ॥ ५ ॥
अविचारितकारित्व महो मे मन्दबुद्धियः ॥
जगदीशावतारं य-ज्जेतुमेनं समागतः ॥ ६ ॥
अस्याग्रेऽहं कथं वक्ष्ये पार्श्वे यास्यामि वा कथम् ॥
संकटे पतितोऽस्मीति शिवा रक्षतु मे यशः ॥ ७ ॥
कथञ्चिदपि भाग्येन चेद्भवेदत्र मे जयः ॥
तदा पण्डितमूर्द्धन्यो भवामि भुवनत्रये ॥ ८ ॥
इत्यादि चिन्तयन्नेष सुधा मधुरया गिरा ॥
आभाषितो जिनेन्द्रेण नामगोत्रोक्तिपूर्वकम् ॥ ९ ॥
हे गोतमेन्द्रभूते त्वं सुखेनागतवानसि ॥
इत्युक्ते ऽचिन्तयद्वेत्ति नामापि किमसौ मम ॥ १० ॥
जगत्त्रितयविख्यातं को वा नाम न वेत्ति माम् ॥
जनस्याबालगोपालं प्रच्छन्नः किं दिवाकरः ॥ ११ ॥
प्रकाशयति गुप्तं चेत्संदेहं मे मनःस्थितम् ॥
तदा जानामि सर्वज्ञ-मन्यथा तु न किंचन ॥ १२ ॥
चिन्तयन्तमिति प्रोचे प्रभुः को जीवसंशयः ॥
विभावयसि नो वेद पदार्थं शृणु तान्यय ॥ १३ ॥
समुद्रो मथ्यमानः किं गङ्गापूरोऽथवा किमु ॥
आद्यब्रह्मध्वनिः किं वा वीर वेदध्वनिर्बभौ ॥ १४ ॥

वेद पदानि च " विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्तीति " त्वं तावदेतेषां पदानामर्थमेवं करोषि यत् विज्ञानघनो गमनागमनादिचेष्टावान् आत्मा एतेभ्यो भूतेभ्यः पृथिव्यप्तेजो वाय्वाकाशेभ्यः समुत्थाय प्रकटीभूय मद्यांगेभ्यो मदशक्तिरिव ततस्तानि भूतान्येव अनुविनश्यति तत्रैव विलयं याति जले बुद्बुद इव ततो भूतातिरिक्तस्य आत्मनो-ऽभावात् न प्रेत्यसंज्ञाऽस्तीति मत्वा पुनर्जन्म नास्तीति । परमयुक्तोऽयमर्थः शृणु तावदेतेषामर्थम् । विज्ञानघन इति कोऽर्थः विज्ञानघनो ज्ञानदर्शनोपयोगात्मकं विज्ञानं तन्मयत्वादात्माऽपि विज्ञानघनः प्रति देशं प्रदेशमनन्तज्ञानपर्यायात्मकत्वात् स च विज्ञानघन उपयोगात्मक आत्मा कथंचिद्भूतेभ्यस्तद्विकारेभ्यो वा घटादिभ्यः समुत्तिष्ठते उत्पद्यत इत्यर्थः । घटादिज्ञानपरिणतो हि जीवो घटादिभ्य एव हेतुभूतेभ्यः भवति घटादिज्ञानपरिणामस्य घटादिवस्तुसापेक्षत्वात् । एवं च एतेभ्यो भूतेभ्यो घटादिवस्तुभ्यस्तत्तदुपयोगरूपतया जीवः समुत्थाय समुत्पद्य तान्येव अनुविनश्यति कोऽर्थः तस्मिन् घटादौ वस्तुनि नष्टे व्यवहिते वा जीवो ऽपि तदुपयोगरूपतया नश्यति अन्योपयोगरूपतया उत्पद्यते सामान्यरूपतया अवतिष्ठते ततश्च न प्रेत्यसंज्ञाऽस्ति कोऽर्थः न प्राक्तनी घटाद्युपयोगरूपा संज्ञा अवतिष्ठते वर्तमानोपयोगेन तस्या नाशितत्वादिति । अपरं च स वै अयमात्मा ज्ञानमय इत्यादि, तथा दददकोऽर्थः दमो दानं दया इति दकारत्रयं यो वेत्ति स जीवः किंच विद्यमानभोक्तृकमिदं शरीरं भोग्यत्वात् ओदनादिवत् इत्याद्यनुमानेनापि । तथा " क्षीरे घृतं तिले तैलं काष्ठे ऽग्निः सौरभं सुमे । चन्द्रकान्ते सुधा यद्व-त्तथात्माप्यङ्गतः पृथक् " ॥ एवं च प्रभुवचनैर्भिन्नसंदेहः श्रीइन्द्रभूतिः पंचशतपरिवारैः प्रव्रजितः । तत्क्षणाच्च " उप्पन्नेइ वा १ विगमेइ वा २ धुवेइ वा ३ इति " प्रभुवदनात्त्रिपदीं प्राप्य द्वादशाङ्गीं रचितवान् । कल्प० ॥

इन्द्रभूतिवर्णको यथा—

तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इंदभूती णामं अणगारे गोयम गोत्तेणं सत्तुस्सेहे समचउरंससंठाणसंठिए वज्जरिसहनारायसंघयणे कणगपुलगणिघसपम्हगोरे उग्गतवे दित्ततवे तत्ततवे महातवे उराले घोरे घोरगुणे घोरतवस्सि घोरबंभचेरवासी उच्छूढसरीरे । संखित्तविउलतेउलेस्से चउद्दसपुव्वी चउणाणोवगए सव्वक्खरसण्णिवाती समणस्स भगवओ महावीरस्स अदूरसामंते उड्ढंजाणू अहोसिरे ज्झाणकोट्ठोवगए संजमेणं तवसा अप्पाणं भावेमाणे विहरइ ॥

( तेणमित्यादि ) तेन कालेन तेन समयेन श्रमणस्य भगवतो महावीरस्य ( जेट्ठेत्ति ) प्रथमः ( अन्तेवासित्ति ) शिष्यः अनेन पदद्वयेन तस्य सकलसंघनायकत्वमाह ( इंदभूएत्ति ) इन्द्रभूतिरिति मातृपितृकृतं नामधेयं ( नामंति ) विभक्तिविपरिणामात् नाम्नेत्यर्थः अन्तेवासी किल विवक्षया श्रावकोऽपि स्यादित्यत आह । ( अणगारत्ति ) नास्त्यगारं विद्यत इत्यनगारः अयञ्चावगीतगोत्रोऽपि स्यादित्यत आह ( गोतम गोत्तेणंति ) गौतमसगोत्र इत्यर्थः । अयञ्च तत्कालोचितदेहमानापेक्षया न्यूनाधिकदेहोऽपि स्यादित्यत आह ( सत्तुस्सेहेत्ति ) सप्तहस्तोच्छ्रयः अयंच लक्षणहीनोऽपि स्यादित्यत आह ( समचउरंससंठाणसंठिएत्ति ) समं नाभेरुपरि अधश्च सकलपुरुषलक्षणोपेतावयवतया तुल्यं तच्च तच्चतुरस्रं च प्रधानं समचतुरस्रमथवा समाः शरीरलक्षणोक्तप्रमाणा विसंवादिन्यश्चतस्रोऽश्रयो यस्य तत्समचतुरस्रम् । अश्रयस्त्विह चतुर्दिग्भागोपलक्षिताः शरीरावयवा इति । अन्ये त्वाहुः—समा अन्यूनाधिकाश्चतस्रोऽप्यश्रयो यत्र तत् समचतुरस्रम् अश्रयश्च पर्यंकासनोपविष्टस्य जानुनोरन्तरम् आसनस्य ललाटोपरिभागस्य चान्तरं दक्षिणस्कन्धस्य वामजानुनश्चान्तरं वामस्कन्धस्य दक्षिणजानुनश्चान्तरमिति अन्ये त्वाहुर्विस्तारोत्सेधयोः समत्वात् समं चतुरश्रं तच्च तत्संस्थानं चाकारः समचतुरश्रसंस्थानं तेन संस्थितो व्यवस्थितो यः स तथा । अयं च हीनसंहननोऽपि स्यादित्यत आह ( वज्जरिसहणारायसंघयणेत्ति ) इह संहननमस्थिसंचयविशेषः वज्रादीनां लक्षणमिदम्—
" रिसहो य होइ पट्टो, वज्जं पुण कीलियं वियाणाहि । उभओमक्कडबंधो णारायं तं, वियाणाहि त्ति " तत्र वज्रं च तत्कीलिकाकीलितकाष्ठसम्पुटोपमसामर्थ्य युक्तत्वात् । ऋषभश्च लोहादिमयपट्टवद्धकाष्ठसम्पुटोपमसामर्थ्यान्वितत्वात् । वज्रर्षभः स चासौ नाराचं च उभयतो मर्कटबन्धनिबद्धकाष्ठसम्पुटोपम

सामर्थ्योपेतत्वात् वज्रर्षभनाराचं तत्संहननमस्थिसंचयविशेषोऽनुत्तमसामर्थ्यायोगाद्यस्यासौ वज्रर्षभनाराचसंहननः । अन्ये तु कीलिकादिमत्त्वमस्थ्नामेव वर्णयन्ति अयञ्च निन्द्यवर्णोऽपि स्यादित्यत आह (कणयपुलयनिघसपम्हगोरे) कनकस्य सुवर्णस्य (पुलगत्ति) यः पुलको लवस्तस्य यो निकषः कषपट्टके रेखालक्षणः तथा ( पम्हत्ति ) पद्मपक्ष्माणि केसराणि तद्वद्गौरो यःस तथा। वृद्धव्याख्या तु–कनकस्य न लोहादेर्यःपुलकः सारो वर्णातिशयस्तत्प्रधानो यो निकषो रेखा तस्य यत्पक्ष्म बहुलत्वं तद्गौरो यः स तथा अथवा कनकस्य यःपुलकोद्रुतत्वे सति बिन्दुस्तस्य निकषो वर्णतः सदृशो यः स तथा ( पम्हत्ति ) पद्मं तस्य चेह प्रस्तावात्केसराणि गृह्यन्ते ततः पद्मवद्गौरो यः स तथा। ततः पदद्वयस्य कर्मधारयः अयञ्च विशिष्टचरणरहितोऽपि स्यादित्यत आह ( उग्गतवेत्ति ) उग्रमप्रधृष्यं तपोऽनशनादि यस्य स उग्रतपाः यदन्येन प्राकृतपुंसा न शक्यते चिन्तयितुमपि तद्विधेन तपसा युक्त इत्यर्थः ( दित्ततवेत्ति ) दीप्तं जाज्वल्यमानदहन इव कर्मवनगहनदहनसमर्थतया ज्वलितं तपो धर्मध्यानादि यस्य स तथा (तत्ततवेत्ति) तप्तं तपो येनासौ तप्ततपाः एवं हि तेन तत्तपस्तप्तं येन कर्माणि सन्ताप्यन्ते न तपसा स्वात्माऽपि तपोरूपः सन्तापितो यतोऽन्यस्यास्पृश्यमिव जातमिति ( महातवेत्ति ) आसंशादोषरहितत्वात् प्रशस्ततपाः ( उरालेत्ति ) भीम उग्रादिविशेषणविशिष्टतपःकरणात्पार्श्वस्था नामल्पसत्त्वानां भयानक इत्यर्थः। अन्ये त्वाहुः ॥ ( उरालेत्ति ) उदारः प्रधानः ( घोरेति ) घोरो निर्घृणः परिषहेन्द्रियादिरिपुगणविनाशमाश्रित्य निर्दय इत्यर्थः ॥ अन्ये त्वात्मनिरपेक्षं घोरमाहुः ( घोरगुणेत्ति ) घोरा अन्यैर्दुरनुचरा गुणा मूलगुणादयो यस्य स तथा ( घोरतवस्सित्ति )घोरैस्तपोभिः स्तपस्वीत्यर्थः (घोरबंभचेरवासित्ति) घोरं दारुणमल्पसत्त्वैर्दुरनुचरत्वाद्यद्ब्रह्मचर्यं तत्र वस्तुं शीलं यस्य स तथा ( उच्छूढसरीरेत्ति ) उच्छूढं उज्झितमिवोज्झितं शरीरं येन तत्संस्कारत्यागात्स तथा ( संखित्तविउलतेयलेसेत्ति ) संक्षिप्त शरीरान्तर्लीनत्वेन ह्रस्वतां गता विपुला विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात्तेजोलेश्या विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा। मूलटीकाकृता तु ( उच्छूढसरीरसंखित्तविउलतेयलेसेत्ति ) कर्मधारयं कृत्वा व्याख्यातमिति ( चउद्दसपुव्वित्ति ) चतुर्दश पूर्वाणि विद्यन्ते यस्य तेनैव तेषां रचितत्वादसौ चतुर्दशपूर्वी अनेन तस्य श्रुतकेवलितामाह स चावधिज्ञानादिविकलोऽपि स्यादत आह (चउनाणोवगएत्ति) केवलज्ञानवर्जज्ञानचतुष्कसमन्वित इत्यर्थः उक्तविशेषणद्वययुक्तोऽपि कश्चिन्न समयश्रुतविषयव्यापिज्ञानो भवति चतुर्दशपूर्वविदां षट्स्थानकपतितत्वेन श्रवणादित्यत आह– ( सव्वक्खरसन्निवाइत्ति ) सर्वे च ते अक्षरसन्निपाताश्च तत्संयोगाः सर्वेषां चाक्षराणां सन्निपाताः सर्वाक्षरसन्निपातास्ते यस्य ज्ञेयतया सन्ति स सर्वाक्षरसन्निपाती । श्राव्याणि वा श्रवणसुखकारीणि अक्षराणि साङ्गत्येन नितरां वदितुं शीलमस्येति श्राव्याक्षरसन्निवादी स च एवं गुणविशिष्टो भगवान् विनयराशिरिव साक्षादिति कृत्वा शिष्याचारत्वाच्च ( समणस्स भगवओ महावीरस्स अदूरसामंते विहरतीति ) योगस्तत्र दूरं च विप्रकृष्टं सामन्तञ्च सन्निकृष्टं तन्निषेधाददूरसामन्तं तत्र नातिदूरे नातिनिकट इत्यर्थः । किंविधः संस्तत्र विहरतीत्यत आह ( उड्ढंजाणुत्ति ) ऊर्ध्वे जानुनी यस्यासावूर्ध्वजानुः। शुद्धपृथिव्यासनवर्जनादौपग्रहिकनिषद्याया अभावाच्चोत्कुटुकासन इत्यर्थः ( अहोसिरेत्ति ) अधोमुखो नोर्ध्वं तिर्यग्वा विक्षिप्तदृष्टिः किंतु नियतभूभागनियमितदृष्टिरिति भावः ॥ ( झाणकोट्ठोवगएत्ति ) ध्यानं धर्म्यं शुक्लं वा तदेव कोष्ठः कुसूलो ध्यानकोष्ठस्तमुपगतस्तत्र प्रविष्टो ध्यानकोष्ठोपगतो यथा हि कोष्ठके धान्यं प्रक्षिप्तमविप्रसृतं भवत्येवं स भगवान् ध्यानतो विप्रकीर्णेन्द्रियान्तःकरणवृत्तिरिति ( संजमेणंति ) संचरेण ( तवसात्ति ) अनशनादिना चशब्दः समुच्चयार्थो लुप्तोऽत्र द्रष्टव्यः संयमतपोग्रहणं चानयोः प्रधानमोक्षाङ्गत्वख्यापनार्थं प्रधानत्वं च संयमस्य नवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्मनिर्जरणहेतुत्वेन भवति चाभिनवकर्मानुपादानात् पुराणकर्मक्षपणाच्च सकलकर्मक्षयलक्षणो मोक्ष इति ॥ ( अप्पाणं भावेमाणे विहरइ इति ) आत्मानं वासयंस्तिष्ठतीत्यर्थः। भ० १ श० १ उ०। चंद्र० ॥ पद्मग्रहणेन पद्मकेसराण्युच्यन्ते अवयवे समुदायोपचारात् यथा देवदत्तस्य हस्ताग्ररूपोऽवयवोऽपि देवदत्तः तथा च देवदत्तस्य हस्ताग्रं स्पृष्ट्वा लोको वदति देवदत्तो मया स्पृष्ट इति.। सू० प्र० पा० चन्द्र० ( गणधर शब्देऽस्य मातापितृपुरादीनि )

इंदभेसज्ज–इन्द्रभेषज– न० इन्द्रेण प्रकाशितं भेसजम् । शुण्ठ्याम् । शब्दरत्न० । वाच० ।

इंदमह–इन्द्रमह– पु० इन्द्रः शक्रस्तस्य महः प्रतिनियतदिवसभावी उत्सव इन्द्रमहः। प्रतिनियतदिवसभाविनि इन्द्रसन्तोषार्थे महोत्सवरूपे महामहभेदे,। जी० ३ प्र० । जं० ।ज्ञा० आचा० । रा० । "इंदमहेइवा" । भ० श०९ उ०३३। विपा० । इंदमहो आसोयपुण्णिमाए भवतीति । आ० चू० अ० ४ ॥ आव० । स्था० । प्रव० । नि० चू० । " इंदाइमहापायं पइनियया ऊसवा होंति" ॥ उत्सवाः प्रायः प्रतिनियता वर्षमध्ये प्रतिनियतभाविन इन्द्रादिमहा इति । आ० म० प्र० । अयंच भरतकालादेव प्रवृत्त इति। आ० म० प्र० ( प्रवृत्तिकारणमिदज्झया शब्दे )।

इंदमहकामुग–इन्द्रमहकामुक-पु० इन्द्रमहे वर्षादिकाले कामुकः कामयिता। कुक्कुरे, वर्षादावेव तेषां व्यवायधर्म्मो लोकप्रसिद्धः। वाच० ॥

इंदमुद्धाभिसित्त–इन्द्रमूर्धाभिषिक्त–पु० एकैकपक्षस्य पञ्चदशदिवसेषु स्वनामख्याते सप्तमे दिवसे, "इंदमुद्धाभिसित्तेय" चं० १० पाहु० । ज्यो० । जं० ॥

इंदय–इन्द्रक–पु. इन्द्रशब्दार्थे, स्था. ६ ठा० ।

इंदयणिरय–इंद्रकनिरय–पु० निरयेन्द्रकमहानिरये,स्था.६ठा०।

इंदराय–इन्द्रराज–पुं. इन्द्रे,। "घणसमए इंदरायस्स" ति० ॥

इंदलट्ठि–इन्द्रयष्टि–स्त्री० इन्द्रकेतौ, निव्वत्तमहेव्व इंदलट्ठी विमुक्कसंधिबंधणा ॥ ज्ञा० १ अ० ॥

इंदवज्जा–इन्द्रवज्रा–स्त्री० स्यादिन्द्रवज्रा यदि तौ जगौ गः उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे. वाच० । वृत्तर० ॥

इंदवंसा–इन्द्रवंशा–स्त्री० स्यादिन्द्रवंशा ततजैरसंयुतैः वृत्तर० उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे, वाच. ॥

इंदवसु–इन्द्रवसु–स्त्री० पांचालदेशस्थकांपिल्यनगरनिवासिब्रह्मदत्तस्य भार्यायाम् । उत्त० १३ अ० ॥

इंदवागरण–इन्द्रव्याकरण–न० शब्दशास्त्रभेदे, कल्प० ।

तच्च भगवत ऋषभदेवस्य समये संजातम् ॥

अह तं अम्मा पियरो, जाणित्ता अहियअट्ठवासं तु ।
कयकोउयलंकारं, लेहायरियस्स उवणेंति ॥

अथ भीषणानन्तरं कियत्कालातिक्रमे भगवन्तमधिकाष्टवर्षं मातापितरौ ज्ञात्वा कृतानि कौतुकानि रक्षादीनि अलङ्काराश्च केयूरादयो यस्य स तथा तं प्रवरहस्तिस्कन्धगतं तु परितो-मुक्ताजालमाल्यदाम्ना छत्रेण ध्रियमाणेन चामराभ्यां वीज्यमानं मित्रज्ञातिपरिजनसमेतं लेखाचार्याय उपाध्यायाय उपनयतः। पाठान्तरं वा " उवणिंसु " उपनीतवन्तौ उपाध्यायस्य महासिंहासनं रचितं अत्रान्तरे देवराजस्य खल्वासनकम्पो बभूव । अथावधिना च प्रयोजनविधिं विज्ञाय अहो खल्वपत्यस्नेहविलसितं भुवनत्रयगुरुं प्रति मातापित्रोर्येन भगवन्तमपि लेखाचार्यायापनेतुमभ्युद्यताविति संप्रधार्यागत्य च उपाध्यायपरिकल्पिते वृहदासने भगवन्तं निवेश्य शब्दलक्षणं पृष्टवान् । कल्प० ॥

अमुमेवार्थं प्रतिपादयति ।

सक्को य तस्समक्खं, भयवंतं आसणे निवेसित्ता ।
सद्दस्स लक्खणं पुच्छे, वागरणं अवयवा इंदं ॥

शक्रो देवराजस्तत्समक्षं लेखाचार्यसमक्षं भगवन्तं तीर्थकरमासने निवेश्य शब्दलक्षणं पृच्छति भगवता च व्याकरणमभ्यधायि । " व्याक्रियन्ते लौकिकाः सामयिकाश्च शब्दा अनेनेति व्याकरणं " शब्दशास्त्रं तदवयवाः केचन उपाध्यायेन गृहीतास्ते च संदर्भितास्ततः ऐन्द्रं व्याकरणं संजातम् । आ० म० द्वि० । आ० चू० ॥

इंदसत्तु–इन्द्रशत्रु–पुं० इन्द्रः शत्रुः शातयिता यस्य । वृत्रासुरे, वाच० ॥

इंदसम्म ( न् ) इन्द्रशर्म्मन्–पुं० आस्थिकग्रामस्थस्य शूलपाणियक्षस्यार्चके ब्राह्मणे, " इन्द्रशर्मा भृतिन्दत्वा ग्रामैस्तस्यार्चकः कृतः " इति ॥ आ० क० । आ० चू० । " तत्थ इंदसम्मो नाम पडियारगो कओ " ॥ आ० म० द्वि० । मोराकसन्निवेशस्थे स्वनामख्याते गृहपतौ च (तत्कथा महावीरस्य मोराकसन्निवेशं गतस्य विहारसमये–महावीरशब्दे वक्ष्यते )

इंदसलह–इन्द्रशलभ–पुं० इन्द्रजातः वर्षाकालजातशलभः । इन्द्रगोपे, वाच० ॥

इंदसिरि–इन्द्रश्री–स्त्री० पंचालदेशस्थकाम्पिल्यनगरनिवासिनो ब्रह्म ( राज ) दत्तस्य भार्यायाम्, उत्त० १३ अ० ।

ऐन्द्रश्री–स्त्री० इन्द्रो जीवस्तस्येयमैन्द्री सा चासौ श्रीश्चैन्द्रश्रीः। आत्मगुणलक्ष्म्याम्. "ऐन्द्रश्रीसुखमग्नेन, लीलालग्नमिवाखिलम सच्चिदानन्दमग्नेन, पूर्णं जगदवेक्ष्यते ।१। " अष्ट० १ प्र० ।

इंदसेढि–ऐन्द्रश्रेणि–स्त्री० इन्द्राणामियमैन्द्री सा चासौ श्रेणिश्चेति ऐन्द्रश्रेणी । इन्द्रपंक्तौ, " ऐन्द्रश्रेणिनता प्रतापभवनं भव्याङ्गिनेत्रामृतं सिद्धान्तोपनिषद्विचारचतुरैः प्रीत्या प्रमाणी कृता । मूर्त्तिः स्फूर्त्तिमती सदा विजयते जैनेश्वरी विस्फुरन्मोहोन्मादघनप्रमादमदिरामत्तैरनालोकिता " ॥ १ ॥ प्रति० ।

इंदसेणा–इन्द्रसेना–स्त्री० ६ त० । इन्द्रस्य कटके, " गंधव्वनट्ट हयगय–रहभडअणियाणसव्वइंदाणं । वेमाणियाणि वसहा, महिसा य अहोनिवासीणं " ॥४५॥ संघ० सू० । ( स्वरूपमधिप-तयश्च अणिय शब्दे ) जंबूमंदरोत्तर वर्त्तिन्यां रक्तवतीमहानदीं-समुपयान्त्यां महानद्याम्, । स्था० १० ठा० ।

इंदा–इन्द्रा–स्त्री० इदि रन् इन्द्रवारुण्याम्, । राजनि ० । शच्याम्, शब्दर० । वाच ० ॥ जम्बूमन्दरोत्तरवर्त्तिन्यां रक्तवतीं महानदीं समुपयान्त्यां महानद्याम्, स्था० १० ठा० । धरणस्य नागकुमारेन्द्रस्य स्वनामख्यातायामग्रमहिष्याम्, स्था. ६ ठा ० ।

ऐन्द्री–स्त्री. इन्द्रो देवता यस्याः सा ऐन्द्री । पूर्वस्यान्दिशि स्था० १० ठा० । भ० । विशे० । " इंदा विजयदाराणुसारो " ॥ ऐन्द्री दिक् विजयद्वारानुसारतः प्रतिपत्तव्या यत्र विजयद्वारं सा ऐन्द्रीति भावार्थः । आ०म० द्वि० ॥ या रुचकात् विजयद्वारानुसारेण विनिर्गता दिक् सा ऐन्द्री । ऐन्द्री नामपूर्वेत्यर्थः ॥ आ० म० द्वि० ॥

इंदाणी–इन्द्राणी–स्त्री० इन्द्रस्य पत्नी । ङीप् आनुक् च । इन्द्रस्याग्रमहिष्याम्, । स्था० ४ ठा. ।

इंदायरिय–इन्द्राचार्य–पुं० योगविधिकारके स्वनामख्याते-आचार्ये, जैनइ० ॥

इंदासण–इन्द्रासन–पुं० इन्द्र आत्मा अस्यते विक्षिप्यतेऽनेन असु क्षेपे करणे ल्युट् । ( सिद्धि ) संविदावृक्षे तत्सेवने हि आत्मनो विक्षिप्तत्वात्तस्य तथात्वम् । पञ्चमात्रिकस्य प्रस्तावे आदिलघुके दोषगुरुद्वयात्मके प्रथमे भेदे, वाच० ॥

इंदाहिट्ठिय–इन्द्राधिष्ठित–त्रि० इन्द्रयुते, " इंदाहिट्ठिया " इति । इन्द्राधिष्ठिता तद्युक्तत्वादिति । भ० ३ श० १ उ० । " दशकप्पा इंदहिट्ठिया पण्णत्ता " । सौधर्मादीनामिन्द्राधिष्ठितत्वमेतेष्विन्द्राणां निवासादिति वृत्तिः । स्था० १० ठा० ।

इंदाहीण–इन्द्राधीन–त्रि० इन्द्रवश्ये, भ० ३ श० १ उ० ।

इंदाहीणकज्ज–इन्द्राधीनकार्य्य–त्रि० इन्द्रवश्यकार्ये, भ० ३ श० १ उ० ॥

इंदिय–इन्द्रिय–न० इदि परमैश्वर्ये इदितो नुम् इन्दनादिन्द्र आत्मा ( जीव ) सर्वे विषयोपलब्धि ( ज्ञान ) भोगलक्षणपरमैश्वर्ययोगात् तस्य लिङ्गं चिन्हमविनाभाविलिङ्गसत्तासूचनात् प्रदर्शनादुपलम्भनाद् व्यञ्जनाच्च जीवस्य लिङ्गमिन्द्रियलिङ्गमिन्द्रियविषयोपलम्भात् ज्ञापकत्वसिद्धिः तत्सिद्धौ उपयोगलक्षणो जीव इति जीवत्वसिद्धिः । अष्ट० । आ० म० द्वि० । तेन दृष्टं सृष्टं जुष्टं दत्तमिति वा इन्द्रियम् । स्था० ५ ठा० । इन्द्रियमिति निपातनसूत्राद्रूपनिष्पत्तिः–नं० । जी० । विशे० । पा० । पं०सं० । इन्द्रशब्दादियप्रत्यय इति । प्रज्ञा० १५ पद । आ० चू० ॥ श्रोत्रादौ, । उत्त० १६ अ० । सूत्र० । नयनवदनजघनवक्षःस्थलनाभिकक्षादौ, उत्त० १६ अ० " नो निग्गंथे इत्थीणं इंदियाइं मणोहराइं मणोरमाइं आलोइत्ता निज्झाइत्ता भवति " उत्त०

इंदो जीवो सव्वो–वलद्धिभोगपरमेसरत्तणओ ।
सोत्ताइ भेयमिंदिय–मिह तल्लिंगाइ भावाओ ॥

इदि परमैश्वर्ये इन्दनात्परमैश्वर्ययोगादिन्द्रो जीवः परमैश्वर्यमस्य कुत इत्याह ( सव्वो इत्यादि ) आवरणाभावे सर्वस्यापि वस्तुन उपलम्भनाभावेषु सर्वस्यापि त्रिजगद्गतस्य वस्तुनः परिभोगाच्च परमेश्वरो जीव इति तस्य परमैश्वर्यं तस्येन्द्रस्य जीवलिङ्गं चिन्हं तेन दृष्टं वा निपातनादिहेन्द्रियमुच्यते

तल्लिङ्गादिभावादिति । तच्च श्रोत्रादिभेदं श्रोत्रनयनघ्राणरसनस्पर्शनभेदात्पञ्चविधमित्यर्थः । विशे० ॥

स्था० । प्रत्र० । सूत्र० । पञ्च स्पर्शादीनि बुद्धीन्द्रियाणि वाक्पाणिपादपायूपस्थरूपाणि पञ्च कर्मेन्द्रियाणि एकादशं मन इति सांख्याः । सूत्र० १ श्रु० १ अ० ।

तस्य च नोइन्द्रियत्वं स्थानाङ्गे उक्तम् । तद्यथा—

छहिं इन्दियत्था पण्णत्ता तंजहा सोइंदियत्थे जाव फासिंदियत्थे नो इंदियत्थे ।

तत्र श्रोत्रेन्द्रियादीनामर्था विषयाः शब्दादयः मनस आन्तरकरणत्वेन करणत्वात्करणस्य चेन्द्रियत्वात्तत्रान्तररूढ्या वा मनस इन्द्रियत्वात्तद्विषयस्येन्द्रियार्थत्वेन षडिन्द्रियार्था इत्युक्तम् । औदारिकादित्वार्थपरिच्छेदकत्वलक्षणधर्म द्वयोपेतमिन्द्रियं तस्यौदारिकादित्वधर्मलक्षणदेशनिषेधान्नोइन्द्रियमनः सादृश्यार्थत्वाद्वा नोशब्दस्यार्थपरिच्छेदकत्वे नेन्द्रियाणां सदृशमिति तत्सहचरमिति वा नोइन्द्रियं मनस्तस्यार्थो विषयो जीवादि नो इन्द्रियार्थ इति । स्था० ६ ठा० ।

१—इन्द्रियाणां पञ्चत्वेऽपि नामादितश्चातुर्विध्यं द्रव्यादितो द्वैविध्यं तत्संस्थानञ्च ।

२—इन्द्रियाणां बाहुल्यपृथक्त्वप्रदेशावगाहनास्तदुद्घात वेदना च ।

३—इन्द्रियाणां पृथुत्वं तदवगाहना च ।

४—इन्द्रियाणामल्पबहुत्वं तद्गुणाश्च ।

५—नैरयिकादिषु संस्थानाद्यल्पबहुत्वचिन्तनम् ।

६—इन्द्रियाणां वर्त्तमानार्थग्राहकत्वम् ।

७—इन्द्रियाणां स्पृष्टास्पृष्टविषयता तद्ग्रहणप्रकारश्च ।

८—इन्द्रियाणां प्रविष्टाप्रविष्टविषयचिन्तनम् ।

९—श्रोत्रलक्षणादीन्द्रियाणां प्राप्यकारित्वं नयनमनसोरप्राप्यकारित्वम् ।

१०—इन्द्रियाणां विषयनिरूपणम् ।

११—इन्द्रियासंभृतत्वरूपस्येन्द्रियासम्वरदोषस्य चाभिधानम् ।

१२—इन्द्रियाणां गुणागुणदोषाभिधानम् ।

१३—अनामितानि चेन्द्रियाणि दुःखाय भवन्ति इत्यत्रोदाहरणानि ।

१४—इन्द्रियाश्रित्य जीवानां भेदाः ।

( १ ) इन्द्रियाणां पञ्चत्वेऽपि नामादितश्चातुर्विध्यं द्रव्यादितो द्वैविध्यं तत्संस्थानञ्च ।

कइणं भंते ! इंदिया पण्णत्ता ? गोयमा ! पंचिंदिया पण्णत्ता तंजहा सोइंदिए चक्खिंदिए घाणिंदिए जिब्भिंदिए फासिंदिए ।

कति कियत्संख्याकानि णमिति वाक्यालङ्कारे भदन्त ! इन्द्रियाणि प्रागनिर्णीतशब्दार्थानि वक्तव्यानि भगवानाह । गौतम ! पञ्चेन्द्रियाणि प्रज्ञप्तानि तान्येव नामत आह " सोइंदियए " इत्यादि । प्रज्ञा० १५ पद !

एतानि च पञ्चापि इन्द्रियाणि नामादिभेदाच्चतुर्विधानि

तं नामाइ चउद्धा, दव्वं निव्वित्ति उवगरणं च ।
आगासे निविवित्ति, चिंतावज्झाय मामओ ॥

तन्नामेन्द्रियस्थापनेन्द्रियमित्यादि भेदाच्चतुर्धा तत्र ज्ञभव्यशरीरव्यतिरिक्तं द्रव्यं द्रव्येन्द्रियं निर्वृत्तिरुपकरणं चेति द्विभेदम् । विशे० ।

भावतो लब्ध्युपयोगात्मकानि आह च तत्त्वार्थसूत्रकृत् निर्वृत्त्युपकरणे द्रव्येन्द्रियं लब्ध्युपयोगौ भावेन्द्रियमिति । तत्र निर्वृत्तिर्नाम प्रतिविशिष्टः संस्थानविशेषः साऽपि द्विविधाः बाह्याभ्यन्तरा च तत्र बाह्या पर्पटिकादिरूपा सा च विचित्रा न प्रतिरूप नियतरूपतयोपदेष्टुं शक्यते ॥ तथाहि । मनुष्यश्रोत्रे नेत्रयोरुभयपार्श्वतो भाविनी भ्रुवौ चोपरितनश्रवणबन्धापेक्षया समे वाजिनीनेत्रयोरुपरि तीक्ष्णे चाग्रभागे इत्यादि जातिभेदान्नानाविधा आभ्यन्तरा तु निर्वृत्तिः सर्वेषामपि जन्तूनां समानतामेवाधिकृत्य वक्ष्यमाणानि संस्थानादिविषयाणि सूत्राणि केवलं स्पर्शनेन्द्रियस्य निर्वृत्तेर्बाह्याभ्यन्तरभेदा न प्रतिपत्तव्याः पूर्वसूरिभिर्निषेधात् । प्रज्ञा० १५ पद । आ० म० द्वि० । तत्त्वार्थमूलटीकायामनभ्युपगमात् । जी० १ प्र० ।

इन्द्रियाणां संस्थानमाह ।

पुप्फं कलंबुयाए, धन्न-मसूरादिमुत्तचंदो य ।
होई खुरुप्पनाणा, किई य सोइंदियाईणं ॥

श्रोत्रस्यान्तर्निर्वृत्तिः कदम्बपुष्पाकारमांसगोलकरूपा दृष्टव्या । चक्षुषस्तु धान्यमसूराकारा, घ्राणस्य अतिमुक्तककुसुमचन्द्रकाकारा, रसनस्य क्षुरप्राकारा, स्पर्शनं तु नानाकृतिर्द्रष्टव्यमित्येष श्रोत्रादीनां तन्निर्वृत्तेराकार इति । विशे० ।

तथाच प्रज्ञापनाया पञ्चदशे पदे ।

सोइंदिए णं भन्ते ! किं संठिए पण्णत्ते ? गोयमा ! कलंबुयापुप्फसंठाणसंठिए पण्णत्ते चक्खिंदिएणं पुच्छा गोयमा ! मसूरा चंदसंठाणसंठिये पण्णत्ते, घाणिंदिएणं पुच्छा गोयमा ! अइमुत्तगचंदसंठाणसंठिए पण्णत्ते, जिब्भिंदिएणं पुच्छा गोयमा ! खुरुप्पसंठाणसंठिए पण्णत्ते फासिंदिएणं पुच्छा गोयमा ! नाणासंठाणसंठिए पण्णत्ते,

तत्रान्तः श्रोत्रेन्द्रियस्यान्तर्मध्ये नेत्रगोचरोऽतीता केवलिदृष्टा अतिमुक्तककुसुमाकारा देहावयवरूपा काचिन्निर्वृत्तिरस्ति शब्दग्रहणोपकारे वर्तते चक्षुरिन्द्रियस्यान्तर्मध्ये केवलिगम्या धान्यमसूराकारा काचिन्निर्वृत्तिरस्ति या रूपग्रहणोपकारे वर्तते । घ्राणेन्द्रियस्यान्तर्मध्ये केवलिदृष्टा अतिमुक्तककुसुमाकारा देहावयवरूपा काचिन्निर्वृत्तिरस्ति या गन्धग्रहणोपकारे वर्तते । रसनेन्द्रियस्यान्तर्मध्ये जिनगम्या क्षुरप्रहरणाकारा देहावयवरूपा काचिन्निर्वृत्तिरस्ति या रसग्रहणोपकारे वर्तते । स्पर्शनेन्द्रियस्यान्तः केवलिदृष्टा देहाकारा काचिन्निर्वृत्तिरस्ति या स्पर्शग्रहणोपकारे वर्तते ॥ तंदु० ॥

उपकरणं खड्गस्थानीया बाह्या निर्वृत्तिर्या खड्गधारास्थानीया स्वच्छतरपुद्गलसमूहात्मिका अभ्यन्तरा निर्वृत्तिस्तस्याः शक्तिविशेषः इदञ्चोपकरणरूपं द्रव्येन्द्रियमन्तरनिर्वृत्तेः कथंचिदर्थान्तरं शक्तिशक्तिमतोः कथंचिद् भेदात्कथञ्चिद्भेदश्च सत्यामपि तस्यामान्तरनिर्वृत्तौ द्रव्यादिनोपकरणस्य विघातसम्भवात् तथाहि—सत्यामपि कदम्बपुष्पाद्याकृतिरूपायामान्तरनिर्वृत्तावतिकठोरतरघनगर्जितादिना शक्त्युपघाते सति न परिच्छेत्तुमीशते जन्तवः शब्दादिकमिति । प्रज्ञा० १५ पद ।

विसयग्गहणसमत्थं, उवगरणिंदियं तरं तं पि ।
जं तेह तदुवघाए गिण्हइ निव्वत्तिभावे वि ॥

तस्य एव कदम्बपुष्पाकृतिमांसगोलकरूपायाः श्रोत्राद्यन्तर्नि-

वृत्तेर्यद्विषयग्रहणसमर्थं शक्तिरूपमुपकरणं द्रव्येन्द्रियमुच्यते इति शेषः । यथा खड्गस्य छेत्री शक्तिर्वह्नेर्वा दाहादिकाशक्तिस्तथेदमपि श्रोत्राद्यन्तर्निर्वृत्तेर्विषयग्रहणसमर्थशक्तिरूपं द्रष्टव्यम् । तर्ह्यन्तर्निर्वृत्तिरेव तत्तच्छक्तिरूपत्वान्न पुनर्भेदान्तरमित्याशंक्याह । तदपीन्द्रियान्तरं द्रव्येन्द्रियस्य भेदान्तरमित्यर्थः कुत इत्याह ( जमित्यादि ) यस्मादिह कदम्बपुष्पाद्याकृतेर्मांसगोलकाकारायाः श्रोत्राद्यंतर्निर्वृत्तेर्या शब्दादेर्विषयच्छेत्री शक्तिस्तस्या वातपित्तादिना उपघाते विनाशे सति यथोक्तांतर्निर्वृत्तिसद्भावेपि न शब्दादिविषयं गृह्णाति जीव इत्यतो ज्ञायते अस्त्यन्तर्निर्वृत्तिशक्तिरूपमुपकरणेन्द्रियं द्रव्येन्द्रियस्य द्वितीयो भेद इति । विशे० "इंदियाणि दुविहाणि दव्विंदियाणि भाविंदियाणि अ दव्विंदियं दुविहं णिव्वत्तणाए उवकारणे य णिव्वत्तणाए जहा लोहकारो भणितो एतेण लोहेण परसुं वासिं थोभणयं च णिवत्तेहिंति तेण तं गहाय ततोहिं पमाणेहिं खंमियाणि जाव कम्मस्स समत्थाणि सा णिव्वत्तणा कल्लसमत्थाणि जायाणि उवगरणाइं" ॥ आ० चू० २ अ० ॥ भावेन्द्रियमपि द्विधा लब्धिरुपयोगश्च तत्र लब्धिः श्रोत्रेन्द्रियादिविषयस्तदावरणक्षयोपशमः उपयोगः स्वस्वविषये लब्ध्यनुसारेणात्मनः परिच्छेदव्यापारः । जी० १ प्र० । "भाविंदियं दुविहं लद्धिए उवओगत्तो य जाणि जेण जीवेण लद्धाइं इंदियाणि सा लद्धा एगिंदियाणं एगा फासिंदियलद्धि बेंदियाणं तेइंदियाणं चउरिंदियाणं पंचेंदियाणं पंचविहो उवओगो जाहे जेण इंदिएण उवजुज्जति सव्वजीवा य किर उवओगं पडुच्च एगिंदिया"आ०-चू० २ अ०॥

तदाह ॥

लद्धुवओगो भावि-दियं तु लद्धित्ति जो खओवसमो ।
होइ तदावरणाणं, तल्लाभे चेव सेसं पि ॥ १ ॥

लब्ध्युपयोगो भावेंद्रियं तत्र यदावरणानां तेषामिन्द्रियाणामावारककर्म्मणां क्षयोपशमो भवति जीवस्य सा लब्धिः शेषमपि द्रव्येन्द्रियं तल्लाभ एव लब्धिप्राप्तावेव भवतीति द्रष्टव्यमिति ॥

उपयोगः क इत्याह ॥

जो सविसयवावारो, सो उवओगो स चेगकालम्मि ॥
एगेण होइ तम्हा, उवओगाओ उ सव्वो वि ॥ १ ॥

यः श्रोत्रादीन्द्रियस्य स्वविषये शब्दादौ परिच्छेद्य व्यापारः स उपयोगः स चैकस्मिन्काले एकेनैव श्रोत्राद्यन्यतरेण इन्द्रियेण भवति न बुद्ध्यादिभिः तस्मादुपयोगमाश्रित्य सर्वोपि जीव एकेन्द्रिय एव सर्वस्मिन्काले देवादीनामप्येकस्यैव श्रोत्राद्यन्यतरेन्द्रियोपयोगस्य सद्भावादिति । यद्युपयोगतः सर्वोपि जीव एकेंद्रियस्तर्ह्येकेंद्रियो द्वींद्रिय इत्यादिर्भेदः कथमागमनिर्दिष्ट इत्याह—

एगेंदियाइभेया, पडुच्च सेसेंदियाणि जीवाणं ॥
अहवा पडुच्च लद्धिं-दियं पि पंचेंदिया सव्वे ॥ १ ॥

अतो जीवानामेकेन्द्रियादयो भेदाः शेषाणि निर्वृत्त्युपकरणलब्धीन्द्रियाणि प्रतीत्य द्रष्टव्यं तानि यस्य यावन्ति तावद्भिर्व्यपदेश इति न तूपयोगतः अथवा लब्धीन्द्रियमप्याश्रित्य वक्ष्यमाणयुक्तितः सर्वे पृथिव्यादयोऽपि जीवाः पञ्चेन्द्रिया एवेति कुतः सर्वे पञ्चेन्द्रिया इत्याह ॥

जं किर बउलाईणं, दीसइ सेसेंदिओवलंभो वि ॥
तेण त्थि तदावरण-क्खओवसमसंभवो तेसिं ॥ १ ॥

यस्मात् किल बकुलचंपकतिलकविरहकादीनां वनस्पतिविशेषाणां स्पर्शनाच्छेषाणि यानि रसनघ्राणचक्षुःश्रोत्रलक्षणानीन्द्रियाणि तत्संबन्ध्युपलम्भो दृश्यते तेन ज्ञायते तेषामपि बकुलादीनां तदावरणक्षयोपशमसंभवो रसनादीन्द्रियावारककर्म्मक्षयोपशमस्य या च यावती मात्रा अस्तीति अन्यथा हि बकुलस्य शृंगारितकामिनीवदनार्पितचारुमदिरागण्डूषेण चंपकस्यातिसुरभिगन्धोदकसेचनेन तिलकस्य कामिनीकटाक्षविक्षेपेण विरहकस्य पञ्चमोद्गारश्रवणेन पुष्पपल्लवादिसंभवो न घटेत । विशे० ॥ यद्यपि द्रव्यरूपं भावरूपं चेत्यामिन्द्रियमनेकप्रकारं तथापीह बाह्यनिर्वृत्तिरूपमिन्द्रियं पृष्टमवगन्तव्यं तदेवाधिकृत्य व्यवहारप्रवृत्तेः तथाहि बकुलादयः पञ्चेन्द्रिया इव भावेन्द्रियपञ्चकविज्ञानसमन्विता अनुमानतः प्रतीयन्ते तथापि न ते पञ्चेन्द्रिया इति व्यवह्रियंते बाह्येन्द्रियपञ्चकासंभवात् । जी० १ प्र० ॥

पंचिंदिय व्व बउलो, नरोव्व सव्वविसयोवलंभाउ ॥
तह वि न भण्णइ पंचें-दिओत्ति बज्झिंदियाभावा ॥ १ ॥

पंचेन्द्रिय इव बकुल इति प्रतिज्ञा सर्वेषामपि शब्दरूपादिविशेषाणामुपलम्भादिति हेतुः नरवदिति दृष्टान्तः । ननु बकुलस्य रसनेन्द्रियोपलम्भ एवोक्तस्तत्कथमस्य सर्वविषयोपलम्भसंभव इति सत्यम् मुख्यस्तावत्स एव संभवति गौणवृत्त्या तु शेषेन्द्रियविषयोपलम्भोऽप्यस्य संभाव्यते शृङ्गारितस्वरूपतरुणीमदिरागंडूषार्पणात् तस्यां च तनुलतास्पर्शाधररसचंदनादिगन्धशोभनरूपमधुरोल्लापलक्षणानां पञ्चानामपीन्द्रियविषयाणां संभवादिति अन्यथा वा पञ्चेन्द्रियत्वमस्य सुधिया भावनीयं तर्ह्येकेन्द्रियो बकुलः कथं प्रसिद्धः पञ्चेन्द्रियोऽपि कस्मान्न व्यपदिश्यत इत्याह ॥ तथापि पञ्चेन्द्रियोऽसौ न भण्यते बाह्यानां निर्वृत्त्यादि द्रव्येन्द्रियाणामभावादिति ॥

अमुमेवार्थं कुंभकारव्यपदेशदृष्टांतेन समर्थयन्नाह ॥

सुत्तो वि कुंभनिव्वत्ति, सत्तिजुत्तोत्ति जह सघडकारो ।
लद्धेंदिएण पंचें-दिओ तहाबज्झरहिओ वि ॥

सुबोधार्थमिन्द्रियाणां लाभक्रम उच्यते । तत्र यदा द्रव्येन्द्रियसामान्यं भावेन्द्रियसामान्यं वाश्रित्य पृच्छ्यते तदा तल्लाभे चैव "सेसंपित्ति" प्रागुक्तवचनाल्लब्धिमाश्रित्य प्रथमं भावेन्द्रियलाभस्ततो द्रव्येन्द्रियलाभ इति द्रष्टव्यम् । यत्तु द्रव्येन्द्रियभावेन्द्रियसामान्याद्भिन्नः क्रमो लाभः पृच्छ्यते विशेषरूपतया पृच्छ्यते इत्यर्थः तदित्थं द्रष्टव्यं प्रथममिन्द्रियावरणक्षयोपशमरूपा लब्धिर्भवति ततो बाह्यान्तरभेदभिन्नं निर्वृत्तेः शक्तिरूपमुपकरणं तदनन्तरं चेन्द्रियार्थोपयोग इत्येतदेवाह ॥

लाभक्कमे उ लद्धी, निव्वउवगरणउवओगो ।
या दव्वेंदिय भावि-दिय सामन्नओ कमो भिन्नो ॥

व्याख्यातार्था तदेव व्याख्यातमिन्द्रियस्वरूपम् । विशे० नं० । तं० । आ० म० द्वि० । प्रज्ञा० । जी० । स्था० । पा० । अष्ट० । आचा० ।

द्रव्येन्द्रियभावेन्द्रियभेदाः यथा--

कतिविहा णं भंते ! इंदिया पण्णत्ता ? गोयमा ! दुविहा पण्णत्ता, तं जहा दव्विंदिया य भाविंदिया य । कइणं भंते !

दव्विंदिया पणत्ते ? गोयमा ! अट्ठदव्विंदिया पण्णत्ते, तंजहा दो सोत्ता दो नेत्ता दो घाणा जीहा फासे। नेरइयाणं भंते! कइ दव्विंदिया पण्णत्ता ? गोयमा! अट्ठ।एते चेव एवं असुरकुमाराणं जाव थणियकुमाराण वि । पुढविकाइयाणं भंते ! कइ दव्विंदिया पण्णत्ता ? गोयमा ! एगे फासिंदिए पण्णत्ते । एवं जाव वणस्सइकाइयाणं । बेइंदियाणं भंते! कइ दव्विंदिए पण्णत्ते ? गोयमा ! दो दव्विंदिया पण्णत्ता, तं जहा फासिंदिए य जिब्भिंदिए य । तेइंदियाणं पुच्छा, गोयमा ! चत्तारि दव्विंदिया पण्णत्ता दो घाणा जीहा फासिंदिए । चउरिंदियाणं पुच्छा, गोयमा ! छ-दव्विंदिया पण्णत्ता, तं जहा–दो नेत्ता दो घाणा जीहा फासे सेसाणं जहा नेरइयाणं जाव वेमाणियाणं । एगमेगस्स णं भंते! नेरइयस्स केवइया दव्विंदिया अईया ? गोयमा ! अणंता । केवइया बद्धेल्लगा ? गोयमा ! अट्ठ । केवइया पुरक्खडा ? गोयमा! अट्ठ वा सोलस वा सत्तरस वा संखेज्ज वा असंखेज्ज वा अणंता वा । एगमेगस्स णं भंते ! असुरकुमारस्स केवइया दव्विंदिया अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा ? अट्ठ । केवइया पुरक्खडा ? अट्ठ वा नव वा संखिज्जा वा असंखिज्जा वा अणंता वा । एवं जाव थणियकुमाराणं ताव भाणियव्वं । एवं पुढविक्काइयआउक्काइयवणस्सइकाइयस्स वि नवरं केवइया बद्धेल्लगत्ति पुच्छा, एवं उत्तरं एके फासिंदिए दव्विंदिए एवं तेउक्काइय । वाउक्काइयस्स वि नवरं पुरक्खडा नव वा दस वा । एवं बेइंदियाण वि नवरं बद्धेल्लगपुच्छाए, दोण्णि । एवं तेइंदियस्स वि बद्धेल्लगा चत्तारि । एवं चउरिंदियस्स वि नवरं बद्धेल्लगा । पंचिंदियतिरिक्खजोणियमणुस्सवाणमंतरजोइसिय सोहम्मीसाणगदेवस्स जहा असुरकुमारस्स । नवरं मणुस्सस्स पुरक्खडा कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठ वा नव वा संखिज्जा वा असंखिज्जा वा अणंता वा । सणंकुमारमाहिंदबंभलंतगसुक्कसहस्सार आणयपाणयआरणअच्चुयगेविज्जगदेवस्स जहा नेरइयस्स । एगमेगस्स णं भंते ! विजय-वेजयंत-जयंत-अपराजियदेवस्स केवइया दव्विंदिया अतीता ? गोयमा ! अणंता, केवइया बद्धेल्लगा ? अट्ठ । केवइया पुरक्खडा ? अट्ठ वा सोलस वा चउवीसा वा संखेज्जा वा । सव्वट्ठसिद्धगदेवस्स अतीता अणंता बद्धेल्लगा अट्ठ पुरक्खडा अट्ठ । नेरइया णं भंते ! केवइया दव्विंदिया अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा ? गोयमा ! असंखिज्जा । केवइया पुरक्खडा ? गोयमा ! अणंता । एवं जाव गेवेज्जगदेवाणं नवरं मणुस्साणं बद्धेल्लगा सिय संखिज्जा सिय असंखिज्जा । विजयवेजयंतजयंत अपराजियदेवाणं पुच्छा, गोयमा ! अतीता अणंता बद्धेल्लगा असंखिज्जा पुरक्खडा असंखिज्जा सव्वट्ठसिद्धगदेवाणं पुच्छा, गोयमा ! अतीता अणंता वा बद्धेल्लगा संखिज्जा पुरक्खडा संखेज्जा ॥

( कइविहाणं भंते इंदिया पण्णत्ता इति ) द्रव्येन्द्रियं सुगमं प्रागभावितत्वात् ।(कइविहेणं भंते! दव्विंदिया पन्नत्ता इति) द्रव्येन्द्रियसंख्याविषयं दण्डकसूत्रञ्च पाठसिद्धम् । एकैकजीवविषयातीतबद्धपुरस्कृतद्रव्येन्द्रियचिन्तायाम्–यो नैरयिको ऽनन्तरमनुष्यत्वमवाप्य सेत्स्यति तस्य मानुषभवसम्बन्धीन्यष्टौ, यः पुनरन्यतरभवे तिर्यक् पञ्चेन्द्रियत्वमवाप्य तत उद्वृत्तो मनुष्येषु गत्वा सेत्स्यति तस्याष्टौ तिर्यक्पञ्चेन्द्रियभवसम्बन्धीन्यष्टौ मनुष्यभवसम्बन्धीनीति षोडश । यः पुनरनन्तरं नरकादुद्वृत्तस्तिर्यक् पञ्चेन्द्रियत्व मवाप्यतदनन्तरमेकभवे पृथिवीकायादिको भूत्वा मनुष्येषु समागत्य सेत्स्यति तस्याष्टौ तिर्यक्पञ्चेन्द्रियभवसम्बन्धीनि एकं पृथिवीकायादिभवसम्बन्धि अष्टौ च मनुष्यभवसम्बन्धीनि इति सप्तदश संख्येयकालं संसारावस्थायिनः संख्येयानि असंख्येयकालमसंख्येयानि अनन्तकालमनन्तानि, असुरकुमारसूत्रे–पुरक्खडा अट्ठ वा नव वा इत्यादि । तत्रासुरभवादुद्वृत्त्यानन्तरभवे मनुष्यत्वमवाप्य सेत्स्यतस्तोऽष्टौ, असुरकुमारादयस्त्वीशानपर्यन्ताः पृथिव्यब्वनस्पतिषूत्पद्यन्ते ततो योऽनन्तरभवे पृथिव्यादिषु गत्वा तदनन्तरं मनुष्यत्वमवाप्य सेत्स्यति तस्य नव संख्येयादिभावना प्राग्वत् पृथिव्यब्वनस्पतिसूत्रे पुरक्खडा अट्ठ वा नव वेति ॥ पृथिव्यादयो ह्यनन्तरमुद्वृत्य मनुष्येषूत्पद्यन्ते सिध्यंति च तत्र योऽनन्तरभवे मनुष्यत्वमवाप्य सेत्स्यति तस्य मनुष्यभवसम्बन्धीन्यष्टौ यस्त्वनन्तरमेकं पृथिव्या भवमवाप्य तदनन्तरं मनुष्यो भूत्वा सेत्स्यति तस्य नव तेजोवायवो ऽनन्तरमुद्वृत्ता मनुष्यत्वमेव न प्राप्नुवन्ति द्वित्रिचतुरिन्द्रियास्त्वनन्तरं मनुष्यत्वमवाप्नुवन्ति परं न सिद्ध्यन्ति, ततस्तेषां सूत्रेषु जघन्यपदे नवनवेति वक्तव्यं शेषभावना प्रागुक्तानुसारेण कर्त्तव्या, मनुष्यसूत्रे पुरस्कृतानि द्रव्येन्द्रियाणि कस्यापि सन्ति कस्यापि न सन्तीति तद्भव एव सिद्ध्यतो न सन्ति शेषस्य सन्तीति भावः यस्यापि सन्ति सोऽपि यद्यनन्तरभवे भूयोऽपि मनुष्यो भूत्वा सेत्स्यति तस्याष्टौ यः पुनः पृथिव्याद्येकभवान्तरितो भूत्वा सिद्धिगामी तस्य नव शेषभावना प्राग्वत् । सनत्कुमारादयो देवा अनन्तरमुद्वृत्ताः न पृथिव्यादिष्वायान्ति किन्तु पञ्चेन्द्रियेषु ततस्ते नैरयिकवद्वक्तव्याः तथाचाह–" सणंकुमारमाहिंद बंभलोयलंतगसुक्कसहस्सार आणय पाणय आरण अच्चुय गेवेज्जगदेवस्सय जहा नेरइयस्स " विजयादिदेवचतुष्टयसूत्रेषु योऽनन्तरभवे मनुष्यत्वमवाप्य सेत्स्यति तस्याष्टौ यः पुनरेकवारं मनुष्यो भूत्वा भूयोपि मनुष्यत्वमवाप्य सेत्स्यति तस्य षोडश यस्त्वपान्तराले देवत्वमनुभूय मनुष्यो भूत्वा सिद्धिगामी तस्य चतुर्विंशतिर्मनुष्यभवे ऽष्टौ देवभवेऽष्टौ भूयोपि मनुष्यभवे अष्टाविति संख्येयानि संख्येयं कालं संसारावस्थायिन इह विजयादिषु चतुर्षु गताः प्रभूतमसंख्येयमनन्तं वा कालं संसारे नावतिष्ठन्ते ततः संखेज्जा वा इत्येवोक्तं " मा संखेज्जा अणंता वा" इति सर्वार्थ सिद्धस्त्वनन्तरभवे नियमतः सिद्ध्यति तत स्तस्याऽजघन्योत्कृष्टपुरस्कृता अष्टाविति । बहुवचनचिन्तायां नैरयिकसूत्रे बद्धानि द्रव्येन्द्रियाणि असंख्येयानि नैरयिका

णामसंख्यातत्वात् एवं शेषसूत्रेष्वप्युपयुज्य वक्तव्यं नवरं मनुष्यसूत्रे " सियसंखेज्जा " इह सम्मूर्च्छिममनुष्याः कदाचित्सर्वथा न सन्ति तदन्तरस्य चतुर्विंशतिमुहूर्त्तप्रमाणस्य प्रागभिधानात्, तत्र यदा पृच्छासमये सर्वथा न सन्ति तदा संख्येयानि गर्भजमनुष्याणां संख्येयत्वात्। यदा तु संमूर्च्छिमा अपि सन्ति तदा असंख्येयानि । सर्वार्थसिद्धमहाविमानदेवाः संख्यया बादरत्वे महाशरीरत्वे च सन्ति परिमितक्षेत्रवर्तित्वात् ततो बद्धानि पुरस्कृतानि वा तेषां द्रव्येन्द्रियाणि संख्येयानि ॥

एगमेगस्स णं भंते! नेरइयस्स नेरइयत्ते केवइया दव्विंदिया अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा ? अट्ठ । केवइया पुरक्खडा ? गोयमा ! कस्सइ अत्थि कस्सइ नत्थि । जस्स अत्थि अट्ठ वा सोलस वा चउवीसं वा संखिज्जा वा असंखिज्जा वा अणंता वा । एगमेगस्स णं भंते ! नेरइयस्स असुरकुमारत्ते केवइया दव्विंदिया अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा ? गोयमा ! नत्थि । केवइया पुरक्खडा ? गोयमा ! कस्सइ अत्थि कस्सइ नत्थि । जस्स अत्थि अट्ठ वा सोलस वा चउवीसं वा संखेज्जा वा असंखेज्जा वा अणंता वा । एवं जाव थणियकुमारत्ते । एगमेगस्स णं भंते ! नेरइयस्स पुढविकाइयस्स केवइया दव्विंदिया अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा ? गोयमा ! णत्थि । केवइया पुरक्खडा ? गोयमा ! कस्सइ अत्थि कस्सइ णत्थि जस्स अत्थि एक्को वा दो वा तिन्नि वा संखेज्जा वा असंखेज्जा वा अणंता वा । एवं जाव वणस्सइकाइयत्ते । एगमेगस्स णं भंते ! नेरइयस्स बेइंदियत्ते केवइया दव्विंदिया अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा ? गोयमा ! णत्थि, केवइया पुरक्खडा ? गोयमा ! कस्स अत्थि कस्स नत्थि । जस्स अत्थि दो वा चत्तारि वा छ वा संखिज्जा वा असंखिज्जा वा अणंता वा । एवं तेइंदियत्ते वि नवरं पुरक्खडा चत्तारि वा अट्ठ वा बारस वा संखिज्जा वा असंखिज्जा वा अणंता वा । एवं चउरिंदियत्ते वि नवरं पुरक्खडा छ वा बारस वा अट्ठारस वा संखिज्जा वा असंखिज्जा वा अणंता वा । पंचिंदियतिरिक्खजोणियत्ते जहा असुरकुमारत्ते । मणुस्सत्ते वि एवं चेव नवरं केवइया पुरक्खडा अट्ठ वा सोलस वा चउवीसं वा संखेज्जा वा असंखेज्जा वा अणंता वा, सव्वेसिं मणुस्सवज्जाणं पुरक्खडा मणुस्सत्ते कस्सइ अत्थि कस्सइ नत्थि त्ति एवं न वुच्चइ । वाणमंतरजोइसियसोहम्मग जाव गेवेज्जगदेवत्ते अतीता अणंता । बद्धेल्लगा नत्थि । पुरक्खडा कस्स अत्थि कस्स नत्थि जस्स अत्थि अट्ठं वा सोलसं वा चउवीसं वा संखिज्जा वा असंखिज्जा वा अणंता वा । एगमेगस्स णं भंते ! नेरइयस्स विजयवेजयंतजयंतअपराजितदेवत्ते केवइया दव्विंदिया अतीता ? नत्थि केवइया बद्धेल्लगा ? नत्थि । केवइया पुरक्खडा ? कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठ वा सोलस वा । सव्वट्ठसिद्धदेवत्ते अतीता नत्थि, बद्धेल्लगा नत्थि, पुरक्खडा कस्स अत्थि कस्स नत्थि जस्स अत्थि अट्ठ । एवं जहा नेरइए दंडओ नीतो तहा असुरकुमारेण वि नेयव्वो जाव पंचिंदियतिरिक्खजोणिएणं नवरं जस्स सट्ठाणे जइ बद्धेल्लगा तस्स तइ भाणियव्वा । एगमेगस्स णं भंते ! मणुस्सस्स नेरइयत्ते केवइया दव्विंदिया अतीता ? गोयमा ! अणंता केवइया बद्धेल्लगा नत्थि केवइया पुरक्खडा ? कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठं वा सोलसं वा चउवीसं वा संखेज्जा वा असंखेज्जा वा अणंता वा । जाव एवं पंचिंदियतिरिक्खजोणियत्ते नवरं एगिंदियविगलिंदियएसु जस्स जत्ति पुरक्खडा तस्स तत्तिया भाणियव्वा । एगमेगस्स णं भंते ! मणुस्सस्स मणुस्सत्ते केवइया दव्विंदिया अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा ! गोयमा ! अट्ठ, केवइया पुरक्खडा कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठं वा सोलसं वा चउवीसं वा संखिज्जा वा असंखिज्जा वा अणंता वा । वाणमंतरजोइसिय जाव गेवेज्जगदेवत्ते जहा नेरइयत्ते । एगमेगस्स णं भंते ! मणुस्सस्स विजयवेजयंतजयंतअपराजियदेवत्ते केवइया दव्विंदिया अतीता ? गोयमा ! कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठं वा सोलसं वा । केवइया बद्धेल्लगा णत्थि । केवइया पुरक्खडा कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठं वा सोलसं वा । एगमेगस्स णं भंते ! मणुस्सस्स सव्वट्ठसिद्धगदेवत्ते केवइया दव्विंदिया अतीता ? गोयमा ! कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठ, केवइया बद्धेल्लगा णत्थि, केवइया पुरक्खडा कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठ । वाणमंतरजोइसिया जहा नेरइए । सोहम्मगदेवे वि जहा नेरइए नवरं सोहम्मगदेवस्स विजयवेजयंतजयंतअपराजियदेवत्ते केवइया अतीता ? कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठ केवतिया बद्धेल्लगा णत्थि, केवतिया पुरक्खडा कस्सइ अत्थि कस्सइ णत्थि जस्स अत्थि अट्ठ वा सोलस वा । सव्वट्ठसिद्धदेवत्ते जहा नेरइयस्स एवं जाव गेवेज्जगदेवस्स सव्वट्ठसिद्धदेवत्ते ताव नेयव्वं । एगमेगस्स णं भंते ! विजयवेजयंतजयंतअपराजियदेवस्स नेरइयत्ते केवइया दव्विंदिया अतीता ? गोयमा ! अणंता, केवइया बद्धेल्लगा ? णत्थि, केवतिया पुरक्खडा ? नत्थि । एवं जाव पंचिंदियतिरिक्खजोणियत्ते । मणुस्सत्ते अणंता

अतीता बद्धेल्लगा णत्थि, पुरक्खमा अट्ठ वा सोलस वा चउवीसं वा संखेज्जा वा । वाणमंतरजोइसियत्ते जहा नेरइयत्ते । सोहम्मदेवत्ते अतीता अणंता बद्धेल्लगा अत्थि पुरक्खमा कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठ वा सोलस वा चउवीसं वा संखेज्जा वा । एवं जाव गेवेज्जगदेवत्ते विजयवेजयंतजयंत अपराजितत्ते अतीता कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि अट्ठ । केवतिया बद्धेल्लगा अट्ठ, केवतिया पुरक्खमा कस्स अत्थि कस्स नत्थि जस्स अत्थि अट्ठ । एगमेस्स णं भंते ! विजयवेजयंतजयंतअपराजियदेवस्स सव्वट्ठसिद्धदेवत्ते । केवइया दव्विंदिया अतीता ? गोयमा ! णत्थि । केवतिया बद्धेल्लगा णत्थि, केवतिया पुरक्खमा कस्सइ अत्थि कस्सइ णत्थि जस्स अत्थि अट्ठ । एगमेगस्स णं भंते। सव्वट्ठसिद्धगदेवस्स नेरइयत्ते केवतिया दव्विंदिया अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा नत्थि, पुरक्खमा नत्थि । एवं मणुस्सवज्जं जाव गेवेज्जगदेवत्ते मणुस्सत्ते अतीता अणंता, केवइया बद्धेल्लगा नत्थि। केवइया पुरक्खमा अट्ठ । विजयवेजयंतापराजियदेवत्ते अतीता कस्सइ अत्थि कस्सइ नत्थि, जस्स अत्थि अट्ठ। केवइया बद्धेल्लगा ? णत्थि । केवइया पुरक्खमा ? णत्थि । एगमेगस्स णं भंते ! सव्वट्ठसिद्धदेवस्स सव्वट्ठसिद्धदेवत्ते केवइया दव्विंदिया अतीता ? गोयमा ! णत्थि, केवइया बद्धेल्लगा ? अट्ठ । केवइया पुरक्खमा, नत्थि । नेरइयाणं भंते ! नेरइयत्ते केवइया दव्विंदिया– अतीता ? गोयमा ! अणंता । केवइया बद्धेल्लगा ? असंखेज्जा । केवइया पुरक्खमा ? अणंता । नेरइयाणं भंते ! असुरकुमारत्ते केवतिया दव्विंदिया अतीता ? गोयमा ! अणंता। केवइया बद्धेल्लगा ? नत्थि, केवइया पुरक्खमा ? अणंता । एवं जाव गेविज्जगदेवत्ते । नेरइयाणं भंते ! विजयवेजयंतजयंतापराजियदेवत्ते केवइया दव्विंदिया अतीता ? नत्थि। केवतिया बद्धेल्लगा ? नत्थि, केवइया पुरक्खमा? असंखेज्जा । एवं सव्वट्ठसिद्धदेवत्तेवि एवं जाव पंचिंदियतिरिक्खजोणियाणं सव्वट्ठसिद्धदेवत्ते भाणियव्वं । नवरं वणस्सइकाइयाणं विजयवेजयंतजयंतापराजियदेवत्ते सव्वट्ठसिद्धदेवत्ते य पुरक्खमा अणंता। सव्वेसिं मणुस्ससव्वट्ठसिद्धगवज्जाणं सट्ठाणं बद्धेल्लगा असंखेज्जा परट्ठाणे बद्धेल्लगा नत्थि । मणुस्सा णं भंते ! नेरइयत्ते अतीता अणंता । बद्धेल्लगा नत्थि। पुरक्खमा अणंता । एवं जाव गेविज्जदेवत्ते नवरं सट्ठाणे अतीता अणंता। बद्धेल्लगा सिय संखिज्जा सिय असंखिज्जा । पुरक्खमा अणंता । मणुस्सा णं भंते ! विजयवेजयंतजयंतापराजियदेवत्ते केवतिया दव्विंदिया अतीता ? गोयमा ! संखिज्जा दव्विंदिया अतीता केवतिया बद्धेल्लगा नत्थि, केवतिया पुरक्खमा सिय संखिज्जा सिय असंखिज्जा । एवं सव्वट्ठसिद्धदेवत्ते वि वाणमंतरजोइसियाणं देवाणं एवं चेव सोहम्मदेवाणं एवं चेव नवरं विजयवेजयंतजयंतापराजियदेवत्ते अतीता असंखेज्जा बद्धेल्लगा नत्थि, पुरक्खमा असंखिज्जा । सव्वट्ठसिद्धदेवत्ते अतीता नत्थि बद्धेल्लगा नत्थि पुरक्खमा असंखिज्जा । एवं जाव गेविज्जदेवाणं । विजयवेजयंतजयंतापराजियाणं देवाणं भंते ! नेरइयत्ते केवतिया दव्विंदिया अतीता ! गोयमा ! अणंता। केवइया बद्धेल्लगा नत्थि। केवइया पुरक्खमा णत्थि। एवं जाव जोइसियत्ते नवरं एसिं मणुस्सत्ते अतीता अणंता केवइया बद्धेल्लगा नत्थि, पुरक्खमा असंखेज्जा । एवं जाव गेवेज्जगदेवत्ते सट्ठाणे अतीता असंखेज्जा । केवइया बद्धेल्लगा असंखेज्जा । केवइया पुरक्खमा असंखेज्जा । सव्वट्ठसिद्धगदेवत्ते अतीता णत्थि, बद्धेल्लगा णत्थि, पुरक्खमा असंखेज्जा । सव्वट्ठसिद्धगदेवाणं भंते ! नेरइयत्ते केवइया अतीता ? गोयमा ! अणंता, केवइया बद्धेल्लगा णत्थि। केवइया पुरक्खमा नत्थि। दारं। कतिणं भंते! भाविंदिया पन्नत्ता ? गोयमा ! पंचभाविंदिया पन्नत्ता तंजहा–सोइंदिए जाव फासिंदिए । नेरइयाणं भंते ! कइ भाविंदिया पन्नत्ता ? गोयमा ! पंच भाविंदिया पन्नत्ता, तंजहा-सोइंदिए जाव फासिंदिए। एवं जस्स इंदिया तस्स तत्तिया भाणियव्वा । जाव वेमाणियाणं ॥ एगमेगस्स णं भंते ! नेरइयस्स केवइया भाविंदिया अतीता गोयमा ! अणंता । केवइया बद्धेल्लगा पंच। केवइया पुरक्खमा पंच वा दस वा एकारस वा संखेज्जा वा असंखेज्जा वा अणंता वा । एवं असुरकुमारस्स वि नवरं पुरक्खमा पंच वा दस वा छ वा संखेज्जा वा असंखेज्जा वा अणंता वा । एवं जाव थणियकुमारस्स । एवं पुढविकाइया आउकाइया वणस्सइकाइस्स वि। वेइंदिय-तेइंदिय चउरिंदियस्सवि । तेउकाइय-वाउकाइयस्स वि । एवं चेव नवरं पुरक्खमा छ वा सत्त वा संखिज्जा वा असंखिज्जा वा अणंता वा । पंचिंदियतिरिक्खज्जोणियस्स जाव ईसाणस्स जहा असुरकुमारस्स । नवरं मणुस्सस्स पुरक्खमा कस्सइ अत्थि कस्सइ नत्थि त्ति भाणियव्वं। सणंकुमार जाव गेवेज्जगस्स जहा नेरइयस्स। विजय-वेजयंत-जयंत-अपराजियदेवस्स अतीता। अणंता बद्धेल्लगा पंच, पुरक्खमा पंच वा दस वा पन्नरस वा संखिज्जा वा। सव्वट्ठसिद्धगदेवस्स अतीता अणंता, बद्धेल्लगा पंच, केवइया पुरक्खमा पंच। नेरइयाणं भंते ! केवइया भाविंदिया अतीता ?

गोयमा ! अणंता, केवइया बद्धेल्लगा असंखेज्जा, केवइया पुरक्खमा अणंता । एवं जहा दव्विंदियासु पोहत्तेणं दंमओ भणिओ तहा भाविंदिएसु पोहत्तेणं दंमओ भाणियव्वो । नवरं वणस्सइकाइयाणं बद्धेल्लगावि अणंता ॥ एगमेगस्स णं भंते ! नेरइयस्स नेरइयत्ते केवइया भाविंदिया अतीता ? गोयमा ! अणंता, बद्धेल्लगा पंच, पुरक्खमा कस्सइ अत्थि कस्सइ नत्थि जस्स अत्थि पंच वा दस वा पन्नरस वा संखेज्जा वा असंखेज्जा वा अणंता वा । एवं असुरकुमाराणं जाव थणियकुमाराणं । नवरं बद्धेल्लगा नत्थि । पुढविकाइयत्ते जाव बेइंदियत्ते जहा दव्विंदिया, तेइंदियत्ते तहेव नवरं पुरक्खमा तिन्नि वा छ वा नव वा संखेज्जा वा असंखेज्जा वा अणंता वा । एवं चउरिंदियत्ते वि नवरं पुरक्खमा चत्तारि वा अट्ठ वा बारस वा संखेज्जा वा असंखेज्जा वा अणंता वा । एवं ते चेव गमो चत्तारि नेयव्वो, जे चेव दव्विंदिएसु नवरं ततिय-गमो जाणियव्वो, जस्स जइ जे इंदिया ते पुरक्खमेसु मुणेयव्वा, चउत्थगमो जहेव दव्विंदिया जाव । सव्वट्ठसिद्धगदेवाणं सव्वट्ठसिद्धगदेवत्ते केवतिया भाविंदिया अतीता नत्थि । बद्धेल्लगा संखेज्जा पुरक्खमा नत्थित्ति ( एगमेगस्स णं भंते नेरइयस्स नेरइयत्ते इत्यादि कस्सइ अत्थि कस्सइ नत्थित्ति ) यो नरकादुद्वृत्तो भूयोऽपि नैरयिकत्वं नावाप्स्यति तस्य न भवन्ति यस्त्ववाप्स्यति तस्य सन्ति सोऽपि यद्येकवारमागामी ततोऽष्टौ द्वौ वारौ चेत्तर्हि षोडश यदि वा त्रीन् वारान् ततश्चतुर्विंशतिसंख्येयानि वारान् आगामी न संख्येयानीत्यादि मनुष्यत्वचिन्तायां कस्सइ अत्थि कस्सइ नत्थि इति न वक्तव्यं मनुष्यागमनस्यावश्यंभावित्वात् ततो जघन्यपदेऽष्टौ । उत्कर्षतोऽनन्तानीति वक्तव्यं विजयवेजयंत-जयंतापराजितचिन्तायामतीतानि द्रव्येन्द्रियाणि न सन्ति कस्मादिति चेदुच्यते इह विजयादिषु चतुर्षु गतो जीवो नियमात्तत उद्वृत्तो न जातुचिदपि नैरयिकादिपञ्चेन्द्रियतिर्यक्पर्यवसानेषु तथा व्यन्तरेषु ज्योतिष्केषु मध्ये समागमिष्यति तथा स्वाभाव्यान्मनुष्येषु सौधर्मादिषु वा गमिष्यति तत्रापि जघन्यत एकं द्वौ वा भवानुत्कर्षतः संख्येयान् न पुनरसंख्येयाननन्तान्वा ततो नैरयिकस्य विजयादित्वे अतीतानि द्रव्येन्द्रियाणि न सन्तीत्युक्तं पुरस्कृतान्यष्टौ षोडश वा विजयादिषु द्विरुत्पन्नस्यानन्तरभवे नियमतो मोक्षगमनात् । एवं यथा नैरयिकत्वादिषु चतुर्विंशतौ स्थानेषु चिन्ता कृता तथा असुरकुमारादीनामपि प्रत्येकं कर्त्तव्या । पूर्वोक्तभावनानुसारेण स्वयमुपयुज्य परिभावनीया भावेन्द्रियसूत्राण्यपि सुगमान्येव केवलं द्रव्येन्द्रियगतभावनानुसारेण तत्र भावना भावयितव्या इति । प्रज्ञा० १५ पद ।

तत्र यानि द्रव्येन्द्रियाणि तानि जीवानां पर्याप्तौ सत्यां भवन्ति यानि च भावेन्द्रियाणि तानि संसारिणां सर्वावस्थाभावीनीति–तं०

( २ ) इन्द्रियाणां बाहुल्य-पृथक्त्वप्रदेशावगाहना–स्तदुद्घातवेदना च ॥

तत्र बाहुल्यादि यथा—

सोइंदिए णं भंते ! केवइयं बाहल्लेणं पन्नत्ते ? गोयमा ! अंगुलस्स असंखेज्जइ भागे बाहल्लेणं पन्नत्ते एवं फासिंदिए (सो इंदिए णं भंते ! केवइयं बाहल्लेणं पन्नत्ते इत्यादि ) इदमपि पाठसिद्धं उक्तश्चायमर्थोऽन्यत्रापि " बाहल्लतो य सव्वाइं अंगुलअसंखेज्जभागमिति" अत्राह-यद्यङ्गुलस्यासंख्येयभागो बाहुल्यं स्पर्शनेन्द्रियस्य ततः कथं खड्गक्षुरिकाद्यभिघाते अन्तःशरीरस्य वेदनानुभवः तदेतदसमीचीनं सम्यग् वस्तुतत्त्वापरिज्ञानात्त्वगिन्द्रियस्य विषयः शीतादयः स्पर्शाः यथा चक्षुषो रूपं गन्धो घ्राणस्य स्पर्शनं च खड्गक्षुरिकाद्यभिघाते अन्तः शरीरस्य शीतादिस्पर्शवेदनमस्ति किन्तु केवलं दुःख वेदनं तच्च दुःखरूपवेदनामात्मा सकलेनापि शरीरेणानुभवति न केवलेन त्वगिन्द्रियेण ज्वरादिवेदनावत् ततो न कश्चिद्दोषः अथ शीतलपानकादिपाने अन्तः स्पर्शवेदनाप्यनुभूयते ततः कथंमत्र घटामटाट्यते इति उच्यते-इहत्वगिन्द्रियं सर्वत्रापि प्रदेशपर्यन्तवार्त्ति विद्यते तथा पूर्वसूरिभिः व्याख्यानात्तथा चाह मूलटीकाकारः सर्वप्रदेशपर्यन्तवर्त्तित्वाच्च त्वचोऽभ्यंतरेऽपि शुषिरस्योपरि त्वगिन्द्रियस्य भावादुपपद्यते ततः शीतस्पर्शवेदनानुभवः ॥ प्रज्ञा० १५ पद ( तदुद्घातवेदनापिलेशतोव्याख्याता)

( ३ ) इन्द्रियाणां पृथुत्वं तदवगाहना च ।

पृथुत्वविषयं सूत्रमाह ॥

सोइंदिए णं भंते ! केवइयं पोहत्तेणं पन्नत्ते ? गोयमा ! अंगुलस्स असंखेज्जइभागे पोहत्तेणं पन्नत्ते एवं चक्खिंदिए घाणिंदिए वि जिब्भिंदिएणं पुच्छा, गोयमा ! अंगुलपुहत्तेणं पन्नत्ते फासिंदिएणं पुच्छा, गोयमा ! सरीरपमाणमेत्तेणं पन्नत्ते ।

( पोहत्तेणं पन्नत्ते इत्यादि ) इह पृथुत्वं स्पर्शनेन्द्रियव्यतिरेकेण शेषाणामिन्द्रियाणामात्माङ्गुलेन प्रतिपत्तव्यं स्पर्शनेन्द्रियस्य उच्छ्रयांगुलेन । ननु देहाश्रितानीन्द्रियाणि देहश्चोच्छ्रयाङ्गुलेन प्रमीयते " उस्सेहपमाणतो मिणसु देहमितिवचनात् " ततः इन्द्रियाण्यप्युच्छ्रयाङ्गुलेन मातुं युज्यन्ते । नात्माङ्गुलेनेति । तदयुक्तम् जिह्वादीनामुच्छ्रयांगुलेन पृथुत्वं प्रमितमभ्युपगमे त्रिगव्यूतीनां मनुष्याणां रसाद्यव्यवहारोच्छेदप्रसक्तेस्तथाहि–त्रिगव्यूतादीनां मनुष्याणां षड्गव्यूतादीनां च हस्त्यादीनां स्वस्वशरीरानुसारितया अतिविशालानि मुखानि जिह्वाश्च ततो यद्युच्छ्रयाङ्गुलेन तेषां क्षुरप्राकारतयोक्तस्याभ्यन्तरनिर्वृत्त्यात्मकस्य जिह्वेन्द्रियस्याङ्गुलपृथुत्वलक्षणो विस्तारः परिगृह्यते तदा अल्पतया न तत्सर्वं जिह्वां व्याप्नुयात् सर्वव्यापित्वाभावे च योऽसौ बाहुल्येन सर्वात्मना जिह्वाया रसवेदनलक्षणप्रतिप्राणप्रसिद्धो व्यवहारः स व्यवच्छेदमाप्नुयादेवं घ्राणादिविषयेऽपि यथायोगं गन्धादिव्यवहारोच्छेदो भावनीयः तस्मादात्माङ्गुलेन जिह्वादीनां पृथुत्वमवसेयं नोच्छ्रयांगुलेनेति । आह च भाष्यकृत् "इन्दियमाणे विणय,भणियज्जं जंति गाउयाईणं । जिब्भिंदियाइमाणं, संववहारं विरुज्झेज्जा " अस्या अक्षरगमनिका तत उच्छ्रयांगुलमिन्द्रियमानेऽपि आस्तामिन्द्रियविषयपरिमाण चिन्तायामित्यपिशब्दार्थः। भजनीयं विकल्पनीयं क्वापि गृह्यते इत्यर्थः किमुक्तं भवति स्पर्शनेन्द्रियपृथुत्वपरिमाणचिन्तायां ग्राह्यमन्येन्द्रियपृथुत्वपरिमाणचिन्तायां न ग्राह्यं तेषामात्माङ्गुलेन परिमाणकारणादिति कय

मेतदवसेयमिति चेदत आह यद्यस्मात्सर्वेषामपीन्द्रियाणा मुत्सूयाङ्गुलेन परिणामकारणम् त्रिगव्यूतादीनामादिशब्दात् द्विगव्यूतादि परिग्रहो जिह्वेन्द्रियादिमानं सूत्रोक्तसंव्यवहारं विरुध्येत । यथानन्तरमेव भावितमिति ।

सम्प्रति कतिप्रदेशावगाहनेति प्रतिपादयति ।

सोइंदिए णं भंते ! कइ पदेसिए पमत्ते ? गोयमा ! अणंतपदेसिए पमत्ते एवं जाव फासिंदिए सोइंदिए णं भंते ! कइ पदेसोगाढे पएणत्ते ? गोयमा ! असंखेज्ज पदेसोगाढे एवं जाव फासिंदिए । ( टीका न गृहीता )

( ४ ) इन्द्रियाणामल्पबहुत्वं तद्गुणाश्च ।

एतेसि णं भंते ! सोइंदिय चक्खुइंदियघाणिंदियजिब्भिंदियफासिंदियाणं ओगाहणट्टयाए पदेसट्टयाए ओगाहणपदेसट्टयाए कयरे कयरेहिंतो अप्पा वा ४ गोयमा ! सव्वत्थोवे चक्खिंदिए ओगाहणट्टयाए । सोइंदिय ओगाहणट्टयाए संखिज्जगुणे । घाणिंदिय ओगाहणट्टयाए संखेज्जगुणे । जिब्भिंदियओगाहणट्टयाए संखिज्जगुणे । फासिंदियओगाहणट्टयाए असंखेज्जगुणे । पदेसट्टयाए सव्वत्थोवे । चक्खिंदिएपदेसट्टयाए सोइंदिए पदेसट्टयाए संखेज्जगुणे । घाणिंदिए पदेसट्टयाए संखेज्जगुणे । जिब्भिंदिएपदेसट्टयाए संखेज्जगुणे । फासिंदियपदेसट्टयाए असंखेज्जगुणे । ओगाहणपदेसट्टयाए सव्वत्थोवे । चक्खिंदिए ओगाहणपदेसट्टयाए सोइंदिए ओगाहणट्टयाए संखेज्जगुणे । घाणिंदिए ओगाहणट्टयाए संखेज्जगुणे । जिब्भिंदिए ओगाहणट्टयाए संखेज्जगुणे फासिंदिए ओगाहणट्टयाए असंखेज्जगुणे । फासिंदियस्स ओगाहणट्टयाएहिंतो चक्खिंदिएपदेसट्टयाए अणंतगुणे । सोइंदिए पदेसट्टयाए संखिज्जगुणे । घाणिंदिए पदेसट्टयाए संखिज्जगुणे । जिब्भिंदिए पदेसट्टयाए संखेज्जगुणे फासिंदिए पदेसट्टयाए असंखिज्जगुणे ।

(एएसि णं भंते ! इत्यादि) सर्वस्तोकं चक्षुरिन्द्रियमवगाहनार्थतया किमुक्तं भवति सर्वस्तोकप्रदेशावगाढं चक्षुरिन्द्रियं ततः श्रोत्रेन्द्रियमवगाहनार्थतया संख्येयगुणमतिप्रभूतेषु प्रदेशेषु तस्यावगाहनाभावात् ततोऽपि घ्राणेन्द्रियमवगाहनार्थतया संख्येयगुणमतिप्रभूतेषु प्रदेशेषु तस्यावगाहनोपपत्तेस्ततोऽपि जिह्वेन्द्रियमवगाहनार्थतया असंख्येयगुणं तस्याङ्गुलपृथक्त्वपरिमाणविस्तारात्मकत्वात् यस्तु दृश्यते पुस्तकेषु पाठः संख्येयगुण इति सोऽपि पाठो युक्त्युपपन्नत्वात्तथा हि–चक्षुरादीनि त्रीण्यपीन्द्रियाणि प्रत्येकमङ्गुलासंख्येयभागविस्तारात्मकानि जिह्वेन्द्रियं त्वङ्गुलासंख्येयपृथक्त्वविस्तारमतोऽसंख्येयगुणमेव तदुपपद्यते ननु संख्येयगुणमिति ततः स्पर्शनेन्द्रियमसंख्येयगुणम् । तथा ह्यङ्गुलपृथक्त्वप्रमाणविस्तारं जिह्वेन्द्रियंप्रथकत्वं द्विप्रभृत्या नवभ्यः स्पर्शनेन्द्रियं तु शरीरप्रमाणमिति सुमहदपि तदुपपद्यते संख्येयगुणमिति । यस्तु बहुषु पुस्तकेषु दृश्यते पाठोऽसंख्येयगुणमिति सोऽपपाठो युक्तिविकलत्वात् । तथा ह्यात्माङ्गुलप्रथक्त्वपरिमाणं जिह्वेन्द्रियं शरीरपरिमाणं तु स्पर्शनेन्द्रियशरीरमुत्कर्षतोऽपि लक्षयोजनप्रमाणं ततः कथमसंख्येयगुणमुपपद्यत इति । अनेनैव क्रमेण प्रदेशार्थतयापि सूत्रम् भावनीयम् । उक्तप्रकारेणैव चोभयसूत्रमपि ।

इदानीमिन्द्रियगुणविषयकं सूत्रमाह ।

सोइंदियस्सणं भंते ! केवतिया कक्खडगरुयगुणा पणत्ता ? गोयमा ! अणंता कक्खडगरुयगुणा प० एवं जाव फासिंदियस्स सोइंदियस्स णं भंते ! केवइया मउयलहुयगुणा पणत्ता ? गोयमा ! अणंता । एवं जाव फासिंदियस्स, एतेसि णं भंते ! सोइंदिय–चक्खिंदिय–घाणिंदिय–जिब्भिंदिय फासिंदियाणं कक्खडगरुयगुणाणं मउयलहुयगुणाणं कक्खडगरुयगुणमउयलहुगुणाणय कयरे कयरेहिंतो अप्पा वा ४ ? गोयमा ! सव्वत्थो वा चक्खिंदियस्स कक्खडगरुयगुणा । सोइंदियस्स कक्खडगरुयगुणा अणंतगुणा । घाणिंदियस्स कक्खडगुरुयगुणा अणंतगुणा । जिब्भिंदियस्स कक्खडगरुयगुणा अणंतगुणा । फासिंदियस्स कक्खडगरुयगुणा अणंतगुणा । मउयलहुयगुणाणं सव्वत्थो वा फासिंदियस्स मउयलहुयगुणा जब्भिंदियस्स मउयलहुयगुणा अणंतगुणे । घाणिंदियस्स मउयलहुयगुणा अणंतगुणा । सोइंदियस्स मउयलहुयगुणा अणंतगुणा । चक्खिंदियस्स मउयलहुयगुणा अणंत गुणा । कक्खडगरुयगुणाणं मउयलहुयगुणाण य सव्वत्थो वा चक्खिंदियस्स कक्खडगरुयगुणा । सोइंदियस्स कक्खडगरुयगुणा अणंतगुणा । घाणिंदियस्स कक्खडगरुयगुणा अणंतगुणा । जिब्भिंदियस्स कक्खडगरुयगुणा अणंतगुणा । फासिंदियस्स कक्खडगरुयगुणा अणंतगुणा । फासिंदियस्स कक्खडगरुयहिंतो तस्स चेव मउयलहुयगुणा अणंतगुणा । जिब्भिंदियस्स मउयलहुयगुणा अणंतगुणा । घाणिंदियस्स मउयलहुयगुणा अणंतगुणा । सोइंदियस्स मउयलहुयगुणा अणंतगुणा । चक्खिंदियस्स मउयलहुयगुणा अणंत गुणा ।

यानि कर्कशगुरुगुणादिसूत्राणि तानि पाठसिद्धानि नवरमल्पबहुत्वे चक्षुःश्रोत्रघ्राणजिह्वास्पर्शनेन्द्रियाणां यथोत्तरं कर्कशगुरुगुणा अमीषामेव च पश्चानुपूर्व्या यथापूर्वं मृदुलघुगुणा अनन्तगुणास्तथैव यथोत्तरं कर्कशतया यथापूर्वं चातिकोमलतयोपलभ्यमानत्वात् युगपदुभयाल्पबहुत्वसूत्रे फासिंदिय–कक्खडगरुयगुणेहिंतो तस्स चेव मउयलहुयगुणा अणंतगुणा इति सरीरेहिं कति पया एव, प्रदेशा उपरि वर्तिनः शीतातपादिसम्पर्कतः कर्कशा वर्तन्ते । अन्ये तु बहवः तदन्तर्गता अपि मृदव इति घटन्ते । स्पर्शनेन्द्रियस्य कर्कशगुणेभ्यो मृदुलघुगुणा अनन्तगुणा इति । प्रज्ञा० १५ पद० ॥

( ५ ) अमून्यत्र संस्थानादीन्यल्पबहुत्वपर्यन्तानि द्वाराणि नैरयिकादिकेषु चिन्तयति ॥

नेरइयाणं भंते ! कइ इंदिया पमत्ता ! गोयमा ! पंच इंदिया पमत्ता तंजहा सोइंदिए जाव फासिंदिए । नेरइया-

जाते द्वे शते त्र्यशीत्यधिके ( २८३ ) ते द्वाभ्यां गुण्येते जातानि पञ्च शतानि षट्षष्ट्यधिकानि ( ५६६ ) तान्येकषष्टिसहितानि क्रियन्ते जातानि षट् शतानि सप्तविंशत्यधिकानि (६२७) तेषां द्वाविंशेन शतेन भागो ह्रियते लब्धाः पञ्च पश्चादंशाड्डुद्धरन्ति सप्तदश तेषामर्द्धं लब्धाः सार्द्धा अष्टौ । आगतं पञ्च ऋतवोऽतिक्रान्ताः षष्ठस्य च ऋतोः प्रवर्तमानस्याष्टौ दिवसा गताः नवमो वर्तते । तथा युगे द्वितीये दीपोत्सवे केनापि पृष्टं क्रियन्त ऋतवोऽतिक्रान्ताः को वा संप्रति वर्तते । तत्रैतावति काले पर्वाण्यतिक्रान्तानि एकत्रिंशत्पञ्चदशभिर्गुण्यते जातानि चत्वारि शतानि पञ्चषष्ट्यधिकानि ( ४६५ ) अवमरात्राश्चैतावति काले व्यतिक्रामन्त्यष्टौ ततोऽष्टौ पात्यानि शेषाणि चत्वारि शतानि सप्तपञ्चाशताधिकानि ( ४५७ ) तानि द्विगुणीक्रियन्ते जातानि नवशतानि चतुर्दशोत्तराणि ( ९१४ ) तथैकषष्टिप्रक्षेपे जातानि नव शतानि पञ्चसप्तत्यधिकानि (९७५)एतेषां द्वाविंशत्यधिकशतेन भागहरणं, लब्धाः सप्त उपरिष्टादंशादुद्धरन्ति एकविंशतिशतं ( १२१ ) तस्य द्वाभ्यां भागे हृते लब्धाः षष्टिसार्द्धाः सप्तानां च ऋतूनां षड्भिर्भागे हृते लब्ध एककः । एक उपरिष्टान्न तिष्ठन्ति आगतमेकसंवत्सरोऽतिक्रान्तः । एकस्य च संवत्सरस्योपरि प्रथम ऋतुः प्रावृड्नामा निर्गतो द्वितीयस्य च षष्टिर्दिनान्यतिक्रान्तान्येकषष्टितमं वर्तते इति एवमन्यत्रापि भावना कार्या ।

सांप्रतममूनामृतूनां नामान्याह ॥

पाउस वासारत्ता, सरओ हेमंत वसंत गिम्हो य ।
एए खलु छप्पि उऊ, जिणवरदिट्ठा मए सिट्ठा ॥

प्रथम ऋतुः प्रावृड्नामा द्वितीया वर्षारात्रा तृतीया शरच्चतुर्थो हेमन्तः, पञ्चमो वसन्तः, षष्ठो ग्रीष्मः । एते षडपि ऋतवः एवं नामतो जिनवरदृष्टाः सर्वज्ञदृष्टा मया शिष्टाः कथिताः । साम्प्रतमेतेषामृतूनां मध्ये क ऋतुः कस्यां तिथौ समाप्तिमुपयातीति परस्य प्रश्नमाशङ्क्य तत्परिज्ञानाय करणमाह ।

इच्छा उऊ दुगुणितो, रूवोणगुणिओ उ पव्वाणि ।
तस्सद्धं होइ तिही, जत्तसमत्ता उऊ तीसं ॥

यस्मिन् ऋतौ ज्ञातुमिच्छा स ऋतुः ध्रियते तत्संख्या ध्रियते इत्यर्थः ततः स द्विगुणितः सन् रूपोनः क्रियते । ततः पुनरपि स द्वाभ्यां गुण्यते गुणयित्वा च प्रतिराश्य तद्द्विगुणितश्च सन् भवन्ति तावन्ति पर्वाणि द्रष्टव्यानि तस्य च प्रतिराशि तस्यार्द्धं क्रियते । ततश्चार्धं यावत् भवति तावत्यास्तिथयः प्रतिपत्तव्याः । यासु युगभाविनीस्त्रिंशदपि ऋतवः समाप्ताः समाप्तिमैयरुरिति करणगाथाक्षरार्थः । संप्रति करणभावना विधीयते । किल प्रथम ऋतुर्ज्ञातुमिष्टो यथा युगे कस्यां तिथौ प्रथमतः प्रावृड्लक्षण ऋतुः समाप्तिमुपयातीति । तत्र एकको ध्रियते स द्वाभ्यां गुण्यते जाते द्वे स्वरूपोनः क्रियते । जात एकक एवं स भूयोऽपि द्विगुण्यते द्वे रूपे प्रतिराश्यते तयोरर्द्धे जातमेकं रूपमागतं । युगादौ द्वे पर्वणी अतिक्रम्य प्रथमायां तिथौ प्रतिपदि प्रथमः प्रावृड्नामा ऋतुः समाप्तः । तथा द्वितीये ऋतौ ज्ञातुमिच्छति द्वौ स्थापितौ तथा द्वाभ्यां गुणने जाताश्चत्वारस्ते रूपोनाः क्रियन्ते । जातास्त्रयस्ते भूयो द्विगुण्यन्ते जाताः षट् ते प्रतिराश्यन्ते प्रतिराशीनां चार्द्धः क्रियते जातास्त्रय आगतं युगादितः षट् पर्वाण्यतिक्रम्य तृतीयायां तिथौ द्वितीय ऋतुः समाप्तिमुपागमत् । तथा तृतीये ऋतौ ज्ञातुमिच्छति त्रयो ध्रियन्ते । द्वाभ्यां गुण्यन्ते जाताः षट् ते रूपोनाः कृताः सन्तो जाताः पञ्च ते भूयो द्विगुण्यन्ते जाता दश ते प्रतिराशीनां चार्द्धे लब्धाः पञ्च । आगतं युगादित आरभ्य दश पर्वाण्यतिक्रम्य पञ्चम्यां तिथौ तृतीय ऋतुः समाप्तिमियाय । तथा षष्ठ ऋतौ ज्ञातुमिच्छति षट् स्थाप्यन्ते । ते द्वाभ्यां गुण्यन्ते जाता द्वादश रूपोनाः सन्तो जाता एकादश ते द्विगुण्यन्ते । जाता द्वाविंशतिः । सा प्रतिराशि तयोश्चार्द्धं क्रियते । जाता एकादश । आगतं युगादितो द्वाविंशतिपर्वाण्यतिक्रम्य एकादश्यां तिथौ षष्ठ ऋतुः समाप्नोति । तथा युगे नवमे ऋतौ ज्ञातुमिच्छता नव स्थाप्यन्ते ते द्वाभ्यां गुण्यन्ते जाता अष्टादश ते रूपोनाः क्रियन्ते । जाताः सप्तदश ते भूयो द्विगुण्यन्ते जाताश्चतुस्त्रिंशत् । संप्रतिराश्यते तस्या अर्द्धं क्रियते जाताः सप्तदश आगतं युगादितश्चतुस्त्रिंशत्पर्वाण्यतिक्रम्य द्वितीये संवत्सरे पौषमासे शुक्लपक्षे द्वितीयस्यां तिथौ नवम ऋतुः परिसमाप्तिं गच्छति । तथा त्रिंशत्तमे ऋतौ जिज्ञासति त्रिंशद् ध्रियते सार्द्धिर्गुण्यते जाता षष्टिः सा रूपोना क्रियते जाता एकोनषष्टिः सा भूयो द्वाभ्यां गुण्यते जातमष्टादशोत्तरं शतं तत् प्रतिराश्यते तस्यार्द्धं क्रियते जाता एकोनषष्टिः । आगतं युगादितोऽष्टादशोत्तरपर्वाण्यतिक्रम्य एकोनषष्टितमायां तिथौ । किमुक्तं भवति । पञ्चमे संवत्सरे प्रथमे आषाढमासे शुक्लपक्षे चतुर्दश्यां त्रिंशत्तम ऋतुः समाप्तिमुपायासीत् व्यवहारतः प्रथमाषाढपर्यन्त इत्यर्थः संप्रति वर्षाकाले शीतकाले ग्रीष्मकालेषु चतुर्मासप्रमाणेषु यस्मिन् पर्वणि कर्ममासापेक्षयाऽधिकोहोरात्रः सूर्यर्तुपरिसमाप्तौ भवति तत्प्रतिपादयन्नाह ॥

वइयम्मि उ कायत्त, अतिरत्तं सत्तम पव्वम्मि ।
वासहिमागिम्हकाले, चाउम्मासे विहीयत्ते ॥

वर्षाहिमग्रीष्मकालेषु प्रत्येकं चतुर्मासेषु चतुर्मासप्रमाणेषु पृथक् अतिरात्रा अधिका अहोरात्रा विधीयन्ते तद्यथा एकातृतीयपर्वण्यपरा सहिमपर्वणि । इयमत्र भावना । सूर्यर्तुचिन्तायां कर्ममासापेक्षया वर्षाकाले श्रावणादौ तृतीये पर्वणि गते कोऽधिकोऽहोरात्रो द्वितीयः सप्तमे पर्वणि हेमन्तकालेऽपि एकस्तृतीये पर्वणि द्वितीयः सप्तमे ग्रीष्मकालेऽपि एकस्तृतीये पर्वणि द्वितीयः सप्तमे । अत्राह पूर्वपूर्वावमरात्रसहितमुक्तम् । इदानीं त्वधिकरात्रोपेतमिति किमत्र एवकरणमत आह ॥

उउसहियं अतिरत्तं, जुगसहियं होइ अउमरत्तं तु ।
रविसहियं अइरत्तं, सहितहियं अमरत्तं तु ॥

इह पर्वऋतुसहितं विवक्षते तदा विवक्षितं तृतीयादिकं वर्षाकालादिसम्बन्धि अतिरात्रमधिकरात्रम् । सूर्यर्तुपरिसमाप्तिचिन्तायां तस्मिन् विवक्षिते तृतीयादौ पर्वणि कर्ममासापेक्षयाधिकोऽहोरात्रो भवति । तथाहि कर्ममासस्त्रिंशता दिनैः सूर्यमासस्त्रिंशता मासद्वयात्मकश्च ऋतुः । ततः सूर्यर्तुपरिसमाप्तौ कर्ममासापेक्षयैकोधिकोहोरात्रो भवतीति । तथा युगं चन्द्राभिवर्द्धितरूपं संवत्सरपञ्चकात्मकं च पञ्चापि संवत्सराश्चन्द्रमासापेक्षया ततो यदि पर्वयुगसहितं चन्द्रमासोपेतं विवक्ष्यते तदा विवक्षितं पर्वतृतीयादिकं वर्षाकालादिसम्बन्धि अवमरात्रोपेतं भवति कर्ममासापेक्षया तस्मिन् तृतीयादौ पर्वणि नियमादेको ऽहोरात्रः पततीति भावः । एतदेवाह

( रविसाहियमित्यादि ) रविसहितमिति रात्रं किमुक्तं भवति । रविमासनिपाद्यमानर्त्तुचिन्तायां तस्मिन् तृतीयादौ वर्षाकालादिसंबन्धिनि पर्वणि तत्र सूर्यर्तुपरिसमाप्तौ कर्ममासापेक्षया एकैकोऽधिकोऽहोरात्रः प्राप्यते इति शशिसहितमवमरात्रं चन्द्रनिपादितास्तिथीरधिकृत्य कर्ममासापेक्षया विवक्षितं तृतीयादि पर्वहीनरात्रं भवतीत्यर्थः । सम्प्रति येषु मासेषु सूर्यर्तुपरिसमाप्तिचिन्तायां पूर्वपूर्वसूर्यर्तुगततिथ्यपेक्षयाधिकोऽहोरात्रः परिवर्त्तते तान् प्रतिपादयति । आसाढ बहुलपक्षे तथा भाद्रपदमासे बहुलपक्षे एवं कार्त्तिके पौषे फाल्गुने वैशाखे चातिरात्रं बोद्धव्यम् । पूर्वपूर्वसूर्यर्तुगततिथ्यपेक्षया एतेषु षट्सु मासेषु अधिकोऽहोरात्रो ज्ञातव्यो न शेषेषु मासेषु । एतदेव सविशेषमाह ।

एक्कंतरिया मासा, तिही य जासु ता उऊ समप्पंति ।
असाढाई मासा, भद्दवयाइ तिहि सव्वा ॥

इह सूर्यर्तुचिन्तायां मासा आषाढादयो द्रष्टव्याः आषाढमासादारभ्य ऋतूनां प्रथमतः प्रवर्त्तमानत्वात् तिथयः सर्वा अपि भाद्रपदादिषु मासेषु प्रथमादीनामृतूनां परिसमाप्तत्वात् । तत्र येषु मासेषु यासु वा तिथिषु ऋतवः प्रावृडादयः परिसमाप्नुवन्ति ते आषाढादयो मासास्ताश्च तिथयो भाद्रपदादिमासानुगताः सर्वा अपि एकान्तरिता वेदितव्याः । तथा हि प्रथम ऋतुः भाद्रपदे मासि समाप्तिमुपैति तत एको मासश्च युगलक्षणमपान्तराले उक्तः । कार्त्तिके मासे द्वितीय ऋतुः परिसमाप्तिमियर्त्ति । एवं तृतीयः पौषमासे, चतुर्थः फाल्गुने, पञ्चमो वैशाखे, षष्ठः आषाढे, एवं शेषा अपि ऋतवः षट्सु मासेष्वेकान्तरेषु परिसमाप्तिमश्नुवन्ति नाशेषेषु मासेषु । तथा प्रथम ऋतुः प्रतिपदि समाप्तिमेति द्वितीयः तृतीयस्यां, तृतीयः पञ्चम्यां,चतुर्थःसप्तम्यां पञ्चमो नवम्यां, षष्ठः एकादश्यां, सप्तमस्त्रयोदश्यामष्टमः पञ्चदश्याम् एते सर्वेऽपि ऋतवो बहुलपक्षे ततो नवम ऋतुः शुक्लपक्षे द्वितीयायां, दशमश्चतुर्थ्यामेकादशः षष्ठ्यां, द्वादशोऽष्टम्यां, त्रयोदशो दशम्यां, चतुर्दशो द्वादश्यां पञ्चदशश्चतुर्दश्याम् एते सप्त ऋतवः शुक्लपक्षे । एते ऋतवः शुक्लपक्षे भाविनः । पञ्चदशापि ऋतवो युगस्यार्द्धे भवन्ति । तत एतत्क्रमेणैव शेषा अपि पञ्चदश ऋतवो द्वितीये युगस्यार्द्धे भवन्ति । तद्यथा-षोडशः ऋतुर्बहुलपक्षे प्रतिपदि, सप्तदशः तृतीयाया-मष्टादशः पञ्चम्यामेकोनविंशतितमः सप्तम्यां, विंशतितमो, नवम्या,-मेकविंशतितम एकादश्यां, द्वाविंशतितमः त्रयोदश्यां त्रयोविंशतितमः पञ्चदश्यामेते षोडशादयस्त्रयोविंशतिपर्यन्ताः । अष्टौ बहुलप क्ष ऋतवः शुक्लपक्षे द्वितीयायां चतुर्विंशतितमः पञ्चविंशतितमश्चतुर्थ्यं, षड्विंशत्तमः षष्ठ्यां, सप्तविंशतितमोऽष्टम्याम् अष्टाविंशतितमो दशम्या, मेकोनत्रिंशत्तमो द्वादश्यां त्रिंशत्तमश्चतुर्दश्यामेवमेते सर्वेऽपि ऋतवो मासेष्वेकान्तरितेषु तिथिष्वपि चैकान्तरितासु भवन्ति । सांप्रतमेतेषु ऋतुषु चन्द्रनक्षत्रयोगं च प्रतिपादयिषुस्तद्विषयं करणमाह ।

तित्तिसया पंचहिगा, अंसा छेओ सयं च चोत्तीसं ।
एगाइ वि उत्तरगुणा, धुवरासीए स बोधव्वा ॥

त्रीणि शतानि पञ्चोत्तराणि अंशा विभागाः किंरूपच्छेदकृता एते इत्याह च्छेदशतं चतुस्त्रिंशं किमुक्तं भवति चतुस्त्रिंशदधिकशतच्छेदेन छिन्नं यदहोरात्रं तस्य सत्कानि त्रीणि शतानि पञ्चोत्तराण्यंशानामिति अयं ध्रुवराशिर्बोद्धव्यः । एष च ध्रुवराशिरेकादियुत्तरगुण ईप्सितेन ऋतुना एकादिना त्रिंशत्पर्यन्तेनाद्युत्तरेण एकस्मादारभ्य तत ऊर्ध्वमुत्तरवृद्धेन गुण्यतेति गुणो गुणितः कर्त्तव्यस्ततोऽस्मात् शोधकानि शोधयितव्यानीति प्रतिपादनार्थमाह ।

सत्त ट्ठे अद्धखेत्ते, दुगातिगगुणियाममेदिवड्ढखित्ते ।
अट्ठासीई पुस्से -सोज्झा अभिईम्मि बायाला ॥

इह यत्र अर्द्धक्षेत्रं तत्र सप्तषष्टिं शोध्यानि च सप्तषष्टिः समे समक्षेत्रे द्विगुणिता सती शोध्या एकोत्तरे द्वे शते तत्र शोध्ये इति भावः । इह सूर्यस्य पुष्यादीनि नक्षत्राणि शोध्यानि चन्द्रस्याभिजिदादीनि तत्र सूर्यनक्षत्रयोगचिन्तायां पुष्ये पुष्यविषया अष्टाशीतिः शोध्यानि चन्द्रनक्षत्रयोगचिन्तायामभिजिति द्विचत्वारिंशत् ।

एयाणि सोहइत्ता, जं सेसं तु होइ नक्खत्तं ।
रविसोमाणं नियमा, तीसाए उउसमत्तीसु ॥

एतानि अनन्तरोदितानि अर्धक्षेत्रद्व्यर्धक्षेत्रविषयाणि शोधकानि शोधयित्वा यदुक्तप्रकारेण नक्षत्रं शेषं भवति सर्वात्मना शुद्धिमश्नुत तत्र क्षेत्रं रविसोमयोः सूर्यस्य चन्द्रमसश्च नियमाद् ज्ञातव्यम् । क इत्याह त्रिंशत्यपि ऋतुसमाप्तिषु एवं करणगाथात्रयाक्षरार्थः । संप्रति करणभावना क्रियत तत्र प्रथम ऋतुः कस्मिंश्चन्द्रनक्षत्रे समाप्तिमुपैतीति जिज्ञासायामनन्तरोदितः पञ्चोत्तरत्रिशतप्रमाणो ध्रुवराशिर्ध्रियते स एकोनगुणितस्तदेव भवतीति ततोऽनेनध्रुवराशिर्जातस्तत्राभिजितो द्वाचत्वारिंशत् शुद्धा स्थिते पश्चाद् द्वे शते त्रिषष्ट्यधिके(२६३) ततश्चतुस्त्रिंशेन शतेन श्रवणः शुद्धः । शेषजातमेकोनत्रिंशच्छतं ( १२९ ) तेन च धनिष्ठा शुद्ध्यति तत आगतमेकोनत्रिंशं शतं चतुस्त्रिंशदधिकशतं भागानाम् धनिष्ठासत्कमवगाह्य चन्द्रः प्रथमं सूर्यर्त्तुं समापयति । यदि द्वितीयसूर्यर्त्तुजिज्ञासा तदा स ध्रुवराशिः पञ्चोत्तरशतत्रयप्रमाणस्त्रिभिर्गुण्यते जातानि नव शतानि पञ्चदशोत्तराणि (९१५) तत्राभिजितो द्वाचत्वारिंशत् शुद्धा स्थितानि शेषाण्यष्टौ शतानि त्रिसप्तत्यधिकानि (८७३) ततश्चतुस्त्रिंशेन शतेन श्रवणशुद्धिमुपगत स्थितानि शेषाणि सप्त शतानि एकोनचत्वारिंशदधिकानि ( ७३९ ) ततोऽपि चतुस्त्रिंशेन शतेन धनिष्ठा शुद्धा जातानि षट् शतानि पञ्चोत्तराणि ( ६०५ ) ततोऽपि सप्तषष्ट्या शतभिषक् शुद्धा स्थितानि पश्चात्पञ्च शतानि अष्टत्रिंशदधिकानि ( ५३८ ) तेभ्योऽपि चतुस्त्रिंशेन शतेन पूर्वभद्रपदा शुद्धा स्थितानि चत्वारि शतानि चतुरधिकानि ( ४०४ ) ततो द्वाभ्यां शताभ्यामेकोत्तराभ्यामुत्तरभद्रपदा शुद्धा स्थिते शेषे त्रिकोनसप्ततिचतुस्त्रिंशदधिकं शतं भागानामवगाह्य द्वितीयं सूर्यर्त्तुं चन्द्रः परिसमापयति । एवं शेषेष्वपि ऋतुषु भावनीयम् । संप्रति सूर्यनक्षत्रयोगभावना क्रियते स एव पञ्चोत्तरशतप्रमाणो ध्रुवराशिः प्रथमसूर्यर्त्तुजिज्ञासायामेकेन गुण्यते एकेन च गुणितं तावानेव जातस्तत्र पुष्यसत्काष्टाशीती शुद्धा स्थिते शेषे द्वे शते सप्तदशोत्तरे ( २१७ ) ततः सप्तषष्ट्या अश्लेषा शुद्धा स्थितं शेषं सार्द्धशतं ( १५० ) ततोऽपि चतुस्त्रिंशच्छतेन मघा शुद्धा स्थिताः षोडश आगतं पूर्वाफाल्गुनीनक्षत्रस्य षोडश चतुस्त्रिंशदधिकानि शतभागानवगाह्य सूर्यः प्रथमर्त्तुं समापयति । तथा द्वितीयसूर्यर्त्तुजिज्ञासायांध्रुवराशिः पञ्चोत्तरशत-

त्रयप्रमाणस्त्रिभिर्गुण्यते जातानि नव शतानि पञ्चदशोत्तराणि ( ९१५ ) ततोऽष्टाशीत्या पुष्यः शुद्धिमगमत् स्थितानि पश्चादष्टौ शतानि सप्तविंशत्यधिकानि ( ८२७ ) तेभ्यः सप्तषष्ट्या अश्लेषा शुद्धा स्थितानि शेषाणि षट् शतानि षष्टिंशत्यधिकानि ( ६२६ ) तेभ्यश्चतुस्त्रिंशदधिकेन शतेन पूर्वफाल्गुनी शुद्धा स्थितानि पश्चाच्चत्वारि शतानि द्विनवत्यधिकानि ( ४९२ ) ततोऽपि द्वाभ्यां शताभ्यामेकोत्तराभ्यामुत्तरफाल्गुनी शुद्धा स्थिते द्वे शते एकोनवत्यधिके (२८९) ततोऽपि चतुस्त्रिंशेन शतेन हस्तः शुद्धः स्थितं पश्चात्सप्तपञ्चाशदधिकं शतं ( १५७ ) ततोऽपि चतुस्त्रिंशेन शतेन चित्रा शुद्धा स्थिता पश्चात्त्रयोविंशतिः आगतं स्वातेस्त्रयोविंशति चतुस्त्रिंशदधिकशतं भागानामवगाह्य सूर्यो द्वितीयं ऋतुं परिसमापयति। एवं शेषेष्वपि ऋतुषु भावनीयम् तदेवमुक्ताः सूर्यर्त्तवः॥

सम्प्रति चन्द्रर्तुप्रतिपादनार्थमाह

चत्तारि उ सयाइं वि, उत्तराइं जुगम्मि चंदस्स ।
तेसिं पि य करणविहिं, वोच्छामि अहाणुपुव्वीए ॥

इह एकस्मिन् नक्षत्रपर्याये षट् ऋतवो भवन्ति यथा सूर्यस्य चन्द्रस्यापि च नक्षत्रपर्याया युगसप्तषष्टिसंख्यास्ततः सप्तषष्टिः षड्भिर्गुण्यते जातानि चत्वारि शतानि द्व्युत्तराणि एतावन्तो युगे चन्द्रस्य ऋतवो भवन्ति तेषामपि चन्द्रर्तूनां परिज्ञानाय करणविधिं यथानुपूर्व्या क्रमेण वक्ष्यामि। तत्र प्रतिज्ञातमेव निर्वाहयितुकामः प्रथमतश्चन्द्रर्तुपरिमाणमाह

चंदस्स उ परिमाणं, चत्तारि य केवला अहोरत्ता ।
सत्ततीसं अंसा, सत्तसट्ठिकरणछेएण ॥

चन्द्रस्य चन्द्रसंबन्धिन ऋतोः परिमाणं चत्वारः केवलाः परिपूर्णा अहोरात्राः सप्तषष्टिच्छेदकृतेन च च्छेदेन सप्तत्रिंशदंशाः। किमुक्तं भवति सप्तत्रिंशत्सप्तषष्टिभागा दिनस्य तथा ह्येकस्मिन् नक्षत्रपर्याये षट् ऋतव इति प्रागेव भावितम्। नक्षत्रपर्यायचन्द्रविषयस्य परिमाणं सप्तविंशतिरहोरात्र एकस्य चाहोरात्रस्य एकविंशतिः सप्तषष्टिभागाः तत्राहोरात्राणां षड्भिर्भागे हृते लब्धानि चत्वारि दिनानि, त्रीणि शेषाणि तिष्ठन्ति तानि सप्तषष्टिभागकरणार्थं सप्तषष्ट्या गुण्यन्ते जाते द्वे शते एकोत्तरे ( २०१ ) तत उपरितना एकविंशतिः सप्तषष्टिभागाः प्रक्षिप्यन्ते जाते द्वे शते द्वाविंशे ( २२२ ) तेषां षड्भिर्भागे हृते लब्धाः सप्तत्रिंशत्सप्तषष्टिभागा इति॥

संप्रति चन्द्रऋतोरानयनार्थं करणमाह ॥

चंदं उउ आणयणे, पव्वरस संगुणं नियमा ।
तिहि संखित्तं संतं, बावट्ठी भागपरिहीणं ॥
चोत्तीससयाभिहियं, पंचुत्तरतिसयं संजयं वि भए ।
छहि उदमूताराहियं, मणाहि लद्धा उऊ होंति ॥

विवक्षितस्य चन्द्रर्त्तोरानयने कर्तव्ये युगादितोऽयनपर्वसंख्यानमतिक्रान्तं तत्पञ्चदशगुणं नियमात् कर्तव्यं ततस्तिथिसंक्षिप्तमिति यास्तिथयः पर्वणामुपरि विवक्षितान् दिनान् प्रागतिक्रान्तास्तास्तत्र संक्षिप्यन्ते ततो द्वाषष्टिभागे द्वाषष्टिभागनिष्पन्नेऽवमरात्रे परिहीनं विधेयं तत एवं भूतं सच्चतुस्त्रिंशेन शतेनाभिहितं कर्तव्यं तदनन्तरं च पञ्चोत्तरैस्त्रिभिः शतैः संयुक्तं सत् षड्भिर्दशोत्तरैः शतैर्विभजेत विभक्ते च सति ये लब्धा अङ्कास्ते ऋतवो भवन्ति ज्ञातव्याः। एष करणगाथाक्षरार्थः। संप्रति करणभावना क्रियते। कोऽपि पृच्छति युगादितः प्रथमे पर्वणि पञ्चम्यां कश्चन्द्रर्तुर्वर्तते तत्रैकमपि पर्व परिपूर्णमत्र नाद्याप्यतीतमिति युगादितो दिवसाद्रूपेना ध्रियन्ते ते चात्र चत्वारस्ते चतुस्त्रिंशेन शतेन गुण्यन्ते जातानि पञ्च शतानि षट्त्रिंशदधिकानि ( ५३६ ) तत्र त्रयस्त्रीणि शतानि पञ्चोत्तराणि प्रक्षिप्यन्ते जातान्यष्टौ शतान्येकचत्वारिंशदधिकानि ( ८४१ ) तेषां षड्भिः शतैर्दशोत्तरैर्भागो ह्रियते लब्धः प्रथम ऋतुः अंशा उद्धरन्ति द्वे शते एकत्रिंशदधिके ( २३१ ) तेषां चतुस्त्रिंशेन शतेन भागहरणं लब्ध एकः अंशानां चतुस्त्रिंशेन शतेन भागे हृते यल्लभ्यते ते दिवसा ज्ञातव्याः शेषास्त्वंशा उद्धरन्ति सप्तनवतिस्तेषां द्विकेनापवर्तनायां लब्धाः सार्द्धा अष्टाचत्वारिंशत् सप्तषष्टिभागा आगतं युगादितः पञ्चम्यां प्रथमः प्रावृड्लक्षण ऋतुरतिक्रान्तो द्वितीयस्य एको दिवसो गतो द्वितीयस्य च सार्द्धा अष्टचत्वारिंशत् सप्तषष्टिभागाः। तथा कोऽपि पृच्छति युगादितो द्वितीये पर्वणि एकादश्यां कश्चन्द्रर्तुरिति तत्रैकं पर्वातिक्रान्तमिति एको ध्रियते स पञ्चदशभिर्गुण्यते जाताः पञ्चदश एकादश्यां किल पृष्टमिति तस्याः पाश्चात्या दश ये दिवसास्ते प्रक्षिप्यन्ते जाता पञ्चविंशतिः सा चतुस्त्रिंशेन शतेन गुण्यते जातानि त्रयस्त्रिंशत् शतानि पञ्चाशदधिकानि ( ३३५० ) तेषु त्रीणि शतानि पञ्चोत्तराणि प्रक्षिप्यन्ते जातानि षट्त्रिंशत् शतानि पञ्चपञ्चाशदधिकानि ( ३६५५ ) तेषां षड्भिः शतैर्दशोत्तरैर्भागो ह्रियते लब्धाः पञ्च अंशा अवतिष्ठन्ते षट् शतानि पञ्चोत्तराणि ( ६०५ ) तेषां चतुस्त्रिंशेन शतेन भागे हृते लब्धाश्चत्वारो दिवसाः ( ४ ) शेषास्त्वंशा उद्धरन्ति एकोनसप्ततिः ( ६९ ) तस्या द्विकेनापवर्तनायां लब्धाः सार्द्धाश्चतुस्त्रिंशत्सप्तषष्टिभागाः आगतं पञ्च ऋतवोऽतिक्रान्ताः षष्ठस्य च ऋतोश्चत्वारो दिवसाः पञ्चमस्य च दिवसस्य सार्द्धाश्चतुश्चत्वारिंशत्सप्तषष्टिभागाः। एवमन्यस्मिन्नपि दिवसे चन्द्रर्तुरवगन्तव्यः।

संप्रति चन्द्रर्तुपरिसमाप्ति दिवसानयनाय करणमाह।

रविधुवरासी पुव्वंच, गुणिय भयएतणेण छेएण ।
जं लद्धं सो दिवसो, सोमस्स उऊ समत्तीए ।

इह यः पूर्वसूर्यर्तुप्रतिपादने ध्रुवराशिरभिहतः पञ्चोत्तराणि त्रीणि शतानि चतुस्त्रिंशद्भागास्तस्मिन् पूर्वगुणिते ईप्सितेन एकादिना द्व्युत्तरचतुः शततमपर्यन्तं न द्व्युत्तरवृद्धेन एकस्मादारभ्य तत ऊर्ध्वं स्वन्तरवृद्ध्या प्रवर्द्धमानेन गुणितः स्वकेनात्मीयेन च्छेदेन चतुस्त्रिंशदधिकशतरूपेण भक्ते सति यल्लब्धं सोमस्य ऋतुसमाप्तौ दिवसो ज्ञातव्यः। यथा केनापि पृष्टं चन्द्रस्य ऋतुः प्रथमः कस्यां तिथौ परिसमाप्तिं गत इति तत्र ध्रुवराशिः पञ्चोत्तरशतत्रयप्रमाणो ध्रियते ( ३०५ ) स एकेन गुण्यते जातस्तावानेव ध्रुवराशिस्ततः स्वकीयेन च्छेदेन चतुस्त्रिंशदधिकशतप्रमाणेन भागो ह्रियते लब्धौ द्वौ शेषस्तिष्ठति सप्तत्रिंशद् द्विकेनापवर्तना क्रियते जाताः सार्द्धा अष्टादश। आगतं युगादितो द्वौ दिवसावतिक्रम्य तृतीये दिवसेऽष्टादशसु सप्तषष्टिभागेषु प्रथमश्चन्द्रर्तुः परिसमाप्तिं गच्छति द्वितीयचन्द्रर्तुपरिसमाप्तिजिज्ञासायां स ध्रुवराशिः पञ्चोत्तरशतत्रयप्रमाणस्त्रिभिर्गुण्यते जातानि पञ्चदशोत्तराणि नव शतानि ( ९१५ ) तेषां चतुस्त्रिंशदधिकेन शतेन भागो ह्रियते लब्धाः षट् शेषमुद्धरति एकादशोत्तरशतं तस्य द्विके-

नापवर्तनायां लब्धाः सार्द्धाः पञ्चपञ्चाशत्सप्तषष्टिभागाः आगतं युगादितः षट्सु दिवसेष्वतिक्रान्तेषु सप्तमस्य च दिवसस्य सार्द्धेषु पञ्चपञ्चाशत्संख्येषु भागेषु द्वितीयश्चन्द्रर्तुः परिसमाप्तिं गच्छति द्व्युत्तरचतुःशततमजिज्ञासायां स ध्रुवराशिः पञ्चोत्तरशतत्रयप्रमाणोऽष्टभिः शतैस्त्र्युत्तरैर्गुण्यते द्व्युत्तरवृद्ध्या हि द्व्युत्तरचतुःशततमस्य त्र्युत्तराष्टशतप्रमाण एव राशिर्भवति । तथाहि यस्य एकस्माद्र्ध्वं द्व्युत्तरवृद्ध्या राशिश्चिन्त्यते तस्य स द्विगुणो रूपोनो भवति तथा द्विकस्य त्रीणि त्रिकस्य पञ्च चतुष्कस्य सप्त अत्रापि च द्व्युत्तरचतुःशततमप्रमाणस्य राशेर्द्व्युत्तरवृद्ध्या राशिश्चिन्त्यते ततोऽष्टौ शतानि त्र्युत्तराणि भवन्ति एवंभूतेन च राशिना गुणने जाते द्वे लक्षे चतुश्चत्वारिंशत्सहस्राणि नव शतानि पञ्चदशोत्तराणि ( २४४९१५ ) तेषां चतुस्त्रिंशच्छतेन भागो ह्रियते लब्धानि अष्टादश शतानि सप्तविंशत्यधिकानि ( १८२७ ) अंशाश्चोद्वरन्ति सप्तनवतिस्तस्या द्विकेनापवर्तना लब्धाः सार्द्धा अष्टाचत्वारिंशत्सप्तषष्टिभागाः आगतं युगादितोऽष्टादशसु दिवसशतेषु सप्तविंशत्यधिकेष्वतिक्रान्तेषु ततः परस्परसार्द्धेष्वष्टाचत्वारिंशत्संख्यासु सप्तषष्टिभागेषु द्व्युत्तरचतुःशततमस्य चन्द्रर्तोः परिसमाप्तिरिति ।

संप्रति चन्द्रर्तुषु नक्षत्रयोगपरिज्ञानाय करणमाह ॥

सो चेव धुवो रासी, गुणरासी वि य हवंति चेव ।
नक्खत्तं सोहणिय, परिजाण पुव्वभणियाणि ॥

युगे चन्द्रर्तौ नक्षत्रयोगपरिज्ञानार्थं स एव पञ्चोत्तरशतत्रयप्रमाणो ध्रुवराशिर्वेदितव्यः गुणराशयोऽपि गुणकारराशयोऽपि एकाद्युत्तरवृद्ध्या त एव भवन्ति ज्ञातव्या ये पूर्वमुद्दिष्टाः नक्षत्रशोधनान्यपि च परिजानीहि । तान्येव यानि पूर्वं भणितानि द्विचत्वारिंशत्प्रभृतीनि ततः पूर्वकरणे विवक्षिते चन्द्रर्तौ नक्षत्रयोग इति जिज्ञासायां स एव पञ्चोत्तरशतत्रयप्रमाणो ध्रुवराशिः ध्रियते ( ३०५ ) स एकेन गुण्यते एकेन गुणितः सन् स तावानेव भवति ततो जातो द्वाचत्वारिंशत् शुद्धा शेषे तिष्ठतो द्वे शते त्रिषष्ट्यधिके ( २६३ ) ततश्चतुस्त्रिंशेन शतेन श्रवणः शुद्धः स्थितं पश्चादेकोनत्रिंशच्छतं (१२९) तस्य द्विकेनापवर्तना क्रियते जाताः सार्द्धाश्चतुःषष्टिभागाः आगतं धनिष्ठायाः सार्द्धमेकेन चतुःषष्टिभागानवगाह्य चन्द्रः प्रथमं स्वऋतुं परिसमापयति द्वितीयश्चन्द्रर्तुजिज्ञासायां स एव ध्रुवराशिः पञ्चोत्तरशतत्रयप्रमाणस्त्रिभिर्गुण्यते जातानि नव शतानि पञ्चदशोत्तराणि ( ९१५ ) तत्राभिजितो द्वाचत्वारिंशत् शुद्धा स्थितानि शेषाण्यष्टौ शतानि त्रिसप्तत्यधिकानि (८७३) ततश्चतुस्त्रिंशेन शतेन श्रवणः शुद्धमुपगतः स्थितानि शेषाणि सप्तशतानि एकोनचत्वारिंशदधिकानि (७३९) ततोऽपि चतुस्त्रिंशेन शतेन धनिष्ठा शुद्धा जातानि षट्शतानि पञ्चोत्तराणि (६०५) ततोऽपि सप्तषष्ट्या शतभिषक् शुद्धा स्थितानि पश्चात्पञ्च शतानि अष्टात्रिंशदधिकानि ( ५३८ ) एतेभ्योऽपि चतुस्त्रिंशेन शतेन पूर्वभद्रपदा शुद्धा स्थितानि चत्वारि शतानि चतुरधिकानि ( ४०४ ) तेभ्योऽपि द्वाभ्यां शताभ्यामेकोत्तराभ्यामुत्तरभद्रपदा शुद्धा स्थिते शेषे द्वे शते त्र्युत्तरे ( २०३ ) तान्यमपि भागानवगाह्य द्वितीयं स्वं ऋतुं चन्द्रः परिष्ठापयति । तथा द्व्युत्तरचतुःशततमचन्द्रर्तुजिज्ञासायां ध्रुवराशिः पञ्चोत्तरशतत्रयप्रमाणोऽष्टभिः शतैस्त्र्युत्तरैर्गुण्यते जाते द्वे लक्षे चतुश्चत्वारिंशत्सहस्राणि नव शतानि पञ्चदशोत्तराणि ( २४४९१५ ) तत्रार्द्धक्षेत्रेषु षट्सु नक्षत्रेषु प्रत्येकं सप्तषष्टिरंशा द्व्यर्द्धक्षेत्रेषु षट्सु नक्षत्रेषु प्रत्येकं द्वे शते एकोत्तरे अंशानां पञ्चदशसु नक्षत्रेषु प्रत्येकं चतुस्त्रिंशच्छतमिति षट्सप्तषष्ट्या गुण्यन्ते जातानि चत्वारि शतानि द्व्युत्तराणि ( ४०२ ) तथा षट् पञ्चोत्तरेण शतद्वयेन गुण्यन्ते जातानि द्वादश शतानि दशोत्तराणि । ( १२१० ) एते च त्रयोऽपि राशय एकत्र मील्यन्ते मीलयित्वाऽवतिष्ठन्तेऽभिजितो द्वाचत्वारिंशत् प्रक्षिप्यन्ते जातानि षट्त्रिंशच्छतानि षष्ट्यधिकानि ( ३६६० ) एतावानेको नक्षत्रपर्यायस्तत एतत्पूर्वस्य राशेर्भागो ह्रियते लब्धाः षष्टिर्नक्षत्राणि पर्यायाः पश्चादवतिष्ठन्ते पञ्चपञ्चाशदधिकानि त्रयस्त्रिंशच्छतानि ( ३३५५ ) तत्राभिजितो द्वाचत्वारिंशच्छुद्धाः स्थितानि शेषाणि त्रयस्त्रिंशच्छतानि त्रयोदशाधिकानि ( ३३१३ ) तेषां त्रिभिः सहस्रैर्द्व्यशीत्यधिकैरनुराधान्तानि नक्षत्राणि शुद्धानि शेषं ते द्वे शते एकत्रिंशदधिके (२३१) ततः सप्तषष्ट्या ज्येष्ठा शुद्धा स्थितं चतुःषष्ट्यधिकं षोडशशतं ( १६६४) ततोऽपि चतुस्त्रिंशेन शतेन मूलं शुद्धं स्थिता पश्चात् त्रिंशत् ( ३० ) आगतं पूर्वफाल्गुनीनक्षत्रस्य त्रिंशतं चतुस्त्रिंशदधिकशतं भागानामवगाह्योत्तरचतुःशततमं स्वऋतुं चन्द्रः परिसमापयति । ज्यो० १४ पाहु० । चं० प्र० ।

उउंबर [ उंबर ] उ [ रु ] दुंबर–पुं० उं शम्भुं वृणोति स्वम्बरः पृषो० दस्य वा रत्वम् । वाच० दुर्गादेत्युदुम्बरपादपतनपादपीठऽन्तदः । २७० । ८ । २ । इति उदुम्बरशब्दमध्यवर्तिनः वा लुक् । प्रा० । ( गूलर ) इति प्रसिद्धे बहुबीजके वृक्षविशेषे, जी० १ प्रति० । आचा० । देहल्याम्, आ० म० द्वि० । गृहदलुके, गृहावयवविशेषे, आचा० । ताम्रे, नपुंसके, कुष्ठभेदे च । वाच० । प्रज्ञा० ।

उउंबर ( उंबर ) दत्त–उदुम्बरदत्त– पुं० पाटलीखण्डनगरवास्तव्ये सागरदत्तसार्थवाहसुते, । तद्वक्तव्यता यथा-पाटलीखण्डे नगरे सागरदत्तसार्थवाहसुत उदुम्बरदत्तो नामाऽभूत् स च षोडशभी रोगैरेकदाऽभिभूतो महाकष्टमनुभूय मृतः । स च जन्मान्तरे विजयपुरराजस्य कनकरथनाम्नो धन्वन्तरिनामा वैद्य आसीत् मांसप्रियो मांसोपदेष्टा चेति कृत्वा नरकङ्गतवानिति । स्था० १० ठा० ।

जइ णं भंते उक्खेवो सत्तमस्स एवं खलु जंबू तेणं कालेणं तेणं समएणं पाडलिसंडे णयरे वणसंडे उज्जाणे उंबरदत्ते यक्खे तत्थ णं पाडलिसंडे णयरे सिद्धत्थ राया तत्थ णं पाडलिसंडे णयरे सागरदत्तसत्थवाहे होत्था । अट्ठे गंगदत्ता भारिया तस्स णं सागरदत्तस्स पुत्ते गंगदत्ताए भारियाए अत्तए उंबरदत्ते णामं दारए होत्था । अहीणं तेणं कालेणं तेणं समएणं जाव परिसागया तेणं कालेणं तेणं समएणं भगवं गोयमे तहेव जेणेव पाडलिसंडे णयरे तेणेव उवागच्छइ उवागच्छइत्ता पाडलिसंडे णयरे पुरच्छिमेण दुवारेणं अणुप्पविसत्ति तत्थ णं पासइ एगं पुरिसं कच्छुल्लं कोडियं दो उपरियं भगंदलियं अरिसिल्लं कासिल्लं सासिल्लं सूय मुहं सूयहत्थं सूयपायं सडियहत्थंगुलियं सडियपायं

गुलियं सडियकमणासियं रसियए य पूएण य थिवि
थिवित्तं वणमुहं किमिउत्तुयंतपगलंतपूयरुहिरं लाला-
पगलंतकमणासं अभिक्खणं २ पूयकवले य रुहिरकव
ले य किमियकवले य वममाई कट्ठाई कलुणाई वीसराइं
कूवमाणं मच्छिया चडगरपहगरेण अणिज्जमाणमग्गं
फुट्टहडाहडसीसं दंडि खंडवसणं खंडमल्लखंडहत्थगयं
गिहे२ देहं बलियाए वित्तिं कप्पेमाणे पासइ२त्ता तदा
भगवं गोयमे उच्चणीयजाव अडइ अहापज्जत्तं गिण्ह-
इ२त्ता पाडलीसंडाओ णयराओ पडिणिक्खमइ२त्ता
जेणेव समणे भगवं तेणेव उवागच्छइ उवागच्छइत्ता
भत्तपाणं पडिदंसेइ समणेणं अब्भणुन्नाए जाव बिलमिव
पन्नगभूए अप्पाणेणं आहारमाहारेइ संजमेणं तवसा
अप्पाणं भावेमाणे विहरइ तएणं से भगवं गोयमे
दोच्चंपि छट्ठक्खमणपारणगंसि पढमाए पोरसीए सज्झाइं
जाव पाडलिसंडं णयरं दाहिणिल्लेणं दुवारेणं अणुप्प-
विस्सइ । तं चेव पुरिसं पासइ २ त्ता कच्छूल्लं तहेव जाव
संजमेणं विहरइ तएणं से गोयमे तच्चं छट्ठं तहेव जाव
पच्चच्छिमिल्लेणं दुवारेणं अणुप्पविसमाणे तं चेव पुरिसं
कच्छूल्लं पासइ २ त्ता चउत्थं छट्ठं उत्तरेणं इमे अज्झ
त्थिए समुप्पन्ने । अहो णं इमे पुरिसे पुरा पोराणाणं
जाव एवं वयासी एवं खलु अहं भंते ! छट्ठस्स जाव
रियंते जेणेव पाडलिसंडे णयरे तेणेव उवागच्छइ २ त्ता
पाडलिपुरे पुरच्छिमिल्लेणं दुवारेणं अणुप्पविट्ठे तत्थ णं
एगं पुरिसं पासइ कच्छूल्लं जाव कप्पेमाणे । तंजहा अ
हं दोच्चं छट्ठपारणए दाहिणिल्ले दारए तहेव तच्चं छट्ठं
पच्चच्छिमेणं तहेव ते अहं चउत्थं छट्ठपारणए पाडलि
उत्तरदारे अणुप्पविट्ठे तं चेव पुरिसं पासामि कच्छूल्लं
जाव वित्तिं कप्पेमाणे विहरइ चिंता मम पुव्वभवे पुच्छा
वागरेइ । एवं खलु गोयमा तेणं कालेणं तेणं समएणं
इहेव जंबुद्दीवे २ भारहे वासे विजयपुरे णामं णयरे
होत्था रिद्ध० तत्थ णं विजयपुरे णयरे कणगरहे णामं
राया होत्था । तस्स णं कणगरहस्स रण्णो धणंतरि-
णामं वेज्जे होत्था अट्ठंगाउव्वेदं पाढए तंजहा कोमार
भिच्चं १ सालागं २ सल्लकहत्ते ३ कायतिगिच्छा ४
जंगोले ५ भूयवेज्जे ६ रसायणे ७ वाजीकरणे ८ सिव
हत्थे ९ सुहहत्थे १० लहुहत्थे ११ तएणं धणंतरीवेज्जे
विजयपुरे णयरे कणगरहस्स रण्णो अंतेउरे अण्णेसिं च
बहूणं राईसर जाव सत्थवाहाणं अण्णेसिं च बहूणं दुब्ब
लाण य गिलाणाण य वाहियाण य रोगियाण य सणा
हाण य अणाहाण य समणाण य माहणाण य भिक्ख
याण य करोडियाण य कप्पडियाण य आउराण य

अप्पेगइयाणं मच्छमंसाइं उवदिसइ अप्पेकच्छभमंसाइं-
अप्पेगाहमंसाइं अप्पेमगरमंसाइं अप्पेसुंसुमारमंसाइं अ-
यमंसाइं एवं एलारोज्झ सूयरमिगससयगोमंसा महिसमं
सा अप्पेतित्तिरमंसा अप्पेवटकलावककवोतकुक्कुडमयूरमं
सा अण्णेसिं च बहूणं जलयरथलयरखहयरामाईणं
मंसा अप्पाणं वीयसंसे धणंतरियवेज्जे तेहिं मच्छमंसे-
हिय जाव मयूरमंसेहिय अण्णेहि य बहूहिं जलयरथल-
यरखहयरमंसेहि य जाव मयूरसएहि य सोल्लेहि य ति-
लिएहिय भज्जिएहि य सुरं च ५ आसाएमाणे ४ विहरइ
तएणं से धणंतरी वेज्जे एए कम्मे ४ सुबहु पावं समज्जि-
णित्ता बत्तीसंसयाइं परमाउं पालइत्ता कालमासे कालं
किच्चा छट्ठीए पुढवीए उक्कोसं बावीसं सागरोवमाइं उव-
वन्ने तएणं णरगा उव्वट्टित्ता इहेव पाडलिसंडे णयरे साग-
रदत्ते सत्थवाहे गंगदत्ता भारिया जायणिंदुया वि होत्था ।
जा जा जाया दारगा विणिघायमावज्जंति तएणं तीसं गंग-
दत्ताए सत्थवाहीए अण्णया कयावि पुव्वरत्तावरत्तकाल
समयंसि कुडुंबजागरियं जागरमाणे २ अयं अज्झत्थि
ए ४ समुप्पन्ने एवं खलु अहं सागरदत्ते णं सत्थवाहे
णं सद्धिं बहूहिं वासाइ उरालाइ माणुस्सगाइं भोगभो-
गाइं भुंजमाणे विहरइ णो चेव णं अहं दारगं वा दारि-
यं वा या यामिहितं धण्णाउणं ताओ अम्मआयो संपुण्णा
ओ कयत्थाओ कयपुण्णाओ कयलक्खणाओ सुलद्धेणं
तासिं अम्मयाणं माणुस्सए जम्मजीवियफले जासिं मण्णे
णियगकुच्छि संभूयगाइं थणदुद्धलुद्धगाइं मम ण पत्तंपि
याति थणमूलक्खदेसभागं अतिसरमाणगइं मुद्धगाइं
पुणो य कोमलकमलोवमेहिं हत्थेहिं गिण्हिऊण उच्छं
गं णिवेसियाइं दिंति समुल्लावए सुमहुरे पुणो मंजुलप्पभ
णिए अहण्णा अधण्णा अपुण्णा अकयपुण्णा एत्तो एकतरम
विणपत्ता तं सेयं खलु ममं कल्लं जाव जलंते सागरदत्तं
सत्थवाहं आपुच्छित्ता सुवहु पुप्फवत्थगंधमल्लालंकारे
गहाय बहूहिं मित्तणाइ णियगसयणसंबंधि परिजण-
हियाइं सद्धिं पाडलिसंडाओ णयराओ पडिणिक्खमइ२
त्ता बहिया जेणेव उंबरदत्तस्स जक्खस्स जक्खायतणे-
तणेव उवागच्छइ २त्ता तत्थ णं उंबरदत्तस्स जक्खस्स मह
रिहं पुप्फच्चणं करेइ२ त्ता जाणुपायवडियाए उवाएत्तए
जइ णं अहं देवाणुप्पिया दारगं वा दारियं वा पयामि तो
णं अहं जायं च दायं च भायं च अक्खयणिहिं च
अणुवड्ढे सा समिति कट्टु उवाइणित्तए एवं संपेह-
इत्ता २ कल्लं जाव जलंते जेणेव सागरदत्ते सत्थवाहे
तेणेव उवागच्छइ २ त्ता सागरदत्तं सत्थवाहं एवं व-
यासी एवं खलु अहं देवाणुप्पिया तुब्भेहिं सद्धिं जाव

ए पत्ता तं इच्छामि णं तं देवाणुप्पिया तुब्भेहिं अब्भणुण्णाया जाव उवाइणित्तए तएणं से सागरदत्ते सत्थवाहे गंगदत्तं भारियं एवं वयासी ममंपि णं देवाणुप्पियाए सच्चेव मणोरहे कहएणं तुमं दारगं वा दारियं वा पयाएज्जामि गंगदत्तं भारियं एवमट्ठं अणुजाणीइ । तए णं सा गंगदत्ता भारिया एय मट्ठं अब्भणुण्णाया समाणी सुबहु जाव मित्तणाइं सद्धिं ताओ गिहाओ पडिणिक्खमइ २ त्ता पाडलिसंडं णयरं मज्झं मज्झेणं णिगच्छइ २ त्ता जेणेव पुक्खरिणी तेणेव उवागच्छइ २ त्ता पुक्खरिणीए तीरे सुबहुपुप्फगंधमल्लाउकारं ठवेइ २ त्ता पुक्खरिणीओ गाहेइ २ त्ता जलमज्जणं करेइ जलकीडं करेइ २ त्ता एहाया कयकोउयमंगल्ला उल्लपडिसाडिया पुक्खरिणी पच्चुत्तरइ २ त्ता तं पुप्फु गिएहइ २ त्ता जेणेव उंबरदत्तस्स जक्खस्स जक्खायतणे तेणेव उवागच्छइ २ त्ता उंबरदत्तस्स जक्खस्स आलोए पणामं करेइ २ त्ता लोमहत्थं परामुसइ २ त्ता उंबरदत्तं जक्खं लोमहत्थएणं पमज्जइ २ त्ता दगधाराए अब्भुक्खेइ २ त्ता पम्हलगाइलूहीओ लूहेइ सेयाइं वत्थाइं परिहेइ महरिहं पुप्फारुहाणं वत्थारुहाणं मल्ला गंधा चुण्णारुहाणं करेइ २ त्ता धूवं डहइ २ त्ता जाणुपायपडिया एवं वयासी जइ णं अहं देवाणुप्पिया दारगं दारियं पयामि तोणं जाव उवाइणइ २ त्ता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया तएणं से धणंतरी वेज्जे ताओ णरगाओ अणंतरं उवट्टित्ता इहेव जंबूदीवे २ भारहे वासे पाडलीसंडे णयरे गंगदत्ताए कुच्छिंसि पुत्तत्ताए उववन्ने तएणं तीसे गंगदत्ताए भारिया तिएहं मासाणं बहु पडिपुण्णाणं अयमेवारूवे दोहले पाउब्भूए धण्णाउणं ताओ अम्मयाओ जाव फले जाओणं विपुलं असणं ४ उवक्खडावेइ २ त्ता बहुहिं जाव मित्तपरिवुभाओ तं विपुलं असणं ४ सुरं च ६ पुप्फ जाव गहाइ पाडलिसंडं णयरं मज्झं मज्झेणं पडिणिक्खमइ २ त्ता जेणेव पुक्खरिणी तेणेव उवागच्छइ २ त्ता पुक्खरिणीउ गाहेइ २ त्ता एहाया जाव पायच्छित्ताओ तं विपुलं असणं ४ बहुहिं मित्तएहाई जाव सद्धिं आसाएइ ४ दोहलं विणेइ एवं संपेहेइ कल्लं जाव जलंते जेणेव सागरदत्तसत्थवाहे गंगदत्ता भारिया एयमट्ठं अणुजाणइ तएणं सा गंगदत्तेणं सत्थवाहेणं अब्भणुण्णाया समाणं विपुलं असणं ४ उवक्खडावेइ तं विउलं असणं ४ सुरं च सुबहु पुप्फं परिगिएहावेइ २ त्ता बहुहिं जाव एहाया कयवलिकम्मा जेणेव उंबरदत्तजक्खस्स जक्खायतणे जाव धूवं डहेइ २ त्ता जेणेव पुक्खरिणी तेणेव उवागच्छइ २ त्ता तएणं ताओ मित्त जाव महिलाओ गंगदत्ता सत्थवाहिं सव्वालंकारविभूसियं करेइ तं सा गंगदत्ताहिं मित्त अण्णेहिं बहुहिं णयरमहिलाहिं सद्धिं तं विपुलं असणं ४ सुरं च ६ आसाएमाणी ४ दोहलं विणेइ २ त्ता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया ते एवं सा गंगदत्ता भारिया पसत्थ दोहला तं गब्भं सुहं सुहेणं परिवसइ तएणं सा गंगदत्ता णवण्हं मासाणं जाव दारयं पयाया ठिया जाव णामे जम्हाणं अम्हं इमे दारए उंबरदत्तस्स जक्खस्स उवाइय लद्धत्ते तं होऊणं दारए उंबरदत्ते णामेणं तएणं से उंबरदत्ते दारए पंचधाई परिगाहिए परिवड्ढइ तएणं तस्स उंबरदत्तस्स दारगस्स अण्णया कयावि सरीरगंसि जमगसमगमेव सोलसरोगायंका पाउब्भूया तंजहा सासे १ खासे २ जाव कोढे तएणं से उंबरदत्ते दारए सोलसरोगाई कहिं अभिभूए समाणे सडियहत्थं जाव विहरइ एवं खलु गोयमा उंबरदत्ते दारए पोरा पुराणाणं जाव विहरइ तएणं उंबरदत्ते दारए कालमासे कालं किच्चा कहिं गच्छिहिति कहिं उववज्जिहिति गोयमा उंबरदत्ते दारए वावत्तारिं वासाइं परमाउसं पालइ २ त्ता कालमासे कालं किच्चा इमी से रयणाए णेरइयत्ताए उववज्जिहित्ति संसारो तहेव पुढवीए तओ हत्थिणाउरे णयरे कुक्कुडत्ताए पच्चायाहिंति जायामित्ते चेव गोट्ठिल्लवहिंति तत्थेव हत्थिणाउरे णयरे सेट्ठी कुलंसि बोही सोहम्मे महाविदेहे सिज्झिहिंति निक्खेवो सत्तमं अज्झयणं सम्मत्तं । वि० ७ अ० ।

पाटलिखण्डस्य नगरस्य नवखण्डे उद्याने पूज्यमाने यक्षे च । वि० ७ अ० ।

उउंब (उंब)रपणग उदुम्बरपञ्चक–न० उदुम्बरकेणोपलक्षितं पञ्चकमुदुम्बरपञ्चकम् । वट १ पिप्पलो २ उदुम्बर ३ प्लक्ष ४ काकोदुम्बरी ५ फललक्षणे फलविशेषपञ्चके,मशकाकारसूक्ष्मबहुजीवनिचितत्वाद्वर्जनीयं ततो योगशास्त्रे उदुम्बरवटप्लक्षकाकोदुम्बरशाखिनाम् । पिप्पलस्य च नाश्नीयात्फलं कृमिकुलाकुलम् । १ । लोकेपि "कोपि क्वापि कुतोपि कस्यचिदहो चेतस्यकस्माज्जनः । केनापि प्रविशन्त्युदुम्बरफलप्राणिक्रमेण क्षणात् । येनास्मिन्नपि पाटिते विघटिते विस्फोटिते त्रोटिते निष्पिष्टे परिगालिते विदलिते निर्यान्त्यसौ वा न वा । ध० २ अ० द्वाविंशत्यभक्ष्ये,पञ्चा भक्ष्याणीति ज०एश०३३उ० ।

उउंब ( उंब ) रपुप्फ ( प्फ )–उदुम्बरपुष्प–न० ( गूलरफूल ) उदुम्बरवृक्षकुसुमे, " उंबरपुप्फं पिव दुल्लहे" उदुम्बरपुष्पं ह्यलभ्यं भवति अतस्तेनोपमानम् । भ० । ए श० ३३ उ० ।

उउंब ( उंब ) रवच्च–उदुम्बरवर्चस्–न० उदुम्बरफलसमाकीर्णे, "उंबरस्स फला जत्थ किरिवडे उच्चविज्जंति तं उंबरवच्चं भणंति"। नि० चू० ३ उ० ।

उउंब ( उंब ) रीय–उडुम्बरीय–पुं० प्रत्युडुम्बरं रूपको दातव्य इत्येवं लक्षणे करे, " जोयंत उंबरीयस्स " वृ० ३ उ० ॥

उउ ( उ ) परियट्ट–ऋतुपरिवर्त–पुं० ऋत्वन्तरे, आचा० २ श्रु० १ अ० १ उ० ।

उउदेवी–ऋतुदेवी–स्त्री० वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराभिधानदेवतासु, पंचा० २ विव० ।

उउबद्ध–ऋतुबद्ध– पुं० शीतकाले, उष्णकाले च । औ० । अष्टौ मासा ऋतुबद्धसंज्ञकाः । आचा० २ श्रु०१ अ०१ उ० । आ० म० ।

उउमास–ऋतुमास–पुं० ऋतुः किल लोकरूढ्या षष्ट्यहोरात्रप्रमाणो द्विमासात्मकस्तस्यार्द्धमपि मासोऽवयवः समुदायोपचारात् ऋतुरेवार्थात्परिपूर्णत्रिंशदहोरात्रप्रमाणो मासः ऋतुमासः । कर्ममासापरपर्याये मासभेदे, एष एव ऋतुमासः । कर्ममास इति वा व्यवह्रियते । उक्तंच "एसो चेव उउमासो कम्ममासो सावणमासो भण्णइ" इति । व्य०१ खं० १ उ० । "उडुमासो तीसदिणो, आइच्चो तीस होइ अद्धं च" ५ व्य० प्र० १ उ० । नि०चू० ।

पंच संवच्छरियस्स णं जुगस्स रिउमासेणं मिज्जमाणस्स इगसट्ठिं उऊमासा पण्णत्ता ॥

अथैकषष्टिस्थानकं तत्र पञ्चेत्यादि पञ्चभिः संवत्सरैर्निर्वृतमिति पञ्चसांवत्सरिकम् । तस्य णमिति वाक्यालङ्कारे युगस्य कालमानविशेषस्य ऋतुमासेन चन्द्रादिमासेन मीयमानस्य एकषष्टिः ऋतुमासाः प्रज्ञप्ताः । इह चायं भावार्थः युगं हि पञ्चसंवत्सरान्निष्पादयति तद्यथा चन्द्रश्चन्द्रोभिवर्द्धितश्चेति । तत्र एकोनत्रिंशदहोरात्राणि द्वात्रिंशच्च द्विषष्टिभागा अहोरात्रस्येत्येवं प्रमाणेन २९ । ३२ । ६२ कृष्णप्रतिपदामारभ्य पौर्णमासीनिष्ठितेन चन्द्रमासेन द्वादश मासपरिमाणश्चन्द्रसंवत्सरस्तस्य च प्रमाणमिदम् । त्रीणि शतान्यह्नां चतुःपञ्चाशदुत्तराणि द्वादश च द्विषष्टिभागा दिवस्य ३५४ । १२ ६२ । तथा एकत्रिंशदह्नामेकविंशत्युत्तरं च शतं चतुर्विंशत्युत्तरशतं भागानां दिवसस्येत्येवंप्रमाणो ऽभिवर्द्धितमास इति । एतेन ३१ । १२१ । १२४ । च मासेन द्वादशमासप्रमाणोऽभिवर्द्धितसंवत्सरो भवति स च प्रमाणेन त्रीणि शतानि अह्नां त्र्यशीत्यधिकानि चतुश्चत्वारिंसच्च द्विषष्टिभागा दिवसस्य ३८३ । ४४ । ६२ । तदेवं त्रयाणां चन्द्रसंवत्सराणां द्वयोश्चाभिवर्द्धितसंवत्सरयोरेकीकरणे जातानि दिनानां त्रिंशदुत्तराणि अष्टादश शतानि अहोरात्राणाम् १८३० ऋतुमासश्च त्रिंशताहोरात्रैर्भवतीति त्रिंशता भागहारे लब्धा एकषष्टिः ऋतुमासा इति । स०६१ स० ।

उउय–ऋतुज–त्रि० कालोचिते,"उउयपिंडमनिहारिसगंधिएसु" प्रश्न० ५ द्वा० ।

उउलच्छि–ऋतुलक्ष्मी–स्त्री-ऋतुसंपदि, ज्ञा० ९ अ० ।

उउलच्छिसमत्थजायसोह—ऋतुलक्ष्मीसमस्तजातशोभ— त्रि० ऋतुलक्ष्म्येव सर्वर्त्तुककुसुमसंपदा समस्ता सर्वा समस्तस्य वा जाता शोभा यस्य स तथा । सर्वर्त्तुषु कुसुमसम्पदा सामस्त्येन शोभमाने, "उउलच्छिसमत्थजाय सोहोप इट्ठगंधधूयाभिरामो" ज्ञा० ९ अ० ।

उउवास–ऋतुवर्ष–पुं०द्र० स० । ऋतुबद्धकालवर्षाकालयोः, "उउवासे पणगचउमासे" प्रव० ७० द्वा० ।

उउ [ ऊ ] संधि–ऋतुसन्धि–पुं०ऋतोः पर्यवसाने, आचा० २ श्रु० १ अ० १ उ० ।

उउसंवच्छर–ऋतुसंवत्सर–पुं० ऋतवो लोकप्रसिद्धा वसन्तादयस्तत्प्रधानः संवत्सरः ऋतुसंवत्सरः । चन्द्र० १ पा० । त्रिंशदहोरात्रप्रमाणैर्द्वादशभिर्ऋतुमासैः श्रावणमासकर्ममासपर्यायैर्निष्पन्नेषष्ट्यहोरात्रशतत्रयमाने,। स्था० ५ ठा० । सावन संवत्सरपर्याय संवत्सरभेदे, तत्त्वं च यथा ।

विसमं पवालिणो परि–णमंति अणउसुदेंति पुप्फफलं ।
वासं ण सम्मवासइ, तमाहु संवच्छरं कम्मं ॥

विषमेण वैषम्येण प्रवालं पल्लवाङ्कुरस्तद्विद्यते येषां ते प्रवालिनो वृक्षा इति गम्यते । परिणमन्ति प्रवालवत्तालक्षणया अवस्थया जायन्ते । अथवा प्रवालिनो वृक्षाः परिणमन्ति अङ्कुरोद्भेदाद्यवस्थां यान्ति । तथा अनृतुषु अस्वकाले ददति प्रयच्छन्ति पुष्पफलं यथा चैत्रादिषु कुसुमादिदायिनोपि स्वरूपेण चूताः माघादिषु पुष्पादि प्रयच्छन्तीति यथा वर्षं वृष्टिमेघो न सम्यग्वर्षति यत्रेति गम्यते तमाहुर्लक्षणतः संवत्सरं कार्मणं यस्य स ऋतुसंवत्सरः सावनसंवत्सरश्चेति पर्यायौ । स्था० ५ ठा० । जो० ॥

ता एएसिणं पंचण्हं संवच्छराणं तच्च उउसंवच्छरस्स उऊमासेति स तिमुहुत्तेणं अहोरत्तेणं गणिज्जमाणे केवतिए रातिंदियग्गेणं आहितातिं वदेज्जा । ता तीसेणं राइंदियग्गेणं आहितेति वदेज्जा । ता से एं केवतिए मुहुत्तग्गेपुच्छा ता णवमुहुत्तसताइं णवमुहुत्तग्गेणं आहितेति वदेज्जा । ता एस णं अद्धादुवालसखुत्तकडा उउसंवच्छरे ता सेणं केवतिते राइंदियग्गेणं आहितेति । ता तिण्णि सट्ठे रातिंदियसते राइंदियग्गेणं आहितातिं वदेज्जा । ता से णं केवतिते मुहुत्तग्गेणं आहिते ता दसमुहुत्तसहस्सातिं अट्ठ य मुहुत्तसताइं मुहुत्तग्गेणं आहिता ॥

तृतीयं ऋतुसंवत्सरविषयं प्रश्नसूत्रं सुगमम् । भगवानाह । (तातीसेणमित्यादि)ता इति पूर्ववत् त्रिंशद्रात्रिंदिनानि ( ३० ) रात्रिंदिवाग्रेण ऋतुमास आख्यात इति वदेत । तथाहि ऋतुमासयुगे एकषष्टिस्ततो युगसत्कानां त्रिंशदधिकानामहोरात्राणामेकषष्ट्या भागो ह्रियते लब्धाः त्रिंशदहोरात्राः ( ३० ) ( तासेणमित्यादि ) मुहूर्तविषयं प्रश्नसूत्रं सुगमम् भगवानाह "ता नव मुहुत्तसयाइं " इत्यादि । नव मुहूर्त्तशतानि मुहूर्त्ताग्रेणाख्यात इति वदेत् । तथाहि त्रिंशद्रात्रिंदिनानि ऋतुमासपरिमाणमेकैकस्मिंश्च रात्रिंदिवे त्रिंशन्मुहूर्त्तास्ततः त्रिंशन्त्रिंशता गुण्यते नव शतानि भवन्तीति । ( ता एएसिणमित्यादि ) प्राग्वद्भावनीयम् । चं० १२ पा० ॥

उउसुह–ऋतुसुख– त्रि० ऋतौ कालविशेषे सुखः सुखहेतुः ऋतुसुखः । कालोचितसुखप्रदे, "उउसुहसिवच्छायसमणुबद्धेण" ऋतौ कालविशेषे सुखा सुखहेतुः ऋतुसुखा शिवा निरुपद्रया छाया आतपवारणलक्षणा तया समनुबद्धमनवच्छिन्नं यत्तत्तथा । तेन छत्रेण । औ० ।

ऋतुज्ञज – पुं० कालोचित्ते, प्रश्न० ४ द्वा० ॥

उंछ–उञ्छ– न० उञ्छ्यते अल्पाल्पतया गृह्यते इत्युञ्छः । भक्तपानादौ, स्था०४ठा० । जुगुप्सनीये भैक्ष्ये, सूत्र०१श्रु० ३अ० ।

तन्निक्षेपो तथा "अन्ना उंछं दुविहं, दव्वे भावे य होइ नायव्वं । दव्वुंछणेगविहं लोगरिसीणं मुणेयव्वं " व्य० द्वि० १० उ० । ( एतद्व्याख्या अन्नायउंछअभिग्गह शब्दे ) उञ्छमिवोञ्छम् । अल्पाल्पगृहीते भैक्ष्ये, प्र०१द्वा० । अज्ञातपिण्डोञ्छसूत्रकत्वादेतत्पदस्य" उञ्छमिति द्रुमपुष्पिकाऽध्ययने, द०१अ० ।

उंछजीविया-उञ्छजीविका-स्त्री० एषणायाम्, स्था०४ ठा०

उंछजीवियासंपन्न-उञ्छजीविकासम्पन्न- त्रि० एषणानिरते, स्था० ४ ठा० ।

उंछवित्ति-उञ्छवृत्ति-त्रि०कणश आदानरूपेण उञ्छेन जीविकावति, तत्पुत्रो नारदस्तेषामुञ्छवृत्त्या च भोजनम् । तदप्येकान्तरं ते चाऽशोकाधो नारदं सुतम् । आ० क० । आव०

उंजण-उञ्जन-न० उत्सेचने, " ण उंजिज्जा ण घट्टिज्जा, णो णं णिव्वावए मुणी " द०८अ० ।

उंजायण-उञ्जायन- पुं० वाशिष्ठगोत्रे ऋषिभेदे, तत्प्रवर्त्तितगोत्रजे च । स्था० ७ ठा० ।

उंडिया-उण्डिका-स्त्री० अग्निनघनगरादेर्निवेश्यमानस्य योगभूमियोग्यनार्थायामङ्करसहितमुद्रायाम्, बृ० १ उ० ।

उंडी-उण्डी-स्त्री० पिण्ड्याम्, ज्ञा० ३ अ० । बृ० ।

उंडेरिय-उण्डेरिक-न० तिलकुट्टिकया अर्चनीये स्वादिमभेदे, यदीप्सितं लप्स्यामहे तदा तवोण्डेरकादि दास्यामः । स्था०४ ठा० । आ० म० द्वि० ।

उंदुर-( रू ) उन्दर ( रू ) पुं०-स्त्री उन्द उरु मूषके, आ० म० प्र० । उंदुरो वा लाअं सुत्तमुक्कं वा मुंचज्जो । नि० चू० ११ उ० ।

उंदुरक्क-उन्दुरक्क-न० देवतादि पुरतो वृषभगर्जितादिकरणे, ग० २ अधि० ।

उंदर ( रू ) माला-उन्दुर ( रू ) माला-स्त्री० मूषकस्रजि, उपा० १ अ० ।

उंदुरमालापरिणद्धसुकयचिण्ह-उन्दरमालापरिणद्धसुकृतचिह्न-त्रि० उन्दुरमालया मूषकस्रजा परिणद्धं परिणतं सुकृतं सुष्ठु रचितं चिह्नं स्वकीयलाञ्छनं येन तत्तथा तस्मिन् ।उपा० १अ० ।

उंबर-उम्बर-पुं० उमित्यव्यक्तशब्दं वृणाति वृ० अच्-द्वारोर्ध्वकाष्ठे, वाच० । देहल्याम्, २ आ० म० द्वि । आव० । गन्धर्वभेदे च ।वाच० ।

उंभ-उम्भ-धा-ऽभा-प० पूरणे, आ० म० द्वि० ।विशे० ।

उकुकुर-उत् स्था-धा० ( उठना ) स्थित्याधारादूर्ध्वपतने उद ष्ठकुक्कुरौ ८।४।१७ इति उत्पूर्वस्य स्थाधातोः कुक्कुर इत्यादेशः। उकुकुरइ उत्तिष्ठति । प्रा० ।

उक्क-उत्क-त्रि० उद्गतं मनोऽस्य उद्० नि०क०वाच० । उत्कण्ठिते, " अणुक्कसाई अप्पिच्छे अन्नायएसी अलोलुए " उत्त० ।

उक्कंचण-उत्कञ्चन-न० शूलाद्यारोपणार्थमूर्ध्वकुञ्चने, सूत्र० २ श्रु०२अ०।ज्ञा०।उत्कोचायां च।दशा०२अ० ।तच्च हीनगुणस्य गुणोत्कर्षप्रतिपादनम् । ज्ञा० २ अ० । दीनानूर्ध्वं दण्डयतः भ० ११ श० ११ उ० । मुग्धवञ्चनप्रवृत्तस्य समीपवर्त्तिविदग्धरक्षणार्थं क्षणं क्षणमव्यापारतयाऽवस्थानम् । उपा० १ अ० । औ० । मूर्ख प्रति तत्प्रतिरूपदानादिकमसद्व्यवहारं कर्तुं प्रवृत्तस्य पार्श्ववर्त्तिविचक्षणभयात् क्षणं यत्तदकरणमुत्कुञ्चनमित्यन्ये । ज्ञा० १८ अ० "उक्कं च णं वञ्चातिणा" वसतेर्वान्यादिना कचवरनिष्काशनमिति संभाव्यते । नि० चू० ५ उ० ।

उक्कंछण-उत्कञ्छन-न० दण्डकोपरिकम्बीनां बन्धनरूपे वसतिपरिकर्मणि, ग० १ अधि० ।

उक्कंठा-उत्कण्ठा-स्त्री० " ङञणनो व्यञ्जने " ८ । १ । २५ । इत्यनेन णकारस्यानुस्वारो वा । प्रा० । वर्गेऽन्त्यो वा ८।१।३०। इत्यनेनानुस्वारस्य णकारो वा।प्रा० । इष्टलाभाय कालासहनरूपे औत्सुक्ये, २ वाच० ।

उक्कंपिय-उत्कम्पित-त्रि० चञ्चलीकृते, कल्प० ।

उक्कंबण-उत्कम्बन-न० दण्डकोपरि कम्बीनां बन्धनरूपे वसतिपरिकर्मणि, बृ० १ उ० । ग० । नि० चू० ।

उक्कंबिय-उत्कम्बित-त्रि०वंशादिकम्बाभिरवबद्धे,आचा० १श्रु०।

उक्कच्छिया-औपकक्षिकी-स्त्री०कक्षायाः समीपमुपकक्षं तत्र भवा औपकक्षिकी। अध्यात्मादित्वादिक ण् प्रत्ययः । साध्व्युपकरणभेदे, । बृ० ३ उ० । साप्येवंविधा स्यूता समचतुरस्रा सार्द्धहस्तमाना चतुरोऽङ्गं दक्षिणपार्श्वं पृष्ठं चाच्छादयति । वामस्कन्धे वामपार्श्वे च वीटकप्रतिबद्धा परिधीयते । यदुक्तम् " ढाए ३ अणुकुइए उरोरुहे कंचुओ असीविअओ । एमेव य उक्कच्छिअ सा नवरं दाहिणे पासे त्ति।ध०३अधि० । वेगच्छिया उपछे कंचुकमुत्कच्छियं च ढादेति। संघाडओ उ वत्तरो तत्थ दुहत्थाउ वसधीयदुत्ति । बृ० ३ उ० ।

उक्कट्ठि-उत्कृष्टतस्-अव्य० उत्कर्षवशेनेत्यर्थे, सू०प्र० १९ पा०

उक्कड-उत्कट-त्रि० प्रकर्षपर्यन्तवर्त्तिनि, प्रश्न० १ द्वा० । तीव्रे, आचा० । ऊरूते, कल्प० । प्रचुरे, आव० ५ अ० । कलुषत्वे, व्य० २ खं०२उ० । उक्कडफुडकुडिलजडुलकक्खडवियडफडाडोयकरणदच्छं । उत्कटो बलवतान्येनाध्वंसनीयत्वात् स्फुटो व्यक्तप्रयत्नविहितत्वात् कुटिलो वक्रस्तत्स्वरूपत्वाज्जटिलः स्कन्धदेशे केसरिणामिवाहीनां केसरसद्भावात् कर्कशो निष्ठुरो-बलवत्त्वात् विकटो विस्तीर्णो यः स्फटाटोपः फणासंरम्भः तत्करणे दक्षो यः स तथा तम् । ज०१५ श० १ उ० । रक्तेक्षौ, शरे च । पुं० विषमे, त्रि० सैंहीलतायां च स्त्री० । वाच० ।

उक्कडगंधविलित्त-उत्कटगन्धविलिप्त-त्रि० तीव्रदुर्गन्धव्याप्ते, नं०।

उक्कत्त उत्कृत्त-ति० शरीराद्दूरीकृतचर्मणि, " कप्पिओ फालिओ छिन्नो उक्कत्तो य अणेगसो " उत्त० १९ अ० ।

उक्कट्टग-उत्कर्तक-पु० चौरभेदे, ये गेहाद् ग्रहणं निष्काशयन्ति प्रश्न० ३ द्वा० ।

उक्कत्तिअ-मुत्कर्तित-त्रि० धूर्त्तादित्वात् तेन्नागस्य न टः । उच्छिन्ने, प्रा० ।

उक्कप्प-उत्कल्प-पुं० ऊर्ध्वं कल्प उत्कल्पः उद्गमैषणोत्पादनाशुद्धसमाचारे, । पं० भा० । "उक्कप्पो उ इदाणिं, उद्धं कप्पादि होति ओकप्पो । अहवा विच्छिन्नकप्पो, उक्कप्पो अहवण अवत्तो ॥ उग्गमउप्पायणए-सणेसुणिक्खो कंदमूलफले गिहिवे पावडियासु य,ओकप्पं तं वियाणाहि॥णामणिधंभणि लेसणि, वेताली चेव अरूवंताली । आदाणपाउणेसु य, अण्हेसु य एवमादीसु । तसएगिंदियमुच्छण-संसेइमच्छणामअभिओगे।रोहाइ थव्वण तहबंत, दंरुथंत य अगिणस्स । णामाणि रुक्खफलाणं, परिमाणं देउलाणथूभादि । थंभणिपदम मि ण चलति, लेसणिलेसेत्ति भंगाइं । विहिट्ठाण य आणणि

अहव णिलुक्कावणम्मि वेताली । उट्ठाविऊण णिवातो, तक्खणए सुरुवेताली । गब्भाणं आदाणं, करेति तह साडणं च गब्भाणं । अभिओगवसीकरणं, विज्जा जोगादिहिं कुणति । विच्छिगमच्छिगभमरे, मंडुक्के मच्छए तहा पक्खी । सम्मुच्छा वेमादी, जो जोणी पाहुडेणं च । पसुउद्दवियं जागं, आहव्वणं संतरोहकम्मेयं। कोहादिविभंदंडो, थंभणिअगाणिस्स मंतेणं एमादि अकरणिज्जं, निक्कारणे जे करेति तू भिक्खू। सव्वो सो उक्कप्पो,, दारं पं० भा० ; पं० चू० ॥

उक्कम–उत्क्रम– पुं० उत्–क्रम–घञ्–अवृद्धिः। पश्चादानुपूर्वीभवने, वि० ७ अ० । विशे० । उत्क्रान्तौ ऊर्ध्वगतौ च वाच०॥

उक्कमंत–उत्क्रममाण– त्रि० ऊर्ध्वं क्रामति,"उक्कमंतेसु पाणेसु" आ० म० प्र० ।

उक्कमवोच्छिज्जमाणबंधोदया–उत्क्रमव्युच्छिद्यमानबन्धोदया– स्त्री० उत्क्रमेण पूर्वमुदयः पश्चाद्बन्ध इत्येवं लक्षणेन व्यवच्छिद्यमानौ बन्धोदयौ यासां ता उत्क्रमव्यवच्छिद्यमानबन्धोदयाः। बन्धव्यवच्छित्तिपूर्वकोदयव्यवच्छित्तिमतीषु प्रकृतिषु,पं० सं०।

उक्कमसेढी–उत्क्रमश्रेणी– स्त्री० विपरीतपरिभाषायाम्, क० ।

उक्कमित्त–उपक्रान्त– त्रि० उपक्रमकारणैरुपक्रान्ते क्षीणे, "अहवा उक्कमित्तमवंतिए" सूत्र० १ श्रु० २ अ० ।

उक्कर–उत्कर– पुं० समूहे, कल्प० । संघाते, आव० ४ अ० । उन्मुक्तकरे, करस्तु गवादीन् प्रतिवर्ष राजदेयं द्रव्यम् । भ० ११ श० ११ उ० । ज्ञा० । जं० ।

उक्करड–उत्करट– पुं० करटस्य सहाऽध्यायिनि, आ० म० द्वि० । ( तत्कथा वरुकरण शब्दे )

उक्करिज्जमाण–उत्कीर्यमाण– त्रि० छुरिकादिभिरुत्कारिकयाभिद्यमाने, आ० म० प्र० ।

उक्कयाभेय–उत्करिकाभेद– पुं० एरण्डबीजानामिव बीजभेदे भ० ५ श० ४ उ० ।

उक्करिस–उत्कर्ष– पुं० उत्कर्षणे, उत्सेके, "अतसमुक्करिसत्थं" सूत्र० १ श्रु० २ अ० २ उ० ।

उक्कल–उत्कट– त्रि० प्रकृष्टे, स्था० ५ ठा० ।

उत्कल– त्रि० वृद्धिमति, ।

पंच उक्कला पण्णत्ता तंजहा दंडुक्कले रज्जुक्कले तेणुक्कले देसुक्कले सत्तुक्कले ।

उत्कटा उत्कला वा तत्र दण्ड आज्ञापराधिदण्डनं वा सैन्यं वा उत्कटः । प्रकृष्टो यस्य तेन वोत्कटो यः स दण्डोत्कटो दण्डेन वोत्कलति वृद्धिं याति यः स दण्डोत्कल इत्येवं सर्वत्र । नवरं राज्यं प्रभुता स्तेनाश्चौरा देशो मण्डलं सर्वमेतत्समुदयति । स्था० ५ ठा० ।

औत्कल–उत्कलाऽभिजनोऽस्य अण् औत्कलः । तद्देशानां राजनि, वाच० फाल्गुमत्या भ्रातरि कलिङ्गस्य सहोदरे पल्लीवास्तव्ये, २ आचा० २ श्रु०२अ०११उ० ।(सज्ञातिक्षेपकथा)

उक्कलिअंड–उत्कालिकाण्ड–न० लूतापुटाण्डे अण्डसूक्ष्मे,कल्प०

उक्कलिआ–उत्कालिका–स्त्री० लघुतरे समुदाये, औ० । भ० । त्रीन्द्रियजीवभेदे, ( लूतेति संभाव्यते ) प्रज्ञा० १ पद ।जी०। ज्ञा० । लहरौ, देवोत्कलिकादेव लहरिः इति लहरिपरत्वेन उत्कलिकाशब्दस्य व्याख्यानात् स्था०४ठा० । अन्यत्र देवोत्कलिका तत्समवायविशेषः । स्था० ३ ठा० ।उत्कण्ठायाम्,कामादिजातायां स्मृतौ, कोरके, हेलायां च । हेम० ।

उक्कलियावाय–उत्कालिकावात–पुं० वायुकायविशेषे, स्थित्वा स्थित्वोत्कालिकाभिर्यो वाति स उत्कालिकावातः । आचा० १ श्रु० १ अ० ७ उ० । उत्कलिकाभिः प्रचुरतराभिः सम्मिश्रो यो वातः स उत्कलिकावातः। जीवा० १ प्रति० । उत्त० ॥

उक्कस–उत्कर्ष–पुं० उत्कृष्यते आत्मा दर्पाध्मातो विधीयतेऽनेनेत्युत्कर्षः। माने, "उक्कसं जलणं णूमं मज्झत्थं च विगिंचए" सूत्र०१ श्रु०२ अ० । भावे घञ् । प्राशस्त्ये, अतिशये, उत्कर्षान्विते, उत्पाट्यकर्षणे, ऊरणे, वाच० ।

उक्कसण–उत्कर्षण –न०उत्क्रमणे, निवर्तने, उद्गतेण प्रेरणमुक्कसणम् । नि० चू० १८ उ० । गर्वकरणे, सूत्र० १ श्रु०१३अ० ।

उक्कस्स–उत्कर्षवत्–त्रि० अष्टमदस्थानानामन्यतमेनोत्सेकं कुर्वति, सूत्र० १ श्रु० १ अ० ।

उक्कस्समाण–अपक(र्ष)सत्–त्रि० न्हसति, स्था० ५ ठा० ।

उक्कस्समाणी–अपक(र्ष)मन्ती–स्त्री०पङ्कपनकयोः परिन्हसत्याम्, णिग्गंथे णिग्गंथी सेसंसि वा पंकंसि वा पणगंसि वा उदगंसि वा उक्कस्समाणि वा । स्था० ५ ठा० । वृ० ।

उक्कसावंत–उत्कर्षयत्–त्रि० उत्क्रामयति, स्थानान्तरं नयति णावं उक्कसावेइ उक्कसावंतं वा साइज्जइ उक्कसावेइ स्थलस्थाज्जले कारयति जलस्थान्स्थले कारयति। नि० चू० १० उ०

उक्का–उल्का–स्त्री० उष् दाहे, क नि षस्य लः ।सर्वत्र लवरामवन्द्रे ८ । २ । ७९ इति ललुक् । प्रा०। " अनादौ शेषादेशयोर्द्वित्वम् । ८ २ ८९ । इत्यनेन ककारस्य द्वित्वम् । प्रा०। चुडुल्याम्, जी० १ प्रति। सा च सरेखा प्रकाशयुक्ता उल्का व्य० द्वि० ८ उ० । प्रव० । आव० । प्रज्ञा० । नं० । उपरि प्रकाशमधस्तादन्धकार ईदृक् छिन्नमूलो दिग्दाह उल्का आ० चू० । नि० चू० । "उक्कामहत्तरोरेहा पगासकारिणी य अहवा रेहा । विरहितो विष्फुलिंगो, पहासकरो " आ०चू० ४ अ०। निपततो ज्योतिः पिण्डस्य रेखायुक्तस्योल्केत्याख्या। औ० । ये मूलाग्नितो विलुट्य विमुच्याग्निकणाः प्रसर्पन्ति त उल्का उच्यन्ते । जी० २ प्रति । उल्का गगनाग्निः । दश० ४ अ० । उल्का अग्निपिण्डः । स्था०८ ठा०। उद्योतो भूमावप्रतिष्ठितो गगनतलवर्ती दिग्दाह इति प्रसिद्ध उल्का।स्था० आव० । उत्त० । शुष्कतृणवस्त्रादिवेष्टिते ( मशाल इति प्रसिद्धे ) दीपभेदे, ज्योतिषोक्ते नाक्षत्रिकदशाभेदे च । वाच० ।

उक्कामुह–उल्कामुख–पुं० अश्वकर्णनाम्नो ऽन्तर्द्वीपस्य पूर्वोत्तरस्यां विदिशि अग्रे योजनशतानि अतिक्रम्याष्टयोजनशतायामविष्कम्भे एकोनत्रिंशदधिकपञ्चविंशतियोजनशतपरिक्षेपे पद्मवरवेदिकावनखण्डमण्डितपरिसरे जम्बूद्वीपवेदिकातो ऽष्टयोजनशतप्रमाणान्तरे अन्तरद्वीपे, तद्वास्तव्ये मनुष्ये च । स्था० ४ ठा० । ( अंतरदीप शब्दे वर्णक उक्तः ) उल्केव मुखमस्य । प्रेतभेदे, जन्तुभेदे, स्त्री० ङीप् वाच० ।

उक्कारियाभेय–उत्कारिकाभेद–पु० एरण्डबीजानामिव पुद्गलभेदे, स्वरूपं च ॥

सेकिंतं उक्कारियाभेदे २ जाणंमूसया ण वा तिलसिंगाण वा मुंडमाण वा मुग्गसिंगाण वा माणसिंगाण वा एरंडबीयाण वा फुडिया उक्करियाए भवति सेत्तं उक्कारियाभेदे । प्रज्ञा० ११ पद । स्था० ।

उक्कालिय-उत्कालिक-न० ऊर्ध्वं कालात्पठ्यत इत्युत्कालिकम्। दशवैकालिकादीनि। स्था०। कालवेला (पञ्चविधस्वाध्यायिक) मात्रवर्ज्यशेषकालानियमेन पठ्यमाने श्रुतविशेषे, अनु०। पा०। "जं पुण कालवेलावज्जं पढिज्जइ तं उक्कालियंति नं०।"

सेकिंतं उक्कालिअं उक्कालिअं अणेगविहं पण्णत्ता तंजहा दसवेयालियं कप्पिया कप्पियं चुल्लकप्पसुयं महाकप्पसुयं उववाइयं रायपसेणियं जीवाभिगमो पण्णवणा महापण्णवणा पमायप्पमायं नंदी अणुओगदाराइं देविंदत्थओ तंदुलवेयालियं चंदाविज्जयं सूरपण्णत्ति पोरिसिमंडलं मंडलप्पवेसो विज्जाचरणविणिच्छिओ गणिविज्जा झाणविभत्ती मरणविभत्ती आयविसोही वियरागसुयं संलेहणासुयं विहारकप्पो चरणविही आउरपच्चक्खाणं महापच्चक्खाणं एवमाइ सेत्तं उक्कालियं। नं०। पा०। अनु० आ० म० द्वि०।

उक्कावाय-उल्कापात-पुं० ६ त०। उल्का आकाशजातस्यापात उल्कापातः। स्था०। व्योम्नि सम्मूर्च्छितज्वलनपतनरूपे लोकप्रसिद्धे सादिपारिणामिकेऽर्थे, अनु०। जी०। सरेख सोद्योते वा तारकस्येव पाते, भ० ३ श० ६ उ०। उल्कापातादिदोषाश्च वायव्यादिमण्डलेषु भवन्तः शस्त्राग्निक्षुत्पीडाभिधायिनो भवन्ति। सूत्र० २ श्रु० २ अ०।

उक्कास-उत्कास-पुं० अभिमानात्स्वकीयसमृद्ध्यादेः प्रकाशनरूपे मोहनीयकर्मभेदे, भ० १२ श० ५ उ०।

उक्कासहस्स-उल्कासहस्र-न० अग्निपिण्डसहस्रे, स्था० ८ ठा०।

उक्कि (क) ट्ठ उत्कृष्ट-त्रि० कृषि विलेखने इत्यस्य धातोरुत्पूर्वस्य निष्ठान्तस्येदं रूपम्। उत्-कृष-क्त दश० १ अ०। इत्कृपादौ ८। १। १२८ इति ऋत इत्वम्। प्रा०। आर्षे तु "तदा संवरमुक्कट्ठंति" प्राकृतशैल्या उत्कृष्टम्। दश० ४ अ०। प्रधाने, "धम्मो मंगलमुक्कट्ठमहिंसा संजमो तवो"। दश० १ अ०। भ०। प्रशस्ते, जी० ३ प्रति०। प्रव०। कर्षणयुक्ते क्षेत्रादौ च। वाच०। सम्यक्कृष्टे, कृष्टं कर्षणं लव्ध्यग्रहणायाः कर्षणम् जं० ३ वक्ष०। उत्कर्षवति, वि० ३ अ०। हर्षवशाज्जायमाने उत्कर्षे, आ० म० प्र०। कल्प०। गेरुयवण्णियसेढिय, सोरट्ठियपिट्ठकुक्कसकए य। उक्किट्ठमसंसट्ठ, संसट्ठे चेव बोधव्वे" उत्कृष्टशब्देन कालिङ्गालाबुत्रपुषफलादीनां शस्त्रकृतानि श्लक्ष्णखण्डानि भण्यन्ते। दश० १ अ०।

उक्किट्ठवण्णग-उत्कृष्टवर्णक-पुं० प्रधानचन्दनके, उक्किट्ठवण्णोपरि, समवसरणबिंबरूपस्स" पंचा० २ विव०।

उक्किट्ठसंकिलेस-उत्कृष्टसंक्लेश-पुं० इह सर्वोत्कृष्टस्थितिजनकानि चरमपङ्क्तिनि दर्शितानि यानि स्थिति बन्धाध्यवसायस्थानानि तेषां मध्ये यच्चरममध्यवसायस्थानं तदुत्कृष्टसंक्लेश उच्यते। अथवा चरमस्थितिबन्धाध्यवसायस्थानमुत्कृष्टसंक्लेश उच्यते। इति परिभाषिते ऽर्थे, कर्म०।

उक्किट्ठसरीर-उत्कृष्टशरीर-त्रि० उत्कर्षवच्छरीरे, "उक्किट्ठे उक्किट्ठसरीरे भविस्सइ" वि० ७ अ०। आ० म०।

उक्किट्ठा-उत्कृष्टा-स्त्री० प्रशस्तायां गतौ, जी० ३ प्रति०। मनोहरायां गतौ, कल्प०। "उक्किट्ठाए तुरियाए चवलाए चंडाए जयणाए उद्धयाए दिव्वाए देवगईए" राय०।

उक्किट्ठि-उत्कृष्टि-स्त्री० हर्षविशेषप्रेरिते ध्वनिविशेषे, आ० म० द्वि०। आनन्दमहाध्वनौ, औ०। वि०। वकारपूर्वके कलकले, अत्र चतुर्थप्रायश्चित्तेन शुद्धिः। जीत०।

उक्किण्ण-उत्कीर्ण-त्रि० उत् कॄ क्त-नष्टे, आ० चू० २ अ०। अतीव व्यक्ते, प्रज्ञा०। शिलादिषु उत्कीर्यकृते नामकादिरूपपदभेदे, दश० २ अ०। उद्-कॄ-कर्तरि श उल्लिखिते, कृतवेधे, ऊर्ध्वक्षिप्ते लिखिते च। वाच०।

उक्किण्णंतर-उत्कीर्णान्तर-त्रि० ६ ब० अतीव व्यक्तान्तरे, प्रज्ञा०। जी०। उक्किण्णंतरविउलगंभीरखायफलिहा (असुरकुमारावासाः) उत्कीर्णमुत्कीर्य पालीरूपं कृतमन्तरालं ययास्ते उत्कीर्णान्तरे ते विपुलगम्भीरे खातपरिखे येषां तानि उत्कीर्णान्तरविपुलगम्भीरखातमध उपरि च समम्परिखा उपरि विशाला अधः संकुचिता तयोरन्तरेषु पाली अस्तीति भावः। स०।

उक्कित्तण-उत्कीर्तन-न० उत् कृत् ल्युट् संशब्दने, विशे०। आव०। आ० म० द्वि०। व्य०। अनु०। नत्वा जिनं प्रवक्ष्यामि पर्यायोत्कीर्तनं मुदा० ६०। देवनामादेरुच्चैः कीर्तने च। वाच०

उक्कित्तणाणुपुव्वी-उत्कीर्तनानुपूर्वी-स्त्री० उत्कीर्तनं संशब्दनमभिधानोच्चारणं तस्यानुपूर्वी अनुपरिपाटिः। आनुपूर्वीभेदे, अनु०॥

उक्कित्तिय-उत्कीर्तित-त्रि० कथिते, चं० २ पाहु०।

उक्किरिज्जमाण-उत्कीर्यमाण-त्रि० क्षुरिकादिभिरुत्कारिकया भिद्यमाने, जं० १ वक्ष०। कोट्ठपुडाण वा उक्किरिज्जमाणा ण व विक्किरिज्जमाणाण वा। आ० म० प्र०। जी०॥

उक्कीरमाण-उत्कीरत्-त्रि० वेधनकेन विकिरति, खनन्यादिना मृष्टं कुर्वाणे, तं च केइ उक्कीरमाणं पासित्ता वएज्जा किं भवं उक्कीरसि, अनु०। कर्म०॥

उक्कुजिय-उत्कूजित--न० उत्--कूज्--भावे क्त उपरि हूमिति करणे, उवरिहुत्ति करणं उक्कुजियं। नि० चू०। कर्तरि क्तः कृताव्यक्तमहाध्वनौ, प्रश्न० १ द्वा०॥

उत्कुब्ज्य- अव्य० ऊर्ध्वं कायमुन्नम्य ततः कुब्जीभूयेत्यर्थे, "असंजए भिक्खू परियाए उक्कुज्जिया आवउक्कुज्जिया" आचा० २ श्रु० १ अ० ७ उ०।

उक्कुट्ठ-उत्कुष्ट- न० पीलुपर्णिकादेरुदूखलचूर्णिते आर्द्रपर्णचूर्णे. आचा० २ श्रु० १ अ० ६ सू०। सचित्तवणस्स ३ चुण्ण उक्कुट्ठो भण्णइ। नि० चू० ४ उ०। उक्कुट्ठो णाम सचित्तवणस्स इप्पत्तकुरुफलाणि वा उक्खले बुज्झंति। नि० चू० १ उ०।

उक्कुडुग-उत्कुटुक-न० यथास्थानमनवस्थिते, जं० २ वक्ष०। यथास्थानमनिविष्टे, भ० ७ श० ६ उ०। आसने, पुताभगने ज्ञा० १ अ०। भूमावन्यस्तपुततयोपविष्टे, प्रव० ६७ द्वा० पंचा०। "आगम्मुक्कुडुओ संतो पुच्छेज्जा पंजलिउडो" गुरोः समीपमागत्य उत्कुटकोन्मुक्तासनः कारणतः पादपुञ्छनादिस्थः सन् शान्तो वा। उत्त० १ अ०। आ० म०। यथा कुक्कुडिया पादं पसारी तु लहुं चेव। झडिति एवं साहु जाहे परितंतो ताहे भूमिं अच्छिवंतो पसारेति लहुं वा उट्ठेतं संथारपट्ठए ठवेति। आ० चू० ४ अ०। "उक्कडे वा जाव पलाले वा तस्स लाभे संवसेज्जा तस्स अलाभे उक्कुडुए वाणे सज्जिए व विहरेज्जा उट्ठा उग्गहपडिमा" आचा० २ श्रु० २ अ० २ उ० जिनकल्पं प्रतिपन्नः पुनर्नियमादुत्कुटुकः। सू० १ उ०।

पगतः प्रव्रजितुं परिणतः । एतैस्त्रिभिः पदैः (इयरत्ति) प्रतिपक्षपदसहितैरष्टौ भङ्गा लिङ्गिनो लिङ्गसहितस्य गच्छतो भवन्ति । तथाहि निर्दिष्टः संज्ञी अभ्युपगतः १ निर्दिष्टः संज्ञी अनभ्युपगतः ।२। निर्दिष्टो ऽसंज्ञी अभ्युपगतः ३ निर्दिष्टो ऽसंज्ञी अनभ्युपगतः ४ अनिर्दिष्टपदेनाप्येवं चत्वारो भङ्गा लभ्यन्ते एते अष्टौ भङ्गा लिङ्गिन उक्ताः । अशिखाके चैवमेव प्रत्येकमष्टौ भङ्गा भवन्ति सर्वेऽप्येते मीलिताश्चतुर्विंशतिभङ्गा जायन्ते एतेषु विधिमाह ।

पढम बिति ततिय पंच, सत्तम नवम तेरसेसु भंगेसु ।
विपरिणतो वि तस्सेव, होइ सेसेसु सच्छंदो ॥

प्रथमद्वितीयतृतीयपञ्चमसप्तमनवमत्रयोदशेषु विपरिणतोऽपि यं निर्दिश्यागतो यं वा अभ्युपगतस्तस्यैवाभवति शेषेषु चतुर्थषष्ठाष्टमदशमैकादशद्वादशचतुर्दशादिषु चतुर्विंशतिषु सप्तदशसु भङ्गेषु स्वच्छन्दः स्वेच्छः यः प्रतिभावी तस्यैवाभवतीत्यर्थः । इदमेव व्यक्तीकुर्वन्नाह ।

सव्वो लिंगी असिहो य, भावतो जस्स अब्भुवगतो सो ।
णिद्दिट्ठमणलिंगी, तस्सेवाणब्भुवगतोत्ति ॥

सर्वो लिङ्गी अशिखाकश्च श्रावको यस्यान्तिके ऽभ्युपगतः स एव तं लभते । किमुक्तं भवति यो लिङ्गसहितो ऽभ्युपगतः स निर्दिष्टोऽनिर्दिष्टो वा संज्ञी असंज्ञी वा भवतु यश्चाशिखाकः श्रावको ऽभ्युपगतः सोऽपि निर्दिष्टो वा भवतु एष सर्वोऽपि यमेवाभ्युपगतो विपरिणतोऽपि तस्यैवाभवति एतेन प्रथमतृतीयपञ्चमसप्तमनवमत्रयोदशभङ्गास्सूचिताः । तथा यो लिङ्गी निर्दिष्टः संज्ञी च स यद्यप्यनभ्युपगतस्तथापि यमेव निर्दिश्यागतस्तस्यैवाभवति न पुनर्विपरिणतोऽप्यन्यस्यानेन द्वितीयो भङ्गो गृहीतः । शेषेषु तु सप्तदशस्वपि गतेषु यत्राभ्युपगतस्तत्राविपरिणतस्तस्यैव विपरिणतस्तु स्वेच्छायां यत्र तु नाभ्युपगतस्तत्र विपरिणतो ऽविपरिणतो वा यथा स्वच्छन्दमाभाव्य इति गतं कथं कल्पो ऽभिधारण इति द्वारम् ।

अथैकग्रामे इति द्वारमाह ।

असन्नी उवसमितो अ-प्पणो इच्छीइ अन्नहिं तस्स ।
दट्ठूणं च पगिणए, उवसमितं जस्स वा खेत्तं ॥

केनचिद्धर्मकथिना कश्चिदसंज्ञी मिथ्यादृष्टिरुपशमितः प्रव्रज्याभिमुखीकृतः स यावन्नाद्यापि सम्यक्त्वं प्रतिपद्यते तावत्प्रव्रजन् क्षेत्रिकस्याभवति । अथ सम्यक्त्वं प्रतिपन्नस्तस्य क्षेत्रमन्यस्याचार्यस्य सत्कं ततो ऽसावात्मन इच्छया आभवति यदि क्षेत्रिकस्योपविष्टस्ततस्तस्यैव अथोपशामयत उपस्थितस्तत्रोपशामयत एव एतौ द्वौ मुक्त्वा अन्यस्य नाभवति (अन्नहित्ति) अथान्यक्षेत्राद्बहिरुपशामितस्तदा तस्योपशामकस्याभवति । अथ केनापि नो कथितः परमन्यं कमप्याचार्यादिकं दृष्ट्वा स्वयमेव प्रव्रज्यायां परिणतस्ततोऽसौ क्षेत्राद्बहिरुपशान्त उपशामक आभवति । मूर्तिदर्शनद्वारेणोपशमनकारिण इत्यर्थः । अथ क्षेत्रान्तरुपशान्तस्ततो यस्य सत्कं क्षेत्रं तस्याभाव्यः । अमुमेवार्थं सविशेषमाह ।

परखित्ते वसमाणो, अइकमंतो व ण लभति असन्नित्थिं ।
दट्ठूण पुव्वसन्नी, गाहितमस्सावि सो लभति ॥

परक्षेत्रे मासकल्पे वर्षावासे वा वसन् अतिक्रामन् वा परक्षेत्रमगन्ता गन्तुमनास्तत्रावस्थितो ऽसंज्ञिनमप्रतिपन्नसम्यक्त्वं स्वयमुपशमितमपि न लभते । अथ कंचिन्मिथ्यादृष्टिं सम्यक्त्वमादिशब्दादणुव्रतानि वा ग्राहयित्वा क्षेत्रान्तरं गतः भूयोऽप्यन्यदा तदेव क्षेत्रमायातः स च प्रागुपशमित इदानीं पूर्वसंज्ञी लभ्यते ततस्तं पूर्वसंज्ञिनं सम्यक्त्वादिग्राहितं स उपशमच्छन्देन लभते । किमुक्तं भवति । उपशमिकं क्षेत्रिकं वा यमभिरोचयति तस्याभवति । एवं त्रयाणां वर्षाणामागतो मन्तव्यः । त्रिषु वर्षेषु पूर्णेषु स पूर्वसंज्ञी क्षेत्रिकस्यैवाभाव्यो नोपशामयतः ॥ आह च चूर्णिकृत् "तिसु वरिसेसु पुण्णेसु खेत्तियस्स वा भवति । तो उवसामितस्सत्ति" गतमेकग्रामद्वारम् ॥

अथातिक्रामन् द्वारमाह ।

मग्गंतो अन्नखित्ते, अभिधारितो उ भावतो तस्स ।
खित्तिम्मि खित्तियस्स, बाहिं वा परिणतो तस्स ॥

शैक्षः कंचिदाचार्यं मार्गयन् व्रजति तस्य चान्यक्षेत्रे परकीयक्षेत्राभ्यन्तरे पथि गच्छतः कश्चिद्धर्मकथी मिलितः स यद्याकर्षणहेतोस्तस्य धर्मं कथयति तदा यमाचार्यमभिधारयन् व्रजति तस्याभवति । अथ भावतः स्वभावादेव कथयति ततस्तस्य धर्मकथिकस्याभवति । तुशब्दो विशेषणे स चैतद्विशिनष्टि यदि क्षेत्राभ्यन्तरे स्वभावतः कथयति ततः क्षेत्रिपरिणतः प्रव्रज्याभिमुखीभूतः क्षेत्रिकस्य भवति बहिस्तु परिणतस्तस्य कथयत आभाव्य इति । इदमेव व्याचष्टे ॥

अभिधारितो वच्चति, पुच्छितो साहुवच्चतो तस्स ।
परिसगतो व कहइ, कट्टण हेउं न तं लभति ॥

कंचिदाचार्यमभिधारयन् शैक्षो व्रजति तस्य कोऽपि साधुः पथि गच्छन् मिलितस्तेन च पृष्टोऽमुक आचार्यः कुत्रास्ते साधुराह किं तेन भवतः प्रयोजनम् । स प्राह । तस्यान्तिके प्रव्रजितुकामोऽहं परं दृष्ट्वा तस्य व्रजत एवाकर्षणहेतोः( साहत्ति ) धर्मं कथयति यद्वा ग्रामे क्वापि पर्षदन्तर्गतस्य धर्मं कथयत उपस्थितस्ततो वन्दित्वा तथैव स्वाभिप्राये कथिते स आकर्षणहेतोर्विशेषतो धर्मं कथयति कथिते च यद्यसौ प्रव्रजितुमभिलषति ततो न तं शैक्षं लभते । अभिधारिताचार्यस्यैव स आभवति ॥

उज्जुकहए परिणतं, अंतोखित्तस्स खित्तिओ लभइ ।
खित्तबहिं तु परिणयं, लभउज्जुकहीण खलु माई ॥

अथासौ कथको धर्मकथी ऋजुकः सद्भावतः कथयति नाकर्षणहेतोः स च प्रव्रज्यायां परिणतः क्षेत्रान्तः परिणतं क्षेत्रिको लभते क्षेत्राद्बहिः परिणतं तु ऋजुको धर्मकथी लभते न खलु मायी मायावान् ।

परिणमइ अंतरा अं-तरा य भावोणियत्ति तस्सो से ।
खित्तम्मि खित्तियस्स, बहिं तु परिणतो तस्स ॥

अथ अन्तरान्तरा तस्य भावः प्रव्रज्यायां परिणमते निवर्तते वा ततः क्षेत्रे परिणतः क्षेत्रिकस्याभवति बहिस्तु परिणतस्तस्य धर्मकथिकस्याभवतीति । गतमतिक्रामन् द्वारम् ॥ अथ द्विधा मार्गणा शिष्ये एकविधा च प्रतिच्छके इति यदुक्तं तत्र प्रतीच्छकविषयां तावदेकविधां केवलसाज्ञातीयविषयां मार्गणामाह ॥

माया पिया य भाया, भगिणी पुत्तो तहेव धुत्ता य ।
छप्पेते नालबद्धा, सेसए भवंति आयरिया ॥

माता पिता भ्राता भगिनी पुत्रस्तथैव दुहिता वा एतेऽपि अनन्तरवल्लीमधिकृत्य नालबद्धा मन्तव्याः । एते च अभिधारयन्तः प्रतीच्छकस्याभवन्ति । उपलक्षणमिदं तेन परवल्लीबद्धा अपि वक्ष्यमाणाः षोडश जना अभिधारयन्तस्तस्यैवाभवन्ति । शेषास्तु ये नालबद्धा भवन्ति तेषु आचार्याः

प्रभवन्ति न प्रतीच्छकः इदमेव व्यक्तीकुर्वन् परंपरावल्लीं प्रतिपादयति ।

माओ माया पिया भाया, भगिणी य एव पिउणा वि ।
भायादिपुत्तधूता, सोलसगं छच्च वावीसं ।
वावीस लसति एए, परिच्छओ जति य तमभिधारंति ।
अभिधारमणभिधारे, णायमणाते तरेण लभे ॥

मातुः संबन्धिनो माता पिता भ्राता भगिनी चेति चत्वारो जनाः पितुःसंबन्धिनोऽप्येवमेव चत्वारो जनाः (भायादिपुत्तधूयति) भ्रातुः संबन्धिनः पुत्रो दुहिता चेति जनद्वयम् आदिशब्दात् भगिन्या अप्यपत्यं भागिनेयः भागिनेयी चेति द्वयम् । पुत्रस्यापत्यं पौत्रः पौत्री चेति द्वयम् । दुहितुरपत्यं दौहित्रो दौहित्री चेति । सर्वसंख्यया षोडशकं भवति । षट् वाऽनन्तरवल्लीजना अत्र प्रक्षिप्यन्ते ततो द्वाविंशतिर्भवति द्वाविंशतिमप्येतान् जनान् प्रतीच्छको लभते। यदि च तं प्रतीच्छकमभिधारयन्तस्ततस्तेऽप्याचार्यस्यैवाभाव्या इति नव इतरे उक्ताः ये व्यतिरिक्तास्तानभिधारयतो वा ज्ञातकान् वा अज्ञातकान् वा प्रतीच्छको लभते । अथ शिष्याविषयां द्विविधां मार्गणामाह ।

नायगमणायगा पुण, सीसे अभिधारमणभिधारे य ।
दो क्खरदिट्ठंता स-व्वे वि भवति आयरिए ॥

द्विविधा मार्गणा तत्र ये शिष्यस्य ज्ञातकाः स्वजना ये चाज्ञातका अस्वजनास्ते तमभिधारयन्तो वा अनभिधारयन्तो वा सर्वेऽप्याचार्यस्याभवन्ति न शिष्यस्य कुत इत्याह खरस्वरदृष्टान्तात् “ दासेणसेस्वरो किओ दासो वि सेस्वरोविमे इति ” निदर्शनात् । अथ पडिसेहय कहं कप्पो विहज्जइ इति द्वारं निरूपयन्नाह ।

दुव्वुप्पन्न गिलाणे, असंथरं ते य चउगुरुच्छेहं ।
वयमाणइमे संघा-पच्छप्पेतए लभंति ॥

एकत्र ग्रामे गच्छः स्थितस्तेषां च ग्लान उत्पन्नस्ततःप्रतिचरणे साधवो व्यापृताः सन्तः सर्वेऽपि भिक्षामटितुं न प्रभवन्ति ततश्च संस्तरणं संज्ञानमेव ग्लानोऽपूर्वोत्पत्तेरसंस्तरणं शैक्ष उपस्थितस्ते च ग्लानकार्यभृत्यतया शैक्षं दापयितुं न पारयन्ति । अतो भगवद्भिः प्रतिषिद्धं न तैः शैक्षो दीक्षणीयः । यदि दीक्षयन्ति ततश्चतुरो गुरुकाः । अथालोचनादौ अमीषां प्रकाराणां कृत्वा प्रेषयन्ति ( वयमाण इत्यादि ) तं शैक्षं मुण्डयित्वा व्रज त्वमेकाक्येवामुकाचार्यसन्निधाविति वदन्तो विसर्जयन्ति । यद्वा तस्यैकं कमपि सहायं संघाटकं वा समर्पयन्ति एते त्रयः प्रकारा मुण्डितस्य भवन्ति । अमुण्डितस्याप्येते त्रयः एते षडपि तं शैक्षं न लभन्ते । षड्भिः प्रकारैः प्रेषयन्त इत्यर्थः । येषां समीपे प्रेषयन्ति तेषामेवासौ शिष्यः । अथात्मसमीपे स्थापयन्ति तत इमे दोषाः ।

आयरिय गिलाण गुरुगा, सहस्सा अकरणम्मि ।
चउलहुगा परितावण, णिप्फणदुहतो भंगे य मूलं तु ॥

शैक्षं प्रव्राज्य तद्वैया वृत्यव्याकुलाः सन्तो यद्याचार्याणां ग्लानस्य वा वैयावृत्तिं न कुर्वन्ति ततश्चतुर्गुरुकः । अथ शैक्षस्य न कुर्वन्ति ततश्चतुर्लघुकः । अथ ग्लानादीनामनागाढमागाढं वा परितापना भवति तत आत्मनिष्पन्नम् ( दुहतो भंगयत्ति ) शैक्षस्य यन्निष्क्रमणं ग्लानस्य च यन्मरणमेष द्विधा भङ्ग उच्यते तत्र मूलं भवति । अथ द्वितीयपदमाह ।

संथरमाणे पच्छा, जायं गहिते व पच्छगेलन्नं ।
अप्पव्वइते पव्वइए, संघाडगे व वयमाणे ॥

इह गच्छे ग्लानो विद्यते परं नागाढं ग्लानत्वं ततः संस्तरति ते शैक्षमपि वर्तापयितुमाचार्याणामपि कर्तुमेवं प्रव्राजिताः । शैक्षः पश्चात्त्वग्लानत्वमागाढं समजनि ततो वर्तनपरिवर्तनादिव्यापृताय चेऽऽवल्लिकां न हिण्डते येऽपि हिण्डन्ति तेऽपि न शक्नुवन्ति सर्वेषामपि पर्याप्तमानेतुमेवमसंस्तरणं जातम् यद्वा मूलत एव ग्लानत्वं पूर्वं नासीत् किंतु पाश्चात् शैक्षे गृहीते प्रव्रजिते सति ग्लानत्वमुत्पन्नं ततोऽसौ षड्भिः प्रकारैः प्रेषणीयः । तद्यथा अप्रव्राजितोऽमुण्डितः प्रव्रजितो मुण्डितः एष द्विविधोऽपि त्रिधा संघाटकेन एकसाधुना ( वयमाणत्ति ) एकाकी व्रजते व्रजमानैरेकाकित्वेनेत्यर्थः । अथ संथरमाणे पच्छा जायंति पदं विशेषतो व्याचष्टे ।

नागाढं पउणिस्सइ, अचिरेणं तं च जायमागाढं ।
सेहं वट्ठा वेओ, ण भवति गिलाणकित्तं वा ॥

पूर्वमनागाढं ग्लानत्वं भवेत् ततः शैक्षे उपस्थिते चिन्तितम् । अचिरेणैवायं ग्लानः प्रगुणीभविष्यति । ततः शैक्षे प्रव्रजिते तद्ग्लानत्वमागाढं जातं ततस्ते शैक्षं वर्तापयितुं ग्लानकृत्यं च कर्तुं समकमेव न चरन्ति न शक्नुवन्ति । अतोऽन्येषां समीपे प्रेषयन्तः शुद्धाः ।

अपडिच्छाण तेरसि जं, सेहविया वडाउ पावेंति ।
तं चेव पुव्वभणियं, परितावणसेहभंगाइ ॥

इतरे नाम येषां समीपे प्रेष्यते । यदि ते न प्रतीच्छन्ति तदा चतुर्गुरुकः । यच्च ते शैक्षव्यापृताः प्राप्नुवन्ति तन्निष्पन्नं तेषामप्रतीच्छतां प्रायश्चित्तम् । किं पुनस्ते प्राप्नुवन्तीत्याह । तदेव पूर्वभणितं परितापनशैक्षभङ्गादिकमत्र दोषजातं मन्तव्यम् । किमुक्तं भवति ग्लानो ऽप्रतिचर्यमाणः परिताप्येत शैक्षो वैयावृत्त्येऽभिधीयमाने प्रतिभज्येत । आदिशब्दाद् ग्लानस्य मरणं वा भवेत् ।

संखडिए वा अट्ठा, अमुंडियं वा य पेसंती ।
वयमाणे एगेण य, संघाडएण ण लभंति ॥

संखडिकरणंतस्या वा अर्थाय मनोज्ञाहारलम्पटशैक्षममुण्डितं वा प्रेषयन्ति तत्रापि (वयमाणित्ति) एकाकितया प्रेषणेन एकसाधुना संघाटकेन च षट् प्रकारा भवन्ति। एतैः षड्भिरपि प्रेषयन्तो न लभन्ते । इदमेव व्याख्यानयाति ।

होहिंति ण मग्गाइं, आवाहविवाहपव्वयमहादी ।
सेहस्स व सागारियं, विद्दाविस्सइविनेसिंति ॥

इह शैक्षः केषांचिदुपस्थितस्तत्र चावाहविवाहपर्वतमहादीनि प्रकाराणि नवाग्राणि प्रत्यासन्नाणि भविष्यन्ति ।आवाहो बहादरगृहानयनं विवाहः पाणिग्रहणं पर्वतमहः प्रतीतः । आदिशब्दात् तडागनदीह्रदादिपरिग्रहः । शैक्षस्य च तत्र सागारिकस्तत्प्रव्राजनभयम् । यद्वा यद्येष शैक्षोऽत्र स्थास्यति तदा संखडिभोजनगृहमाविद्रास्यति । स विनश्यति । यदि च वयमनेनैव सह गच्छामस्ततः संखडेः स्फिटामः अत एवमन्यत्र प्रेषयाम इति विचिन्त्य षड्भिःप्रकारैस्तं प्रेषयन्ति । ते च लभन्ते येषामन्तिके प्रेषयन्ति तेषामेव स चाभवतीति । गतं प्रतिषिद्धे व्रजति कथं कल्पो विधीयत इति द्वारम् । संप्रति संगारदत्ते कथं कल्पो विधीयते इति द्वारमाह ।

गिहियाणं संगारो, संगारं संगिते करेमाणे ।
अणुमोयनि मोहिंसं, पव्वावितो जेण तस्सेव ॥

गृहिणां संबन्धी यः संगारो युष्मदन्तिके अस्माभिरसंयतः कालादूर्ध्वं प्रव्रज्या ग्रहीतव्येति संकेतस्तं प्रतीच्छन् संयतः स्वयं च तैः सार्द्धं संगारमसुष्मिन् दिनेऽमुष्मान् प्रव्राजयिष्यामीति लक्षणं कुर्वन् हिंसां यावदसौ न प्रव्रजति तावन्तं कालं षट्कायविराधनालक्षणामनुमोदयति स च शैक्षस्तं प्रति विपरिणतो येन प्राव्राजितस्तस्यैवाभवति न संकेतदायिन इति । किंच ।

विप्परिणमइ सव्वं व, परओ असछग्रअसतित्थीव ।
मोत्तुं वासावासं, ण होइ संगारतो इहरा ॥

संकेतकरणानन्तरं शैक्षः स्वयं वा विपरिणमति परतो वा परेण स्वजनादिना स विपरिणम्येत आसन्नविहारिषु वा प्रव्रजेत् अन्यतीर्थिको भवेत् । अतो वर्षावासं मुक्त्वा इतरथा पुष्टालम्बनं विना संगारो न प्रतीच्छनीयो न वा कर्त्तव्यः किमर्थं पुनः संगारमसौ करोतीत्याह ।

संखरूसमायावी, खित्तं मोत्तव्वयं व मा होज्जा ।
एएहिं कारणेहिं, संगारकरंति चउगुरुगा ॥

संखडिस्तत्र ग्रामे उपस्थितानां परिहर्त्तुं न शक्नोति संज्ञातका वा तस्य तत्र भूयांसस्तेषामाग्रहात् शक्नोति गन्तुं क्षेत्रं वा तदतीव सस्निग्धमधुराहारादिलाभापन्नं शैक्षस्य च तत्र सागारिकं ततस्तन्मोक्तव्यं माभूत् । एतैरेवमादिभिः कारणैः । शैक्षस्य संगारं यः करोति तस्य चतुर्गुरु ।

अथ गृहस्थाः किमर्थं संगारं कुर्वन्तीत्याह ।

रिणवाहिं मोक्खेउं, कुडुंबवित्तिं वतित्थि ते गिण्हे ।
एमादि अणाउत्ते, करिंति गिहिणो उ संगारं ॥

ऋणं वा व्याधिं वा मोक्षयितुं अपनेतुं कुटुम्बस्य वा पश्चान्निर्वहणायोग्यां वृत्तिं संपादयितुं यद्वा ग्रीष्मस्तदानीमतिक्रान्तो वर्षावास आयातः एवमादिभिः कारणैः शैक्षस्यानायुक्ते अक्षणिकतायां गृहिणः संगारं कुर्वन्ति । अथ द्वितीयपदेन संगारे प्रतीष्यमाणे आभाव्यविधिमाह ।

अगविट्ठोमित्ति अहं, लब्भति असढेहिं विपरिणतो वि ।
वोयं तप्पाहिंति व, ते वियणं अंतरा गंतु ॥

संगारे कृते यत्र शठैर्ग्लानादिकार्यव्यापृतैः स शैक्षो न गवेषितस्तदाऽसावगवेषितो नैकमपि वारमहममीभिर्गवेषित इति बुद्ध्या विपरिणतोऽपि लभ्यते तेषामेवाभवतीत्यर्थः । परं तेऽपि साधवस्तमन्तरा गन्तुं वा नोदयेयुरिति संकेतस्मारणपुरस्सरं शिक्षयन्ते अथ स्वयं गन्तुं न प्रभवन्ति ततः (तप्पाहिंति) संदेशं तस्य प्रेषयन्ति ।

एवं खलु अच्छिन्ने, वेला तहेव दिवसेहिं ।
वेला पुण्णमपुण्णे, वाघाए होइ चउभंगो ॥

एवं तावदच्छिन्ने अनियते संगारे विधिरुक्तः यस्तु छिन्नः संगारस्तत्र विधिरभिधीयते छिन्नो नाम क्षेत्रतः कालतश्च प्रति नियतः । क्षेत्रतो ग्रामवनखण्डादौ प्रव्रज्यादानार्थं भवद्भिः समागन्तव्यं कालतो वेलया दिवसैर्मासैश्च प्रतिनियतैस्तत्र च वेलाया उपलक्षणत्वाद्दिवसैश्च (पुण्णमपुण्णत्ति) पूर्णे अपूर्णे वा संगारे काले व्याघातो भवेत् । तत्र चेयं चतुर्भङ्गी । कालपूर्णो निर्घातं प्राप्तः, १ कालः पूर्णः संघातः, २ संजातकालोऽव्याघातपूर्णपरं निर्व्याघातं तत्र प्राप्तः, ३ कालोऽप्यपूर्णो व्याघातोऽपि जात, इति ४ अथवा अन्यथा चतुर्भङ्गी संयतस्य व्याघातो न गृहस्थस्य. गृहस्थस्य व्याघातो न संयतस्य । द्वयोरपि व्याघातः । द्वयोरव्याघातः ।

तत्र संयतस्य व्याघाते विधिमाह ।

मंदट्ठिगा ते तहियं वि पत्ते, जे तिंमणा ते य सढा ण होंति ।
स लब्भती अण्णगतो तहेव, दप्पट्ठिया जे ण उ ते लभंति ॥

यत्र ग्रामादौ संकेतः कृत आसीत् तत्र स शैक्षः प्राप्तः साधवस्तु न प्राप्तास्ततो यद्येवं मन्यते मन्दार्थिनस्ते सद्विषये मन्दप्रयोजना अत एव नायाता इति बुद्ध्या विपरिणतः । ते च साधवो यदि शठप्रव्राजिकादिप्रतिबन्धयुक्ता न भवन्ति ग्लानादिकार्यव्यापृता यतो याता इति भावः ततः स शैक्षोऽन्यगतोऽप्यन्यमाचार्यमभ्युपगतोऽपि तैः साधुभिर्लभ्यते । ये तु दर्पतः स्थितास्ते नैव तं लभन्ते येन प्रव्राजितस्तस्यैवासौ शिष्य इति ।

पंथेधम्मकहिस्सा, उवसंतो अंतरा उ अण्णस्स ।
अभिधारितो न तस्स उ, इयरे पुण जो उ पव्वावे ॥

यदसौ येन साधुना संकेतो दत्तस्तदभिमुखं प्रस्थितः पथि गच्छन् अन्तरा अन्यस्य धर्मकथिनः समीपे धर्ममाकर्ण्योपशान्तः स च स्वयमभिधारयन् गच्छति तदा तस्यैवाभिधारितस्याभवति । इतरः पुनरनभिधारयिता ततो धर्मकथी प्रव्राजयति । इदमेव व्याचष्टे ।

पुण्णेहिं पि दिणेहिं, उवसंतो अंतरा उ अण्णस्स ।
अभिधारित्तो तस्स उ, इयरं पुण जो उ पव्वावे ॥

पूर्णैरपिशब्दादपूर्णैरपि दिवसैरन्तरा पथि वर्त्तमानोऽन्यस्य सकाशे उपशान्तः सन् अभिधारयति प्रव्रजामि तावदहममीषां समीपे परं पूर्वेषामेवाहं शिष्यः एवमभिधारयन् तस्यैव पूर्वाचार्यस्याभवति इतरो नाम यः पूर्वेषां विपरिणतस्तं प्रव्राजयति तस्यैव स शिष्यः । नियमप्रदर्शनार्थमिदमाह

णूणादिसमोसरणे, दट्ठूण विसं तु परिणतो अण्णं ।
तस्सेव से ण पुरिसे, एमेव पहम्मि दव्वं ते ॥

न्यूनादौ समवसरणे तं पूर्वाचार्यं दृष्ट्वाऽपि यद्यन्यमेव परिणतः प्रतिपन्नस्तदा तस्यैवासौ शिष्यो न पूर्वस्य एवमेव पथि व्रजतामप्यनाघातानामाभाव्यविधिरवगन्तव्यः । अथ कः संयतस्य गृहस्थस्य वा व्याघातो न भवतीत्याह ।

गेलण्णतेणग नदी, सावयपडणीयवालमहिया वा ।
इइ समणे वाघातो, महिगा वज्जा उ सेहस्स ॥

ग्लानत्वं तस्य साधोरुत्पन्नं स्तेनका वा अन्तराले द्विविधा नदी वा पूर्णा श्वापदा वा व्याघ्रादयः । पथि तिष्ठन्ति प्रत्यनीको वा तं प्रतिचरन्तास्ते व्यालाः सर्पास्ते वा पथि गच्छन्तं दशन्ति महिका वा पतितुमारब्धा च एवं श्रमणे व्याघातः संभवति शैक्षस्यापि महिकावर्जैः सर्वोऽप्येष एव व्याघातो वक्तव्यः । पूर्वं स्वयं विपरिणतमाश्रित्य विधिरुक्तः । अथान्येन विपरिणामितस्य विधिमाह ।

विप्परिणामियभावो, ण लब्भते तं च णो वियाणामो ।
विप्परिणामियकहणा, तम्हा खलु होंति कायव्वा ॥

विपरिणामितो विवक्षिताचार्याद्व्युत्सारितो भावो यस्य स विपरिणामितभावः एवंविधः शैक्षो लभ्यते विपरिणामकस्यभवतीति भावः । शिष्यः प्राह तमेव विपरिणमनं तावद्वयं न विजानीमः । सूरिराह । यत एवं भवतो जिज्ञासा तस्माद्विपरिणामनं विपरिणामितं तस्य कथना प्ररूपणा कर्त्तव्या भवति । तामेवाह ।

दिट्ठमदिट्ठविदेसत्थ, वि गिलाणे मंद धम्म अपसुत्ते ।

णिप्पत्ति णत्थि तस्स, तिविहं गरहं व सा भवति ॥

शैक्षः कमप्याचार्यमभिधार्य गच्छन् मार्गे कमपि साधुं दृष्ट्वा पृच्छति अमुक आचार्यो भवद्भिः कदाचित् दृष्ट उताहो न दृष्टः एवं दृष्टे स साधुर्विपरिणामनं बुद्ध्वा भणति । किं तैः करिष्यसि शैक्षः प्राह । प्रव्रजितुकामोऽहं तेषां समीपे एवं श्रुत्वा साधुर्दृष्टानपि तान् न मया दृष्टा इति अथवा स्वदेशस्थानपि भणति विदेशस्थास्ते एवमग्लानानपि ग्लानास्ते व्रज त्वमपि तस्य द्वितीयः । अथवा ब्रवीति यस्तस्य पार्श्वे प्रव्रजति सोऽवश्यं ग्लानो ग्लानवैयावृत्त्ये वा नित्यं व्यापृतो भवति । अथवा मन्दधर्मिणस्ते ततः किं तव मन्दधर्मता रोचते । यद्वाऽसौ अल्पश्रुतस्त्वं च ग्रहणधारणासमर्थस्तस्य पार्श्वे गतः किं करिष्यसि त्वमेव वा तं पाठयिष्यसीति । अथवा तस्य शिष्याणां निष्पत्तिरेव नास्ति यं प्रव्राजयति स सर्वोऽपि व्रती भज्यते म्रियते वेति भावः । त्रिविधां वा नामवाक्कायभेदात् ज्ञानदर्शनचारित्रभेदाद्वा त्रिप्रकारां गर्हा वक्ष्यमाणरीत्या यदाऽसौ करोति सा विपरिणामता मन्तव्या । एतां कुर्वंस्तश्चतुर्गुरुकम् न च तं शैक्षं लभते अतो नैवं कथनीयम् । किंतु दृष्टादिपदेषु सद्भावः कथनीयः । कथमित्याह ।

जइ पुण तेण ण दिट्ठा, णेव सुया पुच्छितो भणति ।
अस्से गया विदेसं, तो साहइ जत्थ ते विसए ॥

योऽसौ शैक्षेण पृष्टस्ततो यदि ते सूरयो न दृष्टा नैव श्रुतास्ततः पृष्टः सन् भणति अहं न जानामि । अन्यान् अपरान् साधून्पृच्छ । अथ जानाति ततो यथा वस्थितं कथनीयं यदि विदेशगतास्ततो यत्र विषये देशे ते वर्त्तन्ते तं कथयति । अथ नाख्याति हीनाधिकं वा आख्याति ततोऽपरिणामनाभवति

सेसेसु असब्भावं, णातिक्खमंदधम्मवज्जेसु ।
गूहयते सब्भावं, विप्परिणति हीणकहणे वा ॥

शेषेषु ग्लानादिषु पदेषु मन्दधर्मवर्जेषु सद्भावं व्याख्याति यद्यप्यसौ ग्लानो ऽल्पश्रुतो वा शिष्यनिष्पत्तिर्वा तस्य नास्ति तथापि तत्र कथनीयम् । यस्तु मन्दधर्मपार्श्वस्थादिस्तत्र सद्भावः कथनीयो मा संसारं पारं गन्तुकामः सुतरां संसारे पतिष्यतीति कृत्वा यस्तु ज्ञानदर्शनचारित्रतपःसंपन्नो वादी धर्मकथी संग्रहोपग्रहकारी तद्विषयं सद्भावं यदि गूहयति अपलपति हीनकथनं वा करोति अधिकमप्यन्याचार्येभ्यो हीनं कृत्वा कथयतीत्यर्थः । एषा विपरिणामता मन्तव्या । अथ त्रिविधां गर्हां व्याचिख्यासुस्तत्स्वरूपं तावदाह ।

सीसो कंपणगरिहा, हत्थविलंबि य अहो य हक्कारो ।
वेल्लाकरणाय दिसा, चिट्ठतिणामं ण घेत्तव्वं ॥

गर्हा नाम शैक्षेण पृष्टस्सन् शीर्षकम्पनं करोति हस्तौ वा धुनीते विलम्बितानि वा करोति हस्तावोष्ठौ वा विलम्बयतीत्यर्थः । यद्वा ब्रवीति । अहो प्रव्रज्यां हाकारं वा करोति हाहा कष्टं यदेवं नष्टो लोकः ( वेल्लत्ति ) नामापि न वर्त्तते । अस्यां वेलायां गृहीतुमिति । कर्णौ वा तदीयनामग्रहणे स्थगयति यस्यां वा दिशि स तिष्ठति तस्यां न स्थातव्यमिति ब्रवीति । उपलक्षणत्वादक्षिणी वा निमीलयति यद्वा तामपि तस्यातिरात्रेण ग्रहीतव्यमतः आस्तामेतद्विषयं पृच्छादिकमिति ।

नाणे दंसणचरणे, सुत्ते अत्थे य तदुभए चेव ।
अहव होति तिहा गरहा, कायो वाया मणो वावि ॥

ज्ञाने दर्शने चारित्रे चेति त्रिविधा गर्हा भवति । तत्र ज्ञानगर्हा नाम न उपस्थितेनैव किंतु तदीयेन ज्ञानेन । दर्शनगर्हा तु मिथ्यादृष्टिर्नास्तिकप्रायोऽसौ । चारित्रगर्हा सातिचारं चारित्रो ऽचारित्री वासौ । अथवा सूत्रे अर्थे तदुभयं चेति त्रिविधा गर्हा । तत्र सूत्रं तस्य शङ्कितं स्खलितमर्थं पुनरवबुध्यते १ यद्वा अर्थं नावबुध्यते सूत्रं पुनर्जानाति २ उभयमपि वा तस्याविशुद्धं जानाति वा किमपीति ३ अथवा कायवाग्मनोभेदात् त्रिधा गर्हा । तत्र कायगर्हा तेषामाचार्याणां शरीरं हुण्डादिसंस्थानं विरूपं वा । वाग्गर्हा मन्मनं काहलं वा ते जल्पन्ति । मनोगर्हा न तेषां तथाविधोहापोहपाटवं भवाग्रहणसामर्थ्यमिति । अथैषा त्रिविधा गर्हा भवति ।

प्रकारान्तरेण गर्हामेवाह ।

पव्वयसि आम कस्स स-कासे अमुगस्स निद्दिट्ठो ।
आयपराधिगसंसी, उवहणति परं इमेहिं तु ॥

कोऽपि शैक्षः केनापि साधुना पृष्टः प्रव्रजसि त्वं स प्राह ओम कस्य सकाशे इति पृष्टः सन् भूयोऽप्याह अमुकस्य समीपे । एवं निर्दिष्टे उक्ते स साधुः आत्मानं परस्मादधिकं शंसितुमाख्यातुं शीलमस्येत्यात्मपराधिकशंसी परममीभिः वचनैरुपहन्ति । तद्यथा ॥

अबहुस्सुतो वि एव्वं, जहच्छंदा तेसु वा संसग्गी ।
ओसण्णा संसग्गी व, तेसु एक्केक्कए दुन्नि ॥

अहं बहुश्रुतः सोऽबहुश्रुतः । अहं विशुद्धपाठकः स पुनरविशुद्धपाठी । यद्वा यथाच्छन्दास्ते आचार्यास्तैर्वा यथाच्छन्दैः सह ते गाढतरं संसर्गिणः । गाथायां तृतीयार्थे सप्तमी । अवसन्ना वा तैः सार्द्धं संसर्गिणो वा एवं पार्श्वस्थादावप्येकैकस्मिन् भेदौ द्वौ द्वौ दोषावेवमेव वक्तव्यौ ।

अथ कायवाङ्मनोगर्हामेव प्रकारान्तरेणाह ।

सीसोकंपणहत्थे, कण्णदिसा अत्थि काइगी गरहा ।
वेल्ला अहो य हात्तिय, णामत्ति काइगी गरहा ॥

शीर्षकम्पनं हस्तविलम्बनं कर्णस्य अन्यस्यां दिशि स्थापनम् । अक्षिनिमीलनमनिमिषलोचनस्य वा क्षणमवस्थानम् । एषा सर्वाऽपि कायिकी गर्हा यत्तु यस्यां वेलायां नाम न गृहीतव्यम् अहो कष्टं हाहाकारकरणं नाम च तस्य कदापि न ग्रहीतव्यमित्यादि भाषणं सा कायिकी गर्हा ।

अह माणसिगी गरहा, निज्जाति णित्तवत्तरागेहिं ।
धीरत्ताण ए यं पुण, अभिणंदइ य तं वयणं ॥

अथानन्तरं मानसिकी गर्हा मनसि तमाचार्यं जुगुप्सते कथमेतत् ज्ञायते इत्याह नेत्रवक्त्रयोः संबन्धिनो ये रागा मुकुलनविरञ्जनभवनादयो विकारास्तैः लक्ष्यते मानसिकी गर्हेति भणिता साध्विदं कृत्यमेतद्भव्यानामित्यादिवचोभिर्न तदीयं वचनमभिनन्दति धीरतया वा तूष्णीकमास्ते । एवमन्यतरस्मिन् गर्हाप्रकारे कृते तस्य शङ्का भवति अवश्यमकार्यकारी स आचार्यादिः संभाव्यते । नचामी साधवोऽलीकं भाषन्ते । अहमपि तत्र गत आत्मानं नाशयिष्यामीति ।

एताणि य अन्नाणि य, विपरिणमणपदाणि सेहस्स ।
उवहिणियडुप्पहाणो, कुव्वति अणज्जया केइ ॥

एतानि चानन्तरोक्तानि अन्यानि च द्रव्यक्षेत्रकालभावाः शैक्षस्य विपरिणमनपदानि भवन्ति । तत्र द्रव्यतो मनोज्ञाहारादि ददाति । क्षेत्रतः प्रधानानिवाते मनोनुकूले प्रदेशे तं स्थाप

यति। कालतो वेलायामेव भोजयति। भावतस्तस्याकर्षणार्थं हितयुक्तमुपदेशं ददाति। एवं केचिदनृजुकाः शठा उपधिः परवञ्चनाभिप्रायो निकृतिः कैतवार्थं प्रयुक्तवचनाकाराच्छादनं ते प्रधाने येषां ते तथाविधविपरिणामनपदानि कुर्वन्ति।

उपसंहरन्नाह।

एए सामण्णयरं, कप्पं जो अतिचरेज्ज लोभेण।
थेरे कुलगणसंघे, चाउम्मासा भवे गुरुगा॥

एतेषामव्याहतादिद्वारकलापप्रतिपादितानां कल्पानामन्यतरकल्पं विधाय आचार्यादिर्लोभदोषतोऽतिचरेत् अतिक्रामेत् तं सम्यक् ज्ञात्वा कुलगणस्थविरं कुलादिसमवायेन वा तस्य पार्श्वात्तं शैक्षमाकृष्य चत्वारो मासा गुरुकास्तस्य प्रायश्चित्तं दातव्यम्। अथ स्थविरैः समवायेन वा भणितोऽपि तं शैक्षं न समर्पयति ततः कुलगणसंघबाह्यः क्रियते॥ बृ० ३ उ०॥ ( साधारणावग्रहस्थितानां कस्य क्षेत्रमिति खेत्तशब्दे ) वर्षास्ववग्रहः पज्जुसणा शब्दे ) ( अवग्रहस्य ऊर्ध्वतो मानं सागारिय शब्दे )।

( १७ ) अवग्रहे सप्त प्रतिमाः।

साम्प्रतमवग्रहविशेषानधिकृत्याह।

से भिक्खू वा भिक्खुणी वा आगंतारेसु वा ४ जावोग्गहियंसि जे तत्थ गाहावईण वा गाहावइपुत्ताण वा इच्चेयाइं आयतणाइं उवातिकम्म अह भिक्खू जाणेज्जा इमाहिं सत्तहिं पडिमाहिं उग्गहं उगिण्हित्तए तत्थ खलु इमा पढमा पडिमा। से आगंतारेसु वा अणुवीति उग्गहं जाएज्जा जाव विहरिस्सामो पढमा पडिमा। अहावरा दोच्चा पडिमा जस्स णं भिक्खुस्स एवं भवति अहं च खलु अण्णेसिं भिक्खूणं अट्ठाए उग्गहं गिण्हिस्सामि अण्णेसिं भिक्खूणं उग्गहिए उग्गहे उवल्लिस्सामि दोच्चा पडिमा। अहावरा तच्चा पडिमा जस्स णं भिक्खुस्स एवं भवति अहं च खलु अण्णेसिं भिक्खूणं अट्ठाए उग्गहं गिण्हिस्सामि अण्णेसिं च उग्गहिए उग्गहे णो उवल्लिस्सामि तच्चा पडिमा। अहावरा चउत्था पडिमा जस्स णं भिक्खुस्स एवं भवति अहं च खलु अण्णेसिं भिक्खूणं अट्ठाए उग्गहं णो उगिण्हिस्सामि अण्णेसिं च उग्गहे उग्गहिए उवल्लिस्सामि चउत्था पडिमा। अहावरा पंचमा पडिमा जस्स णं भिक्खुस्स एवं भवति अहं च खलु अप्पणो अट्ठाए उग्गहं उगिण्हिस्सामि णो दोण्हं णो तिण्हं णो चउण्हं णो पंचण्हं पंचमा पडिमा। अहावरा छट्ठा पडिमा से भिक्खू वा से भिक्खुणी वा जस्सेव उग्गहे उवल्लिएज्जा जे तत्थ अहासमण्णागते तंजहा। उक्कडे वा जाव पलाले वा तस्स लाभे संवसेज्जा तस्स अलाभे उक्कुडुए वा णेसज्जिए वा विहरेज्जा छट्ठा पडिमा। अहावरा सत्तमा पडिमा से भिक्खू वा से भिक्खुणी वा अहासंथडमेव उग्गहं जाएज्जा तंजहा पुढविसिलं वा कट्ठसिलं वा अहासंथडमेव तस्स लाभे संवसेज्जा तस्स अलाभे उक्कुडुए वा णेसज्जिए वा विहरेज्जा सत्तमा पडिमा इच्चेतासिं सत्तण्हं पडिमाणं अण्णयरं जहा पिंडेसणाए सुयं मे आउसंतेणं भगवया एवमक्खायं। इह खलु थेरेहिं भगवंतेहिं पंचविहे उग्गहे पण्णत्ते तंजहा देविंदोग्गहे रायोग्गहे गाहावइउग्गहे सागारियउग्गहे साहम्मियउग्गहे एयं खलु तस्स भिक्खू वा भिक्खुणी वा सामग्गियं उग्गहपडिमा समत्ता॥

स भिक्षुरागन्तागारादाववग्रहे गृहीते ये तत्र गृहपत्यादयस्तेषां संबन्धीन्यायतनानि पूर्वं प्रतिपादितान्यतिक्रम्येत्येतानि च वक्ष्यमाणानि कर्मोपादानानि परिहृत्यावग्रहं ग्रहीतुं जानीयाः। अथ भिक्षुः सप्तभिः प्रतिमाभिरभिग्रहविशेषैरवग्रहं गृह्णीयात्तत्रेयं प्रथमा प्रतिमा। तद्यथा स भिक्षुरागन्तागारादौ पूर्वमेव विचिन्त्यैवंभूतः प्रतिश्रयो मया ग्राह्यः नान्यथाभूत इति प्रथमा। तथास्य च भिक्षोरेवंभूतोऽभिग्रहो भवति तद्यथा अहं च खल्वन्येषां साधूनां कृतेऽवग्रहं ग्रहीष्यामि याचिष्ये अन्येषां चावग्रहे गृहीते तरितु पारयिष्ये वत्स्यामीति द्वितीया प्रतिमा। सामान्येन इयं तु गच्छान्तर्गतानां संभोगिकानामसंभोगिकानां चाद्युक्तविहारिणां यतस्तेऽन्योन्यार्थं याचन्त इति। तृतीया त्वियं अन्यार्थमवग्रहं याचिष्ये ऽन्यावगृहीते तु न स्थास्यामीति एषा त्वाहालंदिकानां यतस्ते सूत्रार्थविशेषमाचार्यादभिकाङ्क्षन्त आचार्यार्थं याचन्ते। चतुर्थी पुनरहमन्येषां कृते ऽवग्रहं न याचिष्ये अन्यावगृहीते च वत्स्यामीतीयं तु गच्छ एवाभ्युद्यतविहारिणां जिनकल्पाद्यर्थं परिकर्म्म कुर्वताम्। अथापरा पञ्चमी अहमात्मकृते ऽवग्रहमवग्रहीष्यामि न चापरेषां द्वित्रिचतुःपञ्चानामिति। इयं तु जिनकल्पिकस्य। अथापरा षष्ठी यदीयमवग्रहं ग्रहीष्यामि तदीयमवक्कडादिसंस्तारकं ग्रहीष्यामीतरथोत्कटुको वा निषण्ण उपविष्टो वा रजनीं गमयिष्यामीत्येषापि जिनकल्पिकादेरिति। अथापरा सप्तमी एषैव पूर्वोक्ता नवरं यथा संस्कृतमेव शिलादिकं ग्रहीष्यामि नेतरदिति शेषमात्मोत्कर्षवर्जनादि पिण्डैषणावज्ज्ञेयमिति। किञ्च ( सुयमित्यादि ) श्रुतं मया आयुष्मता भगवतैवमाख्यातम्। इह खलु स्थविरैर्भगवद्भिः पञ्चविधो ऽवग्रहो व्याख्यातस्तद्यथा देवेन्द्रावग्रह इत्यादि सुगमं यावदुद्देशकसमाप्तेरिति। आचा० २ श्रु० ७ अ० १ चू०।

तिहिं उत्तराहिं तिहिं रोहिणीहिं कुज्जा उग्गहवसहिट्ठाणं द० प०। आत्मवतव्यापारे, व्य० द्वि० ४ उ०। अवष्टम्भे, औ०। गृहस्थण्डिले, उपाश्रयान्तर्वर्तिनि अवगाह्ये वस्तुनि च। प्रश्न०। वृष्टिजलप्रतिबन्धे, अनावृष्टौ, च निग्रहे, गजसमूहे। अवग्राहस्तु शापे, वाच०।

उद्ग्रह–पुंविधिग्रहणे द्वा०।

उग्गहजायण–अवग्रहयाचन–न. अनुज्ञापितपानाशने, आलोच्याऽवग्रहयाञ्चाऽभीक्ष्णाऽवग्रहयाचनम्। ध० ३ अधि०।

उग्गहणंतग–अवग्रहानन्तक– न० अवग्रह इति योनिद्वारस्य सामयिकी संज्ञा तस्याऽनन्तकं वस्त्रमवग्रहानन्तकम्। पुंस्त्वं प्राकृते। नौनिभे मध्यभागविशाले पर्यन्तभागयोस्तु तनुके गुह्यरक्षार्थं क्रियमाणे उपकरणभेदे, बृ० ३ उ०। तच्च निर्ग्रन्थैर्न ग्राह्यं निर्ग्रन्थीभिस्तु ग्राह्यम्॥

( सूत्रम् ) नो कप्पइ निग्गंथाणं उग्गहणंतगं वा उग्गह

पट्टगं वा धारित्तए वा परिहरित्तए वा ।

अथास्य सूत्रस्य कः संबन्ध इत्याह ।

उन्नयम्मि विय विसिहं, वत्थग्गहणं तु वणियं एयं ।
जं जस्स होति जोग्गं, इदाणि तं तं परिकहइ ॥

उजयं जिन्नाभिन्न सूत्रद्वयमेतस्मिन्नविशिष्टमिदं साधूनां कल्पते न कल्पते वा इत्यादि । विशेषरहितमिदमनन्तरोक्तं वस्त्रग्रहणं वर्णितमिदानीं तु यद्यस्य संयत्या वा योग्यं तत्तत्सूत्रेणैव साक्षात्परिकथयतीत्यनेन संबन्धेनायातस्यास्य व्याख्या। नो कल्पते निर्ग्रन्थानामवग्रहानन्तकं वा गुह्यदेशविधानवस्त्रं तस्यैवाच्छादकं पट्टं धारयितुं वा परिहर्तुं वा इति सूत्रसंक्षेपार्थः । अथ निर्युक्तिविस्तरः ।

निग्गंथोग्गहधरणे, चउरो लहुगा य दोस आणादी ।
अतिरेगओवहित्ता, लिंगन्नेदवितियं अरिसमादी ॥

निर्ग्रन्थानामवग्रहानन्तकपट्टयोर्धारणे चत्वारो लघुमासाः । आज्ञादयश्च दोषाः । अतिरिक्तोपधित्वादधिकरणं जवेत् । तथा लिङ्गन्नेदः कृतो जवति । साधूनां लिङ्गनिश्रितं न जवतीत्यर्थः । द्वितीयपदविषयमर्शो रोगादिकं तत्रावग्रहानन्तकं पट्टकं वा धारयेत् । द्वितीयपदमेव जावयति ।

जगंदलं जस्सरिसा व णिचं, गालेति पूयं वि ससोणियं वा।
उड्डाह सज्झायदयाणिमित्तं, सो उग्गहं बंधति पट्टगं च ॥

जगंदरः गुह्यसंधौ व्रणविशेषो ऽर्शासि वा यस्य नित्यं पूयं वा रसिकां वा शोणितं वा गलति स उड्डाहः स्वाध्यायदयानिमित्तम् अहो अमी ईदृश एव धाव्यन्ते यो जगन्दरादिरोगवान् बहिर्गन्तुमसहिष्णुस्तस्य पट्टो रुधिरं चोपाश्रये कचिन्मात्रके धाव्यते ततस्तद्धावनं हस्तशताद्बहिः । अथासौ बहिर्गन्तुमसहिष्णुस्ततो विचारजूमौ गतः स्वयमेवावग्रहपट्टकं रुधिरं च धावति । पट्टबन्धने विधिमाह ।

ते पुण होंति दुगादी, दिवसंतरिएहिं बज्झए तेहिं ।
अरुगं इहरा कुत्थइ, तेवि य कुव्वंति णिच्चोल्ला ॥

ते पुनरवग्रहानन्तकपट्टा द्विकादयो त्रित्रिप्रभृतिसंख्याकाः कर्तव्याः । तैर्दिवसान्तरितैर्व्रणो बध्यते । किमुक्तं भवति येनावग्रहानन्तकेन पट्टकेन यो ऽद्य व्रणो बद्धः द्वितीयदिवसे स उन्मोच्य प्रक्षाल्य वा परिभोग्यो विधेयः । यः पुनराद्यदिनेन परिजुक्तः तेन तस्मिन् दिने व्रणो बन्धनीयः । इतरथा प्रतिदिनं तेनैव पट्टेन बन्धे दीयमाने अरुकं व्रणः कुथ्यति प्रतिभावमुपगच्छति । ते ऽपि च पट्टाः प्रतिदिनं बध्यमानतया नित्यं सदैवार्द्राः सन्तः कुथ्यन्ति । अतो द्व्यादयः पट्टाः कर्तव्याः ॥

[सूत्रम्] कप्पइ निग्गंथी उग्गहणंतगं वा उग्गहपट्टगं वा धारित्तए वा परिहरित्तए वा ॥

अस्य व्याख्या प्राग्वत् । अथ जाष्यविस्तरः ।

निग्गंथीण अगिएहे,चउरो गुरुगा य आयरियमादी ।
तत्तिणिय ओगाहण, णिवारणे निउहसणं ॥

निर्ग्रन्थीनामवग्रहानन्तकस्य पट्टकस्य वा अग्रहणे चतुर्गुरुकाः । इदं सूत्रमाचार्यः प्रवर्तिनीं न कथयति चत्वारो गुरवः । प्रवर्त्तिनी संयतीं न कथयति चत्वारो गुरवः । आर्यिका न प्रतिगृह्णन्ति मासलघु भिक्षादौ गच्छन्ती यद्यवग्रहानन्तकं वा न गृह्णाति तत एते दोषाः । तच्च त्रिकस्य भिक्षां गच्छन्त्या अवगाहनं प्रसरणमन्येषु दिवसेषु अवग्रहानन्तकपट्टाभ्यां निवारितमासीत् परं तद्दिवसमगृहीतयोरुधिरमवगाढं ततो लोकस्तद् दृष्ट्वा उपहसनं कुर्यात्। कथमिति चेदुच्यते ॥

खाइगयाए निग्गयं, रुहिरं दहुमसंजता वदे ।
विगहेवत केणयं जणो,दोसमिणं असमिक्खदिक्खिअो॥

भिक्षायां गतायास्तस्या रुधिरं निर्गतं दृष्ट्वा असंयता वदेयुः वत इत्यामन्त्रणे भो भो लोका धिगहो केनायं स्त्रीलक्षणो जनो ऽमुं दोषमसमीक्ष्य दीक्षितः । अपिच ।

छक्कायाए विगहणा, पडिगमणादीणि जाणि गणाणि।
तन्नाव पिच्छिऊणं, वितियं असती अहव जुणा ॥

शोणिते परिगलिते षट्कायानां विराधना जवति सा च दृष्ट्व्यमिति कृत्वा प्रतिगमनान्यन्यतीर्थिकगमनादीनि यानि स्थानानि कुर्यात् तन्निष्पन्नं प्रवर्तिन्याः प्रायश्चित्तम्। सचासौ शोणितपरिगलनलक्षणो जावश्च तद्भावस्तं प्रेक्ष्य विलोक्य तरुणा उपसर्गयेयुरिति वाक्यशेषः । द्वितीयपदमत्राजिधीयते (असइत्ति ) नास्त्यवग्रहानन्तकमथवा जीर्णा स्थविरा सा संयती अतो विद्यमानमपि न गृह्णीयादपि ।

अथेदमेव जावयति ।

दिहं तदिहव्वमहं जणेण,
लज्जाए कुज्जा गमणाइगाइं ।
लज्जाइजंगो वहविज्जती से,
लज्जाविणासे य स किं न कुज्जा ॥

यत्पुनर्द्रष्टव्यं तत् दृष्टं तावज्जनेन अतो नाहमत्र स्थातुं शक्नोमीति कृत्वा लज्जया गमनादीनि गृहवासे यानादीनि कुर्यात् । यद्वा तस्याः संयत्या लज्जाया जङ्गो भवेत् लज्जाविनाशे च सा किं नामाकृत्यं न कुर्यात् । तथा ।

तं पासिउं जावमुदिन्नकम्मा,
दल्लेज्ज वा सा वि य तत्थ जज्जे ।
तं लोहियं वा विसरक्खमादी,
विज्जा समालब्जति जोययंति ॥

तं रुधिरपरिगलनरूपं जावं दृष्ट्वा केचित्तरुणा उदीर्णकर्माणश्चतुर्थप्रतिसेवनार्थं प्रेरयेयुः । साऽपि च संयती तत्र जजेत् सङ्गं कुर्यात् यद्वा तल्लोहितं सरजस्कादयः कापालिकप्रभृतयः समालज्य गृहीत्वा विद्याप्रयोगेणाभियोजयन्ति वशीकुर्वन्ति यत एवमतः ।

अंतो धरसिं वय तं करेति, जहा णमी रंगमुवेउकामा ।
लज्जापहीणा अह सा जणोघं,संपप्पते ते य करोति हावे ॥

यथा नटी नर्तकी रङ्गं नाट्यस्थानमुपैतुकामा गृहस्यैवान्तर्मध्ये जयं लज्जाया अभिभवं करोति । अथानन्तरं सा लज्जाप्रहीणा सती जनौघं जनसमुदायं संप्राप्य तान् भावानङ्गविक्षेपादीन् करोति। एवं संयत्यपि भिक्षां गन्तुमनाः प्रतिश्रयमध्य एवावग्रहानन्तकादिभिरुपकरणैरात्मानं प्रावृतं करोति ततो भिक्षां पर्यटन्ती त्वरणादिष्वनवलोकमानेष्वपि सुखेनैव लज्जां पराजयते । अथ द्वितीयपदमाह ।

असईया णंतगस्स उ, पणतिणिगा वग्घओ गेएहे ।
निग्गमणं पुण दुविहं, विधि अपही तत्थिमा अविहो ॥

अवग्रहानन्तकस्याभावे पञ्चपञ्चाशद्वर्षेभ्य उत्तीर्णा वा संयती

ग्ज्ञानयोनिकतया न गृह्णीयादपि । इह च भिक्षाया निर्गमनं द्विविधं विधिना अविधिना च । तत्र तावदयमविधिः ।

उग्गहमादीहि विणा, दुण्णिवसिया वा विउक्खुल्लणवत्था ।
एक्का दुएय अविहा, चउगुरु आणा य अणवत्था ॥

अवग्रहानन्तकादिभिर्विना भिक्षां निर्गच्छति । दुर्निवसिता वा भिक्षां पर्यटति । एका वा द्वे वा भिक्षायां गच्छतः एष सर्वोऽप्यविधिरुच्यते । अत्र चतुर्गुरुकाः । आज्ञा च भगवतां विराधिता स्यात् । अनवस्था च एकामविधिना निर्गच्छन्तीं दृष्ट्वा अन्याऽपि निर्गच्छतीत्येवंलक्षणा भवति । तथा ।

मिच्छत्तपवडियाए, वायण चउव्वयम्मियाउवरो ।
गोयरगयावगाहिया, धरिसणदोसे इमे लहति ॥

अवग्रहानन्तकादिभिर्विना भिक्षां गता सहसा मूर्च्छादिना प्रपतेत् ततः प्रपतिताया वातेन वा प्रावरणे समुद्धृते अप्रावृतत्वं दृष्ट्वा लोको मिथ्यात्वं गच्छेत् । यथा नास्त्यमीषाममुष्य दोषस्य प्रतिषेधः कथमन्यथैयमित्थं निर्गच्छेत् । गोचरगता वा काचिदविधिनिर्गता केनचिद्विटेन गृहीता धर्षणदोषानमून् वक्ष्यमाणान् लभते । ते चोपरि दर्शयिष्यन्ति ।

अथ विधिनिर्गमे गुणमाह ।

अड्ढोरुगादीहमिया मणादी,सा रक्खिया होति पदेवि जाव ।
णिण्हंपि चेलेण जणोभिजातो, एकं वराविप्पमुचेति णासं ॥

या अर्द्धोरुकदीर्घनिवसनादिभिः सुप्रावृता निर्गता सा केनचिद्धर्षितुमारब्धाऽपि पटादावपि यावत् संरक्षिता भवति तिसृणां च संयतीनां बालेनाभिजातः शिष्टो जनो ब्रूयात् मिलतीति शेषः । या पुनरेकाम्बरा निर्गच्छति सा क्षिप्रं शीघ्रं विनाशं संयमपरिभ्रंशमुपैति ।

उव्वेल्लिए गुज्झम पस्सतो मा, हाहक्कितस्सेव महाजणेणं ।
धिधित्ति उच्छुक्कितताल्लियस्स,पत्तो समं रामुदवो व वेदो ॥

विधिनिर्गतयोः केनचित्प्रत्यनीकेनोद्वेल्लिते उत्सारितेऽपि बाह्योपकरणे यावदसौ गुह्यं न पश्यति तावन्महाजनेन हाहाकृतो धिग्धिगिति भणनपूर्वकं च बुक्कितो गाढं जुगुप्सितस्ताडितश्चासौ ततस्तस्यैवंविधां विडम्बनां प्रापितस्य वेदो मोहोदयोऽरण्यदव इव सद्यः शमं प्राप्तः ।

अथ विधिनिर्गमने दोषानाह ।

तत्थेव य पडिबंधो, पडिगमणादीणि ठाणाणि ।
हिंडी य बंभचेरे, विधिणिग्गमणे पुणो वोच्छं ॥

येन सा अविधिनिर्गता धर्षिता तथैव प्रतिबन्धोऽनुरागो भवेत् तदनुरक्ता वसतिप्रतिगमनादीनि स्थानानि करोति तन्निष्पन्नं प्रायश्चित्तं प्रवर्तिन्या ऋतुसमयगृहीतायाश्च कस्याश्चित् हिंडिमबन्धो भवेत् ततश्च महती प्रवचनापभ्राजना ब्रह्मचर्यविराधना च परिस्फुटैव तस्याः संजायते । विधिनिर्गमने पुनर्भूयोऽपि गुणान् वक्ष्ये । एतच्च सांन्यासिकीकृत्य प्रथमं विधिनिर्गमने दोषशेषमाह ।

न केवलं जा उविहम्मिआ सती,
भवन्नतामेति मधूमुहे जणा ।
उवेति अन्ना वि उ वच्चपत्ततं,
अपाउता जा अणियाम्सिया य ॥

न केवलमेव सती साध्वी विधर्म्मिता शीलधर्मोल्लाविता सैव मधुमुखे च जने दुर्जनलोके सवाच्यतां सकलङ्कतामुपगच्छति । अन्याऽप्येतद्व्यतिरिक्ताऽपि वाच्यपात्रं वचनीययोग्यतामुपैति । याऽप्रावृत्ता औपक्षिकाद्युपरितनोपकरणरहिता अनिवसिता च । अथावग्रहानन्तकाद्यधस्तनोपकरणवर्जिता भवति । किं च "ण भूसणं भूसयते सरीरं" भूषणं शरीरं न भूषयति किंतु शीलं ब्रह्मचर्यं ह्रीश्च लज्जा एतदेव द्वयं स्त्रिया विभूषणम् । अमुमेवार्थं प्रतिवस्तूपमया दृढयति । गीर्वाणी संस्कारयुक्ताऽपि संसदि सभायां यद्यसाधुवादिनी भकारमकाराद्यसभ्यप्रलापिता तदा अपेशला । शिष्टजनजुगुप्सनीयतया न शोभना भवति एवमियमपि स्त्री हारादिविभूषिताऽपि यदि विशीललज्जाविकला तदा शिष्टजनस्य जुगुप्सनीया भवति । अतः स्त्रियाः शीलं लज्जा च विभूषणम् । एतच्च शीलह्रीद्वयं संयत्या विधिप्रावरणे भवति अतस्तदेवाभिधित्सुराह ।

पट्टोरग चलणी, अंतोवहरादिराणियंसणिया ।
संजाडिखुज्जकरणी, अणगतो वसतिकाले ॥

पट्टकोऽर्धोरुकश्च चालनिका अन्तर्निवसति बहिर्निवसति संघट्टिका कुब्जकरणी उपलक्षणत्वादवग्रहानन्तकं कञ्चुक औपक्षिकी वानागत एव वसतिकाले भिक्षासमये दृढतराण्युपकरणानि साध्व्या प्रावरणीयानि इदमेव विभावयिषुराह ।

उग्गहणंतगविणहिं, अव्वाओ अतुरिया उज्झियरूस ।
जोहाव्वलंखिया वा, अगिण्हणे गुरुग आणादी ॥

अथावग्रहानन्तकादिभिरुपकरणैरार्याः संयत्यो भिक्षात्वरिता आत्मानं भावयन्ति क इवेत्याह । योध इव लंखिकेव वा यथा योधः संग्रामशिरसि प्रवेष्टमानः सन्नाहं पिनह्यति यथा च लंखिका रङ्गभुवं प्रविशन्ती पूर्वं चलनकादिना गूढाऽपि नग्नमिवात्मानं करोति एवमार्याऽप्यवग्रहानन्तकादिषु प्रावृता निर्गच्छति । अथैतान्युपकरणानि न गृह्णाति ततश्चतुर्गुरुकाः आज्ञाभङ्गादयश्च दोषाः । अथ विशेषज्ञापनार्थमिदमाह ।

जोहोमरुंडजह्लो, णाइणी लंखिया व यल्लिखंभो ।
अज्जाभिक्खग्गहणा, आहरणा होंति णायव्वा ।

आर्याया भिक्षाग्रहणे यदुपकरणप्रावरणं तत्रैतानि उदाहरणानि ज्ञातव्यानि । तद्यथा योधः प्रतीतः मरुण्डजह्लो मरुण्डस्य राज्ञो हस्ती २ नाटकिनी नर्तकी ३ लङ्खिका वंशाग्रनर्तकी ४ कदलीस्तम्भः प्रतीतः । तत्र योधदृष्टान्तमाह ।

विणिओ पराजितो मा-रिओ य संखे अवमितो जोहो ।
सावरणो पडिपक्खो, भयं च कुरुते विवक्खस्स ॥

योधः संख्ये संग्रामे अवमितः प्रविशन् व्रणितः पराजितो मारितो वा जायते । व्रणितो नाम परैः प्रहारजर्जरीकृतः पराजितः पराभग्नः मारितः पञ्चत्वं प्रापितः । यस्तु सावरणस्तस्य प्रतिपक्षो वक्तव्यः । किमुक्तं भवति यः सन्नाहं पिनह्य रणशिरशि प्रविशति स न प्रहारैर्जर्जरीभवति न वा पराजयते न वा मरणमासादयति । प्रत्युत विपक्षभयं कुरुते । एवमार्याऽपि यथोक्तोपकरणप्रावरणमन्तरेण भिक्षां प्रविष्टा तरुणैरुपद्रूयते सुप्रावृता तु सर्वथैव तेषामगम्या भवति । उक्तो योधदृष्टान्तः । संप्रति मरुण्डजह्लदृष्टान्तं गाथाचतुष्टयेनाह ।

विहिवसता उ मुरुंडं, आपुच्छति पव्वया महं कत्थ ।
पासंड य परिक्खति, वेसग्गहणेण सो राया ॥
रुंवाहिं व धरिसणा, माउग्गामस्स होइ कुसुमपुरे ।
उब्भावणा पवयणे, णिवारणे पावकम्माणं ॥
उज्झसु चीरे सा या, विणिवयहेसु पति जे जहा चायं ।

उच्चूरिया णमा विव, दीसति कुप्पस्समादीहिं ॥
धिधिक्कतो वहेका, तो य लोएण तज्जितो मिंगो ।
उल्लोइिते णयाणि वा–रितो ततो रायसीहेण ॥ १४ ॥

कुसुमपुरे नगरे मुरुंमो राया तस्स भगिणी विहवा सा अन्नया रायं पुच्छइ अहं पव्वइउकामा तो आइसह कत्थ पव्वयामित्ति । तओ राया पासंमीणं वेसग्गहणेण परिक्खं करेइ। हत्थिमिंगा संदिठा जहा पासंमिगाओ गामेसु हत्थि सन्निज्जाह भणिज्जाह या पोत्तं सुयाहि अन्नहा इमिणे उवद्दवेस्सामित्ति । एकम्मि य मुक्के मा वादिह तो वग्गहा देह जीवसत्थे सुक्का तओ एगेण मिंठेण चाए रायपहे तहाकयं जाव नग्गीभूया रन्ना सव्वं दिट्ठं नवरं अज्जा वि हीए पविट्ठा रायपहोत्ति एाए हत्थिसन्निओ सुयसुपुन्नंति तए पढमं मुहपोत्तिया मुक्का ततो निसिज्जा एवं जाणि वाहरिल्लाणि चीवराणि ताणि पढमं मुयइ जाव बहूहिं वि मुक्केहिं नग्गी वि व कंचुकादीहिं सुप्पाउया दीसइ ताहे लोगेण अक्कंदो कओ हा पाव किमेवं महासई तवस्सिणं अभिद्दवेसित्ति रन्ना वि ओलोयणवारिओ वितियं व एस धम्मो सव्वन्नुदिट्ठो अन्नेण य बहुजणेण कया सासणस्स पसंसा ॥

अथाक्रार्थो विधवा स्वसा मुरुण्डं राजानमापृच्छति कुत्राहं प्रव्रजामीति । ततः स राजा वेषग्रहणेन पाखण्डिनः परीक्षते परीक्षार्थमेवं चक्रे हस्तिमिंठैः कुसुमपुरे मातृग्रामस्य पाखण्डिस्त्रीजनस्य धर्षणा भवति वर्तमाननिर्देशस्तत्कालापेक्षया तदानीं प्रवचनस्योड्डावना प्रभावना समजनि। ये च पापकर्माणः संयतीरभिद्रवितुमिच्छन्ति ते निवारणाय न शक्यन्ते। अतस्तदेवंविधेन एषा धनच्छलयितुमिति कृत्वा कथं पुनरेतत् संवृतमित्याह ( उज्झचीवरेइत्यादि ) विधिनिर्गता संयती अभिहिता उज्झ परित्यज चीवराणि साऽप्येवमभिहितवती नृपपथे राजमार्गे यानि यथा बहिरुपकरणानि तानि तथा मुञ्चति एवं बहुषु वस्त्रेषु मुक्तेष्वपि यदा सा नटीवत् कार्पासिकादिभिः कञ्चुकादिभिर्वस्त्रैरुच्छुरिता सुप्रावृता दृश्यते तदा लोकेन स मिंठो धिग्धिक्कृतो हा हा कृतश्च तया तर्जितो गाढं निर्भर्त्सितः ततश्चावलोकन स्थितेन गवाक्षोपविष्टेन राजसिंहेनासौ निवारितः सर्वज्ञदृष्टश्चायं धर्म इति कृत्वा साधूनां समीपे भगिनी प्रव्रज्याग्रहणार्थं विसर्जितेति उक्तो मुरुण्डराजदृष्टान्तः।

अथ नर्तकीलंखिकादृष्टान्तद्वयमाह ।

पाए वि उक्खिवंती, न लज्जती णट्टिया सुणेवत्था ।
उच्छुरिया वा रंगम्मि, लंखिया उप्पयंतीति ॥

यथा नर्तकी सुनेपथ्या सती पादावप्युत्क्षिपन्ती न लज्जते । लंखिका वा रङ्गचत्वरे उत्पतन्ती परिकरणशतान्यपि कुर्वती यथा उच्छुरिता सुप्रावृता सती न लज्जते। एवं संयत्यपि सुप्रावृता न लज्जत इति उपनयः। अथ कदलीस्तम्भदृष्टान्तमाह।

कयलीखंभो व जहा, उवविलेउं सुदुक्करं होति ।
इय अज्जा उवसग्गे, सीलस्स विराहणा दुक्खं ॥

कदलीस्तम्भो यथा पटलबहलत्वादुद्वेल्लयितुमुद्घट्टयितुं सुदुस्करं भवति एवमार्यिकाऽपि बहूपकरणप्रावृता नोद्घट्टयितुं शक्या इत्येवं योधादिभिर्दृष्टान्तैर्विधिनिर्गताया आर्यायाः केनचिदुपसर्गे क्रियमाणेऽपि शीलस्य विराधना दुस्करा मन्तव्या। किंच ।

एक्का मुक्का य धरिसिया, णिवेदण जतणा य होति कायव्वा ।
वाहरिता जहि तथा, सज्झातरादी सयं वावि ॥

एका काचिद्विधिनिर्गताऽपि मुक्ता एका परैर्धर्षिता ततो यतनया यथा शेषसंयतसंयतीजनो न जानाति तथा गुरूणां निवेदना कर्त्तव्या । अथ सा वाहाडिता ततो न परित्यक्तव्या किंतु शय्यातरादिना स्वयं वा तस्य वार्तापनं विधेयमिति निर्युक्तिगाथासमासार्थः । अथैनामेव विवृणोति ।

विहिणिग्गताउ एक्का, सायरियाए गहिता गिहत्थेहिं ।
संवरिए भावेण य, फिडिया अविराहियचारित्ता ॥

एका काचिद्विधिनिर्गता गोचरचार्यायां पर्यटन्ती गृहस्थैर्गृहीता परं संवृतप्रभावेण सुप्रावरणमाहात्म्येन सा अविराधितचारित्रा स्फिटिता ॥

लोएण वारितो वा, दट्टूण सयं च तं सुणेवत्थं ।
सुदिट्ठं तु वसंतो, सविएह उरमामयतीय ॥

येन सा धर्षितुमारब्धा स लोकेन धिक्कारपुरस्सरं वारितः । स्वयं वा तां संयतीं सुनेपथ्यां सुप्रावृतां दृष्ट्वा सुदृष्टममीषां धर्मरहस्यमिति कृत्वा उपशान्तः सन् सविस्मयः पश्चात्तां संयतीं क्षामयति ।

अणाभोगपमादेण व, असती पट्टस्सणि अवग्गहणे ।
विहिणिग्गतमाहव्व, वाहाडितधारुणे गुरुगा ॥

सा कदाचिदनाभोगेनात्यन्तस्मृत्या प्रमादेन वा विकथानिद्रादिप्रमत्ततया अवग्रहपट्टस्य वा अभावे एवमेव भिक्षार्थं निर्गता एवमविधिनिर्गता वा ( आहच्च ) कदाचित्प्रच्छन्ने अवकाशे गृहीता ततो गुरूणां यतनया निवेदनीयम् । अथ सा कदाचिद्वाहाडिता ततो यस्तां वाहरयति निष्काशयतीत्यर्थः तस्य चतुर्गुरुकाः ॥ कुत इत्याह ।

निव्वूढपदुट्ठा सा, भणेइ तेहिं व कत्तमेत्तं च ।
राएगिहीहि सयं वा, तंच सासंति मा वितियं ॥

सा निर्व्यूढा निष्काशिता सती साधूनामुपरि प्रद्वेषं यायात् प्रद्विष्य च भणति । एतैरेव श्रमणैरित्थं ममैतत् कृतमिति ततो न परित्यक्तव्या येन च धर्षिता तमनवस्थाप्रसङ्गवारणार्थं राज्ञा प्रशासयन्ति गृहिभिर्वा शिक्षयन्ति यदि प्रभवस्ततः स्वयमपि शासन्ते मा द्वितीयं वारमित्थं प्रवर्तयथमिति कृत्वा, । अथ तस्याः सारणविधिमाह ॥

दुविहा णायमणाया, अगीयअन्नायसन्निमादी तु ।
सब्भावंसि कहिते, सारिता जाव णं पि यती ॥

या वाहाडिता सा द्विधा ज्ञाता अज्ञाता च ज्ञातगर्भा अज्ञातगर्भा चेत्यर्थः । तत्र या अज्ञाता सा अगीतार्था यथा न जानन्ति तथा संज्ञी श्रावकस्तदादिकुलेषु स्थाप्यते । तेषां संज्ञिप्रभृतीनां सद्भावः प्रथममेव कथनीयः कथिते च सद्भावे ते मातापितृसमानतया तां तावत् सारयन्ति प्रासुकेन प्रत्यवतारेण पालयन्ति यावत्तदीयस्तनयः स्वभावत स्तन्यं पिबति स्तन्यपानान् निवर्त्तत इत्यर्थः ॥

जत्थ उ जणेण णातं, उवस्सया तत्थ णय निक्खं ।
किं सक्का उड्डेउं, वेंति अगीते असति सद्दे ॥

यत्र तु जनेन ज्ञातव्यं येषा वाहाडिता तत्रोपाश्रय एव स्थाप्यते न श्रावकादिकुलेषु । न च सा भिक्षायां हिण्डापयितव्या किंतु शेषसाध्वीभिः साधुभिर्वा तस्याः प्रायोग्यं भक्तपानमानीय दातव्यम् । यदगीतार्था भणन्ति किमेवं कीदृश्याः सं-

ग्रहः क्रियते ततः सूरयो ब्रुवते यदि नाम न संगृह्यते ततः कथयत किं सांप्रतमेषा शक्या परित्यक्तुम् । अथैवं प्रज्ञापिता अपि न प्रतिषेधन्ते ततः श्राद्धान् प्रज्ञापयन्ति । यथा ।

दुरतिक्कमं खु विधियं, अवि य अकामा तवस्सिणी गहिता ।
को जाणति अम्हस्स वि, वित्तंतं सारवो तेणं ॥

खरवधारणे दुरतिक्रममेव प्रतिकर्तुमशक्यमेव केनाप्यकार्यकारिणेदमकार्यं विहितं ततः किं क्रियते । अपि च अकामा अनिच्छन्ती बलादेव तेन पापात्मना तपस्विनी गृहीता । ततः को जानाति अन्यस्या अप्येवंविधो वृत्तान्तः परवशतया भवेत् । तदेनां संप्रति सारयामः परिपालयाम इत्यर्थः ।

मा य अवएणकाहिह, किं ण सुतं केसि सच्चईणं ते ।
जंमणे णय वयभंगो, संजातो तेसि अज्जाणं ॥

हुं हुं विध्वस्तशीलेयमित्येवमस्यास्त्ववर्णमवज्ञां वा मा कार्षुः। किं न श्रुतं भवद्भिः कासिसत्यकिनोर्जन्म। यथा तावार्यिकाभ्यां पुरुषसंवासमन्तरेणापि कथंचिदुपात्तवीर्यपुद्गलाभ्यां प्रसुप्तवातेन च तयोरार्यिकयोर्न व्रतभङ्गः संजायते विशुद्धपरिणामत्वात्। अनयोः कथाक्रमः पञ्चकल्पावश्यकटीकाभ्यामवसातव्यः ।

अवि य हु इमेहिं पंचहिं, ठाणेहि त्थीअ संवसंतीवि ।
पुरिसेण लभति गब्भं, लोएण वि गीइयं एयं ॥

अपिचेत्यभ्युच्चये हु निश्चितं तदेतैः पञ्चभिः स्थानैः स्त्री पुरुषेण सममवसन्त्यपि गर्भं लभते न केवलमस्माभिरेतदुच्यते। किंतु लोकेनापि गीतं संशब्दितमेतत् । तान्येवोपदर्शयति ।

दुव्वियडदुण्णिसण्णा, सयं परो वासि पोग्गले भुञ्जति ।
वत्थे वा संसट्ठे, दगआयमणेण वा पविसे ॥

विवृता अनावृता सा चोत्तरीयापेक्षयाऽपि स्यादतो दुःशब्देन विशेष्यते । दुष्टु विवृता दुर्विवृता परिधानवर्जितेत्यर्थः । एवं दुर्विवृता सती दुर्निषण्णा दुष्टु विरूपतयोपविष्टा सा चासौ दुर्विवृता दुर्विवृतदुर्निषण्णा सा शुक्रपुद्गलान् कथंचित्पुरुषनिःसृतान् संगृह्णीयात् स्वयं वा पुत्रार्थितया शीलरक्षि(?)कतया च शुक्रपुद्गलान् योनावनुप्रवेशयेत् । परो वा श्वश्रूप्रभृतिकः पुत्रार्थमेव ( स ) तस्याः योनौ प्रक्षिपेत् वस्त्रं वा शुक्रपुद्गलसंसृष्टमुपलक्षणत्वात्तथाविधमन्यदपि केशत्वक्कण्डूयनार्थं रक्तनिरोधार्थं वा तया प्रयुक्तं तदनु प्रविशेत् । अनाभोगेन वा तथाविधं वस्त्रं परिहितं सद्योनिमनुप्रविशेत् । के जानते न वा तस्या आचमयन्त्याः पूर्वपतिता उदकमध्यवर्तिनश्च शुक्रपुद्गलाः अनुप्रविशेयुः । एवं पुरुषसंवासमन्तरेणापि गर्भसंभवे भवन्तो नास्या अवज्ञां कर्तुमर्हन्ति । एवं प्रज्ञाप्य तेषां श्राद्धानां गृहे तां स्थापयन्ति । गता ज्ञातविषया यतना ।

अथाज्ञातविषयां तामाह ॥

अविदियजणगब्भम्मिय, सण्णिगादीसु तत्थ वसमत्था ।
लाढेंति फासुएणं, लिंगविवेगो य जा पिवति ॥

जनैरविदितो यो गर्भस्तत्र ये मातापितृसमानाः संज्ञिन आदिशब्दाद्यथाभद्रका वा तेषां गृहेषु तत्र वा अन्यत्र वा ग्रामे स्थापयन्ति ते च संज्ञिप्रभृतयस्तां प्रासुकेन प्रत्ययवतारेण लाढयन्ति यापयन्तीत्यर्थः । यावच्चापत्यं भाएरूस्तन्यं पिवति। तावत्तस्या लिङ्गविवेकः कर्तव्यः ॥

एएसिं असतीए, सण्णायगणालबद्धकिढफासुं ।
अण्णो वि जो परिणतो, स सिट्ठिवेसइतरागारीए ॥

तेषां संज्ञिप्रभृतीनामभावे ये तस्याः संयत्याः संज्ञातकास्तेषां गृहेषु स्थाप्यन्ते अभावे यः संयतो नालबद्धः सोऽपि यदि किढो वृद्धस्तदाऽसौ श्रेष्ठिवेषं कार्यते ततस्ते पुत्रकाद्वारेण यापयन्तौ तिष्ठतः । नालबद्धस्याभावे अन्योऽपि यो वयसा परिणतः स श्रेष्ठिपुत्रवेषं कार्यते इतरा अगारीवेषं करोति इतराऽपि गृहिलिङ्गं करोति । अत्रेयं प्रायश्चित्तमार्गणा ॥

मूलं वा जाव सणो, छेदो छगुरुगं जं जहा लहुअं ।
वितियपदे असतीए, उवस्सए व अहव जुण्णा ॥

यदि तया प्रतिसेव्यमानया स्वादितं ततो मूलम् । वाशब्द उत्तरापेक्षया विकल्पार्थः ( जाव यणत्ति ) पश्चाद्व्याख्यास्यते। गर्भमाहृतं दृष्ट्वा स्वादयति छेदः । अपत्यं जातं दृष्ट्वा सहायकं मे भविष्यतीति स्वदयन्त्याः षड्गुरवः । यया पुनरस्वादितं तस्याः परप्रत्ययनिमित्तं यत्किमपि यथा लघु प्रायश्चित्तं दातुं युज्यते तद्दातव्यं ( जावत्ति ) यावत्तस्या अपत्यं स्तन्यपानोपजीवि भवति तावत्तपोर्हं प्रायश्चित्तं न दातव्यम् । द्वितीयपदे अवग्रहानन्तकस्याभावे उपाश्रये वा तिष्ठन्ति । अथवा जीर्णाः स्थविराः शासयन्ति अतो ऽवग्रहानन्तकं न गृह्णात्यपि। अस्या एव पूर्वार्द्धं व्याख्याति ॥

सेविज्जंते अणुमए, मूलं छेओ भिंभिमं दिस्स ।
होहिति सहागतं मे, जातं दट्ठूण छग्गुरुगा ॥

सेव्यमानया यद्यनुमतं ततो मूलम् । अथ भिएिरूमं गर्भं दृष्ट्वा हर्षमुद्वहति ततश्छेदः । पुत्रभाएरूं दृष्ट्वा सहायकं मे भविष्यतीत्यत्रानुमन्यते षट् गुरवः ।

तेण परं चउगुरुगा, छम्मासा जा ण ताव पूरिंति ।
जातु तवारिहसोही, अणुवत्थणिए तम्मतं देंती ॥

ततः परं जन्मान्तरं यावत्षण्मासा न पूर्यन्ते तावद्यत्र यत्र स्वादयति तत्र २ चतुर्गुरवः । यावत्तस्या अर्हा सोधिरुक्ता तामनपगतस्तन्ये स्तन्यपानादनपगते अपत्यभाएरू न ददाति मा शून्यं भविष्यतीति कृत्वा ।

मेहुणे गब्भेआ-हिते य सा निज्जियं जति णतीए ।
परपच्चया लहुसग्गं, तहावि सेउ दिंति पच्छित्तं ॥

मैथुने प्रतिसेव्यमाने गर्भे च आहृते यद्यपि तया न स्वादितं तथापि परप्रत्ययार्थं मा भूदीतार्थानामप्रत्यय इत्यर्थः यथा लघुकं प्रायश्चित्तं तस्याः सूरयः प्रयच्छन्ति । अथ यस्तस्याः खिसां करोति तस्य प्रायश्चित्तमाह ।

खिंसाए होंति गुरुगा, लज्जाणिच्छकतो य गमणादी ।
दप्पकते वाउट्टे, जति खिंसति तत्थ वि तहेव ॥

यस्तस्याः खिसां विध्वस्तशीलत्वान्मलिनेयमित्येवं करोति तस्य संयतस्य संयत्या वा चतुर्गुरुकाः प्रायश्चित्तम् । सा च खिंसिता सती लज्जया प्रतिगमनादीनि कुर्यात् निच्छक्का वा निर्लज्जा भवेत् तत एव सर्वजनप्रकटमात्मानं प्रतिसेवयेत् । अथ दर्पतस्तया मैथुनं प्रतिसेवितं परं पश्चादावृत्ता आलोचनाप्रायश्चित्तप्रतिपत्त्यादिना प्रतिनिवृत्ता तामपि यः खिंसति तस्यापि तथैव चतुर्गुरु । किं कारणमिति चेदत आह ।

उम्मग्गेण वि गंतुं, ण होति किं सा तवाहिणीसलिला ।
कालेण फुंफुगा वि य, विलयं वद्द सहे सेऊणं ॥

उन्मार्गेणापि गत्वा सलिला नदी पश्चात्किं श्रोतोवाहिनी मार्गगामिनी न भवति भवत्येवेति भावः । फुंफुंकारीषाग्निः सोऽपि ( वहसहेसेऊणंति ) जाज्वलित्वा भृशमुद्दीप्तो भूत्वेन्त्येषु काले गच्छति विलीयते विलयं याति उपनययोजना सुगमा । बृ० ३ उ० । ध० । प्रव० ।

उग्गहपट्ट–अवग्रहपट्ट– पुं० अवग्रहस्य योनिद्वारस्य पट्टः । गुह्यदेशपिधानवस्त्रे, स च बीर्यपातसंरक्षणार्थं च घनं घनवस्त्रेण पुरुषसमानकर्कशस्पर्शपरिहरणार्थं च मसृणं मसृणवस्त्रेण क्रियते प्रमाणेन च देहं स्त्रीशरीरमासाद्य तद्विधीयते । देहो हि कस्याश्चित्तनुः कस्याश्चित्तु स्थूलः ततस्तदनुसारेण विधेयमित्यर्थः ॥

पट्टो वि होइ एक्को, देहपमाणेण सो उ भइयव्वो ।
छादंतोग्गहणंतं, कडिबन्धो मल्लकच्छो वा ॥

पट्टोऽपि गणनयैको भवति स च पर्यन्तभागवर्तिवाटकबन्धबद्धः प्रथुत्वेन चतुरङ्गुलप्रमाणः समतिरिक्तो वा दीर्घेण तु स्त्रीकटीप्रमाणः स च देहप्रमाणेन भक्तव्यः । पृथुलघुकटीभागयोर्दीर्घः । संकीर्णकटीभागयोस्तु न्हस्व इत्यर्थः । बृ० ३ उ० । (स च निर्ग्रन्थीभिरेव ग्राह्यो न निर्ग्रन्थैरिति उग्गहणंतग शब्दे)

उग्गहपडिमा–अवग्रहप्रतिमा– स्त्री० अवगृह्यत इत्यवग्रहो वसतिस्तत्प्रतिमा अभिग्रहः अवग्रहप्रतिमा । वसतिविषयकाभिग्रहेषु, ( ताः सप्त उग्गह शब्दे दर्शिताः ) तत्प्रतिपादके आचाराङ्गस्य षोडशे अध्ययने च । आचा० २ श्रु० १ अ० १ उ० प्रश्न० । स० । आव० । स्था० ।

उग्गहमइसंपया–अवग्रहमतिसम्पद्– स्त्री० सामान्यार्थस्य अशेषविशेषनिरपेक्षानिर्देश्यरूपादेरवग्रहणमवग्रहः स चासौ मतिसंपच्चावग्रहमतिसम्पद् । मतिसंपद्भेदे, दशा० ४ अ० । ( मइसंपया शब्देऽस्या भेदाः )

उग्गहसमिइजोग–अवग्रहसमितियोग– पुं० अवग्रहणीयतृणादिविषयसम्यक्प्रवृत्तिसम्बन्धिनि, प्रश्न० ३ द्वा० ॥

उ ( ओ ) ग्गहाइकहणा–अवग्रहादिकथना– स्त्री० अवग्रहस्य " देविंदरायगहवइसागारसाहम्मिउग्गहो चेवेत्येवंविधस्यादिशब्दाद्राजरक्षितास्तपस्विनो भवन्तीत्यादेश्च यदाह "क्षुद्रलोकाकुले लोके, धर्मं कुर्युः कथं हि ते । क्षान्तदान्तार्यहन्तार, स्तांश्चेद्राजा न रक्षतीति" कथना प्ररूपणा अवग्रहादिकथना । देवेन्द्राद्यवग्रहस्य राजवर्णनस्य प्ररूपणायाम्," विसयवेस रम्मो, उद्देसणं उग्गहाइ कहणा य" पंचा०७विव० ।

उग्गाहिय–अवग्रहीत– न० परिवेषणार्थमुत्पाटिते, स्था०९ठा०

अवग्रहिक– न० अवग्रहोऽस्याऽस्तीति । वसतिपीठफलकादौ औपग्रहिकदण्डकादिके उपधिजाते, स्था० १० ठा० । तद्भेदाः ॥

( सूत्रम् ) तिविहे उग्गहिए पमत्ते जं च साहरइ जं च आसगम्मि पक्खिवति ॥

अस्य सम्बन्धमाह ॥

पगया अभिग्गहा खलु, सुद्धपरा ते य जोगवुड्ढीए ।
इति उवहडसुत्तत्तो, तिविहं च अवग्गहिय एए ॥

प्रकृताः खल्वनन्तरसूत्रे शुद्धोपहृतादिष्वभिग्रहास्ते चाभिग्रहाः शुद्धतरा भवन्ति । योगवृद्ध्या उत्तरोत्तरयोगवृद्धिकरणेन इति अस्मात् कारणात् उपहृतस्तत्रानन्तरं त्रिविधं द्विविधं वा प्रगृहीतमुक्तमनेन संबन्धेनायातस्यास्य व्याख्या । त्रिविधमवगृहीतं प्रज्ञप्तं यदवगृह्णाति यच्च संहरति यच्च आस्यके प्रक्षिपति । एके एवमाहुर्द्विविधमवगृहीतं प्रज्ञप्तं यदवगृह्णाति यच्च संहृतम् । एष सूत्राक्षरसंस्कारः । सम्प्रति भाष्यविस्तरः ।

पग्गहियं साहरियं, पक्खिवयंतं च आसए तह य ।
तिविहं दुविहं पुण, पग्गहियं चेव साहरियं ॥

यत्प्रगृहीतं यच्च संहृतं यच्चास्ये प्रक्षिप्यमाणमेतत्त्रिविधमवगृहीतम् । द्विविधं पुनरवगृहीतमादेशान्तरेणेदं प्रगृहीतं संहृतं च । अथादेशस्य किं लक्षणमत आह ।

बहुसुतमाइण्णं तु, नयाहयम्मेहिं जुगप्पहाणेहिं ।
आदेसो सो उ भवे, अहवा वि नयंतरविगप्पो ॥

यद्बहुश्रुतैराचीर्णं नचान्यैर्युगप्रधानैर्बाधितं स भवति नाम आदेशः । अथवा नयान्तरविकल्प आदेशः । तद्वशात्सूत्रमेवमुपन्यस्तमिति ॥

सांप्रतमवगृहीतादिपदव्याख्यानार्थमाह ।

साहीरमाणं गहियं, दिज्जंतं जं च होइ पाउग्गं ।
पक्खेवए दुगुंछा, आदेसो कुरुमहादीसु ॥

इह अनानुपूर्व्या ग्रहणं बन्धानुलोमतस्तत एवं द्रष्टव्यम् । गृहीतं नाम यद्दीयमानं यच्च भवति प्रायोग्यं संहृतं नाम संह्रियमाणम् । आस्ये प्रक्षिप्यमाणं प्रतीतम् । अत्राह ननु "जं च आसगम्मि पक्खिवइ " इत्यस्यायमर्थः यत् आस्ये मुखे प्रक्षिपति तच्चोच्छिष्टमिति लोके जुगुप्सा ततः कथं तद् गृह्यते सूरिराह ( आदेसो कुरुमहादीसु ) कुडो घटस्तस्य यन्मुखं तदादिष्वादिशब्दात् पिठरमुखादिपरिग्रहस्तत्र आदेशव्याख्यानम् । किमुक्तं भवति पिठरमुखादीन्यधिकृत्य " जं च आसगम्मि पक्खिवति " इति सूत्रं व्याख्यातमतो न कश्चिद्दोषः । अथापहृतसूत्रस्यावगृहीतसूत्रस्य च परस्परं कः प्रतिविशेषस्तमाह ।

उग्गहियम्मि विसेसो, पंचमपिंडेसणाउ छट्ठीए ।
तं पि हु अलेवकडं, नियमा पुव्वद्धडं चेव ॥

उपहृतसूत्रे पञ्चमी पिण्डैषणा उक्ता अवगृहीतसूत्रे पुनरस्मिन् अयं विशेषो यत्पञ्चपिण्डैषणातः परा या षष्ठी पिण्डैषणा तस्या अभिधानमिति । तदपि च हु निश्चितं यल्लेपकृतं नियमाच्च पूर्वोद्धृतमिति ।

संप्रति दिज्जंतं जं च होति पाउग्गमित्यस्य व्याख्या ।

भुंजमाणस्स उक्खित्तं, पडिसिद्धं च तेण उ ।
जहन्नोवहडं तं तु, हत्थस्स परियत्तणे ॥

परिवेषकः पट्टिकायां कूरं गृहीत्वा दक्षिणहस्तेन तलं प्रायोग्यस्य दातुकामस्तस्य भाजने क्षिपामीति व्यवस्थितं तच्च तदा भुञ्जानस्याक्षिप्तं न भुञ्जानेन प्रतिषिद्धं पर्याप्तं मा मह्यं देहि । अस्मिन् देशकाले साधुना तत्र प्राप्तेन धर्मलाभितं ततः परिवेषको ब्रूते साधो ! धारय पात्रमेतद्गृहाण ततः साधुना पात्रं धारितं तत्रानेन प्रक्षिप्तमिदं हस्तस्य हस्तमात्रस्य परिवर्त्तनात, गाथार्थां समर्था पञ्चम्यर्थे जघन्यमुपहृतं भवति । एतेन दीयमानमपि व्याख्यातम् । यच्च भवति प्रायोग्यमित्यनेन शुद्धसंसृष्टयोः प्रागुक्तयोरन्यतरद् गृहीतम् । तदेवं " जं च उगिण्हइ इति व्याख्यातम् । संप्रति जं च साहरियमिति व्याख्यानाय तत्साहरिपति गाथाशकलमुक्तं तद्भावयति ।

अहसाहरिमाणं तु, वड्डेउं जो उ दावए ।
ठाणादचलितो तत्तो, छट्ठा एसा वि एसणा ॥

अथ वर्द्धापयितुं संह्रियमाणं यो दापयेत् तस्य वचनतः स परिवेषकस्तस्मात्स्थानतो मनागप्यचलितो दद्यात् एतत्संह्रियमाणमुच्यते । एषाऽपि षष्ठी एषणा द्रष्टव्या । व्य० द्वि० । ८ उ० । आचा० ।

उग्गहिया–अवगृहीता–स्त्री० भोजनकाले भोक्तुकामस्य शरावादिषूपहृतमेव भोजनजातं यन्नतो गृह्णतः पञ्चम्यां पिण्डैषणायाम्, स्था० ७ ठा० । पंचा० । ध० । सूत्र० । ( पिंडेसणाशब्देऽस्याः स्वरूपम् )

उग्गाढ–उद्गाढ–न० उद् गाह् क्त० । अतिशये, अत्यन्ते, अतिशययुक्ते, त्रि० वाच० । प्रगुणीभूते च । " इयाणिं किं भणिहामो जं तुज्झ ह पजुत्तं तं उग्गाढम्मि काहामो" बृ० १ उ० ।

उग्गाल–उद्गार–पुं० उद्-गॄ ऋदोरप् बाधित्वा "उन्न्योर्ग्रः इति घञ् । उद्वमने, वाच० । आचीले, प्रव० ३८ द्वा० । उद्गारश्चाजीर्णरोगलिङ्गं नागवायुकार्य्यम " वाच० (रात्राबुद्गारे आगते तस्य प्रत्युद्गिरणे दोषस्तं च राइभोयण शब्दे दर्शयिष्यामि )

[ सूत्रं ] जे भिक्खू राओ वा वियाले वा सपाणे सभोयणे उग्गाले आगच्छेज्ज तं विगिंचमाणे वा विसोहेमाणे वा णाइक्कमइ तं उगिलेत्ता पचोगिलमाणे राइभोयणपडिसेवणपत्ते जो तं पच्चागिलंतं वा साइज्जइ ॥ ३४१॥

रातिवियाले वा पुव्वकतवक्खाणं सह पाणेण सपाणं सहभोयणेण सभोयणं उद्गिरणं रत्नयोरेकत्वात्स एव उग्गालो भण्णति । सिन्थ विरहियं केवलं उद्दोएण सह गच्छतीत्यर्थः भत्तं वा उदोएण सह आगच्छति उभयं वा तं जो उगिभत्ता पच्चोगिलति अर्ण वा सातिज्जति कहं पुण सातिज्जति कस्स वि उग्गालो आगतो तेण अण्णस्स सिट्ठं उग्गालो मे आगतो । पच्चुग्गिलिउत्तए तेण भणियं सुंदरं कयं एसा सातिज्जणा तस्स पायच्छित्तं चउगुरु आणादिया य दोसाओ सुत्तत्थो । नि० चू० १० उ० ।

उग्गिण्ण–उद्गीर्ण–त्रि० वान्ते, ज्ञा० १ अ० ।

उग्गोवणा–उद्गोपना–स्त्री० विवक्षितस्य पदार्थस्य जनप्रकाशचिकीर्षारूपायामेषणायाम्, पिं० ।

उग्गोवेमाण–उद्गोपयत्–त्रि० विमोदयति, उग्गोवेमाणे उ-भोवेइ । भ० १६ श० ६ उ० ।

उग्घव–पूरि–धा० पूर् पूर्त्तौ, णिच् "पूरेरग्घाडाग्घवोद्धुमांगुमांगुमाहिरे " ८ । ४ । ६८ । इति पूरेरुग्घवादेशः । उग्घवइ । पूरयति । प्रा० ।

उग्घाइम–उद्घातिम–न० उद्घातो भागपातस्तेन निर्वृत्तमुद्घातिमम् । लघुनि, स्था० ३ ठा० ।

उग्घाइय–उद्घातित–त्रि० उद्घातो भागपातो यत्रास्ति तदुद्घातिकम् । लघुनि प्रायश्चित्ते. स्था० ५ ठा० । ( अणुग्घाइय शब्देऽस्य निक्षेपः ) विनाशिते, स्था० १० ठा० ।

यत उक्तम " अद्धेण छिन्नसेसं पुव्वद्धेणं तु संजुयं काउं । दिज्जाइ लहुयदाणं गुरुदाणं तत्तियं चेवत्ति ॥ १॥ भावना मासार्द्धेन छिन्न जातानि पञ्चदश दिनानि ततो मासापेक्षया पूर्वतपःपञ्चविंशतितमं तदर्द्धं सार्द्धद्वादशकं तेन संयुतं मासा- द्धजातानि सप्तविंशतिदिनानि सार्द्धानीत्येवं कृत्वा यद्दीयते तल्लघुमासदानमेवमन्यान्यपि । स्था० ३ ठा० ।

उग्घाड–उद्घाट–पुं० उद् घट्. घञ्. । वाच० । अदत्तार्गले, ईषत्स्थगिते च । आव० ४ अ० ।

उग्घाडकवाड–उद्घाटकपाट–त्रि० निरर्गलितकपाटे, ओ० ।

उग्घाडकवाडउग्घाडणा–उद्घाटकपाटोद्घाटना–स्त्री. उद्घाटमदत्तार्गलमीषत्स्थगितं वा किं तत्कपाटं तस्योत्पाटनं सुतरां प्रेरणमुद्घाटकपाटोद्घाटनमिदमेवोद्घाटकपाटोद्घाटना । कपाटमुद्घाट्य भिक्षणरूपे भिक्षातिचारे, " पडिक्कमामि गोयरचरियाए उग्घाडकवाडउग्घाडणाए" आव० ४ अ० ।

उग्घाडण–उद्घाटन–न. कपाटस्य सुतरां प्रेरणे, आव०४अ०

उग्घाडिय–उद्घाटित–त्रि० उद् घट् णिच्. । किञ्चित्स्थगिते, आ० चू० ४ अ० । अनावृते, "तस्स उ अणंतभागो, णिच्चुग्घाडिओ य सव्वजीवाणं" विशे०। "ते वि तेण उग्घाडिया" आ० म० द्वि० । आच्छादनरहिते प्रकाशिते, आवरणरहिते प्रकाशिते, आवरणरहिते कृतोद्घाटने, वाच० ।

उग्घाडियण्णु–उद्घाटितज्ञ–त्रि० उद्घाटितं प्रकाशितं यथा तथा जानाति । विज्ञे, वाच० । कथितमात्रज्ञे विनेये, नं० ।

उग्घाय–उद्घात–पुं० उद् हन् घञ् । ( ठोकर लगना ) प्रतिघाते. आरम्भे, उत्तङ्के, मुद्गरे, शास्त्रे, ग्रन्थपरिच्छेदे, वाच० लघूकरणलक्षणे, प्रायश्चित्तदानायाभागपाते, स्था० ३ ठा० । आचारप्रकल्पाऽध्ययने च । आव० ४ अ० ।

उग्घायण–उग्घायतन–न. प्रवाहत एव पूज्यस्थाने, तरुगजलप्रवेशाय मार्गे च । "उग्घायणेसु वा सेयणवहंसि वा अण्णयरंसि वा तहप्पगारंसि" २ आचा० २ श्रु० ३ अ० ।

उग्घुस–मृज्–धा० शुद्धौ, लेपने च । "मृजेरुग्घुस०" ८।४।५ इति मृजेरुग्घुसादेशः । उग्घुसइ मार्जयति । प्रा० ।

उग्घोसिय–उद्घृष्ट–त्रि. संमार्जिते "उग्घोसिय सुणिम्मलंव" प्रश्न० ५ द्वा० ।

उग्घोसेमाण–उद्घोषयत्–त्रि० उद्घोषणां कुर्वति, "सद्देणं उग्घोसेमाणे" रा० ॥

उचिअ–उचित–त्रि. । शस्ते, परिचिते, युक्ते, वाच० । योग्ये, ज्ञा० १ अ० । सङ्गते, पंचा० १ विव० । अनुरूपे, आव० ३ अ० ।

उचिअ(य) करण–उचितकरण–न० आज्ञाराधनायाम्, पंचा० ६ विव० ।

उचिअ– ( य ) करणिज्ज–उचितकरणीय–त्रि० विहितकर्तव्ये, पंचा० १ विव० ।

उचिअ– ( य ) किच–उचितकृत्य–त्रि० यथार्हदानादौ ध० २ अधि० ।

उचिअ ( य ) जोग–उचितयोग–पुं. उचितः स्वभूमिकायोग्यो योगो व्यापारः । स्वाध्यायाध्ययनादिके संगतव्यापारे, पंचा० ५ विव० ।

उचिअ– ( य ) ट्ठिइ–उचितस्थिति–स्त्री० अनुरूपप्रतिपत्तौ, ध० १ अधि० पंचा०

उचिअ(य)त्त–उचितत्व–न० योग्यतायाम्, पंचा० १० विव० ।

उचिअ ( य ) त्थापायण–उचितार्थापादन–न० अनुरूपवस्तुसंपादने, पंचा० ९ विव० ।

उचिअ [ य ] पवित्तिप्पहाण–उचितप्रवृत्तिप्रधान–न० सम्बो-
धसत्तरि,पंचा० ११ विव० ।

उचिआ [ या ] चरण–उचिताचरण–न० ६ त० उचितका-
र्यस्याचरणे, तच्च पित्रादिविषयं नवविधमिहापि स्नेहवृद्धि-
कीर्त्यादिहेतुर्हितोपदेशमालागाथाभिः प्रदर्श्यते ।

सामन्ने मणुअत्ते, जं केई पाउणंति इह कित्तिं ।
तं मुणह निच्छिअप्पं, उचिआचरणस्स माहप्पं ॥ १ ॥
तं पुण पिइ १ माइ २ सहो–
अरेसु ३ पणयिणी ४ अवच्च ५ सयणेसु ६ ।
गुरुजण ७ नायर ८ परति–
त्थिएसु ९ पुरिसेण कायव्वं ॥ २ ॥

तत्र पितृविषय कायवाग्मनांसि प्रतीत्य त्रिविधमौचित्यं
क्रमेणाह ।

पिउणो तणु सुस्सूसं, विणएणं किंकरुव्व कुणइ सयं ।
वयणं पि से पडिच्छइ, वयणाओ अपडिअं चेव ॥३॥

तनुशुश्रूषां चरणक्षालनसंवाहनोत्थापननिवेशनादिरूपां दे-
शकालसात्म्यौचित्येन भोजनशयनीयवसनाङ्गरागादिसंपाद-
नरूपां च विनयेन नतपरोधावक्त्रादिभिः स्वयं करोति नतु
भृत्यादिभ्यः कारयति। यतः "गुरोः पुरो निषण्णस्य,या शोभा
जायेत सुते। उच्चैः सिंहासनस्थस्य शतांशेनापि सा कुतः १
( अपडिअंत्ति ) वदनादपतितमुच्चार्यमाणमेवादेशं प्रमाण-
मेव करोमीति सादरं प्रतीच्छति न पुनरनाकर्णितशिरोधून-
नकालक्षेपाईविधानादिभिरवजानाति ।

चित्तं पि हु अणुअत्तइ, सव्वपयत्तेण सव्वकज्जेसु ।
उवजीवइ बुद्धिगुणे, निअसब्भावं पयासेइ ॥ ३४ ॥

स्वबुद्धिविचारितमवश्यविधेयमपि कार्यं तदेवारभते यत्पि-
तुर्मनोऽनुकूलमिति भावः। बुद्धिगुणान् शुश्रूषादीन् सकलव्य-
वहारगोचरांश्चोपजीवति । अभ्यस्यति बहुदृश्वानो हि पितृ-
प्रभृतयः सम्यगाराधिताः प्रकाशयन्त्येव कार्यरहस्यानि निज-
सद्भावं चित्ताभिप्रायं प्रकाशयन्ति ।

आपुच्छिऊण पयट्टइ, करणिज्जेसु निसेहिओ ठाइ ।
खलिए खरंपि भणिओ, विणीअ यं न हु विलंघेइ ॥५॥
सविसेसं परिपूरइ, धम्माणुगए मणोरहे तस्स ।
एमाइउचिअकरणं, पिउणो जणणीइ वि तहेव ॥६ ॥

तस्य पितुरितरानपि मनोरथान् पूरयति श्रेणिकाचिल्लणादे-
रभयकुमारवत् । धर्मानुगतांस्तु देवपूजागुरुपर्युपास्तिधर्मश्र-
वणविरतिप्रतिपत्त्यावश्यकप्रवृत्तिसप्तक्षेत्री वित्तव्ययतीर्थया-
त्रादीननाथोद्धरणादीन्मनोरथान् सविशेषं बह्वादरेणेत्यर्थः
कर्त्तव्यमेव चैतत् सदपत्यमिह लोकगुरुषु पितृषु नचार्हद्ध-
र्मसंयोजनमन्तरेणात्यन्तं दुष्प्रतिकारेषु तेषु अन्योऽस्ति
प्रत्युपकारप्रकारः। तथाच स्थानाङ्गसूत्रम "तिण्हं दुप्पडि-
आरं समणाउसो । तंजहा अम्मापिउणो १ भट्टिस्स २
धम्मायरिअस्स ३ इत्यादि" समग्रोऽप्यालापको वाच्यः॥

अथ मातृविषयौचित्ये विशेषमाह ॥

नवरं सेसविसेसं, पयडइभावाणुवित्तिमप्पडिमं ।
इत्थीसहावसुलहं, पराभवं वहइ न हु जेणं ॥ ७ ॥

(सविसेसंति) जनकान्मातुः पूज्यत्वादपि यदाह मनुः उपा-
ध्यायाद्दशाचार्या आचार्येभ्यः शतं पिता । सहस्रं तु पितुर्मा-
ता गौरवेणातिरिच्यते । "

उचिअं एअंपि सहो-अरम्मि जं निअइ अप्पसममेअं ।
जिट्ठं च कणिट्ठं पि हु, बहु मन्नइ सव्वकज्जेसु ॥ ८ ॥
दंसइ न पुढो भावं, सब्भावं कहइ पुच्छइ अ तस्स ।
ववहारम्मि पयट्टइ, न निगूहइ थेवमाविहविणं ९ ॥
अविणीअं अणुअत्तइ, मित्तेहिं तो रहो उवालभइ ।
सयणजणाओ सिक्खं, दावइ अन्नावए सेणं ॥ १० ॥
हिअए ससिणेहो वि हु, पयडइ कुविअं व तस्स अप्पाणं ।
पडिवन्नविणयमग्गं, आलवइ अ धम्मपिम्मपरो॥ ११ ॥
तप्पणइणिपुत्ताइसु, समदिट्ठी होइ दाणसम्माणे ।
सावक्कम्मि उ इत्तो, सविसेसं कुणइ सव्वं पि ॥ १२ ॥

( पयट्टइत्ति ) व्यवहारे प्रवर्तते नत्वव्यवहारे इति ॥
( समादिट्ठित्ति ) स्वपत्न्यपत्यादिष्विव समदृष्टिः ( साव-
क्कमिति ) सापत्न्येऽपरमातृके भ्रातरि तत्र हि स्तोकेऽप्यन्तरे
व्यक्तीकृते तस्य वैचित्त्यं जनापवादश्च स्यात् । एवं पितृमातृ-
भ्रातृतुल्येष्वपि यथार्हमौचित्यं चिन्त्यम । यतः "जनकश्चोप-
पकर्त्ता च यस्तु विद्याप्रयच्छकः । अन्नदः प्राणदश्चैव पञ्चैते
पितरः स्मृताः १ राज्ञः पत्नी गुरोः पत्नी पत्नीमाता तथैव च।
स्वमाता चोपमाता च पञ्चैता मातरः स्मृताः २ सहोदरः
सहाध्यायी, मित्रं वा रोगपालकः । मार्गे वाक्यसखा यस्तु
पञ्चैते भ्रातरः स्मृताः ३ " भ्रातृभिश्च मिथो धर्मकार्यविषये
स्मरणादि सम्यक्कार्यम। यतः " भवगिहमज्झम्मि पमाय-ज-
लण जलिअम्मि मोहनिद्दाए । उट्ठवइ जोसुअंतं, सो तस्स
जणो परमबंधू १ " भ्रातृवन्मित्रेष्वेवमनुसर्तव्यम ।

इअभाइगयं उचिअं, पणइणिविसयंपि किं पि जं पेमो ।
सप्पणयवयणसम्माण, णे ण तं अभिमुहं कुणइ ॥ १३ ॥
सुस्सूसाइपयट्टइ, वत्थाभरणाइसमुचिअं देइ ।
नाडयपित्थणयाइसु, जणसंमद्देसु वारेइ ॥ १४ ॥
रुंभइ रयणिपयारं, कुसीलपासंडिसंगमवणेइ ।
गिहकज्जेसु निओअइ, न विओअइ अप्पणा सद्धिं ॥१५॥

रजन्यां प्रचारं राजमार्गवेश्मगमनादिकं निरुणद्धि धर्मावश्य-
कादिप्रवृत्तिनिमित्तं च जननीभगिन्यादिसुशीलललितावृन्द-
मध्यगतामनुमन्यत एव ( नविओइत्ति ) न वियोजयति यतो
विनसाराणि प्रायः प्रेमाणि यथोक्तम । " अवलोअणेण आ-
लाव–वणेण गुणकित्तणेण दाणेणं। छंदेण वट्टमाणस्स, निब्भरं
जायए पिम्मं १ अदंसणेण अइदं-सणेण दिट्ठं अणालवंतेणं ।
माणेण पवासेण य, पंचविहं झिज्जए पिम्मं २ ।

अवमाणं न पयासइ, खलिए सिक्खेइ कुविअमणुणेइ ।
धणहाणिवुड्ढिधम्मं, न वइअरं पयडइ न तीसे ॥ १६ ॥

अपमानं निर्हेतुकं नास्यै प्रदर्शयति स्खलिते किंचिदपराधे
निभृतं शिक्षयति । कुपितां चानुनयति । अन्यथा सहसाका-
रितया कूपपाताद्यप्यनर्थं कुर्यात् ( पयडइत्ति ) धनहानि-
व्यतिकरं न प्रकटयति प्रकटिते तु धनहानिव्यतिकरे तुच्छ-
तया सर्वत्र तद्वृत्तान्तं व्यञ्जयति । धनवृद्धिव्यतिकरे च व्य-
क्तीकृते निरर्गलव्यये प्रवर्तते तत एव गृहे स्त्रियाः प्राधान्यं
न कार्यम ।

सुकुलुग्गयाहिं परिणय–वयाहिं निच्छम्म धम्मनिरयाहिं
सयणे रमणीहिं पि, पाउणइ समाणधम्माहिं ॥ १७ ॥
रोगाइसु नो त्रिक्खिवइ, सुसहाओ होइ धम्मकज्जेसु ॥
एमाइपणइणिगायं, उचिअं पाएण पुरिसस्स ॥ १८ ॥
पुत्तं पइ पुण उचिअं, पिउणो लालेइ बालभावम्मि ।
उम्मीलिअबुद्धिगुणं, कलासु कुसलं कुणइ कमसो ॥१९॥
गुरुदेवधम्मसुहिसयण, परिचयं कारवइ निच्चंपि ।
उत्तमलोएहिं समं, मित्तीभावं रयावेइ ॥ २० ॥
गिन्हावेइ अ पाणिं, समाणकुलजम्मरूवकन्नाणं ।
गिहभारम्मि निजुंजइ, पहुत्तणं वि अ रइकमेण ॥२१॥
पच्चक्खं न पसंसइ, वसणोवहयाण कहइ पुरवत्थं ।
आयं वयमवसेसं च, सोहए सयमिमेहिं जो ॥ २२ ॥
प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः। कर्मान्ते दास-भृत्याश्च पुत्रा नैव मृताः स्त्रियः १ इति वचनात्पुत्रप्रशंसा नैव युक्ता। अन्यानिर्वाहादर्शनादिहेतुना चेत्कुर्यात् तदाऽपि न प्रत्यक्षं गुणवृद्ध्यभावाभिमानादिदोषापत्तेः। द्यूतादिव्यसनिनां निर्धनत्वन्यक्कारतर्जनताडनादिदुःखस्याश्रवणे तेऽपि नैव व्यसने प्रवर्तन्ते आयं व्ययं व्ययाद्युत्कलितशेषं च पुत्रेभ्यः शोधयति। एवं च पल्याः प्रभुत्वं पुत्राणां स्वच्छन्दत्वमपास्तम्।
दंसेइ नरिंदसभं, देसंतरभावपयडणं कुणइ ।
इच्चाइअवच्चगयं, उचिअं पिउणो मुणेअव्वं ॥ २३ ॥
सयणेसु समुचिअमिणं, जं तेनिअगेहवुड्ढिकज्जेसु ।
सम्माणिज्ज सया वि हु, करिज्जहाणीसु वि समीवे ॥२४॥
सयमवि तेसिं वसणू, सव्वे सुहो अव्वमंति अम्मिसया ।
खीणविहवाणरोगा, उराणकायव्वमुद्धरणं ॥ २५ ॥
खाइज्ज पिट्ठिमंसं, न तेभि कुज्जा न सुक्ककलहं च ।
नइमित्तेहिं मित्तिं, न करिज्ज करिज्ज मित्तेहिं ॥ २६ ॥
तयभावे तग्गेहे, न वइज्ज वइज्ज अत्थ संबंधे ।
गुरुदेवधम्मकज्जेसु, एगचित्तेहिं होअव्वं ॥ २७ ॥
एमाइसयणोचिअ, मह धम्मायरिअ समुचिअं भणिमो।
भत्तिबहुमाणपुव्वं, तमितिसं जं पि पणिवाओ ॥२८॥
तद्दंसिअनीईए, आवस्सयपमुहकिच्चकरणं च ।
धम्मोवएससवणं, तदंतिए सुद्धमद्धाए ॥ २९ ॥
आएसं बहुमन्नइ, इमेसि मणसा वि कुणइ नावन्नं ।
रुंभइ अवन्नवायं, थुइवायं पयडइ सया वि ॥ ३० ॥
न हवइ छिद्दप्पेही, सुहिव्व अणुअत्तए सुहदुहेसु ।
पडिणीअपच्चवायं, सव्वपत्तेण वारेइ ॥ ३१ ॥
खलिअम्मि चोइओ गुरु-जणेण मन्नइ तहत्ति सव्वं पि।
चोएइ गुरुजणं पि हु, पमायखलिएसु एगंते ॥३२॥
कुणइ विणओवयारं, भत्तीए समयसमुचिअं सव्वं ।
गाढं गुणानुरायं, निम्मायं वहइ आयम्मि ॥ ३३ ॥
भावोवयारमेसिं, देसंतरओ वि सुमिरइ सया वि ।
इअ एवमाइगुरुजण,समुचिअमुचिअं मुणेअव्वं ॥३४॥
जत्थ सयं निवसिज्जइ, नयरे तत्थेव जे किर वसंति ।
समभाणवित्तिणो ते, नायरया नाम वुच्चंति ॥ ३५॥
समुचिअमिणमो तेसिं, जमेगचित्तेहिं समसुहदुहेहिं ।
वसणूसवतुल्लगमा–गमेहिं निच्चं पि होअव्वं ॥३६॥
कायव्वं कज्जे वि हु, नइक्कमिक्केण दंसणं पहुणो ।
कज्जो न मंतभेओ, पेसुन्नं परिहरेअव्वं ॥ ३७ ॥
समुवट्ठिए विवाए, तुलासमाणेहिं चेव ठायव्वं ।
कारणसाविक्खेहिं, विहुणे अव्वो न नयमग्गो ॥३८॥
बलिएहिं दुब्बलजणो, सुंककराईहिं नाभिभविअव्वो।
थोवावराहदोसे, विदंडभूमिं न नेअव्वो ॥ ३९ ॥
कारणिएहिं समं, कायव्वो जो न अत्थसंबंधो ।
किं पुण पहुणा सद्धिं, अप्पहिअं अहिलसंतेहिं॥४०॥
एअं परुप्परं ना–यराण पाएण समुचिआचरणं ।
परतित्थिआण समुचिअ,मह किं पि भणामि लेसेणं॥४१॥
एएसिं तित्थिआणं, भिक्खट्ठमुवट्ठिआण निअगेहे ।
कायव्वमुचिअकिच्चं, विसेसओ रायमहिआणं ॥४२॥
जइ वि मणम्मि न भत्ति, न पक्खवाओ अ तग्गयगुणेसु।
उचिअं गिहागएसु, तहवि हु धम्मो गिहीण इमो ॥४३॥
गेहागयाणमुचिअं, वसणावडिआण तह समुद्धरणं ।
दुहिआण दया एसो, सव्वेसिं सम्मओ धम्मो ॥४४॥
मुंचंति न मज्जायं, जलनिहिणो नाचलाविहु चलंति ।
न कयावि उत्तमनरा, उचिआचरणं विलंघंति ॥४५॥
तेणं चिअ जगगुरुणो, तित्थयरा वि हु गिहत्थवासम्मि ।
अम्मापिऊणमुचिअं, अब्भुट्ठाणाइ कुव्वंति ॥४६ ॥
इत्थं नवधौचित्यम्। इत्थं च व्यवहारशुद्ध्यादिभिरर्थोपार्जनं विशेषतो गृहिधर्म इति निष्कर्षः॥ टीका सुगमत्वान्न गृहीता धर्म० २ अधि०।

उचिअ(या)णुट्ठाण–उचितानुष्ठान–न. आप्तोपदिष्टत्वेन विहितक्रियारूपत्वे, "उचियाणुट्ठाणओ विचित्त जइ जोगतुल्लमोएसं" पंचा० ६ विव०।

उच्च- उच्च–त्रि० उत्क्षिप्य बाहू चीयते उपर्युपरि निविष्टैरवयवैश्चीयतेऽसौ वा उद्० चि. ड. वाच०। समुच्छ्रिते उपा० २ अ०। उच्चं द्रव्यभावभेदाद् द्विधा। द्रव्योच्चं धवलगृहवासि, भावोच्चं जात्यादियुक्तम्। द० ५ अ०। उत्कृष्टे सूत्र० १ श्रु० १० अ०। उच्चस्थानास्थितत्वेन ऊर्ध्वीकृतकन्धरतया वा दृश्यतो, भावतस्त्वहो अहं लब्धिमानिति मदाध्मातमानसः उत्त० १ अ०। "उच्चं अगोत्तं च गतिं उवेति" उच्चमोक्षाख्यां सर्वोत्तमां वा गतिं व्रजन्ति। सूत्र० १ श्रु० १३ अ०

उच्च [ अ ] उच्चैस्–अव्य०उद्. चि डैसि.। "उच्चैर्नीचैसः अः ८।१।१५४। इति उच्चैः शब्दघटकस्यैतोऽत्वम. प्रा० उच्चशब्दात् सिद्धमिति केचित् उच्चैः शब्दस्य रूपान्तरनिवृत्त्यर्थं वचनम्। प्रा०। तुङ्गत्वे, महति, उच्चदेशजाते, वाच०

उच्चंतय–उच्चन्तग–पुं० दन्तरोग, जी० ३ प्रति०। जं०। रा०।

उच्चट्ठाण–उच्चस्थान– न० ग्रहाणामादित्यादीनां मेषादिषु

अनीचस्थानेषु, तानि च दशादिषु त्र्यंशांशकेष्वेवमवसेयानि । अजवृषभमृगाङ्गनाकर्कमीनवणिजांशकेष्विनाद्युच्चाः । दश १० शिख्य ३ ष्टाविंशति २८ तिथी १५ न्द्रिय ५ त्रिघन २७ विंशेषु । ज्ञा० "उच्चट्ठाणाट्ठिएसुगहेसु" अर्काद्युच्चान्यज १ वृष २ मृग ३ कन्या ४ कर्क ५ मीन वणिजोंऽशैः । दिग्दहनाष्टाविंशति २८ तिथी १५ षु ५ नक्षत्र २७ विंशतिभिः । २० । अयं भावः मेषादिराशिस्थाः सूर्यादय उच्चास्तत्राऽपि दशादीनंशान् यावत्परमोच्चाः । एषां फलं तु । सुखी १ भोगी २ धनी ३ नेता ४ जायते मण्डलाधिपः । ५ । नृपतिश्चक्रवर्ती च क्रमादुच्चग्रहे फलम् ॥ १ ॥ " तिहिं उच्चेहिं नरिंदो, पंचहिं तह होइ अद्धचक्की अ । छहिं होइ चक्कवट्टी सत्तहिं तित्थंकरो होइ " कल्प० ।

उच्चत्त–उच्चत्व– न० उच्च–त्व. । उच्छ्रये, स्था० २ ठा० । वस्तुनोऽनेकधोच्चत्वमूर्ध्वस्थितस्यैकमपरं तिर्य्यक् स्थितस्याऽन्यत गुणोन्नतिरूपम् । स्था० १ ठा० ( ज्यौतिषिकाणामुच्चत्वं जोइसिय शब्दे )

उच्चत्तभयग–उच्चत्वभृतक– पुं० भृतकभेदे, मूल्यकालनियमं कृत्वा यो नियतं यथावसरं कर्म कार्य्यते स उच्चत्वभृतकः । स्था० ४ ठा० ।

उच्चत्तरिया–उच्चत्तारिका– स्त्री० बाह्यलिपिभेदे, स० ।

उच्चंपिय–उच्चम्पित– त्रि० प्रावल्येनाक्रमिते, "सीसं उच्चं पियं कबंधम्मि य " तं० ।

उच्चफल–उच्चफल– त्रि० उच्चं चिरकालभावि फलं यस्मात्स उच्चफलः ! चिरकालेनोपकारिणि, "उच्चफलो अह खुड्डो, स भणित्यो" व्य० प्र० ३ उ० ॥

उच्चक्खित्त–उच्चक्षिप्त–त्रि० यद्दृष्टेरुपरि बाहुं प्रसार्य्य देयवस्तु ग्रहणाय पात्रं ध्रियते तत्र व्याप्रियमाणे, पिं० ।

उच्चय–उच्चय– पुं० उद्० चि० अच्० । ऊर्ध्वचयने, भ० ८ श० ९ उ० । पुष्पादेरुत्तोलने, नारीकट्यं शुकग्रन्थौ, " नीविः स्यादुच्चयोऽथ यम० " उत्कृष्टाश्रये । वृहत्समुदाये, च । कर्मणि अच्० हस्ताभ्यामुद्धृत्यावचिते, निवारे, वाच० ॥

उच्चयबंध–उच्चयबन्ध– पुं० उच्चय ऊर्ध्वं चयनं राशीकरणं तद्रूपो बन्ध उच्चयबन्धः । अल्लियावणबन्धभेदे, भ० ८ श० ९ उ० ।

उच्चवेत्तं–उच्चयित्वा– अव्य० उच्चैः कृत्येत्यर्थ, वृ० १ उ० ।

उच्चसद्द–उच्चशब्द– पुं० वृहति शब्दे, व्य० द्वि० ७ उ० ।

उच्चाकुइय–उच्चाकुचिक–पुं० अनीचाऽपरिष्पन्न शय्याके,"आणापाणमेयंअभिग्गहियसिज्जासणियस्स उच्चाकुइयस्स " उच्चाऽकुचशय्यावत्त्वं सप्रयोजनं पक्षमध्ये सकृत् शय्याबन्धकत्वम् । कल्प० ।

उच्चाकुया–उच्चाकुचा– स्त्री० उच्चा हस्तादि यावत् येन पिपीलिकादेर्बधो न स्यात् सर्पादेर्वा दंशो न स्यात् अकुचा कुच परिस्पन्द इति वचनात् परिस्पन्दरहिता निश्चलेति यावत् ततः कर्मधारये उच्चाकुचा । अनीचाऽपरिस्पन्दायां कम्बादिमय्यां शय्यायाम्, कल्प० ॥

उच्चागय–उच्चागज– त्रि० उच्चो योऽगः पर्वतो हिमवान् तत्र जातमुच्चागजम् । हिमाचलोद्भवे, उच्चागयठाणलट्ठसंठिअं ! कल्प० ॥

उच्चागोय–उच्चैर्गोत्र– न० गोत्रकर्मभेदे, यदुदयात्पुनर्निर्धनः कुरूपो बुद्ध्यादिपरिहीणोऽपि पुरुषः सुकुलजन्ममात्रादेव लोकात्पूजां लभते तदुच्चैर्गोत्रम् । यदुदयाद्वुत्तमजातिकुलप्राप्तिसत्काराभ्युत्थानाञ्जलिप्रग्रहादिरूपपूजालाभश्च तदुच्चैर्गोत्रम् । कर्म० । इक्ष्वाकुवंशादिके, उच्चैर्गोत्रमेषामित्युच्चैर्गोत्राः। उच्चैर्गोत्रोद्भवेषु इक्ष्वाकुहरिवंशादिकुलोद्भवेषु, उच्चागोया वेगे णीयागोयावेगे । सूत्र० २ श्रु० १ अ० ।

उच्चणागरी–उच्चनागरी–स्त्री० सुस्थितसुप्रतिबुद्धस्थविरान्निर्गतस्य कौटिकगणस्य प्रथमशाखायाम्, कल्प० ॥

उच्चागोयणिबंध–उच्चैर्गोत्रनिबन्ध–पुं० लोकपूज्यतानिबन्धनोच्चैर्गोत्राभिधानकर्मबन्धने, " उच्चागोयणिबंधो सासणवन्नो य लोगम्मि " पंचा १२ विव० ।

उच्चाडण–उच्चाटन–न० उद्. चट् णिच् ल्युट् । उत्पाटने, स्वस्थानाद् विश्लेषणे, "उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्तितम्" इत्युक्ते षट्कर्मान्तर्गतेऽभिचारभेदे च । वाच० ।

उच्चायप्पमाण–उच्चात्मप्रमाण–त्रि० उच्चमात्मप्रमाणं येषां ते तथा । स्वप्रमाणत उच्चे, कल्प० ।

उच्चार–उच्चार–पुं० उद् चर्–णिच्. घञ्. । उच्चारणे, उल्लङ्घ्य चारो गतिः । गृहादीनां राशिनक्षत्रान्तरसञ्चारे, वाच० । शरीरादुत्प्राबल्येन च्यवतेऽपयाति उच्चरतीति चोच्चारः । विष्ठायाम्, आचा० २ श्रु० ३ अ० १३ उ० । स० । आव० । ज्ञा० । कल्प० । तं० । दशा० । स्था० । ( अस्य परिष्ठापनं पारिट्ठावणिया शब्दे वक्ष्यते ) बृहच्छरीरचिन्तायाम्, दर्श० । विड्विसर्जने, ध० २ अधि० । जं० (पुरीषोत्सर्गप्रक्रिया–थंडिल शब्दे) ( आचार्यस्य वसतावेव विड्विसर्जनमतिसय शब्दे )

उच्चारणिरोह–उच्चारनिरोध–पुं० । विसिसृक्षायां सत्यामपि बलात्पुरीषरोधे, एष च रोगकारणम् । स्था० ९ ठा० ।

उच्चारपडिक्कमण–उच्चारप्रतिक्रमण–न० उच्चारोत्सर्गं विधाय ईर्यापथिकप्रतिक्रमणरूपे प्रतिक्रमणभेदे, स्था० ६ ठा० ।

उच्चारपासवण–उच्चारप्रस्रवण–न० । उच्चारः प्रस्रवणं च द्वन्द्वः पुरीषमूत्रयोः तद्विसर्गप्रतिपादके आचाराङ्गस्य द्वितीयश्रुतस्कन्धस्य तृतीये ऽध्ययने च । आचा० २ श्रु० ३ अ० १ उ० ।

उच्चारपासवणकिरिया–उच्चारप्रस्रवणक्रिया–स्त्री० उच्चारप्रस्रवणकर्त्तव्यतायाम्, " उच्चारपासवणकिरियाए उव्वाहिज्जमाणे आचा० २ श्रु० ३ अ० १ उ० ।

उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणियासमिइ–उच्चारप्रस्रवणखेलशृङ्घाणजल्लपारिष्ठापनिकसमिति –स्त्री० उच्चारादीनां पारिष्ठापनिकारूपा समितिः । समितिभेदे, "इत्थ इमं आहारणं एगेण खुड्डगेण वि वसंते किहव्व विनयेहिं य थंडिले काइय लोयतो राया थंडिलं नापेहयंती न वोसिरो देवयाए श्लेष्मा जल्लो मलः सामउज्जोओ अणुकंपाए य कउ दिट्ठा भूमित्ति वासरियंति" । पा० । सूत्र० । स्था० । उच्चारपासवणखेलसिंघाणगपारिट्ठावणियासमितीए । एत्थ वि सत्त भंगा । तत्थ उदाहरणं । धम्मरुई पारिट्ठावणिया समितो समाहिपरिट्ठावणं अभिग्गहग्गहणं सक्कासणचलणं मिच्छदिट्ठि आगमणं किं विल्लिया विउव्वणं काइया ससंजता । वाहाभिउ पमत्तउ निग्गतो पेच्छति । ताहे सरंता साहू जं किलामिज्जति त्ति । एवंणातो देवेण वारितो वंदित्ता गतो । वितियं दिट्ठिवागए चेल्लओ तेण थंडिलं न पडिलेहिता वियाले सा-

रत्ति काइयाको । जातो न पेहितंति न वोसिरंति । देवताए उज्जोतो कतो अणुकंपाए दिठा भूमित्ति वोसिरियं । एस समित्तो । वितिओ असामितो चउव्वीसं उच्चारपासवणभूमीसु । तिण्णि कालभूमीओ न पडिलेहेति भणति । किमेत्थ उट्ठो उवविसेज्ज देवता उव्हरूवेण तत्थ ठिता ठितियाए गतो तत्थ वि एवं ततियाए ताहे तेण उठवितो तत्थ देवताए पडिचोदितो कीस सत्तवीसं न पडिलेहेसि समं पडिवण्णो। एस पारिठावणियासमिती ॥ आ० चू० ।

उच्चारपासवणभूमि–उच्चारप्रस्रवणभूमि–स्त्री० पुरीषमूत्रोत्सर्गस्थण्डिले, पंचा १अ० । उच्चारपासवणभूमिं पडिलेहेइ, भ २ श० १ उ० । ( अत्रोत्सर्गोऽस्याः प्रत्युपेक्षणं च थंडिल शब्दे )

उच्चारपासवणविहिसत्तिकय–उच्चारप्रस्रवणविधिसप्तैकक–पुं० पुरीषमूत्रोत्सर्गप्रतिपादके आचाराङ्गद्वितीयश्रुतस्कन्धस्य द्वितीयचूलायाश्चतुर्थेऽध्ययने, स्था० ७ठा० ।आचा० ॥

उच्चारभूमिसंपण्ण–उच्चारभूमिसंपन्न–त्रि० उच्चारप्रस्रवणादिभूमियुक्ते,'उच्चारभूमिसंपन्न-इत्थीपसुविवज्जियं" दश० ।

उच्चारिय–उच्चारित–त्रि. उच्चार-तारका-इतच् । कृतविष्ठोत्सर्गे, उद् चर् णिच् कर्मणि क्त। यस्योच्चारणं कृतं तादृशवर्णादौ, उद्- अन्तर्भूतणर्थे, चर क्त । उच्चारितोऽप्युक्तार्थे, वाच० ॥ " उच्चारिय सरिसाइं-सेसाइं वि कोवणट्ठाए । बृ० । दश० ।

उच्चाइय–उच्चाल्य– अव्य. उद्.चल्. ल्यप् । ऊर्ध्वमुत्क्षिप्येत्यर्थे, उच्चालिय णिहाणीसु" । आचा० १श्रु० ८ अ० १ उ० ।

उच्चलिय–उच्चालयितृ–त्रि० अपनेतरि, " उच्चालइ यं तं जाणेज्जा दुरालइयं"॥ आचा० १श्रु० ३ अ० ।

उच्चालित–त्रि० उद्,चल्,णिच्,क्त०।उत्पाटिते,"उच्चालियम्मि पाए इरियासमियस्स संकमट्ठाए" ओ० । नि०चू० ।

उच्चावइत्ता–उच्चैःकृत्वा–अव्य०उत्पाट्येत्यर्थे, " दो वि पाए, उच्चावइत्ता सव्वओ समंता समभिलोएज्ज,,द्वावपि पादौ उच्चैःकृत्वा द्वावपि पार्ष्णी, उत्पाट्येत्यर्थे, प्रज्ञा० १ ७ पद० ।

उच्चावय–उच्चावच–त्रि० उच्चं च अवचं च उच्चावचम् । उत्त० । अनुकूलप्रतिकूले, भ० १ श० ए उ० । असमञ्जसेषु नानाप्रकारे, सूत्र० १ श्रु० १ अ० । " हसंतो नाभिगच्छेज्जा कुलं उच्चावयं सया" उच्चं द्रव्यभावभेदाद् द्विधा द्रव्योच्चं धवलगृहवाचि भावोच्चं जात्यादियुक्तमेवमपि द्रव्यतः कुटीरकवासी भावतो जात्यादिहीनमिति, दश० ५ अ० । " उच्चावयाहिं सेज्जाहिं तवस्सी भिक्खू थामवं ऊर्ध्वचित्ता " उच्चा उपलक्षितलाद्युपलक्षणमेतत् यद्वा शीतातपनिवारकत्वादिगुणैः शय्यान्तरोपरिस्थितत्वेनोच्चास्तद्विपरीतास्त्ववचा अनयोर्द्वन्द्वे उच्चावचाः । नानाप्रकारा वोच्चावचास्ताभिः शय्याभिर्वसतिभिः । उत्त० ८ अ० । सूत्र० । " अह भिक्खू उच्चावयं मणं णियच्छेज्जा " उच्चावचं शोभनादौ मनः कुर्यादिति । तत्रोच्चं नाम मैवं कुर्वन्तु अवचं नाम एवं कुर्वन्त्विति । आचा० २ श्रु० २ अ० १ उ० । उत्कृष्टतरे, औ० । असमञ्जसे, " उच्चावयाहिं आउसणाहिं " भ० १५ श० १ उ० । स्था० ।

उच्चव्रत-न०उच्चानि महान्ति व्रतानि येषां तानि उच्चव्रतानि आकारः प्राकृतत्वात् । महाव्रतधरेषु, " उच्चावयाइं मुणिणो चरंति, ताइं तु खेत्ताइं सुपेसलाइं" उत्त० १५ अ० । क० । स० शेषव्रतापेक्षया महाव्रतेषु, उत्त० १ अ० ।

उच्चासण–उच्चासन–न० उन्नतासने, जी० ३ प्रति० । गुरोरासनादुच्चैरासने, ध० २ अ० । अलावे संलावे उच्चसेणा समासणे अंतरभासाए उवरिभासाए जं किंचि मज्झं ममविणयपरिहीणं सेहे राइणियस्स उच्चासणम्मि संचिट्ठित्ता णिसीइत्ता वा तुयट्टित्ता भवति आसायणासेहस्स । आव० ४ अ० ।

उच्चिय–उचित–न० उच्चताकरणे, उत्पाटने च । औ० ।

उच्चुप्–चट–धा० भेदे. भ्वा. पर. सक. सेट्–धातवोऽर्थान्तरेऽपि ८।४।५८। इत्यनेन चटतेरुच्चुप् । उच्चुपइ चटति प्रा० ।

उच्चूर–उच्चूर–त्रि० नानाविधे, व्य० प्र० ३ उ० ।

उच्चे–उच्चैस्– अव्य० उद् चि० डैसि० । तुङ्गत्वे, उन्नते, महति, ऊर्ध्वदेशजाते, वाच० " नाइ उच्चेव नीए वा णासन्ने नाइदूरओ " उच्चैः स्थाने मालादौ, उत्त० १ अ० । " तत्राऽस्य विषयतृष्णा प्रभवत्युच्चैर्न दृष्टिसम्मोहः " उच्चैरत्यर्थे, न० । षो० । प्रति० । उच्चैरिष्टानिष्टेषु वस्तुषु । उच्चैरतीव कल्पितेषु इष्टानिष्टेषु, द्वा० १८ द्वा० ।

उच्छ (क्षाण) उक्षन्–पुं० उक्ष् कनिन् । ठोऽक्षादौ।८।२।१७। इति संयुक्तस्य छः । प्रा० " पुंस्यन आणो राजवच्च ८ । ३ ५६ । इति अनः स्थाने आण इत्यादेशः । वृषभे, प्रा० ।

उच्छंग–उत्सङ्ग–पुं० सञ्ज् आधारे घञ् । मध्यभागे, वाच० । " उच्छंगे णिवसेत्ता " आ० म० द्वि० । वि० । उत्सङ्ग इव उत्सङ्गः । पृष्ठदेशे, औ० । ज्ञा० । उत्क्रान्तः सङ्गम् अत्या० स० । सन्यासिनि, सङ्गरहिते तत्त्वज्ञे, प्रा० । स० । ऊर्ध्वतः संसर्गे च । वाच० ।

उच्छंघ–उन्नमि–उद् नम णिच्० धा० । " उन्नमेरुच्छंघोल्लालगुलुगुच्छोप्पेला " ८।४।३६ इति उत्पूर्वस्य नमेर्ण्यन्तस्य उच्छंघ आदेशः । उच्छंघइ उन्नमयति । प्रा० ।

उच्छत्त–अपच्छत्र–न० अपशदं विरूपं छत्रं स्वदोषाणां परगुणानां चाच्छादनमपच्छत्रम् चतुर्दशे गौणालीके,प्रश्न० १ द्वा० ।

उच्छत्र–न० उच्छत्रं वा न्यूनत्वम् । चतुर्दशे गौणालीके, प्रश्न० १ द्वा० ।

उच्छरंत–आस्तृणवत्–त्रि० आच्छादयति, " अणिएहिं उच्छरंता अभिभूय हरंति परधणाइं " प्रश्न ३ द्वा० ।

उच्छलणा–उच्छलना–स्त्री० अपवर्तनायाम्, अपप्रेरणायाम्, प्रश्न. ३ द्वा० ।

उच्छलिय–उच्छलित–त्रि० ऊर्ध्वगते, प्रश्न० ३ द्वा० ।

उच्छल्ल–उच्चल–धा० उद्-शल-भ्वा० ऊर्ध्वपतने, "उच्छल उच्छलः।८।४।७३।उच्छलतेरुच्छल्लादेशः।उच्छल्लइ उच्छलति प्रा.।

उच्छल्ल–उच्छलत्–पुं० ग्रहणे, " तज्जणगलुच्छल्ल उच्छल्लणाहिं " गलुच्छल्लंति गलग्रहणम् । प्रश्न० ३ द्वा० ।

उच्छल्लिय-उच्छल्य-अव्य० एकपार्श्वेन स्थित्वेत्यर्थे, "पत्तगबंधे, पइरिक्कुच्छलिय पुणो पहे उरणिया" नि०चू० १ उ० ।

उच्छव–उत्सव–पुं० उद्० सू० अप्० " सामर्थ्योत्सुकोत्सवे वा " ८।२।२२ एषु संयुक्तस्य छो वा भवति । प्रा० । आनन्दजनकव्यापारे, विवाहादौ, वाच० । इन्द्रोत्सवादौ, ज्ञा० १ अ० ।

उच्छादणया–उच्छादनता– स्त्री० सचित्ताऽचित्ततरुतवस्तु-

च्छेदने, अंगाणं संनुत्तराणं घाताए वाहाए उच्छादणयाए " भ० १५ श० १ उ० ।

उच्छायणा–उच्छादना–स्त्री०जातेरपि व्यवच्छेदने,ज्ञा०१८अ०।

उच्छाय–उच्छ्राय–पुं० उद्-श्रि करणे अच् घञ् वा । उत्सेधे, स्था० ७ ठा० ।

उच्छार-आ-क्रम धा०द्वा० आत्म० आक्रमणे, "आक्रमेरोहावोच्छारच्छुन्दाः " ८ । ४ । ५८ आक्रमेरेते आदेशा भवन्ति । उच्छारइ आक्रामति ( ते ) ( केवलस्तु परस्मैपदी ) प्रा० ।

उच्छाह–उत्साह-पुं० उद्-सह-घञ् । " वोत्साहे थो हश्च रः " ८ । २ । ४८ । उत्साहशब्दे संयुक्तस्य थो वा भवति " तत्सन्नियोगे च हस्य रः । उत्थारो उच्छाहो " थाऽभावे । "ह्रस्वात् थ्यश्चत्सप्सामनिश्चले ८ । २ । २१ । इति त्सभागस्य च्छः । " अनुत्साहोत्सन्ने त्स च्छे " ८ । १ ११४ । इत्यत्र उत्साहपर्युदासात् च्छपरस्यादेरुत ऊत्वं न । प्रा० । पराक्रमे, जोगेत्ति वा विरियं ति वा सामत्थं ति वा परक्कमंति वा उच्छाहेति वा एगट्ठा ॥ आ० चू० १ अ० । पं० सं० । आ० म० । वीर्य्ये,सम० । श्रवणादिविषये उत्कण्ठिकाविशेषे, चं०प्र०२०पा० उद्यमे, सू० प्र० २० पा० । अध्यवसाये, कर्त्तव्यकृत्ये, स्थिरतरे प्रयत्ने, कल्याणे, श० रत्ना० । सूत्रे, मेदि० कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते सा० द० उक्तलक्षणे वीररसस्य स्थायिभावे च । वाच० ।

उच्छाहिय-उत्साहित-त्रि० त्वमेवाऽस्य कार्य्यस्य करणे समर्थ इत्येवमुत्कर्षिते, पिं० ॥

उच्छिंपग-अवच्छिम्पक–पुं० चौरविशेषे, प्रश्न० । ३ द्वा० ।

उच्छिंपण-उत्क्षेपण–न० जलमध्यान्मत्स्यादीनामाकर्षणे, प्रश्न० २ द्वा० ।

उच्छिण्ण-उच्छिन्न-त्रि० उद्-छिद् निर्नष्टसत्ताके, स्था०५ठा०।

उच्छिण्णसामिय-उच्छिन्नस्वामिक–त्रि० निःसत्त्वीभूतप्रभुषु, उच्छिण्णसामियाइं वा उच्छिण्णसेउयाइं वा उच्छिण्णगोत्तागाराइं वा धनानि। भ० ३ श० ७ उ० ।

उच्छिय–उच्छ्रित–त्रि०उद् श्रि कर्त्तरि क्त । उन्नते, संजाते, समुत्पन्ने, प्रवृद्धे । मेदि० वाच० ऊर्ध्वीकृते, औ० ।

इच्छु-इक्षु-पुं० इष्यते ऽसौ माधुर्य्यात् इष् क्सु । प्रवासीक्षौ ८ । १ । ९५ । इति आदेरित उत्वम् वा । प्रा० । मधुररसयुक्ते असिपत्रे, वाच० ( इक्षुशब्दस्य व्याख्या इक्खु प्रकरणे उक्ता )

उच्छुअ–उत्सुक-त्रि० उत्सुकवति, प्रेरणे, " मितद्वावित्वात् उकन् सामर्थ्योत्सुकोत्सवे वा ८ । २ । २२ । इति संयुक्तस्य त्सभागस्य वा छः । उच्छुओ ऊसुओ प्रा० । इष्टावासये कालक्षेपासहिष्णौ, इष्टार्थोद्युक्ते च । वाच० ।

इच्छुभइत्ता–अवक्षिप्य–अव्य० अपसदं किञ्चित् क्षिप्त्वेत्यर्थे, उच्छुभइत्ता सावत्थीए णयरीए " भ० १५ श० १ उ० ।

उच्छूढ-उच्छूढ–त्रि० मुषिते, " उच्छूढेवि तदुभये सपक्खपरपक्खतदुभयं होइ" बृ० १ उ० । त्यक्ते, संस्था० । स्वस्थानादपक्षिप्ते, निष्काशिते, "आयाणफलियउच्छूढदीहवाहू " । तं० । औ० ।

उच्छूढसरीर–उच्छूढशरीर-पुं० उच्छूढमुज्झितमुज्झितमिव उज्झितं संस्कारपरित्यागाच्छरीरं येन स उच्छूढशरीरः । चं० प्र० १पाहु० । सू० प्र० । शरीरसंस्कारं प्रति निस्पृहत्वात्त्यक्तशरीरकल्पे तादृशे मुनौ, ज्ञा० १ अ० । औ० । भ० । नि० "घोरतवस्सी घोरबंभयारी उच्छूढसरीरे संखित्तविउलतेयलेस्से " वि० १ अ० ।

उच्छूढसरीरगि ( घ ] र-उच्छूढशरीरगृह–त्रि० उच्छूढं त्यक्तं शरीरगृहं यैस्ते उच्छूढशरीरगृहाः । शरीरगृहयोर्निःस्पृहत्वात्त्यक्तपरिकर्मसु, संस्था० ।

उच्छूर्–तुट-धा-भेदे तुदा० कुटा० पर० सेट् । तुटेस्तोड तुट्ट खुट्ट खुडोक्खुडोल्लुक्कणिल्लुक्कल्लुकोच्छूराः ८ । ४ । ११६ । इत्यनेन सूत्रेण तुटेरुच्छूरादेशः । उच्छूरइ तुटति । प्रा० ।

उच्छेइ-[ ण् ] उच्छेदिन्-त्रि० नाशके, द्वा० २१ द्वा० ।

उच्छेद [ य ] उच्छेद–पुं० उद्-छिद्-भावे-घञ् । उत्प्राबल्येन छेदो विनाशः । एकान्तोच्छेदे, निरन्वये नाशे, दश० १ अ० । आ० म० द्वि० । "उच्छेओ सुत्तत्था णं ववच्छेउत्ति वुत्तं भवति" नि० चू० १ उ० ।

उच्छेव–उत्क्षेप–पुं० यत्र पतितुमारब्धं तत्राऽन्यस्येष्टकादेः संस्थापने, व्य० द्वि० ४ उ० ।

उच्छोभ–उत्शोभ–न० उत्प्राबल्येन गता शोभा सौभाग्यं सर्वजनवल्लभता यस्मात्तदुच्छोभम् ॥ पैशुन्ये कर्णजपत्वे, "इहरा सयरुवघाओ उच्छोभाईहिं अंतणो लहुया" दर्श० ॥

उच्छोलंत–उच्छोलत्–त्रि० उन्मूलयति, रा० सकृत्पादादेः प्रक्षालनं कुर्वति च । "उच्छोलंतं वा पधावंतं वा साइज्जइ " नि० चू० १७ उ० ।

उच्छोलण-उच्छोलन–न० सकृदुदकेन क्षालेन' आचा० "पक्कसिं उच्छोलणा " नि० चू० २ उ० । मुखनयनकक्षाहस्तपादानां प्रक्षालने, व्य० द्वि० ७ उ० । अयतनया शीतोदकादिनां हस्तपादादिप्रक्षालने, "उच्छोणं च कक्कं च तं विज्जं परियाणिया" सूत्र १ श्रु० ९ अ० । ( उच्छोलनाऽप्यत्र )

उच्छोलणापहोय-उच्छोलनाप्रधौत-त्रि० उच्छोलनेन प्रभूतजलक्षालनक्रियया धौता धौतगात्रा ये ते तथा । प्रचुरजलेन धौतशरीरेषु, औ० ।

उच्छोलनापहोइ-उच्छोलनाप्रधाविन्–त्रि० उच्छोलनयोदकायतनया प्रकर्षेण धावति पादादिशुद्धिं करोति यः स तथा । अयतनया प्रभूतजलेन पादादिप्रक्षालके, दश० ४ अ० ।

उच्छोलावंत–उच्छोलयत्–त्रि० अन्येन सकृज्जलेन क्षालनं कारयितरि " उच्छोलावंतं वा पधोवावंतं वा साइज्जइ " नि० चू० १६ उ० ।

उज्जम–उद्यम–पुं० उद्-यम-घञ् । न वृद्धिः । प्रयासे, प्रयत्नभेदे, उद्योगे, उत्तोलने च । वाच० अनालस्ये, ग० १ अधि० ज्ञानतपो ऽनुष्ठानादिषूत्साहे, सूत्र० १ श्रु० ८ अ० । औ० ।

उज्जमंत–उद्यच्छत्–त्रि० उद्यमं कुर्वति, प्रति० । अत्यर्थमपि प्रयतमाने, अप्पच्चंतकायसुट्ठुवि उज्जमंता तद्दिवसुज्जुत्तकम्म कयदुक्खसंचियसित्थपिंडसंचयपरा" प्रश्न० ३ द्वा० । त्रिविधायामपि सामाचार्य्यां यथाशक्ति उद्यमं कुर्वति, व्य. प्र०१उ० ।

उज्जमन–उद्यमन–न० उद्यमकरणे, । व्य० प्र० १ उ० । उत्क्षेपणे, उत्तोलने, वाच० ॥

उज्जममाण–उद्यच्छत्–त्रि० उद्यमं कुर्वाति, "ण करोति दुक्खमोक्खं उज्जममाणावि संजमतवेसु " सुत्र० १ श्रु० १३ अ० ।

उज्जममाणस्स गुणा, जह हुंति समत्तिओ तवसु ।
एमेव जहासत्ती, संजममाणे कहं न गुणा १ ”
उद्यच्छत उद्यमं कुर्वतः तपःश्रुतयोरिति योगः गुणास्तपो ज्ञानाभ्यासनिर्जरादयो यथा भवन्ति स्वशक्तितः स्वशक्त्युद्यमवत एवमेव यथाशक्ति शक्त्यनुरूपमित्यर्थः ( संजममाणे कहं ण गुणत्ति ) संयममाने संयमं पृथिव्यादिसंरक्षणादिलक्षणं कुर्वति सति साधौ कथं न गुणाः गुणा एवेत्यर्थः। अथ वा कथं गुणा येनाविकलसंयमानुष्ठानरहितो विराधकः प्रतिपाद्यत इत्यत्रोच्यते ॥ आव० ३ अ० ।

उज्जय–उद्यत–त्रि० उद् यम् कर्तरि क्त. । उद्यमयुक्ते, कृतोद्यमे, भावे क्तः उद्यमेन यमेर्नियमनार्थत्वे कर्मणि क्तः। उत्तोलिते, वाच० । उद्यतविहारिणि, व्य० प्र० १ उ ॥

उज्जयंत–उज्जयन्त–पुं० रैवतकगिरौ, हेम० ।वाच०। यत्राऽरिष्टनेमिः सिद्धः । आ. म. प्र. । तद्वक्तव्यता यथा ॥

नामभिः श्रीरैवतको, जयन्ताद्यैः प्रथामि तम् ।
श्रीनेमिपावितं स्तौमि, गिरनारगिरीश्वरम् ॥ १ ॥
स्थाने देशः सुराष्ट्राख्यं, बिभर्ति भुवनेष्वसौ ।
यद्भूमिकामिनीभाले, गिरिरेष विशेषकः ॥ २ ॥
शृङ्गारयन्ति खङ्गाराः दुर्गं श्रीऋषभादयः ।
श्रीपार्श्वस्तेजलपुरं, भूषितैतदुपत्यकम् ॥ ३ ॥
योजनद्वयतुङ्गेऽस्य, शृङ्गे जिनगृहावलिः ।
पुण्यराशिरिवाभाति, शरच्चन्द्रांशुनिर्म्मला ॥ ४ ॥
सौवर्णदण्डकलशा–मलसारकशोभितम् ।
चारु चैत्यं चकास्त्यस्यो–परि श्रीनेमिनः प्रभोः ॥ ५ ॥
श्रीशिवासूनुदेवस्य, पादुकात्र निरीक्षिता ।
स्पृष्टाऽर्चिताऽवशिष्टानां, पापव्यूहं व्यपोहति ॥ ६ ॥
प्राज्यं राज्यं परित्यज्य, जरत्तृणमिव प्रभुः ।
बन्धून् विधूय च स्निग्धान्, प्रपेदेऽत्र महाव्रतम् ॥ ७ ॥
अत्रैव केवलं देवः, स एव प्रतिलब्धवान् ।
जगज्जनहितैषी स, पर्यणैषीच्च निर्वृतिम् ॥ ८ ॥
अत एवात्र कल्याण, त्रयमन्दिरमादधे ।
श्रीवस्तुपालो मन्त्रीश–श्चमत्कारितभव्यकृत् ॥ ९ ॥
जिनेन्द्रबिम्बपूर्णेन्दु–मण्डपस्था जना इह ।
श्रीनेमिर्मज्जनं कर्त्तु–मिन्द्रा इव चकासति ॥ १० ॥
गजेन्द्रपदनामास्य, कुण्डं मण्डयते शिरः ।
सुधाविधैर्जलैः पूर्णं, स्नानार्हं तत्स्वनक्रमैः ॥ ११ ॥
शत्रुंजयावतारे च, वस्तुपालेन कारिते ।
ऋषभः पुण्डरीकोष्टा–पदानन्दीश्वरास्तथा ॥ १२ ॥
सिंहयाना हेमवर्णाः, सिद्धबुद्धसितान्वयाः ।
कम्राम्रलुम्बभृत्पानि, रत्नं वा संघविघ्नहृत् ॥ १३ ॥
श्रीनेमिपत्पद्मसूत–मवलोकननामकम् ।
विलोकयन्तः शिखरं, यान्ति भव्याः कृतार्थताम् ॥ १४ ॥
शाम्बोजाम्बवतीजात–स्तुङ्गे शृङ्गेऽस्य कृष्णजः ।
प्रद्युम्नश्च महाद्युम्न–स्तेपाते दुस्तपं तपः ॥ १५ ॥
नानाविधौषधिगणा, जाज्वल्यन्त्यत्र रात्रिषु ।
किंच घण्टाक्षरच्छत्र–शिलाशालन्त उच्चकैः ॥ १६ ॥
सहस्राम्रवणं लक्षा–रामोन्येऽपि वनव्रजाः ।
मयूरकोकिलाभृङ्गी–संगीतभुजगा इह ॥ १७ ॥
न स वृक्षो न सा वल्ली, न तत्पुष्पं न तत्फलम् ।
नश्यतेऽत्राभियुक्तैर्य–दित्यैतिह्यविदो विदुः । १८ ।
राजीमती गृहागर्भे, कैर्न नामात्र वन्द्यते
रथनेमिर्ययोन्मार्गा–त्सन्मार्गमवतारितः ।१९ ।
पूजास्तवनदानादि, तपश्चात्र कृतानि वै
संपद्यन्ते मोक्षसौख्य–हेतवो भव्यजन्मनाम् । २० ।
दिग्भ्रमावापि यात्राद्रौ, काप्यमार्गेऽपि संचरेत्
सोऽपि पश्यति चैत्यस्था, जिनार्चास्तेपितार्चिता : । २१ ।
काश्मीरगतरत्नेन, कूष्माण्डसदृशेन च ।
लेप्यबिम्बास्पदे न्यस्ता, श्रीनेमेर्मूर्तिराश्मनी । २२ ।
नदीनिर्झरकुण्डानां, खनीनां वीरुधामपि ।
विदांकरोच्चात्र संख्यां, संख्यावानपि कः खलु । २३ ।
आसेवनकरूपाय, महातीर्थाय तायिने ।
चैत्यालंकृतशीर्षाय, नमः श्रीरैवताद्रये । २४ ।
स्तुतो मयेति सूरीन्द्र, वर्णितो वृजिनप्रभ! ।
गिरिनारस्तु रैहेम–सिद्धभूमिर्मुदेस्तु वः ॥ २५ ॥

——:*:——

अत्थि सुरट्ठविसयम्मि, उज्जितो नाम पव्वओ रम्मो ।
तस्सिहरे आरुहिओ, भत्तीए नमह नेमिजिणं ॥ १ ॥
अंबाइअंबदेविं, एहवणच्चणगंधधूवदीवेहिं ।
पूश्यकयप्पणामा, ता जोअह जेण अत्थात्थि ॥ २ ॥
गिरिसिहरकुहरकंदर–निज्झरणकवाडबिअडकूवेहिं ।
जोएह खत्तवायं, जह भणियं पुव्वसूरीहिं । ३ ।
कंदप्पकप्पराग, कुगइविद्दवणनेमिनाहस्स ।
निव्वाणसिलानामेण, अत्थि भुवणम्मि विक्खाया । ४ ।
तस्स य उत्तरपासे, दसधणुहेहिं अहो मुहविवरं ।
दारम्मि तस्स लिंगं, अवयाणे धणुह चत्तारि । ५ ।
तस्स पसुमुत्तगंधो, अत्थि रसो पलसएण सय तंब ।
विंधेवि कुणइ तारं, ससिकुंदसमुज्जलं सहसा । ६ ।
पुव्वादिसाए धणुहं–तरेसु तस्सेव अत्थि आगवई ।
पाहणमाया दाहिण, दिसागए वारस धणूहिं । ७ ।
दिस्सइ अ तस्स पयडो, हिंगुलवण्णो अदिक्खरसो ।
विंधेइ सव्वलोहे, फरिसेणं अग्गिसंगेणं । ८ ।
उज्झिते अत्थि नई, विहलानामेण पव्वई पडिमं ।
दावेइ अंगुलीए, फरिसरसो पव्वई दारं । ९ ।
सक्कावयार उज्झित, गिरिवरे तस्स उत्तरे पासे ।
सोवाणं पंतिआए, पारेवय वण्णिआ पुढवी । १० ।
पंचगवण्णे बद्धा, पिंडी धमिया करेइ वरतार ।
फेडइ दारिद्दवाहि, उत्तराइदुक्खकंतारं । ११ ।
सिहरे विसालसिंगे, विसंत पाय कुट्टिमा जत्थ ।
तस्सासन्ने सिहरे, कव्वडहरूपाम होतारं । १२ ।
उज्जतरे चयवाण, तत्थ य सुहारवानरो अत्थि ।
सोवामकसाभिन्नो, उग्घाडइ विवरवरदारं । १३ ।
हत्थसएण पविट्ठो, दिक्खइ सावण्णवण्णिआ सक्खो ।
नीलराणसवता, सहस्सवे हीर सो नूणं । १४ ।
तम्गाहिऊण निउत्तो, हणुवंतं भिवइ वामपाएण ।
सो ढक्कइ वारदारं, जेण न जाणइ जणो को वि ॥ १५ ॥
उज्झितसिहर उवरिं, कोहि डहरं खु नाम विक्खायं ।
अवरेण तस्स य सिला, तदुभयपासे मुओ संतु ॥ १६ ॥
तं अयासि तिल्लमीसं, थंभइ पडिवायबंगिमं वंगं ।
दोगच्च वाहिहरणं, परितुट्ठा अंबिआ जस्स ॥ १७ ॥
धगवई नामवई, मणसिजवण्णाइ तत्थ पाहाणा ।
ते पिंडधम असंते, समसुद्धा होइ वरतारं ॥ १८ ॥
उज्जंते नाणसिला, तस्स अहोकण य वण्णिआ पुढवी ।
टंकडयमुत्तपिंडी, सहरंगारे भवे हेमं ॥ १९ ॥

नाणसिला कयपुढवी, पिंडियब्बा य पच्चगव्वेण ।
दढपाए वसइ रसो, सहस्सवेही हवइ हेमं ॥ २० ॥
गिरिवरमासन्नम्मिअं, अप्पायं तित्तविसारणं नाम ।
सिलवडगाढपीढे, वेला का तत्थ धम्माणं ॥ २१ ॥
सप्पा नामेण नई, सुवण्णतित्थम्मि लढ्ढु अपहाणा ।
पडिवाएण य सुच्चं, करेंति हेमं न संदेहो ॥ २२ ॥
चिल्लक्खयम्मि नयरे, मउअहरं अत्थि सेलगं दिव्वं ।
तस्स य मज्झिम्मि ठिओ, गणवइरसकुंडु उवरित्त ॥ २३ ॥
उववासी कयपूओ, गणवइओ वल्लिऊण एवरक्खा ।
मा खेवी अत्थि अत्थं, भइवं गंतव्व संदेहो ॥ २४ ॥
सहसा सवंति तित्थं-करं च रुक्खेण मणहरं सम्मं ।
तत्थ य तु रयावारा, पाहाणा तेसि दो भाया ॥ २५ ॥
इक्को पारयभाओ, पिट्ठो सुत्तेण अंधमूसाए ।
धमिओ करेइ तारं, उत्तारइ दुक्खकंतारं ॥ २६ ॥
अवलोअणसिहरसिला, अवरेणं तत्थ वररसो सवईसु ।
अपरो केसरिवण्णो, करेइ सुच्चं वरं हेमं ॥ २७ ॥
गिरिपज्जुन्नवयारे, अंबिअ आरत्तमए पंच ।
नामेण तत्थ वियआ, पुढवी हिमघाय होइ घरहेमं ॥ २८ ॥
नाणसिला उज्जंते, तस्स य मूलम्मि मट्टिआ पीआ ।
साहामि अलोवेणं, गयामुक्कं कुणइ हेमं ॥ २९ ॥
उज्जंतपढमसिहरे, आरुहिओ दाहिणेण अवयरिओ ।
तिन्नि धणूसयमित्ते, पूइकरजंबिलं नाम ॥ ३० ॥
उग्घाडिअं बिलं दि-क्खिऊण निउणेण तत्थ गंतव्वं ।
दंडंतराणि वारस, दिव्वुरसो जंबुफलसरिसो ॥ ३१ ॥
जत्त घोलिअम्मि भंडे, सहस्सभाएण विंधए तारं ।
हेमं करइ अवस्सं, हवंतं सुंदरं सहसा ॥ ३२ ॥
को हंडिभवण पुव्वेण, उत्तरे जाव ताव सा भूमी ।
दीसइ अ तत्थ पडिमा, सेलमया वासुदेवस्स ॥ ३३ ॥
तस्सुत्तरेण दीसइ, हत्थेसु मदससुपव्वई पडिमा ।
अवराह मुहर अंगुट्ठि, आइ सा दावए विवरं ॥ ३४ ॥
नवधणुहाइपविठो, दिक्खइ तुडाइं दाहिणुत्तरओ ।
हरियालवण्णवण्णो, सहस्सवेहीरसो नूणं ॥ ३५ ॥
उज्जिंते नाणसिलो, विक्खाया तत्थ अत्थि पाहाणं ।
ताणं उत्तरपासे, दाहिण य अहोमुहो विवरो ॥ ३६ ॥
तस्स य दाहिणभाए, दसधणुभूमी इहिंगुलुयवण्णो ।
अत्थि रसो सयवेही, विंधइ सुच्चं न संदेहो ॥ ३७ ॥
उसहरिसहाइकूडे, पाहाणा गणसंगमो अत्थि ।
गयवरालिडा किण्णा, मज्झिमफरिसेण ते वेही ॥ ३८ ॥
जिनभवणदाहिणेणं, नडई धणुहाहिं भूमिजलु अयरी ।
तिरिमणुअरत्तविद्धा, पडिवाए वंधए हेमं ॥ ३९ ॥
वेगवई नामनई, मणसिलवण्णा य तत्थ पाहाणा ।
सव्वस्स पंचवेहं, सवंति धमिआतयं सिग्घं ॥ ४० ॥
इयउज्जयंतकप्पं, अविअप्पं जो करेइ जिणभत्तो ।
कोहंडिकयपणामो, सो पावइ इच्छियं सुक्खि ॥४१॥ ती० ।

उज्जयग-उद्यतक-न० प्रामित्याऽपरनामके उद्गमदोषके. ॥ आचा० १ श्रु० २ अ० ५ उ० ।

उज्जयमइ-उद्यतमति-त्रि० ६ व० । प्रवृत्तचित्ते, "संजममिउ उज्जयमइस्स" दश० ५ अ० ।

उज्जयमरण-उद्यतमरण-न० इङ्गिनीमरणादिके पण्डितमरणे, आचा०१श्रु०८ अ०७ उ० । (वर्णनमिंगिनीमरणशब्दे उक्तम्)

उज्जल-उज्ज्वल-त्रि० उद् ज्वल अच् । दीप्ते, विशदे, वाच० । निर्मले, औ० । रा० । जी० । प्रशस्ते, तं० । भास्वरे, रा० । स० । शुद्धे, रा० । विपक्षलेशेनाप्यकलङ्किते, प्रश्न० १ द्वा० । भ० । स्था० । ज्ञा० । "उज्जलचलंतकिससुकुमालपवालसीहिपवरकुरग्गासिहए" औ० । "तेणं तत्थ उज्जलं विउलं विउलंपगाढं वेयणं पच्चणुभवमाणा विहरंति" तामुज्ज्वलां तीव्रानुभावेनोत्कटामित्यादि । सूत्र २ श्रु० २ अ० । उज्ज्वलां दुःखरूपतया जाज्वल्यमानां सुखलेशेनाप्यकलङ्कितामिति भावः । जी० ३ प्रति० । शृङ्गारे रसे, पुं० स्वर्णे, न० वाच० ।

उज्जलंत-उज्ज्वलत्-त्रि० भासमाने, तं० ।

उज्जलणेवत्थ-उज्ज्वलनेपथ्य-न० निर्मलवेषे, भ०७श०८उ० ।

उज्जलणेवत्थहव्वपरिवच्छिय-उज्ज्वलनेपथ्यशीघ्र (हव्य) परिक्षिप्त-त्रि० उज्ज्वलनेपथ्येन निर्मलवेषेण (हव्वंति) शीघ्रं परिक्षिप्तः परिगृहीतः परिवृतो यः स तथा । कृतसत्वरसुवेषे, भ० ७ श० ८ उ० ।

उज्जलिय-उज्ज्वलित-त्रि० उद्गता ज्वाला यस्य स तथा ऊर्ध्वगतज्वालायुक्तेऽग्नौ, जी० ३ प्रति० । उद् ज्वल क्त. उद्दीप्ते, औ० । उद्दीपने, ज्ञा० १ अ० ।

उज्जल्ल-उज्जल्ल-त्रि० उद्गतो जल्लः शुष्कप्रस्वेदो यस्य सः । उत्कटशुष्कप्रस्वेदवति, "मुंडा कंडूविणट्ठंगा उज्जल्ला असमाहिता" सूत्र १ श्रु० ३ अ० ।

उज्जवण-उद्यापन-न० उद्. या. णिच्. पुक्. ल्युट् । व्रतसमाप्तिकृत्ये, तस्य कर्त्तव्यता । तथा नमस्कारावश्यकसूत्रोपदेशमालादिज्ञानदर्शनविविधतपःसंबन्धिषूद्यापने जघन्यतोऽप्येकैकं तत्प्रतिवर्षं विधिवत्कार्यं नमस्कारस्योपधानोद्वहनादिविधिपूर्वकमालारोपणेनावश्यकादिसूत्राणामेवं गाथासंख्यचतुश्चत्वारिंशदधिकपञ्चशत्यादिमोदकनालिकेरादिढौकना - दिना उपदेशमालादीनां सौवर्ण्यादिगर्भदर्शनमोदकलम्भनादिना दर्शनादिना शुक्लपञ्चम्यादिविविधतपसामपि तत्तदुपवासादिसंख्यनाणकवर्त्तुलिकानालिकेरमोदकादिनानाविधवस्तुढौकनादिनोद्यापनानि कार्याणि ॥९॥ ध० २ अधि० ।

उज्जाण-उद्यान-न० वस्त्राभरणादिसमलंकृतविग्रहाः सन्निहितासनाद्याहारा मदनोत्सवादिषु क्रीडार्थं लोका उद्यन्ति यत्र तच्चम्पकादितरुखण्डमण्डितमुद्यानम् । अनु० । ऊर्ध्वं यानमस्मिन्नित्युद्यानम् । आव० ४ अ० । ऊर्ध्वं विलम्बितानि प्रयोजनाभावाद्यानानि यत्र तदुद्यानम् । नगरात्प्रत्यासन्नवर्त्तिनि यानवाहनक्रीडागृहाद्याश्रये, रा० । पुष्पफलोपेतवृक्षशोभिते बहुजनभोग्ये उद्यानिकास्थाने, कल्प० । भ० । पुष्पादिमद्वृक्षसंकुले उत्सवादौ, बहुजनभोग्ये कानने, प्रश्न० ५ द्वा० रा० । जी० । द० । दशा० । भ० । अनु० । ज्ञा० । स्था० । जं० । "उज्जाणाइ वा वणाइ वा वणसंडाइ वा वावीइ वा पुक्खरणीइ वा" उद्यानानि पत्रपुष्पफलच्छायोपशोभितानि बहुजनस्य विविधवेषस्योन्नतमानसस्य भोजनार्थं यानं येष्विति । स्था. २ ठा० । स० । सामान्यवृक्षवृन्दयुक्ते नगरासन्ने, ज्ञा० १ अ० जनक्रीडास्थाने, दश० ५ अ० । "उज्जाणं जत्थ लोगो उज्जाणियाए वच्चति जं वा इसिं णगरस्स उवकंठं ठियंतं उज्जाणं नि० चू०८उ० । प्रतिलोमगामिनि, त्रि. । नि० चू० १ उ० । ऊर्ध्वं यानमस्मिन्नित्युद्यानम् । ऊर्ध्वं यानमुद्यानम् । मार्गस्योन्नते भागे, उदके, तत्थ मंदा विसीयंति, उज्जाणंसिव दुब्बला" सूत्र० १ श्रु० ३ अ० । आव० ।

उज्जाणजत्ता-उद्यानयात्रा-स्त्री० उद्यानगमने, ज्ञा० १ अ० ।

उज्जाणसंठिय-उद्यानसंस्थित-त्रि० उद्यानाकृतौ, ता उज्जाणसंसंठिताणं ताव क्खेत्ते " चन्द्र० २ पाहु० ।

उज्जाणसिर-उद्यानशिरस्-न० उट्टंकमस्तके, " तत्थ मंदा विसीयंति उज्जाणंसि जरग्गवा" सूत्र० १ श्रु० २ अ० ।

उज्जाणियसेण-औद्यानिकलयन-न० उद्यानगतजनानामुपकारकगृहे, नगरप्रवेशगृहे च । भ० १४ श० १ उ० ।

उज्जाणिया-उद्यानिका-स्त्री० वस्त्राभरणादिसमलंकृतविग्रहाणां सन्निहितासनाद्याहारमदनोत्सवादिषु क्रीडार्थमुद्याने गमने, अनु० "उज्जाणे उज्जाणियाए गया" आ० म० द्वि० ।

उज्जावल-ऊर्जाबल-न० प्रभूततरभाषणे ऽपि प्रवर्धमानबले, १ व्य० ।

उज्जालण-उज्ज्वालन-न० उद् ज्वल् ल्युट् । 'अर्द्धविध्मातस्याग्नेः सकृदिन्धनप्रक्षेपेण ज्वालने, दश० ४ अ० ।

उज्जालिय-उज्ज्वाल्य-अव्य० अर्थे विध्मातं सकृदिन्धनप्रक्षेपेण ज्वालयित्वेत्यर्थे, दश० ५ अ० ।

उज्जालेत्ता-उज्ज्वाल्य-अव्य० उज्ज्वालनं कृत्वेत्यर्थे, " उज्जालेत्ता पज्जालेत्ता कायं आयावेज्जा" आचा० १ श्रु० ७ अ० ३ उ० ।

उज्जित-उज्जयन्त-पुं० गिरिनारनामके पर्वतविशेषे, पंचा० २० विव० । "उज्जिंतए चेव पव्वंदिया उ सुरट्टं" आव० ४ अ० यत्र " उज्जिंतसेलसिहरे पंचहिं छत्तीसाहिं अणगारसएहिं सद्धिं अरिष्टनेमिः सिद्धः " कल्प० । आ० म० प्र० । ( तद्वर्णनं उज्जयंत शब्दे उक्तम् )

उज्जिभ-उज्जृम्भ-पुं० उद्-जृभि-घञ् । विकाशे, स्फुटने, उद्गता जृम्भा यस्मात् प्रा० ब० मुखविकाशभेदे, कर्तरि अच् । प्रकाशान्विते उज्जृम्भावति, वाच० ।

उज्जु-ऋजु-त्रि० अर्जयति गुणान् अर्ज्ज कु नि० ऋजादेशः । "उदत्वादौ" ८ । १ । ६ । अनेनादेर्ऋत उत्वम् प्रा० । प्रगुणे, सूत्र० २ श्रु० । अवक्रे, औ० । सूत्र० । स्था० । " तं मग्गं उज्जुपाविस्सा ओहं तरति दुत्तरं " ऋजु प्रगुणं यथाऽवस्थितपदार्थस्वरूपनिरूपणद्वारेणावक्रम् सूत्र० १ श्रु० ११ अ० । रागद्वेषवक्रत्ववर्जिते, स्था० ४ ठा० । अविपरीतस्वभावे, स्था० २ ठा० । कौटिल्यरहिते, आचा० १ श्रु० १ अ० । प्रज्ञा० । सरले, जं० २ वक्ष० । औ० । अव्युत्पन्नबुद्धौ, पंचा० । संयमे, सूत्र० २ श्रु० १ अ० । मायारहिते संयमवति, दश० ५ अ० । अमायाविनि, नि० चू० १ उ० । " धम्मविउत्ति उज्जु आवट्टे " ऋजोर्ज्ञानदर्शनचारित्राख्यस्य मोक्षमार्गस्यानुष्ठानादकुटिलः यथावस्थितपदार्थस्वरूपपरिच्छेदाद्वा ऋजुः सर्वोपाधिशुद्धोऽवक्र इति आचा० १ श्रु० २ अ० । " उवेहमाणो सद्दरूवेसु उज्जुमाराभिसंकी " शब्दरूपादिषु यौ रागद्वेषौ तावुपेक्षमाणः अकुर्वन् ऋजुर्भवति यतिर्भवति यतिरेव परमार्थत ऋजुः परस्त्वन्ययातृतरूपादिपदार्थान्यथाग्रहणाद्वक्रः । आचा० १ श्रु० २ अ० "पियधम्मो दढधम्मो संविग्गो जिइंदिओ उज्जू" आ० म० द्वि० । मार्गभेदे, ऋजुगादावन्तेऽपि ऋजुः प्रतिभाति तत्त्वतोऽपि ऋजुरेवेति तत्कल्पे पुरुषभेदे यः पूर्वापरकालापेक्षया अन्तस्तत्त्ववृत्त्याहिस्तत्त्वापेक्षया वेति । स्था० ३ ठा० वसुदेवपुत्रभेदे, पुं० वाच० ।

उज्जोत-पुं० उद्योतयतीत्युद्योतः पचादित्वादच् । आर्षत्वादुज्जाति

प्रकाशे , " भज्जाए सीउएहं तसुउज्जुच्छायातवे चेव । उत्त० १ अ० ।

उज्जुआयया-ऋज्वायता-स्त्री० ऋज्वी सरला सा चासावायता च दीर्घा ऋज्वायता । श्रेणि ( प्रदेशपंक्ति ) भेदे, स्था० ७ ठा० । यया जीवादय ऊर्ध्वलोकादेरधोलोकादौ ऋजुतया यान्तीति । भ० २५ श० ३ उ० ।

उज्जुकड-ऋजुकृत-त्रि० ऋजु मायाविरहितं कृतमनुष्ठितमस्य-निर्मायितपोधर्मयुक्ते, " अकिंचणा उज्जुकडा निरामिसा परिग्गहारंभनियत्तदोसा " उत्त० १४ अ० ।

ऋजुकृत्-त्रि० ऋजुरकुटिलसंयमदुष्प्रणिहितमनोवाक्कायनिरोधः सर्वसत्त्वसंरक्षणप्रवृत्तत्वाद्यैकरूपः सर्वत्राकुटिलगतिरिति । यावत् । यदि वा मोक्षस्थानगमनर्जुश्रेणिप्रतिपत्तिः सर्वसञ्चारसंयमात्कारणे कार्योपचारं कृत्वा संयम एव सप्तदशप्रकार ऋजुस्तकरोतीति ऋजुकृत् ऋजुकारिणि, अशेषसंयमानुष्ठायिनि संपूर्णानगारे,"जहा अणगारे उज्जुकडे णियायपडिवन्ने " आचा० १ श्रु० १ अ० उ० ।

उज्जुग ( य ) ऋजुक-न० दृष्टिवादस्य अष्टाशीतिसूत्रेषु प्रथमसूत्रे, सम० ।

ऋजुग-त्रि० ऋजु यथा तथा गच्छति गम् ड० । सरलव्यवहारिणि, वाणे, पुं० वाच० । मायारहिते, त्रि० । सरले, उपा० १ अ० । सूत्र० । ज्ञा० । आचा० । अवक्रे, तं० । "उज्जुयभूयस्स धम्मो सुद्धस्स चिट्ठइ " आचा० १ श्रु० १ अ० " से हु समणे सुयधारए उज्जुए संजए" प्रश्न० ५ द्वा० । संस्फुटे, तिविहे तं गच्छम्मि उज्जुयवाउलणसाहणा चेव० ' ऋजुसंस्फुटमेव व्यावृतसाधना व्यावृतक्रिया कथनं कर्तव्यम् १ व्य० प्र० १ उ० । जी० " उज्जुयसमसंहियजच्चतणुकसिणनिद्धआए अलडहरोमराई " ऋजुका न वक्रा समाना न क्वाप्युद्दन्तुरा संहिता संतता नत्वपान्तराले व्यवच्छिन्ना सुजाता सुजन्मा न तु कालादिवैगुण्यतो दुर्जन्मा अत एव जात्या प्रधाना तन्वी न तु स्थूरा कृष्णा न तु मर्कटवर्णा कृष्णमपि किंचित् निर्दीप्तिकं भवति तत आह स्निग्धा आदेया दर्शनपथमुपगता सती उपादेया सुभगा इति भावः । एतदेव विशेषणद्वारेण समर्थयते । लटहा सलवणिमा अत आदेया तथा सुकुमारा अकठिना । तत्राकठिनमपि किञ्चित् कर्कशस्पर्शं भवति तत आह मृद्वी अत एव रमणीया रम्या रोमराजिस्तनूरुहपङ्क्तिर्येषां ते ऋजुकसमसंहितजात्यतनुकृष्णा सुगन्धादेयलटहसुकुमारमृदुरमणीयरोमराजयः ॥ जी० ३ प्रति ।

उज्जुग- ( य ) भूय-ऋजुकभूत-त्रि० सरलीभूते, सो हि. उज्जुयभूयस्स धम्मो सुद्धस्स चिट्ठइ,, ॥ उत्त. विलरूपे लयनसूक्ष्मभेदे, ॥ कल्प ॥

उज्जुग [ य ]या-ऋजुकता-स्त्री० ऋजुकभावे, कर्मणि-वा-तल. । अमायिनो भावे कर्मणि च । स्था० ३ ठा० ।

उज्जुगा [ या ] ऋज्वी-स्त्री. ऋजु स्त्रियां वा ङीप् । आर्जववत्यां स्त्रियाम्, वाच० ॥ माया भागिणी धूया मेहावी उज्जुयाय आणती य, ऋजुकामकुटिलामाज्ञप्ताम् । व्य. द्वि० ७ उ० ।

अष्टसु गोचरभूमिषु प्रथमगोचरभूमौ, उज्जुगमाइओ चेव बहिरंतो उज्जुगं जातितो राउ स णिहइ, ॥ पं० व० । ऋज्वी स्ववसतेर्ऋजुमार्गेण समश्रेणिव्यवस्थितगृहपङ्क्तौ भिक्षाग्रहणेन पङ्क्तिसमापने ततो द्वितीयपङ्क्तौ पर्यासेऽपि भिक्षाग्रहणेन ऋ-

जुगत्यैव निवर्तने च भवन्ति । ध० २ अधि० ॥ यस्यामेकां दिशमभिगृहय्योपाश्रयान्निर्गतः प्राञ्जलिनैव यथासमश्रेण्यव-वस्थितः गृहपङ्क्तौ भिक्षां परिभ्रमन् तावद्याति यावत्पङ्क्तौ चरमगृहं ततो भिक्षामगृह्णन्नेव अपर्याप्तेऽपि प्राञ्जलिर्यवगत्या प्रतिनिवर्तते सा ऋज्वी । ग० १ अधि० ;

उज्जुजड्ड-ऋजुजड-पुं० ऋजवोऽशठास्ते च ते जडाश्च विशिष्टोहावैकल्येनोक्तमात्रग्राहिण ऋजुजडाः। पंचा० १६ अ० । शिक्षाग्रहणतत्परतया ऋजुषुदुष्प्रतिपाद्यतया मूर्खेषु प्रथमतीर्थकृत्साधुषु " पुरिमा उज्जुजडाओ वक्क जड्डा य पच्छिमा " उत्त० २६ अ० । ( एषां स्वरूपं नटदृष्टान्तेन कप्प शब्दे दर्शयिष्यते )

उज्जुत्त-उद्युक्त–त्रि० उद् युज् क्त । उद्यमवति, संस्था० । उद्यते, आव० ३ अ० । सावधाने, " तम्हा चंदगविज्जं सकारणं उज्जुएण पुरिसेण " आतु० । उद्यमपरे, विशे० । अप्रमादिनि, नं० । ग० । सूत्रार्थतदुभयग्रहणे अपरितान्ते, पं० चू०। उपयुक्ते, व्य० प्र०१ उ० ।

उज्जुदंसि ( ण् ) ऋजुदर्शिन्-पुं० ऋजुर्मोक्षं प्रति ऋजुत्वात् संयमस्तं पश्यन्त्युपादेयतयेति ऋजुदर्शिनः । संयतप्रतिबुद्धे- " णिग्गंथा उज्जुदंसिणो " दश० ३ अ० ;

उज्जुधम्मकरणहसण-ऋजुधर्मकरणहसन-न० ऋजूनामव्युत्पन्नबुद्धीनां धर्मकरणे स्वबुद्ध्यनुसारेण कुशलानुष्ठानासेवने हसनमुपहासः ऋजुधर्मकरणहसनम् । अव्युत्पन्नमतीनां धर्मानुष्ठाने प्रवृत्तानाम् धूर्त्तविडम्बिनः खल्वेत इत्यादिरूपे उपहासे. । एतल्लोकविरुद्धत्वात्त्याज्यम् । बहवो ह्यव्युत्पन्ना एव लोकास्ते च तद्धर्माचारहसने सति विरुद्धा एव भवन्ति । पंचा० २विव०।

उज्जुपन्न-ऋजुप्राज्ञ- पुं०—ऋजवश्च प्राज्ञाश्च ऋजुप्राज्ञाः शिक्षाग्रहणतत्परेषु, प्रकृष्टबुद्धिषु च । मध्यमतीर्थकृत्साधुषु, " मज्झिमा उज्जुपन्नाओ, तेण धम्मे दुहा कए " उत्त० २६ अ० ( नटप्रेक्षादर्शने तेषां स्वरूपविवेकः कप्प शब्दे ) अकुटिलमतौ, ति० । " उज्जुपन्ने मणुव्विग्गे, अवक्खित्तेण चेयसा, दश० ५ अ०।

उज्जुभाव-ऋजुभाव- पुं० सरलत्वे, " ते उज्जुभावं पडिवज्जसंजए, णिव्वाणमग्गं विरए उवेइ " ॥ उत्त० २१ अ० ॥

उज्जुभावासेवण-ऋजुभावासेवन- न० ६ त० । कौटिल्यत्यागरूपस्य ऋजुभावस्यानुष्ठाने, तच्च ऋजुभावासेवनमिति । ऋजुभावस्य कौटिल्यत्यागरूपस्यासेवनमनुष्ठानं देशकेनैव कार्य्यमेवं हि तस्मिन् । अविप्रतारणकारिणि, संभाविते, । स हि शिष्यस्तदुपदेशान्न कुतोऽपि दूरवर्तिः स्यादिति । ध० १ अधि०;

उज्जु ( रिउ ) मइ-ऋजुमति- स्त्री० " रिजुसामन्नं तम्मत-गाहिणी रिज्जुमइ मणोनाणं । पायं विसेसविमुहं घडमित्तं चिंतियं मुणइ " पा० । आ० चू० । मननं मतिः संवेदनमित्यर्थः ऋज्वी सामान्यग्राहिणी मतिर्ऋजुमतिः । भ० । आ० म० प्र० । सामान्यग्राहिण्यां मतौ, नं० । सा च घटोऽनेन चिन्तित इत्यध्यवसायनिबन्धना मनोद्रव्यपरिच्छित्तिरिति । भ०। कर्म० । अर्द्धतृतीयाङ्गुलन्यूनमनुष्यक्षेत्रवर्तिसंज्ञिपञ्चेन्द्रियमनोद्रव्यप्रत्यक्षीकरणहेतुमनः पर्य्यायज्ञानभेदे, । ग० १ अधि० । सामान्यघटादिवस्तुमात्रचिन्तनप्रवृत्तं मनः परिणामग्राहि किञ्चिदविशुद्धतरमर्द्धतृतीयाङ्गुलहीनमनुष्यक्षेत्रविषयं ज्ञानमृजुमतिः लब्धिभेदः । प्रव० ॥

ऋजुमति–त्रि० ऋज्वी मतिर्यस्यासावृजुमतिः ऋजुमतिलब्धिप्राप्ते भ० । उज्जुमती नाम मणोगतं भावं पडुच्च सामन्नतेम-ग्गाहिणी मती जस्स सो उज्जुमती भन्नति। आ० चू०१ अ०। ऋजुमतयस्तु सर्वतः सार्द्धद्व्यङ्गुलाधिके मनुष्यक्षेत्रे स्थितानां सञ्ज्ञिपञ्चेन्द्रियाणां मनोगतं जानन्ति । कल्प० । प्रव० । (अस्य ज्ञेयविषयमानं मणपज्जव शब्दे ) मार्गप्रवृत्तबुद्धौ च । "तवोगुणपहाणस्स उज्जुमइखंति संजमारस्स" दश० ४ अ०।

उज्जुमउयपीवरपुट्ठसंहयंगुलि-ऋजुमृदुकपीवरपुष्टसंहताङ्गुलि त्रि. ऋजवोऽवक्रा मृदवोऽकठिनाः पीवराः अकृशाः पुष्टा मांसलाः संहताः सुश्लिष्टाः अङ्गुलयो यस्य स तथा । स्वलक्षणयुक्ताङ्गुलिके, जी० ३ प्रति० ।

उज्जुया-ऋजुता –स्त्री० निकृतिपरेऽपि मायापरित्यागे; द्वा० ।

उज्जुयार-ऋजुचार–त्रि० अकौटिल्येन प्रवर्तमाने यथोपदेशं यः प्रवर्तते न तु पुनर्वक्रतयाऽऽचार्यादिवचनं विलोमयाति प्रतिकूलयति "जयक्खिए चेव सुउज्जुयारे " सूत्र० १ श्रु० ५ अ० ।

उज्जुवालिया-ऋजुपालिका–स्त्री० स्वनामख्याते नदीविशेषे, सा जृम्भिकग्रामनगरस्य बहिर्वहति यस्यास्तीरे भगवतो वीरस्य केवलज्ञानमुत्पन्नम् । कल्प० ॥

उज्जुववहार-ऋजुव्यवहार- पुं० ऋजु प्रगुणं व्यवहरणमृजुव्यवहारः । एकविंशतिभावश्रावकगुणानां चतुर्थे गुणे, ॥ अधुना ऋजुव्यवहारीति चतुर्थभावश्रावकलक्षणं यथा ।

उज्जुववहारो चउहा, जहत्थभणणं अवंचगाकिरिआ ।
हुंतावायपगासण, मित्तीभावो असब्भावो ॥

ऋजु प्रगुणं व्यवहरणं ऋजुव्यवहारः । स चतुर्द्धा यथार्थभणनमविसंवादिवचनम् १ अवञ्चका पराव्यसनहेतुक्रियामनोवाक्कायव्यापाररूपा २ ( हुंतावायपगासणत्ति ) हुंतत्ति प्राकृतशैल्या भाविनोऽशुद्धव्यवहारकृतो येऽपायास्तेषां प्रकाशनं प्रकटनं करोति भद्र! मा कृथाः पापानि चौर्यादीनि इह परत्र चानर्थकारिणीत्याश्रितं शिक्षयति ३ मैत्रीभावः सद्भावो निष्कपटतायाः ४ । ध० २ अधि० । इत्युक्त ऋजुव्यवहारे यथार्थभणनस्वरूप : प्रथमो भेदः । संप्रति द्वितीयं भेदमाह । ( अवंचिगाकिरियत्ति ) अवञ्चिका पराव्यसनहेतुः क्रिया मनोवाक्कायव्यापाररूपा तत्र द्वितीयमृजुव्यवहारलक्षणम्' उक्तंच तप्पडिरूवगविहिणा, उवायपवाई हिऊण मब्भहियं । दितो लिंतो वि परं, नववए सुद्धधम्मत्थी ॥ १ ॥ " वंचगकिरियाइ इहं पि केवलं पावमेव पिच्छंतो । तत्तो हरिनन्दी इव, नियत्तए सव्वहासु मई २ " इति क : पुनरयं हरिनन्दी तत्कथोच्यते ।

उज्जेणिपुरवरीए, वहिया वणवीहिया इ ववहरइ ।
हरिनंदि वणी दारिद्द-रुद्दहंदोलि दुमविहगो ॥ १ ॥
आसन्नसंनिवेसा उ, अन्नया आगया वणे तस्स ।
आहीरी ववहरिउं, एगा घयमाइ घित्तूण ॥ २ ॥
विक्किणिउं किणिउं वा, लोणतिल्लाइसापयं पेइ ।
सिद्धिविसिट्ठ रूवग, दुग्गस्स कप्पासमप्पेसु ॥ ३ ॥
सो य समग्घो समए, तम्मि य तो तोलिउं दुवे वारे ।
इगरूवगस्स अप्पइ, सा मुद्धा बंधए गंठिं ॥ ४ ॥
तं तह दट्ठुं सिट्ठी, विचिंतए परपवंचणानिउणो ।
अज्ज मए अज्जिणिओ, अकिलेसं रूवगो एगो ॥ ५ ॥
इय चिंतिउं विसज्जइ, इमो अणुच्चुत्तमुज्झयं सव्वो ।
इत्तो भवणिनिमित्तं, पत्तो सगेहिणी तत्थ ॥ ६ ॥
सा चवणिं उवणेउं, भणिया घयखंडसामिय मईणि ।
पयाइं गिण्ह सिग्घं, करेसु तं घेउरे पउरे ॥ ७ ॥

नागतं धुवावीक्षणादिकमरिष्टं सांप्रतिकं प्रतिव्यवहितत्वेन व्यापारपराङ्मुखमिति कथं तत्तत्र कारणत्वमवलम्बेत निर्व्यापारस्यापि तत्कल्पने सर्वं सर्वस्य कारणं स्यात् । इदमेव भावयन्ति ॥ स्वव्यापारापेक्षिणो हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था कुलालस्येव कलशं प्रतीति अन्वयव्यतिरेकावसेयो हि सर्वत्र कार्यकारणभावस्तौ च कार्यस्य कारणव्यापारसव्यपेक्षावेव युज्येते कुम्भस्येव कुम्भकारव्यापारसव्यपेक्षाविति । ननु चातिक्रान्तानागतयोर्व्यवहितत्वेऽपि व्यापारः कथं न स्यादित्यारेकामधरयन्ति ॥ नच व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेरिति । तयोरतिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोः अतिप्रसक्तिमेव भावयन्ति । परंपराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वादिति परेषामपि रावणशंखचक्रवर्त्यादीनां तत्कल्पनस्य व्यापारकल्पनस्य । अथान्वयव्यतिरेकसमधिगम्यः कार्यकारणभावस्ततो व्यवधानाविशेषेऽपि यस्यैव कार्यमन्वयव्यतिरेकावनुकरोति तदेव तत्कारणमन्यथा व्यवधानाविशेषेऽपि किं न काष्ठकृशानुवत्तत्र स्थित एव शर्कराकणनिकरोऽपि धूमकारणं स्यात्ततो नातिप्रसङ्ग इति चेन्नन्वन्वयस्तद्भावे भावः स चात्र तावन्नास्त्येव जाग्रद्दशासंवेदनमरणयोरभाव एव सर्वदा तत्कार्योत्पादात् । अथ स्वकाले सतोरेव तयोस्तत्कार्योत्पत्तेरन्वयः कथं न स्यादिति चेत्तर्हि ईदृशोऽयं रावणादिभिरप्यस्यास्त्येव सत्यमस्त्येव व्यतिरेकस्तु रिक्त इति चेन्ननु कोऽयं व्यतिरेको नाम तद्भावेऽभाव इति चेत्तर्हि जाग्रद्दशासंवेदनादेः कथं स्यात्तदभाव एव सर्वदा प्रबोधादेर्भावात् स्वकाले त्वभावस्तस्य नास्त्येवेति कथं व्यतिरेकः सिद्धिमधिवसेदिति न व्यवहितयोः कार्यकारणभावः संभवति । सहचरहेतोरपि स्वभावकार्यकारणेषु नान्तर्भाव इति दर्शयन्ति । सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेन तदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेश इति । यदि हि सहसंचरणशीलयोर्वस्तुनोस्तादात्म्यं स्यात्तदा परस्परपरिहारेण स्वरूपान्तरोपलम्भो न भवेदथ तदुत्पत्तिस्तदा पौर्वापर्येणोत्पादप्रसङ्गात्सहोत्पादो न स्यात् नचैवं ततो नास्य प्रागेषु स्वभावकार्यकारणेष्वन्तर्भावः । इदानीं मन्दमतिव्युत्पत्तिनिमित्तं साधर्म्यवैधर्म्याभ्यां पञ्चावयवां व्याप्याविरुद्धोपलब्धिमुदाहरन्ति । ध्वनिः परिणतिमान् प्रयत्नानन्तरीयकत्वाद्यः प्रयत्नानन्तरीयकः स परिणतिमान्यथा स्तम्भः यो वा न परिणतिमान् स न प्रयत्नानन्तरीयको यथा वान्ध्येयः प्रयत्नानन्तरीयकश्च ध्वनिस्तस्मात्परिणतिमानिति व्याप्यस्य साध्येनाविरुद्धस्योपलब्धिः साधर्म्येण वैधर्म्येण चेति । अत्र ध्वनिः परिणतिमानिति साध्यधर्मविशिष्टधर्म्यभिधानरूपा प्रतिज्ञा प्रयत्नानन्तरीयकत्वादिति हेतुः यः प्रयत्नानन्तरीयक इत्यादि तु व्याप्तिप्रदर्शनपूर्वौ साधर्म्यवैधर्म्याभ्यां स्तम्भवान्ध्येयरूपौ दृष्टान्तौ । प्रयत्नानन्तरीयकश्च ध्वनिरित्युपनयस्तस्मात्परिणतिमानिति निगमनम् । यद्यपि व्याप्यत्वं कार्यादिहेतूनामप्यस्ति साध्येन व्याप्यत्वात्तथापि तन्नेह विवक्षितं किंतु साध्येन तदात्मीभूतस्य कार्यादिरूपस्य प्रयत्नानन्तरीयकत्वादेः स्वरूपमित्यदोषः ॥ अथ कार्याविरुद्धोपलब्ध्यादीनुदाहरन्ति अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुपलम्भादिति कार्यस्येति । साध्येनाविरुद्धस्योपलब्धिरिति पूर्वसूत्रादिहोत्तरत्र चानुवर्त्तनीयम् । भविष्यति वर्षं तथाविधवारिवाहविलोकनादिति कारणस्येति तथाविधेति सातिशयोन्नतत्वादिधर्मोपेतत्वं गृह्यते । उदेष्यति मुहूर्त्तान्ते तिष्यतारका पुनर्वसूदयदर्शनादिति पूर्वचरस्येति तिष्यतारकेति पुष्यनक्षत्रम् ॥ उद्गुर्मुहूर्त्तात्पूर्वं पूर्वफल्गुन्य उत्तरफाल्गुनीनामुद्गमोपलब्धेरित्युत्तरचरस्येति । अस्तीह सहकारफलरूपविशेषः समास्वाद्यमानरसविशेषादिति सहचरस्येति । इयं च साक्षात्षोढा विरुद्धोपलब्धिरुक्ता । परंपरया पुनः संभवन्तीयमत्रैवान्तर्भावनीया । तद्यथा कार्यकार्याविरुद्धोपलब्धिः कार्याविरुद्धोपलब्धौ अन्तर्भवतीति योगः अभूदत्र कोशः कलशोपलम्भादिति कोशस्य हि कार्यं कुशूलस्तस्य चाविरुद्धं कार्यं कुम्भ इति एवमन्याऽप्यत्रैवान्तर्भावनीया ॥ अधुना विरुद्धोपलब्धिभेदानाहुः ॥ विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्त प्रकारेति । प्रथमप्रकारं प्राक् प्रकाशयन्ति । तत्राद्या स्वभावविरुद्धोपलब्धिरिति । प्रतिषेध्यस्यार्थस्य यः स्वभावः स्वरूपं तेन सह यत्साक्षाद्विरुद्धं तस्योपलब्धिः स्वभावविरुद्धोपलब्धिः एतामुदाहरन्ति नास्त्येव सर्वथैकान्तोऽनेकान्तस्योपलम्भादिति । स्पष्टो हि सर्वथैकान्तानेकान्तयोः साक्षाद्विरोधो भावाभावयोरिव । नन्वयमनुपलब्धिहेतुरेव युक्तो यावान् कश्चित्प्रतिषेधः स सर्वोपलब्धिरिति वचनादिति चेत्तन्मलीमसमुपलम्भाभावस्यात्र हेतुत्वेनानुपन्यासात् । अथ विरुद्धयोः सर्वथैकान्तानेकान्तयोर्वह्निशीतस्पर्शयोरिव प्रथमं विरोधः स्वभावानुपलब्ध्या प्रतिपन्न इत्यनुपलब्धिमूलत्वात्स्वभावविरोधोपलब्धेरनुपलब्धिरूपत्वं युक्तमेवेति चेत्तर्हि साध्यधर्म्मिणि भूधरादौ साधने च धूमादावध्यक्षीकृते सतीदमप्यनुमानं प्रवर्तत इति प्रत्यक्षमूलत्वात् इदमपि प्रत्यक्षं किं न स्यात् । विरुद्धोपलब्धेराद्यप्रकारं प्रदर्श्य शेषानाख्याति । प्रतिषेध्याविरुद्धव्याप्तादीनामुपलब्धयः षडिति प्रतिषेध्येनार्थेन सह ये साक्षाद्विरुद्धास्तेषां ये व्याप्तादयो व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचरास्तेषामुपलब्धयः षड् भवन्ति । विरुद्धव्याप्तोपलब्धिर्विरुद्धकार्योपलब्धिर्विरुद्धकारणोपलब्धिर्विरुद्धपूर्वचरोपलब्धिर्विरुद्धोत्तरचरोपलब्धिर्विरुद्धसहचरोपलब्धिश्चेति । क्रमेणासामुदाहरणान्याहुः । विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चयस्तत्र संदेहादिति । अत्र हि जीवादितत्त्वगोचरो निश्चयः प्रतिषेध्यस्तद्विरुद्धश्चानिश्चयस्तेन व्याप्तस्य संदेहस्योपलब्धिः । विरुद्धकार्योपलब्धिर्यथा न विद्यतेऽस्य क्रोधाद्युपशान्तिर्वदनविकारादेरिति वदनविकारस्ताम्रतादिरादिशब्दादधरस्फुरणादिपरिग्रहः । अत्र च प्रतिषेध्यः क्रोधाद्युपशमस्तद्विरुद्धस्तदनुपशमस्तत्कार्यस्य वदनविकारादेरुपलब्धिः । विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यं वचः समस्ति रागद्वेषकालुष्याकलङ्कितज्ञानसंपन्नत्वादिति प्रतिषेध्येन ह्यसत्येन सह विरुद्धं सत्यं तस्य कारणं रागद्वेषकालुष्याकलङ्कितज्ञानं तत्कुतश्चित्सूक्ताभिधानादेः सिद्ध्यत्सत्यं साधयति । तच्च सिध्यदसत्यं प्रतिषेधति ॥ विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्तान्ते पुष्यतारा रोहिण्युद्गमादिति । प्रतिषेध्योऽत्र पुष्यतारोद्गमस्तद्विरुद्धो मृगशीर्षोदयस्तदनन्तरं पुनर्वसूदयस्यैव भावात् । तत्पूर्वचरो रोहिण्युदयस्तस्योपलब्धिर्विरुद्धोत्तरचरोपलब्धिर्यथा नोदगान्मुहूर्तात्पूर्वं मृगशिरः पूर्वफाल्गुन्युदयादिति । प्रतिषेध्योऽत्र मृगशीर्षोदयस्तद्विरुद्धो मघोदयोऽनन्तरमार्द्रोदयादेरेव भावात्तदुत्तरचरः पूर्वफल्गुन्युदयस्तस्योपलब्धिर्विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनादिति प्रतिषेध्येन हि मिथ्याज्ञानेन सह विरुद्धं सम्यग्ज्ञानं तत्सहचरं सम्यग्दर्शनं तच्च प्राण्यनुकम्पादेः कुतश्चिल्लिङ्गात्प्रसिध्यत्सहचरं सम्यग्ज्ञानं साधयति । इयं च सप्तप्रकारापि विरुद्धोपलब्धिः ॥ प्रतिषेध्येनार्थेन साक्षाद्विरोधमाश्रित्योक्ता परंपरया विरोधाश्रयणेन त्वनेकप्रकारा विरुद्धोपलब्धिः संभवत्यत्रैवाभियुक्तैरन्तर्भावनीया । तद्यथा कार्यविरुद्धोपलब्धिर्व्यापकविरुद्धोपलब्धिः कारणविरुद्धोपलब्धिरिति अयं स्वभावविरुद्धोपलब्धौ । तत्र कार्यवि-

रुद्धोपलब्धिर्यथा नात्र देहिनि दुःखकारणमस्ति सुखोपलम्भादिति साक्षादत्र सुखदुःखयोर्विरोधः प्रतिषेध्यस्वभावेन तु दुःखकारणेन परंपरया। व्यापकविरुद्धोपलब्धिर्यथा न सन्निकर्षादिः प्रमाणमज्ञानत्वादिति साक्षादत्र ज्ञानत्वा ज्ञानत्वयोर्विरोधः प्रतिषेध्यस्वभावेन तु ज्ञानत्वव्याप्येन प्रामाण्येन व्यवहितः कारणविरुद्धोपलब्धिर्यथा नासौ रोमहर्षादिविशेषवान् समीपवर्तिपावकविशेषत्वादिति । अत्र पावकः साक्षाद्विरुद्धः शीतेन प्रतिषेध्यस्वभावेन तु रोमहर्षादिना शीत कार्येण पारम्पर्येण । ये तु नास्य पस्य हिमजनितरोमहर्षादावशषो धूमात् प्रतिषेधस्य हि रोमहर्षादिविशेषस्य कारणं हिमं तद्विरुद्धोऽग्निस्तत्कार्यं धूम इत्यादयः कारणविरुद्धकार्योपलब्ध्यादयो विरुद्धोपलब्धेर्भेदास्ते यथासंभवं विरुद्धकार्योपलब्ध्यादिष्वन्तर्भावनीयाः । र० ३ परि० ॥

उवलब्भ–उपलभ्य–अव्य० विज्ञायेत्यर्थे, " धम्मस्स सारमुवलब्भकरे य मायं " ध० २ अधि० ॥ ज्ञेये प्राप्ये च । वाच० ।

उवलभत्ता –देशी–तथेत्यर्थे, दे० ना० ॥

उवलयपग्गा –देशी–वलये, दे० ना० ॥

उवललय–देशी –सुरते, दे० ना० ॥

उवललिय–उपललित– न० उप-लल्- भावे-क्त-क्रीडितविशेषे, ज्ञा० ९ अ० ।

उवलाउ–उपलातुम्– अव्य० ग्रहीतुमाश्रयितुमित्यर्थे, व्य०१उ०

उवलालिज्जमाण–उपलाल्यमान– त्रि० क्रीडादिलालनया(ज्ञा० १ अ० ) ईप्सितार्थसम्पादनाद्वा क्रियमाणे उपलालने, भ० ९ श० ३३ उ० । " उवगाइज्जमाणे उवलालिज्जमाणे " रा० ॥

उवलिंप (त्)–उपलिम्पत्– त्रि० घटकमुखस्य तत्पिधानकस्य च गोमयादिना रन्ध्रं भजति, ज्ञा० ७ अ० ॥

उवलित्त–उपलिप्त–त्रि० उप–लिप्–क्त । संवेष्टिते, सूत्र० १ श्रु० ३ अ० । गोमयादिना लिप्ते, ज्ञा० १ अ० । आ० म० प्र०। दशा०।

उवली ( ल्ली ) ण–उपलीन–त्रि० उप–ली–क्त–प्रच्छन्ने, "उवल्लीणा मेहुणधम्मं विण्णवेंति " आचा० २ श्रु० ॥

उवलुत्रं–देशी–सलज्जे, दे० ना० ।।

उवलेव–उपलेप–पुं० उप–लिप्–घञ् । उपलिप्यतेऽनेनेत्युपलेपः कर्मबन्धे, औ०। भावे-घञ् । आश्लेषे, सूत्र०१ श्रु० १ अ०२ उ० । संश्लेषे, आचा० १ श्रु० २ अ० २ उ० ।

उवलेवण–उपलेपन–न० उप–लिप्-ल्युट्–गोमयादिना लेपने, ग० २ अधि० । "उवलेवणसम्मज्जणं करेइ" भ०११ श०९ उ०। "भिक्खू उवलेवणादि काऊ णखणं करेइ" नि० चू०१ उ०। औ०॥

उववज्जमाण–उपपद्यमान–त्रि० यथास्वमुत्पादस्थानेष्वन्यनगरस्योत्पद्यमाने, " सउर्हि बायरकाएर्हि उववज्जमाणेहिं लोगे फुडे" स्था० ४ ठा० ॥

उपवाद्यमान–त्रि० वादित्रे, कल्प० ॥

उववज्जिउकाम–उत्पत्तुकाम–त्रि० समुत्पित्सौ, " जो जीवो उववज्जिउकामो" सूत्र० २ श्रु० १ अ० ।

उववज्जित्ता–उपपद्य–अव्य० उप पद्-ल्यप् । उत्पादक्षेत्रं गत्वेत्यर्थे, भ० १७ श० ६ उ० ।

उववण–उपवन–न० भवनासन्नवने, ज्ञा० १ अ० ।

उववण्ण–उपपन्न–त्रि० उप-पद्-क्त । उत्पन्ने, "उववण्णो माणुसंमि लोगम्मि " उत्त०९ अ० "दोच्चं पुढवीए नारगा उववण्णा" नि० चू० ११ उ० । युक्त्या घटमानके, सूत्र० १ श्रु० १ अ० । सङ्गते, पंच० ०६ विव०। उदीर्णे, प्रेरिते, "उववण्णो पावकम्मुणा" पापकर्मणा उदीर्णः प्रेरितः। उत्त०१९अ०। प्राप्ते,भावे क्तः। उपपाते, भ० १४ श० १ उ० ।

उववत्ता–उपपत्तृ–त्रि० उपपातकर्त्तरि, "देवलोगेसु देवत्ताए उववत्तारो भवंति " औ० । स्था० ॥

उववत्ति–उपपत्ति–स्त्री० उप-पद्-क्तिन् । उपपाते, जन्मनि, स्था० २ ठा० । संभवघटने, । विवक्षितार्थसंभवव्यवस्थापने, विशे० । युक्तौ, "उपपत्तिर्भवेद्युक्ति-र्या तदभावप्रसाधिका । सान्वयव्यतिरेकादि-लक्षणा सूरिभिः कृतेति १ आगमश्चोपपत्तिश्च, सम्पूर्णं विधिलक्षणम " अनु० । सङ्गतौ, हेतौ, उपाये, प्राप्तौ, सिद्धौ, वाच०। विषये, "विसउत्ति वा संभवत्ति वा उववत्तित्ति वा एगट्ठा " आ० चू० १ अ० ।

उववत्थ–उपवस्त्र–न० अङ्गप्रोञ्छणसाधके धौतवस्त्रव्यतिरिक्ते द्वितीये वस्त्रे, तपोविशेषे श्रीआणन्दविमलसूरिकृताष्टकर्मतपो यद्युपवस्त्रेण कर्त्तुं न शक्नोति तदाऽऽचाम्लेन करोति किं वा नेति १५७ प्रश्ने यदि सर्वथोपवस्त्रकरणशक्तिर्न स्यात्तदा चाम्लेनापि करोतीति सेनप्र० ४ उल्ला० ।

उववाय–उपपात–पुं० उप पत् घञ् हट्टादागतौ, फलोन्मुखत्वे, नाशे, उप समीपे पतनमुपपातः। दृग्विषयदेशावस्थाने, "आणा णिद्देसयरे गुरूणमुववायकारए" उत्त० १ अ०। समीपे, "आणा उववायवयणनिद्देशकरे" व्य० द्वि० ४ उ० । सेवायाम्, । "आणोववायवयणणिद्देसे चिट्ठंति" भ० ३ श० ३ उ० । आज्ञायाम्,"उववातो णिद्देसो, आणाविणओ य होंति एगट्ठा" इति वचनात्" व्य० द्वि० ४ उ० । उपपतनमुपपातः । देवनारकाणां जन्मनि, "एगे उववाए" उपपात एकश्च्यवनवत् । स्था०१ ठा०। कल्प० । अकामनिर्जरादिजनिते, किल्बिषादिदेवभवे, नारकभवे च । स्था० ३ ठा० । दर्श० । स० । आचा० । अणु० । प्रादुर्भावे, प्रज्ञा० १६ पद । "दोण्हं उववाए पण्णत्ता तंजहा देवाणं चेव णेरइयाणं चेव"द्वयोर्जीवस्थानयोरुपपतनमुपपातो गर्भसम्मूर्छनलक्षणजन्मप्रकारद्वयविलक्षणो जन्मविशेषः । स्था० २ ठा० । स च क्षेत्रभवभेदाद् द्विविधः तद्यथा क्षेत्रोपपातो भवोपपातश्च तत्र क्षेत्रमाकाशो यत्र नारकादयो जन्तवः सिद्धाः पुद्गला वा अवतिष्ठन्ते। भवकर्मसम्पर्कजनितो नैरयिकत्वादिकः पर्यायः सम्भवति कर्मवशवर्तिनः प्राणिनोऽस्मिन्निति भव इति व्युत्पत्तेः। नो भवः भवव्यतिरिक्तः कर्मसम्पर्कसम्पाद्यनैरयिकत्वादिपर्यायरहित इति भावः। स च पुद्गलः सिद्धो वा उभयस्यापि यथोक्तलक्षणभवातीतत्वात् । प्रज्ञा० १६ पद ।

( १ ) उपपाते संग्रहः ।
( २ ) गतीनामुपपातविरहः ।
( ३ ) सान्तरनिरन्तरोपपातः ।
( ४ ) एकसमये कियन्त उपपातास्तत्र नैरयिकाद्येकोनचत्वारिंशज्जीवानामुपपातविचारः ।
( ५ ) नैरयिकादीनामात्मोपक्रमादिना उपपातचिन्तनम् ।
( ६ ) कतिसञ्चिताकतिसञ्चितानामुपपातः एषामल्पबहुत्वविचारः ।
( ७ ) षट्कसमर्जितोत्पादस्तदल्पबहुत्वविचारश्च ।
( ८ ) द्वादशसमर्जिताः ।
( ९ ) चतुरशीतिसमर्जिताः । असुरकुमारादीनां भेदादिनिरूपणं च ।

(१०) नैरयिकादयः कुत उत्पद्यन्ते तेषां स्थितिभवग्रहणादयः। नैरयिकेषूत्पद्यमानानां स्थित्यादि च ।
(११) कृतयुग्मादि विशेषणेनैकेन्द्रियादीनामुपपातचिन्तनम्। तत्र प्रथमाद्वितीयादिसमयकृतयुग्मविचारः ।
(१२) राशियुग्मक्षुद्रकयुग्मादिविशेषणेन नैरयिकादीनामुपपात विचारः ।
(१३) भव्यदेवादीनामुपपातचिन्तनम् ।
(१४) नैरयिकादीनां स्वतोऽस्वतो वा उपपातचिन्तनम् ।
(१५) नैरयिकादयः उद्वर्त्य क गच्छन्ति क्षुद्रकृतनैरयिका कुत उत्पद्यन्ते ।
(१६) भव्यद्रव्यदेवादयः कुत उत्पद्यन्ते ।
(१७) महर्द्धिकदेवानां द्विशरीरेषूपपादविचारः ।
(१८) नैरयिकादयः कथमुत्पद्यन्त इति चिन्तनम् ।
(१९) समुद्घातविशेषणेनैकेन्द्रियाणामुपपात चिन्तनम् ।
(२०) पृथ्व्यादीनां समवहत्य देवलोकेषूपपातः।
(२१) नैरयिकादीनां नैरयिकादिषूपपातोद्वर्त्तनचिन्तनम्। कृष्णलेश्याविषयोत्पत्ति चिन्तनम्। पृथ्वीकायिकेषु कृष्णलेश्याविषयविचारः ।
(२२) लेश्यावत्त्वेनोपपातश्चतुर्विंशतिदण्डकस्य शेषपदानामतिदेशश्च ।
(२३) नैरयिकाणां देशतस्सर्वतो वा उपपातः ।
(२४) गर्भगतस्य मृत्वा देवलोकेषूपपातः ।
(२५) कुतो देवा देवलोकेषूपपद्यन्ते ।
(२६) सहोपपन्नयोरसुरकुमारयोः शोभनाशोभनवत्त्वम् ।
(२७) नैरयिका नैरयिकेषूपपन्नानां कश्चिदल्पतरोऽपरो महावेदनतरः ।
(२८) पूर्वोक्तानां नैरयिकादीनामायुष्कसंवेदनम् ।
(२९) रत्नप्रभायां सर्वे उपपन्नपूर्वाः ।
(३०) अविराधितश्रामण्यानां देवलोकेषूपपातः ।

(१) अथसत्वानामुपपातविरहादयश्चिन्त्यन्ते । तत्रादौ इयमधिकारसंग्रहणि गाथा–

बारसचउवीसाइं, संतरयं एगसमयकत्तो य ।
उव्वट्टणपरभविया–उयं अट्ठेव य आगरिसा ॥

प्रथमं गतिषु सामान्यत उपपातविरहोद्वर्तनाविरहस्य च द्वादश मुहूर्ताः प्रमाणं वक्तव्यं तदनन्तरं नैरयिकादिषु भेदेषूपपातविरहस्योद्वर्तना विरहस्य चतुर्विंशतिमुहूर्ता गतिषु प्रत्येकमादौ वक्तव्याः । ततः ( संतरत्ति ) सान्तर नैरयिकादयः उत्पद्यन्ते निरन्तरं चेति वक्तव्यं। तदनन्तरमेकसमयेन नैरयिकादयः प्रत्येकं कति उत्पद्यन्ते कति चोद्वर्तन्ते इति! चिन्तनीयं ततः कुत उत्पद्यन्ते नारकादयः इति चिन्त्यते तत ( उव्वट्टण त्ति ) नैरयिकादय उद्वृत्ताः सन्तः कुत्रोत्पद्यन्ते इति वक्तव्यं तदनन्तरं कति भागावशेषेऽनुभूयमानभावायुषि जीवाः पारभाविकमायुर्बध्नन्तीति वक्तव्यं तथा कतिभिराकर्षैरुत्कर्षेन आयुर्बन्धक इति चिन्तायामष्टौ आकर्षा वक्तव्याः। एषाः संग्रहणीगाथासंक्षेपार्थः ॥

(२) एतदेव क्रमेण विवरीषुर्गतीनामुपपातविरहमाह–

निरयगईणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता गोयमा ! जहन्नेणं एकं समयं उक्कोसेणं बारसमुहुत्ता । तिरियगईणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एकं समयं उक्कोसेणं बारसमुहुत्ता। मणुयगईणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं बारसमुहुत्ता। देवगईणं भंते! केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं बारसमुहुत्ता। सिद्धिगईणं भंते ! केवइयं कालं विरहिता सिज्झणया पन्नत्ता ? गोयमा! जहन्नेणं एगं समयं उक्कोसेणं छम्मासा। निरयगईणं भंते केवइयं कालं विरहिया उव्वट्टणाए पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं बारस मुहुत्ता । मणुयगईणं भंते! केवइयं कालं विरहिया उवट्टणाए पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं बारसमुहुत्ता एवं तिरिया देवगइए वि ॥

निरयगतिर्नाम नरकगतिकर्मोदयजनिता जीवस्य औदयिको भावः स चैकः सप्तपृथिवीव्यापि चेति । एकवचनेन सप्तानाश्च पृथिवीनां परिग्रहः ण मिति वाक्यालङ्कारे भदन्तेति गुर्वामन्त्रणं परमकल्याणयोगिन्! ( केवइयंति ) कियन्तं कालं विरहिता शून्या प्रज्ञप्ता उपपातेन उपपतनमुपपातस्तदन्यगतिकानां सत्वानां नारकत्वेनोत्पाद इति भावः तेन प्रज्ञप्ता प्ररूपिता भगवता अन्यैश्च ऋषभादिभिस्तीर्थकरैः एवं प्रश्ने कृते भगवानाह । गौतम ! जघन्यत एकं समयं यावदुत्कर्षतो द्वादशमुहूर्तान् । अत्र मुग्धप्रेरक आह। नन्वेकस्यामपि पृथिव्यामग्रे द्वादशमुहूर्त्तप्रमाण उपपातविरहो न वक्ष्यते चतुर्विंशतिमुहूर्त्तादिप्रमाणस्य वक्ष्यमाणत्वात् ततः कथं सर्वपृथिवी समुदायेऽपि द्वादशमुहूर्त्तप्रमाणम् । प्रत्येकमभावे समुदायेऽभावादिति न्यायस्य श्रवणात् । तदयुक्तं वस्तुतत्वापरिज्ञानात् । यद्यपि हि नाम रत्नप्रभादिष्वेकैकनिर्धारणेन चतुर्विंशतिमुहूर्तादिप्रमाण उपपातविरहो वक्ष्यते तथापि यदा सप्तापि पृथिव्यः समुदिता उपेत्योपपातविरहश्चिन्त्यते तदा स द्वादशमुहूर्तप्रमाण एव लभ्यते द्वादशमुहूर्तानन्तरमवश्यमन्यतरस्यां पृथिव्यामुत्पादसम्भवात्तथाकेवलवेदसोपलब्धेः। यस्तु प्रत्येकमभावे समुदायेऽप्यभाव इति न्यायः स कारणकार्यधर्मानुगमचिन्तायां नान्यत्रेत्यदोषः । यथा नरकगतिर्द्वादशमुहूर्ताऽनुत्कर्षत उपपातेन विरहिता उक्ता एवं तिर्यङ्मनुष्यदेवगतयोऽपि । सिद्धिगतिस्तूत्कर्षतः षण्मासानुपपातेन विरहिता एवमुद्वर्तनाऽपि नवरं सिद्धा नोद्वर्त्तन्ते तेषां साद्यपर्यवसितकालतया शाश्वतत्वादिति सिद्धिरुद्वर्तनया विरहिता वक्तव्या। गतं प्रथमद्वारम्।

इदानीं चतुर्विंशतिरिति द्वितीयं द्वारमभिधित्सुराह–

(१) रयणप्पभापुढविनेरइयाणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं चउव्वीसं मुहुत्ता । सक्करप्पभापुढविणेरइयाणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं सत्तराइंदियाणि। वालुयप्पभाए पुढवीए णेरइयाणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं अद्धमासं । पंकप्पभापुढविणेरइयाणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं मासं । धूमप्पभापुढविणेरइयाणं भंते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं दो मासा । तमापुढविणेरइयाणं भंते ? केवइयं कालं विरहिया उववाएणं पन्नत्ता ? गोयमा ! जहन्नेणं

एक्कं समयं उक्कोसेणं चत्तारि मासा । अहेसत्तमा पुढवि-णेरइयाणं जंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता ? गोयमा ! जहण्णेणं एगं समयं उक्कोसेणं छम्मासा ( २ ) असुरकुमाराणं जंते ! केवइयं कालं विरहिया उववाएणं प-ण्णत्ता ? गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं चउवीसं मुहुत्ता । एवं ( ३ ) नागकुमाराणं ( ४ ) सुवष्णकुमाराणं ( ५ ) विज्जुकुमाराणं ( ६ ) अग्गिकुमाराणं ( ७ ) दीव-कुमाराणं ( ८ ) उदहिकुमाराणं ( ९ ) दिसाकुमाराणं ( १० ) वाउकुमाराणं ( ११ ) थणियकुमाराण य पत्तेयं जहन्नेणं एगं समयं उक्कोसेणं चउवीसं मुहुत्ता । ( १२ ) पुढविकाइयाणं जंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता ? गोयमा ! अणुसमयविरहियं उववाएणं पण्णत्ता ( १३ ) एवं आउकाइयाण वि ( १४ ) तेउकाइयाणवि ( १५ ) वाउकाइयाण वि ( १६ ) वणस्सइकाइयाण वि अणुसमयविरहिया उववाएणं पण्णत्ता । ( १७ ) बेइंदियाणं जंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं । एवं ( १८ ) तेइंदियाय ( १९ ) चउरिंदिया य । ( २० ) सम्मुच्छिम-पंचिंदियतिरिक्खजोणियाणं जहण्णेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं गब्भवक्कंतियपंचिंदियतिरिक्खजोणियाणं जंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता ? गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं बारसमुहुत्ता । ( २१ ) सम्मुच्छिममणुस्साणं जंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता ? गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं चउवीसं मुहुत्ता । गब्भवक्कंतियमणुस्साणं पुच्छा गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं बारसमुहुत्ता । ( २२ ) वंतराणं पुच्छा गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं चउवीसं मुहुत्ता । ( २३ ) जोइसियाणं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसे-णं चउवीसं मुहुत्ता । ( २४ ) सोहम्मकप्पदेवाणं जंते ! केवइयं कालं विरहिया उववाएणं पण्णत्ता ? गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं चउवीसं मुहुत्ता । ईसाणे कप्पे देवाणं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं चउवीसं मुहुत्ता । सणंकुमारदेवाणं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं नवराइंदिया वीसमुहुत्ताइं ॥ माहिंददे-वाणं पुच्छा गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं बारसराइंदियाइं दसमुहुत्ताइं । बंभलोए देवाणं पुच्छा गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं अद्धतेवीसं राइं-दियाइं । लंतगदेवाणं पुच्छा गोयमा ! जहण्णेणं एगं समयं उक्कोसेणं पणयालीसं राइंदियाइं । महासुक्कदेवाणं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं असीतिराइंदियाइं । सहस्सारदेवाणं पुच्छा गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं राइंदियसत्तं । आणयदेवाणं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं संखेज्जमासा । पाणयदेवा णं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं सं-खेज्जमासा । आरणदेवाणं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं संखेज्जवासा । अच्चुयदेवाणं पुच्छा गोय-मा ! जहण्णेणं एक्कं समयं उक्कोसेणं संखेज्जवासा । हेट्ठिम-गेविज्जाणं पुच्छा गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं संखेज्जाइं वाससयाइं । मज्झिमगेविज्जाणं पुच्छा गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं संखेज्जाइं वाससहस्साइं । उवरिमगेविज्जाणं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं संखेज्जाइं वाससयसहस्साइं । विजय-वेजयंत-जयंत अपराजिय-देवाणं पुच्छा गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं । सव्वट्ठसिद्धदेवाणं पुच्छा गो-यमा ! जहन्नेणं एक्कं समयं उक्कोसेणं पलिओवमस्स संखे-ज्जइभागं । सिद्धाणं जंते ! केवइयं कालं विरहिया सिज्झ-णयाए पण्णत्ते ? गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं छम्मासा । रयणप्पभापुढविनेरइयाणं जंते ! केवइयं कालं विरहिया उवट्टणाए पण्णत्ते ? गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं चउवीसमुहुत्ता एवं सिद्धवज्जा उवट्टणा वि जा-णियव्वा जाव अणुत्तरोववाइयत्ति नवरं जोइसियवेमाणिएसु चयणंति अभिलावो कायव्वो ॥

"रयणप्पभाए" इत्यादि पाठसिद्धम् । नवरमत्रोत्कर्षविषया इमा संग्रहणिगाथा "चउवीसयमुहुत्ता, सत्तयराइंदियाइ पक्खो य, मासो एक्को दुन्निओ, चउरो छम्मास नरएसु ॥ १ ॥ कमसो उक्को-सेणं, चउवीसमुहुत्तभवणवासीसु । अविरहिया पुढवाई, वि-गलाणं तो मुहुत्तं तु ॥ २ ॥ सम्मुच्छिमतिरिपणिंदिय, एवं चियगब्भवारसमुहुत्ता ॥ सम्मुच्छिमगब्भमणुया, कमसो चउवी-सबारसया ॥ ३ ॥ वणजोइससोहम्मी-साणकप्पचउवीसइमु-हुत्ताओ । कप्पे सणंकुमारे दिवसाण वावीसई मुहुत्ताओ ॥ ४ ॥ माहिंदे राइंदिय-बारसदसमुहुत्तबंभलोगम्मि । राइंदियअ-द्धतेवी-सुलंतए होंति पणयाला ॥ ५ ॥ महसुक्कम्मिअसई, स-हस्सारिसयं तओ उ कप्पदुगे । मासा संखेज्जा तह, वासा सं-खेज्ज उवरिदुगे ॥ ६ ॥ हिट्ठिममज्झिम उवरिम, जह संखसया सहस्सलक्खाइं । वासाणं विन्नेओ, उक्कोसेणं विरहकालो ॥ ७ ॥ कालो संखाईओ, विजयाइसु चउसु होइ नायव्वो । संखेज्जो पल्लसओ, भागो सव्वट्ठसिद्धम्मि" ॥ ८ ॥ प्रज्ञा० ६ पद ।

बालतवे पडिबद्धा, उक्कडरोसा तवेण गारविया ।
वेरेण य पडिबद्धा, मरिओ असुरेसु गच्छंति ॥ ९ ॥
रज्जुगहविसभक्खण, जलजलणपवेसतण्हछुहदुहओ ।
गिरिसिरिपडणाउ मुया, सुह भावा हुंति वितरिया १० ॥
तावस जा जोइसिया, चरगपरिव्वाय बंभलोगो जा ।
जा सहसारो पंचिंदि-तिरिय जा अच्चुओ सड्ढा ॥ ११ ॥
जइ लिंगिमिच्छदिट्ठी, गेविज्जा जाव जंति उक्कोसं ।
पयमवि असद्दहंतो, सुत्तत्थं मिच्छदिट्ठीओ ॥ १२ ॥
सुत्तं गणहररइयं, तहेव पत्तेय बुद्धरइयं च ।

सुयकेवलिणा रइयं, अभिन्नदसपुव्विणा रइयं ॥ १३ ॥
छउमत्थ संजयाणं, उववाय उक्कोसओ सव्वट्ठे ।
तेसिं सड्ढाणं पि य, जहन्नओ होइ सोहम्मे ॥ १४ ॥
लंतम्मि चउदसपुव्विस्स, तावसाईण वंतरेसु तहा ।
एसो उववायविही, नियकिरियट्ठियाणसव्वो वि ॥१५॥

अर्द्धवञ्चनाविकलास्तत्वतो ज्ञानशून्यत्वाद्बाला इव बालास्तेषां तपः पञ्चाग्न्यादि तच्च तत्वतः सत्वोपघातहेतुत्वाच्च तपः तथा च । महाभारते शान्तिपर्वणि व्यासोऽप्याह । " चतुर्णां ज्वलतां मध्ये, यो नरः सूर्यपञ्चमः । तपस्तपति कौन्तेय ! न तत्पञ्चतपः स्मृतम् ॥ पञ्चानामिन्द्रियाग्नीनां, विषयेन्धनचारिणाम् । तेषां तिष्ठति यो मध्ये, तद्वै पञ्चतपः स्मृतम् "॥ तस्मिन् प्रतिबद्धा आसक्ताः अथवा बालस्थिता तथा तद्द्रव्यक्षेत्रकालभावेषु प्रतिबद्धाः उत्कटरोषाः चण्डकोपाः । तथा तपसाऽनशनादिभेदेन गौरविता वयं तपस्विन इति गर्वाध्माताः तथा वैरेण क्रोधानुशयरूपेण कचित्प्राणिनि द्वारवत्यां द्वीपायनवत्प्रतिबद्धाः कृतानुबन्धाः मृत्वा असुरेषु असुरादिषु भवनवासिषु जायन्ते ॥ ९ ॥ ( रज्जुत्ति० ) व्यक्ता नवरं शुभभावा नरकादिगतियोग्या अत्यन्तरौद्रार्तचित्तपरिहारेण तथाविधमन्दशुभपरिणामाः शूलपाणिप्रभृतय इव ॥ १० ॥ (तावसत्ति०) तापसा वनवासिनो मूलकन्दफलाहारास्त ( जंति उक्कोसन्ति ) वक्ष्यमाणेन योगादुत्कर्षतो यान्त्युत्पद्यन्ते यावज्ज्योतिष्कास्तत ऊर्ध्वं नेति भावः । एवं चरका धाटिभिक्षाचराः परिव्राजकाश्च कपिलमतानुगामिनो यावद्ब्रह्मलोकः पञ्चेन्द्रियतिर्यञ्चो हस्त्यादयः सम्यक्त्वदेशविरतिप्रयुक्ता यावत्सहस्रारः श्राद्धाः श्राविकादेशविरत मनुष्या यावदच्युतः ॥ ११ ॥ ( जइत्ति० ) यति लिङ्गिनो रजोहरणादिसाधुवेषधारिणो मिथ्यादृष्टय उत्कर्षतो ग्रैवेयकान् यावत् यान्ति । एतदुक्तं भवति । प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिरूपसम्यक्त्वविकला अपि संपूर्णदशविधचक्रवालसामाचार्यनुष्ठानप्रभावाद्ग्रैवेयकान् यावदुत्कर्षतस्ते गच्छन्ति मिथ्यादृष्टिस्तु सोऽप्यभिधीयते यः समग्रद्वादशाङ्गं श्रद्दधानोऽपि सूत्रोक्तमेकमपि पदमक्षरं वा न श्रद्धत्ते स्वल्पस्याऽपि सर्वविदोक्तस्याश्रद्धानेन तत्र तस्याप्रत्ययात् ॥ १२ ॥ सूत्रोक्तमित्युक्तमतः सूत्रस्वरूपमाह ( सुत्तंति ) यद्गणधरैः सुधर्मस्वाम्यादिभीरचितमाचाराङ्गादि यच्च प्रत्येकबुद्धैर्नम्याद्भिर्नम्यध्ययनादि यच्च श्रुतकेवलिना चतुर्दशपूर्वधरेण शय्यंभवादिना दशवैकालिकादि यच्च संपूर्णपूर्वधारिणा रचितं तत्सर्वं सूत्रमिति तथा ॥ १३ ॥ ( छउमत्थत्ति० । लंतम्मित्ति० ) छादयत्यात्मनो यथावस्थितं रूपमिति छद्म ज्ञानावरणादि घातिकर्मचतुष्टयं तत्रस्थाश्च तेषां तूपपातः उत्कर्षतस्त्रैलोक्यतिलके सर्वार्थसिद्धे विमाने जघन्यतः पुनस्तेषां छद्मस्थसाधूनां श्रावकाणामपि च सौधर्मे उपपातो भवति केवलमत्रापि स्थितिकृतो विशेषो यथा सौधर्मे साधोर्जघन्या स्थितिः पल्योपमपृथक्त्वं श्रावकस्य पल्योपममिति तथा चतुर्दशपूर्वधरस्य लान्तके जघन्य उपपातः तापसादीनां तु व्यन्तरेषु प्रज्ञापनायां तु " ताव ईसाणजहन्नेणं भवणवासीसु " इत्युक्तमेव चोक्तरूपः सर्वोऽप्युपपातविधिर्निजनिजक्रियास्थितानां निजनिजागमोक्तानामनुष्ठानरतानां न चाचारहीनानामिति ॥१४।१५।

देवीनामुत्पत्तिस्थानान्याह—

उववाओ देवीणं, कप्पदुगं जाव सहस्सारो ।
गमणागमणं नत्थी, अच्चुयपरओ सुराणं पि ॥ १६ ॥
तिपलिय-तिसार-तेरस, सारा कप्पदुगतइय लंतअहो ।
किब्बिसिय न होतुवरिं, अच्चुयपरओभिओगाई ॥१७॥

( उववाओत्ति ) भवनपतीनारभ्य यावत्सौधर्मेशानकल्पद्विकं तावद्देवीनामुपपातो जन्मत ऊर्ध्वं देवानां तूपपातः सर्वत्र भवत्येव सनत्कुमारादिदेवानां च सुरताभिलाषः । सौधर्मादीशानाच्चापरिगृहीता देव्यः सहस्रारं यावद्गच्छन्ति । सहस्राराच्च परतो गमनागमनं च देवीनां नास्ति । तथा च मूलसंग्रहणीटीकायां हरिभद्रसूरिः देव्यः खलु अपरिगृहीताः सहस्रारं यावद् गच्छन्ति इति । तथा भगवानार्यश्यामोऽपि प्रज्ञापनायामाह " तत्थ णं जे ते मणपरियारगा देवा तेसिं इच्छा मणे समुप्पज्जइ इच्छामो णं अच्छराहिं सद्धिं मणपरियाणं करेत्तए तओ णं देवेहिं एवमणसीकए समाणे खिप्पामेव ताओ अच्छराओ तत्थ गयाओ चेव समाणी उ अणुत्तराइं उच्चावयाइं मणाइं पहारेमाणीओ चिट्ठंति तओणं ते देवा ताहिं अच्छराहिं सद्धिं मणपरियाणं करिंति इत्यादि " तत्र प्रविचारणार्थमानतादौ देवीनां गत्यागती स्तः । देवीनां गमागमौ न स्तः । तत्राधस्तनानामूर्ध्वशक्तिभावाद् । ता हि जिनजन्ममहिमास्वपि नात्रागच्छन्ति किं तु स्थानस्था एव भक्तिमातन्वते । संशयप्रश्ने वाऽवधिज्ञानतो भगवत्प्रयुक्तानि मनोद्रव्याणि साक्षात्कादेवेत्यतस्तदाकारान् यथानुपपत्या जिज्ञासितमर्थं निश्चिन्वन्ति न चान्यत्प्रयोजनं तत्र तेषामिहागमः ॥ १७ ॥ अथ वैमानिकेषु किल्बिषिकाणामाभियोग्यानां च देवानां स्थित्यादिकमाह ( तिपलित्ति ) किल्बिषिका अशुभकर्मकृतश्चाण्डालप्राया देवास्ते त्रिपल्योपमादिस्थितयः । क्रमात्कल्पद्विकादेरधो वसन्ति तथाहि त्रिपल्योपमास्थितयस्ते सौधर्मेशानयोरधोवसन्ति । एवं त्रिसागरोपमायुष्काः सनत्कुमारस्याधः त्रयोदशसागरोपमायुषा लान्तकस्याधः गतं च किल्बिषिका न हेतुरिति लान्तकादूर्ध्वं न चोत्पद्यन्ते अच्युतात्परतस्त्वाभियोग्या दासप्राया आदिशब्दात्प्रकीर्णादयो नोत्पद्यन्ते । इदमुक्तं भवति । ग्रैवेयकानुत्तरेषु सर्वेषामपि देवानामहमिन्द्रत्वेन शेषाणामपि सामानिकादिदेवभेदानामभाव इति ॥ संग्र० सू० ।

( ३ ) सान्तरं निरन्तरं वा उपपद्यन्ते ॥

णेरइयाणं भंते किं संतरं उववज्जंति निरंतरं उववज्जंति ? गोयमा ! संतरं पि उववज्जंति निरंतरंपि उववज्जंति । तिरिक्खजोणियाणं भंते ! किं संतरं निरंतरं उववज्जंति ? गोयमा ! संतरं पि उववज्जंति निरंतरंपि उववज्जंति । मणुस्साणं भंते ! किं संतरं उववज्जंति निरंतरं उववज्जंति ? गोयमा ! संतरंपि उववज्जंति निरंतरं पि उववज्जंति । देवाणं भंते ! किं संतरं उववज्जंति निरंतरं उववज्जंति ? गोयमा ! संतरं पि उववज्जंति निरंतरं पि उववज्जंति । रयणप्पभापुढविणेरइयाणं भंते ! किं संतरं उववज्जंति निरंतरं उववज्जंति ? गोयमा ! संतरं पि उववज्जंति निरंतरंपि उववज्जंति एवं जाव अहे सत्तमाए संतरं पि उववज्जंति निरंतरं पि उववज्जंति । असुरकुमाराणं भंते ! देवाणं किं संतरं उववज्जंति निरंतरं उववज्जंति ? गोयमा ! संतरंपि उववज्जंति निरंतरंपि उववज्जंति । एवं जाव थणियकुमारा संतरं पि उववज्जंति निरंतरं पि उववज्जंति । पुढविकाइयाणं भंते ! पुच्छा किं संतरं निरंतरं उववज्जंति ? गोयमा ! नो संतरं निरंतरं उववज्जंति । एवं जाव वणस्सइकाइया नो संतरं उववज्जंति

निरंतरं उववज्जंति । बेइंदियाणं भंते ! किं संतरं उववज्जंति निरंतरं उववज्जंति ? गोयमा ! संतरं पि उववज्जंति निरंतरं पि उववज्जंति एवं जाव पंचिंदियतिरिक्खजोणिया । मणुस्साणं भंते ! किं संतरं उववज्जंति निरंतरं उववज्जंति ? गोयमा ! संतरंपि निरंतरं पि उववज्जंति ॥ एवं वाणमंतर–जोइसिय–सोहम्म–ईसाण–सणंकुमार–माहिंद–बंभलोय–लंतग–महासुक्क–सहस्सार–आणय–पाणय–आरण–अच्चुय हिट्ठिमगेविज्जग-मज्झिमगेविज्जग-उवरिमगेविज्जग-विजय-वेजयंत–जयंत–अपराजिय–सव्वट्ठसिद्ध–देवा य संतरं पि निरंतरंपि उववज्जंति, सिद्धाणं भंते ! किं संतरं निरंतरं सिज्झंति ? गोयमा ! संतरं पि सिज्झंति निरंतरं पि सिज्झंति ॥ णेरइयाणं भंते ! किं संतरं उवट्टंति निरंतरं उवट्टंति ? गोयमा ! संतरं पि उवट्टंति निरंतरं पि उवट्टंति । एवं जहा उववाओ भणिओ तहा उवट्टणावि सिद्धिवज्जा भाणियव्वा । जाव वेमाणिया नवरं जोइसियवेमाणिएसु चयणं अभिलावो कायव्वो ॥

पाठसिद्धं प्रागुक्तसूत्रार्थानुसारेण भावार्थस्य सुप्रतीतत्वात् । गतं तृतीयं द्वारम् ।

( ४ ) एकसमयेन कियन्त उत्पद्यन्ते इत्याह–

णेरइयाणं भंते ! एगसमएणं केवइया उववज्जंति ? गोयमा ! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसे णं संखिज्जा वा असंखिज्जा वा उववज्जंति एवं जाव अहेसत्तमाए । असुरकुमाराणं भंते ! एगसमएणं केवइया उववज्जंति ? गोयमा ! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा असंखेज्जा वा एवं नागकुमारा जाव थणियकुमारा वि भाणियव्वा । पुढविकाइयाणं भंते ! एगसमएणं केवइया उववज्जंति ? गोयमा ! अणुसमयं अविरहियं असंखेज्जा उववज्जंति । एवं जाव वाउकाइयाणं । वणस्सकाइयाणं भंते ! एगसमएणं केवइया उववज्जंति ? गोयमा ! सट्ठाणुववायं पडुच्च अणुसमयं अविरहिया अणंता उववज्जंति परट्ठाणुववायं पडुच्च अणुसमयं अविरहिया असंखेज्जा उववज्जंति । बेइंदियाणं भंते ! केवइया एगसमएणं उववज्जंति ? गोयमा ! जहन्नेणं एगो वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा ॥ एवं तेइंदिय–चउरिंदिय–सम्मुच्छिमपंचिंदिय–तिरिक्खजोणिय– गब्भवक्कंतिय –पंचिंदियतिरिक्खजोणिय-सम्मुच्छिममणुस्स-वाणमंतर-जोइसिय-सोहम्मीसाण-सणंकुमार–माहिंद–बंभलोय–लंतग–सुक्क–सहस्सार–कप्पदेवा–एते जहा णेरइया । गब्भवक्कंतियमणुस्स–आणय–पाणय–आरण–अच्चुय–गेवेज्जग-अणुत्तरोववाइया य एते जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखिज्जा उववज्जंति । सिद्धा णं भंते ! एगसमएणं केवइया सिज्झंति ? गोयमा ! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं अट्ठसयं । णेरइयाणं भंते ! एगसमएणं केवइया उवट्टंति ? गोयमा ! जहन्नेणं एक्को वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा वा असंखेज्जा वा उवट्टंति । एवं जहा उववाओ भणिओ तहा उवट्टणा वि सिद्धवज्जा भाणियव्वा । जाव अणुत्तरोववाइया नवरं जोइसियवेमाणियाणं चयणेणं अभिलावो कायव्वो ४ ॥

नेरइयाणं भंते ! एगसमएणं केवइया उववज्जंतीत्यादि निगदसिद्धम् । नवरं 'वनस्पतिसूत्रे सट्ठाणुववायं पडुच्च अणुसमयमविरहिया अणंता' इति । स्वस्थानं वनस्पतीनां वनस्पतित्वं ततोऽयमर्थः यद्यनन्तरभववनस्पतय एव वनस्पतिषूत्पद्यमानाश्चिन्त्यन्ते तदा प्रतिसमयमविरहितं सर्वकालमनन्ता विज्ञेयाः प्रतिनिगोदमसंख्येयभागस्य निरन्तरमुत्पद्यमानतया उद्वर्तमानतया च लभ्यमानत्वात् "परट्ठाणुववायं पडुच्च अणुसमयमविरहियमसंखेज्जा" इति परस्थानं पृथिव्यादयः । किमुक्तं भवति यदि पृथिव्यादयः स्वभावाद्धृत्य वनस्पतिषूत्पद्यमानाश्चिन्त्यन्ते तदा अणुसमयविरहियमसंखेज्जा वक्तव्या इति । तथा गर्भव्युत्क्रान्तिका मनुष्या उत्कृष्टपदेऽपि सङ्ख्येया एव नासङ्ख्येयास्ततस्तत्सूत्रे उत्कर्षतः संख्येया वक्तव्या आनतादिषु देवलोकेषु मनुष्या एवोत्पद्यन्ते न तिर्यञ्चोऽपि मनुष्याश्च संख्येया एवेत्यानतादिसूत्रेष्वपि संख्येया एव वक्तव्या नासंख्येयाः सिद्धिगतानामुत्कर्षतोऽष्टशतम् । एवमुद्वर्तनासूत्रमपि वक्तव्यम् । नवरं ( जोइसिवेमाणियाणं चयणेण अभिलावो कायव्वो इति ) ज्योतिष्कवैमानिकानां हि स्वभावादुद्वर्त्तनं च्यवनमित्युच्यते । तथा अनादिकालप्रसिद्धेस्ततस्तत्सूत्रे च्यवनेनाऽभिलापकः कर्तव्यः सचैवं " जोइसियाणं भंते एगसमएणं केवइया चवंति गोयमा जहन्नेणं एगो वा दो वा" इत्यादि गतं चतुर्थद्वारम् । प्रज्ञा० ६ पद ॥

लेश्यादिविशेषणेनोपपाताः ।

इमी से णं भंते ! रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु संखेज्जवित्थडेसु णरएसु एगसमए केवइया णेरइया उववज्जंति १ केवइया काउलेस्सा उववज्जंति २ केवइया कण्हपक्खिया उववज्जंति ३ केवइया सुक्कपक्खिया उववज्जंति ४ केवइया सन्नी उववज्जंति ५ केवइया असन्नी उववज्जंति ६ केवइया भवसिद्धिया जीवा उववज्जंति ७ केवइया अभवसिद्धिया जीवा उववज्जंति ८ केवइया आभिणिबोहियणाणी उववज्जंति ९ केवइया सुयणाणी उववज्जंति १० केवइया ओहिणाणी उववज्जंति ११ केवइया मइअन्नाणी उववज्जंति १२ केवइया सुअअन्नाणी उववज्जंति १३ केवइया विभंगणाणी उववज्जंति १४ केवइया चक्खुदंसणी उववज्जंति १५ केवइया अचक्खुदंसणी उववज्जंति १६ केवइया ओहिदंसणी उववज्जंति १७ केवइया आहारसन्नोवउत्ता उववज्जंति १८ केवइया भयसन्नोवउत्ता उववज्जंति १९ केवइया मेहुणसन्नोवउत्ता उववज्जंति २० केवइया परिग्गहसन्नोवउत्ता उववज्जंति २१ केवइया इत्थिवेदगा उववज्जंति २२ केवइया पुरिसवेदगा उववज्जंति २३ केवइया णपुंसगवेदगा उववज्जंति २४ केवइया

कोहकसायी उववज्जंति २५जाव केवइया लोभकसायी उववज्जंति २८केवइया सोइंदियोवउत्ता उववज्जंति २९जाव केवइया फासिंदियोवउत्ता उववज्जंति ३३केवइया णोइंदियोवउत्ता उववज्जंति ३४केवइया मणजोगी उववज्जंति ३५केवइया वइजोगी उववज्जंति ३६केवइया कायजोगी उववज्जंति ३७केवइया सागारोवउत्ता उववज्जंति ३८केवइया अणागारोवउत्ता उववज्जंति ३९गोयमा ! इमीसे रयणप्पभाए पुढवीए तीसाए णेरइया वाससयसहस्सेसु संखेज्जवित्थडेसु णरएसु जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा णेरइया उववज्जंति जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा काउलेस्सा उववज्जंति। जहणेणं एको वा दो वा तिन्नि वा उक्कोसेणं संखेज्जा कण्हपक्खिया उववज्जंति। एवं सुक्कपक्खिया वि। एवं सण्णी वि। एवं असण्णी वि। एवं भवसिद्धिया वि। एवं अभवसिद्धिया ।। आभिणिबोहियणाणी सुअणाणी ओहिणाणी मतिअण्णाणी सुअअण्णाणी विभंगणाणी एवं चेव चक्खुदंसणी ण उववज्जंति । जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा अचक्खुदंसणी उववज्जंति । एवं ओहिदंसणी वि एवं आहारोवउत्तावि जाव परिग्गहसण्णोवउत्तावि । इत्थीवेदगा न उववज्जंति पुरिसवेदगा न उववज्जंति जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा नपुंसगवेदगा उववज्जंति एवं कोहकसायी जाव लोभकसायी सोइंदियउवउत्ता न उववज्जंति एवं जाव फासिंदियोवउत्ता ण उववज्जंति ,जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा नो इंदियोवउत्ता उववज्जंति मणजोगी ण उववज्जंति । एवं वइजोगी वि जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा कायजोगी उववज्जंति । एवं सागारोवउत्ता वि एवं अणागारोवउत्ता वि ३९ इमी से णं भंते ! रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु संखेज्जवित्थडेसु णरएसु एगसमएणं केवइया णेरइया उव्वट्टंति? केवइया काउलेस्सा उव्वट्टंति? जाव केवइया अणागारोवउत्ता उव्वट्टंति ? गोयमा ! इमी से णं रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु संखेज्जवित्थडेसु णरएसु एगसमएणं जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा णेरइया उव्वट्टंति जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा काउलेस्सा उव्वट्टंति । एवं जाव सण्णी असण्णी ण उव्वट्टंति । जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा भवसिद्धिया उव्वट्टंति एवं जाव सुअअण्णाणी विभंगणाणी ण उव्वट्टंति । चक्खुदंसणी ण उव्वट्टंति जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा अचक्खुदंसणी उव्वट्टंति । एवं जाव लोभकसायी सोइंदियोवउत्ता ण उव्वट्टंति एवं जाव फासिंदियोवउत्ता ण उव्वट्टंति जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा णोइंदियोवउत्ता उव्वट्टंति मणजोगी ण उव्वट्टंति । एवं वइजोगी वि जहणेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा कायजोगी उव्वट्टंति एवं सागारोवउत्ता वि एवं अणागारोवउत्ता वि। इमीसे णं भंते ! रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु संखेज्जवित्थडेसु णरएसु केवइया णेरइया पण्णत्ता केवइया काउलेस्सा पण्णत्ता? जाव केवइया अणागारोवउत्ता पण्णत्ता ३९ केवइया अणंतरोववण्णगा पण्णत्ता ? केवइया परंपरोववण्णगा पण्णत्ता? केवइया अणंतरोवगाढा पण्णत्ता? केवइया परंपरोवगाढा पण्णत्ता केवइया अणंतराहारा पण्णत्ता ? केवइया परंपराहारा पण्णत्ता केवइया अणंतरपज्जत्ता पण्णत्ता ? केवइया परंपरपज्जत्ता पण्णत्ता ? केवइया चरिमा पण्णत्ता ? केवइया अचरिमा पण्णत्ता ? गोयमा ! इमी से रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु संखेज्जवित्थडेसु णरएसु संखेज्जा णेरइया पण्णत्ता संखेज्जा काउलेस्सा पण्णत्ता, एवं जाव संखेज्जा सण्णी पण्णत्ता, असण्णी सिय अत्थि सिय नत्थि । जइ अत्थि जहण्णेणं एको वा दो वा तिण्णि वा उक्कोसेणं संखेज्जा पण्णत्ता, संखेज्जा भवसिद्धिया पण्णत्ता, एवं जाव संखेज्जा परिग्गहसण्णोवउत्ता पण्णत्ता, इत्थि वेदगा णत्थि, पुरिसवेदगा णत्थि, संखेज्जा णापुंसगवेदगा पण्णत्ता । एवं कोहकसायी वि, माणकसायी जहा असण्णी एवं जाव लोभकसायी, संखेज्जा सोइंदियोवउत्ता एवं जाव फासिंदियोवउत्ता, नो इंदियोवउत्ता जहा असण्णी, संखेज्जा मणजोगी एवं जाव अणागारोवउत्ता । ३९ । अणंतरोववण्णगा सिय अत्थि सिय णत्थि, जइ अत्थि जहा असण्णी, संखेज्जा परंपरोववण्णगा, एवं जहा अणंतरोववण्णगा तहा अणंतरोवगाढा अणंतराहारगा अणंतरपज्जत्तगा चरिमा परंपरोवगाढा जाव अचरिमा जहा परंपरोववण्णगा । इमी से णं भंते ! रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु असंखेज्जवित्थडेसु णेरइएसु एगसमएणं केवइया णेरइया उववज्जंति, जाव केवइया अणागारोवउत्ता उववज्जंति ? गोयमा ! इमी से णं रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु असंखेज्जवित्थडेसु णरएसु एगसमए णं जहण्णेणं एको वा दो वा तिण्णि वा उक्कोसेणं असंखेज्जा णेरइया उववज्जंति एवं जहेव संखेज्जवित्थडेसु तिण्णि गमा पण्णत्ता, तहा असंखेज्जवित्थडेसु वि तिण्णि भाणियव्वा । णवरं असंखेज्जा भाणियव्वा सेसं तं चेव जाव असंखेज्जा अचरिमा णाणत्तं लेस्सासु लेस्साओ जहा पढमसए, णवरं संखेज्जवित्थडेसु वि असंखे-

ज्जवित्थडेसु वि ओहिणाणी ओहिदंसणी संखेज्जा उवट्टा वेयव्वा सेसं तं चेव। सक्करप्पभाएणं भंते ! पुढवीए केवइया णिरयावासा पुच्छा, गोयमा ! पणवीसं णिरयावाससयसहस्सा, ते णं भंते ! किं संखेज्जवित्थडा असंखेज्जवित्थडा एवं जहा रयणप्पभाए, तहा सक्करप्पभाए वि, णवरं असण्णी तिसु वि गमएसु न भण्णति सेसं तं चेव। वालुयप्पभाएणं पुच्छा, गोयमा ! पण्णरसणिरयावाससयसहस्सा पन्नत्ता, सेसं जहा सक्करप्पभाए, णाणत्तं लेस्सासु लेस्साओ जहा पढमसए। पंकप्पभाएणं भंते ! णिरयावाससयसहस्सा पुच्छा गोयमा ! दस णिरयावाससयसहस्सा पन्नत्ता, एवं जहा सक्करप्पभाए, णवरं ओहिणाणी ओहिदंसणी ण उव्वट्टंति सेसं तं चेव। धूमप्पभाएणं पुच्छा, गोयमा ! तिन्नि णिरयावाससयसहस्सा एवं जहा पंकप्पभाए। तमाएणं भंते ! पुढवीए केवइया णिरयावासं पुच्छा, गोयमा ! एगे पंचूणे णिरयावाससयसहस्से पन्नत्ते, सेसं जहा पंकप्पभाए अहे सत्तमाएणं भंते ! पुढवीए कइ अणुत्तरा महति महालया महाणिरया पन्नत्ता ? गोयमा ! पंच अणु० जाव अप्पइट्ठाणे। सेणं भंते ! किं संखेज्ज वित्थडा असंखेज्जवित्थडा ? गोयमा ! संखेज्जवित्थडे य असंखेज्जवित्थडे य अहे सत्तमाए णं भंते ! पुढवीए पंचसु अणुत्तरेसु महतिमहालया जाव महाणिरएसु संखेज्जवित्थडे णरए एगसमएणं केवइया एवं जहा पंकप्पभाए णवरं तिसु णाणेसु ण उववज्जंति, ण उवट्टंति पण्णत्ता एसु तहेव अत्थि। एवं असंखेज्जवित्थडेसु वि णवरं असंखेज्जा भाणियव्वा। इमी से णं भंते ! रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु संखेज्जवित्थडेसु णरएसु किं सम्मदिट्ठी णेरइया उववज्जंति, मिच्छदिट्ठी णेरइया उववज्जंति सम्मामिच्छदिट्ठी णेरइया उववज्जंति ? गोयमा ! सम्मदिट्ठी णेरइया उववज्जंति, मिच्छदिट्ठी णेरइया उववज्जंति, णो सम्मामिच्छदिट्ठी णेरइया उववज्जंति। इमीसे णं भंते ! रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु संखेज्जवित्थडेसु णेरइएसु किं सम्मदिट्ठी णेरइया उवट्टंति एवं चेव। इमी से णं भंते ! रयणप्पभाए पुढवीए तीसाए णिरयावाससयसहस्सेसु संखेज्जवित्थडा णिरया किं सम्मदिट्ठीहिं णेरइएहिं अविरहिया मिच्छदिट्ठीहिं णेरइएहिं अविरहिया, सम्मामिच्छदिट्ठीहिं णेरइएहिं अविरहिया ? गोयमा ! सम्मदिट्ठीहिं णेरइएहिं अविरहिया मिच्छदिट्ठीहिं णेरइएहिं अविरहिया, सम्मामिच्छदिट्ठीहिं णेरइएहिं अविरहिय विरहिया वा। एवं असंखेज्जवित्थडेसु वि तिण्णि गमा भाणियव्वा। एवं सक्करप्पभाए वि। एवं जाव तमाए वि। अहे सत्तमाएणं भंते ! पुढवीए पंचसु अणुत्तरेसु जाव संखेज्जवित्थडे णरए किं सम्मदिट्ठी णेरइया पुच्छा, गोयमा ! सम्मदिट्ठी णेरइया ण उववज्जंति मिच्छदिट्ठी णेरइया उववज्जंति सम्मामिच्छदिट्ठी णेरइया ण उववज्जंति, एवं उव्वट्टंति वि, अविरहिए जहेव रयणप्पभाए। एवं असंखेज्ज वित्थडेसु तिन्नि गमा। से णूणं भंते ! कण्हलेस्से नीललेस्से जाव सुक्कलेस्से भवित्ता कण्हलेस्सेसु णेरइएसु उववज्जंति ? हंता गोयमा ! कण्हलेस्स जाव उववज्जंति। से केणट्ठेणं भंते ! एवं वुच्चइ कण्हलेस्स जाव उववज्जंति ? गोयमा ! लेस्सट्ठाणेसु संकिलिस्समाणेसु संकिलि० किण्हलेस्सं परिणमइ, कण्हइ कण्हलेस्सेसु णेरइएसु उववज्जंति। से तेणट्ठेणं जाव उववज्जंति। से णूणं भंते ! कण्हलेस्से जाव सुक्कलेस्से भवित्ता णीललेस्सेसु णेरइएसु उववज्जंति ? हंता गोयमा ! जाव उववज्जंति। से केणट्ठेणं जाव उववज्जंति ? गोयमा ! लेस्सट्ठाणेसु संकिलिस्समाणेसु विसुज्झमाणेसु णीललेस्सं परिणमइ णीललेस्सा णीललेस्सेसु णेरइएसु उववज्जंति से तेणट्ठेणं गोयमा ! जाव उववज्जंति ॥

रत्नप्रभापृथिव्यां कापोतलेश्या एवोत्पद्यन्ते न कृष्णलेश्यादय इति कापोतलेश्यानेवाश्रित्य प्रश्नः कृत इति। "केवतिया कण्हपक्खिएइत्यादि" एषां च लक्षणमिदम्। "जेसिमवड्ढोपोग्गल, परियट्टो सेसओ उ संसारो। ते सुक्कपक्खिया खलु, अहिगे पुण कण्हपक्खियत्ति" ॥ १ ॥ ( चक्खुदंसणी न उववज्जंतित्ति ) इन्द्रियत्यागेन तत्रोत्पत्तेरिति। तर्हि अचक्षुर्दर्शनिनः कथमुत्पद्यन्ते ? इन्द्रियानाश्रितस्य सामान्योपयोगमात्रस्याऽचक्षुर्दर्शनशब्दाभिधेयस्योत्पादसमयेऽपि भावादचक्षुर्दर्शनिन उत्पद्यन्त इत्युच्यत इति ( इत्थिवेयगेत्यादि ) स्त्रीपुरुषवेदा नोत्पद्यन्ते, भवप्रत्ययान्नपुंसकवेदत्वात्तेषां ( सोतिंदिओवउत्तेत्यादि ) श्रोत्राद्युपयुक्ता नोत्पद्यन्ते इन्द्रियाणां तदानीमभावात् ( नो इंदिओवउत्ता उववज्जंतित्ति ) नोइन्द्रियं मनस्तत्र च यद्यपि मनःपर्याप्त्यभावे द्रव्यमनो नास्ति तथापि भावमनसश्चैतन्यरूपस्य सदा भावात्तेनोपयुक्तानामुत्पत्तेर्नोइन्द्रियोपयुक्ता उत्पद्यन्त इत्युच्यत इति ( मणजोगीत्यादि ) मनोयोगिनो वाग्योगिनश्च नोत्पद्यन्ते उत्पत्तिसमयेऽपर्याप्तकत्वेन मनोवाचोरभावादिति ( कायजोगी उववज्जंतित्ति ) सर्वसंसारिणां काययोगस्य सदैव भावादिति। अथ रत्नप्रभानारकाणामेवोद्वर्त्तनामभिधातुमाह। इमीसेणमित्यादि ( असण्णी न उवट्टंतित्ति ) उद्वर्त्तना हि परभवप्रथमसमये स्यान्न च नारका असंज्ञिषूत्पद्यन्तेऽतस्ते असंज्ञिनः सन्तो नोद्वर्त्तन्त इत्युच्यते "एवं विभंगनाणी न उव्वट्टंति" इत्यपि भावनीयम्। शेषाणि तु पदान्युत्पादवद्व्याख्येयानि उक्तं च चूर्णौम् "असण्णिणो य विभंगिणो य उव्वट्टणाए वज्जेज्जा। दोसु वि य चक्खुदंसी, मणवइ तह इंदियाइंयत्ति" ॥ १ ॥ अनन्तरं रत्नप्रभानारकाणामुत्पादे उद्वर्त्तनायां च परिमाणमुक्तमथ तेषामेवसत्तायां तदाह( इमीसेणमित्यादि केवइया अणंतरोववण्णगत्ति ) कियन्तः प्रथमसमयोत्पन्ना इत्यर्थः। ( परंपरोववण्णगत्ति ) उत्पत्तिसमयापेक्षया द्व्यादिसमयेषु वर्त्तमाना( अणंतरोवगाढत्ति ) विवक्षितक्षेत्रे प्रथमसमयावगाढाः ( परंपरोगाढत्ति ) विवक्षितक्षेत्रे द्वितीयादिकसमयोऽवगाढो येषां ते परम्परोवगाढाः ( केवइया चरिमात्ति ) चरमो नारकभवेषु स एव भवो येषां ते चरमा नारकभवस्य वा चरमसमये वर्त्तमानाश्चरमाः अचरमास्त्वितरे ( असण्णी सिय अत्थि सिय नत्थित्ति ) असंज्ञिनय उद्वृत्त

ये नारकत्वेनोत्पन्नास्तेऽपर्याप्तकावस्थायामसंज्ञिनो भूतभावत्वात्त चाव्या इति कृत्वा सिय अत्थीत्याद्युक्तम्। मानमायालोभकषायोपयुक्तानां नोइन्द्रियोपयुक्तानामनन्तरोपपन्नानामनन्तरावगाढानामनन्तराहारकाणामनन्तरपर्याप्तकानां च कादाचित्कत्वात्सिय अत्थीत्यादि वाच्यं शेषाणां तु बहुत्वात्संख्याता इति वाच्यमिति। अनन्तरं संख्यातविस्तृतनरकावासनारकवक्तव्यतोक्ता । अथ तद्विपर्ययवक्तव्यतामभिधातुमाह " इमीसेणमित्यादि " ( तिन्निग-मत्ति ) उववज्जंति उव्वट्टंति पएणत्तत्ति । एते त्रयो गमाः ओहिनाणीओहिदंसणीयसंखेज्जा ( उव्वट्टावेयव्वत्ति ) कथं ते हि तीर्थकरादय एव भवन्ति ते च स्तोकाः स्तोकत्वाच्च संख्याता एवेति नवरम्। ( असएणी तिसुवि गमएसु ण भएणइत्ति) कस्मादुच्यते । असंज्ञिनः प्रथमायामेवोत्पद्यन्ते । असएणी खलु पढमंति वचनादिति " नाणत्तं लेस्सासु, लेस्साओ जहा पढमसएत्ति " इहाद्य पृथ्वीद्वयापेक्षया तृतीयादिपृथिवीषु नानात्वं लेश्यासु भवति। ताश्च यथा प्रथमशते तथाऽध्येयास्तत्र च संग्रहगाथेयम् " काऊ य दोसु तइयाए, मीसिया नीलिया चउत्थीए । पंचमियाए मीसा, कएहा तत्तो परमकएहत्ति " ॥ १ ॥ नवरम् " ओहिनाणी ओहिदंसणी य न उव्वट्टंति " कस्मादुच्यते– ते हि प्रायस्तीर्थकरा एव ते च चतुर्थ्या उद्वृत्ता नोत्पद्यन्त इति ॥ ( जाव अप्पत्तिट्ठाणेत्ति ) इह यावत्करणात्–काले महाकालरोरुए महारोरुएत्ति दृश्यम् । इह च मध्यम एव संख्येयविस्तृत इति ॥ नवरम्। "तिसु नाणेसु न उववज्जंति न उव्वट्टंति त्ति " ॥ सम्यक्त्वभ्रष्टानामेव तत्रोत्पादात्तत उद्वर्त्तनाच्चाद्येषु त्रिषु ज्ञानेषु नोत्पद्यन्ते, नापि चोद्वर्त्तन्त इति ॥ ( पएणत्ताएसु तहेव अत्थित्ति ) एतेषु पञ्चसु नारकावासेषु कियन्त आभिनिबोधिकज्ञानिनः श्रुतज्ञानिनोऽवधिज्ञानिनश्च प्रज्ञप्ता इत्यत्र तृतीयगमे तथैव प्रथमादिपृथिवीष्विव सन्ति तत्रोत्पन्नानां सम्यग्दर्शनलाभे आभिनिबोधिकादिज्ञानत्रयभावादिति। अथ रत्नप्रभादिनारकवक्तव्यतामेव सम्यग्दृष्ट्यादीनाश्रित्याह इमीसेणमित्यादि । ( नोसम्मामिच्छदिट्ठी उववज्जंतित्ति ) । " न सम्ममिच्छो कुणइ कालमिति वचनात् " मिश्रदृष्टयो न म्रियन्ते नापि तद्भवप्रत्ययं तेषामवधिवद्येन मिश्रदृष्टयः सन्तस्ते उत्पद्येरन् । सम्मामिच्छदिट्ठीहिं नेरइएहिं अविरहिय विरहिययावत्ति । कादाचित्कत्वेन तेषां विरहसम्भवादिति अथ नारकवक्तव्यतामेव भङ्ग्यन्तरेणाह–से नूणमित्यादि। ( लेसट्ठाणेसुत्ति ) लश्याभेदेषु ( संकिलिस्समाणेसुत्ति ) अविशुद्धं गच्छत्सु ( कएहलेस्सं परिणमइत्ति ) कृष्णलेश्यां याति ततश्च ( कएहलेसेत्यादि ) ( संकिलिस्समाणेसु वा विसुज्झमाणेसुवत्ति ) प्रशस्तलेश्यास्थानेष्वऽविशुद्धिं गच्छन्तु अप्रशस्तलेश्यास्थानेषु च विशुद्धिं गच्छत्सु नीललेश्यां परिणमतीति भावः । भ० १३ श० १ उ० ॥

( ५ )नैरयिकादयः आत्मोपक्रमेण परोपक्रमेण वा आत्मर्द्ध्या परर्द्ध्या वा आत्मप्रयोगेण परप्रयोगेण वा उत्पद्यन्ते ।

णेरइयाणं भंते ! किं आउवक्कमेणं उववज्जंति, परोवक्कमेणं उववज्जंति णिरुवक्कमेणं उववज्जांति ? गोयमा ! आतोवक्कमेण वि उववज्जंति परोवक्कमेण वि उववज्जंति णिरुवक्कमेण वि उववज्जंति एवं जाव वेमाणिया। णेरइयाणं भंते ! किं आतोवक्कमेणं उव्वट्टंति परोवक्कमेणं उव्वट्टंति णिरुवक्कमेणं उव्वट्टंति ? गोयमा ! णो आतोवक्कमेणं उव्वट्टंति णो परोवक्कमेणं उव्वट्टंति णिरुवक्कमेणं उव्वट्टंति। एवं जाव थणियकुमारा । पुढवीकाइया जाव मणुस्सा तिसु उव्वट्टंति। सेसा जहा णेरइया णवरं जोइसिया वेमाणिया चयंति । णेरइया णं भंते ! किं आयड्ढीए उववज्जंति परिड्ढीए उववज्जंति ? गोयमा ! आयड्ढीए उववज्जंति णो परिड्ढीए उववज्जंति। एवं जाव वेमाणिया । णेरइयाणं भंते ! किं आइड्ढीए उव्वट्टंति परिड्ढीए उव्वट्टंति ? गोयमा ! आइड्ढीए उव्वट्टंति णो परिड्ढीए उव्वट्टंति एवं जाव वेमाणिया णवरं जोइसिया वेमाणिया चयंतीति अभिलावो। णेरइयाणं भंते ! किं आयकम्मणा उववज्जंति परकम्मणा उववज्जंति ? गोयमा ! आयकम्मणा उववज्जंति णो परकम्मणा उववज्जंति एवं जाव वेमाणिया । एवं उव्वट्टणा दंडओ । णेरइयाणं भंते ! किं आयप्पओगेणं उववज्जंति परप्पओगेणं उववज्जंति ? गोयमा ! आयप्पओगेणं उववज्जंति णो परप्पओगेणं उववज्जंति । एवं जाव वेमाणिया । एवं दंडओ वि ॥

आत्मना स्वयमेव आयुष उपक्रमः आत्मोपक्रमस्तेन मृत्वा इति शेषः उत्पद्यन्ते नारकाः यथा श्रेणिकः। परोपक्रमेण परकृतमरणेन यथा कूणिकः । निरुपक्रमेण उपक्रमणाभावेन यथा कालशौकरिकः यतः । सोपक्रमायुष्का इतरे च तत्रोत्पद्यन्ते उत्पादोद्वर्त्तनाधिकारादिदमाह नेरइयेत्यादि ( आइड्ढीएत्ति ) नेश्वरादिप्रभावेणेत्यर्थः ( आयकम्मुणत्ति ) आत्मकृतकर्मणा ज्ञानावरणादिना ( आयप्पओगेणंति ) आत्मव्यापारेण ॥

( ६ ) कतिसञ्चिताकतिसञ्चितानामुपपादः ।

णेरइया णं भंते ! किं कतिसंचिया अकतिसंचिया अवत्तव्वगसंचिया ? गोयमा ! णेरइया कतिसंचिया वि अकतिसंचिया वि अवत्तव्वगसंचिया वि, सेकेणट्ठेणं भंते ! जाव अवत्तव्वगसंचिया वि ? गोयमा ! जेणं णेरइया संखेज्जएणं पवेसणएणं पविसंति, तेणं णेरइया कतिसंचिया । जेणं णेरइया असंखेज्जएणं पवेसणएणं पविसंति तेणं णेरइया अकतिसंचिया । जेणं णेरइया एक्कएणं पवेसणएणं पविसंति तेणं णेरइया अवत्तव्वगसंचिया। से तेणट्ठेणं गोयमा ? जाव अवत्तव्वगसंचिया वि । एवं जाव थणियकुमारा । पुढवीकाइयाणं पुच्छा, गोयमा ? पुढवीकाइया णो कतिसंचिया अकतिसंचिया णो अवत्तव्वगसंचिया । से केणट्ठेणं भंते ! एवं वुच्चइ–जाव णो अवत्तव्वगसंचिया ? गोयमा ! पुढवीकाइया असंखेज्जएणं पवेसणएणं पविसंति, से तेणट्ठेणं जाव णो अवत्तव्वगसंचिया एवं वणस्सइकाइया । बेइंदिया जाव वेमाणिया जहा णेरइया । सिद्धाणं पुच्छा ? गोयमा ! सिद्धा कतिसंचिया णो अकतिसंचिया अवत्तव्वगसंचिया वि । से केणट्ठेणं जाव अवत्तव्वगसंचिया वि ? गोयमा ! जेणं सिद्धा संखेज्जएणं पवेसणएणं पविसंति तेणं सिद्धा कतिसंचिया, जेणं सिद्धा एक्कएणं पवेसणएणं पविसंति तेणं सिद्धा अवत्तव्वगसंचिया वि से तेणट्ठेणं गोयमा ! जाव अवत्तव्वगसंचिया वि ॥

उत्पादाधिकारादिदमाह नेरइयेत्यादि ( कइसंचियत्ति ) कति इति सङ्ख्यावाची ततश्च कतित्वेन सञ्चिता एकसमये संख्यातोत्पादेन पिण्डिताः कतिसञ्चिताः एवं ( अकइसंचियत्ति )। नवरं । ( अकतित्ति ) सङ्ख्यानिषेधोऽसंख्यातत्वमनन्तत्वं चेति ( अवत्तव्वगसंचियत्ति ) द्व्यादिः संख्या व्यवहारतः शीर्षप्रहेलिकायाः परतोऽसंख्या यश्च संख्यात्वेनासंख्यात्वेन च वक्तुं न शक्यते असाववक्तव्यः स च एककस्तेनावक्तव्येन एककेन एकत्वोत्पादेन सञ्चिता अवक्तव्यकसञ्चितास्तत्र नारकादयस्त्रिविधा अपि एकसमयेन तेषामेकादीनां संख्यातानामुत्पादात् पृथिवीकायिकादयस्तु अकतिसञ्चिता एव तेषां समयेनासंख्यातानामेव प्रवेशाद्वनस्पतयस्तु यद्यप्यनन्ता उत्पद्यन्ते तथापि प्रवेशनकं विजातीयेभ्य आगतानां यस्तत्रोत्पादस्तद्विवक्षितमसंख्याता एव च विजातीयेभ्य उद्वृत्तास्तत्रोत्पद्यन्त इति सूत्रे उक्तम्। ( एवं जाव वणस्सइकाइयत्ति ) सिद्धा नो अकतिसंचिता अनन्तानामसंख्यातानां वा तेषां समयेनासंभवादिति । एषामेवाल्पबहुत्वं चिन्तयन्नाह ॥

एएसिणं भंते ! णेरइयाणं कइसंचियाणं अकइसंचियाणं अवत्तव्वगसंचियाण य कयरे २ जाव विसेसाहिया वा ? गोयमा ! सव्वत्थोवा णेरइया अवत्तव्वगसंचिया कतिसंचिया संखेज्जगुणा अकतिसंचिया असंखेज्जगुणा एवं एगिंदियवज्जाणं जाव वेमाणियाणं अप्पाबहुगं एगिंदियाणं णत्थि अप्पाबहुगं एएसिणं भंते ! सिद्धाणं कतिसंचियाणं अव्वत्तव्वगसंचियाण य कयरे २ जाव विसेसाहिया वा गोयमा ! सव्वत्थोवा सिद्धा कतिसंचिया अवत्तव्वगसंचिया संखेज्जगुणा ॥

( एएसीत्यादि ) अवक्तव्यकसंचिताः स्तोकाः। अवक्तव्यकस्थानस्यैकत्वात् कतिसंचिताः संख्यातगुणाः संख्यातत्वात्संख्यातस्थानकानामकतिसञ्चितास्त्वसंख्यातगुणाः असंख्यातस्थानकानामसंख्यातत्वादित्येके । अन्ये त्वाहुः । वस्तुस्वभावोऽत्र कारणं न तु स्थानकाल्पत्वादि कथमन्यथा सिद्धाः कतिसंचिताः स्थानकबहुत्वेऽपि स्तोकाः। । अवक्तव्यकास्तु स्थानस्यैकत्वेऽपि संख्यातगुणाः । द्व्यादित्वेन केवलिनामल्पानामायुःसमाप्तेरियं च लोकस्वभावादेवेति ॥

( ७ ) षट्कसमर्जिताः नारकाद्युत्पादविशेषणभूतसंख्याधिकारादिदमाह ।

णेरइयाणं भंते ! किं छक्कसमज्जिया णो छक्कसमज्जिया छक्केण य णो छक्केण य समज्जिया छक्केहि य समज्जिया छक्केहि य णो छक्केण य समज्जिया ? गोयमा ! णेरइया छक्कसमज्जिया वि ! णो छक्कसमज्जिया वि २ छक्केण य णो छक्केण य समज्जिया ३ छक्केहि य समज्जिया वि ४ छक्केहि य णो छक्केण य समज्जिया वि ५ से केणट्ठेणं भंते ! एवं वुच्चइ–णेरइया छक्कसमज्जिया वि जाव णो छक्केहि य णो छक्केण य समज्जिया वि ? गोयमा ! जेणं णेरइया छक्कएणं पवेसणएणं पविसंति तेणं णेरइया छक्कसमज्जिया । जेणं णेरइया जहण्णेणं एक्केण वा दोहिं वा तिहिं वा उक्कोसेणं पंचएणं पवेसणएणं पविसंति तेणं णेरइया णो छक्कसमज्जिया २ जेणं णेरइया छक्कएणं अण्णेण य जहण्णेणं एक्केण वा दोहिं वा तिहिं वा उक्कोसेणं पंचएणं पवेसणएणं पविसंति तेणं णेरइया छक्केण य णो छक्केण य समज्जिया ३ जेणं णेरइया अणेगेहिं छक्केहिं पवेसणएणं पविसंति तेणं णेरइया छक्केहि य समज्जिया ४ जेणं णेरइया अणेगेहिं छक्केहिं अण्णेण य जहण्णेणं एक्केण वा दोहिं वा तिहिं वा उक्कोसेणं पंचएणं पवेसणएणं पविसंति तेणं णेरइया छक्केहि य णो छक्केण य समज्जिया ॥ ५ से तेणट्ठेणं तं चेव समज्जिया वि एवं जाव थणियकुमारा पुढवीकाइयाणं पुच्छा, गोयमा ! पुढवीकाइया णो छक्कसमज्जिया णो णो छक्कसमज्जिया णो छक्केण य णो छक्केण य समज्जिया ३ छक्केहि य समज्जिया वि छक्केहि य णो छक्केण य समज्जिया वि से केणट्ठेणं जाव समज्जिया वि गोयमा जेणं पुढवीकाइया णेगेहिं छक्केहिं पवेसणगं पविसंति तेणं पुढवीकाइया छक्केहिं समज्जिया, जेणं पुढवीकाइया णेगेहिं छक्कएहिं अण्णेण य जहण्णेणं एक्केण वा दोहिं वा तिहिं वा उक्कोसेणं पंचएणं पवेसणएणं पविसंति तेणं पुढवीकाइया छक्केहि य णो छक्केण य समज्जिया से तेणट्ठेणं जाव समज्जिया वि एवं जाव वणस्सइकाइया बेइंदिया जाव वेमाणिया एए सिद्धा जहा णेरइया ॥

नेरइयाणमित्यादि ( छक्कसमज्जियत्ति ) षट् परिमाणमस्येति षट्कं वृन्दं तेन समर्जिताः पिण्डिताः षट्कसमर्जिताः । अयमर्थः एकत्र समये ये समुत्पद्यन्ते तेषां यो राशिः स षट्प्रमाणो यदि स्यात्तदा ते षट्कसमर्जिता उच्यन्ते ॥ १ ॥ ( नो छक्कसमज्जियत्ति ) नो षट्कः षट्काभावस्ते च एकादयः पञ्चान्तास्तेन नो षट्केन एकाद्युत्पादेन ये समर्जितास्तेन तथा । २ । तथा (छक्केण य णो छक्केण य समज्जियत्ति) एकत्र समये येषां षट्कमुत्पन्नमेकाद्यधिकं ते षट्केन नोषट्केन च समर्जिता उक्ताः ॥ ३ ॥ ( छक्केहि य समज्जियत्ति ) एकत्र समये येषां बहूनि षट्कानि उत्पन्नानि ते षट्कैः समर्जिताः उक्ताः । ४ । तथा ( छक्केहि य णोछक्केण य समज्जियत्ति ) एकत्र समये येषां बहूनि षट्कानि एकाद्यधिकानि ते षट्कैः नो षट्केन च समर्जिता एते पञ्चविकल्पाः । इह च नारकादीनां पञ्चापि विकल्पाः सम्भवन्त्येकादीनामसंख्यातानां तेषां समयेनोत्पत्तेरसंख्यातेष्वपि च ज्ञानिनः षट्कानि व्यवस्थापयन्तीति एकेन्द्रियाणां त्वसंख्यातानामेव प्रवेशनात्षट्कः समर्जिताः। तथा षट्कैर्नोषट्केन च समर्जिता इति विकल्पद्वयस्यैव सम्भव इति अत एवाह पुढविकाइयाणमित्यादि ॥

षट्कसमर्जितोत्पादे अल्पबहुत्वम् ।

एएसिणं भंते ! णेरइयाणं छक्कसमज्जियाणं णो छक्कसमज्जियाणं छक्केण य णोछक्केण य समज्जियाणं छक्केहि य समज्जियाणं छक्केहि य णो छक्केण य समज्जियाण य कयरे कयरे जाव विसेसाहिया वा ? गोयमा ! सव्वत्थोवा णेरइया छक्कसमज्जिया णो छक्कसमज्जिया संखेज्जगुणा छक्केण य णो छक्केण य समज्जिया संखेज्जगुणा छक्केहि य समज्जिया असंखेज्जगुणा छक्केहि

